| | |
|---|---|
| **मैत्रायणीयसंहिता**– | काण्डम्। प्रपाठकः। अनुवाकः |
| **यतिधर्मप्रकाशः** – | पृष्ठम् |
| **यतिधर्मसंग्रहः** – | पृष्ठम् |
| **यमस्मृतिः** – | श्लोकः |
| **याज्ञवल्क्यस्मृतिः** – | अध्यायः। श्लोकः |
| **रेणुकारिकाः** – | (१) पत्रम्। श्लोकः<br>(२) कंसे प्रकरणनाम (अग्नि. अथवा प्रा.) पत्रम्। श्लोकः |
| **लघुविष्णुस्मृतिः** – | अध्यायः। श्लोकः |
| **लघुशातातपस्मृतिः** – | श्लोकः |
| **लघुहारीतस्मृतिः** – | श्लोकः |
| **लघ्वाश्वलायनस्मृतिः** – | प्रकरणम्। श्लोकः |
| **लिङ्गपुराणम्** – | भागः। अध्यायः। श्लोकः |
| **वराहपुराणम्** – | अध्यायः। श्लोकः |
| **वामनपुराणम्** – | अध्यायः। श्लोकः |
| **वायुपुराणम्** – | खण्डः। अध्यायः। श्लोकः |
| **वाल्मीकिरामायणम्** – | काण्डम्। सर्गः। श्लोकः |
| **वासिष्ठधर्मशास्त्रम्** – | अध्यायः। सूत्रम् |
| **विधानपारिजातः** – | (१) स्तबकः। पृष्ठम्<br>(२) तृतीयस्तबके – स्तबकः। खण्डः। पृष्ठम् |
| **विश्वनाथभाष्यम्** – | पृष्ठम् |
| **विष्णुधर्मोत्तरपुराणम्** – | खण्डः। अध्यायः। श्लोकः |
| **विष्णुपुराणम्** – | अंशः। अध्यायः। श्लोकः |
| **विष्णुस्मृतिः** – | अध्यायः। सूत्रम् |
| **वृद्धगौतमसंहिता** – | अध्यायः। श्लोकः |
| **वृद्धवसिष्ठसंहिता** – | अध्यायः। श्लोकः |
| **वृद्धहारीतस्मृतिः** – | अध्यायः। श्लोकः |
| **वैखानसधर्मसूत्रम्**– | प्रश्नः। खण्डः |
| **व्यासस्मृतिः** – | अध्यायः। श्लोकः |
| **शङ्खस्मृतिः** – | अध्यायः। श्लोकः |
| **शतपथब्राह्मणम्** – | काण्डम्। अध्यायः। ब्राह्मणम्। कण्डिका |

| | |
|---|---|
| **शाङ्खायनगृह्यसंग्रहः** – | पृष्ठम् |
| **शाङ्खायनगृह्यसूत्रम्** – | अध्यायः। खण्डः। सूत्रम् |
| **शातातपस्मृतिः** – | अध्यायः। श्लोकः |
| **शिवपुराणम्** – | (१) संहिता। अध्यायः। श्लोकः<br>(२) संहिता। खण्डः अथवा भागः। अध्यायः। श्लोकः |
| **शुक्लयजुर्वेदमाध्यंदिन** – **संहिता** – | अध्यायः। मन्त्रः |
| **शूद्रकमलाकरः** – | पृष्ठम् |
| **शूद्रकृत्यविचारणतत्त्वम्** – | पृष्ठम् |
| **शूद्राचारशिरोमणिः** – | पृष्ठम् |
| **शौनककारिकाः** – | पत्रम्। श्लोकः |
| **श्रीमद्भागवतपुराणम्** – | स्कन्धः। अध्यायः। श्लोकः |
| **संवर्तस्मृतिः** – | श्लोकः |
| **संस्कारकौस्तुभः** – | पत्रम् |
| **संस्कारगणपतिः** – | पृष्ठम् |
| **संस्कारतत्त्वम्** – | पृष्ठम् |
| **संस्कारदीपकः** – | भागः। पृष्ठम् |
| **संस्कारप्रकाशः** – | पृष्ठम् |
| **संस्कारमयूखः** – | पृष्ठम् |
| **संस्काररत्नमाला** – | पृष्ठम् |
| **सच्छूद्राचारस्मृतिः** – | पृष्ठम् |
| **समयमयूखः** – | पृष्ठम् |
| **सह्याद्रिखण्डः** – | अर्धं माहात्म्यं वा। अध्यायः। श्लोकः |
| **सापिण्ड्यप्रदीपः** – | पृष्ठम् |
| **साम्बपुराणम्** – | अध्यायः। श्लोकः |
| **सूतसंहिता** – | (१) खण्डः। अध्यायः। श्लोकः<br>(२) चतुर्थखण्डस्य प्रथमभागे खण्डः। भागः। अध्यायः। श्लोकः |

| | | |
|---|---|---|
| | | (३) चतुर्थखण्डस्य द्वितीयभागे खण्डः। भागः। उपभागः। अध्यायः। श्लोकः |
| **सौरपुराणम्** | - | अध्यायः। श्लोकः |
| **स्कन्दपुराणम्** | - | (१) खण्डम्। उपखण्डम् अथवा अर्धम् अथवा माहात्म्यम्। अध्यायः। श्लोकः |
| | | (२) खण्डः। अध्यायः। श्लोकः |
| **स्मृतिकौमुदी** | - | पत्रम् |
| **स्मृतिकौस्तुभः** | - | पृष्ठम् |
| **स्मृतिचन्द्रिका** | - | काण्डम्। पृष्ठम् |
| **स्मृतिमुक्ताफलम्** | - | पृष्ठम् |
| **स्मृतिसारः** | - | पत्रम् |
| **स्मृतिसारसमुच्चयः** | - | पृष्ठम् |
| **स्मृत्यर्थसारः** | - | पृष्ठम् |
| **हरिवंशः** (भाण्डारकर) | - | अध्यायः। श्लोकः |
| **हरिवंशः** (चित्रशाळा) | - | पर्व। अध्यायः। श्लोकः |
| **हरिहरभाष्यम्** | - | पृष्ठम् |
| **हिरण्यकेशिधर्मसूत्रम्** | - | प्रश्नः। पटलः।सूत्रम् |

वर्णाश्रमधर्मकाण्डस्य

# द्वितीयभागस्य प्रकरणक्रमेण विषयानुक्रमणिका

## धर्मदेशाः

(पृ. ७५३ - ७७८)

भारतजन्मप्रशंसा, भारते एव युगव्यवस्था. **नरसिंहपुराणम्** – ७७६ भारते एव चातुर्वर्ण्यव्यवस्था सदसत्फलकानि कर्माणि च, सामान्यतो धर्मदेशलक्षणम्. **सौरपुराणम्** - ७७६ कुरुक्षेत्रादयो धर्मदेशाः, अङ्गवङ्गादयो वर्ज्या देशाः, कर्मभूमौ दुर्लभं मनुष्यजन्म देवैः प्रशस्यते. **आदिपुराणम्** – ७७६ धर्मदेशसामान्यलक्षणम्, अलङ्घनीया नद्यः, वर्ज्या देशाः. **मुद्गलपुराणम्** – ७७८ अजनाभापरपर्यायस्य भारतवर्षस्य कर्मभूमित्वेन प्रशंसा, भारते चातुर्वर्ण्यं युगव्यवस्था युगधर्माश्च. **आदित्यपुराणम्** - ७७८ धर्मविषये वर्ज्या देशाः. **अनिर्दिष्टकर्तृकवचनानि** – ७७८ सामान्यतो धर्मदेशलक्षणम्, ऐन्द्रादिनवखण्डयुते भारतवर्षे कुमारिकाख्यखण्डे एव वर्णव्यवस्था, खण्डान्तरेष्वन्त्यजनिवासः, वर्ज्यदेशाः.

## युगधर्माः

(पृ. ७७९ - ९६४)

**वेदाः** – ७७९ युगानां मनुष्यसंबन्धः, दीर्घतमसो जरासंबन्धेन शस्त्रशंसनसंबन्धेन देवादिसृष्टिसंबन्धेन च ग्रावपितॄणां ध्रौव्यसंबन्धेन च युगनिर्देशः; ७८० अपानभृदिष्टकानां कृतादियुगरूपत्वेन प्रशंसा; निद्रादिसंचरणान्तानां चतसृणां पुरुषावस्थानां क्रमेण कलिद्वापरत्रेताकृतरूपत्वेनोत्तरोत्तरं प्राशस्त्यम्; स्तोमचतुष्टयं कृतरूपत्वात्प्रशस्तम्, स्तोमपञ्चकं कलिरूपत्वान्निन्दितम्; ७८१ पुरुषमेधे पुरुषालम्भनोद्देश्यदेवताः कृतादयः. **बौधायनः** – ७८१ युगभेदेन धर्माणां व्यवस्थितत्वम्, विधवानियोजनं कलौ वर्ज्यम्. **आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च** – ७८१ सहेतुको नियोगनिषेधः. **वसिष्ठः** – ७८१ कलौ वर्ज्या ऊढापुनर्विवाहादयः पञ्च धर्माः. **महाभारतम्** – ७८१ युगेषूत्तरोत्तरं पादशो धर्मह्रासमायुरादिह्रासं चावेक्ष्य व्यासर्षिणा वेदव्यासः कृतः; ७८२ कृतयुगे परशुरामकृतक्षत्रियनाशे ब्राह्मणैः क्षत्रियासु क्षत्रोत्पादनम्, सर्वे वर्णाः स्वस्वधर्माचारनिष्ठा आसन्; ७८३ युगकालभेदेन गिरिनद्यादीनां देवादीनां च स्वरूपभेदः; कृतशब्दप्रवृत्तिनिमित्तम्, कृतयुगे वेददेवादीनां व्याधीनां कामक्रोधादिविकाराणां चाभावः, सर्वे वर्णाः स्वधर्मनिरताः, चतुष्पात् धर्मः, संकल्पादेव फलसिद्धिः; ७८५ त्रेतायां सत्ररूपो यज्ञः, धर्मः त्रिपात्, विष्णुः रक्तवर्णः, कर्मणा फलसिद्धिः; द्वापरे द्विपात् धर्मः, विष्णुः पीतवर्णः, वेदविभाजनम्, तपसि दाने च प्रवृत्तिः, सत्यात् च्युतिर्व्याधिसंभवश्च; कलौ धर्मः एकपात्, विष्णुः कृष्णवर्णः, वेदाध्ययनधर्माचाराभावः, आधिव्याधिक्रोधादिविकारोद्भवः, धर्मनाशात्सर्वनाशः; ७८६ अल्पावशिष्टे कलियुगे युगस्वभावप्रयुक्तानां दुराचाराणामापदां च विस्तरेण वर्णनम्; ७८८ युगभेदेन विष्णोर्वर्णभेदाः, त्रेतादिषु क्रमेण एकद्वित्रिधर्मपादक्षयः आयुर्वीर्यबुद्धिबलतेजसां क्षयश्च, कलियुगान्ते सर्वविधिनिषेधातिक्रमवर्णसंकरादीनां दिक्प्रज्वलनाद्युत्पातादीनां च कलिवृत्तान्तानां विस्तरेण वर्णनम्; ७९३ कलियुगसमाप्तौ दैवानुकूल्येन चन्द्रसूर्यबृहस्पतिषु तिष्यनक्षत्रे समेतेषु पुनः कृतयुगं प्रादुर्भविष्यति, कल्किर्विष्णुयशा नाम द्विजः संभलग्रामे संभूतो युगपरिवर्तनं करिष्यति; पृथिवीदान - स्वायंभुवमर्यादास्थापनपूर्वकं कल्केर्वनाश्रयणम्; ७९४ कृते पूर्तादयः सर्वे धर्माः प्रवर्तिष्यन्ते; कृतादियुगभेदेन गुणभेदवर्णनम्; ७९६ कृतत्रेतयोर्जीवनमिच्छाधीनं प्रजोत्पादनं च मैथुनं विना संकल्पमात्रसाध्यम्, द्वापरकलियुगयोः प्रजोत्पादनं मैथुनसाध्यम्; कृतादिषु धर्मवेदायुर्लौकिकवैदिककर्मफलानां क्रमेण साकल्यं पादशो ह्रासश्च, कृते चत्वारि वर्षशतान्यायुः ; कृतादीनां क्रमेण तपोज्ञानयज्ञदानपरत्वम्, ब्राह्मणादयो वर्णाः क्रमेण तपोयज्ञाः आरम्भयज्ञाः हविर्यज्ञाः परिचरणयज्ञाश्च; ७९८ कृते धर्मसंशयाभावः, त्रेतादिषु धर्मसंशयः, द्वापरे वेदानां व्यासः, अनुयुगं वेदह्रासः, कृते पशुहिंसारहिता यज्ञाः, कृतादिषु क्रमेण धर्मस्य साकल्यमुत्तरोत्तरं पादहीनत्वं च; कलौ तिलपात्रादिदानस्य प्रशंसा विष्णुस्मरणात् शिवमन्त्रजपादेश्च पापनिवृत्तिः. **हरिवंशः** – ७९९ भविष्यद्रूपेण विस्तरेण कलिप्रयुक्तचराचरस्वभाववर्णनम्; ८०५ युगानां स्वभावभेदः; ८०६ युगानां तत्संध्यानां च कालपरिमाणम्, कृतादिषु विपरीतक्रमेण कल्यादिषु च यथाक्रमं धर्माधर्मयोः साकल्यमुत्तरोत्तरमेकैकपादन्यूनत्वं च, युगभेदेन मानवप्रवृत्तिभेदाः. **वाल्मीकिरामायणम्** – ८०७ कृतादिषु यथाक्रमं ब्राह्मणादयो वर्णास्तपस्विनः, युगक्रमेण धर्माधर्मयोर्वृद्धिह्रासौ. **मनुः** – ८०९ कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ; ८११

कृतादिषु क्रमेण चतुस्त्रिद्व्येकवर्षशतान्यायुः, कर्मफलानां प्रभावस्य च युगानुरूप्येणोत्कर्षापकर्षौ; ८१२ कृतादिषु क्रमेण तपोज्ञानयज्ञदानरूपो धर्मभेदः, युगानां क्रमेण ब्राह्मणादिवर्णरूपत्वम्; ८१३ कृते वर्षसाध्यो धर्मस्त्रेतादिषु क्रमेणर्तुत्रयत्रिपक्षैकाहैः साध्यते. **बृहस्पतिः** – ८१३ युगभेदेन नियोगविधिनिषेधयोर्व्यवस्था; युगक्रमेण धर्माधर्मयोरुत्कर्षापकर्षौ; ८१४ युगभेदेन दानपद्धतिभेदाः; कृतादिषु धर्मनिष्पत्तिकालभेदाः, कलौ सत्यस्यैवोपकारकत्वम्. **उपकात्यायनः** – ८१४ युगेषु श्रुतिशौचाचारधर्मभेदः. **व्यासः** – ८१४ युगेषु धर्मनिष्पत्तिकालभेदाः, कृतादिषु ध्यानादिसाध्यं फलं कलौ विष्णुकीर्तनेन साध्यते कलौ रुद्रः शरण्यः, कलिवर्ज्यानि; ८१६ कलौ दुराचारविशेषाः, कलौ कर्तर्येव पापलेपः. **देवलः** — ८१६ संन्यासाग्निहोत्रयोः कलिकालावधिः. **प्रजापतिः** – ८१६ कलौ मद्यमांसवर्जनम्. **पराशरः** – ८१७ सर्वधर्माणां कृते भावः कलावभावश्च, युगक्रमेण तपआदिरूपा मन्वादिप्रोक्ताश्च धर्मभेदाः; ८१९ कृतादिषु क्रमेण पतितसंबन्धीनि त्याज्यस्थानानि पातित्यनिमित्तानि च; ८२२ कृतादिषु शापपरिपाककालभेदाः गुरुलघुरूपा दानपद्धतिभेदाश्च; ८२३ कलिसामर्थ्यप्रयुक्तवृत्तान्तवर्णनम्, कृतादिषु प्राणस्थानभेदाः; ८२६ तत्तद्युगधर्मा युगस्थिता द्विजाश्च तत्तद्युगरूपत्वान्न निन्द्याः, कलिवर्ज्यानि. **बृहत्पराशरः** – ८२९ मनूक्ता धर्माः कृतादियुगत्रयविषयाः, युगभेदेन धर्मभेदाः, पतितसंबन्धित्याज्यस्थानभेदाः, पातित्यनिमित्तभेदाः, दानपद्धतिभेदाः, युगरूपधर्मब्राह्मणा अनिन्द्याः, कलिसामर्थ्यप्रयुक्ता लोकवृत्तान्ताः. **अत्रिः** – ८३० कलौ सिद्धान्ताज्ञानं सप्तशत्यादीनां वेदत्वग्रहश्च. **सुमन्तुः** – ८३० कलौ आततायिवधे दोषाभावः. **क्रतुः** – ८३० कलौ नियोगादिनिषेधः. **लौगाक्षिः** – ८३० अर्धाधानसर्वाधानयोर्युगभेदेन व्यवस्था. **मार्कण्डेयः** – ८३० कलौ मधुपर्के पशुहननस्य निषेधः प्रत्याम्नायश्च. **वैशम्पायनः** – ८३० कल्पोक्ता मन्त्रसंख्या कृते, तद्द्विगुणत्रिगुणचतुर्गुणाः क्रमेण त्रेतादिषु ग्राह्याः. **वायुपुराणं ब्रह्माण्डपुराणं च** - ८३१ प्रजासु धर्माधर्माभावः आयुरादीनां साम्यं वर्णाश्रमव्यवस्थाया अभावः उत्तमाधमत्वाभावः संकल्पजा संततिः इत्येवमादयः कृतयुगवृत्तान्ताः, कृतयुगतत्संध्ययोः कालमानम्, ध्यानज्ञानयज्ञदानानि क्रमेण चतुर्युगधर्माः; ८३२ चतुर्मुखस्य कालस्य युगानि मुखानि, युगानि क्रमेण श्वेतरक्तरक्तपिङ्गलश्यामवर्णानि चतुस्त्रिद्व्येकजिह्वानि च, कृतादिषु त्रिषु क्रमेण ब्रह्मयज्ञविष्णुरूपेण कलौ स्वरूपेण महादेवः पूज्यः, युगत्रयस्थाः पातकिनः कलौ जायन्ते; द्वापरे कलौ च ऋषीणां वेदानां च सृष्टिः, वर्णभेदेन यज्ञस्वरूपभेदाः; ८३३ त्रेतायां वर्णाश्रमव्यवस्थानं राज्यसंस्थोत्पत्तिश्च, त्रेतायां यज्ञप्रवर्तनं तत्प्रकारः धर्माः लोकवृत्तानि च; ८३४ द्वापरे वेदाद्यर्थानवधारणम्, धर्माधर्मादिविषयेषु मतभेदोद्भवः, व्यासादिकृतवेदतच्छाखाविभाजनम्, लुब्धत्वादीन्यनेकानि लोकवृत्तानि; ८३६ द्वापरस्य संध्यांशशेषे कलियुगप्रवृत्तिः, तत्रत्यानां हिंसासूयानृतधर्मोत्सादादीनां लोकवृत्तानां विस्तरेण वर्णनम्; ८३९ स्वायंभुवमन्वन्तरे कलिसंध्यांशकाले चन्द्रमःसगोत्रः प्रमितिः माधवांशयुतः सशस्त्रविप्रपरिवृतो म्लेच्छान् पाषण्डांश्च निःशेषं हत्वा गङ्गायमुनयोर्मध्ये अवतारसमाप्तिं कृतवानितीतिहासकथनम्, युगान्तस्थितप्रजावृत्तवर्णनम्, कलियुगान्ते प्रवृत्ते कृतयुगे कलियुगशिष्टाः कार्तयुगीश्च प्रजाः प्रति सप्तर्षयो धर्ममुपदिशन्ति; ८४१ युगानां ब्राह्मणादिवर्णरूपत्वं तत्र पूज्यदेवताभेदः समानफलकर्मकालतारतम्यं च. **मत्स्यपुराणम्** – ८४१ द्वापरे वेदविभाजनम्, त्रेतायां वर्णभेदेन यज्ञस्वरूपभेदः, उत्तरोत्तरवर्णाः पूर्वपूर्ववर्णानुवर्तिनः, इज्यादानतपःसत्यानि धर्माः, दण्डनीतिप्रवृत्तिः, आरोग्यादीनि लोकवृत्तानि; ८४२ त्रेतायां यज्ञप्रवृत्तिप्रकारकथनम्; वर्णध्वंसलोभादिविकारधर्मादिविषयकमतभेदादीनां द्वापरवृत्तान्तानां वर्णनम्, द्वापरे वेदविभाजनम्; ८४३ विस्तरेण कलिप्रभावप्रयुक्तलोकवृत्तान्तकथनम्; ८४४ स्वायंभुवे मन्वन्तरे कलियुगान्तकाले भृगुकुलस्थेन चन्द्रमःसगोत्रेण सशस्त्रविप्रसहायकेन विष्णोरवतारेण प्रमतिना दुराचारासु प्रजासु बहुशो हतासु अवशिष्टाः प्रजा अत्यन्तदुर्दशां प्राप्ता इतीतिहासकथनं विस्तरेण दुर्दशावर्णनं च, ततः कृतयुगारम्भः; ८४५ चतुर्णां युगानां कालमानं धर्माधर्मतारतम्यादिरूपं स्वाभाविकवृत्तं च. **विष्णुपुराणम्** – ८४६ विस्तरेण कलिकालप्रभाववर्णनम्, कलिप्राबल्यलिङ्गानि, कृतकलियुगयोः क्रमेण गुरुलघुकर्मणोः समानफलत्वम्;

८५० कृतादौ गुरुधर्मसाध्यं फलं कलौ लघीयसा धर्मेण साध्यते, तत्रापि केशवनामसंकीर्तनं महाफलदम्; ८५१ कलेश्चतुःशताधिकचतुःसहस्राब्द्यां गतायां श्रौताधानसंन्यासौ न कर्तव्यौ. **विष्णुधर्मोत्तरपुराणम्** - ८५१ कृतादिषूत्तरोत्तरं धर्मायुषोर्ह्रासः क्रमेण ब्राह्मणादिवर्णप्राधान्यं विष्णोर्वर्णभेदाश्च, वेदविभाजनम्, कलिप्रयुक्तलोकवृत्तानि, कलौ स्वल्पेन कर्मणा फलसिद्धिः; ८५२ कृते प्रत्यक्षदेवपूजनम्, त्रेताद्वापरयोः प्रत्यक्षे प्रतिमाप्रतिष्ठापिते देवे पूजनम्, कलौ प्रतिमाप्रतिष्ठापितमात्रदेवपूजनम्, कृतादौ पुष्करादिसेव्यतीर्थभेदः. **श्रीमद्भागवतपुराणम्** – ८५३ राज्ञा परीक्षिता वृषरूपितं धर्मं जिघांसुं कलिं जिघांसुना शरणागताय कलये निवासस्थानानि द्यूतादीनि प्रदत्तानि; ८५५ कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ, कलौ अर्हन्नामा राजा वेदादिदूषकपाषण्डप्रवर्तकः; ८५६ कृतादिषु क्रमेणेश्वरनामरूपोपासनाभेदाः, सर्वफलानां हरिसंकीर्तनमात्रसाधकत्वेन कलेः प्रशंसा; ८५८ कलौ विश्वस्फूर्जिर्नाम राजा ब्राह्मणादिवर्णान् पुलिन्दादिसंज्ञकान्म्लेच्छप्रायान् करिष्यति, ततो म्लेच्छप्राया राजानः प्रजाः पीडयिष्यन्ति, कलिप्रयुक्तप्रजावृत्तवर्णनम्; ८५९ दुराचारभूयिष्ठेऽतिदुरवस्थचराचरे कलियुगसमाप्तिकाले विष्णुः कल्किरूपेणावतरिष्यति, स धर्मभ्रष्टान् हत्वा देवापिमरुद्वारा चन्द्रसूर्यराजवंशौ प्रवर्त्य वर्णाश्रमयुतं कृतं स्थापयिष्यति, कृतयुगारम्भोपलक्षको ग्रहयोगः; ८६० कृतयुगीयसत्य - दया - तपो - दानरूपधर्मपादानां त्रेतादियुगेषु अनृतहिंसादिभिरधर्मपादैरुत्तरोत्तरं पादशो वृद्धैर्ह्रासः, युगप्रयुक्तलोकवृत्तानि, सत्त्वस्य रजसः रजस्तमसोस्तमसश्च क्रमेण युगेषु प्राधान्यम्; ८६१ कलिदोषप्रयुक्तानि लोकवृत्तानि, कलिदोषनिवारकं हरिकीर्तनम्. **लिङ्गपुराणम्** – ८६३ सत्त्वरजस्तमसां युगेषु प्राधान्यविवेकः, कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ, युगभेदेन धर्मभेदाः, विस्तरेण युगवृत्तवर्णनम्; ८६८ स्वायंभुवे मन्वन्तरे मानवांशेन चन्द्रमःकुले जातः प्रमतिः कलियुगान्ते पुनर्विष्णोरंशेन जातः सन् बहुशोऽधार्मिकान् हन्ति, केचिदत्यन्तदुरवस्था म्लेच्छदेशान् गच्छन्ति, ततः प्रवृत्ते कृतयुगे अवशिष्टधार्मिककलियुगीयप्रजाभ्यः कार्तयुगीनां प्रजानां संभवः, कार्तयुगीः प्रजाः सप्तर्षयो धर्ममुपदिशन्ति. **स्कन्दपुराणम्** – ८६९ युगेषु सत्त्वरजस्तमसां प्राधान्यविवेकः, युगभेदेन धर्मभेदाः, द्वापरे वेदविभाजनम्, युगगुणदोषप्रयुक्तचराचरवृत्तानि; ८७१ कलेः चतुःसहस्राधिकेषु वर्षेषु गतेषु राजा प्रमतिरवतीर्य धर्मभ्रष्टाः प्रजा निहनिष्यति, ततः कालेनावशिष्टा अपि प्रजा धर्मभ्रष्टा अत्यन्तदुर्गताः प्रत्यन्तदेशान् गमिष्यन्ति, पुनश्च कालेन धर्मभ्रष्टाः प्रजाः धर्मघातकं शाल्वं नाम म्लेच्छं च हन्तुं शम्भलग्रामे विष्णुयशसः सकाशात् परमेश्वरो विष्णुरवतीर्य पापिनो हत्वा धर्मस्थापनं करिष्यति, ततः प्रवृत्ते कृतयुगे मरोर्देवापेश्च सकाशात् सूर्यसोमवंशौ श्रुतदेवाच्च ब्राह्मणकुलानि प्रवर्त्स्यन्ति; युगेषूत्तरोत्तरमल्पकालेन धर्मसिद्धिः, कलौ पुराणश्रवणं विष्णूपासनं च परो धर्मः, कलिदोषप्रयुक्तलोकवृत्तानि; ८७२ कलौ विष्णूपासनमेव शीघ्राधिकफलदं कामरसयोर्दुर्जयत्वं च, तत्प्रसङ्गेन धर्मवर्णनामद्विजवृत्तान्तकथनम्, विस्तरेण कलिदोषप्रयुक्तलोकवृत्तान्तकथनम्; ८७४ विष्णूपासनसदाचारादेः कलिबाधानिवर्तकत्वम्, नैष्ठिकव्रताधिकारस्य कलौ निषिद्धत्वात् संधावनिषेधः; कलौ शिवपुराणश्रवणमेव श्रेयान् धर्मः; कलौ गङ्गातीर्थस्य दानस्य विश्वेश्वरदेवस्य वाराणसीपुर्याश्च प्राधान्यम्; ८७५ कृतयुगप्रमाणम्, कृते हरिः शुक्लः, चतुष्पाद्धर्मः, लोकानां वयोवस्थामानम्, संकरहीनं चातुर्वर्ण्यमात्रम्, अन्यानि च बहूनि कार्तयुगलोकवृत्तानि; त्रेतायुगमानम्, त्रेतायां रक्तो हरिः, धर्मस्त्रिपात्, यमकृतं नरकसज्जीकरणम्, वयोवस्थामानम्, संकरोत्पत्तिः, अन्यानि च बहूनि त्रेतायुगीयलोकवृत्तानि; ८७६ द्वापरयुगमानम्, द्वापरे हरिः कपिशवर्णः, धर्मो द्विपाद्, वयोवस्थामानम्, अन्यानि च द्वापरीयलोकवृत्तानि; कलियुगमानम्, कलौ हरिः कृष्णवर्णः, धर्म एकपाद्, वयोमानम्, तपोध्यानयज्ञदानानि यथाक्रमं युगेषु प्रशस्तानि, अन्येषां च बहूनां कलियुगलोकवृत्तानां विस्तरेण वर्णनम्; ८७७ कृतादियुगमानानि, युगक्रमेण हरिः श्वेतरक्तकपिलकृष्णवर्णः, कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ, कलौ एकपदोऽपि धर्मस्य पश्चात् लोपः, अन्यानि बहूनि तत्तद्युगलोकवृत्तानि, तपोज्ञानतीर्थयात्रादानानि क्रमेण युगेषु प्रशस्तानि; ८७९ युगभेदेन प्रशस्तानि तीर्थक्षेत्राणि, युगेषु धर्माधर्मयोस्तारतम्यं तपआदिधर्मप्राधान्यं हरेर्वर्णभेदः उपास्यदेवभेदश्च, अन्यानि

बहूनि युगवृत्तानि. **सह्याद्रिखण्डः** – ८८१ कलिवर्ज्यानि, कलियुगवृत्तवर्णनम्. **गरुडपुराणम्** – ८८१ कृते चतुष्पदो धर्मस्य त्रेतादिषु पादशः क्षयः, युगेषु हरेर्वर्णभेदाः, सत्त्वादिगुणप्राधान्यम्, कलौ हरिकीर्तनस्यैव सर्वफलदत्वम्, कलिवर्ज्यानि, युगस्वभावप्रयुक्तलोकवृत्तानि. **पद्मपुराणम्** - ८८२ युगभेदभिन्नमायुर्मानम्, युगेषु तीर्थप्राधान्यम्, कलौ हरेर्भजनं सर्वकलिदोषबाधकम्, युगप्रयुक्तलोकवृत्तानि; ८८३ ध्यानयज्ञदेवार्चनानि युगत्रये प्रशस्तानि, कलौ दानं हरिकीर्तनं पुराणश्रवणं च प्रशस्तम्; युगेषु क्रमेण तपआदिधर्मप्राशस्त्यम्, युगक्रमेण धर्माधर्मयोरुत्कर्षापकर्षौ, युगमानानि, युगलोकवृत्तानि; ८८४ शालग्रामशिलाद्वारकाशिलयोरर्चनादिना कलौ पापनाश उत्तमलोकप्राप्तिश्च. **ब्रह्मपुराणम्** - ८८४ युगेषु क्रमेण तपोयज्ञादीनां श्लाघ्यत्वम्, देशकालप्रयुक्तधर्माणां तत्तद्देशकालयोः प्राशस्त्यम्, कालप्रयुक्तो धर्मो वृद्धिहानिस्वभावः, त्रेतादिषु धर्मस्य पादशः क्षयः; ८८५ युगकालभेदप्रयुक्तो जातिदेवतीर्थादिभेदः, युगक्रमेण तीर्थानां त्रिदैवत्यत्वादि दैवत्वादि च; भूयसा विस्तरेण कलिदोषप्रयुक्तलोकवृत्तवर्णनम्, कलिवृद्धिज्ञापकानि लक्षणानि, कलौ अल्पायासेन महती फलसिद्धिः; ८८७ विस्तरेण कलिदोषप्रभवजनवृत्तवर्णनम्; ८९० कलिवर्ज्यानि, कलियुगान्ते राज्ञाम् ऋषीणां च वृत्तम्. **ब्रह्मवैवर्तपुराणम्** – ८९२ युगेषु धर्मस्योत्कर्षापकर्षौ, कृते धर्मस्य सर्वत्र स्थितिः, त्रेतादिषु धर्मस्य योग्यायोग्यस्थानानि; कृते परिपूर्णो धर्मः, कृतयुगीयलोकवृत्तानि; ८९३ त्रेतादिषु पादशो धर्मह्रासः, विस्तरेण कलियुगीयचराचरवृत्तवर्णनम्, कलियुगान्ते द्वादशादित्यैर्भूयोवृष्टिभिश्च सर्वसंहारः, तदन्ते कृतयुगप्रवृत्तिः; ८९४ कलिवर्ज्यानि; विस्तरेण कलियुगीयवृत्तवर्णनम्, अन्ते सूर्यातपेन जलौघेन च सर्वनाशः, ततः कृतयुगप्रवृत्तिः; ८९५ शिवाद्यर्चनं कलिदोषबाधकम्. **वराहपुराणम्** – ८९५ युगेषु विष्णोर्वर्णभेदा मूर्तिभेदाश्च, ब्रह्मकृता धर्मसृष्टिः, धर्मस्य त्रेतादिषु पादशो ह्रासः, युगेषु त्रिषु सत्त्वप्राधान्यं कलौ रजस्तमःप्राधान्यम्; युगस्वभावभेदाः तत्प्रयुक्तलोकवृत्तानि च. **कूर्मपुराणम्** – ८९६ कलौ श्रीकृष्णभक्तिः शरणम्, कृष्णभक्तस्यापि महेश्वरनिन्दया नरकप्राप्तिः, दधीच - गौतमशप्तानां संसर्गस्त्याज्यः; ८९७ कलियुगे वाराणसीनिवासः पापनाशकः, कृतादियुगत्रये नराः सत्यवादिनो धार्मिकाश्च; युगेषु क्रमेण प्रधानभूता धर्मा देवाश्च, कृतादिषु क्रमेण धर्मस्य साकल्यं पादशो ह्रासश्च; कृते मिथुनोत्पत्तिः प्रजानामुत्तमाधमत्वाभाव आयुषस्तुल्यत्वमन्यानि च कृतयुगीयप्रजावृत्तानि; ८९८ त्रेतायां प्रजानां पर्यायेण गुणदोषकृतौ कुशलोत्कर्षापकर्षौ, मर्यादास्थापनार्थं ब्रह्मकृता क्षत्रियसृष्टिः वर्णाश्रमव्यवस्था यज्ञप्रवृत्तिश्च; द्वापरे मतिभेदरागलोभाद्युत्पत्तिः, व्यासकृतं वेदविभाजनं परमर्षिकृतं संहितादिप्रवचनं च, निर्वेदादिक्रमेण ज्ञानोत्पत्तिः, कृतादिषु क्रमेण धर्मोऽस्ति प्रवर्तते व्याकुलीभवति नश्यति च; ८९९ विस्तरेण कलियुगीयलोकवृत्तवर्णनम्, कलौ शिवोपासनया सर्वकामसिद्धिः; ९०१ युगभेदेन तीर्थभेदप्राधान्यम्, कलियुगवृत्तवर्णनम्. **भविष्यपुराणम्** – ९०१ द्वापरयुगीय आर्यदेशभूमिकीर्तिकालो म्लेच्छदेशभूमिकीर्तिकालश्च, कलियुगे म्लेच्छवंशविवर्धनकालः मूशाख्यम्लेच्छमतप्रसारः आर्याचारनाशश्च; ९०२ कलियुगागमनलिङ्गानि, कलौ हरिः शरणम्; कृतयुगे पशुहिंसारहितो यज्ञः; कृतादिषु विष्णुरूपाणि; पितृशर्मकृता कलियुगे गार्हस्थ्यस्य प्रशंसा; ९०३ युगभेदेन पूजाप्रकारभेदाः पूज्यभेदाश्च; विश्वरूपस्य विष्णोर्युगक्रमेण बाल्ययौवनवार्धकमरणरूपा अवस्थाभेदाः रूपभेदाश्च, प्रतियुगभिन्नं मानवायुर्मानम्; कलौ शिवनामकीर्तनं गङ्गा च शरणम्, कृतादिषु क्रमेण ध्यानादीनां प्राधान्यम्. **नारदपुराणम्** - ९०४ युगधर्मदेशाचारयोः कर्तव्यता, कलिवर्ज्यानि; ९०५ कृतयुगमानं कृतयुगीयमानववृत्तानि च, हरिः शुक्लवर्णः; ९०६ त्रेतायां धर्मे न्यूनता, हरिः रक्तः, मानवाः क्रियायोगरताः; द्वापरे धर्मो द्विपाद्, हरिः पीतः, वेदविभाजनम्, असत्यनिरतत्वादीनि लोकवृत्तानि; कलियुगे धर्मः एकपाद्, हरिः कृष्णः, विस्तरेण कलियुगीयचराचरवृत्तवर्णनम्; ९०८ कृतादिषु क्रमेण तपोध्यानयज्ञदानानि प्रशस्तानि, कृतादौ दीर्घकालकर्मसाध्यस्य फलस्य कलौ अल्पकालकर्मसाध्यत्वम्, कृतादौ ध्यानादिसाध्यस्य फलस्य कलौ हरिकीर्तनसाध्यत्वम्, कलिदोषबाधिकाया विष्णुभक्तेः शिवभक्तेश्च विस्तरेण वर्णनम्; ९०९ कृतादिषु प्रधानतीर्थभेदाः, कलौ गङ्गायाः शिवार्चनस्य च माहात्म्यम्. **अग्निपुराणम्** – ९०९ कलौ शुक्लयजुर्वेदस्य

प्राधान्यम्, कलिवृत्तानि, युगान्ते धर्मस्थापककल्क्यवतारः, ततः कृतयुगप्रवृत्तिः, कलौ हरिपूजनं सर्वपापहरम्. **देवीभागवतम्** – ९१० सत्यादिकृतयुगधर्मनिष्ठानां सतां कलिस्वभावाधर्मनिष्ठानामसतां योगक्रियारूपत्रेताद्वापरनिष्ठानां मध्यमानां च तारतम्येन सर्वेषु युगेषु सत्त्वात् तदपेक्षया प्रत्येकं युगं कृतादिचतुष्टयात्मकं भवति; श्रीकृष्णस्य दुष्टविनाशप्रतिज्ञा कालप्रभावानुरोधेन धर्महीनबहुले कलिकाले धर्मविरोधकविषया, युगभेदानुसारि पुरुषार्थप्राधान्यम्; ९११ कृतादियुगीयानां साधूनां कलियुगकाले स्वर्गलोकेऽवस्थानं पापिनामिहलोकेऽवस्थानम्, तथा कलियुगीयानां पापिनां कृतादियुगकाले नरकेऽवस्थानं साधूनामिहलोकेऽवस्थानम्, स्वर्गात् नरकाच्च प्रच्युतानां तेषां क्रमेण पुनः कृतादियुगेषु कलियुगे चेहावस्थानम्; ९१२ कृतादियुगप्रयुक्तलोकवृत्तानि, त्रेतादिषूत्तरोत्तरं धर्मह्रासाधिक्यम्, आहारशुद्धि – चित्तशुद्धि - धर्मप्रकाशेषु तथा वृत्तसंकर – धर्मसंकर – वर्णसंकरेषु पूर्वपूर्वस्योत्तरोत्तरकारणत्वम्; ९१३ कलियुगे देव्युपासनैव पापनिष्कृत्युपायः, देव्याः अजपामन्त्रं गायत्रीमन्त्रं च जपतामपि तन्मन्त्रमहिमज्ञानाभावः; ९१४ पञ्चसहस्रवर्षपरिमिते कलौ गते काशीवृन्दावनातिरिक्तसर्वतीर्थानां वैकुण्ठगमनम्, दशसहस्रवर्षपरिमिते कलौ गते विष्णुशिवशक्तीनां तदुपासकानां वेदशास्त्रादीनां च स्वस्वस्थानगमनम्, विस्तरेण कलियुगीयचराचरवृत्तकथनम्; ९१६ कलियुगान्तकाले कल्केरवतारः, तत्कृतः सर्वम्लेच्छसंहारः, वर्षधाराप्लुतायाः पृथिव्याः द्वादशादित्यैः शोषणम्, ततः कृतयुगप्रवृत्तिः, कृतयुगीयलोकवृत्तकथनम्. **शिवपुराणम्** – ९१७ चातुर्वर्ण्यस्य संकराणां स्त्रीणां पुत्राणां च क्रमेण कलिप्रयुक्तवृत्तकथनम्; युगभेदप्रयुक्तो धर्मभेदो रत्नादिमयशिवलिङ्गभेदश्च, सर्वेषु युगेषु कलौ च विशेषतो भक्तिः शरणम्, युगेषूत्तरोत्तरं पादशो धर्मह्रासः; ९१८ जैनधर्मप्रवर्तकमरिहन्नामकमुनिं तच्छिष्यांश्च प्रति तद्बलनिनाशविषया विष्ण्वादिभिः कृतः कलियुगे वेदविरुद्धधर्मप्रसारोपदेशः; वाराहकल्पीयवैवस्वतमन्वन्तरे अष्टाविंशतौ युगचतुष्केषु द्वापरान्तेषु वेदविभाजनादिद्वारा लोकहितार्थं विष्णोर्व्यासरूपेणाष्टाविंशतिरवतारास्तत्साहाय्यार्थं शिवस्य सशिष्यचतुष्टयस्य मुनिरूपेण कलियुगारम्भेषु अष्टाविंशतिरवतारास्तेषां सर्वेषां नामानि च; ९२१ महाबलस्य शिवस्य प्रतियुगं वर्णभेदः कलौ मृदुता च, कलौ पुराणश्रवणं शिवनामसंकीर्तनं च परमो धर्मः; अष्टाविंशतिद्वापरान्तावतीर्णव्यासनामानि शिष्यप्रशिष्यसहितयोगेश्वरावताराश्च; ९२२ कलौ पञ्चाक्षरमन्त्रः पापहारकः, कृतादियुगेषु धर्मविशेषाः. **नरसिंहपुराणम्** – ९२२ विस्तरेण कलिदोषप्रयुक्तलोकवृत्तकथनम्, युगभेदभिन्ना धर्मभेदाः, कलौ फलं कृताद्यपेक्षयाऽल्पकालसाध्यम्, कलौ हरिस्मरणं कलिबाधानिवर्तकम्. **सौरपुराणम्** – ९२३ कलिप्रभावप्रयुक्तलोकवृत्तकथनम्; ९२४ कलौ आन्ध्रदेशे ब्राह्मणाद्विधवाब्राह्मणीजातो मधुशर्मा स्वाचार्यपद्मपादुकशापाद्विस्मृताद्वैतसिद्धान्तः शिवनिन्दां द्वैतमतप्रचारं च करिष्यतीति हेतूक्तिरहितं भविष्यकथनं विस्तरेण कृत्वा पुनस्तदेव भविष्यकथनं शिवदग्धभर्तृकया रत्या शिववैरनिर्यातनार्थं प्रेरितः कामसखो मधुः शिवापकीर्तिं शिवाद्वैतखण्डनं च कर्तुं मोहादिभिः स्वसखैः सहितोऽवतरिष्यतीति हेतूक्तिसहितं विस्तरेण कृतम्. **आदिपुराणम्** – ९२७ विस्तरेण कलियुगीयलोकवृत्तकथनम्, सत्यमेव कलावुपकारकम्, नियोगो दत्तादानं च कलिवर्ज्ये. **मुद्गलपुराणम्** – ९२९ शिवोपासकाः कलौ दुराचारा नरकगामिनश्च भविष्यन्तीति शिवद्वेषाद्दक्षस्योक्तिः; दक्षयज्ञभागिनो ब्राह्मणादयः कलौ पाखण्डा नरकगामिनश्च भवन्तु दक्षयज्ञभागी विष्णुश्च पाखण्डसाहाय्यकृत् भवत्विति दधीचेः शापः; कलौ श्रीगणेशचरितं सर्वपापहरम्; ऋषभेण संन्यासिनाऽनुष्ठितो धर्मो गृहस्थेनार्हन्नामकेन राज्ञा कलौ गृहस्थैरनुष्ठापितो नरकप्रदो जैनमार्ग इत्युच्यते, स भरतेन प्रतिरुद्धः; ९३० युगभेदेन धर्मभेदः उपास्यभेदश्च, त्रेतादिषु धर्मस्य पादशो ह्रासः अन्ते च सर्वस्य नाशः; ९३१ सर्वेषु युगेषु गणेशः पूज्यः, युगभेदेन गणेशस्य नामरूपभेदाः; कृतत्रेताद्वापरेषु लोकवृत्तानि, संध्यांशेषु पूर्वयुगधर्महासारम्भः; ९३२ युगेषु सत्त्वादिगुणप्राधान्यम्, विस्तरेण कलियुगीयलोकवृत्तानि, दधीचिगौतमशप्तानामधार्मिकाणां बुद्धरूपविष्णोः साहाय्यम्, विष्णोस्तीर्थादीनां च कलियुगे वासमर्यादा, लोकहिताय कलौ गणेशावतारः; ९३४ कृतादिषु क्रमेण ध्यान - तपः - स्वधर्म - नामस्मरणानां सर्वफललम्भकत्वम्, कलौ संन्यासाभावः; कृते पूर्णाया गणेशभक्तेस्त्रेतादौ पादशो

## वर्णाः तद्वृत्तयश्च

(पृ. ९६५ - १४२६)

एकेश्वरदेहोत्पन्नानामपि वर्णानां तद्धर्माणां च पृथक्त्वमिति समाधानं च, ब्राह्मणप्रशंसा; भार्गवेण क्षत्रियनाशे ब्राह्मणेभ्यः क्षत्रियासु क्षत्रियोत्पत्तिः; १०९० ब्राह्मणप्रशंसा; १०९१ क्षत्रियस्य शौर्यं वृत्तिः, न भिक्षा; ब्राह्मणप्रशंसा; वर्णवृत्तयः तासां लोकयात्रासंपादकत्वं च; १०९२ ब्राह्मणप्रशंसा, कृष्यादिभिरैहिकं जीवनं दण्डनीतित्रयीविद्याभ्यां परलोकप्राप्तिश्च; १०९३ वर्णानां वृत्तयः; १०९४ ब्राह्मणप्रशंसा, अविक्रेयाणि; १०९५ वर्णानां वृत्तयः ब्राह्मणप्रशंसा च; गुणकर्मविभागेन मुखाद्यवयवेभ्यश्च चातुर्वर्ण्यसृष्टिः, वर्णवृत्तयः, ब्राह्मणप्रशंसा; ब्राह्मणप्रशंसा; १०९६ भार्गवेण क्षत्रियनाशे हेमकारादिजात्याश्रितेभ्यः क्षत्रियेभ्यः कश्यपेन क्षत्रियवंशानां प्रतिष्ठापनम्; १०९८ ब्राह्मणप्रशंसा, क्षत्रियशब्दनिर्वचनम्; वैश्यशूद्रयोर्वृत्तयः; १०९९ ब्राह्मणप्रशंसा; ब्राह्मणस्य निषिद्धा वृत्तयः; वर्णानामुत्पत्तिः, ब्राह्मणक्षत्रियसहयोगप्रशंसा; ११०० अत्यन्तापदि ब्राह्मणस्य वैश्यवृत्तिः, तत्राविक्रेयाणि, विनिमयविधिः, ब्राह्मणप्रशंसा; ११०१ आपद्वृत्तिरनापद्यधर्मः, क्षत्रियस्याऽऽपद्वृत्तिः, ब्राह्मणस्याऽऽपदि विज्ञानबलेन यथाकथंचिज्जीवनम्; ११०३ ब्राह्मणप्रशंसा, अत्यन्तापदि ब्राह्मणो यथाकथंचित् जीवेत्, तत्र विश्वामित्रस्य श्वजाघनीभक्षणं दृष्टान्तः; ११०९ अत्यन्तापदि स्तेयानुमतिः, ब्राह्मणप्रशंसा; वर्णोत्पत्तिः, वर्णाः श्वेतलोहितपीतकृष्णवर्णाः, तत्राऽऽक्षेपः, मूलत एकस्यैव ब्राह्मणवर्णस्य गुणकर्मभेदेन जात्यन्तरतापत्तिः; ११११ परमेश्वरावयवेभ्यो वर्णानामुत्पत्तिः, ब्राह्मणप्रशंसा; भूतधर्मापीडनेन अल्पभूतपीडनेन वर्तितव्यम्, विक्रेयाः पदार्थाः, ब्राह्मणप्रशंसा; १११२ शोभना वृत्तिः, वर्णानां वृत्तयः, शूद्रस्याऽऽपद्वृत्तिः; १११३ बीजक्षेत्रगतसत्त्वादिगुणतारतम्येन शुद्धहीनजात्युत्पत्तिः, सत्त्वादितारतम्यं वर्णजननापादानभूतेश्वरावयवभेदप्रयुक्तम्; परेशावयवेभ्यो वर्णोत्पत्तिः, ब्राह्मणप्रशंसापराणि बहूनीतिहासकथनानि, क्षत्रियप्रशंसा; १११८ ब्राह्मणस्य गुणवर्णनं क्षत्रियपूज्यत्वं च; ११२० ब्राह्मणप्रशंसा, गोकुलतृषाविघातनिषेधः; अब्राह्मणेन ब्राह्मण्यं भूयिष्ठजन्मसाध्यम्, तत्तात्पर्यकं मतङ्गाख्यानम्; ११२६ क्षत्रियपूज्यत्वदानपात्रत्वासुरसेव्यत्वपर्यवसानकैर्बहुभिर्गुणैर्विस्तरेण ब्राह्मणप्रशंसा; ११३१ ब्राह्मणात् त्रैवर्णिकस्त्रीषु ब्राह्मणोत्पत्तिः, चत्वार एव वर्णा यज्ञार्थं सृष्टाः; ब्राह्मणप्रशंसा, ब्राह्मण्यं दुर्लभम्, ब्राह्मणः क्षत्रियवैश्याभ्यां संस्पृश्य शूद्रेणासंस्पृश्य परिचरणीयः; ११३३ ब्राह्मणप्रशंसा; गोपालनम्, गोब्राह्मणप्रशंसा; ११३४ असाधुप्रतिग्रहनिषेधपरो वृषादर्भिसप्तर्षिसंवादः; ११३७ ब्राह्मणप्रशंसा; ११३८ वैश्यस्य वृत्तयः, तत्राविक्रेयाणि, ब्राह्मणप्रशंसा, धर्मेणार्थसंग्रहः, अर्थविनियोगः, चातुर्वर्ण्यं नैसर्गिकम्; अनेकगुणवर्णनेन ब्राह्मणप्रशंसा; ११३९ पवनसहस्त्रार्जुनसंवादरूपेण युधिष्ठिरवासुदेवसंवादरूपेण च विस्तरेण ब्राह्मणप्रशंसा; ११५० ब्राह्मणप्रशंसा, वृत्त्यर्थविद्याहीनाश्रयनिषेधः, ब्राह्मणसंबन्धाभावेन स्वकर्मत्यागाच्च क्षत्रियाणां वृषलत्वप्राप्तिः, क्षत्रियासु ब्राह्मणेभ्यः क्षत्रियोत्पत्तिः; ११५१ ब्राह्मणक्षत्रियवैश्यवृत्तयः, आपन्निवृत्तौ आपद्वृत्तित्यागः, अनावश्यकधर्मार्थवित्तार्जनात् वित्तानर्जनं श्रेयः; हलवाहकबलीवर्दविषयका धर्माः. **हरिवंशः** – ११५२ वानप्रस्थानां वनं वृत्तिः, वर्णोत्पत्तिः, श्वेतादिवर्णप्रयुक्तं वर्ण इति जातिनाम, त्रैवर्णिकानां वेदाधिकारः, शूद्रस्य नास्ति वेदाधिकारः. **वाल्मीकिरामायणम्** – ११५२ ब्राह्मणप्रशंसा, वर्णोत्पत्तिः, वाहनकर्मणि दुर्बलवृषभयोजननिषेधः. **मनुः** – ११५३ परमेश्वरस्य मुखाद्यवयवेभ्यो वर्णसृष्टिः, वर्णानां वृत्तयः; ११५५ ब्राह्मणप्रशंसा; ११५८ ब्राह्मण एव सर्वस्य जागतिकधनस्य स्वामी सर्वेषामाचारोपदेष्टा च; शूद्रयाजनस्य शूद्रात्प्रतिग्रहस्य च निन्दा; ११५९ अनापदि ब्राह्मणेन यथासंभवं परद्रोहाल्पद्रोहाभ्यां स्वशरीराक्लेशेन च वर्तितव्यम्, ब्राह्मणस्य मुख्या ऋतादयो वृत्तयस्तासां लक्षणानि च, सेवावृत्तिनिषेधः; ११६३ धान्यसंचयपरिमाणानां तज्ज्यायस्त्वस्य च तारतम्यम्, धान्यसंचयपरिमाणानां वृत्तिसंख्यानां च परस्परसंबन्धः; ११६८ वृत्तिर्धर्मसाधनम्, वृत्त्यङ्गभूतः सदाचारः; ११७० आपदि राजयाज्यशिष्येभ्यः प्रतिग्रहानुमतिः, अक्षत्रियराजादिभ्यः प्रतिग्रहे क्षत्रियादपि लुब्धोच्छास्त्रवर्तिनो राज्ञः प्रतिग्रहे च महान् दोषः; ११७४ ब्राह्मणावगूरणताडनरक्तस्रावणनिन्दया ब्राह्मणप्रशंसा; ११७६ वर्ज्यः प्रतिग्रहः; ११७८ धनस्यार्जनोपायभेदप्रयुक्तं शुद्धशबलकृष्णत्वरूपं त्रैविध्यम्; ११७९ प्रतिग्राह्याः पदार्थाः, आहताभ्युद्यताप्रचोदितभिक्षाशय्याद्यनङ्गीकारे प्रत्यवायः, गुर्वाद्यर्थं सर्वतः प्रतिग्रहस्तस्य स्वभोगार्थतानिषेधश्च, गुर्वाद्यभावे

ऋणापाकरणे च धनिना प्राप्तिपत्रं देयम्; आधिप्रतिभुवोर्लेख्यसाक्षिणोश्च प्रयोजनविवेकः, प्रतिभुव आधेश्च भेदाः, साधिधनप्रयोगे विधानानि; १२८२ पण्यपदार्थः, वाणिज्ये लाभानुसारिमूल्यकल्पनम्, वाणिज्येऽतिसंधाननिषेधः, वाणिज्यकौशलम्; क्षेत्रवृतिप्रकारः, खिलभूमिं प्रथमं क्षेत्रीकुर्वन् तत्स्वामी; १२८३ ब्राह्मणस्य स्तेयापवादतदपवादौ; अब्राह्मणात्प्रतिग्रहात् राज्ञः प्रतिग्रहः श्रेयान्, राजब्राह्मणयोस्तुल्यत्वम्, ब्राह्मणस्य मुख्या वृत्तयः; १२८५ कृषिवाणिज्यादिनानाविधवृत्तिकर्मसु तिथिवारनक्षत्रलग्नरूपमुहूर्तविधानानि; १२८६ बीजवापे नक्षत्रयोगादिरूपो मुहूर्तः, कर्षकाणां वृषाणां च गुणाः, भूमिप्रार्थना; स्तेयापवादः, प्रतिग्राह्याण्युत्तममध्यमद्रव्याणि; १२८७ वार्धुष्यनिन्दा, वार्धुष्यकुसीदलक्षणे; याचनानिन्दा, अदानशीलकर्तृकप्रतिग्रहनिन्दा, अविक्रेयाः पदार्थाः, बीजवापो दिवैव. **बृहस्पतिः** – १२८७ भूमिप्रतिग्रहप्रशंसा, ब्राह्मणप्रशंसा; १२८८ अविद्वद्प्रतिग्राह्याः पदार्थाः, चातुर्वर्ण्यस्य मुख्या वृत्तयः, क्षेत्रगुणदोषौ, कृषिकुसीददोषशमनानि, ब्राह्मणस्याऽऽपद्वृत्तयः शूद्रवृत्तिनिषेधश्च, कुसीदप्रशंसा; १२८९ राज्ञः सकाशात् भूमिमात्रप्रतिग्रहः साधुमान्यः, विपत्तौ जीवनहेतवः, वार्धुषनिन्दा, वृद्धेश्चातुर्विध्यम्, वृद्धिपरिमाणम्; १२९० हलवाहसंख्याविधिः, हलवाहदोषाः, कृषितदङ्गकर्ममुहूर्ताः, स्तेयापवादः. **कात्यायनः** – १२९० कृष्यारम्भयज्ञे निर्वापाहुतिसंख्या - चरुपरिमाणविधानम्; कारिता - मणिमुक्तादि - प्रीतिदत्तानां वृद्धिपरिमाणानि, स्तेयापवादः; १२९१ धर्मजीवनसाधनधनार्जनोपायाः, दातृविशेषेभ्यो धनग्रहणनिषेधः, आपदि पुत्रदारादिदानविक्रययोरनुमतिः. **व्यासः** – १२९१ त्रयो वर्णा द्विजातयो वेदाधिकारिणश्च, ब्राह्मणप्रशंसा, षड्विधो वेदविक्रयः; शूद्रदातृकप्रतिग्रहे विधिनिषेधौ, लोभमूलकातिरिक्तधनसंचयनिषेधः, प्रतिग्रहदोषशमनम्; १२९२ साधकासाधकगृहस्थभेदेन वृत्तिभेदाः, अतिरिक्तधनार्जननिषेधः, ब्राह्मणतदितरलब्धधनानां विनियोगभेदः; स्तेयापवादः, ब्राह्मणस्याऽऽपद्वृत्तयः, कृषिवाणिज्ये वैश्यवृत्ती, वर्णत्रयशुश्रूषा शूद्रवृत्तिः; वर्णोत्पत्तिः, स्तेयापवादपत्रपुष्पादिप्रचयरीतिः, जातकर्मणि प्रतिग्रहानुज्ञा, ब्राह्मणप्रशंसा; १२९३ कुसीदे वृद्धिपरिमाणम्, ब्राह्मणस्य तिलेक्षुपीडननिषेधः. **देवलः** – १२९३ ब्राह्मणप्रशंसा, चातुर्वर्ण्यवृत्तयः, वर्ज्या वृत्तयः, शूद्रस्याऽऽपद्वृत्तिः; हलवाहने वर्ज्या वृषभाः, कर्षणबीजवापादौ कर्तव्यं पूजनम्; १२९५ स्तेयापवादः, अविक्रेयम्, अकर्षणीया भूमिः. **उशना** - १२९५ अविदुषा अप्रतिग्राह्याणि, सच्छूद्रासच्छूद्रविवेकः, ब्राह्मणस्याविक्रेयाणि, शूद्रवृत्तिः. **प्रजापतिः** – १२९५ चातुर्वर्ण्यवृत्तयः, आपद्वृत्तयो दुर्वृत्तयश्च, वार्धुषिकत्वनिन्दा. **यमः** – १२९६ श्रेष्ठा ब्राह्मणवृत्तयः, अभोज्यान्नाः, वार्धुषिकलक्षणम्, ब्राह्मणस्य निषिद्धा वृत्तयः तद्दोषशमनं कर्म च; १२९७ ब्राह्मणस्याविक्रेयाणि, याचनानिन्दा; दुष्प्रतिग्रहदोषशमनं दानम्, राजराजसंबन्धिदातृकप्रतिग्रहनिषेधः, याजनाध्यापनापेक्षया प्रतिग्रहः श्रेष्ठः; १२९८ भिक्षान्नप्रत्याख्याननिषेधः तदपवादश्च; मरणाशौचिदातृकप्रतिग्रहनिषेधः, स्तेयापवादः, प्रतिग्रहनिवृत्तिप्रशंसाः; अविक्रेयाः पदार्थाः; १२९९ स्तेयापवादः. **बृहद्यमः** – १२९९ वार्धुषिकस्य लक्षणं निन्दा च, दातृविशेषेभ्यः प्रतिग्रहस्य निषेधः; राजदातृकप्रतिग्रहनिषेधः, असद्वृत्तिकब्राह्मणनिन्दा. **मरीचिः** – १२९९ अयाज्ययाजकनिन्दा. **दक्षः** – १३०० सद्वृत्तस्य प्रतिग्रहदोषाभावः. **भरद्वाजः** – १३०० अयाचितप्राप्तप्रतिग्रहे दोषाभावः, प्रतिग्रहे हस्ततीर्थविधिः. **संवर्तः** – १३०० राजदातृकप्रतिग्रहनिषेधः, सद्वृत्तस्य प्रतिग्रहदोषाभावः. **शातातपः** – १३०० ब्राह्मणप्रशंसा; प्रश्नपूर्वकप्रतिग्रहनिषेधः, ब्राह्मणस्याविक्रेयाः पदार्थाः तद्विक्रयदुष्फलानि च. **लघुशातातपः** – १३०१ षड्विधो वेदविक्रयः, अभोज्यादपि प्रतिग्राह्याणि वस्तूनि. **पराशरः** – १३०१ क्षत्रियवैश्यशूद्राणां वृत्तयः, शूद्रस्याऽऽपद्वृत्तौ वाणिज्ये विक्रेयाविक्रेयाणि; १३०४ अस्वयंकृता कृषिर्ब्राह्मणवृत्तिः; १३०५ हालिकबलीवर्दगुणदोषाः, हलवाहनावधिः, कर्षणजन्यहिंसादोषशमनम्; १३०६ ब्राह्मणस्य विक्रेयाविक्रेयाणि, ब्राह्मणस्य कृषिः पापजनिका, लाङ्गलवृषभसंख्याः सफलाः; १३०८ कृषिजन्यदोषशमनं कर्म; १३०९ शूद्रस्य द्विजशुश्रूषात्यागे दुष्फलम्; १३१० ब्राह्मणप्रशंसा; १३११ गवां व्रणास्थिभङ्गचिकित्सा, योग्यायोग्यगोबन्धनरज्जवः; १३१२ ब्राह्मणकर्तृककृषिवाणिज्यादिनिन्दा; कुसीदे वृद्धिपरिमाणम्, आपद्धर्मकृषौ हलवृषभसंख्या, अविक्रेयाणि, खले दानस्य प्रशंसा.

**बृहत्पराशरः** – १३१२ चातुर्वर्ण्यस्य वृत्तयः, शूद्रस्य विक्रेयाविक्रेयाणि; १३१३ ग्राह्याग्राह्यत्वप्रयोजकाः हलवृषभगुणदोषाः, हलवाहनकालः, गोरक्षणेतिकर्तव्यता; गोदोहननियमाः, बन्धने गोमुखदिङ्नियमः, गोष्ठे लोहदात्रस्थापनम्, गोब्राह्मणप्रशंसा; वृषभनासावेधनियमाः; १३१४ पशुबन्धने शालास्वरूपं मुखदिङ्नियमश्च, शालाप्रवेशे धर्मकृत्यम्; लाङ्गलस्य तदवयवानां च प्रकृतिकाष्ठानि प्रमाणानि च; हलयोजने मुहूर्तः धर्मकृत्यं च, तिलयवहीनं कर्षणं न प्रशस्तम्; १३१५ वापनोत्तरा वृषभसेवा, वृषभप्रशंसा, अबाह्यत्वप्रयोजकवृषभदोषाः, अन्नजलस्तुतिद्वारा कर्षणप्रशंसा; १३१६ सीताप्रार्थना, कृषौ पराशरस्मरणादिविधानम्, लवनादौ उक्तविध्यतिदेशः, अकृष्या भूमयः; १३१७ मृगादिप्रतिबन्धनम्, क्षेत्रवृतिमानम्, क्षेत्ररक्षणं राजकर्तव्यम्, कर्षणयोग्या भूमयः; आनुगुण्यानुरोधेन विशिष्टभूमीनां वाप्यधान्यानां च संकलनम्; स्वयमेव गोवृषचरणादिनिरीक्षणं गृहिणः कर्तव्यम्, कृषिवाणिज्यादिवृत्तीनां पौर्वापर्यम्, कृषिजन्यपापनिवृत्त्यर्थं खले धान्यदानम्, राजादिभ्यस्तत्तद्भागदानम्; १३१८ ब्राह्मणस्य कृषौ न दानादिनियमः, चातुर्वर्ण्योत्पत्तिः, कृषियज्ञप्रशंसा कृषिदोषनिवारकत्वेन; द्विजातिकर्तृकः खलयज्ञः, खलरक्षणम्, अर्थिभ्यो दानम्, खलयज्ञान्ते गृहेऽभ्युदयश्राद्धम्; १३१९ कृषिप्रशंसा, कृष्यादिदोषहरं दानं तत्प्रमाणं च; अत्यन्तापदि सर्वतः प्रतिग्रहानुमतिः, अप्रत्याख्येयानि वस्तूनि, दातृप्रतिग्रहीतृगुणदोषाः; १३२० विनिमयसंबन्धिविधानानि, द्विजातीनां तिलपीडननिषेधः, गर्हितविक्रयनिषेधः; भूम्यादिप्रतिग्राह्यवस्तुभेदप्रयुक्ताः प्रतिग्रहीतुः स्वस्वत्वापादकक्रियाभेदाः, प्रतिग्रहधर्मः तदनभिज्ञस्य प्रतिग्रहानधिकारश्च; अश्वदानप्रतिग्रहयोर्विशेषविधिः. **अत्रिः** – १३२१ चातुर्वर्ण्यवृत्तयः, परवृत्तिनिषेधः, ब्राह्मणस्याविक्रेयाणि, ब्राह्मणस्य भिक्षाधिकारनिमित्तम्; ब्राह्मणप्रशंसा, प्रतिग्रहनिन्दा तद्दोषशमनं च, अनापदि सिद्धान्नभिक्षणे प्रायश्चित्तम्; हलवाहकवृषभसंख्याः फलकालसहिताः; विप्राणां दश भेदाः सलक्षणाः, ब्राह्मणप्रशंसा. **सुमन्तुः** – १३२२ अभोज्यान्नेभ्योऽपि प्रतिग्राह्याणि वस्तूनि, शूद्रयाजनदोषोपशमनम्, अविक्रेयाणि. **जाबालिः** – १३२२ यतिहस्तगतद्रव्यप्रतिग्रहनिषेधः. **पैठीनसिः** – १३२२ धर्माविरुद्धवृत्त्या जीवनम्, अविक्रेयाणि; ब्राह्मणक्षत्रियविषये वार्धुष्यनिन्दा, वार्धुष्यलक्षणम्, पापीयसे वार्धुष्यदानस्यानुमतिः, क्षेत्रकर्षणविधानम्. **अङ्गिराः** – १३२३ शूद्रान्नप्रतिग्रहनिषेधः तद्दोषशमनं च, अन्नावघ्राणादेरन्नभोगसमत्वम्, मृतकसूतकयोरामधान्यग्रहणानुमतिः, त्रैवर्णिकेभ्यो ग्राह्यस्य धान्यस्य विवेकः; १३२४ धान्यपयोदध्यादीनां सर्वतः स्थानविशेषेषु च ग्राह्यत्वे विधानानि; १३२५ भिक्षाधिकारिणः; १३२६ गोबन्धनरज्जौ हेयादेयविवेकः, औषधदानादिना गोरक्षणम्; ब्राह्मणप्रशंसा; गुरुधर्माद्यर्थं शूद्रादपि धान्यादिप्रतिग्रहोऽनुमतः. **प्रचेताः** – १३२६ आग्नेयतीर्थेन प्रतिग्रहः, अत्यन्तापद्यपि क्षत्रसेवैव ब्राह्मणस्यानुमता. **व्याघ्रः** – १३२७ शूद्रेभ्यो व्यवस्थया उच्छिष्टानुच्छिष्टान्नदानम्. **गर्गः** – १३२७ कृषिकर्मणि बीजावापे मुहूर्ताः. **आश्वलायनः** – १३२७ वर्णविभागस्तस्य धर्मकारणत्वं च, याजनाध्यापनप्रतिग्रहा ब्राह्मणवृत्तयः, प्रतिग्रहस्याधिकारिणोऽनधिकारिणश्च; १३२८ राज्ञः शूद्राच्चाप्रतिग्राह्याणि, शूद्रात्प्रतिग्रहानुमतिः; १३२९ चतुर्णां वर्णानामापद्वृत्तयः तल्लब्धधनांशानां विप्राय दानं च, विप्रस्य कारुकर्षकम्लेच्छादिवृत्तिनिषेधः कारुकर्षकयोः पञ्चविधत्वं च; प्रतिग्रहधनाद्यान्नक्रययोर्विधिनिषेधौ, विप्रस्याविक्रेयाणि; यथाकथमपि कुटुम्बपोषणमवश्यकर्तव्यम्; गुर्वाद्यर्थं शूद्रान्नप्रतिग्रहः, शिलोञ्छप्रशंसा; १३३० धान्यसंग्रहासंग्रहरूपाः कुसूलधान्यत्वादिप्रकाराः सलक्षणाः; १३३१ स्वयंकृतकृषेर्ब्राह्मणं प्रति निषेधः अत्यापद्यनुमतिश्च, स्वयंकृतकृषौ हलाग्रस्पर्शनिषेधः, धर्म्याधर्म्यवृत्तिविवेकः; यायावरा वृत्तिस्तस्या अधिकारिणोऽनधिकारिणश्च, वृत्तिसंकरनिषेधः; १३३२ वैश्यवृत्तेर्विक्रयस्य पशुपालनस्य च नीतिः, वैश्यस्य गोदशकमात्रभोगाधिकारः, वैश्यकृतब्राह्मणादिकृषिफलविभागः. **लघ्वाश्वलायनः** – १३३३ ब्राह्मणस्य याजनादयो वृत्तयः, वार्षलेयादिविषयकयाजनादिनिषेधः; ब्राह्मणप्रशंसा, शूद्रस्य द्विजसेवा द्विजकृषिश्च वृत्तिः. **बुधः** – १३३३ ब्राह्मणस्य मुख्या आपत्कालीनाश्च वृत्तयः, वृत्तिसंकरनिषेधः, वैश्यशूद्रयोर्वृत्तयः. **विश्वामित्रः** – १३३३ कुसूलधान्यत्वादीनामुत्तरोत्तरश्रेयस्त्वम्, शूद्रस्य मुख्यापत्कालीना वृत्तयः. **शौनकः** – १३३४ क्षेत्रकर्षणे मुहूर्तः धर्मकृत्यं च.

**जातूकर्ण्यः** – १३३४ दुःस्थितब्राह्मणभरणं सुस्थितशूद्रस्य कर्तव्यम्. **कश्यपः** – १३३४ मृतके सूतके च प्रतिग्रह-निषेधः. **शाण्डिल्यः** – १३३४ अयाचितप्राप्तप्रतिग्रहे दोषाभावः. **पुलस्त्यः** – १३३४ चातुर्वर्ण्यवृत्तयः. **छागलेयः** – १३३४ वेदाग्निविक्रयनिषेधः, षड्विधो वेदविक्रयः, ब्राह्मणं प्रति कुसीदनिषेधः, दक्षिणहस्तमध्येन दक्षिणा-प्रतिग्रहयोर्ग्रहणम्, दुर्भिक्षकालीना नव वृत्तयः. **देवरातः** – १३३५ रात्रौ बीजनिर्वापणनिषेधः. **मार्कण्डेयः** – १३३५ धर्मात्मभरणकुसीदेषु धनविभागपरिमाणम्, धनस्य प्रशस्ता-प्रशस्तरूपास्त्रयः प्रकाराः प्रत्येकं सप्तविधास्तदनुरूपाः फलभेदाश्च. **अग्निः** – १३३६ कुसूलधान्यत्वादयो वृत्ति-प्रकाराः, अवेदविदोऽपि विप्रा आपद्वृत्त्यधिकारिणः, याचना-धिकारिणः. **वत्सः** – १३३६ कृषिकर्ममुहूर्तः. **चतुर्विंशति-मतम्** – १३३६ पोष्यवर्गपोषणं धर्मकृत्यं च धनार्जनफलम्, कुसूलधान्यत्वादयो वृत्तिप्रकाराः, दुष्कृतकर्मदातृकप्रति-ग्रहानुमतिस्तदपवादश्च; १३३७ भिक्षाधिकारिणो भिक्षा-प्रशंसा च, अत्यन्तापदि सर्वतः प्रतिग्रहानुमतिः, राजतः प्रतिग्रहस्य निषेधः; कृषिवाणिज्यसेवानां ब्राह्मणं प्रति निषेधः, धर्मस्वाध्यायाविरोधेन धनार्जनम्, कुटुम्बभरणमवश्य-कर्तव्यम्, आपदि सप्त धनार्जनोपायाः; १३३८ वैश्यवृत्ती कृषिवाणिज्ये, शूद्रात्प्रतिग्रहार्हाणि; ब्राह्मणं प्रति कृषेर्निषेध आपद्यनुमतिश्च, हालिकवृषभसंख्यानियमः, कृष्यादिजन्य-पापशमनदानानि तत्र हलवाहनकालतारतम्यप्रयुक्तं देय-धान्यांशतारतम्यं च; भिक्षादिप्रतिग्रहदोषशमनानि, अप्रति-ग्राह्याणि आपदि तत्प्रतिग्रहानुमतिश्च, शूद्रतो ग्राह्याणि. **षट्त्रिंशन्मतम्** – १३३८ श्राद्धे भोजनमात्रपर्याप्तमामं शूद्रतो ग्राह्यम्. **वायुपुराणम्** – १३३८ ईश्वरावयवेभ्यो वर्णोत्पत्तिः, वर्णानां वृत्तयः, ब्राह्मणं प्रति वाणिज्यनिषेधः. **ब्रह्माण्डपुराणम्** – १३३९ ईश्वरावयवेभ्यो वर्णोत्पत्तिः, वर्णवृत्तयः, ब्राह्मणादेव प्रतिग्रहः, प्रतिग्रहेतिकर्तव्यता. **मार्कण्डेयपुराणम्** – १३३९ वर्णानां वृत्तयः; मृत्युपुत्रदुः-सहस्य पुत्रात् सस्यहनामकात् पुत्र्याश्च स्वसंहारिकानाम्न्याः सकाशात् सस्यादिरक्षणोपायाः क्षेत्रादौ जीर्णोपानद्धारणादयः; १३४० वर्णानां जम्बूद्वीपमध्यदेशे स्थितिः, तेषां धर्मवृत्ति-रूपाणि कर्माणि अन्तःकरणशोधकानि संव्यवहारसाधनानि च. **मत्स्यपुराणम्** – १३४० वामदेवावयवेभ्यो वर्णोत्पत्तिः, कृष्णाजिनप्रतिग्रहनिन्दा, तीर्थेषु क्षेत्रेषु च प्रतिग्रहनिषेधः. **विष्णुपुराणम्** – १३४१ ब्रह्मणोऽवयवेभ्यो वर्णोत्पत्तिः, चातुर्वर्ण्यवृत्तयः, ब्राह्मणक्षत्रिययोरापद्वृत्तयः, आपन्निवृत्तौ आपद्वृत्तित्यागः, वृत्तिसंकरनिषेधः, भृत्यादिभरणं धर्मानुष्ठानं च धनार्जनफलम्. **विष्णुधर्मोत्तरपुराणम्** – १३४२ मेरुपर्वतापेक्षया वर्णदिग्विभागः, स्रष्टुरवयवेभ्यो वर्णत्पत्तिः, वर्णेषु ब्राह्मणो विष्णुविभूतिः; धार्यत्वाधार्यत्वप्रयोजका वृषभाणां गुणदोषास्तत्फलानि च; १३४३ विस्तरेण ब्राह्मण-प्रशंसा, ब्राह्मणप्रतिनिधित्वेन राज्ञां भूस्वामित्वम्; १३४४ वर्णानां वृत्तयः, विशिष्टदम्पतिपरंपराजनितस्य वर्णोत्कर्षः; ब्राह्मणादीनामापद्वृत्तयः आपद्यपि निषिद्धा वृत्तयश्च, आपत्कालीनवैश्यवृत्तौ अविक्रेयाणि विनिमेयाविनिमेयानि च; वाणिज्यमुहूर्तः, कुसीदे वृद्धिपरिमाणम्, कुसीदमुहूर्तः; कर्षणबीजावापयोर्मुहूर्तः धर्मकृत्यं च; १३४५ धान्यसंग्रहे मुहूर्तः धर्मकृत्यं च, खलयज्ञः तत्फलं च; हालिकवृषभ-संख्यास्तत्फलानि च, आपन्निवृत्तौ आपद्वृत्तित्यागपूर्वकं प्रायश्चित्ताचरणम्; श्ववृत्त्या जीवनस्य निषेधः; वाणिज्य-सिद्ध्यर्थं काम्यं कर्म; १३४६ कृषिसिद्ध्यर्थं काम्यं कर्म; अयाज्ययाजनफलम्, आपदि राजयाज्यान्तेवासिभ्यः प्रतिग्रहानुज्ञा, लोभादिदोषदुष्टाद्राजतः प्रतिग्रहनिषेधः; प्रतिग्रहनिवृत्तिप्रशंसा, प्रतिग्रहानधिकारिणः, सर्वतः प्रतिग्रहाधिकारिणः सर्वतः प्रतिग्राह्याणि च; १३४७ असदुपायेन धनार्जने प्रायश्चित्तम्; अनापदि उत्कृष्टनिकृष्ट-वर्णवृत्तिनिषेधः; शूद्रादीनां स्वानन्तरोत्तमवर्णो दैवतम्; ब्राह्मणप्रशंसा; त्रिविधानि धनानि शुक्लशबलकृष्णरूपाणि तेषां लक्षणानि फलानि च; १३४८ प्रतिग्रहाधिकारि-विशेषणानि प्रतिग्रहविधिः प्रतिग्राह्यवस्तुदेवताश्च; १३४९ प्रतिग्राह्यवस्तुभेदेन स्वस्वत्वोत्पादकाः प्रदक्षिणारोहणादयः क्रियाभेदाः; १३५० प्रतिग्रहधर्मज्ञस्यैव प्रतिग्रहाधिकारः; ऋणापाकरणमावश्यकम्, वर्णक्रमेण वृद्धिपरिमाणम्, प्रीति-दाने साधिव्यवहारे च वृद्धिविवेचनम्; १३५१ हिरण्यवस्त्र-धान्यपश्वादीनां वृद्ध्यवसानमर्यादाः; अपाक्रियमाणर्णाग्रहणे वृद्धिनिरोधः; ऋणापाकरणाधिकारिणः; पुनर्व्यवहारविधिः; प्रतिभूत्रैविध्यं तत्र ऋणापाक्रियानपाक्रियाविवेकश्च;

लोकाः; न्यूनाधिकप्राशस्त्याः कुशूलधान्यत्वादयो वृत्तयः, वृत्तिसंख्याप्रयुक्तं प्राशस्त्यतारतम्यम्; चातुर्वर्ण्यसृष्टिः; राजप्रतिग्रहनिन्दा; ब्राह्मणस्य धर्मार्थमपि द्रव्यसंचयस्य निषेधः; प्रतिग्रहनिवृत्तिप्रशंसा; १३७१ अत्यन्तापदि क्षत्रियस्य प्रतिग्रहानुमतिः; ब्राह्मणप्रशंसा; १३७२ ब्राह्मणानां वृत्तयः, कृषिदोषशमनं धान्यदानम्; आपदि सर्वजातीनां क्षत्रियवृत्तेर्युद्धस्यानुमतिः, ब्राह्मणस्य क्षत्रियवृत्त्यभावे वैश्यवृत्तिः, वैश्यवृत्तिदोषशमनं दानादि, वैश्यवृत्तौ परिहर्तव्या दोषाः; १३७३ ब्राह्मणस्य कृषिकर्मणि हालिकवृषभसंख्या गोपालनविषयकविधिनिषेधाश्च; गोब्राह्मणयोर्जगद्यात्रानिर्वाहकत्वेन प्रशंसा; १३७४ प्रतिग्रहनिवृत्तिप्रशंसा; चातुर्वर्ण्यसृष्टिः; ब्राह्मणप्रशंसा; बीजवापविषयकं धर्मकृत्यम्; तीर्थे प्रतिग्रहादिनिषेधः, व्रतमूलकजीवननिषेधः; प्रतिग्रहाधिकारानधिकारौ; सप्त धनार्जनोपायाः; भूमिब्रह्माण्डप्रतिग्रहनिषेधः; १३७५ प्रेतशय्याप्रतिग्रहनिषेधः; भिक्षाधिकारी; शिवस्वग्रहणनिषेधः. **ब्रह्मपुराणम्** – १३७५ वर्णसृष्टिः, वार्तापदार्थः; चातुर्वर्ण्यवृत्तयः; वर्णानामापद्वृत्तयः; कर्मविपाकेन जघन्यवर्णवृत्त्या वर्णापकर्षः, स्वस्ववृत्त्या वर्णोत्कर्षः, वर्णभेदो नैसर्गिकः; १३७६ तीर्थे जलावधिकहस्तचतुष्टयदेशे प्रतिग्रहनिषेधः; ब्राह्मणदम्पतिभ्यां ब्राह्मणोत्पत्तिः; कृष्यारम्भे पृथ्वीपूजनं द्वाविंशतिप्रजापतिपूजनं च, हलवाहने दिङ्नियमः बीजावापे कृत्यं च; १३७७ हालिकवृषभविषये कर्तव्यानि. **ब्रह्मवैवर्तपुराणम्** – १३७७ ब्रह्मावयवेभ्यश्चातुर्वर्ण्योत्पत्तिः; ब्राह्मणप्रशंसा; १३७८ प्रतिग्रहलब्धानां देवप्रतिमानां तिलधेन्वादीनां चाऽऽत्मोपयोगे विक्रये वा न दोषः; १३७९ वैश्यादीनां तुलामाने वञ्चनं पापम्. **वराहपुराणम्** – १३७९ विराडवयवेभ्यश्चातुर्वर्ण्यसृष्टिः; शूद्रात्प्रतिग्रहस्य निषेधः; प्रेतयोनिनिमित्तानि शूद्रान्नभक्षणादीनि; वैश्यवृत्तयः. **वामनपुराणम्** – १३७९ चातुर्वर्ण्यस्य सृष्टिः वृत्तयश्च. **कूर्मपुराणम्** – १३८० अवयवेभ्यो वर्णसृष्टिः वर्णवृत्तयश्च; स्वस्वधर्मनिष्ठानां वर्णानां लोकाः; स्तेयनिषेधः; राजप्रतिग्रहनिषेधः, याचनातिरेकनिषेधः, देवब्रह्मस्वहरणनिषेधः, स्तेयापवादः; कपटेन धनार्जनस्य निषेधः; ब्राह्मणस्य मुख्या आपत्कालीनाश्च वृत्तयः; १३८१ कृषिवाणिज्यकुसीदेषु दोषशमनार्थं पित्रादिभ्यो दानम्; शिलोञ्छकुशूलधान्यत्वादयो वृत्तयः तासां स्वरूपतः संख्यातश्च प्राशस्त्यतारतम्यं च; १३८२ अर्जितधनेन देवादितर्पणं दुर्भिक्षे बुभुक्षुतर्पणं चाऽऽवश्यकम्; अर्चितद्रव्यस्यैव दानप्रतिग्रहौ; अपूपादिप्रतिग्रहे विदुष एवाधिकारः; शूद्रात् प्रतिग्रहस्य निषेधः; लोभेनातिरिक्तधनार्जनस्य निषेधः; गुर्वाद्यर्थं सर्वतः प्रतिग्रहः; अर्जितधनेन देवाद्यर्चनमावश्यकम्. **भविष्यपुराणम्** – १३८२ स्वयंभुवोऽवयवेभ्यो वर्णसृष्टिः; ब्राह्मणप्रशंसा, सर्वचराचरस्वामिनो ब्राह्मणस्य कृपयाऽन्येषां भोक्तृत्वम्; १३८३ गोदोहादिविषयाणि पशुपालनविषयाणि च विधानानि; कृषौ भृत्यवेतनबीजावापादिविषयकाणि विधानानि; ब्राह्मण्यादिजातयो जन्मतः कर्मतो वा अनुपपद्यमानाः सत्यः सांकेतिका इति तर्काश्रयेण महान् पूर्वपक्षः, अल्पीयस्युत्तरपक्षे सिद्धेर्जातिकर्मोभयसाध्यत्वोक्त्या सांकेतिकजातेः सिद्धिसाधकत्वानुपपन्नत्वेन सिद्धिसाधकत्वान्यथानुपपत्तिरूपयाऽर्थापत्त्या जातीनां जन्मसिद्धत्वसूचनम्; १३९१ वेदविक्रयस्य निषेधः फलं च, षड्विधो वेदविक्रयः, वेदविक्रयाद्यर्जितधनस्य देवपितृकर्मानर्हत्वम्; १३९२ ब्राह्मणानाम् ऋतादिवृत्तयः तासां श्रेयस्त्वतारतम्यं च; ब्राह्मणप्रशंसा; कृषिनिन्दा; गोवंशपीडननिषेधः; गोब्राह्मणप्रशंसा; १३९३ हालिकवृषभगुणाः; कपिलाप्रतिपालकशूद्रात् प्रतिग्रहस्य निषेधः; गोविक्रयनिषेधः. **नारदपुराणम्** – १३९३ ब्राह्मणप्रशंसा, ब्राह्मणस्यैव प्रतिग्रहाधिकारः; वर्णाश्चत्वारः तत्र त्रयो द्विजाः, वर्णानां वृत्तयः; १३९४ ब्राह्मणक्षत्रिययोरापदि क्रमेण क्षत्रियवैश्यवृत्ती, द्विजस्य शूद्रवृत्तिनिषेधः; पूर्वं ब्राह्मणानामेव सृष्टिः, ब्राह्मणा एव कर्मभिर्वर्णान्तरतां गताः. **अग्निपुराणम्** – १३९४ क्रयविक्रयकुसीदानां कृषिसंबन्धिकर्मणां च मुहूर्ताः; १३९५ वर्णानां मुख्या आपत्कालीनाश्च वृत्तयः, द्विजानामविक्रेयाणि, कृषिदोषशमनम्, हालिकवृषभसंख्याफलानि, श्ववृत्तिनिषेधः; प्रतिग्रहानधिकारी, प्रतिग्रहेतिकर्तव्यता; कुसीदे वस्तुभेदस्थलभेदप्रयुक्तानि वृद्धिपरिमाणानि; अपाक्रियमाणागृहीतस्य वृद्धिहीनं मध्यस्थे स्थापनम्; सप्रतिभूसाधिव्यवहारेषु विशेषविधयः; १३९६ गोब्राह्मणप्रशंसा; अनापद्यपरिग्राह्याणि. **देवीभागवतम्** – १३९६ ब्राह्मणप्रशंसा; स्वधर्मनिष्ठस्य शूद्रस्य जन्मान्तरे क्षत्रियत्वं ब्राह्मणत्वं च; न कर्मणा ब्राह्मणत्वम्; ब्राह्मण-

प्रशंसा; १३९७ याचना न क्षत्रियवृत्तिः; कन्याविद्याविक्रययोः शूद्रप्रतिग्रहयाजनयोर्वार्धुषिकत्वस्य च निषेधाः; ब्राह्मणप्रशंसा; कन्याविक्रयस्य दण्डेन गोताडनस्य च निषेधः; वृषलीपत्यन्नभोजनस्य तीर्थेषु प्रतिग्रहस्य च निषेधः; शूद्रसेवित्वशूद्रयाजित्वदेवोपजीवित्वदैवज्ञकर्मजीवित्ववैद्यकर्मजीवित्वानां लाक्षादिविक्रयस्य च निषेधाः. **शिवपुराणम्** – १३९८ सप्तविधा ब्राह्मणास्तेषां लक्षणानि च, राजक्षत्रियवैश्यवणिक्शूद्रवृषलदस्यूनां लक्षणानि; वर्णानां वृत्तयः; प्रतिग्रहदोषशमनं तपो दानं च; वित्तस्य धर्मवृद्धिभोगोद्देशेन त्रिधा विभागः; कृष्यादिषु दोषशान्तये देया न्यूनाधिका वित्तांशाः; वृत्तिभेदप्रयुक्तानि धनस्योत्तममध्यमाधमत्वानि; ब्राह्मणप्रशंसा; १३९९ देवलकत्ववृत्तिलक्षणम्; देवद्विजगोसंबन्धिभूम्यादिहरणनिषेधः; अनापदि द्विजानामविक्रेयाणि; नानाविधगोपीडननिषेधाः; द्विजानां निषिद्धा वृत्तयः; न्यायातीतराजपरिग्रहनिषेधः; महादानप्रतिग्रहप्रशंसा; स्रष्टुरवयवेभ्यश्चातुर्वर्ण्योत्पत्तिः, सदाचारदुराचाराभ्यां वर्णोत्कर्षापकर्षौ; १४०० कृषिदोषस्य तच्छमनधान्यदानाभावे दुर्विपाकः, दोषशमनार्थं राजादिदेयांशाः. **नरसिंहपुराणम्** – १४०० वर्णसृष्टिरवयवतः, सवर्णब्राह्मणोत्पत्तिः, वर्णानां वृत्तयः. **कालिकापुराणम्** – १४०१ स्रष्टुरवयवतो वर्णसृष्टिः; कृष्यादयो वैश्यवृत्तयः, तत्र हालिकवृषभसंख्या हलवाहनकालश्च, वृषभादिपशुपालने विधानानि, खले राजादिदेया धान्यांशाः; १४०२ वैश्यस्याविक्रेयाणि, शूद्रस्य विक्रेयाविक्रेयाणि. **साम्बपुराणम्** – १४०२ देवस्वप्रतिग्रहरूपदेवलकत्ववृत्तेर्निन्दा; अविदुषः अप्रतिग्राह्याणि. **सौरपुराणम्** – १४०२ पौराणीवृत्तिप्रशंसा; प्रतिग्रहे मन्त्रविधिः; चत्वार एव वर्णास्तत्र त्रयो द्विजाश्च; १४०३ जलाद्यपहरणनिषेधः; एकस्मात् द्विर्याचनस्य निषेधः; धर्मार्थपुष्पादिस्तेयानुमतिः; क्षुधाशान्त्यै तिलमुद्गमुष्टिस्तेयानुमतिः; अयाज्ययाजननिषेधः; स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः. **पराशरपुराणम्** – १४०३ ब्राह्मणप्रशंसा; ब्राह्मणत्रैविध्यम्, ब्राह्मणदम्पतिभ्यां ब्राह्मणोत्पत्तिः, तत्तद्देवताप्रसादात्तत्तद्वर्णताप्राप्तिः, ब्राह्मणप्रशंसा; १४०४ राजन्यादिभ्यः प्रतिग्रहस्य निषेधः. **आदिपुराणम्** – १४०४ ब्राह्मणप्रशंसा. **मुद्गलपुराणम्** – १४०४ ब्राह्मणप्रशंसा, स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः; ब्राह्मणादयश्चत्वारः पञ्च वेति द्विधा वर्णशब्दार्थः; १४०५ वर्णानां वृत्तयः, उञ्छादिवृत्तिलक्षणानि, ब्राह्मणक्षत्रिययोः सेवावृत्तिनिषेधः; स्ववृत्तिनिष्ठानां वर्णानां प्राप्याणि पदानि; ब्राह्मणप्रशंसा प्राशस्त्यतारतम्यं च; १४०६ ब्राह्मण्यादिप्रयोजकानि वर्णकर्माणि. **गणेशपुराणम्** – १४०७ स्रष्टुरवयवतो वर्णसृष्टिः ब्राह्मणप्रशंसा प्राशस्त्यतारतम्यं च. **देवीपुराणम्** – १४०७ चक्रोञ्छादिब्राह्मणवृत्तिप्रशंसा, सुदृढपृष्ठेन वृषेण स्कन्धेन भारवाहनस्य निषेधः; गोष्ठे धूमकरणाभावे नरकप्राप्तिः; मृतवत्साया गोर्दमनेन दोहनस्य निषेधः. **आदित्यपुराणम्** – १४०७ पापकृद्राजदातृकः पृथिव्या एव प्रतिग्रहः; उभयतोमुखीप्रतिग्रहनिषेधः; १४०८ राजब्राह्मणयोः साम्येन प्रशंसा, सर्वं राजधनं शुचि; प्रतिग्रहेतिकर्तव्यता. **कल्किपुराणम्** – १४०८ ब्राह्मणप्रशंसा. **संग्रहः (स्मृतिसंग्रहः)** – १४०८ ब्राह्मणं प्रति वाणिज्यनिषेधः; १४०९ देवतार्चनवृत्तिनिषेधः; बीजावापस्य धान्यसंग्रहस्य च मुहूर्तः; वेदविक्रयेण राजतः प्रतिग्रहस्य निषेधः दोषशमनं च. **स्मृत्यर्थसारः** - १४०९ चत्वारो वर्णाः, त्रयो द्विजाः, सवर्णेभ्यः सवर्णासु धर्म्यविवाहतः सवर्णोत्पत्तिः. **कुमारिलकारिकाः** – १४०९ क्षेत्रकर्षणे मुहूर्तो धार्मिकविधिश्च; गोचरणे धार्मिको विधिः. **त्रिकाण्डमण्डनकारिकाः** – १४१० धर्मार्थयाचितद्रव्यस्यान्यत्रविनियोगनिषेधः; निर्धनस्य नित्यकर्मार्थं चौर्यातिरिक्तकुमार्गैर्धनार्जनानुमतिः; सूर्यग्रहे कुरुक्षेत्रे च नित्ययागार्थं सर्वतः प्रतिग्रहानुमतिः; आपदि नित्ययागार्थं सुवर्णातिरिक्तद्रव्यस्तेयानुमतिः. **रेणुकारिकाः** – १४१० स्ववृत्तिनिर्वर्तितकर्मफलम्; द्विजानां वृत्तयः, कुसूलधान्यत्वादीनां प्राशस्त्यतारतम्यं लक्षणानि च; १४११ यायावरशालीनयोर्वृत्तिविभागः, वृत्तिसंख्याप्रयुक्ताः शालीनभेदाः; लाङ्गलयोजने धार्मिको विधिः; लाङ्गलवाहने मुहूर्तः; १४१२ हालिकवृषभविषयक उपचारः; हालिकवृषभसंख्याप्रयुक्तः फलभेदः; व्रीहियववापनयोर्धार्मिको विधिः; बीजवापने मुहूर्तः; व्रीहियवलवनारम्भे कर्तव्यस्य सीतायज्ञस्य प्रयोगः; १४१३ क्षत्रियवैश्यशूद्राणां कृष्यादयो वृत्तयः, कृषिदोषशमनविधिः; १४१४ आपदि ब्राह्मणस्य क्षत्रियवैश्यवृत्ती; याजनाध्यापनप्रतिग्रहनिमित्तकदोषशमनानि; दश जीवनहेतवः; ब्राह्मणवृत्तिप्रकल्पनं राजकर्तव्यम्. **अनि-**

**दिष्टकर्तृकवचनानि** – १४१४ ब्राह्मणेनासवर्णायां जनितस्यापि ब्राह्मण्यम्, अवयवतो वर्णोत्पत्तिः, संस्कारविशेषप्रयुक्तं ब्राह्मणस्य प्रभुत्वम्; ब्राह्मणप्रशंसा, ब्राह्मणवृत्तयः, देवार्चनाद्यर्थं सर्वतः प्रतिग्रहः, धर्म्यः प्रतिग्रहोऽप्रतिग्रहसमः, धार्मिकात् प्रतिग्रहः कार्यः; जपादिकुर्वतः प्रतिग्रहदोषाभावः, ब्राह्मणप्रशंसा, प्रतिग्रहे धर्मविधिः, अप्रतिग्राह्याणि; १४१५ प्रशस्तेभ्यो द्विजेभ्यः प्रतिग्रहः, शूद्रादपक्वप्रतिग्रहः, गुर्वाद्यर्थं शूद्रादन्नग्रहणम्; प्रतिग्राह्यं परीक्ष्यम्; प्रतिग्रहप्रशंसा; वृत्तिसंकरनिषेधः; असत्प्रतिग्रहस्य पञ्चविधत्वम्; अप्रतिग्राह्याणि; १४१६ जातकर्मणि प्रतिग्रहानुमतिः; वर्णानां वृत्तयः; अतिरिक्तधनार्जननिषेधः, आशौचितोऽपि ग्राह्याणि; मृतसंबन्धिधनग्रहणनिषेधः; १४१७ भिक्षाप्रमाणम्, द्विजेन द्विजेभ्यो धनं ग्राह्यम्, प्रतिग्रहनिवृत्तेनापि शूद्रतो ग्राह्याणि, एकैव गौः प्रतिग्राह्या; धर्मार्थद्रव्यसंचयस्य जितात्मनः असंचयस्य च प्रशंसा; राजदातृकप्रतिग्रहनिन्दा; स्तेयनिषेधः; स्तेयापवादः; स्थलकालविशेषे सर्वतः प्रतिग्रहः; १४१८ जीवनपर्याप्तमेव प्रतिग्राह्यम्; तीरे प्रतिग्रहस्य निषेधः; गङ्गादिविक्रयनिषेधः; अमन्त्रकर्तृकसमन्त्रकप्रतिग्रहनिषेधः; वर्णभेदेन ग्राह्यभेदः शूद्रदातृकप्रतिग्रहनिषेधश्च; तीर्थे प्रतिग्रहस्य निषेधः; ब्राह्मणोत्पत्तिः, ब्राह्मणप्रशंसा; अत्यापद्यसत्प्रतिग्रहः; पापशमनार्थमर्जितद्रव्यदानम्; वार्धुषिकलक्षणम्, स्तेयापवादः; दशविधविप्रलक्षणानि; १४१९ द्विजत्वविप्रत्वब्राह्मणत्वनिमित्तानि; असत्प्रतिग्रहप्रायश्चित्तम्; धर्मविक्रयस्वरूपम्, दानपुण्यविक्रेता भ्रूणहसमः, शपथपणीकृतदानधर्मा सोमविक्रयिसमः, मण्यादीनां प्रतिरूपकर्ता भ्रूणहसमः; १४२० एका वृद्धिर्न देया, कुसीदव्यवहारेषु मुहूर्ताः; क्रयविक्रयव्यवहारेषु मुहूर्ताः, पशुपालनसंबन्धिविधानानि; १४२१ कृषिप्रशंसा; क्षेत्रप्रवेशादिकृषिकर्मसु मुहूर्ताः; १४२२ कृषिकर्मादौ विनायकपूजादि; १४२३ बीजावापादिमुहूर्तः, धार्मिककृत्यम्, प्रशस्ता हालिकवृषाः, शुभाशुभनिमित्तानि; १४२४ धान्यलवनमुहूर्तः; १४२५ मेथीप्रकृतिवृक्षाः, राजादिदेया धान्यभागाः; धान्यसंग्रहशोषणकोष्ठनिक्षेपकोष्ठनिष्कासनमुहूर्ताः; १४२६ धान्यव्ययमुहूर्तः; सेवारम्भस्य भृत्यादिसंग्रहस्य च मुहूर्तः.

## संकरजाः, तद्धर्मवृत्तयश्च

(पृ. १४२७ - १५३४)

**शास्त्रार्थः** – १४२७ जातिविचारः. **वेदाः** - १४२९ रथपत्यादिकतिपयसंकरजनिर्देशाः; १४३० निषादस्थपतेर्याजनीयत्वम्; १४३५ रथकारो यजनाधिकारी. **जैमिनिसूत्राणि** – १४३५ सौधन्वनस्य रथकारस्याऽऽधानेऽधिकारः; १४३६ निषादस्य स्थपतेः रौद्रेष्ट्यामधिकारः; निषादस्थपतीष्टिर्लौकिकाग्निसाध्या. **गौतमः** – १४३७ वर्णैर्वर्णस्त्रीषु जनिताः अनुलोमाः षट्; वर्णैर्वर्णस्त्रीषु जनिताः प्रतिलोमाः षट्; केषांचिदनुलोमप्रतिलोमानां मतान्तरेण संज्ञाभेदाः; १४३८ विशिष्टदंपतिपरंपरोत्पन्नेषु जात्युत्कर्षापकर्षौ; प्रतिलोमजानां शूद्राजातानुलोमजानां चोपनयनादिधर्मानधिकारः; १४३९ शूद्रजातप्रतिलोमानां पातित्यं तत्रापि चाण्डालस्य पापिष्ठत्वम्; प्रतिलोमानां द्विजशुश्रूषावृत्तावप्यधिकारः. **वृद्धगौतमः** – १४४० कानीनादीनां षण्णां चण्डालत्वम्. **हारीतः** – १४४० बन्दिनिषादपुल्कसोत्पत्तिः. **वृद्धहारीतः** – १४४० षट् अनुलोमाः षट् प्रतिलोमाश्च, अनुलोमाः सन्तः प्रतिलोमा असन्तः; प्रतिलोमानुलोमानां क्रमेण हीनाहीनशिल्पकर्माणि वृत्तयः. **बौधायनः** – १४४० सवर्णाजातः सवर्णः, एकान्तराजातो जनकवर्णतुल्यः; १४४१ एकान्तराद्व्यन्तराजाता अनुलोमाः; वर्णसंकरजा वर्णसंकीर्णसंकरजाश्च प्रतिलोमाः; बीजोत्कर्षवशात् पञ्चमयुग्मजनिते बीजिजात्युत्पत्तिः बीजिधर्माधिकारश्च; व्रात्यलक्षणम्; वर्णसंकरजा अनुलोमाः, तत्र अनन्तरजाः सवर्णाः; १४४२ वर्णसंकरजाः प्रतिलोमाः; संकीर्णसंकरजा अनुलोमप्रतिलोमाः; व्रात्यलक्षणम्; धर्म्यविवाहपूर्वकोत्पादिताः सजातीया भवन्ति. **वैखानसधर्मसूत्रम्** – १४४२ अनुलोमप्रतिलोमान्तरालव्रात्यानां लक्षणानि; सवर्णाद्यनुलोमानामुत्पत्तयो वृत्तयश्च; १४४३ अन्तरालानां पितुर्मातुर्वा जातिर्वृत्तिश्च; सूतादिप्रतिलोमानामुत्पत्तयो वृत्तयश्च; १४४४ निकृष्टपुत्रनिन्दा सत्पुत्रप्रशंसा च. **वसिष्ठः** – १४४४ वर्णसंकरजाः प्रतिलोमाः; जारजप्रतिलोमाः कर्मभिरभिज्ञेयाः; वर्णसंकरजा अनुलोमाः; संकरजानां वृत्तयः; १४४६ संकरजस्त्रीणां धर्मः; वैश्यवृत्तिः; वर्णबाह्याः प्राणिरक्षणातिरिक्तधर्माद्बहिष्कृताः; रथकारोत्पत्तौ

**वर्णाः, तद्वृत्तयश्च –**

वर्णानां वृत्तयः; मृत्युपुत्रदुःसहस्य पुत्रात् सस्यहनामकात् पुत्र्याश्च स्वयंहारिकानाम्न्याः सकाशात् सस्यादिरक्षणेपायाः क्षेत्रादौ जीर्णोपानद्धारणादयः १३३९. वर्णानां जम्बूद्वीप-मध्यदेशे स्थितिः, तेषां धर्मवृत्तिरूपाणि कर्माणि अन्तःकरण-शोधकानि संव्यवहारसाधनानि च १३४०.

## मत्स्यपुराणम्

**धर्मदेशाः –**

भारतवर्षस्य लक्षणं कर्मभूमित्वं च ७६६.

**युगधर्माः –**

द्वापरे वेदविभाजनम्, त्रेतायां वर्णभेदेन यज्ञस्वरूपभेदः, उत्तरोत्तरवर्णाः पूर्वपूर्ववर्णानुवर्तिनः, इज्यादानतपःसत्यानि धर्माः, दण्डनीतिप्रवृत्तिः, आरोग्यादीनि लोकवृत्तानि ८४१. त्रेतायां यज्ञप्रवृत्तिप्रकारकथनम्; वर्णध्वंसलोभादिविकार-धर्मादिविषयकमतभेदादीनां द्वापरवृत्तान्तानां वर्णनम्, द्वापरे वेदविभाजनम् ८४२. विस्तरेण कलिप्रभावप्रयुक्तलोक-वृत्तान्तकथनम् ८४३. स्वायंभुवे मन्वन्तरे कलियुगान्तकाले भृगुकुलस्थेन चन्द्रमःसगोत्रेण सशस्त्रविप्रसहायकेन विष्णोरवतारेण प्रमतिना दुराचारासु प्रजासु बहुशो हतासु अवशिष्टाः प्रजा अत्यन्तदुर्दशां प्राप्ता इतीतिहासकथनं विस्तरेण दुर्दशावर्णनं च, ततः कृतयुगारम्भः ८४४. चतुर्णां युगानां कालमानं धर्माधर्मतारतम्यादिरूपं स्वाभा-विकवृत्तं च ८४५.

**वर्णाः, तद्वृत्तयश्च –**

वामदेवावयवेभ्यो वर्णोत्पत्तिः, कृष्णाजिनप्रतिग्रहनिन्दा, तीर्थेषु क्षेत्रेषु च प्रतिग्रहनिषेधः १३४०.

## विष्णुपुराणम्

**धर्मदेशाः –**

भारतवर्षस्य लक्षणं कर्मभूमित्वं च, अन्या भोगभूमयः ७६६.

**युगधर्माः –**

विस्तरेण कलिकालप्रभाववर्णनम्, कलिप्राबल्य-लिङ्गानि, कृतकलियुगयोः क्रमेण गुरुलघुकर्मणोः समान-फलत्वम् ८४६. कृतादौ गुरुधर्मसाध्यं फलं कलौ लघीयसा धर्मेण साध्यते, तत्रापि केशवनामसंकीर्तनं महाफलदम् ८५०. कलेश्चतुःशताधिकचतुःसहस्राब्द्यां गतायां श्रौताधानसंन्यासौ न कर्तव्यौ ८५१.

**वर्णाः, तद्वृत्तयश्च –**

ब्रह्मणोऽवयवेभ्यो वर्णोत्पत्तिः, चातुर्वर्ण्यवृत्तयः, ब्राह्मणक्षत्रिययोरापद्वृत्तयः, आपन्निवृत्तौ आपद्वृत्तित्यागः, वृत्तिसंकरनिषेधः, भृत्यादिभरणं धर्मानुष्ठानं च धनार्जन-फलम् १३४१.

## विष्णुधर्मोत्तरपुराणम्

**धर्मदेशाः –**

भारतार्यावर्तब्रह्मावर्तलक्षणानि, भारते युगावस्थितिः भारतं कर्मभूमिः, प्रभासपुष्करादयो धर्मदेशाः ७६८.

**युगधर्माः –**

कृतादिषूत्तरोत्तरं धर्मायुषोर्ह्रासः क्रमेण ब्राह्मणादिवर्ण-प्राधान्यं विष्णोर्वर्णभेदाश्च, वेदविभाजनम्, कलिप्रयुक्त-लोकवृत्तानि, कलौ स्वल्पेन कर्मणा फलसिद्धिः ८५१. कृते प्रत्यक्षदेवपूजनम्, त्रेताद्वापरयोः प्रत्यक्षे प्रतिमाप्रति-ष्ठापिते देवे पूजनम्, कलौ प्रतिमाप्रतिष्ठापितमात्रदेव-पूजनम्, कृतादौ पुष्करादिसेव्यतीर्थभेदः ८५२.

**वर्णाः, तद्वृत्तयश्च –**

मेरुपर्वतापेक्षया वर्णदिग्विभागः, स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः, वर्णेषु ब्राह्मणो विष्णुविभूतिः; धार्यत्वाधार्यत्व-प्रयोजका वृषभाणां गुणदोषास्तत्फलानि च १३४२. विस्तरेण ब्राह्मणप्रशंसा, ब्राह्मणप्रतिनिधित्वेन राज्ञां भूस्वामित्वम् १३४३. वर्णानां वृत्तयः, विशिष्टदंपति-परंपराजनितस्य वर्णोत्कर्षः; ब्राह्मणादीनामापद्वृत्तयः आपद्यपि निषिद्धा वृत्तयश्च, आपत्कालीनवैश्यवृत्तौ अविक्रेयाणि विनिमेयाविनिमेयानि च; वाणिज्यमुहूर्तः, कुसीदे वृद्धिपरिमाणम्, कुसीदमुहूर्तः; कर्षणबीजावापयोर्मुहूर्तः, धर्मकृत्यं च १३४४. धान्यसंग्रहे मुहूर्तः धर्मकृत्यं च, खलयज्ञः तत्फलं च; हालिकवृषभसंख्यास्तत्फलानि च, आपन्निवृत्तौ आपद्वृत्तित्यागपूर्वकं प्रायश्चित्ताचरणम्; श्ववृत्त्या जीवनस्य निषेधः; वाणिज्यसिद्ध्यर्थं काम्यं कर्म १३४५. कृषिसिद्ध्यर्थं काम्यं कर्म; अयाज्ययाजनफलम्, आपदि राजयाज्यान्तेवासिभ्यः प्रतिग्रहानुज्ञा, लोभादिदोषदुष्टाद्राजतः प्रतिग्रहनिषेधः; प्रतिग्रहनिवृत्तिप्रशंसा, प्रतिग्रहानधिकारिणः,

सर्वतः प्रतिग्रहाधिकारिणः सर्वतः प्रतिग्राह्याणि च १३४६. असदुपायेन धनार्जने प्रायश्चित्तम्; अनापदि उत्कृष्टनिकृष्टवर्णवृत्तिनिषेधः; शूद्रादीनां स्वानन्तरोत्तमवर्णो दैवतम्; ब्राह्मणप्रशंसा; त्रिविधानि धनानि शुक्लशबलकृष्णरूपाणि तेषां लक्षणानि फलानि च १३४७. प्रतिग्रहाधिकारिविशेषणानि प्रतिग्रहविधिः प्रतिग्राह्यवस्तुदेवताश्च १३४८. प्रतिग्राह्यवस्तुभेदेन स्वस्वत्वोत्पादकाः प्रदक्षिणारोहणादयः क्रियाभेदाः १३४९. प्रतिग्रहधर्मज्ञस्यैव प्रतिग्रहाधिकारः; ऋणापाकरणमावश्यकम्, वर्णक्रमेण वृद्धिपरिमाणम्, प्रीतिदाने साधिव्यवहारे च वृद्धिविवेचनम् १३५०. हिरण्यवस्त्रधान्यपश्वादीनां वृद्ध्यवसानमर्यादाः; अपाक्रियमाणर्णाग्रहणे वृद्धिनिरोधः; ऋणापाकरणाधिकारिणः; पुनर्व्यवहारविधिः; प्रतिभूत्रैविध्यं तत्र ऋणापाक्रियानपाक्रियाविवेकश्च; अस्वामिकपण्यविक्रयदुष्क्रीतपण्यविक्रयविषयकाणि विधानानि १३५१. ब्राह्मणप्रशंसा; दुष्टा राजानस्तेभ्यः प्रतिग्रहस्य निषेधश्च; अत्यन्तापदि सर्वतः प्रतिग्रहानुमतिः, राजतः प्रतिग्रहस्य निषेधः १३५२.

**संकरजाः, तद्धर्मवृत्तयश्च –**

वर्णानुलोमा मातृसमाः, चण्डालमागधायोगवानामुत्पत्तिः, प्रतिलोमानां सजातीयाभिर्विवाहः; चण्डालवैदेहकसूतपुक्कसमागधायोगवानां वृत्तयः, सूतानां संस्कार्यता याज्यता च, चण्डालसमाचाराः; प्रतिलोमानामुन्नतिकारणम्; गुणकर्मभिर्जातिविज्ञानम् १४९८. प्रतिलोमसंकरनिन्दा; विशिष्टदंपतिपरंपराजनितसप्तमकुले जात्युत्कर्षः; राष्ट्रघातकसंकरनिवारणं राजकर्तव्यम्; वर्णानुलोमा जात्या मातृसमाः, वर्णप्रतिलोमास्तद्वृत्तयश्च, प्रतिलोमानां सजातीयाभिर्विवाहः, संकीर्णसंकरा असंख्येयाः; प्रतिलोमानामुन्नतिकारणम् १४९९.

## श्रीमद्भागवतपुराणम्

**धर्मदेशाः –**

भारतमेव कर्मभूमिः, अन्या भोगभूमयः ७६८.

**युगधर्माः –**

राज्ञा परीक्षिता वृषरूपितं धर्मं जिघांसुं कलिं जिघांसुना शरणागताय कलये निवासस्थानानि द्यूतादीनि प्रदत्तानि ८५३. कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ, कलौ अर्हन्नामा राजा वेदादिदूषकपाषण्डप्रवर्तक ८५५. कृतादिषु क्रमेणेश्वरनामरूपोपासनाभेदाः, सर्वफलानां हरिसंकीर्तनमात्रसाधकत्वेन कलेः प्रशंसा ८५६. कलौ विश्वस्फूर्तिर्नाम राजा ब्राह्मणादिवर्णान् पुलिन्दादिसंज्ञकान्म्लेच्छप्रायान् करिष्यति, ततो म्लेच्छप्राया राजानः प्रजाः पीडयिष्यन्ति, कलिप्रयुक्तप्रजावृत्तवर्णनम् ८५८. दुराचारभूयिष्ठेऽतिदुरवस्थचराचरे कलियुगसमाप्तिकाले विष्णुः कल्किरूपेणावतरिष्यति, स धर्मभ्रष्टान् हत्वा देवापिमरुद्वारा चन्द्रसूर्यराजवंशौ प्रवर्त्य वर्णाश्रमयुतं कृतं स्थापयिष्यति, कृतयुगारम्भोपलक्षको ग्रहयोगः ८५९. कृतयुगीयसत्य – दया – तपो – दानरूपधर्मपादानां त्रेतादियुगेषु अनृतहिंसादिभिरधर्मपादैरुत्तरोत्तरं पादशो वृद्धैर्ह्रासः, युगप्रयुक्तलोकवृत्तानि, सत्त्वस्य रजसः रजस्तमसोस्तमसश्च क्रमेण युगेषु प्राधान्यम् ८६०. कलिदोषप्रयुक्तानि लोकवृत्तानि, कलिदोषनिवारकं हरिकीर्तनम् ८६१.

**वर्णाः, तद्वृत्तयश्च –**

भगवदवयवेभ्यः सवृत्तिकवर्णोत्पत्तिः १३५२. ब्राह्मणानां वर्णश्रेष्ठत्वं श्रेष्ठतातारतम्यं सर्वस्वाम्यं च; वर्णानां मुख्या आपत्कालीनाश्च वृत्तयः १३५३. वर्णानां गुणविभागशोऽवयवेभ्य उत्पत्तिः, वर्णानां मुख्या आपत्कालीनाश्च वृत्तयः १३५४.

**संकरजाः, तद्धर्मवृत्तयश्च –**

अन्त्यजादीनां कुलागता वृत्तिः चौर्यादि वर्जयित्वा; जातितो भिन्नस्यापि वर्णस्य गुणतस्तद्वर्णव्यपदेशः १४९९. अन्तेवासिनां स्वाभाविकदोषाः १५००.

## लिङ्गपुराणम्

**धर्मदेशाः –**

भारतवर्षस्य वर्णनं कर्मभूमित्वं च ७६८.

**युगधर्माः –**

सत्त्वरजस्तमसां युगेषु प्राधान्यविवेकः, कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ, युगभेदेन धर्मभेदाः, विस्तरेण युगवृत्तवर्णनम् ८६३. स्वायंभुवे मन्वन्तरे मानवांशेन चन्द्रमःकुले जातः प्रमतिः कलियुगान्ते पुनर्विष्णोरंशेन जातः सन् बहुशोऽधार्मिकान् हन्ति, केचिदत्यन्तदुरवस्था म्लेच्छदेशान् गच्छन्ति, ततः प्रवृत्ते कृतयुगे अवशिष्टधार्मिककलियुगीय-

प्रजाभ्यः कार्तयुगीनां प्रजानां संभवः, कार्तयुगीः प्रजाः सप्तर्षयो धर्ममुपदिशन्ति ८६८.

**वर्णाः, तद्वृत्तयश्च –**

द्वापरे कृषेः प्राधान्यम्, लोकरक्षणार्थं क्षत्रोत्पत्तिः, द्वापरीयबीजभूतवर्णेभ्यः कलौ वर्णप्रवृत्तिः; राजतः प्रतिग्रहस्य निषेधः १३५५.

## स्कन्दपुराणम्

**धर्मदेशाः –**

भारतवर्षवर्णनम्, भारतमेव कर्मभूमिः, अन्या भोगभूमयः, कुरुक्षेत्रादीनां प्रशंसा, वर्ज्यदेशाः, आपदि वर्ज्यदेशेऽपि निवासः ७६९.

**युगधर्माः –**

युगेषु सत्त्वरजस्तमसां प्राधान्यविवेकः, युगभेदेन धर्मभेदाः, द्वापरे वेदविभाजनम्, युगगुणदोषप्रयुक्तचराचरवृत्तानि ८६९. कलेः चतुःसहस्राधिकेषु वर्षेषु गतेषु राजा प्रमतिरवतीर्य धर्मभ्रष्टाः प्रजा निहनिष्यति, ततः कालेनावशिष्टा अपि प्रजा धर्मभ्रष्टा अत्यन्तदुर्गताः प्रत्यन्तदेशान् गमिष्यन्ति, पुनश्च कालेन धर्मभ्रष्टाः प्रजाः धर्मघातकं शाल्वं नाम म्लेच्छं च हन्तुं शम्भलग्रामे विष्णुयशसः सकाशात् परमेश्वरो विष्णुरवतीर्य पापिनो हत्वा धर्मस्थापनं करिष्यति, ततः प्रवृत्ते कृतयुगे मरोर्देवापेश्च सकाशात् सूर्यसोमवंशौ श्रुतदेवाच्च ब्राह्मणकुलानि प्रवर्त्स्यन्ति; युगेषूत्तरोत्तरमल्पकालेन धर्मसिद्धिः, कलौ पुराणश्रवणं विष्णूपासनं च परो धर्मः, कलिदोषप्रयुक्तलोकवृत्तानि ८७१. कलौ विष्णूपासनमेव शीघ्राधिकफलदं कामरसयोर्दुर्जयत्वं च, तत्प्रसङ्गेन धर्मवर्णनामद्विजवृत्तान्तकथनम्, विस्तरेण कलिदोषप्रयुक्तलोकवृत्तान्तकथनम् ८७२. विष्णूपासनसदाचारादेः कलिबाधानिवर्तकत्वम्, नैष्ठिकव्रताधिकारस्य कलौ निषिद्धत्वात् संधावनिषेधः; कलौ शिवपुराणश्रवणमेव श्रेयान् धर्मः; कलौ गङ्गातीर्थस्य दानस्य विश्वेश्वरदेवस्य वाराणसीपुर्याश्च प्राधान्यम् ८७४. कृतयुगप्रमाणम्, कृते हरिः शुक्लः, चतुष्पादधर्मः, लोकानां वयोवस्थामानम्, संकरहीनं चातुर्वर्ण्यमात्रम्, अन्यानि च बहूनि कार्तयुगलोकवृत्तानि; त्रेतायुगमानम्, त्रेतायां रक्तो हरिः, धर्मस्त्रिपात्, यमकृतं नरकसज्जीकरणम्, वयोवस्थामानम्, संकरोत्पत्तिः, अन्यानि च बहूनि त्रेतायुगीयलोकवृत्तानि ८७५. द्वापरयुगमानम्, द्वापरे हरिः कपिशवर्णः, धर्मो द्विपाद्, वयोवस्थामानम्, अन्यानि च द्वापरीयलोकवृत्तानि; कलियुगमानम्, कलौ हरिः कृष्णवर्णः, धर्म एकपाद्, वयोमानम्, तपोध्यानयज्ञदानानि यथाक्रमं युगेषु प्रशस्तानि, अन्येषां च बहूनां कलियुगलोकवृत्तानां विस्तरेण वर्णनम् ८७६. कृतादियुगमानानि, युगक्रमेण हरिः श्वेतरक्तकपिलकृष्णवर्णः, कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ, कलौ एकपदोऽपि धर्मस्य पश्चात् लोपः, अन्यानि बहूनि तत्तद्युगलोकवृत्तानि, तपोज्ञानतीर्थयात्रादानानि क्रमेण युगेषु प्रशस्तानि ८७७. युगभेदेन प्रशस्तानि तीर्थक्षेत्राणि, युगेषु धर्माधर्मयोस्तारतम्यं तपआदिधर्मप्राधान्यं हरेर्वर्णभेदः उपास्यदेवभेदश्च, अन्यानि बहूनि युगवृत्तानि ८७९.

**वर्णाः, तद्वृत्तयश्च –**

अष्टविधा ब्राह्मणास्तेषां लक्षणानि च १३५५. प्रतिग्रहनिन्दा; ईश्वरावयवेभ्यो वर्णोत्पत्तिः; अपादानविशेषेभ्यः प्रतिग्रहनिषेधः; स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः; ब्राह्मणप्रशंसा; ब्राह्मणवंशेषु सर्ववर्णोत्पत्तिः; वर्णानां मुख्या आपत्कालीनाश्च वृत्तयः, आपन्निवृत्तौ आपद्वृत्तित्यागः प्रायश्चित्तं च १३५६. स्रष्टुरवयवेभ्यः सवृत्तिकवर्णोत्पत्तिः; ब्राह्मणप्रशंसा प्राशस्त्यतारतम्यं च; वर्णत्रयस्य द्विजत्वम्, स्वस्ववर्णे ज्यैष्ठ्यनिमित्तानि; सर्वतः प्रतिग्राह्याणि; ब्राह्मणप्रशंसा; स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः; राजतः प्रतिग्रहस्य निषेधः; ब्राह्मणस्य गोविक्रयनिषेधः १३५७. ब्राह्मणप्रशंसा; दशदोषीरहितधर्मोढशूद्रापतेः शूद्रत्वं सच्छूद्रत्वम्, तदनुषङ्गेण राहित्यप्रतियोगित्वेन दोषदशककथनम्; वैश्यवृत्ती वाणिज्यकुसीदे, कुसीदे वृद्धिपरिमाणम्; स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः, वर्णानां वृत्तयः, प्रतिग्रहनिवृत्तेः प्राशस्त्यम्; विस्तरेण ब्राह्मणप्रशंसा १३५८. विस्तरेण ब्राह्मणप्रशंसा १३६०. अर्जनोपायभेदप्रयुक्ता द्रव्यस्य शुक्लशबलकृष्णभेदाः १३६१. वेदविक्रयनिषेधः, षड्विधो वेदविक्रयः; ब्राह्मणस्य मांसादिविक्रयनिषेधः अपूपादिप्रतिग्रहनिषेधश्च फलोक्तिसहितः, विनिमेयाविनिमेयानि; ब्राह्मणस्य मुख्या आपत्कालीनाश्च वृत्तयः, सेवावृत्तिनिषेधः, प्रतिग्रहाधिकारी, राजप्रतिग्रहनिषेधः, असत्प्रतिग्रहाभावफलम्, तीर्थप्रतिग्रहदोषशमनं दानम् १३६२.

अश्वप्रतिग्रहनिषेधः, प्रतिग्रहनिवृत्तिप्रशंसा; देवार्चनवृत्तिनिषेधः १३६३.

**संकरजाः, तद्धर्मवृत्तयश्च –**

रजकादिचण्डालान्ता अष्टौ शूद्रमानवास्तेषामुत्पत्तिश्च, संकीर्णसंकरजा अनन्ताः; जारब्राह्मणब्राह्मणीजातो वारडः अधमाधमः; त्रयो वर्णप्रतिलोमजाः; जारजानां पञ्चानां क्षेत्रजादीनां निन्दा; उत्तमाधमादिभेदैः संकीर्णसंकीर्णानां गणनं तेषां धर्मश्च १५००. कायस्थस्योत्पत्तिर्वृत्तिर्धर्मश्च १५०१.

### सह्याद्रिखण्डः

**युगधर्माः –**

कलिवर्ज्यानि, कलियुगवृत्तवर्णनम् ८८१.

**वर्णाः, तद्वृत्तयश्च –**

ब्रह्मणोऽवयवेभ्यो वर्णोत्पत्तिः; ब्राह्मणप्रशंसा प्राशस्त्यतारतम्यं च १३६३. गौडद्राविडब्राह्मणविभागः; भार्गवस्थापितानि ब्राह्मणकुलानि; ब्राह्मणप्रशंसा १३६४. राजप्रतिग्रहनिषेधः; अजिनादिप्रतिग्रहनिषेधः; विदुषः प्रतिग्रहदोषाभावः; दुर्भिक्षे सर्वतः प्रतिग्रहः १३६५.

**संकरजाः, तद्धर्मवृत्तयश्च –**

वर्णानुलोमा वर्णप्रतिलोमाश्च; वर्णानुलोमप्रतिलोमसंकरजानां वृत्तयो धर्माश्च १५०१. वर्णानुलोमप्रतिलोमजाः १५०३. गोलकानुगोलककुण्डगोलरण्डकानामुत्पत्तिर्निन्दा च; संकरनिन्दा १५०४.

### सूतसंहिता

**वर्णाः, तद्वृत्तयश्च –**

ब्रह्मणोऽवयवेभ्यो वर्णोत्पत्तिः, सवर्णोत्पत्तिः १३६४.

**संकरजाः, तद्धर्मवृत्तयश्च –**

अनुलोमप्रतिलोमान्तरालिकव्रात्यकुण्डगोलकानां लक्षणानि; भर्तृजजारजवर्णानुलोमप्रतिलोमानामान्तरालिकादीनां चोत्पत्तिः १५०४. जातिर्जन्मसिद्धैव १५०७.

### सौरसंहिता

**वर्णाः, तद्वृत्तयश्च –**

द्विजानां सात्त्विकत्वं शूद्राणां राजसत्वम् १३६६.

### गरुडपुराणम्

**धर्मदेशाः –**

धर्मदेशलक्षणम् ७६९.

**युगधर्माः –**

कृते चतुष्पदो धर्मस्य त्रेतादिषु पादशः क्षयः, युगेषु हरेर्वर्णभेदाः, सत्त्वादिगुणप्राधान्यम्, कलौ हरिकीर्तनस्यैव सर्वफलदत्त्वम्, कलिवर्ज्यानि, युगस्वभावप्रयुक्तलोकवृत्तानि ८८१.

**वर्णाः, तद्वृत्तयश्च –**

वर्णोत्पत्तिः, वर्णानां क्रमेण ब्राह्मशाक्रमारुतगान्धर्वलोकाः, वर्णत्रयस्य द्विजत्वम्; वाप्यादिनिर्माणे पशुदमने बीजावापे रथादिगमनागमने नावादिप्रवाहणे च नक्षत्राणि; वर्णानां वृत्तयः; यज्ञार्थलब्धस्य न पोषणे विनियोगः, कुसूलधान्यत्वादीनां श्रेयस्त्वतारतम्यम्, स्वाध्यायाविरोधेनार्थार्जनम्, आपदि राजादिभ्यः प्रतिग्रहः, राजप्रतिग्रहापवादः १३६६. प्रतिग्रहनिवृत्तिप्रशंसा, अप्रत्याख्येयानि, देवाद्यर्थं सर्वतः प्रतिग्रहानुमतिः; ब्राह्मणस्याऽऽपद्वृत्तयः अविक्रेयाणि च; द्रोहवर्जितवृत्त्या ब्राह्मणेन जीवितव्यम्; धनस्य शुक्लशबलकृष्णरूपं त्रैविध्यम्, सर्ववर्णानां त्रिविधमविशिष्टं धनम्, स्वस्वविशिष्टधनोपाया वर्णानां वृत्तयः, ब्राह्मणस्याऽऽपद्वृत्तयः; वृत्त्यन्तरापेक्षया कुसीदप्रशंसा, पित्रादिपूजया कुसीददोषशमनम्; कुसीदकृषिलब्धधनस्य विभागेन विनियोगः; दशजीवनहेतवः, वर्णवृत्तयः १३६७. ब्राह्मणस्योत्तमं धनम्; अयाचितप्रतिग्रहे दोषाभावः; गुर्वाद्यर्थं गुणवतश्च सर्वतः प्रतिग्रहानुमतिः, आपद्वृत्त्यन्ते प्रायश्चित्तम्; नित्यकर्मकुटुम्बपोषणार्थातिरिक्तधनार्जननिषेधः; निन्द्यदातृकप्रतिग्रहनिषेधः १३६८.

**संकरजाः, तद्धर्मवृत्तयश्च –**

वर्णानुलोमप्रतिलोमानां रथकारस्य चोत्पत्तिः, जात्युत्कर्षः पञ्चमे सप्तमे च कुले; सप्तान्त्यजाः; सहस्रशः संकीर्णजातयः १५०७; त्रिविधाश्चाण्डालाः १५०८.

### पद्मपुराणम्

**धर्मदेशाः –**

निवासानर्हदेशलक्षणम्, निवासार्हदेशाः, कर्मभूमित्वदुर्लभमनुष्यजन्माश्रयत्वादिगुणैर्भारतप्रशंसा, भारतभिन्नाः सर्वा भोगभूमयः ७७०.

**युगधर्माः –**

युगभेदभिन्नमायुर्मानम्, युगेषु तीर्थप्राधान्यम्, कलौ हरेर्भजनं सर्वकलिदोषबाधकम्, युगप्रयुक्तलोकवृत्तानि ८८२. ध्यानयज्ञदेवार्चनानि युगत्रये प्रशस्तानि, कलौ दानं हरिकीर्तनं पुराणश्रवणं च प्रशस्तम्; युगेषु क्रमेण तपआदिधर्मप्राशस्त्यम्, युगक्रमेण धर्माधर्मयोरुत्कर्षापकर्षौ, युगमानानि, युगलोकवृत्तानि ८८३. शालग्रामशिलाद्वारकाशिलयोरर्चनादिना कलौ पापनाश उत्तमलोकप्राप्तिश्च ८८४.

**वर्णाः, तद्वृत्तयश्च –**

परतृणशाकाद्यपहरणनिषेधः; राजादिदातृकप्रतिग्रहनिषेधः; एकदातृकानेकवारयाचननिषेधः; देवस्वब्राह्मणस्वहरणनिषेधः; पुष्पादिविषये स्तेयापवादः; कपटवेषेण परवृत्त्याश्रयणनिषेधः; अयाज्ययाजननिषेधः; अनर्चितद्रव्यस्य प्रतिग्रहनिषेधः; अविद्वत्कर्तृकप्रतिग्रहनिषेधः; द्विजातिभ्यः प्रतिग्रहस्य विधिः शूद्रात्तन्निषेधश्च १३६८. ब्राह्मणो धनविस्तारं परिहरेत्; गुर्वाद्यर्थं सर्वतः प्रतिग्रहानुमतिः; ब्राह्मणप्रशंसा, त्रयो वर्णा द्विजातयः; ब्राह्मणस्याध्यापनादिवृत्तिविधिः नीचसेवानिषेधश्च; ब्राह्मणप्रशंसा; ब्राह्मणस्याऽऽपदि क्षत्रियवृत्तिविधिः कृषिनिषेधश्च; चातुर्वर्ण्यसृष्टिः १३६९. स्वधर्मस्थितानां वर्णानां क्रमेण प्राजापत्यादयो लोकाः; न्यूनाधिकप्राशस्त्याः कुशूलधान्यत्वादयो वृत्तयः, वृत्तिसंख्याप्रयुक्तं प्राशस्त्यतारतम्यम्; चातुर्वर्ण्यसृष्टिः; राजप्रतिग्रहनिन्दा; ब्राह्मणस्य धर्मार्थमपि द्रव्यसंचयस्य निषेधः; प्रतिग्रहनिवृत्तिप्रशंसा १३७०. अत्यन्तापदि क्षत्रियस्य प्रतिग्रहानुमतिः; ब्राह्मणप्रशंसा १३७१. ब्राह्मणानां वृत्तयः, कृषिदोषशमनं धान्यदानम्; आपदि सर्वजातीनां क्षत्रियवृत्तेर्युद्धस्यानुमतिः, ब्राह्मणस्य क्षत्रियवृत्त्यभावे वैश्यवृत्तिः, वैश्यवृत्तिदोषशमनं दानादि, वैश्यवृत्तौ परिहर्तव्या दोषाः १३७२. ब्राह्मणस्य कृषिकर्मणि हालिकवृषभसंख्या गोपालनविषयकविधिनिषेधाश्च; गोब्राह्मणयोर्जगद्यात्रानिर्वाहकत्वेन प्रशंसा १३७३. प्रतिग्रहनिवृत्तिप्रशंसा; चातुर्वर्ण्यसृष्टिः; ब्राह्मणप्रशंसा; बीजवापविषयकं धर्मकृत्यम्; तीर्थे प्रतिग्रहादिनिषेधः, व्रतमूलजीवननिषेधः; प्रतिग्रहाधिकारानधिकारौ; सप्त धनार्जनोपायाः; भूमिब्रह्माण्डप्रतिग्रहनिषेधः १३७४. प्रेतशय्याप्रतिग्रहनिषेधः; भिक्षाधिकारी; शिवस्वग्रहणनिषेधः १३७५.

**संकरजाः, तद्धर्मवृत्तयश्च –**

एकादशविधं सांकर्यम्, संकीर्णसंसर्गे पापसंक्रमः; वेनशरीरात् निषादादिम्लेच्छजातीनामुत्पत्तिः; हविषोर्वर्णयोश्च प्रतिलोमसंकरादुत्पन्नौ द्विविधौ सूतौ तयोर्धर्माश्च; वेनशरीरात् म्लेच्छानामुत्पत्तिः; गरुडेनोद्वान्तानां यवनादिम्लेच्छानां पूर्वादिदिक्षु स्थितिः समाचारा अस्पृश्यता च १५०८.

## ब्रह्मपुराणम्

**धर्मदेशाः –**

विस्तरेण भारतवर्षवर्णनम्, चतुर्विधपुरुषार्थसाधनकर्मभूमित्वादिना विस्तरेण भारतप्रशंसा ७७०.

**युगधर्माः –**

युगेषु क्रमेण तपोयज्ञादीनां श्लाघ्यत्वम्, देशकालप्रयुक्तधर्माणां तत्तद्देशकालयोः प्राशस्त्यम्, कालप्रयुक्तो धर्मो वृद्धिहानिस्वभावः, त्रेतादिषु धर्मस्य पादशः क्षयः ८८४. युगकालभेदप्रयुक्तो जातिदेवतीर्थादिभेदः, युगक्रमेण तीर्थानां त्रिदैवत्यत्वादि दैवत्वादि च; भूयसा विस्तरेण कलिदोषप्रयुक्तलोकवृत्तवर्णनम्, कलिवृद्धिज्ञापकानि लक्षणानि, कलौ अल्पायासेन महती फलसिद्धिः ८८५. विस्तरेण कलिदोषप्रभवजनवृत्तवर्णनम् ८८७. कलिवर्ज्यानि, कलियुगान्ते राज्ञाम् ऋषीणां च वृत्तम् ८९०.

**वर्णाः, तद्वृत्तयश्च –**

वर्णसृष्टिः; वार्तापदार्थः; चातुर्वर्ण्यवृत्तयः; वर्णानामापद्वृत्तयः; कर्मविपाकेन जघन्यवर्णवृत्त्या वर्णापकर्षः, स्वस्ववृत्त्या वर्णोत्कर्षः, वर्णभेदो नैसर्गिकः १३७५. तीर्थे जलावधिकहस्तचतुष्टयदेशे प्रतिग्रहनिषेधः; ब्राह्मणदंपतिभ्यां ब्राह्मणोत्पत्तिः; कृष्यारम्भे पृथ्वीपूजनं द्वाविंशतिप्रजापतिपूजनं च, हलवाहने दिङ्नियमः बीजावापे कृत्यं च १३७६. हालिकवृषभविषये कर्तव्यानि १३७७.

## ब्रह्मवैवर्तपुराणम्

**धर्मदेशाः –**

भारतवर्षस्य सीमा कर्मभूमित्वादिभिः प्रशंसा च ७७२.

**युगधर्माः –**

युगेषु धर्मस्योत्कर्षापकर्षौ, कृते धर्मस्य सर्वत्र स्थितिः, त्रेतादिषु धर्मस्य योग्यायोग्यस्थानानि; कृते परिपूर्णो धर्मः,

कृतयुगीयलोकवृत्तानि ८९२. त्रेतादिषु पादशो धर्महासः, विस्तरेण कलियुगीयचराचरवृत्तवर्णनम्, कलियुगान्ते द्वादशादित्यैर्भूयोवृष्टिभिश्च सर्वसंहारः, तदन्ते कृतयुगप्रवृत्तिः ८९३. कलिवर्ज्यानि; विस्तरेण कलियुगीयवृत्तवर्णनम्, अन्ते सूर्यातपेन जलौघेन च सर्वनाशः, ततः कृतयुगप्रवृत्तिः ८९४. शिवाद्यर्चनं कलिदोषबाधकम् ८९५..

**वर्णाः, तद्वृत्तयश्च –**

ब्रह्मावयवेभ्यश्चातुर्वर्ण्योत्पत्तिः; ब्राह्मणप्रशंसा १३७७. प्रतिग्रहलब्धानां देवप्रतिमानां तिलधेन्वादीनां चाऽऽत्मोपयोगे विक्रये वा न दोषः १३७८. वैश्यादीनां तुलामाने वञ्चनं पापम् १३७९.

**संकरजाः, तद्धर्मवृत्तयश्च –**

गोपनापितादयः सच्छूद्राः, करणाम्बष्ठयोरुत्पत्तिः; विश्वकर्मशूद्राजाता नव शिल्पिनस्तेषां ब्रह्मशापात्पातित्यं च; घृताचीविश्वकर्मणोर्मालाकारादयोऽष्टौ पुत्राः, तत्र केचिद्ब्रह्मशापात्पतिताः; अट्टालिकाकारः कोटकः तैलकारः तीवरः लेटः इत्येतेषामुत्पत्तिः १५०९. लेटात् तीवर्यां माल्लमन्त्रमातरभण्डकोलकलंदराणामुत्पत्तिः; चाण्डालचर्मकारमांसच्छेदक्रोञ्चकर्ताराणामुत्पत्तिः; लेटचाण्डालीभ्यां हड्डिडर्डमश्च संजातौ; हड्डिस्त्रियां चाण्डालात् पञ्च पुत्राः संजाताः; गङ्गापुत्रः युङ्गी शुण्डी पौण्ड्रकः राजपुत्रः आगरी धीवरः रजकः कोयाली सर्वस्वी व्याधः इत्येतेषामुत्पत्तिः; दस्यूत्पत्तिः; विप्रतुल्याशौचस्य कूदरस्योत्पत्तिः; वागतीतस्योत्पत्तिः; म्लेच्छजात्युत्पत्तिः; जोलशराङ्कयोरुत्पत्तिः १५१०. अप्रसिद्धाः संकीर्णजातयः असंख्याः; वैद्यस्योत्पत्तिः, वैद्यशूद्राजनितपुत्रैः शूद्रायां जनिताः पुत्राः; यज्ञे पुराणप्रवक्तृसूतोत्पत्तिः; भट्टोत्पत्तिः १५११.

## वराहपुराणम्

**धर्मदेशाः –**

अशुचिदेशे स्वल्पद्वीपे दुर्जनसंनिधौ च कर्मकरणं निषिद्धम्, आपदि स्वल्पद्वीपेऽपि कर्मानुमतिः, कर्मार्हद्वीपलक्षणम् ७७२.

**युगधर्माः –**

युगेषु विष्णोर्वर्णभेदा मूर्तिभेदाश्च, ब्रह्मकृता धर्मसृष्टिः, धर्मस्य त्रेतादिषु पादशो ह्रासः, युगेषु त्रिषु सत्त्वप्राधान्यं कलौ रजस्तमःप्राधान्यम्; युगस्वभावभेदाः तत्प्रयुक्तलोकवृत्तानि च ८९५.

**वर्णाः, तद्वृत्तयश्च –**

विराडवयवेभ्यश्चातुर्वर्ण्यसृष्टिः; शूद्रात्प्रतिग्रहस्य निषेधः; प्रेतयोनिनिमित्तानि शूद्रान्नभक्षणादीनि; वैश्यवृत्तयः १३७९.

## वामनपुराणम्

**संकरजाः, तद्धर्मवृत्तयश्च –**

वेनसव्यकरात् निषादोत्पत्तिः १५११.

## कूर्मपुराणम्

**धर्मदेशाः –**

भारतवर्णनम्, भारतं कर्मभूमिः, भारते एव युगव्यवस्था ७७२.

**युगधर्माः –**

कलौ श्रीकृष्णभक्तिः शरणम्, कृष्णभक्तस्यापि महेश्वरनिन्दया नरकप्राप्तिः, दधीच – गौतमशप्तानां संसर्गस्त्याज्यः ८९६. कलियुगे वाराणसीनिवासः पापनाशकः, कृतादियुगत्रये नराः सत्यवादिनो धार्मिकाश्च; युगेषु क्रमेण प्रधानभूता धर्मा देवाश्च, कृतादिषु क्रमेण धर्मस्य साकल्यं पादशो ह्रासश्च; कृते मिथुनोत्पत्तिः प्रजानामुत्तमाधमत्वाभाव आयुषस्तुल्यत्वमन्यानि च कृतयुगीयप्रजावृत्तानि ८९७. त्रेतायां प्रजानां पर्यायेण गुणदोषकृतौ कुशलोत्कर्षापकर्षौ, मर्यादास्थापनार्थं ब्रह्मकृता क्षत्रियसृष्टिः वर्णाश्रमव्यवस्था यज्ञप्रवृत्तिश्च; द्वापरे मतिभेदरागलोभाद्युत्पत्तिः, व्यासकृतं वेदविभाजनं परमर्षिकृतं संहितादिप्रवचनं च, निर्वेदादिक्रमेण ज्ञानोत्पत्तिः, कृतादिषु क्रमेण धर्मोऽस्ति प्रवर्तते व्याकुलीभवति नश्यति च ८९८; विस्तरेण कलियुगीयलोकवृत्तवर्णनम्, कलौ शिवोपासनया सर्वकामसिद्धिः ८९९. युगभेदेन तीर्थभेदप्राधान्यम्, कलियुगवृत्तवर्णनम् ९०१.

**वर्णाः, तद्वृत्तयश्च –**

अवयवेभ्यो वर्णसृष्टिः वर्णवृत्तयश्च; स्वस्वधर्मनिष्ठानां वर्णानां लोकाः; स्तेयनिषेधः; राजप्रतिग्रहनिषेधः, याचनातिरेकनिषेधः, देवब्रह्मस्वहरणनिषेधः, स्तेयापवादः; कपटेन धनार्जनस्य निषेधः; ब्राह्मणस्य मुख्या आपत्कालीनाश्च वृत्तयः १३८०. कृषिवाणिज्यकुसीदेषु दोषशमनार्थं पित्रादिभ्यो दानम्; शिलोञ्छकुशूलधान्यत्वादयो वृत्तयः तासां स्वरूपतः

संख्यातश्च प्राशस्त्यतारतम्यं च १३८१. अर्जितधनेन देवादितर्पणं दुर्भिक्षे बुभुक्षुतर्पणं चाऽऽवश्यकम्; अर्चित द्रव्यस्यैव दानप्रतिग्रहौ; अपूपादिप्रतिग्रहे विदुष एवाधिकारः; शूद्रात् प्रतिग्रहस्य निषेधः; लोभेनातिरिक्तधनार्जनस्य निषेधः; गुर्वाद्यर्थं सर्वतः प्रतिग्रहः; अर्जितधनेन देवाद्यर्चनमावश्यकम् १३८२.

**संकरजाः, तद्धर्मवृत्तयश्च –**

एकादशविधं सांकर्यम्, संकीर्णसंसर्गात्पापसंक्रमः १५११.

## भविष्यपुराणम्

**धर्मदेशाः –**

सामान्यतः पुण्यदेशलक्षणम्, ब्रह्मावर्तब्रह्मर्षिदेशमध्यदेशार्यावर्तयाज्ञिकदेशलक्षणानि, ब्रह्मर्षिदेशस्थितब्राह्मणस्य सर्वधर्मोपदेशाधिकारः, ब्रह्मावर्तादिषु द्विजानां शूद्रस्य च निवासः क्रमेण नियतोऽनियतश्च, ब्रह्मावर्तादीनां न्यूनाधिकभावः, भारतप्रशंसा ७७२.

**युगधर्माः –**

द्वापरयुगीय आर्यदेशभूमिकीर्तिकालो म्लेच्छदेशभूमिकीर्तिकालश्च, कलियुगे म्लेच्छवंशविवर्धनकालः मूशाख्यम्लेच्छमतप्रसारः आर्याचारनाशश्च ९०१. कलियुगागमनलिङ्गानि, कलौ हरिः शरणम्; कृतयुगे पशुहिंसारहितो यज्ञः; कृतादिषु विष्णुरूपाणि; पितृशर्मकृता कलियुगे गार्हस्थ्यस्य प्रशंसा ९०२. युगभेदेन पूजाप्रकारभेदाः पूज्यभेदाश्च; विश्वरूपस्य विष्णोर्युगक्रमेण बाल्ययौवनवार्धकमरणरूपा अवस्थाभेदाः रूपभेदाश्च, प्रतियुगभिन्नं मानवायुर्मानम्; कलौ शिवनामकीर्तनं गङ्गा च शरणम्, कृतादिषु क्रमेण ध्यानादीनां प्राधान्यम् ९०३.

**वर्णाः, तद्वृत्तयश्च –**

स्वयंभुवोऽवयवेभ्यो वर्णसृष्टिः; ब्राह्मणप्रशंसा, सर्वचराचरस्वामिनो ब्राह्मणस्य कृपयाऽन्येषां भोक्तृत्वम् १३८२. गोदोहादिविषयाणि पशुपालनविषयाणि च विधानानि; कृषौ भृत्यवेतनबीजावापादिविषयकाणि विधानानि; ब्राह्मण्यादिजातयो जन्मतः कर्मतो वा अनुपपद्यमानाः सत्यः सांकेतिका इति तर्काश्रयेण महान् पूर्वपक्षः, अल्पीयस्युत्तरपक्षे सिद्धेर्जातिकर्मोभयसाध्यत्वोक्त्या सांकेतिकजातेः सिद्धिसाधकत्वानुपपन्नत्वेन सिद्धिसाधकत्वान्यथानुपपत्तिरूपयाऽर्थापत्त्या जातीनां जन्मसिद्धत्वसूचनम् १३८३. वेदविक्रयस्य निषेधः फलं च, षड्विधो वेदविक्रयः, वेदविक्रयाद्यर्जितधनस्य देवपितृकर्मानर्हत्वम् १३९१. ब्राह्मणानाम् ऋतादिवृत्तयः तासां श्रेयस्त्वतारतम्यं च; ब्राह्मणप्रशंसा; कृषिनिन्दा; गोवंशपीडननिषेधः; गोब्राह्मणप्रशंसा १३९२. हालिकवृषभगुणाः; कपिलाप्रतिपालकशूद्रात् प्रतिग्रहस्य निषेधः; गोविक्रयनिषेधः १३९३.

**संकरजाः, तद्धर्मवृत्तयश्च –**

चाण्डालत्रैविध्यम्; ब्राह्मण्यां ब्राह्मणजारजो महाचाण्डालः १५११.

## नारदपुराणम्

**धर्मदेशाः –**

कर्मभूमित्वदेवेप्सितत्वादिगुणैर्भारतप्रशंसा, ब्रह्मावर्तलक्षणम् ७७३.

**युगधर्माः –**

युगधर्मदेशाचारयोः कर्तव्यता, कलिवर्ज्यानि ९०४. कृतयुगमानं कृतयुगीयमानववृत्तानि च, हरिः शुक्लवर्णः ९०५. त्रेतायां धर्मे न्यूनता, हरिः रक्तः, मानवाः क्रियायोगरताः; द्वापरे धर्मो द्विपाद्, हरिः पीतः, वेदविभाजनम्, असत्यनिरतत्वादीनि लोकवृत्तानि; कलियुगे धर्मः एकपाद्, हरिः कृष्णः, विस्तरेण कलियुगीयचराचरवृत्तवर्णनम् ९०६. कृतादिषु क्रमेण तपोध्यानयज्ञदानानि प्रशस्तानि, कृतादौ दीर्घकालकर्मसाध्यस्य फलस्य कलौ अल्पकालकर्मसाध्यत्वम्, कृतादौ ध्यानादिसाध्यस्य फलस्य कलौ हरिकीर्तनसाध्यत्वम्, कलिदोषबाधिकाया विष्णुभक्तेः शिवभक्तेश्च विस्तरेण वर्णनम् ९०८. कृतादिषु प्रधानतीर्थभेदाः, कलौ गङ्गायाः शिवार्चनस्य च माहात्म्यम् ९०९.

**वर्णाः, तद्वृत्तयश्च –**

ब्राह्मणप्रशंसा, ब्राह्मणस्यैव प्रतिग्रहाधिकारः; वर्णाश्चत्वारः, तत्र त्रयो द्विजाः, वर्णानां वृत्तयः १३९३. ब्राह्मणक्षत्रिययोरापदि क्रमेण क्षत्रियवैश्यवृत्ती, द्विजस्य शूद्रवृत्तिनिषेधः; पूर्वं ब्राह्मणानामेव सृष्टिः, ब्राह्मणा एव कर्मभिर्वर्णान्तरतां गताः १३९४.

**संकरजाः, तद्धर्मवृत्तयश्च –**

सप्तान्त्यजाः १५११.

## अग्निपुराणम्

**धर्मदेशाः –**

भारतस्य वर्णनं कर्मभूमित्वं च ७७४.

**युगधर्माः –**

कलौ शुक्लयजुर्वेदस्य प्राधान्यम्, कलिवृत्तानि, युगान्ते धर्मस्थापककल्क्यवतारः, ततः कृतयुगप्रवृत्तिः, कलौ हरिपूजनं सर्वपापहरम् ९०९.

**वर्णाः, तद्वृत्तयश्च –**

क्रयविक्रयकुसीदानां कृषिसंबन्धिकर्मणां च मुहूर्ताः १३९४. वर्णानां मुख्या आपत्कालीनाश्च वृत्तयः, द्विजानामविक्रेयाणि, कृषिदोषशमनम्, हालिकवृषभसंख्याफलानि, श्ववृत्तिनिषेधः; प्रतिग्रहानधिकारी, प्रतिग्रहेतिकर्तव्यता; कुसीदे वस्तुभेदस्थलभेदप्रयुक्तानि वृद्धिपरिमाणानि; अपाक्रियमाणागृहीतस्य वृद्धिहीनं मध्यस्थे स्थापनम्; सप्रतिभूसाधिव्यवहारेषु विशेषविधयः १३९५. गोब्राह्मणप्रशंसा; अनापद्यपरिग्राह्याणि १३९६.

**संकरजाः, तद्धर्मवृत्तयश्च –**

अनुलोमानां मातृसमा जातिः; वर्णप्रतिलोमजास्तेषां वृत्तयश्च १५११. प्रतिलोमानां सिद्धिकारणं कर्मभिर्जातिविज्ञानं च; विदुरचण्डालाः १५१२.

## देवीभागवतम्

**धर्मदेशाः –**

भोगभूमिस्वर्गापेक्षया कर्मभूमेर्भारतस्य देवैः कृता प्रशंसा ७७४.

**युगधर्माः –**

सत्यादिकृतयुगधर्मनिष्ठानां सतां कलिस्वभावाधर्मनिष्ठानामसतां योगक्रियारूपत्रेताद्वापरनिष्ठानां मध्यमानां च तारतम्येन सर्वेषु युगेषु सत्त्वात् तदपेक्षया प्रत्येकं युगं कृतादिचतुष्टयात्मकं भवति; श्रीकृष्णस्य दुष्टविनाशप्रतिज्ञा कालप्रभावानुरोधेन धर्महीनबहुले कलिकाले धर्मविरोधकविषया, युगभेदानुसारि पुरुषार्थप्राधान्यम् ९१०. कृतादियुगीयानां साधूनां कलियुगकाले स्वर्गलोकेऽवस्थानं पापिनामिहलोकेऽवस्थानम्, तथा कलियुगीयानां पापिनां कृतादियुगकाले नरकेऽवस्थानं साधूनामिहलोकेऽवस्थानम्, स्वर्गात् नरकाच्च प्रच्युतानां तेषां क्रमेण पुनः कृतादियुगेषु कलियुगे चेहावस्थानम् ९११. कृतादियुगप्रयुक्तलोकवृत्तानि, त्रेतादिषूत्तरोत्तरं धर्मह्रासाधिक्यम्, आहारशुद्धि – चित्तशुद्धि – धर्मप्रकाशेषु तथा वृत्तसंकर – धर्मसंकर – वर्णसंकरेषु पूर्वपूर्वस्योत्तरोत्तरकारणत्वम् ९१२. कलियुगे देव्युपासनैव पापनिष्कृत्युपायः, देव्याः अजपामन्त्रं गायत्रीमन्त्रं च जपतामपि तन्मन्त्रमहिमज्ञानाभावः ९१३. पञ्चसहस्रवर्षपरिमिते कलौ गते काशीवृन्दावनातिरिक्तसर्वतीर्थानां वैकुण्ठगमनम्, दशसहस्रवर्षपरिमिते कलौ गते विष्णुशिवशक्तीनां तदुपासकानां वेदशास्त्रादीनां च स्वस्वस्थानगमनम्, विस्तरेण कलियुगीयचराचरवृत्तकथनम् ९१४. कलियुगान्तकाले कल्केरवतारः तत्कृतः सर्वम्लेच्छसंहारः, वर्षधाराप्लुतायाः पृथिव्याः द्वादशादित्यैः शोषणम्, ततः कृतयुगप्रवृत्तिः, कृतयुगीयलोकवृत्तकथनम् ९१६.

**वर्णाः, तद्वृत्तयश्च -**

ब्राह्मणप्रशंसा; स्वधर्मनिष्ठस्य शूद्रस्य जन्मान्तरे क्षत्रियत्वं ब्राह्मणत्वं च; न कर्मणा ब्राह्मणत्वम्; ब्राह्मणप्रशंसा १३९६. याचना न क्षत्रियवृत्तिः; कन्याविद्याविक्रययोः शूद्रप्रतिग्रहयाजनयोर्वार्धुषिकत्वस्य च निषेधाः; ब्राह्मणप्रशंसा; कन्याविक्रयस्य दण्डेन गोताडनस्य च निषेधः; वृषलिपत्यन्नभोजनस्य तीर्थेषु प्रतिग्रहस्य च निषेधः; शूद्रसेवित्वशूद्रयाजित्वदेवोपजीवित्वदैवज्ञकर्मजीवित्ववैद्यकर्मजीवित्वानां लाक्षादिविक्रयस्य च निषेधाः १३९७.

## शिवपुराणम्

**धर्मदेशाः –**

भारतवर्षलक्षणम्, भारतमेव कर्मभूमिः, देवैः कृता भारतजन्मप्रशंसा, भारते एव युगव्यवस्था ७७५.

**युगधर्माः –**

चातुर्वर्ण्यस्य संकराणां स्त्रीणां पुत्राणां च क्रमेण कलिप्रयुक्तवृत्तकथनम्; युगभेदप्रयुक्तो धर्मभेदो रत्नादिमयशिवलिङ्गभेदश्च, सर्वेषु युगेषु कलौ च विशेषतो भक्तिः शरणम्, युगेषूत्तरोत्तरं पादशो धर्मह्रासः ९१७. जैनधर्मप्रवर्तकमरिहन्नामकमुनिं तच्छिष्यांश्च प्रति तद्बलनिनाशयिषया विष्ण्वादिभिः कृतः कलियुगे वेदविरुद्धधर्म-

प्रसारोपदेशः; वाराहकल्पीयवैवस्वतमन्वन्तरे अष्टाविंशतौ युगचतुष्केषु द्वापरान्तेषु वेदविभाजनादिद्वारा लोकहितार्थं विष्णोर्व्यासरूपेणाष्टाविंशतिरवतारास्तत्साहाय्यार्थं शिवस्य सशिष्यचतुष्टयस्य मुनिरूपेण कलियुगारम्भेषु अष्टाविंशतिरवतारास्तेषां सर्वेषां नामानि च ९१८. महाबलस्य शिवस्य प्रतियुगं वर्णभेदः कलौ मृदुता च, कलौ पुराणश्रवणं शिवनामसंकीर्तनं च परमो धर्मः; अष्टाविंशतिद्वापरान्तावतीर्णव्यासनामानि शिष्यप्रशिष्यसहितयोगेश्वरावताराश्च ९२१. कलौ पञ्चाक्षरमन्त्रः पापहारकः, कृतादियुगेषु धर्मविशेषाः ९२२.

**वर्णाः, तद्वृत्तयश्च –**

सप्तविधा ब्राह्मणास्तेषां लक्षणानि च, राजक्षत्रियवैश्यवणिक्शूद्रवृषलदस्यूनां लक्षणानि; वर्णानां वृत्तयः; प्रतिग्रहदोषशमनं तपो दानं च; वित्तस्य धर्मवृद्धिभोगोद्देशेन त्रिधा विभागः; कृष्यादिषु दोषशान्तये देया न्यूनाधिका वित्तांशाः; वृत्तिभेदप्रयुक्तानि धनस्योत्तममध्यमाधमत्वानि; ब्राह्मणप्रशंसा १३९८. देवलकत्ववृत्तिलक्षणम्; देवद्विजगोसंबन्धिभूम्यादिहरणनिषेधः; अनापदि द्विजानामविक्रेयाणि; नानाविधगोपीडननिषेधाः; द्विजानां निषिद्धा वृत्तयः; न्यायातीतराजपरिग्रहनिषेधः; महादानप्रतिग्रहप्रशंसा; स्रष्टुरवयवेभ्यश्चातुर्वर्ण्योत्पत्तिः, सदाचारदुराचाराभ्यां वर्णोत्कर्षापकर्षौ १३९९. कृषिदोषस्य तच्छमनधान्यदानाभावे दुर्विपाकः, दोषशमनार्थं राजादिदेयांशाः १४००.

## नरसिंहपुराणम्

**धर्मदेशाः –**

भारते एव चातुर्वर्ण्यव्यवस्था सदसत्फलकानि कर्माणि च, सामान्यतो धर्मदेशलक्षणम् ७७६.

**युगधर्माः –**

विस्तरेण कलिदोषप्रयुक्तलोकवृत्तकथनम्, युगभेदभिन्ना धर्मभेदाः, कलौ फलं कृताद्यपेक्षयाऽल्पकालसाध्यम्, कलौ हरिस्मरणं कलिबाधानिवर्तकम् ९२२.

**वर्णाः, तद्वृत्तयश्च –**

वर्णसृष्टिरवयवतः, सवर्णब्राह्मणोत्पत्तिः, वर्णानां वृत्तयः १४००.

## कालिकापुराणम्

**वर्णाः, तद्वृत्तयश्च –**

स्रष्टुरवयवतो वर्णसृष्टिः; कृष्यादयो वैश्यवृत्तयः, तत्र हालिकवृषभसंख्या हलवाहनकालश्च, वृषभादिपशुपालने विधानानि, खले राजादिदेया धान्यांशाः १४०१. वैश्यस्याविक्रेयाणि, शूद्रस्य विक्रेयाविक्रेयाणि १४०२.

## साम्बपुराणम्

**वर्णाः, तद्वृत्तयश्च –**

देवस्वप्रतिग्रहरूपदेवलकत्ववृत्तेर्निन्दा; अविदुषः अप्रतिग्राह्याणि १४०२.

## सौरपुराणम्

**धर्मदेशाः –**

कुरुक्षेत्रादयो धर्मदेशाः, अङ्गवङ्गादयो वर्ज्या देशाः, कर्मभूमौ दुर्लभं मनुष्यजन्म देवैः प्रशस्यते ७७६.

**युगधर्माः –**

कलिप्रभावप्रयुक्तलोकवृत्तकथनम् ९२३. कलौ आन्ध्रदेशे ब्राह्मणाद्विधवाब्राह्मणीजातो मधुशर्मा स्वाचार्यपद्मपादुकशापाद्विस्मृताद्वैतसिद्धान्तः शिवनिन्दां द्वैतमतप्रचारं च करिष्यतीति हेतूक्तिरहितं भविष्यकथनं विस्तरेण कृत्वा पुनस्तदेव भविष्यकथनं शिवदग्धभर्तृकया रत्या शिववैरनिर्यातनार्थं प्रेरितः कामसखो मधुः शिवापकीर्तिं शिवाद्वैतखण्डनं च कर्तुं मोहादिभिः स्वसखैः सहितोऽवतरिष्यतीति हेतूक्तिसहितं विस्तरेण कृतम् ९२४.

**वर्णाः, तद्वृत्तयश्च –**

पौराणीवृत्तिप्रशंसा; प्रतिग्रहे मन्त्रविधिः; चत्वार एव वर्णास्तत्र त्रयो द्विजाश्च १४०२. जलाद्यपहरणनिषेधः; एकस्मात् द्विर्याचनस्य निषेधः; धर्मार्थपुष्पादिस्तेयानुमतिः; क्षुधाशान्त्यै तिलमुद्गमुष्टिस्तेयानुमतिः; अयाज्ययाजननिषेधः; स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः १४०३.

## पराशरपुराणम्

**वर्णाः, तद्वृत्तयश्च –**

ब्राह्मणप्रशंसा; ब्राह्मणत्रैविध्यम्, ब्राह्मणदंपतिभ्यां ब्राह्मणोत्पत्तिः, तत्तद्देवताप्रसादातत्तद्वर्णताप्राप्तिः, ब्राह्मणप्रशंसा १४०३. राजन्यादिभ्यः प्रतिग्रहस्य निषेधः १४०४.

## आदिपुराणम्

**धर्मदेशाः –**

धर्मदेशसामान्यलक्षणम्, अलङ्घनीया नद्यः, वर्ज्या देशाः ७७६.

**युगधर्माः –**

विस्तरेण कलियुगीयलोकवृत्तकथनम्, सत्यमेव कलावुपकारकम्, नियोगो दत्तादानं च कलिवर्ज्ये ९२७.

**वर्णाः, तद्वृत्तयश्च –**

ब्राह्मणप्रशंसा १४०४.

## मुद्गलपुराणम्

**धर्मदेशाः –**

अजनाभापरपर्यायस्य भारतवर्षस्य कर्मभूमित्वेन प्रशंसा, भारते चातुर्वर्ण्यं युगव्यवस्था युगधर्माश्च ७७८.

**युगधर्माः –**

शिवोपासकाः कलौ दुराचारा नरकगामिनश्च भविष्यन्तीति शिवद्वेषाद्दक्षस्योक्तिः; दक्षयज्ञभागिनो ब्राह्मणादयः कलौ पाखण्डा नरकगामिनश्च भवन्तु दक्षयज्ञभागी विष्णुश्च पाखण्डसाहाय्यकृत् भवत्विति दधीचेः शापः; कलौ श्रीगणेशचरितं सर्वपापहरम्; ऋषभेण संन्यासिनाऽनुष्ठितो धर्मो गृहस्थेनार्हन्नामकेन राज्ञा कलौ गृहस्थैरनुष्ठापितो नरकप्रदो जैनमार्ग इत्युच्यते, स भरतेन प्रतिरुद्धः ९२९. युगभेदेन धर्मभेदः उपास्यभेदश्च, त्रेतादिषु धर्मस्य पादशो ह्रासः अन्ते च सर्वस्य नाशः ९३०. सर्वेषु युगेषु गणेशः पूज्यः, युगभेदेन गणेशस्य नामरूपभेदाः; कृतत्रेताद्वापरेषु लोकवृत्तानि, संध्यांशेषु पूर्वयुगधर्मह्रासारम्भः ९३१. युगेषु सत्त्वादिगुणप्राधान्यम्, विस्तरेण कलियुगीयलोकवृत्तानि, दधीचिगौतमशप्तानामधार्मिकाणां बुद्धरूपविष्णोः साहाय्यम्, विष्णोस्तीर्थादीनां च कलियुगे वासमर्यादा, लोकहिताय कलौ गणेशावतारः ९३२. कृतादिषु क्रमेण ध्यान – तपः– स्वधर्मनामस्मरणानां सर्वफललम्भकत्वम्, कलौ संन्यासाभावः; कृते पूर्णाया गणेशभक्तेस्त्रेतादौ पादशो हानिः, कलियुगान्ते निःशेषहानिः ९३४. कृतादिषु क्रमेण कर्म इहैव सद्यः, इहैव कालेन, इह वा परलोके वा, परलोके एव फलदम्, युगानुरूपं कर्मफलयोस्तारतम्यम्; कलौ बुद्धरूपावतीर्णेन विष्णुनाऽधर्मप्रवर्तनम्, अवतारान्ते बुद्ध-प्रार्थितेन श्रीधूम्रवर्णगणेशेन पुनः धर्मस्थापनम्; कृतत्रेतयोर्व्यभिचारस्यादोषत्वं द्वापरे तस्य दोषत्वम्, कृते वर्णाश्रमैक्यं त्रेतायां वर्णाश्रमभेद इति युगस्वभावभेदस्य युगानां कालमानरूपत्वं ध्यानयज्ञादिरूपत्वं चेति युगरूपभेदाश्रयणेनोपपादनम् ९३५. कृतादियुगेभ्यस्तत्कृततपस्तुष्टेन श्रीगणेशेन तत्तद्युगेच्छया सत्त्वादिगुणप्राधान्यं भुक्तिमुक्त्यादिप्राधान्यं स्वस्मिन् स्वाधीना युगान्तरांशाश्च प्रदत्ताः, प्रतियुगं युगान्तरांशपरिमाणम् ९३७. तत्तद्युगप्रभावानुरूपं तत्तद्युगे फलसिद्धेरायुरादीनां च तारतम्यम्, मोक्षतत्साधनयोगयोस्तु सर्वत्र साम्यम्; अनुक्रमेण कृतादिषु सत्कर्मफलाधिक्यं व्युत्क्रमेण कल्यादिषु पापकर्मफलाधिक्यम् ९३९. कलौ हविष्यभोजनादिनियमयुक्तायुतगायत्रीजपपूर्वकं कृच्छ्रपूर्वकं च कर्मैव फलजनकम् ९४०. घोरं कलिं देवमुन्यवतारैर्जितं पुनर्वृद्धं कल्किना जितं पुनर्वृद्धमन्ते श्रीगणेशो जयेत् कृतयुगं च स्थापयेत्, तत्तदवतारकाललक्षणानि, मुद्गलपुराणनाशे जना दुष्टा भवेयुः ९४१.

**वर्णाः, तद्वृत्तयश्च –**

ब्राह्मणप्रशंसा, स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः; ब्राह्मणादयश्चत्वारः पञ्च वेति द्विधा वर्णशब्दार्थः १४०४. वर्णानां वृत्तयः, उञ्छादिवृत्तिलक्षणानि, ब्राह्मणक्षत्रिययोः सेवावृत्तिनिषेधः; स्ववृत्तिनिष्ठानां वर्णानां प्राप्याणि पदानि; ब्राह्मणप्रशंसा प्राशस्त्यतारतम्यं च १४०५. ब्राह्मण्यादिप्रयोजकानि वर्णकर्माणि १४०६.

**संकरजाः, तद्धर्मवृत्तयश्च –**

वर्णसांकर्यात् नानाविधा जातयः १५१२.

## गणेशपुराणम्

**युगधर्माः –**

कलौ धर्मरक्षार्थं पुराणानि व्यासेन कृतानि, कृतत्रेतयोः स्त्रीणां स्वातन्त्र्यम् ९४१. कृतादिषु श्रीगणेशस्य नामरूपभेदाः; कलियुगीयचराचरवृत्तानि; कलियुगान्ते श्रीगणेशस्यावतारः तस्य नामरूपे च, तत्कर्तृको म्लेच्छवधो ब्राह्मणरक्षणं च, ततः कृतयुगारम्भः ९४२.

**वर्णाः, तद्वृत्तयश्च –**

स्रष्टुरवयवतो वर्णसृष्टिः, ब्राह्मणप्रशंसा प्राशस्त्यतारतम्यं च १४०७.

संख्याप्रयुक्तः फलभेदः; व्रीहियववापनयोर्धार्मिको विधिः; बीजवापने मुहूर्तः; व्रीहियवलवनारम्भे कर्तव्यस्य सीतायज्ञस्य प्रयोगः १४१२. क्षत्रियवैश्यशूद्राणां कृष्यादयो वृत्तयः, कृषिदोषशमनविधिः १४१३. आपदि ब्राह्मणस्य क्षत्रियवैश्यवृत्ती; याजनाध्यापनप्रतिग्रहनिमित्तकदोषशमनानि; दशजीवनहेतवः; ब्राह्मणवृत्तिप्रकल्पनं राजकर्तव्यम् १४१४.

## अनिर्दिष्टकर्तृकवचनानि

**धर्मदेशाः –**

सामान्यतो धर्मदेशलक्षणम्, ऐन्द्रादिनवखण्डयुते भारतवर्षे कुमारिकाख्यखण्डे एव वर्णव्यवस्था, खण्डान्तरेष्वन्त्यजनिवासः, वर्ज्यदेशाः ७७८.

**युगधर्माः –**

कलिवर्ज्यानि ९६१. उत्तरोत्तरयुगे पादशो धर्मक्षयः, कलौ पराशरमृतेर्बलीयस्त्वं परदेशे वृथाचिरवासनिषेधः वानप्रस्थ्याधिकारस्य संन्यासाधिकारसमकालत्वं च; विष्णुकीर्तनगङ्गोपासनयोः कलौ प्राधान्यम् ९६३. कलौ आद्यन्तावेव वर्णौ शूद्राणां ब्राह्मणाचारश्च, विन्ध्यदक्षिणोत्तरभागयोः क्रमेण मूलागमसत्त्वासत्त्वयोः समयः; युगभेदेन ध्येयविष्णुरूपभेदः; कलौ विष्णुपूजादौ तुलसीविनियोगस्य प्रशंसा; कलौ श्रीमद्‌भगवद्‌गीतायाः प्राशस्त्यम् ९६४.

**वर्णाः, तद्वृत्तयश्च –**

ब्राह्मणेनासवर्णायां जनितस्यापि ब्राह्मण्यम्, अवयवतो वर्णोत्पत्तिः, संस्कारविशेषप्रयुक्तं ब्राह्मणस्य प्रभुत्वम्; ब्राह्मणप्रशंसा, ब्राह्मणवृत्तयः, देवार्चनाद्यर्थं सर्वतः प्रतिग्रहः, धर्म्यः प्रतिग्रहोऽप्रतिग्रहसमः, धार्मिकात् प्रतिग्रहः कार्यः; जपादि कुर्वतः प्रतिग्रहदोषाभावः, ब्राह्मणप्रशंसा, प्रतिग्रहे धर्मविधिः, अप्रतिग्राह्याणि १४१४. प्रशस्तेभ्यो द्विजेभ्यः प्रतिग्रहः, शूद्रादपक्वप्रतिग्रहः, गुर्वाद्यर्थं शूद्रादन्नग्रहणम्; प्रतिग्राह्यं परीक्ष्यम्; प्रतिग्रहप्रशंसा; वृत्तिसंकरनिषेधः; असत्प्रतिग्रहस्य पञ्चविधत्वम्; अप्रतिग्राह्याणि १४१५. जातकर्मणि प्रतिग्रहानुमतिः; वर्णानां वृत्तयः; अतिरिक्तधनार्जननिषेधः, आशौचितोऽपि ग्राह्याणि; मृतसंबन्धिधनग्रहणनिषेधः १४१६. भिक्षाप्रमाणम्, द्विजेन द्विजेभ्यो धनं ग्राह्यम्, प्रतिग्रहनिवृत्तेनापि शूद्रतो ग्राह्याणि, एकैव गौः प्रतिग्राह्या; धर्मार्थद्रव्यसंचयस्य जितात्मनः असंचयस्य च प्रशंसा; राजदातृकप्रतिग्रहनिन्दा; स्तेयनिषेधः; स्तेयापवादः; स्थलकालविशेषे सर्वतः प्रतिग्रहः १४१७. जीवनपर्याप्तमेव प्रतिग्राह्यम्; तीरे प्रतिग्रहस्य निषेधः; गङ्गादिविक्रयनिषेधः; अमन्त्रकर्तृकसमन्त्रकप्रतिग्रहनिषेधः; वर्णभेदेन ग्राह्यभेदः शूद्रदातृकप्रतिग्रहनिषेधश्च; तीर्थे प्रतिग्रहस्य निषेधः; ब्राह्मणोत्पत्तिः, ब्राह्मणप्रशंसा; अत्यापद्यसत्प्रतिग्रहः; पापशमनार्थमर्जितद्रव्यदानम्; वार्धुषिकलक्षणम्, स्तेयापवादः; दशविधविप्रलक्षणानि १४१८. द्विजत्वविप्रत्वब्राह्मणत्वनिमित्तानि; असत्प्रतिग्रहप्रायश्चित्तम्; धर्मविक्रयस्वरूपम्, दानपुण्यविक्रेता भ्रूणहसमः, शपथपणीकृतदानधर्मा सोमविक्रयिसमः, मण्यादीनां प्रतिरूपकर्ता भ्रूणहसमः १४१९. एका वृद्धिर्न देया, कुसीदव्यवहारेषु मुहूर्ताः; क्रयविक्रयव्यवहारेषु मुहूर्ताः, पशुपालनसंबन्धिविधानानि १४२०. कृषिप्रशंसा; क्षेत्रप्रवेशादिकृषिकर्मसु मुहूर्ताः १४२१. कृषिकर्मादौ विनायकपूजादि १४२२. बीजावापादिमुहूर्तः, धार्मिककृत्यम्, प्रशस्ता हालिकवृषाः, शुभाशुभनिमित्तानि १४२३. धान्यलवनमुहूर्तः १४२४. मेथीप्रकृतिवृक्षाः, राजादिदेया धान्यभागाः; धान्यसंग्रहशोषणकोष्ठनिक्षेपकोष्ठनिष्कासनमुहूर्ताः १४२५. धान्यव्ययमुहूर्तः; सेवारम्भस्य भृत्यादिसंग्रहस्य च मुहूर्तः १४२६.

**संकरजाः, तद्धर्मवृत्तयश्च –**

वर्णानुलोमप्रतिलोमसंकरजाः; आरूढपतितजारात् ब्राह्मण्यां जातो दोलः तद्वृत्तिश्च; क्षत्रियजारात् क्षत्रियायां जातो जलः तद्धर्मो वृत्तिश्च; जलक्षत्रियाजातो मल्लः तद्धर्मो वृत्तिश्च १५१८. सल्लशिलीन्ध्रनटकाह्राटिक-(बहुरूपि) – नापितानामुत्पत्तिः तेषां धर्मो वृत्तयश्च; रथकारस्य धर्मो वृत्तिश्च; आवृतकासारमौष्टिकानामुत्पत्तिर्धर्मो वृत्तयश्च; छत्रपधिग्वणविघातकिन्नाटोलूकवत्सराणामुत्पत्तिर्धर्मो वृत्तयश्च १५१९. मालाकारवेनसैरन्ध्रजाङ्घिकक्षेमककुशीलवभस्माङ्कुरमैत्रेयाणामुत्पत्तिर्धर्मो वृत्तयश्च १५२०. सूदभ्रुकुंससिकिलीगरमङ्गुशाल्मलान्धसिकछागलिकशय्यापालकानामुत्पत्तिर्धर्मो वृत्तयश्च; मण्डलकक्रोधिक(कुक्कुटक)मण्डूषमौष्कलिककुरुविन्दशाम्बरिकसौवीरनीलीकर्तृसांखिल्यबन्धुलपांशुलकानामुत्पत्तिर्धर्मो वृत्तयश्च १५२१. औरभ्रमहाङ्गुरोमिकमेद-

कैवर्तकपुक्कसकारीवर-पौष्कलमङ्गुष्ठानामुत्पत्तिर्धर्मो वृत्तयश्च १५२२. चित्रकारकर्किंशुकाहितुण्डिकयाधीक-तुरुष्काणामुत्पत्तिर्धर्मो वृत्तयश्च, ब्राह्मणादिचण्डालान्तैः सांकर्येण जनिता अनन्ता जातयः; सवर्णाम्बष्ठनिषादाना-मध्ययनविषयाः; अनुलोमानामुपनयनमात्रम्, न वेदाध्ययनादि; कुण्डगोलकयोः संस्कारार्हता; राजगुरुमल्ल-वैतालिककिन्नाटवणिग्जनान्तःपुरपालकमालाकारसूपकार-मैत्रेयकहरिमेखलसैरन्ध्रजाङ्घिकानामुत्पत्तिः वृत्तयश्च १५२३. भस्माङ्कुरक्षेमककुशीलवनिर्मण्डलककुन्तल-(नापित)कायस्थशालक्यशाल्मलशिलीन्ध्रकोल्हाट्या-न्धसिकगोचारिछागलकशय्यापालानामुत्पत्तिर्धर्मो वृत्तयश्च १५२४. मण्डलकस्यन्दोलिक(सौचिक)कुक्कुटोल्मुक-माञ्जूष(रजक)मौष्कलि(तैलिक)सूत्रधारकुरुविन्द-साम्बरसौवीर(कौसट)नीलीकर्तृबर्बरबन्धुल(मालक)-पांशुलमेषपालक(औरभ्र)उष्ट्रपालकरौमिकधिग्वणमेदाना-मुत्पत्तिर्धर्मो वृत्तयश्च १५२६. कैवर्तकर्मचण्डालपुक्कस-चर्मकारशौण्डिकमङ्गुष्ठचित्रकरकिंशुकपाण्डुसोपाका-(बुरुडा)नामुत्पत्तिर्धर्मो वृत्तयश्च १५२८. गारुडिदुर्लभ-सौनिककीनाशश्वपाकडोम्बानां म्लेच्छजातीनां चोत्पत्तिर्धर्मो वृत्तयश्च; स्तुतिपाठकानां सूतमागधबन्दिनां स्तुतिविषयभेदाः; वर्णानुलोमजप्रतिलोमजादयो मूलसंकीर्णजातयः षट्त्रिंशच्छ-तसंख्याकाः तत्संकरजाश्चासंख्याताः; मागधक्षत्तृ (निषाद)-मार्दककुशीलवभ्रकुंसानामुत्पत्तिर्धर्मो वृत्तयश्च १५२९. शाकल्यान्धसिकवत्सकायोगवकक्रोधक(कुक्कुटक)लोह-काराणामुत्पत्तिर्धर्मो वृत्तयश्च १५३०. कुरुविन्दशाबरिक-सोखिरनीलीकर्तृसाङ्खिल्यबन्धुलपांसुलवासिकतुरुष्काणा-मुत्पत्तिर्वृत्तयश्च; आभीरस्य वृत्तिः; श्वपाकडोम्बप्लव(हाडी) श्वपच(माङ्ग)सौनिकानामुत्पत्तिर्वृत्तयश्च १५३१. मूर्धा-वसिक्तः उग्रः करणः सूतः वैदेहकः इत्येतेषामुत्पत्तिर्वृत्तयश्च १५३२. भृज्जकण्टः आवर्तः कटधानः पुष्पशेखरः इत्येतेषा-मुत्पत्तिर्वृत्तयश्च १५३३. भोजकः देवलकः आभीरः उदवाहः पौष्टिकः कारागृहगोप्ता कांस्यकारः कुम्भकारः शस्त्रजीवी एतेषामुत्पत्तिर्धर्मो वृत्तयश्च; सैरन्ध्रीकर्म; वर्णसंकरो मातृ-तुल्यः, अन्त्यावसायिसमाचारः १५३४.

# धर्मकोशः

## वर्णाश्रमधर्मकाण्डम्

## धर्मदेशाः

### बौधायनश्रौतसूत्रम्

गमनानर्हदेशाः

**[1]एष ह वै पद्भ्यां पापं करोति य आरट्टान्वा गान्धारान्वा सौवीरान्वा करस्करान्वा कलिङ्गान्वा गच्छति।।**

### वृद्धगौतमः

आर्यावर्तादिदेशपरिचयः, द्विजानां धर्मदेशे वासः,
शूद्रस्य वृत्त्यनुरोधेन कुत्रापि वासः,
अङ्गवङ्गादिदेशगमना-
गमनव्यवस्था

**[2]आ समुद्राच्च वै पूर्वादा समुद्राच्च पश्चिमात्।**
**हिमवद्विन्ध्ययोर्मध्यमार्यावर्तं प्रचक्षते।।**
**सरस्वतीदृषद्वत्योस्तथा नद्योर्यदन्तरम्।**
**तद्देवमातृकं देशं ब्रह्मावर्तं प्रचक्षते।।**
**तस्मिन्देशे सदाचारः पारंपर्यक्रमागतः।**
**वर्णानां सान्तरालानां स सदाचार उच्यते।।**
**कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसैनिकाः।**
**एते महर्षिदेशास्तु ब्रह्मावर्तादनन्तरम्।।**
**हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि।**
**प्रत्यगेव प्रयागश्च (? गाच्च) मध्यदेशः -**
**प्रकीर्तितः।।**

(१) **बौश्रौ.** १८।१२-१३; **बौवि.** १।२।१५ वा गान्धारा... गच्छति (कारस्करान् पुण्ड्रान्सौवीरान्वा गच्छति) एकाहकाण्डम्.
(२) **वृगौसं.** ८२८.

**कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।**
**संज्ञया ज्ञायते देशो म्लेच्छदेशस्तु तत्परम्।**
**एतान् विज्ञाय देशांस्तु संश्रयेरन् द्विजातयः।।**
**शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्शितः।।**
***[1]अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रमगधांस्तथा।**
**तीर्थयात्रां विना गत्वा पुनःसंस्कारमर्हति।।**

### बौधायनः

आर्यावर्तादिदेशपरिचयः, धर्माधर्मदेशाः,
तीर्थयात्रां विना गमना-
नर्हदेशाः

**[2]प्रागदर्शनात्प्रत्यक्कालकवनाद्दक्षिणेन हिमवन्तमुदक्पारियात्रमे( ? त्रादे)तदार्यावर्तम्। तस्मिन् य आचारः स प्रमाणम्।।**

अथ शिष्टदेशानाह - प्रागिति। तत्रापि शिष्टस्मृति-विरोधेऽनपेक्ष्यमेव। बौवि.

**गङ्गायमुनयोरन्तरमित्येके।।**

आर्यावर्तत्वे विकल्पः। बौवि.

* श्लोकरूपवृद्धगौतमस्मृतेरेव श्लोकगौतमशब्देन निर्देश-संभवादत्र संगृहीतोऽयं श्लोकः।

(१) **संम.** २८ श्लोकगौतमः; **पप्र.** ५८ ङ्गांश्च (ङ्गेषु) धांस्तथा (धेषु च) गत्वा (गच्छन्) (=); **संप्र.** ५४६ ङ्गांश्च (ङ्गेषु) धांस्तथा (धेषु च) तृतीयचरणे (विना यात्रां तु यो गच्छेत्) आदिपुराणम्; **संग.** ७१६ पप्रवत्, आदित्यपुराणे; **कृभ.** ९६६ ष्ट्रम (ष्ट्रान्म) गत्वा (गच्छन्) श्लोकगौतमः.
(२) **बौध.** १।२।१०-१३.

**अथाप्यत्र भाल्लविनो गाथामुदाहरन्ति।।**

आर्यावर्तान्तरप्रदर्शनार्थम् । भाल्लविनः छन्दोगविशेषाः। गाथा श्लोकः। बौवि.

**पश्चात्सिन्धुर्विसरणी सूर्यस्योदयनं पुरः।**
**यावत्कृष्णो विधावति तावद्धि ब्रह्मवर्चसमिति।।**

तमाह – पश्चादिति। कृष्णः कृष्णमृगः। ब्रह्मवर्चसम् अध्ययनज्ञानानुष्ठानाभिजनसंपत्। म्लेच्छदेशस्त्वतः परम्। बौवि.

**[१]अवन्तयोऽङ्गमगधाः सुराष्ट्रा दक्षिणापथाः।**
**उपावृत्सिन्धुसौवीरा एते संकीर्णयोनयः।।**

(१) आनर्तकः द्वारका यस्मिन् देशे। अङ्गः चम्पाप्रदेशः। * ब्रक. ४९

(२) आनर्तकः यस्मिन् देशे यास्काः। चव्र. ३०

(३) तदाह – अवन्तय इति। स्त्रीषु व्यवस्था नास्तीति यावत्। अवन्त्यादिषु कल्याणाचारो नास्ति। बौवि.

**[२]आरट्टान् कारस्करान् पुण्ड्रान् सौवीरान् वङ्गान् कलिङ्गान् प्रानूनानिति च गत्वा पुनःस्तोमेन यजेत सर्वपृष्ठया वा।।**

किंच, केचिद्देशाः प्रवेशार्हा अपि न भवन्ति, तत्प्रवेशे प्रायश्चित्तविधानात्। तत्र दूरोत्सारितमाचारग्रहणमित्याह - आरट्टानिति। पुनःस्तोमो नाम एकाहः। इष्टप्रथमसोमस्यैव प्रायश्चित्तमेकाहकाण्डोक्तं द्रष्टव्यम् – 'यदि पद्भ्यामेव विशेषं कुर्वीतैष ह वै पद्भ्यां पापं करोत्यारट्टान् कारस्करान् पुण्ड्रान् सौवीरान् वा गच्छति' इति। सर्वपृष्ठेष्टिस्त्वाहिताग्निमात्रस्य। सा च 'य इन्द्रियकामो वीर्यकामः स्यात्' इत्यत्र विहिता। अनाहिताग्नेस्तु वक्ष्यति- 'प्रतिषिद्धदेशगमन' इति। बौवि.

**[१]अथाप्युदाहरन्ति –**

**पद्भ्यां स कुरुते पापं यः कलिङ्गान् प्रपद्यते।**
**ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः।।**

(१) पुनरप्याहिताग्नेरेव देशान्तरगमने प्रायश्चित्तमाह- अथेति। वैश्वानरं हविः वैश्वानरेष्टिः। एषा च कलिङ्गगमने सर्वपृष्ठया सह विकल्प्यते। अथवा आरट्टादिषु न गमनादेव प्रायश्चित्तम्, किं तर्हि संभाषणसहासनादिभिरपि। कलिङ्गे पुनर्गमनमात्रमिति विशेषः।

बौवि.

(२) अयं च निषेधस्तीर्थयात्रां विना। तदुक्तम् - 'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना गच्छन्पुनःसंस्कारमर्हति।।'। पप्र. ५८

**[२]सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः।**
**अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति।।**

(१) प्रत्यन्तः अन्तदेशः। तथा च श्रुतिः – 'तस्मान्न जघन्यान्नान्त्यान्' इति। † स्मृच. १।२३

(२) प्रत्यन्तः म्लेच्छदेशः, 'प्रत्यन्तो म्लेच्छदेशः स्यात्' इत्यभिधानात्। प्रपा. २३९

(३) प्रत्यन्तवासिनः चण्डालप्रदेशाः। १०

प्रत्यन्तः अन्त्यदेशः। ¤ मुक्ता. ११७

(४) प्रत्यन्तः अन्त्यदेशः। अन्त्यदेशः समुद्रप्रान्तः ग्रामाद्यपेक्षया चण्डालश्रेण्यादिर्वा विज्ञेयः।

आन. ४८२

(५) यात्रार्थं गमने तु न दोषः, 'अङ्गवङ्गकलिङ्गांश्च

---

* पप्र. ब्रकवत्।

(१) **बौध.** १।२।१४; **ब्रक.** ४९ अवन्तयोऽङ्ग (आनर्तकाङ्ग); **स्मृच.** १।२२ अवन्तयोऽ (आनर्ता अ) सुरा (सौरा) पथाः (पथः) उपावृत्सि (अपास्याः सि); **चव्र.** २९ अवन्तयोऽङ्ग (आनर्तकाङ्ग) पथाः (पथः) उपावृत्सि (तथा च सि); **मुक्ता.** १० अवन्तयोऽङ्गमगधाः सु (आवन्तयोऽङ्गा मगधाः सौ); **पप्र.** ५८ पथाः (पथः) शेषं ब्रकवत्.

(२) **बौध.** १।२।१५; **ब्रक.** ४९ प्रानू (प्रासू); **मुक्ता.** १० वङ्गान् क (वङ्गक) प्रानूनानिति (प्राग्यूनानि) यजेत (यजेत्) पृष्ठया (पृष्ट्या); **पप्र.** ५८ आरट्टान् (अर्वाक्) स्करान् + (पाण्ड्यान्) वङ्गान् कलिङ्गान् प्रानू(वङ्गकलिङ्गप्रासू).

† विपा. स्मृचवत्।

¤ संग. मुक्ता. ११७ वत्।

(१) **बौध.** १।२।१६; **ब्रक.** ४९; **चव्र.** ३० (अथाप्युदाहरन्ति०); **मुक्ता.** १०; **पप्र.** ५८.

(२) **स्मृच.** १।२३; **प्रपा.** २३९; **निप्र.** २।४८० प्रत्यन्त (पर्यन्त) चन्द्रिकायाम्; **गभा.** २३४; **चमव्या.** १८; **मुक्ता.** १० :११७ व्यासः; **सिन्धु.** ९६६ कलिङ्गांश्च (कलिङ्गान्ध्रान्); **संम.** २८; **विपा.** २।४८९; **संप्र.** ५४६; **संकौ.** १५३ सिन्धुवत्, प्रायश्चित्तोद्योते; **आन.** ४८२ व्यासः; **संग.** ७१५; **बाल.** १।१४ पृ. ४८, ५५; **संर.** २७९ स्मृत्यन्तरे.

सौराष्ट्रमगधांस्तथा। तीर्थयात्रां विना गत्वा पुनःसंस्कार-मर्हति।।' इति श्लोकगौतमोक्तेः। * संम. २८

**[1]हिमवत्कौशिकं विन्ध्यं पारं पद्मस्य पश्चिमम्।**
**तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति।।**

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

निवासानर्हदेशाः

**[2]क्षुद्रान् क्षुद्राचरितांश्च देशान्न सेवेत।।**

(१) क्षुद्रान् जलादिना संकुचितप्रचारदेशान्। क्षुद्राचरितान् निषादादिभिरध्युषितान्। † गृक. ३३८

(२) क्षुद्रान् अल्पकान् पुरुषान्न सेवेत। क्षुद्रैः निषादादिभिरधिष्ठितांश्च देशान् न सेवेत। उ.

## वसिष्ठः

आर्यावर्तपरिचयः, स एव

धर्मदेशः

**[3]आर्यावर्तः प्रागादर्शात्प्रत्यक्कालकवनादुदक्पारियात्राद्दक्षिणेन हिमवतः।।**

**$[4]उत्तरेण च विन्ध्यस्य।।**

(१) तत्र वसति धर्मोऽवश्यमिष्टापूर्तादिरूपः। तत्प्रतिपादकं च मुख्यतो धर्मशास्त्रम्। कृर. ४४

(२) अस्मिंस्तु अदर्शनादयः शब्दाः 'पश्चात्सिन्धुः' इत्याद्युदाहृतश्रुत्युक्ततत्तद्देशपराः। पप्र. ५७

**¤[1]तस्मिन्देशे ये धर्मा ये चाऽऽचारास्ते सर्वत्र प्रत्येतव्याः।।**

**न त्वन्ये प्रतिलोमकल्पधर्माः।।**

**[2]एतदार्यावर्तमित्याचक्षते।।**

पुनरार्यावर्तानुवादोऽन्वर्थसंज्ञाप्रदर्शनार्थः। आर्याः त्रयो वर्णाः आवर्तन्ते यस्मिन्निति। ततश्चाऽऽर्यैरत्र वस्तव्यम्। ¶ ब्रक. ४८

**[3]गङ्गायमुनयोरन्तरेऽप्येके।।**

**[4]यावद्वा कृष्णमृगो विचरति तावद्ब्रह्मवर्चसमित्यन्ये।।**

ब्रह्मवर्चसं वृत्तस्वाध्यायसंपत्तिः। ¶ ब्रक. ४८

**[5]अथापि भाल्लविनो निदाने गाथामुदाहरन्ति।।**

**[6]पश्चात्सिन्धुर्विधारणी सूर्यस्योदयनं पुरः।**
**यावत्कृष्णोऽभिधावति तावद्वै ब्रह्मवर्चसमिति।।**

भाल्लविनः छन्दोगशाखिनः। निदानं छन्दोगसूत्रम्। सिन्धुः नदीविशेषः। वितरणी जनकपर्वतसमीपे मालवदेशे

---

* संकौ., संरं., कृभ. संमवत्।

† गृर., निप्र. गृकवत्।

$ सूत्रभेदश्चिन्त्यः।

(१) **स्मृच.** १।२३ आदिपुराणे; **प्रपा.** २३९ शिकं (शिकां); **विपा.** २।४८९ कं विन्ध्यं (कां विन्ध्यां); **संप्र.** ५४६ कं विन्ध्यं (कीं विन्ध्यां) गत्वा (गच्छेत्); **संग.** ७१५ त्कौशिकं (त्काशिकां) गत्वा (गच्छेत्); **बाल.** १।१४ पृ. ५५ उत्त.; **संर.** २७९ उत्त.

(२) **आध.** १।३२।१८; **हिध.** २६।८।६०; **गृक.** ३३८; **गृर.** ५३१ तांश्च (तान्) सेवेत (वसेत्); **निप्र.** २।४७२ न सेवेत (विवर्जयेत्).

(३) **वाध.** १।८; **अप.** १।७ पृ. २० वर्तः (वर्ते) र्शात् + (पर्वतात्) कवना (काद्वना) वतः (वन्तम्); **ब्रक.** ४७ आर्यावर्तः प्रागादर्शात् (धर्मः आर्यावर्ते प्राग्दर्शनात्) क्कालक (क्कालका); **चप्र.** २८ आर्यावर्तः (धर्मः आर्यावर्ते) त्यक्कालकवना (त्यागालोकाचला) पारियात्राद्द (कुमारिकाया द); **कृर.** ४४ (धर्म आर्यावर्ते प्राग्दर्शनात् प्राक्कालवचनादुदक्पारिपात्राद्दक्षिणेन हिमवतः); **पप्र.** ५७ प्रागादर्शात् (प्रागदर्शनात्) शेषं ब्रकवत्.

(४) **वाध.** १।९; **अप.** १।७ पृ. २० (उत्तरेण विन्ध्यम्); **ब्रक.** ४७ (उत्तरेण विन्ध्याद्रेः); **चप्र.** २८ ब्रकवत्; **कृर.** ४४ (उत्तरेण विन्ध्यात्); **पप्र.** ५७ (च०).

¤ एतदादिसूत्रद्वयस्य व्याख्यानानि धर्मप्रमाणविचारप्रकरणे द्रष्टव्यानि।

¶ पप्र. ब्रकवत्।

(१) **वाध.** १।१०-११, शेषः स्थलादिनिर्देशः धर्मप्रमाणविचारप्रकरणे द्रष्टव्यः.

(२) **वाध.** (आनन्दाश्रम) १।१०; **ब्रक.** ४७ एतदा (एतमा); **चप्र.** २८ एतदा (एनमा); **पप्र.** ५७ ब्रकवत्.

(३) **वाध.** १।१२; **ब्रक.** ४७ रेऽप्येके (राऽप्येके); **चप्र.** २८ रेऽप्येके (रालमप्येके); **पप्र.** ५७ ब्रकवत्.

(४) **वाध.** १।१३; **ब्रक.** ४७; **स्मृच.** १।१९ (यावत्कृष्णमृगो विचरति) एतावदेव; **चप्र.** २८ (इत्यन्ये०); **मपा.** १२ (तावद्ब्रह्मवर्चसमित्यन्ये०); **पप्र.** ५७ चप्रवत्.

(५) **वाध.** १।१४; **ब्रक.** ४७; **पप्र.** ५७.

(६) **वाध.** १।१५; **ब्रक.** ४८ धारणी (तरणी) (इति०); **पप्र.** ५७ (पश्चात्सिन्धुर्वितरणी सूर्यस्योदयनी पुनः। यावद्वा कृष्णमृगो विचरति तावद्ब्रह्मवर्चसमिति।।).

परशुरामेण धनुष्कोट्या कुण्डं भित्त्वा निर्मितेति तत्रत्यजनप्रसिद्धा। ¶ ब्रक. ४८

## विष्णुः

म्लेच्छदेशलक्षणम्, तत्र गमननिषेधः,
तद्भिन्न आर्यावर्तः

[१]**न गच्छेन्म्लेच्छविषयम्।।**

प्रासङ्गिकमाह - नेति। तीर्थयात्रां विना म्लेच्छदेशं न गच्छेत्। यथाऽऽह देवलः - 'सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः। अङ्गवङ्गकलिङ्गांश्च मगधान्मालवांस्तथा। तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हति।।' इति। वै.

[२]**चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते।**
**स म्लेच्छदेशो विज्ञेय आर्यावर्तस्ततः परः।।**

(१) इदं च अपरिगणितदेशवर्जितदेशव्यतिरिक्ताविहिताप्रतिषिद्धादेशविषयम्(?), न म्लेच्छदेशविषयम्, विरोधात्; नापि ब्रह्मावर्तादिविषयम्, वैयर्थ्यात्।

निप्र. २।४७४

(२) म्लेच्छदेशं लक्षयति-चातुर्वर्ण्यमिति। चतुर्वर्णसंबन्धिधर्मव्यवस्था यत्र देशे नास्ति स म्लेच्छदेशः। चातुर्वर्ण्यव्यवस्थानं कुशादीनामुपलक्षणम्। तथा च आदित्यपुराणे – 'कृष्णसारैर्यवैर्दर्भैश्चातुर्वर्ण्याश्रमैस्तथा। समृद्धो धर्मदेशः स्यादाश्रयेरन् विपश्चितः।।' इति। एतैर्विहीनो म्लेच्छदेश इत्यभिप्रायः। अतोऽन्यस्तद्वानार्यावर्त इति प्रासङ्गिकं लक्षणं वक्ष्यमाणविध्यर्थम्। मनुस्तु अन्यथाऽऽह - 'आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते।।' (मस्मृ. २।२२) इति। इदं च लक्षणकरणं तद्वासिनो देशविशेषगमननिषेधाय। तथा च आदित्यपुराणे – 'आर्यावर्तसमुत्पन्नो द्विजो वा यदि वाऽद्विजः। नर्मदासिन्धुपारं च करतोयां न लङ्घयेत्।। आर्यावर्तमतिक्रम्य विना तीर्थक्रियां द्विजः। आज्ञां चैव तथा पित्रोरैन्दवेन विशुध्यति।।' इति। वै.

## शङ्खः

म्लेच्छदेशगमननिषेधः

[१]**म्लेच्छदेशे न च व्रजेत्।।**

## शङ्खलिखितौ

धर्मार्ह आर्यदेशः,
तल्लक्षणम्

[२]**देश आर्यो गुणवान् प्रागस्तादर्वागुदयाद्यावदुच्चा गिरयो यावत्पुण्याः सरितः प्राक् सिद्धत्वाद्देशः सनातनः पुण्यः। कृष्णमृगो वा यावद्विचरति तावदाचारः स्यात्। प्राक् सिन्धुसौवीराद्दक्षिणेन हिमवतः पश्चात्काम्पिल्यादुदक्पारियात्रादनवद्यं ब्रह्मवर्चसं सर्वेषामतोऽन्यदेशजातिकुलधर्माणामन्वयाः।।**

(१) अयमपि वाशब्दोऽवधारणार्थ एव। विश्व. १।२

(२) अनवद्यम् अविकलम्। अन्वयाः संतानाः, प्रत्येतव्या इति शेषः। ब्रक. ४८

(३) यावद्विचरति, स्वत इत्यर्थः। मपा. १२

(४) धर्माणाम् एतद्देशधर्माणाम्। # पप्र. ५८

## महाभारतम्

बाह्लीकारट्टादयो धर्मबाह्या
देशाः, धर्मार्हो देशः

[३]**तत्र वृद्धः पुरावृत्ताः कथाः काश्चिद्द्विजोत्तमः।**
**बाह्लीकदेशं मद्रांश्च कुत्सयन्वाक्यमब्रवीत्।।**

---

¶ पप्र. ब्रकवत्।

(१) **विस्मृ.** ८४।२; **ब्रक.** ४९; **स्मृच.** १।१९ (न गच्छेत्तं विषयम्); **मुक्ता.** ९ (=).

(२) **विस्मृ.** ८४।४; **अप.** १।२ पृ. ५ उत्तरार्धे (तं म्लेच्छदेशं जानीयादार्यावर्तमतः परम्।।); **ब्रक.** ४९ विद्यते (दृश्यते) शेषम् अपवत्; **स्मृच.** १।१८; **चव्र.** २९ उत्तरार्धे (तं म्लेच्छदेशं जानीयादार्यावर्तस्ततः परम्।।); **निप्र.** २।४७४ विद्यते (दृश्यते); **मुक्ता.** ९ अपवत्, व्यासः; **संम.** ३ अपवत्; **पप्र.** ५८ यस्मिन् (यत्र) शेषं अपवत्; **कृभ.** १३४९ यस्मिन् (यत्र) आर्यावर्त (आर्यदेश).

# शेषं ब्रकवत्।

(१) **शंस्मृ.** १४।३०; **अप.** १।२२८ पृ. ४७२ देशे (देशं).

(२) **विश्व.** १।२ (देश आर्यो गुणवान् प्रागस्तादर्वागुदयात्... पुण्यः कृष्णो वा यावद्विचरति तावदाचारः स्यात्) एतावदेव, शङ्खः; **ब्रक.** ४८; **स्मृच.** १।१९ (कृष्णमृगो यावद्विचरति तावदार्यावर्तः स्यात्) एतावदेव, शङ्खः; **मपा.** १२ स्मृचवत्, शङ्खः; **पप्र.** ५७ ल्यादुद (ल्या उद).

(३) **भा.** ८।३०।९; **भामु.** ८।४४।५ बाह्लीक (वाहीक).

**[१]बहिष्कृता हिमवता गङ्गया च तिरस्कृताः।**
**सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये।।**
**[२]पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः।**
**तान्धर्मबाह्यानशुचीन्बाह्लीकान् परिवर्जयेत्।।**

पञ्चानां वक्ष्यमाणानां सिन्धुः षष्ठी यासां अन्तरम् अवकाशम् आश्रिताः। नीटी.

**[३]पञ्च नद्यो वहन्त्येता यत्र पीलुवनान्यपि।**
**शतद्रुश्च विपाशा च तृतीयेरावती तथा।**
**चन्द्रभागा वितस्ता च सिन्धुषष्ठा बहिर्गताः।।**

गिरेः हिमाद्रेः। नीटी.

**[४]आरट्टा नाम ते देशा नष्टधर्मान्न तान्व्रजेत्।।**
**[५]युगंधरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले।**
**तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति।।**

युगंधरे नगरे औष्ट्रादिकमपि क्षीरं पीयते। भक्ष्याभक्ष्यविवेकाभावात्तत्रावश्यमभक्ष्यभक्षणमापतत्येव। एवमच्युतस्थले नगरे उषितस्यागम्यागमनमवश्यं भावि, तादृशानामेव तत्र सत्त्वात्। भूतिलये हि चण्डालब्राह्मणसाधारण एको जलाशयः, तत्र च स्नातः कथं स्वर्गं गच्छेत्? न कथंचिदित्यर्थः। नीटी.

**[६]पञ्च नद्यो वहन्त्येता यत्र निःसृत्य पर्वतात्।**
**आरट्टा नाम बाह्लीका न तेष्वार्यो द्व्यहं वसेत्।।**

द्व्यहमित्येकरात्रवासे न दोष इत्यर्थः। नीटी.

**[७]बहिश्च नाम ह्लीकश्च विपाशायां पिशाचकौ।**
**तयोरपत्यं बाह्लीका नैषा सृष्टिः प्रजापतेः।।**

**[१]ते कथं विविधान्धर्मान् ज्ञास्यन्ते हीनयोनयः।।**
**[२]कारस्करान्महिषकान्कलिङ्गान्कीकटाटवीन्।**
**कर्कोटकान्वीरकांश्च दुर्धर्मांश्च विवर्जयेत्।।**

कारस्करादयः देशाः। नीटी.

**[३]इति तीर्थानुसर्तारं राक्षसी काचिदब्रवीत्।**
**एकरात्रा शमीगेहे महोलूखलमेखला।।**

एकरात्रशयी एकरात्रशायिनं ब्राह्मणमिति द्वितीयार्थे प्रथमा। नीटी.

**[४]आरट्टा नाम ते देशा बाह्लीका नाम ते जनाः।।**
**[५]ब्राह्मणापसदा यत्र तुल्यकालाः प्रजापतेः।**
**वेदा न तेषां वेद्यश्च यज्ञा यजनमेव च।**
**व्रात्यानां दासमीयानामन्नं देवा न भुञ्जते।।**
**प्रस्थला मद्रगान्धारा आरट्टा नामतः खशाः।।**
**[६]वसातिसिन्धुसौवीरा इति प्रायो विकुत्सिताः।।**
**[७]कुरवः सहपाञ्चालाः शाल्वा मत्स्याः सनैमिषाः।**
**कोसलाः काशयोऽङ्गाश्च कलिङ्गा मगधास्तथा।।**
**[८]चेदयश्च महाभागा धर्मं जानन्ति शाश्वतम्।**
**नानादेशेषु सन्तश्च प्रायो बाह्या लयादृते।।**

असन्तश्चात्सन्तश्च वर्तन्ते परंतु वाह्यनयादृते वाहीकनीतिं विना तत्र केवलमसन्त एव वर्तन्त इत्यर्थः। नीटी.

---

(१) **भा.** ८।३०।१०; **भामु.** ८।४४।६ तिरस्कृताः (बहिष्कृताः).

(२) **भा.** ८।३०।११; **भामु.** ८।४४।७ बाह्लीकान् परि (वाहीकानपि).

(३) **भा.** ८।३०।३५; **भामु.** ८।४४।३१-३२ नान्यपि (नान्युत) तृतीये (तृतीयै) र्गताः (र्गिरेः).

(४) **भा.** ८।३०।३६; **भामु.**८।४४।३३ धर्मान्न (धर्मा न).

(५) **भा.** ८।३०।४२; **भामु.** ८।४४।३९-४०.

(६) **भा.** ८।३०।४३; **भामु.** ८।४४।४० - ४१ बाह्लीका (वाहीका).

(७) **भा.** ८।३०।४४; **भामु.** ८।४४।४१ - ४२ बहि (वहि) ह्लीक (हीक) बाह्ली (वाही).

(१) **भामु.** ८।४४।४२.

(२) **भा.** ८।३०।४५; **भामु.** ८।४४।४३ न्महि (न्माहि) द्वितीयचरणे (कालिङ्गान् केरलांस्तथा).

(३) **भा.** ८।३०।४६; **भामु.** ८।४४।४४ त्रा शमीगे (त्रशयी गे).

(४) **भा.** ८।३०।४७; **भामु.** ८।४४।४५ द्वितीयचरणे (वाहीकं नाम तज्जलम्).

(५) **भामु.** ८।४४।४५-४७.

(६) **भा.** ८।३०।४७; **भामु.** ८।४४।४७ प्रायो वि (प्रायोऽति).

(७) **भा.** ८।३०।६०; **भामु.** ८।४५।१४ पाञ्चा (पञ्चा) उत्तरार्धे (कोसलाः काशपौण्ड्राश्च कालिङ्गा मागधास्तथा।।).

(८) **भा.** ८।३०।६१; **भामु.** ८।४५।१५ षु सन्त (ष्वसन्त) बाह्या लया (वा ह्यनया).

**[१]आ मत्स्येभ्यः कुरुपाञ्चालदेश्या**
**आ नैमिषाच्चेदयो ये विशिष्टाः।**
**धर्मं पुराणमुपजीवन्ति सन्तो**
**मद्रानृते पञ्चनदांश्च जिह्मान्।।**

**श्रीभगवानुवाच—**

**[२]यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा।**
**अहिंसाधर्मसंयुक्ताः प्रचरेयुः सुरोत्तमाः।**
**स वै देशः सेवितव्यो मा वोऽधर्मः पदा स्पृशेत्।।**

**शीलवृत्तिरुवाच —**

**[३]के देशाः के जनपदाः केऽऽश्रमाः के च पर्वताः।**
**प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम्।।**

**सिद्ध उवाच —**

**ते देशास्ते जनपदास्तेऽऽश्रमास्ते च पर्वताः।**
**येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा।।**

आश्रमा इत्याकारस्य पूर्वरूपमार्षम्। ते देशा इति प्रकृष्टाः पुण्यत इत्यनुषङ्गः। नीटी.

## मनुः

ब्रह्मावर्तलक्षणम्, ब्रह्मावर्ते य आचारः स सदाचारः, ब्रह्मर्षिदेशः, तत्रत्यो ब्राह्मणः सर्वेषां धर्मोपदेष्टा

**[४]सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।**
**तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते।।**

(१) उक्तानि धर्मे प्रमाणानि। विरोधे च विकल्पोऽभिहितः। अधिकारिणश्च सामान्येनोक्ताः। इदानीं येषु योग्यतया धर्मोऽनुष्ठेयतामापद्यते ते देशा वर्ण्यन्ते। सरस्वती नाम नदी। अपरा दृषद्वती। तयोर्नद्योर्यत् अन्तरं मध्यं तं देशं ब्रह्मावर्त इत्यनया संज्ञया प्रचक्षते व्यवहरन्ति शिष्टाः। देवग्रहणमवध्यवधिमतोः स्तुत्यर्थम्। देवैः स निर्मितोऽतः सर्वेभ्यो देशेभ्यः पावनतर इति। $ मेधा.

(२) उक्तं शिष्टाचारं व्यवस्थापयितुं शिष्ट( ? ष्टत्व)स्य निमित्तान्( ? त्तानि) निवासदेशविशेषानाह - सरस्वतीति। देवनद्योः देवैरपि सेव्ययोर्नद्योः। देवनिर्मितं देवैरुत्तमदेशतया विहितम्। ब्रह्म आवर्तते अनुवर्तते यत्र स ब्रह्मावर्तः। मवि.

(३) देवनिर्मितं देवैर्निर्मितम्। देवः देवता तदुद्देश्यकयज्ञादि, तदर्थं निर्मितम्, देवैरधिष्ठितं वा। ब्रह्मावर्तमित्यपूर्वा संज्ञा। § मच.

(४) ब्रह्म धर्मः आवृत्तम् आगतं महर्षीणामत्र प्रतिभातमिति ब्रह्मावर्तः। § नन्द.

**‡[१]तस्मिन्देशे य आचारः पारंपर्यक्रमागतः।**
**वर्णानां सान्तरालानां स सदाचार उच्यते।।**
**[२]कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः।**
**एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः।।**

(१) देशनामधेयान्येतानि। कुरुक्षेत्रं स्यमन्तपञ्चकं प्रसिद्धम्। कुरवस्तत्र क्षयं गताः। 'कुरु वा सुकृतं क्षिप्रमत्र त्राणं भविष्यति' इति व्युत्पत्तिः। मत्स्यादयः शब्दा बहुवचनान्ता एव देशवचनाः। ब्रह्मर्षिदेश इति समुदायसंज्ञा। देवनिर्मितो देशो ब्रह्मावर्तः। देवेभ्यः किंचिन्न्यूना ब्रह्मर्षय इत्यतोऽयं देशो ब्रह्मर्षिसंबन्धाद्ब्रह्मावर्तान्न्यूनः। तथा चाऽऽह - ब्रह्मावर्तादनन्तरः ईषद्भिन्नः। नञ् ईषदर्थः। यथा 'अनुष्णां

---

(१) **भा.** ८।३०।६२; **भामु.** ८।४५।१६ पाञ्चा (पञ्चा)मद्रानृते (मद्रादृते) पञ्च (पाञ्च).

(२) **भा.** १२।३२७।७८; **भामु.** १२।३४०।८८ - ८९ स वै (स वो).

(३) **भा.** १३।२७।२४ - २५; **भामु.** १३।२६।२५ - २६.

(४) **मस्मृ.** २।१७; **अप.** १।२ देव (व्योम); **ब्रक.** ४६; **स्मृच.** १।१७; **चव्र.** २७; **कृर.** ४३; **मपा.** १२; **निप्र.** २।४७३; **मुक्ता.** ९; **संम.** ३; **पप्र.** ५५; **सस्मृ.** १३१; **इन्दु.** ५.

$ गोरा, ममु., पप्र., भाच. मेधागतम्।

§ शेषं मेधागतम्।

‡ अस्य व्याख्यानानि धर्मप्रमाणविचारप्रकरणे द्रष्टव्यानि।

(१) **मस्मृ.** २।१८, शेषः स्थलादिनिर्देशः धर्मप्रमाणविचारप्रकरणे द्रष्टव्यः.

(२) **मस्मृ.** २।१९; **गोरा.** सेनकाः (सेनजाः); **अप.** १।२ सेनकाः (सेनजाः) **ब्रक.** ४६ पञ्चा (पाञ्चा); **स्मृच.** १।१७ पञ्चा (पाञ्चा) न्तरः (न्तरम्); **चव्र.** २८ पञ्चा (पाञ्चा) सेन (सैनि); **कृर.** ४३ ब्रकवत्; **मपा.** १२ ब्रकवत्; **निप्र.** २।४७३ शूर (सुर); **मुक्ता.** ९ पञ्चा (पाञ्चा) सेनकाः (सेनयः); **संम.** ३ सेन (सैनि); **पप्र.** ५६; **सस्मृ.** १३१ नकाः (नयः) शेषं स्मृचवत्; **इन्दु.** ६ ब्रकवत्.

यवागूं पिबेदामयावी' इतीषदुष्णामुपदिशन्ति। अन्तरशब्दो भेदवचनः, 'नारीपुरुषतोयानामन्तरं महदन्तरम्' इति यथा। * मेधा.

(२) मत्स्यादिः (? त्स्याः) विराटदेशाः। पाञ्चालाः कन्यकुब्जाहिच्छात्राः। शूरसेनजा माथुराः। † गोरा.

(३) सूरसेनकाः सूरसेनाख्यनृपतिना निवासत्वेन निर्मिताः नाम सुरोपलक्षितदेशाः (?)। अनन्तरः निर्विशेषः। मवि.

(४) अत्रापि ब्रह्मर्षिसंबन्धवचनं प्रशंसार्थम्। × नन्द.

(५) एष ब्रह्मर्षिदेशः। कुरुक्षेत्रादिदेशाः महर्षीणां वासयोग्या भवन्तीत्यर्थः। × भाच.

**[1]एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।।**

(१) एतेषु देशेषु कुरुक्षेत्रादिषु प्रसूतस्य अग्रजन्मनः ब्राह्मणस्य सकाशात्स्वं स्वं चरित्रम् आचारं शिक्षेरन् जिज्ञासेरन्। 'तस्मिन्देशे' (मस्मृ. २।१८) इत्यनेनैतत् व्याख्यातम्। ¤ मेधा.

(२) एतत्पदेन ब्रह्मावर्तस्यापि ग्रहणम्। चरित्रं चरणीयम्। मवि.

(३) अग्रजन्मनः ब्राह्मणात्। चरित्रं चरणम् अनुष्ठानं धर्मस्य येन तच्चरित्रं धर्मोपदेशमिति यावत्, आचारं वा। मच.

(४) शिक्षन्ते अवगच्छन्ति। × मुक्ता.९

(५) एतद्देशप्रसूतस्येति वचनं देशप्रशंसापरम्, तत्प्रकरणपाठात्, न तु तद्देशप्रसूतेभ्य एव धर्मशिक्षणनियमार्थम्। × पप्र. ५६

(६) एतद्देशप्रसूतस्य महर्षिदेशप्रसूतस्य। शिक्षेरन् शिक्षयेयुः। × भाच.

* स्मृच., मपा., मच., मुक्ता. मेधागतम्। ममु., कृर. मेधागतं गोरावच्च।

† शेषं मेधागतम्। ब्रक., चव्र., संम. गोरावत्।

× शेषं मेधागतम्।

¤ गोरा., ब्रक., कृर. मेधागतम्।

(१) **मस्मृ.** २।२०; **ब्रक.** ४६; **कृर.** ४३; **मपा.** १३; **मुक्ता.** ९ शिक्षेरन् (शिक्षन्ते); **पप्र.** ५६; **नन्द.** मुक्तावत्; **इन्दु.** ६.

**मध्यदेशलक्षणम्, आर्यावर्तलक्षणम्, यज्ञार्हो देशः, तदतिरिक्तो म्लेच्छदेशः, ब्रह्मावर्तादयो द्विजातिनिवासार्हाः, वृत्त्यनुरोधेन शूद्रः कुत्रापि निवसेत्**

**[1]हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि।**
**प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः।।**

(१) उत्तरस्यां दिशि हिमवान्पर्वतः, दक्षिणस्यां विन्ध्यः। विनशनं सरस्वत्या अन्तर्धानदेशः। प्रयागः गङ्गायमुनयोः संगमः। एतान्देशानवधीकृत्य मध्यं मध्यदेशनामानं देशं विद्यात्। नात्युत्कृष्टो नातिनिकृष्ट इत्यतोऽयं मध्यदेशः, न तु पृथिवीमध्यभवत्वात्। † मेधा.

(२) धर्मप्रसङ्गेन ततोऽपकृष्टान्यपि देशान्तराणि निवासार्थं दर्शयति – हिमवदिति। मध्यः पृथिव्या जघनस्थानीयो देशः। × मवि.

(३) विनशनं सरस्वत्या अन्तरालदेशः। मपा. १२

(४) हिमवान् उत्तरत्यः (?) पर्वतः, दाक्षिणात्यो विन्ध्यः, विनशनात् कुरुक्षेत्रात्, प्रयागात् प्रत्यगेव पश्चिममिति चतुःसीमावच्छिन्नम्। यदधिकृत्य श्रुतम् 'या गतिर्योगयुक्तानां वाराणस्यां मृतस्य च। सा गतिर्घटिकार्धेन मध्यदेशनिवासिनाम्।।' इति। * मच.

**[2]आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात्।**
**तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः।।**

† गोरा., ब्रक., स्मृच., चव्र., ममु., कृर., मुक्ता., संम., पप्र. मेधागतम्।

× शेषं मेधागतम्।

* भाच. मचगतम्।

(१) **मस्मृ.** २।२१; **अप.** १।२; **ब्रक.** ४६ मध्यं (मध्ये); **स्मृच.** १।१८; **चव्र.** २८ ब्रकवत्; **कृर.** ४३ ध्यं यत् (ध्ये तत्); **मपा.** १२ ब्रकवत्; **निप्र.** २।४७४ **यत्प्रा.** (यः प्रा) शेषं ब्रकवत्; **मुक्ता.** ९; **संम.** ३ ध्यं यत् (ध्ये यः); **पप्र.** ५६ ब्रकवत्; **सस्मृ.** १३१ ब्रकवत्; **इन्दु.** ६.

(२) **मस्मृ.** २।२२; **अप.** १।२ र्तं विदुर्बुधाः (र्तः प्रकीर्तितः); **ब्रक.** ४६ विदुर्बुधाः (प्रचक्षते); **स्मृच.** १।१८ त्तु प (च्च प); **चव्र.** २८; **कृर.** ४३ ब्रकवत्; **मपा.** १२; **दीक.** १।२ स्मृचवत्; **निप्र.** २।४७४ द्रात्तु (द्राच्च) शेषं ब्रकवत्; **मुक्ता.** ९; **संम.** ३;

(१) आ पूर्वसमुद्रादा पश्चिमसमुद्राद्योऽन्तरालवर्ती देशः, तथा तयोरेव पूर्वश्लोकोपदिष्टयोः गिर्योः पर्वतयोः हिमवद्विन्ध्ययोः यत् अन्तरं मध्यं स आर्यावर्तो देशः बुधैः शिष्टैः उच्यते। आर्या वर्तन्ते तत्र पुनः पुनरुद्भवन्ति। आक्रम्याऽऽक्रम्यापि न चिरं तत्र म्लेच्छाः स्यातारो भवन्ति। आङत्र मर्यादायाम्, नाभिविधौ। तेन समुद्रद्वीपानि नाऽऽर्यावर्तः। एते चतसृषु दिक्षु देशावधय उपात्ताः – प्राच्यां पूर्वसमुद्रः, प्रतीच्यां पश्चिमः, उदग्दक्षिणयोर्हिमवद्विन्ध्यौ। एतौ ह्यवधित्वेनोपात्तौ, न तयोरार्यावर्तत्वमस्ति।

$ मेधा.

(२) तयोर्हिमवद्विन्ध्ययोः पर्वतयोर्मध्यम्। आरात् पापेभ्यो गताः आर्याः तस्मिन् आवर्तन्ते भ्रमन्ति, न तु मर्यादया वसन्तीत्यार्यावर्तः।

मवि.

(३) अत्र च पूर्वः पूर्व उत्तरोत्तरात्प्रशस्तः। तथा च सुमन्तुः – 'ब्रह्मावर्तः परो देश ऋषिदेशस्त्वनन्तरः। मध्यदेशस्ततो न्यून आर्यावर्तस्ततः परः।।' इति।

स्मृच. १।१८

(४) उक्तार्यावर्तव्याप्यो मध्यदेशः, तद्व्याप्यो ब्रह्मर्षिदेशः, तद्व्याप्यो ब्रह्मावर्त इत्यर्थः।　　× मच.

(५) आर्या अस्मिन्वर्तन्त इत्यार्यावर्तः। हिमवद्विन्ध्ययोरित्यादिश्लोकद्वयेऽ पि 'एतद्देशप्रसूतस्य' इति श्लोकस्यानुषङ्गः। एतेषु ब्रह्मावर्तादिष्वाचारविप्रतिषेधे पूर्वपूर्वदेशाचारो बलीयानित्यवगन्तव्यम्।　　नन्द.

**'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।**
**स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः।।**

(१) कृष्णश्वेतः कृष्णपीतो वा कृष्णसाराख्यो मृगो यत्र चरति निवसति। संभवः उत्पत्तिर्यत्र देशे तस्य स्वभावतः, न पुनर्देशान्तरात्प्राशस्त्योपायनादिना निमित्तेनाऽऽनीतस्य कियन्तमपि कालं निवासः। स देशो यज्ञियः यागार्हः बोद्धव्यः। अतः कृष्णमृगचरणात् परः अन्यः म्लेच्छदेशः। म्लेच्छाः प्रसिद्धाः चातुर्वर्ण्यजात्यपेताः प्रतिलोमजातीया अनधिकृता मेदान्ध्रशबरपुलिन्दादयः।

न चानेन यागाधिकरणताऽस्य देशस्य विधीयते 'समे यजेत' इतिवत्, चरतीति वर्तमाननिर्देशात्। न हि यत्रैव चरितुं प्रवृत्तस्तदैव तत्र यागः शक्यः कर्तुम्। यागस्य हि देशः अधिकरणम्, तत्साधनकर्त्रादिकारकाश्रितद्रव्यादिधारणद्वारेण। न च द्वयोर्मूर्तयोरेककाले एकदेशे स्थानसंभवः। न च कालान्तरलक्षणा न्याय्या, विधौ लक्षणाया अन्याय्यत्वात्। यथोक्तं शूर्पाधिकरणे (जैसू. १।२।२६) 'एतद्धि क्रियत इत्युच्यते' (शाबरभाष्यम्) इति।

ननु च नाभिव्यापक एवाऽऽधेयः, येन कृत्स्नाधाराभिव्याप्त्यैवाधिकरणार्थनिर्वृत्तिः स्यात्, 'तिलेषु तैलम्' इतिवत्। किं तर्हि? एकदेशसंबन्धिनाऽप्याधेयेन भवति कृत्स्नस्याऽऽधारभावः, 'प्रासाद आस्ते', 'रथमधितिष्ठति' इति। एवमिह ग्रामनगरसमुदायस्य नदीपर्वतान्ताद्यवधिकस्य देशस्य प्रकृतत्वादेकदेशेऽपि पर्वतारण्यादौ चरन्सर्वमाधारीकरोति। तेनायमदोषः मूर्तयोर्नैकदेशः संभवति। उच्यते। नैवात्र यष्टव्यमिति विधिरस्ति। जानातेः परो विधायकः श्रुतः, न यजेः। यागस्य तत्रार्हता श्रुता, यागार्होऽसौ देश इति। सा च यागार्हताऽसत्यपि विधौ घटते। एतेषु देशेषु यागाङ्गानि दर्भपलाशखदिरादीनि प्रायेण च भवन्ति। अधिकारिणश्च त्रैवर्णिका त्रैविद्याश्च तेष्वेव देशेषु दृश्यन्ते। अत एतदवलम्बनो यागार्हतानुवादः। कृत्योऽपि 'ज्ञेयः' इत्यध्यारोपितविध्यर्थः 'जर्तिलयवाग्वा वा जुहुयात्' इतिवद्विधिवन्निगदार्थवाद एव।

यच्चोक्तं 'म्लेच्छदेशस्त्वतः परः' इत्येषोऽपि प्रायिकोऽनुवाद एव। प्रायेण ह्येषु देशेषु म्लेच्छा भवन्ति। न त्वनेन देशसंबन्धेन म्लेच्छा लक्ष्यन्ते, स्वतस्तेषां प्रसिद्धे-

---

$ गोरा., ममु., दीक., संम., भाच. मेधागतम्।

× शेषं मेधागतम्।

**वीमि.** १।२ त्तु प (च्च प) विदुर्बुधाः (प्रचक्षते); **पप्र.** ५६ ब्रकवत्; **सस्मृ.** १३२; **इन्दु.** ६ स्मृचवत्.

(१) **मस्मृ.** २।२३; **विश्व.** १।२ उत्त.; **अप.** १।२ ज्ञेयो (देशो) देशो (ज्ञेयो); **ब्रक.** ४६-४७ परः (परम्); **स्मृच.** १।१८ स्त्वतः (स्ततः); **चव्र.** २८ स्मृचवत्; **कृर.** ४३ ज्ञेयो (एव) शेषं स्मृचवत्; **दीक.** १।२ स्मृचवत्; **मर.** ३९६-३९७ स्मृचवत्; **निप्र.** २।४७४ स्मृचवत् (=); **मुक्ता.** ९ यज्ञियो (याज्ञिको) परः (परम्); **संम.** ३ स्मृचवत्; **वीमि.** १।२ पू.; **पप्र.** ५६ स्मृचवत्; **बाल.** १।२ स्मृचवत्; **सस्मृ.** १३२ यज्ञि (याज्ञि) स्त्वतः (स्ततः) **इन्दु.** ६ स्त्वतः परः (स्ततः परम्).

ब्राह्मणादिजातिवत्। अथार्थद्वारेणायं शब्दः प्रवृत्तो म्लेच्छानां देश इति। तत्र यदि कथंचिद्ब्रह्मावर्तादिदेशमपि म्लेच्छा आक्रमेयुः, तत्रैवावस्थानं कुर्युः, भवेदेवासौ म्लेच्छदेशः। तथा यदि कश्चित्क्षत्रियादिजातीयो राजा साध्वाचरणो म्लेच्छान् पराजयेत्, चातुर्वर्ण्यं वासयेत्, म्लेच्छांश्चाऽऽर्यावर्त इव चाण्डालान् व्यवस्थापयेत्सोऽपि स्याद्यज्ञियः। यतो न **भूमिः स्वतो दुष्टा, संसर्गाद्धि सा दुष्यत्यमेध्योपहतेव।** अत उक्तदेशव्यतिरेकेणापि सति सामग्र्ये त्रैवर्णिकेनाकृष्ण-मृगचरणेऽपि देशे यष्टव्यमेव। तस्मादनुवादोऽयम् 'स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः' इत्युत्तरविधिशेषः। * मेधा.

(२) कृष्णः शबलो मृगो यस्मिन्देशे स्वभावतो निवसति स्वच्छन्दं विहरति, न हठादानीतः, स यागार्हो देशो विज्ञेयः। अतोऽन्योऽनधिकृतान्ध्रादिम्लेच्छदेशो न यागार्हः। अध्ययन एतदेव। गोरा.

(३) अत्र च पूर्वः पूर्व उत्तरत उत्तरतः श्रेष्ठः। यदाह पुराणम् – 'ब्रह्मावर्तः परो देश ऋषिदेशस्त्वनन्तरः। मध्यदेशस्ततो न्यून आर्यावर्तस्त्वनन्तरः।।'। विष्णुश्च– 'चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते। तं म्लेच्छदेशं जानीयादार्यावर्तमतः परम्।।' इत्यार्यावर्तस्य लक्षणान्तर-माह। ततश्च यत्र चातुर्वर्ण्यव्यवस्था कृष्णमृगश्च नास्ति स म्लेच्छदेशः। तदन्यो धर्मदेशः। ततश्च ब्रह्मावर्तादिदेश-चतुष्टयालाभे यत्र चातुर्वर्ण्यं व्यवतिष्ठते कृष्णमृगश्च विचरति तत्र धर्मेच्छुभिः स्थातव्यम्। तदसंभवे चातुर्वर्ण्य-व्यवस्थावति कृष्णमृगयुक्ते वा देशे।

अप. १।३ पृ.५

(४) एतेनाऽऽचारशिक्षानिवासयज्ञानुष्ठानोचिता देशाः क्रमादुक्ताः। × मवि.

(५) यत्पुनर्मनुनोक्तम् - 'कृष्णसारस्तु... ततः परः।।' इति, तत्पूर्वोक्तदेशचतुष्टयालाभे द्रष्टव्यम्, तदनन्तर-मस्याभिधानात्। एतच्च न देशान्तरनिराकरणाय। यत आह विष्णुः – 'चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते। स म्लेच्छदेशो विज्ञेय आर्यावर्तस्ततः परः।।' इति। अतश्च यत्र कृष्णसारश्चातुर्वर्ण्यव्यवस्थानं वा स धर्मदेश इति मन्तव्यम्। स्मृच. १।१८

(६) स्वभावतः अन्नपानादिना। कृर. ४४

(७) यथा यज्ञस्य दर्शादिकालोऽङ्गं तथा कृष्णसार-विशिष्टदेशोऽपीत्याह – कृष्ण इति। स्वभावतः बलात्कारं विना। मच.

(८) अतः परम् एभ्यो ब्रह्मावर्तादिभ्योऽन्यः। म्लेच्छा यज्ञानधिकृताः। « मुक्ता.

**[१]एतान्द्विजातयो देशान्संश्रयेरन्प्रयत्नतः।**
**शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्शितः।।**

(१) यदर्थं देशसंज्ञाभेदकथनं तमिदानीं विधिमाह। एतान् ब्रह्मावर्तादीन् देशान् द्विजातयो देशान्तरेऽपि जाताः संश्रयेरन्। जन्मदेशं त्यक्त्वा ब्रह्मावर्तादिदेशसंश्रयणं प्रयत्नेन कर्तव्यम्। अत्र केचिदाहुरदृष्टार्थ एवायमेतद्देशसंश्रयणविधिः। सत्यपि देशान्तरेऽधिकारसंभवे एतेषु देशेषु निवासः कर्तव्यः। तत्र कल्प्याधिकारत्वे यदि वा गङ्गादितीर्थस्नानवदेतद्देश-निवासविधिः पावनत्वेन कल्प्यते। यथैव काश्चिदापः पवित्रतरा एवं भूमिभागा अपि केचिदेव पवित्राः, यथोक्तं पुराणे। यदि वा संश्रयणादेव स्वतन्त्रात्स्वर्गो विश्वजिद्वत्।

तत्रैतौ द्वावपि पक्षावप्राप्तौ। यद्यप्राप्तः संश्रयो विधीयते, कल्प्येताप्यधिकारः। तत्र चिन्त्यते - कतरः पक्षो युक्तः? इति। स तु नित्यकाम्यानामुक्तया रीत्या एतद्देश एवानुष्ठान-संभवादधिकृतानां प्राप्त एव। न ह्येतद्देशव्यतिरेकेण कृत्स्नधर्मानुष्ठानसंभवः। तथाहि - हिमवति तावत्काश्मीरादौ शीतेनार्दिता न बहिःसंध्योपासनेऽधिक्रियन्ते, न च यथाविधि स्वाध्यायसंभवः 'प्राग्वोदग्वा ग्रामादुपनिष्क्रम्य' इति। न हि हेमन्तशिशिरयोरहरहर्नदीस्नानादिसंभवः।

इदमेव च द्विजातय इति वचनलिङ्गम्। न कश्चिदेव

---

* ब्रक., ममु., पप्र. मेधागतम्।

× शेषं मेधागतम्।

« नन्द. मुक्तावत्।

(१) **मस्मृ.** २।२४; **मेधा.** 'यस्मिन्कस्मिन्' इत्यत्र 'यस्मिंस्त-स्मिन्' इति पाठः : २।१८ (प्रयत्नतः०) पू.; **अप.** १।२ यस्मिन्क (यस्मिंस्त); **ब्रक.** ४७ यस्मिन्क (यस्मिंस्त) कर्शि (कर्षि); **स्मृच.** १।२१; **चव्र.** २८ कर्शि (कर्षि); **कृर.** ४३ ब्रकवत्; **मुक्ता.** ९ स्मिन्वा नि (स्मिंश्चिन्नि); **संम.** ३ श्रयेरन् (श्रयेयुः). कर्शि (कर्षि); **पप्र.** ५६ ब्रकवत्; **सस्मृ.** १३२.

देशोऽसति म्लेच्छसंबन्धे स्वत एव म्लेच्छदेशः। अन्यथा तद्देशसंबन्धान्म्लेच्छत्वे कथं द्विजातित्वम्? अथोच्यते – न गमनमात्रान्म्लेच्छता, अपि तु निवासात्। स चानेन प्रतिषिध्यते। तच्च न। संश्रयोऽत्र श्रूयते। स च देशान्तरे भवतस्तत्त्यागेनान्यदेशसंबन्धः। न संश्रितस्यैव संश्रयणम्। अन्यथा एवमेवावक्ष्यत् – 'एतान्देशांस्त्यक्त्वा नान्यत्र निवसेत्'। अथ सिद्धे संश्रयणे तद्वचनमन्यनिवृत्त्यर्थमिति परिसंख्या तथा स्यात्। तस्याश्च त्रयो दोषाः। अथ श्रुतार्थहानिर्लक्ष्यते – 'एतान्देशान्न जह्यात्' इति। न श्रुतार्थसंभवे लक्षणा युक्ता। अत एव न भूतपूर्वगतिः। तस्माल्लिङ्गमिदं न देशसंबन्धेन पुरुषा म्लेच्छाः, किं तर्हि? पुरुषसंबन्धेन म्लेच्छदेशता।

शूद्रस्य द्विजातिशुश्रूषाया विहितत्वात्तद्देशनिवासे सर्वदा प्राप्ते तत्राजीवतो देशान्तरनिवासोऽभ्यनुज्ञायते। यदा बहुकुटुम्बतया शुश्रूषाशक्त्या वा यं द्विजातिमाश्रितः स एनं (न) बिभृयात् तदा देशान्तरे संभवति धनार्जने निवसेत्। तत्रापि न म्लेच्छभूयिष्ठे, किं तर्हि? यज्ञिये, म्लेच्छावृते यानासनाशनादिक्रियानिमित्तस्य संसर्गस्यापरिहार्यत्वात्तद्भावापत्तिप्रसङ्गात्।

वृत्तिकर्शितः वृत्त्यभावपीडितः। वृत्तिः आत्मकुटुम्बस्थितिसमर्थं धनम्। तदभावे यत् कर्शनं (तत्) तत्संबन्धितयोच्यते, यथा 'वर्षाकृते सुभिक्षदुर्भिक्षे' (इति) (दुर्भिक्षम्?) वर्षाभावकृतं दुर्भिक्षं वर्षाकृतत्वेन व्यपदिश्यते। यस्मिंस्तस्मिन्नित्यनियममाह। ¶ मेधा.

(२) साध्वाचारयागार्हत्वसंभवाददृष्टार्थत्वाच्चैतानेव देशान्देशान्तरोद्भूता अपि द्विजातयो यत्नत आश्रयेरन्। शूद्रः पुनर्यदा जीविकाभावपीडितो भवति तदैतद्व्यतिरिक्तदेशेऽपि निवसेत्। § गोरा.

(३) सर्वे चैते निवासयोग्या इत्याह – एतानिति। म्लेच्छदेशादन्यान्। प्रयत्नतः महताऽप्यायासेन। यस्मिन्कस्मिन् म्लेच्छदेशेऽपि। वृत्तिकर्शितः, न तु स्वस्थः। सोऽपि जीवनसंभवे सद्देशेष्वेव निवसेत्। द्विजातिषु वृत्तिकर्शितो न म्लेच्छदेशे संवसेदित्यर्थः। मवि.

¶ ब्रक., कृर., मच., भाच. मेधागतम्।

§ ममु. गोरावत्।

(४) एतान् ब्रह्मावर्तादीन् कृष्णसारस्वैरसंचरितदेशपर्यन्तान् प्रयत्नत आपद्यपि संश्रयेरन् अधिवसेयुः। एतेषु च पूर्वपूर्वदेशः प्रशस्त इत्यवगन्तव्यम्। नन्द.

## याज्ञवल्क्यः

धर्मार्हो देशः, तत्रैव
द्विजो वसेत्

**'यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत।।**

(१) नन्वेतत् 'यस्मिन् देशे मृगः कृष्णः' इति प्रधानं प्रयोगमनभिधायैव बाह्यतरदेशाभिधानमयुक्तम्। किंच, ब्रह्मावर्तादेरनङ्गत्वमप्यभिप्रेतम्। अथायमभिप्रायः – अतः परमयज्ञियो देश इति। तदप्यसत्। 'सूर्यस्योदयनं पुरः' इत्यनेन कृष्णरहितदेशानामपि प्राशस्त्यदर्शनात्। मूर्ख, साध्वेतत्। बहिरङ्गत्वेऽपि देशस्याधिकाराश्रयत्वेन प्राधान्यात् वक्ष्यमाणाखिलार्थोपयोगित्वाच्च सर्वादावभिधानम्। अन्यथा ह्येककर्मार्थताऽपि संनिधेराशङ्क्येत। न च नैयमिकः क्रमादर इति चाऽऽचार्याभिप्रायः। ब्रह्मावर्ताद्यनभिधानं तु विशिष्टफलत्वात् तेषाम्। न तु त एव धर्म्याः। अयं तु नित्यतया कर्मणामङ्गम्, यज्ञियत्वेनैव धर्मनियमात्। तथा चाऽऽम्नायः – 'यज्ञो हि कृष्णः स कृष्णो भूत्वा चचार' इति। श्वेताश्वतराश्च – 'स कृष्णमृगोऽभवत्। स कृष्णमृगो भूत्वा पृथिवीमन्वचरत्। तमनु धर्मश्चचार' इत्यादि। न च तद्रहितानां धर्म्यत्वम्। एवं हि भाल्लविनां गाथा – 'यतः पश्चात् सिन्धुर्विहरणी सूर्यस्योदयनं पुरः' इति। विच्छिद्याऽऽयुः पुंसां हरतीति विहरणोऽस्तमयकालः। सोऽस्मिन्निति विहरणी। सिन्धुः समुद्रः पर्वतो वा, उभयत्र* स्यन्दनाविशेषात्। ऋज्वन्यत्। एवमुदयास्तमयोपलक्षितायां पृथिव्यां 'यावत् कृष्णो विचरति तावद्ब्रह्मवर्चसम्' इति। तावदेवेत्यर्थः। 'यावद्वा' इत्यपि पाठे वाशब्दोऽवधारणार्थः, न विकल्पार्थः। तथा च शङ्खः- 'देश आर्यो गुणवान् प्रागस्तादर्वागुदयात्' इत्यारभ्य 'पुण्यः

* स्यन्दनम् अधोगमनम् अस्तमनमित्यर्थः। 'उभयत्रास्तमनाविशेषात्' इति वा पाठः।

(१) **यास्मृ.** १।२; **समु.** ७ योगीश्वरः; **मिता.** १।६ प्रथमचरणमात्रम्; **स्मृच.** १।१९; **धप्र.** १ योगीश्वरः; **मुक्ता.** ९; **इन्दु.** ५.

कृष्णो वा यावद्विचरति, तावदाचारः स्यात्' इति। अयमपि वाशब्दोऽवधारणार्थ एव। तथा चाऽऽह मनुः – 'स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः।' इति। आम्नायश्च 'तं देवाः समाजह्रुः। तं धर्मोऽन्वागच्छत्। यज्ञं ह्यनु धर्मः' इति श्वेताश्वतरीयः कृष्णानुयायित्वं हिशब्देन धर्मस्यानुवदंस्तद्वानेव देशो धर्म्य इति दर्शयति। अतः सूक्तम् – यस्मिन् देशे मृगः कृष्ण इति। उत्पद्यत इति चाध्याहार्यम्, श्रुतिस्मृत्यन्तरानुसारात्। ब्रह्मावर्तादेरपि धर्म (? र्म्य) त्वं नित्यतया श्रुतिस्मृत्यनुसारात् कृष्णोपलक्षितत्वेनैव, तादात्म्येन तु फलविशेषहेतुत्वमित्यलं प्रसङ्गेन। विश्व.

(२) कृष्णसारो मृगो यस्मिन्देशे स्वच्छन्दं विहरति तस्मिन्देशे वक्ष्यमाणलक्षणा धर्मा अनुष्ठेयाः, नान्यत्रेत्यभिप्रायः। # मिता.

[स्मृत्यन्तरानुरोधेन कृष्णपदं न गुणपरं किंतु 'नामैकदेशे' इति न्यायेन मृगजातिविशेषपरम्, मृगपदं च तत्रैव तात्पर्यग्राहकमित्याह – कृष्णेति। कृष्णेन वर्णेन सारः श्रेष्ठः, कृष्णः सारो यस्मिन्निति वा। दैवात् बलात्कारेण वाऽऽगतव्यावृत्तये आह – स्वच्छन्दमिति। संज्ञामात्रनिवृत्तये आह – विहरतीति। तथा च मनुः – 'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः। स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः।।' इति। अनेन धर्मसामान्यं न कथ्यते, विशेषानालिङ्गितसामान्याभावात्; नापि तेषां तत्र सत्ता कथ्यते, प्रश्नविरुद्धत्वात्, अनुष्ठानं विना स्वरूपतस्तेषां सत्ताया बाधितत्वाच्च। अत आह — वक्ष्यमाणेति। तथा च धर्मपदं विशेषपरमेव। अनुष्ठेयानिति शेषः। तथा च तत्र धर्माननुष्ठेयान्निबोधतेत्यर्थः सूचितः। अत एवोक्तमनुसंगतिः। तथा च चाशेषत इति प्रश्ने उक्त्या सर्वोपयोगित्वेन साधारणतया च तदनुष्ठानाधारकथनमादाविति भावः। बाल.पृ.४-५]

(३) कृष्णशब्दो हरिणवचनः, 'कृष्णाजिनम्' 'कृष्णविषाणः' 'यावत्कृष्णमृगो विचरति' इति प्रयोगदर्शनात्। स यस्मिन्देशे स्वभावाद्विचरेत् तत्र धर्मान् श्रौतस्मार्तान् अनुष्ठेयतया हे मुनयः, निबोधत निबुध्यध्वम्। कृष्णशब्दार्थान्तरावबोधो मा भूदित्युक्तम् – मृग इति। कृष्णमृगोपलक्षितश्च देशो ब्रह्मावर्तादिदेशासंभवे धर्मानुष्ठानाङ्गमिति मन्तव्यम्। धर्मान्निबोधतेति धर्मग्रहणादधर्मपरिहारे देशे विशेषनियमो नास्तीति मन्तव्यम्। अप.

(४) मृगः स्वभावाच्चरति, न हठादिनेति बोध्यम्। यथाऽऽह मनुः – 'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः। स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः।।' इति। कृष्णमृगचरणोपलक्षितदेशस्यापि यद्धर्मदेशत्वकथनं तत् संपूर्णधर्माभिप्रायेण। यथा मनुः – 'आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः।।' । तयोः पूर्वोक्तहिमवद्विन्ध्ययोः। दीक.

(५) धर्मान् बुभुत्सितान्। निबोधत निसृष्टबोधविषयीकुरुत। बोधस्य य( ?त)थात्वं देशकालहेतुस्वरूपलक्षणप्रमाणफलादितत्तद्धर्मसंबन्धिक्रोडीकरणेनेति प्रथमतः प्राधान्याद्देशेन धर्मान् विशिनष्टि – यस्मिन् क्वचिदपि देशे भूभागे भारतवर्षरूपे, तदुपक्रम्य 'कर्मभूरियं स्वर्गमपवर्गं च गच्छताम्' इति विष्णुपुराणात्। मृगः कृष्णः इ( ?ए)ण इत्यर्थः। चरति, स्वभावत इति शेषः, 'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।' इति मनुवचनात्। तस्मिन् अनुष्ठेयान्। अत्र यस्मिन्नित्यादिसिद्धवल्लिखनाद्ब्रह्मावर्तादेः पुण्यत्वाभिधानमन्यत्र प्रशंसार्थम्। 'आ समुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते।।' (मस्मृ. २।२२) इति मनुना कृष्णसाररहितस्यापि देशस्याऽऽर्यावर्तत्वकथनेन धर्म( ?र्म्य)त्वप्रतिपादनं तु असंपूर्णधर्माभिप्रायेण। विशिष्टदेशे (न) धर्माणामेव विशेषणादधर्मोत्पत्तावार्यावर्तादिविशेषो नापेक्षितः, किंतु भारतवर्षमात्रमिति मन्तव्यम्। वीमि.

**[1]धर्मसंरक्षणार्थाय तस्मिन्देशे वसेद्द्विजः।।**

## व्यासः

धर्मार्हा देशाः, तत्रैव द्विजातयो
निवसेयुः, धर्मबाह्या
देशाः

**[2]यत्र यत्र स्वभावेन कृष्णसारो मृगः सदा।**
**चरते तत्र वेदोक्तो धर्मो भवितुमर्हति।।**

---

# मुक्ता. मितागतम्।

(१) **धप्र.** ७ योगीश्वरः; **समु.** ७ योगीश्वरः.

(२) **व्यास्मृ.** १।३.

**[१]सर्वे शिलोच्चयाः पुण्याः सागराः सरितस्तथा।**
**अरण्यानि च पुण्यानि विशेषान्नैमिषं तथा।।**
**[२]ते देशास्ते जनपदास्ते शैलास्ते तथाऽऽश्रमाः।**
**पुण्या त्रिपथगा येषां मध्ये याति सरिद्वरा।।**
**[३]अन्तर्वेदिर्मध्यदेशं ब्रह्मावर्तं च यज्ञियम्।**
**मिश्रितं सरयूतीरं पुष्करं नैमिशं तथा।**
**देशानेतान्निवासाय संश्रयेरन् द्विजातयः।।**

अत्र द्विजातिग्रहणं शूद्रस्य प्रदर्शनार्थम्, तस्य आपद्येव मनुना देशानुग्रहस्मरणात् – 'एतान् द्विजातयो देशान् संश्रयेरन्प्रयत्नतः। शूद्रस्तु यस्मिन् कस्मिन्वा निवसेद्वृत्तिकर्शितः।।' इति। स्मृच. १।२१

**[४]अङ्गवङ्गान्ध्रविषयो ये चान्ये म्लेच्छजातयः।**
**कृष्णसारविहीनाश्च देशानेतान् विस( ? व)र्जयेत्।।**
**[५]देशाञ्छूद्रावृतानन्यानधार्मिकजनावृतान्।**
**म्लेच्छावृतान्प्रयत्नेन वर्जयेद्धार्मिको जनः।।**

## देवलः

धर्मबाह्या देशाः, भारतवर्षे मनुष्यजन्म दुर्लभम्

**[६]त्रिशङ्कुं वर्जयेद्देशं सर्वं द्वादशयोजनम्।**
**उत्तरेण महानद्या दक्षिणेन तु कीकटम्।।**
**सिन्धुसौवीरसौराष्ट्रं तथा प्रत्यन्तवासिनः।**
**कलिङ्गकौङ्कणान्वङ्गान् गत्वा संस्कारमर्हति।।**
**[७]दुर्लभं भारते वर्षे जन्म तस्मिन् मनुष्यता।।**

(१) **चव्र.** २९; **संम.** ४.

(२) **स्मृच.** १।२१; **मुक्ता.** १० पुण्या त्रि (पुण्यत्रि); **पप्र.** ६१.

(३) **स्मृच.** १।२१; **निप्र.** २।४७५ मिश्रितं (मुख्यं हि) मिशं (मिषं) द्वितीयार्धमात्रम्; **मुक्ता.** १० देशं (देशो) श्रितं (श्रकं) मिशं (मिषं).

(४) **स्मृच.** १।२२.

(५) **स्मृच.** १।२०; **पप्र.** ६० द्रावृतानन्या (द्रजनाक्रान्ता) जनः (द्विजः).

(६) **देस्मृ.** ४, १६.

(७) **विपा.** ४।६.

## संवर्तः

धर्मार्हो देशः

**[१]स्वभावाद्यत्र विचरेत्कृष्णसारः सदा मृगः।**
**धर्मदेशः स विज्ञेयो द्विजानां धर्मसाधनम्।।**

स्वभावात् अनादित इत्यर्थः। स्मृच. १।१९

## बृहत्पराशरः

द्विजातिनिवासार्हो देशः, शूद्रो यत्र कुत्रापि वसेत्, पावनो देशः, अन्यदेशस्थपुण्यनद्यादिदेशा अपि निवासार्हाः, वर्ज्यदेशाः

**[२]मृगः कृष्णश्चरेद्यत्र स्वभावेन महीतले।**
**वसेत्तत्र द्विजातिस्तु शूद्रो यत्र तु तत्र तु।।**
**हिमपर्वतविन्ध्याद्र्योर्विनशनप्रयागयोः।**
**मध्ये तु पावनो देशो म्लेच्छदेशस्ततः परम्।।**
**देशेष्वन्येषु या नद्यो धन्याः सागरगाः शुभाः।**
**तीर्थानि यानि पुण्यानि मुनिभिः सेवितानि च।।**
**वसेयुस्तदुपान्तेऽपि शमिच्छन्तो द्विजातयः।**
**मुनिभिः सेवितत्वाच्च पुण्यदेशः प्रकीर्तितः।।**
**यत्र पानमपेयस्य देशेऽभक्ष्यस्य भक्षणम्।**
**अगम्यागामिता यत्र तं देशं परिवर्जयेत्।।**
**एवं देशः समाख्यातो यज्ञियस्तु द्विजन्मनाम्।**
**एवमेवानुवर्तेरन् देशं धर्माभिकाङ्क्षिणः।।**
**वसन् वा यत्र तत्रापि स्वाचारं न विवर्जयेत्।**
**षट्कर्माणि च कुर्वीरन्निति धर्मस्य निश्चयः।।**

## पैठीनसिः

चतुष्पाद्धर्मदेशः

**[३]आ हिमवत आ च कुमार्याः सिन्धुर्वैतरणी नदी**

(१) **संस्मृ.** ४ द्यत्र विचरेत् (विचरेद्यत्र); **समु.** ७ सदा (समो) साधनम् (साधनः); **ब्रक.** ४९ विचरे (विरमे) साधनम् (साधनः); **स्मृच.** १।१९; **चव्र.** २९ विचरेत् (चरति); **मुक्ता.** ९ धर्मसा (कर्मसा).

(२) **बृपसं.** १।४२-४८.

(३) **ब्रक.** ४८ भवति (विचरति); **चव्र.** २९ आ च कु (आ कु) सिन्धुर्वै (सिन्धुवै) दयनं पुरः (दगयनं पुनः); **पप्र.** ५८.

सूर्यस्योदयनं पुरः, यावद्वा कृष्णमृगो विचरति तत्र धर्मश्चतुष्पादो भवति।।

## अङ्गिराः

प्रभूतेन्धनोदक उत्तमो
धर्मदेशः

[1]सर्वेषां कर्मणामाद्या आप एव विशेषतः।
परमाः कारणानीह तस्माद्ब्राह्मणपुंगवाः।।
अप एव समाश्रित्य वर्षन्ते तोयदा महत्।
जलं तत्रैव वर्तन्ते तदेव परमं स्थलम्।।
प्रभूतैधोदकग्रामः सर्वदेशोत्तमोत्तमः।
नदीतीरं विशेषेण तच्छताधिकमुच्यते।।
तत्रैव सकला धर्मा अनुष्ठेया हि संततम्।
नदी च सजला ज्ञेया न तच्छून्या कदाचन।।

## पितामहः

शूद्रराजकोऽनार्याश्रितोऽपि
जाह्नवीयुक्तो देशः
पुण्यतमः

[2]शूद्रराज्येऽपि निवसेद्यत्र मध्ये तु जाह्नवी।
सोऽपि पुण्यतमो देशोऽनार्यैरपि समाश्रितः।।

## वायुपुराणं ब्रह्माण्डपुराणं च

भारतवर्षस्य लक्षणं
कर्मभूमित्वं च

[3]अत्र वो वर्णयिष्यामि वर्षेऽस्मिन् भारते प्रजाः।
इदं तु मध्यमं चित्रं शुभाशुभफलोदयम्।।
[4]उत्तरं यत्समुद्रस्य हिमवद्दक्षिणं च यत्।
वर्षं यद्भारतं नाम यत्रेयं भारती प्रजा।।
[5]भरणाच्च प्रजानां वै मनुर्भरत उच्यते।
निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम्।।

(१) पूर्वाङ्गिरस्मृ. १११०-१११३.

(२) पप्र. ६०.

(३) वायु. १।४५।७४-७५; ब्रह्माण्ड. २।११।४.

(४) वायु. १।४५।७५-७६; ब्रह्माण्ड. २।११।५ यद्भा (तद्भा).

(५) वायु. १।४५।७६; ब्रह्माण्ड. २।११।६ च्चैव (च्चैवं).

[1]ततः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते।
न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते।।
[2]द्वीपो ह्युपनिविष्टोऽयं म्लेच्छैरन्तेषु नित्यशः।
पूर्वे किराता ह्यस्यान्ते पश्चिमे यवनाः स्मृताः।।
[3]ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः।
इज्यायुद्धवणिज्याभिर्वर्तयन्तो व्यवस्थिताः।।
[4]तेषां संव्यवहारोऽयं वर्तते तु परस्परम्।
धर्मार्थकामसंयुक्तो वर्णानां तु स्वकर्मसु।।
[5]संकल्पपञ्चमानां तु आश्रमाणां यथाविधि।
इह स्वर्गापवर्गार्थं प्रवृत्तिर्येषु मानुषी।।

## मार्कण्डेयपुराणम्

भारतवर्षस्य लक्षणं
कर्मभूमित्वं च

[6]भारतं नाम यद्वर्षं दक्षिणेन मयोदितम्।
तत्कर्मभूमिर्नान्यत्र संप्राप्तिः पुण्यपापयोः।
एतत्प्रधानं विज्ञेयं यत्र सर्वं प्रतिष्ठितम्।।
अस्मात्स्वर्गापवर्गौ च मानुष्यनरकावपि।
तिर्यक्त्वमथ वाऽप्यन्यन्नरः प्राप्नोति वै द्विज।।
[7]भगवन्कथितं त्वेतज्जम्बुद्वीपं समासतः।
यदेतद्भवता प्रोक्तं कर्म नान्यत्र पुण्यदम्।।
[8]पापदं वा महाभाग वर्जयित्वा तु भारतम्।
इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते।।

(१) वायु. १।४५।७७; ब्रह्माण्ड. २।११।७ ततः (इतः).

(२) वायु. १।४५।८२; ब्रह्माण्ड. २।११।१२ नित्यशः (सर्वशः).

(३) वायु. १।४५।८३; ब्रह्माण्ड. २।११।१३ युद्ध (युध).

(४) वायु. १।४५।८४; ब्रह्माण्ड. २।११।१४ रोऽयं (रोऽत्र) तु प (वै प).

(५) वायु. १।४५।८५; ब्रह्माण्ड. २।११।१५ संकल्प (संकल्पः) तु आ (च ह्या).

(६) मार्क. ५२।२१-२३.

(७) मार्क. ५४।१; चव्र. २६ तं त्वेतज्जम्बुद्वीपं (तस्त्वेष जम्बुद्वीपः); पप्र. ५४ चव्रवत्.

(८) मार्क. ५४।२ पापदं (पापाय); चव्र. २६ मध्यश्चा (मध्यं चा); पप्र. ५४.

## मत्स्यपुराणम्

भारतवर्षस्य लक्षणं

कर्मभूमित्वं च

**[१]अथाहं वर्णयिष्यामि वर्षेऽस्मिन्भारते प्रजाः।**
**भरणात्प्रजनाच्चैव मनुर्भरत उच्यते।।**
**निरुक्तवचनैश्चैव वर्षं तद्भारतं स्मृतम्।**
**यतः स्वर्गश्च मोक्षश्च मध्यमश्चापि हि स्मृतः।**
**न खल्वन्यत्र मर्त्यानां भूमौ कर्मविधिः स्मृतः।।**
**द्वीपो ह्युपनिविष्टोऽयं म्लेच्छैरन्तेषु सर्वशः।**
**यवनाश्च किराताश्च तस्यान्ते पूर्वपश्चिमे।।**
**ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः।**
**इज्यायुधवणिज्यादि वर्तयन्तो व्यवस्थिताः।।**
**तेषां स व्यवहारोऽयं वर्तनं तु परस्परम्।**
**धर्मार्थकामसंयुक्तो वर्णानां तु स्वकर्मसु।।**
**संकल्पपञ्चमानां तु आश्रमाणां यथाविधि।**
**इह स्वर्गापवर्गार्थं प्रवृत्तिरिह मानुषे।।**

## विष्णुपुराणम्

भारतवर्षस्य लक्षणं कर्मभूमित्वं च,

अन्या भोगभूमयः

**[२]उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।**
**वर्षं तद्भारतं नाम भारती यत्र संततिः।।**

उत्तरमिति समुद्रस्य मूलभूतस्य, न तु सगरसुतखातस्य, तत्राप्यवान्तरद्वीपानां भारतत्वात्। भारती भरतसंबन्धिसंततिः। वैच.

**[३]नवयोजनसाहस्रो विस्तारोऽस्य महामुने।**
**कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्।।**

अत्रैव श्रेयःसाधनमनुष्ठेयम्, अन्यत्र तदसंभवादिति दर्शयन्नाह – कर्मभूमिरिति। स्वर्गमपवर्गं च गच्छतां पुंसाम् उभयसाधनभूतानां प्रवृत्तिनिवृत्तिकर्मणां भूरियम्, किंपुरुषादिवर्षाष्टके पुष्करद्वीपे च कर्मण एवाभावात्। प्लक्षादि-

(१) **मत्स्य.** ११४।५-७; ११-१४.

(२) **विष्णु.** २।३।१; **ब्रक.** ४५ श्चैव (रेव); **चव्र.** २७ यत्स (च स) तद्भा (यद्भा); **कूर.** ४२; **संम.** ३; **पप्र.** ५४.

(३) **विष्णु.** २।३।२; **कूर.** ४२; **वीमि.** १।२ उत्त.; **पप्र.** ५५ उत्त. .

**[१]न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते।।**
**[२]पूर्वे किराता यस्यान्ते पश्चिमे यवनास्तथा।**
**दक्षिणे मलयो यस्य हिमवानुत्तरे तथा।**
**ब्राह्मणाःक्षत्रिया वैश्याः शूद्राश्चान्तःस्थिता द्विज।।**
**[३]इज्याध्यायवणिज्याद्यैः कर्मभिः कृतपावनाः।**
**तेषां संव्यवहारश्च एभिः कर्मभिरिष्यते।**
**स्वर्गापवर्गप्राप्तिश्च पुण्यं पापं च वै तदा।।**
**[४]कृतत्रेतादिकश्चात्र चतुर्युगकृतो विधिः।।**
**[५]तदेतद्भारतं वर्षं सर्वबीजं द्विजोत्तम।**
**ब्रह्मत्वममरेशत्वं देवत्वं मर्त्यतां तथा।।**
**[६]मृगपश्वप्सरोयोनिस्तद्वत्सर्वे सरीसृपाः।**
**स्थावराणां च सर्वेषामितो ब्रह्मञ्शुभाशुभैः।।**
**[७]प्रयान्ति कर्मभूर्ब्रह्मन्नान्यलोकेषु विद्यते।**
**देवानामपि विप्रर्षे सदैवैष मनोरथः।।**
**[८]अपि मानुष्यमाप्स्यामो देवत्वात्प्रच्युताः क्षितौ।**
**मनुष्यः कुरुते तत्तु यन्न शक्यं सुरासुरैः।।**
**[९]तत्कर्मनिगडग्रस्तैः स्वकर्मख्यापनोत्सुकैः।**
**न किंचित्क्रियते कर्म सुखलेशोपबृंहितैः।।**

(१) **मार्क.** ५४।३; **चव्र.** २६ न्यत्र मर्त्यानां (त्र मनुष्याणां) पू.; **पप्र.** ५४ पू.

(२) **मार्क.** ५४।८ द्वितीयार्धं नास्ति; **चव्र.** २६ नास्तथा (नाः स्मृताः) तृतीयार्धं नास्ति; **पप्र.** ५४ सर्वं चव्रवत्.

(३) **मार्क.** ५४।९-१०; **चव्र.** २६ तदा (तथा) तृतीयार्धमात्रम्; **पप्र.** ५४ सर्वं चव्रवत्.

(४) **मार्क.** ५४।५९.

(५) **मार्क.** ५४।६१; **चव्र.** २६ त्वं मर्त्यतां तथा (त्वमपि दुर्लभम्); **पप्र.** ५४ चव्रवत्.

(६) **मार्क.** ५४।६२; **चव्र.** २६ पूर्वार्धे (मृगपक्ष्यौषधिचरायोनिस्तद्वदतोऽश्नुते।) मितो (मतो) शुभैः (शुभे); **पप्र.** ५४ पूर्वार्धे (मृगपश्वोषधिवरा योनीस्तद्वदतोऽश्नुते) मितो (मतो) शुभैः (शुभे).

(७) **मार्क.** ५४।६३ सदैवै (सदा ए); **चव्र.** २६-२७; **पप्र.** ५४.

(८) **मार्क.** ५४।६४; **चव्र.**२७ तत्तु यन्न (यद्यत्तन्न);**पप्र.** ५४.

(९) **मार्क.** ५४।६५.

द्वीपपञ्चके केवलं निवृत्तमेव कर्म, नान्यत्। तथा वक्ष्यति हि 'यथोक्तकर्मकारित्वात्' इत्यादि। वैच.

**[1]अतः संप्राप्यते स्वर्गो मुक्तिमस्मात्प्रयान्ति च।**
**तिर्यक्त्वं नरकं वाऽपि यान्त्यतः पुरुषा मुने।।**

तस्मात् सर्वशुभाशुभमत्रत्येनैव कर्मणा प्राप्यत इत्याह – अत इति। स्वर्गः स्वर्गलोकादिः। मुक्तिं चतुर्विधाम्। अपिशब्दात् कर्मसाध्यानन्यानपि लोकानित्यर्थः। वैच.

**इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते।**
**न खल्वन्यत्र मर्त्यानां कर्म भूमौ विधीयते।।**

इहैव प्रवृत्तिनिवृत्त्युभयकर्मसाध्यस्वर्गापवर्गादिप्राप्तिमनुवदन्नन्यत्र तदभावं दर्शयति – इत इति। केवला मुक्तिश्चान्यत्रापि स्यात्, 'तदुपर्यपि बादरायणः संभवात्' (ब्रसू. १।३।२६) इति देवादीनामपि ब्रह्मविद्याधिकारस्य सूचनात्। मध्यः भूर्लोकः, अन्तः नरकादिः। कर्म उभयात्मकं न विधीयते शास्त्रेण न प्रतिपाद्यते। वैच.

**पूर्वे किराता यस्य स्युः पश्चिमे यवनाः स्थिताः।**
**ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः।**
**इज्यायुद्धवणिज्याद्यैर्वर्तयन्तो व्यवस्थिताः।।**

वर्तयन्तः इति स्वार्थे णिच्। वैच.

**[2]तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः।**
**दानानि चात्र दीयन्ते परलोकार्थमादरात्।।**
**पुरुषैर्यज्ञपुरुषो जम्बुद्वीपे सदेज्यते।**
**यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा।।**

यज्ञैः यज्ञस्य पुरुषो भोक्ता यज्ञस्वरूपो विष्णुः अत्रैवेज्यते। अन्यद्वीपेषु प्लक्षादिषु अन्यथा सोमवायुसूर्यादिरूपः। वैच.

**अत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने।**
**यतो हि कर्मभूरेषा अतोऽन्या भोगभूमयः।।**
**[3]अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।**
**कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयम्।।**

(१) **विष्णु.** २।३।४-५, ८-९.

(२) **विष्णु.** २।३।२०-२२.

(३) **विष्णु.** २।३।२३; **ब्रक.** ४५ चयम् (चयात्); **चव्र.** २७ जन्मस (जन्म स) चयम् (चरात्); **कृर.** ४२ ब्रकवत्; **संम.** ३ ब्रकवत्; **पप्र.** ५५ ब्रकवत्.

**[1]गायन्ति देवाः किल गीतकानि**
**धन्यास्तु ये भारतभूमिभागे।**
**स्वर्गापवर्गास्पदहेतुभूते**
**भवन्ति भूयः पुरुषाः सुरत्वात्।।**

स्वर्गे देवत्वप्राप्तेरपि मानुष्यमतिदुर्लभमिति देवगीतं प्रमाणयति – गायन्तीति। स्वर्गश्च (अपवर्गश्च) आस्पदं प्राप्यं स्थानम्, तस्य हेतुभूते। मार्गभूते इति वा पाठः। भारताख्ये भूभागे ये पुरुषा भवन्ति ते च सुरत्वात् अस्माकं सुरत्वमपेक्ष्य भूयः अधिकं धन्याः, उपचीयमानसुकृतसंचयात्। वैच.

**[2]कर्माण्यसंकल्पिततत्फलानि**
**संन्यस्य विष्णौ परमात्मरूपे।**
**अवाप्य तां कर्ममहीमनन्ते**
**तस्मिंल्लयं ये त्वमलाः प्रयान्ति।।**

भारतस्य मोक्षहेतुत्वमप्याह – कर्माणीति। तां कर्ममहीमवाप्य असंकल्पितानि तानि प्रसिद्धानि फलानि येषां तानि कर्माणि विष्णौ संन्यस्य अमलाः सन्तः तस्मिन्ननन्ते लयम् ऐक्यं प्रयान्ति। 'तमालयम्' इति पाठे आलयं स्थानम् इत्यर्थः। वैच.

**[3]जानीम नैतत्क्व वयं विलीने**
**स्वर्गप्रदे कर्मणि देहबन्धम्।**
**प्राप्स्याम धन्याः खलु ते मनुष्या**
**ये भारते नेन्द्रियविप्रहीनाः।।**

युष्माकमपि स्वर्गभोगानन्तरं भारते जन्म भविष्यतीति चेत्तन्न ज्ञायत इत्याह – जानीमेति। स्वर्गप्रदे कर्मणि भोगेन विलीने सति कुत्र देहबन्धं जन्म प्राप्स्याम इति न जानीमः। ये त्वद्य भारते मनुष्याः सन्ति ते खलु निश्चितं धन्याः,

(१) **विष्णु.** २।३।२४; **ब्रक.** ४५ हेतु (मार्ग); **चव्र.** २७ ब्रकवत्; **कृर.** ४२ किल (खलु) हेतु (मार्ग); **पप्र.** ५५ ब्रकवत्.

(२) **विष्णु.** २।३।२५; **ब्रक.** ४५ संन्यस्य विष्णौ (सत्यस्य विष्णोः) रूपे (भूते); **चव्र.** २७; **कृर.** ४२; **पप्र.** ५५ संन्यस्य विष्णौ (सत्यस्य विष्णोः).

(३) **विष्णु.** २।३।२६.

अनायासेन स्वर्गस्य मोक्षस्य वा प्राप्तेः। इन्द्रियविप्रहीनाः अन्धपङ्ग्वादयः, ते न भवन्ति, इन्द्रियवत्त्वमात्रेण तदुभयसिद्धेः। वैच.

## विष्णुधर्मोत्तरपुराणम्

भारतार्यावर्तब्रह्मावर्तलक्षणानि, भारते युगावस्थितिः, भारतं कर्मभूमिः, प्रभासपुष्करादयो धर्मदेशाः

**[1]हिमाचलाद्दक्षिणतो वर्षं यादव भारतम्।**
**कर्मभूमिर्महीपाल यत्र वर्तामहे वयम्।।**
**भारतेऽस्मिन्युगावस्था केशवेन विनिर्मिता।।**
**[2]कृत्वा शुभं कर्म तु भारतेऽस्मिन्**
**द्वीपेषु सर्वेषु नराः प्रयान्ति।।**
**[3]चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते।**
**स म्लेच्छविषयो ज्ञेय आर्यावर्तमतः परम्।।**
**सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।**
**तं देवविहितं देशं ब्रह्मावर्तं प्रचक्षते।।**
**[4]प्रभासे पुष्करे काश्यां नैमिषेऽमरकण्टके।**
**गङ्गायां सरयूतीरे निवसेद्धार्मिको द्विजः।।**

## श्रीमद्भागवतपुराणम्

भारतमेव कर्मभूमिः, अन्या भोगभूमयः

**[5]तत्रापि भारतमेव वर्षं कर्मक्षेत्रमन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति।।**

(१) **विध.** १।७।२९-३०.
(२) **विध.** १।८।१७.
(३) **विध.** ३।२३३।६४-६५.
(४) **स्मृच.** १।२१ नैमिषे (नैमिशे); **मुक्ता.** १० नैमिषे (निमेषे) व्यासः; **पप्र.** ६१.
(५) **भाग.** ५।१७।११.

**[1]अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्व्य आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते, यथावर्णविधानमपवर्गश्चापि भवति।।**

लब्धं जन्म यैस्तैः पुरुषैः सात्त्विकादिना स्वकृतेन कर्मणा दिव्यादिगतय आत्मनो विधीयन्ते साध्यन्ते। हि यस्मात् सर्वा एव गतयः कर्मानुसारेण सर्वेषां भवन्ति। यस्य वर्णस्य यत् विधानं मोक्षप्रकारः संन्यासवनस्थत्वादिः तदनतिक्रमेणास्मिन्नेव वर्षे नृणामपवर्गश्च भवति। एतच्च कर्मादिबहुसाधनसंभवाभिप्रायेणोक्तम्, न त्वन्यत्रापवर्गाभावेन, 'तदुपर्यपि बादरायणः संभवात्' (ब्रसू. १।३।२६) इति देवानामपि मोक्षस्य सूचितत्वात्। श्रीटी.

## लिङ्गपुराणम्

भारतवर्षस्य वर्णनं कर्मभूमित्वं च

**[2]केचिन्म्लेच्छाः पुलिन्दाश्च नानाजातिसमुद्भवाः।**
**पूर्वे किरातास्तस्यान्ते पश्चिमे यवनाः स्मृताः।**
**ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च सर्वशः।।**
**इज्यायुद्धवणिज्याभिर्वर्तयन्तो व्यवस्थिताः।**
**तेषां संव्यवहारोऽयं वर्ततेऽत्र परस्परम्।।**
**धर्मार्थकामसंयुक्तो वर्णानां तु स्वकर्मसु।**
**संकल्पश्चाभिमानश्च आश्रमाणां यथाविधि।।**

नवममेतद्भारतवर्षसंज्ञं द्वीपं वर्णयति – केचिदित्यादिना। शितो.

**इह स्वर्गापवर्गार्थं प्रवृत्तिर्यत्र मानुषी।।**

इह भारतखण्डे। यत्र भारतवर्षे। मानुषी प्रवृत्तिः मानुषजन्मेत्यर्थः। तेषां भारतवर्षीयाणामित्यर्थः। युगकर्माणि कृतादियुगधर्माः। एतदेवोक्तं विष्णुपुराणे – 'चत्वारि भारते वर्षे युगान्यत्र महामुने। कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित्।।' इति। शितो.

(१) **भाग.** ५।१९।१९.
(२) **लिङ्ग.** १।५२।२८-३२.

## स्कन्दपुराणम्

भारतवर्षवर्णनम्, भारतमेव कर्मभूमिः, अन्या भोगभूमयः, कुरुक्षेत्रादीनां प्रशंसा, वर्ज्यदेशाः, आपदि वर्ज्यदेशेऽपि निवासः

**[1]देशेऽस्मिन् भारते जन्म प्राप्य मानुष्यमध्रुवम्।**
**न कुर्यादात्मनः श्रेयस्तेनाऽऽत्मा वञ्चितश्चिरम्।।**
**[2]नाभेः पुत्रश्च ऋषभ ऋषभाद्भरतोऽभवत्।**
**तस्य नाम्ना त्विदं वर्षं भारतं चेति कीर्त्यते।।**
**अत्र धर्मार्थकामानां मोक्षस्य च उपार्जनम्।**
**अन्यत्र भोगभूमिश्च सर्वत्र कुरुनन्दन।।**
**[3]कर्मभूमिं समीहन्ते सर्वे स्वर्गौकसो द्विज।**
**यत्तत्रार्जितभोक्तारः पदेषूच्चावचेष्वमी।।**

यत् यस्मात्। तत्र कर्मभूमौ। पदेषु स्थानेषु। उच्चावचेषु उत्कृष्टापकृष्टेषु नानाविधेष्वित्यर्थः। रामा.

**नाऽऽर्यावर्तसमो देशो न काशीसदृशी पुरी।।**

'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः*।।' इति। रामा.

**जम्बुद्वीपसमो द्वीपो न क्वापि जगतीतले।**
**तत्रापि नव वर्षाणि भारतं तत्र चोत्तमम्।**
**कर्मभूमिरियं प्रोक्ता देवानामपि दुर्लभा।।**
**भारतं प्रथमं वर्षं मेरोर्दक्षिणतः स्थितम्।।**

प्रथमं मुख्यम्। रामा.

**तत्रापि हिमविन्ध्याद्रेरन्तरं पुण्यदं परम्।**
**गङ्गायमुनयोर्मध्ये ह्यन्तर्वेदीभुवः पराः।।**

हिमविन्ध्याद्रेः हिमालयसहितविन्ध्यपर्वतस्येत्यर्थः। हिमविन्ध्याद्र्योरिति क्वचित्पाठः। अन्तर्वेदीभुवः अन्तर्वेदीनाम्न्यो भुवः पराः उत्कृष्टाः। रामा.

**कुरुक्षेत्रं हि सर्वेषां क्षेत्राणामधिकं ततः।**
**ततोऽपि नैमिषारण्यं स्वर्गसाधनमुत्तमम्।।**

निमिषेणेदं दानवं बलमस्मिन्नरण्ये मया निहतमिति नैमिषारण्यम्। (अथवा) ब्रह्मणा विसृष्टस्य चक्रस्य नेमिः शीर्यते यत्र तन्निमिशम्, निमिशमेव नैमिशम्। वायसराक्षसादिवत्स्वार्थे तद्धितः। रामा.

**[1]उत्तरे हिमवानस्ति क्षीरोदो दक्षिणे स्मृतः।।**
**एतस्मिन्नन्तरे देवि भारतं क्षेत्रमुत्तमम्।**
**कृतं त्रेता द्वापरं च तिष्यं युगचतुष्टयम्।।**
**अत्रैवैषा युगावस्था चतुर्वर्णश्च वै जनः।।**
**भारतं नाम यद्वर्षं दाक्षिणात्यं मयोदितम्।**
**दक्षिणापरतो यस्य पूर्वेण च महोदधिः।।**
**हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः।।**
**तदेतद्भारतं वर्षं सर्वबीजं वरानने।**
**तत्कर्मभूमिर्नान्यत्र संप्राप्तिः पुण्यपापयोः।।**
**देवानामपि देवेशि सदैवैष मनोरथः।**
**अपि मानुष्यमाप्स्यामो भारते प्रत्युत क्षितौ।।**
**[2]अङ्गवङ्गकलिङ्गांश्च पार्वतांस्तत्समीपगान्।**
**सिन्धुसौवीरसौराष्ट्रान् केरलान्ध्रकमालवान्।।**
**[3]निवासाय द्विजो नित्यमनापदि विवर्जयेत्।**
**एतानप्यापदि गृही संश्रयेद्वृत्तिकर्षितः।।**

## गरुडपुराणम्

धर्मदेशलक्षणम्

**[4]यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्मान्निबोधत।।**

---

* हिमम् आलाति आदत्ते इति हिमालशब्दमाश्रित्य षष्ठीद्विवचनमिदं साधनीयम्।

(१) **स्कन्द.** १।२।२।४८-४९.

(२) **स्कन्द.** १।२।३७।५७-५८.

(३) **स्कन्द.** ४।१।२२।३६-३७, ५२-५३, ५५-५७.

(१) **स्कन्द.** ७।१।११। ८-१५.

(२) **स्मृच.** १।२४; **निप्र.** २।४८० (अङ्गवङ्गकलिङ्गोड्रान् पार्वतीयान् मयांस्तथा। सिन्धुसौराष्ट्रसौवीरान् पारदानान्ध्रमालवान्।।); **मुक्ता.** १० (अङ्गवङ्गकलिङ्गान्ध्रान् पार्वतीयान् खषांस्तथा। सिन्धुसौवीरसौराष्ट्रान्पारदानान्ध्रमालवान्।।) चन्द्रिकायाम्; **पप्र.** ६० द्वितीयचरणे (पर्वतांश्च खशांस्तथा) केरलान्ध्रक (पारदानन्ध्र).

(३) **स्मृच.** १।२४ विवर्ज (विसर्ज) उत्तरार्धे (एतेष्वापदि गत्वा तु तन्निवृत्तौ पुनर्व्रजेत्); **निप्र.** २।४८० नप्यापदि (न्यपि यदि); **मुक्ता.** १० कर्षि (कर्शि) चन्द्रिकायाम्; **पप्र.** ६० निवासाय (विवाहने).

(४) **गरुड.** १।९३।३.

[1]कृष्णसारो मृगो यत्र धर्मदेशः स उच्यते।
ब्रह्माद्या देवताः सर्वास्तत्र तिष्ठन्ति सर्वशः।।

## पद्मपुराणम्

निवासानर्हदेशलक्षणम्, निवासार्हदेशाः,
कर्मभूमित्व – दुर्लभमनुष्यजन्मा-
श्रयत्वादिगुणैर्भारतप्रशंसा,
भारतभिन्नाः सर्वा
भोगभूमयः

[2]अधार्मिकैर्वृते ग्रामे न व्याधिबहुले वसेत्।
शूद्रराज्ये च न वसेन्न पाखण्डजनैर्वृते।।
हिमवद्विन्ध्ययोर्मध्यं पूर्वपश्चिमयोः शुभम्।
मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेद्द्विजः।।
कृष्णो वा यत्र चरति मृगो नित्यं स्वभावतः।
पुण्या वा विश्रुता नद्यस्तत्र वा निवसेद्द्विजः।।
अर्धक्रोशं नदीकूलं वर्जयित्वा द्विजोत्तमः।
नान्यत्र निवसेत्पुण्यं नास्त्यत्र ग्रामसंनिधौ।।
[3]देशेऽस्मिन् भारते पुण्ये जन्म लब्धं सुदुर्लभम्।
अत्र जन्मसहस्राणां सहस्रैरपि मातरः।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात्।।
अत्रैव परमा मुक्तिर्भुक्तयश्चापि पुष्कलाः।
कर्मभूमिरियं प्रोक्ता ततोऽन्या भोगभूमयः।।
तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः।
दानानि चात्र दीयन्ते परलोकार्थमादरात्।।
अत्रैव माघस्नानं च धन्याः कुर्वन्ति केचन।
ब्रह्मत्वममरेशत्वं देवत्वं मारुतं तथा।।
लभन्तेऽत्र तपः कृत्वा नराः कर्मानुरूपतः।
सर्वेषामेव देशानामयं देशः परः स्मृतः।।
यतः स्वर्गश्च मोक्षश्च धर्मः संप्राप्यते नरैः।
देशेऽस्मिन् भारते पुण्ये प्राप्य मानुष्यमध्रुवम्।।
यः कुर्यान्नाऽऽत्मनः श्रेयस्तेनाऽऽत्मा खलु वञ्चितः।
मनुष्यत्वेऽपि विप्रत्वं यः प्राप्यातीव दुर्लभम्।।
न करोत्यात्मनः श्रेयः कोऽन्यस्तस्मादचेतनः।
अतः कालान्तराद्याति मानुष्यमतिदुर्लभम्।।
तत्संप्राप्य तथा कुर्यान्न गच्छेन्नरकं यथा।।
कदा भारतमभ्येत्य माघमासे बहिर्जले।
उषःकाले निमज्जाम इति वाञ्छन्ति निर्जराः।।
गायन्ति देवाः किल गाय(?न)कानि
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात्।।
जानाम नैतत्क्व वयं विलीने
स्वर्गप्रदे कर्मणि देहबन्धम्।
प्राप्स्याम धन्याः खलु ते मनुष्या
ये भारते नेन्द्रियविप्रहीणाः।।

## ब्रह्मपुराणम्

विस्तरेण भारतवर्षवर्णनम्, चतुर्विधपुरुषार्थ-
साधनकर्मभूमित्वादिना विस्तरेण
भारतप्रशंसा

[1]उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे।
वर्षं तद्भारतं नाम भारती यत्र संततिः।।
नवयोजनसाहस्रो विस्तारश्च द्विजोत्तमाः।
कर्मभूमिरियं स्वर्गमपवर्गं च पृ(?ग)च्छताम्।।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः।
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः।।
अतः संप्राप्यते स्वर्गो मुक्तिमस्मात्प्रयाति वै।
तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा द्विजाः।।
इतः स्वर्गश्च(?र्गं च) मोक्षश्च(?क्षं च) मध्यं चान्ते(?न्तं) च गच्छति।
न खल्वन्यत्र मर्त्यानां कर्म भूमौ विधीयते।।
योजनानां सहस्रं च द्वीपोऽयं दक्षिणोत्तरात्।
पूर्वे किरातास्तिष्ठन्ति पश्चिमे यवनाः स्थिताः।।
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः।
इज्यायुद्धवणिज्याद्यैर्वृत्तिमन्तो व्यवस्थिताः।।
वसन्ति भारते वर्षे युगान्यत्र महामुने।
कृतं त्रेता द्वापरं च कलिश्चान्यत्र न क्वचित्।।

(१) गरुड. २।१२।१०.
(२) पद्म. १।५५।२०-२३.
(३) पद्म. ६।२२८।७-१८.

(१) ब्रह्म. १९।१-५, ८-९, २०-२७.

तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः।
दानानि चात्र दीयन्ते परलोकार्थमादरात्।।
पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते।
यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा।।
अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने।
यतो हि कर्मभूरेषा यतोऽन्या भोगभूमयः।।
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात्।।
गायन्ति देवाः किल गीतकानि
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदहेतुभूते
भवन्ति भूयः पुरुषा मनुष्याः।।
कर्माण्यसंकल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मरूपे।
अवाप्य तां कर्ममहीमनन्ते
तस्मिँल्लयं ये त्वमलाः प्रयान्ति।।
जानीम नैतत्क्व वयं विलीने
स्वर्गप्रदे कर्मणि देहबन्धम्।
प्राप्स्यन्ति( ?प्स्याम) धन्याः खलु ते मनुष्या
ये भारते नेन्द्रियविप्रहीणाः।।
[1]पृथिव्यां भारतं वर्षं कर्मभूमिरुदाहृता।
कर्मणः फलभूमिश्च स्वर्गं च नरकं तथा।।
तस्मिन्वर्षे नरः पापं कृत्वा धर्मं च भो द्विजाः।
अवश्यं फलमाप्नोति अशुभस्य शुभस्य च।।
ब्राह्मणाद्याः स्वकं कर्म कृत्वा सम्यक्सुसंयताः।
प्राप्नुवन्ति परां सिद्धिं तस्मिन्वर्षे न संशयः।।
धर्मं चार्थं च कामं च मोक्षं च द्विजसत्तमाः।
प्राप्नोति पुरुषः सर्वं तस्मिन्वर्षे सुसंयतः।।
इन्द्राद्याश्च सुराः सर्वे तस्मिन्वर्षे द्विजोत्तमाः।
कृत्वा सुशोभनं कर्म देवत्वं प्रतिपेदिरे।।
अन्येऽपि लेभिरे मोक्षं पुरुषाः संयतेन्द्रियाः।
तस्मिन्वर्षे बुधाः शान्ता वीतरागा विमत्सराः।।
ये चापि स्वर्गे तिष्ठन्ति विमानेन गतज्वराः।
तेऽपि कृत्वा शुभं कर्म तस्मिन्वर्षे दिवं गताः।।

(१) ब्रह्म. २७।२-९, ६५-७९.

निवासं भारते वर्ष आकाङ्क्षन्ति सदा सुराः।
स्वर्गापवर्गफलदे तत्पश्यामः कदा वयम्।।
एवं तु भारतं वर्षं नवसंस्थानसंस्थितम्।
दक्षिणे परतो यस्य पूर्वे चैव महोदधिः।।
हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः।
तदेतद्भारतं वर्षं सर्वबीजं द्विजोत्तमाः।।
ब्रह्मत्वममरेशत्वं देवत्वं मरुतां तथा।
मृगयक्षाप्सरोयोनिं तद्वत्सर्पसरीसृपाः।।
स्थावरणां च सर्वेषामितो विप्राः शुभाशुभैः।
प्रयान्ति कर्मभूर्विप्रा नान्या लोकेषु विद्यते।।
देवानामपि भो विप्राः सदैवैष मनोरथः।
अपि मानुष्यमाप्स्यामो देवत्वात्प्रच्युताः क्षितौ।।
मनुष्यः कुरुते यत्तु तन्न शक्यं सुरासुरैः।
तत्कर्मनिगडग्रस्तैस्तत्कर्मक्षपणोन्मुखैः।।
न भारतसमं वर्षं पृथिव्यामस्ति भो द्विजाः।
यत्र विप्रादयो वर्णाः प्राप्नुवन्त्यभिवाञ्छितम्।।
धन्यास्ते भारते वर्षे जायन्ते ये नरोत्तमाः।
धर्मार्थकाममोक्षाणां प्राप्नुवन्ति महाफलम्।।
प्राप्यते यत्र तपसः फलं परमदुर्लभम्।
सर्वदानफलं चैव सर्वयज्ञफलं तथा।।
तीर्थयात्राफलं चैव गुरुसेवाफलं तथा।
देवताराधनफलं स्वाध्यायस्य फलं द्विजाः।।
यत्र देवाः सदा हृष्टा जन्म वाञ्छन्ति शोभनम्।
नानाव्रतफलं चैव नानाशास्त्रफलं तथा।।
अहिंसादिफलं सम्यक्फलं सर्वाभिवाञ्छितम्।
ब्रह्मचर्यफलं चैव गार्हस्थ्येन च यत्फलम्।।
यत्फलं वनवासेन संन्यासेन च यत्फलम्।
इष्टापूर्तफलं चैव तथाऽन्यच्छुभकर्मणाम्।।
प्राप्यते भारते वर्षे न चान्यत्र द्विजोत्तमाः।
कः शक्नोति गुणान्वक्तुं भारतस्याखिलान्द्विजाः।।
एवं सम्यङ्मया प्रोक्तं भारतं वर्षमुत्तमम्।।
[1]पृथिव्यां भारतं वर्षं दण्डकं तत्र पुण्यदम्।
तस्मिन्क्षेत्रे कृतं कर्म भुक्तिमुक्तिप्रदं नृणाम्।।

(१) ब्रह्म. ८८।१८.

## ब्रह्मवैवर्तपुराणम्

भारतवर्षस्य सीमा कर्मभूमि-
त्वादिभिः प्रशंसा च

[१]कर्मोपार्जनयोग्यं च पुण्यक्षेत्रं च भारतम्।।
[२]कृत्वा शुभाशुभं कर्म पुण्यक्षेत्रे च भारते।
अन्यत्र तत्फलं भुङ्क्ते कर्मी कर्मनिबन्धनात्।।
हिमालयादासमुद्रं पुण्यक्षेत्रं च भारतम्।
श्रेष्ठं सर्वस्थलानां च मुनीनां च तपःस्थलम्।।
[३]सर्वेषु भारतं वर्षं सद्यो मुक्तिप्रदं शुभम्।।

## वराहपुराणम्

अशुचिदेशे स्वल्पद्वीपे दुर्जनसंनिधौ च कर्म-
करणं निषिद्धम्, आपदि स्वल्प-
द्वीपेऽपि कर्मानुमतिः,
कर्मार्हद्वीप-
लक्षणम्

[४]न कुर्यादशुचौ देशे जपस्नानादि कर्म च।
न द्वीपे दुर्जनानां च संनिधौ वा कथंचन।।
तिष्ठेयुर्यत्र वै द्वीपे त्रिंशद्गावो ह्यनावृताः।
तस्मिन् द्वीपेऽपि कुर्वीत पुण्यकर्माणि सर्वशः।।
स्वल्पेऽपि पुण्यहानिः स्यादापत्तौ नैव दोषकृत्।।

## कूर्मपुराणम्

भारतवर्णनम्, भारतं कर्मभूमिः,
भारते एव युगव्यवस्था

[५]भारतेषु स्त्रियः पुंसो नानावर्णाः प्रकीर्तिताः।
नानादेवार्चने युक्ता नानाकर्माणि कुर्वते।।
परमायुः स्मृतं तेषां शतं वर्षाणि सुव्रताः।
नवयोजनसाहस्रं वर्षमेतत्प्रकीर्तितम्।
कर्मभूमिरियं विप्रा नराणामधिकारिणाम्।।
महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः।
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः।।
इन्द्रद्वीपः कसेरुक्मान् ताम्रपर्णो गभस्तिमान्।
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः।
अयं तु नवमस्तेषां द्वीपः सागरसंस्थितः।।
योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः।
पूर्वे किरातास्तस्यान्ते पश्चिमे यवनास्तथा।।
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्रास्तथैव च।
इज्यायुद्धवणिज्याभिर्वर्तयन्त्यत्र मानवाः।।
चत्वारि भारते वर्षे युगानि कवयोऽब्रुवन्।
कृतं त्रेता द्वापरं च कलिश्चान्यत्र न क्वचित्।।

(१) ब्रह्मवै. ३।१२।२८.
(२) ब्रह्मवै. ४।५९।८६-८७.
(३) ब्रह्मवै. ४।१३३।३५.
(४) आभू. ४५.
(५) कूर्म. १।४७।२१-२३, २६-२७, ४५.

## भविष्यपुराणम्

सामान्यतः पुण्यदेशलक्षणम्, ब्रह्मावर्तब्रह्मर्षिदेश-
मध्यदेशार्यावर्तयाज्ञिकदेशलक्षणानि, ब्रह्मर्षि-
देशस्थितब्राह्मणस्य सर्वधर्मोपदेशाधिकारः,
ब्रह्मावर्तादिषु द्विजानां शूद्रस्य च
निवासः क्रमेण नियतोऽनिय-
तश्च, ब्रह्मावर्तादीनां
न्यूनाधिकभावः,
भारतप्रशंसा

[१]न हीयते यत्र धर्मश्चतुष्पात्सकलो द्विजाः।
स देशः परमो विप्राः स च पुण्यो मतो मम।।
विद्वद्भिः सेवितो धर्मो यस्मिन्देशे प्रवर्तते।
शास्त्रोक्तश्चापि विप्रेन्द्राः स देशः परमो मतः।।
[२]सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते।।
[३]कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनयः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरम्।।
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षन्ति पृथिव्यां सर्वमानवाः।।
[४]हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः।।

(१) भविष्य. १।७।४५-४७.
(२) भविष्य. १।७।६०-६१ : १।१८१।४१-४२.
(३) भविष्य. १।७।६२-६४.
(४) भविष्य. १।७।६४-६५ : १।१८१।४२-४३ पूर्वार्धे (हिमवद्विन्ध्यशैलस्य यदन्तरमुदाहृतम्।).

[1]आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः।।
[2]अटते यत्र कृष्णा गौर्मृगो नित्यं स्वभावतः।
स ज्ञेयो याज्ञिको देशो म्लेच्छदेशस्त्वतः परः।।
[3]एतान्नित्यं शुभान्देशान्संश्रयीत द्विजोत्तमः।
यस्मिन्कस्मिंश्च निवसेत्पादजो वृत्तिकर्शितः।।
[4]प्रकीर्तितेयं धर्मस्य बुधैर्योनिर्द्विजोत्तमाः।।
[5]ब्रह्मावर्तः परो देश ऋषिशस्तस्त्वनन्तरः।
मध्यदेशस्ततोऽप्यन्य आर्यावर्तस्त्वनन्तरः।।

(१) अनन्तरः ईषन्न्यूनः। नञ् ईषदर्थे, 'अलवणा यवागूः' इतिवत्।

* ब्रक. ४६

(२) अनन्तर इत्यत्र नञ् ईषदर्थे, 'अनुदरा कन्या' इतिवत्। अन्तरशब्दो भेदवचनः। भेदश्च वैलक्षण्यम्। तच्च न्यूनतया, उत्तरोत्तरं न्यूनदेशस्यैवाभिधानात्। यथा 'मध्यदेशस्ततो न्यूनः' इति। तथा चेषन्न्यून इत्यर्थः।

पप्र. ५५

[6]आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः।
आर्यवर्णाः स्थितास्तत्र विन्ध्यान्ते वर्णसंकराः।।

* चव्र., कूर., निप्र. ब्रकवत्।

(१) **भविष्य.** १।७।६५-६६ : १।१८१।४३-४४.

(२) **भविष्य.** १।७।६६-६७ : १।१८१।३५ (कृष्णसारस्तु विचरेन्मृगो यत्र स्वभावतः। यज्ञियः स तु देशः स्यान्म्लेच्छदेशस्त्वतः परः।।).

(३) **भविष्य.** १।७।६७-६८ : १।१८१।४४-४५ (एतान्विज्ञाय सद्देशान्त्संश्रयेत प्रयत्नतः। शूद्रस्तु तस्मिंस्तस्मिन्वा निवसेद्वृत्तिकर्शितः।।).

(४) **भविष्य.** १।७।६८ : १।१८१।४५ (एषा धर्मस्य वै योनिः समासात्कथिता तव।।).

(५) **भविष्य.** १।१८१।३४; **अप.** १।२ शस्तस्त्व (देशस्त्व) ऽप्यन्य (न्यून) पुराणम्; **ब्रक.** ४५-४६ अपवत्; **स्मृच.** १।१८ र्तस्त्वनन्तरः (र्तस्ततः परः) शेषं अपवत्, सुमन्तुः; **चव्र.** २७ वर्तः प (वर्तात्प) शस्तस्त्व (देशस्त्व) नन्तरः (नन्तरम्); **कृर.** ४२ अपवत्; **निप्र.** २।४७४ शस्तस्त्व (देशस्त्व) नन्तरः (नन्तरम्) ऽप्यन्य आ (नूनमा); **मुक्ता.** ९ अपवत्, व्यासः; **पप्र.** ५५ अपवत्.

(६) **भविष्य.** ३।३।३।३१; **संदी.** १।१८ पू. (=).

[1]सर्वेषामेव देशानां मध्यदेशः परः स्मृतः।
अतः स्वर्गश्च मोक्षश्च यशः संप्राप्यते नरैः।।
एतस्मिन्भारते पुण्ये प्राप्य मानुष्यमध्रुवम्।
यः कुर्यादात्मनः श्रेयस्तेनाऽऽत्मा रक्षितः स्वयम्।
यः कुर्यान्नाऽऽत्मनः श्रेयस्तेनाऽऽत्मा वञ्चितः स्वयम्।।
भोगभूमिः स्मृतः स्वर्गः कर्मभूमिरियं मता।
इह यत्क्रियते कर्म स्वर्गे तदुपभुज्यते।।

## नारदपुराणम्

कर्मभूमित्वदेवेप्सितत्वादिगुणै-
र्भारतप्रशंसा, ब्रह्मावर्त-
लक्षणम्

[2]क्षारोदधेरुत्तरं यद्धिमाद्रेश्चैव दक्षिणम्।
ज्ञेयं तद्भारतं वर्षं सर्वकर्मफलप्रदम्।।
अत्र कर्माणि कुर्वन्ति त्रिविधानि तु नारद।
तत्फलं भुज्यते चैव भोगभूमिष्वनक्रमात्।।
भारते तु कृतं कर्म शुभं वाऽशुभमेव च।
तत्फलं क्षयि विप्रेन्द्र भुज्यतेऽन्यत्र जन्तुभिः।।
अद्यापि देवा इच्छन्ति जन्म भारतभूतले।
संचितं सुमहत्पुण्यमक्षय्यममलं शुभम्।।
कदा लभामहे जन्म वर्षभारतभूमिषु।
कदा पुण्येन महता यास्यामः परमं पदम्।।
दानैर्वा विविधैर्यज्ञैस्तपोभिर्वाऽथवा हरिम्।
जगदीशं समेष्यामो नित्यानन्दमनामयम्।।
संप्राप्य भारते जन्म सत्कर्मसु पराङ्मुखः।
पीयूषकलशं मुक्त्वा विषभाण्डमुपाश्रितः।।
कर्मभूमिं समासाद्य यो न धर्मं समाचरेत्।
स च सर्वाधमः प्रोक्तो वेदविद्भिर्मुनीश्वर।।
शुभं कर्म समुत्सृज्य दुष्कर्माणि करोति यः।
कामधेनुं परित्यज्य अर्कक्षीरं स मार्गति।।
एवं भारतभूभागं प्रशंसन्ति दिवौकसः।
ब्रह्माद्या अपि विप्रेन्द्र स्वभोगक्षयभीरवः।।

(१) **भविष्य.** ४।६।१९९-२०२.

(२) **नारद.** १।३।४६-५१, ६५, ६७-७२, ७९.

**तस्मात्पुण्यतमं ज्ञेयं भारतं वर्षमुत्तमम्।**
**देवानां दुर्लभं वाऽपि सर्वकर्मफलप्रदम्।।**
**अस्मिन्पुण्ये च भूभागे यस्तु सत्कर्मसूद्यतः।**
**न तस्य सदृशः कश्चित्त्रिषु लोकेषु विद्यते।।**
**अस्मिञ्जातो नरो यस्तु स्वकर्मक्षयणोद्यतः।**
**नररूपपरिच्छन्नं स हरिर्नात्र संशयः।।**
**भारते जन्म संप्राप्य नाऽऽत्मानं तारयेत्तु यः।**
**पच्यते निरये घोरे स त्वाचन्द्रार्कतारकम्।।**
**[1]सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।**
**तं देवसेवितं देशं ब्रह्मावर्तं प्रचक्षते।।**

## अग्निपुराणम्

भारतस्य वर्णनं कर्म-
भूमित्वं च

**[1]उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।**
**वर्षं तद्भारतं नाम नवसाहस्रविस्तृतम्।।**
**कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्।।**
**नव भेदा भारतस्य मध्यभेदेऽथ पूर्वतः।**
**किराता यवनाश्चापि ब्राह्मणाद्याश्च मध्यतः।।**

## देवीभागवतम्

भोगभूमिस्वर्गापेक्षया कर्मभूमे-
र्भारतस्य देवैः कृता
प्रशंसा

**[2]अस्मिन्वर्षे लब्धजन्मपुरुषैः स्वस्वकर्मभिः।**
**शुक्ललोहितकृष्णाख्यैर्दिव्यमानुषनारकाः।।**

शुक्ललोहितकृष्णाख्यैः सात्त्विकराजसतामसैः स्वकर्मभिः यथाक्रमं दिव्यमानुषनारका भोगा भवन्तीत्युत्तरेणान्वयः। तिलक.

**भवन्ति विविधाः भोगाः सर्वेषां च निवासिनाम्।**
**यथावर्णविधानेनापवर्गो भवति स्फुटम्।।**
**एतदेव च वर्षस्य प्राधान्यं कार्यसिद्धितः।**
**वदन्ति मुनयो वेदवादिनः स्वर्गवासिनः।।**

एतदेव प्राधान्यमस्य वर्षस्य। किं तत्? कार्यस्य सिद्धितः। सार्वविभक्तिकस्तसिः। अनायासेनेश्वरप्रसादरूपकार्यसिद्धिस्वरूपमित्यर्थः। अनेन हि सर्वलोकापेक्षयाऽयं लोकः प्रधान इति स्वर्गवासिनोऽपि वदन्ति। तिलक.

**अहो अमीषां किमकारि शोभनं**
**प्रसन्न एषां स्विदुत स्वयं हरिः।**
**यैर्जन्म लब्धं नृषु भारताजिरे**
**मुकुन्दसेवौपयिकं स्पृहा हि नः।।**

किं स्वर्गवासिनोऽपि वदन्ति? तत्राऽऽह – अहो इति। अमीषाम् एभिः उतस्वित् अथवा स्वयमेव साधनं विनैव हरिरेषां प्रसन्नोऽभूत्, एवंभूतस्य पुण्यस्य दुष्करत्वात्। भारताजिरे भारताङ्गणे नः केवलं स्पृहैव, यत्र तन्मुकुन्दसेवोपयोगि जन्म नृषु लब्धम्। तिलक.

**किं दुष्करैर्नः क्रतुभिस्तपोव्रतै -**
**र्दानादिभिर्वा द्युजयेन फल्गुना।**
**न यत्र नारायणपादपङ्कज -**
**स्मृतिः प्रमुष्टाऽतिशयेन्द्रियोत्सवात्।।**

स्पृहामेवाऽऽह – किमित्यादिसप्तभिः। दुष्करैः क्रत्वादिभिर्नः फल्गुना तुच्छेन द्युजयेन स्वर्गप्राप्त्या किम्? न किंचित्फलम्। कुतः? यत्र नारायणपादपङ्कजस्मृतिर्नास्ति। प्रयु(? त्यु)त अतिशयितादिन्द्रियोत्सवात् रागात् प्रमुष्टाऽभूत्। तिलक.

**कल्पायुषां स्थानजयात्पुनर्भवा –**
**त्क्षणायुषां भारतभूजयो वरम्।**
**क्षणेन मर्त्येन कृतं मनस्विनः**
**संन्यस्य संयान्त्यभयं पदं हरेः।।**

क्षणम् अल्पमेवाऽऽयुर्येषाम्। वरत्वे हेतुः – मर्त्येन अपि देहेन क्षणेनैव कालेन कृतं कर्म संन्यस्य हरेः पदं सम्यग्यान्ति। तिलक.

**न यत्र वैकुण्ठकथासुधापगा**
**न साधवो भागवतास्तदाश्रयाः।**
**न यत्र यज्ञेशमखा महोत्सवाः**
**सुरेशलोकोऽपि न वै स सेव्यताम्।।**

(१) **नारद.** २।६४।६.
(१) **अग्नि.** ११८।१-२, ५-६.
(२) **देवीभा.** ८।११।१९-२९.

अतो यत्र वैकुण्ठकथामृतनद्यो न सन्ति। तदाश्रयाः कथापगाश्रयाः। महान्तो नृत्याद्युत्सवा येषु तादृशा यज्ञेशस्य मखाश्च पूजाः। स सुरेशस्य ब्रह्मणोऽपि लोको न सेव्यताम्। तिलक.

**प्राप्ता नृजातिं त्विह ये च जन्तवो**
**ज्ञानक्रियाद्रव्यकलापसंभृताम्।**
**न वै यतेरन्नपुनर्भवाय ते**
**भूयो वनौका इव यान्ति बन्धनम्।।**

अमुमुक्षून्नरान्निन्दति - प्राप्ता इति। ज्ञानं च तदर्थाः क्रियाश्च तदर्थानि द्रव्याणि च तेषां कलापेन संभृतां संपूर्णाम्। अपुनर्भवाय मोक्षाय। वनौका इव। वनौकसः पक्षिणः यथा लुब्धकात् मुक्ता अपि पुनः यदि तस्मिन्नेव वृक्षे प्रसक्ता विहरन्ति तर्हि यथा बध्यन्ते तद्वत्। तिलक.

**यैः श्रद्धया बर्हिषि भागशो हवि -**
**र्निरुप्तमिष्टं विधिमन्त्रवस्तुतः।**
**एकः पृथङ्नामभिराहुतो मुदा**
**गृह्णाति पूर्णः स्वयमाशिषां प्रभुः।।**

अहो, भारतवासिनां भाग्यमित्याहुः- यैरिति। 'अग्नये जुष्टं निर्वपामि, इन्द्राय जुष्टं निर्वपामि' इति एवं भागशो निरुप्तं पृथक्कृतम्। कथम्? विधानप्रकारेण, मन्त्रेण, वस्तुतः च पुरोडाशादिभेदेन इष्टां देवताम् उद्दिश्य त्यक्तं निरुप्तं च 'ममेदम्' इति स्वीकृत्य त्यागानन्तरमश्नातीत्यर्थः। पृथक् इन्द्रादिनामभिः आहुतः आहूतः। आशिषां प्रभुः स्वयंपूर्णोऽपि हरिः। तिलक.

**सत्यं दिशत्यर्थितमर्थितो नृणां**
**नैवार्थदो यत्पुनरर्थिता यतः।**
**स्वयं विधत्ते भजतामनिच्छता -**
**मिच्छापिधानं निजपादपल्लवम्।।**

तत्रापि निष्कामाः कृतार्था इत्याहुः - सत्यमिति। प्रार्थितः सन्नर्थितं ददातीति सत्यम्, अथापि परमार्थदो न भवत्येव। यत् यस्मात् यतः दत्तात् अनन्तरं पुनरप्यर्थिता भवति। ननु नार्थितश्चेत् किमपि न दद्यादित्याशङ्क्याऽऽह - अनिच्छतां निष्कामानां तु इच्छानां पिधानम् आच्छादकं सर्वकामपरिपूरकं निजपादपल्लवं स्वयमेव संपादयति। तिलक.

**यद्यत्र नः स्वर्गसुखावशेषितं**
**स्विष्टस्य पूर्तस्य कृतस्य शोभनम्।**
**तेनाजनाभेः स्मृतिमज्जन्मनः स्या -**
**द्वर्षे हरिर्भजतां शं तनोति।।**

**नारायण उवाच –**

**एवं स्वर्गगता देवाः सिद्धाश्च परमर्षयः।**
**प्रवदन्ति च माहात्म्यं भारतस्य सुशोभनम्।।**

## शिवपुराणम्

भारतवर्षलक्षणम्, भारतमेव कर्मभूमिः, देवैः कृता भारतजन्मप्रशंसा, भारते एव युगव्यवस्था

**सनत्कुमार उवाच –**

**'वक्ष्येऽहं भारतं वर्षं हिमाद्रेश्चैव दक्षिणे।**
**उत्तरे तु समुद्रस्य भारती यत्र संसृतिः।।**
**नवयोजनसाहस्रो विस्तारोऽस्य महामुने।**
**स्वर्गापवर्गयोः कर्मभूमिरेषा स्मृता बुधैः।**
**अतः संप्राप्यते पुंभिः स्वर्गो नरक एव च।।**
**चत्वारि भारते वर्षे युगान्यासन्महामुने।**
**कृतादीनि न चान्येषु द्वीपेषु प्रभवन्ति हि।।**
**दानानि चात्र दीयन्ते सुकृतैश्चात्र याज्ञिकैः।**
**तपस्तपन्ति यतयः परलोकार्थमादरात्।।**
**यतो हि कर्मभूरेषा जम्बूद्वीपे महामुने।**
**अत्रापि भारतं श्रेष्ठमतोऽन्या भोगभूमयः।।**
**कदाचिल्लभते मर्त्यः सहस्रैर्मुनिसत्तम।**
**अत्र जन्मसहस्राणां मानुष्यं पुण्यसंचयैः।।**
**स्वर्गापवर्गास्पदमार्गभूते**
**धन्यास्तु ते भारतभूमिभागे।**
**गायन्ति देवाः किल गीतकानि**
**भवन्ति भूयः पुरुषाः सुरास्ते।।**
**अवाप्य मानुष्यमयं कदाचि –**
**द्विहत्य शंभोः परमात्मरूपे।**
**फलानि सर्वाणि तु कर्मजानि**
**यास्याम्यहं तत्तनुतां हि तस्य।।**

(१) **शिव.** ५।१८।१-३, १५-२१.

आप्स्यन्ति धन्याः खलु ते मनुष्याः
सुखैर्युताः कर्मणि संनिविष्टाः।
जनुर्हि येषां खलु भारतेऽस्ति
ते स्वर्गमोक्षोभयलाभवन्तः।।
[१]द्वीपानामेव सर्वेषां कर्मभूरियमुच्यते।
इतः स्वर्गश्च मोक्षश्च प्राप्यते समुपार्जितः।।
देशेऽस्मिन्भारते वर्षे प्राप्य मानुष्यमध्रुवम्।
न कुर्यादात्मनः श्रेयस्तेनाऽऽत्मा खलु वञ्चितः।।
कर्मभूमिरियं विप्र फलभूमिरसौ स्मृता।
इह यत्क्रियते कर्म स्वर्गे तदनुभुज्यते।।

## नरसिंहपुराणम्

भारते एव चातुर्वर्ण्यव्यवस्था सदसत्फलकानि कर्माणि च, सामान्यतो धर्मदेशलक्षणम्

[२]साक्षाद्भारतवर्षमेकं कर्मभूमिश्चातुर्वर्ण्ययुतम्।।
तत्रैव कर्मभिः स्वर्गं कृतैः प्राप्स्यन्ति मानवाः।
मुक्तिश्चात्रैव निष्कामैः प्राप्यते ज्ञानकर्मभिः।
अधोगतिमितो विप्र यान्ति वै पापकारिणः।।
[३]कृष्णसारो मृगो यत्र स्वभावात्तु प्रवर्तते।
तस्मिन् देशे वसन् धर्मं कुरु ब्राह्मणपुंगव।।

## सौरपुराणम्

कुरुक्षेत्रादयो धर्मदेशाः, अङ्गवङ्गादयो वर्ज्या देशाः, कर्मभूमौ दुर्लभं मनुष्यजन्म देवैः प्रशस्यते

[४]कुरुक्षेत्राश्च मत्स्याश्च पाञ्चालाः शूरसेनजाः।
एते देशाः पुण्यदेशाः सर्वे चान्ये च निन्दिताः।।
देशेष्वेतेषु निवसेद्ब्राह्मणैर्धर्मकाङ्क्षिभिः।
अत्रैव दृश्यते धर्मो नान्यत्रेत्यब्रवीद्रविः।।

(१) **शिव.** ५।२०।३६-३८.

(२) **नरसिंह.** ३०।८-१०.

(३) **नरसिंह.** ५७।२०; **मुक्ता.** ९ स्वभावात्तु (स्वभावेन) धर्मं.... गव (धर्मः सिध्यन्ति द्विजपुंगवाः) हारीतः.

(४) **सौर.** १७।५६-५९.

अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रं गुर्जरं तथा।
आभीरं कौङ्कणं चैव द्राविडं दक्षिणापथम्।
अन्ध्रं च मागधं चैव देशानेतांश्च वर्जयेत्।।
[१]कर्मभूमौ हि मानुष्यं जन्मनां नियुतैरपि।
स्वर्गापवर्गफलदं कदाचित्प्राप्यते नरैः।।
गायन्ति देवाः किल गीतकानि
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात्।।
कर्माण्यसंकल्पिततत्फलानि
संन्यस्य (? न्यस्यन्ति) रुद्रे परमात्मरूपे।
अवाप्य ते (? ये) कर्ममहीमनन्ते
तस्मिँल्लयं ते त्वमलाः प्रयान्ति।।
जानीय(?)नैतद्धि कदा विलीने
शुभप्रदे कर्मणि देहबन्धः।
प्रासाम खण्डे किल भारताख्ये
कुलेऽकलङ्के शिवधर्मनिष्ठाः।।

## आदिपुराणम्

धर्मदेशसामान्यलक्षणम्, अलङ्घनीया नद्यः, वर्ज्या देशाः

[२]कृष्णसारैर्यवैर्दर्भैश्चातुर्वर्ण्याश्रमैस्तथा।
समृद्धो धर्मदेशस्तमाश्रयेरन्विपश्चितः।।
एतैर्विहीनो म्लेच्छदेश इत्यभिप्रायः। स्मृच. १।१९
[३]अधर्मदेशमध्ये तु कृत्वा क्रतुशतान्यपि।
न गच्छति द्विजश्रेष्ठ स्वर्गमार्गं महानपि।।

(१) **सौर.** ४७।३८, ८०-८२.

(२) **स्मृच.** १।१९ शस्तमा (शः स्यादा); **निप्र.** २।४७४ भविष्यपुराणम्; **मुक्ता.** ९ स्मृचवत्; स्मृतिचन्द्रिकायाम्; **पप्र.** ५७ समृद्धो (समृद्धौ).

(३) **स्मृच.** १।१९ उत्तरार्धं (न पश्यन्ति द्विजाः श्रेयो यातुः स्वर्गे महार्गलम्।।); **निप्र.** २।४८० उत्तरार्धं (न पश्यन्ति द्विजाः स्वर्गं जातु श्रेयो महामनाः।।) आदित्यपुराणे; **मुक्ता.** ९.

एतच्च अनापदि काम्यकर्मविषयम्।

निप्र. २।४८०

[1]**आर्यावर्ते समुत्पन्नो द्विजो वा यदि वाऽद्विजः।**
**नर्मदां सिन्धुपारं च करतोयां न लङ्घयेत्।।**

(१) आर्यावर्तोत्पन्नस्य आदिपुराणे नियमविशेष उक्तः - आर्यावर्त इति। करतोया नदी।

स्मृच. १।२०

(२) कर्म द्यतीति व्युत्पत्त्या कर्मदा कर्मनाशा।

पप्र. ५९

[2]**आर्यावर्तमतिक्रम्य विना तीर्थक्रियां द्विजः।**
**आज्ञां चैव तथा पित्रोरैन्दवेन विशुध्यति।।**

[3]**यत्र गङ्गा सरिच्छ्रेष्ठा स देशस्तत्तपोवनम्।**
**सिद्धक्षेत्रं च तज्ज्ञेयं गङ्गातीरसमाश्रितम्।।**

[4]**कीकटेषु गया पुण्या नदी पुण्या पुनः पुनः।**
**च्यवनस्याऽऽश्रमः पुण्यः पुण्यं राजगृहं वनम्।।**

कीकटः मगधदेशः। पप्र. ५९

[5]**काञ्चीकोसलसौराष्ट्रा देवराष्ट्रा द्विकच्छजाः।**
**सौवीरकोङ्कणोद्भूता एतेऽष्टौ निन्दिता भृशम्।।**

कोल्वणः त्र्यम्बकगिरिमध्यदेशः कोलवण इति प्रसिद्धः।

पप्र. ५९

[6]**पञ्च नद्यो वहन्त्येता यत्र निःसृत्य पर्वतात्।**
**आरट्टा नाम ये देशा न तेष्वार्योऽन्वहं वसेत्।।**

पञ्चनद्यस्तु शतद्रुविपाशैरावतीचन्द्रभागावितस्ताख्याः।

पप्र. ५९

[1]**नर्मदासिन्धुकौशीनां पारं पद्मस्य पश्चिमम्।**
**गत्वा नरकमाप्नोति तीर्थकालाधिकं वसन्।।**

पारं मध्यभागात्परभागः। पद्मस्य पुष्करस्य।

पप्र. ५९

[2]**अङ्गवङ्गकलिङ्गाश्च विन्ध्यमालवकास्तथा।**
**नर्मदादक्षिणं यच्च सिन्धोरुत्तरमेव च।।**

[3]**पौण्ड्रश्चैव सुराष्ट्रश्च चैद्यकेरलमागधाः।**
**न विवाहं तथा श्राद्धं यज्ञं चैव समाचरेत्।।**

[4]**पापदेशाश्च ये केचित्पापैरध्युषिता जनैः।**
**गत्वा देशानपुण्यांस्तु कृत्स्नं पापं समश्नुते।।**

[5]**सौराष्ट्रं सिन्धुसौवीरमावन्त्यं दक्षिणापथम्।**
**गत्वैतान्कामतो देशान्कलिङ्गांश्च पतेद्द्विजः।।**

एतत्पूर्वोक्तकृष्णसारादिविहीनदेशाभिप्रायं मन्तव्यम्, तस्यापि धर्मसाधनत्वात्। * स्मृच. १।२३

[6]**सौराष्ट्रसिन्धुसौवीरानावन्त्यं दक्षिणापथम्।**
**एतान्देशान्द्विजो गत्वा पुनः संस्कारमर्हति।।**

यात्रार्थं गमने तु न दोषः, 'अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रमगधांस्तथा। तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति।।' इति श्लोकगौतमोक्तेः। § संम. २८

---

(१) **स्मृच.** १।२०; **संम.** ४ वर्ते (वर्त) नर्मदां (कर्मदां) क्रमेण व्यासः; **पप्र.** ५९ संमवत्.

(२) **स्मृच.** १।२०; **मुक्ता.** ९ चन्द्रिकायाम्; **संम.** ४ क्रमेण व्यासः, **पप्र.** ५९.

(३) **स्मृच.** १।२१.

(४) **पप्र.** ५९.

(५) **स्मृच.** १।२२; **पप्र.** ५९ (काञ्चिकोसलसौराष्ट्रदेशाः कर्णाटकच्छजाः। कावेरीकोल्वणोद्भूतास्ते देशा निन्दिता भृशम्।।).

(६) **स्मृच.** १।२२ निःसृत्य (निसृत्य); **पप्र.** ५९ ये (ते).

* पप्र. स्मृचअनुवादः।

§ संप्र., आन., संग. संमवत्।

(१) **स्मृच.** १।२२ कौशी (काशी); **पप्र.** ५९.

(२) **स्मृच.** १।२२; **पप्र.** ५९ श्च विन्ध्यमालव (न्भ्रमद्रमालवि) दक्षिणं (दक्षिणे) रमेव (र एव).

(३) **स्मृच.** १।२२-२३; **पप्र.** ६० द्वितीयचरणे (वैन्ध्यमागधकाः खशाः) चैव (तेषु).

(४) **स्मृच.** १।२३; **मुक्ता.** १० व्यासः; **पप्र.** ६० त्पापै (द्व्याधै) कृत्स्नं (कृच्छ्रं).

(५) **स्मृच.** १।२३; **मुक्ता.** १० चन्द्रिकायाम्.

(६) **स्मृच.** १।२३ राना (रमा); **प्रपा.** २३९ आदित्यपुराणे; **मुक्ता.** ११७ नावन्त्यं द (नवन्तीद) आदित्यपुराणम्; **संम.** २८ नावन्त्यं (नावर्त्य) बौधायनः; **विपा.** २।४९०; **संप्र.** ५४६; **आन.** ४८२ नावन्त्यं (नवन्तीं) आदित्यपुराणम्; **संग.** ७१५-७१६ आदित्यपुराणम्; **कृभ.** ९६६ (=).

## मुद्गलपुराणम्

अजनाभापरपर्यायस्य भारतवर्षस्य
कर्मभूमित्वेन प्रशंसा, भारते
चातुर्वर्ण्यं युगव्यवस्था
युगधर्माश्च

**[1]नाभेः खण्डोऽजनाभश्च हिमाचलसमीपगः।**
**कर्मात्मकः समाख्यातः सर्वमान्यो बभूव ह।।**
**तत्र कर्माणि कृत्वा तु नरा यान्ति समन्ततः।**
**द्वीपेषु खण्डेषु तथा तथा पातालभूमिषु।।**
**स्वर्गेषु भोगप्राप्त्यर्थं कर्मणां फलमेव च।**
**तेषु भुक्त्वा पुनर्ह्यत्र यान्ति कर्मार्थमञ्जसा।।**
**अथवा पापकर्माणि कृत्वाऽत्रैव व्रजन्ति ते।**
**नरकेषु नरा नार्यः पुनरत्र प्रयान्ति च।।**
**अत्र योगेन योगीन्द्रो भवेद्वै नात्र संशयः।**
**गाणपत्यस्वरूपं च तद्भक्त्या लभते नरः।।**
**अतः श्रेष्ठतमः प्रोक्तो वर्षोऽयं च हि (? सहि) - मालयः।**
**सर्वदातृत्वमापन्नो मान्यस्तेषां प्रजापते।।**

अत्र भरतखण्डे सत्कर्माणि कृत्वा नराः स्वर्गेषु गच्छन्ति किंचिन्न्यूनेन कर्मणा पातालेषु तस्मान्न्यूनेन पुष्करादिद्वीपेषु ततो न्यूनेन जम्बुद्वीपाद्यष्टखण्डेषु गच्छन्ति स्वकर्मजफल-भोगार्थम्। अत्रैव पापानि कृत्वा नरकेषु गच्छन्तीति कर्मात्मको भरतखण्डः श्रेष्ठः कथ्यते। मुभा.

**भोगेषु स्वल्परूपोऽयं सर्वेभ्यः कथितो बुधैः।**
**शीतोष्णादिसमायुक्तो नानारोगसमन्वितः।।**
**तत्र वर्णाश्च चत्वारस्तेषां वै व्यभिचारतः।**
**वर्णा नानाविधाः प्रोक्ता भिन्नधर्मात्मकाः प्रभो।।**
**अस्मिन् युगभवं मानं युगधर्माः समन्ततः।**
**नराः प्रकृतिभिन्नाश्च स्वार्थादिकसमन्विताः।।**
**बहवोग्रे (? वोऽत्र) बभुः शैला विन्ध्यसह्याद्रिका-दयः।**
**तेभ्यः प्रसूता नद्यश्च बह्व्यः सर्वत्र संस्थिताः।।**
**पुण्यदाः स्नानमात्रेण मिष्टतोया महामते।**
**नराः कर्मकरास्तत्र त्रिविधाचारसंयुताः।।**
**तीर्थानि सर्वदेवानां स्थानानि त्वग्रजन्मनाम्।**
**तत्सेवकानामधिककर्मोत्थफलदानि वै।।**
**एवमाद्यगुणैर्युक्तोऽजनाभो वर्ष एव च।**
**कर्मणां भरणात्सुज्ञैर्भारतोऽयं प्रकीर्तितः।।**

(१) **मुद्गल.** २।११।२९ - ४१.

## आदित्यपुराणम्

धर्मविषये वर्ज्यादेशाः

**[1]अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रान् गुर्जरांस्तथा।**
**आभीरकान् कोङ्कणांश्चैव द्राविडान्दक्षिणायनान्।**
**आवन्त्यान्मागधांश्चैव देशान् यज्ञे विवर्जयेत्।।**

## अनिर्दिष्टकर्तृकवचनानि

सामान्यतो धर्मदेशलक्षणम्, ऐन्द्रादिनवखण्डयुते
भारतवर्षे कुमारिकाख्यखण्डे एव वर्ण-
व्यवस्था, खण्डान्तरेष्वन्त्यज-
निवासः, वर्ज्यदेशाः

**[2]वृषभैकशतं यत्र गवां तिष्ठत्यसंवृतम्।**
**न तद्धर्महतं द्वीपमेवं वेदविदो विदुः।।**
**[3]ऐन्द्रं कशेरुशकलं किल ताम्रपर्ण-**
**मन्यद्गभस्तिमदतश्च कुमारिकाख्यम्।**
**नागं च सौम्यमिह वारुणमन्त्यखण्डं**
**गान्धर्वसंज्ञमिति भारतवर्षमध्ये।**
**वर्णव्यवस्थितिरिहैव कुमारिकाख्ये**
**शेषेषु चान्त्यजजना निवसन्ति सर्वे।।**
**[4]कारस्काराः कलिङ्गाश्च सिन्धोरुत्तरमेव च।**
**प्रनष्टाश्रमधर्माश्च देशा वर्ज्याः सदैव हि।।**
**आन्ध्रान्कारस्करान्वङ्गान्सौवीराङ्गकलिङ्गकान्।**
**प्रासूरांश्च तथा गत्वा पुनस्तोयेन योजयेत्।।**

(१) **निप्र.** २।४७९ (अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रगुर्जरांस्तथा। आभीरं कोङ्कणं चैव द्रविडं दक्षिणापथम्। अवन्तीं मागधं चैव देशान्येतानि वर्जयेत्।।); **विपा.** ५।३८५.

(२) **इन्दु.** ७ आचारचन्द्रोदये.

(३) **संदी.** १।१९ सिद्धान्तशिरोमणौ.

(४) **द्वैनि.** १३६.

# युगधर्माः

## वेदाः

युगानां मनुष्यसंबन्धः, दीर्घतमसो जरासंबन्धेन शस्त्रशंसनसंबन्धेन देवादिसृष्टिसंबन्धेन च ग्रावपितॄणां ध्रौव्यसंबन्धेन च युगनिर्देशः

**[1]व्यूर्ण्वती दिवो अन्ताँ अबोध्यप स्वसारं सनुतर्युयोति।
प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा विभाति।।**

दिवः नभसः अन्तान् प्रान्तान् व्यूर्ण्वती विवृतान् तमसा वियुक्तान् कुर्वती उषा अबोधि सर्वैः प्राणिभिः अज्ञायि ज्ञाताऽभूत्। तदनन्तरं स्वसारम् उषसः प्रादुर्भावे सति स्वयमेव सरन्ती निशां सनुतः। अन्तर्हितनामैतत्। अन्तर्हित-प्रदेशे अप युयोति अपगमय्य पृथक्करोति। मनुष्या मनुष्याणां संबन्धीनि युगानि कृतत्रेतादीनि प्रमिनती स्वगमनागमनाभ्यां प्रकर्षेण हिंसन्ती जारस्य रात्रेर्जरयितुः सूर्यस्य योषा जाया उषाः चक्षसा आत्मीयेन प्रकाशेन वि भाति विशेषेण प्रकाशते। ऋसा.

**[2]तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम-बिभ्रत्।
उपप्रयन्दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे।।**

नाम शत्रूणां नामकं तत् इन्द्रस्य बलम् ऊचुषे उक्तवते स्तुवते यजमानाय कीर्तेन्यं कीर्तनीयं स्तुत्यम्। नामकं तद्बलं बिभ्रत् धारयन् मघवा धनवानिन्द्रः मानुषा मनुष्याणां संबन्धीनि इमा इमानि दृश्यमानानि युगानि अहोरात्रसंघ-निष्पाद्यानि कृतत्रेतादीनि, सूर्यात्मना निष्पादयतीति शेषः। किं पुनस्तन्नाम? दस्युहत्याय दस्यूनां वृत्रादीनां हननाय उपप्रयन् गृहसमीपान्निर्गच्छन् वज्री वज्रवान् सूनुः शत्रूणां प्रेरयिता इन्द्रः यद्ध यत् खलु नाम शत्रूणां नामकं श्रवसे जयलक्षणाय यशसे दधे धृतवान्। ऋसा.

(१) **ऋसं.** १।९२।११.
(२) **ऋसं.** १।१०३।४.

**[1]दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः।।**

दीर्घतमाः एतन्नामा महर्षिः, स च मामतेयः ममतायाः पुत्रः दशमे युगे दशयुगपर्यन्तं महानुभावयोरश्विनोः प्रभावात् पूर्वोक्ताद्दुःखाद्विमुक्तोऽत्यन्तसुखी स्वपुत्रभार्यादिभिः सहितो जीवितवान् दशमे युगे अतीते सति जुजुर्वान् जीर्णः वलीपलितगात्रः बभूव। एवंभूतः सन् अर्थं पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकं यतीनां प्राप्नुवतीनाम् अपाम् अप्कार्याणां प्रजानाम्। यद्वा, अपाम् अपसां कर्मणाम् अर्थं प्रयोजनं यतीनां तासां प्रजानाम्। ब्रह्मा ब्रह्मसदृशः परिवृढः भवति। किंच सारथिः तद्वन्निर्वाहको भवति, देवो भवतीत्यर्थः। एवमस्य वृत्तान्तं मन्त्रोऽनुवदति, स्वयं वा स्वात्मानं पारोक्ष्येण अश्विनोर्महानुभावत्वं प्रकटयितुं ब्रवीति। ऋसा.

**[2]देवानां नु वयं जाना प्र वोचाम विपन्यया।
उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे।।**

अदितिर्दाक्षायण्यनेन सूक्तेन स्वयं यथाऽऽदित्यान-जनयत्तद्ब्रवीति। बृहस्पत्यृषिपक्षे स ऋषिरदितेः सकाशादा-दित्योत्पत्तिप्रकारमाह। वयं देवानाम् आदित्यानां जाना जन्मानि प्र वोचाम प्रकथयाम विपन्यया विस्पष्टया वाचा। वयमिति वोचामेति चोभयत्र पूजार्थं बहुवचनम्। अथैकवदाह – यः देवानां गणः पूर्वे युगे उत्पन्नोऽपि उक्थेषु शस्यमानेषु यागे शस्त्रेष्वनुष्ठीयमानेषु उत्तरे युगे वर्तमानं स्तुवन्तं स्तोतारं पश्यात् पश्यति। अनेकेष्वपि युगेषु गतेषु कर्मसु स्तूयमानो वर्तत इत्यर्थः। ऋसा.

**[3]ब्रह्मणस्पतिरेता सं कर्मारइवाधमत्।
देवानां पूर्व्ये युगेऽसतः सदजायत।।**

ब्रह्मणः अन्नस्य पतिः अदितिः एता एतानि देवानां

(१) **ऋसं.** १।१५८।६.
(२) **ऋसं.** १०।७२।१.
(३) **ऋसं.** १०।७२।२ : १०।७२।३ पूर्व्ये युगे (युगे प्रथमे).

जन्मानि कर्मारइव स यथा भस्त्रयाऽग्निमुपधमति प्रज्वलनार्थमेवं सम् अधमत्, उदपादयदित्यर्थः। देवानां पूर्व्ये युगे। आदिसृष्टावित्यर्थः। तेषामुपादानकारणात् असतः नामरूपवर्जितत्वेनासत्समानाद्ब्रह्मणः सकाशात् सत् नामरूपविशिष्टं देवादिकम् अजायत प्रादुरभूत्। 'असद्वा इदमग्र आसीत्ततो वै सदजायत' (तैउ. २।७) इति हि श्रुतिः। न सदात्मकस्य प्रपञ्चस्यासत्कारणत्वं युक्तमिति वाच्यम्, छन्दोगैः 'कथमसतः सज्जायेत' इति असत्कारणत्वमाक्षिप्य 'सत्त्वेव सोम्येदमग्र आसीत्' (छाउ. ६।२।२) इत्यवधारितत्वात्। तर्ह्यसत्कारणप्रतिपादकवाक्यानां का गतिरिति चेत् तेषामव्याकृतत्वाभिप्रायत्वात्, 'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृउ. १।४।७ ) इति श्रुतेः। यद्येवं तर्ह्यदितेः सकाशात्कथं देवाद्युत्पत्तिः? 'वायोरग्निः' (तैउ. २।१) इत्यादिवत् *अधिष्ठानसकाशादुत्पत्तेः। यद्वा, देवानां कारणभूतं सत् असतो ब्रह्मणः सकाशादुत्पन्नमिति योजनादुक्त- (? जना। उक्त)न्यायोऽस्मिन्पक्षेऽपि समान एव।

ऋसा.

[1]**ध्रुवा एव वः पितरो युगेयुगे क्षेमकामासः सदसो न युञ्जते।**
**अजुर्यासो हरिषाचो हरिद्रव आ द्यां रवेण पृथिवीमशुश्रवुः।।**

हे ग्रावाणः, युगेयुगे सर्वेषु युगेषु ध्रुवा एव निश्चला एव वः युष्माकं पितरः पितृभूताः पर्वताः क्षेमकामासः क्षेमकामाः सदसः सदांसि आत्मना न युञ्जते न संयोजयन्ति। अजुर्यासः जराराहिताः हरिषाचः सोमस्य संभक्तारः हरिद्रवः सोमसंसर्गाद्धरितवर्णाः द्यां दिवं पृथिवीं च रवेण अभिषवशब्देन अशुश्रवुः श्रावयन्ति।।

ऋसा.

अपानभृदिष्टकानां कृतादियुगरूपत्वेन प्रशंसा

[2]**कृतमयानाम्। .... त्रेताऽयानाम्। .... द्वापरोऽयानाम्। .... आस्कन्दोऽयानाम्।।**

(हे इष्टके) अयानां युगानां मध्ये यत्कृतयुगं तद्रूपा त्वमसि। अयन्ति गच्छन्ति तत्तत्कालानुसारेण वर्तन्तेऽत्र इत्ययाः युगरूपाः कालविशेषाः। $..... तेषां मध्ये यो द्वापरस्तद्रूपा त्वमसि। ..... आ समन्तात्स्कन्दनं धर्मस्य शोषणं यस्मिन् कलौ सोऽयमास्कन्दः।　　　　तैसा.

निद्रादिसंचरणान्तानां चतसृणां पुरुषावस्थानां क्रमेण कलिद्वापरत्रेताकृतरूपत्वेनोत्तरोत्तरं प्राशस्त्यम्

[1]**कलिः शयानो भवति संजिहानस्तु द्वापरः।**
**उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरन्।।**

चतस्रः पुरुषस्यावस्थाः। निद्रा तत्परित्याग उत्थानं संचरणं चेति। ताश्चोत्तरोत्तरश्रेष्ठत्वात्कलिद्वापरत्रेताकृतयुगैः समानाः। ततश्चरणस्य सर्वोत्तमत्वाच्चरैवेति।

ऐब्रासा.

स्तोमचतुष्टयं कृतरूपत्वात्प्रशस्तम्, स्तोमपञ्चकं कलिरूपत्वान्निन्दितम्

[2]**ये वै चत्वारः स्तोमाः। कृतं तत्। अथ ये पञ्च। कलिः सः। तस्माच्चतुष्टोमः। तच्चतुष्टोमस्य चतुष्टोमत्वमिति।।**

पूर्वोक्तास्त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्येवंरूपाः स्तोमा ये सन्ति ते कृतयुगस्य स्वरूपभूताः। कृतयुगे हि धर्मस्य चत्वारः पादा विद्यन्ते। ये त्वन्येन केनचित्स्तोमेन सह पञ्च स्तोमास्तेषां कलियुगरूपत्वम्। तत्र तन्मध्यगतानां चतुर्णां कृतयुगार्थत्वेन विभागे सति कलेरसाधारणस्तोम एक एव परिशिष्यते। धर्मश्च कलियुग एकपादेव। ततः कलिस्वरूपत्वेन पञ्चस्तोमपक्षस्य निन्दितत्वाच्चतुष्टोमपक्षस्य कृतयुगस्वरूपत्वेन प्रशस्तत्वादयं सोमयागश्चतुष्टोम एव कर्तव्यः। चत्वारः स्तोमा अत्रेति व्युत्पत्त्या सोमयागस्य चतुष्टोमत्वं संपन्नम्।　　　　तैब्रासा.

---

* अदितेरन्तर्यामिणो ब्रह्मरूपाधिष्ठानस्य सकाशादित्यर्थः।

(१) **ऋसं.** १०।९४।१२.

(२) **तैसं.** ४।३।३।१-२.

$ अत्र द्वितीयवाक्यव्याख्यानं नास्ति।

(१) **ऐब्रा.** ३३।३.

(२) **तैब्रा.** १।५।१२।१.

पुरुषमेधे पुरुषालम्भनोद्देश्यदेवताः

कृतादयः

**[१]कृताय सभाविनम्। त्रेताय आदिनवदर्शम्।**
**द्वापराय बहिःसदम्। कलये सभास्थाणुम्।।**

कृताय कृतयुगाभिमानिने सभाविनं द्यूतसभाया अधिष्ठातारम्। त्रेतायै त्रेतायुगाभिमानिने आदिनवदर्शं मर्यादायां देवनस्य द्रष्टारं परीक्षकम्। द्वापराय द्वापरयुगाभिमानिने बहिःसदं बहिःसदनशीलं स्वयमदीव्यन्तम्। कलये कलियुगाभिमानिने सभास्थाणुम् अदेवनकालेऽपि सभां यो न मुञ्चति सोऽयं स्तम्भसमानत्वात्सभास्थाणुः, तम्। तैब्रासा.

## बौधायनः

युगभेदेन धर्माणां व्यवस्थितत्वम्, विधवा-
नियोजनं कलौ वर्ज्यम्

**[२]विधिर्योऽनुष्ठितः पूर्वं क्रियते नैव सांप्रतम्।**
**पुराकल्पः स यद्वच्च विधवाया नियोजनम्।।**

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

सहेतुको नियोगनिषेधः

**[३]तदिन्द्रियदौर्बल्याद्विप्रतिपन्नम्।।**

तमिमं नियोगं दूषयति – तदिति। यद्यप्येवं पूर्वे कृतवन्तः, तथापि तदद्यत्वे विप्रतिपन्नं विप्रतिषिद्धम्। कुतः? इन्द्रियदौर्बल्यात्। दुर्बलेन्द्रिया ह्यद्यत्वे मनुष्याः। ततश्च शास्त्रव्याजेनापि भर्तृव्यतिक्रमेऽतिप्रसङ्गः स्यादिति। † उ.

**[४]अविशिष्टं हि परत्वं पाणेः।।**

सगोत्रविषयेऽपि यो विशेषः सोऽपि नास्तीत्याह – अविशिष्टमिति। येन पाणिना पूर्वमग्निसाक्षिकं पाणिर्गृहीतः कन्यायाः, तस्मात् पाणेरन्यो भवति सगोत्रस्यापि पाणिः। यस्मादेवं पाणेः परत्वमविशिष्टं समानम्। तस्मादविशेष इति। अविशिष्टमित्यपपाठः (?)। † उ.

† मुक्ता. उगतम्।

(१) **तैब्रा.** ३।४।१६।१.

(२) **स्मृच.** १।२२६; **मुक्ता.** १३९.

(३) **आध.** २।२७।४; **हिध.** २७।५।२२३; **मुक्ता.** १४ बल्याद्वि (र्बल्यं वि).

(४) **आध.** २।२७।५; **हिध.** २७।५।२२४ हि परत्वं (परत्वं हि); **मुक्ता.** १४.

**[१]तद्व्यतिक्रमे खलु पुनरुभयोर्नरकः।।**

पाणिरन्यो भवतु, को दोषः? – तद्व्यतिक्रम इति। तस्य पाणेर्व्यतिक्रमे उभयोर्दम्पत्योः नरको भवति। खलुपुनरिति प्रसिद्धिद्योतकौ निपातौ। अतः पत्याऽपि न स पाणिस्त्याज्यः यः पूर्वं गृहीतः। भार्ययाऽपि न स पाणिस्त्याज्यो येन पूर्वमात्मनः पाणिर्गृहीतः। उ.

**[२]नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात्।।**

आरभ्यतेऽनेनेत्यारम्भणः। योऽयं दम्पत्योः परस्परनियमः स आरम्भणो यस्य स नियमारम्भणः। एवंभूतो योऽभ्युदयः स एव वर्षीयान् वृद्धतरः। कस्मात् वर्षीयान्? एवम् उक्तप्रकारेण नियोगलक्षणेन यदपत्यमारभ्यते तस्मादेवमारम्भणादपत्याद्वर्षीयानिति। अपत्यादिति पाठः। आपत्यादिति प्रायेण पठन्ति। उ.

## वसिष्ठः

कलौ वर्ज्या ऊढापुनर्विवाहादयः

पञ्चधर्माः

**[३]ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।**
**कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्।।**

## महाभारतम्

युगेषूत्तरोत्तरं पादशो धर्महासमायुरादिह्रासं
चावेक्ष्य व्यासर्षिणा वेदव्यासः
कृतः

**[४]पादापसारिणं धर्मं विद्वान्स तु युगे युगे।**
**आयुः शक्तिं च मर्त्यानां युगानुगमवेक्ष्य च।।**

पादापसारिणं युगे युगे पादशः क्षीयमाणम्। कलेरादौ पादमात्रमवशिष्टमित्यर्थः। एवम् आयुरादिह्रासं चावेक्ष्य। नीटी.

(१) **आध.** २।२७।६; **हिध.** २७।५।२२५ (खलु०); **मुक्ता.** १४.

(२) **आध.** २।२७।७; **हिध.** २७।५।२२६.

(३) **विपा.** ५।४९०.

(४) **भा.** १।५७।७२; **भामु.** १।६३।८७ विद्वान्स तु (स तु विद्वान्).

[1]**ब्रह्मणो ब्राह्मणानां च तथाऽनुग्रहकाम्यया।**
**विव्यास वेदान्यस्माच्च तस्माद्व्यास इति स्मृतः।।**

ब्रह्मणः वेदस्य। अनुग्रहः रक्षणम्। विव्यास शाखाभेदेन विस्तारितवान्। अतो व्यास इत्यपि तस्य नामेत्यर्थः। नीटी.

कृतयुगे परशुरामकृतक्षत्रियनाशे ब्राह्मणैः क्षत्रियासु क्षत्रोत्पादनम्, सर्वे वर्णाः स्वस्वधर्माचारनिष्ठा आसन्

[2]**त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा।**
**जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे।।**

त्रिःसप्तकृत्वः एकविंशतिवारान्। नीटी.

[3]**तदा निःक्षत्रिये लोके भार्गवेण कृते सति।**
**ब्राह्मणान् क्षत्रिया राजन्गर्भार्थिन्योऽभिचक्रमुः।।**
[4]**ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः।**
**ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा।।**
[5]**तेभ्यस्तु लेभिरे गर्भान्क्षत्रियास्ताः सहस्रशः।**
**ततः सुषुविरे राजन्क्षत्रियान्वीर्यसंमतान्।**
**कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये।।**
[6]**एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः।**
**जातमृध्यत धर्मेण सुदीर्घेणाऽऽयुषाऽन्वितम्।**
**चत्वारोऽपि तदा वर्णा बभूवुर्ब्राह्मणोत्तराः।।**

ब्राह्मणोत्तराः ब्राह्मणप्रधानाः। नीटी.

[7]**अभ्यगच्छन्नृतौ नारीं न कामान्नानृतौ तथा।**
**तथैवान्यानि भूतानि तिर्यग्योनिगतान्यपि।**
**ऋतौ दारांश्च गच्छन्ति तदा स्म भरतर्षभ।।**

(१) भा. १।५७।७३; भामु. १।६३।८८ काम्य (काङ्क्ष) स्माच्च (स्मात्स).

(२) भा. १।५८।४; भामु. १।६४।४.

(३) भा. १।५८।५; भामु. १।६४।५ गर्भा (सुता).

(४) भा. १।५८।६; भामु. १।६४।६.

(५) भा. १।५८।७; भामु. १।६४।८-९ तेभ्यस्तु (तेभ्यश्च) गर्भान् (गर्भं) संमतान् (वत्तरान्).

(६) भा. १।५८।८; भामु. १।६४।८-९ जातमृध्यत (जातं वृद्धं च) तदा (ततो).

(७) भा. १।५८।९; भामु. १।६४।१०-११ तदा स्म (तत्तथा).

[1]**ततोऽवर्धन्त धर्मेण सहस्रशतजीविनः।**
**ताः प्रजाः पृथिवीपाल धर्मव्रतपरायणाः।**
**आधिभिर्व्याधिभिश्चैव विमुक्ताः सर्वशो नराः।।**

जीविनः जीविन्यः। आधिभिः शोकादिभिः। व्याधिभिः ज्वरादिभिः। नीटी.

[2]**अथेमां सागरापाङ्गां गां गजेन्द्रगताखिलाम्।**
**अध्यतिष्ठत्पुनः क्षत्रं सशैलवनकाननाम्।।**

अपाङ्ग इवापाङ्गः प्रान्तः। सागरान्तामित्यर्थः। अध्यतिष्ठत् अधिष्ठितवान्। हे गजेन्द्रगत। नीटी.

[3]**प्रशासति पुनः क्षत्रे धर्मेणेमां वसुंधराम्।**
**ब्राह्मणाद्यास्तदा वर्णा लेभिरे मुदमुत्तमाम्।।**
[4]**कामक्रोधोद्भवान्दोषान्निरस्य च नराधिपाः।**
**दण्डं दण्ड्येषु धर्मेण प्रणयन्तोऽन्वपालयन्।।**
[5]**तथा धर्मपरे क्षत्रे सहस्राक्षः शतक्रतुः।**
**स्वादु देशे च काले च ववर्षाऽऽप्याययन्प्रजाः।।**

स्वादु रोचकं यथा स्यात्तथा। नीटी.

[6]**न बाल एव म्रियते तदा कश्चिन्नराधिप।**
**न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनः।।**
[7]**एवमायुष्मतीभिस्तु प्रजाभिर्भरतर्षभ।**
**इयं सागरपर्यन्ता समापूर्यत मेदिनी।।**
**ईजिरे च महायज्ञैः क्षत्रिया बहुदक्षिणैः।**
**साङ्गोपनिषदान्वेदान्विप्राश्चाधीयते तदा।।**
[8]**न च विक्रीणते ब्रह्म ब्राह्मणाः स्म तदा नृप।**
**न च शूद्रसमाभ्याशे वेदानुच्चारयन्त्युत।।**

(१) भा. १।५८।१०; भामु. १।६४।११-१२ तोऽव (तो व).

(२) भा. १।५८।११; भामु. १।६४।१३ पाङ्गां (पाङ्गीं) काननाम् (पत्तनाम्).

(३) भा. १।५८।१२; भामु. १।६४।१४ स्तदा (स्ततो).

(४) भा. १।५८।१३; भामु. १।६४।१५ तृतीयचरणे (धर्मेण दण्डं दण्ड्येषु).

(५) भा. १।५८।१४; भामु. १।६४।१६ चतुर्थचरणे (वर्षेणापालयत्प्रजाः).

(६) भा. १।५८।१५; भामु. १।६४।१७ न्नरा (ज्जना).

(७) भा. १।५८।१६-१७; भामु. १।६४।१८-१९.

(८) भा. १।५८।१८; भामु. १।६४।२० णाः स्म (णाश्च) भ्याशे (भ्यासे).

ब्रह्म वेदं न विक्रीणते भृतकाध्यापनं न कुर्वत इत्यर्थः। नीटी.

**[१]कारयन्तः कृषिं गोभिस्तथा वैश्याः क्षिताविह।**
**न गामयुञ्जन्त धुरि कृशाङ्गाश्चाप्यजीवयन्।।**

वैश्याः स्वयं धुरि गाः बलीवर्दान् न युञ्जते। नीटी.

**[२]फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः।**
**न कूटमानैर्वणिजः पण्यं विक्रीणते तदा।।**

फेनपान् अतृणादान् अभिलक्ष्य न दुहन्ति, धेनूरिति शेषः। कूटमानैः कपटतुलाप्रस्थादिभिः। नीटी.

**कर्माणि च नरव्याघ्र धर्मोपेतानि मानवाः।**
**धर्ममेवानुपश्यन्तश्चक्रुर्धर्मपरायणाः।।**
**स्वकर्मनिरताश्चाऽऽसन्सर्वे वर्णा नराधिप।**
**एवं तदा नरव्याघ्र धर्मो न ह्रसते क्वचित्।।**
**[३]काले गावः प्रसूयन्ते नार्यश्च भरतर्षभ।**
**फलन्त्यृतुषु वृक्षाश्च पुष्पाणि च फलानि च।।**

ऋतुषु वसन्तादिषु स्वस्वकाले। नीटी.

**[४]एवं कृतयुगे सम्यग्वर्तमाने तदा नृप।**
**आपूर्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशम्।।**

युगकालभेदेन गिरिनद्यादीनां देवादीनां च स्वरूप-भेदः

**[५]न तच्छक्यं त्वया द्रष्टुं रूपं नान्येन केनचित्।**
**कालावस्था तदा ह्यन्या वर्तते सा न सांप्रतम्।।**
**[६]अन्यः कृतयुगे कालस्त्रेतायां द्वापरेऽपरः।**
**अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे।।**

(१) **भा.** १।५८।१८; **भामु.** १।६४।२१ उत्तरार्धे (युञ्जते धुरि नो गाश्च कृशां गांश्चाप्यजीवयन्।।).

(२) **भा.** १।५८।२०-२२; **भामु.** १।६४।२२-२४.

(३) **भा.** १।५८।२३; **भामु.** १।६४।२५ तृतीयचरणे (भवन्त्यृतुषु वृक्षाणां).

(४) **भा.** १।५८।२४; **भामु.** १।६४।२६.

(५) **भा.** ३।१४८।५; **भामु.** ३।१४९।६ वर्तते सा न (न सा वर्तति).

(६) **भा.** ३।१४८।६; **भामु.** ३।१४९।७ ऽपरः (परः).

**[१]भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः।**
**कालं समनुवर्तन्ते यथा भावा युगे युगे।**
**बलवर्ष्मप्रभावा हि प्रहीयन्त्युद्भवन्ति च।।**

वर्ष्म शरीरम्। नीटी.

**[२]तदलं तव तद्रूपं द्रष्टुं कुरुकुलोद्वह।**
**युगं समनुवर्तामि कालो हि दुरतिक्रमः।।**

**भीम उवाच –**

**[३]युगसंख्यां समाचक्ष्व आचारं च युगे युगे।**
**धर्मकामार्थभावांश्च वर्ष्म वीर्यं भवाभवौ।।**

भावान् तत्त्वानि। कर्म शुभाशुभम्। वीर्यं फलोदयपर्यन्तं शक्तिः। भवाभवौ उत्पत्तिविनाशौ ऐश्वर्यानैश्वर्ये वा। नीटी.

कृतशब्दप्रवृत्तिनिमित्तम्, कृतयुगे वेददेवादीनां व्याधीनां कामक्रोधादिविकाराणां चाभावः, सर्वे वर्णाः स्वधर्मनिरताः, चतुष्पात् धर्मः, संकल्पादेव फलसिद्धिः

**हनूमानुवाच –**

**[४]कृतं नाम युगं तात यत्र धर्मः सनातनः।**
**कृतमेव न कर्तव्यं तस्मिन्काले युगोत्तमे।।**

कृतमेव सर्वे कृतकृत्या एवेत्यर्थः। तत एव हेतोः कृतयुगं नाम। नीटी.

**[५]न तत्र धर्माः सीदन्ति न क्षीयन्ते च वै प्रजाः।**
**ततः कृतयुगं नाम कालेन गुणतां गतम्।।**

गुणतां मुख्यमपि अमुख्यतां गतम्। नीटी.

(१) **भा.** ३।१४८।७; **भामु.** ३।१४९।८-९; **पमा.** १।११८-११९ गाः शैलाः (गाश्चैते) देवा महर्षयः (देवर्षयस्तथा) यथा (तथा) द्वितीयार्धानन्तरं (कालं कालं समासाद्य नराणां नरपुङ्गवाः) वर्ष्म (वर्ण) प्रहीय (प्रभव).

(२) **भा.** ३।१४८।८; **भामु.** ३।१४९।९ तव (बत).

(३) **भा.** ३।१४८।९; **भामु.** ३।१४९।१० वर्ष्म वीर्यं (कर्मवीर्ये).

(४) **भा.** ३।१४८।१०; **भामु.** ३।१४९।११; **पमा.** १।१२१ तात (श्रेष्ठं).

(५) **भा.** ३।१४८।११; **भामु.** ३।१४९।१२ न क्षीयन्ते (क्षीयन्ते न); **पमा.** १।१२२ क्षीयन्ते (जीर्यन्ते).

[1]**देवदानवगन्धर्वयक्षराक्षसपन्नगाः।**
**नाऽऽसन्कृतयुगे तात तदा न क्रयविक्रयाः।।**
[2]**न सामयजुऋग्वर्णाः क्रिया नाऽऽसीच्च मानवी।**
**अभिध्याय फलं तत्र धर्मः संन्यास एव च।।**

त्रयीधर्मस्य चित्तशुद्ध्यर्थत्वात्तस्याश्च तदानीं स्वभावसिद्धत्वान्न सामादीन्यासन्। मानवी क्रिया कृष्याद्यारम्भरूपा। किं तु अभिध्याय फलं संकल्पादेव सर्वं संपद्यत इत्यर्थः। नीटी.

[3]**न तस्मिन्युगसंसर्गे व्याधयो नेन्द्रियक्षयः।**
**नासूया नापि रुदितं न दर्पो नापि पैशुनम्।।**

वैकृतं कपटम्। नीटी.

[4]**न विग्रहः कुतस्तन्द्री न द्वेषो नापि वैकृतम्।**
**न भयं न च संतापो न चेर्ष्या न च मत्सरः।।**

विग्रहः वैरम्। तन्द्री आलस्यम्। द्वेषः परानिष्टचिन्तनम्। पैशुनं तद्भाषणम्। ईर्ष्या अक्षमा। मत्सरः परोत्कर्षासहिष्णुत्वम्। नीटी.

[5]**ततः परमकं ब्रह्म या गतिर्योगिनां परा।**
**आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा।।**

ततः असूयादित्यागात् परमकं परमानन्दात्मकं ब्रह्म, प्राप्यत इति शेषः। गतिः प्राप्यम्। आत्मेति। श्वेतरक्तपीतकृष्णरूपाणि क्रमेण कृतादिषु भवन्तीति कृते नारायणः शुक्ल इत्युक्तम्। नीटी.

[6]**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः।**
**कृते युगे समभवन्स्वकर्मनिरताः प्रजाः।।**

कृतलक्षणाः कृतानि स्वतःसिद्धानि लक्षणानि शमो दमस्तप इत्यादीनि येषां ते। नीटी.

---

(१) **भा.** ३।१४८।१२; **भामु.** ३।१४९।१३ विक्रयाः (विक्रयः).

(२) **भा.** ३।१४८।१३; **भामु.** ३।१४९।१४ यजुऋग्व (ऋग्यजुर्व).

(३) **भा.** ३।१४८।१४; **भामु.** ३।१४९।१५ पैशुनम् (वैकृतम्).

(४) **भा.** ३।१४८।१५; **भामु.** ३।१४९।१६ नापि वैकृतम् (न च पैशुनम्) न च सं (नापि सं).

(५) **भा.** ३।१४८।१६; **भामु.** ३।१४९।१७ या (सा).

(६) **भा.** ३।१४८।१७; **भामु.** ३।१४९।१८ या (सा).

[1]**समाश्रमं समाचारं समज्ञानमतीबलम्।**
**तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन्।।**

समं ब्रह्म तदेव आश्रयादिर्यस्य तत्तथा। ब्रह्मैव फलप्राप्तये श्रयेत्। तत्प्राप्त्यर्थ एव आचारो यस्य। तस्यैव च ज्ञानं केवलं निरुपाधिविषयम्। ब्रह्मैव कर्माणि गत्यागत्यादीनि येषां ते, 'अहमग्निरहं हुतम्' (भगी. ९।६) इत्यादिवचनात्। नीटी.

[2]**एकवेदसमायुक्ता एकमन्त्रविधिक्रियाः।**
**पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रताः।।**

एकः देवः प्रत्यगात्मा तत्रैव सदा युक्ताः योगवन्तः। एकः मन्त्रः प्रणवः। एकः विधिः वेदान्तश्रवणादिः। एका क्रिया ध्यानादिः। एक एव तत्त्वप्रतिपादको वेदो येषाम्। सर्वेऽपि ज्ञाननिष्ठा एव, न तु केवलकर्मठा व्यसनिनो वा। नीटी.

[3]**चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना।**
**अकामफलसंयोगात्प्राप्नुवन्ति परां गतिम्।।**

कालः दर्शादिः, तद्युक्तेन कर्मणा। कामफलेन इच्छितफलेन स्त्र्यादिना स्वर्गादिना वा संयोगस्तदभावात्। नीटी.

[4]**आत्मयोगसमायुक्तो धर्मोऽयं कृतलक्षणः।**
**कृते युगे चतुष्पादश्चातुर्वर्ण्यस्य शाश्वतः।।**

आत्मनि ब्रह्मणि योगः ऐक्यं तेन समायुक्तोऽयं धर्मः योगाख्यः कृतलक्षणः कृतयुगसूचकः। यदैव यत्रैव पुंसि ईदृग्धर्मो वर्धते तदैव कृतयुगमित्यर्थः। चतुष्पादः अविकलः। नीटी.

---

(१) **भा.** ३।१४८।१८; **भामु.** ३।१४९।१९ श्रमं (श्रयं) नमतीब (नं च केव).

(२) **भा.** ३।१४८।१९; **भामु.** ३।१४९।२० वेदसमा (देवसदा).

(३) **भा.** ३।१४८।२०; **भामु.** ३।१४९।२१.

(४) **भा.** ३।१४८।२१; **भामु.** ३।१४९।२२; **पमा.** १।१२२ वर्ण्यस्य शाश्वतः (वर्ण्यं च शाश्वतम्) उत्त.

त्रेतायां सत्ररूपो यज्ञः, धर्मः त्रिपात्,
विष्णुः रक्तवर्णः, कर्मणा
फलसिद्धिः

**[1]एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितम्।**
**त्रेतामपि निबोध त्वं यस्मिन्सत्रं प्रवर्तते।।**

त्रैगुण्यं प्रवृत्तिप्रकाशमोहात्मकरजःसत्त्वतमसां समाहारः, तेन वर्जितम्। सत्रं यज्ञक्रिया, रजोमिश्रत्वात्। नीटी.

**[2]पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः।**
**सत्यप्रवृत्ताश्च नराः क्रियाधर्मपरायणाः।।**

सत्येनैव प्रवृत्ताः। नीटी.

**[3]ततो यज्ञाः प्रवर्तन्ते धर्माश्च विविधाः क्रियाः।**
**त्रेतायां भावसंकल्पाः क्रियादानफलोदयाः।।**

भावसंकल्पाः भावः भावना क्रिया 'अहमनेन कर्मणा इदं फलम् अनेन प्रकारेण करिष्यामि' इत्येवंरूपा, तद्विषय एव संकल्पो येषाम्। अत एव क्रियादिभिः फलोपगाः फलभुजः, न तु कृतवत्संकल्पसिद्धाः। नीटी.

**[4]प्रचलन्ति न वै धर्मात्तपोदानपरायणाः।**
**स्वधर्मस्थाः क्रियावन्तो जनास्त्रेतायुगेऽभवन्।।**

द्वापरे द्विपात् धर्मः, विष्णुः पीतवर्णः,
वेदविभाजनम्, तपसि दाने च
प्रवृत्तिः, सत्यात् च्युति-
व्याधिसंभवश्च

**[5]द्वापरेऽपि युगे धर्मो द्विभागोनः प्रवर्तते।**
**विष्णुर्वै पीततां याति चतुर्धा वेद एव च।।**

द्विभागोनः पादद्वयहीनः। चतुर्धा वेदः कृतः, कृत्स्नस्यैकेन धारयितुमशक्यत्वात्। नीटी.

(१) **भा.** ३।१४८।२२; **भामु.** ३।१४९।२३; **पमा.** १।१२२ पू.

(२) **भा.** ३।१४८।२३; **भामु.** ३।१४९।२४; **पमा.** १।१२२ ह्रसते ध (ग्रसतेऽध) सत्य (ज्ञान).

(३) **भा.** ३।१४८।२४; **भामु.** ३।१४९।२५ दयाः (पगाः); **पमा.** १।१२२ पू.

(४) **भा.** ३।१४८।२५; **भामु.** ३।१४९।२६ जना (नरा); **पमा.** १।१२२ उत्त.

(५) **भा.** ३।१४८।२६; **भामु.** ३।१४९।२७ रेऽपि (रे च); **पमा.** १।१२२ तृतीयचरणे (विष्णुः पीतत्वमायाति) उत्त.

**[1]ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथाऽपरे।**
**द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथाऽपरे।।**

अनृचः ऋङ्मात्रेणापि हीनाः, अतिमान्द्यात्। यद्वा, चतुर्वेदा इति वेदत्रयोक्तं कर्म ज्योतिष्टोमादिकम् अथर्वणोपनिषदुक्तं ध्यानं च सहैव वाऽनुतिष्ठन्तीति कर्मोपास्तिसमुच्चय उक्तः। त्रिवेदा इति केवलकर्मठाः। द्विवेदा इति स्वशाखोक्तं संध्यावन्दनादिकर्म ध्यानं चानुतिष्ठन्ति। एकवेदाः ध्यानैकनिष्ठाः। अनृचः कृतकृत्याः 'विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्यये' इत्युक्तेर्ध्यानादपि विरक्ताः। नीटी.

**एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया।**
**तपोदानप्रवृत्ता च राजसी भवति प्रजा।।**

**[2]एकवेदस्य चाज्ञानाद्वेदास्ते बहवः कृताः।**
**सत्यस्य चेह विभ्रंशात्सत्ये कश्चिदवस्थितः।।**

सत्त्वस्य बुद्धेः। विभ्रंशात् क्षयात्। नीटी.

**[3]सत्यात्प्रच्यवमानानां व्याधयो बहवोऽभवन्।**
**कामाश्चोपद्रवाश्चैव तदा दैवतकारिताः।।**

**[4]यैरर्द्यमानाः सुभृशं तपस्तप्यन्ति मानवाः।**
**कामकामाः स्वर्गकामा यज्ञांस्तन्वन्ति चापरे।।**

यैः व्याधिभिः कामैश्च। नीटी.

कलौ धर्मः एकपात्, विष्णुः कृष्णवर्णः,
वेदाध्ययनधर्माचाराभावः, आधि-
व्याधिक्रोधादिविकारोद्भवः,
धर्मनाशात्सर्वनाशः

**[5]एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः।**
**पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः।।**

(१) **भा.** ३।१४८।२७-२८; **भामु.** ३।१४९।२८-२९.

(२) **भा.** ३।१४८।२९; **भामु.** ३।१४९।३० वेदस्य (देवस्य) सत्यस्य (सत्त्वस्य); **पमा.** १।१२२ चेह विभ्रंशात् (भूरि विभ्रंशः) उत्त.

(३) **भा.** ३।१४८।३०; **भामु.** ३।१४९।३१ दैवत (वै देव); **पमा.** १।१२२ तदा (तथा).

(४) **भा.** ३।१४८।३१; **भामु.** ३।१४९।३२; **पमा.** १।१२२ स्वर्ग (ह्यर्थ) उत्त.

(५) **भा.** ३।१४८।३२; **भामु.** ३।१४९।३३; **पमा.** १।१२२.

**[1]तामसं युगमासाद्य कृष्णो भवति केशवः।**
**वेदाचाराः प्रशाम्यन्ति धर्मयज्ञक्रियास्तथा।।**

तामसं तमोगुणप्रधानं कलिम्। नीटी.

**[2]ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा।**
**उपद्रवाश्च वर्तन्ते आधयो व्याधयस्तथा।।**

ईतयः अतिवृष्ट्यादयः। नीटी.

**[3]युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः।**
**धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः।।**

व्यावर्तते नश्यति। नीटी.

**[4]लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्तकाः।**
**युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते।।**

भावाः धर्मज्ञानादयः। प्रार्थनानि विकुर्वते अन्यत्प्रार्थ्यतेऽन्यत् जायते। पौष्टिकमपि कर्मविधिलोपान्नाशकं भवतीति भावः। नीटी.

**एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते।**
**युगानुवर्तनं त्वेतत्कुर्वन्ति चिरजीविनः।।**

चिरजीविनः मादृशा अपि युगानुवर्तिनः कालानुसारिणो भवन्ति। नीटी.

**एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि।**
**युगसंख्यां महाबाहो स्वस्ति प्राप्नुहि गम्यताम्।।**

स्वस्ति कल्याणम्। नीटी.

**[5]धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्मणि भारत।**
**पराक्रमविधानज्ञा नराः कृतयुगेऽभवन्।।**

कृतयुगे हि ज्ञानप्राधान्यात् ज्ञानस्य च सर्वस्मिन् देशे काले चाभ्युदयहेतुत्वान्न तत्र देशकालप्रतीक्षाऽऽसीदित्यर्थः। नीटी.

(१) **भा.** ३।१४८।३३; **भामु.** ३।१४९।३४; **पमा.** १।१२२ न्ति धर्मय (न्ते धर्मा य) उत्त.; **निप.** ५३० पू. (=).

(२) **भा.** ३।१४८।३४; **भामु.** ३।१४९।३५ वाश्च व (वाः प्रव) यो व्याधयस्त (यः क्षुद्भयं त); **पमा.** १।१२२ ईतयो (आधयो) पू.

(३) **भा.** ३।१४८।३५; **भामु.** ३।१४९।३६; **पमा.** १।१०६ धर्मो व्या (धर्मोऽप्या) र्मे व्या (र्मेष्वा) ने तु (नेषु) को व्या (कोऽप्या) आश्वमेधिके पर्वणि.

(४) **भा.** ३।१४८।३६-३७-३९; **भामु.** ३।१४९।३७-३८-४०.

(५) **भा.** ३।१५९।२; **भामु.** ३।१६२।२.

### अल्पावशिष्टे कलियुगे युगस्वभावप्रयुक्तानां दुराचाराणामापदां च विस्तरेण वर्णनम्

**[1]अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ।**
**सहस्रान्ते नराः सर्वे प्रायशोऽनृतवादिनः।।**

कलेर्दोषान् वर्णयति प्रहाणाय यत्नासेन मोक्षमार्गे प्रीतिजननाय च – सहस्रान्त इति। सहस्रस्य चतुर्धाकृतस्यान्तेऽन्तिमपादे। नीटी.

**यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा।**
**व्रतप्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते।।**
**ब्राह्मणाः शूद्रकर्माणस्तथा शूद्रा धनार्जकाः।**
**क्षत्रधर्मेण वाऽप्यत्र वर्तयन्ति गते युगे।।**
**[2]निवृत्तयज्ञस्वाध्यायाः पिण्डोदकविवर्जिताः।**
**ब्राह्मणाः सर्वभक्षाश्च भविष्यन्ति कलौ युगे।।**
**[3]अजपा ब्राह्मणास्तात शूद्रा जपपरायणाः।**
**विपरीते तदा लोके पूर्वरूपं क्षयस्य तत्।।**
**[4]बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप।**
**मिथ्यानुशासिनः पापा मृषावादपरायणाः।।**
**[5]आन्ध्राः शकाः पुलिन्दाश्च यवनाश्च नराधिपाः।**
**काम्बोजा और्णिकाः शूद्रास्तथाऽऽभीरा नरोत्तम।।**
**[6]न तदा ब्राह्मणः कश्चित्स्वधर्ममुपजीवति।**
**क्षत्रिया अपि वैश्याश्च विकर्मस्था नराधिप।।**

स्वधर्मं याजनप्रतिग्रहादि। नीटी.

**[7]अल्पायुषः स्वल्पबला अल्पतेजःपराक्रमाः।**
**अल्पदेहाल्पसाराश्च तथा सत्याल्पभाषिणः।।**

(१) **भा.** ३।१८६।२४-२६; **भामु.** ३।१८८।२९-३२.

(२) **भा.** ३।१८६।२७; **भामु.** ३।१८८।३२-३३ पिण्डोदक (दण्डाजिन).

(३) **भा.** ३।१८६।२८; **भामु.** ३।१८८।३३-३४.

(४) **भा.** ३।१८६।२९; **भामु.** ३।१८८।३४-३५ मिथ्या (मृषा).

(५) **भा.** ३।१८६।३०; **भामु.** ३।१८८।३५-३६ आन्ध्राः (अन्ध्राः) और्णिकाः शूद्रा (बाह्लिकाः शूरा).

(६) **भा.** ३।१८६।३१; **भामु.** ३।१८८।३६-३७ या अपि (याश्चापि).

(७) **भा.** ३।१८६।३२; **भामु.** ३।१८८।३७-३८ अल्पतेजः (स्वल्पवीर्य) देहाल्पसारा (साराल्पदेहा).

सत्येऽल्पं सत्याल्पम्। सत्यवादोऽत्यन्तमल्प इत्यर्थः। नीटी.

**[1]बहुशून्या जनपदा मृगव्यालावृता दिशः।**
**युगान्ते समनुप्राप्ते वृथा च ब्रह्मचारिणः।**
**भोवादिनस्तथा शूद्रा ब्राह्मणाश्चाऽऽर्यवादिनः।।**

वृथा अनुभवाभावात्। नीटी.

**[2]युगान्ते मनुजव्याघ्र भवन्ति बहुजन्तवः।**
**न तथा घ्राणयुक्ताश्च सर्वगन्धा विशां पते।**
**रसाश्च मनुजव्याघ्र न तथा स्वादुयोगिनः।।**
**बहुप्रजा ह्रस्वदेहाः शीलाचारविवर्जिताः।**
**मुखेभगाः स्त्रियो राजन्भविष्यन्ति युगक्षये।।**

मुखेभगाः स्त्रियो वङ्गेषु प्रसिद्धाः प्रथमम् मुखेनैव भगकार्यं कृत्वा पुरुषस्य काममुद्दीपयन्त्यः, अत्यन्तं रतार्तत्वात्। नीटी.

**[3]अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।**
**केशशूलाः स्त्रियो राजन्भविष्यन्ति युगक्षये।।**

'अट्टमन्नं शिवो वेदो ब्राह्मणाश्च चतुष्पथाः। केशो भगं समाख्यातं शूलं तद्विक्रयं विदुः।।' इति पूर्वेषां व्याख्या-संक्षेपः। अट्टम् अन्नम्, तदेव शूलं दुःखदं येषां ते क्षुद्व्याधिग्रस्ता इत्यर्थः। शिवाः सर्वपुरुषप्रार्थनीयतया कल्याणवत्यः शूलाः पण्यस्त्रियः येषु ते शिवशूलाः विटवाराङ्गनापूर्णाश्चतुष्पथा इत्यर्थः। स्त्रियः पाणिग्रहण-वत्योऽपि केशोपलक्षितं सौभाग्यं लज्जामूलं शीलं शूलमिव दुःखदं त्याज्यं च यासां ताः केशशूलाः। भर्तृद्वेषिण्यस्त्यक्त-लज्जाश्च इत्यर्थः। 'अट्टं भक्ते च शुष्के च शूलं स्याद्रोग आयुधे। योगे शूला तु पण्यस्त्री शिवं क्षेमे जले सुखे।। चतुष्पथश्चतुर्मार्गे संगमे ब्राह्मणेऽपि च। केशः स्यात् पुंसि वरुणे ह्रीबेरे कुन्तलेऽपि च।।' इति मेदिनी। ह्रीबेरं लज्जामूलं शीलमित्यर्थः। बेरशब्दः कर्णाटेषु मूले प्रसिद्धः। नीटी.

(१) **भा.** ३।१८६।३३; **भामु.** ३।१८८।३८-३९.

(२) **भा.** ३।१८६।३४-३५; **भामु.** ३।१८८।४०-४१.

(३) **भा.** ३।१८६।३६; **भामु.** ३।१८८।४२; **शूक.** २४४ उत्तरार्धे (वनिताः केशशूलिन्यो भविष्यन्ति कलौ युगे।।).

**[1]अल्पक्षीरास्तथा गावो भविष्यन्ति जनाधिप।**
**अल्पपुष्पफलाश्चापि पादपा बहुवायसाः।।**
**ब्रह्मवध्यावलिप्तानां तथा मिथ्याभिशंसिनाम्।**
**नृपाणां पृथिवीपाल प्रतिगृह्णन्ति वै द्विजाः।।**
**लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः।**
**भिक्षार्थं पृथिवीपाल चञ्चूर्यन्ते द्विजैर्दिशः।।**

मिथ्याधर्मः कपटधर्मः स एव ध्वज इव ख्यात्यर्थं ज्ञाप्यो येषां ते तथा। चञ्चूर्यन्ते पीड्यन्ते। दिशः दिक्स्थाः जनाः। नीटी.

**करभारभयात्पुंसो गृहस्थाः परिमोषकाः।**
**मुनिच्छद्माकृतिच्छन्ना वाणिज्यमुपजीवते।।**
**मिथ्या च नखरोमाणि धारयन्ति नरास्तदा।**
**अर्थलोभान्नरव्याघ्र वृथा च ब्रह्मचारिणः।।**
**आश्रमेषु वृथाचाराः पानपा गुरुतल्पगाः।**
**ऐहलौकिकमीहन्ते मांसशोणितवर्धनम्।।**

पानपाः मद्यपाः। नीटी.

**बहुपाषण्डसंकीर्णाः परान्नगुणवादिनः।**
**आश्रमा मनुजव्याघ्र न भवन्ति युगक्षये।।**
**यथर्तुवर्षी भगवान्न तथा पाकशासनः।**
**न तदा सर्वबीजानि सम्यग्रोहन्ति भारत।।**
**[2]हिंसाभिरामश्च जनस्तथा संपद्यतेऽशुचिः।।**

शुचिः ब्राह्मणपरिव्राजकादिः। अशुचिरिति वा छेदः। नीटी.

**[3]अधर्मफलमत्यर्थं तदा भवति चानघ।।**
**[4]तथा च पृथिवीपाल यो भवेद्धर्मसंयुतः।**
**अल्पायुः स हि मन्तव्यो न हि धर्मोऽस्ति कश्चन।।**
**[5]भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते जनाः।**
**वणिजश्च नरव्याघ्र बहुमाया भवन्त्युत।।**

(१) **भा.** ३।१८६।३७-४४; **भामु.** ३।१८८।४३-५०.

(२) **भामु.** ३।१८८।५१.

(३) **भा.** ३।१८६।४४; **भामु.** ३।१८८।५१.

(४) **भा.** ३।१८६।४५; **भामु.** ३।१८८।५२ तथा (तदा).

(५) **भा.** ३।१८६।४६; **भामु.** ३।१८८।५३ णते जनाः (डते जनाः).

**[१]धर्मिष्ठाः परिहीयन्ते पापीयान्वर्धते जनः।**
**धर्मस्य बलहानिः स्यादधर्मश्च बली तथा।।**
**[२]अल्पायुषो दरिद्राश्च धर्मिष्ठा मानवास्तदा।**
**दीर्घायुषः समृद्धाश्च विधर्माणो युगक्षये।।**
विधर्माणः त्यक्तधर्माः। नीटी.
**[३]नगराणां विहारेषु विधर्माणो युगक्षये।।**
नगराणां नगरस्थानां विहारेषु क्रीडासु विधर्माणः व्यभिचारिणः। नीटी.
**[४]अधर्मिष्ठैरुपायैश्च प्रजा व्यवहरन्त्युत।**
**संचयेनापि चाल्पेन भवन्त्याढ्या मदान्विताः।।**
आढ्योऽहमिति मदः आढ्यमदः। नीटी.
**[५]धनं विश्वासतो न्यस्तं मिथो भूयिष्ठशो नराः।**
**हर्तुं व्यवसिता राजन्मायाचारसमन्विताः।।**
**[६]नैतदस्तीति मनुजा वर्तन्ते निरपत्रपाः।।**
**[७]पुरुषादानि सत्त्वानि पक्षिणोऽथ मृगास्तथा।**
**नगराणां विहारेषु चैत्येष्वपि च शेरते।।**
पुरुषादानि वृकव्याघ्रादीनि। चैत्यैषु देवतास्थानेषु। नीटी.
**सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप।**
**दशद्वादशवर्षाणां पुंसां पुत्रः प्रजायते।।**
गर्भधराः अतिकामातुरा इत्यर्थः। नीटी.
**भवन्ति षोडशे वर्षे नराः पलितिनस्तथा।**
**आयुःक्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते।।**
**[८]क्षीणे युगे महाराज तरुणा वृद्धशीलिनः।**
**तरुणानां च यच्छीलं तद्वृद्धेषु प्रजायते।।**

(१) **भा.** ३।१८६।४७; **भामु.** ३।१८८।५४.
(२) **भा.** ३।१८६।४८; **भामु.** १।१८८।५५ स्तदा (स्तथा).
(३) **भामु.** ३।१८८।५६.
(४) **भा.** ३।१८६।४९; **भामु.** ३।१८८।५६-५७ नापि चा (न तथाऽ) ढ्या म (ढ्यम).
(५) **भा.** ३।१८६।५०; **भामु.** ३।१८८।५७-५८ न्माया (न्पापा).
(६) **भामु.** ३।१८८।५८.
(७) **भा.** ३।१८६।५१-५३; **भामु.** ३।१८८।५९-६१.
(८) **भा.** ३।१८६।५४; **भामु.** ३।१८८।६२ क्षीणे युगे (क्षीणायुषो).

**[१]विपरीतास्तदा नार्यो वञ्चयित्वा रहः पतीन्।**
**व्युच्चरन्त्यपि दुःशीला दासैः पशुभिरेव च।।**
अर्हतः योग्यान्। नीटी.
**[२]वीरपत्न्यस्तथा नार्यः संश्रयन्ति नरान्नृप।**
**भर्तारमपि जीवन्तमन्यान् व्यभिचरन्त्युत।।**

युगभेदेन विष्णोर्वर्णभेदाः, त्रेतादिषु क्रमेण एकद्वित्रि-
धर्मपादक्षयः आयुर्वीर्यबुद्धिबलतेजसां क्षयश्च,
कलियुगान्ते सर्वविधिनिषेधातिक्रम-
वर्णसंकरादीनां दिक्प्रज्वलना-
द्युत्पातादीनां च कलि-
वृत्तान्तानां विस्तरेण
वर्णनम्

**[३]श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम।**
**रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा।।**
**[४]आश्चर्यभूतं भवतः श्रुतं नो वदतां वर।**
**मुने भार्गव यद्वृत्तं युगादौ प्रभवाप्ययौ।।**
**[५]अस्मिन्कलियुगेऽप्यस्ति पुनः कौतूहलं मम।**
**समाकुलेषु धर्मेषु किं नु शेषं भविष्यति।।**
किं तु कथं तु शेषं जगत् भविष्यति उत्कर्षं प्राप्स्यति? नीटी.
**[६]किंवीर्या मानवास्तत्र किमाहारविहारिणः।**
**किमायुषः किंवसना भविष्यन्ति युगक्षये।।**
**कां च काष्ठां समासाद्य पुनः संपत्स्यते कृतम्।**
**विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे।।**
काष्ठाम् अवधिम्। कृतं कृतयुगम्। नीटी.
**[७]इत्युक्तः स मुनिश्रेष्ठः पुनरेवाभ्यभाषत।**
**रमयन्वृष्णिशार्दूलं पाण्डवांश्च महामुनिः।।**

(१) **भा.** ३।१८६।५५; **भामु.** ३।१८८।६३ त्वा रहः (त्वाऽर्हतः).
(२) **भामु.** ३।१८८।६४.
(३) **भा.** ३।१८७।३१; **भामु.** ३।१८९।३२.
(४) **भा.** ३।१८८।४; **भामु.** ३।१९०।२ वाप्ययौ (वात्ययम्).
(५) **भा.** ३।१८८।५; **भामु.** ३।१९०।३ गेऽप्य (गे त्व) किं नु (किं तु).
(६) **भा.** ३।१८८।६-७; **भामु.** ३।१९०।४-५.
(७) **भा.** ३।१८८।८; **भामु.** ३।१९०।६ महामुनिः (महानृषिः).

मार्कण्डेय उवाच –

[1]शृणु राजन्मया दृष्टं यत्पुरा श्रुतमेव च।
अनुभूतं च राजेन्द्र देवदेवप्रसादजम्।।
[2]भविष्यं सर्वलोकस्य वृत्तान्तं भरतर्षभ।
कलुषं कालमासाद्य कथ्यमानं निबोध मे।।

कलुषं कलिम्। नीटी.

[3]कृते चतुष्पात्सकलो निर्व्याजोपाधिवर्जितः।
वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्पुरा।।

निर्व्याजः छद्महीनः। उपाधिवर्जितः लोभादिहीनः। वृष इव चतुष्पात्। नीटी.

[4]अधर्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः।
त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म उच्यते।।

अर्धेन अधर्मेण। नीटी.

[5]त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति।
तामसं युगमासाद्य तदा भरतसत्तम।
चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति।।
[6]आयुर्वीर्यमथो बुद्धिर्बलं तेजश्च पाण्डव।
मनुष्याणामनुयुगं ह्रसतीति निबोध मे।।
राजानो ब्राह्मणा वैश्याः शूद्राश्चैव युधिष्ठिर।
व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका नराः।।

धर्मवैतंसिकाः धर्मजालिकाः। 'वीतंसो बन्धनोपाये पशूनां पक्षिणामपि।' इति मेदिनी। धर्मजालं विस्तार्य लोकान् वञ्चयन्तीत्यर्थः। नीटी.

सत्यं संक्षेप्स्यते लोके नरैः पण्डितमानिभिः।
सत्यहान्या ततस्तेषामायुरल्पं भविष्यति।।
[7]आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपशिक्षितुम्।
विद्याहीनानविज्ञानाल्लोभोऽप्यभिभविष्यति।।

(१) भामु. ३।१९०।७.

(२) भा. ३।१८८।९; भामु. ३।१९०।८.

(३) भा. ३।१८८।१०; भामु. ३।१९०।९ ष्येष्वभवत्पुरा (ष्ये भरतर्षभ).

(४) भा. ३।१८८।११; भामु. ३।१९०।१०.

(५) भा. ३।१८८।१२ द्वितीयार्धं नास्ति; भामु. ३।१९०।११-१२.

(६) भा. ३।१८८।१३-१५; भामु. ३।१९०।१२-१५.

(७) भा. ३।१८८।१६; भामु. ३।१९०।१५-१६ शिक्षितुम् (जीवितुम्).

[1]लोभक्रोधपरा मूढाः कामसक्ताश्च मानवाः।
वैरबद्धा भविष्यन्ति परस्परवधेप्सवः।।
[2]ब्राह्मणाः क्षत्रिया वैश्याः संकीर्यन्तः परस्परम्।
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः।।
[3]अन्त्या मध्या भविष्यन्ति मध्याश्चान्तावसायिनः।
ईदृशो भविता लोको युगान्ते पर्युपस्थिते।।

अन्त्या इति। चाण्डालाः क्षत्रियादिकर्म क्षत्रियादयश्चाण्डालकर्म करिष्यन्तीत्यर्थः। नीटी.

[4]वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः।
भार्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये।।

शाणी शणसूत्रजा। नीटी.

[5]मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकम्।
गोषु नष्टासु पुरुषा भविष्यन्ति युगक्षये।।
[6]अन्योन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः।
अजपा नास्तिकाः स्तेना भविष्यन्ति युगक्षये।।
सरित्तीरेषु कुद्दालैर्वापयिष्यन्ति चौषधीः।
ताश्चाप्यल्पफलास्तेषां भविष्यन्ति युगक्षये।।
[7]श्राद्धे दैवे च पुरुषा ये च नित्यं धृतव्रताः।
तेऽपि लोभसमायुक्ता भोक्ष्यन्तीह परस्परम्।।
[8]पिता पुत्रस्य भोक्ता च पितुः पुत्रस्तथैव च।
अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये।।
[9]न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः।
न यक्ष्यन्ति न होष्यन्ति हेतुवादविलोभिताः।।

(१) भा. ३।१८८।१७; भामु. ३।१९०।१६-१७ काम (कामा) धेप्सवः (धैषिणः).

(२) भा. ३।१८८।१८; भामु. ३।१९०।१७-१८; पमा. १।१२३ संकीर्यन्तः (संगिरन्ते).

(३) भा. ३।१८८।१९; भामु. ३।१९०।१८-१९ श्चान्तावसायिनः (श्चान्त्या न संशयः).

(४) भा. ३।१८८।२०; भामु. ३।१९०।१९-२०.

(५) भा. ३।१८८।२१; भामु. ३।१९०।२०-२१ पुरुषा + (येऽपि नित्यं धृतव्रताः। तेऽपि लोभसमायुक्ता).

(६) भा. ३।१८८।२२-२३; भामु. ३।१९०।२२-२३.

(७) भा. ३।१८८।२४; भामु. ३।१९०।२४ ये च (येऽपि).

(८) भा. ३।१८८।२५; भामु. ३।१९०।२५.

(९) भा. ३।१८८।२६; भामु. ३।१९०।२६ लोभिताः(मोहिताः).

**[१]निम्नेष्वीहां करिष्यन्ति हेतुवादविमोहिताः।।**

निम्नेषु हीनेषु कर्मसु। नीटी.

**[२]निम्ने कृषिं करिष्यन्ति योक्ष्यन्ति धुरि धेनुकाः।**
**एकहायनवत्सांश्च वाहयिष्यन्ति मानवाः।।**

**[३]पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा।**
**निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते।।**

बृहद्वादी 'अकर्ता ब्रह्माऽहम्'इति वदनशीलः। नीटी.

**म्लेच्छभूतं जगत्सर्वं निष्क्रियं यज्ञवर्जितम्।**
**भविष्यति निरानन्दमनुत्सवमथो तथा।।**
**प्रायशः कृपणानां हि तथा बन्धुमतामपि।**
**विधवानां च वित्तानि हरिष्यन्तीह मानवाः।**

**[४]अल्पवीर्यबलाः स्तब्धा लोभमोहपरायणाः।।**
**तत्कथादानसंतुष्टा दुष्टानामपि मानवाः।**
**परिग्रहं करिष्यन्ति पापाचारपरिग्रहाः।।**

**[५]संघातयन्तः कौन्तेय राजानः पापबुद्धयः।**
**परस्परवधोद्युक्ता मूर्खाः पण्डितमानिनः।**
**भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः।।**

**[६]अरक्षितारो लुब्धाश्च मानाहंकारदर्पिताः।**
**केवलं दण्डरुचयो भविष्यन्ति युगक्षये।।**

**[७]आक्रम्याऽऽक्रम्य साधूनां दारांश्चैव धनानि च।**
**भोक्ष्यन्ते निरनुक्रोशा रुदतामपि भारत।।**

**[८]न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते।**
**स्वयंग्राहा भविष्यन्ति युगान्ते पर्युपस्थिते।।**

(१) **भामु.** ३।१९०।२६.

(२) **भा.** ३।१८८।२७; **भामु.** ३।१९०।२७ वाहयिष्यन्ति (योजयिष्यन्ति).

(३) **भा.** ३।१८८।२८-३०; **भामु.** ३।१९०।२८-३०.

(४) **भा.** ३।१८८।३१; **भामु.** ३।१९०।३१-३२ अल्प (स्वल्प) पापा (माया).

(५) **भा.** ३।१८८।३२; **भामु.** ३।१९०।३२-३३ संघात (समाह्व).

(६) **भा.** ३।१८८।३३; **भामु.** ३।१९०।३४.

(७) **भा.** ३।१८८।३४; **भामु.** ३।१९०।३५ श्चैव (श्चापि).

(८) **भा.** ३।१८८।३५; **भामु.** ३।१९०।३६ पर्यु (समु).

**[१]राजानश्चाप्यसंतुष्टाः परार्थान्मूढचेतसः।**
**सर्वोपायैर्हरिष्यन्ति युगान्ते पर्युपस्थिते।।**

परार्थान् परधनानि। नीटी.

**[२]म्लेच्छीभूतं जगत्सर्वं भविष्यति च भारत।**
**हस्तो हस्तं परिमुषेद्युगान्ते पर्युपस्थिते।।**

हस्तो हस्तं परिमुषेत् हस्तवदेकोदरजोऽपि भ्राता भ्रातरं वञ्चयेदेव। नीटी.

**[३]सत्यं संक्षिप्यते लोके नरैः पण्डितमानिभिः।**
**स्थविरा बालमतयो बालाः स्थविरबुद्धयः।।**

**[४]भीरवः शूरमानीनः शूरा भीरुविषादिनः।**
**न विश्वसन्ति चान्योन्यं युगान्ते पर्युपस्थिते।।**

**[५]एकाहार्यं जगत्सर्वं लोभमोहव्यवस्थितम्।**
**अधर्मो वर्धति महान्न च धर्मः प्रवर्तते।।**

एकाहार्यम् एकविधमेव मांसशाकादिकमाहारमर्हतीति तथा। भक्ष्याभक्ष्यविभागो नास्तीत्यर्थः। नीटी.

**[६]ब्राह्मणाः क्षत्रिया वैश्या न शिष्यन्ति जनाधिप।**
**एकवर्णस्तदा लोको भविष्यति युगक्षये।।**

एकवर्णः, वर्णविभागनाशनात्। नीटी.

**[७]न क्षंस्यति पिता पुत्रं पुत्रश्च पितरं तथा।**
**भार्या च पतिशुश्रूषां न करिष्यति काचन।।**

**[८]ये यवान्ना जनपदा गोधूमान्नास्तथैव च।**
**तान्देशान्संश्रयिष्यन्ति युगान्ते पर्युपस्थिते।।**

**[९]स्वैराहाराश्च पुरुषा योषितश्च विशां पते।**
**अन्योन्यं न सहिष्यन्ति युगान्ते पर्युपस्थिते।।**

(१) **भा.** ३।१८८।३६; **भामु.** ३।१९०।३७.

(२) **भा.** ३।१८८।३७; **भामु.** ३।१९०।३८ च भारत (न संशयः) पर्यु (समु).

(३) **भा.** ३।१८८।३८; **भामु.** ३।१९०।३९.

(४) **भा.** ३।१८८।३९; **भामु.** ३।१९०।४० प्रथमचरणे (भीरुस्तथा शूरमानी).

(५) **भा.** ३।१८८।४०; **भामु.** ३।१९०।४१ जगत्स (युगं स) ति महान्न च (ते तत्र न तु).

(६) **भा.** ३।१८८।४१; **भामु.** ३।१९०।४२.

(७) **भा.** ३।१८८।४२; **भामु.** ३।१९०।४३ भार्या च (भार्याश्च) ति काचन (न्ति संक्षये).

(८) **भा.** ३।१८८।४३; **भामु.** ३।१९०।४४.

(९) **भा.** ३।१८८।४४; **भामु.** ३।१९०।४५ हारा (चारा).

[1]म्लेच्छभूतं जगत्सर्वं भविष्यति युधिष्ठिर।
न श्राद्धैर्हि पितॄंश्चापि तर्पयिष्यन्ति मानवाः।।
[2]न कश्चित्कस्यचिच्छ्रोता न कश्चित्कस्यचिद्गुरुः।
तमोग्रस्तस्तदा लोको भविष्यति नराधिप।।
[3]परमायुश्च भविता तदा वर्षाणि षोडश।
ततः प्राणान्विमोक्ष्यन्ति युगान्ते पर्युपस्थिते।।
[4]पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते।
सप्तवर्षाष्टवर्षाश्च प्रजास्यन्ति नरास्तदा।।

प्रजास्यन्ति प्रजाः जनयिष्यन्ति। नीटी.

पत्यौ स्त्री तु तदा राजन्पुरुषो वा स्त्रियं प्रति।
युगान्ते राजशार्दूल न तोषमुपयास्यति।।
अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति।
न कश्चित्कस्यचिद्दाता भविष्यति युगक्षये।।
[5]अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।
केशशूलाः स्त्रियश्चापि भविष्यन्ति युगक्षये।।

(१) अस्यार्थमाह परशुरामः – 'अट्टमन्नं शिवो वेदः शूलं विक्रय एव च। केशश्च भगमित्याहुर्वेदतत्त्वार्थदर्शिनः।।'। शूक. २४४

(२) 'भविष्यन्ति कलौ युगे' इत्यनेन निन्द्यत्वप्रदर्शने तात्पर्यम्। * संर. ६७७

[6]म्लेच्छाः क्रूराः सर्वभक्षा दारुणाः सर्वकर्मसु।
भाविनः पश्चिमे काले मनुष्या नात्र संशयः।।
[7]क्रयविक्रयकाले च सर्वः सर्वस्य वञ्चनम्।
युगान्ते भरतश्रेष्ठ वृत्तिलोभात्करिष्यति।।

* शेषं शूकवत्।

(१) भा. ३।१८८।४५; भामु. ३।१९०।४६ उत्तरार्धे (न श्राद्धैस्तर्पयिष्यन्ति दैवतानीह मानवाः।।).

(२) भा. ३।१८८।४६; भामु. ३।१९०।४७ नरा (जना).

(३) भा. ३।१८८।४७; भामु. ३।१९०।४८ पर्यु (समु).

(४) भा. ३।१८८।४८-५०; भामु. ३।१९०।४९-५१.

(५) भा. ३।१८८।५१; भामु. ३।१९०।५२; शूक. २४४ उत्तरार्धे (वनिताः केशशूलिन्यो भविष्यन्ति कलौ युगे।।); संर. ६७६ शूकवत्.

(६) भा. ३।१८८।५२; भामु. ३।१९०।५३; म्लेच्छाः क्रूराः (म्लेच्छाचाराः).

(७) भा. ३।१८८।५३; भामु. ३।१९०।५४.

[1]ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा।
आत्मच्छन्देन वर्तन्ते युगान्ते पर्युपस्थिते।।

ज्ञानानि ज्ञेयस्वरूपाणि। नीटी.

[2]स्वभावात्क्रूरकर्माणश्चान्योन्यमभिशङ्किनः।
भवितारो जनाः सर्वे संप्राप्ते युगसंक्षये।।
[3]आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः।
भविता संक्षयो लोके जीवितस्य च देहिनाम्।।
[4]तथा लोभाभिभूताश्च चरिष्यन्ति महीमिमाम्।
ब्राह्मणाश्च भविष्यन्ति ब्रह्मस्वानि च भुञ्जते।।
[5]हाहाकृता द्विजाश्चैव भयार्ता वृषलार्दिताः।
त्रातारमलभन्तो वै भ्रमिष्यन्ति महीमिमाम्।।

वृषलार्दिताः शूद्रपीडिताः। नीटी.

[6]जीवितान्तकरा रौद्राः क्रूराः प्राणिविहिंसकाः।
यदा भविष्यन्ति नरास्तदा संक्षेप्स्यते युगम्।।

संक्षेप्स्यते नाशं गमिष्यति। नीटी.

[7]आश्रयिष्यन्ति च नदीः पर्वतान्विषमाणि च।
प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह।।
[8]दस्युप्रपीडिता राजन्काका इव द्विजोत्तमाः।
कुराजभिश्च सततं करभारप्रपीडिताः।।

काका इव सर्वतः शङ्किनः नीचवृत्त्युपजीविनो वा। नीटी.

(१) भा. ३।१८८।५४; भामु. ३।१९०।५५ पर्यु (समु).

(२) भा. ३।१८८।५५; भामु. ३।१९०।५६ शङ्कि (शंसि) युगसं (तु युग); पमा. १।१२३ भिशङ्किनः (विशङ्किताः) जनाः (नराः).

(३) भा. ३।१८८।५६; भामु. ३।१९०।५७ संक्षयो (संशयो) च (हि).

(४) भा. ३।१८८।५७; भामु. ३।१९०।५८ (तथा लोभाभिभूताश्च भविष्यन्ति नरा नृप। ब्राह्मणांश्च हनिष्यन्ति ब्राह्मणस्वोपभोगिनः।।).

(५) भा. ३।१८८।५८; भामु. ३।१९०।५९.

(६) भा. ३।१८८।५९; भामु. ३।१९०।६० रौद्राः क्रूराः (क्रूरा रौद्राः).

(७) भा. ३।१८८।६०; भामु. ३।१९०।६१.

(८) भा. ३।१८८।६१; भामु. ३।१९०।६२ प्रपीडिता (भिः पीडिता).

[१]धैर्यं त्यक्त्वा महीपाल दारुणे युगसंक्षये।
विकर्माणि करिष्यन्ति शूद्राणां परिचारकाः।।
शूद्रा धर्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्युपासकाः।
श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः।।
विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः।
एडूकान्पूजयिष्यन्ति वर्जयिष्यन्ति देवताः।
शूद्राः परिचरिष्यन्ति न द्विजान्युगसंक्षये।।

एडूकान् – अस्थ्यङ्कितानि कुड्यानि। 'भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम्' इत्यमरः। नीटी.

आश्रमेषु महर्षीणां ब्राह्मणावसथेषु च।
देवस्थानेषु चैत्येषु नागानामालयेषु च।।
एडूकचिह्ना पृथिवी न देवगृहभूषिता।
भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम्।।
यदा रौद्रा धर्महीना मांसादाः पानपास्तथा।
भविष्यन्ति नरा नित्यं तदा संक्षेप्स्यते युगम्।।
[२]पुष्पे पुष्पं यदा राजन्फले फलमुपाश्रितम्।
प्रजास्यति महाराज तदा संक्षेप्स्यते युगम्।।
[३]अकालवर्षी पर्जन्यो भविष्यति गते युगे।
अक्रमेण मनुष्याणां भविष्यति तदा क्रिया।
विरोधमथ यास्यन्ति वृषला ब्राह्मणैः सह।।
[४]मही म्लेच्छसमाकीर्णा भविष्यति ततोऽचिरात्।
करभारभयाद्विप्रा भजिष्यन्ति दिशो दश।।
[५]निर्विशेषा जनपदा नरा वृष्टिभिरर्दिताः।
आश्रमानभिपत्स्यन्ति फलमूलोपजीविनः।।

निर्विशेषाः तुल्याचारवेषाः। विष्टिकराः भृतिमदत्त्वा कार्यं कारयन्ति ते। नीटी.

(१) भा. ३।१८८।६२-६७; भामु. ३।१९०।६३-६९.
(२) भा. ३।१८८।६८; भामु. ३।१९०।६९-७० पुष्पे पुष्पं (पुष्पं पुष्पे) द्वितीयचरणे (फले वा फलमाश्रितम्).
(३) भा. ३।१८८।६९; भामु. ३।१९०।७०-७१ ति तदा क्रिया (न्ति तदा क्रियाः).
(४) भा. ३।१८८।७०; भामु. ३।१९०।७२ समा (जना).
(५) भा. ३।१८८।७१; भामु. ३।१९०।७३ दा नरा वृष्टिभिर (दास्तथा विष्टिकरा) नाभिपत्स्य (नुपलप्स्य).

[१]एवं पर्याकुले लोके मर्यादा न भविष्यति।
न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः।।
[२]आचार्योऽपनिधिश्चैव वत्स्यते तदनन्तरम्।
अर्थयुक्त्या प्रवत्स्यन्ति मित्रसंबन्धिबान्धवाः।
अभावः सर्वभूतानां युगान्ते च भविष्यति।।

आचार्योऽपि अपनिधिः निर्धनः भर्त्स्यते धिक्क्रियते। अर्थयुक्त्या धनयोगेन, न तु स्नेहेन धर्मेण वा। नीटी.

[३]दिशः प्रज्वलिताः सर्वा नक्षत्राणि चलानि च।
ज्योतींषि प्रतिकूलानि वाताः पर्याकुलास्तथा।
उल्कापाताश्च बहवो महाभयनिदर्शकाः।।
[४]षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति।
तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्वशः।
कबन्धान्तर्हितो भानुरुदयास्तमये तदा।।

कबन्धान्तर्हितः राह्वन्तर्हितः। नीटी.

[५]अकालवर्षी च तदा भविष्यति सहस्रदृक्।
सस्यानि च न रोक्ष्यन्ति युगान्ते पर्युपस्थिते।।
[६]अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः।
भर्तॄणां वचने चैव न स्थास्यन्ति तदा स्त्रियः।।
[७]पुत्राश्च मातापितरौ हनिष्यन्ति युगक्षये।
सूदयिष्यन्ति च पतीन्स्त्रियः पुत्रानपाश्रिताः।।
अपर्वणि महाराज सूर्यं राहुरुपैष्यति।
युगान्ते हुतभुक्चापि सर्वतः प्रज्वलिष्यति।।
[८]पानीयं भोजनं चैव याचमानास्तदाऽध्वगाः।
न लप्स्यन्ते निवासं च निरस्ताः पथि शेरते।।

(१) भा. ३।१८८।७२; भामु. ३।१९०।७४.
(२) भा. ३।१८८।७३; भामु. ३।१९०।७५-७६ वत्स्यते (भर्त्स्य ते) च भ (संभ).
(३) भा. ३।१८८।७४; भामु. ३।१९०।७६-७७ णि चलानि (ण्यप्रभाणि).
(४) भा. ३।१८८।७५; भामु. ३।१९०।७८-७९ मये (मने).
(५) भा. ३।१८८।७६; भामु. ३।१९०।७९-८० च तदा (भगवान्).
(६) भा. ३।१८८।७७; भामु. ३।१९०।८०-८१ तदा (ततः).
(७) भा. ३।१८८।७८-७९; भामु. ३।१९०।८१-८३.
(८) भा. ३।१८८।८०; भामु. ३।१९०।८३-८४ चैव (चापि).

**[१]निर्घातवायसा नागाः शकुनाः समृगद्विजाः।**
**रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्युपस्थिते।।**
**मित्रसंबन्धिनश्चापि संत्यक्ष्यन्ति नरास्तदा।**
**जनं परिजनं चापि युगान्ते पर्युपस्थिते।।**
**अथ देशान्दिशश्चापि पत्तनानि पुराणि च।**
**क्रमशः संश्रयिष्यन्ति युगान्ते पर्युपस्थिते।।**
**हा तात हा सुतेत्येवं तदा वाचः सुदारुणाः।**
**विक्रोशमानश्चान्योन्यं जनो गां पर्यटिष्यति।।**

कलियुगसमाप्तौ दैवानुकूल्येन चन्द्रसूर्य-
बृहस्पतिषु तिष्यनक्षत्रे समेतेषु पुनः
कृतयुगं प्रादुर्भविष्यति, कल्कि-
र्विष्णुयशा नाम द्विजः
संभलग्रामे संभूतो
युगपरिवर्तनं
करिष्यति

**ततस्तुमुलसंघाते वर्तमाने युगक्षये।**
**द्विजातिपूर्वको लोकः क्रमेण प्रभविष्यति।।**
**ततः कालान्तरेऽन्यस्मिन्पुनर्लोकविवृद्धये।**
**भविष्यति पुनर्दैवमनुकूलं यदृच्छया।।**
**[२]यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती।**
**एकराशौ समेष्यन्ति प्रपत्स्यति तदा कृतम्।।**

गुरुसूर्यचन्द्राः यदा युगपत् पुष्यनक्षत्रमेष्यन्ति तदा कृतयुगप्रवृत्तिरित्यर्थः। नीटी.

**[३]कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च।**
**प्रदक्षिणा ग्रहाश्चापि भविष्यन्त्यनुलोमगाः।**
**क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयम्।।**
**[४]कल्किर्विष्णुयशा नाम द्विजः कालप्रचोदितः।**
**उत्पत्स्यते महावीर्यो महाबुद्धिपराक्रमः।।**

(१) **भा.** ३।१८८।८१-८६; **भामु.** ३।१९०।८४-९०.

(२) **भा.** ३।१८८।८७; **भामु.** ३।१९०।९०-९१ चन्द्रश्च सूर्यश्च (सूर्यश्च चन्द्रश्च).

(३) **भा.** ३।१८८।८८; **भामु.** ३।१९०।९१-९२.

(४) **भा.** ३।१८८।८९; **भामु.** ३।१९०।९३ कल्किर्वि (कल्की वि).

**[१]संभूतः संभलग्रामे ब्राह्मणावसथे शुभे।**
**मनसा तस्य सर्वाणि वाहनान्यायुधानि च।**
**उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च।।**
**स धर्मविजयी राजा चक्रवर्ती भविष्यति।**
**स चेमं संकुलं लोकं प्रसादमुपनेष्यति।।**
**[२]उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः।**
**स संक्षेपो हि सर्वस्य युगस्य परिवर्तकः।।**
**[३]स सर्वत्र गतान्क्षुद्रान्ब्राह्मणैः परिवारितः।**
**उत्सादयिष्यति तदा सर्वान्म्लेच्छगणान्द्विजः।।**

पृथिवीदान – स्वायंभुवमर्यादास्थापनपूर्वकं
कल्केर्वनाश्रयणम्

**मार्कण्डेय उवाच –**

**[४]ततश्चोरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमाम्।**
**वाजिमेधे महायज्ञे विधिवत्कल्पयिष्यति।।**

कल्पयिष्यति दास्यति। नीटी.

**[५]स्थापयित्वा स मर्यादाः स्वयंभुविहिताः शुभाः।**
**वनं पुण्ययशःकर्मा जरावान्संश्रयिष्यति।।**
**[६]तच्छीलमनुवर्त्स्यन्ते मनुष्या लोकवासिनः।**
**विप्रैश्चोरक्षये चैव कृते क्षेमं भविष्यति।।**

विप्रैर्हेतुभिः। कृते युगे। नीटी.

**[७]कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च।**
**स्थापयन्विप्रशार्दूलो देशेषु विजितेषु च।।**

कृष्णाजिनानि ब्रह्मचारिपरिधेयानि। तेन सर्वाणि ब्राह्मणकर्माणि लक्ष्यन्ते। शक्तीरित्यादिना राजधर्माः। स्थापयन् ब्रह्मक्षत्रयोर्धर्मव्यवस्थां चक्रे इति भावः। नीटी.

(१) **भा.** ३।१८८।९०-९१; **भामु.** ३।१९०।९४-९६.

(२) **भा.** ३।१८८।९३ **भामु.** ३।१९०।९६-९७ स संक्षेपो (संक्षेपको).

(३) **भा.** ३।१८८।९२; **भामु.** ३।१९०।९७ सर्वान्म्ले (सर्वम्ले).

(४) **भा.** ३।१८९।१; **भामु.** ३।१९१।१.

(५) **भा.** ३।१८९।२; **भामु.** ३।१९१।२ स (च) चतुर्थचरणे (रमणीयं प्रवेक्ष्यति).

(६) **भा.** ३।१८९।३; **भामु.** १९१।३ वर्त्स्यन्ते (वर्त्स्यन्ति) क्षये चैव (क्षयश्चैव).

(७) **भा.** ३।१८९।४; **भामु.** ३।१९१।४ यन्विप्र (यन् द्विज).

[१]संस्तूयमानो विप्रेन्द्रैर्मानयानो द्विजोत्तमान्।
कल्किश्चरिष्यति महीं सदा दस्युवधे रतः।।
[२]हा तात हा सुतेत्येवं तास्ता वाचः सुदारुणाः।
विक्रोशमानान्सुभृशं दस्यून्नेष्यति संक्षयम्।।
[३]ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत।
भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा।।

अधर्मविनाश इति छेदः। नीटी.

कृते पूर्तादयः सर्वे धर्माः प्रवर्तिष्यन्ते

[४]आरामाश्चैव चैत्याश्च तटाकान्यवटास्तथा।
पुष्करिण्यश्च विविधा देवतायतनानि च।
यज्ञक्रियाश्च विविधा भविष्यन्ति कृते युगे।।
[५]ब्राह्मणाः साधवश्चैव मुनयश्च तपस्विनः।
आश्रमाः सहपाषण्डाः स्थिताः सत्ये जनाः प्रजाः।।

ये आश्रमाः सहपाषण्डाः प्राक् स्थितास्ते प्रजाश्च सत्यजना भविष्यन्तीति संबन्धः। नीटी.

[६]जास्यन्ति सर्वबीजानि उप्यमानानि चैव ह।
सर्वेष्वृतुषु राजेन्द्र सर्वं सस्यं भविष्यति।।

प्रयन्ति नश्यन्ति। बीजानि संस्काराः रोप्यमाणानि क्रियमाणैः कर्मभिर्दृढं संपाद्यमानान्यपि ज्ञानबलान्नश्यन्तीत्यर्थः। नीटी.

[७]नरा दानेषु निरता व्रतेषु नियमेषु च।
जपयज्ञपरा विप्रा धर्मकामा मुदा युताः।
पालयिष्यन्ति राजानो धर्मेणेमां वसुंधराम्।।

(१) भा. ३।१८९।५; भामु. ३।१९१।५ कल्किश्च (कल्की च).

(२) भा. ३।१८९।६; भामु. ३।१९१।६ प्रथमचरणे (हा मातस्तात पुत्रेति).

(३) भा. ३।१८९।७; भामु. ३।१९१।७.

(४) भा. ३।१८९।८; द्वितीयार्धं नास्ति; भामु. ३।१९१।८-९ न्यवटा (वसथा).

(५) भा. ३।१८९।९; भामु. ३।१९१।९-१० सत्ये ज (सत्यज).

(६) भा. ३।१८९।१०; भामु. ३।१९१।१०-११ जास्यन्ति (प्रयन्ति) उप्यमाना (रोप्यमाणा).

(७) भा. ३।१८९।११; भामु. ३।१९१।११-१२ जप (जप्य).

[१]व्यवहाररता वैश्या भविष्यन्ति कृते युगे।
षट्कर्मनिरता विप्राः क्षत्रिया रक्षणे रताः।।
[२]शुश्रूषायां रताः शूद्रास्तथा वर्णत्रयस्य च।
एष धर्मः कृतयुगे त्रेतायां द्वापरे तथा।
पश्चिमे युगकाले च यः स ते संप्रकीर्तितः।।
[३]सर्वलोकस्य विदिता युगसंख्या च पाण्डव।
एतत्ते सर्वमाख्यातमतीतानागतं मया।
वायुप्रोक्तमनुसृत्य पुराणमृषिसंस्तुतम्।।
[४]वेदोक्तमायुर्देवानामाशिषश्चैव कर्मणाम्।
फलत्यनुयुगं लोके प्रभावश्च शरीरिणाम्।।

कृतादियुगभेदेन गुणभेदवर्णनम्

[५]न प्रमाणस्थितिर्ह्यस्ति पुष्येऽस्मिन्भरतर्षभ।
गर्भस्थाश्च म्रियन्तेऽत्र तथा जाता म्रियन्ति च।।
[६]महाबला महासत्त्वाः प्रजागुणसमन्विताः।।
[७]प्रजायन्ते च जाताश्च शतशोऽथ सहस्रशः।।

प्रजायन्ते प्रजां जनयन्ति। नीटी.

[८]अजायन्त कृते राजन्मुनयः सुतपोधनाः।।
[९]महोत्साहा महात्मानो धार्मिकाः सत्यवादिनः।
जाताः कृतयुगे राजन्धनिनः प्रियदर्शनाः।।
[१०]आयुष्मन्तो महावीरा धनुर्धरवरा युधि।।

वपुष्मन्तः प्रशस्तदेहाः। नीटी.

[११]वरार्हा युधि जायन्ते क्षत्रियाः शूरसत्तमाः।।

(१) भा. ३।१८९।१२; भामु. ३।१९१।१३ रक्षणे (विक्रमे).

(२) भा. ३।१८९।१३; भामु. ३।१९१।१४-१५.

(३) भा. ३।१८९।१४; भामु. ३।१९१।१५-१६ मया (तथा).

(४) भामु. ३।२००।११६.

(५) भा. ६।११।७; भामु. ६।१०।७ पुष्ये (तिष्ये).

(६) भा. ६।११।८; भामु. ६।१०।८ प्रजा (प्रज्ञा).

(७) भामु. ६।१०।८.

(८) भा. ६।११।८; भामु. ६।१०।९ (प्रजायन्ते च जाताश्च मुनयो वै तपोधनाः।).

(९) भा. ६।११।९; भामु. ६।१०।९ उत्त. ६।१०।१० पू.

(१०) भा. ६।११।१०; भामु. ६।१०।१० (प्रियदर्शना वपुष्मन्तो महावीर्या धनुर्धराः।).

(११) भामु. ६।१०।११.

[१]जायन्ते क्षत्रियाः शूरास्त्रेतायां चक्रवर्तिनः।।
[२]सर्ववर्णा महाराज जायन्ते द्वापरे सति।
महोत्साहा महावीर्याः परस्परवधैषिणः।।
सर्वे वर्णाः परस्परजयैषिणो जायन्त इति संबन्धः। नीटी.

[३]तेजसाऽल्पेन संयुक्ताः क्रोधनाः पुरुषा नृप।
लुब्धाश्चानृतकाश्चैव पुष्ये जायन्ति भारत।।
[४]ईर्ष्या मानस्तथा क्रोधो मायाऽसूया तथैव च।
पुष्ये भवन्ति मर्त्यानां रागो लोभश्च भारत।।

ईर्ष्या परोत्कर्षासहिष्णुत्वम्। मानः स्वस्मिन् पूज्यताबुद्धिः। क्रोधः अभिज्वलनम्। माया कपटम्। असूया परगुणेषु दोषाविष्करणम्। रागः विषयेषु प्रीतिः। लोभः तल्लिप्सा। नीटी.

[५]संक्षेपो वर्तते राजन्द्वापरेऽस्मिन्नराधिप।।
संक्षेपो गुणानामिति शेषः। नीटी.

[६]असंख्याता भविष्यन्ति भिक्षवो लिङ्गिनस्तथा।
आश्रमाणां विकल्पाश्च निवृत्तेऽस्मिन्कृते युगे।।
[७]अशृण्वानाः पुराणानां धर्माणां प्रवरा गतीः।
उत्पथं प्रतिपत्स्यन्ते काममन्युसमीरिताः।।
[८]भवेत्कृतयुगे धर्मो नाधर्मो विद्यते क्वचित्।
सर्वेषामेव वर्णानां नाधर्मे रमते मनः।।
[९]योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः।
वैदिकानि च कर्माणि भवन्त्यविगुणान्युत।।

(१) भा. ६।११।१०; भामु. ६।१०।११ (त्रेतायां क्षत्रिया राजन् सर्वे वै चक्रवर्तिनः।।).

(२) भा. ६।११।११; भामु. ६।१०।१२ (सर्ववर्णाश्च जायन्ते सदा चैव च द्वापरे। महोत्साहा वीर्यवन्तः परस्परजयैषिणः।।).

(३) भा. ६।११।१२; भामु. ६।१०।१३ ब्धाश्चा (ब्धा अ) पुष्ये (तिष्ये).

(४) भा. ६।११।१३; भामु. ६।१०।१४ तृतीयचरणे (तिष्ये भवति भूतानां).

(५) भा. ६।११।१४; भामु. ६।१०।१५.

(६) भा. १२।६५।२५; भामु. १२।६५।२५.

(७) भा. १२।६५।२६; भामु. १२।६५।२६ प्रवरा (परमा).

(८) भा. १२।७०।८; भामु. १२।६९।८१ भवेत् (ततः).

(९) भा. १२।७०।९; भामु. १२।६९।८२ कर्माणि (सर्वाणि) विगुणा (पि गुणा).

[१]ऋतवश्च सुखाः सर्वे भवन्त्युत निरामयाः।
प्रसीदन्ति नराणां च स्वरवर्णमनांसि च।।
[२]व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः।
विधवा न भवन्त्यत्र नृशंसो नाभिजायते।।
[३]अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा।
त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च।।
[४]नाधर्मो विद्यते तत्र धर्म एव तु केवलः।
इति कार्तयुगानेतान् गुणान्विद्धि युधिष्ठिर।।
...... [५]तदा त्रेता प्रवर्तते।
अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्तते।
कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा।।
अशुभस्य अधर्मस्य। नीटी.

[६]ततस्तु द्वापरं नाम स कालः संप्रवर्तते।
अशुभस्य तदा अर्धं द्वावंशावनुवर्तते।
कृष्टपच्यैव पृथिवी भवत्यल्पफला तथा।।
[७]कलावधर्मो भूयिष्ठं धर्मो भवति तु क्वचित्।
सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः।।
[८]शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्यया।
योगक्षेमस्य नाशश्च वर्तते वर्णसंकरः।।
वैदिकानि च कर्माणि भवन्ति विगुणान्युत।
ऋतवो नसुखाः सर्वे भवन्त्यामयिनस्तथा।।
[९]ह्रसन्ति च मनुष्याणां स्वरवर्णमनांस्युत।
व्याधयश्च भवन्त्यत्र म्रियन्ते चागतायुषः।।

(१) भा. १२।७०।१०; भामु. १२।६९।८३.

(२) भा. १२।७०।११; भामु. १२।६९।८४ नृशंसो नाभि (कृपणो न तु).

(३) भा. १२।७०।१२; भामु. १२।६९।८५.

(४) भा. १२।७०।१३; भामु. १२।६९।८६ केवलः (केवलम्) गुणा (धर्मा).

(५) भा. १२।७०।१४-१५; भामु. १२।६९।८७-८८.

(६) भा. १२।७०।१६-१७; भामु. १२।६९।८९-९० अर्धं (त्वर्धं) त्यल्प (त्यर्ध).

(७) भा. १२।७०।१९; भामु. १२।६९।९२ तु (न).

(८) भा.१२।७०।२०-२१; भामु. १२।६९।९३-९४.

(९) भा. १२।७०।२२; भामु. १२।६९।९५ चागता (च गता).

**[1]विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा।**
**क्वचिद्वर्षति पर्जन्यः क्वचित्सस्यं प्ररोहति।।**
**रसाः सर्वे क्षयं यान्ति...... ।।**

कृतत्रेतयोर्जीवनमिच्छाधीनं प्रजोत्पादनं
च मैथुनं विना संकल्पमात्रसाध्यम्,
द्वापरकलियुगयोः प्रजोत्पादनं
मैथुनसाध्यम्

**[2]यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणाम्।**
**तावत्तावदजीवंस्ते नाऽऽसीद्यमकृतं भयम्।।**

तथा च महाभारते कृतयुगपुरुषानधिकृत्योच्यते – यावदिति। मुक्ता.११

**[3]न चैषां मैथुनो धर्मो बभूव भरतर्षभ।**
**संकल्पादेव चैतेषामपत्यमुदपद्यत।।**
**[4]तत्र त्रेतायुगे काले संकल्पाज्जायते प्रजा।**
**न ह्यभून्मैथुनो धर्मस्तेषामपि जनाधिप।।**
**[5]द्वापरे मैथुनो धर्मः प्रजानामभवन्नृप।**
**तथा कलियुगे राजन्द्वन्द्वमापेदिरे जनाः।।**

कृतादिषु धर्मवेदायुर्लौकिकवैदिककर्म-
फलानां क्रमेण साकल्यं पादशो
ह्रासश्च, कृते चत्वारि
वर्षशतान्यायुः

**[6]चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे।**
**नाधर्मेणाऽऽगमः कश्चित्परस्तस्य प्रवर्तते।।**

कृते युगे, युज्यते वासनावरत्रया बद्ध्यतेऽस्मिन्पुरुषपशुरिति युगं स्वधर्मः तस्मिन् कृते साकल्येन निष्पादिते तस्य कृतयुगात्मनः पुरुषस्य। अधर्मेण श्येनाद्यभिचारकर्मणा। आगमः उपदेशवाक्यम्। स च पर इति विशेषणाद्वेद एव। नीटी.

**[1]इतरेष्वागमाद्धर्मः पादशस्त्ववरोप्यते।**
**चौरिकानृतमायाभिरधर्मश्चोपचीयते।।**

चौर्यं च कानृतं च कुत्सितमनृतं वेदविरुद्धं हिंसादिकर्म। तेन वैदिकं कर्माप्यन्ते बन्धयोग्यत्वादनृतमेवेति दर्शितम्। माया शाठ्यादिरूपा। उपचीयते वर्धते। नीटी.

**[2]अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः।**
**कृते त्रेतादिष्वेतेषां पादशो ह्रसते वयः।।**
**[3]वेदवादाश्चानुयुगं ह्रसन्तीति च नः श्रुतम्।**
**आयूंषि चाऽऽशिषश्चैव वेदस्यैव च यत्फलम्।।**

कृतादीनां क्रमेण तपोज्ञानयज्ञदानपरत्वम्,
ब्राह्मणादयो वर्णाः क्रमेण तपोयज्ञाः
आरम्भयज्ञाः हविर्यज्ञाः
परिचरणयज्ञाश्च

**[4]अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे।**
**अन्ये कलियुगे धर्मा यथाशक्तिकृता इव।।**
**[5]तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम्।**
**द्वापरे यज्ञमेवाऽऽहुर्दानमेव कलौ युगे।।**

(१) तपः परं परविद्या। ज्ञानम् अपरविद्या। ते च 'अथ परा यया तदक्षरमधिगम्यते यत्तददृश्यमग्राह्यम्' इत्यादिना 'तत्रापरा ऋग्वेदो यजुर्वेदः' (मुउ. १।१।५) इत्यादिनाऽथर्वणे प्रसिद्धे। नीटी.

(२) अत्र तपःप्रभृतिभिः कलौ यदलभ्यं तद्दानेन लभ्यमित्यत्र तात्पर्यम्, न तु तपःप्रभृतित्यागे।

स्मृतिकौ. ४६८

---

(१) **भा.** १३।७०।२३-२४; **भामु.** १२।६९।९६-९७.

(२) **भा.** १२।२००।३४३; **भामु.** १२।२०७।३७; **मुक्ता.** ११.

(३) **भा.** १२।२००।३५३; **भामु.** १२।२०७।३८ दपद्यत (पपद्यते).

(४) **भा.** १२।२००।३६; **भामु.** १२।२०७।३९ तत्र त्रे (ततस्त्रे) कल्पा (स्पर्शा).

(५) **भा.** १२।२००।३७; **भामु.** १२।२०७।४०.

(६) **भा.** १२।२२४।२२; **भामु.** १२।२३१।२३.

(१) **भा.** १२।२२४।२३; **भामु.** १२।२३१।२४ चौरि (चौर्य).

(२) **भा.** १२।२२४।२४; **भामु.** १२।२३१।२५ दिष्वेतेषां (युगे त्वेषां).

(३) **भा.** १२।२२४।२५; **भामु.** १२।२३१।२६ ति च (तीह).

(४) **भा.** १२।२२४।२६; **भामु.** १२।२३१।२७ उत्तरार्धे (अन्ये कलियुगे नृणां युगह्रासानुरूपतः।).

(५) **भा.** १२।२२४।२७; **भामु.** १२।२३१।२८ मेव (मेकं); **स्मृतिकौ.** ४६८; **पुम.** ४६७.

**[१]आरम्भयज्ञाः क्षत्रस्य हविर्यज्ञा विशस्तथा।**
**परिचारयज्ञाः शूद्रास्तु तपोयज्ञा द्विजातयः।।**

आलम्भः पशुहिंसा। हविः व्रीह्यादिकम्। परिचारः त्रैवर्णिकसेवा। तपः ब्रह्मोपासनम्। नीटी.

**[२]त्रेतायुगे विधिस्त्वेषां यज्ञानां न कृते युगे।**
**द्वापरे विप्लवं यान्ति यज्ञाः कलियुगे तथा।।**

विधिः अप्रवृत्तप्रवर्तनम्। तच्च त्रेतायामेव, न तु कृते, स्वत एव तत्र तत्सिद्धेः। अत्र धर्ममनुतिष्ठन् पुरुषः कृतम्, धर्मानुष्ठानमारभमाणस्त्रेता, आरब्धुमिच्छन् द्वापरः, तद्विमुखः कलिरिति पूर्वोदाहृतश्रुत्यर्थो न विस्मर्तव्यः।

नीटी.

**[३]अपृथग्धर्मिणो मर्त्या ऋक्सामानि यजूंषि च।**
**काम्यां पुष्टिं पृथग्दृष्ट्वा तपोभिस्तप एव च।।**

'त्रेतायुगे' इत्येतं श्लोकं व्याचष्टे – अपृथगित्यादिना। पृथग्धर्मः पृथक्त्वं भेदः तद्वन्तः पृथग्धर्मिणः (द्वैतनिष्ठाः, अपृथग्धर्मिणः) अद्वैतनिष्ठा मर्त्याः तप एव योगमेव, कृतयुगेऽनुतिष्ठन्तीति शेषः। ऋगादीनि काम्या इष्टीश्च 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति शास्त्रोक्ताः पृथक् तपोभिः आलोचनैः दृष्ट्वा तत्फलम् अनात्मभूतस्वर्गादिरूपं दृष्ट्वा तत्परित्यज्य योगपरा एव बभूवुरित्यर्थः।

नीटी.

**[४]त्रेतायां तु समस्तास्ते प्रादुरासन्महाबलाः।**
**संयन्तारः स्थावराणां जङ्गमानां च सर्वशः।।**
**[५]त्रेतायां संहता ह्येते यज्ञा वर्णास्तथैव च।**
**संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे।।**

(१) **भा.** १२।२२४।६१; **भामु.** १२।२३२।३१ पूर्वार्धे (आलम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः।).

(२) **भा.** १२।२२४।६२; **भामु.** १२।२३२।३२ स्त्वेषां (स्त्वेष).

(३) **भा.** १२।२२४।६३; **भामु.** २२।२३२।३३ काम्यां पुष्टिं (काम्या इष्टीः).

(४) **भा.** १२।२२४।६४; **भामु.** १२।२३२।३४ स्तास्ते (स्ता ये).

(५) **भा.** १२।२२४।६५; **भामु.** १२।२३२।३५ ह्येते (वेदा) र्णास्तथैव च (र्णाश्रमास्तथा) व्यस्यन्ते (भ्रश्यन्ते).

**[१]दृश्यन्ते नापि दृश्यन्ते वेदाः कलियुगेऽखिलाः।**
**उत्सीदन्ते सयज्ञाश्च केवला धर्मसेतवः।।**

त्रेतायां धर्मे नृणां स्वतः प्रवृत्त्यभावात्तत्र संयन्तारः धर्मशास्तारः वेदाश्च संहताः यज्ञाद्यनुष्ठापनाय संनद्धाः आसन्निति सार्धश्लोकार्थः। संरोधादिति सार्धः स्पष्टार्थः।

नीटी.

**[२]कृते युगे यस्तु धर्मो ब्राह्मणेषु प्रदृश्यते।**
**आत्मवत्सु तपोवत्सु श्रुतवत्सु प्रतिष्ठितः।।**

कृतादिशब्दानां कालवाचित्वं सिद्धवत्कृत्याऽऽह – कृते इति। कृतयुगे यश्चतुष्पाद्धर्म उक्तः स इदानीमपि ब्राह्मणेषु दृश्यते अतस्ते एव कृतयुगरूपा इति भावः। आत्मवत्सु जितचित्तेषु। तपोवत्सु योगनिष्ठेषु। श्रुतवत्सु वेदान्तश्रवणादिमत्सु। नीटी.

**[३]अधर्मव्रतसंयोगं यथाधर्मं युगे युगे।**
**विक्रियन्ते स्वधर्मस्था वेदवादा यथायुगम्।।**

त्रेतायुगव्यवहारमाह – सधर्मेति। यथाधर्मम् आचाराद्यनतिक्रम्य स्वधर्मस्थाः अग्निहोत्रादिपराः ये वेदान् वदन्ति ते वेदवादाः वैदिकाः यथागमं वेदोक्तप्रमाणेन धर्मो यज्ञादिस्तत्सहितं व्रतम् एकादश्युपवासादि, संयोगः तीर्थक्षेत्रप्राप्त्यादि, तत्सर्वं तैः विक्रियते कामपूर्वकं क्रियते, वैदिका अपि स्वर्गकामा एव यक्ष्यन्ते। द्वापरे पुत्रादिकामा एव, कलौ शत्रुमरणादिकामा एवेति युगे युगे इत्यस्यार्थः।

नीटी.

**[४]यथा विश्वानि भूतानि वृष्ट्या भूयांसि प्रावृषि।**
**सृज्यन्ते जङ्गमस्थानि तथा धर्मा युगे युगे।।**

तिष्ठन्तीति स्थानि स्थावराणि। जङ्गमानि च स्थानि च जङ्गमस्थानि। भूयांसि वृद्धिमत्तराणि। तथा युगे युगे धर्मा अधर्माश्च वर्धन्ते ह्रसन्ति च। नीटी.

(१) **भा.** १२।२२४।६६; **भामु.** १२।२३२।३६ नापि (न च) सेतवः (पीडिताः).

(२) **भा.** १२।२२४।६७; **भामु.** १२।२३२।३७.

(३) **भा.** १२।२२४।६८; **भामु.** १२।२३२।३८ अधर्म (सधर्म) यन्ते (यते) युगम् (गमम्).

(४) **भा.** १२।२२४।६९; **भामु.** १२।२३२।३९.

कृते धर्मसंशयाभावः, त्रेतादिषु धर्मसंशयः, द्वापरे वेदानां व्यासः, अनुयुगं वेदह्रासः, कृते पशुहिंसारहिता यज्ञाः, कृतादिषु क्रमेण धर्मस्य साकल्यमुत्तरोत्तरं पादहीनत्वं च

**[1]त्रेतायां द्वापरे चैव कलिजाश्च ससंशयाः।**
**तपस्विनः प्रशान्ताश्च सत्त्वस्थाश्च कृते युगे।।**

पापानुवेधादेवात्र श्रौते मते संशयो भवतीत्यर्थः। प्रशान्ताः निःसंशयाः। नीटी.

**[2]अपृथग्दर्शिनः सर्वे ऋक्सामसु यजुःषु च।**
**कामद्वेषौ पृथग्दृष्ट्वा तपः कृत उपासते।।**

वेदत्रयेऽपि भेदमपश्यन्तः काम्यादीन्पृथक्कृत्य तपः ज्ञानं उपासते श्रयन्ति। नीटी.

**[3]त्रेतादौ सकला वेदा यज्ञा वर्णाश्रमास्तथा।**
**संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे।।**
**[4]द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा।**
**दृश्यन्ते नापि दृश्यन्ते कलेरन्ते पुनः पुनः।।**
**[5]उत्सीदन्ति स्वधर्माश्च तत्राधर्मेण पीडिताः।**
**गवां भूमेश्च ये चापामोषधीनां च ये रसाः।।**
**अधर्मान्तर्हिता वेदा वेदधर्मास्तथाऽऽश्रमाः।**
**विक्रियन्ते स्वधर्मस्थाः स्थावराणि चराणि च।।**

स्वधर्मस्था आश्रमाः विक्रियन्ते भृतकाध्यापनक्रतुजन्यपुण्यसमर्पणादिना। नीटी.

**[6]वेदवादाश्चानुयुगं ह्रसन्तीति ह नः श्रुतम्।।**

(१) **भा.** १२।२३०।७; **भामु.** १२।२३८।७.

(२) **भा.** १२।२३०।८; **भामु.** १२।२३८।८ र्शिनः (र्शनाः) यग्दृष्ट्वा (थक्कृत्वा).

(३) **भा.** १२।२३०।१४; **भामु.** १२।२३८।१४ सकला (केवला).

(४) **भा.** १२।२३०।१५; **भामु.** १२।२३८।१५ पुनः पुनः (पुनः किल).

(५) **भा.** १२।२३०।१६-१७; **भामु.** १२।२३८।१६-१७.

(६) **भा.** १२।२५२।७; **भामु.** १२।२६०।७ ति ह (तीह).

कालभेदेन धर्ममन्यथयन्तो वेदा अप्यश्रद्धेयाः, अनवस्थितत्वादित्याह – वेदेति। नीटी.

**[1]अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे।**
**अन्ये कलियुगे धर्मा यथाशक्तिकृता इव।।**
**[2]इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते।**
**अहिंस्या यज्ञपशवो युगेऽस्मिन्नैतदन्यथा।**
**चतुष्पात्सकलो धर्मो भविष्यत्यत्र वै सुराः।।**
**[3]ततस्त्रेतायुगं नाम त्रयी यत्र भविष्यति।**
**प्रोक्षिता यत्र पशवो वधं प्राप्स्यन्ति वै मखे।**
**तत्र पादचतुर्थो वै धर्मस्य न भविष्यति।।**
**[4]ततो वै द्वापरं नाम मिश्रः कालो भविष्यति।**
**द्विपादहीनो धर्मश्च युगे तस्मिन्भविष्यति।।**
**ततस्तिष्येऽथ संप्राप्ते युगे कलिपुरस्कृते।**
**एकपादस्थितो धर्मो यत्र तत्र भविष्यति।।**

कलौ तिलपात्रादिदानस्य प्रशंसा विष्णुस्मरणात् शिवमन्त्रजपादेश्च पापनिवृत्तिः

**[5]श्रूयतां चापरो धर्मः सरहस्यो महाफलः।**
**इदं कलियुगं प्राप्य मनुष्याणां सुखावहः।।**
**कल्यमुत्थाय यो मर्त्यः स्नातः शुक्लेन वाससा।**
**तिलपात्रं प्रयच्छेत ब्राह्मणेभ्यः समाहितः।।**
**तिलोदकं च यो दद्यात्पितॄणां मधुना सह।**
**दीपकं कृसरं चैव श्रूयतां तस्य यत्फलम्।।**
**तिलपात्रे फलं प्राह भगवान् पाकशासनः।**
**गोप्रदानं च यः कुर्याद्भूमिदानं च शाश्वतम्।।**
**अग्निष्टोमं च यो यज्ञं यजेत बहुदक्षिणम्।**
**तिलपात्रं सहैतेन समं मन्यन्ति देवताः।।**

(१) **भा.** १२।२५२।८; **भामु.** १२।२६०।८ रेऽपरे (रे परे) क्तिकृता (क्ति कृता).

(२) **भा.** १२।३२७।७३; **भामु.** १२।३४०।८२-८३ वर्तते (वर्तितः) नैतद (त्र तद).

(३) **भा.** १२।३२७।७४; **भामु.** १२।३४०।८३-८४ तत्र पादच (यत्र पादश्च).

(४) **भा.** १२।३२७।७५-७६; **भामु.** १२।३४०।८५-८६.

(५) **भामु.** १३।१२९।९-१३.

[१]कृते युगे धर्म आसीत्समग्र-
स्त्रेताकाले ज्ञानमनुप्रपन्नः।
बलं त्वासीद्द्वापरे पार्थ कृष्णः
कलावधर्मः क्षितिमाजगाम।।

ज्ञानम् अकर्तव्यकोटेरपि उपस्थानात् त्रेतायां विवेक आसीत्। द्वापरे तु द्वितीयकोटेः साम्याद्बलं प्रधानमासीत्, न धर्मः। कलौ त्वधर्म एव बलवानिति भावः। नीटी.

[२]कलौ कलिमलध्वंसं सर्वपापहरं हरिम्।
येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः।।

(१) कलौ हरिहरयोः पूजा प्रशस्ता। तदुक्तं महाभारते-कलाविति। + चमव्याआ. ४८

(२) नियमविधिरयम्, न तु परिसंख्या। एवं सर्वयुगेषु सर्वेषां पूज्यत्वं न निषिध्यते। आम. ५९

[३]कलौ पित्रादिदोषघ्ना विषयाकृष्टमानसाः।
कृत्वाऽपि सकलं पापं गोविन्दं संस्मरञ्शुचिः।।

[४]यस्त्वों नमः शिवायेति मन्त्रेणानेन शंकरम्।
सकृत्कालं किलाऽऽवर्तेत्सर्वपापैः प्रमुच्यते।।

[५]सर्वावस्थां गतो ब्रूयाद्युक्तो वा सर्वपातकैः।
यस्त्वों नमः शिवायेति मुच्यते स कलौ नरः।।

[६]शाठ्येनापि नमस्कारः प्रयुक्तः शूलपाणये।
संसारदोषसंहार उद्दिष्टः परमः कलौ।।

[७]सदा तं यजते यस्तु श्रद्धया मुनिपुङ्गव।
लिङ्गे वा स्थण्डिले वाऽपि कौतुकाद्विधिपूर्वकम्।
युगदोषं विनिर्जित्य रुद्रलोके महीयते।।

---

+ आभू. चमव्याआवत्।

(१) भा. १३।१४३।९; भामु. १३।१५८।१० चतुर्थचरणे (कलौ त्वधर्मः क्षितिमेवाऽऽजगाम).

(२) चमव्याआ. ४८; आम. ५९; आर्क. २४; आभू. १७७: १९४ चतुर्थचरणो नास्ति : १९९ (=).

(३) कृभ. १३१४.

(४) स्मृतिकौ. ४६९; पुम. ४६७ किलाऽऽवर्तेत् (समभ्यर्च्य).

(५) स्मृतिकौ. ४६९; पुम. ४६७ ब्रूयाद्यु (वाऽपि यु); कृभ. १३१५ स (तु) शेषं पुमवत्.

(६) स्मृतिकौ. ४६९; पुम. ४६७-४६८ संहार उद्दिष्टः परमः (संधानामुक्तो नाशकरः).

(७) पुम. ४६८.

## हरिवंशः

भविष्यद्रूपेण विस्तरेण कलिप्रयुक्त-
चराचरस्वभाववर्णनम्

[१]तदाप्रभृति हास्यन्ते नृणां प्राणाः पुराकृतीः।
विनिर्वर्तिष्यते लोके वृत्तान्तो वृत्तिमत्स्वपि।।

तदाप्रभृति युगान्तमारभ्य प्राणाः इन्द्रियाणि पुराकृतीः शिष्टाचारान् वर्तनेषु आचारेषु वृत्तान्तः पूर्ववृत्तं न नितरां वर्तिष्यते। नीटी.

[२]तदा सूक्ष्मो महोदर्को दुस्तरो दानमूलवान्।
चातुराश्रम्यशिथिलो धर्मः प्रविचलिष्यति।।

सूक्ष्मः अल्पोऽपि धर्मः महोदर्कः महाफलः। दुस्तरः, विघ्नबाहुल्यात्। नीटी.

[३]तदा ह्यल्पेन तपसा सिद्धिं यास्यन्ति मानवाः।
धन्या धर्मं चरिष्यन्ति युगान्ते जनमेजय।।

जनमेजय उवाच –

[४]आसन्नं विप्रकृष्टं वा यदि कालं न विद्महे।
तस्माद् द्वापरविध्वंसाद्युगान्तं स्पृहयाम्यहम्।।

आसन्नं (विप्रकृष्टं वा) यदि यस्मात् कालं मोक्षस्य न विद्महे तस्मात् द्वापरः धर्माधर्मसाम्यवान् संविद्धः अधर्माधिक्यात् दूषितः येन तं युगान्तं युगानाम् अन्ते भवं कलिं श्रोतुं स्पृहयामि। नीटी.

[५]प्राप्ता वयं हि तं कालमनया धर्मतृष्णया।
प्राप्ता वयं च धर्मं स्वं सुखमल्पेन कर्मणा।।

तत्र स्पृहाहेतुमाह – प्राप्ता इति। अल्पायासेन महत्फलं भवतीति लोभादस्माभिः कलौ जन्म प्रार्थितमित्यर्थः। नीटी.

[६]प्रजासमुद्वेगकरं युगान्तं समुपस्थितम्।
प्रनष्टधर्मं धर्मज्ञ निमित्तैर्वक्तुमर्हसि।।

---

(१) हरि. ११५।४३; हरिमु. ३।२।४३ स्यन्ते (स्यन्ति) विनि (न नि) न्तो वृत्तिमत्स्वपि (न्तावर्तनेष्विह).

(२) हरि. ११५।४४; हरिमु. ३।२।४४.

(३) हरि. ११५।४५; हरिमु. ३।२।४५ यास्य (प्राप्स्य).

(४) हरि. ११६।१; हरिमु. ३।३।१ विध्वंसाद्यु (संविध्दं यु).

(५) हरि. ११६।२; हरिमु. ३।३।२ हि (तु) तृतीयचरणे (आदद्यात्परमं धर्मं).

(६) हरि. ११६।३; हरिमु. ३।३।३ प्रजास (त्रास) करं (करणं).

**सूत उवाच –**

**[1]पृष्ट एवं भविष्यस्य गतिं तत्त्वेन चिन्तयन्।**
**युगान्ते पूर्वरूपाणि भगवानब्रवीत्तदा।।**

**व्यास उवाच –**

**[2]अरक्षितारो हर्तारो बलिभागस्य पार्थिवाः।**
**युगान्ते प्रभविष्यन्ति स्वरक्षणपरायणाः।।**
**अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः।**
**शूद्राश्च ब्राह्मणाचारा भविष्यन्ति युगक्षये।।**
**[3]काण्डपृष्ठाः श्रोत्रियाश्च हवींषि भरतर्षभ।**
**एकपङ्क्त्यामशिष्यन्ति युगान्ते जनमेजय।।**

काण्डस्पृष्टाः बाणधराः क्षत्रवृत्तयो ब्राह्मणा इत्यर्थः। निष्क्रियाणि पञ्चयज्ञहीनानि। नीटी.

**[4]शिल्पवन्तोऽनृतपरा नरा मद्यामिषप्रियाः।**
**भार्यामित्रा भविष्यन्ति युगान्ते जनमेजय।।**
**[5]राजवृत्ते स्थिताश्चोरा राजानश्चोरशीलिनः।**
**भृत्या अनिर्दिष्टभुजो भविष्यन्ति युगक्षये।।**
**[6]धनानि श्लाघनीयानि सतां वृत्तमपूजितम्।**
**अकुत्सना च पतिते भविष्यति युगक्षये।।**

अकुत्सना अनिन्दा। नीटी.

**[7]प्रनष्टचेतना मर्त्या मुक्तकेशा विचूलिनः।**
**ऊनषोडशवर्षाश्च प्रजास्यन्ति नरास्तदा।।**

चेतना धर्माधर्मस्वरूपबोधः। मुक्तकेशाः विधवाः। विचूलिनः संन्यासिनः। प्रजास्यन्ति अन्योऽन्यं मिथुनीभूय प्रजां जनयिष्यन्ति। नीटी.

**[8]अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।**
**प्रमदाः केशशूलाश्च भविष्यन्ति युगक्षये।।**

अट्टशूलाः अन्नविक्रयिणः। शिवशूलाः वेदविक्रयिणः। केशशूलाः भगविक्रयिण्यः। नीटी.

**सर्वे ब्रह्म वदिष्यन्ति सर्वे वाजसनेयिनः।**
**शूद्रा भोवादिनश्चैव भविष्यन्ति युगक्षये।।**

सर्वे ब्रह्मवादच्छलेन कर्मभ्रष्टा भविष्यन्तीत्यर्थः। सर्वे वाजसनेयिनः, शाखान्तरलोपात्। तेन वेदत्रयसाध्यो यज्ञ उत्सन्नो भविष्यतीति भावः, इदानीमेव पश्चिमदेशे तथा दर्शनात्। भो इति पूज्यवादो येषु ते भोवादिनः। नीटी.

**[1]तपोयज्ञार्थवेदानां विक्रेतारो द्विजातयः।**
**ऋतवश्च भविष्यन्ति विपरीता युगक्षये।।**
**[2]शुक्लदन्ताजिताक्षाश्च मुण्डाः काषायवाससः।**
**शूद्रा धर्मं चरिष्यन्ति शाक्यबुद्धोपजीविनः।।**

शुक्लदन्ताः मांसाशनत्यागात्, अन्यथा रक्तदन्तत्वं स्यात्। अञ्जिताक्षाः सूक्ष्मदृष्टयः। शाक्यमतं बुद्धमतं चोपजीवन्ति ते, वेददूषका नास्तिका इत्यर्थः। नीटी.

**[3]श्वापदप्रचुरत्वं च गवां चैव परिक्षयः।**
**स्वादूनां विनिवृत्तिश्च विद्यादन्तगते युगे।।**

श्वापदाः हिंस्राः वृकव्याघ्रादयः। स्वादूनाम् उत्तमरसादीनाम्। नीटी.

**[4]अन्त्या मध्ये निवत्स्यन्ति मध्याश्चान्तावसायिनः।**
**यथानिम्नं प्रजाः सर्वा गमिष्यन्ति युगक्षये।।**

अन्त्याः म्लेच्छाः। मध्याः कुरुपञ्चालाः। तत्रस्थाश्च म्लेच्छदेशे वासं करिष्यन्तीत्यर्थः। यथेति। नीचमार्गानुसारिण्यः इत्यर्थः। नीटी.

**[5]तथा द्विहायना दम्यास्तथा पल्वलकर्षकाः।**
**चित्रवर्षी च पर्जन्यो युगे क्षीणे भविष्यति।।**

दम्याः हलशकटादिवहनयोग्याः। चित्रवर्षी हले योजितस्य बलीवर्दस्य एकं शृङ्गमार्द्रमेकं शुष्कमित्येवं वर्षिष्यतीत्यर्थः। नीटी.

---

(१) **हरि.** ११६।४; **हरिमु.** ३।३।४ पूर्वरूपाणि (सर्वभूतानां).

(२) **हरि.** ११६।५-६; **हरिमु.** ३।३।५-६.

(३) **हरि.** ११६।७; **हरिमु.** ३।३।७ काण्डपृष्ठाः (काण्डे स्पृष्टाः) द्वितीये चरणे (निष्क्रियाणि हवींष्यथ).

(४) **हरि.** ११६।८; **हरिमु.** ३।३।८ भार्यामित्रा (मित्रभार्या).

(५) **हरि.** ११६।९; **हरिमु.** ३।३।९ वृत्ते स्थि (वृत्तिस्थि) श्चो (श्चौ) भृत्या अ (भृत्याश्चा).

(६) **हरि.** ११६।१०; **हरिमु.** ३।३।१० ष्यति (ष्यन्ति).

(७) **हरि.** ११६।११; **हरिमु.** ३।३।११ रास्तदा (राः सदा).

(८) **हरि.** ११६।१२-१३; **हरिमु.** ३।३।१२-१३.

(१) **हरि.** ११६।१४; **हरिमु.** ३।३।१४ ज्ञार्थवेदानां (ज्ञफलानां च).

(२) **हरि.** ११६।१५; **हरिमु.** ३।३।१५ दन्ताजि (दन्ताऽञ्जि).

(३) **हरि.** ११६।१६; **हरिमु.** ३।३।१६.

(४) **हरि.** ११६।१७; **हरिमु.** ३।३।१७ न्तावसायि (न्तनिवासि).

(५) **हरि.** ११६।१८; **हरिमु.** ३।३।१८.

**[१]सर्वे चौरकुले जाताश्चौरयानाः परस्परम्।**
**स्वल्पेनाऽऽढ्या भविष्यन्ति यत्किंचित्प्राप्य दुर्गताः।।**

चौरयानाः मुष्णन्तः यत्किञ्चिद्व्यसन (? ञ्चित् व्यसनम्।) दुर्गताः दरिद्राः। नीटी.

**[२]न ते धर्मं चरिष्यन्ति मानवा निर्गते युगे।**
**ऊषराबहुला भूमिः पन्थानो नगरान्तरा।**
**सर्वे वाणिजकाश्चैव भविष्यन्ति कलौ युगे।।**

ऊषार्कबहुला क्षारमृत्तिकया प्रस्वेदभूयिष्ठा बीजनाशिनीत्यर्थः। नगरान्तरा इति वनान्तरेषु चौरभयात् वक्रमार्गेऽपि नगराश्रयोपयोगैः पान्थैर्गन्तव्यमित्यर्थः। नीटी.

**[३]पितृदत्तानि देयानि विषमन्तः सुतास्तदा।**
**हरणाय प्रपत्स्यन्तो लोभानृतविरोधिताः।।**

देयानि अलंकारादीनि शास्त्रतः अविभाज्यान्यपि विभजन्ते। लोभानृताभ्यां विरोधिताः सविरोधाः। नीटी.

**[४]सौकुमार्ये तथा रूपे रत्ने चोपक्षयं गते।**
**भविष्यन्ति युगस्यान्ते नार्यः केशैरलंकृताः।।**

सौकुमार्ये लावण्ये। रत्ने अलंकारादौ। नीटी.

**[५]निर्विहारस्य भीतस्य गृहस्थस्य भविष्यति।**
**युगान्ते समनुप्राप्ते नान्या भार्यासमा रतिः।।**

निर्विहारस्य, स्रक्चन्दनदिव्यास्तरणादिभोगसामग्री विहारः, तद्रहितस्य भूतस्य रूपमात्रेण स्थितस्य। नीटी.

**[६]कुशीलानार्यभूयिष्ठं वृथारूपसमावृतम्।**
**पुरुषाल्पं बहुस्त्रीकं तद्युगान्तस्य लक्षणम्।।**

**[७]बहुयाचनका लोका दास्यन्ते च परस्परम्।**
**अविचार्य ग्रहीष्यन्ति दानं वर्णान्तरात्तथा।**
**राजचोरादिदण्डार्तो जनः क्षयमुपैष्यति।।**

(१) **हरिमु.** ३।३।१९.

(२) **हरि.** ११६।१९; **हरिमु.** ३।३।२०-२१ चरि (करि) षरा (षार्क) नो नगरान्तरा (नस्तस्करावृताः) णिज (णिज्य).

(३) **हरि.** ११६।२०; **हरिमु.** ३।३।२१ घमन्तः (भजन्ते).

(४) **हरि.** ११६।२१; **हरिमु.** ३।३।२२ गस्यान्ते (गान्ते च).

(५) **हरि.** ११६।२२; **हरिमु.** ३।३।२३ भीत (भूत) रतिः (गतिः).

(६) **हरि.** ११६।२३; **हरिमु.** ३।३।२४ मावृ (मन्वि).

(७) **हरि.** ११६।२४ द्वितीयार्धं नास्ति; **हरिमु.** ३।३।२५-२६ नका (नको) लोका (लोको) दास्यन्ते च (न दास्यति) रादि (राग्नि).

**[१]सस्यनिष्पत्तिरफला तरुणा वृद्धशीलिनः।**
**ईहयाऽसुखिनो लोका भविष्यन्ति गते युगे।।**

ईहया तृष्णया असुखिनः। नीटी.

**[२]वर्षासु वाताः परुषा नीचाः शर्करवर्षिणः।**
**संदिग्धः परलोकश्च भविष्यति युगक्षये।।**

**[३]लोभिनश्च दुराचारा ब्रह्मदूषणतत्पराः।**
**आत्मानं बहु मन्यन्ते मन्युरेवाभ्ययाद्द्विजान्।।**

**[४]वैश्याचाराश्च राजन्या धनधान्योपजीविनः।**
**युगापक्रमणे पूर्वं भविष्यन्ति द्विजातयः।।**

युगापक्रमणे धर्ममर्यादाभङ्गे भविष्यन्ति। नीटी.

**[५]अप्रवृत्ताः प्रपत्स्यन्ते समयाः शपथास्तथा।**
**ऋणं च विनयभ्रंशो युगे क्षीणे भविष्यति।।**

समयाः सांकेतिका धर्माः। सविनयभ्रंशम् उत्तमेभ्यो विभ्रंशो यस्य तथा भविष्यति, किमुत नीचेभ्यः? नीटी.

**[६]भविष्यत्यफलो हर्षः क्रोधश्च सफलो नृणाम्।**
**अजाश्चैवोपयोक्ष्यन्ते पयसोऽर्थे युगक्षये।।**

**[७]अशास्त्रविदुषां पुंसामेवमेव स्वभावतः।**
**अप्रमाणं वदिष्यन्ति नीतिं पण्डितमानिनः।।**

स्वभावतः स्वेच्छया शास्त्रार्थं वदिष्यन्ति। नीटी.

**[८]अशास्त्रविहिता प्रज्ञा एवमेव भविष्यति।**
**शास्त्रोक्तस्याप्रवक्तारो भविष्यन्ति युगक्षये।।**

**[९]सर्वः सर्वं विजानाति वृद्धाननुपसेव्य च।**
**न कश्चिदकविर्नाम युगान्ते प्रत्युपस्थिते।।**

(१) **हरि.** ११६।२५; **हरिमु.** ३।३।२६ गते युगे (युगक्षये).

(२) **हरि.** ११६।२६; **हरिमु.** ३।३।२७.

(३) **हरिमु.** ३।३।२८.

(४) **हरि.** ११६।२७; **हरिमु.** ३।३।२९ पूर्वं (सर्वे).

(५) **हरि.** ११६।२८; **हरिमु.** ३।३।३० च वि (सवि) भ्रंशो (भ्रंशं).

(६) **हरि.** ११६।२९; **हरिमु.** ३।३।३१ योक्ष्य (रोत्स्य).

(७) **हरिमु.** ३।३।३२.

(८) **हरि.** ११६।३०; **हरिमु.** ३।३।३३ उत्त.

(९) **हरि.** ११६।३१; **हरिमु.** ३।३।३३-३४ प्रथमचरणे (सर्वे सर्वं हि जानन्ति) वै (च) प्रत्यु (समु).

**[१]न क्षत्राणि नियोक्ष्यन्ति विकर्मस्था द्विजातयः।**
**चोरप्रायाश्च राजानो युगान्ते प्रत्युपस्थिते।।**

द्विजातयः क्षत्राणि न नियोक्ष्यन्ति। धर्म इति शेषः। तत्र हेतुः – चौरेति। नीटी.

**[२]कुण्डा वृषा नैकृतिकाः सुरापा ब्रह्मवादिनः।**
**अश्वमेधेन यक्ष्यन्ति युगान्ते जनमेजय।।**

कुण्डायाम् अमृते जीवति पत्यौ जारजातायां वृषाः रेतःसेक्तारः कुण्डावृषाः। नैकृतिकाः अनधिकारिणावपि जायापती यज्ञं करिष्यत इत्यर्थः। नीटी.

**[३]अयाज्यान्याजयिष्यन्ति तथाऽभक्ष्यस्य भक्षिणः।**
**ब्राह्मणा धनतृष्णार्ता युगान्ते समुपस्थिते।।**

अभक्ष्यस्येति छेदः। नीटी.

**[४]भोगार्थमभिपत्स्यन्ते न च कश्चित्पठिष्यति।**
**एकशङ्खास्तथा नार्यो गवेधुकपिनद्धकाः।।**

गवेधुकः कुसुम्भबीजाकारस्तृणधान्यविशेषः, तन्मयाः पिनद्धकाः अलंकाराः यासां ताः। एतच्च गुञ्जादेरप्युपलक्षणम्। नीटी.

**[५]नक्षत्राणि विहीनानि विपरीता दिशस्तथा।**
**संध्यारागोऽथ दिग्दाहो भविष्यत्यपरे युगे।।**

वियोगीनि यथाशास्त्रं तत्तद्ग्रहसंयोगहीनानि। नीटी.

**[६]पितॄन्पुत्रा नियोक्ष्यन्ति वध्वः श्वश्रूश्च कर्मसु।**
**वियोनिषु चरिष्यन्ति प्रमदासु नरास्तदा।।**

वियोनिषु पशुषु विभिन्नवर्णेषु वा। नीटी.

**[७]वाक्छरैस्तर्जयिष्यन्ति गुरूञ्छिष्यास्तथैव च।**
**मुखेषु च प्रयोक्ष्यन्ति प्रमत्ताश्च नरास्तदा।।**

(१) **हरि.** ११६।३२; **हरिमु.** ३।३।३४ चोर (चौर) प्रत्यु (पर्यु).
(२) **हरि.** ११६।३३; **हरिमु.** ३।३।३५ कुण्डा वृ (कुण्डावृ).
(३) **हरि.** ११६।३४; **हरिमु.** ३।३।३६.
(४) **हरि.** ११६।३५; **हरिमु.** ३।३।३७ प्रथमचरणे (भोशब्दमभिधास्यन्ति) तथा (तदा).
(५) **हरि.** ११६।३६; **हरिमु.** ३।३।३८ हीना (योगी) परे (वरे).
(६) **हरि.** ११६।३७; **हरिमु.** ३।३।३९ तदा (तथा).
(७) **हरिमु.** ३।३।४०.

**[१]अकृताग्राणि भोक्ष्यन्ति नराश्चैवाग्निहोत्रिणः।**
**भिक्षां बलिमदत्त्वा च भोक्ष्यन्ति पुरुषाः स्वयम्।।**

अग्रं ग्रासचतुष्टयम्। अकृतम् अदत्तम् अग्रं येषां तानि अन्नानि अकृताग्राणि। नीटी.

**पतीन्सुप्तान्वञ्चयित्वा गमिष्यन्ति स्त्रियोऽन्यतः।**
**पुरुषाश्च प्रसुप्तासु भार्यासु च परस्त्रियम्।।**
**नाव्याधितो नाप्यरुजो जनः सर्वोऽभ्यसूयकः।**
**न कृतिप्रतिकर्ता च काले क्षीणे भविष्यति।।**

अरुजः मनःपीडारहितः। नीटी.

**जनमेजय उवाच –**

**[२]एवं विलुलिते लोके मनुष्याः केन पालिताः।**
**निवत्स्यन्ति किमाचाराः किमाहारविहारिणः।।**

एवं विलुलिते कलुषीकृते। नीटी.

**किंकर्माणः किमीहन्तः किंप्रमाणाः किमायुषः।**
**कां च काष्ठां समासाद्य प्रपत्स्यन्ति कृतं युगम्।।**

**व्यास उवाच –**

**अत ऊर्ध्वं च्युते धर्मे गुणहीनाः प्रजास्ततः।**
**शीलव्यसनमासाद्य प्राप्स्यन्ते ह्रासमायुषः।।**

शीलव्यसनं धर्मनाशनम्। नीटी.

**आयुर्हान्या बलग्लानिर्बलग्लान्या विवर्णता।**
**वैवर्ण्याद्व्याधिसंपीडा निर्वेदो व्याधिपीडनात्।।**

निर्वेदः देहादौ वैराग्यम्। नीटी.

**निर्वेदादात्मसंबोधः संबोधाद्धर्मशीलता।**
**एवं गत्वा परां काष्ठां प्रपत्स्यन्ति कृतं युगम्।।**

आत्मसंबोधः विवेकोदयः। एवं गत्वा धर्मशीलत्वात् चित्तशुद्धिज्ञानोत्पत्तिद्वारा परां काष्ठां मोक्षदं ज्ञानम्, तदैव सर्वपापनाशनात् कृतयुगम्। नीटी.

**[३]उद्देशतो धर्मशीलाः केचिन्मध्यस्थतां गताः।**
**विमर्शशीलाः केचित्तु हेतुवादकुतूहलाः।।**

उद्देशतः लेशतः। विमर्षः विवेकः। हेतुवाद एव, न तु क्रियया, कौतूहलं येषां ते हेतुवादकुतूहलाः वृथापण्डिताः। नीटी.

(१) **हरि.** ११६।३८-४०; **हरिमु.** ३।३।४१-४३.
(२) **हरि.** ११७।१-५; **हरिमु.** ३।४।१-५.
(३) **हरि.** ११७।६; **हरिमु.** ३।४।६ मर्श (मर्ष).

[1]**प्रत्यक्षमनुमानं च प्रमाणमिति निश्चिताः।**
**प्रमाणं किं करिष्यति नेति पण्डितमानिनः।**
**अप्रमाणं करिष्यन्ति वेदोक्तमपरे जनाः।।**

निश्चिताः, सौगता वैशेषिकाश्च वेदस्य परतोऽपि प्रामाण्यं नेच्छन्ति, पूर्वं स(? स्व)तः प्रामाण्यम् अपरे प्रमाणैकम् एकमेव प्रत्यक्षमेव प्रमाणमिति चार्वाकाः। नेतीत्यस्य नान्यत्प्रमाणमित्यर्थः। नीटी.

[2]**तदा मुखभगाश्चैव भविष्यन्ति स्त्रियोऽपराः।।**

[3]**नास्तिक्यपरमाश्चापि केचिद्धर्मविलोपकाः।**
**भविष्यन्ति नरा मूढा मन्दाः पण्डितमानिनः।।**

[4]**तदात्वमात्रश्रद्धेयाः शास्त्रज्ञानविमूर्छिताः।**
**दाम्भिकास्ते भविष्यन्ति वादशीलपरायणाः।।**

तदात्वमात्रं वर्तमानकालिकम्, दृष्टार्थमात्रे श्रद्धेयाः श्रद्धावन्तः। वादे शीले च कुतूहलम् आश्चर्यं येषां ते। धर्मवादोऽपि दुर्लभः, किमुत तदाचरणम्? इत्यर्थः। नीटी.

[5]**तदा विचलिते धर्मे जनाः शेषपुरस्कृताः।**
**शुभान्येवाऽऽचरिष्यन्ति दानसत्यसमन्विताः।।**

शेषधर्मपुरस्कृताः अवशिष्टो विष्णुस्मरणादियो धर्मस्तद-नुसारिणः। शुभानि दयादीनि। नीटी.

[6]**सर्वभक्षो ह्यसंगुप्तो निर्गुणो निरपत्रपः।**
**भविष्यति तदा लोकस्तत्कषायस्य लक्षणम्।।**

असंगुप्तः अजितेन्द्रियः। कषायस्य कलुषस्य। नीटी.

[7]**विप्राणां शाश्वतीं वृत्तिं यदा वर्णावरो जनः।**
**अभिपत्स्यति वृत्त्यर्थं तत्कषायस्य लक्षणम्।।**

शाश्वतीं वृत्तिं भिक्षाम्। अवरः क्षत्रियादिः। नीटी.

[1]**कषायोपप्लवे काले ज्ञानविद्याप्रणाशने।**
**सिद्धिमल्पेन कालेन यास्यन्ति निरुपस्कृताः।।**

ज्ञानं शास्त्रीयो बोधः, विद्या आत्मदर्शनम्, तयोर्नाशने निरुपस्कृताः निष्परिग्रहाः। त्यागमात्रेण स्वल्पेनापि कालेन सिद्धिं मोक्षं यास्यन्तीति कलेर्गुणः। नीटी.

[2]**महायुद्धं महानादं महावर्षं महाभयम्।**
**भविष्यति युगे क्षीणे तत्कषायस्य लक्षणम्।।**

[3]**विप्ररूपाणि रक्षांसि राजानः कर्णवेदिनः।**
**पृथिवीमुपभोक्ष्यन्ति युगान्ते प्रत्युपस्थिते।।**

कर्णवेदिनः पिशुनवाक्यतत्पराः। नीटी.

[4]**निःस्वाध्यायवषट्कारा मुनयश्चाभिमानिनः।**
**क्रव्यादा ब्रह्मरूपेण सर्वभक्षा वृथाव्रताः।।**

अनेयाः अशास्याः। 'अनयाः' इति पाठे नीतिहीनाः। नीटी.

[5]**मूर्खाः स्वार्थपरा लुब्धाः क्षुद्राः क्षुद्रपरिच्छदाः।**
**व्यवहारोपवृत्ताश्च च्युता धर्माच्च शाश्वतात्।।**

व्यवहारे भोजनाच्छादनादावेव उपवृत्ताः तत्पराः। नीटी.

[6]**हर्तारः पररत्नानां परदारप्रधर्षकाः।**
**कामात्मानो दुरात्मानः सोपधाः प्रियसाहसाः।।**

सोपधाः छलवन्तः। नीटी.

[7]**तेषु प्रभवमानेषु तुल्यशीलेषु सर्वतः।**
**अभाविनो भविष्यन्ति मुनयो बहुरूपिणः।।**

तेषु दुष्टेषु प्रभवमाणेषु ऐश्वर्यवत्सु। अभाविनः विनाश-भाजः। बहुरूपिणः चातुराश्रम्यभाजः। नीटी.

---

(१) **हरि.** ११७।७; **हरिमु.** ३।४।७, ८ णमिति (णं चेति) णं किं (णैकं) ष्यति (ष्यन्ति).

(२) **हरिमु.** ३।४।८.

(३) **हरि.** ११७।८; **हरिमु.** ३।४।९.

(४) **हरि.** ११७।९; **हरिमु.** ३।४।१० मात्रश्र (मात्रे श्र) विमूर्छि (बहिष्कृ) परायणाः (कुतूहलाः).

(५) **हरि.** ११७।१०; **हरिमु.** ३।४।११.

(६) **हरि.** ११७।११; **हरिमु.** ३।४।१२.

(७) **हरि.** ११७।१२; **हरिमु.** ३।४।१३ वरो जनः (वरा जनाः) अभिपत्स्यति (प्रतिपत्स्यन्ति).

(१) **हरि.** ११७।१३; **हरिमु.** ३।४।१४ वे काले (वे लोके) सिद्धिम (सिद्धिं स्व).

(२) **हरि.** ११७।१४; **हरिमु.** ३।४।१५.

(३) **हरि.** ११७।१५; **हरिमु.** ३।४।१६ प्रत्यु (समु).

(४) **हरि.** ११७।१६; **हरिमु.** ३।४।१७ मुनय (अनेया) क्रव्यादा ब्रह्म (विप्राः क्रव्याद).

(५) **हरि.** ११७।१७; **हरिमु.** ३।४।१८.

(६) **हरि.** ११७।१८; **हरिमु.** ३।४।१९ रप्रधर्ष (रापहार).

(७) **हरि.** ११७।१९; **हरिमु.** ३।४।२० माने (माणे).

[1]उत्पन्ना ये कृतयुगे प्रधानपुरुषाश्रयाः।
कथायोगेन तान्सर्वान्पूजयिष्यन्ति मानवाः।।

प्रधानपुरुषः ईश्वरः, तदाश्रयाः तद्भक्ताः। कथायोगेनैव, न तु तादृशाचारेण। नीटी.

[2]सस्यचोरा भविष्यन्ति तथा चैलापहारिणः।
भक्ष्यभोज्यहराश्चैव भाण्डानां चैव हारिणः।।

करण्डानां करीषाणामिति प्राञ्चः। स्नानसामग्रीभाजनानां वंशमयानामिति वा। नीटी.

[3]चोराश्चोरस्य हर्तारो हन्ता हर्तुर्भविष्यति।
चोराश्चोरक्षये चापि कृते क्षेमं भविष्यति।।

[4]निःसारे क्षुभिते लोके निष्क्रिये व्यन्तरे स्थिते।
नराः श्रयिष्यन्ति वनं करभारप्रपीडिताः।।

निःसारे निर्धने। निष्क्रिये संध्योपासनादिहीने। व्यन्तरस्थिते सर्ववर्णसाम्येन स्थिते। नीटी.

[5]पितॄनाज्ञापयिष्यन्ति पुत्राः कर्मणि सर्वशः।
स्नुषा श्वश्रूस्तथा चैव युगान्ते प्रत्युपस्थिते।
वाक्छरैरर्दयिष्यन्ति गुरूञ्छिष्याः समन्ततः।।

[6]यज्ञकर्मण्युपरते रक्षांसि श्वापदानि च।
कीटमूषकसर्पाश्च धर्षयिष्यन्ति मानवान्।।

[7]क्षेमं सुभिक्षमारोग्यं सामग्र्यमथ बन्धुभिः।
उद्देशेन नरश्रेष्ठ भविष्यन्ति युगक्षये।।

उद्देशतः स्वल्पतः। नीटी.

[8]स्वयंपालाः स्वयंचोरा युगसंभारसंभृताः।
मण्डलैः प्रभविष्यन्ति देशे देशे पृथक्पृथक्।।

मण्डलैः संघशः। नीटी.

[1]स्वदेशेभ्यः परिभ्रष्टा निःसाराः सह बन्धुभिः।
नरास्तदा भविष्यन्ति सर्वे कालप्रतीक्षिणः।।

[2]तदा स्कन्धे समाधाय कुमारान्प्रद्रुता भयात्।
कौशिकीं संश्रयिष्यन्ति नराः क्षुद्भयपीडिताः।।

[3]अङ्गान्वङ्गान्कलिङ्गांश्च काश्मीरानथ मेकलान्।
ऋषिकान्तगिरिद्रोणीः संश्रयिष्यन्ति मानवाः।।

[4]कृत्स्नं च हिमवत्पार्श्वं कूलं च लवणाम्भसः।
अरण्यानि च वत्स्यन्ति नरा म्लेच्छगणैः सह।।

[5]नैव शून्या न चाशून्या भविष्यति वसुंधरा।
गोप्तारश्चाप्यगोप्तारः प्रभविष्यन्ति शासिनः।।

[6]मृगैर्मत्स्यैर्विहङ्गैश्च श्वापदैः सर्वकीटकैः।
मधुशाकफलैर्मूलैर्वर्तयिष्यन्ति मानवाः।।

[7]चीरं पर्णं च विविधं वल्कलान्यजिनानि च।
स्वयं कृत्वा निवत्स्यन्ति यथा मुनिजनास्तथा।।

[8]बीजानामाकृतिं निम्नेष्वीहन्ते काष्ठशङ्कुभिः।
अजैडकं खरोष्ट्रं च पालयिष्यन्ति यत्नतः।।

निम्नेषु गिरिदर्यादिषु स्थित्वा बीजानाम् आकृतिं ग्राम्यारण्यधान्यानां स्वरूपं ज्ञातुं भोक्तुं च ईहन्तः इच्छन्तः तत्र तत्प्रापणक्षमम् अजैडकं पालयिष्यन्ति। गन्धारकाश्मीरादौ स्थितास्तु खरोष्ट्रमिति भेदः। नीटी.

[9]नदीस्रोतांसि रोत्स्यन्ति तोयार्थं कूलमाश्रिताः।
पक्वान्नव्यवहारेण विपणन्तः परस्परम्।।

---

(१) **हरि.** ११७।२०; **हरिमु.** ३।४।२१.

(२) **हरि.** ११७।२१; **हरिमु.** ३।४।२२ चोरा (चौरा) ज्यहराश्चैव (ज्यापहाराश्च) भाण्डानां चैव (करण्डानां च).

(३) **हरि.** ११७।२२; **हरिमु.** ३।४।२३ चोराश्चो (चौराश्चौ) चोराश्चो (चौरैश्चौ).

(४) **हरि.** ११७।२३; **हरिमु.** ३।४।२४.

(५) **हरिमु.** ३।४।२५.

(६) **हरि.** ११७।२४; **हरिमु.** ३।४।२६.

(७) **हरि.** ११७।२५; **हरिमु.** ३।४।२७ ग्र्यमथ बन्धुभिः (ग्र्यं वाऽपि बन्धुषु) शेन (शतो).

(८) **हरि.** ११७।२६; **हरिमु.** ३।४।२८ चोरा (चौरा) प्रभविष्य (प्रचलिष्य).

(१) **हरि.** ११७।२७; **हरिमु.** ३।४।२९ नरास्तदा (नराः सर्वे) चतुर्थचरणे (तदा कालपरिक्षयात्).

(२) **हरि.** ११७।२८; **हरिमु.** ३।४।३० रान्प्र (रान्वि) संश्रयि (प्रतरि).

(३) **हरि.** ११७।२९; **हरिमु.** ३।४।३१.

(४) **हरि.** ११७।३०; **हरिमु.** ३।४।३२ च हि (वा हि) अरण्यानि (अरण्येषु).

(५) **हरि.** ११७।३१; **हरिमु.** ३।४।३३ शासिनः (शस्त्रिणः).

(६) **हरि.** ११७।३२; **हरिमु.** ३।४।३४ सर्व (सर्प).

(७) **हरि.** ११७।३३; **हरिमु.** ३।४।३५ विविधं (बहुलं) स्वयं कृत्वा निव (स्वयंकृतानि व).

(८) **हरि.** ११७।३४; **हरिमु.** ३।४।३६ हन्ते (हन्तः).

(९) **हरि.** ११७।३५; **हरिमु.** ३।४।३७ यार्थं (यार्थे).

पक्वेति। अद्य प्रस्थौदनं गृहीत्वा श्वः सपादगुणं देहीति व्यवहरन्त इत्यर्थः। नीटी.

[1]**तनूरुहैर्यथा जातैः समलान्तरसंवृतैः।**
**बह्वपत्याः प्रजाहीनाः क्रूरा लक्षणवर्जिताः।।**

समूलान्तरसंवृतैः मूलधनेन सहितस्य अन्तरस्य कलाद्रव्यस्य संवृतानि संसरणानि अपलापास्तैः निमित्तभूतैः। यथा कान्तैस्तनूरुहैः कलहायमानाः व्यवहरन्ति तथोत्तमवर्णा धर्मेणापणन्त आसत इति पूर्वेणान्वयः।

नीटी.

[2]**एवं भविष्यन्ति तदा मनुष्याः कालकारिताः।**
**हीनाद्धीनं तदा धर्मं प्रजा समनुवर्त्स्यति।।**
[3]**आयुस्तत्र च मर्त्यानां परं त्रिंशद्भविष्यति।**
**दुर्बला विषयग्लाना रजसा समभिप्लुताः।।**
[4]**भविष्यति तदा तेषां रोगैरिन्द्रियसंक्षयः।**
**आयुःप्रक्षयसंरोधाद्धिंसा चोपरमिष्यति।।**
[5]**शुश्रूषवो भविष्यन्ति साधूनां दर्शने रताः।**
**सत्यं चापि प्रपत्स्यन्ति व्यवहारापशङ्कया।।**
[6]**भविष्यन्ति च कामानामलाभाद्धर्मशीलिनः।**
**करिष्यन्ति च संकोचं स्वपक्षक्षयपीडिताः।।**

संकोचम्, दुराचारस्येति शेषः। नीटी.

[7]**एवं शुश्रूषवो दाने सत्ये प्राणाभिरक्षणे।**
**चतुष्पादप्रवृत्तं च धर्ममाप्स्यन्ति मानवाः।।**

एवं शुश्रूषादिपादचतुष्टये प्रवृत्तः धर्मः यतः श्रेयः प्रशस्ततरम् अहिंसादिधर्मं प्रपत्स्यते। नीटी.

(१) **हरि.** ११७।३६; **हरिमु.** ३।४।३८ सम (समू) क्रूरा ल (कुलल).

(२) **हरि.** ११७।३७; **हरिमु.** ३।४।३९.

(३) **हरि.** ११७।३८; **हरिमु.** ३।४।४०.

(४) **हरि.** ११७।३९; **हरिमु.** ३।४।४१ द्धिंसा चोपरमिष्यति (द्विषादः प्रभविष्यति).

(५) **हरि.** ११७।४०; **हरिमु.** ३।४।४२ चापि प्र (च प्रति) रापशङ्कया (रोपसंक्षयात्).

(६) **हरि.** ११७।४१; **हरिमु.** ३।४।४३.

(७) **हरि.** ११७।४२; **हरिमु.** ३।४।४४ उत्तरार्धे (चतुष्पादः प्रवृत्तश्च धर्मः श्रेयोऽभिपत्स्यते।।).

[1]**तेषां धर्माभिमानानां गुणेषु परिवर्तताम्।**
**स्वादु किं न्विति विज्ञाय धर्म एव स्वदिष्यति।।**

तेषां श्रेयः प्रपन्नानां लब्धानुमानानाम् अन्वयव्यतिरेकाभ्यां निर्ज्ञातधर्माधर्मफलानां मध्ये गुणेषु शब्दादिविषयेषु वा परिवर्तनं रमणं स्वादु किमुत धर्मे इति संदिह्य विज्ञाय तत्त्वं निश्चित्य एवं वक्ष्यमाणं जनो वदिष्यति। नीटी.

युगानां स्वभावभेदः

[2]**यथा हानिः क्रमप्राप्ता तथा वृद्धिः क्रमागता।**
**प्रगृहीते ततो धर्मे प्रपत्स्यन्ति कृतं पुनः।।**

तदेवाऽऽह – यथेति। यतः उक्तनिश्चयात्।

नीटी.

[3]**साधुवृत्तिः कृतयुगे कषाये हानिरुच्यते।**
**एक एव तु कालः स हीनवर्णो यथा शशी।।**
[4]**छन्नो हि तमसा सोमो यथा कलियुगे तथा।**
**पूर्णश्च तमसा हीनो यथा कलियुगे तथा।।**

यथा शशीति दृष्टान्तं विवृणोति – छन्न इति। काल इत्यनुकृष्यते। नीटी.

[5]**अर्थवादपरो धर्मो वेदार्थ इति तं विदुः।**
**अनिर्णिक्तमविज्ञातं दायाद्यमिव धार्यते।।**

सकलशास्त्ररहस्यं संगृह्णाति – अर्थेति द्वाभ्याम्। परं ब्रह्म यत् तत् अर्थवादः सत्यस्यैवार्थस्य कथनं तत्त्वभूतस्य कीटभृङ्गन्यायेन ध्यानक्रियया भवनं तदेव च वेदार्थ इत्युक्तम्। तमिति विधेयापेक्षं पुंस्त्वम्। सिद्धस्यैवालाभे दृष्टान्तमाह – अनिर्णिक्तमिति। मलिनं पित्र्यं स्वर्णपिण्डं स्वर्णत्वेनाविज्ञाय दरिद्रोऽस्मीति मन्यते। तस्य मलापगमे तु धनवानहमिति निश्चिनोति, एवं ब्रह्मापि प्रत्यगनन्यत्वेनावधार्यते। नीटी.

(१) **हरि.** ११७।४३; **हरिमु.** ३।४।४५ धर्माभि (लब्धानु) एव स्व (एवं व).

(२) **हरि.** ११७।४४; **हरिमु.** ३।४।४६ मप्रा (मात्प्रा) मागता (माद्गता) ततो (यतो) पुनः (युगम्).

(३) **हरि.** ११७।४५; **हरिमु.** ३।४।४७ धुवृत्तिः (धु वृत्तं).

(४) **हरि.** ११७।४६; **हरिमु.** ३।४।४८ चतुर्थचरणे (यथा कृतयुगे तथा).

(५) **हरि.** ११७।४७; **हरिमु.** ३।४।४९ दपरो धर्मो (दः परं ब्रह्म).

**[१]इष्टं दानं तपो नाम ब्रह्मचर्यं सुपूजितम्।**
**गुणैः कर्माभिनिर्वृत्तिर्गुणास्तथ्येन कर्मणा।।**

तपो धर्मः वर्णाश्रमयोग्यः, स च इष्टवादः स्वर्गाद्यभीष्टकथनम्, यतस्तपः स्थावरम् अनादि अव्यभिचारिफलकृत् शास्त्रे निश्चितम्। ततश्च गुणैः देहादिभिः कर्माभिनिर्वृत्तिः कर्मसिद्धिः भवति। कर्मणा च तथ्येन सत्येन गुणाः देहादयः। इह कर्मभ्यो मुक्तिर्नास्ति, अतोऽशरीरं ब्रह्माऽऽश्रयेदित्यर्थः। द्वावेतौ पुष्करप्रादुर्भावस्य सूत्रभूतौ श्लोकौ। नीटी.

**[२]आशीस्तु पुरुषं दृष्ट्वा देशकालानुवर्तिनी।**
**युगे युगे यथाकालमृषिभिः समुदाहृता।।**

आशीः एकस्मादेव कर्मणः फलप्राप्तिः तत्तद्युगीयपुरुषाणां श्रद्धादितारतम्यात्तारतम्येन भवतीत्यर्थः। नीटी.

**[३]इह धर्मार्थकामानां वेदानां च प्रतिक्रिया।**
**आशिषश्च शुभाः पुण्यास्तथैवाऽऽयुर्युगे युगे।।**

इह भौमप्रतिक्रियाफलं तथैव तारतम्येनेत्यर्थः। नीटी.

**[४]यथा युगानां परिवर्तनानि**
**चिरप्रवृत्तानि विधिस्वभावात्।**
**क्षणं न संतिष्ठति जीवलोकः**
**क्षयोदयाभ्यां परिवर्तमानः।।**

उत्तरार्धे तथेति पूरणीयम्। नीटी.

युगानां तत्संध्यानां च कालपरिमाणम्, कृतादिषु विपरीतक्रमेण कल्यादिषु च यथाक्रमं धर्माधर्मयोः साकल्यमुत्तरोत्तरमेकैकपादन्यूनत्वं च, युगभेदेन मानवप्रवृत्तिभेदाः

**वैशम्पायन उवाच –**

**[५]चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम्।**
**तस्य तावच्छती संध्या द्विगुणा जनमेजय।।**

तावच्छती चतुःशती द्विगुणा अष्टौ शतानि युगसंध्या। तस्यां पूर्वोत्तरयुगयोर्धर्मा मिश्रीभवन्तीत्यर्थः। एतानि देवमानेन अष्टशताधिकानि चत्वारि सहस्राणि सौरमानेन साष्टाविंशतिसहस्री सप्तदशलक्षी वत्सराणां भवति। सावनमानेन तु प्रत्यब्दं पञ्च दिनानि पञ्चदश घटिका एकत्रिंशत्पलानि त्रिंशदक्षराणि च वर्धन्ते। तान्यपि एकराशौ संवत्सरत्रयस्पृशि गुरौ लुप्तसंवत्सरैर्हीयन्ते। नीटी.

**तत्र धर्मश्चतुष्पादो ह्यधर्मः पादविग्रहः।**
**स्वधर्मनिरताः सन्तो यजन्ते चैव मानवाः।।**

धर्मपादाः तपः, शौचम्, दया, सत्यम्। तैः विग्रहः निरोधः स्मयसङ्गमदानृतपादवतो यस्य स पादविग्रहोऽधर्मः। धर्मेण निरुद्धपाद इत्यर्थः। यद्वा सर्वं युगं चतुष्पादमपि संध्यांशे उत्तरयुगधर्मसंक्रमात्पञ्चपादं भवतीति ध्येयम्। तेन 'अधर्मः पादविग्रहः', 'द्वाभ्यामधर्मः पादाभ्यां त्रिभिर्धर्मो व्यवस्थितः' इत्यादिग्रन्थः ऋज्वर्थ एव। एवमपि संध्यायां पादार्धस्यैव संक्रमात्सर्वं युगं सार्धचतुष्पादं स्यात्। इदमपि युगतत्संध्ययोः कालबहुत्वाल्पत्वाभ्यां न युक्तम्। पादाधिक्योक्तेः पुराणान्तरविरोधादध्यात्मप्रकरणाच्चैवमिह प्रतीमः – फलाभिसंधिना रहितो हिंसाशून्यो धर्मः कृतम्। तत्सहितस्त्रेता। दम्भेन कृतो द्वापरम्। धर्मलोपः कलिः। तत्र आद्ये फलेच्छाभावेऽपि कृतो धर्मः 'तद्यथा आम्रे फलार्थं निर्मिते छाया गन्ध इत्यनूत्पद्येते, एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' इत्यापस्तम्बोक्तेः फलं ददात्येव। तत्र च हीनसंपत्पुरुषो बहुसंपदमन्यं दृष्ट्वा स्वस्यानैश्वर्यं मन्वानो दुःखभाग्भवतीति कृतेऽप्यधर्मरूपं दुःखमस्तीत्युक्तं (कृतेऽपि?) 'अधर्मः पादविग्रहः' इति कृत्स्नधर्माधर्मनिर्मूलनक्षमं तत्त्वज्ञानमेव संपादनीयमित्याशयेन। नीटी.

**स्थिता धर्मपरा विप्रा राजवृत्तौ स्थिता नृपाः।**
**कृष्यामभिरता वैश्याः शूद्राः शुश्रूषवस्तथा।।**
**सदा सत्यं तपश्चैव धर्मश्चैव विवर्धते।**
**सद्भिराचरितं यच्च क्रियते ख्यायते च यत्।।**

ख्यायते उपदिश्यतेऽन्येभ्यः। नीटी.

**एतत्कृतयुगे वृत्तं सर्वेषामेव भारत।**
**प्राणिनां धर्मबुद्धीनामपि चेन्नीचयोनिनाम्।।**

---

(१) **हरि.** ११७।४८; **हरिमु.** ३।४।५० पूर्वार्धे (इष्टवादस्तपो नाम तपो हि स्थावरं कृतम्।).
(२) **हरि.** ११७।४९; **हरिमु.** ३।४।५१.
(३) **हरि.** ११७।५०; **हरिमु.** ३।४।५२ वेदानां च (देवतानां).
(४) **हरि.** ११७।५१; **हरिमु.** ३।४।५३ चिरप्र (चिरं प्र).
(५) **हरिमु.** ३।८।१-१८.

**त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते।**
**तस्य तावच्छती संध्या द्विगुणा परिकीर्तिता।।**

षट्शताधिकत्रिसाहस्री त्रेतायुगमानम्। एवमुत्तरत्रापि ज्ञेयम्। नीटी.

**द्वाभ्यामधर्मः पादाभ्यां त्रिभिर्धर्मो व्यवस्थितः।**
**तत्र सत्यं च सत्त्वं च कृते सर्वं प्रवर्तते।।**
**त्रेतायां विकृतिं यान्ति वर्णा लौल्येन संयुताः।**
**चातुर्वर्ण्यस्य वैकृत्याद्यान्ति दौर्बल्यमाश्रिताः।।**

धर्मलौल्येन धर्मफलस्पृहया। अत एव चातुर्वर्ण्यस्य चतुर्वर्णधर्मस्य वैकृत्यात् वैकल्यात्। नीटी.

**एष त्रेतायुगविधिर्विहितो देवनिर्मितः।**
**द्वापरस्यापि या चेष्टा तामपि श्रोतुमर्हसि।।**
**द्वापरं द्वे सहस्रे तु वर्षाणां कुरुसत्तम।**
**तस्य तावच्छती संध्या द्विगुणा परिकीर्तिता।।**
**तत्राप्यर्थपरा विप्रा ज्ञानिनो रजसाऽऽवृताः।**
**शठा नैष्कृतिकाः क्षुद्रा जायन्ते कुरुपुङ्गव।।**
**द्वाभ्यां धर्मः स्थितः पद्भ्यामधर्मस्त्रिभिरुत्थितः।**
**विपर्ययं शनैर्यान्ति कृते ये धर्मसेतवः।।**
**ब्राह्मण्यभावा नश्यन्ति तथाऽऽस्तिक्यं विशीर्यते।**
**व्रतोपवासास्त्यज्यन्ते द्वापरे युगपर्यये।।**

द्वापरे युगपर्यये द्वापरान्ते कलिसांकर्याद्व्रतादि त्यज्यत इत्यर्थः। नीटी.

**तथा वर्षसहस्रं तु वर्षाणां द्वे शते तथा।**
**संध्यया सह संख्यातं क्रूरं कलियुगं स्मृतम्।।**
**तत्राधर्मश्चतुष्पादः स्याद्धर्मः पादविग्रहः।**
**कामनिष्ठास्तमश्छन्ना जायन्ते तत्र मानवाः।।**
**नैवोपवासकृत्कश्चिन्न च साधुर्न सत्यवाक्।**
**आस्तिको ब्रह्मवक्ता वा नरो भवति वै तदा।।**
**अहंकारगृहीताश्च प्रक्षीणस्नेहबान्धवाः।**
**विप्राः शूद्रसमाचाराः शूद्रास्त्वाचारलक्षणाः।।**
**दूषकास्त्वाश्रमाणां च वर्णानां चैव संकराः।**
**अगम्येष्वभिरंस्यन्ते वर्तन्त्येवं कलौ युगे।।**

## वाल्मीकिरामायणम्

कृतादिषु यथाक्रमं ब्राह्मणादयो वर्णास्तपस्विनः, युगक्रमेण धर्माधर्मयोर्वृद्धिह्रासौ

[1]**धर्मो वै ग्रसतेऽधर्मं ततः कृतमभूद्युगम्।**
**अधर्मो ग्रसते धर्मं ततस्तिष्यः प्रवर्तते।।**

अत्र यदेति शेषः। धर्मः अधर्मं यदा ग्रसते अभिभवति तदा कृतं युगम् अभूत् भवति पुरुषेषु प्रवर्तते। आर्षः कालव्यत्ययः। अधर्मो यदा धर्मं ग्रसते तदा तिष्यः कलिः प्रवर्तते। 'तिष्यः कलौ च पुष्ये च' इत्यमरः। राभू.

[2]**पुरा कृतयुगे राम ब्राह्मणा वै तपस्विनः।**
**अब्राह्मणस्तदा राजन्न तपस्वी कथंचन।।**

कृतयुगे ब्राह्मणा एव तपस्विनो भवन्ति अनशनप्रभृतिकायक्लेशकारिणो भवन्ति। ततः तस्मात् अब्राह्मणः ब्राह्मणव्यतिरिक्तवर्णः कथंचन तपस्वी न भवति, नित्यनैमित्तिककर्ममात्रपर एव भवति। राभू.

[3]**तस्मिन्युगे प्रज्वलिते ब्रह्मभूते अनावृते।**
**अमृत्यवस्तदा सर्वे जज्ञिरे दीर्घदर्शिनः।।**

प्रज्वलिते तपसा दीप्ते ब्रह्मभूते ब्राह्मणवर्णप्रधाने अनावृते अज्ञानावरणरहिते तस्मिन्युगे कृतयुगे सर्व एव तदा अमृत्यवः मरणहेत्वधर्मलेशस्याप्यभावात् मरणरहिताः अज्ञानानावृतत्वाद्दीर्घदर्शिनः अतीतानागतज्ञाश्च भवन्ति। राभू.

[4]**ततस्त्रेतायुगं नाम मानवानां वपुष्मताम्।**
**क्षत्रिया यत्र जायन्ते पूर्वेण तपसाऽन्विताः।।**

ततः कृतयुगावसाने वपुष्मतां दृढशरीराणां मानवानां मनुवंशक्षत्रियाणां संबन्धि त्रेतायुगं नाम भवति। तत्प्रधानत्वात्तत्संबन्धित्वम्। तत्र त्रेतायां क्षत्रियाः पूर्णेन तपसाऽन्विता जायन्ते। राभू.

---

(१) **वारा.** ६।२६।१३; **वाराकु.** ६।३५।१४.
(२) **वारा.** ७।६५।९; **वाराकु.** ७।७४।९ राम (राजन्).
(३) **वारा.** ७।६५।१०; **वाराकु.** ७।७४।१० अना (त्वना).
(४) **वारा.** ७।६५।११; **वाराकु.** ७।७४।११ या यत्र (यास्तत्र).

**[1]वीर्येण तपसा चैव तेऽधिकाः पूर्वजन्मनि।**
**मानवा ये महात्मानस्तस्मिंस्त्रेतायुगे युगे।।**

त्रेतायुगे तपस्विनो जाताः क्षत्रियाः कृतयुगे तपस्विभि-र्ब्राह्मणैः किं तुल्याः? नेत्याह – वीर्येणेति। अत्र त्रेतायुगे युगे त्रेतायुगाख्ये युगे महात्मानो ये मानवाः सन्ति तदपेक्षया पूर्वजन्मनि पूर्वस्मिन् कृतयुगे ये मानवास्ते तपसा वीर्येण चाधिकाः। राभू.

**[2]ब्रह्म क्षत्रं तु तत्सर्वं यत्पूर्वमपरं च यत्।**
**युगयोरुभयोरासीत्समवीर्यसमन्वितम्।।**

त्रेतायुगब्राह्मणास्तुल्या एवेत्याह – ब्रह्मेति। उभयोर्युगयोः कृतत्रेतयोः। कृते यद्ब्रह्म पूर्वमुत्कृष्टं यच्च त्रेतायामपकृष्टं क्षत्रं तदुभयं त्रेतायां समप्रधानमासीत्। राभू.

**[3]अपश्यन्तस्तु ते सर्वे विशेषमधिकं ततः।**
**स्थापनं चक्रिरे तत्र चातुर्वर्ण्यस्य सर्वतः।।**

एतदेवाऽऽह – अपश्यन्निति। सर्वे जनाः ततः क्षत्रियात् ब्राह्मणस्याधिकं विशेषं तु नापश्यन्। 'अपश्यन्तस्तु ते सर्वे' इति पाठः। तत्स्थापनम् आचारभेदं वेदोदितं चक्रिरे। चातुर्वर्ण्यस्येत्यत्र स्वार्थे ष्यञ्। कृतयुगे तपस्तदभावाभ्यामु-भयोर्वैलक्षण्यं स्पष्टम्, त्रेतायुगे उभयोरपि तपःसाम्यात् वैलक्षण्यकरमाचारभेदमकल्पयन्नित्यर्थः। एवं वैश्यशूद्र-योरपि वेदपुराणोक्ताचारव्यवस्थां महान्तोऽकल्पयन्नित्यर्थः। राभू.

**[4]तस्मिन्युगे प्रज्वलिते धर्मभूते ह्यनावृते।**
**अधर्मः पादमेकं तु पातयत्पृथिवीतले।**
**अधर्मेण हि संयुक्तास्तेन मन्दाभवन्द्विजाः।।**

धर्मभूते यज्ञादिधर्मप्रधाने अनावृते अधर्माचरणरहिते तस्मिन् त्रेतायुगे प्रवृत्ते अधर्मः पादं चतुर्थांशं पातयत् अपातयत् वर्तयामास। त्रेतायुगपुरुषाः कृतयुगपुरुषवद्विमल-ज्ञानरहिततया ब्रह्मज्ञानाधिकारशून्याः वर्णाश्रमधर्माने-वाऽऽचरन्। अतो विमलज्ञानाभावादधर्मः पादम(? पादेना) वतीर्ण इत्यर्थः। एवमीषत्पापसंबन्धात्तदातनानां जनानां प्रभावः पूर्वयुगपुरुषेभ्यः क्षीणोऽभूदित्याह – अधर्मेण हीति। भविष्यतीति भूते लृट्। राभू.

(१) **वारा.** ७।६५।१२; **वाराकु.** ७।७४।१२ तस्मिंस्त्रे (त्वत्रे).

(२) **वारा.** ७।६५।१३; **वाराकु.** ७।७४।१३ तु (च).

(३) **वारा.** ७।६५।१४; **वाराकु.** ७।७४।१४ अपश्यन्तस्तु (अपश्यंस्तु न) सर्वतः (संमतम्).

(४) **वारा.** ७।६५।१५ प्रथमार्धं नास्ति; **वाराकु.** ७।७४।१५-१६ तृतीयार्धे (अधर्मेण हि संयुक्तस्तेजो मन्दं भविष्यति।।).

**[1]आमिषं यच्च पूर्वेषां राजसं च मलं भृशम्।**
**अनृतं नाम तद्भूतं पादेन पृथिवीतले।।**

एवं त्रेतायुगजनानां प्रभावस्याल्पत्वेन सत्यसंकल्पत्वा-कृष्टपच्यत्वादिसिद्ध्यभावात् कृष्यादिकमेव जीवनो-पायोऽभूदित्याह – आमिषमिति। सर्वेषां कृतयुगब्राह्मणानां राज्ञां च भृशं मलं मलवन्निन्द्यमानमामिषं जीवनोपायः अनृतं कृषिः नाम प्रसिद्धं यदस्ति तत्पृथिवीतले पादेन भूतं स्थितम्। कृतयुगपुरुषतुल्यवैभवाभावेनाकृष्टपच्य-त्वाद्यभावात् त्रेतायुगपुरुषाणामनृतमेव जीवनोपायोऽ-भूदित्यर्थः। 'सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतम्।' इत्यमरः। राभू.

**[2]अनृतं पातयित्वा तु पादमेकमधर्मतः।**
**ततः प्रादुष्कृतं पूर्वमायुषः परिनिष्ठितम्।।**

एवमायुषः क्षयोऽप्यभूदित्याह – अनृतमिति। अधर्मतः अधर्मस्तदेकं पादमनृतलक्षणं जीवनोपायं पातयित्वा निक्षिप्य ततस्तेनैव पातेन पूर्वं प्रथमम् आयुषः परिनिष्ठितं विनाशः प्रादुष्कृतं प्रादुर्भूतम्। कृतयुगपुरुषापेक्षया त्रेतायुगपुरुषा न्यूनायुषोऽभवन्नित्यर्थः। राभू.

**[3]पतिते त्वनृते तस्मिन्नधर्मे च महीतले।**
**शुभान्येवाचरंल्लोकाः सत्यधर्मपरायणाः।।**

एवमनुभावस्याऽऽयुषः क्षये प्रवृत्ते सति भीताः सन्तः त्रेतायुगपुरुषाः शुभाचरणे निरता आसन्नित्याह – पतिते-त्विति। अधर्मे अधर्मजायुःक्षये। 'पातिते त्वनृते तस्मिन्न-धर्मेण' इति च पाठः। राभू.

**[4]त्रेतायुगे त्ववर्तन्त ब्राह्मणाः क्षत्रियाश्च ये।**
**तपोऽतप्यन्त ते सर्वे शुश्रूषामपरे जनाः।।**

(१) **वाराकु.** ७।७४।१७.

(२) **वारा.** ७।६५।१५ पूर्वार्धं नास्ति; **वाराकु.** ७।७४।१८.

(३) **वारा.** ७।६५।१६ पूर्वार्धं नास्ति; **वाराकु.** ७।७४।१९ चरंल्लोकाः (चरल्लोकः) यणाः (यणः).

(४) **वारा.** ७।६५।१७; **वाराकु.** ७।७४।२० गे त्ववर्तन्त (गे च वर्तन्ते).

शुभाचारे भेदमेव दर्शयति – त्रेतेति। शुश्रूषां पूर्ववर्णपरिचर्याम्। अपरे वैश्यशूद्राः। अकुर्वन्निति शेषः। राभू.

[१]**स धर्मः परमस्तेषां वैश्यशूद्रमथागमत्।**
**पूजां च सर्ववर्णानां शूद्राश्चक्रुर्विशेषतः।।**

शुश्रूषावत् पूर्वोक्तकृष्यादिकमपि वैश्यशूद्रयोः परमधर्मोऽभूदित्याह – स धर्म इति। 'स्वधर्मः परमः' इति च पाठः। पूजां चेति। वैश्यानां हि शुश्रूषा। अतो (? षातो)ऽपि कृष्यादिकमेव परमो धर्मोऽभूत्, शूद्राणां कृष्यादिभ्योऽपि शुश्रूषैव विशिष्टो धर्मोऽभूदित्यर्थः। राभू.

[२]**एतस्मिन्नन्तरे तेषामधर्मे चानृते च ह।**
**ततः पूर्वे भृशं ह्रासमगमन्नृपसत्तम।।**

एवं त्रेतायुगे लोकस्थितिमुक्त्वा तदवसानकालस्थितिमाह – एतस्मिन्निति। एतस्मिन्नन्तरे त्रेतायुगावसानकाले अधर्मे अधर्मकार्ये आयुषः क्षये अनृते कृष्याद्युपाये च प्रवृत्ते सति क्षीणायुषो वृत्तिकर्शिताश्च पूर्वे त्रेतायुगस्थाः ह्रासं विनाशम् अगमन्। राभू.

[३]**ततः पादमधर्मस्य द्वितीयमवतारयत्।**
**ततो द्वापरसंख्या सा युगस्य समजायत।।**

अधर्मः सः त्रेतायुगप्रसारितैकपादः। राभू.

[४]**तस्मिन्द्वापरसंख्ये तु वर्तमाने युगक्षये।**
**अधर्मश्चानृतं चैव ववृधे पुरुषर्षभ।।**

अधर्मस्याभिवृद्धिर्नाम त्रेतायुगपुरुषेभ्योऽल्पायुष्यम्। अनृतस्याभिवृद्धिस्तु प्रयासबाहुल्येन कृषेः सफलत्वम्। राभू.

[५]**तस्मिन्द्वापरसंख्याते तपो वैश्यान्समाविशत्।**
**त्रिभ्यो युगेभ्यस्त्रीन्वर्णान्क्रमाद्वै तप आविशत्।**
**त्रिभ्यो युगेभ्यस्त्रीन्वर्णान्धर्मश्च परिनिष्ठितः।।**

तपः वैश्यान् समाविशत् वैश्यास्तपोधिकारिणोऽभवन्नित्यर्थः। एवं युगत्रयधर्मानभिधाय प्रकृतं वक्तुं तत्रोपयुक्तमर्थं संक्षिप्याऽऽह – त्रिभ्य इति। हेतौ पञ्चमी। राभू.

[१]**न शूद्रो लभते धर्ममुग्रं तप्तुं नरर्षभ।**
**हीनवर्णो नरश्रेष्ठ तप्यते सुमहत्तपः।।**
[२]**भविष्या शूद्रयोन्यां हि तपश्चर्या कलौ युगे।**
**अधर्मः परमो राम द्वापरे शूद्रधारितः।।**

भविष्यदिति। इकारलोपश्छान्दसः। तपश्चर्या तपश्चरणाधिकारः। शूद्राणां तपश्चर्या कलियुग एव धर्मो भविष्यति। अस्मिन्युगे त्वधर्म इत्याह – अधर्म इति। रामराज्यस्य त्रेतायुगत्वेऽपि 'अधर्मः परमो राजन् द्वापरे शूद्रजन्मनः।' इत्युक्तेः किमुत त्रेतायाम्? इत्यर्थः। राभू.

## मनुः

कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ

[३]**चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे।**
**नाधर्मेणाऽऽगमः कश्चिन्मनुष्यान्प्रति वर्तते।।**

(१) चत्वारः पादा यस्य स चतुष्पाद्धर्मः। यागादेश्च धर्मत्वात्तस्य चानुष्ठेयस्वभावत्वाद्विग्रहाभावान्न पादशब्दः शरीरावयववचनः, किं तर्हि? अंशमात्रवचनः। न हि धर्मस्य शरीरमस्ति पुरुषविधं पशुपक्ष्यादिविधं वा। तेन स्वांशैश्चतुर्भिरुपेतश्चतुष्पादुच्यते। तेन योऽयं धर्मः चतुष्पात्सकलः कृतयुग आसीत्। यागस्य तावत्प्रयोगावस्थस्य चत्वारो होतृकाः होता ब्रह्मा उद्गाता अध्वर्युरिति। चत्वारो वर्णाः कर्तार आश्रमा वा। सर्वथा यावान्वेदे धर्म उक्तः स सर्वस्तस्मिन्कालेंऽशतोऽपि न हीनः अविगुणः सर्वोऽनुष्ठीयते। बाहुल्येन चतुःसंख्या। एवं दानादिष्वपि योज्यम् – दाता द्रव्यं पात्रं भावतुष्टिः। अथवा यागदानतपांसि ज्ञानं च। तथा वक्ष्यति – 'तपः परम्' इति। अथवा धर्मप्रतिपादकं

---

(१) **वारा.** ७।६५।१८; **वाराकु.** ७।७४।२१ द्रमथा (द्रं समा).
(२) **वाराकु.** ७।७४।२२.
(३) **वारा.** ७।६५।१९; **वाराकु.** ७।७४।२३ (धर्मस्य) (धर्मः स) संख्या सा (संज्ञाऽस्य).
(४) **वारा.** ७।६५।२०; **वाराकु.** ७।७४।२४ संख्ये (संज्ञे).
(५) **वारा.** ७।६५।२१ पू.; **वाराकु.** ७।७४।२५-२६ श्यान्स (श्यान्त्स).

(१) **वारा.** ७।६५।२१-२२; **वाराकु.** ७।७४।२६-२७ धर्ममुग्रं तप्तुं (धर्मं युगतस्तु) नर (नृप).
(२) **वारा.** ७।६५।२२-२३; **वाराकु.** ७।७४।२८ ष्या शूद्र (ष्यच्छूद्र) हि (वै) राम द्वा (राजन्द्वा).
(३) **मस्मृ.** १।८१; **मेधा.** ष्यान्प्रति व (ष्यानुप व); **अप.** ३।१७३ पृ. १०१२ पू.; **मवि.** युगे (यतः) शेषं मेधावत्;

वाक्यं धर्मः। तस्य च चत्वारः पादाः चत्वारि पदजातानि। नामाख्याते चोपसर्गनिपाताश्च। तथा चाऽऽह – 'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।' (ऋसं. १।१६४।४५)। मनस ईषिणः समर्था विद्वांसो धार्मिकाः। अद्यत्वे तु 'गुहा त्रीणि निहिता नेङ्गयन्ति' न हि प्रकाशन्ते। 'तुरीयं वाचं मनुष्या वदन्ति'। चतुर्थं भागं वैदिका मनुष्या वदन्ति। एतदुक्तं भवति – आदौ न वेदवाक्यं किंचिदन्तरितम्, न च काचिद्वेदशाखा। अद्यत्वे तु बह्वन्तरितम्। सत्यं चैव, सकलमित्यनुषङ्गः। सत्यपि सत्यस्य विहितत्वाद्धर्मत्वे प्राधान्यार्थं पृथगुपदेशः हेत्वर्थे वा। सकलस्य धर्मानुष्ठानस्य सत्यं हेतुः। ये त्वनृतिनस्ते लोकावर्जनार्थं किंचिदनुतिष्ठन्ति, अन्यत् त्यजन्ति। न अधर्मेण निषिद्धेन मार्गेण कश्चित् आगमः विद्या वाऽर्थो वा अनुष्ठातुम् उपवर्तते आगच्छति, युगस्वाभाव्यात्। न मनुष्या अधर्मेण विद्यामागमयन्ति, नापि धनमर्जयन्ति। विद्याधने धर्मानुष्ठानकारणे, तत्परिशुद्धिः सकलधर्मसद्भावस्य हेतुत्वेनानेनोच्यते। $ मेधा.

(२) धर्मो हि तपोज्ञानयज्ञदानपादचतुष्टयवान् सत्यमूर्धा। अधर्मस्तु चौरिकानृतमायाख्यचरणत्रयमात्रात्। तथा चाधर्माभावात्तदा कृते संपूर्ण एव चतुष्पाद्धर्मः। सत्यं चैव सकलम्। आगमः अर्थागमः नाधर्मेणोपवर्तते यत इति साकल्यहेतुः। मवि.

(३) अथोक्तपरिमाणानां कृतादियुगानां स्वभावं षड्भिः श्लोकैराह – चतुष्पादिति। चतुष्पात् चातुर्वर्ण्याश्रयः। सकलः संपूर्णः। सत्यस्य पृथगुपादानं प्राधान्यप्रतिपत्त्यर्थम्। आगमः अर्थादेः प्राप्तिः। 'नाधर्मो नाऽऽगमः कश्चित्' इति च पठन्ति। तत्रायमर्थः – नाधर्मो मनुष्यानुपवर्तते। आगमः शास्त्रम्, स चापि नोपा( ? प)वर्तते। शास्त्रापेक्षा तत्र नास्ति। स्वयमेव धर्मं धर्मफलं च ते साक्षात् कुर्वन्तीति। अयमेव साधुः पाठः, उत्तरश्लोकानुगुण्यात्। नन्द.

**'इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः।**
**चौरिकानृतमायाभिर्धर्मश्चापैति पादशः।।**

(१) कृतयुगादन्येषु युगेषु आगमात् वेदाख्यात् धर्मः पादशः युगेयुगे पादेन अवरोपितः व्यपनीतः। अन्तर्हिता वेदशाखाः, पुरुषाणां ग्रहणावधारणशक्तिवैकल्यात्। योऽप्यद्यत्वे धर्मो ज्योतिष्टोमादिः प्रचरति सोऽपि चौर्यादिभिः पादशो हीयते। ऋत्विजां यजमानानां दातॄणां संप्रदानानां चैतैर्दोषैर्युक्तत्वान्न यथाविधि धर्मो निष्पद्यते। फलमतो यथोक्तं न प्राप्यते। तेन धर्मापायहेतूनां चौरिकादीनां न युगैर्यथासंख्यं संबन्धः, सर्वेषामद्योपलम्भात्। मेधा.

(२) त्रेतादिषु पुनः आगमात् शास्त्रात् धर्मः यागाद्यनुष्ठानं यथाक्रमं प्रतियुगं पादं पादमवरोपितं हीनीकृतं चौर्यासत्यछद्मभिः। नात्र युगैर्यथासंख्यम्, चौर्यादीनां सर्वेषां सर्वयुगेषु दर्शनात्। एवं च पादशोऽनुष्ठानापगमात् तत्साध्योऽप्यभ्युदयहेतुः मुख्यो धर्मः पादशो व्यपगच्छति। गोरा.

(३) त्रेतादिष्वर्थागमात् अर्थात् निषिद्धात् पादशः तपआद्येकैकपदार्थापचयेन धर्मोऽवरोपितः। तानेव निषिद्धागमान् धर्मस्य त्रीन्पदार्थान् दर्शयति – चौरिकेति। चौरिका परस्वापह्नवः। अनृतं मिथ्योक्तिः। माया परविप्रलम्भसाधनाचरणम्। * मवि.

(४) पूर्वार्धे कारणापकर्षाद्धर्मापकर्षः, उत्तरार्धेऽसत्यपि कारणापकर्षे प्रकृष्टधर्मप्रतिबन्धकवशाद्धर्मापकर्ष उक्त इति भेदः। अत्र तपःप्रभृतीनां धर्मपादानां मध्ये त्रेतादौ क्रमेणैकैकः पादः सर्वात्मना नश्यतीति नार्थः, इदानीमपि तेषां क्वचिद्दर्शनात्। किं तु सर्वेषामेव धर्मपादानामेकैकस्य पादस्य प्रतियुगं क्रमेण तुर्यस्तुर्योऽशो नश्यतीत्यर्थः। पप्र. ५१

(५) इतरेषु त्रेतादिषु आगमात् शास्त्रात् धर्मोऽध्यवसीयते। स तु धर्मः पादशोऽवरोपितः। धर्माध्यवसायावरोपणमेव धर्मावरोपणमभिप्रेतम्। चौरकमिति पाठः। चौरकं चौर्यं मनोज्ञाति( ? दि)त्वाद्वुञ्। द्वितीयोऽत्र धर्मशब्दोऽनुष्ठानवचनः। नन्द.

---

$ गोरा., ममु., मच., पप्र., भाच. मेधागतम्।

**पप्र.** ५०-५१; **नन्द.** नाधर्मेणाऽऽ (नाधर्मो नाऽऽ) इत्यपि पाठः, शेषं मेधावत्; **भाच.** मेधावत्.

* मच. मविगतम्।

(१) **मस्मृ.** १।८२; **अप.** ३।१७३ पृ. १०१२ उत्त.; **पप्र.** ५१.

(६) इतरेषु त्रेतादिषु युगेषु अधर्मस्य आगमात् अधर्मात् पादश एकचरणः धर्मः अवरोपितः न्यूनचरणः कृतः। तद्यथा-त्रेतायुगे चौरिकारूपेणाधर्मेण धर्मः पादशः अपैति एकचरणन्यूनो भवति, द्वापरे अनृताख्येनाधर्मेण द्वितीयः पादः धर्मस्य अपैति नाशमेति, कलौ मायाख्येनाधर्मेण धर्मस्य तृतीयः पादः नाशमेति। भाच.

कृतादिषु क्रमेण चतुस्त्रिद्व्येकवर्षशता-
न्यायुः, कर्मफलानां प्रभावस्य
च युगानुरूप्येणोत्कर्षा-
पकर्षौ

**'अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः।**
**कृते त्रेतादिषु ह्येषां वयो ह्रसति पादशः।।**

(१) अधर्मस्य रोगकारणस्याभावादरोगाः। रोगः व्याधिः। सर्व एव चत्वारो वर्णाः सिद्धाभिप्रेतार्थाः। अर्थः प्रयोजनम्। अथवा सर्वे अर्थाः सिद्धा येषां काम्यानां कर्मणाम्। प्रतिबन्धकाभावादव्याक्षेपेणाशेषफलसिद्धिः। चतुर्वर्षशतायुष इति। ननु 'स ह षोडशं वर्षशतमजीवत्' इति परममायुर्वेदे श्रूयते। अत एवाऽऽहुः – वर्षशतशब्दोऽत्र वयोवस्थाप्रतिपादकः चत्वारि वयांसि जीवन्तीति। न पुराऽऽयुषः प्रमीयन्ते, नाप्राप्य चतुर्थं वयो म्रियन्ते। अत एव द्वितीये श्लोकार्धे वयो ह्रसतीत्याह। पूर्वत्र वयसो वृद्धावुक्तायामुत्तरत्र तस्यैवं(? व) ह्रासाभिधानोपपत्तिः। पादश इति। न चात्र चतुर्थो भागः पादः, किं तर्हि? भागमात्रम्। अंशत आयुः क्षीयत इत्यर्थः। तथा च केचिद्बाला म्रियन्ते, केचित्तरुणाः, केचित्प्राप्तजरसः। परिपूर्णमायुर्दुर्लभम्। मेधा.

(२) अरोगाः, रोगनिमित्तस्याधर्मस्याभावात्। सर्वसिद्धार्थाः सिद्धसकलकाम्यफलाः। प्रतिबन्धकस्याधर्मस्याभावात् चतुर्वर्षशतायुषः पुराणदृष्ट्या त(? ष्ट्यैत)दाह। स्वाभाविकमेतदायुः। अत आयुःप्रापककर्मकरणेन अधिकायुषोऽपि भवन्ति। तेन 'दशवर्षसहस्राणि रामो राज्यमकारयत्' इत्यविरोधः। 'शतायुर्वै पुरुषः' इत्यादिश्रुतौ च शतशब्दो बह्वर्थः, शतसहस्रशब्दयोः बहुनामस्वाम्नातत्वात्। एवंविधा मनुष्याः कृते भवन्ति। त्रेतादिषु पुनरेतेषां पादं पादं वयः अल्पीभवति। * गोरा.

(३) सर्वः सिद्ध एवार्थोऽपेक्षितो वा कर्मणां यत्नेन येषां ते सर्वसिद्धार्थाः। वयो ह्रसतीत्युपलक्षणम्। आरोग्यसिद्धार्थत्वे अपीति ग्राह्यम्। मवि.

(४) किमसाध्यं धर्मस्येति साश्चर्यमाह – अरोगा इति। सर्वसिद्धार्थाः सर्वे आरम्भाः फलन्ति। चतुर्वर्षशतायुष इति। 'शतायुर्वै पुरुषः' इति श्रुतेः 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति न्यायेन शतपरिमितं पुरुषायुरेव, अधिकं तु तपोविद्यावशात्। अत एव 'दशवर्षसहस्राणि रामो राज्यमचीकरत्' इत्यादि संगतम्। यद्वा, वर्षशतशब्दो बाल्यादिवयश्चतुष्कपरः। तेन शतान्त एव म्रियते इत्यर्थः। न तु कलियुगमधिकृत्य श्रुतेः प्रवृत्तिः, तस्याः साधारण्यात्। ह्रासवचनं तु तपोविद्याराहित्यसूचनपरम्। मच.

(५) कृतयुगे पुरुषाणां स्वभावप्राप्तमायुश्चत्वारि वर्षशतानि। यत् पुनरितिहासपुराणेषु तेषां बहुवर्षसहस्रजीवित्वमुक्तं तत्तु तेषां श्रद्धया साधितमिति वेदितव्यम्। तथा च महाभारते कृतयुगपुरुषानधिकृत्य समर्थ्यते – 'यावद्यावत्कृता श्रद्धा देहं धारयितुं नृणाम्। तावत्तावदजीवंस्ते नाऽऽसीद्यमकृतं भयम्।।'(भा. १२।२००।३४)इति। नन्द.

**'वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम्।**
**फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम्।।**

(१) केचिदाहुः – वैदिकैः कर्मभिः सहस्रसंवत्सरादिभिरपेक्षितमायुः वेदोक्तम्, तत् अनुयुगं फलति युगानुरूपेण संपद्यते, न सर्वेषु युगेषु। नाद्य कश्चित्सहस्रसंवत्सरजीवी। यः सर्वश्चिरं जीवति स वर्षशतम्। तदपरे नाऽऽद्रियन्ते। यतो दीर्घसत्रेषु संवत्सरशब्दे दिवसेषु व्यवस्थापिते विधेयान्तरविरोधाद्वाक्यभेदापत्तेः। एष हि तत्र ग्रन्थः – 'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः' (तैब्रा. ३।१२।९।८) इत्यादि। तत्र त्रिवृन्त्यहानि गवामयनप्रकृतिकत्वात्प्राप्तानि। विशिष्टा तु संख्या पञ्चपञ्चाशत इति अप्राप्तत्वाद्विधेया। यद्यपरा संवत्सरता प्रतीयेत वाक्यं भिद्येत। तत्रावश्यमन्यतरस्यानुवाद आश्रयितव्यः। संवत्सर-

---

(१) **मस्मृ.** १।८३; **ममु.** षां वयो ह (षामायुर्ह); **मुक्ता.** ११ ह्येषां (त्वेषां).

* ममु., भाच. गोरागतम्।

(१) **मस्मृ.** १।८४; **मुक्ता.** ११ फल (भव).

शब्दः सौरसावनादिमानभेदेन षष्ट्यधिकशतत्रयात्मनोऽहः-संघातादन्यत्रापि दृष्टप्रयोग एवेति। तस्यैव लक्षणया दिवसेष्वनुवादो युक्त इति। अन्ये तु मन्त्रार्थवादेषु 'शतमिन्नु शरदो अन्ति देवाः' (ऋसं. १।८९।९), 'शतायुर्वै पुरुषः' (कासं. ३४।५) इति शतशब्दश्च बहुनामसु पठितः, बहुत्वं चानवस्थितम्। युगानुरूपेण दीर्घजीविनोऽल्पायुषश्च भवन्ति। यथाश्रुतव्याख्याने तु कलौ सर्वे शतायुषश्च भवन्ति। अथवा आयुःकामस्य यानि कर्माणि, न च तत्र प्रमाणं श्रुतम्, तत्रानुयुगं परिमाणं वेद्यम्। आशिषः अन्या अपि फलविषया वेदशासनाः। काम्यानां कर्मणाम्। आयुषः काम्यत्वेऽपि प्राधान्यात्पृथगुपदेशः। तथा ह्याह – 'आयुर्वै परमः कामः'। प्रभावः अलौकिकी शक्तिः, अणिमादि-गुणयोगः, अभिशापः, वरदानम्। अनुयुगं फलन्तीति सर्वत्र योज्यम्। † मेधा.

(२) यद्यपि 'शतायुः पुरुषः' (तैसं. ७।५।९।२) इति वेदे पठ्यते, तदेव (? तथापि) चतुर्वर्षशतमेव शतवर्ष-त्वेनोक्तम्। भवति हि वर्षादेः परिमाणोत्कर्षो देवादिषु, तद्विशिष्ट(? तद्वद्विशिष्ट)मनुष्येष्वपि इति ग्राह्यम्। तथा कर्मणामनुष्ठितानामाशिषोऽपि। यथा कारीर्यादिभिः फलान्य-र्थितानि अनुयुगं युगानुरूपेण फलन्ति। यथा कृते कारीर्या-दिभिः शीघ्रं महती वृष्टिः, न तथा त्रेतादावित्यर्थः। तथा परमतपआदिजा शक्तिरनुयुगं फलति। कृते तदैव फलति, अन्यदा विलम्बेनेत्यर्थः। मवि.

(३) 'शतायुर्वै पुरुषः' इत्यादि वेदोक्तमायुः, कर्मणां च काम्यानां फलविषयाः प्रार्थनाः, ब्राह्मणादीनां च शापानुग्रहक्षमत्वादिप्रभावाः युगानुरूपेण फलन्ति। + ममु.

(४) आयुः चतुर्वर्षशतादि। आशिषः फलानि। प्रभावः शापानुग्रहादिशक्तिः। अनुयुगं युगानुरूप्येण पूर्णानि हीनानि हीनतराणि हीनतमानि च फलन्तीत्यर्थः। * मुक्ता. ११

† गोरा. मेधागतम्।

+ मच., भाच. ममुगतम्।

* नन्द. मुक्तावत्।

कृतादिषु क्रमेण तपोज्ञानयज्ञदानरूपो धर्मभेदः, युगानां क्रमेण ब्राह्मणादिवर्ण-रूपत्वम्

**[1]अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे।**
**अन्ये कलियुगे नृणां युगह्रासानुरूपतः।।**

(१) उक्तस्य कालभेदेन पदार्थस्वभावभेदस्योपसंहारः। धर्मशब्दो न यागादिवचन एव, किं तर्हि? पदार्थगुणमात्रे वर्तते। अन्ये पदार्थानां धर्माः प्रतियुगं भवन्ति, यथा प्राक् दर्शितम्। यथा वसन्तेऽन्यः पदार्थानां स्वभावोऽन्यो ग्रीष्मेऽन्य एव वर्षास्वेवं युगेष्वपि। अन्यत्वं चात्र न कारणानां दृष्ट-कार्यत्यागेन कार्यान्तरजनकत्वम्, अपि त्वपरिपूर्णस्य कार्य-स्योत्पत्तेः शक्तेरपचयात्। तदाह – युगह्रासानुरूपत इति। ह्रासो न्यूनता। मेधा.

(२) कृतादिषु युगेषु युगानुरूपेण धर्मवैलक्षण्यं मनुष्याणां भवति। $ गोरा.

(३) अत एवाऽऽह – अन्य इति। सकलासकलाभ्यां (? लत्वाभ्यां) भिन्ना इति। अत आह – युगह्रासानुरूपत इति। युगह्रासः युगे युगे धर्मह्रासः, तदनुसारेण पृथक्त्वम्, न तु शूद्रस्य वेदाध्ययनम्, विप्रस्य सेवेति भावः। † मच.

(४) युगह्रासानुरूपतः परे अन्ये, भवन्तीत्यनुषङ्गः। यथा युगानामादौ धर्माः, न तथा मध्ये, यथा मध्ये, न तथाऽन्त इत्यर्थः। नन्द.

**[2]तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते।**
**द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे।।**

(१) अयमन्यो युगस्वभावभेदः कथ्यते। तपःप्रभृतीनां वेदे युगभेदेन विधानाभावात्सर्वदा सर्वाण्यनुष्ठेयानि। अयं त्वनुवादो यथाकथंचिदा(? द्व्या)ख्येयः। इतिहासेषु ह्येवं वर्ण्यते – तपः प्रधानम्, तच्च महाफलम्। दीर्घायुषो

$ मवि., ममु., गोरावत्।

† भाच. मचगतम्।

(१) **मस्मृ.** १।८५; **स्मृच.** १।२७; **मुक्ता.** ११.

(२) **मस्मृ.** १।८६; **स्मृच.** १।२७ मुच्यते (मेव च) मेकं (मेव); **मुक्ता.** ११; मेकं (मेव).

रोगवर्जितास्तपसि समर्था भवन्ति। अनेनाभिप्राये-णोच्यते। ज्ञानमध्यात्मविषयम्। शरीरक्लेशादन्तर्नियमो नातिदुष्करः। यागे तु न महाक्लेश इति द्वापरे यज्ञः प्रधानम्। दाने तु न शरीरक्लेशः नान्तःसंयमः, न चातीव विद्वत्तोपयुज्यत इति सुसंपादता। मेधा.

(२) तथा च – तप इति। तपः कृच्छ्रचान्द्रायणादि कृतयुगे परं प्रधानतोऽनुष्ठीयते मनुष्यैर्युगस्वाभाव्यात्, आत्मज्ञानयज्ञदानानामनुषङ्गतः। एवं त्रेतायां ज्ञानं परं तपः-प्रभृतीनि त्वानुषङ्गिककाणि। एवं द्वापरे यज्ञमाहुः। दानं कलाविति। गोरा.

(३) परम् अभ्यर्हितं तपः अन्येष्वपि ज्ञानादिषु क्रियमाणेषु तपो ह्यनाशकादि अतिबलैरेव शक्यत इति कृते तस्य प्राधान्यम्। त्रेतायां ज्ञानम्, मन्दबलतया तपस्य-शक्तानां कृतयुगानुष्ठिततपःपरिपक्वकषायाणां ज्ञाने सामर्थ्य-संभवात्। तत्राप्यशक्तानां होमाद्यल्पव्यापारो यज्ञ एव द्वापरे शक्य इति तत्प्रधानो द्वापरे धर्मः। यज्ञाङ्गबहुव्यापारशून्यतया यज्ञादप्यल्पायाससाध्यं दानमेकं कलौ। तपःप्रभृति च शक्यमेवेत्यर्थः। मवि.

(४) यद्यपि तपःप्रभृतीनि सर्वाणि सर्वयुगेष्वनुष्ठेयानि तथापि सत्ययुगे तपः प्रधानं महाफलमिति ज्ञाप्यते। एवमात्मज्ञानं त्रेतायुगे, द्वापरे यज्ञः, दानं कलौ। ममु.

(५) तपः ध्यानम्, ज्ञानम् आत्मधीः शास्त्रधीर्वा। # मच.

(६) परं प्रधानमित्यर्थः। युगस्वभावकृतेतरधर्मानादर एवकाराभ्यां सूचितः। मुक्ता. ११

**[१]ब्राह्मं कृतयुगं प्रोक्तं त्रेता तु क्षत्रियं युगम्।**
**वैश्यो द्वापरमित्याहुः शूद्रः कलियुगः स्मृतः।।**

कृतयुगं ब्राह्मं प्रोक्तं सत्त्वगुणसंज्ञमित्यर्थः। त्रेतायुगं क्षत्रियाधिष्ठितं सत्त्वरजोगुणमित्यर्थः। द्वापरं वैश्यः वैश्याधिष्ठितं रजस्तमोभ्यां युक्तम्। कलियुगः शूद्रः शूद्राधिष्ठितः तमोगुणरूपः। एवं तद्रूपमाचार्या आहुः। भाच.

---

# शेषं ममुगतम्।

(१) **मस्मृ.** १।८६ इत्युत्तरं प्रक्षिप्तः.

कृते वर्षसाध्यो धर्मस्त्रेतादिषु
क्रमेणर्तुत्रयत्रिपक्षैकाहैः
साध्यते

**[१]कृते यदब्दाद्धर्मः स्यात्स त्रेतायामृतुत्रये।**
**द्वापरे तु त्रिपक्षेण कलावह्ना तु तद्भवेत्।।**

## बृहस्पतिः

युगभेदेन नियोगविधि-
निषेधयोर्व्यवस्था

**#[२]उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु।**
**युगह्रासादशक्योऽयं कर्तुमन्यैर्विधानतः।।**
**[३]तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः।**
**द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता।।**
**[४]अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः।**
**न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदंतनैः।।**

यत्तु बृहस्पतिना 'उक्तो ..... तनैः' इति, तदन्यथा-सिद्धम्, निषेधस्य पुनर्विवाहविषयत्वात्। मच.

युगक्रमेण धर्माधर्मयोरु-
त्कर्षापकर्षौ

**[५]कृतेऽभूत्सकलो धर्मस्त्रेतायां त्रिपदः स्थितः।**
**पादः प्रविष्टोऽधर्मस्य मत्सरद्वेषसंभवः।।**

---

# एभिर्वचनैर्युगभेदेन व्यवस्थापितौ मनूक्तौ नियोगविधिनिषेधौ सुविस्तृतव्याख्यानयुतौ व्यवहारकाण्डे स्त्रीपुंधर्मप्रकरणे (पृ. १०६४-१०६९) संगृहीतौ द्रष्टव्यौ।

(१) **पुम.** ४६७ मनुबृहस्पती.

(२) **अप.** १।६८-६९ पृ. ९७ उक्तो (उक्त्वा) कर्तुमन्यै (कर्तुं सर्वै); **ममु.** ९।६८ मनु (मुनि) ह्रासा (क्रमा); **मच.** ९।६८ ह्रासा (क्रमा); **शूक.** २६५ कर्तुमन्यै (कर्तुं मर्त्यै); **वीमि.** १।६८-६९ पृ. १३२ तु (च) ऽयं (ऽसौ); **नन्द.** ९।६८ उक्तो नियोगो (नियोगमुक्त्वा).

(३) **अप.** १।६८-६९ पृ. ९७ कृतत्रे (कृते त्रे) निर्हि नि (निर्विनि); **ममु.** ९।६८; **मच.** ९।६८; **वीमि.** १।६८-६९ पृ. १३३ निर्हि निर्मिता (निर्विजायते); **नन्द.** ९।६८ कृतत्रे (कृते त्रे).

(४) **अप.** १।६८-६९ पृ. ९७ भिश्च (भिर्ये) उत्तरार्धे (न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैः।); **ममु.** ९।६८; **मच.** ९।६८; **उत.** ११३ भिश्च (भिर्यैः); **शूक.** २६५ भिश्च (भिर्ये); **वीमि.** १।६८-६९ पृ. १३३ शूकवत्; **नन्द.** १।६८.

(५) **कृर.** ११ स्थितः (स्मृतः); **पमा.** १।७५; **पप्र.** ५२.

**[1]धर्माधर्मौ समौ भूत्वा द्वौ पादौ द्वापरे स्थितौ।**
**तिष्येऽधर्मस्त्रिभिः पादैर्धर्मः पादेन संस्थितः।।**
**[2]तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम्।**
**द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया दमः।।**

(१) तिष्यः कलिः। + गृक. २९२

(२) तिष्ये कलौ दानदयादिभिरेक एव चरणः। अत्र च सत्ययुगे चत्वारोऽपि चरणा उत्कृष्टाः। क्रमेण त्रिद्व्येकोत्कर्षः, न त्वपकृष्यमाणस्याभावस्त्रेतादौ, बहुविरोधात्। अत एव 'तपः परं कृतयुगे' इत्युत्कर्षवाचि परपदम्। कृर. ११

(३) अत्र सर्वेषां धर्माणां चतुर्धा विभक्तानामेकैकांशरूपपादापगमात् त्रिपदत्वादिकमवगन्तव्यम्। पप्र. ५२

युगभेदेन दानपद्धतिभेदाः

**[3]कृते प्रदीयते गत्वा त्रेतास्वानीयते गृहे।**
**द्वापरे च प्रार्थयतः कलावनुगमान्विते।।**

प्रतिग्रहीतृगृहं गत्वा यद्दीयते तत्कृते युगे दत्तं भवति। प्रतिग्रहीतारं स्वगृहमाहूय यद्दीयते तत्त्रेतायुगे दत्तं भवतीत्यर्थः। एवमुत्तरत्रापि। चदा. ८९

कृतादिषु धर्मनिष्पत्तिकालभेदाः, कलौ सत्यस्यैवोपकारकत्वम्

**[4]कृते यदब्दाद्यो धर्मः स त्रेतायामृतुत्रयात्।**
**द्वापरे तु त्रिपक्षेण कलावह्ना तु तद्भवेत्।।**

**[1]न च वृत्तं न शुद्धार्थो न शुद्धिर्मनसः कलौ।**
**यतोऽतः सत्यमेवैकं नराणामुपकारकम्।।**

## उपकात्यायनः

युगेषु श्रुतिशौचाचारधर्मभेदः

**[2]श्रुतिश्च शौचमाचारः प्रतिकालं विभिद्यते।**
**नानाधर्माः प्रवर्तन्ते मानवानां युगे युगे।।**

## व्यासः

युगेषु धर्मनिष्पत्तिकालभेदाः, कृतादिषु ध्यानादिसाध्यं फलं कलौ विष्णुकीर्तनेन साध्यते, कलौ रुद्रः शरण्यः, कलिवर्ज्यानि

**[3]यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत्।**
**द्वापरे तच्च मासेन ह्यहोरात्रेण तत्कलौ।।**
**[4]ध्यायन् कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।**
**यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्।।**

अत्र च कृताद्यधिकरणकध्यानादिफले कल्यधिकरणं कीर्तनं विधीयते इति वाक्यार्थः पितामहचरणैर्भक्तिविवेके निरूपितः। स्मृतिकौ. ४६९

**[5]धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ।**
**अल्पायासेन धर्मज्ञास्तेन तुष्टोऽस्म्यहं कलौ।।**
**[6]अनेकदोषयुक्तस्य कलेरेष महान्गुणः।**
**विशेषाद्ब्राह्मणो रुद्रमीशानं शरणं व्रजेत्।।**
**[7]अग्न्याधेयं गवालम्भं संन्यासं पलपैतृकम्।**
**देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्।।**

---

+ स्मृच., गृर. गृकवत्।

(१) **कृर.** ११ स्थितौ (स्मृतौ) स्त्रिभिः पादैर्ध (स्त्रिपादस्तु ध); **पमा.** १।७५ द्वौ पादौ (द्विपादौ): १।११५ उत्त.; **पप्र.** ५२ स्त्रिभिः पादैर्ध (स्त्रिपादस्तु ध).

(२) **गृक.** २९२ ज्ञानं (यज्ञं); **स्मृच.** १।२७; **कृर.** ११ तपो धर्मः (तयोस्तपः) चाध्व (त्वध्व); **गृर.** ४९७-४९८; **पमा.** १।१११; **पप्र.** ४८-४९ ज्ञानं (दानं) स्मृतम् (स्थितम्); **स्मृतिकौ.** ४६८-४६९ द्वितीयतृतीयचरणौ न स्तः; **पुम.** ४६७; **पदी.** १ ध्वरः प्रोक्तस्तिष्ये (ध्वराः प्रोक्ताः कलौ).

(३) **पमा.** १।११४.

(४) **गृक.** २९२ पूर्वार्धे (कृते यदब्दाद्धर्मं स्यात्त्रेतायां तु ऋतुत्रयात्।) तु तद्भवेत् (च तत्फलम्); **स्मृच.** १।२८; **गृर.** ४९८ यद (षड) तु तद्भवेत् (च तत्फलम्); **मुक्ता.** १३ पूर्वार्धे (कृते यदब्दधर्मः स्यात्त्रेतायां तु ऋतुत्रयात्।) तु त (च त); **पुम.** ४६७ द्यो धर्मः (द्धर्मः स्यात्) त्रयात् (त्रये) मनुबृहस्पती.

(१) **मुक्ता.** १३.

(२) **चका.** ६५७.

(३) **मुक्ता.** १३.

(४) **स्मृच.** १।२८-२९; **मुक्ता.** १३; **स्मृतिकौ.** ४६९; **पुम.** ४६८. (५) **स्मृच.** १।२९. (६) **मुक्ता.** १३.

(७) **मच.** ९।६८ अग्न्याधेयं (अग्निहोत्रं) त्पत्तिं (त्पत्तिः) (=); **मुक्ता.** १७६; **सिन्धु.** १३११ रेण (राच्च) शेषं मचवत्, निगमः : २१३५ द्वितीयचरणमात्रम् (=); **विपा.** ५।४९२ अग्न्याधेयं (अग्निहोत्रं) रेण (राच्च) निगमे : ५।४९५ सर्वं सिन्धु २१३५वत्; **यसं.** २ सिन्धु. १३११ वत्; **यप्र.** १०८ विपा. ५।४९२ वत् (=):१०९ अग्न्याधेयं (अग्निहोत्रं) पू. स्मृतिः; **बाल.** १।१८१ पृ. ४४६ मचवत्, स्मृतिः.

(१) यत्तु 'अग्निहोत्रं.... वर्जयेत्' इति तदमूलम्। समूलत्वे वा लाभख्यात्यादिरागिणां निवृत्तितात्पर्यकम्। अन्यथा 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्', 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिश्रुतिविरोधश्चेति दिक्।

मच. ९।६८

(२) अग्निहोत्रं तदर्थमाधानम्। एतच्च सर्वाधानपरम् 'अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः। सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता।।' इति लौगाक्षिवचनादिति स्मृतिचन्द्रिकायाम्। एतेन – 'चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च। कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः। संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता।।' इति व्यासवचनं व्याख्यातम्। सर्वाधानेऽपि विशेषमाह देवलः – 'यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते। संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे।।' इति। अत्र 'पूर्वयुगाश्रिता' इति लौगाक्षिवाक्ये पूर्वयुगानि कृतादीनीत्येकोऽर्थः। अन्ये तु युगस्य पूर्वं कलेः पूर्वभागः। सः 'चत्वार्यब्दसहस्राणि' इति पूर्वोक्तवाक्याच्चतुश्चत्वारिंशच्छतवर्षावच्छिन्नः। तस्मिन्भागे सर्वाधानं कार्यम्, तदुत्तरं तु 'यावद्वर्णविभागोऽस्ति' इति वाक्यात् वर्णविभागपर्यन्तमर्धाधानमित्याहुः। संन्यासः त्रिदण्डः। सिन्धु. १३११-१३१२

(३) अत्र केचित् 'अग्निहोत्रं... वर्जयेत्' इत्युत्सर्गापवादकेन 'चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च। कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः। संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता।।' इति वैष्णववचनेन नियमितकालस्यातीतत्वादधुनाकालेऽग्निहोत्रं संन्यासं न कुर्वत इत्याहुः। तत्र 'चत्वार्यब्द' इति वैष्णववचनेन नियमितमुख्यकालस्यातीतत्वेऽपि तदुत्तरकालस्य गौणकालत्वात्, 'स्वकालादुत्तरः कालो गौणस्तु परिकीर्तितः' इति तल्लक्षणात्, 'यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते। अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे।।' इत्यादिस्मृतिवचनेन विशेषतः प्रकृते गौणकालाभ्यनुज्ञानात्, 'अत्रेदृशो भवेत्' इति सामान्यतः कर्ममात्रे गौणकालस्याभ्यनुज्ञानाच्च। ईदृशः – मुख्यकालसदृशः। अत एव शिष्टाः सर्वेऽपि प्रातरादिमुख्यकालातिक्रमेऽपि संध्याहोमादिकं गौणकालेऽप्यनुतिष्ठन्ति। 'यावद्वेदः प्रवर्तते' इत्यस्य चायमर्थः – मन्त्रब्राह्मणोभयात्मकवेदस्य प्रवृत्तिरध्ययनाध्यापनतदर्थज्ञानरूपा यस्य स एवाग्निहोत्रादिकमनुतिष्ठेत्। अन्यथा 'काचिन्निषादी तनयं प्रसूते कषायपानं कुरुते निषादः।' इति न्यायापातः स्यादिति। वस्तुतस्तु शिष्टाचारोऽप्यधुना समयेऽग्निहोत्रसंन्यासयोः क्रियायां नियामकः, स्मृतिवदाचारस्यापि प्रमाणतायास्तान्त्रिकैर्व्यवस्थापनात्। एतेन "अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम्।' इति स्मृतिवाक्यं सामान्यत्वादुत्सर्गः, 'यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते।' इति विशेषत्वात्तस्यापवादः, 'चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च।' इति तस्यापवादः। 'अपवादापवादे चोत्सर्गस्थितिः।' इति न्यायेन चतुःशताधिकचतुरब्दसहस्रातिक्रमे सति कलौ नाग्निहोत्राद्यनुष्ठानम्" इति कस्यचित्प्रलपितमपास्तम्, मङ्गलादिवत् सदाचारवशादपि तदनुष्ठानसंभवादित्यलं पल्लवितेनेति शिवम्। यप्र. १०७-१०९

**[१]यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते।**
**तावन्न्यासोऽग्निहोत्रं च कर्तव्यं तु कलौ युगे।।**
**[२]चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च।**
**कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः।**
**संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता।।**

(१) अत्र त्रेतापरिग्रह इति वदता सर्वाधानमेव निषिध्यते। अत एव लौगाक्षिः – 'अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः। सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता।।' इति। युगस्य पूर्वं पूर्वयुगं कलेः पूर्वभाग इत्यर्थः। अर्धाधानमपि यावद्वर्णवेदविभागं कार्यम्। तदाह देवलः – 'यावद्वर्ण... कलौ युगे।।' इति। यद्यपि संन्यासस्य चतुश्चत्वारिंशच्छताब्दावधिकत्वं व्यासेनोक्तं तथापि गौणकालोऽनेन समर्प्यत इति केचित्। त्रिदण्डैकदण्डाभिप्रायेण व्यवस्थेत्यपरे। सामान्यतः श्रुतस्य व्यासवाक्येनोपसंहार इत्यन्ये।

चमव्या. ५५

---

(१) **मुक्ता.** १७६; **यसं.** ३; **यप्र.** १०९ उत्तरार्धे (अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे।) पूर्वार्धं द्विवारं व्यवहितं च, स्मृतिः.

(२) **चमव्या.** ५५ सश्च (सस्तु); **सिन्धु.** १३११ : १३१२ प्रथमचरणमात्रम्; **सम.** ११०; **विपा.** ५।४९२; **स्मृतिकौ.** ४८० तृतीयार्धं नास्ति; **पुम.** ४६९ चमव्यावत्; **कृभ.** १३११ प्रथमचरणमात्रम्.

(२) वस्तुतस्तु 'चत्वार्यब्द' इत्यादीनि वचनानि महानिबन्धेषु न दृश्यन्ते। * सम. ११०

(३) त्रेताशब्देनाग्नित्रयमुच्यते। एतच्च सर्वाधानपरम्। 'अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः। सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया।।' इति लौगाक्षिवचनादिति केचित्। तन्न, कृतिद्वयस्तुत्यर्थमन्ते पठितस्य विशेषणस्य परिसंख्याश्रयणेन कलौ तदुत्तरार्धे वा निषेधपरत्वकल्पनाया अनुचितत्वात्। अत एव – 'यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते। संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे।।' इति देवलवचनं सर्वाधानप्रतिप्रसवार्थमित्यपि निरस्तम्। वर्णविभागाभावे वेदप्रवृत्त्यभावे चाधिकारासंभवेनास्य वचनस्य न्यायप्राप्तानुवादत्वमित्यपि न शङ्क्यम्, उक्तसंख्योत्तरं व्यासवचनेन निवारितयोः संन्यासाग्निहोत्रयोर्वर्णविभागादिकालेऽप्यप्राप्तयोः प्रतिप्रसवार्थ(त्व)संभवात्, मुख्यगौणकालप्रापकत्वेन विरोधपरिहारसंभवाच्चेत्यलम्। स्मृतिकौ. ४८०

(४) माधवीये विश्वेश्वर्यां संन्यासपद्धतौ – 'चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च। कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः। संन्यासस्तु न कर्तव्यो ब्राह्मणेन विजानता।।' इति व्यासवचनेन चतुश्चत्वारिंशद्वर्षशतानन्तरमग्निहोत्रादिनिषेध उक्तः। तत्र यद्यपि 'अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः। सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता।।' इति लौगाक्षिवचनं व्यासवचनैकवाक्यतयोपपद्यते, तथापि 'यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते। संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे।।' इति देवलवचनाद्वर्णविभागव्यवस्थापर्यन्तमप्यग्निहोत्रादिकं कार्यमिति।

पुम. ४६९

कलौ दुराचारविशेषाः,
कलौ कर्तर्येव
पापलेपः

**[१]तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा।**
**शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः।।**

(१) व्यासेन कलिनिन्दाप्रक्रमे 'तृतीयां.... मोहिताः' इत्युक्तम्। मातृतः मातृपक्षे। कूटस्थात्तृतीयां मातुलसुतां पितृतः पितृपक्षे तृतीयां पैतृष्वस्रेयीमित्यर्थः। एतेन कृष्णार्जुनादीनां मातुलकन्यापरिणयोऽपि युगान्तरीयत्वान्न विरुध्यते। आधुनिकानां तु तदाचारोऽनाचार एव।

# चमव्या. ४९

(२) कलौ इति शेषः 'कलौ उद्वहिष्यन्ति' इति। कलौ एवं प्रवर्तिष्यते, तत् विशिष्टैः परिहर्तव्यमित्युपदेशार्थं कलौ अधर्मप्रवृत्तिवर्णनं शास्त्रेष्ववगन्तव्यम्।

* आन. ५०२

**[१]कलौ कर्तैव लिप्यते।।**

**[२]संप्राप्ते तु कलौ काले विन्ध्याद्रेरुत्तरे स्थिताः।**
**ब्राह्मणा यज्ञरहिता ज्योतिःशास्त्रपराङ्मुखाः।।**

## देवलः

संन्यासाग्निहोत्रयोः
कलिकालावधिः

**+[३]यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते।**
**संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे।।**

## प्रजापतिः

कलौ मद्यमांस-
वर्जनम्

**[४]मद्यमप्यानृतं (? प्यमृतं) श्राद्धे कलौ तत्तु विवर्जयेत्।**
**मांसान्यपि हि सर्वाणि युगधर्मक्रमाद्भवेत्।।**

---

* शेषं चमव्यावत्।

(१) **चमव्या.** ४९; **मुक्ता.** १२७; **सिन्धु.** १२९१; **सम.** ११०; **आन.** ५०२.

# मुक्ता., सिन्धु. चमव्यागतम्।

* शेषं चमव्यागतम्।

+ चमव्या-स्मृतिकौ-पुमव्याख्यानानि 'चत्वार्यब्द' इति व्यासवचनव्याख्याने, सिन्धुव्याख्यानं च 'अग्न्याधेयम्' इति व्यासवचनव्याख्याने द्रष्टव्यम्।

(१) **सिन्धु.** १३०३; **कृभ.** १३०४ (लिप्यते०).

(२) **संग.** ११.

(३) **चमव्या.** ५५; **सिन्धु.** १३१२; **सम.** ११०; **विपा.** ५।४९२ तावत्कुर्यात् (अस्ति तावत्); **स्मृतिकौ.** ४८०; **पुम.** ४६९.

(४) **प्रस्मृ.** १५१.

## पराशरः

सर्वधर्माणां कृते भावः कलावभावश्च, युगक्रमेण तपआदिरूपा मन्वादिप्रोक्ताश्च धर्मभेदाः

**[1]सर्वे धर्माः कृते जाताः सर्वे नष्टाः कलौ युगे।।**

(१) सर्वशब्दः देशकालावस्थादिभेदेन धर्माणां बहुविधत्वमाचष्टे। एतच्च महाभारते आनुशासनिके पर्वणि उमामहेश्वरसंवादे प्रपञ्चितम् – 'धर्मा बहुविधा लोके श्रुतिभेदमुखोद्भवाः। देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च।। जातिधर्मा वयोधर्मा गुणधर्माश्च शोभने। शरीरकालधर्माश्च आपद्धर्मास्तथैव च। एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः।।' इति। ते च सर्वे धर्माः प्राणिभिः कृतयुगे यथावदनुष्ठिता भवन्ति, युगसामर्थ्येन धर्मस्य चतुष्पदोऽपि अपरिक्षयात्। त्रेतादिषु क्रमेण क्षीयमाणा धर्माः कलियुगावसाने सर्वात्मना विनष्टा भवन्ति। तदेतत्सर्वं पुराणसारे विस्तरेण प्रदर्शितम्। पमा.

(२) कृते सत्ययुगे युगसामर्थ्येनाक्षीणप्रभावाणां पुरुषाणामसंदिग्धाविपर्यस्तप्रमाणप्रमेया यथावदनुष्ठेयाश्च जाताः, ते त्रेतादिषु पादहानिक्रमेण क्षीयमाणाः कलौ युगे यथोत्तरं सर्वात्मना विनष्टाः, तादृशप्रमातृप्रमाणाद्यभावात्।

विम.

**[2]अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे।**
**अन्ये कलियुगे नृणां युगरूपानुसारतः।।**

(१) अत्र अन्यशब्दो न धर्मस्य स्वरूपान्यत्वमाचष्टे, किंतु प्रकारान्यत्वम्, अन्यथा धर्मप्रमाणचोदनानामपि युगभेदेन भेदापत्तेः। न हि इयं चोदना कृतेऽध्येतव्या, इयं तु त्रेतायाम् इत्यादि व्यवस्थापकं किंचिदस्ति। प्रकारान्यत्वे त्वस्ति दृष्टान्तः, एकस्याप्यग्निहोत्रस्य सायंप्रातःकालभेदेन अनुष्ठानप्रकारभेदश्रवणात् – "ऋतं त्वा सत्येन परिषिञ्चामि' इति सायं परिषिञ्चति, 'सत्यं त्वर्तेन परिषिञ्चामि' इति प्रातः" (तैब्रा. २।१।११।१) इति। ननु तत्रार्थवादेन मन्त्रः प्रकारभेदेन उपपादितः – 'अग्निर्वा ऋतम्, असावादित्यः सत्यम्, अग्निमेव तदादित्येन सायं परिषिञ्चति, अग्निनाऽऽदित्यं प्रातः सह(? सः)' (तैब्रा. २।१।११।१) इति। एवं तर्हि अत्रापि 'युगरूपानुसारतः' इत्यनेन प्रकारभेद उपपद्यते। युगानां स्वरूपमनुष्ठातृपुरुषशक्तितारतम्योपेतम्, तदनुसारेणानुष्ठानवैषम्यं संभवति, 'यथा शक्नुयात् तथा कुर्यात्' इति नित्यकर्मसु निर्णीतत्वात्। * पमा.

(२) कृतयुगे सत्ययुगे धर्माः वक्ष्यमाणास्तपःप्रभृतयः अन्ये भिन्नस्वरूपाः, भिन्नचोदनाचोदितत्वात्, धर्मस्वरूपभेदे च शब्दान्तरादेरेव प्रयोजकत्वात्। तथैव त्रेतायां द्वापरे युगे कलियुगे चान्ये। तत्र हेतुमाह – नृणां युगरूपानुसारत इति। युगस्य कृतादेः रूपं स्वरूपं चतुःसहस्रवर्षपरिमितत्वं चतुश्चरणधर्माधिष्ठितत्वादि च, तदनुसारतः तदनुसरणेन। अयमभिसंधिः – चतुःसहस्रवर्षपरिमिते सत्ययुगे मनुष्याणां चतुर्वर्षशतान्यायुर्भवति, (इतरे युगे?) त्रेतायुगादिषु एकैकसहस्रन्यूनेष्वेकैकशतन्यूनमायुर्भवति। तथा कृतयुगे धर्मप्राबल्यादारोग्यादिसामर्थ्यमधिकम्, इतरेषु त्वधर्माभिभवात्सामर्थ्यन्यूनतेति। एवं च सति सर्वधर्मेषु सर्वयुगसाधारण्येन समानमधिकारं कथं मनुष्याणां चोदना ब्रूयात्? सामर्थ्यरूपाधिकारिविशेषणतारतम्यात्। सिद्धं चैतत्तृतीयेऽधिकरणे, यथाविनियोगमधिकारसमर्थनात्।

यत्तु 'अत्रान्यशब्दो न धर्मस्वरूपान्यत्वपरः, अपि तु प्रकारान्यत्वपरः अन्यथा धर्मप्रमाणचोदनानामपि प्रतियुगं भेदापत्तेः। न हीयं चोदना कृतेऽध्येतव्या, इयं त्रेतायामिति व्यवस्थापकं किंचिदस्ति' इति, तच्चिन्त्यम्, मनुगौतमशङ्खलिखितपराशरवचनानुमितचोदनानां स्वरूपभेदभिन्नानां 'कृते तु मानवाः' इत्यादिवाक्येन प्रतियुगं व्यवस्थायाः प्रत्यक्षसिद्धत्वात्। यश्चात्र प्रकारान्यत्वे दृष्टान्तः – "एकस्याप्यग्निहोत्रस्य सायंप्रातः कालभेदेन 'ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति, सत्यं त्वर्तेन परिषिञ्चामीति प्रातः" इत्यनुष्ठानप्रकारभेददर्शनम्, सोऽपि विषमः। न एको धर्मः तपःप्रभृतिभिः प्रकारैर्भिद्यत इति शक्यं वक्तुम्, शब्दान्तरन्यायेन यागदानहोमवत्तस्य भिन्नस्वरूपत्वात्, अग्निहोत्रे तु भेदकप्रमाणाभावेन विधिनैवैकत्वावगमात्। प्रकारे भेदचोदनानामपि युगभेदेन भेदापत्तिश्च तुल्यैवेत्यास्तां तावत्। तस्माद्धर्मस्वरूपभेद एव वाक्यार्थ इति। विम.

(१) **पस्मृ.** १।१७.

(२) **पस्मृ.** १।२२; **पप्र.** ४७ रे युगे (रे परे); **सस्मृ.** १-२ रे युगे (रे तथा) गरूपा (गानाम).

* पप्र. पमावत्।

**'तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते।**
**द्वापरे यज्ञमेवाऽऽहुर्दानमेव कलौ युगे।।**

(१) अथ प्रतिज्ञातं वैलक्षण्यं षड्भिः श्लोकैरुपन्यस्यति। तत्र चतुर्षु युगेषु प्राधान्येनानुष्ठातुं सुकरान् परमपुरुषार्थहेतून् धर्मान् विभजते – तप इति। तपः कृच्छ्रचान्द्रायणादिरूपेण अशनवर्जनम्, 'तपो नानशनात्परम्' इति श्रुतेः। यद्यपि दानस्यापि तपस्त्वं श्रूयते – 'एतत्खलु वाव तप इत्याहुर्यः स्वं ददाति' इति, तथापि नात्र तद्विवक्षितम्, दानस्य पृथगुक्तत्वात्। ननु व्यासेन तपोऽन्यथा स्मर्यते – 'तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम्।' इति। नायं दोषः, कृच्छ्रादेरपि स्वधर्मविशेषत्वात्। 'तप संतापे' इत्यस्माद्धातोरुत्पन्नस्य तपःशब्दस्य देहशोषणे वृत्तिर्मुख्या। अत एव स्कान्देऽभिहितम् – 'वेदोक्तेन प्रकारेण तथा चान्द्रायणादिभिः। शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः।।' इति। यत्तु तत्रैवोक्तम् – 'कोऽसौ मोक्षः कथं केन संसारं प्रतिपन्नवान्। इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः।।' इति, सोऽन्य एव तपःशब्दः, 'तप आलोचने' इत्यस्माद्धातोस्तदुत्पत्तेः। तत्तपोऽत्र ज्ञानशब्देन संगृहीतम्। परशब्दः प्राधान्येनानुष्ठेयतामाह। तर्हि त्रेतादिषु तपो नाऽऽद्रियेत, कृते च ज्ञानयज्ञदानादि नाऽऽद्रियेरन्, इति चेन्न, इतरव्यावृत्तिरूपायाः परिसंख्याया अत्राविवक्षितत्वात्। न खलु इदानीं कश्चिदनुष्ठानविधिः वक्तुमुपक्रान्तः येन विधिविशेषः शङ्क्येत। भविष्यति तु 'षट्कर्माभिरतः' (पस्मृ. १।३८) इत्यादिना तदुपक्रमः। युगसामर्थ्यं केवलमत्र निरूप्यते। यथा वसन्ते पुष्पप्राचुर्यम्, ग्रीष्मे संतापबाहुल्यम् इत्यादि ऋतुसामर्थ्यं तथा कृतादिसामर्थ्येन तपआदिप्राचुर्यं विवक्षितम्। अत एव 'युगे युगे तु सामर्थ्यम्' इति वक्ष्यति। सामर्थ्यज्ञानप्रयोजनं चाभिधास्यते – 'तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः।' इति। एतत्सामर्थ्यं बृहस्पतिरपि दर्शयति – 'तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम्। द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया दमः।।' इति।

\# पमा.

\# पप्र. पमागतम्।

(१) **पस्मृ.** १।२३; **पमा.** १।११६ निर्देशमात्रम्; **पप्र.** ४८ मेव (मेकं) मनुपराशरौ; **कृभ.** १३१३ मेवाऽऽ (मित्या).

(२) प्रतिज्ञातं धर्मस्वरूपभेदमुदाहरति – तप इति। 'तप संतापे' इत्यस्माद्धातोर्निष्पन्नेन तपःशब्देन मुख्यवृत्त्या कृच्छ्रचान्द्रायणादिभिर्देहशोषणमेवोच्यते। तदुक्तं स्कान्दे– 'वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः। शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः।।' इति। यद्यपि 'कोऽहं मोक्षः कथं केन संसारं प्रतिपन्नवान्। इत्यभिध्यानमर्थज्ञास्तपः शंसन्ति पण्डिताः।।', 'तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम्', 'एतत्खलु वा वै तप इत्याहुर्यः स्वं ददाति' इत्यादिस्कान्दव्यासश्रुतिवाक्यैर्ज्ञानयज्ञदानानामपि तपस्त्वं गम्यते तथाप्यत्र ब्राह्मणपरिव्राजकन्यायेन तदितरविषयस्तपः-शब्द इति। परम् अत्यायाससाध्यं कठिनमित्यभिलषितफलसाधनं कृतयुगे सत्ययुगे। तथा त्रेतायुगे ज्ञानं बाह्येन्द्रियवृत्तिनिरोधेनाऽऽत्मदर्शनं परमुच्यते।

यद्यपि धर्मभेदनिरूपणप्रस्तावे ज्ञानोपन्यासो न युक्तस्तथापि 'अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्' (यास्मृ. १।८) इति योगिवाक्येनाऽऽत्मज्ञानस्यापि परमधर्मत्वप्रतिपादनान्न विरोधः। द्वापरे यज्ञमेव ज्योतिष्टोमादिकं परमाहुः। कलौ युगे दानमेव देशे काले उपायेन श्रद्धया द्रव्यस्य पात्रे प्रतिपादनमेव परमाहुः। तदाह मनुः – 'तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते। द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे।।' (मस्मृ. १।८६) इति। परत्वं चाल्पस्य कृतयुगीयदानफलसाधकत्वेन। तदाह बृहत्पराशरः – 'शते तु या कृते दत्ते फलाप्तिः पुरुषस्य सा। दत्तैस्तु दशभिर्नॄणां फलाप्तिः स्यात्कलौ युगे।।' इति। नेयं परिसंख्या, तेन शास्त्रान्तरेण प्राप्तानामपि धर्माणामसाधारणत्वमविरुद्धम्। यथोक्तं वासिष्ठलैङ्गयोः – 'कृते ध्यानं तपश्चैव कर्तुं शक्यमयत्नतः। ज्ञानयोगौ मुनेः शक्यौ त्रेतायामप्रमादतः।। द्वापरे शक्यते कर्तुं यागोऽक्लेशेन सुव्रत। दानमेव कलौ शक्यं कर्तुं सर्वजनैः सदा।।' इति। वायवीयेऽपि – 'इज्या दानं तपः सत्यं त्रेतायां धर्म उच्यते' इति। बृहस्पतिनाऽप्युक्तम् – 'तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्थिते। द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया दमः।।' इत्यादि।

विम.

**¹कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः।**
**द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः।।**

(१) धर्मान् विभज्य तद्वत् प्रमाणानि विभज्यन्ते – कृत इति। मानवादिग्रन्थोक्तधर्माणां प्रचुरप्रवृत्त्या ग्रन्थप्रामाण्यप्राचुर्यमर्थसिद्धम्। पमा.

(२) एवं प्रतियुगं धर्मव्यवस्थामभिधाय तत्प्रमाणव्यवस्थामाह – कृत इति। कृते सत्ययुगे मानवाः मनुप्रोक्ता धर्माः। 'तेन प्रोक्तम्' (पासू. ४।३।१०१) इत्यण्। एवं गौतमाः गौतमप्रोक्ताः त्रेतायाम्। द्वापरे शङ्खलिखिताः शङ्खलिखिताभ्यां संभूय प्रोक्ताः। छान्दसो वृद्ध्यभावः। कलौ पाराशराः पराशरप्रोक्ताः। स्मृतशब्दस्य द्विर्वचनं प्रत्येकं वाक्यचतुष्टयेऽपि 'उपरि हि देवेभ्यो धारयति' इत्यत्रै(? त्रे)व हेतुमन्निगदेन हिशब्देन समानार्थतया प्रसिद्धवदनुवादेन विधित्वं कल्पयितुम्। तेन कलौ पाराशरधर्माः कर्तव्या इत्यर्थः सिध्यति। ततश्चानुवादमात्रमेतदिति निरस्तम्। किंतु कृतादिषु मानवादिधर्मा व्यवस्थाप्यन्ते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्' इतिवत्। अत एव बृहत्पराशरेण मन्वादिधर्माणां कलावशक्यानुष्ठानत्वमुक्तम्। 'युगेषु त्रिषु ये प्रोक्ता धर्मा मन्वादिकैर्मुने। शक्यन्ते नैव ते कर्तुं वर्णैराश्रमवासिभिः।। मन्वर्थश्च स धर्माणां कृतादित्रियुगेष्वभूत्। धर्मं तु त्रियुगाचारं न शक्यं तु कलौ युगे।। मनुर्यां याज्ञवल्क्यश्च वसिष्ठः प्राह निष्कृतिम्। सा कृतादिषु वर्णानां सति धर्मे चतुष्पदे।।' इति। ब्राह्मेऽपि – 'यद्युगान्तर्युगो धर्मो नाऽऽदर्तव्यः कलौ युगे। पापप्रसक्तास्तु यतः कलौ नार्यो नरास्तथा।।' इत्यनादरणीयत्वमुक्तम्। न चैषां विषयभेदेन व्यवस्था साधीया, नैयायिक्यास्तस्या वाचनिकव्यवस्थातो जघन्यत्वात्। सामान्यानामेषां विशेषपरतासंकोचस्तु न समाधेय एव। किंच, प्रतिपुरुषमनेकविषयस्फूर्तिसंभवेन तत्तत्परतया व्यवस्थाकल्पनायामव्यवस्थितः शास्त्रार्थः स्यादित्यलं पल्लवितेन। नन्वेवं कलौ मानवादिधर्मा नानुष्ठेयाः स्युः, अनुष्ठेयत्वेऽपि वा मन्वादिवाक्यैः पराशरवाक्यानामुपसंहारो न स्यात्। मैवम्, समाने विषये मन्वादिवाक्यैः पराशरस्य विरोधे व्यवस्थापकत्वात्। अन्यथैतद्वाक्यानर्थक्यं सकलस्मृत्यन्तरवैयर्थ्यं वा स्यात्। उपसंहारस्तु प्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य ज्यायस्त्वेन स्यादेव। ततश्च ये धर्माः पराशरानुक्ता अपि मन्वाद्युक्ताः, ये वा तुल्यरूपाः सामान्यविशेषरूपा वा, तेषामविरुद्धत्वेनोपसंहारेण चानुष्ठेयता सिध्यत्येव कलावपीति सर्वमनवद्यम्। तदाह बृहत्पराशरः – 'कृते तु मानवा धर्मास्त्रेतायां गौतमस्य च। द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः।।' इति। विम.

(३) अत्र 'अन्ये कृतयुगे धर्माः' इत्यनेन तत्तद्युगीयपुरुषसामर्थ्यानुरूपानुष्ठानका विभिन्ना एव धर्मा इत्युक्तम्। तेषु च कलियुगपुरुषीयसामर्थ्यानुरूपानुष्ठानधर्मकाणां (? ष्ठानकधर्माणां) प्राचुर्येण मन्वादिस्मृत्यप्रतिपाद्यत्वं 'कृते तु मानवा धर्माः' इत्यादिना सूचयन् तद्धर्मजिज्ञासूनां स्वधर्मगोचरप्रवृत्त्यर्थं 'कलौ पाराशराः स्मृताः' इत्यनेन स्वग्रन्थस्य प्राचुर्येण तद्धर्मप्रतिपादकत्वरूपमुत्कर्षं ज्ञापयति, न तु मन्वादिस्मृतीनां परस्परविरोधे युगभेदेन बलवत्त्वम्, स्मृत्यन्तरविरोधे श्रौतस्य मनुस्मृतिबलीयस्त्वस्य स्मृत्यन्तराणां च परस्परविरोधे विकल्पस्याबाधेनैवोपपत्तौ बाधकल्पनाया अन्याय्यत्वात्। पप्र. ४९

### कृतादिषु क्रमेण पतितसंबन्धीनि त्याज्यस्थानानि पातित्यनिमित्तानि च

**¹त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्।**
**द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे।।**

---

(१) **पस्मृ.** १।२४; **स्मृच.** १।२७ वा धर्मा (वो धर्म) माः स्मृताः (मस्य तु) खिताः (खितौ) राः स्मृताः (रः स्मृतः); **पमा.** १।६० (कलौ पाराशरस्मृतिः) एतावदेव : २।५३५ चतुर्थचरणमात्रम्; **आर.** १२ खिताः (खितौ); राः स्मृताः (रस्मृतिः) बृहस्पतिस्मृतिः; **मुक्ता.** ११ खिताः (खितौ); **संम.** ८० (कलौ पाराशरी स्मृतिः) एतावदेव (=); **सम.** १०८; **पप्र.** ४९; **स्मृतिको.** ४६९ (कृते तु मानवो धर्मस्त्रेतायां गौतमस्य च। द्वापरे शाङ्खलिखितः कलौ पाराशरः स्मृतः।।) : ४७३ शास्त्रम्; **भाच.** १।८५ (=); **पुम.** ४६७ वा धर्मा (वो धर्म) माः स्मृताः (मः स्मृतः) खिताः (खितः) राः स्मृताः (रः स्मृतः); **कृभ.** १३०५, १३०६, १३१२.

(१) **पस्मृ.** १।२५; **स्मृच.** १।२७; **उत.** ११३; **मुक्ता.** ११; **सम.** १०७; **पप्र.** ४९; **स्मृतिको.** ४७२ शातातपः; **पुम.** ४६७; **कृभ.** १३०४ : १३०५ निर्देशमात्रम्.

(१) धर्मवदधर्मस्यापि वक्तुमिष्टत्वात् अधर्मप्रापकं स्थानविशेषं हेयतया विभज्यते – त्यजेदिति। पतितः प्राधान्येन यस्मिन् एकेन राज्ञा परिपाल्यमाने ग्रामसमूहात्मनि देशे निवसेत् स देशः सर्वोऽपि कृते सामर्थ्यात् अधर्मापादकः। एवं ग्रामे योज्यम्। कुलत्यागो नाम पतितस्य कुले विवाहभोजनाद्यप्रवृत्तिः। कर्तृत्यागः संभाषणादिवर्जनम्।
पमा.

(२) प्रतियुगं धर्मतत्प्रमाणव्यवस्थावदधर्मजनकस्थानहानव्यवस्थामप्याह – त्यजेदिति। पतितपुरुषयुक्तं देशमेकराजाज्ञावशवर्तिग्रामसमूहं कृतयुगे त्यजेत् कृतयुगसामर्थ्यादधर्मसंक्रमभयेन। त्रेतायां तादृशमेव ग्रामं विप्रतद्भृत्यशूद्रवासम् अनेकजातीयनानावृत्त्युपजीविबहुजननिवासस्थानं नगरं वा 'विप्राश्च विप्रभृत्याश्च यत्र वै निवसन्ति ते। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च।। पण्यक्रयादिनिपुणैश्चातुर्वर्ण्यैस्तु यद्युतम्। अनेकजातिसंबद्धं नैकशिल्पिसमाकुलम्। सर्वदैवतसंबद्धं नगरं त्वभिधीयते।।' इति भृगुप्रोक्तलक्षणमुत्सृजेत्। द्वापरे पतितपुरुषयुक्तमेकं कुलं तत्सपिण्डवर्गं त्यजेत्।* कुलत्यागो नाम पतितकुलमर्यादित्यर्थः।

नन्वत्र कृतादिक्रमेण कर्तृकुलग्रामदेशत्यागा वक्तव्याः, धर्मप्राबल्येनाधर्मदौर्बल्यात्। तथाहि – यत्र चतुष्पात्सकलो धर्मः §तत्राधर्मस्यैकपात्त्वेन कर्तृमात्रनिष्ठतया सकलदेशाभिभावकत्वं न संभवतीति कर्तृमात्रत्याग उचितः, यत्र पुनरधर्मश्चतुष्पाद्धर्मश्चैकपात्तत्र धर्मस्य कर्तृमात्रनिष्ठतया अधर्मस्य सकलदेशव्यापकत्वसंभवाद्देशत्याग उचितः। एवं त्रेताद्वापरयोरपि। तत्कथमुच्यते? कृते देशत्यागः, कलौ कर्तृत्याग इत्यादि। उच्यते – नात्र धर्माधर्मयोः प्रबलदुर्बलभावो देशादित्यागे प्रयोजकः, किंतु शक्त्यशक्ती। तथाहि – कृते पतितपुरुषाक्रान्तदेशपरिहारे देशान्तरस्यातथाविधस्योपलब्धिः संभवतीति देशत्यागः शक्यते कर्तुम्, कलौ तु पतितप्रायपुरुषाक्रान्तत्वात्सकलदेशस्य त्यागोऽशक्य एवेति कर्तृमात्रत्यागो विधीयते। नन्वेकस्य पातित्ये देशादीनां त्यागः कथम्? तेषामकर्तृत्वेनासंसर्गित्वेन च पातित्यनिमित्ताभावात्, संसर्गे तु वाक्यान्तरेणैव वर्जनादिति चेत्, सत्यम्। देशादित्यागे संसर्गप्रकारेष्वपरिगणितस्यापि तद्देशवासादेरनेनैव वाक्येन तत्तद्युगेष्वसाधारण्येन संसर्गप्रकारत्वं बोध्यत इति कल्प्यते। अन्यथाऽदृष्टार्थता देशत्यागादीनां स्यात्। वक्ष्यति च – 'कृते संभाषणादेव' इत्यादि। तस्मात्सुष्ठूक्तं त्यजेद्देशमित्यादि। तदाह बृहत्पराशरः – 'त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्। द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे।।' इति। देशादित्यागे हेतुरुक्तः पाद्मे – 'देशाराम(? शग्राम)कुलानि स्युः पापभाञ्जि कृतादिषु। कलौ तु केवलं कर्ता भाजनं पुण्यपापयोः।।' इति। # विम.

**+ 'कृते संभाषणादेव त्रेतायां स्पर्शनेन च।**
**द्वापरे त्वन्नमादाय कलौ पतति कर्मणा।।**

---

* कृतपूर्वस्य कुलत्यागव्याख्यानस्य निराकाङ्क्षत्वात् कर्तृत्यागस्याव्याख्यास्यमानत्वाच्चाशुद्धैतद्ग्रन्थस्थाने 'कर्तृत्यागो नाम पतितकर्तृमात्रत्याग इत्यर्थः' इति शुद्धिः कल्प्यते।

§ अत्र कृतयुगे अधर्मैकपादसत्त्वम्, अग्रे च कलौ अधर्मस्य चतुष्पात्त्वमुक्तम्। अस्य पूर्वपक्षग्रन्थत्वेऽपि समाधानग्रन्थेऽस्य प्रतिवादाभावात् संप्रतिपन्नोऽयमर्थष्टीकाकारस्येत्यवगम्यते तत्र 'तत्र धर्मश्चतुष्पादस्त्वधर्मः पादविग्रहः,' 'यत्राधर्मश्चतुष्पादः स्याद्धर्मः पादविग्रहः' इत्यादीनि मत्स्यपुराणादिवचनानि प्रमाणम्। तच्च 'धर्मस्येवाधर्मस्यापि चतुष्पात्त्वस्य न्याय्यत्वेन कृते धर्मस्येव कलावधर्मस्यापि चतुष्पात्त्वं न्याय्यम्, अधर्मस्य चतुष्पात्त्वे तु तुल्यन्यायेन धर्मस्य त्रेतादिषु एकद्वित्रिपादक्षय इवाधर्मस्यापि विपरीतक्रमेण द्वापरत्रेताकृतेषु एकद्वित्रिपादक्षय न्याय्य एव' इतिन्यायानुगृहीतमपीति प्रतिभासते। तथापि पक्षेऽस्मिन् 'नाधर्मो विद्यते तत्र धर्म एव तु केवलः' इति महाभारतवचनस्य कृते अधर्मपादसत्त्वे विरोधः, 'त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति' इति महाभारतवचनस्य कलावधर्मस्य चतुष्पात्त्वे विरोधश्च प्रतीयते। तत्समाधानम् 'तत्र धर्मश्चतुष्पादो ह्यधर्मः पादविग्रहः' (हरिमु. ३।८।२) इति हरिवंशवचने नीलकण्ठ्यां द्रष्टव्यम्।

# पप्र. विमगतम्।

+ अस्य स्मृतिकौव्याख्यानं 'संसर्गदोषः' इति स्मृत्यर्थसारवचने द्रष्टव्यम्।

(१) **पस्मृ.** १।२६; **स्मृच.** १।२८ षणादेव त्रे (ष्य पतितस्त्रे) च (तु) त्वन्न (धन); **उत.** ११३ त्वन्न (त्वर्थ); **चमव्या.** ५३ (कलौ पतति कर्मणा) एतावदेव; **मुक्ता.** ११; **सम.** १०७ भाषणादेव (भाष्य पतति) च (तु) पतति कर्मणा (कर्तैव लिप्यते) (=), तत्रैव ऋषिनिर्देशशून्यः आदर्शवत् चतुर्थचरणश्च; **पप्र.** ४९ च

(१) त्याज्यदेशवत् निमित्तान्यपि त्याज्यानि विभजते – कृत इति। कृतादिष्विव कलौ पतितसंभाषणादिना न स्वयं पततिं, किंतु वधादिना कर्मणा पतितो भवति।

पमा.

(२) कर्मणा वधादिकर्मणेति माधवाचार्यः। वस्तुतस्तु 'कर्तारं तु' इत्यनेन कर्तृसंसर्गनिषेधात् कर्मणेति संभाषणस्पर्शनधनग्रहणेतरगुरुसंसर्गपरम्। अत एव स्कान्दे परदाराभिगामिनमुपक्रम्य 'एतैः सह समायोगं यः करोति दिने दिने। तुल्यतां याति विप्रेन्द्र कलौ संवत्सरे गते।।'।

उत. ११३

(३) प्रतियुगमधर्मजनकस्थानहानव्यवस्थावदधर्मजनकत्याज्यनिमित्तव्यवस्थामाह – कृत इति। कृते कृतयुगे पतितस्य संभाषणात्प्रीत्या परस्पराभिलापात्पतति। एवकारो व्यवस्थोपोद्बलनार्थः, न कर्मव्युदासार्थः, तस्य चतुर्ष्वपि युगेषु पातकत्वात्। त्रेतायां स्पर्शनेन परस्परमङ्गसंपर्केण। चकारोऽप्येवकारार्थे। द्वापरे तु अन्नमादाय पतितस्वामिकान्नभोजनेन। कलौ कर्मणैव निषिद्धेन ब्रह्महत्यादिना पतति द्विजातिकर्मानर्हो भवति। कृतादिषु संभाषणादिव्यवस्थापनस्य कलावपरिहार्यत्वमभिप्रेत्य परिहार्यं तु कथंचित्कर्मेति तावन्मात्रप्रतिषेधः। कर्मशब्दोपादानसामर्थ्यान्मानसवाचिकव्यापारयोः कलावपातकत्वं ध्वनितम्। तथा च भागवते – 'नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक्। कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत्।।' (भाग १।१८।७) इति। सारङ्गवत्सारग्राही राजा परिक्षित् कलिं न जघान, यतोऽस्मिन् कुशलानि पुण्यानि मनसा वचसा च कृतानि सिध्यन्ति, नेतराणि अकुशलानि अपुण्यानि, यतस्तानि कृतान्येव कायिकव्यापारविषयाण्येव सिध्यन्तीत्यर्थः। एतेन पूर्वोक्तेषु देशादित्यागेष्वप्येतानि निमित्तानि दर्शितानि। यथा कृते संभाषणमात्रात्पातित्यम्, तच्चैकदेशवासेऽवश्यंभावीति देशस्यैव त्यागः। त्रेतायां स्पर्शेन। स च एकग्रामवासेऽवश्यंभावीति ग्रामस्यैव त्यागः। द्वापरे त्वन्नभोजनेन। तच्चैककुलवासेऽवश्यंभावीति कुलस्यैव त्यागः। कलौ तु कर्मणैवेति कर्तृमात्रत्याग इति। तदाह बृहत्पराशरः – 'कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु। द्वापरे भक्षणेऽन्नस्य कलौ पतति कर्मणा।।' इति। एतेन 'शास्त्रफलं प्रयोक्तरि' इति न्यायेनाकर्तरि देशादौ पापसंभवो न संभवतीति चोद्यं निरस्तम्, संभाषणादीनां पापहेतूनां संभवात्। ननु चतुर्णामेव निमित्तानां युगचतुष्टये व्यवस्थापने 'संलापस्पर्शनिश्वाससहयानासनाशनात्। याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम्।।' इत्यादिवाक्यैर्निमित्तान्तरपरिगणनमनर्थकं स्यादिति चेत्, न तेषां संवत्सरान्ते पातित्यापादकत्वात्, मूलवचनोक्तानां तु कृतादिषु सद्यःपातित्यजनकत्वात्, सद्यःपातित्यहेतुकर्मसाहचर्यात्। तथा च संभाषणादिभिः कलौ न सद्यःपातित्यं कृतादिष्विव, किंतु कर्मणैव। संभाषणादिभिस्तु संवत्सरान्तेऽपि कलौ न पातित्यम्, किंतु पतिततुल्यतामात्रम्, 'भवेदूर्ध्वं तु तत्समः' इति वक्ष्यमाणत्वात्, 'एते महापातकिनस्तत्संसर्गी च पञ्चमः। एतैः सह समायोगं यः करोति दिने दिने। तुल्यतां याति सोऽप्याशु कलौ संवत्सरे गते।।' इति पाद्मवाक्याच्च। न चैतावतैव पातित्यं गम्यते, 'राजसमो मन्त्री' इतिवत्तत्साम्यबोधकत्वेऽपि तत्त्वानवबोधकत्वात्। अत एव 'संसर्गदोषः पापेषु' इति संसर्गदोषाभावः कलिवर्ज्यप्रकरणेऽभिहितः संगच्छते। न चैवं 'संसर्गमाचरन्विप्रः' इत्यादिना अग्रे प्रायश्चित्ताभिधानमसंगतमिति वाच्यम्, तस्य संसर्गोत्पन्नपापविषयत्वेन पातित्यविषयत्वाभावात्। दोषः पातित्यम्। 'भवेदूर्ध्वं तु तत्समः' इति साम्याभिधानेऽपि तत्प्रायश्चित्तानभिधानाच्च। तच्च तत्रैव यथासंभवं व्याख्यास्यते। न च कर्मणः सर्वत्रापि सद्यःपातकत्वेन कलाविति व्यर्थम्, अन्यत्र संभाषणादेस्तस्य च सद्यःपातकत्वम्, कलौ तु केवलस्यैवेत्यर्थात्। तस्मात्कलौ कर्मणैव सद्यःपातित्यम्, न संसर्गेण यौनादिनाऽपि।

न च 'यौनस्रौवमुख्यैः सद्यः पतति' (विस्मृ. ३५।५) इति विष्णुवाक्यविरोधः, तेषां कृतविषयमुखसंभवसंभाषणाध्यापनसाहचर्येण कृतादिविषयत्वात्। तथा हि – मुख्यस्य मुखसंभवाप्ताध्यापनस्य संभाषणत्वेन संभाषणेऽन्तर्भावः,

---

(तु); **स्मृतिकौ.** ४७१ संभाषणादेव (संभाष्य पतति) च (तु), ४७२ (कलौ कर्तैव लिप्यते) एतावदेव, शातातपः; **पुम.** ४६७ भाषणादेव (भाष्य पतति) च (तु); **कृभ.** १३०४ भाषणादेव (भाष्य पतति) च (तु) पतति कर्मणा (कर्तैव लिप्यते), तत्रैव आदर्शवत् चतुर्थचरणश्च : १३०५ चतुर्थचरणमात्रम्.

यौनस्य मैथुनस्य योनिलिङ्गस्पर्शत्वेन स्पर्शेऽन्तर्भावः, स्रौवस्य याजनस्य पुरोडाशादिभक्षणत्वेनान्नादनेऽन्तर्भाव इति सर्वं सुस्थम्। विम.

(४) अत्र कृतादौ युगत्रये ब्रह्मवधादिकर्मकर्तृसंभाषणमात्रादिभ्य एव पातित्यम्, कलौ तु ब्रह्मवधादिरूपेण ब्रह्मवधादिकर्तृयाजनयौनादिगुरुसंसर्गरूपेणैव(? पेण च) कर्मणा पातित्यम्, न तु कृतयुगादिष्विव ब्रह्मवधादिकर्मकारिसंभाषणमात्रादिभ्य इत्यर्थः। ननु 'संसर्गदोषः पापेषु' इति वक्ष्यमाणकलिवर्ज्याभिधायकवाक्येन कलौ संसर्गदोषस्य व्युदासात्कर्मणेत्यनेन कथं ब्रह्मवधादिकर्तृयाजनयौनादिगुरुसंसर्गोऽपि लभ्यत इति चेत्, सत्यम्, 'संसर्गदोषः पापेषु' इति वाक्यस्य 'कृते संभाषणादेव' इत्यनेन 'त्यजेद्देशं कृतयुगे' इत्यनेन च पराशरवाक्येनैकवाक्यतया संभाषणमात्रादिरूपसंसर्गदोषस्यैकदेशवासादिरूपसंसर्गस्य च दोषत्वाभावलाभात्प्रकृतवाक्ये कर्मणेत्यनेनास्मदभिमतसंसर्गस्यापि लाभे बाधकाभावात्, तयोर्वाक्ययोरेकवाक्यत्वाभावे च विधिद्वयकल्पनागौरवप्रसङ्गात्। अपि च 'संसर्गदोषः पापेषु' इति वाक्यस्य यथाश्रुतार्थकत्वे पातकिनमुपक्रम्य 'एतैः सह समायोगं यः करोति दिने दिने। तुल्यतां याति विप्रेन्द्र कलौ संवत्सरे गते।।' इति स्कन्दपुराणवाक्यं 'कर्तारं तु कलौ त्यजेत्' इति पराशरवाक्यं च कलौ कर्तृसंसर्गस्य दोषत्वाभिधायकं विरुध्येत। पप्र. ४९-५०

कृतादिषु शापपरिपाककालभेदाः
गुरुलघुरूपा दानपद्धति-
भेदाश्च

**'कृते तात्क्षणिकः शापस्त्रेतायां दशभिर्दिनैः।**
**द्वापरे चैकमासेन कलौ संवत्सरेण तु।।**

(१) महापुरुषतिरस्कारादौ तदीयशापपरिपाकहेतुं कालं विभजते – कृत इति। पमा.

(२) इदानीम् अवज्ञातमहापुरुषादिशापपरिपाकहेतुकालव्यवस्थामाह – कृत इति। कृतयुगे तात्क्षणिकः, स एव क्षणः तत्क्षणम्(? णः), तत्क्षणे भवस्तात्क्षणिकः शापः शापपरिपाकः अनिष्टाशंसनम्, त्रेतायां दशभिः दिनैः अहोरात्रैः, द्वापरे तु एकेन मासेन त्रिंशद्दिनसमूहेन, कलौ संवत्सरेण द्वादशमाससमूहेन भवतीति। अयमर्थः – कृते धर्मस्य प्राबल्येन शप्तुः परानिष्टविषयिणी वाक्सिद्धिस्तत्कालमेव भवति, कलौ तु धर्मदौर्बल्यात्संवत्सरेणेति। एवं त्रेताद्वापरयोरपि योज्यम्। तदाह बृहत्पराशरः – 'कृते तात्क्षणिकः शापस्त्रेतायां दशभिर्दिनैः। मासेन द्वापरे ज्ञेयः कलौ संवत्सरेण तु।।' इति। शाप इत्याशीर्वादस्याप्युपलक्षणम्, न्यायसाम्यात्। ननु 'यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन च। द्वापरे यच्च मासेन अहोरात्रेण तत्कलौ।। तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः। प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम्।।' इत्यादिवैष्णवादिवाक्यैः कलौ धर्मस्याऽऽशुफलत्वप्रतिपादनात् कथमुच्यते संवत्सरेण शापपरिपाकः इति?। सत्यम्। कृतादिषु विलम्बेन फलजनकत्वमधर्मानभिभवात्। कलौ त्वविलम्बेन धर्मोत्पत्तावपि विलम्बेन फलत्वाभिधानात्। तदेतत्तत्रैवोक्तम् – 'धर्मसंसाधने क्लेशो द्विजातीनां कृतादिषु। अल्पेनैव प्रयत्नेन धर्मः सिध्यति वै कलौ।। धर्मोत्कर्षमतीवाऽऽशु प्राप्नोति पुरुषः कलौ। स्वल्पायासेन धर्मज्ञास्तेन तुष्टोऽस्म्यहं कलेः।।' इति। यद्वा विवादे सत्यासत्यनिर्णायकशपथपरिपाककालव्यवस्थामाह। शापः शपनं शपथ इति यावत्, 'शपनं शपथः पुमान्' इति कोशात्। स च विवादे सत्यासत्यनिर्णयाय देवतादिस्पर्शनम्। तत् कृते तत्क्षणमेव निर्णायकम्, त्रेतायां दशभिर्दिनैः, द्वापरे मासमात्रेण, कलौ संवत्सरेण, 'कलौ द्वादशभिर्मासैः शपथः परिपच्यते' इति वायुपुराणात्। यत्तु कोशपानस्य शपथत्वेऽपि चतुर्दशभिर्दिनैर्निर्णायकत्वम् 'अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम्। व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः।।' (यास्मृ. २।११३) इति योगीश्वरादिभिरुक्तम्, तत्कृतादिषु कोशपानमात्रविषयम्, न शपथान्तरविषयम्। कोशपानं तु भक्तस्यैव, तस्याभिधानात्। याज्ञवल्क्यादिस्मृतेर्युगान्तरविषयत्वाच्च। उक्तं च – 'कृते तु मानवा धर्माः' इति। 'मनुर्यां याज्ञवल्क्यश्च वसिष्ठः प्राह निष्कृतिम्। सा कृतादिषु वर्णानां सति धर्मे चतुष्पदे।।' इति बृहत्पाराशरीयाच्च।

विम.

---

(१) **पस्मृ.** १।२७; **मुक्ता.** ११ तात्क्षणिकः (तत्क्षणतः) चैक (त्वेक).

**[१]अभिगम्य कृते दानं त्रेतास्वाहूय दीयते।**
**द्वापरे याचमानाय सेवया दीयते कलौ।।**

(१) धर्मस्य तारतम्यापादकानि निमित्तानि विभजते - अभिगम्येति। यत्र प्रतिग्रहीता वर्तते तत्र दाता स्वयं गत्वा गुरुमिव तमभिगम्य कृते दानं करोति। त्रेतायां प्रतिग्रहीतारमाहूय तस्मै दीयते। त्रेतासु इति बहुवचनं कृतद्वापरादिषु जातावेकचनमिति प्रदर्शनार्थम्। द्वापरे स्वयमागत्य याचमानाय प्रतिग्रहीत्रे दीयते। कलौ न याच्ञामात्रेण, किंतु सेवया। बृहस्पतिरपि अमुं विभागमाह - 'कृते प्रदीयते गत्वा त्रेतास्वानीयते गृहे। द्वापरे च प्रार्थयतः कलावनुगमान्विते।।' इति। पमा.

(२) 'दानमेव कलौ परम्' इत्युक्तम्, तत्र गुणतारतम्येन फलतारतम्यं वक्तुं तदेव तावद्विभजते – अभिगम्येति। कृते अभिगम्य प्रतिग्रहीतृसकाशं गत्वा दानं क्रियते। त्रेतासु। बहुवचनं पाशबहुत्ववत्, कृतद्वापरादिषु वा जातावेकवचनम्। प्रतिग्रहीतारमाहूय तस्मै दीयते। द्वापरे स्वयमेवाऽऽगत्य 'मह्यमिदं देहि' इति याचमानाय प्रतिग्रहीत्रे दीयते। कलौ सेवया तदाज्ञाकरणेन दीयते। अत्र वर्तमानापदेशाद्युगप्रभावकथनमात्रं मतम्, न तु दानगुणव्यवस्थापनम्। अन्यथा सेवादानस्यातिनिष्फलतोपसंहाराद्विधिविरोधः स्यात्। तदाह बृहस्पतिः – 'कृते प्रदीयते गत्वा त्रेतास्वानीयते गृहे। द्वापरे च प्रार्थयतः कलावनुगमान्विते।।'। बृहत्पराशरोऽपि – 'अभिगम्य कृते दानं त्रेतास्वाहूय दीयते। द्वापरे याचमाने तु कलौ सेवाय दीयते।।'।
विम.

**[२]अभिगम्योत्तमं दानमाहूयैव तु मध्यमम्।**
**अधमं याचमानाय सेवादानं तु निष्फलम्।।**

(१) निमित्तकृतं तारतम्यं दर्शयति – अभिगम्योत्तममिति। उत्तमत्वाद्यवान्तरविशेषः पुराणसारे फलद्वारेणोपपादितः – 'गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम्। सहस्रगुणमाहूय याचितं तु तदर्धकम्।। अभिगम्य तु यद्दानं यद्वा दानमयाचितम्। विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते।।' इति। पमा.

(२) अभिगम्य यद्दानं तदुत्तमम् अनन्तफलम्। आहूय यद्दानं तन्मध्यमं सहस्रगुणफलम्। याचमानाय यद्दानं तदधमं पञ्चशतगुणफलम्। सेवादानं तु निष्फलं फलाजनकमिति। यद्यपि 'याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः' (यास्मृ. १।२०३) इति योगिवाक्येन याचितेऽपि दानमुक्तम्, तथापि याचितेन श्रद्धापगमे सति यद्दानं तदधममिति द्रष्टव्यम्, 'श्रद्धापूतम्' इति वचनात्। यद्यपि सेवादानं न सर्वात्मना निष्फलम्, तस्य तामसत्वेन तिर्यग्योन्युपभोग्यत्वात्, तथापि ऐहिकामुष्मिकफलहेतुत्वाभावान्निष्फलमिति। तदुक्तं गीतासु – 'अदेशकालं यद्दानमपात्रेभ्यश्च दीयते। असत्कृतमवज्ञातं तत्तामसमुदाहृतम्।।' (भगी. १७।२२), विष्णुधर्मोत्तरे – 'तामसानां फलं भुङ्क्ते तिर्यक्त्वे मानवः सदा' इति। स्कान्देऽपि वृथादानान्युपक्रम्य 'परिचारकाय भृत्याय सर्वस्य पिशुनाय च। इत्येतानि च राजेन्द्र वृथा दानानि षोडश।।' इति। अभिगम्य दानस्योत्तमत्वाभिधानं सेवादानस्य निष्फलत्वाभिधानं चानुष्ठेयत्वाननुष्ठेयत्वप्रतिपादनाय।
विम.

कलिसामर्थ्यप्रयुक्तवृत्तान्तवर्णनम्,
कृतादिषु प्राणस्थान-
भेदाः

**[१]जितो धर्मो ह्यधर्मेण सत्यं चैवानृतेन च।**
**जिताश्चोरैश्च राजानः स्त्रीभिश्च पुरुषाः कलौ।।**
**[२]सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति।**
**कुमार्यश्च प्रसूयन्ते अस्मिन्कलियुगे सदा।।**

(१) कलिधर्माणामस्मिन्ग्रन्थे प्राधान्येन वक्ष्यमाणत्वात् कलिसामर्थ्यं विशेषतः प्रपञ्चयति – जित इति। अधर्मस्य जयो नाम पादत्रयोपेतत्वम्। एकेन पादेन वर्तमानत्वं धर्मस्य पराजयः। तदाह बृहस्पतिः – 'तिष्येऽधर्मस्त्रिभिः पादैर्धर्मः पादेन संस्थितः' इति। सत्यानृतयोर्धर्माधर्मरूपत्वेऽपि

---

(१) **पस्मृ.** १।२८; **समु.** २६ स्वाहूय (यां याति) नाय (नस्तु); **मुक्ता.** ११; **बाल.** १।२०३ पृ. ४६६ तास्वा (ते चाऽऽ) नाय (नं तु) चतुर्थचरणे (सेवादानं कलौ युगे) स्मृत्यन्तरम्.

(२) **पस्मृ.** १।२; **समु.** २६ अधमं (कनिष्ठं); **मुक्ता.** ११.

(१) **पस्मृ.** १।३०; **पमा.** १।११९ निर्देशमात्रम्; **मुक्ता.** ११ श्चोरैश्च (श्चौरैस्तु); **आन.** १६.

(२) **पस्मृ.** १।३१; **मुक्ता.** १२ अस्मिन् (तस्मिन्); **आन.** १६-१७ मुक्तावत्.

पृथगुपादानं धर्माधर्मावुदाहृत्य प्रदर्शनार्थम्। यावद्यावत् कलिर्विवर्धते तावत्तावदधर्मो विवर्धत इति विवक्षया चोराद्युदाहरणबाहुल्यम्। तदुक्तं विष्णुपुराणे – 'यदा यदा सतां हानिर्वेदमार्गानुसारिणाम्। तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः।। न प्रीतिर्वेदवादेषु पाषण्डेषु दयारसः। तदा तदा कलेर्वृद्धिरनुमेया द्विजोत्तमैः।।' इति। पमा.

(२) कृतादिषु धर्मभेदे नृणां युगरूपानुसरणं हेतुरुक्तः, तत्र प्रस्तुतत्वात् कलिस्वरूपं विशेषतः प्रपञ्चयति – जित इति। धर्मः विध्यर्थः संध्यास्नानादिः अधर्मेण तत्कालनिषिद्धेन निद्रालस्यादिना जितः अभिभूतः। सत्यं साक्षिसभ्यादिवाक्येषु अनृतेन मिथ्यावचनेन तिरस्कृतम्। चोरैः परस्वापहारतत्परैः राजानोऽन्यायमार्गानुवर्तिनो जिताः तिरस्कृताः। स्त्रीभिः गृहिणीभिः गृहकार्यचर्चायां पुरुषाः पराभूताः। यद्वा स्त्रीभिः स्वपरसाधारणीभिः स्वविषये धैर्यप्रच्यावनेनाभिभूताः पुरुषाः। अत्र धर्मादीनामभिभव-कथनेन दुर्बलत्वमधर्मादीनां चाभिभावकत्वकथनेन प्रबलत्व-मुक्तम्। तदाह बृहस्पतिः – 'तिष्येऽधर्मस्त्रिभिः पादैर्धर्मः पादेन संस्थितः।' इति। बृहत्पराशरेऽपि – 'धर्मश्च सत्यमायुश्च तुर्यांशेन कलौ युगे। पुरुषाश्च जितास्त्रीभी राजानो दस्युभिर्जिताः। जितो धर्मश्च पापेन अनृतेन तथा ऋतम्।।' इति।

किंच – सीदन्तीति। अग्निहोत्रस्य नित्यत्वात्तदुत्सादो निन्दातिशयनिमित्तम्। ननु 'अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम्। देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्।।' इत्यनेन अग्निहोत्रस्य कलौ निषेधात् कथं तदभावो निन्दा-निमित्तम्? उच्यते – गोनराश्वमेधानामग्निहोत्रानन्तरभाविनां निषेधानुपपत्तिरेवाग्निहोत्रस्य कलौ गमिका, तदभावे तेषाम-प्राप्य(? प्त)त्वात्। तथा अग्निहोत्रहवणीलेहस्य लीढा-परिग्रहस्य सौत्रामण्यां सुराग्रहस्य सत्रदीक्षायां विप्राणां शामित्रसोमविक्रययोः निषेधश्च कलावग्निहोत्राभावे नोप-पद्येत। तस्मात् 'विशेषनिषेधः सामान्याभ्यनुज्ञानार्थः' इति न्यायादस्त्यग्निहोत्रं कलौ। न चेदं लिङ्गं निषेधश्रुतेर्न बाधकमिति वाच्यम्। तयोः कलिपूर्वापरभागविषयत्वेन विषयभेदकल्पनान्नानुपपत्तिः। तथाहि – द्विविधं तावदग्नि-होत्रम् – सर्वाधानेनार्धाधानेन च। तत्र सर्वाधानेन चतुश्चत्वारिंशच्छतवर्षपर्यन्तमेव कार्यम्, नोपरिष्टात्। तथाऽऽह व्यासः – 'चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च। कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः।। संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता।।' इति। अत्र त्रेतापरिग्रह इति वदन्सर्वाधानमेवाभिप्रेतवान्। अत एव लौगाक्षिः – 'अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योश्च पृथक्कृतिः। सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता।।' इति। युगस्य पूर्वं पूर्वयुगं कलिपूर्वभाग इति व्याख्येयम्, अन्यथा व्यासवाक्या-द्भिन्नमूलत्वापत्तेः। अर्धाधानं तु यावद्वर्णवेदविभागं कार्यम्। तदाह देवलः – 'यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते। संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे।।' इति। नन्विदमनुवादकम्, न व्यवस्थापकम्, वैदिककर्मणो वर्णवेदसाध्यत्वेन तदभावेऽर्थत एव तन्निवृत्तेः। मैवम्, तात्पर्यानवगमात्। तथाहि – वर्णानां विभागो नाम योनिवृत्तिधर्मलिङ्गसंकरानपगमाभ्यां यथावस्थितत्वम्, वेदप्रवृत्तिश्चानुष्ठीयमानपदार्थाभिप्रायकश्रुत्यनुसंधान-सामर्थ्यम्, तदुभयं यावत्तावदग्निहोत्राद्यनुष्ठेयम्, नोपरिष्टा-दित्यर्थः। यद्यग्निहोत्रं सामान्येनोपात्तं तथापि सर्वाधान-व्यवस्थापकाविरोधेनार्धाधानं विवक्षितमित्यलमतिप्रपञ्चेन। एतेन संन्यासेऽपि विवादः पराकृतः। अत एव – 'यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः' इत्यनेन यतेः सार्ववर्णिक-भिक्षाप्रतिषेधः कलिवर्ज्येषु संन्यासाश्रमे लिङ्गम्। व्यवस्थाद्वयं तु त्रिदण्डैकदण्डाभिप्रायेणेति ज्ञेयम्। अग्नि-होत्राणि इति बहुवचनादन्यान्यपि श्रौतस्मार्तकर्माणि सीदन्ति नश्यन्ति।

तथा च महाभारते – 'यज्ञे प्रतिनिधिः पार्थ दाने प्रतिनिधिस्तथा। व्रते प्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते।। निवृत्तयज्ञस्वाध्यायाः स्थालीपाकविवर्जिताः। ब्राह्मणाः सर्वभक्ष्याश्च भवन्तीह गते युगे।।'। गुरूणां पितृश्वश्र्वादीनां पूजा अलङ्घनीयता प्रणश्यति। तथा च मात्स्येऽपि – 'पितॄन् पुत्रा नियोत्स्यन्ति वध्वः श्वश्रूश्च कर्मणा। वाक्-शरैस्तर्जयिष्यन्ति गुरुं शिष्यास्तथैव च।।'। भारतेऽपि– 'न क्षंस्यति पिता पुत्रं पुत्रश्च पितरं तथा। भार्या च (? न) पतिशुश्रूषां करिष्यति कदाचन।।' इति। कुमार्यः कन्याः कुमाराश्च प्रसूयन्ते प्रजनयन्ति। तथा च भारते -

'पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते। सप्तवर्षाष्टवर्षाश्च प्रजनिष्यन्ति वै नराः।। सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप। दशद्वादशवर्षाणां पुंसां पुत्रा भवन्ति च।।' इति। अस्मिन् वर्तमाने कलियुगे सदा कल्पान्तरवर्तिनि च कलियुगेऽप्येषैव स्थितिः। तदुक्तं विष्णुपुराणे – 'यदा यदा सतां हानिर्वेदमार्गानुसारिणाम्। तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः।।'। भारतेऽपि – 'यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु।।' इति। यद्वेदमेवं व्याख्येयम् – 'सीदन्ति चाग्निहोत्राणि' इत्यत्र वर्तमानापदेशेन भाव्यव्यापारमात्रं प्रतीयते। तस्य च भावकव्यापारमृते अन्यथानुपपत्त्या भावकव्यापारः कल्प्यते 'अष्टाकपालो भवति' इत्यादिवत्। तथा च त्रैवर्णिकाः कलावग्निहोत्राणि सादयेयुरित्यर्थः सिध्यति। उक्तं च 'अग्निहोत्रं गवालम्भम्' इत्यादि पूर्वोदाहृतवचनं तस्य च व्यवस्था पूर्वोदाहृतैव। तथा गुरुपूजा प्रणश्यति इत्यत्रापि प्रयोज्यव्यापारेण प्रयोजकव्यापारकल्पनावश्यंभावाद्गुरुपूजां प्रशामयेदित्यर्थः सिध्यति। तदुक्तं कलिवर्ज्यप्रकरणे – 'दक्षिणा विधिचोदिता' इति। विधिचोदिता च दक्षिणा 'गुरवे तु वरं दत्त्वा' इत्यादिना विहिता। तथा कुमार्यश्च प्रसूयन्ते इत्यत्रापि कुमारीः प्रसावयेदित्यर्थः सिध्यति। तथा च निरुक्ते – 'स्त्रीणां दानविक्रयातिसर्गाः विद्यन्ते, न पुंसः। पुंसोऽपीत्येके, शौनःशेपे दर्शनात्' (नि. ३।४)। दृश्यते च स्त्रीमण्डले मल्यालदेशे ज्येष्ठकन्यापुत्रयोरपि विवाहः। अन्येषामतिसर्गः। सोऽपि निषिद्धः कलिवर्ज्यप्रकरणे बृहन्नारदीये – 'द्विजानामसवर्णासु कन्यासूपगतं तथा' इति। असवर्णासूपगतं तथा इत्यन्वयः। न च असवर्णास्विति कन्याविशेषणम्, 'सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि' इति (*असवर्णासु कन्यासु उपगतं तथेति) असवर्णासूपगमनस्याधिकनिषेधात्। तथा चात्र प्रशब्दोऽपि निषेधार्थः सिध्यति, 'तन्न प्रस्मर्तव्यम्' इति शबरस्वामिना प्रशब्दस्य निषेधार्थकत्वप्रग( ? क)टनादित्यलम्। विम.

* कंसस्थितोऽयं ग्रन्थोऽत्र न संगच्छते, पूर्वं तु 'न च असवर्णास्विति कन्याविशेषणम्' इत्यतः परं कन्याविशेषणत्वाभिनयत्वेन संगच्छते।

**'कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः।**
**द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः।।**

(१) यदुक्तम् – 'तपः परं कृतयुगे' इत्यादि, तत्र हेतुमाह – कृत इति। प्राणशब्दो वायुविशेषं वृत्तिपञ्चकोपेतं हृदयादिस्थाननिवासिनमाचष्टे। प्राणस्वरूपं च मैत्रेयशाखायां विस्पष्टं श्रूयते – 'प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्। स नारमतैकः। स आत्मानमभिध्यायन् बह्वीः प्रजा असृजत, ता अश्मेवाप्रबुद्धा अप्राणाः स्थाणुरिव संतिष्ठमाना अपश्यत्। स नारमत। सोऽमन्यत – एतासां प्रतिबोधनायाभ्यन्तरं विशानि इति। स वायुमिवाऽऽत्मानं कृत्वाऽभ्यन्तरं प्राविशत्। स एको नाशकत्। (स) पञ्चधाऽऽत्मानं प्रविभज्योच्यते – यः प्राणोऽपानः समान उदानो व्यान इति। अथ योऽयमूर्ध्वमुत्क्राम(य ?)ति एष वाव स प्राणः। अथ योऽयमवाञ्चं संक्रामति एष वाव सोऽपानः। अथ योऽयं स्थविष्ठमन्नधातुमपाने स्थापयति अणिष्ठं चाङ्गे समं नयति एष वाव समानः। अथ योऽयं पीताशितमुद्गिरति निगरति एष वाव स उदानः। अथ येनैताः शिरा अनुव्याप्ता एष वाव स व्यानः' (मैत्रायणीयारण्यकम् २।६) इति। अश्मेव पाषाणवदित्यर्थः। वाक्चक्षुरादीनि इन्द्रियाण्यपि प्राणाधीनव्यापारत्वात् प्राणशब्देन व्यवह्रियन्ते। अत एव छन्दोगा आमनन्ति – 'न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते, प्राण( ? णा) इत्येवाऽऽचक्षते' (छाउ. ५।१।१५) इति। तस्मात् इन्द्रियवायुसमुदायरूपं लिङ्गशरीरं लोकान्तरगमनक्षमं प्राणशब्देन विवक्षितम्। तच्च अस्थिमांसादिमये स्थूलशरीरे कर्मरज्जुभिर्निबध्यते। तच्च बन्धनं तत्तद्युगसामर्थ्यादस्थ्यादिषु व्यवतिष्ठते। तथा च कृच्छ्रचान्द्रायणादिषु अन्नाद्याहारपरित्यागात् मांसाद्युपक्षयेऽप्यस्थ्नां सहसाऽनुपक्षयात् प्राणानामव्याकुलतेति कृतयुगे तपः सुकरम्। त्रेतादिषु मांसाद्युपक्षयेण प्राणानां व्याकुलत्वात् तपो दुष्करम्। यद्यपि प्राणानां मांसाद्याश्रयेण ज्ञानादिषूपकारविशेषो दुर्लभः, तथापि तपसोऽसंभवं वक्तुं तद्वर्णनम्। अत एव कूर्मपुराणे युगान्तराभिप्रायेण तपोन्तरं वर्णितम् – 'अहिंसा सत्यवचनमानृशंस्यं दमो घृणा। एतत्तपो विदुर्धीरा न शरीरस्य शोषणम्।।' इति। पमा.

(१) **पस्मृ.** १।३२; **मुक्ता.** ११; **पप्र.** ४८.

(२) यदुक्तं 'तपः परं कृतयुगे' इत्यादि तत्र हेतुमाह - - कृत इति। प्राणाः पञ्चापि वायवः प्राणापानसमानोदानव्यानाः हृदयादिस्थानस्थितास्ते कृते अस्थ्यन्तर्वर्तिनो यावदस्थ्यव्याकुलाः, त्रेतायां यावन्मांसम्, द्वापरे च यावद्रुधिरम्, कलौ तु यावदन्नोपभोगम्, आदिशब्दात्पानीयपानं च यावत्, तावत् स्थिताः अव्याकुलाः। चक्षुरादीन्द्रियाणि अपि प्राणाधीनव्यापारत्वात् प्राणशब्देनोपलक्ष्यन्ते, 'न वै वाचो न चक्षूंषि श्रोत्राणि न मनांसीत्याचक्षते, प्राणा इत्येवाऽऽचक्षते' इति छान्दोग्यश्रुतेः। तान्यपि यावदस्थ्याद्यव्याकुलानीति। तथा च कृते कृच्छ्रादितपसा मांसाद्युपक्षयेऽप्यस्थ्नामनुपक्षयादव्याकुलप्राणतया तपःसिद्धिः, न त्रेतायाम्; तत्र बाह्येन्द्रियवृत्तिनिरोधेन रुधिरादिद्रवधातुक्षयेऽपि न मांसोपक्षय इत्यव्याकुलप्राणतया ज्ञानसिद्धिः, न द्वापरे; तत्र तु यागीयव्रतपाने( ? पालने)नान्नत्यागेऽपि न रुधिरक्षय इति यागसिद्धिः, न कलौ; कलौ त्वन्नापरिहारेणापि दानसिद्धिरिति सर्वयुगेषु प्राणाधाराबाधेन धर्मानुष्ठानं प्रदर्शितम्। तत्र तपसो मांसोपशोषकत्वमुक्तं स्कान्दे – 'वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः। शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः।।' इति। इन्द्रियनिरोधस्य रुधिरोपशोषकत्वमुक्तमुत्तरगीतासु – 'इन्द्रियाणां निरोधेन देहे नश्यन्ति धातवः। देहे नष्टे कुतो बुद्धिर्बुद्धिनष्टे+ कुतो ज्ञता।।' इति। यागे दीक्षितस्यान्नत्याग उक्तः कल्पकारैः – 'पीवा दीक्षते कृशो यजेत' इति, 'यदाऽस्य चक्षुषो कृष्णं नश्यत्यथ सुमेध्यो भवति' इति च। कलौ तु दानेषु नाऽऽत्यन्तिकोऽन्नत्यागोऽङ्गमिति न दानेषु प्राणपीडा। ततश्च उत्तरोत्तरयुगेषु पूर्वपूर्वयुगधर्मानुष्ठानमशक्यमेव, पूर्वपूर्वयुगेषु तूत्तरोत्तरयुगधर्मा अपि स्वनुष्ठेया इति सर्वं सुस्थम्। विम.

तत्तद्युगधर्मा युगस्थिता द्विजाश्च
तत्तद्युगरूपत्वान्न निन्द्याः,
कलिवर्ज्यानि

**'युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः।**
**तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः।।**

(१) इदानीं युगसामर्थ्यवर्णनस्य प्रयोजनमाह – युग इति। युगरूपाः युगानुरूपाः, कालपरतन्त्रा इति यावत्। तदुक्तमारण्यपर्वणि – 'भूमिर्नद्यो नगाश्चैते सिद्धा देवर्षयस्तथा। कालं समनुवर्तन्ते तथा भावा युगे युगे।। कालं कालं समासाद्य नराणां नरपुङ्गवाः। बलवर्णप्रभावा हि प्रभवन्त्युद्भवन्ति च।।' इति। १।३३

कलियुगे सर्वेषां निन्द्यत्वादेतदेव युगमुद्दिश्य प्रवृत्तस्य पराशरधर्मशास्त्रस्य निर्विषयत्वं स्यात् इत्याशङ्क्याऽऽह- युग इति। अस्याक्षरार्थः प्रथमाध्याये वर्णितः। अयमाशयः- द्विविधा ह्यधर्मप्रवृत्तिः – युगप्रयुक्ता प्रमादालस्यादिप्रयुक्ता च। तत्र युगप्रयुक्तायाः प्रवृत्तेरपरिहार्यत्वान्न तन्निवृत्तये पराशरस्योद्यमः। या तु प्रमादालस्यादिप्रयुक्ता प्रवृत्तिः तत्र सावकाशं धर्मशास्त्रम्। तद्यथा – अध्ययनविधिस्तावदर्थज्ञानपर्यन्तं साङ्गवेदपाठमाचष्टे। न च कलौ युगे तादृशं विप्रं कंचिदप्युपलभामहे। तथा ब्रह्मचारिप्रकरणे तदाश्रमधर्मा अध्ययनधर्माश्च सहस्रशः स्मर्यन्ते। न च तान् सर्वान् यथावदनुतिष्ठन् माणवकः कोऽप्युपलभ्यते। यदा अध्ययनस्यैव ईदृशी गतिः तदा कैव कथा साङ्गकृत्स्नवेदार्थानुष्ठानस्य? तथा सति शास्त्रीयमुख्यब्राह्मण्योपेतस्य कस्याप्यभावात्, क्षत्रियवैश्यजात्योश्च स्वरूपेणैवोच्छिन्नत्वात्, शुश्रूषयितव्यानां द्विजानामसंभवे तच्छुश्रूषकस्य मुख्यस्य शूद्रस्यात्यन्तानाशङ्कनीयत्वात् किं चातुर्वर्ण्यमुद्दिश्य प्रवृत्तं धर्मशास्त्रं स्वरूपेणैव लुप्यताम्? किंवा मुख्यासंभवेऽपि यथासंभवं चातुर्वर्ण्यमाश्रित्य धर्मशास्त्रं प्रवर्तताम्? इति मीमांसायां स्वरूपलोपात् वरं यथासंभवानुष्ठानमित्यभिप्रेत्य युगप्रवृत्तां सर्वैरप्यवर्जनीयामधर्मप्रवृत्तिमदोषत्वेनाभ्युपगम्य 'तेषां निन्दा न कर्तव्या' इत्युक्तम्। § पमा. ११।५०

(२) नन्वेवं धर्मे सत्यग्निहोत्रादिरहितेषु द्विजेषु कलिधर्मा दानादयोऽपि कथं साङ्गाः स्युः? तेषामपि दातृदेयपात्रादिशुद्ध्यधीनत्वादित्यत आह – युग इति। युगे युगे प्रतियुगं ये धर्मा गवालम्भनविधवानियोजनादयः कृतयुगादौ, स्वयं-

---

+ नष्टे इत्यत्र भावे क्तः। नाशे इत्यर्थः।

(१) **पस्मृ.** १।३३ : ११।५०; युगे च (युगे तु) स्तत्र तत्र (स्तेषु तेषु) **पमा.** १।११० उत्त. : १।१२९ तृतीयचरणमात्रम्; **मुक्ता.** १३; **पप्र.** ५२; **आन.** २०.

§ मुक्ता. अस्य अग्रिमश्लोकस्य च पराशरमाधवस्थांऽऽशिकोऽनुवादः।

कर्षणवेदैकदेशाध्ययनादयश्च कलौ, तत्र तत्र युगे तदनुष्ठातारो ये द्विजाश्च ब्राह्मणक्षत्रियवैश्याः; चकाराच्छूद्रादयोऽपि, तेषां धर्मिणां द्विजानां च निन्दा अधर्माभासत्वोद्भावनेन दोषकीर्तनं न कर्तव्यम्, तत्तद्युगविहितत्वेन वास्तवाधर्मत्वाभावात्। तदेवाऽऽह – हि यतः ते धर्मा द्विजाश्च युगरूपाः तत्तद्युगानुरूपाः। वीप्सायां पुनर्वचनं प्रतियुगं धर्मवैलक्षण्यवद् द्विजातीनामपि (धर्म?) वैलक्षण्यप्रतिपादनाय। तच्च सर्ववर्णकन्यापरिणयेन युगान्तरे स्पष्टमेव, मूर्धावसिक्तादीनामपि द्विजत्वात्। तदुक्तमारण्यके – 'भूमिर्नद्यो नगाः शैलाः सिद्धा देवर्षयस्तथा। कालेन सह वर्तन्ते तथा भावा युगे युगे।। कालं कालं समासाद्य नराणां नरपुंगव। बलवर्ष्मप्रभावा हि प्रणश्यन्त्युद्भवन्ति च।।' इति। वर्ष्म शरीरम्। प्रभावः धर्मातिशयः। इदमत्रोक्तम् – यथा कृतादौ गवालम्भादिधर्माणां लोकविरोधेऽपि व्यासादिद्विजानां वाऽनेकनिषिद्धानुष्ठातृत्वेऽपि न निन्दा, प्रभावाधिक्येन तत्कालानुरूपत्वात्; तदुक्तमापस्तम्बेन – 'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते। तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः।।' इति, तथा कलिधर्माणामपि स्वयंकर्षणवेदैकदेशाध्ययनादीनां तदनुष्ठातॄणां द्विजानां च निन्दा न कार्या; अल्पप्रभावत्वेन कलिकालानुरूपत्वादिति।... युगमि(?ग इ)ति देशस्याप्युपलक्षणम्, तेन तद्देशाचारोऽपि न निन्द्यः। विम.

(३) अयं निन्दानिषेधोऽसमर्थविषयः। अत एवाऽऽह – युगरूपा हि ते द्विजा इति। पप्र. ५२

(४) यत्तु पराशरवचनं 'युगे युगे च .... हि ते द्विजाः।।', युगे युगे प्रतियुगकल्पमित्यर्थः, इति, तत् कलावपि कलेः स्वभावं शास्त्रतो ज्ञात्वा परमेश्वरानुग्रहबलात् शास्त्रमार्गमेवावलम्ब्य दृढचित्ता महात्मानो वैदिकधर्मनिष्ठाः प्रमादात्कृतानां पापानां प्रायश्चित्तानि च यथाधिकारं कुर्वाणा यथाशास्त्रं मुख्यगौणकल्पाश्रयेण वा कर्माण्यनुतिष्ठन्ति तैः कलौ भावित्वेन विहितमन्याय्यमाचारमेव शास्त्रमिति मन्वानाः परमेश्वरानुग्रहरहिताः त्यक्तवैदिकधर्मा विद्वांसो वाऽप्यविद्वांसो वा वर्तन्ते तान्प्रति निन्दा न कर्तव्या, हि यस्मात् युगधर्मानुसारिणस्ते यथेष्टमनुतिष्ठन्त्विति तादृशैः प्रायेण संव्यवहारादिकं वर्जयद्भिर्गूढाभिसंधिभिरेव स्थेयम्, अन्यथा तादृशानामेव कलौ बाहुल्यात् साधूनामुत्सादनं भवति, तस्मात् दृष्टादृष्टविरोधभयान्निन्दा न कर्तव्या इत्येवमर्थमुक्तमिति समाधेयम्, अन्यथा विधिनिषेधशास्त्रस्य वैयर्थ्यमेव स्यात्। आन. २०-२१

**'युगे युगे तु सामर्थ्यं शेषं मुनिविभाषितम्।**
**पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयते।।**

(१) नन्वेवं कलौ पापिनामनिन्द्यत्वात् कृत्स्नं धर्माधर्मव्यवस्थापकशास्त्रं विप्लवेत। तथाहि – 'जितो धर्मो ह्यधर्मेण' इति यदुक्तं तत्र 'धर्मं चर' इति श्रूयमाणो विधिः पीड्येत; 'नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्। स्थितिर्हि सत्ये धर्मस्य तस्मात्सत्यं न लोपयेत्।।' इति राजधर्मेषूक्तम्, तच्च अनृतस्यानिन्द्यत्वे बाध्येत; 'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकं चैव गच्छति।।' इति वचनं चोरस्यानिन्द्यत्वे बाध्येत; 'स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः' इति याज्ञवल्क्योक्तिः, 'भर्तारं लङ्घयेद्या तु जातिस्त्रीगुणदर्पिता। तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थितः।।' इति मनूक्तिः;, 'परित्याज्या त्वया भार्या भर्तुर्वचनलङ्घिनी। तत्र दोषो न चास्तीति त्वं हि वेत्थ यथातथम्। सर्वलक्षणयुक्ताऽपि या तु भर्तुर्व्यतिक्रमम्। करोति सा परित्याज्येत्येष धर्मः सनातनः।।' इति ब्रह्मपुराणे महर्षीणामुक्तिः, तदिदमुक्तित्रयं स्त्रीजितस्य अनिन्दायां बाधितं स्यात्; अच्छिद्रकाण्डे अग्निहोत्रप्रायश्चित्तं बहुधा श्रुतम्, आश्वमेधिके पर्वणि चैवाप्युक्तम् – 'होतव्यं विधिवद्राजन्नूर्ध्वामिच्छन्ति ये गतिम्। आजन्मसत्रमेतत्स्यादग्निहोत्रं युधिष्ठिर। न त्याज्यं क्षणमप्येतद्ग्रहीतव्यं द्विजातिभिः।। यद्वैतस्यां पृथिव्यां हि किंचिदस्ति चराचरम्। तत्सर्वमग्निहोत्रस्य कृते सृष्टं स्वयंभुवा।। नावबुध्यन्ति ये चैतन्नरास्तु तमसाऽऽवृताः। ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम्।।' इति, तदेतत् श्रुतिद्वयमग्निहोत्रावसादस्यानिन्दायां बाध्येत; 'गुरोरनिष्टा-

(१) **पस्मृ.** १।३४; **पमा.** १।११० निर्देशमात्रम् : २।५३५ द्वितीयचरणमात्रम्; **मुक्ता.** १३.

चरणं गुरोरिष्टविवर्जनम्। गुरोश्च सेवाऽकरणं ज्ञानानुत्पत्तिकारणम्।। आचार्यनिन्दाश्रवणं तद्बाधस्य च दर्शनम्। विवादश्च तथा तेन ज्ञानानुत्पत्तिकारणम्।।' इति स्कान्दपुराणवचनम्, एतच्च गुरुपूजाप्रणाशस्य अनिन्दायां बाध्येत; 'प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति। मासि मासि रजस्तस्याः पिता पिबति शोणितम्।।' इति यमवचनम्, 'पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता। भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता।।' इति वचनम्, तदुभयं कुमारीप्रसवस्यानिन्दायां बाध्येत। ततः कथमनिन्दा? इत्यत आह – युग इति। शेषम् अवशिष्टं तत्तद्युगसामर्थ्यं मुनिभिरन्यैर्विशेषेण भाषितम्। यथा मुनिभिस्तत्तद्युगसामर्थ्यं विधिनिषेधाभ्यां विशेषेण भाषितं तथा विहितातिक्रमनिषिद्धाचरणयोः प्रायश्चित्तमपि चिरंतनेन पराशरेणोक्तम्। चकारो याज्ञवल्क्यमन्वादिसमुच्चयार्थः। प्रसिद्धा हि तदीयग्रन्थेषु प्रायश्चित्ताध्यायाः। पराशरग्रहणं तु कलियुगाभिप्रायम्। सर्वेष्वेव कल्पेषु पराशरस्मृतेः कलियुगधर्मपक्षपातित्वात् प्रायश्चित्तेष्वपि कलियुगविषयेषु पराशरः प्राधान्येनाऽऽदरणीयः। अतः पराशरमन्वादिप्रोक्तं प्रायश्चित्तं तत्तत्पापपरिहाराय विद्वत्परिषदा विधीयते। एतदुक्तं भवति- नानामुनिभिस्तत्तद्युगसामर्थ्यस्य प्रायश्चित्तस्य प्रपञ्चितत्वात् तदुभयं पर्यालोच्य निन्दानिन्दयोः व्यवस्था कल्पनीया। यः पुरुषो युगसामर्थ्यमनुसृत्य विहितानुष्ठानं प्रतिषिद्धवर्जनं प्रमादकृतपापस्य प्रायश्चित्तं च कर्तुं शक्तोऽपि न कुर्यात् तद्विषयाणि – 'भ्रूणहत्या पितुस्तस्य सा कन्या वृषली स्मृता' इत्यादिनिन्दावचनानि; अशक्तविषयं 'तेषां निन्दा न कर्तव्या' इत्यादि वचनम्। अत एव शैवागमे पठ्यते- 'अत्यन्तरोगयुक्तेऽङ्गे राजचौरभयादिषु। गुर्वग्निदेवकृत्येषु नित्यहानौ न पापभाक्।।' इति। तस्मान्न कोऽपि धर्माधर्मशास्त्रस्य विप्लव इति। पमा.

(२) ननु तत्तद्धर्माणां युगानुरूपत्वादनिन्द्यत्वमस्तु, अधर्मेषु तु कथम्? इत्यत आह – युग इति। युगे युगे कृतादियुगेषु पराशरेण, चकारान्मनुगौतमशङ्खलिखितैश्च, यदुक्तं प्रायश्चित्तं तथा (? तत्) विधीयते। यद्यपि 'कृते तु मानवा धर्माः' इत्यनेनैवेदं सिद्धम्, प्रायश्चित्तानामपि धर्मत्वात्, तथापि मन्वाद्यनुक्तानां स्मृत्यन्तरादुपादानविधानाय पुनरनूद्यते। तदेवाऽऽह – शेषं मन्वादिभिः कृतादिषूक्तप्रायश्चित्तादवशिष्टमाकाङ्क्षितं च यत्प्रायश्चित्तं तदन्यमुनिभिर्याज्ञवल्क्यादिभिर्विभाषितमेव विधीयते। कुत एवमुच्यते? इत्यत आह – सामर्थ्यं यत इदं सम्यगर्थप्राप्तम्। अयमर्थः – येषु निमित्तेषु पराशरादिभिः प्रायश्चित्तं नोक्तं तत्र नैमित्तिकावश्यंभावेन स्मृत्यन्तरोक्तं ग्राह्यम्, न्यायसिद्धत्वादस्यार्थस्य। इदमेव अभिप्रेत्य सुव्रतोऽपि बृहत्पराशरीये 'पराशरश्च यत्प्राह' (बृपसं. १।४९) इत्यादिना सर्वं स्वसंहिताप्रतिपाद्यमनुक्रम्यान्ते – 'दिष्टं च तत्परं ध्येयं सर्वमेतत्पराशरः। प्रोक्तवान् व्यासमुख्यानां शेषं मुनिविभाषितम्।।' (बृपसं. १।६१-६२) इत्युपसंजहार। विम.

**'ऊढायाः पुनरुद्वाहो ज्येष्ठांशं गोवधं तथा।**
**कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्।।**

युगान्तरेषूढाया अक्षतयोन्याः कन्याया भर्तरि मृते पुनर्विवाहः कर्तुं शक्यः, स च कलौ नास्तीत्यर्थः। ज्येष्ठांशम् 'इतरे कामजाः स्मृताः' इति शास्त्रेण 'तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति' इति श्रुत्या सर्वं धनं ज्येष्ठस्यैव, कलौ तु समविभागः। गोवधः अष्टकामधुपर्कगोसवादिषु कलौ निषिद्धः। भ्रातृजायां देवरधर्म इत्यर्थः। कमण्डलुः मृन्मय इत्यर्थः। आन. २१

**[२]गोमेधो नरमेधश्च अक्षता गोपशुस्तथा।**
**देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्।।**
**[३]यज्ञाधानं गवालम्भं संन्यासं पलपैतृकम्।**
**देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्।।**
**[४]गवाश्वनरमेधाश्च वानप्रस्थः कमण्डलुः।**
**अक्षतं दैवतं चैव कलौ सप्त विवर्जिते( ? र्जयेत्)।।**
**[५]तदा प्रविरलो धर्मः क्वचिल्लोकेऽपि वत्स्यति।।**

---

(१) **मुक्ता.** १३ : १३९ हो ज्ये (हं ज्ये) व्यासः; **आन.** २१.
(२) **समु.** १२६ (गवाश्वनरमेधाश्च वानप्रस्थकमण्डलुः। अक्षतं दैवतं चैव कलौ सप्त विवर्जिते।।); **संग.** ५९४.
(३) **गभा.** ५६; **संग.** १६३; **संदी.** २।२२ त्पत्तिः (त्पत्तिं).
(४) **समु.** १२६.
(५) **आन.** २०.

## बृहत्पराशरः

मनूक्ता धर्माः कृतादियुगत्रयविषयाः, युगभेदेन धर्मभेदाः, पतितसंबन्धित्याज्यस्थानभेदाः, पातित्यनिमित्तभेदाः, दानपद्धतिभेदाः, युगरूपधर्मब्राह्मणा अनिन्द्याः, कलिसामर्थ्यप्रयुक्ता लोकवृत्तान्ताः

[1]मन्वर्थः सर्वधर्माणां कृतादित्रियुगेषु च।
धर्मं तु त्रियुगाचारं न शक्यं हि कलौ युगे।।
[2]अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः।।
तपः परं कृतयुगे त्रेतायां ज्ञानमेव च।
द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे।।
कृते तु मानवा धर्मास्त्रेतायां गौतमस्य च।
द्वापरे शाङ्खलिखिताः कलौ पाराशराः स्मृताः।।
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्।
द्वापरे कुलमेकं तु कर्तारं च कलौ युगे।।
कृते तु लिप्यते देशस्त्रेतायां ग्राम एव च।
द्वापरे कुलमेकं तु कलौ कर्ता विलिप्यते।।
कृते संभाष्य पतति त्रेतायां स्पर्शनेन च।
द्वापरे भक्षणेऽन्नस्य कलौ पतति कर्मणा।।
अभिगम्य कृते दानं त्रेतायामभिमन्त्र्य च।
द्वापरे याच्यमानं तु सेवया दीयते कलौ।।
अभिगम्योत्तमं दानं मध्यमं साभिमन्त्रणम्।
अधमं याच्यमानं स्यात्सेवादानं तु निष्फलम्।।
कृते त्वस्थिगताः प्राणास्त्रेतायां मांससंश्रिताः।
द्वापरे रुधिरं यावत्कलावन्नाद्यमेव च।।
कृते तात्क्षणिकः शापस्त्रेतायां दशभिर्दिनैः।
मासेन द्वापरे ज्ञेयः कलौ संवत्सरेण तु।।
युगे युगे च ये धर्मास्तेषु धर्मेषु ये द्विजाः।
तेषां निन्दा न कर्तव्या युगरूपा द्विजोत्तमाः।।

(१) बृपसं. १।१७-१८.
(२) बृपसं. १।२१-४०.

धर्मश्च सत्यमायुश्च तुर्यांशेन कलौ युगे।
अदनात्तदनाद्यस्य तुच्छमायुरकार्यतः।।
धर्मश्च लोकदम्भार्थं पाषण्डार्थं तपस्विता।
विविधा वाग्वञ्चनार्थं कलौ सत्यानुकारिणी।।
अल्पक्षीरघृता गावो ह्यल्पसस्या च मेदिनी।
स्त्रीजनन्यः स्त्रियः सर्वाः सुखार्थं कृतमैथुनाः।।
पुरुषाश्च जिताः स्त्रीभी राजानो दस्युभिर्जिताः।
जितो धर्मश्च पापेन अनृतेन तथा ऋतम्।।
शूद्राश्च ब्राह्मणाचाराः शूद्राचारास्तथा द्विजाः।
अन्त्यानुयायिनश्चाऽऽद्या वर्णास्तदुपजीविनः।।
कृतं तु ब्राह्मणयुगं त्रेता तु क्षत्रियं युगम्।
वैश्यं तु द्वापरयुगं कलिः शूद्रयुगं स्मृतम्।।
चातुर्वर्णिकनारीणां तथा तुरीयजन्मनाम्।
पतिद्विजात्युपास्त्यापि धर्मर्द्धिर्महती कलौ।।
शतेन या कृते दत्ते फलाप्तिः पुरुषस्य च।
स्याद्दत्तैर्दशभिर्नॄणां फलाप्तिः सा कलौ युगे।।
कृते यत्कोटिदस्य स्यात्त्रेतायां लक्षदस्य तत्।
द्वापरेऽयुतदस्य स्याच्छतदस्य कलौ फलम्।।
[1]अस्मिन्कलौ च विदुषा विधिवत्कर्म यत्कृतम्।
भवेद्दशगुणं तद्धि कृतादेर्युगतो ध्रुवम्।।
[2]दातॄणां व्रतिनामेके कवयः सत्रिणामपि।
सद्यःशौचमदोषाणामूचुर्धर्मविदः कलौ।।
मनुर्वा याज्ञवल्क्यस्तु वसिष्ठः प्राह निष्कृतिम्।
सा कृतादिषु वर्णानां सति धर्मे चतुष्पदे।।
मानसा वाचिका दोषास्तथा वै कार्यकारिताः।
धर्माधीना नृणां सर्वे जायन्ते तेऽप्यनिच्छताम्।।
तेषामुपरताक्षाणां प्रत्यहं शुभमिच्छताम्।
शक्तिजो निष्कृतिं प्राह युगधर्मानुरूपतः।।
[3]वदन्ति दानं मुनयः प्रधानं
कलौ युगे नान्यदिहास्ति किंचित्।
विशोधनं सर्वमिहापि पूज्यं
वदामि तस्मादथ दानधर्मान्।।

(१) बृपसं. ४।६७.
(२) बृपसं. ८।११, ६०-६२.
(३) बृपसं. ९।४३.

## अत्रिः

कलौ सिद्धान्ताज्ञानं सप्तशत्यादीनां
वेदत्वग्रहश्च

**[1]विन्ध्यस्योत्तरभागे तु संप्राप्ते तु कलौ युगे।**
**सिद्धान्तानां परिज्ञानं न कस्यापि भविष्यति।।**
**चतुःशर्ती सप्तशर्ती श्रीगीतास्तुतिमेव च।**
**वेदत्वेन ग्रहीष्यन्ति स्मार्तकर्मविवर्जिताः।।**

## सुमन्तुः

कलौ आततायिवधे
दोषाभावः

**[2]नाऽऽततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्यः।। §**

एतेन 'नाऽऽ...... भ्यः' इति सुमन्तुवाक्यं कलिविषयमेवेति सिद्धम्। सम. १०७

## क्रतुः

कलौ नियोगादिनिषेधः

**[3]देवरान्न सुतोत्पत्तिर्दत्ता कन्या न दीयते।**
**न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः।।**

## लौगाक्षिः

अर्धाधानसर्वाधानयोर्युगभेदेन
व्यवस्था

*** [4]अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः।**
**सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता।।**

ननु 'पूर्वयुगाश्रिता' इत्यत्र पूर्वयुगेत्यस्य पूर्वयुगानि कृतादीनि, युगस्य कलेः पूर्वो भाग इति वाऽर्थः? नाऽऽद्यः, एतेनेत्यादिविरोधात्, 'चत्वार्यब्दसहस्राणि' इति कलौ त्रेतापरिग्रहविधानात्। नान्त्यः, प्रकृतोपष्टम्भकतापत्तेः। अत्रोच्यते – आद्य एवार्थो ग्रन्थकृत्संमतः, नापरः, एकदेशिसमासे लक्षणाप्रसङ्गात्। एवं च सामान्यतो निषिद्धमपि सर्वाधानं व्यासवाक्येन पुनः प्रतिप्रसूयते इति 'यावद्वर्ण' इति चार्धाधानपरं न्यायप्राप्तानुवादः, वेदोच्छेदे वर्णसंकरे वाऽधिकाराभावादेव तन्निवृत्तेः प्राप्तत्वात्।

कृभ. १३११

## मार्कण्डेयः

कलौ मधुपर्के पशुहननस्य निषेधः
प्रत्याम्नायश्च

**[1]माधुपर्किकपश्वर्थे ततो मात्रां निवेदयेत्।**
**सहिरण्यं बीजपात्रं द्रविणेन सदैव (? हैव) तु।**
**पशुः कलौ न कर्तव्य इत्याह भगवान् मनुः।।**

माधुपर्किकपशुरत्र गौरेव, मधुपर्के 'तस्मा असिपाणिर्गां प्राह' इत्यादौ गोहननक्रियानियोगादेः स्मरणात् कलौ गोहननस्य निषेधोपपत्तेश्च।

अप. १।१५६

## वैशम्पायनः

कल्पोक्ता मन्त्रसंख्या कृते, तद्द्विगुण-
त्रिगुणचतुर्गुणाः क्रमेण
त्रेतादिषु ग्राह्याः

**[2]यस्मिंश्च निगदेनैव मन्त्रे संख्या निगद्यते।**
**तत्र सर्वत्र मन्त्राणां संख्यावृद्धिर्युगक्रमात्।।**
**[3]कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणा भवेत्।**
**द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा।।**

---

§ स्मृतिकौव्याख्यानं 'द्विजस्या' इत्यादित्यपुराणवचनव्याख्याने द्रष्टव्यम्।

* चमव्या – स्मृतिकौ – पुमव्याख्यानानि 'चत्वार्यब्द' इति व्यासवचने, सिन्धुव्याख्यानं च 'अग्न्याधेयम्' इति व्यासवचने द्रष्टव्यानि।

(१) **संग.** ११-१२.

(२) **सम.** १०७; **स्मृतिकौ.** ४७५.

(३) **स्मृच.** १।२९ रान्न (राच्च) न च (च न) : १।२२६ यज्ञे (यज्ञो); **पमा.** १।१२३ रान्न (राच्च); **चमव्या.** ४९ पमावत् पू.; **मुक्ता.** १३९; **सम.** ११० पमावत्.

(४) **चमव्या.** ५५; **सिन्धु.** १३११; **सम.** ११० रैक्य (रैक्यं); **स्मृतिकौ.** ४८० श्रिता (श्रया); **पुम.** ४६९; **कृभ.** १३११ निर्देशमात्रम्.

(१) **अप.** १।१५६.

(२) **निप.** ४५४ द्वितीयचरणे (मन्त्रसंख्या विधीयते) (=); **स्मृतिकौ.** ४६९.

(३) **निप.** ४५४ भवेत् (स्मृता) (=); **स्मृतिकौ.** ४६९.

## वायुपुराणं ब्रह्माण्डपुराणं च

प्रजासु धर्माधर्माभावः आयुरादीनां साम्यं वर्णाश्रमव्यवस्थाया अभावः उत्तमाधमत्वाभावः संकल्पजा संततिः इत्येवमादयः कृतयुगवृत्तान्ताः, कृतयुगतत्संध्ययोः कालमानम्, ध्यानज्ञानयज्ञदानानि क्रमेण चतुर्युगधर्माः

**[1]धर्माधर्मौ न तास्वास्तां निर्विशेषाः प्रजास्तु ताः।**
**तुल्यमायुः सुखं रूपं तासां तस्मिन् कृते युगे।।**
**[2]धर्माधर्मौ न तास्वास्तां कल्पादौ तु कृते युगे।**
**स्वेन स्वेनाधिकारेण जज्ञिरे ते कृते युगे।।**
**[3]चत्वारि तु सहस्राणि वर्षाणां दिव्यसंख्यया।**
**आद्यं कृतयुगं प्राहुः संध्यानां तु चतुःशतम्।।**
**[4]ततः सहस्रशस्तासु प्रजासु प्रथितास्वपि।**
**न तासां प्रतिघातोऽस्ति न द्वन्द्वं नापि च क्रमः।।**
**[5]पर्वतोदधिसेविन्यो ह्यनिकेताश्रयास्तु ताः।**
**विशोकाः सत्त्वबहुलाः एकान्तसुखितप्रजाः।।**
**[6]ता वै निकामचारिण्यो नित्यं मुदितमानसाः।**
**पशवः पक्षिणश्चैव न तदाऽऽसन्सरीसृपाः।।**
**[7]नोद्भिज्जा नारकाश्चैव ते ह्यधर्मप्रसूतयः।**
**न मूलफलपुष्पं च नाऽऽर्तवं ह्यृतवो न च।।**

(१) **वायु.** १।८।४८; **ब्रह्माण्ड.** १।७।४३ तासां तस्मिन् (तासामासीत्) उत्त.

(२) **वायु.** १।८।४९; **ब्रह्माण्ड.** १।७।४३-४४ न तास्वास्तां (तदा न स्तः) तु कृते (प्रथमे) ते कृते (तु युगे).

(३) **वायु.** १।८।५०; **ब्रह्माण्ड.** १।७।४४-४५ आद्यं (आदौ) चतुर्थचरणे (संध्यांशौ च चतुःशतौ).

(४) **वायु.** १।८।५१; **ब्रह्माण्ड.** १।७।४५-४६ स्तासु (स्तास्तु) तास्वपि (तास्विह).

(५) **वायु.** १।८।५२; **ब्रह्माण्ड.** १।७।४६-४७ सेविन्यो (वासिन्यो) सुखित (सुखिनः).

(६) **वायु.** १।८।५३; **ब्रह्माण्ड.** १।७।४७-४८ ता वै निका (ताः शश्वत्का).

(७) **वायु.** १।८।५४; **ब्रह्माण्ड.** १।७।४८-४९ (नोद्भिजा नोत्कटाश्चैव धर्मस्य प्रक्रिया तु सा। समूलफलपुष्पाणि वर्तनाय त्वशेषतः।।).

**[1]सर्वकामसुखः कालो नात्यर्थं ह्युष्णशीतता।**
**मनोभिलषिताः कामास्तासां सर्वत्र सर्वदा।।**
**[2]उत्तिष्ठन्ति पृथिव्यां वै ताभिर्ध्याता रसोत्थिताः।**
**बलवर्णकरी तासां सिद्धिः सा रोगनाशिनी।।**
**[3]असंस्कार्यैः शरीरैश्च प्रजास्ताः स्थिरयौवनाः।**
**तासां विशुद्धात्संकल्पाज्जायन्ते मिथुनाः प्रजाः।।**
**[4]समं जन्म च रूपं च म्रियन्ते चैव ताः समम्।**
**तदा सत्यमलोभश्च क्षमा तुष्टिः सुखं दमः।।**
**[5]निर्विशेषास्तु ताः सर्वा रूपायुःशीलचेष्टितैः।**
**अबुद्धिपूर्वकं वृत्तं प्रजानां जायते स्वयम्।।**
**[6]अप्रवृत्तिः कृतयुगे कर्मणोः शुभपापयोः।**
**वर्णाश्रमव्यवस्थाश्च न तदाऽऽसन्न संकरः।।**
**[7]अनिच्छाद्वेषयुक्तास्ते वर्तयन्ति परस्परम्।**
**तुल्यरूपायुषः सर्वा अधमोत्तमवर्जिताः।।**
**[8]सुखप्राया ह्यशोकाश्च उत्पद्यन्ते कृते युगे।**
**नित्यप्रहृष्टमनसो महासत्त्वा महाबलाः।।**
**[9]लाभालाभौ न तास्वास्तां मित्रामित्रे प्रियाप्रिये।**
**मनसा विषयस्तासां निरीहाणां प्रवर्तते।**
**न लिप्सन्ति हि ताऽन्योन्यं नानुगृह्णन्ति चैव हि।।**

(१) **वायु.** १।८।५५; **ब्रह्माण्ड.** १।७।४९-५० सर्वकाम (सर्वकान्त) शीतता (शीतलः) ताः कामा (तः काम).

(२) **वायु.** १।८।५६; **ब्रह्माण्ड.** १।७।५०-५१ द्वितीयचरणे (तेषां ध्यानै रसातलात्) तासां (तेषां) चतुर्थचरणे (जरारोगप्रणाशिनी). (३) **वायु.** १।८।५७; **ब्रह्माण्ड.** १।७।५१-५२ रैश्च (रैस्तु) विशुद्धात्सं (विना तु सं) नाः प्रजाः (नात्प्रजाः).

(४) **वायु.** १।८।५८; **ब्रह्माण्ड.** १।७।५२-५३ म्रियन्ते (प्रीयन्ते) समम् (समाः) क्षमा तुष्टिः (संतुष्टिश्च).

(५) **वायु.** १।८।५९; **ब्रह्माण्ड.** १।७।५३-५४ षास्तु (षाश्च) शील (शिल्प) पूर्वकं वृत्तं (पूर्विका वृत्तिः) जायते (भवति).

(६) **वायु.** १।८।६०; **ब्रह्माण्ड.** १।७।५४-५५ कृतयुगे (कृतद्वारे) कर्मणोः (कर्मणः) संकरः (तत्कराः).

(७) **वायु.** १।८।६१; **ब्रह्माण्ड.** २।२।५५-५६ युक्तास्ते (युक्तास्ता). (८) **वायु.** १।८।६२; **ब्रह्माण्ड.** २।२।५६ ह्यशो (विशो) उत्तरार्धं नास्ति.

(९) **वायु.** १।८।६३; **ब्रह्माण्ड.** २।२।५७-५८ तास्वास्तां (वा स्यातां) द्वितीयचरणे (मित्रामित्रौ प्रियाप्रियौ) तृतीयार्धे (नातिहिंसन्ति वाऽन्योन्यं नानुगृह्णन्ति वै तदा।।).

[1]ध्यानं परं कृतयुगे त्रेतायां ज्ञानमुच्यते।
प्रवृत्तं द्वापरे यज्ञं दानं कलियुगे वरम्।।
[2]सत्त्वं कृतं रजस्त्रेता द्वापरं तु रजस्तमौ।
कलौ तमस्तु विज्ञेयं युगवृत्तवशेन तु।।

चतुर्मुखस्य कालस्य युगानि मुखानि, युगानि क्रमेण श्वेतरक्तरक्तपिङ्गलश्यामवर्णानि चतुस्त्रिद्व्येकजिह्वानि च, कृतादिषु त्रिषु क्रमेण ब्रह्मयज्ञविष्णुरूपेण कलौ स्वरूपेण महादेवः पूज्यः, युगत्रयस्थाः पातकिनः कलौ जायन्ते

[3]पूर्वमेव मयोक्तस्ते कालस्तु युगसंज्ञितः।
कृतं त्रेता द्वापरं च युगादिः कलिना सह।
परिवर्तमानैस्तैरेव भ्रममाणेषु चक्रवत्।।
देवतास्तु तदोद्विग्नाः कालस्य वशमागताः।
न शक्नुवन्ति तन्मानं संस्थापयितुमात्मना।।
तदा ते वाग्यता भूत्वा आदौ मन्वन्तरस्य वै।
ऋषयश्चैव देवाश्च इन्द्रश्चैव महातपाः।।
समाधाय मनस्तीव्रं सहस्रं परिवत्सरान्।
प्रपन्नास्ते महादेवं भीताः कालस्य वै तदा।।
अयं हि कालो देवेशश्चतुर्मूर्तिश्चतुर्मुखः।
कोऽस्य विद्यान्महादेव अगाधस्य महेश्वर।।
अथ दृष्ट्वा महादेवस्तं तु कालं चतुर्मुखम्।
न भेतव्यमिति प्राह को वः कामः प्रदीयताम्।।
तत्करिष्याम्यहं सर्वं न वृथाऽयं परिश्रमः।
उवाच देवो भगवान् स्वयं कालः सुदुर्जयः।।
यदेतस्य मुखं श्वेतं चतुर्जिह्वं हि लक्ष्यते।
एतत्कृतयुगं नाम तस्य कालस्य वै मुखम्।
असौ देवः सुरश्रेष्ठो ब्रह्मा वैवस्वतो मुखः।।

(१) वायु. १।८।६४; ब्रह्माण्ड. १।७।५९ ध्यानं (ज्ञानं) ज्ञानमु (यज्ञ उ) यज्ञं (युद्धं) चतुर्थचरणे (स्तेयमेव कलौ युगे).

(२) वायु. १।८।६५; ब्रह्माण्ड. १।७।६० स्तमौ (स्तमः) उत्तरार्धे (कलिस्तमस्तु विज्ञेयं गुणवृत्तं गुणेषु तत्।।).

(३) वायु. १।३२।६ - २५, ४१.

यदेतद्रक्तवर्णाभं तृ( ? द्वि)तीयं वः स्मृतं मया।
त्रिजिह्वं लेलिहानं तु एतत्त्रेतायुगं द्विजाः।।
अत्र यज्ञप्रवृत्तिस्तु जायते हि महेश्वरात्।
ततोऽत्र इज्यते यज्ञस्तिस्रो जिह्वास्त्रयोऽग्नयः।
इष्ट्वा चैवाग्नयो विप्राः कालजिह्वा प्रवर्तते।।
यदेतद्वै मुखं भीमं द्विजिह्वं रक्तपिङ्गलम्।
द्विपादोऽत्र भविष्यामि द्वापरं नाम तद्युगम्।।
यदेतत्कृष्णवर्णाभं तुरीयं रक्तलोचनम्।
एकजिह्वं पृथु श्यामं लेलिहानं पुनः पुनः।।
ततः कलियुगं घोरं सर्वलोकभयंकरम्।
कल्पस्य तु मुखं ह्येतच्चतुर्थं नाम भीषणम्।।
न मुखं नापि निर्वाणं तस्मिन् भवति वै युगे।
कालग्रस्ता प्रजा चापि युगे तस्मिन् भविष्यति।।
ब्रह्मा कृतयुगे पूज्यस्त्रेतायां यज्ञ उच्यते।
द्वापरे पूज्यते विष्णुरहं पूज्यश्चतुर्ष्वपि।।
ब्रह्मा विष्णुश्च यज्ञश्च कालस्यैव कलास्त्रयः।
सर्वेष्वेव हि कालेषु चतुर्मूर्तिर्महेश्वरः।।
अहं जनो जनयिता (वः ?) कालः कालप्रवर्तकः।
युगकर्ता तथा चैव परं परपरायणः।।
तस्मात्कलियुगं प्राप्य लोकानां हितकारणात्।
अभयार्थं च देवानामुभयोर्लोकयोरपि।।
तदा भव्यश्च पूज्यश्च भविष्यामि सुरोत्तमाः।
तस्माद्भयं न कार्यं च कलिं प्राप्य महौजसः।।
कृते त्रेतायुगे चैव तथा क्षीणे च द्वापरे।
नराः पातकिनो ये वै वर्तन्ते ते कलौ स्मृताः।।

द्वापरे कलौ च ऋषीणां वेदानां च सृष्टिः, वर्णभेदेन यज्ञस्वरूपभेदाः

[1]ऋषयस्तपसा देवाः( ? वेदाः) कलौ च द्वापरेषु वै।
अनादिनिधना दिव्याः पूर्वं सृष्टाः स्वयंभुवा।।
[2]सधर्माः सप्रजाः साङ्गा यथाधर्मं युगे युगे।
विक्रीडन्ते समानार्था वेदवादा यथायुगम्।।

(१) वायु. १।५७।४८; ब्रह्माण्ड. १।२९।५३ पूर्वार्धे (ऋषयस्तपसा वेदान् द्वापरादिष्वधीयते।).

(२) वायु. १।५७।४९; ब्रह्माण्ड. १।२९।५४ सप्रजाः (सव्रताः) विक्रीडन्ते (विक्रियन्ते).

[१]आरम्भयज्ञाः क्षत्रस्य हविर्यज्ञा विशांपतेः।
परिचारयज्ञाः शूद्रास्तु जपयज्ञा द्विजोत्तमाः।।

त्रेतायां वर्णाश्रमव्यवस्थानं राज्यसंस्थोत्पत्तिश्च,
त्रेतायां यज्ञप्रवर्तनं तत्प्रकारः
धर्माः लोकवृत्तानि च

[२]तथा प्रमुदिता वर्णास्त्रेतायां धर्मपालिताः।
क्रियावन्तः प्रजावन्तः समृद्धाः सुखिनस्तथा।।
[३]ब्राह्मणाननुवर्तन्ते क्षत्रियाः क्षत्रियान् विशः।
वैश्यानुवर्तिनः शूद्राः परस्परमनुव्रताः।।
[४]शुभाः प्रवृत्तयस्तेषां धर्मा वर्णाश्रमास्तथा।
संकल्पितेन मनसा वाचोक्तेन स्वकर्मणा।
त्रेतायुगे त्वविकलः कर्मारम्भः प्रसिध्यति।।
[५]आयुर्मेधा बलं रूपमारोग्यं धर्मशीलता।
सर्वसाधारणा ह्येते त्रेतायां वै भवन्त्युत।।
[६]वर्णाश्रमव्यवस्थानं तेषां ब्रह्मा तथाऽकरोत्।
पुनः प्रजास्तु ता मोहात्तान् धर्मान्न ह्यपालयन्।।
[७]परस्परविरोधेन मनुं ताः पुनरन्वयुः।
मनुः स्वायंभुवो दृष्ट्वा याथातथ्यं प्रजापतिः।।
[८]धाता तु शतरूपायाः पुमान् स उदपादयत्।
प्रियव्रतोत्तानपादौ प्रथमं तौ महीपती।।
[९]ततः प्रभृति राजान उत्पन्ना दण्डधारिणः।
प्रजानां रञ्जनाच्चैव राजानस्त्वभवन्नृपाः।।

(१) वायु. १।५७।५०; ब्रह्माण्ड. १।२९।५५ क्षत्रस्य (क्षत्राश्च) शांपतेः (शस्तथा).

(२) वायु. १।५७।५१; ब्रह्माण्ड. १।२९।५६ तथा (तदा).

(३) वायु. १।५७।५२; ब्रह्माण्ड. १।२९।५७.

(४) वायु. १।५७।५३; ब्रह्माण्ड. १।२९।५८-५९ त्वविकलः (च विफलः).

(५) वायु. १।५७।५४; ब्रह्माण्ड. १।२९।५९-६०.

(६) वायु. १।५७।५५; ब्रह्माण्ड. १।२९।६०-६१ तथा (तदा) चतुर्थचरणे (धर्मास्तान्नप्यपालयन्).

(७) वायु. १।५७।५६; ब्रह्माण्ड. १।२९।६१-६२ रन्वयुः (रभ्ययुः) मनुः (पुनः).

(८) वायु. १।५७।५७; ब्रह्माण्ड. १।२९।६२-६३ धाता (ध्यात्वा) याः पुमान् (यां पुत्रौ) चतुर्थचरणे (प्रथमौ तौ महीक्षितौ).

(९) वायु. १।५७।५८; ब्रह्माण्ड. १।२९।६३-६४ नस्त्वभ (नस्तेऽभ).

[१]प्रच्छन्नपापा ये जेतुमशक्या मनुजा भुवि।
धर्मसंस्थापनार्थाय तेषां शास्त्रे तपो मया।।
[२]वर्णानां प्रविभागाश्च त्रेतायां संप्रकीर्तिताः।
संहिताश्च ततो मन्त्रा ऋषिभिर्ब्राह्मणैस्तु ते।।
[३]यज्ञः प्रवर्तितश्चैव तदा ह्येवं तु दैवतैः।
यामैः शुक्लैर्जपैश्चैव सर्वसंभारसंवृतैः।।
[४]सार्धं विश्वभुजा चैव देवेन्द्रेण महौजसा।
स्वायंभुवेऽन्तरे देवैर्यज्ञास्ते प्राक् प्रवर्तिताः।।
[५]सत्यं जपस्तपो दानं त्रेतायां धर्म उच्यते।
क्रियाधर्मश्च ह्रसते सत्यधर्मः प्रवर्तते।।
[६]इज्या दानं तपः सत्यं त्रेतायां धर्म उच्यते।
तदा प्रवर्तते धर्मो वर्णाश्रमविभागशः।।
[७]मर्यादास्थापनार्थं च दण्डनीतिः प्रवर्तते।
हृष्टपुष्टाः प्रजाः सर्वा ह्यरोगाः पूर्णमानसाः।।
[८]एको वेदश्चतुष्पादस्त्रेतायुगविधौ स्मृतः।
त्रीणि वर्षसहस्राणि तदा जीवन्ति मानवाः।।
[९]पुत्रपौत्रसमाकीर्णा म्रियन्ते च क्रमेण तु।
एष त्रेतायुगे धर्मस्त्रेतासंधौ निबोधत।।

(१) वायु. १।५७।५९; ब्रह्माण्ड. १।२९।६४-६५ (प्रच्छन्नपापास्तैर्ये च न शक्यास्तु नराधिपैः। धर्मराजः स्मृतस्तेषां शास्ता वैवस्वतो यमः।।).

(२) वायु. १।५७।६०; ब्रह्माण्ड. १।२९।६५-६६ उत्तरार्धे (संभृताश्च तदा मन्त्रा ऋषिभिर्ब्रह्मणः सुतैः।।).

(३) वायु. १।५७।६१; ब्रह्माण्ड. १।२९।६६-६७ (यज्ञाः प्रवर्तिताश्चैव तदा ह्येव तु दैवतैः। यामशुक्राजितैश्चैव सर्वसाधनसंभृतैः।।).

(४) वायु. १।५७।६२; ब्रह्माण्ड. १।२९।६७-६८ यज्ञास्ते (यज्ञस्तैः) तिताः (तितः).

(५) वायु. १।५७।६३; ब्रह्माण्ड. १।२९।६८-६९ त्रेतायां (त्रेताया) उत्तरार्धे (तदा धर्मसहस्रान्तेऽहिंसाधर्मः प्रवर्तते।।).

(६) वायु. १।५७।८१; ब्रह्माण्ड. १।२९।८८-८९.

(७) वायु. १।५७।८२; ब्रह्माण्ड. १।२९।८९-९० ह्यरोगाः (अरोगाः).

(८) वायु. १।५७।८३; ब्रह्माण्ड. १।२९।९०-९१.

(९) वायु. १।५७।८४; ब्रह्माण्ड. १।२९।९१-९२ संधौ (संध्यां).

**अरक्षितारो हर्तारः शुल्कव्याजेन पार्थिवाः।**
**हारिणो जनवित्तानां संप्राप्ते तु कलौ युगे।।**

अरक्षितारः प्रजापालनमकुर्वन्तः, हर्तारः करग्राहिणः, तथा शुल्कव्याजेन वणिग्जनानां वित्तापहारिणो भविष्यन्ति। वैच.

**यो यो नागरथाश्वाढ्यः स स राजा भविष्यति।**
**यश्च यश्चाबलः सर्वः स स भृत्यः कलौ युगे।।**
**वैश्याः कृषिवणिज्यादि संत्यज्य निजकर्म यत्।**
**शूद्रवृत्त्या प्रवर्त्स्यन्ति कारुकर्मोपजीविनः।।**

शूद्रवृत्त्या सेवया वर्त्स्यन्ति वर्तिष्यन्ते। वर्तन्तीत्यपि क्वचित्पाठः। कारूणां शिल्पिनां कर्म कटादिक्रियाम् उपजीवितुं शीलं येषां ते। वैच.

**भैक्षव्रतास्तथा शूद्राः प्रव्रज्यालिङ्गिनोऽधमाः।**
**पाषण्डसंश्रयां वृत्तिमाश्रयिष्यन्त्यसंस्कृताः।।**

प्रव्रज्यालिङ्गिनः संन्यासिवेषाः। वैच.

**[1]दुर्भिक्षकरपीडाभिरतीवोपद्रुता जनाः।**
**गोधूमान्नयवान्नाढ्यान्देशान्यास्यन्ति दुःखिताः।।**

दुर्भिक्षादिपीडिताः स्वल्पवृष्ट्यादिजायमानगोधूमाद्यन्नाढ्यान् देशान् यास्यन्ति। वैच.

**[2]वेदमार्गे प्रलीने च पाषण्डाढ्ये ततो जने।**
**अधर्मवृद्ध्या लोकानामल्पमायुर्भविष्यति।।**
**[3]अशास्त्रविहितं घोरं तप्यमानेषु वै तपः।**
**नरेषु नृपदोषेण बालमृत्युर्भविष्यति।।**
**भवित्री योषितां सूतिः पञ्चषट्सप्तवार्षिकी।**
**नवाष्टदशवर्षाणां मनुष्याणां तथा कलौ।।**
**पलितोद्गमश्च भविता तदा द्वादशवार्षिकः।**
**नाति जीवति वै कश्चित्कलौ वर्षाणि विंशतिम्।।**

विंशतिं वर्षाण्यतिक्रम्य कश्चिन्न जीविष्यति। वैच.

---

(१) **विष्णु.** ६।१।३८; **मुक्ता.** १२ कर (भय) ढ्यान्देशान् (**ढ्यं देशं**); **आन.** १८ कर (क्षय).

(२) **विष्णु.** ६।१।३९; **मुक्ता.** १२ च (तु) वृद्ध्या (वृत्त्या); **आन.** १८ मुक्तावत्.

(३) **विष्णु.** ६।१।४०-४३.

**अल्पप्रज्ञा वृथालिङ्गा दुष्टान्तःकरणाः कलौ।**
**यतस्ततो विनङ्क्ष्यन्ति कालेनाल्पेन मानवाः।।**
**[1]यदा यदा हि पाषण्डवृद्धिर्मैत्रेय लक्ष्यते।**
**तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः।।**

कलेः प्राबल्ये लिङ्गान्याह – यदेति पञ्चभिः। वैच.

**[2]यदा यदा सतां हानिर्वेदमार्गानुसारिणाम्।**
**तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः।।**

सतां धर्मनिष्ठाहानिरित्यर्थः, सतामेव धर्मव्यपस्थापनाधिकृतत्वात्। 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते।।' इति भगवदुपदेशादित्यर्थः। कलौ तादृशाः सन्तोऽपि धर्ममार्गात् च्यवन्त इति यावत्। आन. १७

**[3]प्रारम्भाश्चावसीदन्ति यदा धर्मकृतां नृणाम्।**
**तदाऽनुमेयं प्राधान्यं कलेर्मैत्रेय पण्डितैः।।**
**यदा यदा न यज्ञानामीश्वरः पुरुषोत्तमः।**
**इज्यते पुरुषैर्यज्ञैस्तदा ज्ञेयं कलेर्बलम्।।**
**[4]न प्रीतिर्वेदवादेषु पाषण्डेषु यदा रतिः।**
**कलेर्वृद्धिस्तथा प्राज्ञैरनुमेया द्विजोत्तमैः।।**
**[5]कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम्।**
**नार्चयिष्यन्ति मैत्रेय पाखण्डोपहता नराः।।**
**किं देवैः किं द्विजैर्वेदैः किं शौचेनाम्बुजन्मना।**
**इत्येवं विप्रवक्ष्यन्ति पाषण्डोपहता जनाः।।**

अम्बुजन्मना जलकृतेन शौचेन किम्?(इति) विप्रवक्ष्यन्ति विरुद्धं प्रकर्षेण वदिष्यन्ति। वैच.

**अल्पवृष्टिस्तु पर्जन्यः सस्यं त्वल्पफलं तथा।**
**फलं तथाऽल्पसारं च विप्र प्राप्ते कलौ युगे।।**

अल्पसारम् अल्पबीजम्। वैच.

---

(१) **विष्णु.** ६।१।४४; **मुक्ता.** ३०७.

(२) **विष्णु.** ६।१।४५; **पमा.** १।११५; **मुक्ता.** १२; **आन.** १७.

(३) **विष्णु.** ६।१।४६-४७.

(४) **विष्णु.** ६।१।४८; **पमा.** १।११६ यदा रतिः (दयारसः) तृतीयचरणे (तदा तदा कलेर्वृद्धिः).

(५) **विष्णु.** ६।१।४९-५३.

**शाणीप्रायाणि वस्त्राणि शमीप्राया महीरुहाः।**
**शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे।।**

शाणी शणसूत्रजं वस्त्रम्। वैच.

**अणुप्रायाणि धान्यानि आजप्रायं तथा पयः।**
**भविष्यति कलौ प्राप्ते औशीरं चानुलेपनम्।।**

अणुः चीनकं धान्यम्। आजम् अजादुग्धम्, तत्सदृशं गवां पयः। उशीरं सुगन्धि तृणविशेषः, तज्जन्यमौशीरम्। वैच.

[१]**श्वश्रूश्वशुरभूयिष्ठा गुरवश्च नृणां कलौ।**
**श्यालाद्या हारिभार्याश्च सुहृदो मुनिसत्तम।।**

(१) स्यालाद्याहार्याः, (वर्गीया इत्यर्थः?) हर्तुं योग्याः हार्याः। हार्याः भार्या येषां ते तथोक्ताः। माहिषिका इत्यर्थः। त एव सुहृद इत्यन्वयः। आन. १८

(२) श्यालाद्याः भार्याभ्रात्रादयः हारिण्यो हृद्या भार्याश्च। बहुव्रीहिर्वा रम्यभार्येषु नृषु जाराणां सख्यं भावीत्यर्थः। वैच.

[२]**सर्वे ब्रह्म वदिष्यन्ति संप्राप्ते तु कलौ युगे।**
**नानुतिष्ठन्ति मैत्रेय शिश्नोदरपरायणाः।।**
[३]**मुखं दग्धं परान्नेन हस्तौ दग्धौ प्रतिग्रहात्।**
**मनो दग्धं परस्त्रीभिर्ब्रह्मशापः कुतः कलौ।।**
[४]**कस्य माता पिता कस्य यदा कर्मात्मकः पुमान्।**
**इति चोदाहरिष्यन्ति श्वशुरानुगता नराः।।**

कर्मात्मकः कर्माधीनशरीरः। वैच.

[५]**वाङ्मनःकायिकैर्दोषैरभिभूताः पुनःपुनः।**
**पापान्यनुदिनं चैव करिष्यन्त्यल्पमेधसः।।**
**निःसत्यानामशौचानां निर्ह्रीकाणां तथा नृणाम्।**
**यद्यद्दुःखाय तत्सर्वं कलिकाले भविष्यति।।**

यद्यद्वस्तु तत्सर्वं दुःखाय भविष्यति। वैच.

---

(१) **विष्णु.** ६।१।५४; **मुक्ता.** १२ शालाद्या हारि (स्याला-द्याहार्य); **आन.** १८ मुक्तावत्.

(२) **मुक्ता.** १२; **आन.** १७.

(३) **मुक्ता.** १२; **आन.** १७ शापः (तेजः).

(४) **विष्णु.** ६।१।५५; **मुक्ता.** १२ यदा (सदा) नुगता (दिगता); **आन.** १८ मुक्तावत्.

(५) **विष्णु.** ६।१।५६-५७.

[१]**निःस्वाध्यायवषट्कारे स्वधास्वाहाविवर्जिते।**
**तदा प्रविरलो विप्र क्वचिल्लोको भविष्यति।।**

क्वचित् कीकटादौ। वैच.

[२]**तदाऽल्पेनैव यत्नेन पुण्यस्कन्धमनुत्तमम्।**
**करोति यं कृतयुगे क्रियते तपसा हि सः।।**

तत्र कलौ अल्पेनाऽऽयासेन यत्नेन हरिकीर्तनादिना यं पुण्यराशिं करोति स हि कृतयुगे तपसा महता क्रियते। 'यः' इति पाठे यः कोऽपि अतिमलिनोऽपीत्यर्थः। अनेनैकेन गुणेन कलिः सर्वश्रेष्ठ इत्यर्थः। वैच.

कृतादौ गुरुधर्मसाध्यं फलं कलौ लघीयसा
धर्मेण साध्यते, तत्रापि केशवनाम-
संकीर्तनं महाफलदम्

**पराशर उवाच –**

[३]**व्यासः प्राह महाबुद्धिर्यदत्रैव हि वस्तुनि।**
**तच्छ्रूयतां महाभाग गदतो मम तत्त्वतः।।**

अत्र अयत्नसाध्यमहापुण्ये वस्तुनि विषये। वैच.

**कस्मिन्कालेऽल्पको धर्मो ददाति सुमहत्फलम्।**
**मुनीनामप्यभूद्वादः कैश्चासौ क्रियते सुखम्।।**

वादः विचारः। कैः अधिकारिभिः। असौ धर्मः। सुखम् अनायासेन। वैच.

**संदेहनिर्णयार्थाय वेदव्यासं महामुनिम्।**
**ययुस्ते संशयं प्रष्टुं मैत्रेय मुनिपुंगवाः।।**

संशयं संदेहविषयमर्थं प्रष्टुं ययुः। वैच.

**ददृशुस्ते मुनिं तं तु जाह्नवीसलिले द्विज।**
**वेदव्यासं महाभागमर्धस्नातं सुतं मम।।**
**स्नानावसानं ते तस्य प्रतीक्षन्तो महर्षयः।**
**तस्थुस्तटे महानद्यास्तरुषण्डमुपाश्रिताः।।**

स्नानस्य अवसानं समाप्तिं प्रतीक्षन्तः वृक्षसमाश्रिताः तस्थुः। वैच.

---

(१) **विष्णु.** ६।१।५८; **मुक्ता.** १२ विप्र (धर्मः) को भविष्यति (केऽपि वत्स्यति); **आन.** १८ मुक्तावत्: २० मुक्तावत्, उत्त., पराशरस्मरणम्.

(२) **विष्णु.** ६।१।५९; **मुक्ता.** १२ तदाऽ(तत्रा) यं (तं) सः (यः).

(३) **विष्णु.** ६।२।१-७.

**मग्नोऽथ जाह्नवीतोयादुत्थायाऽऽह सुतो मम।**
**व्यासः साधुः कलिः साधुरित्येवं शृण्वतां वचः।।**

उत्थाय उन्मज्ज्य तेषां शृण्वतां 'कलिः साधुः साधुः' इत्येवं वचो व्यास आहेत्यन्वयः। तदेव(म)पृष्टेनापि व्यासेन 'कस्मिन् काले स्वल्पायासेनापि महत्फलम्' इत्येतत्प्रश्नोत्तरतया कलेः साधुत्वमुक्तम्। वैच.

**तेषां मुनीनां भूयश्च ममज्ज स नदीजले।**
**उत्थाय स पुनर्व्यासः शूद्र धन्योऽसि चाब्रवीत्।।**

अत्र कलेरतिशयसाधुत्वं शूद्रस्य तद्धन्यतरत्वं स्त्रीणां तद्धन्यतमत्वं च गङ्गायामघमर्षणे भगवद्ध्यानेन प्रतीतमिति ज्ञापयितुं पुनर्निमज्जनोन्मज्जनमिति ज्ञेयम्। वैच.

**[1]यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत्।**
**द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ।।**
**[2]तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः।**
**प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम्।।**

(१) तपःप्रभृतीनां यत्फलं दशभिर्वर्षैः पुरुषः प्राप्नोति तत्फलं त्रेतायां हायनेन प्राप्नोतीत्यन्वयः। एवमग्रेऽपि। पप्र. ५०

(२) कलावल्पेन कालेन ब्रह्मचर्यस्य जपादेरधिकं फलं वदन् ब्रह्मचर्यादिप्रधानस्य पारिव्रज्यस्य कलावनुष्ठेयत्वं सूचयति। यसं. ३

(३) कलौ स्वल्पकालेन धर्मोत्कर्ष इति ध्यायन् कृते इति द्वाभ्यां स्वल्पायासेन पुण्योत्कर्ष इति च कलेः साधुत्वमुक्तम्। हायनेन वर्षेण। वैच.

**[3]ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।**
**यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्।।**

**'धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ।**
**स्वल्पायासेन धर्मज्ञास्तेन तुष्टोऽस्म्यहं कलौ।।**
**अल्पेनैव प्रयत्नेन धर्मः सिध्यति वै कलौ।**
**नरैरात्मगुणाम्भोभिः क्षालिताखिलकिल्बिषैः।**
**शूद्रैश्च द्विजशुश्रूषातत्परैर्मुनिसत्तमाः।।**
**धर्मसंसाधने क्लेशो द्विजातीनां कृतादिषु।।**

अशेषप्रश्नस्योत्तरस्योपसंहारः – अल्पेनेति चतुर्भिः। आत्मनः स्वस्य गुणैः धर्मसाधनैः हरिकीर्तनादिभिः अम्भोभिः क्षालितं मार्जितमखिलं किल्बिषं यैस्तैः नरैः कर्तृभिः धर्मः सिध्यति। वैच.

**अत्यन्तदुष्टस्य कलेरयमेको महान् गुणः।**
**कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्।।**

कलेश्चतुःशताधिकचतुःसहस्राब्द्यां
गतायां श्रौताधानसंन्यासौ
न कर्तव्यौ

**[1]चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च।**
**कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः।**
**संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता।।**

## विष्णुधर्मोत्तरपुराणम्

कृतादिषूत्तरोत्तरं धर्मायुषोर्ह्रासः क्रमेण ब्राह्मणादिवर्णप्राधान्यं विष्णोर्वर्णभेदाश्च, वेदविभाजनम्, कलिप्रयुक्तलोकवृत्तानि, कलौ स्वल्पेन कर्मणा फलसिद्धिः

**[2]चतुष्पात्सकलो धर्मस्तथा ब्रह्मोत्तरं जगत्।।**
**श्वेतवर्णो हरिर्देवो ज्ञाननित्याश्च मानवाः।**
**चत्वार्यब्दसहस्राणि तेषामायुः प्रकीर्तितम्।।**
**समानवीर्याश्च नरास्तत्र नास्त्यधरोत्तरम्।**
**त्रिपादविग्रहो धर्मो राम त्रेतायुगे तदा।।**
**केशवे रक्ततां याते नरा दशशतायुषः।**
**यज्ञे शुभे प्रवर्तन्ते नित्यं हिंसात्मकेषु च।।**

---

(१) **विष्णु.** ६।२।१५; **स्मृच.** १।२८ तत् (तु); **कृर.** १२; **स्मृसा.** ६६; तत् (यत्) अत्र्यङ्गिरसौ; **पप्र.** ५०; **स्मृतिकौ.** ४६९ तत् (तु) तच्च (तत्तु) वैष्णवब्रह्माण्डयोः; **यसं.** ३ तच्च (तत्तु); **पुम.** ४६७ स्मृतिकौवत्; **कृभ.** १३१३ तत् (यत्) तच्च (तत्तु).

(२) **विष्णु.** ६।२।१६; **कृर.** १२ साध्विति भाषितम् (साधुरिहोच्यते); **पप्र.** ५० कृरवत्; **यसं.** ३.

(३) **विष्णु.** ६।२।१७; **कृर.** १२; **स्मृसा.** ६६ अत्र्यङ्गिरसौ; **निप्र.** १।२३७ विष्णुधर्मोत्तरे; **गप.** २५ विष्णुधर्मोत्तरे; **यसं.** १२६; **यप्र.** १०५; **कृभ.** १३१४.

(१) **विष्णु.** ६।२।१८, ३४, ३६, ३९-४०.

(२) **यप्र.** १०९ वैष्णववचनम्.

(३) **विध.** १।७३।१७-३४.

जगत्क्षत्रोत्तरं चैव तदा भवति भार्गव।
द्विपादविग्रहो धर्मः पीततामच्युते गते।।
समाः शतानि चत्वारि तदा जीवन्ति मानवाः।
युद्धशौण्डा महोत्साहा लोका वैश्योत्तरास्तदा।।
जायन्ते शास्त्रभेदाश्च मतिभेदास्तथैव च।
स्वल्पमायुर्नृणां बुद्ध्वा विष्णुर्मानुषरूपधृक्।।
एकमेव यजुर्वेदं चतुर्धा व्यभजत्पुनः।
तस्य शिष्यप्रशिष्याश्च वेदमेकं पुनःपुनः।।
शाखाभेदसहस्रेण विभजन्ति द्विजोत्तमाः।
एकपादस्थिते धर्मे कृष्णतां केशवे गते।।
धर्मभेदे समुत्पन्ने देवतानामनिश्चये।
न विद्यते तदा राम आयुषस्तु विनिश्चयम्।।
गर्भस्थाश्च म्रियन्तेऽत्र बाल्ययौवनगास्तथा।
शूद्रोत्तरस्तदा लोकस्तिष्ये भवति भार्गव।।
सुरप्रतिष्ठा धर्मश्च तदा भवति भूतले।
पापिष्ठो वर्धते राम धर्मिष्ठः क्षीयते तदा।।
राजानः शूद्रभूयिष्ठाश्चौराश्चार्थोपजीविनः।
ब्राह्मणाः सर्वभक्ष्याश्च भवन्ति भृगुनन्दन।।
धर्मनिष्ठश्चिरं राजा न तदा राम जीवति।
तस्मिन्काले सुकृतिनां भक्तिर्भवति केशवे।।
तेषामल्पेन कालेन तोषमायाति केशवः।
धन्याः कलियुगे राम तपस्तप्स्यन्ति मानवाः।।
तपसाऽल्पेन ते सिद्धिं प्राप्स्यन्तीति च निश्चयः।।

कृते प्रत्यक्षदेवपूजनम्, त्रेताद्वापरयोः प्रत्यक्षे प्रतिमाप्रतिष्ठापिते देवे पूजनम्, कलौ प्रतिमाप्रतिष्ठापितमात्रदेवपूजनम्, कृतादौ पुष्करादिसेव्यतीर्थभेदः

**मार्कण्डेय उवाच –**

'कृते तु देवायतने विधानं नाभवत्क्षितौ।
केवलं हि तदा ह्यासीत्प्रत्यक्षेण नराधिप।।
प्रत्यक्षेणापि दृश्यन्ते त्रेताद्वापरयोर्जनाः।
देवानां प्रतिमाः कृत्वा पूजयन्ति यथाविधिम्।।
गृहे प्रतिष्ठा तत्रापि त्रेतायां तु प्रवर्तिता।
द्वापरे चाप्यरण्येषु ऋषिभिस्तु ततः कृता।।
तेषां संपूजनं नित्यं सिद्धैस्तु क्रियते नृप।
प्रतिष्ठामात्रकरणान्निर्वृता ऋषयस्तु ते।।
कलौ प्रवृत्तः सर्वोऽयं प्रतिष्ठाकरणो जनः।
ज्ञानं परं कृतयुगे त्रेतायां च तपः परम्।।
द्वापरे तु तथा ज्ञेयं प्रतिष्ठा तु कलौ युगे।
देवतावेश्मपूर्वाणि नगराणि कलौ युगे।।
कर्तव्यानि महीपालैः स्वर्गलोकमभीप्सुभिः।
राजा तु सर्वनगरं न कुर्यान्नृपसत्तम।।
यो न राजा हतो युद्धे स पुरं कर्तुमर्हति।
रूपकं च सुनामाख्यं कुर्याद्राजा तथाप्यसौ।।
दुर्गं सर्वेण कर्तव्यं राज्ञा भूपतिसत्तम।
भूमिदानादिभिर्यस्तु कुर्यात्सुविहितं मुदा।।
प्रतिष्ठां सकलां कुर्यादन्यथा पापभाग्भवेत्।
तत्कृतायां सुरार्चायामनिष्टं स्यात्कलौ युगे।।
कृतं तु तदनिष्टं स्याज्जन्मान्तरशतेष्वपि।
कृतत्रेताद्वापरेषु प्रतिष्ठाकरणात्फलम्।।
यस्मात्तेषु कृतामर्चां सिद्धाः संपूजयन्त्यलम्।
कलौ कृतायामर्चायां सिद्धपूजा न विद्यते।।
तस्मात्सुविहितां कुर्याद्भूमिदानादिभिः कलौ।
येन राज्ञा हतो राजा नान्यो युधि भवेत्कलौ।।
प्रतिष्ठा तेन कर्तव्या नगरे पूर्वनिर्मिते।
अनुज्ञां नृपतेः प्राप्य कुर्यादन्योऽपि यादव।।
स्थिरां प्रतिष्ठां गृह्यायां नृपानुज्ञानकारणम्।
परप्रणीतां यस्त्वर्चां स कुर्यात्पुनरेव तु।।
विधानं भूमिदानाद्यं कुर्यात्तत्र न शक्तितः।
द्विगुणं फलमाप्नोति कुलं चैव समुद्धरेत्।।
कृत्वा सुविहितामर्चां प्रतिष्ठाप्य यथाविधि।
इष्टापूर्तेन धर्मेण नरो युज्यत्यसंशयम्।।
राजसूयाश्वमेधानां फलेन च नराधिप।
कृते त्रेतायुगे राजन्द्वापरे च नरोत्तमाः।।
आगच्छन्ति नृलोकेऽस्मिन्सशरीरा दिवौकसः।
नाऽऽगच्छन्ति कलौ यस्मात्सशरीराः कथंचन।।
आगच्छन्ति प्रतिष्ठासु द्विजैरावाहितास्ततः।
तस्मात्कलौ प्रयत्नेन प्रतिष्ठां कारयेद्बुधः।।

(१) विध. ३।९३।१-२४.

**अर्चास्थैस्त्रिदशैर्लोकः कलौ सर्वो हि पाल्यते।**
**अर्चागताश्च गृह्णन्ति कृतदेवप्रतिष्ठिताः।।**
**तस्मात्कलौ प्रयत्नेन प्रतिष्ठाकरणं हितम्।**
**यत्नात्सुविहितं कुर्याद्भूमिदानादिभिः सदा।।**
**इष्ट्वा यज्ञैर्यथा यान्ति मानवास्त्रिदिवालयम्।**
**तथैव राजन् गच्छन्ति कृतदेवप्रतिष्ठकाः।।**
**तस्मात्कलौ प्रतिष्ठानं कर्तव्यं भूरिदक्षिणम्।**
**[1]कलौ यच्छन्ति ये विष्णोस्तुलसीकाष्ठचन्दनम्।**
**विष्णुप्रीतिकरं मर्त्या उत्तरां यान्ति ते भुवम्।।**
**[2]पुष्करं तु कृते सेव्यं त्रेतायां नैमिषं तथा।**
**द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत्।।**

स सम्यक् तीर्थान्तरप्रयुक्तं फलं दातुं गङ्गैव प्रभवतीति निश्चयेन यावज्जीवं न त्यजेदित्यर्थः।

स्मृतिकौ. ४६९

## श्रीमद्भागवतपुराणम्

राज्ञा परीक्षिता वृषरूपितं धर्मं जिघांसुं कलिं जिघांसुना शरणागताय कलये निवास-स्थानानि द्यूतादीनि प्रदत्तानि

**सूत उवाच –**

**[3]तत्र गोमिथुनं राजा हन्यमानमनाथवत्।**
**दण्डहस्तं च वृषलं ददृशे नृपलाञ्छनम्।।**

हन्यमानं ताड्यमानम्। श्रीटी.

**वृषं मृणालधवलं मेहन्तमिव बिभ्यतम्।**
**वेपमानं पदैकेन सीदन्तं शूद्रताडितम्।।**

मृणालं पद्मकन्दः, तद्वद्धवलम्। भयान्मेहन्तं मूत्रयन्तमिवेत्यनेन पादावशेषो धर्मो भयान्मूत्रयन्निव प्रतिक्षणं क्षीयमाणांशस्तस्याप्यनिर्वाहात्कम्पमान इवेति दर्शितम्। श्रीटी.

**गां च धर्मदुघां दीनां भृशं शूद्रपदाहताम्।**
**विवत्सां साश्रुवदनां क्षामां यवसमिच्छतीम्।।**

धर्मदुघां हविर्दोग्ध्रीम्। क्षामां कृशाम्। यवसं तृणम् अत्र सस्यादिप्रसवक्षयाद्विवत्सेव। यज्ञाद्यभावात्कृशा, अत एव यज्ञभागमिच्छन्ती पृथ्वीति सूचितम्। श्रीटी.

**पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम्।**
**मेघगम्भीरया वाचा समारोपितकार्मुकः।।**

कार्तस्वरं सुवर्णम्, तन्मयः परिच्छदः परिकरः यस्य। स्वर्णनिबद्धमित्यर्थः। सज्जीकृतकार्मुकः। श्रीटी.

**कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान्बली।**
**नरदेवोऽसि वेषेण नटवत्कर्मणाऽद्विजः।।**

हंसि घातयसि। राजाऽहमिति चेत्तत्राऽऽह – नट इव वेषमात्रेण नरदेवोऽसि, कर्मणा तु अद्विजः शूद्रः। श्रीटी.

**कस्त्वं कृष्णे गते दूरं सह गाण्डीवधन्वना।**
**शोच्योऽस्यशोच्यान् रहसि प्रहरन् वधमर्हसि।।**

अशोच्यान् निरपराधान् रहसि यस्त्वं प्रहरन् प्रहरसि स शोच्यः सापराधः असि, अतो वधमर्हसि। श्रीटी.

**त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन्।**
**वृषरूपेण किं कश्चिद्देवो नः परिखेदयन्।।**

वृषं प्रत्याह– त्वं वा कः? स्वयमेव संभावयति– किं कश्चिद्देवो वृषरूपेणास्मान् परिखेदयन् वर्तसे? श्रीटी.

**न जातु पौरवेन्द्राणां दोर्दण्डपरिरम्भिते।**
**भूतलेऽनुपतन्त्यस्मिन्विना ते प्राणिनां शुचः।।**

दोर्दण्डैः परिरम्भिते परिरम्भितवत्सुरक्षिते ते शुचः अश्रूणि विनाऽन्येषामश्रूणि नानुपतन्तीति खेदहेतुत्वं दर्शितम्। श्रीटी.

**मा सौरभेयानुशुचो व्येतु ते वृषलाद्भयम्।**
**मा रोदीरम्ब भद्रं ते खलानां मयि शास्तरि।।**

एवमुक्ते पुनरपि शोचन्तं प्रत्याह – भोः सुरभेः पुत्र, मा शुचः शोकं मा कुरु। व्येतु अपयातु। गां प्रत्याह – अम्ब मातः शास्तरि मयि जीवति सति ते भद्रमेव, अतो मा रोदीः। श्रीटी.

**तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः।**
**अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव।।**

---

(१) **चमव्याआ.** ४९; **आम.** ६५.

(२) **स्मृच.** १।२८ मिषं (मिशं); **स्मृतिकौ.** ४६९; **पुम.** ४६७; **कृभ.** १३१६ कौर्मे.

(३) **भाग.** १।१७।१-९, २४-३१.

धर्मोऽसाविति ज्ञात्वा तस्य पादानुवादेन व्यवस्थामाह – तप इति द्वाभ्याम्। अधर्मपादैस्तव त्रयः पादास्त्रिभिरंशैर्भग्नाः। स्मयः विस्मयः। श्रीटी.

**इदानीं धर्म पादस्ते सत्यं निर्वर्तयेद्यतः।**
**तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः।।**

इदानीं कलौ हे धर्म, ते पादः चतुर्थोऽशः। तत्रापि सत्यमेवास्ति, यतः सत्याद्भवानात्मानं निर्वर्तयेत् कथंचित् धारयेत्। यद्वा पुरुषस्त्वां साधयेत्। तमपि पादमनृतेन संवर्धितः कलिरूपोऽयमधर्मो ग्रहीतुमिच्छति। तत्रेयं स्थितिः – कृतयुगे प्रथमं संपूर्णः चतुष्पाद्धर्मः, त्रेतायां चतुर्णामपि पादानां मध्ये स्मयेन तपः सङ्गेन शौचं मदेन दया अनृतेन सत्यमित्येवं चतुर्थांशो हीयते, द्वापरे त्वर्धम्, कलौ चतुर्थोऽशोऽवशिष्यते, सोऽप्यन्ते नङ्क्ष्यतीति।

श्रीटी.

**इयं च भूर्भगवता न्यासितोरुभरा सती।**
**श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका।।**

न्यासितः अन्योन्यद्वारेणावतारितः उरुः भरः भारः यस्याः। कृतं कौतुकं मङ्गलं यस्याः सा।

श्रीटी.

**शोचत्यश्रुकला साध्वी दुर्भगेवोज्झिताऽधुना।**
**अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यन्ति मामिति।।**

अश्रूणि कलयति मुञ्चतीत्यश्रुकला। तेन त्यक्ता सती 'शूद्रा भोक्ष्यन्ति माम्' इति शोचति। श्रीटी.

**इति धर्मं महीं चैव सान्त्वयित्वा महारथः।**
**निशातमाददे खड्गं कलयेऽधर्महेतवे।।**

निशातं निशितम्। अधर्मस्य हेतुर्यः कलिस्तं हन्तुमित्यर्थः। श्रीटी.

**तं जिघांसुमभिप्रेत्य विहाय नृपलाञ्छनम्।**
**तत्पादमूलं शिरसा समगाद्भयविह्वलः।।**

अभिप्रेत्य ज्ञात्वा। श्रीटी.

**पतितं पादयोर्वीक्ष्य कृपया दीनवत्सलः।**
**शरण्यो नावधीच्छ्लोक्य आह चेदं हसन्निव।।**

शरण्यः आश्रयार्हः। श्लोक्यः सत्कीर्त्यर्हः।

श्रीटी.

**राजोवाच –**

**न ते गुडाकेशयशोधराणां**
**बद्धाञ्जलेर्वै भयमस्ति किंचित्।**
**न वर्तितव्यं भवता कथंचन**
**क्षेत्रे मदीये त्वमधर्मबन्धुः।।**

गुडाकेशः अर्जुनः, तस्य यशोधरा ये वयं तेषां तान् प्रति बद्धोऽञ्जलिर्येन तस्य ते। किंतु कथंचन केनाप्यंशेन न वर्तितव्यम्, यस्मात्त्वमधर्मस्य बन्धुः। श्रीटी.

**[1]त्वां वर्तमानं नरदेवदेहे -**
**ष्वनुप्रवृत्तोऽयमधर्मपूगः।**
**लोभोऽनृतं चौर्यमनार्यमंहो**
**ज्येष्ठा च माया कलहश्च दम्भः।।**

(१) तदेवाऽऽह – राजदेहेषु वर्तमानं त्वामनु सर्वतः प्रवृत्तः। अनार्यं दौर्जन्यम्। अंहः स्वधर्मत्यागः। ज्येष्ठा अलक्ष्मीः। माया कपटम्। श्रीटी.

(२) भागवते कलिं प्रति परीक्षितवाक्यम् – त्वामिति। ज्येष्ठा अलक्ष्मीः लक्ष्म्यग्रजत्वात्।

*आत. ३५२

**[2]न वर्तितव्यं तदधर्मबन्धो**
**धर्मेण सत्येन च वर्तितव्ये।**
**ब्रह्मावर्ते यत्र यजन्ति यज्ञै –**
**र्यज्ञेश्वरं यज्ञवितानविज्ञाः।।**

तत् तस्मात् धर्मेण सत्येन च वर्तितव्ये वर्तितुमर्हे ब्रह्मावर्ते देशे। यज्ञस्य वितानं विस्तारः, तत्र विज्ञाः निपुणाः।

श्रीटी.

**यस्मिन्हरिर्भगवानिज्यमान**
**इज्यामूर्तिर्यजतां शं तनोति।**
**कामानमोघान् स्थिरजङ्गमाना –**
**मन्तर्बहिर्वायुरिवैष आत्मा।।**

इज्या यागः, तद्रूपा मूर्तिर्यस्य। शं क्षेमं कामांश्च। नन्विन्द्रादयो देवा इज्यन्ते, न तु हरिः, तत्राऽऽह – एष स्थावरादीनामात्मेति। तथापि जीववन्न परिच्छिन्न इत्याह

---

* शेषं श्रीटीगतम्।

(१) **भाग.** १।१७।३२; **आत.** ३५२.

(२) **भाग.** १।१७।३३-३७.

– अन्तर्बहिरिति। यथा वायुः प्राणरूपेणान्तःस्थोऽपि बहिरप्यस्ति तद्वत्सर्वान्तर्यामीश्वरोऽपीति। श्रीटी.

सूत उवाच –

**परीक्षितैवमादिष्टः स कलिर्जातवेपथुः।**
**तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम्।।**

उद्यतासिम् उद्धृतखड्गम्। दण्डपाणिं यमम्। उद्यतम् उद्युक्तम्। श्रीटी.

**कलिरुवाच –**

**यत्र क्वचन वत्स्यामि सार्वभौम तवाऽऽज्ञया।**
**लक्षये अत्र तत्रापि त्वामात्तेषुशरासनम्।।**

अत्र न वस्तव्यमिति या तवाऽऽज्ञा तया यत्र क्वापि वत्स्यामि, किंतु तत्र तत्रापि आत्तः गृहीतः इषुः शरासनं च येन तं त्वामेव लक्षये। श्रीटी.

**तन्मे धर्मभृतां श्रेष्ठ स्थानं निर्देष्टुमर्हसि।**
**यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम्।।**

तत् तस्मात्। नियतः निश्चलः। वत्स्ये वत्स्यामि। श्रीटी.

सूत उवाच –

**[१]अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ।**
**द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः।।**

(१) पानं मद्यादेः। सूनाः प्राणिवधाः। द्यूतेऽनृतम्, पाने मदः। पूर्वं मदो दयानाशकत्वेनोक्तः, अत्र तु गर्वद्वारा तपोनाशकत्वेन। स्त्रीषु सङ्गः, हिंसायां क्रौर्यं दयानाशकमिति ज्ञेयम्। यद्यपि सर्वं सर्वत्र संभवति तथापि प्राधान्येनानृतादीनां द्यूतादिषु यथासंख्यं ज्ञेयम्। द्वादशस्कन्धे तु 'सत्यं दया तपो दानमिति पादा विभोर्नृप' इत्यत्र दानशब्देन शौचमेवोक्तम्, मनःशुद्धिरूपत्वाद्भूताभयदानस्य। 'त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः। अधर्मपादैरनृतहिंसासंतोषविग्रहैः।।' इत्यत्र चासंतोषशब्देन तस्य हेतुर्गर्वो लक्ष्यते, विग्रहशब्देन च तद्धेतुः स्त्रीसङ्गः इत्यविरोधः। श्रीटी.

(२) अभ्यर्थितः तन्निगृहीतेन कलिना स्थानलाभाय प्रार्थितः। आत. ३५२

**[२]पुनश्च याचमानाय जातरूपमदात्प्रभुः।**
**ततोऽनृतं मदं कामं रजो वैरं च पञ्चमम्।।**

चतुर्विधस्याप्येकत्रैवावस्थानं देहीति पुनर्याचमानाय जातरूपं सुवर्णं दत्तवान्। ततः सुवर्णदानात् अनृतम्, मदम्, काममिति स्त्रीषु सङ्गम्, रज इति रजोमूलां हिंसामेतानि चत्वारि पञ्चमं वैरं चाददिति। + श्रीटी.

**[३]अमूनि पञ्च स्थानानि ह्यधर्मप्रभवः कलिः।**
**औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत्।।**

औत्तरेयेण परीक्षिता। अमूनि अमीषु स्थानेषु न्यवसदित्यर्थः। श्रीटी.

**[४]अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित्।**
**विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः।।**

अथ इति हेतोः। बुभूषुः उद्भवितुमिच्छुः। स्त्रीसुवर्णयोरसेवनं नाम तयोरनासक्तिः। + श्रीटी.

**[५]वृषस्य नष्टांस्त्रीन् पादांस्तपः शौचं दयामिति।**
**प्रतिसंदध आश्वास्य महीं च समवर्धयत्।।**

एवं कलिं निगृह्य वृषस्य पादान् प्रतिसंदधे तपआदीनि प्रवर्तितवानित्यर्थः। श्रीटी.

कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ, कलौ
अर्हन्नामा राजा वेदादिदूषक-
पाषण्डप्रवर्तकः

**[५]धर्मश्चतुष्पान्मनुजान्कृते समनुवर्तते।**
**स एवान्येष्वधर्मेण व्येति पादेन वर्धता।।**

चतुष्पात् संपूर्णः त्रेतादिषु पादेन पादेन व्येति ह्रसति पादेन पादेन वर्धमानेनाधर्मेण हेतुना। एतच्च स्वरूपकथनमात्रं वैराग्यार्थम्, न तु धर्मसंकोचनार्थम्। श्रीटी.

**[६]यस्य किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां राजाऽर्हन्नामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन**

---

(१) **भाग.** १।१७।३८; **आत.** ३५२ ये ददौ (येऽदिशत्) सूना (शूना).

+ आत. श्रीटीगतम्।

(१) **भाग.** १।१७।३९; **आत.** ३५२.

(२) **भाग.** १।१७।४०.

(३) **भाग.** १।१७।४१; **आत.** ३५२ पू.

(४) **भाग.** १।१७।४२.

(५) **भाग.** ३।११।२१.

(६) **भाग.** ५।६।९-१०.

**विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथपाषण्डमसमञ्जसं निजमनीषया मन्दः संप्रवर्तयिष्यते।।**

अवधूतवेषेण ऋषभदेवस्तत्र गत इत्येतस्य सूचकमाह – यस्य किलाऽऽश्रमातीतमनुचरितं तद्देशवासिभ्य उपाकर्ण्य अर्हन्निति नाम यस्य स राजा स्वयं तत् उपशिक्ष्य शिक्षित्वा कुपथश्चासौ पाषण्डश्च तं निजमनीषया संप्रवर्तयिष्यत इत्यन्वयः। तत्र हेतुः – कलावित्यादि। भवितव्येन प्राणिपूर्वसंचितपापफलेन। श्रीटी.

**येन ह वाव कलौ मनुजापसदा देवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीना देवहेलनान्यपव्रतानि निजनिजेच्छया गृह्णाना अस्नानानाचमनाशौचकेशोल्लुञ्चनादीनि कलिनाऽधर्मबहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यन्ति।।**

येन प्रवर्तकेन मनुजेषु अपसदाः निकृष्टाः स्वविधिना नियोगो यस्मिन् शौचचारित्रे तद्विहीना देवावज्ञारूपाण्यस्नानादीनि कुव्रतानि गृह्णाना वेदादीनां विदूषका भविष्यन्ति। श्रीटी.

कृतादिषु क्रमेणेश्वरनामरूपोपासनाभेदाः,
सर्वफलानां हरिसंकीर्तनमात्र-
साधकत्वेन कलेः
प्रशंसा

**करभाजन उवाच –**

**'कृतं त्रेता द्वापरं च कलिरित्येषु केशवः।**
**नानावर्णाभिधाकारो नानैव विधिनेज्यते।।**

एषु कृतादिकालेषु नानाप्रकारा वर्णाभिधाकारा यस्य सः। नानैव विधिना विविधेनैव मार्गेण। श्रीटी.

**कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः।**
**कृष्णाजिनोपवीताक्षान् बिभ्रद्दण्डकमण्डलू।।**

तदेव वर्णादिचतुष्टयमाह – कृत इत्यादिना। कृष्णाजिनादीन्बिभ्रदिति ब्रह्मचारिवेषो दर्शितः। श्रीटी.

**मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः।**
**यजन्ति तपसा देवं शमेन च दमेन च।।**

तपसा ध्यानेन। श्रीटी.

(१) **भाग.** ११।५।२०-३०.

**हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः।**
**ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते।।**
**त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः।**
**हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः।।**

त्रिगुणा दीक्षाङ्गभूता मेखला यस्य स यज्ञमूर्तिः। हिरण्यकेशः पिशङ्गकेशः। श्रीटी.

**तं तदा मनुजा देवं सर्वदेवमयं हरिम्।**
**यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः।।**

त्रय्या विद्यया वेदत्रयोक्तकर्मभिः। श्रीटी.

**विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः।**
**वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते।।**

पृश्निगर्भः, पृश्निः सुतपसः प्रजापतेः पत्नी, तस्याः पुत्रः। वृषाकपिः स्मृतः सन्वर्षति कामानाकम्पयति क्लेशानिति तथा। जयत्येव सर्वदा जयन्तः। श्रीटी.

**द्वापरे भगवान् श्यामः पीतवासा निजायुधः।**
**श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः।।**

श्यामः अतसीपुष्पसंकाशः। निजानि चक्रादीन्यायुधानि च यस्य सः। श्रीवत्सो नाम वक्षसो दक्षिणभागे रोम्णां प्रदक्षिणावर्तः, स आदिर्येषां करचरणादिगतपद्मादीनां तैरङ्कैराङ्गिकैश्चिह्नैः लक्षणैर्बाह्यैः कौस्तुभादिभिः। श्रीटी.

**तं तदा पुरुषं मर्त्या महाराजोपलक्षणम्।**
**यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप।।**

महाराजोपलक्षणं छत्रचामरादियुक्तम्। वेदतन्त्राभ्यां वैदिकेनाऽऽगमिकेन च मार्गेण यजन्ति पूजयन्ति परम् ईश्वरं ज्ञातुमिच्छवः। श्रीटी.

**नमस्ते वासुदेवाय नमः संकर्षणाय च।**
**प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः।।**
**नारायणाय ऋषये पुरुषाय महात्मने।**
**विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः।।**

नामान्याह – नमस्त इति। श्रीटी.

**'इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरम्।**
**नानातन्त्रविधानेन कलावपि यथा श्रृणु।।**

(१) **भाग.** ११।५।३१; **आत.** ४१५ यथा (तथा) उत्त.

नानातन्त्रविधानेनेति कलौ तन्त्रमार्गस्य प्राधान्यं दर्शयति। श्रीटी.

**[१]कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम्।**
**यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः।।**

(१) रूक्षतां व्यावर्तयति। त्विषा कान्त्याऽकृष्णम् इन्द्रनीलमणिवदुज्ज्वलम्। यद्वा त्विषा कृष्णं कृष्णावतारम्। अनेन कलौ कृष्णावतारस्य प्राधान्यं दर्शयति। अङ्गानि हृदयादीनि उपाङ्गानि कौस्तुभादीनि अस्त्राणि सुदर्शनादीनि पार्षदाः सुनन्दादयः, तत्सहितम्। यज्ञैः अर्चनैः। संकीर्तनं नामोच्चारणं स्तुतिश्च, तत्प्रधानैः। सुमेधसः विवेकिनः। श्रीटी.

(२) कृष्णं कृष्णनामानम्। ततश्च कलौ कृष्णावतारस्य सेव्यत्वं ध्वन्यते। प्रायैरिति यज्ञादिस्वाचारमाचरद्भिरपि कालेषु संकीर्तननिष्ठैर्भवितव्यमित्याशयः। तांश्च कालाननुपदं वक्ष्यामः। स्मृतिकौ. ४७०

**[२]ध्येयं सदा परिभवघ्नमभीष्टदोहं**
**तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्।**
**भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं**
**वन्दे महापुरुष ते चरणारविन्दम्।।**

स्तुतिमाह – ध्येयमिति। हे प्रणतपाल हे महापुरुष, ते चरणारविन्दं वन्दे। कथंभूतम्? ध्येयं ध्यातुं योग्यम्। सदेति सर्वत्र संबध्यते। ध्येयत्वे हेतवः – इन्द्रियकुटुम्बादिभिर्यः परिभवः तिरस्कारः तं हन्तीति तथा, तत्। किंच, अभीष्टदोहं मनोरथपूरकम्। किंच, तीर्थास्पदं गङ्गाद्याश्रयत्वेन परमपावनम्। शिवविरिञ्चिभ्यां नुतं स्तुतं महत्तमम्। ननु तौ कृतार्थावेव किमर्थं ताभ्यां नुतम्? तत्राऽऽह – शरण्यम् आश्रययोग्यं सुखात्मकमित्यर्थः। तर्हि ब्रह्मादिस्तुत्यं प्राकृतस्य कथं गोचरः स्यात्? न, भृत्यार्तिहं यस्य कस्यापि भृत्यमात्रस्याऽऽर्तिहन्तृ। न केवलमागन्तुकार्तिमात्रं हन्ति, किंतु भवाब्धिपोतं संसारार्णवतारकं च। श्रीटी.

**त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं**
**धर्मिष्ठ आर्यवचसा यदगादरण्यम्।**
**मायामृगं दयितयेप्सितमन्वधाव –**
**द्वन्दे महापुरुष ते चरणारविन्दम्।।**

इदानीं स्वयमाप्तकामत्वान्नैरपेक्ष्यं भक्तार्थं च सापेक्षतां दर्शयन् श्रीरामचन्द्रं स्तौति – त्यक्त्वेति। अन्यैः सुदुस्त्यजा या सुरेप्सिता राज्यलक्ष्मीस्तां त्यक्त्वा। यदिति। य इत्यर्थः। योऽरण्यमगात्। किं राज्यवैकल्यदर्शनेन? न, धर्मिष्ठः। कुतः? आर्यस्य गुरोर्दशरथस्य वचसा। किंच, एवं राज्यं त्यक्त्वाऽपि भक्तवात्सल्येन दयितया सीतया ईप्सितं मायामृगं स्वर्णाकारं योऽन्वधावत् तस्य भगवतश्चरणारविन्दं वन्दे। यद्वा हे धर्मिष्ठेति संबोधनम्। तथापि *अविवक्षितत्वादार्यपदेन सन्धिर्न भवति। तथा यदगादिति चरणारविन्दमेवोच्यते। यन्मायामृगमन्वधावत्तत्ते चरणारविन्दं वन्द इत्यन्वयः। अन्यत्समानम्। श्रीटी.

**[१]एवं युगानुरूपाभ्यां भगवान्युगवर्तिभिः।**
**मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः।।**

युगानुरूपाभ्यां नामरूपाभ्याम्। श्रीटी.

**[२]कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः।**
**यत्र संकीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते।।**

(१) एतेषु चतुर्युगेषु कलिरेव श्रेष्ठ इत्याह - कलिमिति। गुणज्ञाः कलेर्गुणं जानन्ति ये ते। ननु दोषाणां बहुत्वात्कथं सभाजयन्ति? तत्राऽऽह – सारभागिनः गुणांशग्राहिणः। कोऽसौ गुणः? तमाह – यत्रेति। तदुक्तम् – 'ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्।।' इति। श्रीटी.

(२) संकीर्तनेनेति हरिसंकीर्तनेन इति व्याख्यातं हेमाद्रिणा। स्मृतिकौ. ४७०

---

(१) **भाग.** ११।५।३२; **स्मृतिकौ.** ४७० त्विषाऽकृ (त्विषा - कृ).

(२) **भाग.** ११।५।३३-३४; **आत.** ४१५-४१६.

* संहिताविवक्षायां संधिकार्यस्य नित्यत्वात् संहिताया अविवक्षितत्वादित्यर्थः।

(१) **भाग.** ११।५।३५; **आत.** ४१६ रूपाभ्यां (वृत्तिभ्यां) वर्तिभिः (वृत्तिभिः) रिज्यते (रीड्यते).

(२) **भाग.** ११।५।३६; **निप.** ३१ यत्र (कलौ) चतुर्थचरणे (सर्वस्वार्थोऽपि लभ्यते) उत्त. (=); **स्मृतिकौ.** ४६९-४७० भिल (पि ल).

**[1]न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह।**
**यतो विन्देत परमां शान्तिं नश्यति संसृतिः।।**

तस्मात्कलौ अतः अस्मात्संकीर्तनात् परमो लाभो नास्ति। यतः संकीर्तनात्। श्रीटी.

**कृतादिषु प्रजा राजन्कलाविच्छन्ति संभवम्।**
**कलौ खलु भविष्यन्ति नारायणपरायणाः।।**

किंच – कृतादिष्विति। श्रीटी.

**क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः।**
**ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी।।**
**कावेरी च महापुण्या प्रतीची च महानदी।**
**ये पिबन्ति जलं तासां मनुजा मनुजेश्वर।**
**प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः।।**

अमलाशयाः सन्तः प्रायः प्रायशः भगवति भक्ता भवन्ति। श्रीटी.

कलौ विश्वस्फूर्जिर्नाम राजा ब्राह्मणादिवर्णान्
पुलिन्दादिसंज्ञकान्म्लेच्छप्रायान् करिष्यति,
ततो म्लेच्छप्राया राजानः प्रजाः
पीडयिष्यन्ति, कलिप्रयुक्त-
प्रजावृत्तवर्णनम्

**[2]जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे।।**
**[3]मागधानां तु भविता विश्वस्फूर्जिः पुरंजयः।**
**करिष्यत्यपरो वर्णान्पुलिन्दयदुमद्रकान्।।**

ततश्च मागधानां तु राजा विश्वस्फूर्जिर्नाम भविता। स च पूर्वोक्तात्पुरंजयादपरः पुरंजय इति प्रसिद्धः सन्वर्णान् ब्राह्मणादीन् पुलिन्दयदुमद्रकसंज्ञान्म्लेच्छप्रायान्करिष्यति। अपरानिति पाठे अन्यान्पुलिन्दादिसंज्ञान्वर्णान्करिष्यतीत्यर्थः। श्रीटी.

**प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः।**
**वीर्यवान्क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि।**
**अनुगङ्गामाप्रयागं गुप्तां भोक्ष्यति मेदिनीम्।।**

किं चैवं कृत्वा अब्रह्मभूयिष्ठाः अत्रैवर्ण्यप्रचुराः सतीः प्रजाः स्थापयिष्यति पालयिष्यति। स च पद्मवत्यां पुरि वसन् अनुगङ्गां गङ्गाद्वारमारभ्य प्रयागपर्यन्तं गुप्तां पालितां मेदिनीं भोक्ष्यति। श्रीटी.

**सौराष्ट्रावन्त्यभीराश्च शूरा अर्बुदमालवाः।**
**व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः।।**

तदनन्तरं च सौराष्ट्रादिदेशवर्तिनो द्विजाः व्रात्याः उपनयनरहिताः भविष्यन्ति। श्रीटी.

**सिन्धोस्तटं चन्द्रभागां कौन्तीं काश्मीरमण्डलम्।**
**भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः।।**

अब्रह्मवर्चसः वेदाचारशून्याः। श्रीटी.

**तुल्यकाला इमे राजन्म्लेच्छप्रायाश्च भूभृतः।**
**एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः।।**

इमे च म्लेच्छप्राया भूभृतस्तुल्यकाला भविष्यन्ति। किंच, एते सर्वे अधर्मानृतपराः अधर्मेऽनृते च परिनिष्ठिताः। फल्गुदाः अल्पदातारः। श्रीटी.

**स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः।**
**उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः।।**

उदितास्तमितप्रायाः हर्षशोकादिबहुलाः। श्रीटी.

**असंस्कृताः क्रियाहीना रजसा तमसाऽऽवृताः।**
**प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः।।**

असंस्कृताः गर्भाधानादिसंस्काररहिताः। प्रजाः भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति। श्रीटी.

**तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः।**
**अन्योऽन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः।।**

किंच तन्नाथाः ते नाथा येषां ते जनपदाः देशवर्तिनो मनुष्याः तच्छीलाचारवादिनः तेषामिव शीलमाचारो वादश्च तद्वन्तः। श्रीटी.

**श्रीशुक उवाच –**

**[1]ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया।**
**कालेन बलिना राजन्नङ्क्ष्यत्यायुर्बलं स्मृतिः।।**

कलिधर्मान्प्रपञ्चयति – ततश्चेत्यादिना। श्रीटी.

**वित्तमेव कलौ नृणां जन्माचारगुणोदयः।**
**धर्मन्यायव्यवस्थायां कारणं बलमेव हि।।**

धर्मन्याययोर्व्यवस्थायां बलमेव (कारणम्)। श्रीटी.

---

(१) **भाग.** ११।५।३७-४०.
(२) **भाग.** ११।७।५.
(३) **भाग.** १२।१।३६-४३.

(१) **भाग.** १२।२।१-२४.

**दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके।**
**स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि।।**

दाम्पत्ये भार्यापतिभावेऽभिरुचिरेव हेतुः, न कुलगोत्रादिः। व्यावहारिके क्रयविक्रयादौ। स्त्रीत्वे पुंस्त्वे च तयोः श्रैष्ठ्ये रतिकौशलमेव हेतुः, न कुलमाचारो वा।
श्रीटी.

**लिङ्गमेवाऽऽश्रमख्यातावन्योन्यापत्तिकारणम्।**
**अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः।।**

आश्रमाणां ख्यातौ ज्ञाने लिङ्गमेव दण्डाजिनादिकं हेतुः, न त्वाचारविशेषः। अन्योन्यापत्तिकारणं चाऽऽश्रमादाश्रमान्तरप्राप्तौ च कारणम्। यद्वा बहूदकहंसादीनामन्योन्यापत्तौ नमस्कारादिव्यवहारे कारणम्। अवृत्त्या मुद्रार्पणादिदानासामर्थ्येन न्याये दौर्बल्यं पराजयः। चापलं वचः बहुभाषणम्।
श्रीटी.

**अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु।**
**स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम्।।**

असाधुत्वे चौर्याद्यभियोगे। प्रसाधनम् अलंकारः।
श्रीटी.

**दूरे वार्ययनं तीर्थं लावण्ये केशधारणम्।**
**उदरंभरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि।।**

दूरे वर्तमानं वार्ययनं जलाशयः तीर्थम्, न तु गुर्वादि। स्वार्थः पुरुषार्थः।
श्रीटी.

**दाक्ष्यं कुटुम्बभरणं यशोर्थे धर्मसेवनम्।**
**एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले।।**
**ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः।**
**प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः।।**
**आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम्।**
**शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः।।**

आच्छिन्नाः अपहृताः दाराः द्रविणानि च यासां ताः। अष्टिः बीजम्।
श्रीटी.

**अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः।**
**शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः।।**
**क्षुत्तृड्भ्यां व्याधिभिश्चैव संतापेन च चिन्तया।**
**त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम्।।**

दुराचारभूयिष्ठेऽतिदुरवस्थचराचरे कलियुगसमाप्तिकाले विष्णुः कल्किरूपेणावतरिष्यति, स
धर्मभ्रष्टान् हत्वा देवापिमरुद्वारा चन्द्र-
सूर्यराजवंशौ प्रवर्त्य वर्णाश्रमयुतं
कृतं स्थापयिष्यति, कृत-
युगारम्भोपलक्षको
ग्रहयोगः

**क्षीयमाणेषु देहेषु देहिनां कलिदोषतः।**
**वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम्।।**

क्षीयमाणेष्वित्यादीनाम् 'इत्थं कलौ गतप्राये' इति पञ्चमेनान्वयः। क्षीयमाणेषु अल्पप्रायेषु।
श्रीटी.

**पाखण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु।**
**चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु।।**

दस्युप्रायेषु चौरतुल्येषु। चौर्यानृतवृथाहिंसाद्या नानावृत्तयो येषां तेषु।
श्रीटी.

**शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु।**
**गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु।।**

छागप्रायासु प्रमाणतः क्षीरतश्चाजातुल्यासु।
श्रीटी.

**अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु।**
**विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु।।**

अणुप्रायासु श्यामाकतुल्यासु। स्थास्नुषु वृक्षेषु। विद्युत्प्रायेषु तडिद्बहुलेषु। शून्यप्रायेषु धर्मादिरहितेषु सद्मसु गृहेषु।
श्रीटी.

**इत्थं कलौ गतप्राये जने तु खरधर्मिणि।**
**धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति।।**

जने तु खरधर्मिणि दुःसहचेष्टिते कलौ गतप्राये समाप्तप्राये।
श्रीटी.

**चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः।**
**धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये।।**

एतत्प्रपञ्चयति चतुर्भिः। चराचरगुरोरीश्वरस्येति च धर्मत्राणे हेतुः। गुरुत्वेश्वरत्वयोरुपपादनम् – अखिलस्य विश्वस्य आत्मनः कारणस्येति। एवंभूतस्य विष्णोर्जन्म साधूनां धर्मत्राणाय। धर्मत्राणप्रयोजनमाह – कर्मापनुत्तये मोक्षाय।
श्रीटी.

**शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः।**
**भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति।।**

शम्भलग्रामे मुख्यस्य प्रधानस्य नाम्ना विष्णुयशसो ब्राह्मणस्य भवने गृहे। श्रीटी.

**अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः।**
**असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः।।**

धर्मत्राणप्रकारमाह – अश्वमिति। असाधवो दम्यन्ते येन तमश्वमारुह्यासिना दस्यून्कोटिशो निहनिष्यतीत्युत्तरेणान्वयः। असाधुदमन इति पाठे कल्किविशेषणम्। अणि - माद्यष्टैश्वर्याणि, गुणाश्च सत्यसंकल्पत्वादयः, तैरन्वितः। श्रीटी.

**विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः।**
**नृपलिङ्गच्छदो दस्यून्कोटिशो निहनिष्यति।।**

तत्प्रपञ्चः – आशुना शीघ्रगामिना तेन हयेन अश्वेन क्षोण्यां पृथिव्यां विचरन्। नृपलिङ्गच्छदः राजवेषच्छन्नान्। श्रीटी.

**अथ तेषां भविष्यन्ति मनांसि विशदानि वै।**
**वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम्।**
**पौरजानपदानां वै हतेष्वखिलदस्युषु।।**

ततश्च पुनः कृतयुगप्रवृत्तिं वक्तुमाह – अथेति सार्धाभ्याम्। तेषां पौरजानपदानां मनांसि विशदानि भविष्यन्ति। तत्र हेतुः – वासुदेवस्य अङ्गरागेण चन्दनादिना अतिपुण्यगन्धो योऽनिलस्तं स्पृशन्तीति तथा, तेषाम्। श्रीटी.

**तेषां प्रजाविसर्गश्च स्थविष्ठः संभविष्यति।**
**वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते।।**

स्थविष्ठः स्थूलः। श्रीटी.

**यदाऽवतीर्णो भगवान्कल्किर्धर्मपतिर्हरिः।**
**कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी।।**

कृतयुगप्रवृत्तिमाह – यदाऽवतीर्ण इति। प्रजानां सूतिः प्रसूतिः। श्रीटी.

**यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती।**
**एकराशौ समेष्यन्ति तदा भवति तत्कृतम्।।**

तदवतारकालोपलक्षणमाह – यदा चन्द्रश्चेति। तिष्यः पुष्यः। अयमर्थः:– चन्द्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रे योगस्तदा तत्कृतयुगं भविष्यति। यद्यपि च प्रतिद्वादशाब्दं कर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ययोगः संभवति तथापि तेषां सहप्रवेशोऽत्र विवक्षितः, समेष्यन्तीति वचनात्। अतो नातिप्रसङ्गः। श्रीटी.

**[1]देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः।**
**कलापग्राम आसाते महायोगबलान्वितौ।।**

कलावुत्सन्नानां राजवंशानां पुनः प्रवृत्तिप्रकारमाह – देवापिरिति। देवापिः सोमवंशजः। मरुस्तु सूर्यवंशजः। कलापग्रामो नाम योगिनामावासः प्रसिद्धः। श्रीटी.

**[2]ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ।**
**वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः।।**
**[3]कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्।**
**अनेन क्रमयोगेन भुवि प्राणिषु वर्तते।।**

इममेव प्रकारं प्रतिचतुर्युगं दर्शयति – कृतमिति। श्रीटी.

कृतयुगीयसत्य-दया-तपो-दानरूपधर्मपादानां त्रेतादियुगेषु अनृतहिंसादिभिरधर्मपादैरुत्तरोत्तरं पादशो वृद्धैर्ह्रासः, युगप्रयुक्तलोकवृत्तानि, सत्त्वस्य रजसः रजस्तमसोस्तमसश्च क्रमेण युगेषु प्राधान्यम्

**राजोवाच –**

**[4]केनोपायेन भगवन्कलेर्दोषान्कलौ जनाः।**
**विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने।।**

कलिदोषोपचये सति भक्तेरसंभवं मन्यमानः पृच्छति- केनोपायेनेति। विधमिष्यन्ति नाशयिष्यन्ति। यथा यथावत्। श्रीटी.

**युगानि युगधर्मांश्च मानं प्रलयकल्पयोः।**
**कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः।।**

कलियुगे कः परो धर्म इति बुभुत्सया पृच्छति –

---

(१) **भाग.** १२।२।३७; **शूक.** २९९.
(२) **भाग.** १२।२।३८; **शूक.** २९९.
(३) **भाग.** १२।२।३९.
(४) **भाग.** १२।३।१६-१७.

युगानीति। ब्रूहीत्यनुषङ्गः। आत्यन्तिकप्रलयजिज्ञासया पुनः पृच्छति – मानमिति। प्रलयकल्पयोः संहारस्थिति-कालयोः। न चायं बहिर्मुखः प्रश्न इत्याह – कालस्येति। श्रीटी.

**श्रीशुक उवाच –**

**[१]कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः।**
**सत्यं दया तपो दानमिति पादा विभोर्नृप।।**

तत्र युगधर्मांस्तावदाह – कृत इति। तज्जनैः तत्कालीनैर्जनैः। दानम् अरागद्वेषतयाऽभयदानम्। तदेव प्रथमस्कन्धे शौचशब्देनोक्तम्। विभोः संपूर्णस्य धर्मस्य। श्रीटी.

**[२]संतुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः।**
**आत्मारामाः समदृशः प्रायशः श्रमणा जनाः।।**

तदानींतनजनानाह – संतुष्टा इति। मैत्राः भूतमैत्रीयुक्ताः। श्रमणाः आत्माभ्यासवन्तः। श्रीटी.

**[३]त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः।**
**अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः।।**

अनृतेन सत्यम्, हिंसया दया, असंतोषेण तपः, विग्रहेण दानमिति यथासंख्यं योज्यम्। श्रीटी.

**[४]तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः।**
**त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप।।**

ब्रह्मोत्तराः ब्राह्मणाधिकाः। श्रीटी.

**[५]तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे।**
**हिंसाऽतुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः।।**

हिंसाऽतुष्ट्यनृतद्वेषैरित्ययं क्रमो न विवक्षितः। धर्मस्यार्धं ह्रसति क्षीयते। अधर्मस्य लक्षणैः चिह्नैः पादैरित्यर्थः। श्रीटी.

**[६]यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः।**
**आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः।।**

(१) **भाग.** १२।३।१८; **पप्र.** ५१.
(२) **भाग.** १२।३।१९.
(३) **भाग.** १२।३।२०; **पप्र.** ५१-५२ तुर्यांशो (तुर्योऽशो).
(४) **भाग.** १२।३।२१.
(५) **भाग.** १२।३।२२; **पप्र.** ५२.
(६) **भाग.** १२।३।२३.

यशस्विनः कीर्तिप्रियाः। क्षत्रद्विजोत्तराः क्षत्रियब्राह्मण-प्रधानाः। श्रीटी.

**[१]कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः।**
**एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति।**

कलौ धर्मपादानां तुर्यांशः चतुर्थांशः अवशिष्यते। श्रीटी.

**[२]तस्मिंल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः।**
**दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः।।**

शूद्रदासोत्तराः शूद्रकैवर्तादिप्रधानाः। श्रीटी.

**सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः।**
**कालसंचोदितास्ते वै परिवर्तन्त आत्मनि।।**

युगानामेवंभूतवैषम्ये कारणमाह – सत्त्वमिति पञ्चभिः। श्रीटी.

**प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च।**
**तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः।।**

मनश्च बुद्धिश्चेन्द्रियाणि च सत्त्वे यदा प्रभवन्ति अतिशयेन वर्तन्ते। श्रीटी.

**यदा कर्मसु काम्येषु भक्तिर्भवति देहिनाम्।**
**तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन्।।**

यदा कर्मादिषु भक्तिः प्रीतिः तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि। श्रीटी.

**यदा लोभस्त्वसंतोषो मानो दम्भोऽथ मत्सरः।**
**कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः।।**

काम्यानां कर्मणां विषये यदा प्रीतिः तत् तदा रजस्तमः-प्रधानं द्वापरं जानीहीति पूर्वेणानुषङ्गः। श्रीटी.

**यदा मायाऽनृतं तन्द्रा निद्रा हिंसा विषादनम्।**
**शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः।।**

विषादनं दुःखम्। श्रीटी.

कलिदोषप्रयुक्तानि लोकवृत्तानि,
कलिदोषनिवारकं
हरिकीर्तनम्

**यस्मात्क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः।**
**कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः।।**

(१) **भाग.** १२।३।२४; **पप्र.** ५२ तुर्यांशो (तुर्योऽशो).
(२) **भाग.** १२।३।२५-४५.

कलिदोषान्प्रपञ्चयति – यस्मादित्यादिना। यस्मात् कलेर्हेतोः। क्षुद्रदृशः मन्दमतयः। क्षुद्रभाग्याः अल्पभाग्याः। महाशनाः बह्वाहाराः। वित्तहीना अपि कामिनश्च। स्वैरिण्यः पुंश्चल्यः। असतीः असत्यः। श्रीटी.

**दस्यूत्कृष्टा जनपदा वेदाः पाखण्डदूषिताः।**
**राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः।।**

दस्यवः उत्कृष्टाः प्रचुराः येषु ते। श्रीटी.

**अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः।**
**तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः।।**

अव्रताः विहिताचारशून्याः अशौचाः शौचशून्याश्च बटवः ब्रह्मचारिणः भविष्यन्ति। कुटुम्बिनश्च गृहस्थाः स्वयं भिक्षाटनपरा भविष्यन्ति, न तु भिक्षां दास्यन्ति। तपस्विनः वनस्थाः वनं हित्वा ग्रामवासा भविष्यन्ति। न्यासिनः यतयः अतीवार्थलोलुपा भविष्यन्ति। श्रीटी.

**ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः।**
**शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः।।**

पुनरपि स्त्रीणां स्वभावमाह – ह्रस्वकाया इति। कटुकभाषिण्यः अप्रियवादिन्यः। चौर्यं च माया कपटम् उरु च साहसं यासां ताः। श्रीटी.

**पणयिष्यन्ति वै क्षुद्राः किराटाः कूटकारिणः।**
**अनापद्यपि मंस्यन्ते वार्तां साधु जुगुप्सिताम्।।**

किंच। किराटाः वणिजः। पणयिष्यन्ति क्रयविक्रयादिव्यवहारं प्रवर्तयिष्यन्ति। किंच, सर्वे जनाः अनापद्यपि जुगुप्सितां निन्दितां वार्तां वृत्तिं साधु मंस्यन्ते। श्रीटी.

**पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम्।**
**भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः।।**

सर्वोत्तममपि पतिं द्रव्यहीनं भृत्यास्त्यक्ष्यन्ति। पतयश्च विपन्नं रोगादिभिर्व्यापाराक्षमं कौलं कुलपरंपरायातं त्यक्ष्यन्ति। अपयस्विनीः दुग्धदोहाः। श्रीटी.

**पितृभ्रातृसुहृज्ज्ञातीन्हित्वा सौरतसौहृदाः।**
**ननान्दृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः।।**

सौरतं सुरतनिमित्तं सौहृदं येषां ते। त एव, ननान्दरोऽत्र भार्याभगिन्यः, श्यालाः भार्याभ्रातरः, तैः संवादः मन्त्रालोचनं येषां ते। ननन्दृ इति वा पाठः। श्रीटी.

**शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः।**
**धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम्।।**
**नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः।**
**निरन्ने भूतले राजन्ननावृष्टिभयातुराः।।**
**वासोन्नपानशयनव्यवायस्नानभूषणैः।**
**हीनाः पिशाचसंदर्शा भविष्यन्ति कलौ प्रजाः।।**

पिशाचसंदर्शाः पिशाचसदृशाः। श्रीटी.

**कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः।**
**त्यक्ष्यन्ति च प्रियान्प्राणान्हनिष्यन्ति स्वकानपि।।**

काकिणिके विंशतिवराटकामात्रेऽप्यर्थे विषयभूते। विगृह्य वैरं कृत्वा। श्रीटी.

**न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि।**
**पुत्रान्सर्वार्थकुशलान्क्षुद्राः शिश्नोदरंभराः।।**
**कलौ न राजन् जगतां परं गुरुं**
**त्रिलोकनाथानतपादपङ्कजम्।**
**प्रायेण मर्त्या भगवन्तमच्युतं**
**यक्ष्यन्ति पाखण्डविभिन्नचेतसः।।**

महान्तमनर्थमाह द्वाभ्याम् – कलाविति। त्रिलोकनाथैः आनतं नमस्कृतं पादपङ्कजं यस्य तम्। न यक्ष्यन्ति न पूजयिष्यन्ति। पाखण्डैः विभिन्नम् अन्यथाकृतं चेतो येषां ते। श्रीटी.

**यन्नामधेयं म्रियमाण आतुरः**
**पतन्स्खलन्वा विवशो गृणन्पुमान्।**
**विमुक्तकर्मार्गल उत्तमां गतिं**
**प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः।।**

विवशो गृणन्सन्। विमुक्ताः कर्मरूपा अर्गलाः प्रतिबन्धाः यस्य सः। श्रीटी.

**पुंसां कलिकृतान्दोषान्द्रव्यदेशात्मसंभवान्।**
**सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः।।**

तदेवं कलिदोषान्प्रपञ्च्य प्रस्तुतं तन्निस्तारोपायमाह– पुंसामिति षड्भिः। द्रव्यदेशात्मभिः संभवो येषां तान्। चित्तस्थः चित्ते स्फुरितः। श्रीटी.

**[1]कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः।**
**कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्।।**

इदानीं कलिं स्तौति द्वाभ्याम् – कलेर्दोषनिधे राजन्निति। श्रीटी.

**[2]कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः।**
**द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्।।**

तत्सर्वं हरिकीर्तनादेव कलौ भवति, नान्यस्मिन्युगे। उक्तं च – 'ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्।।' इति। श्रीटी.

## लिङ्गपुराणम्

सत्त्वरजस्तमसां युगेषु प्राधान्यविवेकः, कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ, युगभेदेन धर्मभेदाः, विस्तरेण युगवृत्तवर्णनम्

**शक्र उवाच –**

**[3]आद्यं कृतयुगं विद्धि ततस्त्रेतायुगं मुने।**
**द्वापरं तिष्यमित्येते चत्वारस्तु समासतः।।**

एते कृतादिसंज्ञाः चत्वारः चतुःसंख्याकाः पुरुषाः समासतः प्रोक्ता इति शेषः। शितो.

**सत्त्वं कृतं रजस्त्रेता द्वापरं च रजस्तमः।**
**कलिस्तमश्च विज्ञेयं युगवृत्तिर्युगेषु च।।**

सत्त्वं सत्त्वगुणरूपमित्यर्थः। शितो.

**ध्यानं परं कृतयुगे त्रेतायां यज्ञ उच्यते।**
**भजनं द्वापरे शुद्धं दानमेव कलौ युगे।।**

कृतयुगे ध्यानम् ईश्वरचिन्तनं परं सर्वोत्कृष्टमुच्यते इत्यस्य सर्वत्रान्वयः। शितो.

**चत्वारि च सहस्राणि मानुषाणि शिलाशन।**
**आयुः कृतयुगे विद्धि प्रजानामिह सुव्रत।।**

इह कृतयुगे। शितो.

**ततः कृतयुगे तस्मिन्संध्यांशे च गते तु वै।**
**पादावशिष्टो भवति युगधर्मस्तु सर्वतः।।**

सर्वतः सर्वः युगधर्मः पादेन ऊनोऽवशिष्टः पादावशिष्टः। अत्र मध्यमपदलोपः। त्रिपादावस्थित इत्यर्थः। शितो.

**आद्ये कृतयुगे धर्मश्चतुष्पादः सनातनः।**
**त्रेतायुगे त्रिपादस्तु द्विपादो द्वापरे स्थितः।।**
**त्रिपादहीनस्तिष्ये तु सत्तामात्रेण धिष्ठितः।।**

तिष्ये कलियुगारम्भे त्रिपादहीनः एकपादावशिष्टः, तु पुनः तस्यापि ह्रसमानत्वात्सत्तामात्रेण सत्त्वमात्रेण धिष्ठितः अधिष्ठित इत्यर्थः। अत्र अल्लोपश्छान्दसः। शितो.

**अप्रवृत्तिः कृतयुगे कर्मणोः शुभपापयोः।**
**वर्णाश्रमव्यवस्था च तदाऽऽसीन्न च संकरः।।**

शुभपापयोः स्वर्गनरककारणयोः कर्मणोरप्रवृत्तिः, आसीदिति शेषः। शितो.

**मर्यादायाः प्रतिष्ठार्थं ज्ञात्वा तदखिलं विभुः।**
**ससर्ज क्षत्रियांस्त्रातुं क्षतात्कमलसंभवः।।**

क्षतात् दुःखात् त्रातुं रक्षितुं क्षत्रियान् ससर्जेत्यन्वयः। शितो.

**वर्णाश्रमप्रतिष्ठां च चकार स्वेन तेजसा।**
**वृत्तेन वृत्तिना वृत्तं विश्वात्मा निर्ममे स्वयम्।।**

वृत्तेन स्वस्वधर्मेण वृत्तिना जीवनोपायेन वृत्तं जीवनं विश्वात्मा स्वयं निर्ममे इत्यन्वयः। शितो.

**यज्ञप्रवर्तनं चैव त्रेतायामभवत्क्रमात्।**
**पशुयज्ञं न सेवन्ते केचित्तत्रापि सुव्रताः।।**

तत्रापि त्रेतायामपि केचित् मुमुक्षवः पशुयज्ञं पशुकरणकं यागं न सेवन्ते इत्यन्वयः। अत्र वर्तमानप्रयोगाच्छक्रशिलादसंवादस्त्रेतायामभवदिति भाति। यद्वा 'वर्तमानसामीप्ये वर्तमानवद्वा' (पासू. ३।३।१३१) इति विहितोऽत्र लट्। शितो.

**बलाद्विष्णुस्तदा यज्ञमकरोत्सर्वदृक्क्रमात्।**
**द्विजास्तदा प्रशंसन्ति ततस्त्वाहिंसकं मुने।।**

---

(१) **भाग.** १२।३।५१; **निप.** ३१(=); **निप्र.** १।२३७ विष्णुधर्मे; **गप.** २६ व्रजेत् (विशेत्) विष्णुधर्मे; **यसं.** १२६; **कृभ.** १३१४.

(२) **भाग.** १२।३।५२.

(३) **लिङ्ग.** १।३९।५-७, ९-१०, १३-१४, १८-१९, ४९-५६, ६६-६८.

तदा त्रेतायुगे। ततः पशुयज्ञकारिणः सकाशात् अहिंसकं मुमुक्षया केवलचरुपुरोडाशयाजिनं प्रशंसन्ति स्तुवन्तीत्यर्थः। अनेन कृते सर्वथा हिंसाभावादहिंसकप्रशंसा नाऽऽसीदिति सूचितम्। शितो.

**द्वापरेष्वपि वर्तन्ते मतिभेदास्तदा नृणाम्।**
**मनसा कर्मणा वाचा कृच्छ्राद्वार्ता प्रसिध्यति।।**
**तदा तु सर्वभूतानां कायक्लेशवशात्क्रमात्।**
**लोभो भृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः।।**

भृतिः वेतनग्रहणेन सेवा। वणिजां युद्धं वणिग्युद्धं वाणिज्याद्विवादः। तत्त्वानां यथार्थवस्तूनामविनिश्चयः चित्तकालुष्यात्संशय इत्यर्थः। शितो.

**वेदशाखाप्रणयनं धर्माणां संकरस्तथा।**
**वर्णाश्रमपरिध्वंसः कामद्वेषौ तथैव च।।**

वेदशाखानां प्रणयनं विभजनम्। धर्माणां संकरः अन्य-धर्मप्रवृत्तिः। वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्यादीनां परिध्वंसः प्रायशो विनाशः। शितो.

**द्वापरे तु प्रवर्तन्ते रागो लोभो मदस्तथा।**
**वेदो व्यासैश्चतुर्धा तु व्यस्यते द्वापरादिषु।।**

द्वापरादिषु द्वापरादिकालेषु। शितो.

**अवृष्टिर्मरणं चैव तथा व्याध्याद्युपद्रवाः।**
**वाङ्मनःकर्मजैर्दुःखैर्निर्वेदो जायते ततः।**
**निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा।।**

वैराग्यं विना ज्ञानं न दृढम्। वैराग्यमपि दोषदर्शनं विना न। तत्तु द्वापरादिषु कालेषु दुःखं विना न भवतीति तत्क्रमं निरूपयति – अवृष्टिरित्यादिना। मरणम् अकाल-मृतिरित्यर्थः। व्याधिः रोगः आदिः मुख्यः येषां ते चोरव्याघ्र-राजकृताः उपद्रवाः उपसर्गाः इत्यर्थः। ततः उपद्रववशा-द्वाङ्मनःकर्मजैर्दुःखैर्निर्वेदो जायते इत्यन्वयः।

शितो.

**विचारणाच्च वैराग्यं वैराग्याद्दोषदर्शनम्।**
**दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसंभवः।।**

दोषाणां दर्शनाच्चैवेत्यत्र चकारात्पूर्वोक्तदुःखसंग्रहः। एतदुभयादेव द्वापरे ज्ञानसंभव इत्यनेन कृतत्रेतयोस्तु ज्ञाने स्वाभाविकी प्रवृत्तिर्बोध्यते। शितो.

**[1]एषा रजस्तमोयुक्ता वृत्तिर्वै द्वापरे स्मृता।**
**आद्ये कृते तु धर्मोऽस्ति स त्रेतायां प्रवर्तते।**
**द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे।।**

एषा पूर्वोक्ता रजस्तमोभ्यां युक्ता मिश्रा द्वापरे वृत्तिः प्रवृत्तिरित्यर्थः। आद्ये कृते प्रथमकृतयुगे इत्यर्थः। धर्मः अस्ति सर्वत्र वर्तत इत्यर्थः। तथा च तत्र धर्मज्ञानं स्वाभाविकमासीदिति सूचितम्। स धर्मस्त्रेतायां प्रवर्तते विधिचोदनया प्रवृत्तो भवतीत्यर्थः। द्वापरे व्याकुलीभूत्वा पीडितो भूत्वा कलौ युगे प्रणश्यति प्रनष्टो भविष्यतीत्यर्थः।

शितो.

**शक्र उवाच –**

**[1]तिष्ये मायामसूयां च वधं चैव तपस्विनाम्।**
**साधयन्ति नरास्तत्र तमसा व्याकुलेन्द्रियाः।।**

शक्रः प्रथमतः कलियुगवृत्तान्तं कथयति – तिष्य इत्यादिना। शितो.

**[2]कलौ प्रमादको रोगः सततं क्षुद्भयानि च।**
**अनावृष्टिभयं घोरं देशानां च विपर्ययः।।**

प्रमादकः प्रमादः रोगः क्षुद्भयानि च, भवन्तीति शेषः। देशानां विपर्ययः नाशः। शितो.

**न प्रामाण्यं श्रुतेरस्ति नृणां चाधर्मसेवनम्।**
**अधार्मिकास्त्वनाचारा महाकोपाल्पचेतसः।।**
**अनृतं ब्रुवते लुब्धास्तिष्ये जाताश्च दुष्प्रजाः।**
**दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः।।**
**विप्राणां कर्मदोषेण प्रजानां जायते भयम्।**
**नाधीयन्ते तदा वेदान्न यजन्ति द्विजातयः।**
**उत्सीदन्ति नराश्चैव क्षत्रियाश्च विशः क्रमात्।।**
**[3]शूद्राणां मन्त्रयोगेन संबन्धो ब्राह्मणैः सह।**
**भवतीह कलौ तस्मिञ्शयनासनभोजनैः।।**

मन्त्रयोगेन मन्त्रोपदेशयोगेन। शितो.

---

(१) **लिङ्ग.** १।३९।६९-७०; **पमा.** १।७५ धर्मोऽस्ति (यो धर्मः) भूत्वा (भूतः) प्रथमार्धं नास्ति.

(१) **लिङ्ग.** १।४०।१; **पमा.** १।७५-७६.

(२) **लिङ्ग.** १।४०।२-६.

(३) **लिङ्ग.** १।४०।६-७; **स्मृकौ.** ४३ योगेन (योनिश्च); **शूशि.** ५३ स्मृकौवत्; **शूक.** ६३ स्मृकौवत्.

**[1]राजानः शूद्रभूयिष्ठा ब्राह्मणान् बाधयन्ति ते।**
**भ्रूणहत्या वीरहत्या(:) प्रजायन्ते प्रजासु वै।**
**शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः।।**

भ्रूणहत्या बालहत्या। वीरहत्या विक्रान्तपुरुषहत्या। प्रजासु प्रजायन्ते व्यभिचारमूलेनेति तात्पर्यार्थः। शितो.

**[2]राजवृत्तिस्थिताश्चौराश्चौराचाराश्च पार्थिवाः।**
**एकपत्न्यो न शिष्यन्ति वर्धिष्यन्त्यभिसारिकाः।।**

एकपत्न्यः पतिव्रताः। अभिसारिकाः व्यभिचारिकाः व्यभिचारिण्यः इत्यर्थः। शितो.

**वर्णाश्रमप्रतिष्ठा नो जायते नृषु सर्वतः।**
**तदा स्वल्पफला भूमिः क्वचिच्चापि महाफला।।**
**[3]अरक्षितारो हर्तारः पार्थिवाश्च शिलाशन।**
**शूद्रा वै ज्ञानिनः सर्वे ब्राह्मणैरभिवन्दिताः।।**
**[4]अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः।**
**आसनस्था द्विजान्दृष्ट्वा न चलन्त्यल्पबुद्धयः।**
**ताडयन्ति द्विजेन्द्रांश्च शूद्रा वै स्वल्पबुद्धयः।।**
**[5]आस्ये निधाय वै हस्तं कर्णे शूद्रस्य वै द्विजाः।**
**नीचस्य च तदा वाक्यं वदन्ति विनयेन तम्।।**
**[6]उच्चासनस्थाञ्शूद्रांश्च द्विजमध्ये द्विजर्षभ।**
**ज्ञात्वा न हिंसते राजा कलौ कालवशेन तु।।**

न हिंसते दण्डं न करोतीत्यर्थः। शितो.

(१) **लिङ्ग.** १।४०।७-८; **स्मृकौ.** ४३ द्वितीयार्धं नास्ति; **शूशि.** ५३ बाध (धाव) द्वितीयार्धं नास्ति; **शूक.** ६३ द्वितीयार्धं नास्ति.

(२) **लिङ्ग.** १।४०।९-१०.

(३) **लिङ्ग.** १।४०।११; **स्मृकौ.** ४३ शूद्रा वै ज्ञानिनः (शूद्राभिवादिनः) उत्त., तच्च अग्रिमश्लोकपूर्वार्धोत्तरम्; श्लोकक्रमस्तु नाऽऽदर्शपुस्तकानुसारी; **शूशि.** ५३ सर्वं स्मृकौवत्; **शूक.** ६३ सर्वं स्मृकौवत्.

(४) **लिङ्ग.** १।४०।१२-१३; **स्मृकौ.** ४३ याश्च (यास्तु) जीवि (वर्ति) बुद्धयः (चेतसः); **शूशि.** ५३-५४ अक्षत्रियाश्च (क्षत्रियास्तु न) जीवि (वर्ति) तृतीयार्धं नास्ति; **शूक.** ६३ बुद्धयः (चेतसः).

(५) **लिङ्ग.** १।४०।१३-१४ कर्णे (कर्णं) स्य च (स्येव); **स्मृकौ.** ४३; **शूशि.** ५४; **शूक.** ६३.

(६) **लिङ्ग.** १।४०।१४-२०.

**पुष्पैश्च वासितैश्चैव तथाऽन्यैर्मङ्गलैः शुभैः।**
**शूद्रानभ्यर्चयन्त्यल्पश्रुतभाग्यबलान्विताः।।**

अन्यमङ्गलैः गन्धालंकरणादिभिः। अल्पं श्रुतं ज्ञानं भाग्यं प्रारब्धं बलं सामर्थ्यम्, तेन अन्विताः युक्ताः। अत एव शूद्रान् शूद्रादीनित्यर्थः। शितो.

**न प्रेक्षन्ते गर्विताश्च शूद्रा द्विजवरान्द्विज।**
**सेवावसरमालोक्य द्वारे तिष्ठन्ति वै द्विजाः।।**
**वाहनस्थान्समावृत्य शूद्राञ्शूद्रोपजीविनः।**
**सेवन्ते ब्राह्मणास्तत्र स्तुवन्ति स्तुतिभिः कलौ।।**

वाहनस्थान् शूद्रान् समावृत्य परिवार्य शूद्रोपजीविनो ब्राह्मणाः सेवन्ते इत्यग्रिमेणान्वयः। शितो.

**तपोयज्ञफलानां च विक्रेतारो द्विजोत्तमाः।**
**यतयश्च भविष्यन्ति बहवोऽस्मिन्कलौ युगे।।**

यतयः संन्यस्तवेषधारिणः। शितो.

**पुरुषाल्पं बहुस्त्रीकं युगान्ते समुपस्थिते।**
**निन्दन्ति वेदविद्यां च द्विजाः कर्माणि वै कलौ।।**

कर्माणि श्रौतस्मार्तादीनि। शितो.

**[1]कलौ देवो महादेवः शंकरो नीललोहितः।**
**प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृताकृतिः।।**

धर्मस्य प्रतिष्ठार्थं संरक्षणार्थम्। विकृताकृतिः उच्छिन्न-भिन्नलिङ्गस्वरूपः, तथैवेदानीं काश्यादौ दृश्यमानत्वात्। शितो.

**[2]ये तं विप्रा निषेवन्ते येन केनापि शंकरम्।**
**कलिदोषान् विनिर्जित्य प्रयान्ति परमं पदम्।।**

तं विकृताकृतिमपि शंकरं ये पूर्वोक्ताचारा अपि विप्रा येन केनापि सदसद्धेतुनाऽपि निषेवन्ते ते कलिदोषं विनिर्जित्य परमं पदं शिवपदं प्रयान्ति गच्छन्तीत्यग्रिमेणान्वयः। शितो.

**[3]श्वापदप्रबलत्वं च गवां चैव परिक्षयः।**
**साधूनां विनिवृत्तिश्च वेद्या तस्मिन्युगक्षये।।**

(१) **लिङ्ग.** १।४०।२०-२१; **पुम.** ४६८ देवो (रुद्रो) ष्ठार्थं (ष्ठार्धं) ताकृतिः (ता कृतिः).

(२) **लिङ्ग.** १।४०।२१-२२; **स्मृतिकौ.** ४६९ प्रा निषेव (प्रास्तु सेव) दोषान् (दोषं); **पुम.** ४६८ ताकृतिः (ता कृतिः) प्रा निषेव (प्रास्तु सेव) दोषान् (दोषं).

(३) **लिङ्ग.** १।४०।२२-४०.

**तदा सूक्ष्मो महोदर्को दुर्लभो दानमूलवान्।**
**चातुराश्रमशैथिल्ये धर्मः प्रतिचलिष्यति।।**

कलौ दानमूलवान् सूक्ष्मोऽपि महोदर्कः ऐश्वर्यरूपः दुर्लभो भवेदिति शेषः। शितो.

**अरक्षितारो हर्तारो बलिभागस्य पार्थिवाः।**
**युगान्तेषु भविष्यन्ति स्वरक्षणपरायणाः।।**
**अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।**
**प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे।**
**चित्रवर्षी तदा देवो यदा प्राहुर्युगक्षयम्।।**

अट्टः भक्तं वा शुल्कं कन्याद्रव्यं शूलः विक्रयः येषां ते अट्टशूलाः जनपदाः देशाः इत्यर्थः। 'अट्टो भक्ते च शुल्के च' इति विश्वः। शिवः वेदः शूलः विक्रयः येषां ते शिवशूलाः। चत्वारः पन्थानः ब्रह्मचर्यादयः येषां ते चतुष्पथाः ब्राह्मणा इत्यर्थः। यद्वा शिवः योगान्तरं व्यभिचारादिरूपं शूलः विक्रयः येषु ते शिवशूलाः चतुष्पथाः चतुर्मार्गाः इत्यर्थः। 'चतुष्पथश्चतुर्मार्गे संगमे ब्राह्मणेऽपि च' इति मेदिनी। 'शिवो हरे वेदे योगान्तरे च' इति विश्वः। प्रमदाः स्त्रियः केशशूलाः भगविक्रयिण्यः कलौ युगे भविष्यन्तीत्यग्रिमेणान्वयः। एतदेवोक्तं भारतव्याख्यातृभिः – 'अट्टमन्नं शिवो वेदो ब्राह्मणाश्च चतुष्पथाः। केशो भगं समाख्यातं शूलं तद्विक्रयं विदुः।।' इति। चित्रम् आश्चर्यकरं वर्षति तच्छीलः चित्रवर्षी कदाचित्सुवृष्टिकर इत्यर्थः। शितो.

**सर्वे वणिग्जनाश्चापि भविष्यन्त्यधमे युगे।**
**कुशीलचर्याः पाखण्डैर्वृथारूपैः समावृताः।।**

वणिग्जनाः वार्धुषिका इत्यर्थः। कुत्सितं शीलं चर्या च येषां ते कुशीलचर्याः। वृथारूपैः दाम्भिकैः पाखण्डैः अवैदिकमार्गैः समावृताः युक्ता इत्यर्थः। शितो.

**बहुयाजनको लोको भविष्यति परस्परम्।**
**नाव्याहृतक्रूरवाक्यो नाऽऽर्जवी नानसूयकः।।**
**न कृते प्रतिकर्ता च युगक्षीणे भविष्यति।**
**निन्दकाश्चैव पतिता युगान्तस्य च लक्षणम्।।**

बहुयाजनकः ग्रामयाजनकः लोकः जनः परस्परमव्याहृतक्रूरवाक्यो न, आर्जवी ऋजुस्वभावः न, अनसूयकः गुणेषु दोषादर्शकः न, कृते प्रतिकर्ता प्रत्युपकारकश्च न भविष्यतीत्यग्रिमेणान्वयः। शितो.

**नृपशून्या वसुमती न च धान्यधनावृता।**
**मण्डलानि भविष्यन्ति देशेषु नगरेषु च।।**

नृपशून्या रक्षकशून्या इत्यर्थः। मण्डलानि जनशून्यस्थलानि। शितो.

**अल्पोदका चाल्पफला भविष्यति वसुंधरा।**
**गोप्तारश्चाप्यगोप्तारः संभविष्यन्त्यशासनाः।।**
**हर्तारः परवित्तानां परदारप्रधर्षकाः।**
**कामात्मानो दुरात्मानो ह्यधमाः साहसप्रियाः।।**
**प्रनष्टचेष्टनाः पुंसो मुक्तकेशाश्च शूलिनः।**
**जनाः षोडशवर्षाश्च प्रजायन्ते युगक्षये।।**

प्रनष्टचेष्टनाः निरुद्योगा इत्यर्थः। "मुक्तः केशः ह्रीबेरं यैस्ते मुक्तकेशाः। 'केशो दैत्यान्तरे बाले ह्रीबेरे कुन्तलेऽपि च' इति विश्वः" (इति) चतुर्धरैर्भारतव्याख्यायामुक्तम्, तथा च त्यक्तलज्जा इत्यर्थः। शूलिनः रोगविशिष्टाः। यद्वा पण्यस्त्रीविशिष्टाः इत्यर्थः। 'शूलं केतके रोगयोगयोः। कीलके पण्ययोषिति' इति विश्वः। शितो.

**शुक्लदन्ताजिनाक्षाश्च मुण्डाः काषायवाससः।**
**शूद्रा धर्मं चरिष्यन्ति युगान्ते समुपस्थिते।।**

*अजिनं कृष्णाजिनम् अक्षाः रुद्राक्षाः येषां ते अजिनाक्षाः, शुक्लदन्ताश्च ते अजिनाक्षाश्च शुक्लदन्ताजिनाक्षाः, यतिवेषधारका इत्यर्थः। शितो.

**सस्यचौरा भविष्यन्ति दृढचैलाभिलाषिणः।**
**चौराश्चोरस्वहर्तारो हर्तुर्हर्ता तथाऽपरः।।**

---

* आर्षोऽयं बहुव्रीहिः, अजिनाक्षशब्दयोः सामानाधिकरण्याभावाल्लौकिकसमासाप्रवृत्तेः। ज्ञापकसिद्धव्यधिकरणपदबहुव्रीहिरपि न, तस्य भिन्नविभक्तिकव्यधिकरणपदयोरेव दर्शनात् समानविभक्तिकव्यधिकरणपदकत्वे मानाभावात्। न चात्र तद्दर्शनमेव मानम्, द्वन्द्वसमासरूपादजिनाक्षशब्दात् मत्त्वर्थीयार्शआद्यचाऽप्यजिनाक्षत्वलाभात्। अत एव तादृशाजन्तत्वमेव व्याख्यातुमुचितम्। नाप्यजिनाक्षयो रूप्यरूपकभावः, येन सामानाधिकरण्यं संपद्येत, सादृश्याभावात्, पार्थक्येनोभयोरपि यतिवेषत्वाच्च।

**योग्यकर्मण्युपरते लोके निष्क्रियतां गते।**
**कीटमूषकसर्पाश्च धर्षयिष्यन्ति मानवान्।।**
**सुभिक्षं क्षेममारोग्यं सामर्थ्यं दुर्लभं तदा।**
**कौशिकीं प्रतिपत्स्यन्ते देशान्क्षुद्भयपीडिताः।।**

कौशिकीं तत्संज्ञकां नदीमित्यर्थः। शितो.

**दुःखेनाभिप्लुतानां च परमायुः शतं तदा।**
**दृश्यन्ते न च दृश्यन्ते वेदाः कलियुगेऽखिलाः।।**
**उत्सीदन्ति तदा यज्ञाः केवलाधर्मपीडिताः।**
**काषायिणोऽप्यनिर्ग्रन्थाः कापालीबहुलास्त्विह।।**

अनिर्ग्रन्थाः मूर्खाः इत्यर्थः। शितो.

**वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे।**
**वर्णाश्रमाणां ये चान्ये पाखण्डाः परिपन्थिनः।।**
**[१]उत्पद्यन्ते तदा ते वै संप्राप्ते तु कलौ युगे।**
**अधीयते तदा वेदाञ्शूद्रा धर्मार्थकोविदाः।।**
**[२]यजन्ते चाश्वमेधेन राजानः शूद्रयोनयः।**
**स्त्रीबालगोवधं कृत्वा हत्वा चैव परस्परम्।।**
**[३]उपद्रवांस्तथाऽन्योन्यं साधयन्ति तदा प्रजाः।**
**दुःखप्रभूतमल्पायुर्देहोत्सादः सरोगता।।**
**अधर्माभिनिवेशित्वात्तमोवृत्तं कलौ स्मृतम्।**
**प्रजासु ब्रह्महत्यादि तदा वै संप्रवर्तते।।**
**[४]तस्मादायुर्बलं रूपं कलिं प्राप्य प्रहीयते।**
**तदा त्वल्पेन कालेन सिद्धिं गच्छन्ति मानवाः।।**
**[५]धन्या धर्मं चरिष्यन्ति युगान्ते द्विजसत्तमाः।**
**श्रुतिस्मृत्युदितं धर्मं ये चरन्त्यनसूयकाः।।**

(१) **लिङ्ग.** १।४०।४१ (ते); **स्मृकौ.** ४३ उत्त.; **शूशि.** ५४ उत्त.; **शूक.** ६३ उत्त.; **बाल.** १।९५ पृ. ३१३ उत्त., लैङ्गमात्स्ये.

(२) **लिङ्ग.** १।४०।४२; **स्मृकौ.** ४३ पू., **शूशि.** ५४ पू.; **शूक.** ६३ पू., **बाल.** १।९५ पृ. ३१३ पू.; लैङ्गमात्स्ये.

(३) **लिङ्ग.** १।४०।४३-४४.

(४) **लिङ्ग.** १।४०।४५; **स्मृकौ.** ४३; **शूशि.** ५४; **शूक.** ६३; **बाल.** १।९५ पृ. ३१४ पू.

(५) **लिङ्ग.** १।४०।४६; **स्मृकौ.** ४३ द्विजसत्तमाः (समुपस्थिते); **शूशि.** ५४ स्मृकौवत्; **शूक.** ६३ स्मृकौवत्, पू.

**[१]त्रेतायां वार्षिको धर्मो द्वापरे मासिकः स्मृतः।**
**यथाक्लेशं चरन्प्राज्ञस्तदह्ना प्राप्नुते कलौ।।**

(१) एषु वाक्येषु शूद्रा ब्राह्मणैः सहैकशयनासनभोजनानि करिष्यन्ति (इत्युक्तम्)। अनेन (वाक्येन?) एकशय्यासनादीनि निषिध्यन्ते। तस्माद्ब्राह्मणेन सहैकशयनासनादिष्वनधिकारः। तथा वेदाध्ययनं शूद्राः करिष्यन्ति (इत्युक्तम्)। अनेन वेदाध्ययने तेषामनधिकार इत्युक्तं भवति। ब्राह्मणेभ्यो नीचशय्यासनादीनि कर्तव्यानि, द्विजाज्ञावशवर्तितया भवितव्यमित्यर्थादवगम्यते। अतश्चात्राधिकारः। स्मृकौ. ४३-४४

(२) एवमादिवाक्यपर्यालोचनया शूद्रस्य ब्राह्मणेन सहैकशय्यासनभोजनादौ तथा वेदाध्ययनादौ वेदश्रवणे वैदिकार्थप्रवचने विप्राणां स्वपुरस्तात् धावनप्रेषणादौ शुक्लदन्तत्वमुण्डत्वकाषायादिरूपप्रव्रजितवेषधारणपूर्वधर्माचरणे विप्रं दृष्ट्वाऽनभ्युत्थाने तत्ताडनादौ विप्राग्रे उच्चशय्यासनवाहनादिसेवनेऽनीक्षणादिना ब्राह्मणस्योपस्थितस्यासत्करणे द्वारि तत्प्रतिरोधने विप्रसेवाग्रहणे उत्तमवर्णधर्माचरणे यागाद्यनुष्ठाने तद्वशानुप्रवर्तने च दोषः, तस्मादेतन्न कर्तव्यमित्युक्तं भवति। शूशि. ५४

(३) प्राज्ञः सुज्ञः। यथाक्लेशं यथाशक्ति। कलौ अह्ना दिवसेन चरन् आचरन् आप्नुते प्राप्नोतीत्यर्थः। एतदेवोक्तं विष्णुपुराणे – 'यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत्। द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ।। तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः। प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम्।।' इति। शितो.

**[२]एषा कलियुगावस्था संध्यांशं तु निबोध मे।**
**युगे युगे च हीयन्ते त्रींस्त्रीन्पादांस्तु सिद्धयः।।**
**युगस्वभावाः संध्यास्तु तिष्ठन्तीह तु पादशः।**
**संध्यास्वभावाः स्वांशेषु पादशस्ते प्रतिष्ठिताः।।**

स्वांशेषु संध्यांशेषु पादशः पादेन, न्यूना इति शेषः, प्रतिष्ठिता इत्यन्वयः। शितो.

(१) **लिङ्ग.** १।४०।४७; **स्मृकौ.** ४३ क्लेशं चरन् (शक्ति चरेत्) प्राप्नुते (प्राप्यते); **शूशि.** ५४ स्मृकौवत्; **शूक.** ६३ प्राप्नुते (प्राप्यते) द्वितीयतृतीयचरणौ न स्तः.

(२) **लिङ्ग.** १।४०।४८-८५.

स्वायंभुवे मन्वन्तरे मानवांशेन चन्द्रमःकुले जातः
प्रमतिः कलियुगान्ते पुनर्विष्णोरंशेन जातः सन्
बहुशोऽधार्मिकान् हन्ति, केचिदत्यन्तदुरवस्था
म्लेच्छदेशान् गच्छन्ति, ततः प्रवृत्ते कृतयुगे
अवशिष्टधार्मिककलियुगीयप्रजाभ्यः
कार्तयुगीनां प्रजानां संभवः,
कार्तयुगीः प्रजाः सप्तर्षयो
धर्ममुपदिशन्ति

**एवं संध्यांशके काले संप्राप्ते तु युगान्तिके।**
**तेषां शास्ता ह्यसाधूनां भूतानां निधनोत्थितः।।**
**गोत्रेऽस्मिन्वै चन्द्रमसो नाम्ना प्रमितिरुच्यते।**
**मानवस्य तु सोंऽशेन पूर्वं स्वायंभुवेऽन्तरे।।**

कल्किप्रादुर्भावं कथयति – गोत्र इति। स्वायंभुवेऽन्तरे प्रमितिः य उच्यते सः मानवस्य मनुपुत्रस्यांशेन अस्मिन्कलिसमाप्तिकाले नाम्ना चन्द्रमसो गोत्रे सोमशर्मकब्राह्मणगोत्र इत्यर्थः। उत्पन्न इति शेषः। शितो.

**समाः स विंशतिः पूर्णाः पर्यटन्वै वसुंधराम्।**
**अनुकर्षन्स वै सेनां सवाजिरथकुञ्जराम्।।**

समाः वर्षाणीत्यर्थः। शितो.

**प्रगृहीतायुधैर्विप्रैः शतशोऽथ सहस्रशः।**
**स तदा तैः परिवृतो म्लेच्छान्हन्ति सहस्रशः।।**
**स हत्वा सर्वशश्चैव राज्ञस्ताञ्शूद्रयोनिजान्।**
**पाखण्डांस्तु ततः सर्वान्निःशेषं कृतवान् प्रभुः।।**
**नात्यर्थं धार्मिका ये च तान्सर्वान् हन्ति सर्वतः।**
**वर्णव्यत्यासजाताश्च ये च ताननुजीविनः।।**
**प्रवृत्तचक्रो बलवान् म्लेच्छानामन्तकृत्स तु।**
**अधृष्यः सर्वभूतानां चचाराथ वसुंधराम्।।**

प्रवृत्तचक्रः प्रवृत्ताज्ञामण्डलः। शितो.

**मानवस्य तु सोंऽशेन देवस्येह विजज्ञिवान्।**
**पूर्वजन्मनि विष्णोस्तु प्रमितिर्नाम वीर्यवान्।**
**गोत्रतो वै चन्द्रमसः पूर्णे कलियुगे प्रभुः।।**

ननु कल्किसंज्ञो विष्णोरवतार इति प्रसिद्धम्, अत्र मानवांशत्वेन पूर्वमुक्त इति विरोधाशङ्कामपनुदति – मानवस्येति। पूर्वजन्मनि यः प्रमितिर्नाम तु पुनः इह भरतखण्डे विष्णोर्देवस्य तु, (तुः) चार्थे, मानवस्यांशेन चन्द्रमसः गोत्रे कलियुगे पूर्णे विजज्ञिवानित्यग्रिमस्थैरन्वयः। तस्य उभयांशकत्वाच्छककर्तेति व्यवहारोऽपि संगतः। शितो.

**द्वात्रिंशेऽभ्युदिते वर्षे प्रक्रान्तो विंशतिः समाः।**
**विनिघ्नन्सर्वभूतानि शतशोऽथ सहस्रशः।।**

विंशतिः समाः प्रक्रान्तः प्रक्रममाणः द्वात्रिंशे वर्षेऽभ्युदिते सति सहानुगः गङ्गायमुनयोर्मध्ये स्थितिं प्राप्त इत्येकषष्टितमेनान्वयः। शितो.

**कृत्वा बीजावशेषां तु पृथिवीं क्रूरकर्मणः।**
**परस्परनिमित्तेन कोपेनाऽऽकस्मिकेन तु।।**
**स साधयित्वा वृषलान् प्रायशस्तानधार्मिकान्।**
**गङ्गायमुनयोर्मध्ये स्थितिं प्राप्तः सहानुगः।।**

साधयित्वा घातयित्वा। शितो.

**ततो व्यतीते काले तु सामात्यः सहसैनिकः।**
**उत्साद्य पार्थिवान्सर्वान् म्लेच्छांश्चैव सहस्रशः।।**
**तत्र संध्यांशके काले संप्राप्ते तु युगान्तिके।**
**स्थितास्वल्पावशिष्टासु प्रजास्विह क्वचित्क्वचित्।।**
**अप्रग्रहास्ततस्ता वै लोभाविष्टास्तु कृत्स्नशः।**
**उपहिंसन्ति चान्योन्यं प्रणिपत्य परस्परम्।।**

ततः कल्क्यवतारसमाप्त्यनन्तरम्, यद्वा सर्वकलियुगेषु कल्क्यवताराभावात्तदुपलक्षितकालानन्तरमित्यर्थः। प्रणिपत्य उपहिंसन्ति विश्वस्य घातयन्तीत्यर्थः। शितो.

**अराजके युगवशात्संशये समुपस्थिते।**
**प्रजास्ता वै ततः सर्वाः परस्परभयार्दिताः।।**
**व्याकुलाश्च परिभ्रान्तास्त्यक्त्वा दारान् गृहाणि च।**
**स्वान्प्राणाननपेक्षन्तो( ? न्त्यो) निष्कारुण्याः सुदुःखिताः।।**
**नष्टे श्रौते स्मार्तधर्मे परस्परहतास्तदा।**
**निर्मर्यादा निराक्रान्ता निःस्नेहा निरपत्रपाः।।**
**नष्टे धर्मे प्रतिहता ह्रस्वकाः पञ्चविंशकाः।**
**हित्वा पुत्रांश्च दारांश्च विवादव्याकुलेन्द्रियाः।।**
**अनावृष्टिहताश्चैव वार्तामुत्सृज्य दूरतः।**
**प्रत्यन्तानुपसेवन्ते हित्वा जनपदान्स्वकान्।।**

प्रत्यन्तान् म्लेच्छदेशान्। 'प्रत्यन्तो म्लेच्छदेशः स्यात्' इत्यमरः। शितो.

**सरित्सागरकूपांस्ते सेवन्ते पर्वतांस्तथा।**
**मधुमांसैर्मूलफलैर्वर्तयन्ति सुदुःखिताः।।**
**चीरपत्राजिनधरा निष्क्रिया निष्परिग्रहाः।**
**वर्णाश्रमपरिभ्रष्टाः संकटं घोरमास्थिताः।।**
**एवं कष्टमनुप्राप्ता अल्पशेषाः प्रजास्तदा।**
**जराव्याधिक्षुधाविष्टा दुःखान्निर्वेदमानसाः।।**
**विचारणा तु निर्वेदात्साम्यावस्था विचारणा।**
**साम्यावस्थात्मको बोधः संबोधाद्धर्मशीलता।**
**अरूपशमयुक्तास्तु कलिशिष्टा हि वै स्वयम्।।**

निर्वेदात् दुःखात् विचारणा विचारेच्छेत्यर्थः। स्वयमरूपशमयुक्ताः अशक्तिमूलकशान्तियुक्ता इत्यर्थः। शितो.

**अहोरात्रात्तदा तासां युगं तु परिवर्तते।**
**चित्तसंमोहनं कृत्वा तासां वै सुप्तमत्तवत्।**
**भाविनोऽर्थस्य च बलात्ततः कृतमवर्तत।।**

अहोरात्रादहोरात्रेण तासां सुप्तमत्तवत्संमोहनं कृत्वा युगं कलियुगं परिवर्तते निवृत्तं भवतीत्यर्थः। शितो.

**प्रवृत्ते तु ततस्तस्मिन्पुनः कृतयुगे तु वै।**
**उत्पन्नाः कलिशिष्टास्तु प्रजाः कार्तयुगास्तदा।।**
**तिष्ठन्ति चेह ये सिद्धा अदृष्टा विचरन्ति च।**
**सप्त सप्तर्षिभिश्चैव तत्र ते तु व्यवस्थिताः।।**

इह ये सप्त सिद्धाः अदृष्टास्तिष्ठन्ति विचरन्ति चेत्यग्रिमस्थसप्तपदस्यात्रान्वयो बोध्यः। सप्त सिद्धास्तु व्यपोहनस्तवे उक्ताः – 'मन्त्रज्ञो मन्त्रवित्प्राज्ञो मन्त्रराट् सिद्धपूजितः। सिद्धवत्परमः सिद्धः सर्वसिद्धिप्रदायिनः।।' इति। सप्तर्षिभिः कश्यपादिभिः। तदुक्तं – 'कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः। वसिष्ठो जमदग्निश्च सप्तर्षय उदाहृताः।।' इति। शितो.

**ब्रह्मक्षत्रविशः शूद्रा बीजार्थं ये स्मृता इह।**
**कलिजैः सह ते सर्वे निर्विशेषास्तदाऽभवन्।।**
**तेषां सप्तर्षयो धर्मं कथयन्तीतरेऽपि च।**
**वर्णाश्रमाचारयुतं श्रौतं स्मार्तं द्विधा तु यम्।।**
**ततस्तेषु क्रियावत्सु वर्धन्ते वै प्रजाः कृते।**
**श्रौतस्मार्तकृतानां च धर्मे सप्तर्षिदर्शिते।।**
**केचिद्धर्मव्यवस्थार्थं तिष्ठन्तीह युगक्षये।**
**मन्वन्तराधिकारेषु तिष्ठन्ति मुनयस्तु वै।।**

**यथा दावप्रदग्धेषु तृणेष्विह ततः क्षितौ।**
**वनानां प्रथमं वृष्ट्या तेषां मूलेषु संभवः।**
**तथा कार्तयुगानां तु कलिजेष्विह संभवः।।**
**एवं युगाद्युगस्येह संतानं तु परस्परम्।**
**वर्तते ह्यव्यवच्छेदाद्यावन्मन्वन्तरक्षयः।।**
**सुखमायुर्बलं रूपं धर्मोऽर्थः काम एव च।**
**युगेष्वेतानि हीयन्ते त्रींस्त्रीन्पादान्क्रमेण तु।।**

युगेषु कृतत्रेताद्वापरेषु। त्रींस्त्रीन् पादान् त्रिपादत्रिपादमित इत्यर्थः। शितो.

**ससंध्यांशेषु हीयन्ते युगानां धर्मसिद्धयः।**
**इत्येषा प्रतिसिद्धिर्वै कीर्तितैषा क्रमेण तु।।**

## स्कन्दपुराणम्

युगेषु सत्त्वरजस्तमसां प्राधान्यविवेकः, युगभेदेन धर्मभेदाः, द्वापरे वेदविभाजनम्, युगगुणदोषप्रयुक्तचराचरवृत्तानि

**महाकाल उवाच –**

**'आद्यं कृतयुगं विद्धि ततस्त्रेतायुगं स्मृतम्।**
**द्वापरं च कलिश्चेति चत्वारश्च समासतः।।**
**सत्त्वं कृतं रजस्त्रेता द्वापरं च रजस्तमः।**
**कलिस्तमस्तु विज्ञेयं युगवृत्तं युगेषु च।।**
**ध्यानं परं कृतयुगे त्रेतायां यज्ञ उच्यते।**
**वृत्तं च द्वापरे सत्यं दानमेव कलौ युगे।।**
**कृते तु मानसी सृष्टिर्वृत्तिः साक्षाद्रसोल्लसा।**
**तेजोमय्यः प्रजास्तृप्ताः सदानन्दाश्च भोगिनः।।**
**अधमोत्तमो न तासां ता निर्विशेषाः प्रजाः शुभाः।**
**तुल्यमायुः सुखं रूपं तासां तस्मिन्कृते युगे।।**
**न चाप्रीतिर्न च द्वन्द्वो न द्वेषो नापि च क्लमः।**
**पर्वतोदधिवासिन्यो ह्यनुक्रोशप्रियास्तु ताः।।**
**वर्णाश्रमव्यवस्था च तदाऽऽसीन्न हि संकरः।**
**एकमन्यं न ध्यायन्ति परमं ते सदा शिवम्।।**

(१) स्कन्द. १।२।४०।१७३-१७९, १९२-१९७.

दुदोह गां पृथुर्वैन्यः सर्वभूतहिताय वै।
तदाप्रभृति चौषध्यः फालकृष्टाः प्रजास्ततः।
वार्तया वर्तयन्ति स्म पाल्यमानाश्च क्षत्रियैः।।
वर्णाश्रमप्रतिष्ठा च यज्ञस्त्रेतासु चोच्यते।
सदाशिवध्यानमयं त्यक्त्वा मोक्षमचेतनाः।।
पुष्पितां वाचमाश्रित्य रागात्स्वर्गमसाधयन्।
द्वापरे न प्रवर्तन्ते मतिभेदास्ततो नृणाम्।।
मनसा कर्मणा वाचा कृच्छ्राद्वार्ता प्रसिध्यति।
लोभोऽधृतिः शिवं त्यक्त्वा धर्माणां संकरस्तथा।।
वर्णाश्रमपरिध्वंसाः प्रवर्तन्ते च द्वापरे।
तदा व्यासैश्चतुर्धा च व्यस्यते द्वापरात्ततः।।
[1]एवं कलियुगे राजञ्छास्त्रसंक्षेप उच्यते।
शृणु तिष्यप्रवृत्तिं च हर्षोद्वेगकरीं किल।।
तिष्ये मायामसूयां च वधं चैव तपस्विनाम्।
साधयन्ति नरास्तत्र तमसा व्याकुलेन्द्रियाः।।
कलौ प्रमाथको रागः सततं क्षुद्भयानि च।
अनावृष्टिभयं घोरं देशानां च विपर्ययः।।
न प्रमाणं श्रुतेरस्ति नृणां चाधर्मसेवनात्।
अधार्मिकास्त्वनाचारा महाकोपाल्पतेजसः।।
अनृतं ब्रुवते लुब्धा नारीप्रायाश्च दुष्प्रजाः।
दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः।।
विप्राणां कर्मदोषैश्च प्रजानां जायते क्षयः।
उत्सीदन्ति क्षत्रविशो वर्धन्ते शूद्रविप्रकाः।।
शूद्रा विप्रैः सहाऽऽसन्ते शयनासनभोजनैः।
शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः।।
राजवृत्त्यां स्थिताश्चौराश्चौराचाराश्च पार्थिवाः।
एकपत्न्यो न शिष्यन्ति वर्धयन्त्यभिसारिकाः।।
तदा ह्यल्पफला भूमिः क्वचिच्चापि महाफला।
अरक्षितारो हर्तारो राजानः पापनिर्भयाः।।
अक्षत्रियास्तु राजानो विप्राः शूद्रोपजीविनः।
शूद्रा विवादिनः सर्वे ब्राह्मणैरभिनन्दिताः।
आसनस्थान्द्विजान्दृष्ट्वा न चलन्त्यत्यल्पबुद्धयः।।
आस्ये निधाय वै हस्तं कर्णे शूद्रस्य च द्विजाः।
नीचस्यापि तदा वाक्यं वक्ष्यन्ति विनयेन तम्।।
उच्चासनस्थाञ्छूद्रांश्च द्विजानां पश्यतामपि।
ज्ञात्वा न हिंसते राजा पश्य कालबलं नृप।।
पुष्पैः शुभसितैश्चैव तथाऽन्यैर्मण्डनैर्द्विजाः।
शूद्रानभ्यर्चयन्त्यल्पश्रुतभाग्यबलान्विताः।।
पाषण्डिनां च गृह्णन्ति ब्राह्मणाः कुप्रतिग्रहम्।
येन ते रौरवं यान्ति सुदुस्तारं द्विजाधमाः।।
तपोयज्ञफलानां च विक्रेतारो द्विजास्तथा।
यतयश्च भविष्यन्ति बहवः कोटिशः कलौ।
पुरुषाल्पबहुस्त्रीको नृणां चापत्यसंभवः।।
निन्दन्ति वेदवाक्यानि वेदार्थांश्च कलौ युगे।
शूद्रैः स्वयं निर्मितं यत्प्रमाणं शास्त्रमेव तत्।।
श्वापदप्रबलत्वं च गवां चापि परिक्षयः।
कस्यचिद्दानप्रभृतिधर्मस्यास्ति न शुद्धता।
साधूनां बहवो नाशाः पार्थिवाश्चाप्यरक्षिणः।।
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे।।
स्त्रीप्रधानानि गेहानि कुचैलास्ताश्च कर्कशाः।।
बहुभक्ष्यावलिप्ताश्च कृत्या इव भवन्ति च।
सर्वे वणिग्जनाश्चापि चित्रवर्षी च वासवः।।
कुशीलचर्यापाषण्डैर्वृथारूपैः समावृतः।
बहुयाचनको लोको भविष्यति परस्परी।
अशङ्कश्चैव पापेषु तदा लोको भविष्यति।।
हर्तारः पररत्नानां परदारप्रधर्षकाः।
ऊनषोडशवर्षाश्च प्रजायन्ते युगक्षये।
तथा द्वादशवर्षाश्च प्रसवन्ति स्त्रियस्तदा।।
चौराश्चौरस्य हर्तारो हर्तुर्हर्ता तथाऽपरः।
ज्ञानकर्मण्युपरते लोके निष्क्रियतां गते।
कीटमूषकसर्पाश्च धर्षयिष्यन्ति मानवान्।।
वर्णाश्रमाणां ये चान्ये पाषण्डाः परिपन्थिनः।
ते तदा प्रोद्भविष्यन्ति तेषां वृद्धिश्च पार्थिव।।
दुःखं पुत्रकलत्राद्यं देहोत्सादः सरोगता।
अधर्माभिनिवेशत्वात्तमसो जायते कलौ।।
कलेर्दोषनिधेश्चैव शृणुष्वैवं महागुणम्।
तदाऽल्पेनैव कालेन सिद्धिं गच्छन्ति मानवाः।।

(१) स्कन्द. १।२।४०।२१७-२४८.

**त्रियुगीना वदन्त्येवं धन्या धर्मं चरन्ति ये।**
**श्रुतिस्मृतिपुराणोक्तं कलौ श्रद्धापरायणाः।।**
**त्रेतायां वार्षिको धर्मो द्वापरे मासिकः स्मृतः।**
**यथाक्लेशं चरन्प्राज्ञस्तदह्ना प्राप्यते कलौ।।**
**युगत्रयेण तावन्तः सिद्धिं गच्छन्ति पार्थिव।**
**यावन्तः सिद्धिमायान्ति कलौ हरिहरव्रताः।।**

कलेः चतुःसहस्राधिकेषु वर्षेषु गतेषु राजा प्रमितिरवतीर्य धर्मभ्रष्टाः प्रजा निहनिष्यति, ततः कालेनावशिष्टा अपि प्रजा धर्मभ्रष्टा अत्यन्तदुर्गताः प्रत्यन्तदेशान् गमिष्यन्ति, पुनश्च कालेन धर्मभ्रष्टाः प्रजाः धर्मघातकं शाल्वं नाम म्लेच्छं च हन्तुं शम्भलग्रामे विष्णुयशसः सकाशात् परमेश्वरो विष्णुरवतीर्य पापिनो हत्वा धर्मस्थापनं करिष्यति, ततः प्रवृत्ते कृतयुगे मरोर्देवापेश्च सकाशात् सूर्यसोमवंशौ श्रुतदेवाच्च ब्राह्मणकुलानि प्रवर्त्स्यन्ति

**[1]चतुर्षु च सहस्रेषु शतेष्वपि चतुर्षु च।**
**साधिकेषु महान्राजा प्रमितिः प्रभविष्यति।**
**गोत्रेषु वै चन्द्रमसो बहुसेनापतिर्बली।।**
**म्लेच्छान्स कोटिशो हत्वा पाषण्डानि च सर्वशः।**
**वैदिकं केवलं शुद्धं सद्धर्मं वर्तयिष्यति।**
**गङ्गायमुनयोर्मध्ये निष्ठां यास्यति पार्थिवः।।**
**ततः प्रजाश्च कालेन केनापि भृशपीडिताः।**
**घोरं वा धर्ममाश्रित्य शाठ्येन च भवन्ति ताः।।**
**अप्रग्रहास्ततस्ता वै लोभाविष्टाश्च वृन्दशः।**
**उपहिंसन्ति चान्योन्यं व्याकुलाः श्रमपीडिताः।।**
**नष्टे श्रौते तथा स्मार्ते परस्परहतास्तदा।**
**निर्मर्यादा निष्करुणा निःस्नेहा निरपत्रपाः।।**
**गृहदाराणि संत्यज्य ह्रस्वकाः पञ्चविंशतिः।**
**हाहाभूताश्चरिष्यन्ति विषादव्याकुलेन्द्रियाः।।**
**प्रत्यन्तांस्ता निषेवन्ति हित्वा जनपदान्स्वकान्।।**

(१) **स्कन्द.** १।२।४०।२५९-२७६.

**सरित्सागरकूलांश्च सेवन्ते पर्वतांस्तथा।**
**मांसैर्मूलफलैश्चैव वर्तयन्ति सुदुःखिताः।**
**चीरपत्राजिनधरा निष्क्रिया निष्परिग्रहाः।।**
**धर्मस्य वासमात्रं च शाल्वो म्लेच्छो हनिष्यति।**
**उत्तमाधममध्यत्वं सर्वमुच्छिद्य घोरकृत्।।**
**ततस्तस्य वधार्थाय विष्णुः साक्षाज्जगत्पतिः।**
**शम्भले विष्णुयशसो भूत्वा पुत्रो नृपोत्तम।**
**द्विजोत्तमैः परिवृतः शाल्वं तं संहरिष्यति।।**
**कोटिशोऽर्बुदशः पापान्निहत्य च निखर्वशः।**
**पालयिष्यति तं धर्मं यो धर्मः श्रुतिपूर्वकः।।**
**कृत्वा पोतं धर्मरूपं साधूनां परमेश्वरः।**
**गमिष्यति परं लोकं कृत्वा कर्माणि भूरिशः।।**
**ततः कृतयुगं भूयः प्रवर्तिष्यति पार्थिव।**
**आद्यं कृतयुगं चान्यं तदन्येभ्यो विशिष्यते।।**
**अष्टाविंशकलिश्चैव शेषः प्रावर्त अन्यतः।**
**ततः कृते सूर्यवंशः सोमवंशः प्रवर्त्स्यति।**
**मरुराजाच्च देवापेः श्रुतदेवाच्च ब्राह्मणाः।।**
**इति चातुर्युगी राजन्व्यवस्था परिवर्तते।**
**चतुर्युगे च ते धन्या ये भजन्ति हराच्युतौ।।**

युगेषूत्तरोत्तरमल्पकालेन धर्मसिद्धिः, कलौ पुराणश्रवणं विष्णूपासनं च परो धर्मः, कलिदोषप्रयुक्तलोकवृत्तानि

**[1]दशवर्षैस्तु यत्पुण्यं क्रियते तु कृते युगे।**
**त्रेतायामेकवर्षेण तत्पुण्यं साध्यते नृभिः।।**
**द्वापरे तच्च मासेन तद्दिनेन कलौ युगे।**
**तत्फलं कोटिगुणितं निमिषे निमिषे नृणाम्।।**
**[1]निःसंदेहं भवेदेवं श्रीनिवासविलोकिनाम्।।**
**[2]कलौ युगे विशेषेण पुराणश्रवणादृते।**
**नास्ति धर्मः परः पुंसां नास्ति मुक्तिप्रदं परम्।।**

(१) **स्कन्द.** २।१।१८।३-४; ३।१।४३।३-४.

(१) **स्कन्द.** २।१।१८।५ : ३।१।४३।५ श्रीनिवास (रामनाथ).

(२) **स्कन्द.** २।१।२७।२८-२९ णाद्वि (णं वि) : २।४।३६।३८ प्रदं परम् (पथः परः) र्नामसंकीर्तनं (र्नास्ति संकीर्तनात्) चतुर्थमर्धं नास्ति.

पुराणश्रवणाद्विष्णोर्नामसंकीर्तनं परम्।
उभे एव मनुष्याणां पुण्यद्रुममहाफले।।
[1]घोरे कलियुगे तस्मिंस्त्रिपादो धर्मविप्लवः।
धर्मः स्यादेकपादस्तु क्वचित्तस्य भयाच्चरेत्।।
सर्वेऽनृतप्रधाना हि दाम्भिकाः शठवृत्तयः।
प्रायश्च धर्मविमुखा जिह्वोपस्थपरायणाः।
न ध्यायन्ति तपस्यन्ति व्रतयन्ति कदाचन।।
अधर्मबहुलाः सर्वे हिंसका लोलुपाः परम्।
परेषां परिवादेन तुष्यन्ति स्वकृतं विना।।
प्रसङ्गात्कौतुकाद्वाऽपि निघ्नन्ति परकर्म वै।
क्षुद्रकार्याशयात्स्वस्य परकार्यप्रबाधकाः।।
धर्मलब्धां स्त्रियं रम्यामवज्ञाय स्ववेश्मनि।
परयोषिति निन्द्यायां प्रसक्ताः पशुचेष्टिताः।।
अग्निहोत्रादिकं वाऽपि व्रतं नान्यत्क्वचित्क्वचित्।
जीविका तद्द्विजातीनां येषां वा पारलौकिकम्।।
अव्रताधीतवेदेन अन्यायाप्तधनेन च।
वित्तशाठ्येन च कृतं न तथा फलदायि तत्।।
प्रायः कलियुगे भूपाः प्रजावनपराङ्मुखाः।
करादानपरा नित्यं पापिष्ठाश्चौर्यवृत्तयः।।
वर्णसंकरिणः सर्वे शूद्रप्रायाः कलौ युगे।
हर्तारः पार्थिवा एव शूद्राश्च नृपसेवकाः।।
श्रौतस्मार्तादिकं कर्म न तथा सदनुष्ठितम्।
युगे चतुर्थे भो विप्राः परलोकाय कल्पिते।।
दानधर्मः परो ह्येष नान्यो धर्मः प्रशस्यते।
कर्मणा मनसा वाचा हितमिच्छेद्द्विजन्मनाम्।।
[2]यथातथा वर्तमानो वर्णानां ब्राह्मणो गुरुः।
भगवानपि देवेशः स साक्षाद्ब्राह्मणप्रियः।।
तस्मात्कलियुगे तस्मिन्ब्राह्मणो विष्णुरेव च।
उभौ गतिश्च सर्वेषां ब्राह्मणानां हरिर्गतिः।।
हरिरेवात्र सर्वेषां गतिः प्राप्ते कलौ युगे।
शालग्रामादिके क्षेत्रे स्मर्यते कीर्त्यतेऽपि च।।
तस्मिन्नीलाचले पुण्ये क्षेत्रे क्षेत्रज्ञवर्ष्मणि।
जीवभूतः स सर्वेषां दारुव्याजशरीरभृत्।।

(१) स्कन्द. २।२।३८।२६-३७.

(२) स्कन्द. २।२।३८।४०, ४३-४६.

कलिकल्मषनाशाय प्रायो दुष्कृतकर्मणाम्।
दर्शनस्तवनोच्छिष्टभोजनैर्मुक्तिदायकः।।

कलौ विष्णूपासनमेव शीघ्राधिककफलदं कामरस-
योर्दुर्जयत्वं च, तत्प्रसङ्गेन धर्मवर्णनाम-
द्विजवृत्तान्तकथनम्, विस्तरेण
कलिदोषप्रयुक्तलोक-
वृत्तान्तकथनम्

[1]त्रिंशत्कलियुगस्यान्ते सर्वधर्मविवर्जिते।
आनर्ते तु द्विजः कश्चिद्धर्मवर्ण इति श्रुतः।।
दृष्ट्वा कलियुगे राजञ्जनान्पापरतान्मुनिः।
तस्यैव प्रथमे पादे वर्णधर्मविवर्जिते।।
स कदाचित्सत्रयागं मुनीनां तु महात्मनाम्।
अगमत्पुष्करे क्षेत्रे कुर्वतां मौनधारिणाम्।।
तत्र चाऽऽसन्पुण्यकथा ऋषीणां शास्त्रगोचराः।
तत्र केचित्कलियुगं प्रशशंसुर्धृतव्रताः।।
कृते यद्वत्सरात्साध्यं पुण्यं माधवतोषणम्।
त्रेतायां मासतः साध्यं द्वापरे पक्षतो नृप।।
तस्माद्दशगुणं पुण्यं कलौ विष्णुस्मृतेर्भवेत्।
अत्यल्पमपि वै पुण्यं कलौ कोटिगुणं भवेत्।।
दयापुण्यविहीने तु दानधर्मविवर्जिते।
दयादानं च कुरुते सकृदुच्चार्य वै हरिम्।
स एव चोर्ध्वगो नूनं दुर्भिक्षे चान्नदस्तथा।।
एतत्प्रसङ्गावसरे नारदोऽभ्येत्य वै मुनिः।
करेणैकेन शिश्नं च जिह्वां चैकेन वै हसन्।
प्रगृह्योन्मत्तवत्तत्र ननर्त मुनिसत्तमः।।
सभ्यास्तदा तमित्यूचुः किमेतदिति नारद।
प्रत्युवाच स तान्सर्वान्नृत्यं कुर्वन्हसन्सुधीः।।
संतोषाद्यदिह प्रोक्तं नृत्यद्भिर्भावितात्मभिः।
सिद्धा वयं न संदेहः पुण्योऽयं कलिरागतः।।
तत्सत्यं न च संदेहो बहु स्वल्पेन साध्यते।
स्मरणात्तोषमायाति केशवः क्लेशनाशनः।।
तथापि वः प्रवक्ष्यामि दुर्घटं च द्वयं ध्रुवम्।
शिश्नस्य निग्रहः पुत्रा जिह्वाया अपि नित्यशः।
द्वयं यद्धि भवेद्यस्य स एव स्याज्जनार्दनः।।

(१) स्कन्द. २।७।२२।१६-५२.

शिश्नस्य निग्रहः कामजय इत्यर्थः। जिह्वाया निग्रहः मधुरादिरसेषु रागद्वेषराहित्यम्। वैमाटी.

**भवद्भिर्नात्र स्थातव्यं तस्मात्कलियुगागमे।**
**पाखण्डं भारतं हित्वा संचरध्वं यथासुखम्।**
**यत्र कुत्रापि देशेषु मनो यत्र प्रसीदति।।**
**इति तद्वचनं श्रुत्वा मुनयः शंसितव्रताः।**
**सत्रं समाप्य सहसा ययुस्ते च यथासुखम्।।**
**धर्मवर्णोऽपि तच्छ्रुत्वा त्यक्तुं भूमिं मनो दधे।**
**स व्रतं चोर्ध्वतेजस्कं धृत्वा दण्डकमण्डलू।।**
**जटावल्कलधारी च भूत्वा चैवं ययौ पुनः।**
**कलौ युगे त्वनाचारान्द्रष्टुं विस्मितमानसः।।**
**तत्रापश्यज्जनान्घोरान्पापाचाररतान्खलान्।**
**पाखण्डिनो द्विजाः सर्वे शूद्राः प्रव्राजिनस्तथा।।**

प्रव्राजिनः संन्यासिनः। वैमाटी.

**भर्तारं द्वेष्टि भार्या च शिष्यो द्वेष्टि गुरुं तथा।**
**भृत्यश्च स्वामिहन्ता च पुत्रः पितृवधे रतः।।**
**शूद्रप्राया द्विजाः सर्वे बस्तप्रायाश्च धेनवः।**
**गाथाप्रायास्तथा वेदाः क्रियासाम्याः शुभाः क्रियाः।।**

शुभाः श्रुतिस्मृतिपुराणविहिताः क्रियाः कर्माणि क्रियासाम्याः लौकिकगमनागमनादिसदृशाः। वैमाटी.

**भूतप्रेतपिशाचाद्याः फलदास्तत्र देवताः।**
**ता एव श्रद्धयाऽर्चन्ति जनाः पापरताः शिताः।।**

शिताः क्रूराः। वैमाटी.

**सर्वे व्यवायनिरतास्तदर्थे त्यक्तजीविताः।**
**कूटसाक्ष्यप्रवक्तारः सदा कैतवमानसाः।।**

कूटसाक्ष्यं मत्साक्षिकमिदमिति मिथ्याकथनम्। वैमाटी.

**मनस्येकं वचस्येकं कर्मण्येकं सदा कलौ।**
**सर्वेषां हैतुकी विद्या सा पूज्या नृपमन्दिरे।।**

एकम् अन्यत्, 'एके मुख्यान्यकेवलाः' इत्यभिधानात्। हैतुकी सहेतुका। जीविकार्थं सकलं कर्मेति भावः। वैमाटी.

**गीताद्याश्च कला विद्या नृपाणां च प्रियावहाः।**
**हीनाश्च पूज्यतां यान्ति नोत्तमाश्च कलौ युगे।।**
**श्रोत्रियाश्च द्विजाः सर्वे दरिद्राः स्युः कलौ युगे।**
**विष्णुभक्तिर्नराणां तु प्रायशो नैव वर्तते।।**
**प्रायः पाखण्डभूयिष्ठं पुण्यक्षेत्रं भविष्यति।**
**शूद्रा धर्मप्रवक्तारो जटिलास्तापसाः कलौ।।**
**सर्वे चाल्पायुषो मर्त्या दयाहीनाः शठा जनाः।**
**सर्वे धर्मप्रवक्तारः सर्वे च ग्रहणोत्सवाः।।**

ग्रहणं परद्रव्यादीनाम्, तत्र उत्सवः हर्षः येषां तथाविधाः। वैमाटी.

**स्वार्चनं चापि हीच्छन्ति वृथा निन्दापरायणाः।**
**असूयानिरताः सर्वे प्रभोः स्वगृहमागते।।**
**भ्राता च भगिनीगन्ता पिता पुत्रीं च वै कलौ।**
**सर्वेऽपि शूद्रीनिरताः सर्वे वाराङ्गनारताः।।**
**साधूंश्चैव विजानन्ति बहुपापांश्च मन्यते।**
**व्यक्तीकुर्वन्ति साधूनां दोषमेकं दुराग्रहाः।।**
**पापानां दोषजातानि गुणत्वेन वदन्ति हि।**
**दोषमेव प्रगृह्णन्ति कलौ तु विगुणा जनाः।।**
**जलौका धर्मसंयुक्ता रक्तं पिबति नो पयः।**
**औषध्यः सत्त्वहीना हि ऋतूनां व्यत्ययास्तथा।।**
**दुर्भिक्षं सर्वराष्ट्रेषु कन्या काले न सूयते।**
**नटनर्तकविद्यासु प्रीतिमन्तो नराः कलौ।।**

काले प्रसवदशायां न सूयते। बालैव प्रसूते इत्यर्थः। वैमाटी.

**वेदवेदान्तविद्यासु निरता ये गुणाधिकाः।**
**भृत्यान्पश्यन्ति तान्मूढास्ते भ्रष्टाश्चाखिला नृप।।**
**त्यक्तश्राद्धक्रियाः सर्वे त्यक्तवेदोदिताक्रियाः।**
**जिह्वायां विष्णुनामानि न वर्तन्ते कदाचन।**
**शृङ्गाररसनिर्वाणास्तद्गीतान्येव ते जगुः।।**

शृङ्गाररस एव निर्वाणः मुक्तिसदृशः येषां ते। वैमाटी.

**न विष्णुसेवा न च शास्त्रवार्ता**
**न यागदीक्षा न विचारलेशः।**
**न तीर्थयात्रा न च दानधर्माः**
**कलौ जने क्वापि बभूव चित्रम्।।**

**[1]जिह्वादार्ढ्यं गुह्यदार्ढ्यं न कस्यापि कलौ युगे।।**

(१) स्कन्द. २।७।२२।८६.

विष्णूपासनसदाचारादेः कलिबाधा-
निवर्तकत्वम्, नैष्ठिकव्रताधि-
कारस्य कलौ निषिद्ध-
त्वात् संधाव-
निषेधः

[1]**ये च विष्णुकथारक्ता ये स्मरन्त्यनिशं हरिम्।**
**ये सदाचारनिरता न तान्वै बाधते कलिः।।**
**शालिग्रामशिला यस्य गृहे तिष्ठति मानद।**
**अथवा भारतं गेहे न तं वै बाधते कलिः।।**
**यश्च वैशाखनिरतो माघस्नानपरश्च यः।**
**कार्तिके दीपदाता यो न तं वै बाधते कलिः।।**
**प्रत्यहं शृणुयाद्यस्तु कथां विष्णोर्महात्मनः।**
**पापघ्नीं मोक्षदां दिव्यां न तं वै बाधते कलिः।।**
**यद्गृहे वैश्वदेवश्च यद्गृहे तुलसी शुभा।**
**यदङ्गणे शुभा गौश्च न तं वै बाधते कलिः।।**
[2]**अनधिकारिता प्रोक्ता नैष्ठिकव्रतिनां कलौ।**
**न संधाविति विज्ञेयं कलीतिशब्दसंग्रहात्।।**

कलौ शिवपुराणश्रवणमेव
श्रेयान् धर्मः

[3]**कलौ युगे विशेषेण पुराणश्रवणादृते।**
**नास्ति धर्मः परः पुंसां नास्ति मुक्तिपथः परः।।**
**पुराणश्रवणाच्छम्भोर्नास्ति संकीर्तनं परम्।**
**अत एव मनुष्याणां कल्पद्रुममहाफलम्।।**
**कलौ हीनायुषो मर्त्या दुर्बलाः श्रमपीडिताः।**
**दुर्मेधसो दुःखभाजो धर्माचारविवर्जिताः।।**
**इति संचिन्त्य कृपया भगवान्बादरायणः।**
**हिताय तेषां विदधे पुराणाख्यं सुधारसम्।।**
**पिबन्नेवामृतं यत्नादेतत्स्यादजरामरः।**
**शंभोः कथामृतं कुर्यात्कुलमेवाजरामरम्।।**

(१) **स्कन्द.** २।७।२२।९५-९९.
(२) **स्कन्द.** २।९।२१।१६-१७.
(३) **स्कन्द.** ३।३।२२।१५-१९.

कलौ गङ्गातीर्थस्य दानस्य विश्वेश्वर-
देवस्य वाराणसीपुर्याश्च
प्राधान्यम्

[1]**कृते सर्वत्र तीर्थानि त्रेतायां पुष्करं परम्।**
**द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम्।।**
**ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः।**
**द्वापरे तद्द्वयं यज्ञाः कलौ गङ्गैव केवलम्।।**

तच्च वै तपः तत् ध्यानं तपश्च मोक्षहेतुः इति सर्वत्रान्वेति। कलौ गङ्गैवेति। तथा चोक्तम् – 'अग्निहोत्रादिकर्माणि सापायानि कलौ युगे। गङ्गास्नानं हरेर्नाम निरपायमिदं द्वयम्।।' इति। रामा.

**कलौ कलुषचित्तानां परद्रव्यरतात्मनाम्।**
**विधिहीनक्रियाणां च गतिर्गङ्गां विना न हि।।**
**यज्ञदानतपोयोगजपाः सनियमा यमाः।**
**गङ्गासेवासहस्रांशं न लभन्ते कलौ हरे।।**
**वृथा कुलं वृथा विद्या वृथा यज्ञा वृथा तपः।**
**वृथा दानानि तस्येह कलौ गङ्गां न यो भजेत्।।**
[2]**न सिध्यति कलौ योगो न सिध्यति कलौ तपः।**
**न्यायार्जितधनोत्सर्गः सद्यः सिध्येत्कलौ नरः।।**

ननु केचित् योगेन तपसा वा मुच्यन्त इति श्रूयते, सत्यम्, तत् तु कलौ न सिध्यतीत्याह – न सिध्यतीति। न्यायार्जितधनस्य उत्सर्गः त्यागः यस्य स नरः। 'परः' इति पाठे परः केवलः सद्यः सिध्येदिति। रामा.

[3]**न व्रतं न तपो नेज्या न जपो न सुरार्चनम्।**
**दानमेव कलौ मुक्त्यै काशीदानैरवाप्यते।।**

उक्तमेव विवृणोति – न व्रतमिति। मुक्त्यै परंपरयेत्यर्थः। तत् एव आह – काशीदानैरित्यादिना।। रामा.

[4]**कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी।**
**कलौ भागीरथी गङ्गा कलौ दानं विशिष्यते।।**

(१) **स्कन्द.** ४।१।२७।१७, १९, २१, २४, ३२.
(२) **स्कन्द.** ४।१।३२।१२३; **कृभ.** १३१६ नरः (सदा).
(३) **स्कन्द.** ४।१।३२।१२४; **कृभ.** १३१६ चतुर्थचरणे (काश्यां दानं विशिष्यते).
(४) **स्कन्द.** ४।१।३२।१२५; **स्मृतिको.** ४६८; **कृभ.** १३१३.

[1]**गङ्गोत्तरवहा काश्यां लिङ्गं विश्वेश्वरं मम।**
**उभे विमुक्तिदे पुंसां प्राप्ये दानबलात्कलौ।।**

प्राप्ये प्राप्तुं योग्ये। 'प्राप्ते' इति पाठे प्राप्तव्ये इति अर्थः। रामा.

कृतयुगप्रमाणम्, कृते हरिः शुक्लः, चतुष्पाद् धर्मः, लोकानां वयोवस्थामानम्, संकर-हीनं चातुर्वर्ण्यमात्रम्, अन्यानि च बहूनि कार्तयुगलोक-वृत्तानि

**बृहस्पतिरुवाच –**

[2]**अहं ते कीर्तयिष्यामि माहात्म्यं युगसंभवम्।**
**यत्प्रमाणं स्वरूपं च शृणुष्वावहितः स्वयम्।।**
**अष्टाविंशतिसहस्राणि लक्षाः सप्तदशैव तु।**
**प्रमाणेन कृतं प्रोक्तं यत्र शुक्लो जनार्दनः।।**
**चतुष्पादस्तथा धर्मः सुसंपूर्णा वसुंधरा।**
**कामक्रोधविनिर्मुक्ता भयद्वेषविवर्जिताः।।**
**जनाश्चिरायुषस्तत्र शान्तात्मानो जितेन्द्रियाः।**
**पञ्चतालप्रमाणाश्च दीप्तिमन्तो बहुश्रुताः।।**
**तत्र षोडशसाहस्रं बालत्वं जायते नृणाम्।**
**ततश्च यौवनं प्रोक्तं द्वात्रिंशद्यावदेव हि।।**
**ततः परं च वार्धक्यं शनैः संजायते नृणाम्।**
**लक्षान्ते परमं यावदन्येषामधिकं क्वचित्।।**
[3]**न तत्र विधवा नारी जायते न च दुर्भगा।**
**काकवन्ध्या सुतैर्हीना न च शीलविवर्जिता।।**
**यथा जन्म तथा मृत्युः क्रमात्संजायते नृणाम्।**
**न वीक्षते पिता पुत्रं मृतं क्वापि कदाचन।।**
**न प्रेतत्वं च लोकानां मृतानां तत्र जायते।**
**न चापि नरके वासो न च रोगव्यथा क्वचित्।।**
**वेदान्तगा द्विजाः सर्वे नित्यं स्वाध्यायशीलिनः।**
**वेदव्याख्यानसंहृष्टा ब्रह्मज्ञानविचक्षणाः।।**
**क्षत्रियाश्चापि भूपालमेकं कृत्वा सुभक्तितः।**
**तदादेशात्प्रभुञ्जन्ति महीं धर्मेण नित्यशः।।**
**वैश्या वैश्यजनार्हाणि चक्रुः कर्माणि भूरिशः।**
**पशुपालनपूर्वाणि क्रयविक्रयजानि च।।**
**मुक्त्वैकां द्विजशुश्रूषां न शूद्रास्तत्र चक्रिरे।**
**किंचित्कर्म सुरश्रेष्ठ श्रद्धया परया युताः।।**
**न तत्र चान्त्यजो जज्ञे न च संकरसंभवः।**
**नापवित्रो न वर्णानां पञ्चमो दृश्यते भुवि।।**
**यजनं याजनं दानं व्रतं नियम एव च।**
**तीर्थयात्रां नरास्तत्र निष्कामा एव कुर्वते।।**
**एवंविधं सहस्राक्ष मया ते परिकीर्तितम्।**
**आद्यं कृतयुगं पुण्यं सर्वलोकसुखावहम्।।**

त्रेतायुगमानम्, त्रेतायां रक्तो हरिः, धर्मस्त्रिपात्, यमकृतं नरकसज्जीकरणम्, वयोवस्था-मानम्, संकरोत्पत्तिः, अन्यानि च बहूनि त्रेतायुगीयलोक-वृत्तानि

**ततस्त्रेतायुगं नाम द्वितीयं संप्रवर्तते।**
**वर्षाणां षण्णवत्याढ्या लक्षा द्वादश संख्यया।।**
**सोऽपि साक्षाज्जगन्नाथः श्वेतद्वीपाश्रयाश्रितः।**
**तत्र रक्तत्वमायाति भगवान्गरुडध्वजः।।**
**त्रिपादस्तत्र धर्मः स्यात्पादेनैकेन पातकम्।**
**तेनापि जायते स्पर्धा वर्णानामितरेतरम्।।**
**ततः फलानि वाञ्छन्ति तीर्थयात्रोद्भवानि ते।**
**व्रतानां नियमानां च स्वर्गवासादिहेतवः।।**
**ततः कामवशान्मोहं सर्वे गच्छन्ति मानवाः।**
**मोहाद्द्रोहं ततो गत्वा पापं कुर्वन्त्यनुक्रमात्।।**
**ततस्तु रौरवादीनि नरकाणि यमः स्वयम्।**
**सज्जीकरोति देवेन्द्र ह्येकविंशतिसंख्यया।।**
**कर्मानुसारतस्तानि सेवयन्ति नराधमाः।**
**केचिदन्ये महेन्द्रादिलोकान्मोक्षं तथा परे।।**
**त्रिविधाः पुरुषास्तत्र श्रेष्ठाश्चाधममध्यमाः।**
**त्रिविधानि च कर्माणि प्रकुर्वन्ति सुरेश्वर।।**
**उन्नतास्तालमात्रेण तेजोवीर्यसमन्विताः।**
**चक्रुश्च कृषिकर्माणि वैश्याश्चैवान्नलिप्सया।।**
**उप्तक्षेत्रं सकृच्चापि सप्तवारं लुनन्ति ते।**
**यथर्तु फलिनो वृक्षा यथर्तु कुसुमान्विताः।।**

(१) स्कन्द. ४।१।३२।१२६.
(२) स्कन्द. ६।२७।९-१४.
(३) स्कन्द. ६।२७।२०-४५.

यथर्तु पत्रसंयुक्तास्तत्र स्युः सुमनोहराः।
अग्निष्टोमादिका यज्ञाः प्रवर्तन्ते सहस्रशः।।
इतरेतरसंस्पर्धैः क्रियमाणा नृपोत्तमैः।
ब्राह्मणैश्च सुरश्रेष्ठ स्वर्गलोकमभीप्सुभिः।।
तीर्थयात्रां व्रतं दानं नियमं संयमं तथा।
परलोकमभीप्सन्तस्तत्र कुर्वन्ति मानवाः।।
सहस्रेण तु वर्षाणां तत्र स्याद्यौवनं नृणाम्।
सहस्रपञ्चकं यावदूर्ध्वं वार्धकमुच्यते।।
रजकश्चर्मकारश्च नटो बुरुड एव च।
कैवर्तमेदभिल्लाश्च चण्डालाः शूद्रमानवाः।।
संभवन्ति युगे तस्मिन्योनिसंसर्गतो विभो।
तथाऽन्ये संख्यया हीना एतेभ्यो निन्दिता नराः।।
[१]एतत्त्रेतायुगे प्रोक्तं मया ते सुरसत्तम।
आकर्णय प्रयत्नेन द्वापरस्याधुना स्थितिम्।।

द्वापरयुगमानम्, द्वापरे हरिः कपिशवर्णः, धर्मो द्विपाद्, वयोवस्थामानम्, अन्यानि च द्वापरीय-लोकवृत्तानि

लक्षाष्टकप्रमाणेन तद्युगं परिकीर्तितम्।
चतुःषष्टिसहस्राणि वर्षाणां परिसंख्यया।
कपिशो जायते तत्र भगवान्गरुडध्वजः।।
द्वौ पादौ चैव धर्मस्य द्वौ पापस्य व्यवस्थितौ।
तत्र स्याद्यौवनं नृणां गते वर्षशतेऽखिले।।
ततोऽन्यैः समतिक्रान्तैर्वार्धक्यं पञ्चभिः शतैः।
तत्र सत्यानृता लोका देवा भूपास्तथा परे।।
नार्यश्चापि सुरश्रेष्ठ तत्स्वरूपाः प्रकीर्तिताः।
पञ्चहस्तप्रमाणेन चतुर्हस्तास्तथा परे।।
नातिरूपेण संयुक्ता न च रूपविवर्जिताः।
अव्यक्तजल्पकाश्चापि पशवः पक्षिणो मृगाः।।
[२]यत्किंञ्चिद्भूतले ज्ञानं शास्त्रं वा सुरसत्तम।
तत्तत्र समभावेन न सत्यं नैव चानृतम्।।
तीर्थानां च मखानां च द्वापरे सुरसत्तम।
फलं भावानुरूपेण दानानां च प्रजायते।।
एतत्तव समाख्यातं युगं द्वापरसंज्ञकम्।
मया सर्वं सुराधीश यथादृष्टं यथाश्रुतम्।।

कलियुगमानम्, कलौ हरिः कृष्णवर्णः, धर्म एकपाद्, वयोमानम्, तपोध्यानयज्ञदानानि यथाक्रमं युगेषु प्रशस्तानि, अन्येषां च बहूनां कलियुगलोक-वृत्तानां विस्तरेण वर्णनम्

शृणुष्वावहितो भूत्वा वदतो मम सांप्रतम्।
रौद्रं कलियुगं नाम यत्र कृष्णो जनार्दनः।।
द्वात्रिंशच्च सहस्राणि वर्षाणां कथितं विभो।
तथा लक्षचतुष्केण साधुलोकविवर्जितम्।।
तत्रैकपादयुक्तश्च धर्मः पापं त्रिभिः स्मृतम्।
पूर्वार्धेभ्यः परं सर्वं संभविष्यति पातकम्।।
न शृण्वन्ति पितुः पुत्रा न स्नुषा भ्रातरो न च।
न भृत्या न कलत्राणि यत्र द्वेषः परस्परम्।।
यत्र षोडशमे वर्षे नराः पलितयौवनाः।
तत्र द्वादशमे वर्षे गर्भं धास्यति चाङ्गना।।
आयुः परं मनुष्याणां शतसंख्यं सुरेश्वर।
नागानां च तरूणां च वर्षाणां यत्र नाधिकम्।।
द्वात्रिंशद्धयमुख्यानां चतुर्विंशतिः खरोष्ट्रयोः।
अजानां षोडश प्रोक्तं शुनां द्वादशसंख्यया।।
चतुष्पदानामन्येषां विंशतिः पञ्चभिर्युता।
यत्र काकाश्च गृध्राश्च कौशिकाश्चिरजीविनः।।
तथा पापपरा लोका दुःस्थिताश्च विशेषतः।
तथा कण्टकिनो वृक्षा रूक्षाः पुष्पफलच्युताः।
सेवितास्तेऽपि गृध्राद्यैर्यत्र च्छायाविवर्जिताः।।
यत्र धर्मो ह्यधर्मेण पीड्यते सुरसत्तम।
असत्येन तथा सत्यं भूपाश्चौरैः सदैव तु।।
गुरवश्च तथा शिष्यैः स्त्रीभिश्च पुरुषाधमाः।
स्वामिनो भृत्यवर्गैश्च मूर्खैश्चापि बहुश्रुताः।।

---

(१) स्कन्द. ६।२७।५४-५९.
(२) स्कन्द. ६।२७।६१-९८.

यत्र सीदन्ति धर्मिष्ठा नराः सत्यपरायणाः।
दान्ता विवेकिनः शान्तास्तथा परहिते रताः।।
आधयो व्याधयश्चैव तथा पीडा महाद्भुता।
सदैव संस्थिता यत्र साधुपीडनवाञ्छया।।
अल्पायुषस्तथा मर्त्या जायन्ते वर्णसंकरात्।
ये केचन प्रजीवन्ति दुःखेन ते समन्विताः।।
न वर्षति घनः काले संप्राप्तेऽपि यथोचिते।
न सस्यं स्यात्सुवृष्टेऽपि कर्षुकस्यापि वाञ्छितम्।।
न च क्षीरप्रदा गावो यद्यपि स्युः सुपोषिताः।
न भवन्ति प्रभूताश्च यत्नेनापि सुरक्षिताः।।
आविकानां तथोष्ट्रीणां यत्र क्षीरप्रशंसकाः।
लोका भवन्ति निःश्रीकास्तथा ये च मलिम्लुचाः।।
तथा तपस्विनः शूद्राः शूद्रा धर्मपरायणाः।
शूद्रा वेदविचारज्ञा यज्ञकर्मणि चोद्यताः।।
शूद्राः प्रतिग्रहीतारः शूद्रा दानप्रदास्तथा।
शूद्राश्चापि तथा वन्द्याः शूद्रास्तीर्थेषु संस्थिताः।।
पञ्चगर्तान्खनन्त्येव मृत्युकाले नराधमाः।
शिरसा हस्तपादाभ्यां मोहात्संनष्टचेतनाः।।
वेदविक्रयकर्तारो ब्राह्मणाः शौचवर्जिताः।
स्वाध्यायरहिताश्चैव शूद्रान्ननिरताः सदा।।
असत्प्रतिग्रहाः प्रायो जिह्वालौल्यसमुत्सुकाः।
पाखण्डिनो विकर्मस्थाः परदारोपजीविनः।।
कार्यकारणमाश्रित्य यत्र स्नेहः प्रजायते।
न स्वभावात्सहस्राक्ष कथंचिदपि देहिनाम्।।
यास्यन्ति म्लेच्छभावं च सर्वे वर्णा द्विजातयः।
नष्टोत्सवा विधर्माणो नित्यं संकरकारकाः।।
सार्धहस्तत्रयाः पूर्वं भविष्यन्ति युगादितः।
ततो ह्रासं प्रयास्यन्ति वृद्धिं याति कलौ युगे।।
भविष्यन्ति ततश्चान्ते मनुष्या बिलशायिनः।
अल्पत्वाद्दुर्लभत्वाच्च अशक्ता गृहकर्मणि।।
भविष्यन्त्यफला यज्ञास्तथा वेदव्रतानि च।
नियमाः संयमाः सर्वे मन्त्रवादास्तथैव च।।
तीर्थानि म्लेच्छसंस्पर्शाद्दूषितानि शतक्रतो।
स्वस्वभावविहीनानि हीनानि च तथा जलैः।।
कुत्सिता मन्त्रवादा ये कुत्सिताश्च तपस्विनः।
तत्र ते संभविष्यन्ति कुत्सिता ये च मानवाः।।
कुलीनमपि संत्यज्य वरं रूपवयोन्वितम्।
वित्तलोभात्प्रदास्यन्ति कुत्सिताय नराः सुताम्।।
कन्यकाः प्रसविष्यन्ति कन्यकाः सुरतोत्सुकाः।
कन्यकाः प्रकरिष्यन्ति पुरुषैः सह संगतिम्।।
भर्तारं वञ्चयिष्यन्ति कुलीना अपि योषितः।
सर्वकृत्येषु दुःशीलाः सुयत्नेनापि रक्षिताः।।
निर्दयाश्चापि भूपालाः पीडयिष्यन्ति कर्षुकान्।
पीडयिष्यन्ति निर्दोषान्वित्तलोभादसंशयम्।।
वधार्हमपि संप्राप्य वित्तलोभान्मलिम्लुचम्।
संत्यक्ष्यन्ति युगे तस्मिन्प्राणिद्रोहेऽपि वर्तिनम्।
क्षात्रधर्मं परित्यज्य करिष्यन्ति तथा रणम्।।
[1]तपः कृते प्रशंसन्ति त्रेतायां ध्यानमेव च।
द्वापरे यज्ञयोगं च दानमेकं कलौ युगे।।

कृतादियुगमानानि, युगक्रमेण हरिः श्वेतरक्तकपिल-
कृष्णवर्णः, कृतादिषु धर्माधर्मयोरुत्कर्षापकर्षौ,
कलौ एकपदोऽपि धर्मस्य पश्चात् लोपः,
अन्यानि बहूनि तत्तद्युगलोकवृत्तानि,
तपोज्ञानतीर्थयात्रादानानि
क्रमेण युगेषु
प्रशस्तानि

[2]अनेनैव तु मानेन मानवेन द्विजोत्तमाः।
लक्षैः सप्तदशाख्यैस्तु वत्सराणां प्रकीर्तितम्।।
अष्टाविंशत्सहस्रैस्तु वत्सराणां कृतं युगम्।
तस्मिञ्छ्वेतोऽभवद्विष्णुर्भगवान्यो जगद्गुरुः।।
लोकाः पापविनिर्मुक्ताः शान्ता दान्ता जितेन्द्रियाः।
दीर्घायुषस्तथा सर्वे सदैव तपसि स्थिताः।।

---

(१) स्कन्द. ६।५१।६४.
(२) स्कन्द. ६।२७२।१०-५२.

यो यथा जन्म चाऽऽप्नोति तथा स म्रियते नरः।
न पुत्रसंभवो मृत्युर्वीक्ष्यते जनकैः क्वचित्।।
कामः क्रोधस्तथा लोभो दम्भो मत्सर एव च।
न जायते नृणां तत्र युगे तु द्विजसत्तमाः।।
ततस्त्रेतायुगं भावि द्वितीयं मुनिसत्तमाः।
पादेनैकेन पापं तु रौद्रं धर्मे तदाऽविशत्।।
ततो रक्तत्वमभ्येति भगवान्मधुसूदनः।
पापांशेऽपि च संप्राप्ते सस्पर्धो जायते जनः।।
स्वर्गमार्गकृते सर्वे चक्रुर्यज्ञांस्ततः परम्।
अग्निष्टोमादिकांस्तत्र बहुहोमादिकांस्तथा।।
देवलोकांस्ततो यान्ति मूलाद्यावच्चतुर्दश।
ब्रह्मलोकस्य पर्यन्तं स्वकीयैर्यज्ञकर्मभिः।।
किंचित्स्वल्पायुषस्तत्र जायन्ते स्पर्धयाऽन्विताः।
परं तत्रापि नो यान्ति मृत्युं पुत्राः कथंचन।।
जनके विद्यमाने च स्वल्पदोषाः प्रकीर्तिताः।
कामक्रोधादयो ये च भवन्ति न भवन्ति च।।
एकया वेलया तत्र वापितं सस्यमुत्तमम्।
सप्तवारान् प्रगृह्णन्ति वैश्याः कृषिपरायणाः।।
सर्वा घटस्रवा गावो महिष्यश्च चतुर्गुणाः।
प्रयच्छन्ति तथा क्षीरमुष्ट्र्यस्तासां चतुर्गुणम्।।
अजाविकास्तथा पादं नार्यः सर्वास्तथैव च।
वेदाध्ययनसंपन्नाः प्रतिग्रहविवर्जिताः।
शापानुग्रहकृत्येषु समर्थाः संभवन्ति च।।
क्षत्रियाः क्षात्रधर्मेण पालयन्ति वसुंधराम्।
न तत्र दृश्यते चौरो न च जारः कथंचन।
स्वधर्मनिरताः सर्वे वर्णाश्चैव व्यवस्थिताः।।
तच्च द्वादशभिर्लक्षैर्वत्सराणां प्रकीर्तितम्।
षण्णवत्या सहस्रैस्तु द्वितीयं युगमुत्तमम्।।
ततश्च द्वापरं भावि तृतीयं द्विजसत्तमाः।
द्वौ पादौ तत्र पापस्य द्वौ च धर्मस्य संस्थितौ।
भगवान्वासुदेवश्च कपिलस्तत्र जायते।।
कामः क्रोधस्तथा लोभो दम्भो मत्सर एव च।
षडेते तत्र जायन्ते ईर्ष्या चैव तु सप्तमी।।
अथ संसेवितास्तैस्तु मानवाश्च परस्परम्।
विरुद्धांश्च प्रकुर्वन्ति नाऽऽप्नुवन्ति यथा दिवम्।।
केचित्तत्रापि जायन्ते शान्ता दान्ता जितेन्द्रियाः।
न सर्वेऽपि द्विजश्रेष्ठा यतोऽर्धं पातकस्य तु।।
ततः कलियुगं प्रोक्तं चतुर्थं च सुदारुणम्।
एकपादो वृषो यत्र पापं पादैस्त्रिभिः स्थितम्।
कृष्णत्वं याति देवोऽपि तत्र चैव चतुर्भुजः।।
एकपादोऽपि धर्मस्य यावत्तावत्प्रवर्तते।
पश्चान्नाशं समभ्येति यावत्तावच्छनैः शनैः।।
प्रमाणं तस्य निर्दिष्टं लक्षाश्चत्वार एव हि।
द्वात्रिंशच्च सहस्राणि युगस्यैवान्तिमस्य च।।
कलिना तत्र संस्पृष्टा मर्त्याः सर्वे परस्परम्।
विबुधैस्ते प्रवर्तन्ते रागद्वेषपरायणाः।।
यस्य यस्य गृहे वित्तं तथा नार्यो मनोरमाः।
तेन तेन समं मैत्रीं कलौ कुर्वन्ति मानवाः।।
विधवानां यतीनां च सर्वेषां च तपस्विनाम्।
लोकद्वयविनाशः स्याद्यतश्चेतो न शुध्यति।।
प्रावृट्कालेऽपि संप्राप्ते दुर्भिक्षेण प्रपीडिताः।
भ्रमन्ति च कलौ लोका गगनासक्तदृष्टयः।।
जानाति चापि तनयः पिता चेन्निधनं व्रजेत्।
ततोऽहं गृहपो भूयां बान्धवो ह्यपि बान्धवम्।।
स्नुषाऽपि वेत्ति चित्तेन यदि श्वश्रूः क्षयं व्रजेत्।
मम स्याद्गृह ऐश्वर्यं तत्सर्वं नान्यथा व्रजेत्।।
काव्यैरुपहता वेदाः पुत्रा जामातृकैस्तथा।
शालकैर्बान्धवाश्चैव ह्यसतीभिः कुलस्त्रियः।।
शूद्रास्तपस्विनश्चैव शूद्रा धर्मस्य सूचकाः।
ब्राह्मणानां ततः शूद्रा उपदेशं वदन्ति च।।
अल्पोदकास्तथा मेघा अल्पसस्या च मेदिनी।
अल्पक्षीरास्तथा गावः क्षीरे सर्पिस्तथाऽल्पकम्।।
सर्वभक्षास्तथा विप्रा नृपा निष्करुणास्ततः।
कृष्या लज्जन्ति वैश्याश्च शूद्रा ब्राह्मणप्रेषकाः।।
हेतुवादरता ये च भण्डविद्यापराश्च ये।
ते ते स्युर्भूमिपालस्य सदाऽभीष्टाः कलौ युगे।।
श्वः श्वः पापीयदिवसाः पृथिवी गतयौवना।
अतिक्रान्तशुभाः कालाः पर्युपस्थितदारुणाः।।

**यथा यथा युगं भावि वृद्धिं यान्ति स्त्रियो नराः।**
**तथा तथा प्रयान्ति स्म लघुतां जन्तुभिः सह।।**
**वर्षे द्वादशमे चैव कन्या स्याद्भर्तृ (? द्गर्भ) संयुता।**
**ततः षोडशमे वर्षे नराः पलितयौवनाः।।**
**शौचाचारपरित्यक्ता निजकार्यपरास्तथा।**
**भविष्यन्ति युगस्यान्ते नरा अङ्गुष्ठमात्रकाः।।**
**गृहं च तेऽथ कुर्वन्ति बिलैराखुसमुद्भवैः।**
**तथा प्रावरणं तेषां कृमिवस्त्रं भविष्यति।।**
**एकवर्णा भविष्यन्ति वर्णाः सर्वे ततः पराः।**
**म्लेछीभूता दुराचारा धर्मकृत्यविदूषकाः।।**
**एवं जाते ततो लोके ब्राह्मणो हरिपिङ्गलः।**
**कल्किगोत्रसमुत्पन्नस्तान्सर्वान्सूदयेत्ततः।।**
**पश्चात्कृतयुगं भावि भूयोऽपि द्विजसत्तमाः।।**
**[1]तपः कृते प्रशंसन्ति त्रेतायां ज्ञानमेव च।**
**द्वापरे तीर्थयात्रां च दानमेव कलौ युगे।।**

युगभेदेन प्रशस्तानि तीर्थक्षेत्राणि, युगेषु धर्माधर्मयोस्तारतम्यं तपआदिधर्मप्राधान्यं हरेर्वर्णभेदः उपास्यदेवभेदश्च, अन्यानि बहूनि युगवृत्तानि

**[2]कलेर्युगं महाघोरं प्राप्य पापसमन्वितम्।**
**नान्येनास्मिन्नुपायेन धर्मः स्वर्गश्च लभ्यते।**
**विना यात्रां महादेवि सोमेशस्य न संशयः।।**
**ये कुर्वन्ति नरा यात्रां शुचिश्रद्धासमन्विताः।**
**कलौ युगे कृतार्थास्ते ये त्वन्ये ते निरर्थकाः।।**
**कृते युगे पुष्कराणि त्रेतायां नैमिषं तथा।**
**द्वापरे तु कुरुक्षेत्रं प्राभासिकं कलौ युगे।।**
**तपः परं कृतयुगे त्रेतायां ज्ञानमिष्यते।**
**द्वापरे यजनं धन्यं दानमेकं कलौ युगे।।**
**तपस्तप्यन्ति मुनयः कृच्छ्रचान्द्रायणादिकम्।**
**गत्वा प्राभासिकं क्षेत्रं लोकाश्चान्ये कृते युगे।।**
**कलौ दानानि दीयन्ते ब्राह्मणेभ्यो यथाविधि।**
**प्रभासं क्षेत्रमासाद्य तपसां प्राप्यते फलम्।।**

(१) **स्कन्द.** ६।२७४।९२.
(२) **स्कन्द.** ७।१।२८।९-१०, ५५, ८७-८९.

**[1]चतुष्पदः कृते धर्मः शुक्लवर्णो जनार्दनः।**
**न दुर्भिक्षं न च व्याधिस्तस्मिन्भवति वै क्वचित्।।**
**क्रियते च तदा धर्मो नाकाले मरणं नृणाम्।**
**लाङ्गलेन विना सस्यं भूरिक्षीराश्च धेनवः।।**
**कामः क्रोधो भयं लोभो मत्सरश्चाभ्यसूयता।**
**तस्मिन्युगे सहस्राक्ष न भवन्ति कदाचन।।**
**ततस्त्रेतायुगे जातस्त्रिपादो धर्म एव च।**
**चिरायुषो नरास्तस्मिन् रक्तवर्णो जनार्दनः।।**
**तस्मिन्यज्ञाः प्रवर्तन्ते प्राणिनामिष्टदायिनः।**
**न कामादिप्रवृत्तिश्च तस्मिन्संजायते नृणाम्।।**
**तपसा ब्रह्मचर्येण स्नानैर्दानैः पृथग्विधैः।**
**तथा यज्ञैर्जपैर्होमैस्तत्र वृत्तिर्भवेन्नृणाम्।।**
**ततस्तु द्वापरं नाम तृतीयं युगमुच्यते।**
**द्विपदो धर्मः संजातः पीतवर्णो जनार्दनः।।**
**फलाकाङ्क्षाप्रवृत्तानि जपयज्ञतपांसि च।**
**सत्यानृतान्वितो लोको द्वापरे सुरसत्तम।।**
**तत्रान्योन्यं महीपाला युयुधुर्वसुधातले।**
**सुपूताश्च दिवं यान्ति यज्ञैरिष्ट्वा जनार्दनम्।।**
**ततः कलियुगं घोरं चतुर्थं तु प्रवर्तते।**
**एकपादो भवेद्धर्मः संत्रस्तो नित्यपूजने।।**
**कृष्णवर्णो भवेद्विष्णुः पापाधिक्यं प्रवर्तते।**
**माया च मत्सरश्चैव कामः क्रोधस्तथा भयम्।।**
**अर्थलुब्धास्तथा भूपा लोभमोहशतान्विताः।**
**अल्पायुषो नरास्तत्र अल्पसस्या च मेदिनी।**
**अल्पक्षीरास्तथा गावः सत्यहीना द्विजातयः।।**
**तत्र मायाविनो लोका जैह्व्यौपस्थ्यपरायणाः।**
**सत्यहीनास्तथा पापा भविष्यन्ति कलौ युगे।।**
**तत्र षोडशमे वर्षे नराः पलितकुन्तलाः।**
**नार्यो द्वादशमे वर्षे भविष्यन्ति सुगर्भिताः।।**
**भविष्यति क्रमाद्वर्णसंकरश्च सुराधिप।**
**एकाकारा भविष्यन्ति सर्ववर्णाश्रमाश्च वै।**
**नाशं यास्यन्ति यज्ञाश्च कुलधर्मः सनातनः।।**
**व्यर्थानि तत्र तीर्थानि म्लेच्छस्पृष्टानि सर्वशः।**
**भविष्यन्ति सुरश्रेष्ठ प्रभावरहितानि च।।**

(१) **स्कन्द.** ७।३।१०।१४-३८.

एतच्छ्रुत्वा ततो वाक्यं ब्रह्मणोऽव्यक्तजन्मनः।
तत्र स्थितानि तीर्थानि ब्रह्माणमिदमब्रुवन्।।
तीर्थान्यूचुः —
कथं वयं भविष्यामः संप्राप्ते दारुणे कलौ।
स्थानं नो ब्रूहि देवेश स्थातव्यं च सदैव हि।।
ब्रह्मोवाच —
अर्बुदः पर्वतश्रेष्ठः कलिस्तत्र न विद्यते।
अतस्तत्र च गन्तव्यं तीर्थैरायतनैः सह।।
अपि कृत्वा महत्पापमर्बुदं प्रेक्षते तु यः।
कलिदोषविनिर्मुक्तः स यास्यति परां गतिम्।।
पुलस्त्य उवाच —
एवमुक्त्वा चतुर्वक्त्रो ब्रह्मलोकं गतो नृप।
ततः सर्वाणि तीर्थानि गतानि च कलौ युगे।।
भूमावर्बुदशैलेन्द्रे संस्थितानि कलेर्भयात्।
गङ्गा सरस्वती चैव यमुना पुष्कराणि च।।
कुरुक्षेत्रं प्रभासं च ब्रह्मावर्तं तथैव च।
तिस्रः कोट्योऽर्धकोटिश्च यानि तीर्थानि भूतले।।
तेषां वासश्च संजातः पर्वतेऽर्बुदसंज्ञिके।।
[1]यत्रोमाया न(? व) रो वक्ता संवादो नारदस्य तु।
तत्र बौद्धं च जैनं च शाक्तं शैवं च वैष्णवम्।।
योगज्ञानमतं भ्रान्तं विरुद्धं वेदशास्त्रतः।
वर्तिष्यन्ते कलौ ब्रह्मन् तन्मतेन द्विजातयः।।
स्त्रियः शुश्रूषणं पत्युर्विप्राणां शूद्रजातयः।
पित्रोः पुत्राः परित्यज्य जपहोमादि साधनम्।।
कुर्वते काम्यकर्माणि दृष्टार्थानि पतन्त्यधः।
लौकिकैर्नामभिर्गीतैर्देवताराधनं तु यत्।।
शूद्रादीनामयं धर्मो न द्विजानां कदाचन।
शूद्राणां कृतकैर्गीतैर्देवताग्रे कलौ युगे।।
नृत्यं कुर्वन्ति विप्राद्या अवज्ञाय श्रुतीरितम्।
गायन्ति विधवा गीतं श्रोतॄणामपि पापदाः।।
[2]तन्नास्ति कर्म यल्लोके वाग्जं मानसमेव वा।
यत्तु न क्षीयते पापं कलौ गोविन्दकीर्तनात्।।

(१) शूक. ६५ स्कान्दकौर्मयोः.

(२) निप. ४९८ कर्म यल्लो (कर्मजं लो) वा (च) यत्तु न (यन्न च) (=); गप. २८ वाग्जं (वाचं) उत्तरार्धे (न क्षीयते कलौ यत्तु गोविन्दनामकीर्तनात्।।) (=); यसं. १२५ कर्म यल्लो (कर्मजं लो); यप्र. १०५ यसंवत्; कृभ. १३१४.

कर्मजं कायिकम्।　यप्र. १०५

[1]गोविन्देत्युक्तिमात्रेण हेलया कलिवर्धनः।
पापौघो विलयं याति दानमश्रोत्रिये यथा।।
[2]यत्र विष्णोः कथा नित्या यत्र तिष्ठन्ति वैष्णवाः।
कलिबाह्या नरास्ते वै येऽर्चयन्ति सदा हरिम्।।
कलौ कृष्णस्य ये नित्यं क्रियायोगं वदन्ति ये।
तैर्नरैर्देवदेवेश पवित्रा धरिणी कृता।।
ये वै निन्दन्ति कृष्णस्य क्रियायोगं कलौ नराः।
कल्पकोटिसहस्राणि ते वसन्ति यमालये।।
[3]कलिस्तान्नैव बाधेत कालस्तांश्च जिघांसति।
एनांसि तान्न बाधन्ते ये च काशीं समाश्रिताः।।
[4]ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः।
द्वापरे भगवान् विष्णुः कलौ देवो महेश्वरः।।

(१) तत्र हरेरर्चनं यद्यपि 'अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च। षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम्।।' इत्याग्नेयपुराणवाक्यादनेकत्र प्रतीयते, तथापि कलौ शालग्रामशिलायामेव प्रशस्तम्। तथा च स्कान्दे 'कामासक्तोऽथवा क्रुद्धः शालग्रामशिलार्चनात्। भक्त्या वा यदि वाऽभक्त्या कलौ मुक्तिमवाप्नुयात्।। वैवस्वतभयं नास्ति तथा च कलिकालजम्। यः कथां कुरुते विष्णोः शालग्रामशिलाग्रतः।। शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते। महापूजां तु कृत्वाऽऽदौ पूजयेत्तां ततो बुधः।।' इति।
　चमव्याआ. ४८

(२) पूज्य इति भावः।　आर्क. २४

(१) यसं. १२५ त्युक्ति (त्युक्त); यप्र. १०५ वर्धनः (वर्धनं) पापौघः (पापौघं).

(२) कृभ. १३१४.

(३) कृभ. १३१६ काशीखण्डे.

(४) चमव्याआ. ४८ रविः (हरिः); आम. ५९; आर्क. २४ रविः (हरिः) श्रीभारते; बाल. १।१०० पृ. ३३२ रविः (हरिः); पुम. ४६७; सस्मृ. १६० रविः (ऋषिः) रे भगवान् (रे दैवतं) देवो (रुद्रो) धर्मसारे; आभू. १७७ रविः (हरिः) द्वापरे (द्वापारे) भारते : १९४ चतुर्थचरणमात्रं द्विवारम्, महाभारतम्.

[१]कामासक्तोऽथवा क्रुद्धः शालग्रामशिलार्चनात्।
भक्त्या वा यदि वाऽभक्त्या कलौ मुक्तिमवाप्नुयात्।।
[२]वैवस्वतभयं नास्ति तथा च कलिकालजम्।
यः कथां कुरुते विष्णोः शालग्रामशिलाग्रतः।।
[३]शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते।
महापूजां तु कृत्वाऽदौ पूजयेत्तां ततो बुधः।।
$[४]एतैः सह समायोगं यः करोति दिने दिने।
तुल्यतां याति विप्रेन्द्र कलौ संवत्सरे गते।।

## सह्याद्रिखण्डः

कलिवर्ज्यानि, कलियुग-
वृत्तवर्णनम्

[५]कलौ तु विविधा धर्मा भक्तिनाशककेवलाः।
इदमग्रे भवेत्पुत्रः (? पुत्र) सर्वधर्मं च लोपयेत्।।
[६]अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम्।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्।।
कलौ युगे संप्रवृत्तो धर्माधर्मविपर्ययः।
दाक्षिण्यादर्थलोभाद्वा भयाद्वाऽपि भविष्यति।।
क्वाहं कोऽहं कुलं किं मे संबन्धः कीदृशो मम।
स्वस्वधर्मो न लुप्येत ह्येवं संचिन्तयेद्बुधः।।
इन्द्रसृष्टा जातयस्तु पाखण्डा इति कीर्तिताः।
विश्वामित्रगर्गजाश्च अभिरन्त्या इतीरिताः।।
काश्यपा ब्राह्मणाः सर्वे मानजातिविभेदकाः।
विभिन्नकर्ममतयो नानाभावाः कलौ युगे।।
भविष्यन्ति न चाप्येषां सर्वसंबन्धिता भवेत्।
दृश्यन्ते कुलधर्माश्च सन्ति तेषां पृथक् पृथक्।।

$ पातकिभिरित्यर्थः।

(१) आत. ३९६ सक्तोऽथवा क्रुद्धः (सक्तोऽपि लुब्धोऽपि) र्चनात् (र्चनम्) कलौ (कृत्वा) लिङ्गपुराणम्; चमव्याआ. ४८; आम. ६४ वा य (न य); आर्क. २४ शाल (शालि).

(२) चमव्याआ. ४८; आम. ६४.

(३) चमव्याआ. ४८; आम. ६४; आभू. १७७ शाल (शालि).

(४) उत. ११३; पप्र. ५०.

(५) सखं. २।४।५०.

(६) सखं. २।५।६४-६५, ७४-७६, ७९-८१.

## गरुडपुराणम्

कृते चतुष्पदो धर्मस्य त्रेतादिषु पादशः क्षयः,
युगेषु हरेर्वर्णभेदाः, सत्त्वादिगुणप्रधान्यम्,
कलौ हरिकीर्तनस्यैव सर्वफलदत्वम्,
कलिवर्ज्यानि, युगस्वभाव-
प्रयुक्तलोक-
वृत्तानि

[१]कृते धर्मश्चतुष्पाच्च सत्यं दानं तपो दया।
धर्मपाता हरिश्चेति संतुष्टा ज्ञानिनो नराः।
चतुर्वर्षसहस्राणि नरा जीवन्ति वै तदा।।
कृतान्ते क्षत्रियैर्विप्रा विट्शूद्राश्च जिता द्विजैः।
शूरश्चातिबलो विष्णू रक्षांसि च जघान ह।।
त्रेतायुगे त्रिपाद्धर्मः सत्यदानदयात्मकः।
नरा यज्ञपरास्तस्मिंस्तथा क्षत्रोद्भवं जगत्।।
रक्तो हरिर्नरैः पूज्यो नरा दशशतायुषः।
तत्र विष्णुर्भीमरथः क्षत्रिया राक्षसानहन्।।
द्विपादविग्रहो धर्मः पीततां चाच्युते गते।
चतुःशतायुषो लोका द्विजक्षत्रोद्भवाः प्रजाः।।
[२]द्वापरान्तेन च हरिर्गुरुभारमपाहरत्।
एकपादस्थिते धर्मे कृष्णत्वं चाच्युते गते।।
जनास्तदा दुराचारा भविष्यन्ति च निर्दयाः।।
सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः।
कालसंचोदितास्तेऽपि परिवर्तन्त आत्मनि।।
प्रभूतं च यदा सत्त्वं मनोबुद्धीन्द्रियाणि च।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रतिः।।
यदा कर्मसु काम्येषु शक्तिर्यशसि देहिनाम्।
तदा त्रेता रजोभूतिरिति जानीहि शौनक।।
यदा लोभस्त्वसंतोषो मानो दम्भश्च मत्सरः।
कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः।।

(१) गरुड. १।२२३।५-१०.

(२) गरुड. १।२२३।२२-३७.

यदा सदाऽनृतं तन्द्रा निद्रा हिंसादिसाधनम्।
शोकमोहौ भयं दैन्यं स कलिस्तमसि स्मृतः।।
यस्मिञ्जनाः कामिनः स्युः शश्वत्कटुकभाषिणः।
दस्यूत्कृष्टा जनपदा वेदाः पाषण्डदूषिताः।।
राजानश्च प्रजाभिक्षाः शिश्नोदरपराजिताः।
अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः।
तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः।।
ह्रस्वकाया महाहाराश्चौरास्ते साधवः स्मृताः।
त्यक्ष्यन्ति भृत्याश्च पतिं तापसस्त्यक्ष्यति व्रतम्।।
शूद्राः प्रतिग्रहीष्यन्ति वैश्या व्रतपरायणाः।
उद्विग्नाः सन्ति च जनाः पिशाचसदृशाः प्रजाः।।
अन्यायभोजनेनाग्निदेवातातिथिपूजनम्।
करिष्यन्ति कलौ प्राप्ते न च पित्र्योदकक्रियाम्।
स्त्रीपराश्च जनाः सर्वे शूद्रप्रायाश्च शौनक।।
बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः।
शिरःकण्डूयनपरा आज्ञां भेत्स्यन्ति भर्त्सिताः।
विष्णुं न पूजयिष्यन्ति पाषण्डोपहता जनाः।।
कलेर्दोषनिधेर्विप्रा अस्ति ह्येको महागुणः।
कीर्तनादेव कृष्णस्य महाबन्धं परित्यजेत्।।
कृते यद्ध्यायतो विष्णुं त्रेतायां जपतः फलम्।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्।
तस्माद्ध्येयो हरिर्नित्यं गेयः पूज्यश्च शौनक।।
[1]कृते तपः प्रशंसन्ति त्रेतायां ज्ञानसाधनम्।
द्वापरे यज्ञदाने च दानमेकं कलौ युगे।।
[2]न कलौ क्रियते ह्यश्वमेधो वाऽप्यथ गोसवः।
नरमेधोऽक्षता नारी देवरात्पुत्रसंततिः।
गर्हितं सप्तकं ह्येतद्राजसूयकमण्डलू।।

(१) गरुड. २।३४।२.

(२) चदा. ५९० ह्यश्वमेधो वाऽप्यथ (यज्ञो ह्यश्वमेधोऽपि) यकमण्डलू (यं कमण्डलुः); सम. ११०; कृभ. १२८९ ह्यश्व (अश्व) यकमण्डलू (यः कमण्डलुः) : १३११ न कलौ (कलौ न) ह्यश्व (अश्व).

## पद्मपुराणम्

युगभेदभिन्नमायुर्मानम्, युगेषु तीर्थप्राधान्यम्, कलौ हरेर्भजनं सर्वकलिदोष-बाधकम्, युगप्रयुक्त-लोकवृत्तानि

सूत उवाच —

[1]चत्वारि भारते वर्षे युगानि मुनिपुंगवाः।
कृतं त्रेता द्वापरं च कलिश्च द्विजसत्तमाः।।
पूर्वं कृतयुगं नाम ततस्त्रेतायुगं द्विजाः।
तत्पश्चाद्द्वापरं चाथ ततस्तिष्यः प्रवर्तते।।
चत्वारि तु सहस्राणि वर्षाणां मुनिपुंगवाः।
आयुःसंख्या कृतयुगे संख्याता हि तपोधनाः।।
तथा त्रीणि सहस्राणि त्रेतायामायुषो विदुः।
द्वे सहस्रे द्वापरे तु भुवि तिष्ठन्ति सांप्रतम्।।
न प्रमाणस्थितिर्ह्यस्ति तिष्ये तु मुनिपुङ्गवाः।
गर्भस्थाश्च म्रियन्तेऽत्र तथा जाता म्रियन्ति च।।
महाबला महासत्त्वाः प्रज्ञागुणसमन्विताः।
प्रजायन्ते च जाताश्च शतशोऽथ सहस्रशः।।
द्विजाः कृतयुगे विप्रा बलिनः प्रियदर्शनाः।
प्रजायन्ते च जाताश्च मुनयो वै तपोधनाः।।
महोत्साहा महात्मानो धार्मिकाः सत्यवादिनः।
प्रियदर्शा वपुष्मन्तो महावीर्या धनुर्धराः।।
वीरा हि युधि जायन्ते क्षत्रियाश्चारुसंमताः।
त्रेतायां क्षत्रियास्तावत्सर्वे वै चक्रवर्तिनः।।
सर्ववर्णाश्च जायन्ते सदैव द्वापरे युगे।
महोत्साहा वीर्यवन्तः परस्परवधैषिणः।।
तेजसांऽशेन संयुक्ताः क्रोधनाः पुरुषाः किल।
लुब्धाश्चानृतिकाश्चैव तिष्ये जायन्ति भो द्विजाः।।
ईर्ष्या मानस्तथा क्रोधो मायाऽसूया तथैव च।
तिष्ये भवन्ति भूतानां रागो लोभश्च सत्तमाः।।
संक्षेपो वर्तते विप्रा द्वापरे युगमध्यके।।
[2]सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करं स्मृतम्।
द्वापरे तु कुरुक्षेत्रं गङ्गा कलियुगे स्मृता।।

(१) पद्म. १।७।३-१५.

(२) पद्म. १।३९।८३-८४.

[१]पुंसामेकेह वै साध्या हरिभक्तिः कलौ युगे।
युगान्तरेऽन्यधर्मा हि सेवितव्या नरेण हि।।
कलौ नारायणं देवं यजते यः स धर्मभाक्।
दामोदरं हृषीकेशं पुरुहूतं सनातनम्।।
हृदि कृत्वा परं शान्तं जितमेव जगत्त्रयम्।
कलिकालोरगादंशात्किल्बिषात्कालकूटतः।
हरिभक्तिसुधां पीत्वा उल्लङ्घ्यो भवति द्विजः।।

पार्वत्युवाच –

[२]घोरे कलियुगे प्राप्ते विषयग्राहसंकुले।
पुत्रदारधनाद्यार्तैस्तत्कथं धार्यते विभो।
तदुपायं महादेव कथयस्व कृपानिधे।।

ईश्वर उवाच –

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्।
हरे राम हरे कृष्ण कृष्ण कृष्णेति मङ्गलम्।।
एवं वदन्ति ये नित्यं न हि तान्बाधते कलिः।।
यज्ञव्रततपोदानं साङ्गं नैव कलौ युगे।
गङ्गास्नानं हरेर्नाम निरपायमिदं द्वयम्।।
विशेषतः कलियुगे दोलोत्सवो* विधीयते।
फाल्गुने च चतुर्दश्यामष्टमे यामसंज्ञके।।
अथवा पूर्णमास्यां तु प्रतिपत्संधिसंज्ञके।।

ध्यानयज्ञदेवार्चनानि युगत्रये प्रशस्तानि,
कलौ दानं हरिकीर्तनं
पुराणश्रवणं च
प्रशस्तम्

शंभुरुवाच –

[३]ध्यानमेव कृते श्रेष्ठं त्रेतायां यज्ञ एव च।
द्वापरे चार्चनं तिष्ये दानं च हरिकीर्तनम्।।
सर्वं च शस्तं सर्वत्र ध्यानं नैव कलौ युगे।
नराणां मुग्धचित्तत्वात्कलिस्थानां विशां पते।।
न धर्मे नियता बुद्धिर्न वेदे नैव च स्मृतौ।
न क्रतौ न स्वधाकारे पुराणानां च न श्रुतौ।।
न जपे न च तीर्थेषु न च शुश्रूषणे सताम्।
नेज्यायां देवतानां च न स्वजातीयकर्मणि।।
न देवस्मरणे चापि न च क्वापि वृषे नृप।
अतश्च दीर्घकालानां पुण्यानामक्षमा नराः।।
दानं तु स्वल्पकालत्वात्कर्तुं शक्नोति मानवः।
अतश्च कलिदुष्टानां प्रायश्चित्तं न विद्यते।।
अतः कलौ मनुष्याणां पुराणं पापनाशनम्।।
[१]न स्वाध्यायस्तपो वाऽपि न मन्त्रो न जुहोतयः।
फलन्ति न तथा तिष्ये पुराणश्रवणं यथा।।

युगेषु क्रमेण तपआदिधर्मप्राशस्त्यम्,
युगक्रमेण धर्माधर्मयोरुत्कर्षा-
पकर्षौ, युगमानानि,
युगलोकवृत्तानि

धेनुरुवाच –

[२]तपः कृते प्रशंसन्ति त्रेतायां ज्ञानकर्म च।
द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे।।
[३]चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम्।
तस्य तावच्छती संध्या द्विगुणा कुरुनन्दन।।
यत्र धर्मश्चतुष्पादस्त्वधर्मः पादविग्रहः।
स्वधर्मनिरताः शान्ता जायन्ते यत्र मानवाः।।
विप्राः स्थिता धर्मपरा राजवृत्ते स्थिता नृपाः।
कृष्यामभिरता वैश्याः शूद्राः शुश्रूषवस्तथा।।
तदा सत्यं च शौचं च धर्मश्चैव विवर्धते।
सद्भिराचरितं कर्म क्रियते कार्यते च यत्।।
एतत्कृतयुगे वृत्तं सर्वेषामेव पार्थिव।
प्राणिनां धर्मशीलानां नराणां नीचजन्मनाम्।।
त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते।
तस्य तावच्छती संध्या द्विगुणा परिकीर्तिता।।
द्वाभ्यामधर्मः पादाभ्यां त्रिभिर्धर्मो व्यवस्थितः।
यत्र सत्यं च शौचं च क्रियाधर्मो विधीयते।।
त्रेतायां विकृतिं यान्ति वर्णा लोभेन संयुताः।
चातुर्वर्ण्यस्य वैकृत्या यान्ति दौर्बल्यमाश्रमाः।।

---

* अयं दोलोत्सवः कृष्णस्य।

(१) पद्म. १।६१।५-८.

(२) पद्म. ४।८०।१-३, ९, ४५-४६.

(३) पद्म. ४।११०।३९०-३९५, ४०२.

(१) पद्म. ४।१११।४२.

(२) पद्म. ५।१८।४३७.

(३) पद्म. ५।३६।२८-४५.

**एषा त्रेतायुगगतिर्विचित्रा देवनिर्मिता।।**
**द्वापरं द्विसहस्रं तु वर्षाणां कुरुनन्दन।**
**तस्य तावच्छती संध्या द्विगुणं युगमुच्यते।।**
**तत्राप्यतीवार्थपराः प्राणिनो रजसा हताः।**
**शठा नैष्कृतिकाः क्षुद्रा जायन्ते कुरुनन्दन।**
**द्वाभ्यां धर्मः स्थितः पद्भ्यामधर्मस्त्रिभिरुत्थितः।।**
**विपर्ययशतैर्धर्मः क्षयमेति कलौ युगे।**
**ब्रह्मण्यभावो व्ययते तथाऽऽस्तिक्ये विवर्जिते।**
**व्रतोपवासास्त्यज्यन्ते कलौ वै युगपर्यये।।**
**तदा वर्षसहस्रं तु वर्षाणां द्वे शते तथा।**
**संध्यया सह संख्यातं क्रूरं कलियुगं तथा।।**
**यत्राधर्मश्चतुष्पादः स्याद्धर्मः पादविग्रहः।**
**कामिनस्तामसाः क्षुद्रा जायन्ते यत्र मानवाः।।**
**नैवात्र साधकः कश्चिन्न साधुर्न च सत्यवाक्।**
**नास्तिका ब्राह्मणाभक्ता जायन्ते तत्र मानवाः।**
**अहंकारगृहीताश्च प्रक्षीणस्नेहबन्धनाः।**
**विप्राः शूद्रसमाचाराः सन्ति सर्वे कलौ युगे।।**
**आश्रमाणां विपर्यासः कलौ संप्रतिवर्तते।**
**वर्णानां चैव संदेहो युगान्ते कुरुनन्दन।।**
**एषा द्वादशसाहस्री युगाख्या पूर्वनिर्मिता।।**
**[2]कृते तपः परं ज्ञानं त्रेतायां यजनं तथा।**
**द्वापरे च कलौ दानं माघः सर्वयुगेषु च।।**
**सर्वेषां सर्ववर्णानामाश्रमाणां च भूपते।**
**माघस्नानं हि धर्मस्य धाराभिः खलु वर्षति।।**

शालग्रामशिलाद्वारकाशिलयोरर्चनादिना
कलौ पापनाश उत्तम-
लोकप्राप्तिश्च

**[1]नैवेद्यैर्विविधैः पुष्पैर्धूपदीपैर्विलेपनैः।**
**गीतवादित्रस्तोत्राद्यैः शालग्रामशिलार्चनात् –**
**(? नम्)।।**
**कुरुते मानवो यस्तु कलौ भक्तिपरायणः।**
**कल्पकोटिसहस्राणि रमते संनिधौ हरेः।।**

(१) पद्म. ६।२२१।८०-८१.
(२) विपा. ४।४३३.

**[2]कार्तिके केतकीपुष्पं येन दत्तं हरेः कलौ।**
**दीपदानं च देवर्षे तारितं तेन वै कुलम्।।**
**[3]द्वारकाशैलसंभूतं यस्तोयं पिबते कलौ।**
**पापानि तस्य नश्यन्ति शतजन्मार्जितान्यपि।।**

(१) शिलैव शैलम्। प्रज्ञादित्वात्स्वार्थेऽण्। अत्र द्वारावतीशिलासंबन्धितोयपानविधानात्साऽपि शालग्रामसंनिधौ पूज्येति गम्यते। चमव्याआ. ५०

(२) द्वारकाशिला.... पूज्येति केचित्। तत्तोयपानमात्रम्, पूजायां तु मानाभाव इत्यपरे। + आम. ६५

(३) द्वारकाशिलापूजायाः पृथक्करणस्थले एतत्, शालग्रामसहपूजने तस्यार्थतः सिद्धत्वात्।

* कृभ. १२२७

**[3]धृते शिरसि पीते च सर्वास्तुष्यन्ति देवताः।**
**प्रायश्चित्तं हि पापानां कलौ पादोदकं हरेः।।**

## ब्रह्मपुराणम्

युगेषु क्रमेण तपोयज्ञादीनां श्लाघ्यत्वम्, देशकाल-
प्रयुक्तधर्माणां तत्तद्देशकालयोः प्राशस्त्यम्,
कालप्रयुक्तो धर्मो वृद्धिहानिस्वभावः,
त्रेतादिषु धर्मस्य पादशः
क्षयः

**[4]श्लाघ्यं कृते तपः प्रोक्तं त्रेतायां यज्ञकर्म च।**
**द्वापरे यज्ञदाने च दानमेव कलौ युगे।।**
**[5]युगधर्माश्च ये सर्वे देशधर्मास्तथैव च।**
**देशकालादिसंयोगे यो धर्मो यत्र शस्यते।।**
**सर्वत्र धर्मः सामान्यो यतो धर्मः सनातनः।**
**साध्यसाधनभावेन स एव बहुधा मतः।।**

\+ शेषं चमव्याआवत्।
* शेषं चमव्याआवत्।
(१) चमव्याआ. ५०; आम. ६५.
(२) चमव्याआ. ५०; आम. ६५; कृभ. १२२६.
(३) चमव्याआ. ५०; आम. ६५; कृभ. १२२७; इन्दु. १७३ प्रथमचरणे (पीते धृते च शिरसि).
(४) ब्रह्म. ७५।३९-४०.
(५) ब्रह्म. १७५।१९-३२.

तस्याऽऽश्रयश्च द्विविधो देशः कालश्च सर्वदा।
कालाश्रयश्च यो धर्मो हीयते वर्धते सदा।।
युगानामनुरूपेण पादः पादोऽस्य हीयते।
धर्मस्येति महाप्राज्ञ देशापेक्षा तथोभयम्।।
कालेन चाऽऽश्रितो धर्मो देशे नित्यं प्रतिष्ठितः।
युगेषु क्षीयमाणेषु न देशेषु स हीयते।।
उभयत्र विहीने च धर्मस्य स्यादभावता।
तस्माद्देशाश्रितो धर्मश्चतुष्पात्सुप्रतिष्ठितः।।
स चापि धर्मो देशेषु तीर्थरूपेण तिष्ठति।
कृते देशं च कालं च धर्मोऽवष्टभ्य तिष्ठति।।
त्रेतायां पादहीनेन स तु पादः प्रदेशतः।
द्वापरे चार्धतः काले धर्मो देशे समास्थितः।।
कलौ पादेन चैकेन धर्मश्चलति संकटम्।
एवंविधं तु यो धर्मं वेत्ति तस्य न हीयते।।

युगकालभेदप्रयुक्तो जातिदेवतीर्थादिभेदः, युगक्रमेण तीर्थानां त्रिदैवत्यत्वादि दैवत्वादि च

युगानामनुभावेन जातिभेदाश्च संस्थिताः।
गुणेभ्यो गुणकर्तृभ्यो विचित्रा धर्मसंस्थितिः।।
गुणानामनुभावेन उद्भवाभिभवौ तथा।
तीर्थानामपि वर्णानां वेदानां स्वर्गमोक्षयोः।।
तादृग्रूपप्रवृत्त्या तु तदेव च विशिष्यते।
कालोऽभिव्यञ्जकः प्रोक्तो देशोऽभिव्यङ्ग्य उच्यते।।
यदा यदा अभिव्यक्तिं कालो धत्ते तदा तदा।
तदेव व्यञ्जनं ब्रह्मंस्तस्मान्नास्त्यत्र संशयः।।
युगानुरूपा मूर्तिः स्याद्देवानां वैदिकी तथा।
कर्मणामपि तीर्थानां जातीनामाश्रमस्य तु।।
त्रिदैवत्यं सत्ययुगे तीर्थं लोकेषु पूज्यते।
द्विदैवत्यं युगेऽन्यस्मिन्द्वापरे चैकदैविकम्।।
कलौ न किंचिद्विज्ञेयमथान्यदपि तच्छृणु।
दैवं कृतयुगे तीर्थं त्रेतायामासुरं विदुः।
आर्षं च द्वापरे प्रोक्तं कलौ मानुषमुच्यते।।

भूयसा विस्तरेण कलिदोषप्रयुक्तलोकवृत्तवर्णनम्, कलिवृद्धिज्ञापकानि लक्षणानि, कलौ अल्पायासेन महती फलसिद्धिः

मुनय ऊचुः —

[1]कलेः स्वरूपं भगवन्विस्तराद्वक्तुमर्हसि।
धर्मश्चतुष्पाद्भगवान्यस्मिन्वैकल्यमृच्छति।।

व्यास उवाच —

कलिस्वरूपं भो विप्रा यत्पृच्छध्वं( ?ध्वे) ममानघाः।
निबोधध्वं समासेन वर्तते यन्महत्तरम्।।
वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम्।
न सामऋग्यजुर्वेदविनिष्पादनहैतुकी।।
विवाहा न कलौ धर्मा( ? र्म्या) न शिष्या गुरुसंस्थिताः।
न पुत्रा धार्मिकाश्चैव न च वह्निक्रियाक्रमः।।
यत्र तत्र कुले जातो बली सर्वेश्वरः कलौ।
सर्वेभ्य एव वर्णेभ्यो नरः कन्योपजीवनः।।
येन तेनैव योगेन द्विजातिर्दीक्षितः कलौ।
यैव सैव च विप्रेन्द्राः प्रायश्चित्तक्रिया कलौ।।
सर्वमेव कलौ शास्त्रं यस्य यद्वचनं द्विजाः।
देवताश्च कलौ सर्वाः सर्वः सर्वस्य चाऽऽश्रमः।।
उपवासस्तथाऽऽयासो वित्तोत्सर्गस्तथा कलौ।
धर्मो यथाभिरुचितैरनुष्ठानैरनुष्ठितः।।
वित्तेन भविता पुंसां स्वल्पेनैव मदः कलौ।
स्त्रीणां रूपमदश्चैव केशैरेव भविष्यति।।
सुवर्णमणिरत्नादौ वस्त्रे चोपक्षयं गते।
कलौ स्त्रियो भविष्यन्ति तदा केशैरलंकृताः।।
परित्यक्ष्यन्ति भर्तारं वित्तहीनं तथा स्त्रियः।
भर्ता भविष्यति कलौ वित्तवानेव योषिताम्।।
यो यो ददाति बहुलं स स स्वामी तदा नृणाम्।
स्वामित्वहेतुसंबन्धो भविताऽभिजनस्तदा।।
गृहान्ता द्रव्यसंघात्ता द्रव्यान्ता च तथा मतिः।
अर्थाश्चाथोपभोगान्ता भविष्यन्ति तदा कलौ।।

(१) ब्रह्म. २२९।८-६५, ७८, ८०-८१.

स्त्रियः कलौ भविष्यन्ति स्वैरिण्यो ललितस्पृहाः।
अन्यायावाप्तवित्तेषु पुरुषेषु स्पृहालवः।।
अभ्यर्थितोऽपि सुहृदा स्वार्थहानिं तु (? न) मानवः।
पणस्यार्धार्धमात्रेऽपि करिष्यति तदा द्विजाः।।
सदा सपौ(? प)रुषं चेतो भावि विप्र तदा कलौ।
क्षीरप्रदानसंबन्धि भाति गोषु च गौरवम्।।
अनावृष्टिभयात्प्रायः प्रजाः क्षुद्भयकातराः।
भविष्यन्ति तदा सर्वा गगनासक्तदृष्टयः।।
मूलपर्णफलाहारास्तापसा इव मानवाः।
आत्मानं घातयिष्यन्ति तदाऽवृष्ट्याऽभिदुःखिताः।।
दुर्भिक्षमेव सततं सदा क्लेशमनीश्वराः।
प्राप्स्यन्ति व्याहतसुखं प्रमादान्मानवाः कलौ।।
अस्नातभोजिनो नाग्निदेवतातिथिपूजनम्।
करिष्यन्ति कलौ प्राप्ते न च पिण्डोदकक्रियाम्।।
लोलुपा ह्रस्वदेहाश्च बह्वन्नादनतत्पराः।
बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः।।
उभाभ्यामथ पाणिभ्यां शिरःकण्डूयनं स्त्रियः।
कुर्वत्यो गुरुभर्तृणामाज्ञां भेत्स्यन्त्यनावृताः।।
स्वपोषणपराः क्रुद्धा देहसंस्कारवर्जिताः।
परुषानृतभाषिण्यो भविष्यन्ति कलौ स्त्रियः।।
दुःशीला दुष्टशीलेषु कुर्वत्यः सततं स्पृहाम्।
असद्वृत्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः।।
वेदादानं करिष्यन्ति वडवाश्च तथाऽव्रताः।
गृहस्थाश्च न होष्यन्ति न दास्यन्त्युचितान्यपि।।
भवेयुर्वनवासा वै ग्राम्याहारपरिग्रहाः।
भिक्षवश्चापि पुत्रा हि स्नेहसंबन्धयन्त्रकाः।।
अरक्षितारो हर्तारः शुल्कव्याजेन पार्थिवाः।
हारिणो जनवित्तानां संप्राप्ते च कलौ युगे।।
यो योऽश्वरथनागाढ्यः स स राजा भविष्यति।
यश्च यश्चाबलः सर्वः स स भृत्यः कलौ युगे।।
वैश्याः कृषिवणिज्यादि संत्यज्य निजकर्म यत्।
शूद्रवृत्त्या भविष्यन्ति कारुकर्मोपजीविनः।।
भैक्ष्यव्रतास्तथा शूद्राः प्रव्रज्यालिङ्गिनोऽधमाः।
पाखण्डसंश्रयां वृत्तिमाश्रयिष्यन्त्यसंस्कृताः।।

दुर्भिक्षकरपीडाभिरतीवोपद्रुता जनाः।
गोधूमान्नयवान्नाढ्यान्देशान्यास्यन्ति दुःखिताः।।
वेदमार्गे प्रलीने च पाखण्डाढ्ये ततो जने।
अधर्मवृद्ध्या लोकानामल्पमायुर्भविष्यति।।
अशास्त्रविहितं घोरं तप्यमानेषु वै तपः।
नरेषु नृपदोषेण बालमृत्युर्भविष्यति।।
भवित्री योषितां सूतिः पञ्चषट्सप्तवार्षिकी।
नवाष्टदशवर्षाणां मनुष्याणां तथा कलौ।।
पलितोद्गमश्च भविता तदा द्वादशवार्षिकः।
न जीविष्यति वै कश्चित्कलौ वर्षाणि विंशतिम्।।
अल्पप्रज्ञा वृथालिङ्गा दुष्टान्तःकरणाः कलौ।
यतस्ततो विनश्यन्ति कालेनाल्पेन मानवाः।।
यदा यदा हि पाखण्डवृत्तिरत्रोपलक्ष्यते।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः।।
यदा यदा सतां हानिर्वेदमार्गानुसारिणाम्।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः।।
प्रारम्भाश्चावसीदन्ति यदा धर्मकृतां नृणाम्।
तदाऽनुमेयं प्राधान्यं कलेर्विप्रा विचक्षणैः।।
यदा यदा न यज्ञानामीश्वरः पुरुषोत्तमः।
इज्यते पुरुषैर्यज्ञैस्तदा ज्ञेयं कलेर्बलम्।।
न प्रीतिर्वेदवादेषु पाखण्डेषु यदा रतिः।
कलेर्वृद्धिस्तदा प्राज्ञैरनुमेया द्विजोत्तमाः।।
कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम्।
नार्चयिष्यन्ति भो विप्राः पाखण्डोपहता नराः।।
किं देवैः किं द्विजैर्वेदैः किं शौचेनाम्बुजल्प-
(? न्म) ना।
इत्येवं प्रलपिष्यन्ति पाखण्डोपहता नराः।।
अल्पवृष्टिश्च पर्जन्यः स्वल्पं सस्यफलं तथा।
फलं तथाऽल्पसारं च विप्राः प्राप्ते कलौ युगे।।
जानुप्रायाणि वस्त्राणि शमीप्राया महीरुहाः।
शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे।।
अणुप्रायाणि धान्यानि आजप्रायं तथा पयः।
भविष्यति कलौ प्राप्त औशीरं चानुलेपनम्।।
श्वश्रूश्वशुरभूयिष्ठा गुरवश्च नृणां कलौ।
शालाद्याहारिभार्याश्च सुहृदो मुनिसत्तमाः।।

कस्य माता पिता कस्य यदा कर्मात्मकः पुमान्।
इति चोदाहरिष्यन्ति श्वशुरानुगता नराः।।
वाङ्मनःकायजैर्दोषैरभिभूताः पुनः पुनः।
नराः पापान्यनुदिनं करिष्यन्त्यल्पमेधसः।।
निःसत्यानामशौचानां निर्ह्रीकाणां तथा द्विजाः।
यद्यद्दुःखाय तत्सर्वं कलिकाले भविष्यति।।
निःस्वाध्यायवषट्कारे स्वधास्वाहाविवर्जिते।
तदा प्रविरलो विप्रः कश्चिल्लोके भविष्यति।।
तत्राल्पेनैव कालेन पुण्यस्कन्धमनुत्तमम्।
करोति यः कृतयुगे क्रियते तपसा हि यः।।

मुनय ऊचुः –

कस्मिन्कालेऽल्पको धर्मो ददाति सुमहाफलम्।
वक्तुमर्हस्यशेषेण श्रोतुं वाञ्छा प्रवर्तते।।

व्यास उवाच –

धन्ये कलौ भवेद्विप्रास्त्वल्पक्लेशैर्महत्फलम्।
तथा भवेतां स्त्रीशूद्रौ धन्यौ चान्यन्निबोधत।।
यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत्।
द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ।।
तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः।
प्राप्नोति पुरुषस्तेन कलौ साध्विति भाषितम्।।
ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्।।
धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ।
स्वल्पायासेन धर्मज्ञास्तेन तुष्टोऽस्म्यहं कलौ।।
अल्पेनैव प्रयत्नेन धर्मः सिध्यति वै कलौ।
नरैरात्मगुणाम्भोभिः क्षालिताखिलकिल्बिषैः।।
धर्मसंराधने क्लेशो द्विजातीनां कृतादिषु।
तथा स्वल्पेन तपसा सिद्धिं यास्यन्ति मानवाः।
धन्या धर्मं चरिष्यन्ति युगान्ते मुनिसत्तमाः।।

विस्तरेण कलिदोषप्रभवजन-
वृत्तवर्णनम्

मुनय ऊचुः –

[1]आसन्नं विप्रकृष्टं वा यदि कालं न विद्महे।
ततो द्वापरविध्वंसं युगान्तं स्पृहयामहे।।
प्राप्ता वयं हि तत्कालमनया धर्मतृष्णया।
आदद्याम परं धर्मं सुखमल्पेन कर्मणा।।
संत्रासोद्वेगजननं युगान्तं समुपस्थितम्।
प्रनष्टधर्मं धर्मज्ञ निमित्तैर्वक्तुमर्हसि।।

व्यास उवाच –

अरक्षितारो हर्तारो बलिभागस्य पार्थिवाः।
युगान्ते प्रभविष्यन्ति स्वरक्षणपरायणाः।।
अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः।
शूद्राश्च ब्राह्मणाचारा भविष्यन्ति युगक्षये।।
श्रोत्रियाः काण्डपृष्ठाश्च निष्कर्माणि हवींषि च।
एकपङ्क्त्यामशिष्यन्ति युगान्ते मुनिसत्तमाः।।
अशिष्टवन्तोऽर्थपरा नरा मद्यामिषप्रियाः।
मित्रभार्यां भजिष्यन्ति युगान्ते पुरुषाधमाः।।
राजवृत्तिस्थिताश्चौरा राजानश्चौरशीलिनः।
भृत्या ह्यनिर्दिष्टभुजो भविष्यन्ति युगक्षये।।
धनानि श्लाघनीयानि सतां वृत्तमपूजितम्।
अकुत्सना च पतिते भविष्यति युगक्षये।।
प्रनष्टनासाः पुरुषा मुक्तकेशा विरूपिणः।
ऊनषोडशवर्षाश्च प्रसोष्यन्ति तथा स्त्रियः।।
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।
प्रमदाः केशशूलाश्च भविष्यन्ति युगक्षये।।
सर्वे ब्रह्म वदिष्यन्ति द्विजा वाजसनेयिकाः।
शूद्रा भोवादिनश्चैव ब्राह्मणाश्चान्त्यवासिनः।।
शुक्लदन्ता जिताक्षाश्च मुण्डाः काषायवाससः।
शूद्रा धर्मं वदिष्यन्ति शाठ्यबुद्ध्योपजीविनः।।
श्वापदप्रचुरत्वं च गवां चैव परिक्षयः।
साधूनां परिवृत्तिश्च विद्यादन्तगते युगे।।
अन्त्या मध्ये निवत्स्यन्ति मध्याश्चान्तनिवासिनः।
निर्ह्रीकाश्च प्रजाः सर्वा नष्टास्तत्र युगक्षये।।
तपोयज्ञफलानां च विक्रेतारो द्विजोत्तमाः।
ऋतवो विपरीताश्च भविष्यन्ति युगक्षये।।
तथा द्विहायना दम्याः कलौ लाङ्गलधारिणः।
चित्रवर्षी च पर्जन्यो युगे क्षीणे भविष्यति।।

(१) ब्रह्म. २३०।१-९३.

सर्वे शूरकुले जाताः क्षमानाथा भवन्ति हि।
यथा निम्नाः प्रजाः सर्वा भविष्यन्ति युगक्षये।।
पितृदेयानि दत्तानि भवि(? णि)ष्यन्ति तथा सुताः।
न च धर्मं चरिष्यन्ति मानवा निर्गते युगे।।
ऊषरा बहुला भूमिः पन्थानस्तस्करावृताः।
सर्वे वाणिजकाश्चैव भविष्यन्ति युगक्षये।।
पितृदायाददत्तानि विभजन्ति तथा सुताः।
हरणे यत्नवन्तोऽपि लोभादिभिर्विरोधिनः।।
सौकुमार्ये तथा रूपे रत्ने चोपक्षयं गते।
भविष्यन्ति युगस्यान्ते नार्यः केशैरलंकृताः।।
निर्वीर्यस्य रतिस्तत्र गृहस्थस्य भविष्यति।
युगान्ते समनुप्राप्ते नान्या भार्यासमा रतिः।।
कुशीलानार्यभूयिष्ठा वृथारूपसमन्विताः।
पुरुषाल्पं बहुस्त्रीकं तद्युगान्तस्य लक्षणम्।।
बहुयाचनको लोको न दास्यति परस्परम्।
राजचौराग्निदण्डादिक्षीणः क्षयमुपैष्यति।।
अफलानि च सस्यानि तरुणा वृद्धशीलिनः।
अशीलाः सुखिनो लोके भविष्यन्ति युगक्षये।।
वर्षासु परुषा वाता नीचाः शर्करवर्षिणः।
संदिग्धः परलोकश्च भविष्यति युगक्षये।।
वैश्या इव च राजन्या धनधान्योपजीविनः।
युगापक्रमणे पूर्वं भविष्यन्ति न बान्धवाः।।
अप्रवृत्ताः प्रपश्यन्ति समयाः शपथास्तथा।
ऋणं सविनयभ्रंशं युगे क्षीणे भविष्यति।।
भविष्यत्यफलो हर्षः क्रोधश्च सफलो नृणाम्।
अजाश्चापि निरोत्स्यन्ति पयसोऽर्थे युगक्षये।।
अशास्त्रविहितो यज्ञ एवमेव भविष्यति।
अप्रमाणं करिष्यन्ति नराः पण्डितमानिनः।।
शास्त्रोक्तस्याप्रवक्तारो भविष्यन्ति न संशयः।
सर्वः सर्वं विजानाति वृद्धाननुपसेव्य वै।।

न कश्चिदकविर्नाम युगान्ते समुपस्थिते।
नक्षत्राणि वियोगानि न कर्मस्था द्विजातयः।।
चौरप्रायाश्च राजानो युगान्ते समुपस्थिते।
कुण्डीवृषा नैकृतिकाः सुरापा ब्रह्मवादिनः।।
अश्वमेधेन यक्ष्यन्ते युगान्ते द्विजसत्तमाः।
याजयिष्यन्त्ययाज्यांस्तु तथाऽभक्ष्यस्य भक्षिणः।।
ब्राह्मणा धनतृष्णार्ता युगान्ते समुपस्थिते।
भोःशब्दमभिधास्यन्ति न च कश्चित्पठिष्यति।।
एकशङ्खास्तथा नार्यो गवेधुकपिनद्धकाः(?)।
नक्षत्राणि विवर्णानि विपरीता दिशो दश।।
संध्यारागो विदग्धाङ्गो भविष्यति युगक्षये।
प्रेषयन्ति पितॄन्पुत्रा वधूः श्वश्रूः स्वकर्मसु।
युगेष्वेवं निवत्स्यन्ति प्रमदाश्च नरास्तथा।।
अकृत्वाऽग्राणि भोक्ष्यन्ति द्विजाश्चैवाहुताग्नयः।
भिक्षां बलिमदत्त्वा च भोक्ष्यन्ति पुरुषाः स्वयम्।।
वञ्चयित्वा पतीन्सुप्तान्गमिष्यन्ति स्त्रियोऽन्यतः।
न व्याधितान्नाप्यरूपान्नोद्यतान्नाप्यसूयकान्।।
कृते न प्रतिकर्ता च युगे क्षीणे भविष्यति।।

मुनय ऊचुः –

एवं विलम्बिते धर्मे मानुषाः करपीडिताः।
कुत्र देशे निवत्स्यन्ति किमाहारविहारिणः।।
किंकर्माणः किमीहन्तः किंप्रमाणाः किमायुषः।
कां च काष्ठां समासाद्य प्रपत्स्यन्ति कृतं युगम्।।

व्यास उवाच –

अत ऊर्ध्वं च्युते धर्मे गुणहीनाः प्रजास्तथा।
शीलव्यसनमासाद्य प्राप्स्यन्ति ह्रासमायुषः।।
आयुर्हान्या बलग्लानिर्बलग्लान्या विवर्णता।
वैवर्ण्याद्व्याधिसंपीडा निर्वेदो व्याधिपीडनात्।।
निर्वेदादात्मसंबोधः संबोधाद्धर्मशीलता।
एवं गत्वा परां काष्ठां प्रपत्स्यन्ति कृतं युगम्।।

उद्देशतो धर्मशीलाः केचिन्मध्यस्थतां गताः।
किंधर्मशीलाः केचित्तु केचिदत्र कुतूहलाः।।
प्रत्यक्षमनुमानं च प्रमाणमिति निश्चिताः।
अप्रमाणं करिष्यन्ति सर्वमित्यपरे जनाः।।
नास्तिक्यपरताश्चापि केचिद्धर्मविलोपकाः।
भविष्यन्ति नरा मूढा द्विजाः पण्डितमानिनः।।
तदात्वमात्रश्रद्धेया शास्त्रज्ञानबहिष्कृताः।
दाम्भिकास्ते भविष्यन्ति नरा ज्ञानविलोपिताः।।
तथा विलुलिते धर्मे जनाः श्रेष्ठपुरस्कृताः।
शुभान्समाचरिष्यन्ति दानशीलपरायणाः।।
सर्वभक्षाः स्वयंगुप्ता निर्घृणा निरपत्रपाः।
भविष्यन्ति तदा लोके तत्कषायस्य लक्षणम्।।
कषायोपप्लवे काले ज्ञाननिष्ठाप्रणाशने।
सिद्धिमल्पेन कालेन प्राप्स्यन्ति निरुपस्कृताः।।
विप्राणां शाश्वतीं वृत्तिं यदा वर्णावरे जनाः।
संश्रयिष्यन्ति भो विप्रास्तत्कषायस्य लक्षणम्।।
महायुद्धं महावर्षं महावातं महातपः।
भविष्यति युगे क्षीणे तत्कषायस्य लक्षणम्।।
विप्ररूपेण य( ? र)क्षांसि राजानः कर्णवेदिनः।
पृथिवीमुपभोक्ष्यन्ति युगान्ते समुपस्थिते।।
निःस्वाध्यायवषट्कारा: कुनेतारोऽभिमानिनः।
क्रव्यादा ब्रह्मरूपेण सर्वभक्ष्या वृथाव्रताः।।
मूर्खाश्चार्थपरा लुब्धाः क्षुद्राः क्षुद्रपरिच्छदाः।
व्यवहारोपवृत्ताश्च च्युता धर्माच्च शाश्वतात्।।
हर्तारः पररत्नानां परदारप्रधर्षकाः।
कामात्मानो दुरात्मानः सोपधाः प्रियसाहसाः।।
तेषु प्रभवमाणेषु जनेष्वपि च सर्वशः।
अभाविनो भविष्यन्ति मुनयो बहुरूपिणः।।
कलौ युगे समुत्पन्नाः प्रधानपुरुषाश्च ये।
कथायोगेन तान्सर्वान्पूजयिष्यन्ति मानवाः।।
सस्यचौरा भविष्यन्ति तथा चैलापहारिणः।
भोक्ष्यभोज्यहराश्चैव करण्डानां च हारिणः।।

चौराश्चौरस्य हर्तारो हन्ता हन्तुर्भविष्यति।
चौरैश्चौरक्षये चापि कृते क्षेमं भविष्यति।।
निःसारे क्षुभिते काले निष्क्रिये संव्यवस्थिते।
नरा वनं श्रयिष्यन्ति करभारप्रपीडिताः।।
यज्ञकर्मण्युपरते रक्षांसि श्वापदानि च।
कीटमूषिकसर्पाश्च धर्षयिष्यन्ति मानवान्।।
क्षेमं सुभिक्षमारोग्यं सामग्र्यं चैव बन्धुषु।
उद्देशेषु नराः श्रेष्ठा भविष्यन्ति युगक्षये।।
स्वयंपालाः स्वयंचौराः प्लवसंभारसंभृताः।
मण्डलैः संभविष्यन्ति देशे देशे पृथक्पृथक्।।
स्वदेशेभ्यः परिभ्रष्टा निःसाराः सह बन्धुभिः।
नराः सर्वे भविष्यन्ति तदा कालपरिक्षयात्।।
ततः सर्वे समादाय कुमारान्प्रद्रुता भयात्।
कौशिकीं संतरिष्यन्ति नराः क्षुद्भयपीडिताः।।
अङ्गान्वङ्गान्कलिङ्गांश्च काश्मीरानथ –
कोशलान्।
ऋषिकान्तगिरिद्रोणीः संश्रयिष्यन्ति मानवाः।।
कृत्स्नं च हिमवत्पार्श्वं कूलं च लवणाम्भसः।
विविधं जीर्णपत्रं च वल्कलान्यजिनानि च।।
स्वयं कृत्वा निवत्स्यन्ति तस्मिन्भूते युगक्षये।
अरण्येषु च वत्स्यन्ति नरा म्लेच्छगणैः सह।।
नैव शून्या नवारण्या भविष्यति वसुंधरा।
अगोप्तारश्च गोप्तारो भविष्यन्ति नराधिपाः।।
मृगैर्मत्स्यैर्विहंगैश्च श्वापदैः सर्पकीटकैः।
मधुशाकफलैर्मूलैर्वर्तयिष्यन्ति मानवाः।।
शीर्णपर्णफलाहारा वल्कलान्यजिनानि च।
स्वयं कृत्वा निवत्स्यन्ति यथा मुनिजनस्तथा।।
बीजानामकृतस्नेहा आहताः काष्ठशङ्कुभिः।
अजैडकं खरोष्ट्रं च पालयिष्यन्ति नित्यशः।।
नदीस्रोतांसि रोत्स्यन्ति तोयार्थं कूलमाश्रिताः।
पक्वान्नव्यवहारेण विपणन्तः परस्परम्।।
तनूरुहैर्यथाजातैः समलान्तरसंभृतैः।
बह्वपत्याः प्रजाहीनाः कुलशीलविवर्जिताः।।

**एवं भविष्यन्ति तदा नराश्चाधर्मजीविनः।**
**हीना हीनं तथा धर्मं प्रजा समनुवत्स्यति।।**
**आयुस्तत्र च मर्त्यानां परं त्रिंशद्भविष्यति।**
**दुर्बला विषयग्लाना जराशोकैरभिप्लुताः।।**
**भविष्यन्ति तदा तेषां रोगैरिन्द्रियसंक्षयः।**
**आयुः प्रत्ययसंरोधाद्विषयादुपरंस्यते।।**
**शुश्रूषवो भविष्यन्ति साधूनां दर्शने रताः।**
**सत्यं च प्रतिपत्स्यन्ति व्यवहारोपसंक्षयात्।।**
**भविष्यन्ति च कामानामलाभाद्धर्मशीलिनः।**
**करिष्यन्ति च संस्कारं स्वयं च क्षयपीडिताः।।**
**एवं शुश्रूषवो दाने सत्ये प्राण्यभिरक्षणे।**
**ततः पादप्रवृत्ते तु धर्मे श्रेयो निपत्स्यते।।**
**तेषां लब्धानुमानानां गुणेषु परिवर्तताम्।**
**स्वादु किं त्विति विज्ञाय धर्म एव च दृश्यते।।**
**यथा हानिक्रमं प्राप्तास्तथा ऋद्धिक्रमं गताः।**
**प्रगृहीते ततो धर्मे प्रपश्यन्ति कृतं युगम्।।**
**साधुवृत्तिः कृतयुगे कषाये हानिरुच्यते।**
**एक एव तु कालोऽयं हीनवर्णो यथा शशी।।**
**छन्नश्च तमसा सोमो यथा कलियुगं तथा।**
**मुक्तश्च तमसा सोम एवं कृतयुगं च तत्।।**
**अर्थवादः परं ब्रह्म वेदार्थ इति तं विदुः।**
**अविविक्तमविज्ञातं दायाद्यमिह धार्यते।।**
**इष्टवादस्तपो नाम तपो हि स्थविरीकृतः।**
**गुणैः कर्माभिनिर्वृत्तिर्गुणाः शुध्यन्ति कर्मणा।।**
**आशीस्तु पुरुषं दृष्ट्वा देशकालानुवर्तिनी।**
**युगे युगे यथाकालमृषिभिः समुदाहृता।।**
**धर्मार्थकाममोक्षाणां देवानां च प्रतिक्रिया।**
**आशिषश्च शिवाः पुण्यास्तथैवाऽऽयुर्युगे युगे।।**
**तथा युगानां परिवर्तनानि**
**चिरप्रवृत्तानि विधिस्वभावात्।**
**क्षणं न संतिष्ठति जीवलोकः**
**क्षयोदयाभ्यां परिवर्तमानः।।**

कलिवर्ज्यानि, कलियुगान्ते राज्ञाम्
ऋषीणां च वृत्तम्

**'दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः।**
**गोत्रान्मातृसपिण्डात्तु विवाहो गोवधस्तथा।**
**नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः।।**

(१) दीर्घकालमिति नैष्ठिकब्रह्मचर्यमित्यर्थ इति दीपिकाकारः। अन्ये तु 'अष्टाचत्वारिंशद्वर्षाणि' इत्याद्यपि कलौ निषिध्यत इत्याहुः। कमण्डलुधारणम् 'अथ कमण्डलुचर्यामुपदिशन्ति' इत्यादिबौधायनोक्तेतिकर्तव्यताकं 'सोदकं च कमण्डलुम्' इत्यनेन स्नातकस्य विहितं मृन्मयकरकधारणम्। गोत्रात् स्वगोत्रोत्पन्नायाः पितृष्वसुः। मातृसपिण्डात् मातुलात्। यः श्रुतिस्मृतिसदाचारैर्मातुलकन्यापरिणयः प्राप्तः सोऽनेन कलौ निषिध्यते। तेन 'मातुलस्य सुतामूढ्वा' इत्यादीनि कलिविषयाण्येव। अत एव व्यासेन कलिनिन्दाप्रक्रमे 'तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा। शुल्केन

---

(१) **अप.** १।७ पृ. १५ गोत्रान्मातृसपिण्डात्तु (सगोत्राद्वा सपिण्डाद्वा) वर्ज्यं (वर्ज्या) : १।३३ पृ. ६३ गोत्रान्मातृसपिण्डात्तु (सगोत्राद्वा सपिण्डाद्वा); **ब्रक.** २६४ ण्डात्तु (ण्डाद्वा) मेधौ (मेधं); **निक.** १९० ण्डात्तु (ण्डाद्वा); **स्मृच.** १।२९ वर्ज्यं (वर्ज्या) आदिपुराणम्; **गृर.** २९४ निकवत्; **पमा.** १।१२३; **प्रपा.** ३०८ मातृस (मातुः स) वर्ज्यं (वर्ज्या); **दीक.** १।१०९ ण्डात्तु (ण्डाद्वा) मद्यं (पल्यं) वर्ज्यं (वर्ज्या); **चमव्या.** ४९ : ९६ द्वितीयार्धमात्रम्; **मुक्ता.** १३ द्वितीयार्धमात्रम्, धर्मशास्त्रसुधानिधौ; **सिन्धु.** १०११ मातृस (मातुः स) ण्डात्तु (ण्डाच्च) द्वितीयार्धमात्रम्, आदिपुराणम् : १०५७ मातृस (मातुः स) ण्डात्तु (ण्डाच्च) द्वितायार्धमात्रम् (=) : १२९० मातृस (मातुः स) ण्डात्तु (ण्डाच्च) प्रथमार्धं नास्ति; **सम.** १०९ ण्डात्तु (ण्डाच्च); **विपा.** ३।६९७ द्वितीयार्धमात्रम्; **संप्र.** ७२५ मातृस (मातुः स) ण्डात्तु (ण्डाच्च) द्वितीयार्धमात्रम्; **आप्र.** ४५२ तृस (तुः स) ण्डास्तु (ण्डाद्वा); **स्मृतिकौ.** ४७४ ण्डात्तु (ण्डाच्च) प्रथमार्धं नास्ति, आदित्यपुराणम्; **आन.** २२ द्वितीयार्धमात्रम्, धर्मशास्त्रसुधानिधौ; **साप्र.** ७ मातृस (मातुः स) ण्डात्तु (ण्डाच्च) द्वितीयार्धमात्रम्; **संग.** १७३ द्वितीयार्धमात्रम्; **बाल.** १।१०९ पृ. ३५९ आप्रवत्; **पुम.** ४६८ ण्डात्तु (ण्डाच्च) तृतीयार्धे (कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्।।) हेमाद्रौ आदित्यपुराणे; **सस्मृ.** ९३ द्वितीयार्धमात्रम्, धर्मशास्त्रसुधानिधौ; **संदी.** २।९ (=) तृस (तुः स) ण्डात्तु (ण्डाच्च) द्वितीयार्धमात्रम्.

चोद्वहिष्यन्ति विप्राः पापविमोहिताः।।' इत्युक्तम्। मातृतः मातृपक्षे कूटस्थात्तृतीयां मातुलसुताम्, पितृतः पितृपक्षे तृतीयां पैतृष्वसेयीमित्यर्थः। एतेन कृष्णार्जुनादीनां मातुलकन्यापरिणयोऽपि युगान्तरीयत्वान्न विरुध्यते। आधुनिकानां तु तदाचारोऽनाचार एव। अत एव बौधायनेन 'पञ्चधा विप्रतिपत्तिर्दक्षिणतः' इत्युपक्रम्य 'यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनम्'(बौध. १।२।१,३) इत्यनाचारत्वमेव प्रतिपादितमिति। गोवधो मधुपर्कादौ। मद्यं गौडीमाध्व्यादिरूपं क्षत्रियवैश्ययोर्निषिध्यते, न ब्राह्मणस्य, नित्यं तन्निषेधात्। न पैष्टी, सर्वेषु तन्निषेधात्। * चमव्या. ४९

(२) दीर्घकालमिति कालपदोपादानबलात् 'अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यम्' इति श्रुत्युक्तम्। अन्यथा 'दीर्घं ब्रह्मचर्यम्' इत्येवावक्ष्यत्। एतेन 'ब्रह्मव्रतं नैष्ठिकम्' इति रामचन्द्राचार्योक्तिः परास्ता। अत एव द्राविडानां नैष्ठिकब्रह्मचर्याचारः संगच्छते। १०९

नरमेधः 'ब्रह्मणे ब्राह्मणमालभेत' इत्यादि।

+ सम. ११०

(३) मद्यमिति। 'उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनौ।' इति महाभारताद्युक्त्या क्षत्रियादेः प्रसक्तस्य पैष्टीभिन्नमद्यपानस्य निषेधः। वस्तुतस्तु मेधपदोक्तयज्ञसाहचर्याच्छ्रौतेषु यज्ञेषु सौत्रामण्यादिषु स्मार्तेषु विनायकशान्त्यादिषु विनियुक्तमद्यनिषेधोऽयम्। यत्तु वामागमादौ विहितस्य निषेध इति, तदसत्, वामागमादेः प्रामाण्यस्य भट्टचरणप्रभृत्यनेकशास्त्रकर्तृभिः सर्वदेशस्थशिष्टैश्चानभ्युपगमेन तद्विहितत्वेन प्रसक्तेरसंभवात्, असत्परिग्रहमूलकप्रामाण्यस्य भ्रमेण प्राप्तेश्च सौत्रामण्यादिभिः सह वचनानर्हत्वात्।

§ स्मृतिकौ. ४७४-४७५.

(४) 'गोत्रान्मातुः .... तथा' इति कलिवर्ज्यत्वमप्यस्य स्वदेशकुलविरोधितादृशपरिणयविषयं मुख्यसंभवे गौणानुष्ठानविषयं वेति केचित्। ६

* सिन्धु. चमव्यागतम्।

+ शेषं चमव्यागतम्।

§ शेषं चमव्यागतम्।

एवं च ब्राह्मादिविवाहोढापुत्रादेरनुकल्पत्वेन तृतीयादिविवाहे न बाधकम्। एवं पितृष्वसृकन्याया अपि। निषेधास्तु गान्धर्वादिविवाहोढासंतानविषयाः। 'गोत्रान्मा... वधस्तथा' इति ब्रह्मपुराणवाक्यविहितकलिवर्ज्यत्वं च तद्विषयमेव। प्रद्युम्नादीनां तथाविवाहितासुतानां मातुलकन्यादिपरिणयस्तु युगान्तरकृतत्वान्न दोषाय। ये तु कृष्णप्रद्युम्नादीनां तथाऽऽचारं दृष्ट्वा कलावपि क्वचिद्देश आसुरादिविवाहोढासुतानामपि मातुलकन्याविवाहो धर्म इति मन्यन्ते तेषां कलिवर्ज्यत्वेन दोषे सत्यपि 'यस्तु देशानुरूपेण' इति चतुर्विंशतिमतेन व्यवहार्यत्वं प्रतिपाद्यते। प्रद्युम्नार्जुनादौ व्यवहितसंबन्ध एवेति तु मीमांसावार्तिकादौ स्पष्टम्। तदा तु तेषां दुष्टत्वमेव नेति बोध्यम्। सर्वलोकादर्शभूतस्य धर्मव्यवस्थाप्रदर्शकस्य भगवतो दुराचारप्रवर्तकत्वमिति तु असंभवदुक्तिकमेव। न च गोवधसाहचर्याद्विहितमातुलकन्यापरिणयान् प्रत्येव कलिवर्ज्यत्वबोधनं युक्तम्, अन्यथा परिसंख्यापत्तेरिति वाच्यम्, मातृसगोत्राविवाहांशेऽप्येवमेवाऽऽपत्ताविदानींतनसकलशिष्टाचारविरोधापत्तेः। तस्मात्तद्वचने तदुभयांशे परिसंख्यैव युक्ता। 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि' इति व्यासवाक्यमपि पुत्रिकापुत्रगान्धर्वादिविवाहितापुत्रविषये निषेधबोधकम्। तेषामेव मातृगोत्रप्रसक्तेः। एवमन्येऽपि मातृगोत्रनिषेधवाक्यसंदर्भास्तत्परा एव। साप्र. ७-८

**[१]स्त्रीणां पुनर्विवाहस्तु देवरात्पुत्रसंततिः।**
**स्वातन्त्र्यं वा कलियुगे न कर्तव्यं कदाचन।**
**यतः पातकिनो लोके नराः सन्ति कलौ युगे।।**
**[२]वैश्याचाराश्च राजानो धनधान्योपजीविनः।**
**तथा लेखनवृत्त्या ते सदसद्वृत्त्युप( ? द्वृत्ति)जीविनः।**
**स्थास्यन्ति जटिला मुण्डा युगान्ते हि महर्षयः।।**

तत्र *आद्ययोः क्षात्रधर्माभावेऽपि क्षत्रियत्वे न विवादः, उक्तहेतोः, 'वैश्याचाराश्च... महर्षयः।।' इति ब्राह्मात्।

बाल. १।९५ पृ. ३१३

* प्रकृतेषु चित्रगुप्तीयचन्द्रसेनीयसंकरजेषु कायस्थेष्वाद्ययोरित्यर्थः।

(१) **अप.** १।६८-६९ पृ. ९८; **संप्र.** ७४३ तृतीयार्धं नास्ति.

(२) **बाल.** १।९५ पृ. ३१३.

## ब्रह्मवैवर्तपुराणम्

युगेषु धर्मस्योत्कर्षापकर्षौ, कृते धर्मस्य सर्वत्र स्थितिः, त्रेतादिषु धर्मस्य योग्यायोग्यस्थानानि

[1]सत्ये पूर्णश्चतुष्पादैः पौर्णमास्यां यथा शशी।
विराजसे देवराज सर्वकालं दिवानिशम्।।
पादक्षयश्च त्रेतायां भगवन्भविता तव।
पादौ परौ द्वापरे च तृतीयश्च कलौ विभो।।
कलिशेषे शेषपादस्तवाऽऽच्छन्नो भविष्यति।
पुनः सत्ये समायाते परिपूर्णो भविष्यसि।।
सत्ये सर्वव्यापकस्त्वं तदन्येषु च कुत्रचित्।
यत्र स्थानं तवाऽऽधारो वदामि श्रूयतां विभो।।
वैष्णवेषु च सर्वेषु यतिषु ब्रह्मचारिषु।
पतिव्रतासु प्राज्ञेषु वानप्रस्थेषु भिक्षुषु।।
नृपेषु धर्मशीलेषु सत्सु सद्वैश्यजातिषु।
द्विजसेविषु शूद्रेषु सत्संसर्गस्थितेषु च।।
एषु त्वं सततं पूर्णो धर्मराज विराजसे।
युगे युगे तवाऽऽधारा यत्र पुण्यतमा जनाः।।
अश्वत्थवटबिल्वेषु तुलसीचन्दनेषु च।
दीक्षापरीक्षाशपथगोष्ठगोष्पदभूमिषु।।
देवार्हेषु च पुष्पेषु विद्यमानोऽसि शाखिषु।
देवालयेषु तीर्थेषु सतां शश्वद्गृहेषु च।।
वेदवेदाङ्गश्रवणे जलेषु च सभासु च।
श्रीकृष्णगुणनामोक्तश्रुतिगीतस्थलेषु च।।
व्रतपूजातपोन्याययज्ञसाक्ष्यस्थलेषु च।
गवां गृहेषु गोष्वेव विद्यमानो हि पश्यसि।।
कृशता ते न भविता धर्म तेषु स्थलेषु च।
एतदन्येषु कृशता यदगम्यं च तच्छृणु।।
पुंश्चलीषु च सर्वासु गृहेषु नरघातिनाम्।
नरघातिषु नीचेषु मूर्खेषु च खलेषु च।।
देवतागुरुविप्रेष्टपाल्यानां धनहारिषु।
असन्नरेषु धूर्तेषु चौरेषु रतिभूमिषु।।
दुरोदरसुरापानकलहानां स्थलेषु च।
शालग्रामसाधुतीर्थपुराणरहितेषु च।।

(१) ब्रह्मवै. ४।४२।३६-५७.

दस्युस्नेहेषु वादेषु तालच्छायासु गर्विषु।
असीजीविमषीजीविदेवलग्रामयाजिषु।।
वृषवाहस्वर्णकारजीवहिंसोपजीविषु।
भर्तृनिन्दितनारीषु स्त्रीजितेषु च पुंसु च।।
दीक्षासंध्याविष्णुभक्तिविहीनेषु द्विजेषु च।
स्वाङ्गकन्याविक्रयिषु स्वयोषिद्विक्रयेष्वथ।।
शालग्रामसुरग्रन्थभूमिविक्रयिषु प्रभो।
मित्रद्रोहिकृतघ्नेषु सत्यविश्वासघातिषु।।
शरणागतदीनेषु चाऽऽश्रितघ्नेषु नृष्वपि।
शश्वन्मिथ्योक्तिशीलेषु तथा सीमापहारिषु।।
कामात्क्रोधात्तथा लोभान्मिथ्यासाक्ष्यप्रवादिषु।
पुण्यकर्मविहीनेषु पुण्यकर्मविरोधिषु।
स्थातुमेतेषु निन्द्येषु नाधिकारस्तव प्रभो।।

कृते परिपूर्णो धर्मः, कृतयुगीय-लोकवृत्तानि

[1]परिपूर्णतमो धर्मो धार्मिकाश्च कृते युगे।
परिपूर्णतमं सत्यं परिपूर्णतमा दया।।
अतीव प्रज्वलद्रूपा वेदाश्चत्वार एव च।
वेदाङ्गाश्चापि विविधाश्चेतिहासाश्च संहिताः।।
पुराणानि सुरम्याणि पञ्चरात्राणि पञ्च च।
रुचिराणि सुभद्राणि धर्मशास्त्राणि यानि च।।
विप्रा वेदविदः सर्वे पुण्यवन्तस्तपस्विनः।
नारायणं ते ध्यायन्ति तन्मन्त्रं च जपन्ति च।।
ब्राह्मणाः क्षत्रिया वैश्याश्चतुर्वर्णाश्च वैष्णवाः।
शूद्रा ब्राह्मणभृत्याश्च सत्यधर्मपरायणाः।।
राजानो धार्मिकाश्चैव प्रजापालनतत्पराः।
गृह्णन्त्येव प्रजानां च षोडशांशकरान्नृपाः।।
करशून्याश्च विप्राश्च पूज्याः स्वच्छन्दगामिनः।
संततं सर्वसस्याढ्या रत्नाधारा वसुंधरा।।
गुरुभक्ताश्च शिष्याश्च पितृभक्ताः सुतास्तथा।
योषितः पतिभक्ताश्च पतिव्रतपरायणाः।।
ऋतौ संभोगिनः सर्वे न स्त्रीलुब्धा न लम्पटाः।
न भयं दस्युचौर्याणां न तत्र पारदारिकाः।।

(१) ब्रह्मवै. ४।९०।२-६४.

तरवः पूर्णफलिनः पूर्णक्षीराश्च धेनवः।
बलवन्तो जनाः सर्वे दीर्घाः सौन्दर्यसंयुताः।।
लक्षवर्षायुषः केचित्पुण्यवन्तो ह्यरोगिणः।
यथा विप्रा विष्णुभक्तास्त्रिवर्णा विष्णुसेविनः।।
जलपूर्णा नदा नद्यः संततं कन्दरास्तथा।
तीर्थपूताश्चतुर्वर्णास्तपःपूता द्विजातयः।।
मनःपूताश्च निखिलाः खलहीनं जगत्त्रयम्।
सत्कीर्तिपरिपूर्णं च यशस्यं मङ्गलान्वितम्।।
पितरः सर्वकालेषु तिथिकालेषु देवताः।
सर्वकालेष्वतिथयः पूजिताश्च गृहे गृहे।।
त्रिवर्णा विप्रभक्ताश्च विप्रभोजनतत्पराः।
ब्राह्मणस्य मुखं क्षेत्रमनूषरमकण्टकम्।।
नारायणोत्कीर्तनेन हर्षयुक्तास्तदुत्सवे।
न देवानां द्विजानां च विदुषां तत्र निन्दकाः।।
नाऽऽत्मप्रशंसकाः केचित्सर्वे परगुणोत्सुकाः।
न शत्रवो जनानां च सर्वे सर्वहितैषिणः।।
पुरुषा योषितश्चापि न हि मूर्खाश्च पण्डिताः।
न दुःखिनो जनाः सत्ये सर्वेषां रत्नमन्दिरम्।।
मणिमाणिक्यरत्नौघरत्नस्वर्णसमन्वितम्।।
न भिक्षुका न रोगार्ताः शोकहीनाश्च हर्षिताः।
न हि भूषणहीनाश्च नरा नार्यश्च केचन।।
न पापिनो न धूर्ताश्च न क्षुधार्ता न कुत्सिताः।
जराहीना प्राणिनश्च शश्वद्यौवनसंस्थिताः।
आधिव्याधिविहीनाश्च निर्विकाराश्च देहिनः।।

त्रेतादिषु पादशो धर्मह्रासः, विस्तरेण कलियुगीय-
चराचरवृत्तवर्णनम्, कलियुगान्ते द्वादशादि-
त्यैर्भूयोवृष्टिभिश्च सर्वसंहारः,
तदन्ते कृतयुग-
प्रवृत्तिः

यदुक्तो वै सत्ययुगे धर्मः सत्यं दयादिकम्।
पादहीनश्च त्रेतायां सत्यार्धं द्वापरेऽपि च।।
धर्मैकपाच्च प्रथमे कलेश्चातिकृशोऽबलः।
दुष्टानां दस्युचौर्याणामङ्कुरः प्रभवेद्व्रज।।
अधर्मनिरताः केचिद्भीताः संगोपिनस्तथा।
भीता गुप्ताश्च पुंश्चल्यो भीताश्च पारदारिकाः।।
धर्मिष्ठानां भयं शश्वदधर्मिष्ठाश्च कम्पिताः।
स्वल्पधर्मरता भूपाः स्वल्पवेदरता द्विजाः।।
व्रतधर्मरताः केचित्सर्वे स्वच्छन्दगामिनः।
यावत्तिष्ठन्ति तीर्थानि यावत्तिष्ठन्ति साधवः।।
यावत्तिष्ठन्ति ग्रामाणां देवाः शास्त्राणि पूजनम्।
तावत्किंचित्तपः सत्यं स्वर्गधर्मांश एव च।।
कलेर्दोषनिधेस्तात गुण एको महानपि।
मानसं संभवेत्पुण्यं सुकृतं न हि दुष्कृतम्।।
तीर्थादिके गते तात नष्टो धर्मांश एव च।
कलारूपश्च धर्मश्च यथा कुह्वां निशाकरः।।

नन्द उवाच –

तीर्थान्येतानि सर्वाणि तिष्ठन्त्येव कियद्दिनम्।
साधवो ग्राम्यदेवाश्च शास्त्रण्येतानि वत्सक।।

श्रीकृष्ण उवाच –

कलौ दशसहस्त्राणि हरिस्तिष्ठति मेदिनीम्।
देवानां प्रतिमा पूज्या शास्त्राणि च पुराणकम्।।
तदर्धमपि तीर्थानि गङ्गादीनि सुनिश्चितम्।
तदर्धं ग्रामदेवाश्च वेदाश्च विदुषामपि।।
अधर्मः परिपूर्णश्च तदन्ते च कलौ पितः।
एकवर्णा भविष्यन्ति वर्णाश्चत्वार एव च।।
न मन्त्रपूतोद्वाहश्च न हि सत्यं न च क्षमा।
स्त्रीस्वीकाररतो नित्यं ग्राम्यधर्मप्रधानतः।।
न यज्ञसूत्रं तिलकं ब्राह्मणानां च नित्यशः।
संध्याशास्त्रविहीनाश्च विप्रवंशाः श्रुता अपि।।
सर्वैः सार्धं च सर्वेषां भक्षणं नियमच्युतम्।
अभक्ष्यभक्षा लोकाश्च चतुर्वर्णाश्च लम्पटाः।।
नारीषु न सती काचित्पुंश्चली च गृहे गृहे।
करोति तर्जनं कान्तं भृत्यतुल्यं च कम्पितम्।।
जाराय दत्त्वा मिष्टान्नं ताम्बूलं वस्त्रचन्दनम्।
न ददात्येव चाऽऽहारं स्वामिने दुःखिने पितः।।

पुत्रेण भर्त्सितस्तातः शिष्येण भर्त्सितो गुरुः।
प्रजाभिस्ताडितो भूपो भूपेन पीडिताः प्रजाः।।
दस्युचोरैश्च दुष्टैश्च शिष्टाश्च परिपीडिताः।
सस्यहीना च वसुधा क्षीरहीनाश्च धेनवः।।
स्वल्पक्षीरे घृतं नास्ति नवनीतं च नित्यशः।
सत्यहीना जनाः सर्वे नित्यं मिथ्या वदन्ति च।।
शौचसंध्याशास्त्रहीना ब्राह्मणा वृषवाहकाः।
सूपकाराश्च शूद्राणां शूद्राणां शवदाहकाः।
शूद्रस्त्रीनिरताः शश्वच्छूद्रा विप्रवधूरताः।।
खादन्ति यस्य विप्रस्य भक्ष्यं च परिपाच( ?चार)काः।
मातुः परां तस्य पत्नीं शूद्रा गृह्णन्ति लम्पटाः।।
भृत्यश्च हत्वा राजानं स्वयं राजा भविष्यति।
नारी हत्वा पतिं कामाद्भजेज्जारं च कौतुकात्।
पुत्रश्च पितरं हत्वा स्वयं भूपो भविष्यति।।
सर्वे स्वच्छन्दनिरताः शिश्नोदरपरायणाः।
वङ्खरा व्याधियुक्ताश्च कुत्सिताश्च कुचैलकाः।।
विक्षुण्णमन्त्रलिप्ताश्च मिथ्यायन्त्रप्रचारकाः।
जातिहीनाश्च गुरवो वयोहीनाश्च निन्दकाः।।
राजानश्चापि म्लेच्छाश्च यवना धर्मनिन्दकाः।
सत्कीर्तिम( ? र्तेर)पि साधूनां कुर्वन्त्युन्मूलनं मुदा।।
पितृदेवद्विजातीनामतिथीनां च नित्यशः।
पूजा नास्ति गुरूणां च पित्रोश्च पूजनं स्त्रियाः।।
स्त्रीबन्धूनां गौरवं च स्त्रीणां च सततं पितः।
चोरः सत्कुलजातिश्च ब्रह्मदेवस्वहारकः।।
मानं वहन्ति लोभेन युगधर्मेण कौतुकात्।
देवायतनहीनं च जगत्सर्वं भयाकुलम्।।
अराजकं च दुर्नीतं संततं कलिदोषतः।
बुभुक्षिताः कुचैलाश्च दरिद्रा व्याधिनो नराः।।
कपर्दकघटाध्यक्षो राजेन्द्रो हि घटेश्वरः।
वृद्धाङ्गुष्ठसमा लोका वृक्षाः शाकसमास्तथा।।
तालानां नारिकेलानां पनसानां तथैव च।
फलानि सर्षपाण्येव तत्क्षुद्रं च ततः परम्।।
जलभाजनपात्रेण सस्येन वाससा तथा।
विहीनं मन्दिरं सर्वं गृहाणामपरिष्कृतम्।
गन्धकेन परिवृतं दीपहीनं तमोयुतम्।।
हिंस्रजन्तुभयाद्भीता जनाः सर्वे च पापिनः।
सर्वे च कलहाविष्टा पुंश्चल्यः कलहप्रियाः।
रूपवत्यो न कामिन्यो नराश्चापि न रूपिणः।।
नद्यो नदाः कन्दराश्च तडागाश्च सरोवराः।
जलपद्मविहीनाश्च जलहीना घनास्तथा।।
अपत्यहीना नार्यश्च कामुक्यो जारसंयुताः।
अश्वत्थच्छेदिनः सर्वे वृक्षहीना वसुंधरा।।
फलहीनाश्च तरवः शाखास्कन्धविहीनकाः।
फलानि स्वादुहीनानि चान्नानि च जलानि च।।
मानवाः कटुवक्तारो निर्दया धर्मवर्जिताः।
तदन्ते द्वादशादित्याः संहरिष्यन्ति मानवान्।।
सर्वाञ्जन्तूंश्च तापेन बहुवृष्ट्या व्रजेश्वर।
अवशिष्टा च पृथिवी कथामात्रावशेषिता।।
कलौ गते च पृथिवी क्षेत्रं वर्षागते तथा।
पुनः सत्यप्रवृत्तिश्च भविष्यति क्रमेण वै।।

कलिवर्ज्यानि

[1]कलौ निषिद्धं त्रियुगे प्रसिद्धं पलपैतृकम्।।
अश्वमेधं गवालम्भं संन्यासं पलपैतृकम्।
देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्।।

विस्तरेण कलियुगीयवृत्तवर्णनम्, अन्ते
सूर्यातपेन जलौघेन च सर्वनाशः,
ततः कृतयुगप्रवृत्तिः

[2]आरात्कलेरागमनं कर्ममूलनिकृन्तनम्।
स्त्रीपुंसोर्नियमो नास्ति जातीनां च तथैव च।
विप्रे संध्यादिकं नास्ति चिह्नं यज्ञोपवीतकम्।।
यज्ञसूत्रं च तिलकं शेषं लुप्तं सुनिश्चितम्।
दिवाव्यवायनिरतं विरतं धर्मकर्मणि।।
यज्ञानां च व्रतानां च तपसां लुप्तमेव च।
केदारकन्याशापेन धर्मो नास्त्येव केवलम्।।
स्वच्छन्दगामिनीस्त्रीणां पतिश्च सततं वशे।
ताडयेत्सततं तं च भर्त्सयेच्च दिवानिशम्।।

(१) ब्रह्मवै. ४।११५।११०, ११२-११३.
(२) ब्रह्मवै. ४।१२८।११-३६.

प्राधान्यं स्त्रीकुटुम्बानां स्त्रीणां च सततं व्रज।
स्वामी च भक्तस्तासां च पराभूतो निरन्तरम्।।
कलौ च योषितः सर्वा जारसेवासु तत्पराः।
शतपुत्रसमः स्नेहस्तासां जारे भविष्यति।।
ददाति तस्मै भक्ष्यं च यथा भृत्याय कोपतः।
सस्मिता सकटाक्षा साऽमृतदृष्ट्या निरन्तरम्।।
जारं पश्यति कामेन विषदृष्ट्या पतिं सदा।
सततं गौरवं तासां स्नेहं च जारबान्धवे।।
पत्यौ करप्रहारं च नित्यं नित्यं करोति च।
मिष्टान्नं श्रद्धया भक्त्या जाराय प्रददाति च।।
वेषयुक्ता च सततं जारसेवनतत्परा।
प्राणा बन्धुर्गतिश्चाऽऽत्मा कलौ जारश्च योषि-
ताम्।।
लुप्ता चातिथिसेवा च प्रलुप्तं विष्णुसेवनम्।
पितॄणामर्चनं चैव देवानां च तथैव च।।
विष्णुवैष्णवयोर्द्वेषी सततं च नरो भवेत्।
वाममन्त्रोपासकाश्च चतुर्वर्णाश्च तत्पराः।।
शालग्रामं च तुलसीं कुशं गङ्गोदकं तथा।
न स्पृशेन्मानवो धूर्तो म्लेच्छाचाररतः सदा।।
कारणं कारणानां च सर्वेषां सर्वबीजकम्।
सुखदं मोक्षदं शश्वद्दातारं सर्वसंपदाम्।।
त्यक्त्वा मां परया भक्त्या क्षुद्रसंपत्प्रदायिनम्।
वेदनिघ्नं वाममन्त्रं जपेद्विप्रश्च मायया।।
सनातनी विष्णुमाया वञ्चितं तं करिष्यति।
ममाऽऽज्ञया भगवती जगतां च दुरत्यया।।
कलेर्दशसहस्राणि मदर्चा भुवि तिष्ठति।
तदर्धानि च वर्षाणि गङ्गा भुवनपावनी।।
तुलसी विष्णुभक्ताश्च यावद्गङ्गा च कीर्तनम्।
पुराणानि च स्वल्पानि तावदेव महीतले।।
मम चोत्कीर्तनं नास्ति एतदन्ते कलौ व्रज।
एकवर्णा भविष्यन्ति किराता बलिनः शठाः।।
पित्रोः सेवा गुरोः सेवा सेवा च देवविप्रयोः।
विवर्जिता नराः सर्वे चातिथीनां तथैव च।।
सस्यहीना भवेत्पृथ्वी साऽनावृष्ट्या निरन्तरम्।
फलहीनोऽपि वृक्षश्च जलहीना सरित्तथा।।
वेदहीनो ब्राह्मणश्च बलहीनश्च भूपतिः।
जातिहीना जनाः सर्वे म्लेच्छो भूपो भविष्यति।।
भृत्यवत्ताडयेत्तातं पुत्रः शिष्यस्तथा गुरुम्।
कान्तं च ताडयेत्कान्ता लुब्धकुक्कुटवद्गृही।।
नश्यन्ति सकला लोकाः कलौ शेषे च पापिनः।
सूर्याणामातपात्केचिज्जलौघेनापि केचन।।
हे वैश्येन्द्र प्रतिकलौ न नश्यति वसुंधरा।
पुनः सृष्टौ भवेत्सत्यं सत्यबीजं निरन्तरम्।।

शिवाद्यर्चनं कलिदोषबाधकम्

[1]ये भजन्ति महात्मानं शिवं चापि जनार्दनम्।
न तेषां तत्कृ(? त्वत्कृ)तो दोषः काश्यां निवसता-
मपि।।

## वराहपुराणम्

युगेषु विष्णोर्वर्णभेदा मूर्तिभेदाश्च, ब्रह्मकृता धर्मसृष्टिः, धर्मस्य त्रेतादिषु पादशो ह्रासः, युगेषु त्रिषु सत्त्वप्राधान्यं कलौ रजस्तमः-प्राधान्यम्

[2]इदानीं युगमाहात्म्यं कथयामि समासतः।
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्।
[3]सितं कृते त्रैतयुगेऽरुणं विभुं
तथा तृतीये नीलसुवर्णमच्युतम्।
कलौ युगेऽलिप्रतिमं महेश्वरं
गदाधरं प्रणमति यः सुखं वसेत्।।
[4]स च नारायणो देवः कृते युगवरे प्रभुः।
त्रेतायां रुद्ररूपस्तु द्वापरे यज्ञमूर्तिमान्।
कलौ नारायणो देवो बहुरूपो व्यजायत।।
[5]पूर्वं ब्रह्माऽव्ययः शुद्धः परादपरसंज्ञितः।
स सिसृक्षुः प्रजास्त्वादौ पालनं च विचिन्तयन्।।

---

(१) स्मृतिकौ. ४६८.
(२) वराह. २।५२-५३.
(३) वराह. ७।३५.
(४) वराह. १०।१५-१६.
(५) वराह. ३२।२-४.

तस्य चिन्तयतस्त्वङ्गाद्दक्षिणाच्छ्वेतकुण्डलः।
प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः।।
तं दृष्ट्वोवाच भगवांश्चतुष्पादं वृषाकृतिम्।
पालयेमाः प्रजाः साधो त्वं ज्येष्ठो जगतो भव।।
[1]इत्युक्तः समवस्थोऽसौ चतुष्पात्स्यात्कृते युगे।
त्रेतायां त्रिपदश्चासौ द्विपदो द्वापरेऽभवत्।
कलावेकेन पादेन प्रजाः पालयते प्रभुः।।
[2]कृतं त्रेतां द्वापरं च युगानि त्रीणि नारद।
सत्त्वस्था मां समेष्यन्ति कलौ रजस्तमोधिकाः।।

### युगस्वभावभेदाः तत्प्रयुक्त-लोकवृत्तानि च

अगस्त्य उवाच –
[3]कृते युगे मही देवैर्युज्यते वेदकर्मणा।
यजद्भिश्च सुरांस्त्रेता तद्वद्देवैश्च सत्तम।।
द्वापरे सत्त्वरजसा बहुले नृपसत्तम।
यावद्धर्मसुतो राजा भविष्यति महामते।।
ततस्तमः प्रभविता कलिरूपो नरेश्वर।
तस्मिन्कलौ वर्तमाने स्वमार्गाच्च्याविता द्विजाः।।
राजानो वैश्यशूद्राश्च प्रायशो हीनजातयः।
भविष्यन्ति नृपश्रेष्ठ सत्यशौचविवर्जिताः।।
ततो विनश्यते लोको वर्णधर्मश्च नश्यति।।
[4]कृते नारायणः शुद्धः सूक्ष्मरूप उपास्यते।
त्रेतायां यज्ञरूपेण पञ्चरात्रैस्तु द्वापरे।।
कलौ मत्कृतमार्गेण बहुरूपेण तामसैः।
इज्यते द्वेषबुद्ध्या स परमात्मा जनार्दनः।।
युगानि त्रीणि बहवो मामुपेष्यन्ति मानवाः।
अन्त्ये युगे प्रविरला भविष्यन्ति मदाश्रयाः।।

(१) वराह. ३२।५-६; चक्र. ११ समवस्थोऽसौ (स समुत्तस्थौ) ष्पात्स्यात् (ष्पादः) त्रिपदश्चासौ द्विपदो (स त्रिभिः पादैर्द्वाभ्यां वै).
(२) वराह. ६६।१६-१७.
(३) वराह. ६८।३-७.
(४) वराह. ७०।२४-२५, ३५.

[1]त्वद्वाक्यवह्निनिर्दग्धाः सदा कलियुगे द्विजाः।
भविष्यन्ति क्रियाहीना वेदकर्मबहिष्कृताः।।
अस्याश्च गौणं नामेह नदी गोदावरीति च।
एतां प्राप्य कलौ ब्रह्मन्गां ददन्ति जनाश्च ये।
यथाशक्त्या तु दानानि मोदन्ते त्रिदशैः सह।।
सिंहस्थे च गुरौ तत्र यो गच्छति समाहितः।
स्नात्वा च विधिना तत्र पितृंस्तर्पयते तथा।।
स्वर्गं गच्छन्ति पितरो निरये पतिता अपि।
स्वर्गस्थाः पितरस्तस्य मुक्तिभाजो न संशयः।।
मयैव मोहितास्ते तु भविष्यज्जानता द्विजाः।
लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः।।
निःश्वाससंहिता या हि लक्षमात्रं प्रमाणतः।
सैव पाशुपती दीक्षा योगः पशुपतेस्तथा।।
ये रुद्रमुपजीवन्ति कलौ वेदान्तिका नराः।
लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः।
उच्छुष्मरुद्रास्ते ज्ञेया नाहं तेषु व्यवस्थितः।।

## कूर्मपुराणम्

### कलौ श्रीकृष्णभक्तिः शरणम्, कृष्णभक्तस्यापि महेश्वरनिन्दया नरकप्राप्तिः, दधीचगौतमशप्तानां संसर्गस्त्याज्यः

[2]इदं कलियुगं घोरं संप्राप्तमधुनाऽशुभम्।
भविष्यन्ति जनाः सर्वे ह्यस्मिन्पापानुवर्तिनः।।
प्रवर्तयध्वं विज्ञानमज्ञानां च हितावहम्।
येनेमे कलिजैः पापैर्मुच्यन्ते हि द्विजोत्तमाः।।
ये *मां जनाः संस्मरन्ति कलौ सकृदपि प्रभुम्।
तेषां नश्यति तत्पापं भक्तानां पुरुषोत्तमे।।
येऽर्चयिष्यन्ति मां भक्त्या नित्यं कलियुगे द्विजाः।
विधिना वेददृष्टेन ते गमिष्यन्ति तत्पदम्।।

*श्रीकृष्णस्य वक्तृत्वात्सर्वे सप्तविंशाध्यायस्था अस्मच्छब्द-प्रयोगाः श्रीकृष्णपराः।
(१) वराह. ७१।४४-४८, ५५-५६, ५८-५९.
(२) कूर्म. १।२७।८-१८.

ये ब्राह्मणा वंशजाता युष्माकं वै सहस्रशः।
तेषां नारायणे भक्तिर्भविष्यति कलौ युगे।।
परात्परतरं यान्ति नारायणपरा जनाः।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम्।।
ध्यानं योगस्तपस्तप्तं ज्ञानं यज्ञादिको विधिः।
तेषां विनश्यति क्षिप्रं ये निन्दन्ति महेश्वरम्।।
यो मां समर्चयेन्नित्यमेकान्तं भावमाश्रितः।
विनिन्दन्देवमीशानं स याति नरकायुतम्।।
तस्मात्संपरिहर्तव्या निन्दा पशुपतेर्द्विजाः।
कर्मणा मनसा वाचा मद्भक्तेष्वपि यत्नतः।।
ये च दक्षाध्वरे शप्ता दधीचेन द्विजोत्तमाः।
भविष्यन्ति कलौ भक्तैः परिहार्याः प्रयत्नतः।।
द्विषन्तो देवमीशानं युष्माकं वंशसंभवाः।
शप्ताश्च गौतमेनोर्व्यां न संभाष्या द्विजोत्तमैः।।

कलियुगे वाराणसीनिवासः पापनाशकः, कृतादियुगत्रये नराः सत्यवादिनो धार्मिकाश्च

व्यास उवाच –

[1]इदं कलियुगं घोरं संप्राप्तं पाण्डुनन्दन।
ततो गच्छामि देवस्य पुरीं वाराणसीं शुभाम्।।
[2]अस्मिन् कलियुगे घोरे लोकाः पापानुवर्तिनः।
भविष्यन्ति महाबाहो वर्णाश्रमविवर्जिताः।।
[3]नान्यत्पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम्।
सर्वपापोपशमनं प्रायश्चित्तं कलौ युगे।।
[4]कृतं त्रेता द्वापरं च सर्वेष्वेतेषु वै नराः।
भविष्यन्ति महात्मानो धार्मिकाः सत्यवादिनः।।
त्वं हि लोकेषु विख्यातो धृतिमाञ्जनवत्सलः।
पालयाद्य परं धर्मं स्वकीयं मुच्यसे भयात्।।

एवमुक्तो भगवता पार्थः परपुरंजयः।
पृष्टवान्प्रणिपत्यासौ युगधर्मान्द्विजोत्तमाः।।
तस्मै प्रोवाच सकलं मुनिः सत्यवतीसुतः।
प्रणम्य देवमीशानं युगधर्मान्सनातनान्।।

युगेषु क्रमेण प्रधानभूता धर्मा देवाश्च, कृतादिषु क्रमेण धर्मस्य साकल्यं पादशो ह्रासश्च

व्यास उवाच –

वक्ष्यामि ते समासेन युगधर्मान्नरेश्वर।
न शक्यते मया राजन्विस्तरेणाभिभाषितुम्।।
आद्यं कृतयुगं प्रोक्तं ततस्त्रेतायुगं बुधैः।
तृतीयं द्वापरं पार्थ चतुर्थं कलिरुच्यते।।
ध्यानं तपः कृतयुगे त्रेतायां ज्ञानमुच्यते।
द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे।।
ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः।
द्वापरे दैवतं विष्णुः कलौ देवो महेश्वरः।।
ब्रह्मा विष्णुस्तथा सूर्यः सर्व एव कलावपि।
पूज्यन्ते भगवान्रुद्रश्चतुर्ष्वपि पिनाकधृक्।।
आद्ये कृतयुगे धर्मश्चतुष्पादः प्रकीर्तितः।
त्रेतायुगे त्रिपादः स्याद्द्विपादो द्वापरे स्थितः।।
त्रिपादहीनस्तिष्ठेत्तु(? स्तिष्ये तु) सत्तामात्रेण तिष्ठति।

कृते मिथुनोत्पत्तिः प्रजानामुत्तमाधमत्वाभाव आयुषस्तुल्यत्वमन्यानि च कृतयुगीयप्रजावृत्तानि

कृते तु मिथुनोत्पत्तिर्वृत्तिः साक्षादलोलुपा।।
प्रजास्तृप्ताः सदा सर्वाः सर्वानन्दाश्च भोगिनः।
अधमोत्तमत्वं नास्त्यासां निर्विशेषाः पुरंजय।।
तुल्यमायुः सुखं रूपं तासु तस्मिन् कृते युगे।
विशोकाः सत्त्वबहुला एकान्तबहुलास्तथा।
ध्याननिष्ठास्तपोनिष्ठा महादेवपरायणाः।।
ता वै निष्कामचारिण्यो नित्यं मुदितमानसाः।
पर्वतोदधिवासिन्यो ह्यनिकेताः परंतप।।

(१) कूर्म. १।२९।१.
(२) कूर्म. १।२९।२; बाल. ३।३१२.
(३) कूर्म. १।२९।३; बाल. ३।३१२ पापोप (पापप्र).
(४) कूर्म. १।२९।४-५१.

त्रेतायां प्रजानां पर्यायेण गुणदोषकृतौ कुशलोत्कर्षापकर्षौ, मर्यादास्थापनार्थं ब्रह्मकृता क्षत्रियसृष्टिः वर्णाश्रमव्यवस्था यज्ञप्रवृत्तिश्च

**रसोल्लासः कालयोगात्त्रेताख्ये नश्यति द्विजाः।**
**तस्यां सिद्धौ प्रनष्टायामन्या सिद्धिरवर्तत।।**
**अपां सौख्ये प्रतिहते तदा मेघात्मना तु वै।**
**मेघेभ्यः स्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्जनम्।।**
**सकृदेव तथा वृष्ट्या संयुक्ते पृथिवीतले।**
**प्रादुरासंस्तथा तासां वृक्षा वै गृहसंज्ञिताः।।**
**सर्वः प्रत्युपयोगस्तु तासां तेभ्यः प्रजायते।**
**वर्तयन्ति स्म तेभ्यस्तास्त्रेतायुगमुखे प्रजाः।।**
**ततः कालेन महता तासामेव विपर्ययात्।**
**रागलोभात्मको भावस्तदा ह्याकस्मिकोऽभवत्।।**
**विपर्ययेण तासां तु तेन तत्कालभाविताः।**
**प्रणश्यन्ति ततः सर्वे वृक्षास्ते गृहसंज्ञिताः।।**
**ततस्तेषु प्रनष्टेषु विभ्रान्ता मैथुनोद्भवाः।**
**अभिध्यायन्ति तां सिद्धिं सत्याभिध्यानतस्तदा।।**
**प्रादुर्बभूवुस्तासां तु वृक्षास्ते गृहसंज्ञिताः।**
**वस्त्राणि ते प्रसूयन्ते फलान्याभरणानि च।।**
**तेष्वेव जायते तासां गन्धवर्णरसान्वितम्।**
**अमाक्षिकं महावीर्यं पुटके पुटके मधु।।**
**तेन ताः क( ? व)र्तयन्ति स्म त्रेतायुगमुखे प्रजाः।**
**हृष्टास्तुष्टास्तया सिद्ध्या सर्वा वै विगतज्वराः।।**
**पुनः कालान्तरेणैव ततो लोभावृतास्तदा।**
**वृक्षांस्तान् पर्यगृह्णन्त मधु वा माक्षिकं बलात्।।**
**तासां तेनापचारेण पुनर्लोभकृतेन वै।**
**प्रनष्टा मधुना सार्धं कल्पवृक्षाः क्वचित् क्वचित्।।**
**शीतवर्षातपैस्तीव्रैस्तास्ततो दुःखिता भृशम्।**
**द्वन्द्वैः संपीड्यमानास्तु चक्रुरावरणानि च।।**
**कृत्वा द्वन्द्वविनिर्घातान् वार्तोपायमचिन्तयन्।**
**नष्टेषु मधुना सार्धं कल्पवृक्षेषु वै तदा।।**
**ततः प्रादुरभूत्तासां सिद्धिस्त्रेतायुगे पुनः।**
**वार्तायाः साधिका ह्यन्या वृष्टिस्तासां निकामतः।।**
**तासां वृष्ट्युदकानीह यानि निम्नैर्गतानि तु।**
**अभवन् वृष्टिसंतत्या स्रोतःस्थानानि निम्नगाः।।**
**यदा आपो बहुतरा आपन्नाः पृथिवीतले।**
**अपां भूमेश्च संयोगादौषध्यस्तास्तदाऽभवन्।।**
**अफालकृष्टाश्चानुप्ता ग्राम्यारण्याश्चतुर्दश।**
**ऋतुपुष्पफलैश्चैव वृक्षगुल्माश्च जज्ञिरे।।**
**ततः प्रादुरभूत्तासां रागो लोभश्च सर्वशः।**
**अवश्यंभावितार्थेन त्रेतायुगवशेन वै।।**
**ततस्ताः पर्यगृह्णन्त नदीक्षेत्राणि पर्वतान्।**
**वृक्षगुल्मौषधीश्चैव प्रसह्य तु यथाबलम्।।**
**विपर्ययेण तासां ता ओषध्यो विविशुर्महीम्।**
**पितामहनियोगेन दुदोह पृथिवीं पृथुः।।**
**ततस्ता जगृहुः सर्वा ह्यन्योन्यं क्रोधमूर्च्छिताः।**
**सदाचारे विनष्टे तु बलात्कालबलेन च।।**
**मर्यादायाः प्रतिष्ठार्थं ज्ञात्वैतद्भगवानजः।**
**ससर्ज क्षत्रियान्ब्रह्मा ब्राह्मणानां हिताय वै।।**
**वर्णाश्रमव्यवस्थां च त्रेतायां कृतवान्प्रभुः।**
**यज्ञप्रवर्तनं चैव पशुहिंसाविवर्जितम्।।**

द्वापरे मतिभेदरागलोभाद्युत्पत्तिः, व्यासकृतं वेदविभाजनं परमर्षिकृतं संहितादिप्रवचनं च, निर्वेदादिक्रमेण ज्ञानोत्पत्तिः, कृतादिषु क्रमेण धर्मोऽस्ति प्रवर्तते व्याकुलीभवति नश्यति च

**द्वापरेऽप्यथ विद्यन्ते मतिभेदात्तथा नृणाम्।**
**रागो लोभस्तथा युद्धं मत्वा बुद्धिविनिश्चयम्।।**
**एको वेदश्चतुष्पादस्त्रिधा त्विह विभाव्यते।**
**वेदव्यासैश्चतुर्धा च व्यस्यते द्वापरादिषु।।**
**ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः।**
**मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः।।**
**संहिता ऋग्यजुःसाम्नां प्रोच्यन्ते परमर्षिभिः।**
**सामान्योद्भावना चैव दृष्टिभेदैः क्वचित् क्वचित्।।**
**ब्राह्मणं कल्पसूत्राणि ब्रह्मप्रवचनानि च।**
**इतिहासपुराणानि धर्मशास्त्राणि सुव्रत।।**

अवृष्टिर्मरणं चैव तथैवान्ये ह्युपद्रवाः।
वाङ्मनःकायजैर्दोषैर्निर्वेदो जायते नृणाम्।।
निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा।
विचारणाच्च वैराग्यं वैराग्याद्दोषदर्शनम्।।
दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसंभवः।
एषा रजस्तमोयुक्ता वृत्तिर्वै द्वापरे द्विजाः।।
आद्ये कृते तु धर्मोऽस्ति स त्रेतायां प्रवर्तते।
द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे।।

विस्तरेण कलियुगीयलोकवृत्तवर्णनम्,
कलौ शिवोपासनया
सर्वकामसिद्धिः

व्यास उवाच –

[१]तिष्ये मायामसूयां च वधं चैव तपस्विनाम्।
साधयन्ति नरा नित्यं तमसा व्याकुलीकृताः।।
कलौ प्रमारको रोगः सततं क्षुद्भयं तथा।
अनावृष्टिभयं घोरं देशानां च विपर्ययः।।
[२]अधार्मिका निराहारा महाकोपाल्पतेजसः।
अनृतं ब्रुवते लुब्धास्तिष्ये जाताः सुदुष्प्रजाः।।
मिथोजाताः संकरजाता इत्यर्थः।

स्मृकौ. ४२

[३]दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः।
विप्राणां कर्मदोषैश्च प्रजानां जायते भयम्।।
[४]नाधीयते तदा वेदान् न यजन्ति द्विजातयः।
यजन्ति यज्ञान्वेदांश्च पठन्ते चाल्पबुद्धयः।।
शूद्राणां मन्त्रयोगैश्च संबन्धो ब्राह्मणैः सह।
भविष्यति कलौ तस्मिञ्छयनासनभोजनैः।।

[१]राजानः शूद्रभूयिष्ठा ब्राह्मणान्बाधयन्ति च।
भ्रूणहत्या वीरहत्या प्रजायेत नरेश्वरे।।
[२]स्नानं होमं जपं दानं देवतानां तथाऽर्चनम्।
तथाऽन्यानि च कर्माणि न कुर्वन्ति द्विजातयः।।
[३]विनिन्दन्ति महादेवं ब्राह्मणान् पुरुषोत्तमम्।
आम्नायधर्मशास्त्राणि पुराणानि कलौ युगे।।
[४]कुर्वन्त्यवेददृष्टानि कर्माणि विविधानि तु।
स्वधर्मे तु रुचिर्नैव ब्राह्मणानां प्रजायते।।
कुशीलचर्याः पाषण्डैर्वृथारूपैः समावृताः।
बहुयाचनका लोका भविष्यन्ति परस्परम्।।
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।
प्रमदाः केशशूलाश्च भविष्यन्ति कलौ युगे।।
[५]शुक्लदन्ता जिनाख्याश्च मुण्डाः काषायवाससः।
शूद्रा धर्मं चरिष्यन्ति युगान्ते समुपस्थिते।।
[६]शस्यचौरा भविष्यन्ति तथा चेलाभिमर्शिनः।
चौराच्चौराश्च हर्तारो हर्तुर्हन्ता तथाऽपरः।।
दुःखप्रचुरमल्पायुर्देहोत्सादः सरोगता।
अधर्माभिनिवेशत्वात्तमो वृत्तं कलौ स्मृतम्।।
काषायिणोऽथ निर्ग्रन्थास्तथा कापालिकाश्च ये।
वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे।।
[७]आसनस्थान्द्विजान्दृष्ट्वा चालयन्त्यल्पबुद्धयः।
ताडयन्ति द्विजेन्द्रांश्च शूद्रा राजोपजीविनः।।

---

(१) **कूर्म.** १।३०।१-२.

(२) **कूर्म.** १।३०।३; **स्मृकौ.** ४२ (अधार्मिका अनाचारा महाकोपाल्पचेतसः। वदन्ति चानृतं लुब्धा मिथोजाताः सुदुःप्रजाः।।); **शूशि.** ५२ स्मृकौवत्.

(३) **कूर्म.** १।३०।४; **स्मृकौ.** ४२ भयम् (लयः); **शूशि.** ५२ स्मृकौवत्.

(४) **कूर्म.** १।३०।५-६.

(१) **कूर्म.** १।३०।७; **स्मृकौ.** ४२ पू.; **शूशि.** ५२ बाध (धाव) च (ते) पू.; **मुक्ता.** १२ बाध (घात) येत नरेश्वरे (येते प्रजासु वै); **आन.** १९ मुक्तावत्.

(२) **कूर्म.** १।३०।८.

(३) **कूर्म.** १।३०।९; **मुक्ता.** १२ ब्राह्मणान् (ब्रह्माणं) यध (यं ध): ३१० णान् (णं) यध (यं ध); **आन.** १९; **मुक्ता.** १२ वत्.

(४) **कूर्म.** १।३०।१०-१२.

(५) **कूर्म.** १।३०।१३; **स्मृकौ.** ४२ नाख्याश्च (ताक्षाश्च) चरि (करि); **शूशि.** ५२-५३ स्मृकौवत्; **मुक्ता.** १२ जिनाख्याश्च (धृताक्षाश्च); **शूक.** ६४; **आन.** १९.

(६) **कूर्म.** १।३०।१४-१६.

(७) **कूर्म.** १।३०।१७; **स्मृकौ.** ४२ स्थान्द्वि(स्था द्वि) चालय (न चल); **शूशि.** ५३ चालय (न चल); **मुक्ता.** १२ जीवि (सेवि) उत्त.; **शूक.** ६४ उत्त.; **आन.** १९ मुक्तावत्, उत्त.

**[1]उच्चासनस्थाः शूद्राश्च द्विजमध्ये परंतप।**
**द्विजामानकरो राजा कलौ कालबलेन तु।।**
**[2]पुष्पैश्च भूषणैश्चैव तथाऽन्यैर्मङ्गलैर्द्विजाः।**
**शूद्रान्परिचरन्त्यल्पश्रुतभाग्यबलान्विताः।।**
**[3]न प्रेक्षन्तेऽर्चिताश्चापि शूद्रा द्विजवरान्नृप।**
**सेवावसरमालोक्य द्वारि तिष्ठन्ति च द्विजाः।।**
**[4]वाहनस्थान्समावृत्य शूद्राञ्छूद्रोपजीविनः।**
**सेवन्ते ब्राह्मणास्तांस्तु स्तुवन्ति स्तुतिभिः कलौ।।**
**[5]अध्यापयन्ति वै वेदाञ्छूद्राञ्छूद्रोपजीविनः।**
**पठन्ति वैदिकान्मन्त्रान्नास्तिक्यं घोरमाश्रिताः।।**
मार्गमिति शेषः। आन. १९
**[6]तपोयज्ञफलानां तु विक्रेतारो द्विजोत्तमाः।**
**यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः।।**
**[7]नाशयन्तः स्वकान्धर्मानधिगच्छन्ति तत्पदम्।**
**गायन्ति लौकिकैर्गानैर्दैवतानि नराधिप।।**

(१) **कूर्म.** १।३०।१८; **स्मृकौ.** ४२ स्थाः शूद्राश्च (स्थाञ् शूद्रांस्तु) द्विजामानकरो (ज्ञात्वा सहिष्यते); **शूशि.** ५३ कलौ का (कलिका) शेषं स्मृकौवत्; **शूक.** ६४ स्थाः शूद्राश्च (स्थाञ्छूद्रांश्च) पू.

(२) **कूर्म.** १।३०।१९; **स्मृकौ.** ४२ मङ्गलै (र्मण्डनै) न्परिचर (नभ्यर्चय); **शूशि.** ५३ स्मृकौवत्; **शूक.** ६४ स्मृकौवत्.

(३) **कूर्म.** १।३०।२० ताश्चापि (तांश्चापि) द्रा द्वि (द्रान्द्वि) द्वारि (द्वारे); **स्मृकौ.** ४२; **शूशि.** ५३; **मुक्ता.** १२ च (वै) उत्त.; **शूक.** ६४ न्तेऽर्चिताश्चा (न्तोऽर्चनस्या); **आन.** १९ उत्त.

(४) **कूर्म.** १।३०।२१; **स्मृकौ.** ४२-४३; **शूशि.** ५३ पू.; **मुक्ता.** १२ जीवि (सेवि) स्तांस्तु (स्तत्र); **आन.** १९ मुक्तावत्.

(५) **कूर्म.** १।३०।२२ तृतीयचरणे (एवं निर्वेदकानर्थान्); **स्मृकौ.** ४३; **शूशि.** ५३ उत्त.; **मुक्ता.** १२ द्वितीयचरणे (शूद्राणां शूद्रसेवकाः) मन्त्रान्नास्तिक्यं (शब्दान्नास्तिका); **आन.** १९ जीविनः (सेवकाः) न्मन्त्रान्नास्तिक्यं (नर्थान्नास्तिका); **बाल.** १।९५ शूद्रोपजीविनः (न्धर्मार्थकोविदान्) पू.

(६) **कूर्म.** १।३०।२३; फला (कला); **मुक्ता.** १२ तु (च); **आन.** १९ मुक्तावत्.

(७) **कूर्म.** १।३०।२४; **मुक्ता.** १२ पूर्वार्धे (नाशयन्ति ह्यधीतानि नाधिगच्छन्ति चानघ।); **आन.** १९ पूर्वार्धे (नाशन्त्यभ्यधीतानि नाधिगच्छन्ति चानघ) पू.

ब्रह्मेति शेषः। आश्रमस्वीकारो(?) वेदोज्झाश्च भवन्तीत्यर्थः। आन. १९
**[1]वामाः पाशुपताचारास्तथा वै पाञ्चरात्रिकाः।**
**भविष्यन्ति कलौ तस्मिन्ब्राह्मणाः क्षत्रियास्तथा।।**
पाञ्चरात्रिकाः वेदविरुद्धपञ्चरात्रव्यवहारिणः।
वीमि. १।३
**[2]ज्ञाने कर्मण्यपगते लोके निष्क्रियतां गते।**
**कीटमूषिकसर्पाश्च धर्षयिष्यन्ति मानुषान्।।**
**[3]कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै।**
**देवीशापविनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः।।**
**[4]निन्दन्ति च महादेवं तमसाऽऽविष्टचेतसः।**
**वृथा धर्मं चरिष्यन्ति कलौ तस्मिन्युगान्तिके।।**
**[5]सर्वे वीरा भविष्यन्ति ब्राह्मणाद्याः स्वजातिषु।**
**ये चान्ये शापनिर्दग्धा गौतमस्य महात्मनः।।**
**[6]सर्वे तेऽवतरिष्यन्ति ब्राह्मणाद्यासु योनिषु।**
**विनिन्दन्ति हृषीकेशं ब्राह्मणा ब्रह्मवादिनः।।**
इत्यादिवचनैः कलौ धर्मशास्त्रस्य प्रवृत्तिरेव नास्तीति चेत्, 'तदा प्रविरलो धर्मः क्वचिल्लोकेऽपि वत्स्यति।' इति पराशरस्मरणात् एतादृशे कलावपि धर्मोऽपि प्रविरलः अतिस्वल्पः पादत्रयहीनत्वात् क्वचिन्महात्मसु वत्स्यति। अतः तानुद्दिश्यैव धर्मशास्त्रस्य प्रवृत्तिः, नेतरानिति मन्तव्यम्।
आन. २०
**[7]वेदबाह्यव्रताचारा दुराचारा वृथाश्रमाः।**
**मोहयन्ति जनान् सर्वान्दर्शयित्वा फलानि च।।**

(१) **कूर्म.** १।३०।२५; **मुक्ता.** १२; **वीमि.** १।३ पृ. ११ वामाः पा (वामपा) **आन.** १९; **सस्मृ.** २१.

(२) **कूर्म.** १।३०।२६.

(३) **कूर्म.** १।३०।२७; **मुक्ता.** १२ देवीशापवि (दधीचिशाप) : ३१० देवीशापवि (दधीचशाप); **आन.** १९-२० **मुक्ता.** १२ वत्.

(४) **कूर्म.** १।३०।२८; **मुक्ता.** १२; ३१० पू.; **आन.** २० निन्दन्ति च (विनिन्दन्ति) पू.

(५) **कूर्म.** १।३०।२९; **मुक्ता.** १२, ३१० उत्त.; **आन.** २० उत्त.

(६) **कूर्म.** १।३०।३०; द्यासु (स्तासु); **मुक्ता.** १२, ३१०; **आन.** २० वतरि (पि भवि).

(७) **कूर्म.** १।३०।३१-४३.

तमसाविष्टमनसो बैडालव्रतिकाधमाः।
कलौ रुद्रो महादेवो लोकानामीश्वरः परः।
तदेव साधयेन्नृणां देवतानां च दैवतम्।।
करिष्यत्यवताराणि शंकरो नीललोहितः।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया।।
उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम्।
सर्ववेदान्तसारं हि धर्मान्वेदनिदर्शितान्।
सर्ववर्णान् समुद्दिश्य स्वधर्मा ये निदर्शिताः।।
ये तं प्रीता निषेवन्ते येन केनोपचारतः।
विजित्य कलिजान्दोषान्यान्ति ते परमं पदम्।।
अनायासेन सुमहत्पुण्यमाप्नोति मानवः।
अनेकदोषदुष्टस्य कलेरेको महान् गुणः।।
तस्मात्सर्वप्रयत्नेन प्राप्य माहेश्वरं युगम्।
विशेषाद्ब्राह्मणो रुद्रमीशानं शरणं व्रजेत्।।
ये नमन्ति विरूपाक्षमीशानं कृत्तिवाससम्।
प्रसन्नचेतसो रुद्रं ते यान्ति परमं पदम्।।
यथा रुद्रनमस्कारः सर्वकामफलो ध्रुवः।
अन्यदेवनमस्कारान्न तत्फलमवाप्नुयात्।।
एवंविधे कलियुगे दोषाणामेव शोधनम्।
महादेवनमस्कारो ध्यानं दानमिति श्रुतिः।।
तस्मादनीश्वरानन्यांस्त्यक्त्वा देवं महेश्वरम्।
समाश्रयेद्विरूपाक्षं यदीच्छेत्परमं पदम्।।
नार्चयन्तीह ये रुद्रं शिवं त्रिदशवन्दितम्।
तेषां दानं तपो यज्ञो वृथा जीवितमेव च।।

युगभेदेन तीर्थभेदप्राधान्यम्,
कलियुगवृत्तवर्णनम्

[1]कृते तु नैमिषं तीर्थं त्रेतायां पुष्करं वरम्।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते।।
[2]गङ्गामेव निषेवन्ते प्रयागे तु विशेषतः।
नान्यत्कलियुगे रौद्रे भेषजं नृप विद्यते।।
अकामो वा सकामो वा गङ्गायां यो विपद्यते।
स मृतो जायते स्वर्गे नरकं च न पश्यति।।

(१) कूर्म. १।३७।३७; कूभ. १३१६ नैमिषं तीर्थं (सर्वतीर्थानि) वरम् (परम्).
(२) कूर्म. १।३७।३८-३९.

[1]वर्याश्रममासाद्य मुच्यते कलिकल्मषात्।।
[2]यत्रोमाया न(? व)रो वक्ता संवादो नारदस्य तु।
तत्र बौद्धं च जैनं च शाक्तं शैवं च वैष्णवम्।।
योगज्ञानमतं भ्रान्तं विरुद्धं वेदशास्त्रतः।
वर्तिष्यन्ते कलौ ब्रह्मन् तन्मतेन द्विजातयः।।
स्त्रियः शुश्रूषणं पत्युर्विप्राणां शूद्रजातयः।
पित्रोः पुत्राः परित्यज्य जपहोमादि साधनम्।।
कुर्वते काम्यकर्माणि दृष्टार्थानि पतन्त्यधः।
लौकिकैर्नामभिर्गीतैर्देवताराधनं तु यत्।।
शूद्रादीनामयं धर्मो न द्विजानां कदाचन।
शूद्राणां कृतकैर्गीतैर्देवताग्रे कलौ युगे।।
नृत्यं कुर्वन्ति विप्राद्या अवज्ञाय श्रुतीरितम्।
गायन्ति विधवा गीतं श्रोतॄणामपि पापदाः।।

## भविष्यपुराणम्

द्वापरयुगीय आर्यदेशभूमिकीर्तिकालो म्लेच्छदेश-
भूमिकीर्तिकालश्च, कलियुगे म्लेच्छवंश-
विवर्धनकालः मूशाख्यम्लेच्छमत-
प्रसारः आर्याचारनाशश्च

सूत उवाच —

[3]षोडशाब्दसहस्रं च शेषे तद्द्वापरे युगे।
बहुकीर्तिमती भूमिरार्यदेशस्य कीर्तिता।।
क्वचिद्विप्राः स्मृता भूपाः क्वचिद्राजन्यवंशजाः।
क्वचिद्वैश्याः क्वचिच्छूद्राः कुत्रचिद्वर्णसंकरः।।
द्विशताष्टसहस्रेऽब्दे शेषे तु द्वापरे युगे।
म्लेच्छदेशस्य या भूमिर्भविता कीर्तिमालिनी।।
[4]द्विसहस्रे कलौ प्राप्ते म्लेच्छवंशविवर्धिता।
भूमिर्म्लेच्छमयी सर्वा नानापन्थविवर्धिता।
ब्रह्मावर्तमृते तत्र सरस्वत्यास्तटं शुभम्।।
म्लेच्छाचार्यश्च मूशाख्यस्तन्मतैः पूरितं जगत्।
देवार्चनं वेदभाषा नष्टा प्राप्ते कलौ युगे।।

(१) कूर्म. २।३७।५० कलिकल्म (सर्वकिल्बि); पमा. १।६३ मुच्यते (मुच्येत).
(२) शूक. ६५ स्कान्दकौर्मयोः.
(३) भविष्य. ३।१।४।२६-२९.
(४) भविष्य. ३।१।५।२९-३१, ३८-४०.

या पवित्रा सप्तपुरी *तासु हिंसा प्रवर्तते।
दस्यवः शबरा भिल्ला मूर्खा आर्ये स्थिता नराः।।
म्लेच्छदेशे बुद्धिमन्तो नरा वै म्लेच्छधर्मिणः।
म्लेच्छाधीना गुणाः सर्वेऽवगुणा आर्यदेशके।।
म्लेच्छराज्यं भारते च तद्द्वीपेषु स्मृतं तथा।।

कलियुगागमनलिङ्गानि, कलौ हरिः शरणम्

[1]हरिदासं स पप्रच्छ कलेरागमनं कदा।
इत्युक्तः स तु तं प्राह न्यूहश्च भविताऽधिकम्।।
यदा राज्यं कृतं तेन कलेरागमनं तदा।।
ब्रह्मणोऽस्य मुखाज्जातमोङ्कारं सत्यपूजितम्।
द्वितीयास्याच्च विविधा भाषा लोकविमोहिनी।
जाता कलेर्हितार्थाय यमलोकहितैषिणी।।
यदा धर्मं च वेदोक्तं विपरीतं हि दृश्यते।
कलिराज्यं तदा ज्ञेयं म्लेच्छा यस्य प्रियाः स्मृताः।।
कलिनाऽधर्ममित्रेण सर्वे देवा निराकृताः।
पापस्यैव मृषा भार्या दुःखं तत्तनयं स्मृतम्।।
दुर्गतिस्तस्य चार्धाङ्गी गेहे गेहे तदा भवेत्।
क्रोधवश्या नृपाः सर्वे ब्राह्मणाः कामकिंकराः।।
लोभवश्यास्तु धनिनो महत्त्वं शूद्रका गताः।
नार्यो लज्जाविहीनाश्च किंकराः स्वामिघातकाः।।
निष्फला तु मही जाता कलौ प्राप्ते हि दृश्यते।
ये हरेः शरणं प्राप्तास्ते सर्वे मुदिताः कलौ।।

कृतयुगे पशुहिंसारहितो यज्ञः

[2]पुरा सत्ययुगे भ्रातर्ब्राह्मणा यज्ञतत्पराः।
अजेनैव हि यष्टव्यमिति ज्ञात्वा परं श्रुतिः।।
तिलाधि( ? दि)कमजं मत्वा हव्ये ते तु मनो दधुः।
तदा शक्रादयो देवा वह्निमध्ये समागताः।।
ऊचुस्ते मधुरं वाक्यं त्वन्मतं निष्फलप्रदम्।
अजश्छागः स्मृतो वेदैस्तेन यष्टव्यमन्तरम्।।
श्रुत्वेति वचनं तेषां विस्मिता मुनयोऽभवन्।
एतस्मिन्नन्तरे तत्र पितृयोनिरमावसुः।।
विमानं परमारुह्य मुनीन्प्रोवाच निर्भयः।
छागमेधेन यष्टव्यं सुराणां तृप्तिहेतवे।।
इति श्रुत्वा वचस्तस्य तथा कृत्वा शिवं ययुः।
तस्मात्त्वं च मया सार्धं यज्ञं कुरु महामते।।
इति श्रुत्वा वचो घोरं लीलाधर उदारधीः।
मोहनं प्राह धर्मात्मा यज्ञस्त्रेतायुगेऽभवत्।।
रजोगुणमयो लोकस्त्रेतायां संबभूव ह।
हिंसा सत्ययुगे नाऽऽसीद्धर्मस्तत्र चतुष्पदः।
हव्येन तर्पिता देवा न मांसै रक्तसंभवैः।।
इति श्रुत्वा क्षत्रसिंहस्त्यक्त्वा छागं भयातुरम्।
फलाद्यैः कारयामास तदा पूर्णाहुतीर्नृप।।

कृतादिषु विष्णुरूपाणि

[1]कृते त्रेतायुगे विष्णुर्द्वापरेऽनेकरूपधृक्।
कलौ प्रत्यक्षफलदः सत्यनारायणो विभुः।।

पितृशर्मकृता कलियुगे गार्हस्थ्यस्य प्रशंसा

सूत उवाच –
[2]आसीत्पुरा कलियुगे पितृशर्मा द्विजोत्तमः।
वेदवेदाङ्गतत्त्वज्ञो यमलोकभयान्वितः।।
ज्ञात्वा घोरतमं कालं कलिकालमधर्मजम्।
बन्धनं यमराष्ट्रस्य तदा चिन्तातुरोऽभवत्।।
केनाऽऽश्रमेण वर्णेन मम श्रेयो भवेदिह।
कलौ संन्यासमार्गो हि दम्भपाखण्डखण्डितः।।
वानप्रस्थः कलौ नास्ति ब्रह्मचर्यं क्वचित्क्वचित्।
गार्हस्थ्यं कर्म सर्वेषां कर्मणां श्रेष्ठमुच्यते।।
अतः स्त्रीसंग्रहो ग्राह्यो मया घोरे कलौ युगे।
यदि मे च भवेन्नारी मनोवृत्त्यनुसारिणी।
तर्हि मे सफलं जन्म मम श्रेयो भवेदिह।।

---

* 'सप्तपुरी' इति द्विगौ अप्रधानानामपि पुराणां तच्छब्देन परामर्श आर्षः। 'याः पवित्राः सप्तपुर्यः' इति गुरुणः पाठकल्पनात् लघुकल्पनमिदं वरम्।

(१) **भविष्य.** ३।२।५।१०-१७.
(२) **भविष्य.** ३।२।२२।११-२०.

(१) **भविष्य.** ३।२।२४।१७.
(२) **भविष्य.** ३।२।३०।४-९, ३०-३२.

**यो गृहस्थे वसन्विप्रः पितृदेवातिथिप्रियः।**
**गामी पाणिगृहीतायामृतुकाले यतेन्द्रियः।**
**ब्रह्मचारी हि मुख्यः स श्रुत्वा राजाऽब्रवीदिदम्।।**
**स्वामिन्यद्भवता चोक्तं धर्मज्ञेन यशस्विना।**
**कलौ भयंकरे प्राप्ते स धर्मो हि मतो मम।।**

युगभेदेन पूजाप्रकारभेदाः
पूज्यभेदाश्च

[१]**सत्ये तु मानसी पूजा देवानां तृप्तिहेतवे।**
**त्रेतायां वह्निपूजा च यज्ञदानादिका क्रिया।।**
**द्वापरे मूर्तिपूजा च देवानां वै प्रियंकरी।**
**कलौ तु दारुणे प्राप्ते ब्रह्मपूजनमुत्तमम्।।**
**अहं हंसः सत्ययुगे त्रेतायां यज्ञपुरुषः।**
**हिरण्यगर्भश्च प्रिये द्वापरेऽहं सुखप्रदः।।**
**शालग्रामः कलौ प्राप्ते देवानां तृप्तये ह्यहम्।**
**मुनयो देवताः सर्वे तथा पितृगणाः प्रिये।**
**सर्वे ते तृप्तिमायान्ति शालग्रामस्य पूजनात्।।**
**द्विजातिभिस्त्रिवर्णैश्च पूजनं चन्दनादिकैः।**
**शूद्रैश्च स्नानमात्रेण भक्तिभावेन पूजनम्।**
**म्लेच्छैश्च दर्शनं पुण्यं विनयाद्भक्तिभावतः।।**
**शालग्रामः स्वयं ब्रह्म सच्चिदानन्दविग्रहम्।**
**तस्य दर्शनमात्रेण क्षयं यास्यन्ति वै मलाः।।**

विश्वरूपस्य विष्णोर्युगक्रमेण बाल्ययौवन-
वार्धकमरणरूपा अवस्थाभेदाः
रूपभेदाश्च, प्रतियुगभिन्नं
मानवायुर्मानम्

[२]**सूर्यमण्डलतो जातो मनुर्वैवस्वतः स्वयम्।**
**तस्य राज्यमभूत्सर्वं प्राणिनां लोकवासिनाम्।।**
**दिव्यानां च युगानां च तज्ज्ञेयं चैकसप्ततिः।**
**तदा स भगवान्विष्णुर्विश्वरूपोऽवतारकः।।**
**विष्णुः पूर्वार्धतो जातः परार्धाद्वामनः स्वयम्।**
**बाल्यं सत्ययुगे देवो विश्वरूपः सनातनः।।**
**चतुःशतानि वर्षाणि परमायुर्नृणां तदा।**
**त्रेतायां यौवनं प्राप्तः पूर्वार्धात्संभवो हरिः।।**

(१) **भविष्य.** ३।३।२२।११-१७.
(२) **भविष्य.** ३।४।५।१४-२४.

**वर्षाणां त्रिशतानां च नृणामायुः प्रकीर्तितम्।**
**द्वापरे वार्धिको देवो नृणामायुः शतद्वयम्।।**
**कलौ तु मरणं प्राप्तो विश्वरूपो हरिः स्वयम्।**
**नृणामायुः शताब्दं च केषांचिद्धर्मशीलिनाम्।।**
**परार्धाद्वामनो देवो महेन्द्रावरजो हरिः।**
**चतुर्भुजो महाश्यामो गरुडोपरि संस्थितः।।**
**विश्वरूपहितार्थाय त्रियुगी स बभूव ह।**
**वामनार्धाच्च त्रियुगी जातो नारायणः स्वयम्।।**
**श्वेतरूपो हरिः सत्ये हंसाख्यो भगवान्स्वयम्।**
**त्रेतायां रक्तरूपश्च यज्ञाख्यो भगवान्स्वयम्।।**
**द्वापरे पीतरूपश्च स्वर्णगर्भो हरिः स्वयम्।**
**कलिकाले तु संप्राप्ते संध्यायां द्वापरे युगे।।**
**कला तु सकला विष्णोर्वामनस्य तथा कला।**
**एकीभूता च देवक्यां जातो विष्णुस्तदा स्वयम्।।**

कलौ शिवनामकीर्तनं गङ्गा च शरणम्,
कृतादिषु क्रमेण ध्यानादीनां
प्राधान्यम्

[१]**न वेदाश्च न देवाश्च न वर्णाश्च कलौ युगे।**
**दृश्यन्ते न च मर्यादा कलिकाले तदन्वये।।**
[२]**शिव शंकर रुद्रेश नीलकण्ठ त्रिलोचन।**
**इतीरयन्ति ये नित्यं न हि तान् बाधते कलिः।।**
**ध्यानं परं कृतयुगे त्रेतायां यजनं तथा।**
**द्वापरे लिङ्गपूजा च कलौ शंकरकीर्तनम्।।**
[३]**कलौ कलुषचित्तानां पापद्रव्यरतात्मनाम्।**
**विधिहीनक्रियाणां च गतिर्गङ्गां विना न हि।।**
**अनाश्रित्य तु गङ्गां हि मुक्तिमिच्छति यः कलौ।**
**सूर्यं द्रष्टुमिहोद्युक्तो जा( ? * त्कजा) त्यन्धसदृश-**
**स्तु सः।।**
**मनोवाक्कायदुष्टानां पतितानां कलौ युगे।**
**सैवेह शरणं गङ्गा पतितत्रायणोद्यता।।**

*एवं सामासिकपदपाठ एव साधुः। तत्र सापेक्षत्वेऽपि समास आर्षः।

(१) **भविष्य.** ३।४।२३।१२०-१२१.
(२) **कृभ.** १३१५.
(३) **कृभ.** १३१६-१३१७.

## नारदपुराणम्

युगधर्मदेशाचारयोः कर्तव्यता,

कलिवर्ज्यानि

[१]युगधर्मः परिग्राह्यो वर्णैरेतैर्यथोचितम्।
देशाचारास्तथा ग्राह्याः स्मृतिधर्माविरोधतः।।
[२]समुद्रयातुः स्वीकारः कमण्डलुविधारणम्।
द्विजानामसवर्णासु कन्यासूपयमस्तथा।।

(१) समुद्रे नौकादिना यो याति तस्य 'समुद्रयानम्। ब्राह्मणस्य न्यासापहरणम्' (बौध. २।२।२) इत्यादि-बौधायनोक्तप्रायश्चित्तकरणेऽपि अन्यैः स्वीकारः व्यवहारः। तदुक्तम् – 'द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः।' इति। उपगतं विवाहः, 'असवर्णासु कन्यासु विवाहश्च द्विजातिषु' इति वचनात्। चमव्या. ५०

(२) कमण्डलुः 'सोदकं च कमण्डलुम्' इत्युक्तः, मृन्मयो वा। सिन्धु. १२८९-१२९०

['...कमण्डलुम्' इत्युक्त इति। इदमुपलक्षणम् 'दाक्षायणी ब्रह्मसूत्री वेणुमान् सकमण्डलुः' इत्युक्तस्य (उपलक्षणम्)। तथा च 'स्नातकस्य' (बौध. १।५।१) इत्युक्तः (? त्युक्त्वा) 'अथ कमण्डलुचर्यामुपदिशन्ति' (बौध. १।६।१) इति बौधायनोक्तेतिकर्तव्यताकः काष्ठमयो मृन्मयो वेत्यर्थः। तेन मृन्मयो वेति वाकारः संगच्छते। न च कमण्डलुधारणं वानप्रस्थाश्रमे इति मतं सम्यक्, तस्य पृथगुपादानात्। कृभ. १२८९-१२९०]

(३) 'यस्तु कार्तयुगो धर्मो न कर्तव्यः कलौ युगे। पापप्रयुक्ताश्च सदा कलौ नार्यो नरास्तथा।।' इत्यादित्य-पुराणवचनेन यद्यपि कृतयुगसंबन्धि धर्मसामान्यं निषिद्धं तथाऽपि सर्वस्य तस्य निषेद्धुमशक्यत्वाद्विशेषानाह – समुद्रेति।* यद्यपि समुद्रयानं न विहितं तथाऽपि बौधायनेन 'समुद्रयानं ब्राह्मणस्य न्यासापहरणम्' इत्यादिना तत्कर्तुः प्रायश्चित्तं विहितम्। तदपि कलौ कर्तव्यमेवेति तत्करणा-नन्तरं तद्व्यवहारो निषिध्यते, 'द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः।' इत्यग्रिमवचनाच्च। एतच्च प्राय-श्चित्तं रागप्राप्ते समुद्रयान एव। शङ्खोद्धारादितीर्थे यात्रा-विधिनान्तरीयकं समुद्रयानम्, अतो दोषाभावान्न प्रायश्चित्त-मित्यन्यत्र विस्तरः। कृभ. १२८७-१२८८

[१]देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा।।

(१) मांसादनं गोमहिषादेः। उत. ११२

(२) मांसदानं मांसपरिवेषणम्। चमव्या. ५०

(३) पशोरिति। + अत्र क्रत्वर्थमात्रनिषेधेऽपि न क्षतिः, पुरुषार्थनिषेधान्तरसत्त्वात्। 'महोक्षं वा महाजं वा श्रोत्रि-यायोपकल्पयेत्।' इत्यजादिसंग्रहार्थं पशुपदम्। मांसदानमिति श्राद्धसंबन्धि क्रत्वर्थं पुरुषार्थं च निषिध्यते। यथा वेदि-बर्हिर्धर्माणां प्रधानसंबन्धिमात्रांशे विधिः, न तु तादर्थ्यांशेऽपि,

---

(१) नारद. १।२४।११.

(२) नारद. १।२४।१३; यातुः स्वी (यात्रास्वी); उत. ११२ नारदवत्, बृहन्नारदीयम्; चमव्या. ५० यमस्त (गतं त) बृहन्नारदीये; सिन्धु. १२८७ बृहन्नारदीये; विपा. ५।४०३, ४८९ नारदवत्, बृहन्ना-रदीये; कृभ. सिन्धूद्धतस्य प्रतीकमात्रम्; १२९४ तृतीयचरणमात्रम्.

* ग्रन्थोऽयं दुर्बोधः। निषेधानां प्राप्तिपूर्वकत्वनियमात् कलौ ये आचारा निषिध्यन्ते तेषां सामान्यविधिभिः प्राप्तिर्वाच्या। अत्र समुद्रयातुः स्वीकारो निषिध्यते इति तत्प्रापको विधिराकाङ्क्ष्यते, न समुद्रयानस्य। अतोऽयं ग्रन्थो न सुबोधः। क्लेशेन तु अस्याभिप्राय एवं कल्प्यते – माऽस्तु समुद्रयातृस्वीकारविधिः, विहितानुष्ठातुः स्वीकारस्योत्सर्गतो न्याय्यत्वेन यदि समुद्रयानविधिरभविष्यत् ततो न्यायबलात् समुद्रयातृस्वीकारोऽपि प्राप्स्यत्। किंतु न समुद्रयान-विधिरस्ति। यद्यपि स नास्ति तथापि बौधायनेन समुद्रयाने प्रायश्चित्तविधानात् कृतप्रायश्चित्तस्वीकारस्याप्युत्सर्गतो न्याय्यत्वेन कलावपि कृतप्रायश्चित्तस्य स्वीकारः प्राप्तः, सोऽनेन निषिध्यते।

+ वाक्यमिदमादर्शपुस्तके 'पशोरिति' इति प्रतीकात्पूर्वं मुद्रितम्। तेन तस्य 'समुद्रयातुः स्वीकारः' इति पूर्ववचनांशव्याख्यान-शेषत्वप्रसक्त्या समुद्रयातृस्वीकारविषयकत्वमापन्नम्। तत्तु नोपपद्यते, पशुवधविषयकत्वं तूपपद्यते इत्यस्माभिस्तदत्र समाकृष्टम्।

(१) नारद. १।२४।१४ मांसदानं (मांसादनं); उत. ११२ राच्च (रेण) मांसदानं (मांसादनं) बृहन्नारदीयम्; चमव्या. ५० बृहन्नारदीये; सिन्धु. १२८८ बृहन्नारदीये; विपा. ५।४०३ श्रम (गम) बृहन्नारदीये, ५।४९० बृहन्नारदीये : बाल. १।१५६ पृ. ४१८ पू. (=); संर. ५०६ पू. बृहन्नारदीयवचनम्; कृभ. १२९२, १२९३ प्रथमचरण-मात्रम् (=) : १२९८ द्वितीयतृतीयचरणमात्रम् (=).

मानाभावात्, तद्वत्। एतेन – 'शौचं च पात्रशुद्धिश्च श्रद्धा च परमा यदि। अनन्ततृप्तिकृच्छ्राद्धमेतत्खलु न चाऽऽमिषम्।।' (बृपसं. ७।२९६) इति पुरुषार्थमामिषदानं निषिध्यते, न तु क्रत्वर्थम्, विधिस्पृष्टे निषेधानवकाशात् – इत्यपहसि(? हस्ति)तम्। श्राद्धे इति उपलक्षणार्थम्। तेनोपयाचितकादावपि निषेधः। वानप्रस्थेति। 'सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम्। वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्।।'(यास्मृ. ३।४५)इति विहितः। वानप्रस्थः, बुभुक्षुरिति शेषः। कृभ. १२८८

**[1]दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च।**
**दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ।।**

(१) दत्ता ऊढा, 'ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा। कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्।।' इति हेमाद्रौ वचनात्। सिन्धु. १२९०

(२) परस्य परस्मै इत्यर्थः। संर. ५०६

(३) दीर्घकालमिति। 'अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यम्' इति श्रुतिविहितम्, 'यदि चाऽऽत्यन्तिको वासो रोचेत स्वगुरोः कुले। युक्तः परिचरेदेनमा शरीरविमोक्षणात्।। आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते। गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत्।। एतेष्वविद्यमानेषु स्थानासनविहारवान्। प्रयुञ्जानोऽग्निशुश्रूषां सादयेद्देहमात्मनः।।' इति विहितं नैष्ठिकं च। स्थानम् अङ्गुष्ठाग्रादिना नियतमूर्ध्वावस्थानम्, आसनं नियमोपवेशनम्, विहारः भ्रमणम्। एतैस्तपोविशेषो लक्ष्यते। नव्यास्तु दीर्घकालमिति कालापवादमात्रम्। अन्यथा दीर्घं ब्रह्मचर्यमित्येव ब्रूयात्। तेन श्रौतमेव निषिध्यते, न नैष्ठिकम्। तेन द्राविडानां नैष्ठिकाचारोऽपि संगच्छत इत्याहुः। नरमेधेति। 'ब्रह्मणे ब्राह्मणमालभेत' इति, 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इति विहितौ। कृभ. १२८८-१२८९

(१) नारद. १।२४।१५ परस्य (पराय) तृतीयचरणे (नैष्ठिकं ब्रह्मचर्यं च); उत. ११२ क्षतायाः (याश्चैव) बृहन्नारदीयम्; चमव्या. ५० बृहन्नारदीये; सिन्धु. १२८८ बृहन्नारदीये; विपा. ५।४९० बृहन्नारदीये; संर. ५०६ दत्ताक्षतायाः (अक्षतायाश्च) पू., बृहन्नारदीयवचनम्; कृभ. १२८८-१२८९ सिन्धूद्धृतस्य प्रतीकमात्रम्: १२९३ निर्देशमात्रम् (=).

**[1]महाप्रस्थानगमनं गोमेधश्च तथा मखः।**
**इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः।।**

(१) महाप्रस्थानगमनम् आशरीरपातमुत्तरदिग्गमनम्। चमव्या. ५१

(२) महाप्रस्थानेति। 'यो जीवितुं न शक्नोति महाव्याध्युपपीडितः। सोऽग्न्युदकमहायात्रां कुर्वन्वा न प्रदुष्यति।।' इति विहितमाशरीरपातमुत्तरदिग्गमनम्। गोमेधश्चेति। 'मैत्रावरुणीं गां वशामनुबन्ध्यामालभेत' इति विहितो यागभेदः। चकारात् राजसूयग्रहः, 'न कलौ क्रियते अश्वमेधो वाऽप्यथ गोसवः। नरमेधोऽक्षता नारी देवरात्पुत्रसंततिः। गर्हितं सप्तकं ह्येतद्राजसूयः कमण्डलुः।।' इति हेमाद्रौ गारुडात् (वा?)। राजसूयश्च 'राजा राजसूयेन यजेत' इति विहितः। कृभ. १२८९

**[2]अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु।**
**देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्।।**

अक्षता कृतविवाहा अनुपभुक्ता युगान्तरवत्र विवाह्येत्यर्थः। विपा. ३।३४३

कृतयुगमानं कृतयुगीयमानववृत्तानि
च, हरिः शुक्लवर्णः

**नारद उवाच –**

**[3]आख्यातं भवता सर्वं मुने तत्त्वार्थकोविद।**
**इदानीं श्रोतुमिच्छामि युगानां स्थितिलक्षणम्।।**

**सनक उवाच –**

**साधु साधु महाप्राज्ञ मुने लोकोपकारक।**
**युगधर्मान्प्रवक्ष्यामि सर्वलोकोपकारकान्।।**

(१) नारद. १।२४।१६ इमान् (एतान्); उत. ११२ धश्च (धं च) मखः (मखम्) बृहन्नारदीयम्; चमव्या. ५० बृहन्नारदीये; सिन्धु. १२८९ बृहन्नारदीये: १४७२ उत्त., बृहन्नारदीये; विपा.५।४०३ धर्मान् कलियुगे (कलियुगे धर्मान्) उत्त., बृहन्नारदीये : ५।४९० बृहन्नारदीये; कृभ. १२८९ सिन्धूद्धृतस्य प्रतीकमात्रम्.

(२) विपा. ३।३४३ बृहन्नारदीयेः ३४५ चतुर्थपादमात्रम् (=); कृभ. १३१० पू. (=).

(३) नारद. १।४१।१-९७.

**धर्मो विवृद्धिमायाति काले कस्मिंश्चिदुत्तम।**
**तथा विनाशमायाति धर्म एव महीतले।।**
**कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्।**
**दिव्यैर्द्वादशभिर्ज्ञेयं वत्सरैस्तत्र सत्तम।।**
**संध्यासंध्यांशयुक्तानि युगानि सदृशानि वै।**
**कालतो वेदितव्यानि इत्युक्तं तत्त्वदर्शिभिः।।**
**आद्ये ( ? द्यं) कृतयुगं प्राहुस्ततस्त्रेताविधानकम्।**
**ततश्च द्वापरं प्राहुः कलिमन्त्यं विदुः क्रमात्।।**
**देवदानवगन्धर्वा यक्षराक्षसपन्नगाः।**
**नाऽऽसन्कृतयुगे विप्र सर्वे देवसमाः स्मृताः।।**
**सर्वे हृष्टाश्च धर्मिष्ठा न तत्र क्रयविक्रयौ।**
**वेदानां च विभागश्च न युगे कृतसंज्ञके।।**
**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः स्वाचारतत्पराः।**
**सदा नारायणपरास्तपोध्यानपरायणाः।।**
**कामादिदोषनिर्मुक्ताः शमादिगुणतत्पराः।**
**धर्मसाधनचित्ताश्च गतासूया अदाम्भिकाः।।**
**सत्यवाक्यरताः सर्वे चतुराश्रमधर्मिणः।**
**वेदाध्ययनसंपन्नाः सर्वशास्त्रविचक्षणाः।।**
**चतुराश्रमयुक्तेन कर्मणा कालयोनिना।**
**अकामफलसंयोगाः प्रयान्ति परमां गतिम्।**
**नारायणः कृतयुगे शुक्लवर्णः सुनिर्मलः।।**

त्रेतायां धर्मे न्यूनता, हरिः रक्तः,
मानवाः क्रिया-
योगरताः

**त्रेताधर्मान्प्रवक्ष्यामि शृणुष्व सुसमाहितः।**
**धर्मः पाण्डुरतां याति त्रेतायां मुनिसत्तम।।**
**हरिस्तु रक्ततां याति किंचित्क्लेशान्विता जनाः।।**
**क्रियायोगरताः सर्वे यज्ञकर्मसु निष्ठिताः।**
**सत्यव्रता ध्यानपराः सदा ध्यान( ? ऽध्याय) परायणाः।।**

द्वापरे धर्मो द्विपाद्, हरिः पीतः,
वेदविभाजनम्, असत्यनिर-
तत्वादीनि लोकवृत्तानि

**द्विपादो वर्तते धर्मो द्वापरे च मुनीश्वर।**
**हरिः पीतत्वमायाति वेदश्चापि विभज्यते।।**
**असत्यनिरताश्चापि केचित्तत्र द्विजोत्तमाः।**
**ब्राह्मणाद्याश्च वर्णाः स्युः केचिद्रागादिदुर्गुणाः।।**
**केचित्स्वर्गापवर्गार्थं विप्र यज्ञान्प्रकुर्वते।**
**केचिद्धनादिकामाश्च केचित्कल्मषचेतसः।।**
**धर्माधर्मौ समौ स्यातां द्वापरे विप्रसत्तम।**
**अधर्मस्य प्रभावेण क्षीयन्ते च प्रजास्तथा।।**
**अल्पायुषो भविष्यन्ति केचिच्चापि मुनीश्वर।**
**केचित्पुण्यरतान् दृष्ट्वा असूयां विप्र कुर्वते।।**

कलियुगे धर्मः एकपाद्, हरिः कृष्णः,
विस्तरेण कलियुगीयचराचर-
वृत्तवर्णनम्

**कलिस्थितिं प्रवक्ष्यामि तच्छृणुष्व समाहितः।**
**धर्मः कलियुगे प्राप्ते पादेनैकेन वर्तते।।**
**तामसं युगमासाद्य हरिः कृष्णत्वमेति च।**
**यः कश्चिदपि धर्मात्मा यज्ञाचारान्करोति च।।**
**यः कश्चिदपि पुण्यात्मा क्रियायोगरतो भवेत्।**
**नरं धर्मरतं दृष्ट्वा सर्वेऽसूयां प्रकुर्वते।।**
**व्रताचाराः प्रणश्यन्ति ज्ञानयज्ञादयस्तथा।**
**उपद्रवा भविष्यन्ति ह्यधर्मस्य प्रवर्तनात्।।**
**असूयानिरताः सर्वे दम्भाचारपरायणाः।**
**प्रजाश्चाल्पायुषः सर्वा भविष्यन्ति कलौ युगे।।**

**नारद उवाच –**

**युगधर्माः समाख्यातास्त्वया संक्षेपतो मुने।**
**कलिं विस्तरतो ब्रूहि त्वं हि धर्मविदां वरः।।**
**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च मुनिसत्तम।**
**किमाहाराः किमाचारा भविष्यन्ति कलौ युगे।।**

**सनक उवाच –**

**शृणुष्व मुनिशार्दूल सर्वलोकोपकारक।**
**कलिधर्मान्प्रवक्ष्यामि विस्तरेण यथातथम्।।**
**सर्वे धर्मा विनश्यन्ति कृष्णे कृष्णत्वमागते।**
**तस्मात्कलिर्महाघोरः सर्वपातकसंकरः।।**
**ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा धर्मपराङ्मुखाः।**
**घोरे कलियुगे प्राप्ते द्विजा वेदपराङ्मुखाः।।**
**व्याजधर्मरताः सर्वे असूयानिरतास्तथा।**
**वृथाहंकारदुष्टाश्च सत्यहीनाश्च पण्डिताः।।**

अहमेवाधिक इति सर्वेऽपि विवदन्ति च।
अधर्मलोलुपाः सर्वे तथा वैतण्डिका नराः।।
अतः स्वल्पायुषः सर्वे भविष्यन्ति कलौ युगे।
अल्पायुष्ट्वान्मनुष्याणां न विद्याग्रहणं द्विज।।
विद्याग्रहणशून्यत्वादधर्मो वर्त( ? र्ध)ते पुनः।
व्युत्क्रमेण प्रजाः सर्वा म्रियन्ते पापतत्पराः।।
ब्राह्मणाद्यास्तथा वर्णाः संकीर्यन्ते परस्परम्।
कामक्रोधपरा मूढा वृथा संतापपीडिताः।।
शूद्रतुल्या भविष्यन्ति सर्वे वर्णाः कलौ युगे।
उत्तमा नीचतां यान्ति नीचाश्चोत्तमतां तथा।।
राजानो द्रव्यनिरतास्तथा ह्यन्यायवर्तिनः।
पीडयन्ति प्रजाश्चैव करैरत्यर्थयोजितैः।।
शववाहा भविष्यन्ति शूद्राणां च द्विजातयः।
धर्मस्त्रीष्वपि गच्छन्ति पतयो जारधर्मिणः।।
द्विषन्ति पितरं पुत्रा भर्तारं च स्त्रियोऽखिलाः।
परस्त्रीनिरताः सर्वे परद्रव्यपरायणाः।।
मत्स्यामिषेण जीवन्ति दुहन्तश्चाप्यजीविकाम्।
घोरे कलियुगे विप्र सर्वे पापरता जनाः।।
सतामसूयानिरता उपहासं प्रकुर्वते।
सरित्तीरेषु कुद्दालैर्वापयिष्यन्ति चौषधीः।।
पृथ्वी निष्फलतां याति बीजं पुष्पं विनश्यति।
वेश्यालावण्यशीलेषु स्पृहां कुर्वन्ति योषितः।।
धर्मविक्रयिणो विप्राः स्त्रियश्च भगविक्रयाः।
वेदविक्रयकाश्चान्ये शूद्राचाररता द्विजाः।।
साधूनां विधवानां च वित्तान्यपहरन्ति च।
न व्रतानि चरिष्यन्ति ब्राह्मणा द्रव्यलोलुपाः।।
धर्माचारं परित्यज्य वृथावादैर्विषज्जिताः।
द्विजाः कुर्वन्ति दम्भार्थं पितृश्राद्धादिकाः क्रियाः।।
अपात्रेष्वेव दानानि प्रयच्छन्ति नराधमाः।
दुग्धलोभनिमित्तेन गोषु प्रीतिं च कुर्वते।।
न कुर्वन्ति तथा विप्राः स्नानशौचादिकाः क्रियाः।
अकाले कर्मनिरता भविष्यन्ति द्विजाधमाः।।
साधुनिन्दापराश्चैव विप्रनिन्दापरास्तथा।
न कस्यापि मनो विप्र विष्णुभक्तिपरं भवेत्।।
यज्विनश्च द्विजा नैव धनार्थं राजकिङ्कराः।
ताडयन्ति द्विजान्दुष्टाः कृष्णे कृष्णत्वमागते।।

दानहीना नराः सर्वे घोरे कलियुगे मुने।
प्रतिग्रहं प्रकुर्वन्ति पतितानामपि द्विजाः।।
कलेः प्रथमपादेऽपि विनिन्दन्ति हरिं नराः।
शूद्रस्त्रीसङ्गनिरता विधवासङ्गलोलुपाः।।
शूद्रान्नभोगनिरता भविष्यन्ति कलौ द्विजाः।
धर्मान्गृह्णन्ति पाषण्डा द्विजलिङ्गधराधमाः।।
काषायपरिवीताश्च जटिला भस्मधूलिताः।
विहाय वेदसन्मार्गं कुपथाचारसंगताः।।
पाषण्डाश्च भविष्यन्ति चतुराश्रमनिन्दकाः।
न च द्विजातिशुश्रूषां कुर्वन्ति चरणोद्भवाः।।
शूद्रा धर्मान्प्रवक्ष्यन्ति कूटयुक्तिपरायणाः।
द्विजाः स्वाचारमुत्सृज्य परपाकान्नभोजिनः।
भविष्यन्ति दुरात्मानः शूद्राः प्रव्रजितास्तथा।।
उत्कोपजीविनस्तत्र भविष्यन्ति कलौ मुने।
धर्महीनास्तु पाषण्डाः कापाला भिक्षवोऽधमाः।।
धर्मविध्वंसशीलानां द्विजानां द्विजसत्तम।
शूद्रा धर्मान्प्रवक्ष्यन्ति आरुह्योत्तममासनम्।।
एते चान्ये च बहवो नग्नरक्तपटादिकाः।
पाषण्डाः प्रचरिष्यन्ति प्रायो वेदविदूषकाः।
गीतवादित्रकुशलाः क्षुद्रधर्मसमाश्रयाः।।
भविष्यन्ति कलौ प्रायो धर्मविध्वंसका नराः।
अल्पद्रव्या वृथालिङ्गा वृथाहंकारदूषिताः।।
हर्तारः परवित्तानां भवितारो नराधमाः।
प्रतिग्रहपरा नित्यं जगदुन्मार्गशीलिनः।।
आत्मस्तुतिपराः सर्वे परनिन्दापरास्तथा।
विश्वस्तघातिनः क्रूरा दयाधर्मविवर्जिताः।।
भविष्यन्ति नरा विप्र कलौ चाधर्मबान्धवाः।
परमायुश्च भविता तदा वर्षाणि षोडश।।
घोरे कलियुगे विप्र पञ्चवर्षा प्रसूयते।
सप्तवर्षाष्टवर्षाश्च युवानोऽतः परे ( ? रं) जरा।।
स्वकर्मत्यागिनः सर्वे कृतघ्ना भिन्नवृत्तयः।
याचकाश्च द्विजा नित्यं भविष्यन्ति कलौ युगे।।
परावमाननिरताः प्रहृष्टाः परवेश्मतः।
तत्रैव निन्दानिरताः वृथाविश्रम्भिणो जनाः।।
निन्दां कुर्वन्ति सततं पितृमातृसुतेषु च।
वदन्ति वाचा धर्मांश्च चेतसा पापलोलुपाः।।

धनविद्यावयोमत्ताः सर्वदुःखपरायणाः।
व्याधितस्करदुर्भिक्षैः पीडिता अतिमायिनः।।
प्रपुष्यन्ति वृथैवामी न विचार्य च दुष्कृतम्।
धर्ममार्गप्रणेतारं तिरस्कुर्वन्ति पापिनः।
धर्मकार्ये रतं चैव वृथाविश्रम्भिणो जनाः।।
भविष्यन्ति कलौ प्राप्ते राजानो म्लेच्छजातयः।
शूद्रा भैक्ष्यरताश्चैव तेषां शुश्रूषणे द्विजाः।।
न शिष्यो न गुरुः कश्चिन्न पुत्रो न पिता तथा।
न भार्या न पतिश्चैव भवितारो न संकरे।।
कलौ गते भविष्यन्ति धनाढ्या अपि याचकाः।
रसविक्रयिणश्चापि भविष्यन्ति द्विजातयः।।
धर्मकञ्चुकसंवीता मुनिवेषधरा द्विजाः।
अपण्यविक्रयरता अगम्यागामिनस्तथा।।
वेदनिन्दापराश्चैव धर्मशास्त्रविनिन्दकाः।
शूद्रवृत्त्यैव जीवन्ति नरकार्हा द्विजा मुने।।
अनावृष्टिभयं प्राप्ता गगनासक्तदृष्टयः।
भविष्यन्ति कलौ मर्त्याः सर्वे क्षुद्भयकातराः।।
कन्दपर्णफलाहारास्तापसा इव मानवाः।।
आत्मानं तारयिष्यन्ति अनावृष्ट्याऽतिदुःखिताः।
कामार्ता ह्रस्वदेहाश्च लुब्धाश्चाधर्मतत्पराः।
कलौ सर्वे भविष्यन्ति स्वल्पभाग्या बहुप्रजाः।।
स्त्रियः स्वपोषणपरा वेश्या लावण्यशीलिकाः।
पतिवाक्यमनादृत्य सदाऽन्यगृहतत्पराः।।
दुःशीला दुष्टशीलेषु करिष्यन्ति सदा स्पृहाम्।
असद्वृत्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः।।
चौरादिभयभीताश्च काष्ठयन्त्राणि कुर्वते।
दुर्भिक्षकरपीडाभिरतीवोपद्रुता जनाः।
गोधूमान्नयवान्नाढ्ये देशे यास्यन्ति दुःखिताः।।
निधाय हृद्यकर्माणि प्रेरयन्ति वचः शुभम्।
स्वकार्यसिद्धिपर्यन्तं बन्धुतां कुर्वते जनाः।।
भिक्षवश्चापि मित्रादिस्नेहसंबन्धयन्त्रिताः।
अन्नोपाधिनिमित्तेन शिष्यान्निन्दन्ति भिक्षवः।।
उभाभ्यामथ पाणिभ्यां शिरःकण्डूयनं स्त्रियः।
कुर्वन्त्यो गुरुभर्तॄणामाज्ञामुल्लङ्घयन्ति च।।
पाषण्डालापनिरताः पाषण्डजनसङ्गिनः।
यदा द्विजा भविष्यन्ति तदा वृद्धिं कलिर्व्रजेत्।।
यदा प्रजा न यक्ष्यन्ति न होष्यन्ति द्विजातयः।
तदैव तु कलेर्वृद्धिरनुमेया विचक्षणैः।।
अधर्मवृद्धिर्भविता बालमृत्युरपि द्विज।
सर्वधर्मेषु नष्टेषु याति निःश्रीकतां जगत्।।
एवं कलेः स्वरूपं ते कथितं विप्रसत्तम।
हरिभक्तिपरानेष न कलिर्बाधते क्वचित्।।

कृतादिषु क्रमेण तपोध्यानयज्ञदानानि प्रशस्तानि,
कृतादौ दीर्घकालकर्मसाध्यस्य फलस्य कलौ
अल्पकालकर्मसाध्यत्वम्, कृतादौ ध्यानादि-
साध्यस्य फलस्य कलौ हरिकीर्तन-
साध्यत्वम्, कलिदोषबाधिकाया
विष्णुभक्तेः शिवभक्तेश्च
विस्तरेण वर्णनम्

तपः परं कृतयुगे त्रेतायां ध्यानमेव च।
द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे।।
यत्कृते दशभिर्वर्षैस्त्रेतायां शरदा च यत्।
द्वापरे यच्च मासेन ह्यहोरात्रेण तत्कलौ।।
ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्।।
अहोरात्रं हरेर्नाम कीर्तयन्ति च ये नराः।
कुर्वन्ति हरिपूजां वा न कलिर्बाधते च तान्।।
नमो नारायणायेति कीर्तयन्ति च ये नराः।
निष्कामा वा सकामा वा न कलिर्बाधते च तान्।।
हरिनामपरा ये तु घोरे कलियुगे द्विज।
त एव कृतकृत्याश्च न कलिर्बाधते हि तान्।।
हरिपूजापरा ये च हरिनामपरायणाः।
त एव शिवतुल्याश्च नात्र कार्या विचारणा।
समस्तजगदाधारं परमार्थस्वरूपिणम्।
घोरे कलियुगे प्राप्ते विष्णुं ध्यायन्न सीदति।।
अहोऽतीव सुभाग्यास्ते सकृद्वै केशवार्चकाः।
घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिते।।
[1]न्यूनातिरिक्तदोषाणां कलौ वेदोक्तकर्मणाम्।
हरिस्मरणमेवात्र संपूर्णत्वविधायकम्।।

(१) नारद. १।४१।९८; चमव्याआ. ५२ दोषाणां (सिद्ध्यै) वात्र (वान्ते) त्वविधा (फलदा) बृहन्नारदीये.

[1]हरे केशव गोविन्द वासुदेव जगन्मय।
इतीरयन्ति ये नित्यं न हि तान्बाधते कलिः।।
शिव शंकर रुद्रेश नीलकण्ठ त्रिलोचन।
इति जल्पन्ति ये वाऽपि कलिस्तान्नापि बाधते।।
महादेव विरूपाक्ष गङ्गाधर मृडाव्यय।
इत्थं वदन्ति ये विप्र ते कृतार्था न संशयः।।
जनार्दन जगन्नाथ पीताम्बरधराच्युत।
इति वाऽप्युच्चरन्तीह न च तेषां कलेर्भयम्।।
संसारे सुलभाः पुंसां पुत्रदारधनादयः।
घोरे कलियुगे विप्र हरिभक्तिस्तु दुर्लभा।।
कर्मश्रद्धाविहीना ये पाषण्डा वेदनिन्दकाः।
अधर्मनिरता नैव नरकार्हा हरिस्मृतेः।।
वेदमार्गबहिष्ठानां जनानां पापकर्मणाम्।
मनःशुद्धिविहीनानां हरिनाम्नैव निष्कृतिः।।
दैवाधीनं जगत्सर्वमिदं स्थावरजङ्गमम्।
यथाप्रेरितमेतेन तथैव कुरुते द्विज।।
शक्तितः सर्वकर्माणि वेदोक्तानि विधाय च।
समर्पयेन्महाविष्णौ नारायणपरायणः।।
समर्पितानि कर्माणि महाविष्णौ परात्मनि।
संपूर्णतां प्रयान्त्येव हरिस्मरणमात्रतः।।
हरिभक्तिरतानां च पापबन्धो न जायते।
अतोऽतिदुर्लभा लोके हरिभक्तिर्दुरात्मनाम्।।
अहो हरिपरा ये तु कलौ घोरे भयंकरे।
ते सुभाग्या महात्मानः सत्सङ्गरहिता अपि।।
हरिस्मरणनिष्ठानां शिवनामरतात्मनाम्।
सत्यं समस्तकर्माणि यान्ति संपूर्णतां द्विज।।
अहो भाग्यमहो भाग्यं हरिनामरतात्मनाम्।
त्रिदशैरपि ते पूज्याः किमन्यैर्बहुभाषितैः।।
तस्मात्समस्तलोकानां हितमेव मयोच्यते।
हरिनामपरान्मर्त्यान्न कलिर्बाधते क्वचित्।।
हरेर्नामैव नामैव नामैव मम जीवनम्।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा।।

(१) नारद. १।४१।९९-११४

कृतादिषु प्रधानतीर्थभेदाः, कलौ गङ्गायाः शिवार्चनस्य च माहात्म्यम्

[1]कृते तु सर्वतीर्थानि त्रेतायां पुष्करं परम्।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते।।
कलौ तु सर्वतीर्थानि स्वं स्वं वीर्यं स्वभावतः।
गङ्गायां प्रतिमुञ्चन्ति सा तु देवी न कुत्रचित्।।
[2]विशेषतः कलियुगे पापं हरति जाह्नवी।
निहत्य कामजान्दोषान्कायवाक्चित्तसंभवान्।।
[3]नैमिषे च कुरुक्षेत्रे नर्मदायां च पुष्करे।
स्नानात्पानात्स्पर्शनाच्च यत्फलं लभते नरः।
तद्गङ्गादर्शनादेव कलौ प्राहुर्महर्षयः।।
[4]कलिकल्मषभीतानां विषयासक्तचेतसाम्।
नान्यं वृन्दावनात्सेव्यमस्ति लोकेष्वपि त्रिषु।।
[5]कलौ यत्परमं ब्रह्मप्राप्तये सत्वरं नृणाम्।
गङ्गाभजनमेवाऽऽहुर्महापुण्यं महर्षयः।।
घटध्वं हे बुधा गङ्गां मत्वा विश्वमशाश्वतम्।
घोरे कलियुगे प्राप्ते मुक्तिर्वो वाञ्छिता यदि।।
[6]शिवपूजापरा ये तु शिवनामपरायणाः।
त एव शिवकल्पाश्च घोरे कलियुगे द्विजाः।।
अतीवभाग्यास्ते विप्राः सकृद्ये के शिवार्चकाः।
घोरे कलियुगे प्राप्ते सर्वधर्मबहिष्कृते।।

## अग्निपुराणम्

कलौ शुक्लयजुर्वेदस्य प्राधान्यम्, कलिवृत्तानि, युगान्ते धर्मस्थापककल्क्यवतारः, ततः कृतयुगप्रवृत्तिः, कलौ हरिपूजनं सर्वपापहरम्

[7]सर्वे कलियुगान्ते तु भविष्यन्ति च संकराः।
दस्यवः शीलहीनाश्च वेदो वाजसनेयकः।
दश पञ्च च शाखा वै प्रमाणेन भविष्यति।।

(१) नारद. २।३८।२०-२१.
(२) नारद. २।३९।३९.
(३) नारद. २।४०।४४-४५.
(४) नारद. २।८०।१०५.
(५) कृभ. १३१७.
(६) कृभ. १३१३.
(७) अग्नि. १६।५-११.

**धर्मकञ्चुकसंवीता अधर्मरुचयस्तथा।**
**मानुषान्भक्षयिष्यन्ति म्लेच्छाः पार्थिवरूपिणः।।**
**कल्की विष्णुयशःपुत्रो याज्ञवल्क्यपुरोहितः।**
**उत्सादयिष्यति म्लेच्छान्गृहीतास्त्रः कृतायुधः।।**
**स्थापयिष्यति मर्यादां चातुर्वर्ण्ये यथोचिताम्।**
**आश्रमेषु च सर्वेषु प्रजाः सद्धर्मवर्त्मनि।।**
**कल्किरूपं परित्यज्य हरिः स्वर्गं गमिष्यति।**
**ततः कृतयुगं नाम पुरावत्संभविष्यति।।**
**वर्णाश्रमाश्च धर्मेषु स्वेषु स्थास्यन्ति सत्तम।**
**एवं सर्वेषु कल्पेषु सर्वमन्वन्तरेषु च।।**
**[1]नास्ति श्रेयस्करं नृणां विष्णोराराधनात्परम्।**
**युगेऽस्मिंस्तामसे घोरे यज्ञवेदविवर्जिते।।**
**[2]कलौ कलिमलध्वंसं सर्वपापहरं हरिम्।**
**येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः।।**
**[3]धन्यं कलौ भवेद्विप्र अल्पक्लेशं महत्फलम्।।**
**[4]त्रेतायां द्वापरे चैव राजन्कृतयुगे तथा।**
**रोहिणीसहिता चेयं विद्वद्भिः समुपोषिता।।**
**अतः परं महीपाल संप्राप्ते तामसे कलौ।**
**जन्मना वासुदेवस्य भविता व्रतमुत्तमम्।।**

(१) केचित्तु – 'त्रेतायां... मुत्तमम्।' इति हेमाद्रौ वह्निपुराणात् कलौ जन्माष्टमीव्रतमेव, न जयन्तीव्रतमित्याहुः। तन्न। 'तामसे कलौ' इत्युक्तेः परमश्रेयोहेतोरस्य कलौ पापिनां दुर्लभत्वमुच्यते। तेन कलौ तामसा न करिष्यन्ति, किंतु (ये) धन्यास्त एवेत्यर्थः, अन्यथा – 'शूद्राश्च ब्राह्मणाचारा भविष्यन्ति कलौ युगे' इत्यादौ विधिकल्पनापत्तेः। सिन्धु. ४६४-४६५

(१) **निप.** ५०६ नात्परम् (नादृते) यज्ञवेद (देवयज्ञ) (=); **स्मृतिकौ.** ४६९ परम् (मुने); **पुम.** ४६८; **कृभ.** १३१३ उत्तरार्धं (कुर्वीताऽऽराधनं राजन् वासुदेवे कलौ युगे।।).

(२) **निप.** ५०६ वन्द्या य (विन्द्याद्य) (=); **स्मृतिकौ.** ४६९; **पुम.** ४६८; **कृभ.** ११८८ (=).

(३) **पुम.** ४६८.

(४) **सिन्धु.** ४६४-४६५.

## देवीभागवतम्

सत्यादिकृतयुगधर्मनिष्ठानां सतां कलिस्वभावाधर्मनिष्ठानामसतां योगक्रियारूपत्रेताद्वापरनिष्ठानां मध्यमानां च तारतम्येन सर्वेषु युगेषु सत्त्वात् तदपेक्षया प्रत्येकं युगं कृतादिचतुष्टयात्मकं भवति

**[1]रागद्वेषावृतं विश्वं सर्वं स्थावरजङ्गमम्।**
**आद्ये युगेऽपि राजेन्द्र किमद्य कलिदूषिते।।**
**सतां सत्ययुगं साक्षात्सर्वदैवाऽसतां कलिः।**
**मध्यमौ मध्यमानां तु क्रियायोगाद्युगौ स्मृतौ।।**

नन्वेवं चेत्कथं धर्मस्थितिः स्यादिति चेत्तत्राऽऽह – सतामिति। सर्वयुगेषु त्रिविधा नराः सन्ति – साधवोऽसाधवो मध्यमाश्च। तत्र सतां सर्वं युगं सत्ययुगमेव। असतां सर्वं युगं कलिरेव। यस्मिन्युगे क्रियायोगौ व्यवस्थितौ स मध्यमः कालो द्वापरत्रेतात्मको मध्यमानां भवति। तथा च ये साधवो मध्यमाश्च तदाश्रयेण धर्मः स्थास्यतीति भावः। तिलक.

**[2]कृते युगेऽपि त्रेतायां द्वापरे कुरुनन्दन।**
**विद्रोऽत्रास्ति च धर्मोऽपि का कथाऽद्य कलौ पुनः।।**

श्रीकृष्णस्य दुष्टविनाशप्रतिज्ञा कालप्रभावानुरोधेन धर्महीनबहुले कलिकाले धर्मविरोधकविषया, युगभेदानुसारि पुरुषार्थप्राधान्यम्

**जनमेजय उवाच –**

**[3]भारावतरणं किं तत्कृतं कृष्णेन धीमता।।**

भारावतारप्रतिज्ञां कृत्वाऽवतारो गृहीतः, तत्र सर्वदुष्टानामवशिष्टत्वादवतारं गृहीत्वा भारावतरणं किं कृतम्? न किमपीत्यर्थः। तिलक.

**संदेहोऽयं महाभाग न निवर्तति चित्ततः।**
**कलावस्मिन्प्रजाः सर्वाः पश्यतः पापनिश्चयाः।।**

(१) **देवीभा.** ४।५।२, ६.

(२) **देवीभा.** ४।७।४३-४४.

(३) **देवीभा.** ६।११।९-६६.

पश्यतः रामकृष्णौ। कथं न ताः प्रजा नाशितवन्तौ? इति शेषः। तिलक.

**व्यास उवाच –**

**राजन्यस्मिन्युगे यादृक्प्रजा भवति कालतः।**
**नान्यथा तद्भवेन्नूनं युगधर्मोऽत्र कारणम्।।**

समाधत्ते – राजन्निति। अयं भावः – दुष्टाचारा द्विविधाः पुरुषाः – एके युगधर्मेण दुष्टाचाराः, परे वेदधर्मोच्छेदार्थमवतीर्णा दैत्या दुराचाराः। तत्रावतारं गृहीत्वा ये वेदधर्मोच्छेदं कर्तुं क्षत्रियगृहेऽवतीर्णा दैत्यकुले वा येऽवतीर्णा दैत्यास्त एव नाशिता न तु कालस्वभावेन दुराचाराः तेन नाशिताः। तेषां नाशने सर्वेऽपि कलिस्वभावदुष्टाः सन्तीति सर्वेषां मारणप्रसङ्गेन प्रजाच्छेद एव स्यादिति। नान्यथा तद्भवेदिति। न ता नाशयितुं शक्यन्त इत्यर्थः। तिलक.

**ये धर्मरसिका जीवास्ते वै सत्ययुगेऽभवन्।**
**धर्मार्थरसिका ये तु ते वै त्रेतायुगेऽभवन्।।**

तानेव युगधर्मानुपपादयति – ये धर्मरसिका इति। तिलक.

**धर्मार्थकामरसिका द्वापरे चाभवन्युगे।**
**अर्थकामपराः सर्वे कलावस्मिन्भवन्ति हि।।**
**युगधर्मस्तु राजेन्द्र न याति व्यत्ययं पुनः।**
**कालः कर्ताऽस्ति धर्मस्य ह्यधर्मस्य च वै पुनः।।**

कृतादियुगीयानां साधूनां कलियुगकाले स्वर्गलोकेऽवस्थानं पापिनामिहलोकेऽवस्थानम्, तथा कलियुगीयानां पापिनां कृतादियुगकाले नरकेऽवस्थानं साधूनामिहलोकेऽवस्थानम्, स्वर्गात् नरकाच्च प्रच्युतानां तेषां क्रमेण पुनः कृतादियुगेषु कलियुगे चेहावस्थानम्

**राजोवाच –**

**ये तु सत्ययुगे जीवा भवन्ति धर्मतत्पराः।**
**कुत्र तेऽद्य महाभाग तिष्ठन्ति पुण्यभागिनः।।**

प्रसङ्गागतमाह वैराग्यार्थम् – ये तु सत्ययुग इति। तिलक.

**त्रेतायुगे द्वापरे वा ये दानव्रतकारकाः।**
**वर्तन्ते मुनयः श्रेष्ठ कुत्र ब्रूहि पितामह।।**
**कलावद्य दुराचारा येऽत्र सन्ति गतत्रपाः।**
**आद्ये युगे क्व धास्यन्ति पापिष्ठा देवनिन्दकाः।।**
**एतत्सर्वं समाचक्ष्व विस्तरेण महामते।**
**सर्वथा श्रोतुकामोऽस्मि यदेतद्धर्मनिर्णयम्।।**

**व्यास उवाच –**

**ये वै कृतयुगे राजन्संभवन्तीह मानवाः।**
**कृत्वा ते पुण्यकर्माणि देवलोकान्व्रजन्ति वै।।**
**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च नृपसत्तम।**
**स्वधर्मनिरता यान्ति लोकान्कर्मजितान्किल।।**
**सत्यं दया तथा दानं स्वदारगमनं तथा।**
**अद्रोहः सर्वभूतेषु समता सर्वजन्तुषु।।**
**एतत्साधारणं धर्मं कृत्वा सत्ययुगे पुनः।**
**स्वर्गं यान्तीतरे वर्णा धर्मतो रजकादयः।।**

तद्युगस्था रजकादयो नीचा अपि धर्मतः स्वधर्माचरणात्स्वर्गं यान्तीत्यन्वयः। तिलक.

**तथा त्रेतायुगे राजन्द्वापरेऽथ युगे तथा।**
**कलावस्मिन्युगे पापा नरकं यान्ति मानवाः।।**

कलावस्मिन्निति। अस्मिन्कलौ ये पापाचारास्ते नरकं यान्तीत्यर्थः। तिलक.

**तावत्तिष्ठन्ति ते तत्र यावत्स्याद्युगपर्ययः।**
**पुनश्च मानुषे लोके भवन्ति भुवि मानवाः।।**
**यदा सत्ययुगस्याऽऽदिः कलेरन्तश्च पार्थिव।**
**तदा स्वर्गात्पुण्यकृतो जायन्ते किल मानवाः।।**
**यदा कलियुगस्याऽऽदिर्द्वापरस्य क्षयस्तथा।**
**नरकात्पापिनः सर्वे भवन्ति भुवि मानवाः।।**
**एवं कालसमाचारो नान्यथाऽभूत्कदाचन।**
**तस्मात्कलिरसत्कर्ता तस्मिंस्तु तादृशी प्रजा।।**
**कदाचिद्दैवयोगात्तु प्राणिनां व्यत्ययो भवेत्।**
**कलौ ये साधवः केचिद्द्वापरे संभवन्ति ते।।**

व्यत्ययो भवेदिति। सत्ययुगे पापं केचित्कुर्वन्ति, कलियुगेऽपि केचित्पुण्यं कुर्वन्तीत्येवंरूप इत्यर्थः। व्यत्ययान्तरमप्याह – कलौ ये साधव इति। तिलक.

**तथा त्रेतायुगे केचित्केचित्सत्ययुगे तथा।**
**दुष्टाः सत्ययुगे ये तु ते भवन्ति कलावपि।।**

**कृतकर्मप्रभावेण प्राप्नुवन्त्यसुखानि च।**
**पुनश्च तादृशं कर्म कुर्वन्ति युगभावतः।।**

कृतादियुगप्रयुक्तलोकवृत्तानि, त्रेतादिषूत्तरोत्तरं धर्मह्रा-
साधिक्यम्, आहारशुद्धि-चित्तशुद्धि – धर्मप्रकाशेषु
तथा वृत्तसंकर – धर्मसंकर-वर्णसंकरेषु
पूर्वपूर्वस्योत्तरोत्तरकारणत्वम्

**जनमेजय उवाच –**

**युगधर्मान्महाभाग ब्रूहि सर्वानशेषतः।**
**यस्मिन्वै यादृशो धर्मो ज्ञातुमिच्छामि तं तथा।।**

**व्यास उवाच –**

**निबोध नृपशार्दूल दृष्टान्तं ते ब्रवीम्यहम्।**
**साधूनामपि चेतांसि युगभावाद्भ्रमन्ति हि।।**

युगधर्मा मया प्रोच्यन्ते, तान् सावधानतया समाचर। नोचेद्युगधर्मानुरोधेन बुद्धेर्भ्रंशः स्यात्। कस्य बुद्धेर्भ्रंशो जातः? इति चेच्छृणु तं दृष्टान्तमित्यभिप्रायेणाऽऽह – निबोधेति। हि निश्चयेन साधूनामपि चेतांसि युगभावात् युगप्रभावात् भ्रमन्ति मोहं प्राप्नुवन्ति, तत्र वक्ष्यमाणं दृष्टान्तं निबोध शृण्वित्यर्थः। तिलक.

**पितुर्यथा ते राजेन्द्र बुद्धिर्विप्रावहेलने।**
**कृता वै कलिना राजन्धर्मज्ञस्य महात्मनः।।**
**अन्यथा क्षत्रियो राजा ययातिकुलसंभवः।**
**तापसस्य गले सर्पं मृतं कस्मादयोजयत्।।**
**सर्वं युगबलं राजन्वेदितव्यं विजानता।**
**प्रयत्नेन हि कर्तव्यं धर्मकर्म विशेषतः।।**

यस्मादेवं तस्मादाह – प्रयत्नेनेति। सावधानेन चेतसेत्यर्थः। तिलक.

**नूनं सत्ययुगे राजन्ब्राह्मणा वेदपारगाः।**
**पराशक्त्यर्चनरता देवीदर्शनलालसाः।।**

अथ युगधर्मानाह – नूनमिति। पराशक्त्यर्चनं पूजा-जपध्यानादि, तस्मिन् रताः। तिलक.

**गायत्रीप्रणवासक्ता गायत्रीध्यानकारिणः।**
**गायत्रीजपसंसक्ता मायाबीजैकजापिनः।।**

गायत्र्यासक्ताः प्रणवासक्ताश्चेत्यर्थः। मायाबीजं भुवनेश्वरीमन्त्रः, तस्यैकजापिनः मुख्यत्वेन जपशीलाः। तिलक.

**ग्रामे ग्रामे पराम्बायाः प्रासादकरणोत्सुकाः।**
**स्वकर्मनिरताः सर्वे सत्यशौचदयान्विताः।।**
**त्रय्युक्तकर्मनिरतास्तत्त्वज्ञानविशारदाः।**
**अभवन्क्षत्रियास्तत्र प्रजाभरणतत्पराः।।**
**वैश्यास्तु कृषिवाणिज्यगोसेवानिरतास्तथा।**
**शूद्राः सेवापरास्तत्र पुण्ये सत्ययुगे नृप।।**
**पराम्बापूजनासक्ताः सर्वे वर्णाः परे युगे।**
**तथा त्रेतायुगे किंचिन्न्यूना धर्मस्य संस्थितिः।।**

परे युगे सत्ये सर्वेऽपि वर्णाः पराम्बापूजनासक्ता भवन्तीत्यर्थः।

तिलक.

**द्वापरे च विशेषेण न्यूना सत्ययुगस्थितिः।**
**पूर्वं ये राक्षसा राजंस्ते कलौ ब्राह्मणाः स्मृताः।।**

प्रसङ्गेनावान्तरं कलौ किंचिद्विशेषमाह – पूर्वं ये राक्षसा इति। तेऽपि कलियुगे धर्मनाशार्थं ब्राह्मणा भवन्तीत्यर्थः। तिलक.

**पाखण्डनिरताः प्रायो भवन्ति जनवञ्चकाः।**
**असत्यवादिनः सर्वे वेदधर्मविवर्जिताः।।**
**दाम्भिका लोकचतुरा मानिनो वेदवर्जिताः।**
**शूद्रसेवापराः केचिन्नानाधर्मप्रवर्तकाः।**
**वेदनिन्दाकराः क्रूरा धर्मभ्रष्टातिवादुकाः।।**
**यथा यथा कलिर्वृद्धिं याति राजंस्तथा तथा।**
**धर्मस्य सत्यमूलस्य क्षयः सर्वात्मना भवेत्।।**
**तथैव क्षत्रिया वैश्याः शूद्राश्च धर्मवर्जिताः।**
**असत्यवादिनः पापास्तथा वर्णेतराः कलौ।।**
**शूद्रधर्मरता विप्राः प्रतिग्रहपरायणाः।**
**भविष्यन्ति कलौ राजन्युगे वृद्धिं गताः (? ते) किल।।**
**कामचाराः स्त्रियः कामलोभमोहसमन्विताः।**
**पापा मिथ्याभिवादिन्यः सदा क्लेशरता नृप।।**

कामचाराः यथेष्टाचारवत्यः। तिलक.

**स्वभर्तृवञ्चका नित्यं धर्मभाषणपण्डिताः।**
**भवन्त्येवंविधा नार्यः पापिष्ठाश्च कलौ युगे।।**
**आहारशुद्ध्या नृपते चित्तशुद्धिस्तु जायते।**
**शुद्धे चित्ते प्रकाशः स्याद्धर्मस्य नृपसत्तम।।**

ननु यदि धर्मः श्रेष्ठः तर्हि किमिति कलौ धर्मं नाऽऽचरन्ति? तत्राऽऽह – आहारशुद्ध्येति। शुद्धे चित्त इति। आहारशुद्ध्या सत्त्वशुद्धिस्तच्छुद्धौ धर्मप्रकाशः। तथा च कलावाहारशुद्ध्याद्यभावान्न धर्मबुद्धिर्जायते इत्यर्थः। तथा च छान्दोग्यश्रुतिः – 'आहारशुद्ध्या सत्त्वशुद्धिस्तच्छुद्धौ ध्रुवा स्मृतिः' (छाउ. ७।२६।२) इति।

तिलक.

**वृत्तसंकरदोषेण जायते धर्मसंकरः।**
**धर्मस्य संकरे जाते नूनं स्याद्वर्णसंकरः॥**

धर्मबुद्ध्यभावे को दोषः? तत्राऽऽह – वृत्तसंकरेति। वृत्तं वर्णाश्रमाचारः, तत्संकरदोषेण धर्मसंकरो भवतीत्यर्थः। ब्राह्मणाचरणं शूद्रेण, शूद्राचरणं ब्राह्मणेन कृतं चेद्धर्मसंकरो भवत्येवेति भावः। तिलक.

**एवं कलियुगे भूप सर्वधर्मविवर्जिते।**
**स्ववर्णधर्मवार्तैषा न कुत्राप्युपलभ्यते॥**

कलियुगे देव्युपासनैव पापनिष्कृत्युपायः,
देव्याः अजपामन्त्रं गायत्रीमन्त्रं
च जपतामपि तन्मन्त्र-
महिमज्ञानाभावः

**महान्तोऽपि च धर्मज्ञा अधर्मं कुर्वते नृप।**
**कलिस्वभाव एवैष परिहार्यो न केनचित्॥**
**तस्मादत्र मनुष्याणां स्वभावात्पापकारिणाम्।**
**निष्कृतिर्न हि राजेन्द्र सामान्योपायतो भवेत्॥**

**जनमेजय उवाच –**

**भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद।**
**कलावधर्मबहुले नराणां का गतिर्भवेत्।**
**यद्यस्ति तदुपायश्चेद्दयया तं वदस्व मे॥**

पापनिष्कृत्युपायं राजा पृच्छति – भगवन्सर्वधर्मज्ञेति।

तिलक.

**व्यास उवाच –**

**एक एव महाराज तत्रोपायोऽस्ति नापरः।**
**सर्वदोषनिरासार्थं ध्यायेद्देवीपदाम्बुजम्॥**

देवीपदाम्बुजं मायाविशिष्टब्रह्मरूपिण्या देव्याः पदाम्बुजमित्यर्थः। तिलक.

**न सन्त्यघानि तावन्ति यावती शक्तिरस्ति हि।**
**नाम्नि देव्याः पापदाहे तस्माद्भीतिः कुतो नृप॥**

देव्या नाम्नि पापदाहे पापदाहविषये यावती शक्तिरस्ति तावन्ति अघानि पापानि नैव सन्तीत्यर्थः। यस्मादेवं तस्मात्कलियुगात् भीतिः भयं कुतो भवति? कलियुगभये न किंचित्कारणमस्तीत्यर्थः। तिलक.

**अवशेनापि यन्नाम लीलयोच्चारितं यदि।**
**किं किं ददाति तज्ज्ञातुं समर्था न हरादयः॥**
**प्रायश्चित्तं तु पापानां श्रीदेवीनामसंस्मृतिः।**
**तस्मात्कलिभयाद्राजन्पुण्यक्षेत्रे वसन्नरः।**
**निरन्तरं पराम्बाया नामसंस्मरणं चरेत्॥**

नामस्मरणं चरेत् कुर्यादित्यर्थः। तिलक.

**छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत्।**
**देवीं नमति भक्त्या यो न स पापैर्विलिप्यते॥**
**रहस्यं सर्वशास्त्राणां मया राजन्नुदीरितम्।**
**विमृश्यैतदशेषेण भज देवीपदाम्बुजम्॥**
**अजपां नाम गायत्रीं जपन्ति निखिला जनाः।**
**महिमानं न जानन्ति मायाया वैभवं महत्॥**

इदानीं सर्वे प्राणिनः पराशक्तिमन्त्रमजपाख्यं निरन्तरं जपन्ति जन्मन आरभ्य मरणपर्यन्तम्, तथाऽप्ययं मन्त्रोऽस्तीति मायाकृतमोहेन न जानन्ति, ततो न मुक्ता भवन्तीत्याह – मायाया वैभवमिति। जनानाक्रोशति अजपां नाम गायत्रीमिति। तदुक्तम् – 'अजपां नाम गायत्रीं जीवो जपति नित्यशः। अजपां जपतो नित्यं पुनर्जन्म न विद्यते॥' इति। अजपामन्त्रविधानं तु दक्षिणामूर्तिसंहितायां स्पष्टम्।

तिलक.

**गायत्रीं ब्राह्मणाः सर्वे जपन्ति हृदयान्तरे।**
**महिमानं न जानन्ति मायाया वैभवं महत्॥**

यथाऽजपां सर्वे जपन्ति तथैव गायत्रीमपि सर्वे ब्राह्मणा जपन्ति, तथाऽपि तस्या महिमानं न जानन्ति, ततो न मुक्ता भवन्तीत्याह – गायत्रीमिति। गायत्रीमहिमा तु सर्वत्रैव प्रसिद्धः। उपपादितश्चास्माभिर्बृहदारण्यकटीकायां सप्तमाध्याय इति। तिलक.

**एतत्सर्वं समाख्यातं यत्पृष्टं तत्त्वया नृप।**
**युगधर्मव्यवस्थायां किं भूयः श्रोतुमर्हसि॥**

पञ्चसहस्रवर्षपरिमिते कलौ गते काशीवृन्दावनाति-
रिक्तसर्वतीर्थानां वैकुण्ठगमनम्, दशसहस्रवर्ष-
परिमिते कलौ गते विष्णुशिवशक्तीनां
तदुपासकानां वेदशास्त्रादीनां च
स्वस्वस्थानगमनम्, विस्तरेण
कलियुगीयचराचर-
वृत्तकथनम्

**[1]कलेः पञ्चसहस्रे च गते वर्षे च मोक्षणम्।**
**युष्माकं सरितां चैव मद्गेहे चाऽऽगमिष्यथ।।**
**[2]कलेः पञ्चसहस्रं च वर्षं स्थित्वा च भारते।**
**जग्मुस्ताश्च सरिद्रूपं विहाय श्रीहरेः पदम्।।**

एता नद्यः कियत्पर्यन्तमत्र स्थास्यन्तीति चेत् तत्राऽऽह-कलेरिति। जग्मुः गमिष्यन्ति इत्यर्थः। हरेः पदं वैकुण्ठम्। तिलक.

**यानि सर्वाणि तीर्थानि काशीं वृन्दावनं विना।**
**यास्यन्ति सार्धं ताभिश्च वैकुण्ठमाज्ञया हरेः।।**

काशीं वृन्दावनं विनेति। इदं क्षेत्रद्वयं तु प्रलयपर्यन्तं लोकोद्धाराय भूमावेव स्थास्यतीति भावः। तिलक.

**शालग्रामः शक्तिशिवौ जगन्नाथश्च भारतम्।**
**कलेर्दशसहस्रान्ते त्यक्त्वा यान्ति निजं पदम्।।**

जगन्नाथः पुरुषोत्तमः। शक्तिशिवौ। शक्तिशिवमूर्ति-स्थापना न स्यादित्यर्थः। भारतं भारतखण्डं त्यक्त्वेत्यन्वयः। निजं पदं स्वस्थानम्। तिलक.

**साधवश्च पुराणानि शङ्खानि श्राद्धतर्पणे।**
**वेदोक्तानि च कर्माणि ययुस्तैः सार्धमेव च।।**

शाक्तशैववैष्णवाद्याः साधवः। शङ्खानि। क्लीबत्व-मार्षम्। ययुः यास्यन्तीत्यर्थः। तिलक.

**देवपूजा देवनाम तत्कीर्तिगुणकीर्तनम्।**
**वेदाङ्गानि च शास्त्राणि ययुस्तैः सार्धमेव च।।**

देवपूजा देवादीनां पूजा, तेषामेव नाम, तेषामेव कीर्तीनां गुणानां च कीर्तनम्। तिलक.

**सन्तश्च सत्यधर्मश्च वेदाश्च ग्रामदेवताः।**
**व्रतं तपश्चानशनं ययुस्तैः सार्धमेव च।।**

अनशनं व्रतम्। तिलक.

**वामाचाररताः सर्वे मिथ्याकपटसंयुताः।**
**तुलसीरहिता पूजा भविष्यति ततः परम्।।**

वामाचारः मद्यमांसनिषेवणादिः। कामाचाररता इत्यपि पाठः। यथेष्टाचाररता इति तत्पक्षेऽर्थः। तिलक.

**शठाः क्रूरा दाम्भिकाश्च महाहंकारसंयुताः।**
**चोराश्च हिंसकाः सर्वे भविष्यन्ति ततः परम्।।**
**पुंसो( ? सां)भेद स्त्रीविभेदो विवाहो वाऽपि निर्भयः।**
**स्वस्वामिभेदो वस्तूनां भविष्यति ततः परम्।।**

पुंसां परस्परं भेदः मित्रत्वाभाव इत्यर्थः। यद्वा स्त्रीपुंसभेद एव केवलं स्थास्यति, न तु जातिभेद इत्यर्थः। अत एव जातिभेदाभावाद्विवाहः सर्वस्त्रीभिः सह सर्वपुरुषाणां निर्भयः स्यादित्यर्थः। स्वस्वामिभेद इति। पितुः वस्तु पितुरेव, पुत्रस्य वस्तु पुत्रस्यैव, न परस्परं दास्यन्तीत्यर्थः। तिलक.

**सर्वे स्त्रीवशगाः पुंसः पुंश्चल्यश्च गृहे गृहे।**
**तर्जनैर्भर्त्सनैः शश्वत्स्वामिनं ताडयन्ति च।।**
**गृहेश्वरी च गृहिणी गृही भृत्याधिकोऽधमः।**
**चेटीदाससमौ वध्वाः श्वश्रूश्च श्वशुरस्तथा।।**

भृत्याधिकः भृत्यापेक्षयाऽप्यधिकः अधमः गृही गृह-स्वामीत्यर्थः। वध्वाः स्नुषायाः श्वश्रूः चेटीसमा दासीसमा श्वशुरः च दाससमः स्यादित्यर्थः। तिलक.

**कर्तारो बलिनो गेहे योनिसंबन्धिबान्धवाः।**
**विद्यासंबन्धिभिः सार्धं संभाषाऽपि न विद्यते।।**

योनिसंबन्धिनः स्त्रीसंबन्धिनो बान्धवा गृहेषु कर्तारो न स्वबान्धवाः। विद्यासंबन्धिभिः सतीर्थ्यैः। तिलक.

**यथाऽपरिचिता लोकास्तथा पुंसश्च बान्धवाः।**
**सर्वकर्माक्षमाः पुंसो योषितामाज्ञया विना।।**

पुंसः गृहस्वामिनः बान्धवाः यथा परिचयरहिता लोका-स्तथा भविष्यन्तीत्यर्थः। सर्वकर्माक्षमाः सर्वकर्माणि कर्तुम् अक्षमाः असमर्थाः। तिलक.

**ब्रह्मक्षत्रविशः शूद्रा जात्याचारविवर्जिताः।**
**संध्या च यज्ञसूत्रं च भवेल्लुप्तं न संशयः।।**

जात्याचारविवर्जिताः ते ते वर्णा इत्यर्थः। तिलक.

(१) **देवीभा.** ९।७।२१.
(२) **देवीभा.** ९।८।१०-६५.

**म्लेच्छाचारा भविष्यन्ति वर्णाश्चत्वार एव च।**
**म्लेच्छशास्त्रं पठिष्यन्ति स्वशास्त्राणि विहाय च।।**
**ब्रह्मक्षत्रविशां वंशाः शूद्राणां सेवकाः कलौ।**
**सूपकारा धावकाश्च वृषवाहाश्च सर्वशः।।**

सूपकाराः शूद्राणामन्नपाचका इत्यर्थः। तेषामेव धावकाः वस्त्रक्षालकाः। तिलक.

**सत्यहीना जनाः सर्वे सस्यहीना च मेदिनी।**
**फलहीनाश्च तरवोऽपत्यहीनाश्च योषितः।।**
**क्षीरहीनास्तथा गावः क्षीरं सर्पिर्विवर्जितम्।**
**दंपती प्रीतिहीनौ च गृहिणः सत्यवर्जिताः।।**
**प्रतापहीना भूपाश्च प्रजाश्च करपीडिताः।**
**जलहीना महानद्यो दीर्घिकाकन्दरादयः।।**

दीर्घिकाः अल्पनद्यः। तिलक.

**धर्महीनाः पुण्यहीना वर्णाश्चत्वार एव च।**
**लक्षेषु पुण्यवान्कोऽपि न तिष्ठति ततः परम्।।**
**कुत्सिता विकृताकारा नरा नार्यश्च बालकाः।**
**कुवार्ता कुत्सितः शब्दो भविष्यति ततः परम्।।**
**केचिद्ग्रामाश्च नगरा नरशून्या भयानकाः।**
**केचित्स्वल्पकुटीरेण नरेण च समन्विताः।।**

ह्रस्वा कुटी कुटीरः। तिलक.

**अरण्यानि भविष्यन्ति ग्रामेषु नगरेषु च।**
**अरण्यवासिनः सर्वे जनाश्च करपीडिताः।।**

करपीडिताः। राजग्राह्यो भागः करः। तिलक.

**सस्यानि च भविष्यन्ति तडागेषु नदीषु च।**
**प्रकृष्टवंशजा हीना भविष्यन्ति कलौ युगे।।**

तडागेषु, अन्यत्र वृष्ट्यभावात्तेषु भविष्यन्ति। प्रकृष्टवंशजाः कुलीनाः हीनाः नीचाः भविष्यन्ति। तिलक.

**अलीकवादिनो धूर्ताः शठाश्चासत्यवादिनः।**
**प्रकृष्टानि च क्षेत्राणि सस्यहीनानि नारद।।**
**हीनाः प्रकृष्टा धनिनो देवभक्ताश्च नास्तिकाः।**
**हिंसकाश्च दयाहीनाः पौराश्च नरघातिनः।।**

ये देवभक्तास्ते नास्तिका भविष्यन्ति। अदेवभक्ता इति वा छेदः। तिलक.

**वामना व्याधियुक्ताश्च नरा नार्यश्च सर्वतः।**
**स्वल्पायुषो गदायुक्ता यौवने रहिताः कलौ।।**

गदैः रोगैः आयुक्ताः संबद्धाः। तिलक.

**पलिताः षोडशे वर्षे महावृद्धाश्च विंशतौ।**
**अष्टवर्षा च युवती रजोयुक्ता च गर्भिणी।।**
**वत्सरान्तप्रसूता स्त्री षोडशे च जरान्विता।**
**पतिपुत्रवती काचित्सर्वा वन्ध्याः कलौ युगे।।**
**कन्याविक्रयिणः सर्वे वर्णाश्चत्वार एव च।**
**मातृजायावधूनां च जारोपेतान्नभक्षकाः।।**

वधूः स्नुषा। एतासां जारैः उपेतानि दत्तानि अन्नानि, तेषां भक्षकाः। तिलक.

**कन्यानां भगिनीनां वा जारोपात्तान्नजीविनः।**
**हरेर्नाम्नां विक्रयिणो भविष्यन्ति कलौ युगे।।**

हरेर्नाम जपित्वा तज्जन्यं पुण्यं द्रव्यं गृहीत्वा विक्रेष्यन्तीत्यर्थः। तिलक.

**स्वयमुत्सृज्य दानं च कीर्तिवर्धनहेतवे।**
**ततः पश्चात्स्वदानं च स्वयमुल्लङ्घयिष्यति।।**

प्रथमतः दानं कीर्त्यर्थं करिष्यति, न त्वीश्वरप्रीत्यर्थम्। ततः पश्चात् अनन्तरं यद्दत्तं गवादिदानं तत्स्वयम् उल्लङ्घयिष्यति 'मया न ब्राह्मणाय दत्तम्' इत्युक्त्वा ब्राह्मणादपहरिष्यति। तिलक.

**देववृत्तिं ब्रह्मवृत्तिं वृत्तिं गुरुकुलस्य च।**
**स्वदत्तां परदत्तां वा सर्वमुल्लङ्घयिष्यति।।**

देववृत्तिं देवजीविकाम्। तिलक.

**कन्यकागामिनः केचित्केचिच्च श्वश्रुगामिनः।**
**केचिद्वधूगामिनश्च केचिद्वै सर्वगामिनः।।**
**भगिनीगामिनः केचित्सपत्नीमातृगामिनः।**
**भ्रातृजायागामिनश्च भविष्यन्ति कलौ युगे।।**
**अगम्यागमनं चैव करिष्यन्ति गृहे गृहे।**
**मातृयोनिं परित्यज्य विहरिष्यन्ति सर्वतः।।**
**पत्नीनां निर्णयो नास्ति भर्तॄणां च कलौ युगे।**
**प्रजानां चैव ग्रामाणां वस्तूनां च विशेषतः।।**

कस्य का पत्नी? तस्याः को वा भर्ता? इति न निर्णयः, सर्वेषां परस्परं पत्नीभर्तृभावात्। वस्तूनां च विशेषतो न निर्णय इत्यर्थः। तिलक.

**अलीकवादिनः सर्वे सर्वे चोराश्च लम्पटाः।**
**परस्परं हिंसकाश्च सर्वे च नरघातिनः।।**
**ब्रह्मक्षत्रविशां वंशा भविष्यन्ति च पापिनः।**
**लाक्षालोहरसानां च व्यापारं लवणस्य च।।**
**वृषवाहा विप्रवंशाः शूद्राणां शवदाहिनः।**
**शूद्रान्नभोजिनः सर्वे सर्वे च वृषलीरताः।।**
**पञ्चयज्ञविहीनाश्च कुहूरात्रौ च भोजिनः।**
**यज्ञसूत्रविहीनाश्च संध्याशौचविहीनकाः।।**

कुहूरात्रिः अमावास्यारात्रिः। तिलक.

**पुंश्चली वार्धुषाजीवा कुट्टनी च रजस्वला।**
**विप्राणां रन्धनागारे भविष्यति च पाचिका।।**

कुट्टनीत्यत्र कुटिनीत्यपि क्वचित्पाठः। तदा कुष्ठवतीत्यर्थः। रन्धनागारे पाकशालायाम्। तिलक.

**अन्नानां नियमो नास्ति योनीनां च विशेषतः।**
**आश्रमाणां जनानां च सर्वे म्लेच्छाः कलौ युगे।।**

योनीनां स्त्रीणां जनानामाश्रमाणां च न नियम इत्यर्थः। तिलक.

**एवं कलौ संप्रवृत्ते सर्वं म्लेच्छमयं भवेत्।**
**हस्तप्रमाणे वृक्षे च अङ्गुष्ठे चैव मानवे।।**

मानवे मनुष्ये अङ्गुष्ठे अङ्गुष्ठप्रमाणे वृक्षे च हस्तप्रमाणे जाते सति। कलियुगशेषे वृक्षमनुष्या एतत्प्रमाणा भविष्यन्तीत्यर्थः। तिलक.

कलियुगान्तकाले कल्केरवतारः, तत्कृतः सर्वम्लेच्छसंहारः, वर्षधाराप्लुतायाः पृथिव्याः द्वादशादित्यैः शोषणम्, ततः कृतयुगप्रवृत्तिः, कृतयुगीयलोकवृत्तकथनम्

**विप्रस्य विष्णुयशसः पुत्रः कल्किर्भविष्यति।**
**नारायणकलांशश्च भगवान् बलिनां वरः।।**

विष्णुयशा नाम कश्चिद्ब्राह्मणः। तिलक.

**दीर्घेण करवालेन दीर्घघोटकवाहनः।**
**म्लेच्छशून्यां च पृथिवीं त्रिरात्रेण करिष्यति।।**

घोटकः अश्वः। तिलक.

**निर्म्लेच्छां वसुधां कृत्वा चान्तर्धानं करिष्यति।**
**अराजका च वसुधा दस्युग्रस्ता भविष्यति।।**

कल्केरन्तर्धानोत्तरं वृत्तमाह – अराजकेति। तिलक.

**स्थूलाऽप्रमाणा षड्रात्रं वर्षधाराप्लुता मही।**
**लोकशून्या वृक्षशून्या गृहशून्या भविष्यति।।**

स्थूला स्थूलरूपा मही। अप्रमाणा बहुविस्तीर्णेत्यर्थः। षड्रात्रम्,अत्यन्तसंयोगे द्वितीया। षड्रात्रव्यापकवर्षधाराभिराप्लुता सती लोकशून्येत्यर्थः। तिलक.

**ततश्च द्वादशादित्याः करिष्यन्त्युदयं मुने।**
**प्राप्नोति शुष्कतां पृथ्वी समा तेषां च तेजसा।।**
**कलौ गते च दुर्धर्षे प्रवृत्ते च कृते युगे।**
**तपःसत्त्वसमायुक्तो धर्मः पूर्णो भविष्यति।।**

इत्थं कलेरवसाने जाते पश्चात्पुनः कृतयुगं प्रवर्तते इत्याह – कलौ गते इति। तिलक.

**तपस्विनश्च धर्मिष्ठा वेदज्ञा ब्राह्मणा भुवि।**
**पतिव्रताश्च धर्मिष्ठा योषितश्च गृहे गृहे।।**
**राजानः क्षत्रियाः सर्वे विप्रभक्ता मनस्विनः।**
**प्रतापवन्तो धर्मिष्ठाः पुण्यकर्मरताः सदा।।**
**वैश्या वाणिज्यनिरता विप्रभक्ताश्च धार्मिकाः।**
**शूद्राश्च पुण्यशीलाश्च धर्मिष्ठा विप्रसेविनः।।**
**विप्रक्षत्रविशां वंशा देवीभक्तिपरायणाः।**
**देवीमन्त्ररताः सर्वे देवीध्यानपरायणाः।।**

सर्वेऽपि कृतयुगे देवीभक्ताः सर्वकारणमूलप्रकृतिभक्ताः भविष्यन्तीत्यर्थः। देवीमन्त्राः मायाबीजादयः, तेषु निरताः। तथा देवीध्यानं तृतीयस्कन्धादिषूक्तम्, तत्परायणाः। तच्चानेकविधम्। तदुक्तं यामले – 'स्त्रीरूपां चिन्तयेद्देवीं पुंरूपां वा विचिन्तयेत्। अथवा निष्कलं ध्यायेत्सच्चिदानन्दविग्रहम्।।' इति। पुंरूपां विराड्रूपामित्यर्थः। तिलक.

**श्रुतिस्मृतिपुराणज्ञाः पुमांस ऋतुगामिनः।**
**लेशो नास्ति ह्यधर्मस्य पूर्णो धर्मः कृते युगे।।**

धर्मः पूर्णः चतुष्पादित्यर्थः। तिलक.

**धर्मस्त्रिपाच्च त्रेतायां द्विपाच्च द्वापरे ततः।**
**कलौ वृत्ते चैकपाच्च सर्वलुप्तिस्ततः परम्।।**

उत्तरोत्तरमेकैकपादह्रास इत्याह – धर्मस्त्रिपादिति। तिलक.

## शिवपुराणम्

### चातुर्वर्ण्यस्य संकराणां स्त्रीणां पुत्राणां च क्रमेण कलि-प्रयुक्तवृत्तकथनम्

[1]प्राप्ते कलियुगे घोरे नराः पुण्यविवर्जिताः।
दुराचाररताः सर्वे सत्यवार्तापराङ्मुखाः।।
परापवादनिरताः परद्रव्याभिलाषिणः।
परस्त्रीसक्तमनसः परहिंसापरायणाः।।
देहात्मदृष्टयो मूढा नास्तिकाः पशुबुद्धयः।
मातृपितृकृतद्वेषाः स्त्रीदेवाः कामकिंकराः।।
विप्रा लोभग्रहग्रस्ता वेदविक्रयजीविनः।
धनार्जनार्थमभ्यस्तविद्या मदविमोहिताः।।
त्यक्तस्वजातिकर्माणः प्रायशः परवञ्चकाः।
त्रिकालसंध्यया हीना ब्रह्मबोधविवर्जिताः।।
अदयाः पण्डितंमन्याः स्वाचारव्रतलोपकाः।
कृष्युद्यमरताः क्रूरस्वभावा मलिनाशयाः।।
क्षत्रियाश्च तथा सर्वे स्वधर्मत्यागशीलिनः।
असत्सङ्गाः पापरता व्यभिचारपरायणाः।।
अशूरा अरणप्रीताः पलायनपरायणाः।
कुचौरवृत्तयः शूद्राः कामकिंकरचेतसः।।
शस्त्रास्त्रविद्यया हीना धेनुविप्रा वनोज्झिताः।
शरण्या वनहीनाश्च कामिन्यूतिमृगाः सदा।।
प्रजापालनसद्धर्मविहीना भोगतत्पराः।
प्रजासंहारका दुष्टा जीवहिंसाकरा मुदा।।
वैश्याः संस्कारहीनास्ते स्वधर्मत्यागशीलिनः।
कुपथाः स्वार्जनरतास्तुलाकर्मकुवृत्तयः।।
गुरुदेवद्विजातीनां भक्तिहीनाः कुबुद्धयः।
अभोजितद्विजाः प्रायः कृपणा बद्धमुष्टयः।।
कामिनीजारभावेषु सुरता मलिनाशयाः।
लोभमोहविचेतस्काः पूर्तादिषु वृषोज्झिताः।।
तद्वच्छूद्राश्च ये केचिद्ब्राह्मणाचारतत्पराः।
उज्ज्वलाकृतयो मूढाः स्वधर्मत्यागशीलिनः।।
कर्तारस्तपसां भूयो द्विजतेजोपहारकाः।
शिश्वल्पमृत्युकाराश्च मन्त्रोच्चारपरायणाः।।
शालग्रामशिलादीनां पूजका होमतत्पराः।
प्रतिकूलविचाराश्च कुटिला द्विजदूषकाः।।
धनवन्तः कुकर्माणो विद्यावन्तो विवादिनः।
आख्यायोपासनाधर्मवक्तारो धर्मलोपकाः।।
सुभूपाकृतयो दम्भाः सुदातारो महामदाः।
विप्रादीन्सेवकान्मत्वा मन्यमाना निजं प्रभुम्।।
स्वधर्मरहिता मूढाः संकराः क्रूरबुद्धयः।
महाभिमानिनो नित्यं चतुर्वर्णविलोपकाः।।
सुकुलीनान्निजान्मत्वा चतुर्वर्णैर्विवर्तनाः।
सर्ववर्णभ्रष्टकरा मूढाः सत्कर्मकारिणः।।
स्त्रियश्च प्रायशो भ्रष्टा भर्त्रवज्ञानकारिकाः।
श्वशुरद्रोहकारिण्यो निर्भया मलिनासनाः।।
कुहावभावनिरताः कुशीलाः स्मरविह्वलाः।
जारसङ्गरता नित्यं स्वस्वामिविमुखास्तथा।।
तनया मातृपित्रोश्च भक्तिहीना दुराशयाः।
अविद्यापाठका नित्यं रोगग्रसितदेहकाः।।

### युगभेदप्रयुक्तो धर्मभेदो रत्नादिमयशिवलिङ्गभेदश्च, सर्वेषु युगेषु कलौ च विशेषतो भक्तिः शरणम्, युगेषूत्तरोत्तरं पादशो धर्मह्रासः

[1]कृतादौ हि तपः श्लाघ्यं द्रव्यधर्मः कलौ युगे।
कृते ध्यानाज्ज्ञानसिद्धिस्त्रेतायां तपसा तथा।
द्वापरे यजनाज्ज्ञानं प्रतिमापूजया कलौ।।
[2]कृते पूर्णफलं ज्ञेयं यज्ञदानादिकं तथा।
त्रेतायुगे त्रिपादं च द्वापरेऽर्धं सदा स्मृतम्।
कलौ पादं तु विज्ञेयं तत्पादोनं ततोऽर्धके।।
[3]कृते रत्नमयं लिङ्गं त्रेतायां हेमसंभवम्।
द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे।।
[4]त्रैलोक्ये भक्तिसदृशः पन्था नास्ति सुखावहः।
चतुर्युगेषु देवेशि कलौ तु सुविशेषतः।।
कलौ तु ज्ञानवैराग्यौ वृद्धरूपौ निरुत्सवौ।
ग्राहकाभावतो देवि जातौ जर्जरतामति।।

---

(१) शिव. १।१।१२-३४.

(१) शिव. १।१३।५४-५५.
(२) शिव. १।१५।६-७.
(३) शिव. १।१९।७.
(४) शिव. २।२३।३८-४०.

**कलौ प्रत्यक्षफलदा भक्तिः सर्वयुगेष्वपि।**
**तत्प्रभावादहं नित्यं तद्वशो नात्र संशयः।।**
**[1]सत्ये पूर्णश्चतुष्पादः पौर्णमास्यां यथा शशी।**
**विराजसे देवराज† सर्वकालं दिवानिशम्।।**
**त्वं च नष्टो भवसि चेत्सृष्टिनाशो भवेत्तदा।**
**इतिकर्तव्यतामूढा वृथाऽपि च वदाम्यहम्।।**
**पादक्षयश्च भविता त्रेतायां च सुरोत्तम।**
**पादोऽपरे द्वापरे च तृतीयोऽपि कलौ विभो।।**
**कलिशेषेऽखिलाश्छिन्ना भविष्यन्ति तवाङ्घ्रयः।**
**पुनः सत्ये समायाते परिपूर्णो भविष्यसि।।**
**सत्ये सर्वव्यापकस्त्वं तदन्येषु च कुत्रचित्।**
**युगव्यवस्थया स त्वं भविष्यसि तथा तथा।।**

जैनधर्मप्रवर्तकमरिहन्नामकमुनिं तच्छिष्यांश्च प्रति तद्बलनिनाशयिषया विष्ण्वादिभिः कृतः कलियुगे वेदविरुद्ध-धर्मप्रसारोपदेशः

**§[2]ततश्चैव पुनर्गत्वा मरुस्थल्यां त्वया विभो।**
**स्थातव्यं च स्वधर्मेण कलिर्यावत्समाव्रजेत्।।**
**प्रवृत्ते तु युगे तस्मिन्स्वीयो धर्मः प्रकाश्यताम्।**
**शिष्यैश्च प्रतिशिष्यैश्च वर्तनीयस्त्वया पुनः।।**
**'अद्यतो मतमेतं हि प्रविष्टानां नृणां कलौ।**
**कुगतिर्भविता ब्रूमः सत्यं नैवात्र संशयः।।**
**भवद्भिर्मुण्डिनो धीरा गुप्तभावान्ममाज्ञया।**
**तावन्मरुस्थली सेव्या कलिर्यावत्समाव्रजेत्।।**
**आगते च कलौ यूयं स्वमतं स्थापयिष्यथ।**
**कलौ तु मोहिता मूढाः संग्रहीष्यन्ति वो मतम्।।**

वाराहकल्पीयवैवस्वतमन्वन्तरे अष्टाविंशतौ युगचतुष्केषु द्वापरान्तेषु वेदविभाजनादिद्वारा लोकहितार्थं विष्णोर्व्यासरूपेणाष्टाविंश-तिरवतारास्तत्साहाय्यार्थं शिवस्य सशिष्यचतुष्टयस्य मुनिरूपेण कलियुगारम्भेषु अष्टा-विंशतिरवतारास्तेषां सर्वेषां नामानि च

**शिव उवाच –**

**[1]सप्तमे चैव वाराहे कल्पे मन्वन्तराभिधे।**
**कल्पेश्वरोऽथ भगवान्सर्वलोकप्रकाशनः।।**
**मनोर्वैवस्वतस्यैव ते प्रपुत्रो भविष्यति।**
**तदा चतुर्युगाश्चैव तस्मिन्मन्वन्तरे विधे।।**
**अनुग्रहार्थं लोकानां ब्राह्मणानां हिताय च।**
**उत्पश्यामि विधे ब्रह्मन्द्वापराख्ययुगान्तिके।।**
**युगप्रवृत्त्या च तदा तस्मिंश्च प्रथमे युगे।**
**द्वापरे प्रथमे ब्रह्मन्यदा व्यासः स्वयं प्रभुः।।**
**तदाऽहं ब्राह्मणार्थाय कलौ तस्मिन्युगान्तिके।**
**भविष्यामि शिवायुक्तः श्वेतो नाम महामुनिः।।**
**हिमवच्छिखरे रम्ये छागले पर्वतोत्तमे।**
**तदा शिष्याः शिखायुक्ता भविष्यन्ति विधे मम।।**
**श्वेतः श्वेतशिखश्चैव श्वेताश्वः श्वेतलोहितः।**
**चत्वारो ध्यानयोगात्ते गमिष्यन्ति पुरं मम।।**

---

† संबोध्यो धर्मः। वक्त्री पद्मा।

§ एतदादिश्लोकद्वये वक्ता विष्णुः श्रोता च अरिहन्। 'अद्यतः' इत्यादिश्लोकत्रये वक्तारो विष्णुब्रह्मादयः, श्रोतारश्च मुण्डिनोऽरिहन् तच्छिष्याश्च। एतेषां श्लोकानां तात्पर्यबोधार्थमत्र वर्णित इतिहासो बोद्धव्यः। स चेत्थम् – शिवोपासनयाऽत्यन्तबलिनो देवद्विषस्त्रिपुर-निवासिनोऽसुरान् निनाशयिषुर्विष्णुस्तद्बलकारणं शिवोपासनादिरूपो वैदिकधर्म एवेति विचार्य वैदिकधर्मात् तान् प्रभ्रंशयितुमरिहन्ना-मानमेकं पुरुषमसृजत्। स च 'मुण्डिनं म्लानवस्त्रं च गुम्फिपात्र-समन्वितम्। दधानं पुञ्जिकां हस्ते चालयन्तं पदे पदे।। वस्त्रयुक्तं तथा हस्तं क्षीयमाणं मुखे सदा। धर्मेति व्याहरन्तं हि वाचा विक्लवया मुनिम्।।' (शिव. २।५।४।२-३) इति वर्णितः। तं च 'मायिन् मायामयं शास्त्रं तत् षोडशसहस्रकम्। श्रौतस्मार्तविरुद्धं च वर्णाश्रम-विवर्जितम्।। अपभ्रंशमयं शास्त्रं कर्मवादमयं तथा। रचयेति प्रयत्नेन तद्विस्तारो भविष्यति।।' (शिव. २।५।४।१०-११) इति वैदिक-धर्मविरुद्धं शास्त्रं रचयितुं विष्णुः समादिदेशेति। अत्र 'अरिहन्' इति शब्देन नामरूपसादृश्यात् जैनधर्मप्रवर्तकोऽर्हन्नेव विवक्षित इति प्रतीयते। किंच, सः ख्रिस्तशकारम्भात् पूर्वं त्रिभ्यो वर्षसहस्रेभ्यः प्राक् प्रादुरभूदित्यपि गम्यते।

(१) **शिव.** २।३।३५।३८-४२.
(२) **शिव.** २।५।४।२०-२१.

(१) **शिव.** २।५।१२।३०-३२.
(२) **शिव.** ३।४।२-३७.

ततो भ( ? मु)क्ता भविष्यन्ति ज्ञात्वा मां तत्त्वतोऽव्य-
यम्।
जन्ममृत्युजराहीनाः परब्रह्मसमाधयः।।
द्रष्टुं शक्यो नरैर्नाहमृते ध्यानात्पितामह।
दानधर्मादिभिर्वत्स साधनैः कर्महेतुभिः।।
द्वितीये द्वापरे व्यासः सत्यो नाम प्रजापतिः।
यदा तदा भविष्यामि सुतारो नामतः कलौ।।
तत्रापि मे भविष्यन्ति शिष्या वेदविदो द्विजाः।
दुन्दुभिः शतरूपश्च हृषीकः केतुमांस्तथा।।
चत्वारो ध्यानयोगात्ते गमिष्यन्ति पुरं मम।।
ततो मुक्ता भविष्यन्ति ज्ञात्वा मां तत्त्वतोऽव्ययम्।।
तृतीये द्वापरे चैव यदा व्यासस्तु भार्गवः।
तदाऽप्यहं भविष्यामि दमनस्तु पुरान्तिके।।
तत्रापि च भविष्यन्ति चत्वारो मम पुत्रकाः।
विशोकश्च विशेषश्च विपापः पापनाशनः।।
शिष्यैः साहाय्यं व्यासस्य करिष्ये चतुरानन।
निवृत्तिमार्गं सुदृढं वर्तयिष्ये कलाविह।।
चतुर्थे द्वापरे चैव यदा व्यासोऽङ्गिराः स्मृतः।
तदाऽप्यहं भविष्यामि सुहोत्रो नाम नामतः।।
तत्रापि मम ते पुत्राश्चत्वारो योगसाधकाः।
भविष्यन्ति महात्मानस्तन्नामानि ब्रुवे विधे।।
सुमुखो दुर्मुखश्चैव दुद( ? र्द)र्भो दुरतिक्रमः।
शिष्यैः साहाय्यं व्यासस्य करिष्येऽहं तदा विधे।।
पञ्चमे द्वापरे चैव व्यासस्तु सविता स्मृतः।
तदा योगी भविष्यामि कङ्को नाम महातपाः।।
तत्रापि मम ते पुत्राश्चत्वारो योगसाधकाः।
भविष्यन्ति महात्मानस्तन्नामानि शृणुष्व मे।।
सनकः सनातनश्चैव प्रभुर्यश्च सनन्दनः।
विभुः सनत्कुमारश्च निर्मलो निरहंकृतिः।।
तत्रापि कङ्कनामाऽहं साहाय्यं सवितुर्विधे।
व्यासस्य हि करिष्यामि निवृत्तिपथवर्धकः।।
परिवृत्ते पुनः षष्ठे द्वापरे लोककारकः।
कर्ता वेदविभागस्य मृत्युर्व्यासो भविष्यति।।
तदाऽप्यहं भविष्यामि लोकाक्षिर्नाम नामतः।
व्यासस्य सुसहायार्थं निवृत्तिपथवर्धनः।।

तत्रापि शिष्याश्चत्वारो भविष्यन्ति दृढव्रताः।
सुधामा विरजाश्चैव संजयो विजयस्तथा।।
सप्तमे परिवर्ते तु यदा व्यासः शतक्रतुः।
तदाऽप्यहं भविष्यामि जैगीषव्यो विभुर्विधे।।
योगं संदृ( ? द्र)ढयिष्यामि महायोगविचक्षणः।
काश्यां गुहान्तरे संस्थो दिव्यदेशे कुशास्तरिः।।
साहाय्यं च करिष्यामि व्यासस्य हि शतक्रतोः।
उद्धरिष्यामि भक्तांश्च संसारभयतो विधे।।
तत्रापि मम चत्वारो भविष्यन्ति सुता युगे।
सारस्वतश्च योगीशो मेघवाहः सुवाहनः।।
अष्टमे परिवर्ते हि वसिष्ठो मुनिसत्तमः।
कर्ता वेदविभागस्य वेदव्यासो भविष्यति।।
तत्राप्यहं भविष्यामि नामतो दधिवाहनः।
व्यासस्य हि करिष्यामि साहाय्यं योगवित्तम।।
कपिलश्चाऽऽसुरिः पञ्चशिखः शाल्वलपूर्वकः।
चत्वारो योगिनः पुत्रा भविष्यन्ति समा मम।।
नवमे परिवर्ते तु तस्मिन्नेव युगे विधे।
भविष्यति मुनिश्रेष्ठो व्यासः सारस्वताह्वयः।।
व्यासस्य ध्यायतस्तस्य निवृत्तिपथवृद्धये।
तदाऽप्यहं भविष्यामि ऋषभो नामतः स्मृतः।।
पराशरश्च गर्गश्च भार्गवो गिरिशस्तथा।
चत्वारस्तत्र शिष्या मे भविष्यन्ति सुयोगिनः।।
तैः साकं द्रढयिष्यामि योगमार्गं प्रजापते।
करिष्यामि साहाय्यं वै वेदव्यासस्य सन्मुने।।

शिव उवाच –

[1]दशमे द्वापरे व्यासस्त्रिधामा नामतो मुनिः।
हिमवच्छिखरे रम्ये भृगुतुङ्गे नगोत्तमे।।
तत्रापि मम पुत्राश्च भृङ्गाद्याः श्रुतिसंमिताः।
बलबन्धुर्नरामित्रः केतुशृङ्गस्तपोधनः।।
एकादशे द्वापरे तु व्यासश्च त्रिवृतो यदा।
गङ्गाद्वारे कलौ नाम्ना तपोऽहं* भविता तदा।।
लम्बोदरश्च लम्बाक्षः केशलम्बः प्रलम्बकः।
तत्रापि पुत्राश्चत्वारो भविष्यन्ति दृढव्रताः।।

---

* पुरुषव्यत्यय आर्षः। भवितास्मीत्यर्थः। एवमग्रेऽपि।
(१) शिव. ३।५।१-५२.

द्वादशे परिवर्ते तु शततेजाश्च वेदकृत्।
तत्राप्यहं भविष्यामि द्वापरान्ते कलाविह।।
हेमकञ्चुकमासाद्य नाम्ना ह्यत्रिः परिप्लुतः।
व्यासस्यैव साहाय्यार्थं निवृत्तिपथरोपणः।।
सर्वज्ञः समबुद्धिश्च साध्यः शर्वः सुयोगिनः।
तत्रेति पुत्राश्चत्वारो भविष्यन्ति महामुने।।
त्रयोदशे युगे तस्मिन्धर्मो नारायणः सदा।
व्यासस्तदाऽहं भविता बलिर्नाम महामुनिः।।
वालखिल्याश्रमे गन्धमादने पर्वतोत्तमे।
सुधामा काश्यपश्चैव वशिष्ठो विरजाः शुभाः।।
यदा व्यासस्तु रक्षाख्यः पर्याये तु चतुर्दशे।
वंश आङ्गिरसे तत्र भविताऽहं च गौतमः।।
तत्रापि मम ते पुत्रा भविष्यन्ति कलौ तदा।
अत्रिर्देवशदश्चैव श्रवणोऽथ श्रविष्कटः।।
व्यासः पञ्चदशे त्रय्यारुणिर्वै द्वापरे यदा।
तदाऽहं भविता वेदशिरा वेदशिरस्तथा।।
महावीर्यं तदस्त्रं च वेदशीर्षश्च पर्वतः।
हिमवत्पृष्ठमासाद्य सरस्वत्यास्तथोत्तरे।।
तत्रापि मम चत्वारो भविष्यन्ति सुता दृढाः।
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः।।
व्यासो युगे षोडशे तु यदा देवो भविष्यति।
तदा योगप्रदानाय गोकर्णो भविता ह्ययम् (? हम्)।।
तत्रैव च सुपुण्यं च गोकर्णं नाम तद्वनम्।
तत्रापि योगिनः पुत्रा भविष्यन्त्यम्बु (? ब्धि) — संमिताः।।
काश्यपोऽप्युशनाश्चै (? ना चै) व च्यवनोऽथ- बृहस्पतिः।
तेऽपि तेनैव मार्गेण गमिष्यन्ति शिवालयम्।।
परिवर्ते सप्तदशे व्यासो देवकृतंजयः।
गुहावासीति नाम्नाऽहं हिमवच्छिखरे शुभे।।
महालये महोत्तुङ्गे शिवक्षेत्रं हिमालयम्।
उतथ्यो वामदेवश्च महायोगो महाबलः।।
परिवर्तेऽष्टादशे तु यदा व्यास ऋतंजयः।
शिखण्डी नामतोऽहं तद्धिमवच्छिखरे शुभे।।

सिद्धक्षेत्रे महापुण्ये शिखण्डी नाम पर्वतः।
शिखण्डिनो वनं वाऽपि यत्र (? यच्च) सिद्धनिषेवितम्।।
वाचःश्रवा रुचीकश्च श्यावास्यश्च यतीश्वरः।
एते पुत्रा भविष्यन्ति तत्रापि च तपोधनाः।।
एकोनविंशे व्यासस्तु भरद्वाजो महामुनिः।
तदाऽप्यहं भविष्यामि जटी माली च नामतः।।
हिमवच्छिखरे तत्र पुत्रा मेऽम्बुधिसंमिताः।
हिरण्यनामा कौशल्यो लोकाक्षी प्रधिमिस्तथा।।
परिवर्ते विंशतिमे भविता व्यास+ गोतमः।
तत्राट्टहासनामाऽहमट्टहासप्रिया नराः।।
तत्रैव हिमवत्पृष्ठे अट्टहासो महागिरिः।
देवमानुषयक्षेन्द्रसिद्धचारणसेवितः।।
तत्रापि मम ते पुत्रा भविष्यन्ति सुयोगिनः।
सुमन्तुर्वर्वरिर्विद्वान् कबन्धः कुशिकंधरः।।
एकविंशे युगे तस्मिन् व्यासो वाचःश्रवा यदा।
तदाऽहं दारुको नाम तस्माद्दारुवनं शुभम्।।
तत्रापि मम ते पुत्रा भविष्यन्ति सुयोगिनः।
प्लक्षो दार्भायणिश्चैव केतुमान् गौतमस्तथा।।
द्वाविंशे परिवर्ते तु व्यासः शुष्मायणो यदा।
तदाऽप्यहं भविष्यामि वाराणस्यां महामुनिः।।
नाम्ना वै लाङ्गली भीमो यत्र देवाः सवासवाः।
द्रक्ष्यन्ति मां कलौ तस्मिन्भवं चैव हलायुधम्।।
तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्मिकाः।
भल्लवी मधुपिङ्गश्च श्वेतकेतुस्तथैव च।।
परिवर्ते त्रयोविंशे तृणबिन्दुर्यदा मुनिः।
श्वेतो नाम तदाऽहं वै गिरौ कालंजरे शुभे।।
तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः।
उशिको बृहदश्वश्च देवलः कविरेव च।।
परिवर्ते चतुर्विंशे व्यासो यक्षो यदा विभुः।
शूली नाम महायोगी तद्युगे नैमिषे तदा।।
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः।
शालिहोत्रोऽग्निवेशश्च युवनाश्वः शरद्वसुः।।

+ संधिरार्षः।

पञ्चविंशे यदा व्यासः शक्तिर्नाम्ना भविष्यति।
तदाऽप्यहं महायोगी दण्डी(? ण्डि)मुण्डीश्वरः प्रभुः।।
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः।
छगलः कुण्डकर्णश्च कुम्भाण्डश्च प्रवाहकः।।
व्यासः परास(? श)रो यर्हि षड्विंशे भविताऽप्यहम्।
पुरं भद्रवटं प्राप्य सहिष्णुर्नाम नामतः।।
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः।
उलूको विद्युतश्चैव शम्बूको ह्याश्वलायनः।।
सप्तविंशे यदा व्यासो जातूकर्ण्यो भविष्यति।
प्रभासतीर्थमाश्रित्य सोमशर्मा तदाऽप्यहम्।।
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः।
अक्षपादः कुमारश्चोलूको वत्सस्तथैव च।।
अष्टाविंशे द्वापरे तु पराशरसुतो हरिः।
यदा भविष्यति व्यासो नाम्ना द्वैपायनः प्रभुः।।
तदा षष्ठेन चांशेन कृष्णः पुरुषसत्तमः।
वसुदेवसुतश्रेष्ठो वासुदेवो भविष्यति।।
तदाऽप्यहं भविष्यामि योगात्मा योगमायया।
लोकविस्मापनार्थाय ब्रह्मचारिशरीरकः।
श्मशाने मृतमुत्सृज्य(? त्सृष्टं) दृष्ट्वा कायमनामयम्।
ब्राह्मणानां हितार्थाय प्रविष्टो योगमायया।।
दिव्यां मेरुगुहां पुण्यां त्वया सार्धं च विष्णुना।
भविष्यामि तदा ब्रह्मल्लँकुली नाम नामतः।।
कायावतार इत्येवं सिद्धक्षेत्रं परं तदा।
भविष्यति सुविख्यातं यावद्भूमिर्धरिष्यति।।
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः।
कुशिकश्चैव गर्गश्च मित्रस्तौरुष्य एव च।।
योगिनो ब्राह्मणा वेदपारगा ऊर्ध्वरेतसः।
प्राप्य माहेश्वरं योगं गमिष्यन्ति शिवं पुरम्।।
वैवस्वतेऽन्तरे सम्यक् प्रोक्ता हि परमात्मना।
योगेश्वरावताराश्च सर्वावर्तेषु सुव्रताः।।
व्यासाश्चैवाष्टविंशत्का द्वापरे द्वापरे विभो।
योगेश्वरावताराश्च प्रारम्भे च कलौ कलौ।।

महाबलस्य शिवस्य प्रतियुगं वर्णभेदः
कलौ मृदुता च, कलौ पुराणश्रवणं
शिवनामसंकीर्तनं च परमो
धर्मः

[1]कृते युगे स हि श्वेतस्त्रेतायां सोऽतिलोहितः।
द्वापरे पीतवर्णश्च कलौ श्यामो भविष्यति।।
आक्रान्तसप्तपातालकुहरोऽपि महाबलः।
प्राप्ते कलियुगे घोरे मृदुतामुपयास्यति।।
[2]विशेषतः कलौ व्यासपुराणश्रवणादृते।
परो धर्मो न पुंसां हि मुक्तिध्यानपरः स्मृतः।।
पुराणश्रवणं शंभोर्नामसंकीर्तनं तथा।
कल्पद्रुमफलं रम्ये मनुष्याणां न संशयः।।
कलौ दुर्मेधसां पुंसां धर्माचारोज्झितात्मनाम्।
हिताय विदधे शंभुः पुराणाख्यसुधारसम्।।

अष्टाविंशतिद्वापरान्तावतीर्णव्यास-
नामानि शिष्यप्रशिष्य-
सहितयोगेश्वरा-
वताराश्च

[3]ऋभुः सत्यो भार्गवश्च ह्यङ्गिराः सविता द्विजाः।
मृत्युः शतक्रतुर्धीमान्वसिष्ठो मुनिपुंगवः।।
सारस्वतस्त्रिधामा च त्रिवृतो मुनिपुंगवः।
शततेजाः स्वयं धर्मो नारायण इति श्रुतः।।
स्वरक्षश्चाऽऽरुणिर्धीमांस्तथा चैव कृतंजयः।
कृतंजयो भरद्वाजो गौतमः कविरुत्तमः।।
वाचःस्त्रवा मुनिः साक्षात्तथा सूक्ष्मायणिः शुचिः।
तृणबिन्दुर्मुनिः कृष्णः शक्तिः शाक्तेय उत्तरः।।
जातूकर्ण्यो हरिः साक्षात्कृष्णद्वैपायनो मुनिः।
व्यासावताराञ्छृण्वन्तु कल्पयोगेश्वरान्क्रमात्।।
लैङ्गे व्यासावतारा हि द्वापरान्तेषु सुव्रताः।
योगाचार्यावताराश्च तथा शिष्येषु शूलिनः।।
तत्र तत्र विभोः शिष्याश्चत्वारः स्युर्महौजसः।
शिष्यास्तेषां प्रशिष्याश्च शतशोऽथ सहस्रशः।।

(१) शिव. ४।८।८-९.
(२) शिव. ५।१३।३१-३३.
(३) शिव. ७।२।८।४४-५०.

कलौ पञ्चाक्षरमन्त्रः पापहारकः,
कृतादियुगेषु धर्म-
विशेषाः

[1]सदाचारविहीनस्य पतितस्यान्त्यजस्य च।
पञ्चाक्षरात्परं नास्ति परित्राणं कलौ युगे।।
[2]ध्यानं परं कृतयुगे त्रेतायां यजनं तथा।
द्वापरे लिङ्गपूजा च कलौ शंकरकीर्तनम्।।
ज्ञानं परं कृतयुगे प्रतिष्ठा च कलौ युगे।।

## नरसिंहपुराणम्

विस्तरेण कलिदोषप्रयुक्तलोकवृत्तकथनम्,
युगभेदभिन्ना धर्मभेदाः, कलौ फलं
कृताद्यपेक्षयाऽल्पकालसाध्यम्,
कलौ हरिस्मरणं कलि-
बाधानिवर्तकम्

[3]कलिं विस्तरतो ब्रूहि त्वं हि सर्वविदां वर।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च मुनिसत्तम।
किमाहाराः किमाचारा भविष्यन्ति कलौ युगे।।

सूत उवाच –

शृणुध्वमृषयः सर्वे भारद्वाजेन संयुताः।
सर्वे धर्मा विनश्यन्ति कृष्णे कृष्णत्वमागते।
तस्मात्कलिर्महाघोरः सर्वपापस्य साधकः।।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा धर्मपराङ्मुखाः।
घोरे कलियुगे प्राप्ते द्विजा देवपराङ्मुखाः।।
व्याजधर्मरताः सर्वे दम्भाचारपरायणाः।
असूयानिरताश्चैव वृथाहंकारदूषिताः।।
सर्वैः संक्षिप्यते सत्यं नरैः पण्डितगर्वितैः।
अहमेवाधिक इति सर्व एव वदन्ति वै।।
अधर्मलोलुपाः सर्वे तथाऽन्येषां च निन्दकाः।
अतः स्वल्पायुषः सर्वे भविष्यन्ति कलौ युगे।।
अल्पायुष्ट्वान्मनुष्याणां न विद्याग्रहणं द्विजाः।
विद्याग्रहणशून्यत्वादधर्मो वर्तते पुनः।।

ब्राह्मणाद्यास्तथा वर्णाः संकीर्यन्ते परस्परम्।
कामक्रोधपरा मूढा वृथा संतापपीडिताः।
बद्धवैरा भविष्यन्ति परस्परवधेप्सवः।।
ब्राह्मणाः क्षत्रिया वैश्याः सर्वे धर्मपराङ्मुखाः।
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः।
उत्तमा नीचतां यान्ति नीचाश्चोत्तमतां तथा।।
राजानो द्रव्यनिरतास्तथा लोभपरायणाः।
धर्मकञ्चुकसंवीता धर्मविध्वंसकारिणः।।
घोरे कलियुगे प्राप्ते स( ? ख)र्वधर्मसमन्विते।
यो योऽश्वरथनागाढ्यः स स राजा भविष्यति।।
पितॄन् पुत्रा नियोक्ष्यन्ति वध्वः श्वश्रूश्च कर्मसु।
पतीन् पुत्रान्वञ्चयित्वा गमिष्यन्ति स्त्रियोऽन्यतः।।
पुरुषाल्पं बहुस्त्रीकं श्वबाहुल्यं गवां क्षयः।
धनानि श्लाघनीयानि सतां वृत्तमपूजितम्।।
खण्डवर्षी च पर्जन्यः पन्थानस्तस्करावृत्ताः।
सर्वः सर्वं च जानाति वृद्धाननुपसेव्य च।।
न कश्चिदकविर्नाम सुरापा ब्रह्मवादिनः।
किंकराश्च भविष्यन्ति शूद्राणां च द्विजातयः।।
द्विषन्ति पितरं पुत्रा गुरुं शिष्या द्विषन्ति च।
पतिं च वनिता द्वेष्टि कृष्णे कृष्णत्वमागते।।
लोभाभिभूतमनसः सर्वे दुष्कर्मशीलिनः।
परान्नलोलुपा नित्यं भविष्यन्ति द्विजातयः।
परस्त्रीनिरताः सर्वे परद्रव्यपरायणाः।।
घोरे कलियुगे प्राप्ते नरं धर्मपरायणम्।
असूयानिरताः सर्वे उपहासं प्रकुर्वते।।
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः।
न यक्ष्यन्ति न होष्यन्ति हेतुवादैर्विकुत्सिताः।।
द्विजाः कुर्वन्ति दम्भार्थं पितृयज्ञादिकाः क्रियाः।
न पात्रेष्वेव दानानि कुर्वन्ति च नरास्तथा।।
क्षीरोपाधिनिमित्तेन गोषु प्रीतिं प्रकुर्वते।
बध्नन्ति च द्विजानेव धनार्थं राजकिंकराः।।
दानयज्ञजपादीनां विक्रीणन्ते फलं द्विजाः।
प्रतिग्रहं प्रकुर्वन्ति चण्डालाद्यैरपि द्विजाः।।
कलेः प्रथमपादेऽपि विनिन्दन्ति हरिं नराः।
युगान्ते च हरेर्नाम नैव कश्चित्स्मरिष्यति।।

---

(१) शिव. ७।२।१४।६२.
(२) स्मृतिको. ४६९.
(३) नरसिंह. ५४।८-६१.

शूद्रस्त्रीसङ्गनिरता विधवासङ्गलोलुपाः।
शूद्रान्नभोगनिरता भविष्यन्ति कलौ द्विजाः।।
न च द्विजातिशुश्रूषां न स्वधर्मप्रवर्तनम्।
करिष्यन्ति तदा शूद्राः प्रव्रज्यालिङ्गिनोऽधमाः।।
सुखाय परिवीताश्च जटिला भस्मधूर्धराः।
शूद्रा धर्मान् प्रवक्ष्यन्ति कूटबुद्धिविशारदाः।।
एते चान्ये च बहवः पाषण्डा विप्रसत्तमाः।
ब्राह्मणाः क्षत्रिया वैश्या भविष्यन्ति कलौ युगे।।
गीतवाद्यरता विप्रा वेदवादपराङ्मुखाः।
भविष्यन्ति कलौ प्राप्ते शूद्रमार्गप्रवर्तिनः।।
अल्पद्रव्या वृथालिङ्गा वृथाहंकारदूषिताः।
हर्तारो न च दातारो भविष्यन्ति कलौ युगे।।
प्रतिग्रहपरा नित्यं द्विजा*ऽसन्मार्गशीलिनः।
आत्मस्तुतिपराः सर्वे परनिन्दापरास्तथा।।
विश्वासहीनाः पुरुषा देववेदद्विजातिषु।
असंश्रुतोक्तिवक्तारो द्विजद्वेषरतास्तथा।।
स्वधर्मत्यागिनः सर्वे कृतघ्ना भिन्नवृत्तयः।
याचकाः पिशुनाश्चैव भविष्यन्ति कलौ युगे।।
परापवादनिरता आत्मस्तुतिपरायणाः।
परस्वहरणोपायचिन्तकाः सर्वदा जनाः।।
अत्याह्लादपरास्तत्र भुञ्जानाः परवेश्मनि।
तस्मिन्नेव दिने प्रायो देवतार्चनतत्पराः।
तत्रैव निन्दानिरता भुक्त्वा चैकत्र संस्थिताः।।
द्विजाश्च क्षत्रिया वैश्याः शूद्राश्चान्ये च जातयः।
अत्यन्तकामिनश्चैव संकीर्यन्ते परस्परम्।।
न शिष्यो न गुरुः कश्चिन्न पुत्रो न पिता तथा।
न भार्या न पतिश्चैव भविता तत्र संकरे।।
शूद्रवृत्त्यैव जीवन्ति द्विजा नरकभोगिनः।
अनावृष्टिभयप्राया गगनासक्तदृष्टयः।।
भविष्यन्ति जनाः सर्वे तदा क्षुद्भयकातराः।
अन्नोपाधिनिमित्तेन शिष्यान् गृह्णन्ति भिक्षवः।।
उभाभ्यामपि पाणिभ्यां शिरःकण्डूयनं स्त्रियः।
कुर्वन्त्यो गुरुभर्तॄणामाज्ञां भेत्स्यन्ति तन्द्रिताः।।

* आर्षः संधिः।

यदा यदा न यक्ष्यन्ति न होष्यन्ति द्विजातयः।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः।।
सर्वधर्मेषु नष्टेषु याति निःश्रीकतां जगत्।
एवं कलेः स्वरूपं तत्कथितं विप्रसत्तमाः।।
हरिभक्तिपरानेवं न कलिर्बाधते द्विजाः।।
तपः परं कृतयुगे त्रेतायां ध्यानमेव हि।
द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे।।
यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत्।
द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ।।
ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्।।
समस्तजगदाधारं परमार्थस्वरूपिणम्।
घोरे कलियुगे प्राप्ते विष्णुं ध्यायन्न सीदति।।
अहोऽतीवमहाभाग्याः सकृद्ये केशवार्चकाः।
घोरे कलियुगे प्राप्ते सर्वकर्मबहिष्कृते।।
न्यूनातिरिक्तता न स्यात्कलौ वेदोक्तकर्मणाम्।
हरिस्मरणमेवात्र संपूर्णफलदायकम्।।
हरे केशव गोविन्द वासुदेव जगन्मय।
जनार्दन जगद्धाम पीताम्बरधराच्युत।
इतीरयन्ति ये नित्यं न हि तान् बाधते कलिः।।
अहो हरिपरा ये तु कलौ सर्वभयंकरे।
ते सभाग्या महात्मानस्तत्संगतिरता अपि।।
हरिनामपरा ये च हरिकीर्तनतत्पराः।
हरिपूजारता ये च ते कृतार्था न संशयः।।
इत्येतद्वः समाख्यातं सर्वदुःखनिवारणम्।
समस्तपुण्यफलदं कलौ विष्णोः प्रकीर्तनम्।।

## सौरपुराणम्

कलिप्रभावप्रयुक्तलोकवृत्तकथनम्

व्यास उवाच –

[1]प्राप्तं कलियुगं घोरं पुण्यमार्गबहिष्कृतम्।
पाखण्डाचारनिरतं म्लेच्छान्प्रजनसंकुलम्।।
अधार्मिकाः क्रूरसत्त्वा ह्यनाचाराल्पमेधसः।
तस्मिन्युगे भविष्यन्ति ब्राह्मणाः शूद्रयाजकाः।।

(१) सौर. ४।१७-२८.

स्नानं देवार्चनं दानं होमं च पितृतर्पणम्।
स्वाध्यायं न करिष्यन्ति ब्राह्मणा हि कलौ युगे।।
न पठन्ति तथा वेदाञ्श्रेयसे ब्राह्मणाधमाः।
प्रतिग्रहार्थं वेदांश्च पठिष्यन्ति कलौ युगे।।
पुरुषोत्तममाश्रित्य शिवनिन्दारता द्विजाः।
कलौ युगे भविष्यन्ति तेषां त्राता न माधवः।।
स्वां स्वां वृत्तिं परित्यज्य परवृत्त्युपजीवकाः।
ब्राह्मणाद्या भविष्यन्ति संप्राप्ते तु कलौ युगे।।
एतान्यापरतान्दृष्ट्वा राजानश्चाविचारकाः।
भविष्यन्ति कलौ प्राप्ते वृथा जात्यभिमानिनः।।
उच्चासनगताः शूद्रा दृष्ट्वा च ब्राह्मणांस्तदा।
न चलन्त्यल्पमतयः संप्राप्ते तु कलौ युगे।।
काषायिणश्च निर्ग्रन्था नग्नाः कापालिकास्तथा।
बौद्धा वैशेषिका जैना भविष्यन्ति कलौ युगे।।
तपोयज्ञफलानां तु विक्रेतारो द्विजाधमाः।
यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः।।
विनिन्दन्ति महादेवं संसारान्मोचकं परम्।
तद्भक्तांश्च महात्मनो ब्राह्मणांश्च कलौ युगे।।
ताडयन्ति दुरात्मानो ब्राह्मणान्राजसेवकाः।
न निवारयते राजा तान्दृष्ट्वाऽपि कलौ युगे।।

कलौ आन्ध्रदेशे ब्राह्मणाद्विधवाब्राह्मणीजातो मधुशर्मा स्वाचार्यपद्मपादुकशापाद्विस्मृताद्वैतसिद्धान्तः शिवनिन्दां द्वैतमतप्रचारं च करिष्यतीति हेतूक्तिरहितं भविष्यकथनं विस्तरेण कृत्वा पुनस्तदेव भविष्यकथनं शिवदग्धभर्तृकया रत्या शिववैरनिर्यातनार्थं प्रेरितः कामसखो मधुः शिवापकीर्तिं शिवाद्वैतखण्डनं च कर्तुं मोहादिभिः स्वसखैः सहितोऽवतरिष्यतीति हेतूक्तिसहितं विस्तरेण कृतम्

[1]घोरे कलियुगे प्राप्ते म्लेच्छैर्व्याप्ते भुवस्तले।
सर्वाचारपरिभ्रष्टा भविष्यन्ति नराधमाः।।

(१) सौर. ३९।३८-६२, ६३-७७.

तदाऽऽन्ध्रीदेशमध्ये तु दाक्षिणात्यो भविष्यति।
ब्राह्मणो दुर्भगः कश्चिद्विधवाब्राह्मणीरतः।।
तस्य पापिष्ठविप्रस्य व्यभिचारात्सुतोऽनघः।
भविष्यति गुणान्वेषी दैवादध्ययनोत्सुकः।।
पद्मपादुकमाचार्यं वरं वेदान्तवादिनम्।
अद्वैतागमबोद्धारं प्रणम्य प्रार्थयिष्यति।।
विप्रोऽहं मधुशर्माऽस्मि स्वामिन्मां पाठय प्रभो।
वेदान्तशास्त्रसर्वं च मह्यं पाठय भो गुरो।।
आचार्यः करुणामूर्तिर्विनयेन परिप्लुतम्।
करिष्यति च शिष्याणामग्रण्यं प्रेमवत्सलः।।
ततो दिने दिने भक्तिं करिष्यति यथा यथा।
गुरुर्भवति संतुष्टः सर्वां विद्यां प्रयच्छति।।
एकदा गुरुणा दृष्टः स्नानसंध्यादिकाः क्रियाः।
अकृत्वा भोजनप्रेप्सुर्भविष्यति निराह्निकः।।
पृष्टोऽसौ गुरुणा तथ्यं गोलको हि वदिष्यति।
धर्मः साधारणो नाथ कृतोऽयं केन कुप्यसि।।
ततो वक्ष्यत्यथाऽऽचार्यः कस्ते तातः प्रसूश्च का।
*ततो मे ब्राह्मणः स्वामिन्ब्राह्मणी च प्रसूर्मम।।
वद मातामहः कस्ते येन प्राप्ता प्रसूस्तव।
को विधिः कुत्र वा दत्ता तथ्यं शीघ्रं वदान्यथा।।
भस्मसात्त्वां करिष्यामि हीनं ब्राह्मणवर्चसा।
इत्येवं कथिते सर्वं कथयिष्यति तत्त्वतः।।
शापं दास्यत्यथाऽऽचार्यः सिद्धान्तो मा स्फुरत्वलम्।
सिद्धान्ते जडता तेऽस्तु परमद्वैतदर्शने।।
कथं त्वदीया सेवा मे निष्फला स्याद्वद प्रभो।
इत्यादिबहुनिर्वेदं यदा त्वेष करिष्यति।।
पश्चाद्गदिष्यति स्वामी पूर्वपक्षोऽस्तु ते दृढः।
सिद्धान्ते सर्वथैवाऽऽन्यं मम वाक्यं न चान्यथा।।
मधुना तेन शास्त्राणां पूर्वपक्षो विलोकितः।
भविष्यति च वेदान्तमन्यथा कर्तुमुद्यतः।।
यथा यथा कलेर्देवाः प्रचारः संभविष्यति।
तथा तथाऽयमुन्मार्गः शिवद्वेष्टुर्भविष्यति।।

* पितेत्यर्थः।

पूर्वं तु द्राविडाद्देशात्कर्णाटकतिलङ्गयोः।
शनैर्गोदावरीतीरे प्रसृतोऽयं भविष्यति।
पूर्णे कलियुगे प्राप्त आर्यावर्ते चलिष्यति।।
मायावादमसच्छास्त्रं वदिष्यन्ति नराधमाः।
तेषां दर्शनमात्रेण सचैलं स्नानमाचरेत्।।
भद्रात्वं च यथा विष्टे राहोः स्वर्भानुता यथा।
हरित्वं च यथाऽनेके(? था भेके) तथैते तत्त्व-
वादिनः।।
योगनिन्दापरा नित्यमग्निहोत्रस्य निन्दकाः।
वेदान्तसममित्याहुः पुराणानि च ये नराः।।
केवलं वेषमात्रेण नरा नरकगामिनः।
संभाषणे कृते येषां पतेच्च ब्रह्मवर्चसः।।
वरं बौद्धस्तथा जैनः कापालिकमतोऽपि वा।
व्यक्तं वदति वेदानामप्रामाण्यं तु तैः किमु।।
वेदप्रामाण्यवत्कृत्वाऽभिमानी न च वैदिकः।
ईश्वरं वचनाद्वक्ति परं चानीश्वरः खलः।।
ततः परं भविष्यन्ति तस्य शिष्या अनेकशः।
संन्यासिवेषमात्रेण कुर्वाणा जीविकां निजाम्।।
राजसेवां प्रकुर्वाणाः प्रच्छन्नाः कौलिका अपि।
अगम्यागमने सक्ता अभक्षस्य च भक्षणे।।
अपेयनिरताः केचिन्नानाभोगसमाकुलाः।
यानारूढाः सदा राजसेवायां तत्परा अपि।।
अद्वैतनिन्दानिरताः प्रच्छन्नग्रन्थगौरवाः।
अन्यदर्शनसिद्धान्तं नैव जानन्ति तत्त्वतः।
तत्र दोषस्य बुद्ध्या वै पठिष्यन्ति कलौ युगे।।
अन्यदैवतनामानि यदि हेयानि तत्कथम्।
वेदं पठन्ति पापिष्ठाः कथं तर्कं वदन्ति हि।।
मीमांसाशास्त्रसद्ग्रन्थानालोक्य च पुनः पुनः।
पूर्वपक्षं च सर्वेषां ग्रहीष्यन्ति समत्सराः।।
स्वकीयं न वदिष्यन्ति यतो नास्ति प्रमाकरम्।
हंसान्परमहंसांश्च निन्दिष्यन्ति च जारजाः।।
जातमात्रं नरं कंचिन्मुण्डयित्वा मठाधिपम्।
काषायवस्त्रमात्रेण करिष्यन्ति नराधमाः।।
माठा(? ठ)पत्यं च सेवा च धनसंग्रह एव च।
दासीगमनमीर्ष्या च पञ्चधा तत्त्ववादिनः।।

संसारस्तत्त्वमित्येव परं ते तत्त्ववादिनः।
मायाविलसितं विश्वमिति मायैकवादिनः।।
शुद्धं तत्त्वं न जानन्ति विश्वं तत्त्वं वदन्ति च।
शब्दमात्रेण ते जाताः कलौ हा तत्त्ववादिनः।।
भविष्यन्ति यदा विप्राः पापानां प्रभवः कलौ।
तथा तथा भविष्यन्ति ह्युदीच्यां दम्भवैष्णवाः।।
शिवसामान्यवक्तारं शिवसामान्यदर्शिनम्।
दृष्ट्वा स्नायात्सचैलः सञ्शिवसामान्यसङ्गिनम्।।
मधुदर्शितमार्गेण पापिष्ठा वैष्णवाः कलौ।
भविष्यन्ति ततो म्लेच्छाः शूद्रा यूथबहिष्कृताः।।
[1]घोरे कलियुगे प्राप्ते श्रीशंकरपराङ्मुखाः।
भविष्यन्ति नरास्तथ्यमिति द्वैपायनोऽब्रवीत्।।
रुद्रक्रोधाग्निनिर्दग्धे मन्मथे तस्य भार्यया।
रत्या विलपिते तस्य सखायोऽप्यतिदुःखिताः।।
वसन्तादय आगत्य तामूचुः किं विधीयते।
सर्वलोकेशितुः शंभोर्वराका वैरवारणे।।
रतिरुवाच –
मन्येत घातकः सर्वेर्लोकेऽपूज्यो भवेदयम्।
तथा विघ्नः प्रकर्तव्यो येन केनापि हेतुना।।
अस्यापकीर्तिर्वक्तव्या न चलेद्यदि किंचन।
तेन मे दुःखशान्तिः स्यात्किंचिन्मात्रं न चान्यथा।।
वसन्तादय ऊचुः –
चतुर्दशसु विद्यासु गीयते चन्द्रशेखरः।
वेदान्ता यं च गायन्ति मुनयः शंसितव्रताः।।
ब्रह्माद्या देवताः सर्वा इन्द्रोपेन्द्रादयस्तथा।
न्यूनतां तस्य यो ब्रूते कर्मचाण्डाल उच्यते।।
तेन तुल्यो यदा विष्णुर्ब्रह्मा वा यदि गद्यते।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः।।
तुल्यता यदि नो शक्या न्यूनतायास्तु का कथा।
मित्रस्याऽऽनृण्यमिच्छामः संकटं प्रतिभाति नः।।
सूत उवाच –
विचार्यैवं तदा सर्वे महामोहपुरःसराः।
तपस्तेपुर्महारौद्रं सर्वलोकभयंकरम्।।

---

(१) सौर. ४०।१०-७४.

कदाचिद्भगवान्ब्रह्मा प्रादुरासीद्दयानिधिः।
मोहो दम्भस्तथा क्रोधो लोभस्ते सेवकाः कलेः।।
पञ्चमो हेतुवादश्च मधुना सर्व आश्रिताः।
तानुवाच ततो ब्रह्मा वृणीध्वं मनसेप्सितम्।
यथा वाणी च भवतां तथाऽहं दातुमुद्यतः।।

मोहाद्या ऊचुः –

अस्माकं परमं मित्रं कंदर्पो नाशितः प्रभो।
महादेवेन तेनामी आनृण्यं कर्तुमुद्यताः।।
भविष्यामो वयं तात रुद्रपूजाभिनिन्दकाः।
यथा न लभते पूजामस्मत्तश्चन्द्रशेखरः।।

ब्रह्मोवाच –

अधुना न भवेदेवं भविष्यत्यथ तच्चिरम्।
भविष्याम इति प्रोक्तं भवत्तो नान्यथा क्वचित्।।
ये भवद्वशगा लोकास्तेभ्यः पूजा न धूर्जटेः।
प्रार्थितोऽयं वरो दत्तो यथेष्टं कर्तुमर्हथ।।

सूत उवाच –

इत्युक्त्वा तानथो ब्रह्मा तत्रैवान्तरधीयत।
सर्वे ते मन्त्रयांचक्रुः कलिना सह दुःखिताः।।

कलिरुवाच –

भवद्भिरधुना नोक्तं भविष्याम इतीरितम्।
ततो मत्समये प्राप्ते सर्वमेव भविष्यति।।
अस्मत्त इति यत्प्रोक्तं तेन चास्मद्वशे स्थिताः।
निन्दाकरा भविष्यन्ति नास्मान्यो मन्यते न सः।।
लोभमोहादिसंयुक्ताः प्राप्ते च मयि दारुणे।
हेतुवादं पुरस्कृत्य शिवभक्तिपराङ्मुखाः।।

सूत उवाच –

ततः कलियुगे प्राप्ते सर्वधर्मविवर्जिते।
म्लेच्छैर्ब्राह्मणधेनूनां विध्वंसनकरे खरे।।
अस्वाध्यायवषट्कारे जैनबौद्धादिसंकुले।
ब्राह्मणे म्लेच्छमार्गस्थे शूद्रे ब्राह्मणघातिनि।।
तदा वसन्तः कर्णाटतिलङ्गादिकदूषकः।
मधुनामा च विधवाक्षेत्रे विप्राद्भविष्यति।।
गोलकः स तु पापिष्ठः पद्मपादुकमीश्वरम्।
वेदान्तव्याख्यानरतं शिष्यत्वेनार्चयिष्यति।।
शास्त्रं पूर्णं ततोऽधीत्य स्थित आह्निकवर्जितः।
किमग्निहोत्रं को यागो हेतुमेवं करिष्यति।।
गुरुराकर्ण्य तद्वाक्यं ब्राह्मणो न भवेदयम्।
इति निश्चित्य तं दुष्टं वक्ष्यति श्रुततद्वचाः।।

गुरुरुवाच –

को वर्णस्तव मे ब्रूहि यथार्थं वेददूषक।
कर्मब्रह्मोद्भवद्वेष्टा नोत्पत्तिर्ब्राह्मणात्तव।।

मधुरुवाच –

ब्राह्मणादहमुत्पन्नो ब्राह्मण्यां च न संशयः।
सत्यं वदामि नो मिथ्या कथं मां पश्यसे गुरो।।

गुरुरुवाच –

त्वन्माता केन दत्ता रे कस्य पुत्री कदा कथम्।
कस्मै दत्ता च विधिना केन तद्ब्रूहि मा चिरम्।।

मधुरुवाच –

विधवा जननी नाथ ब्राह्मणेन तपस्विना।
गर्भिणी समभूत्तस्मादयं देहस्ततोऽभवत्।।

गुरुरुवाच –

कपटेन यतः शास्त्रं मत्तोऽधीतं दुरात्मना।
तेन सिद्धान्तमर्यादा कदाचिन्मा स्फुरत्वियम्।।

मधुरुवाच –

भविष्यति महाभाग वचनं तव नान्यथा।
पूर्वपक्षो मम हृदि प्रादुर्भवतु निश्चलः।।

गुरुरुवाच –

अन्धता तव सिद्धान्ते पूर्वपक्षे च पाटवम्।
भवत्वेव परं त्वेकं पापाः शिष्या भवन्तु ते।।
मोहात्सिद्धान्तरहिता लोभात्ते नृपसेवकाः।
क्रोधात्कठिनवक्तारो दम्भाद्वेषेण सुन्दराः।।
हेतुवादेन शास्त्राणि सर्वाणि न विदन्ति ते।
निरयेष्वेव घोरेषु गमिष्यन्त्यचिराच्चिरम्।।

सूत उवाच –

मधुनामा ततः प्राप्य शापं तं दुष्टबुद्धिमान्।
बादरायणसूत्राणां व्याख्यानं स करिष्यति।।
मध्वाचार्यस्ततो भावाद्दाक्षिणात्यो महान्कलौ।
तच्छिष्याः प्रतिशिष्याश्च नाऽऽर्यावर्ते न चोत्कले।।

न गौडे न च गङ्गायास्तीरे गोदावरीतटे।
नार्बुदारण्यमध्ये च तत्प्रचारो भविष्यति।।
यथा यथा कलेर्घोरः प्रचारो हि भविष्यति।
तथा तथा महाराष्ट्रे हैतुका विरलाः क्वचित्।।
ततोऽतिदुष्टसमये महाम्लेच्छैस्तिरस्कृते।
प्रच्छन्नः कुत्रचित्पापी प्रचारं हि विधास्यति।।
पञ्चवर्षस्तु संन्यासी पठित्वा दुष्टबुद्धिमान्।
शिष्योपशिष्यसंयुक्तो हेतुवादं करिष्यति।।
तत्त्वं संसार इत्येव न बाध्यः सत्य एव हि।
वदत्यतस्तत्त्ववादी मिथ्यावादी स उच्यते।।
मिथ्याभूतः प्रपञ्चोऽयं मया निर्मित इष्यते।
मायावादिन इत्येते वस्तुतस्तत्त्ववादिनः।।
सच्छास्त्रं जैमिनीयं तु कर्मकाण्डप्रवर्तकम्।
गौतमीयं तु सच्छास्त्रमीश्वरप्रतिपादकम्।।
पुंप्रकृत्योर्विवेकस्य बोधकं कापिलं मतम्।
तथा वैशेषिकं शास्त्रमीश्वरप्रतिपादकम्।।
पातञ्जलं योगशास्त्रं शैवं तच्छास्त्रमिष्यते।
वेदान्तशास्त्रमूर्धन्यमद्वैतं यच्च बोधयेत्।।
वेदाः सर्वे षडङ्गास्तु पुराणानीतिहासकः।
स्मृतिश्चोपपुराणानि तथोपस्मृतयः शुभाः।।
अन्योन्यं सर्वविद्यानां प्रामाण्यमधिकारतः।
तात्पर्यं च पुमर्थेषु सर्वाण्येवं जगुः किल।।
किंचिद्विरोधे सत्येव न विरोधोऽस्ति तत्त्वतः।
मन्यन्ते श्रीमहेशानं सर्वाण्येव परात्परम्।।
पापिष्ठा नैव मन्यन्ते वेदमार्गबहिष्कृताः।
आचार्यं मधुनामानं वदन्तो विधवासुतम्।।
प्रच्छन्नोऽसौ महादुष्टश्चार्वाको मधुसंज्ञकः।
भविष्यति कलौ विप्राः शिवनिन्दाप्रवर्तकः।।
मोहात्सिद्धान्तबाह्यत्वं क्रोधाच्छास्त्रनिषेधनम्।
लोभेन नृपतेः सेवा दम्भादन्यप्रतारणम्।।
गणिकामैथुनं कामाद्धेतुवादेन वादिता।
भविष्यति कलौ विप्राः षोढेयं तत्त्ववादिता।।
पञ्चवर्षं यतिं कृत्वा क्रमेणाऽऽदाय बालकम्।
माठा(? ठ)पत्यं विधास्यन्ति द्रव्यलोभेन नास्तिकाः।।
पारंपर्यं मठस्यैव रक्षिष्यन्त्यभिरागिणः।
भोगासक्ताश्च पापिष्ठा दासीगमनकारिणः।।
नाम्ना संन्यासिनस्तीर्थे(? र्था) यानारूढाः ससेवकाः।
नरवाहनमारूढाः शिखासूत्रबहिष्कृताः।।
तत्पक्षपातिनो मूढा गृहस्थाः शिवनिन्दकाः।
मिथ्यावैष्णवमानेन ग्रस्ता निरयगामिनः।।
वैष्णवा वेषमात्रेण तन्तुमात्रेण वाडवाः।
वादिनः क्रोधमात्रेण विद्वांसो हेतुवादतः।।
पठिष्यन्ति च शास्त्राणि केचिद्दूषणसिद्धये।
स्वकीयं गोपयिष्यन्ति परकीयेण पण्डिताः।।

सूत उवाच –

महामोहादयः सर्वे रतिमाश्वास्य भामिनीम्।
प्रोचुश्च श्लक्ष्णया वाचा तद्दुःखविनिवारकाः।।

मोहादय ऊचुः –

रते मा कुरु संतापमहं मोहः कलेः सखा।
क्रोधः पत्युः परो बन्धुर्लोभमोहौ च देवरौ।।
प्राप्ते कलियुगे पूर्णे लोभमोहादयो वयम्।
वसन्तं मधुनामानमवतीर्णं च दक्षिणे।।
समाश्रित्य ततो हेतुवादं कुटिलबुद्धयः।
करिष्यामो यथाशक्यं शिवपूजानिवारणम्।।

सूत उवाच –

इति ते रतिमाश्वास्य यथागतमितो गताः।
इति सर्वं समाख्यातं शिवनिन्दककारणम्।।

## आदिपुराणम्

विस्तरेण कलियुगीयलोकवृत्तकथनम्,
सत्यमेव कलावुपकारकम्,
नियोगो दत्तादानं च
कलिवर्ज्ये

[1]विशेषतः समायातो घोरः कलियुगोऽप्ययम्।
अधर्मः प्रबलो यत्र जनानां कलिवर्धके।।
अधुनैव कलिबलं दृश्यते लोकमोहनम्।
तथाऽऽदरो न धर्मस्य नानुरागोऽस्ति देहिनः।।

(१) आदि. ३।५-३३.

शालग्रामो मानपिण्डः सर्वे नास्तिकवृत्तयः।
पितृभक्तिर्मातृभक्तिर्गता दूरतरं कलौ।।
पाण्डित्यमानिनो मूढास्तथा धार्मिकमानिनः।
कुकर्मणि समासक्ताः सदाऽधर्मपरायणाः।।
वरं द्विजेभ्यश्चाण्डालो यत्र धर्मः प्रदृश्यते।
ब्राह्मणा ब्राह्मण्यहीना लोभोपहतचेतसः।।
नराः शिश्नोदरपरा योन्याहारविधिच्युताः।
इन्द्रियाणां वशीभूताः स्त्रीणां क्रीडामृगा इव।।
देववित्तेन कुर्वन्ति विलासं मन्दिरं सुखम्।
बालका वृद्धसदृशा युवका गुरुनिन्दकाः।।
विद्या चार्थकरी जाता ज्ञानं दूरतरं गतम्।
पुस्तकस्था भवेद्विद्या लक्ष्मीश्चादृश्यतां गता।।
सरस्वती नाकगता धर्मोऽधर्मगतिं गतः।
सत्यं निराश्रयं धर्मश्चानाथ इव दृश्यते।।
दया च विधवारूपा शान्तिः पतिसुतैर्विना।
स्थानभ्रष्टो भवेन्न्यायः सारल्यं मृत्युनिश्चयम्।।
रोगशोकपरीतापबन्धनव्यसनानि च।
प्रबलानि भवन्त्यत्र नृणां शक्तिर्विनश्यति।।
वसुंधरा पापपूर्णा प्रयातीव रसातलम्।
सर्वे पापरताश्चेष्टा दूरं सिद्धिकरी गता।।
अतो मूढा नास्तिकाश्च अदृष्टवादिनो जनाः।
दिने दिने गता वृद्धिं पौरुषं प्रलयं गतम्।।
आलस्यं दुःखदं नृणां समायाति भयंकरम्।
अज्ञानावृतमोहान्धा जना वृद्धिं गताः कलौ।।
उपदेशे स्त्रियः शक्ताः श्यालका गुरुरूपिणः।
स्त्रीबान्धवा गृहे देवाः प्रभवो भृत्यदुःखदाः।।
भृत्याश्च प्रभुसंमानं न कुर्वन्ति कलौ सदा।
वृक्षा यथागुरुफलाः पुत्राश्च गुरुतर्जकाः।।
गृहाः सुखविहीना हि स्त्रियश्च कलहप्रियाः।
स्त्रीणां समादरो नास्ति नैव शिक्षा तथा स्थितिः।।
पुरुषाः कुकर्मनिरताः शास्त्राचारविवर्जिताः।
कापट्यं प्रणये सत्ये नाऽऽदरं हि ससंशयम्।।
व्याघातो लोकयात्रायाः सर्वत्रैव विशृङ्खला।
न किंचिदपि पुण्याय न धर्माय यथायथम्।।
वृत्तिर्लोकानां यशस आचार्या ज्ञानवर्जिताः।
अर्थो वा परमार्थो वा पुरुषार्थो न दृश्यते।।
उपदेशे च यस्मिंस्तु नोपदेशः स वै भवेत्।
अस्वर्गफलकानि किमनुष्ठानानि कर्हिचित्।।
यच्छास्त्रं हि भवेन्नैव चतुर्वर्गप्रदं भुवि।
न तच्छास्त्रं कलौ किंतु तत्तच्छास्त्रत्वमागतम्।।
सुवर्णादि परित्यज्य पांशूनामादरः कृतः।
अमृतं हि परित्यज्य कृतं विषनिषेवणम्।।
रत्नबुद्ध्या भस्म मुष्ट्यां करोति संचयं जनः।
तीर्थस्थानं परित्यज्य कदर्यस्थानसेवनम्।।
ईशपूजां परित्यज्य मानवानामुपासनम्।।
नास्ति यज्ञो न वा दानं न मानो देवतार्चनम्।।
सुखलिप्सा यशोलिप्सा धनलिप्सा पदे पदे।
कलेरस्य समारम्भ ईदृशश्चेद्विपर्ययः।।
काले किं वा भविष्यन्ति हरिर्जानाति तत्त्वतः।
श्रुतं गुरुमुखात्सूत भविष्यन्ति कलाविह।।
इन्द्रियादिसमासक्ता मानवाः पशुभिः समाः।
तेजस्विनस्तेजःशून्या नरो लुप्ताः प्रभञ्जनाः।।
भक्ष्यन्ति लोकानादित्याः प्राणिहीना वसुंधरा।
महामारी धरण्यां हि भविष्यति क्षयंकरी।।

श्रीकृष्ण उवाच —

'शृणु त्वं मुनिशार्दूल कथयाम्यात्मकौतुकम्।
यथा व्रजे विहारो मे भवेत्परमदुष्करः।।
नित्यो व्रजस्तथा नित्या य एते व्रजवासिनः।
गोपा गोप्यो वनं गावो विहराम्यत्र नित्यशः।।
न पश्यन्ति नरा मूढा मायया नष्टचक्षुषः।
कामक्रोधाभिभूताश्च विशेषेण कलौ युगे।।
लोका विषयिणो येऽत्र श्रुतिस्मृतिविवर्जिताः।
धर्महीना ह्यनुदिनं मद्भक्तिरहिता भृशम्।।
भक्तोऽहं ज्ञानवानस्मि मत्तोऽन्यः कोऽत्र विद्यते।
ब्राह्मणा वेदरहिताः शूद्राचाराः कुटुम्बिनः।।
लोलुपा भोजने पाने विद्याविरहिताः खलाः।
नानापथोपदेष्टारः कुकर्मनिरताः स्वयम्।।
दूषका विष्णुभक्तानां सत्कर्मविमुखाः परम्।
लोकं चोपहसिष्यन्ति स्वच्छन्दा बकवृत्तयः।।

(१) आदि. १४।१२९-१४८.

स्वप्नोपमे नृलोकेऽस्मिन्विशेषेण कलौ युगे।
तेषामहं समुद्धर्ताऽवश्यं संसारसागरात्।।
यदा पूर्वजनुःपुण्योपचयो भविता नृणाम्।
तदा मद्भक्तसंयोगस्ततो मद्भक्तिसंभवः।।
व्रजेऽनुरागो राधायाश्चरणानुस्मृतिः परम्।
गृणा (? गृह्णा) म्यनुग्रहेणैव अवतारान्पृथ-ग्विधान्।।
असुरा यवनांशेषु जाता लोकोपतापिनः।
अनीतिनिरताः सर्वे संग्रहे च प्रवृद्धयः।।
पलायमानास्तेषां हि प्रजाः स्युरतिपीडिताः।
प्रापुर्देशान्तरं चापि क्वचिन्न सुखिताऽभवन्।।
वैश्यास्तु शुद्धपाषण्डा नियतं कूटवृत्तयः।
शश्वत्क्रूरक्रियाश्चैव विषये सारबुद्धयः।।
तेषु विप्रेषु नष्टेषु कथं धर्मः प्रवर्तते।
कदाचित्केऽपि मद्भक्ता भविष्यन्ति कलौ युगे।।
शूद्रा विकर्मनिरता गोविप्राग्निपराङ्मुखाः।
तदा धराऽतिभारा हि कृत्वा गोरूपमद्भुतम्।।
संप्राप्ता ब्रह्मसदनं स्वदुःखानि न्यवेदयत्।
प्रयामि पातालतलं भारं सोढुं न हि क्षमा।।
न शैलानां च सिन्धूनां लवणानां तथा नृणाम्।
न हि भारः संभवति यथा भारो ह्यपालनात्।।
ब्राह्मणा वेदरहिताः सदाचारविवर्जिताः।
क्षत्रियास्त्यक्तराज्याश्च वैश्या वृत्तिप्रपीडिताः।।
शूद्राः स्वामिष्वभक्ताश्च स्त्रियः पररताः सुताः।
त्यक्तमातापितृस्नेहाः शुश्रूषारहिताः परम्।।
विकर्मनिरता लोकाः कुकर्मण्यतिरागिणः।
यदा तदाऽतिभारो मे भवत्येव जगद्गुरो।।
[1]न विद्वत्ता न शुद्धोऽर्थो न शुद्धिर्मनसः कलौ।
यतोऽतः सत्यमेवैकं नराणामुपकारकम्।।
[2]देवरेण सुतोत्पत्तिर्दत्ता कन्या न दीयते।।
दत्ताशब्दः ऊढापरः, 'ऊढायाः पुनरुद्वाहम्' इति हेमाद्रावुक्तेः। सिन्धु. ११३०

(१) स्मृच. १।२९; पप्र. ५२.
(२) सिन्धु. ११३०.

## मुद्गलपुराणम्

शिवोपासकाः कलौ दुराचारा नरकगामिनश्च भविष्यन्तीति शिवद्वेषाद्दक्षस्योक्तिः

[1]भुवि ये शांकरा नित्यं ज्ञानहीना भवन्तु ते।
कलौ प्राप्ते च पाखण्डा भविष्यन्ति जटाधराः।
शूद्रा वेदं पठिष्यन्ति नग्ना भस्माङ्गलेपनाः।।
स्त्रीमांसमदिरासक्ता नानाभोगकरास्तथा।
नरके वै पतिष्यन्ति शंभुमार्गपरायणाः।।

दक्षयज्ञभागिनो ब्राह्मणादयः कलौ पाखण्डा नरकगामिनश्च भवन्तु दक्षयज्ञभागी विष्णुश्च पाखण्डसाहाय्यकृत् भवत्विति दधीचेः शापः

[2]अत्र ये ब्राह्मणाद्या वै वर्णा नाना समागताः।
सर्वे कलियुगे पापाः पाखण्डाश्च भवन्तु ते।
स्वधर्महीनतां प्राप्य नरकेऽन्ते पचन्तु वै।।
विष्णुः प्रमोदयुक्तोऽत्र स वै पाखण्डकारकः।
कलौ देवो भवेन्नित्यं पाखण्डानां सहायवान्।
पाखण्डप्रियवज्जन्तुः कलौ मलकरः सदा।।

कलौ श्रीगणेशचरितं सर्वपापहरम्

[3]कलिकल्मषदाहघ्नं वक्रतुण्डचरित्रकम्।
कृतादिषु किमाश्चर्यं दहेत्पापगणानिति।।
अहो कलौ विकुण्ठं च सर्वदेवचरित्रकम्।
गाणपत्यं विशेषेण गतिदं च सदा भवेत्।।

ऋषभेण संन्यासिनाऽनुष्ठितो धर्मो गृहस्थेनार्हन्नामकेन राज्ञा कलौ गृहस्थैरनुष्ठापितो नरकप्रदो जैनमार्ग इत्युच्यते, स भरतेन प्रतिरुद्धः

[4]ऋषभेण कृता चर्या नानायोगप्रकाशिनी।
आदौ तां भूमिपो दृष्ट्वा जगृहेऽर्हद्गृहे स्थितः।।

(१) मुद्गल. १।२।४१-४३.
(२) मुद्गल. १।३।२६-२८.
(३) मुद्गल. १।५४।५२-५३.
(४) मुद्गल. २।१७।१-५.

**दुर्बुद्धिः स तु तं भ्रष्टः कर्ममार्गं विमुच्य वै।**
**पशुवद्धर्महीनांश्च कारयामास मानवान्।।**
**जैनमार्गः समुत्पन्नस्तदादिश्च प्रजापते।**
**भरतेन स संछन्नो कर्ममार्गानुसारिणा।।**
**स एव कलिकाले वै भविष्यति गृहे गृहे।**
**नरास्तं संग्रहिष्यन्ति कलिदोषेण संयुताः।।**
**ऋषभेण गृहं त्यक्त्वा धृतः संन्यासिना महान्।**
**गृहस्थैः स धृतो मार्गो नरकप्रद उच्यते।।**

अवधूयते मायामलोऽनेनेत्यवधूततत्संबन्धी आचारः। स एव वर्णाश्रमधर्महीनो भवति, तस्य विधिनिषेधनाशकत्त्वाच्छमदमपरायणत्वाच्च। स एव वर्णाश्रमस्थजनैर्धृतश्चेन्नरकप्रदो भवति, स्वस्ववर्णाश्रमत्यागाद्योगिजनत्यक्त इति। मुभा.

**$[1]वेदबाह्या भविष्यन्ति कृतघ्ना ये महर्षयः।**
**मदीयच्छलनेनैव पातकेन न संशयः।।**
**ततस्ते शापयोगेन भ्रान्ता जाता महर्षयः।**
**ज्ञात्वाऽकस्माद् द्विजाः शापं संभीता अभवंस्ततः।।**
**शंकरं शरणं सर्वे ययुर्देवं महर्षयः।**
**शंकरः स्मरणं चक्रे विष्णोश्चैव सुविस्मितः।।**
**समागतं महाविष्णुं पप्रच्छ द्विजसौख्यदम्।**
**मार्गं ततो हरिः शंभुमुवाच वचनं हितम्।।**

**विष्णुरुवाच –**

**वेदबाह्यद्विजानां यत्कर्म सर्वं निरर्थकम्।**
**न गतिः कुत्र देहान्ते तेषां शंभो न संशयः।।**
**अतस्तेषां हितार्थाय ग्रन्थाः कार्याः सदाशिव।**
**मोहदाश्च जनानां ते भजतां नरकप्रदाः।।**
**ततः शिवेन वामं च तन्त्रं तत्र प्रकाशितम्।**
**विष्णुना बौद्धशास्त्रं वै रचितं मोहदायकम्।।**
**ऋषिभिश्च तथाऽन्यानि शास्त्राणि रचितानि वै।**
**कापालादीनि भो दक्ष मोहदानि विशेषतः।।**
**फलानि तत्र दत्तानि भजतां शंभुनाऽमुना।**
**विष्णुना ब्राह्मणानां च कृतघ्नानां हिताय वै।।**

$ गौतमं गोवधप्रत्यवायिनं कृतवतो महर्षीन् प्रति गौतमस्य शापोक्तिरियम्

(१) मुद्गल. २।३६।६९-८५.

**नरा ये तानि सेवन्ते नारकाः संभवन्ति ते।**
**इहामुत्रविहीनाश्च शास्त्राधारप्रवर्तिनः।।**
**जनानां भजतां सर्वे पापांशास्ते महर्षयः।**
**स्वल्पकालेन नष्टाः स्युः कलौ जन्मधरास्ततः।।**
**तत्र ते पापकर्माणो भविष्यन्ति विशेषतः।**
**तेषु मार्गेषु संसक्ताः प्रपतिष्यन्ति रौरवे।।**
**पुनः शुद्धा भविष्यन्ति नराः कृतयुगे प्रभो।**
**तत्रैव योगमार्गेण गमिष्यन्त्यपुनर्भवम्।।**
**एवं तेषां हितार्थाय शिवाद्यै रचितानि वै।**
**शास्त्राणि चतुरैस्तानि न सेव्यानि कदाचन।।**

एवं सफलानि शास्त्राणि शिवादिभिः कृतानि। तानि नरकदानि ज्ञातव्यानि, वेदविरुद्धभाषणयुक्तत्वात्। मुभा.

**वेदाधारयुतं शास्त्रं तदेव सुखदं परम्।**
**तेन हीनं च यच्छास्त्रं मोहकं नरकप्रदम्।।**
**न सेव्यं मानवैः सर्वैः कलिदोषविवर्जितैः।**
**युक्तं गौतमशापेन महाभयकरं मतम्।।**
**कलौ पापा विभूमानो भविष्यन्ति महर्षयः।**
**नरस्तैः कथितं शास्त्रं न वामादिकमाचरेत्।।**

युगभेदेन धर्मभेदः उपास्यभेदश्च, त्रेतादिषु
धर्मस्य पादशो ह्रासः अन्ते
च सर्वस्य नाशः

**[1]आद्यं कृतयुगं प्रोक्तं ततस्त्रेता प्रकीर्तिता।**
**ततो द्वापरनामाऽपि कलिस्तस्मात्प्रकीर्तितः।।**
**ध्यानं कृतयुगे मुख्यं त्रेतायामध्वरस्तपः।**
**द्वापरे पूजनाचारः कलौ स्तवनमुच्यते।।**

कृते युगे ध्यानं मुख्यम्। निश्चलचेतसो ध्यानं कुर्वन्ति। तदा दशसहस्रवर्षैर्देवप्रत्यक्षता तद्युगमाहात्म्यात्। एवं त्रेतायां तपःप्राधान्यम्। तत्र सहस्रवर्षपर्यन्तं तपो देवप्रत्यक्षत्वदं युगमाहात्म्यात्। द्वापरे पूजनाचारो मुख्यः, देवप्रत्यक्षत्वदत्वात्। तत्र शतवर्षैः पूजनेन कार्यसिद्धिर्युगमाहात्म्यात्। कलौ स्तवनं मुख्यं द्वादशवर्षैर्देवप्रत्यक्षत्वदं युगमाहात्म्यात्। तत्रैकाग्रचित्तस्य तन्निष्ठस्य तत्परायणस्य कार्यसिद्धिस्तदेकरसयुक्तभक्तिसाध्येत्येवं युगधर्मः। मुभा.

(१) मुद्गल. ३।१६।८-३६.

**ब्राह्मः कृतयुगे धर्मश्चतुष्पादः सनातनः।**
**त्रेतायां त्रिपदः प्रोक्तो धर्मो धर्मविदांवरैः।।**
**द्वापरे द्विपदो धर्मः सर्वशास्त्रेषु संमतः।**
**कलावेकपदः प्रोक्तः सोऽप्यन्ते नाशमेष्यति।।**
**कृते ज्ञानं सदा पूज्यं त्रेतायां रविरुच्यते।**
**द्वापरे दैवतं विष्णुं कलौ शंभुं वदन्ति च ।।**

कृते सदा पूज्यं ज्ञानम्, ध्यानसाध्यत्वात्। त्रेतायां रविः, तपसि प्राधान्यात्। द्वापरे विष्णुः, आचारप्रियत्वात्। कलौ शंभुः, स्तवनाभिषेकप्रियत्वात्। मुभा.

सर्वेषु युगेषु गणेशः पूज्यः,
युगभेदेन गणेशस्य
नामरूपभेदाः

**चतुर्युगानां मानेषु गणेशो मुख्यभावतः।**
**पूज्यते मानवैः सर्वैः स्वस्वसिद्ध्यर्थमादरात्।।**

गणेशस्तु सर्वयुगेषु, सर्वादिपूज्यत्वात्। मुभा.

**कृते विनायकः प्रोक्तः कश्यपात्मज एव सः।**
**सिंहारूढश्च दिग्बाहुस्तेजोरूपी प्रकथ्यते।।**
**त्रेतायां पूज्यते देवो मयूरेशश्च षड्भुजः।**
**मयूरवाहनः पुत्रः शशिवर्णः शिवस्य वै।।**
**द्वापरे मूषकारूढः पूज्यते च चतुर्भुजः।**
**गजाननो वरेण्यस्य रक्तवर्णः सुतः स्मृतः।।**
**कलावश्वस्थितश्चैव धूम्रवर्णो द्विबाहुभृत्।**
**तारकः सर्वभावज्ञो गणेशः पूज्यते जनैः।।**
**ब्रह्माकारमयश्चैव तेन भेदो न विद्यते।**
**चतुर्युगेषु धर्मेषु सिद्धिदाता विशेषतः।।**

कृतत्रेताद्वापरेषु लोकवृत्तानि,
संध्यांशेषु पूर्वयुग-
धर्महासारम्भः

**कृते नराणामायुष्यं लक्षवर्षाणि संमतम्।**
**त्रेतायां दशसाहस्रं द्वापरे तु सहस्रकम्।।**
**कलौ तु शतवर्षाण्यन्ते तन्न्यूनं भविष्यति।**
**वर्षाणि पञ्चदश वै क्रमेण परमं मतम्।।**

**कृते स्वधर्मसंनिष्ठा जनाः सर्वे हिते रताः।**
**परस्परं भावयन्तो भेदहीना विशेषतः।।**
**न मात्सर्यादिसंयुक्ताः कलहादिविवर्जिताः।**
**बाल्याद्धर्मधरा विप्र सदानन्दयुतास्तथा।।**
**विषयात्मसुखं तुच्छं मन्यन्ते सततं नराः।**
**सुखे सन्ति सदा ज्ञानयुक्ता ध्यानपरायणाः।।**
**वर्णाश्रमविभागस्थाः स्वस्वाचारसमन्विताः।**
**ब्रह्मणि श्रद्धया युक्ता योगाभ्यासपरायणाः।।**
**ऋतुगामिन एवं ते नानाधर्मकराः सदा।**
**अन्तर्बाह्यैकभावाश्च भवन्ति सुखभोगिनः।।**
**त्रेतायां पादहीनेन नरा धर्मेण संयुताः।**
**तत्रान्तर्बाह्यभावेषु भिन्नभावधरा मताः।।**
**तथा स्वार्थे परार्थे ते न समाना विशेषतः।**
**विषयेच्छायुता विप्र किंचित्किंचित्क्रमेण वै।।**
**तत्र संध्यांशमार्गं त्वं शृणुष्वैतं महामुने।**
**अष्टौ शतानि वर्षाणि कृते संध्यांश उच्यते।।**
**चतुःशतानि तत्रैव कृतान्ते वर्षकाणि च।**
**शतानि त्रीणि त्रेताया अर्धांशेन युतानि च।।**
**शतसप्तकवर्षाणि संध्यांशः परिकीर्तितः।**
**दिने दिने क्रमेणैव कृतधर्मो विनश्यति।।**
**त्रेताधर्मोऽधिकत्वेन तत्र तिष्ठति निश्चितम्।**
**शतसप्तकवर्षेषु गतेषु मुनिसत्तम।।**
**केवलं प्रभवेत्त्रेतायुगं सर्वस्वभावतः।**
**ज्ञातव्यमेवं सर्वत्र संध्यांशेषु युगक्रमैः।।**
**द्वापरे द्विपदो धर्मस्तत्र स्वार्थपरायणाः।**
**कलहादिसमायुक्ता भवन्ति किल मानवाः।।**
**बाह्यभावेषु साधूनां धर्माणां सेवका मताः।**
**लज्जायुक्ततया विप्र अन्तरे विषयप्रियाः।।**
**परेषां लज्जया धर्मं चरन्ति द्वापरे नराः।**
**विषयेच्छायुताः सर्वे स्वगृहे धर्मलोपकाः।।**
**एतादृशास्ते भवन्ति द्वापरे मलसंयुताः।**
**नराः सर्वत्र भावेषु जानीहि मुनिसत्तम।।**

युगेषु सत्त्वादिगुणप्राधान्यम्, विस्तरेण कलि-
युगीयलोकवृत्तानि, दधीचिगौतमशप्तानाम-
धार्मिकाणां बुद्धरूपविष्णोः साहाय्यम्,
विष्णोस्तीर्थादीनां च कलियुगे
वासमर्यादा, लोकहिताय
कलौ गणेशा-
वतारः

**नरनारायणावूचतुः —**

**'सात्त्विकं च युगं प्रोक्तं कृतं त्रेता च राजसी।**
**द्वापरस्तमसा युक्तः स्वयं राजस उच्यते।।**
**कलिस्तमोमयः पूर्णस्तत्र सर्वं विनश्यति।**
**पापरूपधरः साक्षाद्विप्रधर्मः कुतो भवेत्।।**
**कलौ प्रमारको रोगः सततं क्षुद्भयं मुने।**
**अनावृष्टिभवं दुःखं देशानां च विपर्ययः।।**
**अधार्मिका अनाचारा महाकोपाल्पचेतसः।**
**वदिष्यन्त्यनृतं लुब्धाः कलौ जाताः § सुदूःप्रजाः।।**
**अरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः।**
**विप्राणां कर्मदोषैश्च प्रजानां जायते भयम्।।**
**नाधीयते कलौ वेदान्न यजन्ति द्विजातयः।**
**पठन्ति न्यायतो वेदाञ्छूद्राग्रे चाल्पबुद्धयः।।**
**शूद्राणां मन्त्रयोगैश्च संबन्धो ब्राह्मणैः सह।**
**भविष्यति कलौ विप्र शयनासनभोजनैः।।**
**शूद्रा भवन्ति राजानो ब्राह्मणान्बाधयन्ति ते।**
**ब्रह्महत्यां पशोर्हत्यां कुर्वते वै नरेश्वराः।।**
**स्नानं होमं जपं दानं देवतानां तथाऽर्चनम्।**
**अन्यानि चैव कर्माणि न कुर्वन्ति द्विजातयः।।**
**विनिन्दन्ति गणेशानं ब्राह्मणान् दैवतान्यपि।**
**वेदाञ्शास्त्राणि सर्वाणि पुराणानि कलौ युगे।।**
**कुर्वन्त्यवेदकर्माणि ह्यनाधाराणि भो मुने।**
**स्वधर्मेषु रुचिर्नैव द्विजादीनां प्रजायते।।**
**कुशीलचर्या पाखण्डो वृथाऽनृतभयं भवेत्।**
**याचकाः सर्ववर्णाश्च भविष्यन्ति कलौ युगे।।**
**अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।**
**प्रमदाः केशशूलाश्च भविष्यन्ति कलौ युगे।।**

जनपदाः देशाः अट्टशूलाः अट्टम् अन्नम्, तदेव शूलं विक्रयः येषाम्, चोरादिभययुक्तग्रामान्तरमार्गात्। चतुष्पथाः क्रयविक्रयस्थानात्मकाः शिवशूलाः शिवः वेदः, स एव शूलं येषाम्, अनृतपरायणत्वात्। केशशूलाः केशः भगम्, तदेव शूलं यासाम्, जारकर्मपरायणत्वात्, एतादृशाः प्रमदाः। 'अट्टमन्नं शिवो वेदः शूलो विक्रय उच्यते। केशो भगं स विज्ञेयः कलाविह विचक्षणैः।।'। ‡ मुभा.

**शुक्लदन्ता अक्षजिता मुण्डाः काषायवाससः।**
**शूद्रा धर्मं चरिष्यन्ति ब्राह्मणानां कलौ युगे।।**

शुक्लदन्ताः, गजदन्तोद्भूतत्वात्, अक्षजिताः अक्षैर्द्यूतादिभिर्जितं मनो येषाम् एतादृशाः यतयो भविष्यन्ति। मुभा.

**अन्नचौरा भविष्यन्ति तथा वेलाभिमर्षिणः।**
**चौराचौर( ? श्चौ)स्य हर्तारो हर्तुर्हर्तार एव च।।**
**दुःखप्रचुरताऽल्पायुः शिश्नोदरपरायणाः।**
**द्यूतमद्यादिसंसक्ताः परस्त्रीलम्पटा मुने।।**
**कापालिकास्तथा चान्ये यतयो गृहमेधिनः।**
**वेदविक्रयिणो विप्रास्तीर्थविक्रयिणस्तथा।।**
**आसनस्था द्विजान्दृष्ट्वा न चलन्त्यल्पबुद्धयः।**
**ताडयन्ति द्विजाञ्शूद्रा राजानो राजजीविनः।।**
**उच्चासनसमासीना ब्राह्मणानां च पूजकाः।**
**भविष्यन्ति कलौ शूद्रा वेदाध्ययनतत्पराः।।**
**सेवावसरमालोक्य द्वारि तिष्ठन्ति वै द्विजाः।**
**उपायनादि संगृह्य शूद्राणां राजजीविनाम्।।**
**बुद्धिशालिन एवं वै शूद्रा धर्मान् वदन्ति वै।**
**वेदवादविचारज्ञा ब्राह्मणाञ्छिक्षयन्ति ते।।**
**तपोयज्ञफलानां वै वेदानां च सुकर्मणाम्।**
**विक्रेतारो भविष्यन्ति ब्राह्मणाश्च कलौ युगे।।**
**पतिं त्यक्त्वा स्त्रियश्चैव परे पुंसि निरन्तरम्।**
**संसक्ताश्च भविष्यन्ति पतिद्रोहपरायणाः।।**

---

§ दुर्वीधातुर्हिंसार्थः। ततः क्विप्। अतिशयेन दूर्वन्ति इति सुदुरः। ततः कर्मधारयः।

(१) **मुद्गल.** ३।१७।१-५६.

‡ भा. ३।१८६।३६ इतिश्लोकगतं नीटीव्याख्यानमत्रानुसंधेयम्।

यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः।
मद्यस्त्रीसङ्गसंसक्ताश्चरन्ति च कलौ युगे।।
वाममार्गाः पाशुपताः सांख्या वै पञ्चवाहकाः।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा।।

वाममार्गाः मद्यादिभक्षणात्मकाः। पाशुपताः शैवदीक्षा-युक्ताः शूद्रा ब्राह्मणधर्माचाराश्च दक्षशप्ताः अन्येऽपि पापा-चाराः, वाममार्गपरायणत्वात्। सांख्याः निःसंगमार्गधारकाः स्वानुभवहीनकर्य (? कर्म) धारणात् पापाचारविषयभोग-परायणत्वविधिनिषेधहीनज्ञानप्रतिपादनात्। पञ्चवाहकाः, पञ्चानां देवानां भेदप्रतिपादकमार्गधारकाः। विषयासक्त-स्वभावत्वादेवान्नभिक्षादिकं कुर्वन्ति गृहे गृहे, देवदुःखदपूजन-परायणत्वात्। मुभा.

ज्ञानमार्गेषु नष्टेषु लोके निष्क्रियतां गते।
कीटमूषकसर्पाश्च धर्षयिष्यन्ति मानवान्।।
करिष्यन्त्यवतारांश्च ब्राह्मणानां कुलेषु ते।
दधीचिशापनिर्दग्धाः पुरा दक्षाध्वरे द्विज।।
शापयुक्ता गौतमस्य भविष्यन्ति विशेषतः।
वामादिमार्गसंसक्ता जनान् भ्रष्टांश्च कुर्वते।।
अन्यजातिषु सर्वत्र भविष्यन्ति तथा नराः।
दक्षाध्वरे सर्ववर्णाः शापितास्ते दुराग्रहाः।।
मोहयिष्यन्ति च जनान्दर्शयित्वा फलानि वै।
तमसाऽऽविष्टहृदया बिडालव्रतिकाधमाः।।
बौद्धमायाधरस्तत्र विष्णुः पाखण्डपोषकः।
सहायवान्सदा देवो दधीचेः शापकारणात्।।
कर्ममार्गस्य संच्छेत्ता भ्रष्टाचारयुतान्नरान्।
करिष्यति स्वयं विष्णुर्युगधर्मप्रवर्तकः।।
अतज्ज्ञास्तं भजिष्यन्ति शरणागतवत्सलम्।
बौद्धमायाश्रितं सर्वे भ्रष्टाचारयुता नराः।।

शरणागतवत्सलं बौद्धमाया शरणागता तस्यां वत्सलः तदन्यशरणाभावात्। तज्ज्ञास्तं विष्णुं न भजिष्यन्ति, बौद्ध-मायाविवर्जितं वेदाचारयुतं विष्णुं भजिष्यन्ति, शुद्धवैष्णव-मार्गप्रवर्तकत्वात्। मुभा.

कलौ दशसहस्रं वै वर्षाणां च यदा भवेत्।
विष्णुस्त्यक्त्वा तदा पृथ्वीमालयं स्वं गमिष्यति।।
वर्षपञ्चसहस्राणि स्थिरा भागीरथी नदी।
ग्रामदेवास्तदर्धेन गताः स्वर्गं महामुने।।
स्वधर्मविधिसंयुक्तं कर्म यत्क्रियते नरैः।
तदेव देवभोग्यं वै भजति द्विज सर्वदा।।
विपरीतं कृतं कर्म त्वासुरं तत्प्रजायते।
कलावासुरभावेन गता देवा निजालयम्।।
आसुरेण स्वभावेन तीर्थायतनकादिषु।
समागतं नरं दृष्ट्वा गच्छन्ति तीर्थदेवताः।।
तेषु तीर्थेषु देवानां मूर्त्यादिषु तदाऽसुराः।
प्रविश्य कर्मभोक्तारो भविष्यन्ति कलौ युगे।।
तीर्थानि गुप्तभावेन देवतायतनानि वै।
संस्थितानि कलौ तस्मिन्नुपवासयुतानि च।।
दैवेन संयुतं दृष्ट्वा स्वभावेन महासुराः।
गच्छन्ति मानवं तीर्थदेवाः स्वस्थानगाः पुनः।।
तत्र वै कर्मकर्तारो नरा आसुरभावतः।
भविष्यन्ति सदा विप्र भ्रष्टा वै दोषसंयुताः।।
क्रियारूपा महाशक्तिः संस्थिता जगतीतले।
क्रियाफलप्रदाता वै गणेशः संस्थितो भवेत्।।
असुराणां सुराणां च सिद्धिदाता गजाननः।
महिमानं स्वकीयं स कलौ संगोप्य संस्थितः।।
धर्मपादाश्च चत्वारस्तपः शौचं दया तथा।
सत्यं तत्र क्रमेणैव सर्वे नश्यन्ति धर्मजाः।।
त्रेतायां च दया नष्टा नष्टं च द्वापरे तपः।
आचारश्च कलौ प्राप्ते नष्टरूपो भविष्यति।।
सत्यरूपमयः पादः कलौ तिष्ठति मानद।
तेन सर्वे जना भूमौ व्यवहारं प्रकुर्वते।।
द्वापरस्य तु संध्यांशे गते पृथुबलः कलिः।
बहुलानृतभावेनाऽऽदरात्सत्यं छिनत्ति च।।
ततः क्रमेण सत्यस्य विनाशश्च भविष्यति।
तदा कोलाहलो विप्र देवानां सदने भवेत्।।
कलौ दुःखयुता लोका अन्नादिकविवर्जिताः।
ग्रामादि सकलं त्यक्त्वा वसन्ति वनगोचराः।।
परस्परं क्षुधाविष्टा भक्षयन्ति विचेतसः।
सत्यहीना धरित्री वै भविष्यति महामते।।

**षोडशाब्दं परं चाऽऽयुः पञ्चवर्षसमन्विता।**
**अन्तर्वत्नी भवेन्नारी कलौ तस्मिन्विशेषतः।।**
**एवमासुरभावेन जितं सर्वं महामुने।**
**देवतामुनयः सर्वे गणेशानं स्तुवन्ति ते।।**
**तदा ढुण्ढिः सुराणां स हितायावतरिष्यति।**
**धूम्रवर्णो ह्यधर्मं तं हत्वा धर्मं करिष्यति।।**
**धर्मं प्रवर्तयित्वा स अन्तर्धानं गमिष्यति।**
**तदा पुनः कृतं प्राप्तं संध्यांशेन युगक्रमैः।।**
**एवं युगप्रमाणं च युगधर्मः प्रकीर्तितः।**
**मायामयमिदं सर्वं त्वं जानीहि भ्रमात्मकम्।।**

कृतादिषु क्रमेण ध्यान-तपः-स्वधर्म-
नामस्मरणानां सर्वफललम्भ-
कत्वम्, कलौ संन्यासा-
भावः

**'कृते मनः सदाऽधीनं नराणां धर्मयोगतः।**
**ध्यानं मुख्यं कृतं तत्र तेन सर्वं प्रलभ्यते।।**
**त्रेतायां चञ्चलं चित्तं धर्मस्य पादहीनतः।**
**तपस्तत्र कृतं मुख्यं तेन सर्वं लभेन्नरः।।**
**द्वापरे देहकष्टं यत्र भवेत्तेन तत्र च।**
**मुख्यः स्वधर्माचारश्च तेन सर्वं लभेन्नरः।।**
**कलावासुरभावेन नष्टो धर्मः क्रमेण वै।**
**तत्र स्मरणमात्रेण नाम्नः सर्वं लभेन्नरः।।**
**नामस्मरणमार्गे वर्णाश्रमो न च विद्यते।**
**संन्यासादिः सदाचारो भवेत्तेनाऽऽसुरं हतम्।।**
**कलावासुरबाहुल्यान्न संन्यासस्य योग्यता।**
**चञ्चलं देहचित्तादि तेन नष्टो भविष्यति।।**

कृते पूर्णाया गणेशभक्तेस्त्रेतादौ
पादशो हानिः, कलियुगान्ते
निःशेषहानिः

**'कृते मां पूर्णभावेन भजन्ते सर्वमानवाः।**
**अज्ञानावरणैर्हीनाः श्रेष्ठं ते प्रवदन्ति हि।।**
**त्रेतायां पादहीनेन मां भजन्ते नरा मुने।**
**पञ्चायतनभावेन पञ्च श्रेष्ठान्वदन्ति ते।।**
**तत्र सर्वेषु साम्येन मां भजन्ते न संशयः।**
**चतुर्थ्यः श्रेष्ठभावाख्यं ज्ञानं नष्टं मदीयकम्।।**
**द्वापरे द्विपदा हीनं मां भजन्तेऽसुरादयः।**
**वदन्ति न्यूनरूपं तु चतुर्थ्यः शंकरात्मजम्।।**
**वेदशास्त्रपुराणेषु श्रेष्ठं जानन्ति मानवाः।**
**मोहेन युगमानेन मां न्यूनं प्रवदन्ति ते।।**
**सर्वं ब्रह्मेति वेदेषु कथितं तत्र किं भवेत्।**
**सत्ता समानरूपा तु तथाऽयं गणनायकः।।**
**कलौ त्रिपादहीनेन मां ज्ञानेन भजन्ति ते।**
**वदन्ति वै नरास्तत्र मलजोऽयं गजाननः।।**
**शिवस्य वरदानेनाग्रपूज्योऽयं गणेश्वरः।**
**सर्वपूज्यो यथा दैत्या जन्तवो वरसंयुताः।।**
**सर्वं ब्रह्मेति वेदेषु कथितं तेन विघ्नपः।**
**वर्णितोऽयं शिववरबलेनैव मुनीन्द्रकैः।।**
**स्वसत्तासंयुतो देवो नायं चिन्तामणिः कदा।**
**शिवभक्तिबलेनाऽऽद्यो वरयुक्तो बभूव ह।।**
**कलिप्रान्ते मुने लोका न भजिष्यन्ति मां कदा।**
**एकपादमयी भक्तिर्नाशं यास्यति निश्चितम्।।**
**मतभेदेन मोहेनाऽऽदौ मां त्यक्त्वा विशेषतः।**
**शिवविष्ण्वादिकान्सर्वे भजन्ते त्वग्रपूज्यकान्।।**

मतभेदेन शिवादिब्रह्मवर्णनं मतभेदेन मोहेन मतभेदात्मकमोहेन। मुभा.

**सर्वपूज्याग्रपूज्यत्वं नष्टं भवति मे ततः।**
**अन्ते विघ्नयुताः सर्वे नरकेषु पचन्ति वै।।**
**युगमानप्रसिद्ध्यर्थं कृतं मेऽत्र महामुने।**
**कर्माकर्मविकर्माणि स्थापितानि विभागशः।।**

हे महामुने, मे मया युगमानप्रसिद्ध्यर्थं कृतम्। यदा सर्वे मां सर्वश्रेष्ठं मत्वा भजन्ते तदा स्वल्पकाले मुक्ताः स्युः। अन्यच्च युगमानं पापाचारपुण्याचारात्मकं च कर्माकर्म-विकर्माणि च यथाविभागेन न भवन्ति, तदर्थं मोहयुक्ताः सर्वे मां न भजन्ते, श्रेष्ठं च न जानन्तीति। मुभा.

(१) **मुद्गल.** ३।१९।५२-५७.
(२) **मुद्गल.** ५।४२।१८-३१.

कृतादिषु क्रमेण कर्म इहैव सद्यः, इहैव कालेन,
इह वा परलोके वा, परलोके एव फलदम्,
युगानुरूपं कर्मफलयोस्तारतम्यम्

**[1]तत्रैव युगमानं ते कथयामि समासतः।**
**कृते कर्म कृतं सद्यः फलदं जायते मुने।।**

अधुना कर्मफलभेदार्थं वर्णयन्नाह – तत्रेति। कृते कृतयुगे नरैः कृतं कर्म सद्य एव फलदं भवति, पूर्णस्वधर्मनिष्ठत्वात्। तत्र जन्मान्तराशुभं कर्म न बाधकं भवति, स्वधर्मस्थस्य कृतं कर्म पुरुषार्थदमिति। मुभा.

**त्रेतायां च कृतं कर्मान्यकर्माबाधभावतः।**
**कालेन फलसंयुक्तं भवति प्राणिनां किल।।**

त्रेतायां त्रेतायुगे कृतं कर्म सद्य एव फलदं (न) भवति, ह्यन्यकर्माबाधदर्शनात् पूर्णस्वाचारहीनत्वाच्च। अत्रान्यत्कर्म जन्मान्तरस्थम्, तस्याबाधदर्शनान्न निश्चय इति। मुभा.

**द्वापरे परलोके वाऽन्यकर्माबाधभावतः।**
**इह ते वाऽपि भुञ्जन्ति धर्महीनप्रभावतः।।**

द्वापरे नराः कर्म कुर्वन्ति तस्य फलं यदा जन्मान्तरकृतकर्मबाधहीनं तदाऽस्मिन्लोके फलदं भवति, वा परलोके च, धर्महीनप्रभावतो द्विपादधर्मत्वादिति। मुभा.

**कलौ तु परलोके ते वाऽन्यजन्मनि मानवाः।**
**संभोक्ष्यन्ति कृतं कर्म कालमानप्रभावतः।।**

कलौ तु पुनः परलोके वाऽन्यजन्मनि कर्म फलदं भवति, कालमानप्रभावत आसुरभावात्मकत्वादिति। मुभा.

**कृते कर्म कृतं येन सकृत्तस्य फलं लभेत्।**
**त्रेतायां निष्फलं दृष्ट्वा तदा द्विगुणमाचरेत्।।**
**फलं ददाति त्रिगुणं द्वापरे कर्म निश्चितम्।**
**कलौ चतुर्गुणं प्रोक्तमिह जन्मनि सौख्यदम्।।**
**सकृच्चापि फलं कृत्वा लभेत्सत्कर्म मानवः।**
**अथवा युगधर्मेण चतुर्गुणं फलं लभेत्।।**

कलौ सकृत् एकवारं कृतं कर्म फलदं भवेत्, पूर्वजन्मनि तत्संस्कारप्राबल्यात्। तद्धीनं चेत्तदा चतुर्गुणं कर्मकृतं फलं लभेत्। परगामिफलत्वात् परस्मैपदमिति। मुभा.

(१) **मुद्गल.** ६।२२।७८-८१, ८४-८६.

कलौ बुद्धरूपावतीर्णेन विष्णुनाऽधर्मप्रवर्तनम्,
अवतारान्ते बुद्धप्रार्थितेन श्रीधूम्रवर्ण-
गणेशेन पुनः धर्म-
स्थापनम्

**§[1]विष्णुर्हर्षसमायुक्तो बुद्धोऽभूच्च महर्षयः।।**
**कृतं तेन महच्छास्त्रं बौद्धं मोहप्रदायकम्।**
**कलिदोषप्रवृद्ध्यर्थं सेविभ्यो नरकप्रदम्।।**
**कलिप्रान्ते दुराचारा बौद्धमायाविमोहिताः।**
**वर्णाश्रमपरिभ्रष्टा भविष्यन्ति गृहे गृहे।।**
**लेशमात्रेण धर्मस्तु स्थितस्तत्र महर्षयः।**
**अधर्मेण जितः सोऽपि सदोपोषणसंयुतः।।**
**ततो बुद्धः स्वयं ढुण्ढिं परं ध्यात्वा तपोन्वितः।**
**प्रार्थयिष्यति विघ्नेशं धर्मसंस्थापनाय वै।।**
**ततो गणेश्वरः साक्षात्प्रसन्नोऽवतरिष्यति।**
**धूम्रवर्ण इति ख्यातो धर्मं संस्थापयिष्यति।।**
**हृष्टो बुद्धश्च तं नत्वा पूज्य स्तुत्वा विशेषतः।**
**अन्तर्धानं स्वयं कृत्वा स्वमहिम्नि स्थितो भवेत्।।**

कृतत्रेतयोर्व्यभिचारस्यादोषत्वं द्वापरे तस्य दोषत्वम्,
कृते वर्णाश्रमैक्यं त्रेतायां वर्णाश्रमभेद इति
युगस्वभावभेदस्य युगानां कालमान-
रूपत्वं ध्यानयज्ञादिरूपत्वं चेति
युगरूपभेदाश्रयणेनोप-
पादनम्

***[2]पुराणेषु युगानां तु श्रुत्वा चिह्नानि विस्मिताः।**
**महासंशयसंयुक्ता वयं जाता विशेषतः।।**
**कृते स्त्रीणां च स्वातन्त्र्यं त्रेतायां ब्रह्मणा कृतम्।**
**द्वापरे संस्कृतं श्वेतकेतुनैकपतिश्रितम्।।**

अधुना सर्वपुराणोक्तयुगसंशयनाशनार्थमाह – कृत इति।

§ पूर्वसंदर्भानुरोधेनात्र बुद्धावतारे अधर्मप्रवर्तनरूपदोषापादककर्मापत्त्या खिन्नस्य विष्णोः 'तस्य कर्मणो मयि समर्पणाद्दोषो न भवेत्' इति श्रीगणेशाश्वासनात् हर्षः, न तु बुद्धभवननिमित्तक इति ज्ञेयम्।

* सूतं प्रति शौनकोक्तिरियम्।

(१) **मुद्गल.** ८।१५।२९-३०, ५३-५७.

(२) **मुद्गल.** ८।१७।२-२९, ४२-४९, ५१-५८.

कृते च त्रेतायां च स्त्रीणां ब्रह्मणा स्वातन्त्र्यं कृतम्। स्त्री स्वपत्यधीना तदपि परपुरुषेणेच्छिता तेन संसक्ता भवेत्। स्वातन्त्र्याञ्च दोषः, वामदेवोपनिषदि सामवेदवाक्यात्। द्वापरे श्वेतकेतुना मुनिना मर्यादा कृता परपुरुषं कदाऽपि न गच्छेदिति। मुभा.

**गौतमेन कथं शप्ता कृतेऽहल्या महासती।**
**इत्यादि बहवोऽस्माभिर्मार्गा दृष्टाः कृते युगे।।**

एवं चेत्तर्हि कृते गौतमेनाहल्या कथं शप्ता? परपुरुषगमनदोषहीनं कृतयुगं चेदिति। मुभा.

**अन्यत्कृतयुगे प्रोक्तं वर्णाश्रमो न विद्यते।**
**एकवर्णाश्रमस्थास्तेऽभवन्संकीर्तिता जनाः।।**

अन्यपुराणेषु प्रोक्तः कृतयुगे वर्णाश्रमो न विद्यते, तत्रैकवर्णा वर्णाश्रमस्थापका इति। मुभा.

**त्रेतायां क्षात्रधर्मं तु चकार प्रपितामहः।**
**ततोऽभवन्नरा वर्णाश्रमस्थास्ते प्रकीर्तितम्।।**

त्रेतायां प्रपितामहः ब्रह्मा क्षात्रधर्मं चकार, कृतयुगे स्वपरभेदेषु समा नराः स्वार्थविशेषहीना इति, त्रेतायां च स्वार्थपरार्थभेदयुक्ताः, एकपादाधर्मप्रवेशनात्। अतः क्षात्रधर्मं चकार स्वार्थमोहने परपीडाशान्तिकृत्क्षात्रधर्म इति। ततो वर्णाश्रमस्थाञ्जनांश्चकार वर्णाश्रमधर्मः स्वार्थमोहनाशकृदिति। मुभा.

**सौरचान्द्रभवौ विप्र द्वापरान्ते स्थितौ नृपौ।**
**पुनः कृतयुगे प्राप्ते राज्यं तौ च करिष्यतः।।**
**वर्णाश्रमविभागेन वर्तयिष्यन्ति मानवाः।**
**किमिदं कौतुकं तत्र विरुद्धवाचकं परम्।।**

पुनः कृतयुगे वर्णाश्रमविभागेन मानवा वर्तयिष्यन्ति च एवं पुराणेषु विरुद्धं वर्णितम्, तन्नाशाय सर्वपुराणोपनिषन्मौद्गलपुराणं च अत्रैव संशयनाश इत्यर्थः। मुभा.

**युगधर्मेण नष्टास्ताः कलौ पापमये क्रियाः।**
**वर्णाश्रमविभागस्थास्तत्र सिद्धिः कुतो भवेत्।।**
**कलौ चतुर्गुणेनैव कर्मणा सिद्धिमाप्नुयात्।**
**नरः सर्वत्र संप्रोक्तं कथं तच्च भविष्यति।।**
**अतो युगभवं सर्वं कथयस्व विशेषतः।**
**याथातथ्यं महाभाग सुलभं सुगमार्थकम्।।**

**सूत उवाच –**

**युगा नानाविधाः प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः।**
**तदर्थज्ञो न मुह्येत मतभेदप्रमाणतः।।**

मुनिभिर्नानाविधा युगाः प्रोक्ताः। तत्र केचिन्मुनयः कांश्चिद्युगान् धृत्वा युगधर्ममवदन्। तदेव पुराणेषु वर्णितम्। तत्र ज्ञायते, तत्तद्युगवर्णना (? न) ज्ञानाभावात्। तत्र पुराणप्रोक्तं श्रुत्वा ह्यर्थविरुद्धं चेत्तदा स्वविचारेण युगमतभेदान् ज्ञात्वा न मुह्येत, तत्तदात्मकयुगवर्णनत्वात्। तदेवाग्रे स्फुटं भवतीति। मुभा.

**तुरीयदेहगं केचित् कृतं वदन्ति निश्चितम्।**
**त्रेता सुषुप्तिगा स्वाप्नं द्वापरं जागृतं कलिम्।।**

अधुना जगदात्मकयुगार्थमाह – तुरीयदेहगमिति। केचिन्मुनयः तुरीयदेहगं यद्ब्रह्म तदेव कृतयुगं वदन्ति, च परं सुषुप्तिरूपा त्रेतेति। मुभा.

**तत्राऽऽत्मा गुणपः प्रोक्तो सर्वत्रैको महर्षयः।**
**माया सुषुप्तिरूपा सा नानाकारा प्रकीर्तिता।।**
**तस्यां नानाविधायां न व्यभिचारो भविष्यति।**
**यत्र तत्र स्थितं स्वस्य पतिं पश्यति सा शुभा।।**

तत्र सुषुप्त्यवस्था नानात्मिका, तुरीयं सर्वत्रैकं च। तुरीयं पुरुषः, सुषुप्तिः प्रकृतिः तस्या व्यभिचारो न, सर्वत्र सदैकपुरुषरतेति। अत एव कृतयुगे त्रेतायुगे च स्त्रीणां स्वातन्त्र्यं तुरीयसुषुप्त्यात्मकरूपं तदाकारं विभाति, जाग्रत्स्वप्नाभिमानधारणादिति। मुभा.

**सूक्ष्मं स्थूलं विभिन्नं यत्तया सृष्टं विभागतः।**
**तयोर्गुणेशजं रूपं तदाकारं विभाति च।।**

तयोः जाग्रत्स्वप्नयोः पतिकलत्रादिकं व्यभिचारयुतं परपुरुषसंगे। न व्यभिचारो भवेत् इति स्त्रीणां स्वातन्त्र्यं नास्ति, पत्यधिनत्वादिति। मुभा.

**भिन्नभावात्समुत्पन्ने जाग्रत्स्वप्ने न संशयः।**
**तयोः पतिकलत्रादि व्यभिचारयुतं भवेत्।।**
**तत्र संस्थापिता तेन मर्यादा श्वेतकेतुना।**
**श्वेतं स्वप्नं ध्वजो यस्य श्वेतकेतुः स वै स्मृतः।।**

तत्र श्वेतकेतुना मुनिना मननशीलेन जाग्रत्सृष्टा। मुनिना श्वेतकेतुना, अत्र श्वेतं स्वप्नं स्वप्नावस्था श्वेतवर्णात्मिका यस्येश्वरस्य ध्वजः ध्वज इवाग्रगण्यः तेन जाग्रत् सृष्टा

तस्यां मर्यादा कृता – सदा स्वात्मपतिना संगः कर्तव्यः, नान्यपुरुषेण, व्यभिचारदोषदत्वात्। स्वप्ने न दोषः, स्वप्ने परपुरुषसंगदोषहीनत्वात्। जाग्रदेव कर्मार्हेति। एवं युगमानं ज्ञातव्यं तत्तद्युक्तिवर्णनादिति। मुभा.

**अनेन युगमानेन ज्ञातव्यं तद्विचक्षणैः।**
**नेमे युगा महाविप्राः कथिता मुनिभिः पुरा।।**
**ध्यानं कृतयुगं केचिद्यज्ञं त्रेतां वदन्ति च।**
**आचारं द्वापरं देहविषयं कलिमेव च।।**

केचिन्मुनयो ध्यानं ब्रह्मसमाधिदं ध्यानं कृतयुगं च, यज्ञं त्रेतायुगं च, आचारं द्वापरं च, देहविषयप्रियं कलिं च वदन्ति। तत्र तदनुभवेन पुराणेषु कथितम्। तद्विचारेण न मोहदं भवेत्, तत्तद्युगप्रभावज्ञानात्। 'कलिः शयानो भवति संजिहानस्तु द्वापरः। त्रेता भवति तिष्ठन्ती कृतं संपद्यते चरम्।। –' इति। कलिः शयानः। यो नरो मायामोहितः सन् विकर्माणि कुरुते देहविषयसुखपरायण इति, मरणमेका गतिर्भविष्यतीति तद्विचारहीनश्चेति स एव कलिः, विकर्माचरणात्। यो नरः संजिहानः। संजिहानः निद्रात्यागोऽत्र ज्ञातव्यः। मायामोहदुःखदज्ञानयुक्त इति स एव परलोकप्राप्त्यर्थं सत्कर्माणि कुरुते कर्म स्वर्गदं चेति, तं नरं द्वापरं वदन्ति, असमसत्कर्मकारित्वात्। यो नर उत्तिष्ठन् मायामोहं तिरस्कृत्य मोक्षार्थं कर्म कुरुते स एव मायामोहादुत्तिष्ठन् त्रेतायुगं वदन्ति, मोक्षरुचियुक्तत्वात्। यो नरो ब्रह्मध्यानपरायणो ब्रह्मसाक्षात्कारं करोति स एव कृतयुगात्मकः, साक्षात्कारपरायणत्वात्। एवं मुनयो नानाविधं युगं वदन्ति (इति) ज्ञातव्यमिति। मुभा.

**तत्र ध्याने महाभागा एकवर्णाश्रमो भवेत्।**
**ज्ञानं तदेव ज्ञातव्यमेकरूपधरं सदा।।**

अधुना प्रश्नोत्तरमाह – तत्रेति। तत्र ध्यानात्मके कृतयुगे चैकवर्णाश्रमो ज्ञातव्यो न तु कालमानयो(? यु)गेषु, ध्यानेऽवधूतमार्गस्य मुख्यत्वादिति। मुभा.

**यज्ञः कर्ममयः प्रोक्तस्तत्र वर्णाश्रमो भवेत्।**
**अतो वर्णाश्रमाचारस्त्रेतायां परिकीर्तितः।।**

यज्ञो मोक्षरुचिदस्त्रेतायुगम्, तत्र वर्णाश्रमाचारो ज्ञातव्यः स्वधर्ममोक्षद इति। मुभा.

**एवं नानाविचारेण मुनिभिः कथितं पुरा।**
**न तत्र संशयः कार्यो जनैस्तदर्थयुक्तिभिः।।**

अत्र श्वेतकेतुनाऽद्ये द्वापरे मर्यादा कृता। ततः परं चतुर्युगेषु सा वै मुनिभिः धृता ज्ञातव्या, युगानुवृत्तिः (? – त्तेः) पुनःपुनः। तद्यदाद्ये कृतयुगे ह्येकवर्णाश्रमो ज्ञातव्यः। त्रेतायां चत्वारो वर्णाश्रमाश्च ब्रह्मणा स्थापिताः। तदनन्तरं चतुर्युगेषु वर्णाश्रमाचारश्चतुर्विधो ज्ञातव्यः, पुनःपुनर्युगानुवृत्तेः। अतो गौतमेनाहल्या शप्ता व्यभिचारदोषात्। एवंप्रकारेण न विरुद्धापत्तिरिति। मुभा.

कृतादियुगेभ्यस्तत्कृततपस्तुष्टेन श्रीगणेशेन तत्त-
द्युगेच्छया सत्त्वादिगुणप्राधान्यं भुक्तिमुक्त्यादि-
प्राधान्यं स्वस्मिन् स्वाधीना युगान्त-
रांशाश्च प्रदत्ताः, प्रतियुगं
युगान्तरांशपरि-
माणम्

**अधुना युगमाहात्म्यं कथयामि समासतः।**
**कलौ सिद्धिकरं चैव कर्म येन प्रजायते।।**
**आदौ ब्रह्माऽसृजत्कालं धर्माधर्मव्यवस्थया।**
**स चतुर्धाऽभवत्तत्र युगरूपः पुरातनः।।**
**कृतं त्रेता द्वापरश्च कलिश्चेति महर्षयः।**
**तेभ्यः सिद्धिप्रदानार्थं ददौ मन्त्रान्प्रजापतिः।।**
**तं प्रणम्य ययुः सर्वे तपसे वनमुत्तमम्।**
**गणेशं चेतसि ध्यात्वा जेपुर्मन्त्रं युगानि च।।**
**निराहारप्रभावेण परितुष्टो गजाननः।**
**भक्त्या तेषां ययौ वर्षसहस्रे वरदः पुरः।।**
**तमागतं समालोक्य प्रणेमुस्ते गणाधिपम्।**
**पूज्य ते तुष्टुवुः सर्वे हर्षगद्गदभाषणाः।।**
**यं यमिच्छति तं तं तु दास्यामि स्तोत्रतोषितः।**
**भुक्तिमुक्तिप्रदं भाविसर्वमान्यं युगाः किल।।**
**वरान्ब्रूत महाभागा ददामि मनसेप्सितान्।**
**तपसा स्तोत्रमुख्येन तुष्टो भक्त्या विशेषतः।।**

**युगा ऊचुः –**

**यथा संरचिता देव गजानन वयं त्वया।**
**सामर्थ्यमतुलं देहि तथा ते भक्तिमुत्तमाम्।।**

**कृत उवाच –**

**सदा सत्त्वयुतं मां त्वं कुरु कर्मपरायणम्।**
**स्वधर्मरुचिसंयुक्तं प्रभो मोक्षार्थमुद्यतम्।।**

कृतयुगो गणेशमुवाच – सदेति। मां कृतयुगं सदा सत्त्वगुणयुक्तं कुरु मोक्षार्थपरायणं सत्त्वगुणं चेति। तत्रापि स्वल्पभावेन पापाचरणमस्ति, तदेवाग्रे स्फुटं भविष्यति। मुभा.

**त्रेतोवाच –**

**भुक्तिमुक्तिप्रियां मां च कुरु सत्त्वरजोयुताम्।**
**तदर्थं धर्मनिष्ठत्वं गजानन नमोऽस्तु ते।।**

त्रेतोवाच – भुक्तिमुक्तिप्रियामिति। हे गजानन, भुक्तिमुक्तिप्रियाम्, इह लोके भुक्तिं देहि, मरणानन्तरं मोक्षं देहि च। एवं भुक्तिमुक्तिप्रियां मां कुरु। तत्र भोगो रजोगुणात्मकश्च मोक्षः सत्त्वगुणात्मकश्चैवं सत्त्वरजोयुता त्रेतेति। मुभा.

**द्वापर उवाच –**

**भुक्तिसौख्ययुतं मां त्वं कुरु धर्मपरायणम्।**
**भोगबुद्धिपरार्थं च रजस्तमोयुतं प्रभो।।**

द्वापर उवाच – भुक्तिसौख्ययुतमिति। भुक्तिसौख्ययुतं निरन्तरं भोगेच्छायुक्तं तदर्थं धर्मपरायणं कामिकसत्कर्माचरणपरायणम्। तेन स्वर्गप्राप्तिः पुनः पतनं च। एवं रजोगुणयुक्तम्, रजोगुणः भोगात्मक इति च। परं भोगबुद्धिपरार्थं भोगेषु बुद्धिः तया परपीडासंभवात्तमोगुणयुक्तं मां कुर्विति। मुभा.

**कलिरुवाच –**

**तामसं देहभोगार्थमुद्यतं सततं प्रभो।**
**विकर्मरुचिसंयुक्तं मां कुरुष्व गजानन।।**

कलिरुवाच – तामसमिति। हे प्रभो, तामसं तमोगुणयुक्तम् अत एव देहभोगार्थमुद्यतम्, देहसौख्यकरं कर्म तत्र पापपुण्यविचाराभावात्पापमेव भवेद्देहसौख्यदं विकर्म चेति, तद्रुचियुतं मां केवलतमोगुणयुक्तं कुरु सदा परपीडापरायणं चेति। मुभा.

**पुनस्ते तं वदन्ति स्म युगा हर्षसमन्विताः।**
**एकैकाश्रितभावेन भोः कुरुष्व निरन्तरम्।।**

पुनश्चतुर्युगास्तं गजाननम् अवदन् – नः हि अस्मान् एकैकाश्रितभावेन निरन्तरं कुरुष्वेति। मुभा.

**गणेश उवाच –**

**लक्षांशेन कृते प्राप्ते कलिस्तत्र भविष्यति।**
**शतांशेन च सा त्रेता द्वापरस्त्वयुतांशतः।।**

अधुना गणेशो युगान् प्रत्युवाच – लक्षांशेनेति। कृतयुगे सत्त्वात्मके प्राप्ते सति लक्षांशेन कलिस्तामसो भविष्यति। तस्मात्कृतयुगेऽपि क्वचित्पापाचरणयुक्ता नरा वर्णिताः, कलिप्रवेशदर्शनात्। शतांशेन त्रेतायुगं चायुतांशेन द्वापरो भविष्यति। तस्मात्क्वचिद्भक्तिमुक्तिप्रियाः क्वचिद्भुक्त्यर्थमेव सत्कर्मकारिणो नरा भविष्यन्ति, युगानां परस्परप्रवेशनादिति। मुभा.

**यदा त्रेतायुगं प्राप्तं शतांशेन तदा कृतम्।**
**सहस्रांशेन तत्रैव द्वापरः प्रभविष्यति।।**
**अयुतांशेन पापिष्ठः कलिस्तेन समन्वितः।**
**चरिष्यति न संदेहः परस्परप्रवेशनात्।।**

एवं त्रेतायुगेऽपि परस्परप्रवेशो युगानां ज्ञातव्यः तत्तत्स्वभावयुक्ता जना इति। तदपि बाहुल्येन त्रेतायुगस्य तत्स्वभावयुक्ताः सर्वजना इति। मुभा.

**द्वापरे समनुप्राप्ते शतांशेन भविष्यति।**
**कलिः सहस्रभागा त्रेताऽयुतांशं कृतं भवेत्।।**

द्वापरे द्वापरयुगे शतांशेन कलिश्च, सहस्रभागा सहस्रांशेन त्रेता, अयुतांशं कृतयुगं भविष्यति, परस्परप्रवेशनात्तत्तत्स्वभावयुक्तजनदर्शनाच्च। तदपि बाहुल्यं द्वापरस्य, तत्स्वभावयुक्तसर्वजनत्वादिति। मुभा.

**कलौ शतांशरूपेण द्वापरः प्रभविष्यति।**
**सहस्रभागा त्रेता च लक्षांशेन कृतं भवेत्।।**

कलौ कलियुगे प्राप्ते सति शतांशरूपेण द्वापरश्च, सहस्रभागं त्रेतायुगं च, लक्षांशं कृतं च भविष्यति, तत्तत्स्वभावयुक्तजनदर्शनात्। तदपि बाहुल्यं कलियुगस्य, तत्स्वभावयुक्ता नरा इति। मुभा.

**धर्माधर्मविचारेण मोहदः स कलिः स्मृतः।**
**धर्मज्ञो मोहकर्माऽसौ द्वापरः परिकीर्तितः।।**
**यशःप्रिया स्वधर्मस्था त्रेता सर्वत्र संमता।**
**मुक्तिप्रियं कृतयुगं स्वधर्मस्थं प्रकीर्तितम्।।**

**एवं क्रमेण सर्वत्र भविष्यथ युगाः प्रियाः।**
**मां ज्ञात्वा बन्धहीनाश्च वाञ्छितार्थप्रदायकाः।।**

हे प्रिया युगाः। गणेशेन चतुर्विधस्वभावयुक्तयुगसर्जनात् गणेशप्रिया युगाः। मां ज्ञात्वा 'गणेशेन ज्ञापिता वयं तदेव करवाम, सा गणेशसेवा च' एवं मां ज्ञात्वा बन्धहीना भविष्यथ। हि अन्यथा स्वाभिमानेन अन्ययुगप्रवेशदर्शनात् क्रोधयुक्ताश्चेत् तदा बन्धयुक्ता भविष्यथेति भाव इति। मुभा.

तत्तद्युगप्रभावानुरूपं तत्तद्युगे फल-
सिद्धेरायुरादीनां च तारतम्यम्,
मोक्षतत्साधनयोगयोस्तु
सर्वत्र साम्यम्

**सूत उवाच –**

**[1]कृते कलिमुखाश्चैव युगाः सन्ति महर्षयः।**
**कृताज्ञापालकाः सर्वे कृतमानभयार्दिताः।।**

अधुना युगानां परस्परप्रवेशभावेषु वर्तमानयुग(प्रवेश?) – प्राधान्यार्थमाह – कृत इति। हे शौनक, शृणु। कृते कृतयुगे प्राप्ते सति कलिमुखा युगाः स्वस्वांशेन सन्ति। ते कृताज्ञापालकाः सर्वे ज्ञातव्याः। तत्प्रकटयन्नाह – कृतमानभयार्दिताः। कृतयुगस्य मानं लक्षवर्षाणि मनुष्याणां जीवनमित्यादि नाना मानम्, तेन अर्दिताः स्वस्वयुग-मानहीनाः सन्तः सन्तीति। मुभा.

**तत्राऽऽयुः कृततुल्यं वै सर्वेषां जन्मिनां सदा।**
**पापाचारादियुक्तानां सर्वं कृतसमं भवेत्।।**

पापाचारादियुक्तानामपि आयुरादिमानं कृतयुगसमं भवेत् कलियुगादिमानमर्दनादिति। मुभा.

**शापादिकं नराणां तु सफलं कृतभावतः।**
**भवते पापिनामेव यथा सुकृतिनां वचः।।**

पापाचारयुक्तानामपि शापवचनं सत्यं भवेत्, तदपि मृदुभावयुक्तं पापप्राबल्यमिति। मुभा.

**तत्र भेदं प्रवक्ष्यामि नरोऽपराधसंयुतः।**
**न भवेच्छापभीतः सन्कृते युगप्रमाणतः।।**
**तद्वत्त्रेतायुगे विप्र युगास्त्रयः कृतादयः।**
**वर्तन्ते भयसंयुक्तास्त्रेतायां नात्र संशयः।।**

तद्वत्त्रेतायुगे ज्ञातव्यम्। त्रेतायुगमानादिना अन्ये युगा इति। मुभा.

**पापिनां सुकृतिनां चाऽऽयुरादि तत्समं भवेत्।**
**त्रेतायुगप्रमाणेन ज्ञातव्यं द्विजसत्तम।**
**द्वापरे द्वापराज्ञायां संस्थितास्ते युगास्त्रयः।**
**तेन सर्वं तदाकारं फलं भवति कर्मजम्।।**
**आयुरादि नराणां च द्वापरेण समं भवेत्।**
**नानाभावास्तदाकारा मया वक्तुं न शक्यते।।**

तद्वद्द्वापरे द्वापराज्ञायां त्रेतादयः संस्थिता द्वापरमान-प्रमाणायुरादि वे(? चे)ति। मुभा.

**कलौ युगास्त्रयस्ते तु तदाज्ञावशवर्तिनः।**
**वर्तन्ते तेन कर्मादिफलं कलिसमं भवेत्।।**

तद्वत्कलावपि ज्ञातव्यं कलिमानार्दितान्ययुगं चेति। मुभा.

**आयुरादि महर्षे तु कलितुल्यं न संशयः।**
**सुकृतिनां महापापिनां युगस्य प्रमाणतः।।**

सुकृतिनां पापिनां चाऽऽयुः कलिमानसमं भवेत् कलि-प्राधान्यादिति। मुभा.

**अतो लेशमयी सिद्धिः कलौ सत्कर्मकारिणाम्।**
**भविष्यति तथा सर्वमासुरेण हतं भवेत्।।**

अतः सत्कर्मकारिणामपि लेशमयी सिद्धिर्भवेदासुरभाव-युक्तसत्कर्माचरणादिति। मुभा.

**योगः शान्तिप्रदः प्रोक्तः स एव मुनिसत्तम।**
**चतुर्षु युगधर्मेषु समरूपो भविष्यति।।**

शान्तिप्रदो योगः ब्रह्मण्यभेदात्मकः। स एव चतुर्षु युगेषु ब्रह्मैकभावप्रदो भवेत्। तत्र लेशमयी सिद्धिर्न भवेत्सुरा-सुरस्वभावधर्महीनो योग इति। मुभा.

अनुक्रमेण कृतादिषु सत्कर्मफलाधिक्यं
व्युत्क्रमेण कल्यादिषु पाप-
कर्मफलाधिक्यम्

**कृते कर्म कृतं चैकफलदं शास्त्रसंमते(? तम्)।**
**त्रेतायां तद्दशाधिक्यं द्वापरे तु शताधिकम्।।**

कृते कृतयुगे कर्म सत्कर्म कृतं तदेवैकफलदं सत्कर्मार्जि-तफलदं भवेत्सदा। सात्त्विकस्वभावत्वात् स्वधर्माचरणं नाऽऽश्चर्यदमिदमित्यर्थः। त्रेतायां सत्कर्म कृतं तदेव

(१) मुद्गल. ८।१८।१-२९.

दशाधिकफलदं भवेत्, त्रिपाद्धर्मत्वाद्यथाविधिकर्माचरणं किंचिदाश्चर्यदं चेति। तद्वद्द्वापरे सत्कर्म शताधिकं भवेत् द्विपाद( ? द्)धर्मयुक्तो द्वापर इति। मुभा.

**सहस्रगुणसंयुक्तं भवते सर्वमञ्जसा।**
**कलौ युगे न संदेहो गणेशवरदानतः।।**

कलौ सत्कर्म सहस्रगुणाधिकं भवेत्, पापात्मके कलौ सत्कर्माचरणमाश्चर्यदं चेति। मुभा.

**कलौ तावन्मयं प्रोक्तं विकर्म कृतमञ्जसा।**
**फलदं द्वापरे तच्च दशाधिक्यं भवेत्परम्।।**

अधुना पापाचरणं वर्णयन्नाह – कलाविति। कलौ विकर्म पापात्मकं कर्म कृतं तदेव तावन्मयं तत्प्रोक्तं दुःखदं भवेत्। पापात्मकत्वात्पापाचरणं नाऽऽश्चर्यदम्, सर्वत्र विकर्मप्राधान्यादिति। द्वापरे विकर्म दशाधिकफलदं भवेत्। द्विपादधर्मप्राधान्यात्किंचिदाश्चर्यमिति भावः। मुभा.

**त्रेतायां तच्छताधिक्यं कृते साहस्रकं भवेत्।**
**युगमानस्य माहात्म्यान्निश्चितं मुनिभिः पुरा।।**

त्रेतायां विकर्म कृतं तदेव शताधिकफलदं भवेत्, त्रिपाद्धर्मात्मकं त्रेतायुगं चेति। कृते कृतयुगे विकर्म कृतं तदेव सहस्राधिकफलदं भवेत्, चतुःपाद्धर्मे सति विकर्माचरणं महाश्चर्यदं चेति। मुभा.

**एवं नानाप्रमाणानि युगेषु कथितानि च।**
**कथितं तत्पुरा विप्राः पुराणेषु समासतः।।**

कलौ हविष्यभोजनादिनियमयुक्तायुत-
गायत्रीजपपूर्वकं कृच्छ्रपूर्वकं
च कर्मैव फलजनकम्

**अथ सिद्धिं प्रवक्ष्यामि कलौ सर्वार्थदायिनीम्।**
**यथाचारयुतं कर्म फलदं तत्क्षणाद्भवेत्।।**
**आसुरेण स्वभावेन कलिना सर्वमावृतम्।**
**फलं कर्मभवं विप्र तस्मान्न फलदं भवेत्।।**

अधुना कलौ सत्कर्म( ? र्मा)सिद्ध्यर्थमाह – आसुरेणेति। कलिना सदा ह्यासुरेण स्वभावेन सर्वं सत्कर्माचरणमावृतम्। यथाविधिवर्णाश्रमाचारयुक्तजनहीनत्वात् वर्णाश्रमाचारयुक्तजनाधीना सत्कर्मसिद्धिरिति न फलदं भवेदित्यर्थः। मुभा.

**कर्मसिद्धिं कलौ तत्र यदीच्छति जनो हृदि।**
**सर्वादावयुतं कुर्याद्गायत्रीसंभवं जपम्।।**

अधुना कलावपि सत्कर्म सिद्धिदं भवेत्तदर्थमाह – कर्मसिद्धिमिति। जनो यदि कलौ कर्मसिद्धिमिच्छति तदा आदावेव अयुतं गायत्रीजपं कुर्यात्। कलिः स्वाश्रमधर्ममासुरभावमिश्रं करोति, तन्नाशार्थं गायत्रीजपप्राधान्यम्। ततः कर्मार्हो भवेत्। मुभा.

**हविष्यान्नं तु भुक्त्वा स एकभुक्तपरायणः।**
**ब्रह्मचर्ययुतो जन्तुः सत्यभाषी जितेन्द्रियः।।**

तद्वत्तदनन्तरं वर्णाश्रमप्रोक्तधर्मयुक्तो भवेत्। ततः सत्कर्मसिद्धिप्राप्त्यर्थं हविष्यान्नादिनानानियमयुक्तो भवेत्। तदा कर्मसिद्धिं कलौ लभेदिति। मुभा.

**शौचाचारसमायुक्तो द्वेषादि स परित्यजेत्।**
**मनसाऽपि स्त्रियं नैव भोगार्थं संस्मरेत्कदा।।**
**यदा देहं समागृह्य नरः कर्मपरायणः।**
**मनसा विषयं चेच्छेत्तदा सिद्धिः कथं भवेत्।।**
**एवमादिस्वधर्मस्थां क्रियां कृत्वा महायशाः।**
**गायत्र्याश्च जपं कुर्यात्तेन विप्रत्ववान्भवेत्।।**
**ततः कृच्छ्रं समाकुर्यात्ततः कर्म समाचरेत्।**
**स सर्वकलिदोषेण मुक्तः सिद्धिमवाप्नुयात्।।**

ततः गायत्रीजपादनन्तरं कृच्छ्रं प्रायश्चितं कुर्यात्, तदनन्तरं सत्कर्म समाचरेत्। स कलिदोषेण मुक्तः सन् सिद्धिमाप्नुयादिति। मुभा.

**यथोक्तविधिना कर्म कृतं येन महात्मना।**
**चतुर्गुणं कलौ विप्राः सिद्धिदं तत्क्षणाद्भवेत्।।**
**आसुरेण स्वभावेन कृतं कर्म द्विजादिभिः।**
**कथं सिद्धिप्रदं तत्र भविष्यति कलौ युगे।।**

यदा द्विजादिभिः चतुर्वर्णस्थैर्नरैः आसुरेण स्वभावेन स्वधर्माचारहीनेन कर्म कृतं तदेव कथं सिद्धिप्रदं भवेत्? न भवेदित्यर्थः। मुभा.

**केवलासुरभावेन सत्कर्म मानवेन च।**
**सहस्रगुणितं हर्षात्कृतमासुरगं भवेत्।।**

मानवेन केवलासुरभावेन सहस्रगुणितं कर्म कृतं तदेवासुरगं भवेत् असुरभोग्यं भवेत्, न सत्कर्म सिद्धिदं भवेदिति। मुभा.

**सुरासुरस्वभावेन कृतं कर्म शुभाशुभम्।**
**सुरासुरभवं सौख्यप्रदं तच्च भवेन्नृणाम्।।**

घोरं कलिं देवमुन्यवतारैर्जितं पुनर्वृद्धं कल्किना जितं पुनर्वृद्धमन्ते श्रीगणेशो जयेत् कृतयुगं च स्थापयेत्, तत्तदवतारकाल-लक्षणानि, मुद्गलपुराण-नाशे जना दुष्टा भवेयुः

**सूत उवाच –**

**[1]महाघोरस्वरूपोऽयं कलिः सृष्टः स्वयंभुवा।**
**पापसेनासमायुक्तो जिग्ये धर्मं क्षणे क्षणे।।**
**तन्नाशार्थं विशेषेण देवा मुनिगणास्तथा।**
**नानावताररूपैस्तं जयन्ति स्म प्रयत्नतः।।**

अधुना बाह्ययत्नेन जेयं कलिं वर्णयन्नाह – तन्नाशार्थमिति। देवास्तथा मुनिगणाः कलेर्बलं ज्ञात्वा तन्नाशार्थं कलांशैर्नानावताररूपैर्नानावतारान्धृत्वा प्रयत्नतः जनेभ्यो धर्मोपदेशादिप्रयत्नतः स्वानुकूलान् जनान्कृत्वा कलिं जयन्ति स्म कुत्र कुत्र धर्माचरणयुक्ता जनाः कृता इति।

मुभा.

**गणराजस्य तदपि वरेण मूलवर्जितः।**
**कलिर्न जायते विप्र पुनर्वृद्धिं प्रयाति सः।।**

ततोऽपि कलेः पराक्रमः किंचिद्धीनो भवन् पुनर्वृद्धिं प्रयाति। एवं पुनःपुनर्जायते। तेन कलिः स्वाधिकारे महापापात्मको भवन् (? भवेत्) देवर्ष्यवतारखण्डनकृत्।

मुभा.

**दशवर्षवयोयुक्ता नारी गर्भवती भवेत्।**
**गृहे गृहे तथा त्रिंशत्परमायुर्भवेन्नृणाम्।।**

यदा दशवर्षवयोयुक्ता नारी गर्भवती भवेच्चेत्तदा त्रिंशद्वर्षं नराणां परमायुर्भवेदिति। मुभा.

**वर्णसंकररूपाश्च जनाः सर्वे धरातले।**
**सार्धैकभागो विश्वस्थो भवेद्धर्मो महामुने।।**
**तदा विष्णुः सुराद्यैः संप्रार्थितः कल्किरूपधृक्।**
**जित्वा कलिं पुनः सोऽपि धर्मं संस्थापयेत्परम्।।**

(१) मुद्गल. ८।३४।२६-३६.

तदा विष्णुः कल्कीभूत्वा कलिं जयति। मुभा.

**यदा पञ्चवयोवर्षा नारी गर्भवती भवेत्।**
**षोडशाब्दपरं चाऽऽयुर्मानवानां गृहे गृहे।।**

यदा कलिः देवर्ष्यवतारैरजेयो भवेत्कस्मिन्(चित्) काले तदा पञ्चवर्षवयोयुक्ता नारी गर्भवती भवेदिति।

मुभा.

**महाघोरं कलिं वीक्ष्य कस्मिन्कल्पे शिवादयः।**
**तं जेतुं न समर्थाश्च बभूवुर्विष्णुमुख्यकाः।।**

तदैव महाघोरं कलिं कस्मिन्काले कल्पे वीक्ष्य विष्ण्वादयो जेतुं न समर्था इति। मुभा.

**विश्वार्धमात्ररूपेण धर्मस्तिष्ठेद्धरातले।**
**हाहाकाररवैर्युक्ता जनास्तत्र सुदुःखिनः।।**
**तदा विघ्नेश्वरं सर्वे गच्छन्ति स्म शरण्यकम्।**
**धूम्रवर्णो गणाध्यक्षः कलिं जिग्ये सुदुर्जयम्।।**

तदा धूम्रवर्णावतारभृद्विघ्नेश्वरः कलिं जिग्ये।

मुभा.

**पुनर्धर्मं समास्थाप्य कृतं तथा महामुने।**
**एवं कलिबलं दृष्ट्वाऽवतारं कुरुते स्म च।।**
**[2]कलावत्यन्तभावेन मौद्गलं नष्टकं भवेत्।**
**दोषयुक्ता जनास्तत्र भविष्यन्ति गृहे गृहे।।**

## गणेशपुराणम्

कलौ धर्मरक्षार्थं पुराणानि व्यासेन कृतानि, कृतत्रेतयोः स्त्रीणां स्वातन्त्र्यम्

**[3]चकारेदं पुरा व्यासो भूतभव्यभविष्यवित्।**
**वेदार्थज्ञानरहितान्वेदाध्ययनवर्जितान्।।**
**वर्णाश्रमाचारशून्यान्जातिसंकरकारिणः।**
**कलौ विलोक्य तु जनान्कुटिलान्पापकारिणः।।**
**अष्टादश पुराणानि कृतवान्धर्मगुप्तये।**
**तावन्त्युपपुराणानि तथो(? तो)र्थान्बुबुधुर्जनाः।।**
**[4]कृते त्रेतायुगे ब्रह्मा स्त्रीणां स्वातन्त्र्यमभ्यधात्।।**

(१) मुद्गल. ९।२५।४०.
(२) गणेश. १।९।३७-४०.
(३) गणेश. १।२८।११.

कृतादिषु श्रीगणेशस्य
नामरूपभेदाः

[1]युगे युगे भिन्ननामा गणेशो भिन्नवाहनः।
भिन्नकर्मा भिन्नगुणो भिन्नदैत्यापहारकः।।
सिंहारूढो दशभुजः कृते नाम्ना विनायकः।
तेजोरूपी महाकायः सर्वेषां वरदो वशी।।
त्रेतायुगे बर्हिरूढः षड्भुजोऽप्यर्जुनच्छविः।
मयूरेश्वरनाम्ना च विख्यातो भुवनत्रये।।
द्वापरे रक्तवर्णोऽसावाखुरूढश्चतुर्भुजः।
गजानन इति ख्यातः पूजितः सुरमानवैः।।
कलौ तु धूमवर्णोऽसावश्वारूढो द्विहस्तवान्।
धूमकेतुरिति ख्यातो म्लेच्छानीकविनाशकृत्।।
[2]युगे दशभुजः पूर्वे सिंहारूढो विनायकः।
द्वितीये षड्भुजो बर्हिवाहनः शशिसंनिभः।।
मयूरेश इति ख्यातो नानादैत्यनिबर्हणः।
तृतीये तु युगे देवि रक्तवर्णश्चतुर्भुजः।।
गजानन इति ख्यातो धूम्रवर्णः कलौ युगे।
धूम्रकेतुरिति ख्यातो द्विभुजः सर्वदैत्यहा।।
ध्यायेत्सिंहगतं विनायकममुं दिग्बाहुमाद्ये युगे
त्रेतायां तु मयूरवाहनममुं षड्बाहुकं सिद्धिदम्।
द्वापारे तु गजाननं युगभुजं रक्ताङ्गरागं विभुं
तिष्ये तु द्विभुजं सिताङ्गरुचिरं सर्वार्थदं सर्वदा।।

कलियुगीयचराचर-
वृत्तानि

[3]इदानीमभिधास्यामि कथां कलियुगाश्रयाम्।
कलिप्रान्ते मुने लोका भ्रष्टाचारास्तमोवृताः।।
ब्राह्मणा वेदरहिताः संध्यास्नानविवर्जिताः।
यजनं याजनं दानं न करिष्यन्ति कर्हिचित्।।
प्रतिग्रहं च दुष्टानां करिष्यन्ति सुदुर्लभम्।
परापवादं तन्निन्दां परस्त्रीधर्षणं तथा।।
करिष्यन्ति जनाः सर्वे विधिलोपं च सर्वशः।
विश्वासघातं सर्वत्र करिष्यन्ति जना ध्रुवम्।।
निधिलोपे च शपथं करिष्यन्ति धरातले।
न करिष्यन्ति मेघाश्च वृष्टिं क्वापि मुनीश्वर।।
महानदीतीरदेशे करिष्यन्ति कृषिं जनाः।
यो बली सोऽप्यबलिनो हरिष्यति धनं बलात्।।
हरिष्यतस्ततो द्वौ च त्रयस्ताभ्यां बलात्पुनः।
शूद्रा वेदं पठिष्यन्ति ब्राह्मणाः शूद्रकर्मिणः।।
प्रतिग्रहं करिष्यन्ति चाण्डालस्य द्विजातयः।
दरिद्राश्च भविष्यन्ति हाहाभूता विचेतसः।।
वदिष्यन्ति च न मया गृहीतं न मनागपि।
गृहीत्वा च गृहीत्वा च वृथा तान्रोधनं परान्।।
उक्त्वा वाचं गृहीत्वैव वृथा साक्ष्यं ब्रुवन्ति च।
सतां निन्दां करिष्यन्ति मैत्री चासद्भिरेव च।।
वृथा मांसस्य भक्ष्यं च करिष्यन्ति द्विजातयः।
उच्छेदः स्यात्सज्जनानामितरेषां च वैभवः।।
हित्वा सर्वे जना देवान्भजिष्यन्ति तथेतरान्।
भूतप्रेतपिशाचानां भजने सक्तमानसाः।।
वेषान्नानाविधान्कृत्वा भक्षयिष्यन्ति वाडवाः।
केचिच्च क्षत्रिया भिक्षां चरिष्यन्त्यकुलोचिताम्।।
व्रतानि नियमांश्चापि न चरिष्यन्ति कर्हिचित्।
वर्णसंकरकारीणि कर्ता कर्माणि भूजनः।।
पतिव्रता भ्रष्टव्रता भविष्यन्ति कलौ युगे।
म्लेच्छप्रायाः सर्वलोकाः परद्रव्यापहारिणः।।
निर्दयाः कुपथासक्ताः सर्वदा सत्यवर्जिताः।
धरित्री सत्यहीना च रसहीना महीरुहः।।
पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते।
षोडशाब्दपरं चाऽऽयुर्भविष्यति कलौ युगे।।
तीर्थानि गुप्तरूपाणि देवतायतनानि च।
एवं पापे प्रवृद्धे तु धर्मो विश्वार्थ(? र्ध)मात्रकः।।

कलियुगान्ते श्रीगणेशस्यावतारः तस्य
नामरूपे च, तत्कर्तृको म्लेच्छवधो
ब्राह्मणरक्षणं च, ततः
कृतयुगारम्भः

भविष्यन्ति तदा देवा उपवासपरायणाः।
स्वाहास्वधावषट्कारवर्जिता भयविह्वलाः।।

---

(१) गणेश. २।१।१७-२१.
(२) गणेश. २।८६।१३-१५, १९.
(३) गणेश. २।१५०।१५-४०.

**यास्यन्ति शरणं देवं गजाननमनामयम्।**
**स्तुतिं नानाविधां तस्य करिष्यन्ति नतिं बहु।।**
**प्रार्थयिष्यन्ति सर्वेशं सर्वविघ्नविनाशनम्।**
**एवं सर्वं विचार्यासौ आविर्भावं करिष्यति।।**
**गजाननो धूम्रवर्णो धूम्रवर्णोऽपि नामतः।**
**नीलमश्वं समारुह्य खड्गहस्तो रुषा ज्वलन्।।**
**कल्पयिष्यति सेनां स नानारूपां निजेच्छया।**
**शस्त्राणि च महास्त्राणि कल्पयिष्यत्ययत्नतः।।**
**वधिष्यति महाम्लेच्छान् सेनया स्वेन तेजसा।**
**म्लेच्छभूतांस्तथा लोकान्वधिष्यति तदाऽखिलान्।।**
**लीनान्कन्दरदेशेषु ब्राह्मणान्वन्यभक्षिणः।**
**समानाय्य प्रपूज्यैतान् भूमिं दास्यति देवराट्।।**
**सत्कर्मकारिणः सर्वान्विधास्यति ह सज्जनान्।**
**तदा धर्ममयं विश्वं भविष्यति कृतं युगम्।।**

## आदित्यपुराणम्

कलिवर्ज्या धर्माः

[1]**यस्तु कार्तयुगो धर्मो न कर्तव्यः कलौ युगे।**
**पापप्रसक्ताश्च सदा कलौ नार्यो नरास्तथा।।**
(१) कार्तः(? कार्तयुगः)कृतयुगसंबन्धी।

स्मृच. १।२९

(२) आदित्यपुराणे नियोगं प्रकृत्योक्तम् – अयमिति।

पुम. ४६८

[2]**दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः।**
**गोत्रान्मातृसपिण्डाच्च विवाहो गोवधस्तथा।**
**कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्।।**
[3]**शपथाः शकुनाः स्वप्नाः सामुद्रिकमुपश्रुतिः।**
**उपयाचितमादेशाः संभवन्ति कलौ क्वचित्।**
**तस्मात्तन्मात्रलाभेन कार्यं तत्र न कारयेत्।।**

अत्र शपथाः काशीस्थलोलार्कतीर्थस्नानादयः। शकुनाः पूर्णकुम्भादयः। स्वप्नाः 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादि श्रुतिस्मृतिसिद्धाः। सामुद्रिकं करादिवर्ति रेखादिचिह्नम्। उपश्रुतिः संध्यायां निर्णेजकादिगृहेऽक्षतप्रक्षेपपूर्वकं स्वेष्टादिसूचकतत्रस्थशब्दाकर्णनम्। उपयाचितम् 'अस्मिन् कार्ये सिद्धे भैरवाय सतैलं कृसरान्नं दास्यामि' इत्यादिसंकल्पः। आदेशः प्रश्नवशेन ज्योतिर्विद्भिर्भविष्यत्कथनम्। एतत्सूचितस्यापीष्टादेः प्रतिबन्धकादृष्टभावाभावाभ्यां संवादलाभनियमाभावान्न शकुनादिलाभमात्रेण जयाद्युद्देश्यकविवादादिप्रवृत्तिरुचितेति दृष्टार्थकार्यनिषेध एव क्रियते, न त्वदृष्टार्थस्य शान्त्यादेः, तस्य नैमित्तिकत्वेनावश्यकर्तव्यत्वात्। तथा च दुःस्वप्नाधिकारे श्रुतिः – 'स यद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयात्' इति। शौनकः – 'अध स्वप्नस्येति जपन् प्रातः प्रातर्दिने दिने। दुःस्वप्नं तु दहेत्कृत्स्नं न तस्माद्विन्दते भयम्।।' इति। मार्कण्डेयपुराणे – 'श्राद्धार्हद्रव्यसंपत्तौ तथा दुःस्वप्नदर्शने। जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छया।।' इति। तथा तत्रैव दुःस्वप्ननिमित्तकचण्डीपाठविधिः प्रागुदाहृतः। मात्स्ये – 'स्तुतिश्च वासुदेवस्य तथा तस्य च पूजनम्। गजेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्नदर्शने।।'। स्तुतिः सहस्रनामजपः, 'पुण्यो दुःस्वप्ननाशनः' इति लिङ्गात्। गजेन्द्रमोक्षश्रवणं विष्णुधर्मस्थं श्रीभागवतस्थं वा। एतेषु वाक्येषु *यदिशब्द (त्व)वीप्सा-

---

(१) **स्मृच.** १।२९ श्च सदा (स्तु यतः) आदिपुराणे; **पमा.** १।७६ युगो (युगे) क्ताश्च सदा (क्तास्तु यतः); **सम.** १०६ सक्ता (युक्ता) रास्तथा (राः सदा); **पप्र.** ५२ सदा (यतः) आदिपुराणे; **पुम.** ४६८ यस्तु (अयं) पू.; **कृभ.** १२८७ सक्ता (युक्ता).

(२) **पुम.** ४६८.

(३) **सम.** ११० शपथाः (शपथः) स्वप्नाः (प्रश्नाः) मादेशाः (मेतानि) कार्यं तत्र (कलौ कार्यं); **स्मृतिकौ.** ४७७; **पुम.** ४६८ तत्र न (किंचिन्न); **कृभ.** १३१२ शपथाः (समयाः) स्वप्नाः (प्रश्नाः) संभवन्ति (न भवन्ति) कार्यं तत्र (कलौ कार्यं).

*अत्रेदं विचार्यम् – पूर्वोक्तशौनकवाक्ये – 'प्रातः प्रातर्दिने दिने' इति वीप्सा श्रूयते। तत्र 'दुःस्वप्नदाहकाम उक्तमन्त्रं जपेत्' इति दाहविषयिका विधिशक्तिर्जपविषये संचार्येति निर्विवादम्। अत्र निमित्तोत्पत्तौ नैमित्तिकानुष्ठानमिति नियमात् दुःस्वप्नस्य निमित्तत्वे तदुत्पत्तेः पश्चात् नैमित्तिकत्वेन जपानुष्ठानं प्राप्नोति। तच्च एकस्मिन् प्रातःकाले विधित्सितं चेत् 'प्रातर्दिने' इति सकृदेव शब्दप्रयोगः स्यात्। यदि तु अनेकेषु दिनेषु प्रातःकालेषु च विधातुमिष्टत्वाद्वीप्साप्रयोगः तदा दिनप्रातःकालसंख्यापरिच्छेदोऽवश्यं वक्तव्यः। तदनुक्तावपि जपस्य नैमित्तिकत्वोपगमे यावज्जीवकर्तव्यतापत्तौ अल्पीयसि निमित्ते नैमित्तिकस्य महीयस्त्वमसमञ्ज-

(त्व)सप्तमीभिर्निमित्त (त्व)प्रत्ययाश्रैमित्तिकत्वं स्फुटम्। इच्छयेति च रुचिश्राद्धं कर्तव्यतया ज्ञाप्यते, न तु पूर्वोक्तानामैच्छिकत्वम्। स्मृतिकौ. ४७७-४७८

**[1]विहितान्यपि कर्माणि धर्मलोपभयाद्बुधैः।**
**समापने निवृत्तानि साध्वभावात्कलौ युगे॥**

(१) जनमेजययज्ञसमापने सति विहितान्यपि कानिचित्कर्माणि कलौ निवर्तितानि, तदनुष्ठानयोग्यसाधुपुरुषाभावात्। चमव्या. ५२

(२) समापने जनमेजयाश्वमेधसमाप्तौ निवृत्तानि निवर्तितानि। तेन 'द्रोणादीनां वधे कथं पाण्डवादीनां कलिमध्ये दोषो नास्ति?' इति न शङ्क्यम्। कृभ. १२९२

**[2]विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम्।**
**बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः॥**

(१) विधवायां वाग्दानानन्तरं देवरस्य नियोजनम्। 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः॥' (मस्मृ. ९।६९), 'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया। सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥' (यास्मृ. १।६८) इति मनुयाज्ञवल्क्याभ्यामुक्तं निषिध्यते, न तु विवाहानन्तरं विधवायाः, 'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः' (मस्मृ. ९।६४) इति मनुना तन्निषेधात्। 'वरेणान्येन संस्कृतिः' इति न देवरनियोजनपरम्, पूर्वेण पौनरुक्त्यात्। बालिका संकल्पदत्ता, न वाग्दत्ता, तदानीं क्षतयोनित्वशङ्काया अभावात्। इदं च विज्ञानेश्वरेण 'दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत्।' (यास्मृ. १।६५) इत्यनेन सप्तपद्युपक्रमणात्प्राग्यदन्यस्मै दानमुक्तं तद्विषयमिति ध्येयम्। सम. १०६-१०७

(२) इदं च 'देवराच्च सुतोत्पत्तिः' इति च वाग्दानानन्तरं मृते पत्यौ देवर(नियोजन)परम्, 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः॥' (मस्मृ. ९।६९), अनेन विधानेन घृताभ्यङ्गादिनियमवन्नियोजनविधानेन, 'यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्। मिथो भजेताऽऽप्रसवात्सकृत्सकृदृतावृतौ॥' (मस्मृ. ९।७०) इति मनुना 'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया। सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥' (यास्मृ. १।६८) इति याज्ञवल्क्येन च तदनुज्ञानात्। न तु विवाहानन्तरं विधवायाम्, 'नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः।' (मस्मृ. ९।६४) इति मनुना विवाहानन्तरं विधवानियोजननिषेधात्। नचैवं भारते कथं सत्यवत्या कनिष्ठभ्रातृभार्यायां विधवायां व्यासो नियुक्त इति वाच्यम्, तत्र 'धनेनोपतोष्य कश्चन ब्राह्मणो नियोज्यः' इति भीष्मानुज्ञया सत्यवत्याः तथा करणेन† निषेधगतान्यपदस्य ब्राह्मणेतरान्य(? तर)परत्वात्। अन्यथा ब्रह्मक्षत्रियदेवक्षत्रियभेदो न स्यात्। महाप्रभावतया दोषकल्पनाविरहेणान्यपदस्य यथाश्रुतार्थत्वाद्वा। 'देवराच्च' (इति

---

समापद्येत। तस्मात् भविष्यद्दुःस्वप्नदाहोद्देशेन प्रतिदिनं प्रतिप्रातः काम्यजपविधाने स्वरसतः प्रतीयमाने एव शौनकवचनतात्पर्यमिति प्रतिभाति। तत्र च जपस्य कामप्रयुक्तत्वात् कामनिवृत्त्या जपनिवृत्तेर्दिनप्रातःकालसंख्यापरिच्छेदो न वक्तव्यः। तथा च वीप्सेयं कथं निमित्तत्वप्रत्यायिका? इति।

(१) चमव्या. ५१ माधवदीपिकाकारादिभिः संगृहीतम्; पुम. ४६८ (तथा धर्मसमावेशादन्यान्यपि कलौ युगे। विहितान्यपि वर्ज्याणि कर्मभोगभयाद्बुधैः॥); कृभ. १२९० प्रथमचरणमात्रम् (=), १२९२ (=).

(२) स्मृच. १।३० योन्याश्च (योन्योश्च)(=); पमा. १।१२३ स्मृचवत्(=); मुक्ता. १३ त्तौ दे (त्तिर्दे) पू. धर्मशास्त्रसुधानिधौ; सिन्धु. १२९२-१२९३ वायां (वायाः) तृतीयचरणे (बालायाः क्षतयोन्यास्तु); सम. १०६ हेमाद्रौ माधवीये च : ११० निर्देशमात्रम्(=); विपा. ५।४९० उत्तरार्धे अशुद्धः पाठः; संप्र. ६८३, ७४२ उत्त(=); पुम. ४६८ न्याश्च (न्यास्तु) तिः (तिम्); सस्मृ. ९३-९४ अशुद्धो ग्रन्थः, धर्मशास्त्रसुधानिधौ; कृभ. १२९२-१२९३ सिन्धूद्धृतस्य प्रतीकमात्रम्.

† रभसोक्तिरियम्। प्रकृतस्य कलौ विधवानियोजननिषेधस्य वाग्दानोत्तरं विवाहात्प्राक् या विधवा तन्नियोजनविषयत्वमिति साध्ये 'निषेधस्य प्राप्तिपूर्वकत्वात् विवाहोत्तरविधवानियोजनस्य चाप्राप्तत्वात्' इति हेतुमभिप्रेत्य तदप्राप्तौ विवाहोत्तरविधवानियोजननिषेधकं मनुवाक्यं प्रमाणीकृतम्। अत एव मनुनिषेधवाक्ये विधवाशब्दो विवाहोत्तरविधवापरः कृष्णंभट्टाभिमत इत्यर्थसिद्धम्। अत एव च 'न चैवम्' इत्यादिराक्षेपः संगच्छते। एवं स्थिते अन्यपदस्य ब्राह्मणेतरपरत्वोक्तिद्वारा विवाहोत्तरविधवाया ब्राह्मणे नियोजनस्य मनुकृतनिषेधाविषयत्वोपगमात् विवाहोत्तरविधवानियोजनाप्राप्तितात्पर्यकेण पूर्वग्रन्थेनास्य विरोधः।

च)कारादनुज्ञातसपिण्डगोत्रयोरपि ग्रहः। ‡ बालाया इति 'दत्ताक्षतायाः' इत्येतत्समानार्थम्। (वस्तुतस्तु – ?) ननु इदं वाक्यद्वयं कथं संगच्छते? 'नान्यस्मिन् विधवा नारी' इति मनुना सर्वदा तन्निषेधात्, 'मन्वर्थविपरीता तु स्मृतिः साऽपि विनश्यति।' इति अङ्गिरोवाक्यात्। नापि देवरनियोजनं तदर्थः, +'देवराच्च सुतोत्पत्तिः' इत्यनेन पौनरुक्त्यापत्तेः, नापि वाग्दत्ताविषयकम्, तदानीं क्षतयोनित्वशङ्काया अभावात्, इति चेत्, न 'दत्तामपि हरेत्पूर्वा-

‡ अत्र प्रकृतादित्यपुराणवचनोत्तरार्धस्य 'बालायाः' इति षष्ठ्यन्तबालाशब्देन निर्देशात् 'बालायाः क्षतयोन्यास्तु' इति सिन्धौ मुद्रितं पाठं कृष्णंभट्टोऽनुमन्यते इति प्रतीयते। तत्तूत्तरग्रन्थविरुद्धम्। तथाहि – उत्तरत्र 'ननु इदं वाक्यद्वयम्' इत्याद्याक्षेपस्य समाधानग्रन्थे सप्तपद्युपक्रमणात्प्राक् यदन्यस्मै पुनर्दानं तद्विषयकत्वं प्रकृतवचनोत्तरार्धस्येत्युक्तम्। न हि सप्तपद्याः प्राक् धर्म्यं क्षतयोनित्वं संभवति। अधर्मस्य क्षतयोनित्वस्य वाग्दानात्प्रागपि संभवात् 'तदानीं क्षतयोनित्वशङ्काया अभावात्' इत्याक्षेपगतहेतौ धर्म्यमेव क्षतयोनित्वं शङ्काविषयं मन्यते, तस्य हेतोरदूषणात् तत्र स्वसंप्रतिपत्तिरपि गम्यते। तादृशं क्षतयोनित्वं सप्तपद्याः प्रागपि न संभवति। अत एव अक्षतयोनीत्यस्य विशेषणत्वासंभवात् स्वरूपपरिचायकत्वमात्रं मन्यते इत्यप्यवगम्यते। तस्मात् अस्मद्गृहीतः पाठ एव कृष्णंभट्टाभिमतः, 'बालाया इति' इति प्रतीकमुद्रणं च प्रामादिकमिति निर्णीयते। अत एव 'दत्ताक्षतायाः' इति नारदीयवचनेऽपि अक्षताशब्दमेव मन्यते, न क्षताशब्दम्, अन्यथा तत्समानार्थत्वोक्तिर्नोपपद्येत। अत्र वाग्दत्ताविषयकत्वाभावे साध्ये 'तदानीं क्षतयोनित्वशङ्काया अभावात्' इत्याक्षेपगतो हेतुः सप्तपदीप्राचीनपुनर्दानविषयकत्वाभावमपि साधयतीति समाधानमेतन्नोपपद्यते इत्यन्यदेतत्। अनेन सिन्धूद्धृतवचनप्रतीकग्रहणपूर्वकव्याख्यानेन क्षतयोन्या दानस्य स्मृत्यन्तरेष्वनुपलब्धेश्च सिन्धुकारस्यापि 'बालिकाक्षतयोन्याः' इत्येव पाठोऽभिमतः, 'बालायाः क्षतयोन्याः' इति मुद्रणं प्रामादिकमित्यवगम्यते। 'योन्योश्च' इति द्विवचनान्तः कोटिद्वयाभिप्रायकः पाठश्चन्द्रिकादौ मुद्रितः। स तु कोटिद्वयस्याव्याख्यानात् 'दत्ताक्षतायाः' इत्यनेन समानार्थत्वोक्त्या च न कृष्णंभट्टसंमतः, अत एव न सिन्धोरपि संमत इत्यपि गम्यते।

+ अत्र प्रकृतवचनोत्तरार्धं 'दत्ताक्षतायाः' इति नारदीयवचनं च 'इदं वाक्यद्वयम्' इत्याक्षेपोपक्रमे उद्दिष्टम्। तत्रानेन नारदीयवचनेन पूर्वोद्दिष्टनारदीयवचनस्य पौनरुक्त्यापादनं युज्यते। स्मृत्यन्तरीयवचनेन स्मृत्यन्तरीयवचनस्य पौनरुक्त्यापादनस्यानुपपन्नत्वात् नानेन वचनेन प्रकृतवचनोत्तरार्धस्य पौनरुक्त्यापादनं युज्यते। अतः 'देवरस्य नियोजनम्' इति प्रकृतवचनस्य द्वितीयचरणोऽप्यत्रोद्धर्तव्यः।

च्छ्रेयाँश्चेद्वर आव्रजेत्।' इति सप्तपद्युपक्रमणात्प्राग् यदन्यस्मै दानमुक्तं तद्विषयकत्वात्। ननु पराशरेण 'कलावनुष्ठेयान्धर्मान् वक्ष्यामि' इति प्रतिज्ञाय 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते।।' इति वचनात् वाग्दत्तायाः कलौ पत्यन्तरमस्तीति कथं दत्तापहारः कलिवर्ज्य इति चेत्, कलौ दत्तापहारो न कार्यः, वाग्दानानन्तरतन्मरणे पराशरवचनात्तस्याः वरान्तरेण विवाहः कार्यः, 'कन्यायां शुल्कदत्तायां म्रियेत यदि शुल्कदः। देवराय प्रदातव्या यदि कन्याऽनुमन्यते।।' इत्युक्तवाक्ये कन्याया अनुमतौ पुरुषान्तराय दानलाभात्। इयांस्तु विशेषः – कन्यानुमतावपि देवराय सा न §विवाह्या, नियोगसाम्यात्, 'देवराच्च सुतोत्पत्तिः' इति सामान्यतो निषेधात्। एवं सगोत्रसपिण्डयोरपि न विवाह्येति।

कृभ. १२९२-१२९४

[1]**तथोद्धारविभागोऽपि नैव संप्रति वर्तते।।**

योगियाज्ञवल्क्येन 'ज्येष्ठं वा श्रेष्ठभागेन' (यास्मृ. २।११४) इति सामान्येन ज्येष्ठाद्यर्थः श्रेष्ठादिभागोद्धार उक्तः, विवृतश्च मनुना – 'ज्येष्ठस्य चांश( ? विंश)उद्धारः सर्वद्रव्याच्च यद्वरम्। ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः।।' (मस्मृ. ९।११२) इति, स कलौ निषिध्यते।

स्मृतिकौ. ४७५

[2]**कन्यानामसवर्णानां विवाहश्च द्विजातिभिः।**
**आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम्।।**

(१) आततायिनाम् उद्यतशस्त्रादीनां द्विजाग्र्याणां विप्राणां 'ब्राह्मणं वा बहुश्रुतमाततायिनमायान्तं हन्यादेव' इत्यादिना

§ लक्षणया न देयेत्यर्थः। एवमुत्तरत्रापि। तेनात्र 'देवराय' इति चतुर्थी, उत्तरत्र 'सगोत्रसपिण्डयोः' इति सप्तमी च साधुर्भवति।

(१) **स्मृतिकौ.** ४७५.

(२) **स्मृच.** १।३० (=); **पमा.** १।१२३-१२४(=); **उत.** ११२ द्धेन हिं (ध्दे निर्हिं); **चमव्या.** ५१ उत्त. माधवदीपिकाकारादिसंगृहीतम्; **मुक्ता.** १३ उत्त., धर्मशास्त्रसुधानिधौ : ६० उत्त.(=); **सिन्धु.** १२९४ जाति (जन्म); **सम.** १०७ तिभिः (तिषु) हेमाद्रौ माधवीये च; **विपा.** ५।४९० सिन्धुवत्; **स्मृतिकौ.** ४७५ उत्त.; **आन.**२२ उत्त., धर्मशास्त्रसुधानिधौः ६३३ उत्त. (=); **पुम.** ४६८ सिन्धुवत्; **सस्मृ.** ९४ हश्च (हं  च) धर्मशास्त्रसुधानिधौ; **कृभ.** १२९४ सिन्धूद्धृतस्य प्रतीकमात्रम्.

विहितं संमुखमकूटशस्त्रेण मारणम्। चमव्या. ५२

(२) 'तिस्रो वर्णानुपूर्वेण द्वे तथैका यथाक्रमम्। ब्राह्मण-क्षत्रियविशां भार्या स्वा शूद्रजन्मनः।।' इति विहितः। .... एतेन 'नाऽऽततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्यः' इति सुमन्तुवाक्यं कलिविषयमेवेति सिद्धम्।

*सम. १०७

(३) द्विजाग्र्या विप्राः, तेषां संमुखमकूटशस्त्रेण हननं यत् 'आततायिनमायान्तं हन्यादेवाविचारयन्।' इति विहितं तन्निषिध्यते। अतश्च – 'नाऽऽततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्यः' इति सुमन्तुवाक्यमपि कलिविषयमेवेति केचित्। तन्न, मिताक्षराकारेण 'अर्थशास्त्रात्तु बलवद्ध-धर्मशास्त्रमिति स्थितिः।' इति मूलव्याख्यावसरे 'शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते।' इत्युपक्रम्य 'आत्मनश्च परित्राणे दक्षिणानां च संगरे। स्त्रीविप्राभ्यवपत्तौ च घ्नन्धर्मेण न दुष्यति।।' इति शास्त्रस्यार्थम् 'आत्मनो दक्षिणादियज्ञोप-करणानां च स्त्रीब्राह्मणादीनां च रक्षणार्थं (अ)कूटशस्त्रेण घ्नन्न दण्डभाक्' इत्युक्त्वा "तस्यार्थवादार्थमिदमुच्यते – 'गुरुं वा बालवृद्धौ वा श्रोत्रियं वा बहुश्रुतम्। आततायिन-मायान्तं हन्यादेवाविचारयन्।।' इत्यादि। वाशब्दाद्गुर्वादीनपि हन्यात्किमुतान्यानिति, 'अपि वेदान्तपारगम्' इत्यत्राप्यपि-शब्दश्रवणान्न गुर्वादीनां वध्यत्वप्रतीतिः" इत्युपन्यस्य सुमन्तु-मनुवाक्ये आततायिब्राह्मणवधे दोषकथनार्थे उपन्यस्त-सामान्यशास्त्रतात्पर्यभ्रमनिवृत्त्यर्थे निर्दिश्योपसंहृतम् – 'अतश्च ब्राह्मणादय आततायिनः आत्मादिरक्षणार्थं हिंसानभिसंधिना निवार्यमाणाः प्रमादाद्यदि विपद्येरन् तत्र लघुप्रायश्चित्तं दण्डाभावश्च' इति। अस्माच्च ग्रन्थादेवं प्रतीयते – अर्थशास्त्रविधयाऽपि नाऽऽततायिगोब्राह्मणवध-विधिरस्ति, धर्मशास्त्रविधया सुतरां नास्तीति। अतः कुत्र ब्राह्मणवधविधिर्युगान्तरसाधारणः? यदर्थवत्त्वाय सुमन्तु-वाक्यं कलिविषयमुच्येतेत्याश्चर्यम्। न च पाण्डवसहायेन धृष्टद्युम्नेन द्रोणहननाद्युगान्तरे युद्धप्रवृत्तब्राह्मणवधो विहित इति शङ्क्यम्, मरणदशायां न्यस्तशस्त्रस्याऽऽततायि-लक्षणाभावेनार्जुनकृतेन धृष्टद्युम्नधिक्कारेण युधिष्ठिरादिल-ज्जोत्पत्त्या च ब्रह्महननं दृष्ट्वा 'जनः सूर्यमवेक्षते' इति

* शेषं चमव्यागतम्।

धृष्टद्युम्नं प्रति सात्यकेरुक्त्या च द्रोणवधस्याधर्मत्वात्। अतो यादृशविषये मिताक्षराकारेण दण्डाभाव उक्तः तत्रापि कलौ दण्डप्रतिप्रसवः क्रियत इति बोध्यम्। ततश्च प्रायश्चित्तगुरुत्वमपि कल्प्यमिति।

स्मृतिकौ. ४७५-४७६

(४) आततायीति। 'गुरं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्।।' इति विहितं सन्मु(? संमु)खमकूटशस्त्रेण मारणम्। एतेन 'नाऽऽततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्यः' इति सौमन्तवं व्याख्यातम्, तस्य कलिपरत्वात्। एवं सति यत् श्रीरामेण रावणं हत्वा दश *जारूप्या(? थ्या)अश्वमेधाः कृता इति रामायणं तत् आततायिवधे युगान्तरे सपरिहारो दोष इत्येतदर्थम्। वस्तुतस्तु "गुरुं वा बालवृद्धं वा ब्राह्मणं वा' इत्यादिवाशब्दस्वारस्यात्कैमुत्यन्यायेन ब्राह्मणभिन्न आततायी वध्य इत्यत्रैव तात्पर्यम्। इदमपि स्ववधोद्य-ताततायिविषयम्, 'उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्। निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्।।' इति गालववचनात्। 'स्वाध्यायिनां कुले जातं न हन्यादात-तायिनम्। तं हत्वा भ्रूणहा स स्यादहत्वाऽभ्रूणहा भवेत्।।' इति बृहस्पतिवचनम् 'आततायिनमुत्कृष्टं व्रतस्वाध्याय-संयुतम्। यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत्।।' इति च स्ववधानुद्यताततायिपरमिति। एवं च स्ववधोद्यत-ब्राह्मणभिन्नाततायिवधः कलौ न कार्य इत्याशयेन द्विजाना-(? जाग्र्याणा)मिति पदम्।

कृभ. १२९४-१२९५

**[१]द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः।**
**सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम्।।**

* जारुथ्याः त्रिगुणदक्षिणाः इति अर्जुनमिश्रः, मांसप्रधाना इति शाब्दिकाः, स्तुत्या इति नीलकण्ठः इति मतत्रयं वाचस्पत्ये।

(१) **स्मृच.** १।३० (=); **पमा.** १।१२४ नौयातुः (निर्याणं)(=); **चमव्या.** ५० पू.(=): ५१ उत्त., माधवदीपिकाकारादिसंगृहीतम्; **मुक्ता.** १३ नौयातुः (निर्याणं) धर्मशास्त्रसुधानिधौ; **सिन्धु.** १२९५; **सम.** १०७ हेमाद्रौ माधवीये च; **विपा.** ५।४९० च (तु); **स्मृतिकौ.** ४७५ पू.; **आन.** २२ नौयातुः (निर्याणं) चतुर्थपादो गलितः, धर्मशास्त्रसुधानिधौ; **पुम.** ४६८; **सस्मृ.** ९४ नौयातुः (निर्याणं) संग्रहः (संग्रहम्) पू., धर्मशास्त्रसुधानिधौ; **कृभ.** १२८८ पू.

(१) सत्रे आसनोपायिचोदिते 'सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्' इत्यादिना विहिते दीक्षा।

\# चमव्या. ५२-५३

(२) सत्रदीक्षानिषेधमुखेन सत्राधिकार एव विप्राणां पर्युदस्यते। 'अथ कमण्डलुचर्यामुपदिशन्ति' इत्यादि बौधायने सेतिकर्तव्यताकं 'सोदकं च कमण्डलुम्' इति स्नातकस्य विहितं मृन्मयस्य काष्ठमयस्य वा कमण्डलोर्धारणम्। अन्ये तु कमण्डलुधारणमित्यनेन वानप्रस्थाश्रम एव लक्ष्यत इत्याहुः। तन्न, बृहन्नारदीये उभयोरपि भिन्नत्वेनोपादानात्।

सम. १०७

(३) प्रत्यन्तगमननिमित्तपुनःसंस्कारे कृतेऽप्यब्धौ नौयातुः संसर्गः कलौ निषिध्यते। स्मृतिकौ. ४७६

**'महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे।**
**सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः॥**

(१) सुराग्रहणस्य सुराग्रहणकर्तुः संग्रहः व्यवहारः।

चमव्या. ५३

(२) सुराग्रहणस्य तत्कर्तुः संग्रहो व्यवहारः। न च 'मद्यं च' इति सामान्येन निषिद्धस्यानेनोपसंहार इति वाच्यम्, निषेधस्य निवृत्तिमात्रफलत्वेन विशेषानपेक्षत्वात्, 'न हिंस्यात्' इत्यस्य 'न ब्राह्मणं हन्यात्' इत्यनेनोपसंहारे हिंसान्तरस्यादोषत्वापत्तेश्च। निरूपितं चैतद्धेमाद्रिणाऽन्यत्रेत्युपरम्यते। सुराग्रहस्योद्देश्यस्य सौत्रामणिविशेषणाविवक्षया वाजपेयेऽपि निषेधः। सौत्रामण्यां तु 'पयोग्रहा वा स्युः' इत्यापस्तम्बोक्तेर्वैकल्पिकपयोग्रहैरप्यधिकारः। वाजपेये तु तत्प्राप्तौ मानाभावात् सोमसुरयोः सहत्यागेनांशे सुराद्रव्यत्वात् तत्प्रख्यतया यागनामत्वेन तां विना संज्ञायोगात् कलौ नाधिकार इति युक्तं प्रतीमः। त्रिकाण्डमण्डनादिलिखनं तु निर्मूलमनाकरं च। सिन्धु. १३०१-१३०२

[सौत्रामण्यामिति व्याचष्टे – सुरेति। सुराग्रह(ण) इति कर्तृव्युत्पत्त्या याज्यो याजकश्चाविशेषाद्ग्राह्यः। व्यवहार इति। अनेन कृतप्रायश्चित्तस्यापीति लभ्यते। न च युगान्तरेऽकृतप्रायश्चित्तस्य व्यवहारः स्थित इति वाच्यम्, तर्ह्येतद्वाक्यवैयर्थ्यात्, लौकिकसुराग्रहणतुल्यत्वात्। अनेनेति। मद्यं सुरा, कथंचित् सुराशब्दस्य तदर्थकतायाः प्रागुक्तत्वात्। तत्सौत्रामण्यां वर्ज्यमित्यर्थः। निषेधस्येति। 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः।' इति यौक्तिकम्। एवं च निषेधे तदप्रवृत्तिरिति भावः। साधकाभावमुक्त्वा बाधकमप्याह – न हिंस्यादिति। अन्यत्रेति। 'एकादश्यां न भुञ्जीत' इति सामान्यतो निषेधस्य 'बोधिन्यादावुपवसेत्' इत्यनेनोपसंहारे अन्यशुक्लैकादश्यां भोजनप्रसङ्गवारणार्थं विधीनामेवोपसंहारः, न तु निषेधानामित्यादिकमुक्तमित्यर्थः। वस्तुतस्तु सुरेह पैष्टीति शङ्का तुच्छैव। तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् इत्येतत्परतया वा योज्या। 'मा हिंस्यात्' इति निषेधस्याग्नीषोमीयादिविधिनेव 'सुरा वै' इति निषेधस्य सौत्रामणीसुराग्रहविधिना बाध इति तत्र प्रसक्तः सुराग्रहः कलौ निषिध्यते इत्यर्थः। नन्वेवं 'राजा राजसूयेन' इत्यादावुद्देश्यविशेषणराजत्वादेरधिकारिसंकोचकत्वमिव तादृशस्य सौत्रामणीत्वादेः (? मण्यादेः) कर्मसंकोचकतया वाजपेयादौ सुरासंधानापत्तिरित्यत्राऽऽह – सुराग्रहस्येति। अविवक्षयेति। समुच्चयार्थकापिशब्देन कर्मान्तरसमुच्चयेनार्थतस्तद्विवक्षणासंभवादिति भावः। 'ग्रहं संमार्ष्टि' इत्यादौ ग्रहत्वं विवक्षितम्, न त्वेकत्वमितिवत् सुरात्वं विवक्षितम्, न त्वेकत्वसौत्रामणीसंबन्ध इत्यपि बोध्यम्। वाजपेयेऽपीति। एतेन वामागमादौ विनायकशान्त्यादौ च स्मार्ते सुतरां निषेधः सूचितः। 'स्त्रीभ्यश्च सुरामाचामम्' इत्यादेरुपलक्षणमेतत्। नन्वेवं क्रमेण सौत्रामण्यामनधिकारे तदङ्गकानां चयनादीनामप्यनधिकारापत्तिरित्यत्राऽऽह – सौत्रामण्यामिति। वैकल्पिकेति। एतेन सौत्रामण्यां येषां सुराग्रहाः पयोग्रहाश्च उभये तेषां न तस्यामधिकार इति सूचितम्। मानाभावादिति। सौत्रामणीवाजपेययोः प्रकृतिविकृतिभावासत्त्वात् वाजपेयप्रकरणे पयोग्रहानभिधानाच्चेति भावः। तत्प्रख्येति। 'तत्प्रख्यं चान्यशास्त्रम्' (जैसू. १।४।४) इति जैमिनिसूत्रम्। कर्मनामधेयस्य कस्यचिद्योगरूढत्वमस्तीति तदर्थः। प्रकृते च वाजः अन्नं सुरारूपं हुत्वा पेयं यत्रेति व्युत्पत्त्या तत्र

---

\# कृभ. चमव्यावत् समगतं च।

(१) **स्मृच.** १।३० संज्ञप्तिश्च (हिंसा चैव)(=); **पमा.** १।१२४ (=); **चमव्या.** ५१ उत्त., माधवदीपिकाकारादिसंगृहीतम्; **मुक्ता.** १३-१४ धर्मशास्त्रसुधानिधौ; **सिन्धु.** १२९५; **सम.** १०७ हेमाद्रौ माधवीये च; **विपा.** ५।४९०; **आन.** २२ उत्त., धर्मशास्त्रसुधानिधौ; **पुम.** ४६८; **कृभ.** १२९५ सिन्धूद्धृतस्य प्रतीकमात्रम्.

सुरापाननियमप्रतीतेरित्यर्थः। ननु त्रिकाण्डमण्डनेन पयोग्रहग्रहणेन वाजपेयेऽधिकार उक्त इत्यत आह – त्रिकाण्डेति। निर्मूलमिति। कल्पकारैस्तदनभिधानात्। अनाकरमिति। कल्पसूत्रभाष्यादावपि पयोग्रहप्राप्त्यनभिधानात्।

कृभ. १३०१-१३०३]

(३) महाप्रस्थानम् उत्तरदिग्गमनम्। गोसवः यज्ञविशेषः।

सम. १०७

(४) महाप्रस्थानम् आशरीरपातमुत्तरदिग्गमनम्। 'यो जीवितुं न शक्नोति महाव्याध्युपपीडितः। सोऽग्न्युदकमहायात्रां कुर्वन्वा न प्रदुष्यति।।' इति विहिता महायात्रा। गोसंज्ञप्तिरिति गोसवनिषेधार्थम्। कृभ. १२९५

**[1]अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः।**
**वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः।।**

(१) अग्निहोत्रं हूयते यया स्रुचा सा वैकङ्कती अग्निहोत्रहवणी, तस्या नित्यं होमानन्तरं हुतावशिष्टप्राशनार्थं लेहः जिह्वया आस्वादनम्। कथंचिल्लीढायाः पुनः परिग्रहः।

* चमव्या. ५३

(२) लेहः जिह्वयाऽऽस्वादनम्। कथंचित् लीढायाः परिग्रहः पुनर्होमसाधनत्वम्। सम. १०७

**[2]वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा।।**

(१) 'वेदाग्नियुक्तविप्रस्य त्र्यहमाशौचमिष्यते।' इत्यादिना देवलादिभिरुक्त आशौचसंकोचः। $ चमव्या. ५३

(२) वृत्तम् अग्निहोत्रपरिचर्यादि। + सम. १०७

**[1]प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम्।**
**संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः।।**

(१) कामकृते महापातकादौ मरणान्तिकं यत्प्रायश्चित्तम् 'न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते' इत्यादिनोक्तम्, तस्य विधानम् उपदेशः। तदाह मनुः – 'मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः।' (मस्मृ. ११।१४६) इति। स्वयमेव धर्मशास्त्राद्ज्ञात्वाऽन्यापदेशेन पृष्ट्वा वा तदनुष्ठानं न निवार्यत इति भावः। संसर्गदोषः पतितसंसर्गेण पातित्यं 'संवत्सरेण पतति पतितेन सहाऽऽचरन्।' इत्यादिना प्रतिपादितम्। तथा च पराशरः – 'कलौ पतति कर्मणा' इति। एतेन 'संसर्गः शोधितैरपि' इत्यादिना शोधितसंसर्गस्यापि निषेधमधिगम्य पतितसंसर्गे दोषाभावोक्तिर्विरुध्येतेति परास्तम्। पातित्यानभ्युपगमेऽपि दोषाभ्युपगमात्। एतच्च 'आसनाच्छयनाद्यानात्संभाषात्सहभोजनात्। संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि।।' इति पराशरवचनव्याख्यावसरे माधवाचार्यैः स्फुटीकृतम्। स्तेयान्यस्मिन् महापातके निष्कृतिः। इदं च रहस्यप्रायश्चित्तविषयकमिति केचित्। अत एव पराशरे नवमाध्याये 'तस्मात्प्रकाशयेत्पापम्' इत्युक्तिरपि संगच्छत इत्याहुः। § चमव्या. ५३

(२) 'न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते' इत्युक्तस्य प्रायश्चित्तस्य विधानम् उपदेशः। 'कलौ कर्तैव लिप्यते' इति व्यासोक्तेः पतितसंसर्गे दोषसत्त्वेऽपि पातित्यं नेत्यर्थः।

---

* कृभ. चमव्यावत् समवच्च।

$ सिन्धु. चमव्यावत्।

\+ शेषं चमव्यावत्।

(१) **स्मृच.** १।३० लेहो लीढाप (सहालीढा प)(=); **पमा.** १।१२४ हवण्या (हवन्या)(=); **मर.** ६१३ चोदितः (नोदितः) उत्त. (=); **उत.** ११२ चोदितः (देशितः) उत्त.; **चमव्या.** ५१ पू., माधवदीपिकाकारादिसंगृहीतम्; **सिन्धु.** १२९५ पमावत्, पू.; **सम.** १०७ चोदितः (बोधितः) हेमाद्रौ माधवीये च; **विपा.** ५।१३८ चोदितः (नोदितः) उत्त. : ५।४९० त्रहवण्या (त्राऽहवन्या) पू; **पुम.** ४६८; **सस्मृ.** ९४ धर्मशास्त्रसुधानिधौ; **कृभ.** १२९५ सिन्धूद्धृतस्य प्रतीकमात्रम्.

(२) **स्मृच.** १।३० वृत्तस्वा (वित्तं स्वा)(=); **पमा.** १।१२४(=): १।५७८ वृत्तस्वाध्याय (स्वाध्यायवृत्त) स्मृत्यन्तरम्; **उत.** ११२; **चमव्या.** ५१ माधवदीपिकाकारादिसंगृहीतम्; **सिन्धु.** १२९५ पेक्ष (पेक्ष्य) : १८२७ (=); **सम.** १०७ हेमाद्रौ माधवीये च; **विपा.** ५।१३८ : ५।४९० वृत्त (ऋत); **पुम.** ४६८ वृत्त (व्रत); **सस्मृ.** ९४ धर्मशास्त्रसुधानिधौ; **कृभ.** १८४८(=).

§ कृभ. चमव्यागतम्।

(१) **स्मृच.** १।३० दोषः स्तेयान्यम (दोषः स्तेनाद्यैर्म) (=); **पमा.** १।१२५ स्मृचवत्,(=); **मपा.** १६ उत्तरार्धे (संसर्गदोषः पापेषु मधुपर्के पशोर्वधः।।' सारसंग्रहे; **उत.** ११२ मपावत्; **चमव्या.** ५१ माधवदीपिकाकारादिसंगृहीतम्; **मुक्ता.** १४ स्मृचवत्, उत्त. धर्मशास्त्रसुधानिधौ; **सिन्धु.** १२९५; **सम.** १०७ हेमाद्रौ माधवीये च; **विपा.** ५।१३८ पू.: ५।४९०; **संप्र.** ९९० मपावत् (=); **स्मृतिको.** ४७२; **आन.** २२ स्मृचवत् उत्त. धर्मशास्त्रसुधानिधौ; **पुम.** ४६८ दोषः स्ते (दोषस्ते); **सस्मृ.** ९४ स्मृचवत्, धर्मशास्त्रसुधानिधौ; **कृभ.** १२९५ सिन्धूद्धृतस्य प्रतीकमात्रम्.

अन्यथा 'संसर्गः शोधितैरपि' इति विरोधापत्तेः। स्तेयभिन्ने महापापे रहस्यकृते प्रायश्चित्तं नेत्यर्थः।

सिन्धु. १३०३-१३०७

[प्रायश्चित्तविधानं चेति व्याचष्टे – न तस्येति। कामकृते महापापादौ। उपदेश इति। स्वयमेव धर्मशास्त्राज्ज्ञात्वाऽन्यापदेशेन वा पृष्ट्वा तदनुष्ठानं तु न वार्यते, 'मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः।' इति मानवे मतिपूर्वपदोपादानात्। संसर्गदोष इति व्याचष्टे – कलाविति। अत्र दोषपदं यथाश्रुतम्† अलग्नकम्, 'आसनाच्छयनाद्यानात्संभाषासहभोजनात्। संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि।।' इति पराशरोक्तेर्निर्विषयतापत्तेः। अतः 'संवत्सरेण पतति पतितेन सहाऽऽचरन्। –' इति प्रतिपादितं पातित्यं दोषः, तच्च कर्मानधिकारोऽसंव्यवहार्यता चेति, तन्नेत्यर्थः। स्वयं बाधकमाह – अन्यथेति। दोषपदस्य दोषसामान्यार्थकत्वे 'सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि।' इति शोधितसंसर्गे दोषः, इह तु पतितसंसर्गे दोषाभाव इति विरोधापत्तेरित्यर्थः, 'कलौ कर्तैव' इति व्यासेन तस्य कर्तर्येव परिसंख्यानात्, 'कलौ पतति कर्मणा' इति पराशरोक्तेश्च। नव्यास्तु – 'त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्। द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे।।' इति पराशरवचनेन संलापादिनवविधसंसर्गाभावेऽपि विहितो- (प -?) देशादित्यागः, 'कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु। द्वापरे त्वन्नमादाय कलौ कर्तैव लिप्यते।।' इति संभाषणादिजन्यपातित्यं वा दोषः, तस्यैव निषेधः, न तु पतितेन सह संवत्सरं यावन्नवविधसंसर्गप्राप्तपातित्यं (? त्यस्य), पूर्वोक्तवचनद्वयबाधमात्रेण चरितार्थस्य वाक्यस्य नवविधसंसर्ग(प्राप्तपातित्य)प्रतिपादकवाक्यबाधकत्वायोगात्, 'कलौ पतति कर्मणा' इति पराशरवचनस्वारस्येन पतितसंसर्गरूपकर्मजन्यपातित्यस्य दुर्निवारत्वाच्च, पतितसंसर्गभिन्नेन ब्रह्महननादिकर्मणा पततीति व्याख्यानस्य निर्बीजत्वाच्च। किंच, ब्रह्महननसुरापानगुरुतल्पगमनादिमहापापसंसर्गप्रायश्चित्तं कलौ न भवतीत्यर्थः, पराशरस्मृतावेव – 'चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके। समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत्।। मद्यपश्च द्विजः कुर्यान्नदीं गत्वा समुद्रगाम्। चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम्।। अनडुत्सहितां गां च दद्याद्विप्रेषु दक्षिणाम्। सुरापानं सकृत्कृत्वा अग्निवर्णां सुरां पिबेत्।। स पावयेदथाऽऽत्मानमिह लोके परत्र च।।' इति ब्रह्महमद्यपसुरापनिष्कृतीनाम् 'आसनाच्छयनाद्यानात्' इति संसर्गमभिधाय 'चान्द्रायणं यावकं च तुलापुरुष एव च। गवां चैवानुगमनं सर्वपापप्रणाशनम्।।' इति महापातकसंसर्गादिनिष्कृतेश्चोक्तत्वात्। न च पराशरोक्तस्य कलिनिषेधेन बाधः, 'कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः। द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः।।' इति पराशरेणैव विरोधे स्वस्मृतिप्राबल्योक्तेश्च। तस्मात्पतितसंसर्गे प्रायश्चित्ताचरणं कार्यमेवेति। अन्ये तु 'त्यजेद्देशं कृतयुगे' इत्याद्युक्तदेशादित्यागस्य 'कृते संभाष्य पतति' इति संभाषणादिजन्यपातित्यस्य वा न निषेधः, कलौ युगान्तरोक्ताप्राप्तेर्निषेधासंभवात्। तस्मात् 'कलौ पतति कर्मणा' इति कलौ कर्मणा ब्रह्महननादिना पतति, न तु संसर्गेणेति व्याख्येयम्। इदानीतनानां संसर्गनिमित्तकप्रायश्चित्ताचरणं च पापक्षयार्थमेवेति ग्रन्थं समर्थयन्ते। अत्र केचिदुपन्यसन्ति – पापस्य अव्यवहार्यत्वं नरकोत्पादकत्वं 'द्विजातिकर्मभ्यो हानिः पतनम्' इति गौतमात्, 'अधोऽधः पतनात्पुंसां पातकं परिकीर्तितम्। नरकाग्निषु घोरेषु पतनात्पापमुच्यते।।' इति भविष्यात्। तत्र नरकोत्पादकत्वसत्त्वेऽप्यव्यवहार्यत्वं नास्तीति कथमुच्यते? न च प्रायश्चित्तेन नरकोत्पादकत्वेऽपि व्यवहारनिरोधिकायाः (शक्तेः) नाशवदेतदिति वाच्यम्, वैषम्यात्। तथाहि – अकामकृतस्य महापापादेः प्रायश्चित्तेन नाशः, कामकृते तु व्यवहार्यतामात्रम्, 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्। कामतो व्यवहार्यस्तु वचनादिह जायते।।' इति शास्त्रात्, 'विहितं यदकामानां कामात्तद्द्विगुणं भवेत्' इति वचनान्यथानुपपत्तेश्च। इह तु 'पतितेन सहोषित्वा

---

† लग्नमेव लग्नकं बोधकत्वसंबन्धेन संबद्धम्। तद्भिन्नमलग्नकम्। प्रकृते संसर्गदोषः पातित्यं तद्भिन्नश्चेति द्विविधः। दोषशब्दस्य यथाश्रुतत्वं दोषविशेषबोधकविशेषणराहित्यरूपं केवलत्वम्। तस्य वाच्यार्थो दोषत्वावच्छेदेनोक्तो द्विविधोऽपि दोषः। तस्यात्राविवक्षितत्वात् दोषपदमत्र न वाच्यार्थबोधकम्, किंतु लक्षणया पातित्यमात्रबोधकमित्यर्थः। 'अलग्लमिव ह वाग्वदेत्' (शब्रा. ३।२।४।११) इति शतपथब्राह्मणवाक्यं सायणाचार्यैरेवं व्याख्यातम् – 'अलग्लमिव। अलग्नमिव वक्तव्यपदार्थेन सहासंसृष्टमिव' इति।

जानन्संवत्सरं द्विजः। निश्चितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेत्।।' इति देवलोक्तेः संसर्गिणोऽप्यब्दान्ते पातित्येन प्रायश्चित्तं विना व्यवहाराङ्गीकारासंभवात् ब्रह्महननादिना शक्तिद्वयवत्पापं जायते, संसर्गेण त्वेकशक्तिमत्पापमित्यत्र नियामकाभावाच्च। महापापे मरणान्तस्य प्रायश्चित्तत्वे व्यवहारानुपयोगित्वान्नरकनिवर्तकमात्रम्, परिशेषात्तु व्रतात्मकं व्यवहारोपयोगि, प्रकृते तु व्यवहारस्य प्रागेव सिद्धत्वात्तद्भङ्ग इत्यादिदूषणगणापत्तेः, 'कामतोऽव्यवहार्यस्तु' इत्यत्राकारप्रश्लेषेणाव्यवहार्यत्ववादिनां शंकराचार्याणां संसर्गपातित्ये व्यवहाराभावस्येष्टत्वात्। तस्मात्संसर्गदोष इत्यस्य ब्रह्महननादौ प्रायश्चित्ते कृतेऽपि व्यवहाराभावः। संसर्गे तु कलौ प्रायश्चित्ते कृते सति स नास्तीत्येवार्थ इति। संसर्गदोष इत्यत्र संसर्गपदं संसर्गिसंसर्गपरम्, 'कर्तारं तु कलौ युगे' इति कर्तृत्यागविधिना तत्संसर्गे दोषप्रत्ययात्। 'कलौ कर्तैव लिप्यते' इति तु साक्षात्संसर्गिणः पातित्याभावव्यञ्जकमिति तु भट्टदिनकरः। 'स्तेयान्य' इति व्याचष्टेस्तेयभिन्ने इति। नन्वत्र स्तेयान्यमहापापेन प्रायश्चित्तं न कार्यमित्यसंगतम्, पराशरेणैव प्रत्येकं महापापे प्रायश्चित्ताम्नानात्, 'कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः। द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः।।' इति पराशरस्मृतेः कलौ बलीयस्त्वादित्यत्राऽऽह – रहस्येति। 'तस्मात्प्रकाशयेत्पापम्' इति पराशरोक्तेः कलौ प्रकाशप्रायश्चित्तमेव कार्यमिति भावः। यत्तु 'कलौ पाराशराः' इति वाक्येन स्तेयान्येत्यस्य सर्वथा बाधे विषयान्तराभावादप्रामाण्यम्, अतः स्तेयान्यमहापातकनिष्कृतिर्नोपदेश्या, उपदेशेऽपि संसर्गो न कार्य इति वा तात्पर्यम्। 'औदुम्बरी सर्वा वेष्टनीया' इति स्मृतेः 'अष्टकाः कर्तव्याः' इतिवन्मूलभूतश्रुतेरनुमानद्वारा प्रामाण्यं प्राप्य 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुत्या बाधादृद्वित्र्यङ्गुलादिपरिहारेण सर्वा वेष्टनीयेति कल्पनावदिति; तन्न, 'प्रायश्चित्तविधानं च' इति तदुपदेशस्य निषिद्धत्वात्, ब्राह्मणभोजनविधिसार्थक्याय संसर्गस्येष्टत्वाच्च। स्तेयपर्युदासश्च तत्र रहस्यप्रायश्चित्ताभ्यनुज्ञानार्थः। केचित्तु अकामकृतेषु स्तेयान्यमहापापेषु नरकक्षयार्थं निष्कृतिर्न कार्या, व्यवहार्यत्वार्थं तु कार्या, मरणान्तिकप्रायपाठादित्याहुः। १३०३-१३०७

¶ अत्र पाठान्तरम् – संसर्गदोषः 'तत्संसर्गी च पञ्चमः' इत्युक्तः, स्तेयं च, तदन्यानि महापातकानि ब्रह्महननसुरापानगुरुतल्पगमनानि त्रीणि महापापानि, तेषां कामकृतानां विप्राणां प्रायश्चित्तं मरणान्तिकं कलौ नेत्यर्थः। मराणान्तिके हि जातिवधनिमित्तं द्वादशाब्दं द्विगुणं ब्रह्मवधनिमित्तं च द्विगुणं भवति। तत् 'चतुर्थे नास्ति निष्कृतिः' इति निषिद्धम्। न चाऽऽत्महत्याविधिना तद्बाधः। तेन हि आत्महत्यानिमित्तस्यैव बाधः, न जातिवधनिमित्तस्य। संसर्गिणस्तु कामतोऽपि व्रतस्यैवोक्तेर्न मरणान्तिकम्, नापि स्तेये, तत्र राज्ञो वधकर्तृत्वात्। तेन तयोर्मरणान्तिकाभावात्तयोरेव निष्कृतिः, नान्येषां त्रयाणाम्। युगान्तरे तु कलौ निषेधबलादेव प्रवृत्तिः। एतद्विप्रपरम्, न क्षत्रियादेः। तदुक्तं 'विप्राणां मरणान्तिकम्' इति। विशेषस्त्वस्मत्कृते प्रायश्चित्तरत्ने द्रष्टव्यः।

---

¶ अस्मिन् प्रकरणे सिन्धौ आदित्यपुराणस्य सार्धा दश श्लोकाः पृथ्वीचन्द्रोदयस्य चाष्टौ श्लोकाः प्रघट्टकद्वयरूपेण प्रथममनुक्रान्तास्ततो यथाक्रमं व्याख्याताश्च, कृष्णंभट्टेन ते श्लोकाः प्रथमं स्वयं व्याख्यातास्ततः सिन्धुकृतं तद्व्याख्यानं व्याख्यातमिति स्थितिः। आदित्यपुराणप्रघट्टके 'प्रायश्चित्तविधानं च' इत्ययं श्लोकः षष्ठः। तद्व्याख्यानभूतो यः सिन्धुग्रन्थोऽस्माभिरत्र संगृहीतस्तस्य स्थाने पाठन्तरत्वेन "संसर्गदोषः 'तत्संसर्गी च पञ्चमः" इत्यादि : 'प्रायश्चित्तरत्ने द्रष्टव्यः' इत्यन्तो ग्रन्थः कृष्णंभट्टेनानूदितः 'अथैतद्व्याख्यायते' इत्यादिना व्याख्यातश्च। तथा च पाठान्तरभूतयोरनयोर्ग्रन्थयोरन्यतर एव सिन्धुकारोपज्ञम्, अन्यतरश्चान्योपज्ञं प्रामादिक एवेति सिद्धम्। न हि कुत्रचिदेकेनैव पठित्राऽनेके पाठाः पठिता इति दृष्टचरम्। एवं सत्यपि अस्मदुपलब्धेषु षट्सु विभिन्नसंपादनकेषु सिन्धुपुस्तकेषु पाठान्तरभूतौ द्वावपि ग्रन्थौ मूले मुद्रितौ, तयोः पाठान्तररूपताऽपि नोक्ता। नैतावदेव, प्रघट्टकमध्ये प्रकृतश्लोकानन्तरं कृष्णंभट्टानूदितः पाठो मुद्रितः, अस्मत्संगृहीतपाठस्तु उक्तोभयप्रघट्टकानुक्रमात् परं यथापाठक्रमं पूर्वश्लोकव्याख्यानोत्तरं मुद्रितः। तदेतत्संपादनविषयकं महदाश्चर्यम्। यद्यपि कृष्णंभट्टकृतपाठान्तरानुवादतव्द्याख्यानयोरस्मत्संगृहीतसिन्धुपाठव्याख्यानात्परमे वस्थानमुचितम्, तथापि संगृहीतसिन्धुपाठे 'संसर्गदोषः' इत्यस्य पृथक्कोटित्वस्य स्पष्टत्वात् तदभिप्रायेण अनूदितपाठान्तरव्याख्याने 'तच्चाग्रे स्पष्टम्' इति संगृहीतसिन्धुपाठस्याग्रिमत्वोक्त्या मूलवचनस्य स्वीयव्याख्यानात्परमेव प्रसङ्गसंगत्या पाठान्तरानुवादस्तव्द्याख्यानं च कृतमिति प्रतीयते। अस्माभिस्तु तत् औचित्यात् तत उत्कृष्यात्र संगृहीतम्।

अथैतद्व्याख्यायते – ननु 'प्रायश्चित्तविधानं च' इत्यनेन 'संसर्गदोषः स्तेयान्य' इत्यस्य पौनरुक्त्यम्, इतरत्र मरणान्तिकाभावादित्यत्रैकदेशिमतमाह – संसर्गेति। विधानं करणं क्रियमाणं प्रायश्चित्तमिति यावत्। तच्च महापापनिष्कृतिरित्येकं वाक्यम्। आत्महत्याविधिना – 'यः कामतो नरः कुर्यान्महापापं कथंचन। न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते।।' इत्यात्महननविधिना। संसर्गदोषस्तेययोः पर्युदासबीजमाह – संसर्गिणस्त्विति। व्रतस्यैवेति। 'यो येन पतितेनैषां संसर्गं याति मानवः। स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये।।' इति मनूक्तेः। राज्ञ इति। 'ब्राह्मणस्वर्णहारी तु राज्ञे मुसलमर्पयेत्। स्वकर्म ख्यापयंस्तेन हतो मुक्तोऽथवा शुचिः।।' इति पाक्षिकमुक्त्यभिधानात् आत्महननाकरणाच्च। ननु 'मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः।' इति मनुनाऽपि मरणान्तिकं निषिद्धमिति युगान्तरेऽपि न दुष्करमेवेत्यत्राऽऽह – युगान्तरे त्विति। एकमूलकल्पनालाघवेन मानवस्यापि कलिपरत्वादिति भावः। न क्षत्रियादेरिति। तथा च क्षत्रियादेर्मरणान्तिकं प्रायश्चित्तं कलौ भवतीति भावः। ननु एतन्मते 'प्रायश्चित्तविधानं च' इत्यस्य वैयर्थ्यं दुर्वारमित्यत्राऽऽह – विशेषश्चे( ? स्त्वि)ति। संसर्गदोषश्चेति वाक्यं पृथगेवेत्यभिप्रायः। तच्चाग्रे स्पष्टम्। वस्तुतस्तु – 'विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं भवेत्। तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः।।' इत्यत्र विधिपदवशात्प्रथममहापापानन्तरं प्रायश्चित्तं कृत्वा यदि द्वितीयं पापं क्रियते तदा तद्द्विगुणं प्रायश्चित्तं कार्यम् तदुत्तरं महापापे तु तत्त्रिगुणमिति, 'प्रतिनिमित्तं नैमित्तिकावृत्तिः' इति न्यायोज्जीवनेनाभिधाय चतुर्थे महापापे प्रायश्चित्तनिषेधः, न तु प्रकृते अकृतप्रायश्चित्तस्य कथंचिच्चातुर्विध्ये तत्प्रवृत्तिरिति। अत्र 'चतुर्थे नास्ति निष्कृतिः' इत्येव विधायकम्, अतो न वाक्यभेद इत्येके। एतच्च व्रत एव प्रवर्तते, न मरणान्तिके, बाधात्। एवं च तत्र द्वैगुण्यादिविध्यन्तरमावश्यकमिति परे।

कृभ. १२९६-१२९८]

(३) 'त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्। द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे।।' (पस्मृ. १।२५) इति पराशरवचनेन संलापादिनवविधसंसर्गाभावेऽपि विहितस्य देशादित्यागस्य निषेधः। यद्वा – 'कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु। द्वापरे त्वन्नमादाय कलौ कर्तैव लिप्यते।।' (पस्मृ. १।२६) इत्यनेन संभाषणस्पर्शनादिजन्यपातित्यस्यैव निषेधः, न तु पतितेन सह संवत्सरं नवविधसंस्पर्शे प्राप्तस्य पातित्यस्य, पूर्वोक्तवच( ? चन)द्वयबाधमात्रेण चरितार्थस्य नवविधसंसर्गनिषेधप्रतिपादकानेकवाक्यबाध(कत्व)स्यान्याय्यत्वात्, 'कलौ पतति कर्मणा' इति वाक्यस्वारस्येन पतितसंसर्गरूपकर्मजन्यस्य पातित्यस्य दुर्निवारत्वाच्च। अतश्चेदानीन्तनानां संसर्गप्रायश्चित्तानुष्ठानाचारः स्वा( ? त्वना)चार एव। स्तेयान्यमहापातकेषु निष्कृतिः रहस्यप्रायश्चित्तं निषिध्यते। अत्र केचित्स्तेयान्यमहापातके प्रायश्चित्तमेव कलौ न भवतीत्याहुः। तन्न, पराशरस्मृतौ महापातकिनामपि प्रत्येकं प्रायश्चित्तविधानात् 'कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः। द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः।। (पस्मृ. १।२४) इत्यनेनान्यस्मृतिविरोधे विकल्पप्रसक्तौ स्मृत्यन्तरीयविशेषशास्त्रेण च बाधप्रसक्तौ पराशरस्मृतेः कलौ बलीयस्त्वनियमेन स्तेयान्येत्यस्य बाधात्। न च बाधे विषयान्तरासंभवादप्रामाण्यापत्तिः, 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुत्या बाधितायाः 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतेर्द्वित्राण्यङ्गुलानि मुक्त्वा सर्वा वेष्टयितव्येति न्यायसुधाकारोक्ततात्पर्यकल्पनवदिहापि स्तेयान्यमहापातकनिष्कृतिर्नोपदेश्या, कृतायामपि निष्कृतौ संसर्गो न कर्तव्य इति तात्पर्यकल्पनात्। वस्तुतस्तु मनुवाक्येनोपदेशनिषेधस्य सिद्धत्वात् ब्राह्मणभोजनविधिविरोधाच्च रहस्यप्रायश्चित्तं निष्कृतिर्न भवतीति कल्प्यम्। अत एव तत्र तत्र रहस्यप्रायश्चित्तं निन्दितम्, 'तस्मात्प्रकाशयेत्पापम्' इत्यादि चोक्तम्। न चैवं स्तेयपर्युदासोऽसंगतः, तस्य कलावनायासेन स्तेयनिष्पत्त्यां प्रतिनिमित्तमुपदेशासंभवेन रहस्यप्रायश्चित्ताभ्यनुज्ञानार्थत्वात्।

सम. १०७-१०८

**[1]वरातिथिपितृभ्यश्च पशूपाकरणक्रिया।।**

---

(१) **स्मृच.** १।३० पाकरण (पहरण)(=) : ४।२०३ पाकरण (पकरण)(=); **पमा.** १।१२५(=); **चमव्या.** ५१ माधवदीपिकाकारादिसंगृहीतम्; **मुक्ता.** १४ धर्मशास्त्रसुधानिधौ; **सिन्धु.** १२९८, १४७२; **सम.** १०८ हेमाद्रौ माधवीये च; **विपा.** ५।४०२, ५।४९०

(१) वरातिथिभ्यां मधुपर्के, पितृभ्यः श्राद्धे।

चमव्या. ५३

(२) 'वरस्य प्राजापत्योऽतिथेराग्नावैष्णवः' इति यागविधिः, 'वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी' इत्यादिवचनकदम्बकेन त्रिष्वपि प्राप्तिः। अत्र श्राद्धे पशुयागाभावेन तद्धर्मानतिदेशादुपाकरणाप्राप्तेः पशूपाकरणलक्षितं तत्प्रकृतिकं पितृभ्यो मांसदानं निषिध्यते। तथा च 'श्राद्धे मांसम्' इत्यनेनैकमूलत्वान्न कल्पनागौरवम्।

‡ सम. १०८

(३) 'नामांसो मधुपर्को भवति' इति शास्त्रेण वरातिथिभ्यां मधुपर्के यन्मांसदानं विहितम्, यच्च 'खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च। लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य च। यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते।।' इति पितृभ्यः श्राद्धे खड्गादिमांसदानं विहितं तन्निषिध्यते, श्राद्धे क्वचिदप्युपाकरणाप्रसक्त्योपाकरणस्य मांसदाने लक्षणाया आवश्यकत्वात् द्वन्द्वोपात्तेष्वेकरूपार्थस्य वक्तव्यत्वाच्च।

स्मृतिकौ. ४७६

**'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।**
**सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि।।**

(१) दत्तः मातृपितृभ्यां तदन्यतरेण वा 'पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसंनिकृष्ट एव प्रतिगृह्णीयात्' इत्यादिवसिष्ठोक्तविधिना पुत्रीकृतः, औरसः धर्मपत्नीजः, ताभ्यामितरेषाम्। सवर्णान्याः असवर्णाः या अङ्गनाः ताभिर्दुष्टैः तत्संपृक्तैः कृतप्रायश्चित्तैरपि संसर्गः। + चमव्या. ५३

(२) सवर्णान्या असवर्णा क्षत्रियादिस्तया दुष्टैः।

सिन्धु. १३०७

(३) सवर्णान्याः असवर्णाः या अङ्गनाः ताभिर्दुष्टैः तत्संस्पृष्टैः कृतप्रायश्चित्तैरपि संसर्गः। इदं चोत्तमवर्णविषयमेवेति युक्तमुत्पश्यामः। सम. १०८

**'अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः।**
**परोद्देशात्मसंत्याग उद्दिष्टस्यापि वर्जनम्।।**

(१) अयोनाविति। युगान्तरे तु (योनौ?) अयोनौ(वा?) संसर्गे सति परित्याग इति गम्यते। परेषां गोब्राह्मणस्यादीनामुद्देशेन तदापद्विमोक्षार्थं प्राणत्यागः 'गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान् परित्यजेत्' इत्यादिनोक्तः। उच्छिष्टस्यापि वर्जनमिति। 'स्वमुच्छिष्टमुच्छिष्टोपहतं च' (वाध. १४।२१) इत्यादिवसिष्ठाद्युक्तम्। चमव्या. ५४

(२) अयोनौ शिष्यादौ। 'चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या।' इत्युक्तस्त्यागः। परोद्देशेन ब्राह्मणाद्यर्थमात्मनस्त्यागः। यद्वा, परोद्देशात्मत्यागो (गो?)दानं 'मनसा पात्रमुद्दिश्य' इत्युक्तम्। उद्दिष्टस्य त्यक्तस्य वर्जनं 'प्रतिग्रहसमर्थोऽपि' (मस्मृ. ४।१८६) इत्युक्तम्।

§ सिन्धु. १३०७-१३०८

[अयोनाविति व्याचष्टे – अयोनाविति। गुरुस्त्रियाः ब्राह्मणस्त्रियाः संग्रहे गर्भधारणे परित्यागः गृहान्तरावस्थानम्। 'पतिघ्नी च विशेषण जुङ्गितोपगता च या।' इत्युत्तरार्धम्। जुङ्गिता हीनयोनिः। युगान्तरे त्वयोनौ संग्रहे परित्याग एवेति भावः। परोद्देशेति व्याचष्टे – परोद्देशेनेति। 'गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान् परित्यजेत्।' इति विहितः।

---

‡ कृभ. समवत्।

पाकरण (पकरण); **संप्र.** ८२३(=); **स्मृतिकौ.** ४७६; **आन.**२२ धर्मशास्त्रसुधानिधौ; **पुम.** ४६८; **सस्मृ.** ९४ धर्मशास्त्रसुधानिधौ; **कृभ.** १२९८ सिन्धूद्धृतस्य प्रतीकमात्रम्.

(१) **स्मृच.** १।३० न्याङ्गनादुष्टैः (नां तथा दुष्टैः)(=); **पमा.** १।१२५ दुष्टैः (दुष्टौ)(=); **मपा.** १६ पू. सारसंग्रहे; **उत.** ११२ पू.; **चमव्या.** ५१ माधवदीपिकाकारादिसंगृहीतम्; **मुक्ता.** १४ स्मृचवत्, उत्त., धर्मशास्त्रसुधानिधौ; **सिन्धु.** १२९८:१३०३ चतुर्थचरणमात्रम्; **सम.** १०८ हेमाद्रौ माधवीये च; **विपा.** ५।४९०; **आन.** २२-२३ स्मृचवत्, उत्त., धर्मशास्त्रसुधानिधौः ४६८, ४९८ पू. (=); **संग.** ५४७ पू.(=); **पुम.** ४६८; **सस्मृ.** ९४ स्मृचवत्, धर्मशास्त्रसुधानिधौ; **कृभ.** १२९८ सिन्धूद्धृतस्य प्रतीकमात्रम् : १३०४ उत्त. सिन्धूद्धृतस्यानुवादः.

+ कृभ. चमव्यागतम्।

§ सम. सिन्धुकृभगतम्।

(१) **स्मृच.** १।३० पू. (=); **पमा.** १।१२५ पू.(=); **चमव्या.** ५१ उद्दिष्ट (उच्छिष्ट) माधवदीपिकाकारादिसंगृहीतम्; **मुक्ता.** १४ पू., धर्मशास्त्रसुधानिधौ; **सिन्धु.** १२९८ स्त्रियाः (स्त्रियः); **सम.** १०८ द्देशा (द्देश्या) द्दिष्टस्यापि (च्छिष्टस्याप) हेमाद्रौ माधवीये च; **विपा.** ५।४९१ स्त्रियाः (स्त्रियः); **स्मृतिकौ.** ४७६; **आन.** २३ पू., धर्मशास्त्रसुधानिधौ; **पुम.** ४६८-४६९; **सस्मृ.** ९४ पू., धर्मशास्त्रसुधानिधौ.

यद्वेत्यादि। इदं च न सम्यक्, बहुग्रन्थविरोधात्। उद्दिष्टस्यापीति व्याचष्टे – उद्दिष्टस्येति। प्रतीति। 'प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्।' इति (अर्थः?) प्रतिग्रहसामान्यनिषेधः कलौ वर्ज्य इत्यर्थः। केचित्तु – 'उच्छिष्टस्यापवर्जनम्' इति पाठः, 'स्वाम्यु (? स्वमु) च्छिष्टमुच्छिष्टोपहतं च' इति वसिष्ठाद्युक्तं तन्निमित्तकप्रायश्चित्तं नेत्यर्थ इत्याहुः। अन्ये तु – अपवर्जनं दानम्, 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्। प्रादेशनं निर्वपणमपवर्जनमंहतिः।।' इति त्रिकाण्डीस्मरणात्, 'उदगुच्छिष्टं ब्राह्मणाय प्रयच्छेत्' इति मधुपर्कविहितम्, तन्नेत्यर्थ इत्याहुः। परे तु – 'उच्छिष्टस्यापि वर्जनम्' इति पाठः, उच्छिष्टस्य ताम्बूलाचर्वणाद्युच्छिष्टस्य पथि वर्जनमित्याहुः।

कृभ. १३०७-१३०८]

(३) अयोनाविति नञ् अप्राशस्त्ये। यथा ब्राह्मणं प्रत्यब्राह्मणोऽसीति। निमित्ते सप्तमी। संग्रहः गर्भधारणम्। गुरुः पिता। तत्रैव गुरुपदवाच्यत्वस्य विज्ञानेश्वरेण व्यवस्थापनात्। ततः – 'चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या। पतिघ्नी च विशेषेण जुङ्गितोपगता च या।।' इति यस्त्यागो विहितः स कलौ पुत्रेण मातुर्न कार्यः। अन्यासां तु तादृशीनां कलावपि त्यागो भवत्येवेति मन्तव्यम्। गोब्राह्मणादित्राणार्थं – 'गवार्थे ब्राह्मणार्थे च सद्यः प्राणांन् परित्यजेत्' इति विहितो य आत्मत्यागः स कलौ निषिध्यते। केचित्तु परोद्देशात्मत्यागो दानं 'मनसा पात्रमुद्दिश्य' इत्युक्तं तन्निषिध्यत इत्याहुः। तन्न, उद्देशेन प्रतिगृह्यतामित्यादिव्यवहारनिवृत्तिलक्षणाया निर्मूलत्वात्। उद्दिष्टस्य त्यक्तस्य वर्जनं 'प्रतिग्रहसमर्थोऽपि' इत्युक्तं निषिध्यत इति केचित्। अन्ये तूच्छिष्टस्येति पाठं मन्यमानाः 'स्वमुच्छिष्टमुच्छिष्टोपहतं च', इति वसिष्ठादिभिर्निषिद्धस्यापि कलौ न दोष इत्याहुः। परे त्वपवर्जनमिति पाठमवलम्ब्य 'विश्राणनं वितरणम्' इति कोशे दानवाचित्वेनापवर्जनशब्दस्य प्रसिद्धत्वात् यत् 'ब्राह्मणायोदङुच्छिष्टं प्रयच्छेत्' इति मधुपर्के विहितमुच्छिष्टदानं तन्निषिध्यत इत्याहुः। वस्तुतस्तु उदित्यव्ययेन उत्कृष्टेन पित्रादिना उद्दिष्टं निर्दिष्टं शिष्टमित्येक एवार्थः। तादृशस्यापव(? स्यापि व)र्जनं प्रायपाठाद्विहितव्रतान्तर्गत (त्व?)म्, अपेति पाठेऽपि तादृशस्य वस्तुनः परस्मै समर्पणम्, तन्निषिध्यते, सर्वस्मिन् पाठे एकरूपार्थलाभात् मूलैककल्पनालाघवाच्च। तथा च कलौ गुरोर्वचनानुरोधेन व्रतविरुद्धाचरणे न केवलं व्रतहानिदोषाभावः, प्रत्युत तद्वचनोल्लङ्घने दोषाधिक्यमपि। तथा च ब्रह्मवैवर्ते कलिब्रह्मसंवादे गुरुभजनमीश्वरभजनादप्यादरणीयमुक्तम्।

‡ स्मृतिकौ. ४७६-४७७

(४) अयोनौ हीनयोनौ। गुरुस्त्रियाः ब्राह्मणस्त्रियाः। संग्रहे गर्भधारणे वृत्ते सति तस्याः संभोगादाविवान्नवस्त्रविषयेऽपि परित्यागो नेत्यर्थः। पुम. ४६९

**[१]प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्मकः।**
**अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च।।**

(१) इयमेव प्रतिमा यावज्जीवं पूजनीयेत्येवमादिः संकल्पः। 'ततः संजयनादूर्ध्वमङ्गस्पर्शो विधीयते।' इत्यादिना विहितोऽङ्गस्पर्शः। * चमव्या. ५४

(२) वेतनग्रहणेन प्रतिमापूजा। 'स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः।' इत्युक्तः स्पर्शः।

सिन्धु. १३०८

[प्रतिमेति व्याचष्टे – वेतनेति। 'यावज्जीवं मया इयमेव प्रतिमा पूजनीया' इत्येवमुद्देश्याद्युल्लेखपूर्वकसंकल्पोपलक्षणमेतत्। कृभ. १३०८]

**[२]शामित्रं चैव विप्राणां सोमविक्रयणं तथा।**
**षड्भक्तानशने चान्नहरणं हीनकर्मणः।।**

(१) शामित्रं यज्ञे स्वयं पशुप्रमारणम्। षण्णां भक्तानाम-

‡ आन. स्मृतिकौगतम्।

* सम. चमव्यागतम्।

(१) **स्मृच.** १।३० उत्त. (=); **पमा.** १।१२५ उत्त. (=); **चमव्या.** ५२ माधवदीपिकाकारादिसंगृहीतम्; **आर.** ४ पू.; **सिन्धु.** १२९८-१२९९; **सम.** १०८ हेमाद्रौ माधवीये च; **विपा.** ५।४९१ संकल्प (संकल); **पुम.** ४६९; **सस्मृ.** ९४ उत्त.

(२) **स्मृच.** १।३१ शामित्रं चैव (शमितृत्वं च) नै चा (नेना)(=); **पमा.** १।१२५ ने चा (नेना)(=); **चमव्या.** ५२ माधवदीपिकाकारादिसंगृहीतम्; **सिन्धु.** १२९९; **सम.** १०८-१०९ पमावत्, हेमाद्रौ माधवीये च; **विपा.** ५।४९१; **संप्र.** ९९० यणं (यिता) पू.(=); **स्मृतिकौ.** ४७७ पमावत्, उत्त.; **पुम.** ४६९ कर्मण; (कर्मणा) शेषं पमावत्; **सस्मृ.** ९४ अशुद्धः पाठः, धर्मशास्त्रसुधानिधौ; **कृभ.** १२९९ सिन्धूद्धृतस्य प्रतीकमात्रम्.

नशनम् उपवासत्रयम्। तस्मिन् 'बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्।' इत्यादिस्मृत्या, 'तथैव सप्तमे काले भक्तानि षडनश्नता। अश्वस्तननिधानाय हर्तव्यं हीनकर्मणः।।' (मस्मृ. ११।१६) इति मनुस्मृत्या च विहितमन्नहरणम्। # चमव्या. ५४

(२) शामित्रमिति। 'आलभेत' इति विधिप्राप्तं पशुमारणम्। सोमेति। 'गवा क्रीणाति' इति विधिवशसिद्धं सोमविक्रयणम्। कृभ. १२९९

**'शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम्।**
**भोज्यान्नता गृहस्थस्य तीर्थसेवाऽतिदूरतः।।**

(१) शूद्रेषु दासगोपलेति। 'कन्दूपक्वं स्नेहपक्वं यच्च दुग्धेन पाचितम्। एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्।।' इत्यपरार्के सुमन्तूक्ता शूद्रस्य पाकक्रिया। * सिन्धु. १३०९

[ब्राह्मणादिष्विति व्याचष्टे–शूद्रेष्विति। 'पचनादि' इत्यादिना भोजनग्रह इत्याशयेनेदम्। शूद्रस्येति। अत्रोभयत्राप्यर्थतः पाकक्रिया लभ्यते, शूद्रकर्तृकपाकं विना तद्भोजनाभावात्। 'आर्याधिष्ठिताः शूद्राः संस्कर्तारः स्युः' इत्यापस्तम्बोक्तमपि हि ब्राह्मणगृहे शूद्रस्य पक्तृत्वे द्रष्टव्यम्। कृभ. १३०९-१३१०]

(२) गृहस्थस्य आहिताग्नेरिति केचित्। सम. १०९

---

# सिन्धु., सम., स्मृतिकौ., पुम. चमव्यागतम्।

* व्याख्यानमेतदग्रिमस्य 'ब्राह्मणादिषु' इति वचनस्यापि।

(१) **स्मृच.** १।३१ त्रार्ध (त्रार्थ)(=); **पमा.** १।१२६(=); उत. ११२-११३; **चमव्या.** ५२ माधवदीपिकाकारादिभिः संगृहीताः इत्युक्तम्; **मुक्ता.** १४ वाऽतिदू (वा च दू) धर्मशास्त्रसुधानिधौः ४४७ गृहस्थस्य (कलौ नास्ति) वाऽतिदू (वा च दू) स्मरणम्; **सिन्धु.** १२९९ माधवीये पृथ्वीचन्द्रोदये च : १३०९ निर्देशमात्रम्; **शूक.** २८० माधवीये पृथ्वीचन्द्रोदयेच; **सम.** १०९ सेवा (यात्रा) क्रमेण हेमाद्रौ माधवीये च; **विपा.** ५।४९१ सीरिणाम् (सीरिणः) चन्द्रोदये ब्राह्मे च; **संकौ.** १७१ (गृह....दूरतः०)(=); **स्मृतिकौ.** ४७० (तीर्थयात्राऽतिदूरतः) एतावदेव, माधवोदाहृतवचः : ४७८ माधवोक्तम्; **आन.** २३ वाऽतिदू (वा च दू) धर्मशास्त्रसुधानिधौ; **पुम.** ४६९ समवत्, माधवीये; **सस्मृ.** ९५ त्राध (त्रार्थ) वाऽतिदू (वाश्च दू) धर्मशास्त्रसुधानिधौ; **कृभ.** १२९९ सिन्धूद्धृतस्य प्रतीकमात्रम्.

(३) या दासादीनां नापितनिवेदितात्मनोश्च शूद्रयोर्भोज्यान्नता याज्ञवल्क्योक्ता या च प्रत्यन्तदेशगततीर्थयात्रा पौराणी सा कलौ नेति। स्मृतिकौ. ४७८

(४) शूद्रेष्विति। 'शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः। भोज्यान्ना नापितश्चैव यश्चाऽऽत्मानं निवेदयेत्।।' इति विहितम्। न चेदं स्नातकप्रकरणत्वात्तेषामेवेति वाच्यम्, 'उत्तरेषां चैतदविरोधि' इति गौतमेन गृहस्थादीनामपि तदतिदेशात्। अतश्च गृहस्थपदं नाऽऽहिताग्निपरम्, मानाभावात्। दासादिपदं च नापितकुम्भकारयोरुपलक्षणम्, अन्यथाऽऽनौचित्यापत्तेः। तीर्थसेवेति। तीर्थयात्रेति पाठान्तरम्। 'दूरतस्तीर्थमासेव्यम्' इत्युक्तं तीर्थसेवनम्। कृभ. १२९९

**'शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिरीरिता।**
**आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा।।**

(१) आपद्वृत्तिरिति। आपदि क्षत्रादिवृत्तिभिर्जीवनम्। चमव्या. ५४

(२) 'क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः', 'त्र्याहिकोऽश्वस्तनोऽपि' (यास्मृ. २।३५, १।१२८) इत्युक्ता। सम. १०९

(३) आपदि क्षत्रियवृत्त्याश्रयणं कलौ न कार्यमित्यर्थः, तस्या हिंसात्मकत्वात्, वैश्यवृत्तेः कृष्यादेः कलावभ्युपगमाच्चेति भावः। आन. २३

(४) या 'नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ। तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा।।' इति गुरुपत्नीसमीपे गुरुपुत्राभावे चिरं स्थितिर्विहिता सा निषिध्यते, न तु 'गुरुवत्प्रतिपूज्यास्तु सवर्णा गुरुयोषितः।'(मस्मृ. २।२१०) इति मनूक्ता पूजा, वृत्तिशीलतेतिपदेन पूजानभिधानात्। आपदि ब्राह्मणानां 'क्षात्रेण कर्मणा जीवेद्विशां वा त्वापदि

---

(१) **स्मृच.** १।३१(=); **पमा.** १।१२६(=); **चमव्या.** ५२ रीरिता (शीलिता) माधवदीपिकाकारादिभिः संगृहीता इति; **मुक्ता.** १४ धर्मशास्त्रसुधानिधौ : ६० उत्त. (=); **सिन्धु.** १२९९ रीरिता (शीलता) माधवीये पृथ्वीचन्द्रोदये च; **सम.** १०९ क्रमेण हेमाद्रौ माधवीये च; **विपा.** ५।४९१ वद्व (तद्व) रीरिता (शीलता) चन्द्रोदये ब्राह्मे च; **स्मृतिकौ.** ४७८ सिन्धुवत्, माधवोक्तम्; **आन.** २३ धर्मशास्त्रसुधानिधौ : ६३३ (=) उत्त.; **पुम.** ४६९ माधवीये; **सस्मृ.** ९५ धर्मशास्त्रसुधानिधौ.

द्विजः।' इति यत्परवृत्त्या जीवनं विहितम्, यच्च 'त्र्यहिकोऽश्वस्तनोऽपि वा' इति विहितमश्वस्तनत्वं तत्कलौ नेत्यर्थः।

स्मृतिकौ. ४७८

**'प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः।**
**ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया।।**

(१) 'वक्ष्ये जातारणेः पक्षं कुमाराग्नेः प्रसिद्धये। निर्माय यन्त्रं विहितं पिता संस्थाप्य यत्नतः।। जाते कुमारे मथ्नीयादग्निं यथाविधि स्वयम्। आयुष्यहोमान् जुहुयात्तस्मिन्नग्नौ समाहितः।। तत्रान्नप्राशनं चौलं मौञ्जीबन्धनमेव च। व्रतादेशश्च कर्तव्यस्तस्मिन्गोदानिकाः क्रियाः।। कुर्याद्वैवाहिको होमो वह्नौ तस्मिन् समाहितः। शालाग्निकर्म तत्रैव कुर्यात्पक्तिं च नैत्यकीम्।। नित्यहोमं पञ्चयज्ञान् कुर्यात्तस्मिन्नाहितः। स्मार्तसंस्थादिकं यच्च तत्सर्वं तत्र गद्यते।।' (यप. २।६५-६९) इति जातारणिपक्षस्तु युगान्तरे भवति, न कलौ, 'प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः' इति कलिवर्ज्यत्वात्। गभा. २६-२७

(२) विप्राणां संततिजीवनाय जातारणिपरिग्रहः। प्रवासित्वं सर्वदा प्रवासशीलता। 'मुरवेनोपधमेदग्निम्' इत्यादिना विहितं मुखेनाग्निधमनम्।

‡ चमव्या. ५४

(३) प्रवासशीलत्वम्, 'वृथा तु न चिरं वसेत्' इति स्मरणादिति केचित्। सम. १०९

(४) केषांचिच्छाखिनां जातकर्महोमेऽरणिपरिग्रहो विहितो यः। ब्राह्मणानां वेदाध्ययनार्थं गुरुकुले द्वादशवर्षं ब्रह्मचर्येण वासः प्रवासः, 'दीर्घकालं ब्रह्मचर्यम्' इत्यनेन मूलैक्यकल्पनालाघवात्, 'द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव। राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम्।' इत्यत्र प्रवासपदेन तदभिधानक्लृप्तेश्च। 'मुखेनैव धमेदग्निम्' इति विहितं धमन्यनपेक्षं मुखधमनम्। स्मृतिकौ. ४७९

**'बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः।**
**यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः।।**

(१) गुरुस्त्रीभिन्नानां यस्त्याग उक्तस्तत्परं बलादित्यादि। चातुर्वर्ण्यभैक्षचर्यमुपनिषदि यतीनां प्रसिद्धम्।

स्मृतिकौ. ४७९

(२) बलात्कारेति। 'बलात्प्रमथ्य भुक्ता चेद्दह्यमानेन चेतसा। प्राजापत्येन शुद्धिः स्यात्तत्तस्याः पावनं स्मृतम्।।' इति संवर्ताद्युक्तप्राजापत्यादिना संग्रहः। यद्वा म्लेच्छादिभिर्भुक्ताया अभुक्ताया अप्यतिचिरकालं भुक्ततदीयान्नादिना केवलतत्तादात्म्यापन्नायाश्च संग्रहः। परंतु एतादृशविषये तासां तादृशपुंसां च प्रायश्चित्तं कार्यम्, न तु संग्रह इति संग्रहपदोपादानम्। कृभ. १३००

**'नवोदके दशाहं च दक्षिणा गुरुचोदिता।**
**ब्राह्मणादिषु शूद्रस्य पचनादिक्रियाऽपि च।।**

(१) अभिनवोदके दशाहवर्जनं 'दशरात्रेण शुध्येत भूमिष्ठं च नवोदकम्' इत्यादिनोक्तम्। दशाहमित्युक्त्या 'काले

‡ सिन्धु. चमव्यागतम्।

(१) **स्मृच.** १।३१(=); **पमा.** १।१२६(=); **गभा.** २७ पू. (=); **चमव्या.** ५२ माधवदीकाकारादिभिः संगृहीताः इति; **मुक्ता.** १४ उत्त. धर्मशास्त्रसुधानिधौ; **सिन्धु.** १२९९-१३०० माधवीये पृथ्वीचन्द्रोदये च; **सम.** १०९ प्रजारणि (जातारणि) हेमाद्रौ माधवीये च; **विपा.** ५।४९१ चन्द्रोदये ब्राह्मे च; **स्मृतिकौ.** ४७८ समवत्, माधवोक्तम्; **आन.** २३ उत्त. धर्मशास्त्रसुधानिधौ; **संग.** ४१-४२ नक्रिया (नं तथा) माधवपृथ्वीचन्द्रोदयौ; **पुम.** ४६९ माधवीये; **सस्मृ.** ९५, ९६ खाग्निध (खं निय) धर्मशास्त्रसुधानिधौ; **संदी.** १।४० नक्रिया (नं तथा) उत्त. माधवपृथ्वीचन्द्रोदयौ.

(१) **स्मृच.** १।३१ रादिदु (राद्वि दु)(=); **पमा.** १।१२६ वर्णेषु (वर्णेभ्यो) (=); **आपा.** ३० वर्णेषु (वर्णेभ्यो) उत्त., पाराशरे; **चमव्या.** ५२ माधवदीपिकाकारादिभिः संगृहीताः इति; **मुक्ता.** १४ धर्मशास्त्रसुधानिधौ; **सिन्धु.** १३०० स्तु (श्च) माधवीये पृथ्वीचन्द्रोदये च; **सम.** १०९ चोदितः (नोदितः) हेमाद्रौ माधवीये च; **विपा.** ५।४९१ हो वि (होऽवि) स्तु (श्च) चर्या विधानतः (चरणमेव च); चन्द्रोदये ब्राह्मे च; **स्मृतिकौ.** ४७८ स्तु (श्च) माधवोक्तम्; **आन.** २३ धर्मशास्त्रसुधानिधौ; **पुम.** ४६९ माधवीये; **सस्मृ.** ९५, ९६ धर्मशास्त्रसुधानिधौ.

(२) **स्मृच.** १।३१(=); **पमा.** १।१२७(=); **आपा.** ३० पू., पाराशरे; **उत्त.** ११३ पचना (पक्वता) उत्त.; **चमव्या.** ५२ गुरु (विधि) माधवदीपिकाकारादिभिः संगृहीता इति; **मुक्ता.** १४ धर्मशास्त्रसुधानिधौ; **सिन्धु.** १३०० माधवीये पृथ्वीचन्द्रोदये च; **शूक.** २८० पचना (पक्वता) पि च (पि वा) उत्त; **सम.** १०९ गुरु (विधि) हेमाद्रौ माधवीये च; **विपा.** ५।४९१ चन्द्रोदये ब्राह्मे च; **स्मृतिकौ.** ४७८ दके (दकं) माधवोक्तम्; **आन.** २३ याऽपि च (या तया) धर्मशास्त्रसुधानिधौ; **पुम.** ४६९ गुरु (विधि) माधवीये; **सस्मृ.** ९५, ९६ याऽपि च (या अपि) धर्मशास्त्रसुधानिधौ.

नवोदकं शुद्धं न पिबेच्च त्र्यहं च तत्। अकाले तु दशाहं स्यात्पीत्वा नाद्यादहर्निशम्।।' इति स्मृत्युक्तस्य दशाह-प्रतिषेधस्यैवं प्रतिप्रसवः, न तु त्र्यहप्रतिषेधस्येति दर्शयति। 'गुरवे तु वरं दत्त्वा' इत्यादिनोक्ता स्नानार्थं गुरुदक्षिणा। 'आर्याधिष्ठिता वा शूद्राः संस्कर्तारः स्युः' इत्यापस्तम्बोक्तं ब्राह्मणगृहे शूद्रस्य पाचकत्वम्। § चमव्या. ५४

(२) यत् 'दशाहेनैव शुध्येत भूमिष्ठं च नवोदकम्' इति दशाहपर्यन्तं नवोदकवर्जनम्। विद्यान्ते गुरुप्रेरणया दक्षिणादानम्, यथा सांदीपनये श्रीकृष्णेन मृतपुत्रस्य। न तु गुरवे दक्षिणामात्रम्, चोदितेतिपदवैयर्थ्यापत्तेः। – 'कटुपक्वं स्नेहपक्वं यच्च दुग्धेन पाचितम्। एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्।।' इत्यपरार्कोदाहृतवचसा ब्राह्मणाद्यर्थे शूद्रस्य पाकविशेषाचरणम्। पाकोपयोगिकल्पनमादिपदार्थः।

स्मृतिकौ. ४७९

[१]**भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा।**
**गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया।।**

(१) गोतृप्त्यधिके जले शिष्टानामाचमनकरणम् 'शुचि गोतृप्तिकृत्तोयम्' इति प्राप्तम्। चमव्या. ५४

(२) अत्र मूलम् 'वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः' इत्यादिविज्ञानेश्वरग्रन्थाद्द्रष्टव्यम्।

सम. १०९

(३) 'वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः। तस्य त्रिरात्रमाशौचम्' इति शास्त्रप्रसिद्धं वृद्धादिमरणम्। अत एवाम्बुप्रवेशाद्युपलक्षणं भृगुपतनादि। 'शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्' इति प्रसक्तं शिष्टाचमनम्।

‡ स्मृतिकौ. ४७९

§ सिन्धु. चमव्यागतम्। सम. चमव्यावत्।

‡ कृभ. स्मृतिकौगतम्।

(१) **स्मृच.** १।३१(=); **पमा.** १।१२७ नैश्चैव (नाद्यैश्च)(=); **उत.** ११३ पतनैश्चैव (मरणं चैव)पू.; **चमव्या.** ५२ माधवदीपिकाकारादिभिः संगृहीताः इति; **मुक्ता.** १४ धर्मशास्त्रसुधानिधौ : २२४ उत्त. (=): ४७३ शिष्टैराच (कलौ नाऽऽच) उत्त., स्मरणम्; **सिन्धु.** १३०० माधवीये पृथ्वीचन्द्रोदये चः १९२४ मरणं (मरणे), पू., माधवेन पृथ्वीचन्द्रेण चेति; **आम.** १७ उत्त.(=); **सम.** १०९ क्रिया (क्रियाः) हेमाद्रौ माधवीये च; **विपा.** ५।४९१

[२]**पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम्।**
**यतेः सायंगृहत्वं च सूरिभिस्तत्त्वदर्शिभिः।।**

(१) 'पितृ (? ता)पुत्रविरोधे तु साक्षिणां त्रिपणो दमः' (यास्मृ. २।२३९) इत्युक्तम्। संन्यासिनां यत्र सायंकालस्तत्रैवावस्थानम्† 'यत्रसायंगृहो मुनिः' इत्यनेनोक्तम्।

चमव्या. ५४-५५

(२) 'पितापुत्रविवादे तु साक्षिणां त्रिपदो दमः' इत्युक्तः। सायंगृहत्वं 'विधूमे सन्नमुसले' इत्युक्तम्। पृथ्वीचन्द्रेण तु – 'अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च। अनिकेता ह्यनाहारा यत्रसायंगृहास्तु ते।।' इति विष्णुपुराणोक्तो निषिद्धः(?)। तेनाज्ञातशीलपान्यादेः श्राद्धादौ विनियोगो न कार्यः कलावित्यर्थ उक्तः। एतानि वर्ज्यानीत्यर्थः।

सिन्धु. १३०९-१३१०

[विधूम इति। 'विधूमे सन्नमुसले न्यङ्गारे भुक्तवज्जने। कालेऽपराह्णभूयिष्ठे नित्यं भिक्षां यतिश्चरेत्।।' इत्यर्थः, गृहपदस्य भिक्षार्थं गृहगमनपरत्वादिति भावः। यत्र सूर्यास्तो जातस्तत्रावस्थानं सायंगृहत्वमिति मतमाह – पृथ्वीति। सायंगृहा इति तत्र मध्यम् (?)। यद्यपि 'अष्टौ मासान्विहारः स्यात्' इत्यस्यैकवाक्यतया अनिकेता इति यतिपरमेव,

† यत्र सायमिति यत्रसायम्। सुप्सुपेति समासः। यत्र सायंकालस्तदित्यर्थः। तत् गृहं यस्य स यत्रसायंगृहः।

चन्द्रोदये ब्राह्मे च; **संकौ.** १७४-१७५(भृग्वग्न्यशनाद्यैश्च वृद्धस्य मरणं तथा।) पू. (=); **स्मृतिकौ.** ४७८ माधवोक्तम्; **आन.** २३ नैश्चैव (नं चैव) धर्मशास्त्रसुधानिधौ : ४२ उत्त.(=); **पुम.** ४६९ मरणं (मरणे) माधवीये; **सस्मृ.** ९५, ९६ अशुद्धः पाठः, धर्मशास्त्रसुधानिधौ.

(१) **स्मृच.** १।३१ उत्तरार्धे (यत्र सायं गृहस्थत्वं सूरिभिः सत्यतत्परैः।।) (=); **पमा.** १।१२७ यतेः (यत्र) दर्शिभिः (तत्परैः) (=); **चमव्या.** ५२ यतेः (यत्र) माधवदीपिकाकारादिभिः संगृहीताः इति; **मुक्ता.** १४ उत्तरार्धे (यत्र सायं गृहस्थत्वं सूरिभिस्तत्त्वतत्परैः।।) धर्मशास्त्रसुधानिधौ; **सिन्धु.** १३०० माधवीये पृथ्वीचन्द्रोदये च; **सम.** १०९ धेषु (धे च) यतेः (यत्र) सूरि (मुनि) हेमाद्रौ माधवीये च; **विपा.** ५।४९१ चन्द्रोदये ब्राह्मे च; **स्मृतिकौ.** ४७८ माधवोक्तम्; **आन.** २३ यतेः (यत्रं) त्वं च (स्थत्वं) धर्मशास्त्रसुधानिधौ; **पुम.** ४६९ श्लोकार्धयोर्मध्ये 'नवोदके' इति अन्यः श्लोकः पठितः, माधवीये; **सस्मृ.** ९५, ९६ पिता (पितृ) णां (णा) शेषं मुक्तावत्, धर्मशास्त्रसुधानिधौ.

तथाऽप्यनाहारा इत्यनेनाऽऽहारसामान्याभावबोधनासंभवाद-ज्ञातेत्युक्तम्। अत एव 'उक्तो निषेधः' इत्यसमस्ताभिधानम्। यतिपदं चाविवक्षितार्थकम्, विप्रा इति सामान्यतोऽभिधानात्। शीलपदेन कुलमप्युपलक्षणीयम्, तेन गृहस्थादेरपि संग्रहः। वस्तुतस्तु 'उक्तनिषेधः' इति पाठः। उक्तस्य निषेध इत्यर्थः। अनिकेतत्वे सत्यनाहारस्य यतिष्वेव सत्त्वात् यतेरित्यपि विवक्षितम्। तत्र च यत्र सूर्यास्तो जातस्तत्रैव यतेरवस्थानम्, तद्वर्ज्यमित्यर्थः। कृभ. १३१०]

(३) साक्षिणां समाधातॄणां च। 'पितापुत्रविरोधे तु साक्षिणां त्रिगुणो दमः। अन्तरे च तयोर्यः स्यात्तस्याप्यष्टगुणो दमः।।' (यास्मृ. २।२३९) इति विहितम्। यत्र सायंकालो जातस्तत्रैव संन्यासिनामवस्थानम्। सम. १०९

(४) 'पितापुत्रविरोधे तु साक्षिणां द्विशतो दमः।' इत्युक्तं दण्डकल्पनम्। ततश्च विवादान्तर इव तत्रापि साक्षिणः प्रमाणमेव। गृहशब्दो गृहस्थवेश्मपरः। सायंशब्दः प्रदोष-वाचकः, 'प्रदोषान्तो होमकालः' इति होमाङ्गसायंकाल-स्याऽऽश्वलायनेन विवरणात्। भिक्षाद्यर्थं प्रविष्टस्य तत्र काले गृहवासो न युक्त इति तात्पर्यम्। अत एव श्रुतिः - 'ग्रामं प्रविशेदा सायम्' इति। स्मृतिकौ. ४७९

**[1]एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः।**
**निर्वर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः।।**
**[2]समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्।।**

(१) **स्मृच.** १।३१(=); **पमा.** १।१२७(=); **आपा.** ३० पाराशरे; **उत.** ११३; **चमव्या.** ५२ माधवदीपिकाकारादिभिः संगृहीताः इति; **मुक्ता.** १४, धर्मशास्त्रसुधानिधौ; **आर.** १०७ शातातपः; **सिन्धु.** १३०० कर्माणि व्य (विद्वद्भिर्व्य) माधवीये पृथ्वीचन्द्रोदये च; **सम.** १०९ हेमाद्रौ माधवीये च; **विपा.** ५।१३८ पूर्वार्धे (एतानि लोकगर्ह्याणि कलिकाले विवर्जयेत्।।) पू : ५।४९१ सिन्धुवत् चन्द्रोदये ब्राह्मे च; **स्मृतिकौ.** ४७७ सिन्धुवत् : ४७८-४७९ सिन्धुवत्, माधवोक्तम्; **आन.** २३ धर्मशास्त्रसुधानिधौ; **पुम.** ४६९ सिन्धुवत्, माधवीये; **सस्मृ.** ९५, ९६ धर्मशास्त्रसुधानिधौ; **इन्दु.** ३३६ शातातपः.

(२) **स्मृच.** १।३१(=); **पमा.** १।१२७(=); **उत.** ११३; **चमव्या.** ५२ माधवदीपिकाकारादिभिः संगृहीताः इति; **मुक्ता.** १४ धर्मशास्त्रसुधानिधौ; **सम.** १०९ हेमाद्रौ माधवीये च; **स्मृतिकौ.** ४७७; **सस्मृ.** ९६ साधूनां (जन्तूनां) धर्मशास्त्रसुधानिधौ.

समयः संवित्, सा च प्रतिज्ञा, 'समयाः शपथाचार-कालसिद्धान्तसंविदः' इत्यमरोक्तेः, 'संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः' इति तेनैवोक्तेः। उत. ११३

**[1]ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।**
**कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्।।**

१) ज्येष्ठांशमिति। 'ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्' (मस्मृ. ९।११२) इत्यादिनोक्तमित्यर्थः।

चमव्या. ५०

२) ज्येष्ठांशं विषमभागम्। भ्रातृजायाम्, जायामिति शेषः। सम. ११०

३) अतश्च गवालम्भनस्य कलौ निषिद्धत्वादुत्सर्गस्य च यज्ञविवाहयोरप्राप्तत्वाद्गौरित्युच्चारणादि यज्ञविवाहयोः कलौ न प्रवर्तते। यज्ञविवाहयोरन्यत्र तूत्सर्गपक्ष एव कलौ। संग. १६३

## कल्किपुराणम्

कलियुगीयलोकवृत्तानि

**[2]इत्थं कलिकुले जाता बहवो धर्मनिन्दकाः।**
**यज्ञाध्ययनदानादिवेदतन्त्रविनाशकाः।।**
**आधिव्याधिजराम्लानिदुःखशोकभयाश्रयाः।**
**कलिराजानुगाश्चेरुर्यूथशो लोकनाशकाः।।**
**बभूवुः कालविभ्रष्टाः क्षणिकाः कामुका नराः।**
**दम्भाचारदुराचारास्तातमातृविहिंसकाः।।**
**वेदहीना द्विजा दीनाः शूद्रसेवापराः सदा।**
**कुतर्कवादबहुला धर्मविक्रयिणोऽधमाः।।**
**वेदविक्रयिणो व्रात्या रसविक्रयिणस्तथा।**
**मांसविक्रयिणः क्रूराः शिश्नोदरपरायणाः।।**

(१) **स्मृच.** १।२९ ब्राह्मे : १।२२१ आदिपुराणे; **पमा.** १।१२३ पुराणे : १।४९१ ऊढायाः (दत्तायाः) आदिपुराणम् : २।४४ आदिपुराणम् : **प्रपा.** ३५२ ऊढायाः (कन्यायाः); **चमव्या.** ५० पुराणम्; **मुक्ता.** १३५ निर्देशमात्रम् (=): ४५८ उत्त. (=); **सिन्धु.** ११३० निर्देशमात्रम्, १२९० हेमाद्रौ; **सम.** ११० धं तथा (धस्तथा); **संप्र.** ६८१ ब्रह्मपुराणम् : ६८२, ६८३ प्रतीकमात्रम् (=): ७४२(=): ८२३ प्रपावत्; **संग.** १६३ प्रपावत्; **पुम.** ४५३ निर्देशमात्रम्, (=).

(२) **कल्कि.** १।१।२१-३९.

परदाररता मत्ता वर्णसंकरकारकाः।
ह्रस्वाकाराः पापसाराः शठा मठनिवासिनः।।
षोडशाब्दायुषः श्यालबान्धवा नीचसंगमाः।
विवादकलहक्षुब्धाः केशवेशविभूषणाः।।
कलौ कुलीना धनिनः पूज्या वार्धुषिका द्विजाः।
संन्यासिनो गृहासक्ता गृहस्थास्त्वविवेकिनः।।
गुरुनिन्दापरा धर्मध्वजिनः साधुवञ्चकाः।
प्रतिग्रहरताः शूद्राः परस्वहरणादराः।।
द्वयोः स्वीकारमुद्वाहः शठे मैत्री वदान्यता।
प्रतिदाने क्षमाऽशक्तौ विरक्तिक(? क्तिः क)रणा-
क्षमे।।
वाचालत्वं च पाण्डित्ये यशोर्थे धर्मसेवनम्।
धनाढ्यत्वं च साधुत्वे दूरे नीरे च तीर्थता।।
सूत्रमात्रेण विप्रत्वं दण्डमात्रेण मस्करी।
अल्पशस्या वसुमती नदी तीरेऽवरोपिता।।
स्त्रियो वेश्यालापसुखाः स्वपुंसा त्यक्तमानसाः।
परान्नलोलुपा विप्राश्चण्डालगृहयाजकाः।।
स्त्रियो वैधव्यहीनाश्च स्वच्छन्दाचरणप्रियाः।
चित्रवृष्टिकरा मेघा मन्दशस्या च मेदिनी।।
प्रजाभक्षा नृपा लोकाः करपीडाप्रपीडिताः।
स्कन्धे भारं करे पुत्रं कृत्वा क्षुब्धाः प्रजाजनाः।।
गिरिदुर्गं वनं घोरमाश्रयिष्यन्ति दुर्भगाः।
मधुमांसैर्मूलफलैराहारैः प्राणधारिणः।।
एवं तु प्रथमे पादे कलेः कृष्णविनिन्दकाः।
द्वितीये तन्नामहीनास्तृतीये वर्णसंकराः।।
एकवर्णाश्चतुर्थे च विस्मृताच्युतसत्क्रियाः।
निःस्वाध्याय(? याः)स्वधास्वाहावौषडोंकारव-
र्जिताः।।
[1]कलिना बलिना धर्मघातिना द्विजपातिना।
निराकृता धर्मरता गता वर्षान्तरान्तरम्।।
ये स्वल्पतपसो विप्राः स्थिताः कलियुगान्तरे।
शिश्नोदरभृतोऽधर्मनिरता विरतक्रियाः।।
पापसारा दुराचारास्तेजोहीनाः कलाविह।
आत्मानं रक्षितुं नैव शक्ताः शूद्रस्य सेवकाः।।

(१) **कल्कि.** १।२।४५-४७.

## स्मृत्यर्थसारः

उत्तरोत्तरयुगे कर्मफलाधिक्यम्,
कलिवर्ज्यानि

**[1]युगधर्माः परिग्राह्याः सर्वत्रैव यथोचितम्।।**
**[2]यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत्।**
**द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ।।**
**[3]देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः।**
**दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च।।**

देवरेणेत्युपलक्षणम्। 'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया। सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्।।' इति विहितम्, मिताक्षरादौ वा वाग्दत्ताविषयत्वेनोक्तं यत्, यच्चेतिहासपुराणेषु परिणीतास्वपि कुन्तीमाद्र्यादिषु असपिण्डासगोत्रशक्रादिनियोगेन प्रतीयमानं क्षेत्रजपुत्रोत्पादनम्, तन्निषिध्यते। परस्य चेति षष्ठी चतुर्थ्यर्थे। दत्तेति मुख्यदाने संज्ञाते प्राक्सप्तमपदातिक्रमणादुक्तमिताक्षरायामुत्कृष्टवरान्तरलाभेऽन्यस्मै दानमुक्तम्, यच्च 'पुरा पुरुषसंयोगान्मृते देयेति केचन।' इतीतिहासगतैकीयमतात्प्रसक्तम्, तन्निषिध्यते, न तु वाग्दत्ताविषयम्, वाग्दाने दातेर्गौणत्वात् प्रकृते च गौणग्रहणे मानाभावात्। यत्तु वाग्दत्तायां क्षतयोनित्वशङ्काया अभावान्न तद्विषयत्वमिति, तन्न, वाग्दानोत्तरं बहुवत्सरव्यवधानेन विवाहमाचरत्सु पुरुषापराधस्यानिवार्यत्वात्। स्मृतिकौ. ४७०

**[4]समुद्रयात्रास्वीकारः कमण्डलुविधारणम्।**
**महाप्रस्थानगमनं गोपशुश्च सुराग्रहः।।**

(१) कमण्डलुविधारणमिति नैष्ठिकब्रह्मचारी गृह्यते। सुराग्रह इति सौत्रामणी। मपा. १६

(२) समुद्रेति तीर्थयात्रा निषिध्यते, 'तीर्थयात्राऽतिदूरतः' इति माधवोदाहृतवचसै(? नै)कमूलश्रुतिकल्पनालाघवात्।

(१) **स्मृसार.** २.
(२) **स्मृसार.** २.
(३) **स्मृसार.** २; **हभा.** ३२८ स्मरणात्; **मपा.** १५ परस्य च (वरस्य वै) सारसंग्रहे; **गप.** ६ पू., सारसंग्रहे; **मुक्ता.** १३ : १७१ पू. (=); **संप्र.** ६८१ उत्त. (=) : ९९० (=); **स्मृतिकौ.** ४७०.
(४) **स्मृसार.** २; **हभा.** ३२८ स्मरणात्; **मपा.** १६ सारसंग्रहे; **मुक्ता.** १३; **संप्र.** ९९० यात्रा (यान)(=); **स्मृतिकौ.** ४७० पू. : ४७०-४७१ उत्त.; **आन.** २२ द्वितीयचरणे (वानप्रस्थाश्रमग्रहः).

कमण्डल्विति 'वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम्। यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले।।' (मस्मृ. ४।३६) इति मनुना स्नातकधर्ममध्ये विहितं यत्सदा यज्ञोपवीतवत् कमण्डलुधारणं तन्निषिध्यते। यत्तु बौधायनोक्तं सधर्मकं निषिध्यत इति, तन्न, धर्माधिक्येऽपि कर्मभेदाभावात्, धर्माणामेव निषेधाङ्गीकारे च तल्लक्षणाया अन्याय्यत्वात्। महाप्रस्थानगमनं यथा प्रसिद्धं पाण्डवपुराकल्पे, क्षत्रियादीनां मरणान्तप्रायश्चित्तत्वेन प्रसक्तं च। गोपशुरानुबन्ध्यादौ। सुराग्रहः सौत्रामण्यादौ।

स्मृतिकौ. ४७०-४७१

**[1]अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः।**
**असवर्णासु कन्यासु विवाहश्च द्विजातिषु।।**

(१) अग्निहोत्रहवणी यज्ञपात्रविशेषः, तत्र स्थितस्य हविषो लेहः आस्वादनं चमसस्थितसोमवत्। नीचायाः (? लीढायाः) अग्निहोत्रहवण्याः परिग्रहः स्वीकारः।

मपा. १६

(२) लेहस्य विहितस्यैवायं निषेध इति द्योतनायाऽऽह – लीढेति। लीढाया उच्छिष्टदोषशुद्ध्युपायं विना परिग्रहो यस्मिन्विहितत्वेन निर्दोषत्वादित्याशयः। ततश्च न पृथङ्निषेधः परिग्रहस्य। 'तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्। ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः।।' (यास्मृ. १।५७) इति द्विजानां योऽसवर्णाविवाहो विहितः स कलौ निषिध्यते।

स्मृतिकौ. ४७१

**[2]वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा।**
**अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च।।**

(१) वृत्तं यायावरगृहस्थाद्याचारः। स्वाध्यायः वेदः। अघम् आशौचम्।

मपा. १६

(२) 'एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः। त्र्यहात्केवलवेदस्तु विहीनो दशभिर्दिनैः।।' इति स्मृत्या आशौचसंकोचो विहितः सोऽपि। अत्रैकाहादिना सर्वात्मना यदि शुद्धिर्विवक्षिता, यदि वा मिताक्षरोक्तरीत्या ब्रह्मोज्झाशा (? ज्झत्वा)दिकृतार्तिनिमित्तका स्वाध्यायाध्ययनादिमात्रविषया, उभयथाऽपि निषिध्यते। यत्समृत्यर्थसारे एवाऽऽशौचप्रकरणे उक्तम् 'संचयने कृते स्वाशौचकालत्रिभागैस्त्रिचतुःपञ्चदिनैः स्पृश्या वर्णाः' (स्मृसार. ८३) इति, तत्कलौ वर्ज्यमित्यर्थः।

स्मृतिकौ. ४७१

(३) वृत्तवतः स्वाध्यायवतश्च गुणि(त ?)त्वात् अघसंकोचनं गुणाशौचमिति यावत्।

आन. २२

**[1]प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम्।**
**संसर्गदोषः पापेषु मधुपर्के पशोर्वधः।।**

यच्च महापातकप्रायश्चित्तप्रकरणेषु मन्वादिभिर्मरणान्तं प्रायश्चित्तं विहितम् 'प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः' इत्यादि, व्यवस्थापितं च कामकारविषयत्वेन विज्ञानेश्वरादिभिः, तत्कलौ वर्ज्यमित्यर्थः। पापेषु महापापिपुरुषे(षु) यः संसर्गस्तन्निमित्तो दोषः अव्यवहार्यत्वकर्मानधिकाररूपपातित्यम्, तन्निषिध्यते। न चासमर्थसमासापत्तिः, संसर्गस्य नित्यसापेक्षत्वात्। ततश्च पारलौकिकनरकानुकूलदोषस्य न निषेधः। तथा च हेमाद्रौ शातातपः – 'कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु। द्वापरे त्वन्नमादाय कलौ पतति कर्मणा।।' इति। अत्र च ब्रह्महत्याप्रभृति संभाषणादिसंसर्गस्य पातित्यहेतुत्वं यत्क्लृप्तं पादत्रयेऽपि तदनूद्यते यथाप्राप्तम्, न त्वपूर्वं विधीयते, वाक्यभेदापत्तेः। न च नवविधसंसर्गस्य संवत्सरमनुवर्तमानस्यैव तत्प्राप्तम्, न संभाषणमात्रादेरिति वाच्यम्, चिरभाविनि स्वर्गे प्रत्येकापूर्वद्वाराऽऽग्नेयादीनामिव संभाषणादीनां प्रत्येकहेतुताया अवश्याभ्युपेयत्वात्। एवं च संभाषणादिनिरूपकत्वेनोपस्थितपुंविशेषेण ब्रह्महननादेरेव चतुर्थपादे कर्मणेति निर्देशः।

---

(१) **स्मृसार.** २; **हभा.** ३२८ स्मरणात्; **पमा.** १।४९६ तिषु (तिभिः) उत्त., स्मृत्यन्तरे; **मपा.** १६ लीढा (नीचा) सारसंग्रहे; **चमव्या.** ५०, ११५ उत्त. (=); **मुक्ता.** १३ : १३४ षु (भिः) उत्त.(=); **संप्र.** ९९० हवण्या (हवन्या) हश्च (हो न)(=); **स्मृतिकौ.** ४७१; **आन.** २२ तिषु (दिषु); **बाल.** १।८१ पृ. २२९ उत्त. (=); **कृभ.** १२९४ आनवत्, स्मृत्यन्तरम्.

(२) **स्मृसार.** २ वृत्त (वृत्तं); **हभा.** ३२८ स्मरणात्; **पमा.** १।५७८ वृत्तस्वाध्याय (स्वाध्यायवृत्त) पू., स्मृत्यन्तरम्; **मपा.** १६ पू. सारसंग्रहे; **प्रपा.** १६० पू.(=); **मुक्ता.** १३ : ५०५ पू. (=); **सिन्धु.** १८२७ पू. माधवः; **संप्र.** ९९०(=); **स्मृतिकौ.** ४७१; **आन.** २२; **कृभ.** १८४८ पू. (=).

(१) **स्मृसार.** २; **हभा.** ३२८ स्मरणात्; **मपा.** १६ सारसंग्रहे; **मुक्ता.** १३ : ५६१ तु (च) पू.; **संप्र.** ९९०(=); **स्मृतिकौ.** ४७१; **आन.** २२.

ततश्च ब्रह्महन्त्रादेरेवाव्यवहार्यत्वादिरूपं पातित्यम्, न तत्संसर्गिण इत्यर्थः। न च कर्मणेति नवविधसंसर्गकथनमिति साधु, तस्यानुपस्थितत्वात्। अत एव 'कलौ कर्तैव लिप्यते' इति पाठान्तरसंवादलाभः। न चैवं संसर्गिणः पारलौकिकदोषनिषेधोऽपि किं न स्यादिति वाच्यम्। 'त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्। द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे।।' इति शातातपवचस्येव चतुर्थपादे तुशब्देन कर्तृभिन्नानां विप्रकृष्टसंनिकृष्टतरसंसर्गिणां संसर्गनिवृत्तिफलकदेशादित्यागस्य युगान्तरीयत्वेन पादत्रये निर्दिष्टस्य व्यवच्छेदेऽपि कर्तुस्त्यागविधानेन तदीयसाक्षात्संसर्गस्य यथाप्राप्तनरकहेतुताया दृढीकरणादिति शाब्दव्युत्पत्तिमन्त एव विदांकुर्वन्तु। मधुपर्के पशोः गोः पाक्षिको वधो मधुपर्कविधिं वदद्भिर्मुनिभिराम्नातः कलौ निषिध्यते।

स्मृतिकौ. ४७१-४७२

**'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।**
**सत्रदीक्षा च स्तेयान्यमहापातकनिष्कृतिः।।**

'औरसो धर्मपत्नीजः' इत्यादिग्रन्थे याज्ञवल्क्येन द्वादशविधपुत्रा उक्ताः। तेषु 'दद्यान्माता पिता चायं स पुत्रो दत्तको भवेत्' इति योऽभिहितः, यश्च 'दत्तात्मा तु स्वयंदत्तः' इति, तावुभौ दत्तपदेनोच्येते। एवं त्रयाणां पर्युदासात्क्षेत्रजनिषेधस्य प्रागेव सूचनादवशिष्टाष्टविधपुत्रसंग्रहः कलौ निषिध्यते। दीक्षानिषेधमुखेन सत्रमेव निषिध्यते, 'पूतिकानभिषुणुयात्तमस्मै भक्षं प्रयच्छेत्' इत्यत्राभिषवादिसंबन्धमुखेन यागसंबन्धवत्। स्तेयान्यमहापातकेष्वकामकृतेषु नरकनिवृत्त्यर्था निष्कृतिः कलौ निषिध्यते। कुत इति चेच्छृणु। हेमाद्र्यादिनिबन्धेष्वादित्यपुराणगतत्वेनैतदेवेत्थमुदाहृतम्– 'प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम्। संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः।।' इति। अत्र च पूर्वार्धे नरकनिवृत्त्येकफलकमरणान्तप्रायश्चित्तनिषेधात्, 'विहितं यदकामानां कामात्तद्द्विगुणं चरेत्' इति व्रतात्मकप्रायश्चित्तस्य तु 'कामतो व्यवहार्यस्तु वचनादिह जायते' इति शास्त्रेण नरकनिवृत्तिहेतुत्वनिषेधात्कामकृतमहापातके नरकनिवृत्तिफलकं प्रायश्चित्तं कलौ नैवास्तीति सिद्धम्। संसर्गदोष इत्यंशेऽपि पूर्वोक्तरीत्या पातित्यनिषेधेऽपि नरकनिवृत्त्यभावः सिद्धः। तत्प्रायपाठान्नरकनिवृत्तिफलका निष्कृतिरेव निषिध्यते। सा च परिशेषादकामकारविषयैवेति सिध्यतीति तत्संवादिन्यत्रापि वचसीत्थमेव व्याख्योचिता, श्रुतिकल्पनालाघवादिति। यत्तु स्तेयान्यमहापातकेषु रहस्यप्रायश्चित्तं निषिध्यत इति। तन्न, सर्वथैवानुपस्थितार्थस्य वाक्यार्थेऽन्तर्भावकल्पनाया असंभवात्। यत्तु 'कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः। द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः।।' इति शास्त्रेण स्मृत्यन्तरविरोधे विकल्पप्रसक्ताविव बाधप्रसक्तावपि पाराशरस्मृतेर्बलवत्त्वनियमात्तस्यां च महापातकप्रायश्चित्ताम्नानात्तद्विरोधेन स्तेयान्येत्यस्य रहस्यप्रायश्चित्तोपदेशनिषेधे तात्पर्यं कल्प्यत इति, तदप्यसत्, अत्र शब्दोपस्थितबलवत्त्वनियमस्य वाक्यार्थेऽन्तर्भावासंभवात्, धर्मपदानुषङ्गलब्धात्मनश्च शास्त्रस्य विकल्पप्रसक्तौ नियमपरत्वे संभवति बाधप्रसक्तावपूर्वविधित्वस्यान्याय्यत्वात्, उपदेशनिषेधपर्यन्तं तात्पर्यवर्णने चोपदेशस्य रहस्यप्रायश्चित्तेष्वप्रसक्तेर्बलात्प्रकाशकृतप्रायश्चित्तविषयत्वापत्तेः। यत्तूपदेशाभावाद्ब्राह्मणभोजनादिविधिविरोधाच्च रहस्यप्रायश्चित्तं निष्कृतिर्न भवतीति कल्प्यमिति, तदपि सर्वसाधारणहेत्वोः कलिमात्रविषयप्रतिज्ञायामसाधकत्वादसद्धेतुत्वस्य स्पष्टत्वाच्च तुच्छमित्यलम्।

स्मृतिकौ. ४७२-७३

**'प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्मकः।**
**सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि।।**

प्रतिमेत्यर्धेऽभिशब्दोऽपरोक्षज्ञानपरः, 'ब्राह्मणवतीमिष्टकामभिजानीयात्' इत्यत्राभिशब्दस्याऽऽपरोक्ष्यार्थकत्वेन पञ्चमे मीमांसकैर्व्यवस्थापनात्, अपरोक्षत्वजातेश्च ज्ञानत्वव्याप्यत्वेन जानातेरनपेक्षणात्। ततश्च देवतासाक्षात्काररूपो यः प्रतिमार्चनार्थः, पूजाफलमिति यावत्, तदुद्देश्यकः संकल्पो निषिध्यते। प्रसक्तश्चासौ पूजाफलत्वेन, देवता-

(१) **स्मृसार.** २ रेषां तु (रे वा तु) पातक (पातकि); **हभा.** ३२८ पू. स्मरणात्; **मपा.** १६ पू.; सारसंग्रहे; **मुक्ता.** १३ पू. : ४८ पू. स्मरणम् : १०२ तु (च) पू. (=); **सिन्धु.** ९०१ पू. (=); **विपा.** २।४८३ तु (न) स्मृतिः; **संप्र.** २०७, ९९० पू. (=); **संकौ.** २२२ पू.; (=); **स्मृतिकौ.** ४७१ तु (च) पू.: ४७२ उत्त.; **आन.** २२ पू.; **संग.** ५४७ पू. (=).

(१) **स्मृसार.** २; **स्मृतिकौ.** ४७२ पू. ४७३ उत्त.

साक्षात्कारस्य पौराणध्रुवादिगोचरानेकवचःसिद्धत्वात्। यत्तु यावज्जीविकैकप्रतिमापूजासंकल्पो निषिध्यत इति, तदप्यसत्, अशब्दार्थस्य वाक्यार्थेऽन्तर्भावस्य साहसत्वात्, तादृशसंकल्पस्य शास्त्रीयप्रसक्त्यभावाच्च। सवर्णान्या असवर्णा या अङ्गना तत्संभोगेन दुष्टाः कृतप्रायाश्चित्ता अपि ये वर्णास्तत्संसर्गो निषिध्यते, सवर्णानिरूपकत्वेन वर्णोपस्थितेः। उत्तमवर्णाङ्गनाभोगदुष्टाधमवर्णविषयं चैतत्, संसर्गनिषेधापेक्षितदोषगुरुत्वस्य दण्डप्रायश्चित्तगुरुत्वाभ्यां क्लृप्तत्वात्। स्मृतिकौ. ४७३-४७४

[१]**शामित्रं चैव विप्राणां सोमविक्रयणं तथा।**
**दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ।**
**कलौ युगे त्विमान्धर्मान्वर्ज्यानाहुर्मनीषिणः।।**

(१) शमिता यज्ञपशुहिंसकः तस्य कर्म शामित्रम्। मपा. १६

(२) विप्राणामिति मध्यमणिन्यायेनान्वयः। तथा चाध्रिगुप्रैषे शमितृकर्मत्वेन प्रसिद्धं यद्यज्ञियपशोः संज्ञपनादि तद्विप्रान्प्रति निषिध्यते, तत्प्रायपाठाद्यज्ञियसोमविक्रयणं च। दीर्घमिति। उपकुर्वाणकं प्रति 'प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि ग्रहणान्तं वा' इति विहितम् 'वेदानधीत्य वेदौ वा वेदं वाऽपि' (मस्मृ. ३।२) इति 'वेदव्रतानि वा पारम्' इति च बहुविधविकल्पविधिभिः कादाचित्कत्वेनावगतं यद्दीर्घकालं ब्रह्मचर्यं तन्निवृत्तिः कलौ नियम्यते, लाघवात्, न तु फलकामं प्रति 'नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ' इति प्रकृत्य 'अनेन विधिना देहं साधयन्विजितेन्द्रियः। ब्रह्मलोकमवाप्नोति न चेहाऽऽजायते पुनः।।' (यास्मृ. १।५७) इति नित्यवद्विहितनैष्ठिकब्रह्मचर्यनिवृत्तिरपूर्वा विधीयते, गौरवात्। यत्तु तद्ग्रहणे कालपदोपादानं व्यर्थमिति, तदसत्, तत्प्रापकशास्त्रेऽपि नैष्ठिकव्याख्यावसरे उक्तप्रकारेणाऽऽत्मानं निष्ठाम् उत्क्रान्तिकालं नयतीति दीर्घकालत्वप्रतीतेस्तुल्यत्वात्, आर्थिकस्य ब्रह्मचर्यगतदीर्घत्वस्यापि प्राप्तेरष्टाचत्वारिंशद्वर्षवेदब्रह्मचर्येऽप्यविशेषात्। नरमेधः 'ते प्राजापत्याः' इति श्रुत्युक्तः, अश्वमेधोऽपि 'योऽश्वमेधेन यजते' इति श्रुत्युक्तस्तौ उभौ कलौ निषिध्येते।

स्मृतिकौ. ४७४

(१) **स्मृसार.** २; **हभा.** ३२८ स्मरणात्; **पमा.** १।४९६, १।५७८ तृतीयार्धमात्रम्, स्मृत्यन्तरम्; **मपा.** १६ सारसंग्रहे; **गप.** ६ तृतीयार्धमात्रम्, सारसंग्रहे; **मुक्ता.** १३:४७४ नरमेधाश्वमेधकौ (धारणं च कमण्डलोः) द्वितीयार्धमात्रम्, (=); **पप्र.** २७ तृतीयार्धमात्रम् (=); **संप्र.** ९९० यणं (यिता)(=); **स्मृतिकौ.** ४७३-४७४; **आन.** २२.

## रेणुकारिकाः

कलियुगे मतभेदेन गोवध-
प्रत्याम्नायाः

[१]**गोवधस्य निषिद्धत्वाच्छागेनैव कलौ युगे।**
**केचिद्ब्रुवन्ति न स्मार्ते पशूपाकरणक्रिया।**
**प्राप्ते कलियुगे तत्र पायसेनेति केचन।।**
[२]**चरुणा वा पशोः कर्मादेशेनैव समृद्धये।**
**किंतु प्रमा स्वकीया स्युरिति कर्कस्य संमतिः।।**
[३]**केचिच्छागस्य मांसेन क्रीतेनेति ब्रुवन्ति हि।**
**विचारणीयं विद्वद्भिस्तत्तदङ्गोपसंहृतेः।।**
[४]**क्रतोर्विवाहादन्यत्राऽऽलम्भनं पाक्षिकं भवेत्।**
**गोरालम्भनिषेधात् स्यात्सर्वत्रोत्सर्जनं कलौ।।**

## अनिर्दिष्टकर्तृकवचनानि

कलिवर्ज्यानि

[५]**अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु।**
**देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्।।**

(१) यत्तु निगमवचनम्( ? ने) 'क्षेत्रजं गोपशोर्घातं श्राद्धे मांसं तथा मधु। देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्।।' मांसं विवर्जयेदिति निषेधः कलियुगे (स) ब्राह्मणकर्तृकश्राद्धविषयः, 'सुन्व( ? मुन्य)न्नं ब्राह्मणस्योक्तं मांसं

(१) **रेका.** (अग्नि) ६-७ पृ. ४३; **संप्र.** ९९१.

(२) **रेका.** (अग्नि) ८ पृ. ४३; **संप्र.** ९९१ पू.

(३) **रेका.** (अग्नि) ९ पृ. ४३; **संप्र.** ९९१.

(४) **रेका.** १५१ पृ. ५९; **गभा.** १०२ उत्त., कारिका; **संग.** १६३ धात् (धः); **संदी.** २।२३ उत्त., कारिका.

(५) **अप.** १।१५६ पूर्वार्धे (अक्षता नरमेधश्च गोयज्ञश्च कमण्डलुः।) स्मृतिः; **मपा.** ३३८ प्रथमचरणे (क्षेत्रजं गोपशोर्घातं) निगमः; **चमव्या.** ५१ निगमः; **सिन्धु.** १४७२ निगमः; **सम.** ११० निगमः; **विपा.** ५।३८१ (=), ४०२ निगमः; **स्मृतिकौ.** ४७९ मदनपारिजाते; **कृभ.** १३१० पू.(=)ः १३७२ सिन्धूद्धृतस्य प्रतीकमात्रम्; **प्रभा.** ३० निगमः.

क्षत्रियवैश्ययोः। मधुप्रधानं शूद्रस्य' इति श्राद्धप्रकरणे पुनस्तेन विशेषाभिधानात्। मपा. ३३८

(२) पृथ्वीचन्द्रोदयस्तु – "अक्षता... विवर्जयेत्' इति निगमोक्तेः, 'वरातिथिपितृभ्यश्च पशूपाकरणक्रिया' इति कलिवर्ज्येषु हेमाद्रावादित्यपुराणात्, 'मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा।' इत्युक्त्वा 'इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः।' इति बृहन्नारदीयेऽभिधानाच्च मांसविधिः कलिव्यतिरिक्तविषयः। (*कलौ?) मांसनिषेधानां च देशाचाराद्व्यवस्था। तथा च बृहन्नारदीये श्राद्धं प्रकृत्य 'यथाचारं प्रदेयं तु मधु मांसादिकं तथा। देशाचाराः परिग्राह्यास्तत्तद्देशीयजैर्नरैः।। अन्यथा पतितो ज्ञेयः सर्वकर्मबहिष्कृतः।।' इति, 'यस्मिन्देशे पुरे ग्रामे त्रैविद्यैर्नगरेऽपि वा। यो यत्र विहितो धर्मस्तं धर्मं न विचारयेत्।।' इति भृगूक्तेश्च" इत्याह, तन्न, होलाकाधिकरणन्यायेन देशविशेषव्यवस्थापकपदकल्पनायोगात्। निरूपितं चैतत्पितामहचरणैर्मांससमीमांसायामिति दिक्।

+ सिन्धु. १४७२-१४७३

(३) यथा वेदबर्हिर्धर्माणां प्रधानसंबन्धिमात्रांशे विधिः, न तु तादर्थ्यांशे, प्रमाणाभावात्, तद्वत् 'श्राद्धे मांसम्' इत्यत्र श्राद्धसंबन्धिक्रत्वर्थं पुरुषार्थं च निषिध्यते, अविशेषात्। पञ्चेत्यत्र न परिसंख्या, दोषत्रयापत्तेः पूर्वोक्तानेकवाक्यानर्थक्यापत्तेश्च। अतः प्रदर्शनार्थमेतद्वचनोपात्तत्वोपाधिना पञ्चत्वोपपत्तिः। सम. ११०

(४) अक्षता तद्विवाहः। श्राद्धे मांसमिति यथा 'मन्द्रं प्रातःसवने' इति स्वरविधिः सौमिकेष्विव पाशुकेष्वपि सप्तमीबलाद्वार्तिकेऽङ्गीकृतः तथा श्राद्धाङ्गस्य पुरुषार्थतया तत्र विहितस्य(च)मांसस्य निषेधः। 'पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च।' इति विहितं मधुदानम्। स्मृतिकौ. ४७९-४८०

(५) अक्षतेति। सर्ववर्णानां कलौ श्राद्धे मांसं क्षौद्रं च क्रत्वर्थं पुरुषार्थं च निषिद्धम्। न च 'श्राद्धे मांसम्' इति श्राद्धार्थस्यैव निषेधः, न फलार्थस्येति वाच्यम्, एतद्वाक्यस्य सर्ववर्णान्प्रति प्राप्तेस्तत्र ब्राह्मणस्य नित्यमांसाभावेन काम्यमांसनिषेधपरत्वम्, क्षत्रियवैश्ययोस्तु श्राद्धार्थमांससामान्यनिषेधपरत्वमिति वैरूप्यापत्तेः। अतः सर्ववर्णान् प्रति श्राद्धसंबन्धिमांसत्वमधुत्वाभ्यां निषेधः 'दीक्षितो न जुहोति' इत्यादिना दीक्षितं प्रति नित्यानामग्निहोत्रहोमादीनां काम्यानां चतुर्होतृहोमादीनां निषेधवत्। यत्तु 'कथंचिद्यदि विप्रेभ्यो न दत्तं भोजने मधु। पिण्डास्तु नैव दातव्याः कदाचिन्मधुना विना।।' इति कालभेदाप्रत्ययात् कलिनिषेधो भोजनमात्रपर इति पिण्डे कलावपि मधु देयम्, 'सर्वकालं तिला ग्राह्याः पितृकृत्ये विशेषतः। भोज्यपात्रे तिलान्दृष्ट्वा निराशाः पितरो गताः।।' इतिवदिति, तदशुद्धम्, 'कथंचित्' इति विस्मरणादेरेव लाभात्तद्वचनस्यैकमूलकल्पनालाघवेन

---

* अत्र सिन्धुग्रन्थः कृष्णंभट्टीग्रन्थश्च ग्रन्थार्थानभिज्ञेन केनचित् स्वीयकुसृष्ट्या व्याकुलीकृतः। तथाहि – श्राद्धप्रकरणेऽस्मिन् सिन्धौ पूर्वं मांसविधायकानि मांसनिषेधकानि च कानिचिद्वचनान्यनुक्रम्य तयोर्विधिनिषेधयोर्वर्णभेदेन व्यवस्थेति केषांचिन्मतमुक्त्वा 'पृथ्वीचन्द्रोदयस्तु' इत्यादिना पृथ्वीचन्द्रोदयमतमुपक्रान्तम्। तत्र पूर्वग्रन्थेन मांसविधीनां युगान्तरविषयत्वमुक्तम्। अत एव विधिप्राप्तमांसनिषेधानामपि युगान्तरविषयत्वमर्थसिद्धम्। अत एव कृष्णंभट्टेन 'मांसे देशविशेषव्यवस्थाऽपि युगान्तर एव, कलिनिषेधस्य जागरूकत्वात्' इत्युक्तम्। ततः 'कलौ मांसनिषेधानां च देशाचाराद्व्यवस्था' इत्ययं ग्रन्थः पठ्यते। अत्र 'कलौ' इत्यस्य 'कलौ ये मांसनिषेधास्तेषाम्' इति मांसनिषेधेष्वन्वयः, उत वा 'ये पूर्वोक्ता युगान्तरविषया निषेधास्तेषां कलौ व्यवस्था' इति व्यवस्थायामन्वयः? नाऽऽद्यः पक्षः, श्राद्धे युगान्तरविषयमांसनिषेधानां प्रकृतत्वात् कलिविषयकमांसनिषेधव्यवस्थाया अनाकाङ्क्षितत्वात्। किंच, पूर्वं मांसविधीनां युगान्तरविषयत्वोक्तेः कलिवर्ज्यत्वरूपेण कलौ मांसनिषेधानां मांसविधिबाधकत्वेन च कलौ केवलनिषेधप्रसक्तेर्व्यवस्थापेक्षैव नास्ति, समानविषये प्रसक्तानेकविरुद्धधर्मयोरेव व्यवस्थापनीयत्वात्। अत एवात्र मांसनिषेधपदं मांसविधीनामप्युपलक्षणम्। नापि द्वितीयः पक्षः, युगान्तरविषयकनिषेधानां कलौ व्यवस्थेति विरोधात्। तस्मादयमत्र निष्कर्षो लभ्यते – सिन्धौ 'कलौ' इति पदम्, कृष्णंभट्ट्यां च 'मतान्तरमाह कलाविति।' इत्यवतारणं च ग्रन्थार्थमविदुषा केनचित् प्रक्षिप्तमिति। अस्य मतान्तरत्वे मतभेदबोधकशब्दप्रयोगाभावादसामञ्जस्यम्, मूले 'आह' इत्यत्र प्रतीतं पृथ्वीचन्द्रोदयं कर्तारं त्यक्त्वा कर्त्रन्तरस्याध्याहारेण कल्पनीयत्वम्, युगान्तरविषयकविधिनिषेधयोर्व्यवस्थोक्त्यभावात् पृथ्वीचन्द्रोदयमतग्रन्थस्य वैकल्यं चेति बहवो दोषा आपद्यन्ते। अत्रत्येषु षट्स्वपि पुस्तकेषु मूले 'कलौ' इति पदं मुद्रितम्, महापण्डितदाधीचशिवदत्तेन प्रागुक्तकृष्णंभट्टीस्थितमवतारणं पादटिप्पणीरूपेणानूदितमित्येतत्सर्वमाश्चर्यावहम्।

+ विपा. सिन्धुगतम्।

कलिभिन्नपरत्वात्। (मतान्तरमाह – कलाविति।?) होलेति। होला हि क्वचिद्देशे क्रियते क्वचित्तु नेति देशविशेषव्यवस्थापकपदकल्पनयाऽनाचार इति सिद्धान्तः। मांसे देशविशेषव्यवस्थाऽपि युगान्तर एव, कलिनिषेधस्य जागरूकत्वात्, 'समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्' इति वचनादिति दिगर्थः। कृभ. १४७२-१४७३

**[1]गोपशुं देवरात्पुत्रं सत्रयागं कमण्डलुम्।**
**सुराप्रयोगं भिक्षुं च न कुर्वीत कलौ युगे।।**

भिक्षुः परमहंसः। अप. १।१५६

**[2]देवरात्तु सुतोत्पत्तिं गोमेधं च कमण्डलुम्।**
**अक्षतां पौरुषं मेधं कलौ पञ्च विवर्जयेत्।।**

**[3]गोत्रान्मातृसपिण्डाद्वा विवाहो गोवधस्तथा।**
**कलियुगे त्विमान्धर्मान्वर्ज्यानाहुर्मनीषिणः।।**

**[4]कलौ तु पुनरुद्वाहं वर्जयेदिति गालवः।।**

**[5]दशाह एव विप्रस्य सपिण्डमरणे सति।**
**कल्पान्तराणि कुर्वाणः कलौ भवति किल्बिषी।।**

**[6]यतेस्तु सर्ववर्णेषु न भिक्षाचरणं कलौ।।**

आपद्यपि सर्ववर्णेषु भैक्ष्यचरणं कलौ निषिद्धं 'यतेस्तु... कलौ' इति स्मरणात्। मुक्ता. २०१

उत्तरोत्तरयुगे पादशो धर्मक्षयः, कलौ पराशरस्मृतेर्बलीयस्त्वं परदेशे वृथाचिरवासनिषेधः वानप्रस्थ्याधिकारस्य संन्यासाधिकारसमकालत्वं च

**[7]कृते चतुष्पात्सकलो व्याजोपाधिविवर्जितः।**
**वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्पुरा।।**
**धर्मः पादविहीनस्तु त्रिभिरंशैः प्रतिष्ठितः।**
**त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म इष्यते।**
**त्रिपादहीनस्तिष्ये तु सत्तामात्रेण तिष्ठते।।**

तिष्यः कलिः। पमा. ७५

**[1]स्मृत्यन्तरविरोधे तु कलौ पाराशरस्मृतिः।।**

**[2]प्रवसेत्कार्यवान्विप्रो न वृथैव चिरं वसेत्।।**

एवं च 'प्रवसे... वसेत्' इति कलिपरमेव। कृभ. १३००

**[3]वानप्रस्थ्यं कलौ कुर्यात्संन्यासो यावदेव हि।।**

विष्णुकीर्तनगङ्गोपासनयोः कलौ प्राधान्यम्

**[4]यावन्न कीर्तयेद्रामं कलिकल्मषसंभवम्।**
**तावत्तिष्ठति देहेऽस्मिन्भयं चात्र प्रवर्तते।।**

**[5]नमो नारायणायेति कीर्तयन्ति च ये नराः।**
**निष्कामा वा सकामा वा न कलिर्बाधते हि तान्।।**

**[6]येऽहर्निशं जगद्धातुर्वासुदेवस्य कीर्तनम्।**
**कुर्वन्ति तान्नरव्याघ्र न कलिर्बाधते नरान्।।**
**कलौ संकीर्तनेनैव मुक्तिः सद्योऽपि लभ्यते।**
**किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते।।**

**[7]विना गङ्गां धर्ममयीं कथं स्याच्च कलौ गतिः।**
**शिरसः कर्तनं तस्य प्राणत्यागोऽपि वा वरः।**
**समर्थस्तु कलौ काले गङ्गां यो नाभिगच्छति।।**

**[8]गच्छध्वं हि बुधा गङ्गां ज्ञात्वा विश्वमशाश्वतम्।**
**सुघोरेऽस्मिन् कलौ प्राप्ते मुक्तिर्वो वाञ्छिता यदि।।**
**कलौ तत्परमं ब्रह्म प्राप्तये सत्वरं नृणाम्।**
**गङ्गाभजनमेवाऽऽहुर्महोपायं महर्षयः।।**

---

(१) **अप.** १।१५६ स्मृतिः.

(२) **स्मृच.** १।२२१ स्मृत्यन्तरे; **मुक्ता.** १३९ रात्तु (रेण) चन्द्रिकायाम्.

(३) **मुक्ता.** १३ ण्डाद्वा (ण्डात्तु) पू., धर्मशास्त्रसुधानिधौ; **आन.** २२ सर्वं मुक्तावत्; **बाल.** १।१८१ पृ. ४४६.

(४) **संग.** ३४७ हेमाद्रौ.

(५) **कृभ.** १३०३.

(६) **मुक्ता.** २०१ स्मरणम्.

(७) **पमा.** १।७४-७५ पुराणसारे; **मुक्ता.** १२ तिष्ठते (तिष्ठति) माधवीये पराशरे.

(१) **इन्दु.** ४ स्मृत्यन्तरम्.

(२) **कृभ.** १३००.

(३) **विपा.** ५।४९२.

(४) **मुक्ता.** १३ शिवसर्वस्वे.

(५) **कृभ.** १३१४.

(६) **निप.** ३१.

(७) **कृभ.** १३१६ कामिके.

(८) **निप.** ११३.

**ध्यानं कृते मोक्षहेतु( ? तुस्) त्रेतायां तच्च वै तपः।**
**द्वापरे तद्द्वयं यज्ञः कलौ गङ्गैव केवलम्।।**
**वृथा कुलं वृथा विद्या वृथा यज्ञो वृथा तपः।**
**वृथा दानानि तस्येह कलौ गङ्गां न याति यः।।**
**दृष्टा जन्मकृतं पापं स्पृष्टा जन्मत्रयार्जितम्।**
**स्नाता जन्मशतोद्भूतं हन्ति गङ्गा कलौ युगे।।**

कलौ आद्यन्तावेव वर्णौ शूद्राणां ब्राह्मणाचारश्च,
विन्ध्यदक्षिणोत्तरभागयोः क्रमेण
मूलागमसत्त्वासत्त्वयोः
समयः

[1]**ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णास्त्रयो द्विजाः।**
**युगे युगे स्थिताः सर्वे कलावाद्यन्तयोः स्थितिः।।**
[2]**ब्राह्मणाः शूद्राश्च।।**

कलौ क्षत्रियवैश्ययोर्जातिमात्रव्यवहारेण वर्णधर्मनिषेधात् 'ब्राह्मणाः शूद्राश्च' इति कलौ वर्णद्वयस्योपदेशात्क्षत्रिय-वैश्यधर्मा अपि न सम्यक्परामृश्यन्ते।

आन. ४०२

[3]**शूद्राश्च ब्राह्मणाचारा भविष्यन्ति कलौ युगे।।**
[4]**शते न्यूने सहस्राणां चतुष्कं तु कलौ युगे।**
**विन्ध्यस्योत्तरभागे स्यान्मूलागमपरिक्षयः।।**

समयभेदेन बहून्यपि शास्त्राण्युच्छिन्नानि भविष्यन्ति, विशेषतो विन्ध्योत्तरभागे। तथा च जगन्मोहने – 'शते

(१) **शूक.** २९९ पुराणान्तरे.
(२) **आन.** ४०२.
(३) **सिन्धु.** ४६५.
(४) **संग.** ११ जगन्मोहने.

न्यूने... परिक्षयः।।' । कलियुगस्यैकशतोनितानि चतुः-सहस्रमितानि वर्षाणि यदा व्यतीतानि भविष्यन्ति तदा विन्ध्योत्तरे मूलागमाभावः, किंतु पौरुषा एव ग्रन्थाः प्रवर्तिष्यन्ते।

संग. ११

[1]**विन्धस्य दक्षिणे भागे यत्र गोदावरी स्थिता।**
**तत्र वेदाश्च यज्ञाश्च भविष्यन्ति कलौ युगे।।**

युगभेदेन ध्येयविष्णु-
रूपभेदः

[2]**शुद्धस्फटिकसंकाशं चारुचामीकरप्रभम्।**
**तथा मरकतप्रख्यमिन्द्रनीलसमद्युतिम्।**
**संस्मरेदच्युतं भक्त्या क्रमाद्युगचतुष्टये।।**

कलौ विष्णुपूजादौ तुलसी-
विनियोगस्य
प्रशंसा

[3]**समञ्जरिदलैर्युक्तं तुलसीसंभवैः क्षितौ।**
**कुर्वन्ति पूजनं विष्णोस्ते कृतार्थाः कलौ युगे।।**
**स्नाने ध्याने तथा दाने प्राशने केशवार्चने।**
**तुलसी दहते पापं कीर्तने रोपणे कलौ।।**

कलौ श्रीमद्भगवद्गीतायाः
प्राशस्त्यम्

[4]**भीष्मपर्वणि या गीता सा प्रशस्ता कलौ स्मृता।।**

(१) **संग.** ११ धर्मशास्त्रे.
(२) **निप.** ५३०.
(३) **आत.** ४१२.
(४) **आभू.** १९०.

# वर्णाः तद्वृत्तयश्च

## § याजनम्

(१) याजने तु विधिः श्रूयते - 'द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयाद्याजयेदध्यापयेद्वा'। न चायं नित्यविधिः, अकरणे प्रत्यवायादिनित्यलक्षणाभावात्। अपि तु काम्यविधिः, द्रव्यार्जनकामस्य तत्राधिकारात्। तत्रापि नापूर्वविधिः, जीवनोपायत्वेन याजनस्य प्राप्तत्वात्। तद्धेतुत्वं च मार्कण्डेयपुराणे दर्शितम् – 'याजनाध्यापने शुद्धे तथा शुद्धः प्रतिग्रहः। एषा सम्यक् समाख्याता त्रितयं तस्य जीविका।।' इति। नापि परिसंख्या, नित्यप्राप्तेरभावात्। तस्मात् पक्षे प्राप्तत्वान्नियमविधिरयम्। स चायं नियमः पुरुषार्थ एव,न तु क्रत्वर्थः, द्रव्यार्जनविधानस्य पुरुषार्थत्वेन लिप्सासूत्रे (जैसू.४।१।२) विचारितत्वात्। तथाहि – द्रव्यप्राप्तिः क्रत्वर्था वा पुरुषार्था वा? इति संशयः। तत्र पूर्वः पक्षः – क्रत्वर्थेयम्, तथा सति नियमस्यार्थवत्त्वात्। ब्राह्मणस्य याजनादिना, क्षत्रियस्य जयादिना, वैश्यस्य कृष्यादिना, इति नियमः। स च पुरुषार्थपक्षेऽनर्थकः स्यात्, उपायान्तरेणार्जितस्यापि द्रव्यस्य क्षुत्प्रतिघातादिपुरुषार्थसंपादकत्वात्। क्रतुस्तु नान्यथा सिध्यति। अतस्तत्र नियमोऽर्थवान्। इति प्राप्ते ब्रूमः – द्रव्यं हि संपादितं सत् पुरुषं प्रीणयति, अतस्तस्य पुरुषार्थत्वं प्रत्यक्षं दृष्टम्। क्रत्वर्थता तु नियमान्यथानुपपत्त्या कल्प्यते। क्लृप्तं च कल्प्याद्बलीयः। सति च पुरुषार्थत्वे क्रतोरपि भोजनादिवत् पुरुषकार्यतया तदर्थताऽप्यर्थात् संपद्यते। नियमस्तु पुरुषार्थेऽप्यर्जनविधौ किंचिददृष्टं जनयिष्यति। क्रत्वर्थत्ववादिनो जीवनलोपेन क्रतुरपि न सिध्येत्। तस्मात् पुरुषार्थो याजनादिः इति सिद्धम्। ऋत्विग्भिर्विना याजयिताऽन्यो न कोऽप्यस्ति इति चेत्। नैवम्, आपस्तम्बसूत्रे षोडशानामृत्विजां वरणमभिधाय याजयितुः सप्तदशस्य पृथग्वरणाभिधानात् 'सदस्यं सप्तदशं कौषितकिनः समामनन्ति, स कर्मणामुपद्रष्टा भवति' (आपश्रौ. १०।१।१०,११) इति। अत एव वशिष्ठवंशोत्पन्नस्य सत्यहव्यनामकस्य महर्षेः प्रश्नवाक्ये देवभागस्य सृञ्जयनामकान् ब्राह्मणान् प्रति याजकत्वं तैत्तिरीयकब्राह्मणे श्रूयते – 'वाशिष्ठो ह स(? सा)त्यहव्यो देवभागं पप्रच्छत् (? च्छ यत्) सृञ्जयान् बहुयाजिनो यजे (?ऽयीयजः)' (तैसं.६।६।२।२) इति। तथा कौषितकिब्राह्मणे चित्रनामकं प्रति श्वेतकेतोर्याजकत्वमाम्नातम् – 'चित्रो ह वै गार्ग्यायणि(? गाङ्ग्यायनि)र्यक्ष्यमाण आरुणिं वव्रे, स ह पुत्रं श्वेतकेतुं प्रजिज्ञाय (? गाय) याजयेति' (शाआ. ३।१) इति। तस्मात् ऋत्विग्भ्योऽन्यः सदस्यो याजयिता। ऋत्विजो वा याजयितारः सन्तु, सर्वथाऽप्यस्ति ब्राह्मणानां जीवनहेतुर्याजनम्। तत्रेतिकर्तव्यतारूपेण कृष्णाजिनवाससोरन्यतरेणोपवीतित्वं तैत्तिरीयके विधीयते – 'तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या अजिनं वासो वा दक्षिणत उपवीय' (तैआ. २।१) इति। मन्त्रेषु ऋष्यादिषु ज्ञानं च याजनाङ्गत्वेन छन्दोगब्राह्मणे समाम्नायते – 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन याजयति वा अध्यापयति वा, स्थाणुं वर्च्छति गर्तं वा पद्यते प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति, अथ यो मन्त्रे विद्यात् सर्वमायुरेति, श्रेयान् भवति, अयातयामान्यस्य छन्दांसि भवन्ति, तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' (आब्रा. १।१) इति। ननु क्वचित् याजनस्य क्वचित् प्रतिग्रहस्य च निन्दितत्वात् तदनुष्ठानवतः स्वाध्यायगायत्र्योर्जप आम्नायते – 'रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति वा गृह्णाति। याजयित्वा प्रतिगृह्य हा(? वाऽ)नश्नन् त्रिः स्वाध्यायं वेदमधीयीत। त्रिरात्रं वा सावित्रीं गायत्रीमन्वातिरेचयति' (तैआ. २।१६।१) इति। तथाऽन्यत्रापि – 'दुहोह (? दुहे ह) वा एष च्छन्दांꣳसि यो याजयति। स येन यज्ञक्रतुना याजयेत् सोऽरण्यं परेत्य शुचौ देशे

---

§ सामान्यतः साकल्येन विषयबोधार्थं पराशरमाधवादिगता याजनादिविषया इमे शास्त्रार्था अत्र संगृहीताः।

स्वाध्यायमेवैनमधीयन्नासीत। तस्यानशनं दीक्षा, स्थानमुपसदः, आसनस्य( ? सनः)सुत्या, वाग्जुहूः, मन उपभृत्, धृतिर्ध्रुवा, प्राणो हविः, सामाध्वर्युः। स वा एष यज्ञः प्राणदक्षिणोऽनन्तदक्षिणः समृद्धतरः–' (तैआ. २।१७।१)। इति चेत्। नायं दोषः, अयाज्ययाजनविषयत्वात्। जीविताऽत्ययमापन्नस्य प्राणरक्षार्थमयाज्ययाजनमपि संभाव्यते। तथा, वाजसनेयब्राह्मणम् – 'प्राणस्य वै सम्राट् कामायायाज्यं याजयति अप्रतिग्राह्यस्य वा प्रतिगृह्णाति' (बृउ. ४।१।३) इति। तत्र प्रायश्चित्तं छन्दोगाः आमनन्ति – 'अयाज्ययाजने दक्षिणास्त्यक्त्वा मासं चतुर्थकाले भुञ्जानः तन्मन्त्रान् (? कानी इत्येतत्) गायेत्' (सामब्रा. १।५।११) इति। तथा सुमन्तुरपि स्मरति – 'शूद्रयाजकः शूद्रद्रव्यपरित्यागात् पूतो भवति। अभिशस्तपतितपौनर्भवभ्रूणहपुंश्चल्यशुचिवस्त्रकारतैलिकचाक्रिकध्वजिसुवर्णकारवर्मकारपङ्कक-वर्धकिगणगणिकसौनिकव्याधनिषादरजकचरुचर्मकारा अभोज्यान्ना अप्रतिग्राह्या अयाज्याश्च'। तथा च वशिष्ठः – 'दक्षिणात्यागाच्च पूतो भवतीति विज्ञायते' (वाध. २३।३६) इति। तथा बौधायनोऽपि – 'बह्वप्रतिग्राह्यस्य प्रतिगृह्य अयाज्यं वा याजयित्वा नाद्यात्, तस्य चान्नमशित्वा तरत्समन्दीयं जपेत्' (बौध. २।५।८) इति। अयाज्ययाजकलक्षणं देवलेन दर्शितम् – 'यः शूद्रान् पतितांश्चापि याजयेदर्थकारणात्। याजितो वा पुनस्ताभ्यां ब्राह्मणोऽयाज्ययाजकः।।' इति। पमा. १।१५९-१६४

(२) एवमध्यापनवृत्त्यसंभवे प्रशस्तयाजनं वृत्तिः।$तस्य तु महत्त्वं प्रतिग्रहाध्यापनापेक्षया प्रशस्तत्वम्। 'प्रतिग्रहः प्रत्यवरः' इति मनुः। तथा पद्मपुराणे 'अयाज्यानां याजकश्च याज्यानां च विवर्जकः। रेतोविण्मूत्रसेवी च स प्रेतो जायते नरः।।' (इति) याज्यत्यागे दोषकीर्तनात् प्रशस्तत्वं गम्यते। तथा 'याजनाध्यापनादिभ्यस्तथा दानप्रतिग्रहैः। विरजाः स्वर्गमायान्ति विमानैः संगता दिवः (?)।।' इति प्रशस्तता स्मर्यते। तेन पौण्डरीकबहुसुवर्णवाजपेयादियाजनेन बहुग्रहणेऽपि न दोषः, एवं प्रशस्तयाज्यत्यागे दोषश्रवणाच्च बहुयाजनेऽपि न दोषः, 'वृत्त्यर्थादधिकं गृह्णन् नरो भवति किल्बिषी।' इति तस्य(? इत्येतस्य) प्रतिग्रहविशेषपरत्वात्। यत्तु 'बहुयाजकः' इति निन्दावचनं तत् 'तथैव ग्रामयाजकः' 'याजयन्ति च ये बहून्' इति वाक्ययोः समवा(दा?)यात् बहुवर्णयाजक इत्येवंपरम्। तदुक्तं दानसागरे – 'बहुयाजकः बहुवर्णयाजकः' इति। ब्रह्मपुराणे – 'यश्चोपनयनं चक्रे बहूनां बहुयाजकः' इति। याजनं नाम श्रौतकर्मणि ग्रहयज्ञादिस्मार्तकर्मणि च वरणाभरणाभ्यां सत्कृतेन दक्षिणालाभमुद्दिश्याऽऽध्वर्यवादिकर्मकरणम्। 'षोडशर्त्विजः', 'नवग्रहमखे चत्वार ऋत्विजः' इत्यादिरूपेण यत्र ऋत्विक्समाख्या तत्र 'ऋत्विग्भ्यो दक्षिणां ददाति' इति ऋत्विक्संप्रदानज(? क)दानस्य दक्षिणात्वादृत्विजामेव याजनं वृत्तिरिति केचित्। अन्येषां तु चमसाध्वर्युप्रभृतीनां न याजनवृत्तिरिति केचित् (?)। 'ऋत्विग्यज्ञकृदुच्यते' इति स्मृतेः यजमानस्याप्यार्त्विज्यात् ऋतुयजननिमित्तत्वाच्च यज्ञार्थकर्तृत्वं च ऋत्विक्त्वम्। तन्निमित्तधनार्जनमेव याजनम्। कल्पसूत्रे तु व्यवहारार्थं संज्ञाकरणमिति प्रतिभाति। यत्तु वरणपूर्वकं त्र्यम्बकजपसहस्रनामदेवीमाहात्म्यादिपाठदेवपूजातीर्थस्नानगयाश्राद्धादिकं परार्थं कृत्वा दक्षिणाग्रहणं तन्न याजनम्, यज्ञसंबन्धाभावात्। तत्र(?यत्र) त्र्यम्बकजपादौ 'भ्रातरं पितरं शिष्यं गोसहस्रप्रदायिनम्। रक्षेदनेन मन्त्रेण' इति दक्षिणाभिधान(? प्रदान)मस्ति, यत्र (च) सहस्रनामपाठादौ समाचारप्रमाणकं दक्षिणादानम्, तदुभयत्रापि(? यमपि) प्रतिग्रहशब्दार्थसत्त्वात् प्रतिग्रहरूपमेव। 'अर्थलोभेन यो दद्याद्गृह्णीयाच्च प्रतिग्रहम्। स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम्।।' इति यच्छातातपवचनं तद्द्रव्यलोभरूपकार्यविषयमेव। तेनात्र तुलापुरुषादिदक्षिणावद्दक्षिणाशब्दाद्दक्षिणाग्रहणेतिकर्तव्यता, नैतद्दानेतिकर्तव्यता। तच्च प्रत्युपकारार्थं दानमेव। यथा गीतायाम् – 'यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः। दीयते तु परिक्लिष्टं तद्राजसमुदाहृतम्।।' (भगी. १७।२१) इति। यथा व्रतादौ 'असामर्थ्ये शरीरस्य व्रते च समुपस्थिते। कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम्।।' इति, 'भ्रातरं पितरं शिष्यं ब्राह्मणं दक्षिणादिभिः।' इति। अत्र पत्न्यादीनां प्रतिनिधित्वेन कर्मकर्तृत्वम्, दक्षिणाक्रीतस्य न प्रत्युपकार-

$ ग्रन्थोऽयमशुद्धस्त्रुटितकतिपयांशश्च। पूर्वं प्रतिग्रहाध्यापनयाजनेषु पूर्वपूर्वस्य प्राशस्त्यमुक्त्वा 'प्रतिग्रहः प्रत्यवरः' इत्यस्य विशुद्धयाजनाध्यापनापेक्षया गर्हितप्रतिग्रहविषयत्वमित्युक्तम्।

लाभेन प्रतिनिधित्वमिति विशेषः। यद्यपि 'तथा स्वामिनः फलसमवायात्' (जैसू. ६।३।२१) इति षष्ठाधिकरणन्यायेन स्वामिनः प्रतिनिधिर्नास्ति, कर्त्रंशे तु भवत्येव। तदुक्तम्– 'बहूनां तु प्रवृत्तावन्यमागमयेदवैगुण्यात्' (जैसू. ६।३।२२) इत्यधिकरणे सत्रे कस्मिंश्चित् यजमाने मृते तत्स्थानेऽन्यः प्रतिनिधेयः सप्तदशसंख्याधिकरण (क?)कर्तृकत्वनिर्वाहाय इत्युक्तम्। तथा स्मरन्ति – 'यज्ञदानव्रतजपतीर्थयात्रादिकं च यत्। यस्त्वेवं कारयेदन्यं तेन सर्वमनुष्ठितम्।।' इति। एतेन पौरोहित्यं व्याख्यातम्। तत्रापि 'नित्ये नैमित्तिके काम्ये त्वं मे प्रतिनिधिर्भव' इति स्मरणात्, 'त्वया मया च भोक्तव्यमिदं राज्यमकण्टकम्' इति धनदानस्वीकारात् व्यक्तमेव प्रतिनिधिकर्तृत्वम्। तत्र प्रतिनिधित्वेन वरणविधिवत् तत्रापि कारयेदिति कर्तारं प्रयोजयेदिति विधानादेव प्रतिनिधित्वम्। अत एव मण्डनः – 'पत्न्यामपि त्वशक्तायां नियुक्तः कश्चनो (?) यजेत्' इति स्वयमेव यागेऽपि प्रतिनिधिकर्तारं दर्शयति। प्रभासखण्डे च – 'पत्नी पुत्रः पुरोधाश्च भ्राता वाऽपि सखाऽपि वा। यात्रायां धर्मकार्येषु जायते( ? न्ते) प्रतिहस्तकाः। एभिः कृतं महादेवि स्वयमेव कृतं भवेत्।।'। आपस्तम्बः – 'प्रयोजयिताऽनुमन्ता कर्तेति स्वर्गनरकफलेषु भागिनः केवलम्।' (आध. २।२९।१) 'तथैव राजमहिषी राजाऽमात्यपुरोहिताः। पापेनार्धेन संयुक्ताः सर्वे ते राजधर्मिणः।।' इति यमवचनात् पुरोहितवृत्तिर्गर्हिता, स्तुतिजपपाठादिकरणं न तथा गर्हितमिति विशेषः। तेन प्रतिग्रहाश्रयदेशकालद्रव्यदोषास्तत्रापि भवन्त्येव। यत्तु – 'इष्टमध्यापितं पूर्तं तप्तं वा ह्यात्मनस्तपः। प्रयच्छत्यपरेभ्यश्च धनार्थं धर्मविक्रयी।।' इति वरणव्यतिरेकेण स्वयमेव यागं कृत्वा जपं कृत्वा तपः कृत्वा परस्माद्धनलाभेन तद्विक्रीणीते, न कर्मणा तस्य वृत्तिः (?), स्वकृतापूर्वं विनश्यति, धनदातरि चापूर्वमुत्पद्यत इति कल्प्यते, स धर्मविक्रयः। 'देवतानां गुरूणां च मातापित्रोस्तथैव च। पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित्।।' इति पुण्यदानविधौ पुण्यस्य कृतस्य दानेन स्वगतापूर्वं नश्यति, संप्रदानेऽपूर्वान्तरमुत्पद्यते, तत्र धर्मविक्रयः। यथा – 'तस्माद्यत् सुकृतं किंचिन्ममास्ति त्रिदशाधिप। तेन पुण्येन मुच्यन्तां पितरो यातनागताः।।' इति पुण्यदानम्। तथा च ययातेः स्वर्गप्रच्युतस्य दौहित्रदत्तपुण्येन स्वर्गगमनम्। एवं धर्मविक्रयः कृतस्य धर्मस्य मूल्यग्रहणपूर्वकं परस्मै दानम्। स च निषिद्धः, 'पुण्यविक्रये तप्तकृच्छ्रं कुर्यात्' इति प्रायश्चित्तविधानात्। तथा च शङ्खलिखितौ – 'चैत्यदेवगृहोद्यानारामसभाप्रपापुण्यतडागसेतुविक्रयं कृत्वा तप्तकृच्छ्रमाचरेत्' इति। तेन परार्थजपाद्याचरणं न धर्मविक्रयः, न याजनम्। तद्धनग्रहणं प्रतिग्रह एव।

निप्र. २।३०५-३०९

## धनार्जनम्

यद्यपि धनार्जननियमो न क्रत्वर्थः, पुरुषार्थ एवेति चतुर्थे साधितम्, तथापि वचनबलात् फलतारतम्यमिति, उपायान्तरेणार्जने क्रतुवैगुण्याभावः। तथा उपायाः ( ?यान्) तत्र विष्णुनारदौ – 'क्रमागतं प्रीतिदायः प्राप्तं च सह भार्यया। अविशेषेण वर्णानाम्' इत्यनेन सर्वेषां शुद्धधनत्वेन कथितवन्तौ। तेन प्रीतिदायेन विवाहकाले श्वशुरदत्तेन पितृपितामहादिक्रमागतधनेन वा धनवतो न तृतीयभागे धनार्जनार्थमाह(?)। तथा च मनुः – 'नेहेत वा प्रसङ्गेन न विरुद्धेन कर्मणा। न कल्पमानेष्वर्थेषु नाऽऽर्त्यामपि यतस्ततः।।' (मस्मृ. ४।१५)। प्रसङ्गेन गीतवाद्यादिना। कल्पमानेष्वर्थेषु पित्रादिक्रमागतविवाहादिलब्धेषु। तस्य पित्रादिधनेनैव यावत्स्वकर्तव्यदृष्टादृष्टार्थकर्मनिर्वाहात् पाकसंस्थादिवाजपेयपौण्डरीकगोसवादिमहायज्ञान्तकर्मणामपि बहुतरधनसाध्यानां पित्रादिक्रमागततावद्धनवतः कर्तुं सौकर्यात्। एवं 'वृत्त्यर्थादधिकं गृह्णन् नरो भवति किल्बिषी' इति बहुतरधनस्वीकारदोषस्य दायादिष्वसंभवः, तस्य प्रतिग्रहादिविषयत्वात्। तथा च व्यासः – 'प्रतिग्रहरुचिर्न स्यात् वृत्त्यर्थं तं समाचरेत्। स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम्।।' इति। किंच 'विद्वांस्तु ब्राह्मणो लब्ध्वा पूर्वोपनिहितं निधिम्। अशेषतोऽप्याददीत सर्वस्याधिपतिर्हि सः।।' (मस्मृ. ८।३७) इति मनुवचनेन निधिग्रहणे दोषाभावात् तद्धनवतो महायज्ञाद्यनुष्ठानम्। एवं तपसा जपहोमादिना यल्लब्धम्, तथा यजुर्विधानादौ 'सुवर्णपात्रशतमुत्पाद्यते' इत्यादिश्रवणात् तल्लब्धधनवतो बहुधनसाध्यकर्मानुष्ठानम्। एवं सति 'धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्।।'

(भामु. ३।२।४९) इत्येतन्महाभारतवचनं तन्निन्दितमहादानादिप्रतिग्रहादिपरमेव, 'प्रक्षालनाद्धि पङ्कस्य' इति वाक्यशेषात्, दायाद्यादिधने पङ्काभावात्, 'यस्य त्रैवार्षिकं द्रव्यं पर्याप्तं भृत्यवृत्तये। अधिकं वाऽपि विद्येत स सोमं पातुमर्हति।।' (मस्मृ. ११।७) इत्यादिना मनुवचनेन त्रैवार्षिकाधिकान्नत्वस्य दायाद्यादिधनवत्तयैव विवक्षितत्वात्। यत्तु ब्रह्मवैवर्ते – 'मातापितृगुरो(? त्रोर्गुरो)रर्थे विवाहार्थं च धर्मतः। अध्वरार्थं च विदुषा ग्रहीतव्यं धनं सदा।।' इति, तन्नित्यसोमयागार्थं सत्प्रतिग्रहाभ्यनुज्ञातम्( ? नम्), मातापित्रादिनित्यपोष्यसाहचर्यात्। ननु च गृहस्थमात्राधिकारिकत्वान्महाक्रतुविधीनां पुनश्च स्नातकधर्मत्वेन पाकसंस्थाहविःसंस्थासोमसंस्थामहायज्ञस्वरूपपञ्चविधक्रतूनां देवलप्रभृतिभिः स्मरणात् तेषां च धनं विना अशक्यानुष्ठानत्वेन महादानादिप्र(भृ?)तिग्रहेणापि धनार्जनं क्रतुविधिभिरेव प्रयुज्यते। यद्यपि धनार्जनं क्रत्वङ्गं न, (न) चाऽऽधानवद्विध्यन्तरा(?र)सिद्धमुपजीव्यते, 'यस्मिन् प्रीतिः पुरुषस्य तल्लिप्सार्थलक्षणा' (जैसू. ४।१।२) इति स्वतः प्राप्तत्वेनाविधेयत्वात्। किंतु उपायान्तरपरिसंख्यारूपेण प्राप्यते। तदुक्तं भाष्यकृता – 'द्रव्यवत्ता तु न केनचिद्विधिना क्लृप्ता' इति। तथापि द्रव्यं विनाऽसिद्ध-(? ध्य)ता क्रतुना द्रव्यमाक्षिप्यते, द्रव्येण तु तदुपार्जनाऽऽक्षिप्यत इत्येवमपि प्रतिग्रहादिकं विध्यपेक्षितत्वात् कर्तव्यमेव। अत एव षष्ठे 'त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धित्वात्' (जैसू. ६।१।३९) इति पूर्वपक्षं कृत्वा 'अनित्यत्वात्तु नैवं स्यात्' (जैसू. ६।१।४०) इति निर्धनोऽप्यर्जयित्वा अधिक्रियेतेत्युक्तमिति चेन्नैवम्। यद्यपि क्रतुविधिभिर्द्रव्यमाक्षिप्यते, द्रव्येण तु नार्जनोपाय आक्षेप्तुं शक्यते, उपायं विनाऽपि दायादिधनसंभवेनानैकान्तिकत्वात्। यत्तु षष्ठे निर्धनोऽप्यर्जयित्वाऽधिकारीति, तत्र नायमर्थः – क्रत्वर्थमर्जनं कर्तव्यमिति। किंतु निर्धनस्य पुरुषस्य धनमभिलषितमेव, तेन तदुपाये तस्य प्रयत्नः सिद्ध एव। स यदि धनं लभ्यते तदा क्रतुकरणे शक्तत्वादधिक्रियत एवेति। तत्रैतत् स्यात् – जीवनार्थं धनसत्त्वेऽपि क्रतुपर्याप्तधनाभावे (न) जीवनार्थं धनेच्छा, किंतु क्रत्वर्थमेवेति फलतः क्रत्वर्थमेव धनार्जनमिति। नैवम्, न जीवनमात्रपर्याप्तधनवन्तं प्रत्याह त्यक्तन्त विधिरस्य करोति ( ? प्रत्याहत्य क्रतुविधिरधिकरोति), किंत्वविशेषफलार्थिनं कर्तृशक्तिमन्तम्। तेन जीवनार्थोपात्तधनेनैव निराकाङ्क्षत्वात् क्रतुविधिर्न स्वयं धनार्जनं प्रयुङ्क्ते। पुरुषस्तु यदि जीवनार्थधनस्याल्पत्वेन बहुधनसाध्यक्रतावपर्याप्तत्वेन क्रतुसिद्धिमेवोद्दिश्य प्रतिषिद्धोपायेन धनमर्जयति तदा तदपि धनं क्रतुना गृह्यत एव। धनं क्रत्वङ्गम्, नोपायः। जीवनार्थमपि धनं जीवनार्थत्वेन (न) क्रत्वङ्गम्, किंतु व्रीहित्वादिरूपेण। क्रतुमुद्दिश्यार्जितमपि व्रीह्यादिकं व्रीह्यादिकमेव। यथा क्रतुफलमुद्दिश्य क्रियमाणमप्याधानं न तु क्रतुविधिना प्रयुज्यते, तत्र ( ? तस्य) स्वविधिसिद्धवदिहापि ( ? सिद्धत्वात्, तथेहापि) द्रव्यस्वरूपस्य पुरुषाभिलषितत्वमेव तदुपाये प्रवर्तकम्। अयं तु विशेषः – द्रव्यस्याभिलषितत्वं कदाचिज्जीवनोपायत्वेन, कदाचिच्च क्रत्वदिफलाकाङ्क्षया। तदुपायप्रवृत्तिश्च लोकतः। आहवनीयादीनामपेक्षितत्वं च क्रतुफलद्वारकमेव। तदुपाये चाऽऽधाने शास्त्रत एव प्रवृत्तिः। न चैतावता क्रतुविधिभिराहवनीयोपायग्रहणं द्रव्योपायग्रहणं वा, मानाभावात्। पुरुषस्य धनार्जने उपायविशेषनियमात् तदतिक्रमे यथाशास्त्रं प्रायश्चित्तम्। यत्तु मनुवचनम् – 'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च।।' (मस्मृ. १०।११५) इति। तत्र दायः पित्रादिक्रमागतम्। लाभः निध्यादिलाभः। क्रयः प्रसिद्धः। जयः क्षत्रियस्य। ब्राह्मणस्याऽऽपदि युद्धाद् विना ( ? द्धादिना)। प्रयोगः कुसीदवृत्तिः। कर्मयोगः कृषिवाणिज्यादि वैश्यस्य। ब्राह्मणस्याप्यापदि। सत्प्रतिग्रहः द्विजातिभ्यः प्रशस्तेभ्यः। इत्यादि यद्धर्महेतुत्वमर्जनस्योक्तं नैतावताऽपि क्रतुविधिप्रयुक्तत्वम्, किंतु पुरुषस्य शुद्धधनेन कर्मकरणे देवत्वमित्यादिकमेव वचनात् कल्प्यते। केवलं यो लोभेन गर्हितमहादानादिप्रतिग्रहं करोति, लोभेन भ्रमेण वा तत्त्यागपूर्वकं प्रायश्चित्तमकृत्वा पश्चात्तापेन तेन महायज्ञं करोति तस्य क्रतुफलं स्यादेव। धनस्य राजसत्वादिना फलं मध्यमम्। प्रतिग्रहदोषस्तु स्यादेव। धर्माकाङ्क्षया तत्करणमनुचितम्। निन्दितः प्रतिग्रहः कृतः, कदाचिच्च दैवमानुषविघ्नेन धर्मो नानुष्ठितः, तदा महाननर्थः स्यात्। हारीतः – 'पतितदुष्कृतेभ्यः प्रतिगृहीतमस्वर्ग्यमयज्ञीयम्।

न च तेन पुण्यार्थानाप्नोति' इति। (अस्मात्) वचनात् पतितादिचाण्डालादिप्रतिगृहीतेन धनेन यज्ञादिकरणे फलाभावः। तस्मात् गृहिभिस्तन्न कर्तव्यम्। तत्सिद्धं दायाद्यादिधनसत्त्वे नार्जनार्थं तृतीयभागे यत्नः। तथा च मनुः – 'नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्मणा। न कल्पमानेष्वर्थेषु नाऽऽर्त्यामपि यतस्ततः।।' (मस्मृ. ४।१५)। अर्थेषु कल्पमानेषु जातेषु धनार्थं नेहेतेत्यर्थः। यस्य तन्नास्ति समाप्तं वा तस्य शास्त्रोक्ता वृत्तयः।निप्र. २।२४७-२५२

## प्रतिग्रहः

अथ प्रतिग्रहो निरूप्यते। तत्र श्रौतो विधिः पूर्वमुदाहृतः – 'द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयात्' इति। तत्र याजने येयं चर्चा पूर्वमनुक्रान्ता, सेयं प्रतिग्रहेऽपि यथासंभवमनुसंधातव्या। ननु प्रतिग्रहो मनुना निन्दितः – 'प्रतिग्रहः प्रत्यवरः स तु विप्रस्य गर्हितः' (मस्मृ. १०।१०९) इति। मैवम्, अस्या निन्दाया असत्प्रतिग्रहविषयत्वात्। तच्चोपरितने वचने स्पष्टीकृतम् – 'प्रतिग्रहो गर्हितः स्यात् शूद्रादप्यन्त्यजन्मनः' (मस्मृ. १०।११०) इति। यः प्रतिग्रहो नीचात् क्रियते स गर्हित इत्यर्थः। सत्प्रतिग्रहस्तु तेनैवाभ्यनुज्ञातः – 'नाध्यापनाद्याजनाद्वाऽगर्हिताद्वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलनार्कसमा हि ते।।' (मस्मृ. १०।१०३) इति। अगर्हितादिति छेदः। अगर्हितप्रतिग्रहादप्यप्रतिग्रहः श्रेयान्। तथा च याज्ञवल्क्यः – 'प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम्। ये लोका दानशीलानां स तानाप्नोति पुष्कलान्।।' (यास्मृ. १।२१३) इति। ननु यमः प्रतिग्रहं प्रशंसति – 'प्रतिग्रहाध्यापनयाजनानां प्रतिग्रहं श्रेष्ठतमं वदन्ति। प्रतिग्रहात् शुद्ध्यति जप्यहोमैर्याज्यं तु पापं न पुनन्ति वेदाः।।' इति। मनुस्तु तद्विपर्ययमाह – 'जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्। प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च।।' (मस्मृ. १०।१११) इति। नायं दोषः, द्विजातिभ्यः प्रतिग्रहः प्रशस्तः, शूद्रात् प्रतिग्रहो निन्दितः इति व्यवस्थायाः सुवचत्वात्। ननु सत्प्रतिग्रहेऽपि कियानपि प्रत्यवायः प्रतीयते, 'प्रतिग्रहात् शुध्यति' इत्युक्तेः। बाढम्, अस्त्येव वेदपारगत्वादिसामर्थ्यरहितस्य प्रतिग्रहे प्रत्यवायः। एतदेवाभिप्रेत्य स्कान्दे वेदपारगस्य प्रत्यवायो निवारितः-

'षडङ्गवेदविद्विप्रो यदि कुर्यात् प्रतिग्रहम्। न स पापेन लिप्येत पद्मपत्रमिवाम्भसा।।' इति। एष एव न्यायो याजनाध्यापनयोर्योजनीयः। अयाज्ययाजनभृतकाध्यापनदुष्टप्रतिग्रहेष्वेनोबाहुल्यम्, स्वस्मिन्नीषदधिकारवैकल्येन प्रवर्तमानस्य स्वल्पः प्रत्यवायः, मुख्याधिकारिणो विहितयाजनादिप्रवृत्तौ न किंचिदप्येनः इति विवेकः। सदसत्प्रतिग्रहौ विवेचयति व्यासः – 'द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः। अपि वा जातिमात्रेभ्यो न तु शूद्रात् कथंचन।।' इति। सतामसंभवे सत्यसतोऽपि प्रतिग्रहश्चतुर्विंशतिमतेऽभ्यनुज्ञातः – 'सीदंश्चेत् प्रतिगृह्णीयाद्ब्राह्मणेभ्यस्ततो नृपात्। ततस्तु वैश्यशूद्रेभ्यः शङ्खस्य वचनं यथा।।' इति। शूद्रप्रतिग्रहे विशेषमाहाङ्गिराः – 'यत्तु राशीकृतं धान्यं खले क्षेत्रे तथा भवेत्। शूद्रादपि ग्रहीतव्यमित्याङ्गिरसभाषणम्।।' इति। तत्रैव विशेषान्तरमाह व्यासः – 'कुटुम्बार्थे तु सच्छूद्रात् प्रतिग्राह्यमयाचितम्। क्रत्वर्थमात्मने चैव न हि याचेत कर्हिचित्।।' इति। मनुः अपि – 'न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत धर्मवित्। यजमानोऽपि भिक्षित्वा चाण्डालः प्रेत्य जायते।।' (मस्मृ. ११।२४)इति। असत्प्रतिग्रहोचितोऽवस्थाविशेषः स्कन्दपुराणे दर्शितः – 'दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा। असतः प्रतिगृह्णीयात् प्रतिग्रहमतन्त्रितः।।' इति। याज्ञवल्क्योऽपि – 'आपद्गतः संप्रगृह्णन् भुञ्जानो वा यतस्ततः। न लिप्येतैनसा विप्रो ज्वलनार्कसमप्रभः।।' (यास्मृ. ३।४१) इति। मनुरपि – 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्।।' (मस्मृ. ११।१० इत्यतः परं प्रक्षिप्तः), 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। आकाशमिव पङ्केन न स पापेन लिप्यते।।' (मस्मृ. १०।१०४) इति। गारुडपुराणे प्रतिग्राह्यस्य द्रव्यस्येयत्ता दर्शिता – 'यावता पञ्चयज्ञानां कर्तुर्निर्वहणं भवेत्। तावदेव हि गृह्णीयात् कुटुम्ब स्याऽऽत्मनस्तथा।।' इति। व्यासोऽपि – 'प्रतिग्रहरुचिर्न स्यात् यात्रार्थं तु समाचरेत्। स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम्।। वृत्तिसंकोचमन्विच्छेन्नेहेत धनविस्तरम्। धनलाभे प्रवृत्तस्तु ब्राह्मण्यादेव हीयते।।' इति। अनापदि राजप्रतिग्रहं निन्दति याज्ञवल्क्यः – 'न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छा-

स्त्रवर्तिनः। प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः। दुष्टा दशगुणं पूर्वात् पूर्वादेते यथोत्तरम्।।' (यास्मृ. १।१४०,१४१) इति। संवर्तः – 'राजप्रतिग्रहो घोरो मध्वास्वादो विषोपमः। पुत्रमांसं वरं भोक्तुं न तु राजप्रतिग्रहम्।।' इति। स्कान्दे – 'मरुदेशे निरुदके ब्रह्मरक्षस्त्वमागतः। राजप्रतिग्रहात्पुष्टः पुनर्जन्म न विन्दति।। ब्राह्मण्यं यः परित्यज्य द्रव्यलोभेन मोहितः। विषयामिषलुब्धस्तु कुर्याद्राजप्रतिग्रहम्। रौरवे नरके घोरे तस्यैव पतनं ध्रुवम्।। वृक्षा दवाग्निना दग्धाः प्ररोहन्ति घनागमे। राजप्रतिग्रहाद्दग्धा न प्ररोहन्ति कर्हिचित्।।' इति। विष्णुधर्मोत्तरे – 'दशसूनिसमश्चक्री दशचक्रिसमो ध्वजी। दशध्वजिसमा वेश्या दशवेश्यासमो नृपः।। दश सूनासहस्राणि यो वाहयति सौनिकः। तेन तुल्यः स्मृतो राजा घोरस्तस्मात् प्रतिग्रहः।।' इति। अधार्मिकराजविषयेयं निन्दा। तथा च तत्रैव विशेषितम् – 'येषां न विषये विप्रा यज्ञैर्यज्ञपतिं हरिम्। यजन्ते भूभुजां तेषामेतत् सूनोदितं फलम्।। येषां पाषण्डसंकीर्णं राष्ट्रं न ब्राह्मणोत्कटम्। एते सूनासहस्राणां दशानां भागिनो नृपाः।। येषां न यज्ञपुरुषः कारणं पुरुषोत्तमः। ते तु पापसमाचाराः सूनापापोपभा(?भो)गिनः।।'। अदुष्टात्तु राज्ञः प्रतिग्रहो न निन्दितः। अत एव छन्दोगशाखायां प्राचीनशालादीन्महामुनीन् राजप्रतिग्रहे प्रवर्तयितुमश्वपतिनामकेन राज्ञा दोषाभाव उपन्यस्तः – 'न मे स्तेनो जनपदे न कदर्यो न मद्यपः। नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी तथा।।' इति। याज्ञवल्क्यवचनेऽपि राजप्रतिग्रहनिन्दायां 'लुब्धस्योच्छास्त्रवर्तिनः' इति विशेषणाददुष्टराजप्रतिग्रहो न निन्दितः इति गम्यते। तथा नारदोऽपि – 'श्रेयान् प्रतिग्रहो राज्ञां नान्येषां ब्राह्मणादृते। ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ। नैतयोरन्तरं किंचित् प्रजाधर्माभिरक्षणे।। शुचीनामशुचीनां च संनिवेशो यथाऽम्भसाम्। समुद्रे समतां याति तद्वद्राज्ञां धनागमः।। यथाऽग्नौ संस्थितं चैव शुद्धिमायाति काञ्चनम्। एवं धनागमाः सर्वे शुद्धिमायान्ति राजनि।।' (नासं. १९।३९, ४०, ४२, ४३) इति। दुष्टप्रतिग्रहवत् सत्प्रतिग्रहस्यापि आपद्विषयता कुतो न कल्प्यते इति चेत्, न, ब्रह्माण्डपुराणे सत्प्रतिग्रहस्यानापद्यपि विहितत्वात् – 'अनापद्यपि धर्मेण याज्यतः शिष्यतस्तथा। गृह्णन्प्रतिग्रहं विप्रो न धर्मात् परिहीयते।। गृह्णीयाद्ब्राह्मणादेव नित्यमाचारवर्तिनः। श्रद्धया विमलं दत्तं तथा धर्मान्न हीयते।।' इति। केषुचिद्वस्तुविशेषेषु अयाचितेषु न प्रतिग्रहदोषः इत्याह भरद्वाजः – 'अयाचितोपपन्नेषु नास्ति दोषः प्रतिग्रहे। अमृतं तद्विदुर्देवास्तस्मात्तन्नैव निर्णुदेत्।।' इति। तत्र भरद्वाजाभिप्रेतान् वस्तुविशेषान्निर्दिशति याज्ञवल्क्यः – 'कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः। मांसं शय्याऽऽसनं धानाः प्रत्याख्येयं न वारि च।। अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः। अन्यत्र कुलटाषण्डपतितेभ्यस्तथा द्विषः।।' (यास्मृ. १।२१४, २१५) इति। मनुरपि – 'शय्यां कुशान् गृहान् गन्धानपः पुष्पं मणिं दधि। मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत्।। एधोदकं मूलफलमन्नमभ्युद्यतं च यत्। असतः(? सर्वतः) प्रतिगृह्णीयान्मधु चाभयदक्षिणाम्।।' (मस्मृ. ४।२५०, २४७) इति। प्रतिग्रहानधिकारिणं स एवाऽऽह – 'हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्। अविद्वान् प्रतिगृह्णानो भस्मीभवति काष्ठवत्।।'(मस्मृ. ४।१८८) इति। याज्ञवल्क्योऽपि – 'विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः। गृह्णन् प्रदातारमधो नयत्यात्मानमेव च।।' (यास्मृ. १।२०२) इति। विदुषस्तु न कोऽपि प्रतिग्रहो दोषावह इति वाजसनेयिब्राह्मणे गायत्रीविद्यायां श्रूयते – 'यदि ह वा अप्येवं विद्वान् द्विजः (? प्येवंविद्बह्विव) प्रतिगृह्णाति सहै(? न हैव)- तद्गायत्र्या एकं(चन) पदं प्रतिसन्धाय(? प्रति। स य) इमाः स्त्रींल्लोकान् पूर्णान् प्रतिगृह्णीयात् यो(? सो)ऽस्या एतत्प्रथमं पदमाप्नुयात्। अथ यावतीयं त्रयी विद्याथ ता- (? द्या यस्ता)वत्प्रतिगृह्णीयात् यो(? सो)ऽस्या एतद्द्वितीयं पदमाप्नुयात्। अथ यावदिदं प्राणियु(? णि य)स्तावत् प्रतिगृह्णीयात् यो(? सो)ऽस्या एतत् तृतीयं पदमाप्नुयात्। अथास्या एतदेव तुरीयं दर्शितं(? र्शतं) पदं परोरजोय (? जा य) एष तपति। नैव केन जा(? केनचना)प्यम्। कुत (उ) एतावत् प्रगृह्णीयात्।'(शब्रा. १४।८।१५।८,९) इति। इति प्रतिग्रहप्रकरणम्।

पमा. १।१८२-१९१

## *वेदाः

कृषिकर्मणः समृद्ध्यर्थं क्षेत्रपालादि-
देवतानां कृषिस्वामिकृता
प्रार्थना

**[1]क्षेत्रस्य पतिना वयं हितेनेव जयामसि।**
**गामश्वं पोषयित्न्वा स नो मृळातीदृशे।।**

क्षेत्रस्य कर्षणेऽनेन सूक्तेन प्रत्यृचं जुहुयाज्जपेद्वा। तथा च सूत्रितम् – "क्षेत्रस्य पतिना वयम्' इति प्रत्यृचं जुहुयाज्जपेद्वा" (आगृ. २।१०।४) इति। वयं यजमानाः क्षेत्रस्य पतिना देवेन। 'रुद्रं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे। स्वतन्त्र एव वा कश्चित्क्षेत्रस्य पतिरुच्यते।।'। हितेनेव। इवशब्द एवार्थे। सर्वप्राणिहितेनैव (तेन ?)। अथवा मित्रेणे(? णै)व। यथा सख्युः साहाय्ये सन् (? य्येन) स्वकार्यं साधयति तद्वत्। जयामसि जयामः क्षेत्रम्। स देवः गामश्वं च पोषयित्नु पोषयितृ गवाश्वलक्षणं धनम् आ हरत्विति शेषः। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। सः एव देवः नः अस्मान् ईदृशे उक्तलक्षणे धने दातव्ये सति मृळाति सुखयति। 'क्षेत्रस्य पतिना' (नि. १०।१५) इत्यादि निरुक्तं जानीयात्। ऋसा.

**[2]क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व।**
**मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु।।**

हे क्षेत्रस्य पते, त्वं मधुमन्तं माधुर्योपेतम् ऊर्मिं प्रवृद्धम् उदकं धेनुः पयः इव सा यथा दुग्धे तथा अस्मासु धुक्ष्व। मधुश्चुतं मधुस्त्रावि सुपूतं घृतमिव इत्युपमा। तादृशमुदकमित्यर्थः। ऋतस्य यज्ञस्योदकस्य वा पतयः स्वामिनः नः अस्मान् मृळयन्तु सुखयन्तु। यद्वा, ऋतस्य एतत् (? इति) कर्मणि षष्ठी। ऋतं मृळयन्तु प्रयच्छन्तु। मृळतिरत्र दानकर्मा। ऋसा.

**[1]मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम्।**
**क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम।।**

ओषधीः ओषध्यः व्रीहिप्रियङ्ग्वादयः नः अस्मभ्यं मधुमतीः मधुमत्यः भवन्तु। तथा द्यावः। 'तिस्रो दिवः' इत्युक्तत्वात् बहुवचनं युक्तम्। तथा आपः अन्तरिक्षं च नः मधुमत् भवतु। किंच, क्षेत्रस्य पतिः अपि मधुमान्नो अस्तु। अरिष्यन्तः अन्यैरहिंस्यन्तः वयम् एनं क्षेत्रपतिम् अनु अनुसृत्य चरेम संचरेम सुखेन।

ऋसा.

**[2]शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम्।**
**शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय।।**

(१) वाहाः बलीवर्दाः। शुनम्। सुखनामैतत्। सुखं यथा भवति तथा, वहन्त्विति शेषः। तथा नरः नेतारः मनुष्याः कर्षकाः शुनं कुर्वन्तु। तथा लाङ्गलम् अपि शुनं कृषतु। वरत्राः वरणेन त्रायमाणाः प्रग्रहाः शुनं बध्यन्ताम्। अष्ट्रां प्रतोदं शुनम् उदिङ्गय प्रेरय। शुनाख्यो वाय्विन्द्रयोरन्यतमः(? तरः) सुखकृद्देवः। तदनुग्रहादेतत्सर्वं भवत्विति तस्य श्रुतिसामान्येन स्तुतिः।

ऋसा.

(२) नाराः बलीवर्दानां प्रेरका मनुष्याः। ... वरत्राः चर्ममय्यो रज्जवः। अष्ट्राम् आरां तीक्ष्णाग्रलोहयुक्तं बलीवर्दप्रेरकं दण्डम्। .... शुनासीरा हे वाय्वादित्यौ शुनं सुखमस्मासु धत्तं संपादयतम्।

तैआसा.

**[3]शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः।**
**तेनेमामुप सिञ्चतम्।।**

(१) 'द्युदेवः शुनदेवता' इति शौनकः। अतः शुनः इन्द्रः सीरः वायुः। 'शुनो वायुः शु एत्यन्तरिक्षे सीर

---

*अस्मिन् प्रकरणे ऋङ्मन्त्रेषु येषां संहितान्तराणां स्थलादिनिर्देशः कृतः तेषां सायणभाष्यं पाठभेदविषयं तात्पर्यभेदविषयं चात्र संगृहीतम्। शुसंमन्त्राश्च शतपथे व्याख्याततत्वात् तद्भाष्यं सर्वं शतपथब्राह्मणे संगृहीतम्।

(१) **ऋसं.** ४।५७।१; **तैसं.** १।१।१४।२-३; **कासं.** ४।१५ (११०); **मैसं.** ४।११।१(११).

(२) **ऋसं.** ४।५७।२; **तैसं.** १।१।१४।३; **कासं.** ४।१५(१११) मधुश्चुतं (मधुश्च्युतं) : ३०।४(८); **नि.** १०।१६.

(१) **ऋसं.** ४।५७।३; **असं.** २०।१४३।८; **मैसं.** ४।११।१(१२).

(२) **ऋसं.** ४।५७।४; **असं.** ३।१७।६; **तैआ.** ६।६।२ नरः (नाराः) दिङ्गय + (शुनासीरा शुनमस्मासु धत्तम्).

(३) **ऋसं.** ४।५७।५; **असं.** ३।१७।७ सीराविमां वाचं (सीरेह स्म मे); **तैआ.** ६।६।२.

आदित्यः सरणात्' (नि. ९।४०) इति यास्कः। हे शुनासीरौ, तौ युवाम् इमां वक्ष्यमाणां मदीयां वाचं जुषेथाम्। यत् पयः दिवि चक्रथुः तेन इमां भूमिम् उपसिञ्चतम्।

ऋसा.

(२) शुनासीरा शुनासीरौ देवौ इह स्म इह खलु अस्मिन् क्षेत्रे मे मदीयं हविः जुषेताम् सेवेताम्। असा.

(३) शुनः वायुः, सीरः आदित्यः। हे शुनासीरौ वाय्वादित्यौ इमां पूर्वोक्तां 'शुनमस्मासु धत्तम्' इत्येतादृशीं वाचं श्रुत्वा दिवि अन्तरिक्षे यत्पयः उदकं चक्रथुः संपादितवन्तौ तेनोदकेनेमां भूमिमुपसिञ्चतं सिक्तां कुरुतम्।

तैआसा.

**[१]अर्वाची सुभगे भव सीते वन्दामहे त्वा।**
**यथा नः सुभगाऽससि यथा नः सुफलाऽससि।।**

(१) हे सुभगे सीते, त्वम् अर्वाची अर्वागञ्चना भव। त्वा त्वां वन्दामहे स्तुवीमहि। यथा नः सुभगाऽससि शोभनधना भवसि, यथा नः सुफलाऽससि तथा वन्दामहे।

ऋसा.

(२) हे सुभगे सुभाग्ये सीताभिमानिदेवते त्वम् अर्वाची अस्मदभिमुखी भव। यथा येन प्रकारेण नः अस्माकं सुमनाः शोभनमनस्का असः स्याः। यथा येन प्रकारेण नः अस्माकं सुफला शोभनफलोपेता भुवः भवेः। तथा अर्वाची भवेति संबन्धः। अस्तेर्भवतेश्च लेटि अडागमः। शब्लुकि 'भूसुवोस्तिङि' (पासू. ७।३।८८) इति गुणप्रतिषेधे उवङ्। असा.

**[२]इन्द्रः सीतां नि गृह्णातु तां पूषाऽनु यच्छतु।**
**सा नः पयस्वती दुहामुत्तरामुत्तरां समाम्।।**

(१) इन्द्रः देवः सीतां सीताधारकाष्ठं नि गृह्णातु। तां सीतां पूषा देवः अनु यच्छतु नियमयतु। सा द्यौः पयस्वती उदकवती दुहां दुह्यात्। कदेति तदुच्यते उत्तरामुत्तरां समाम् उत्तरमुत्तरं संवत्सरम्। ऋसा.

(२) इन्द्रो देवः सीतां लाङ्गलपद्धतिं नि गृह्णातु नीचीनं गृह्णातु। तां पूषा पोषको देवः अभि रक्षतु सर्वतः पालयतु। सा सीता नः अस्मभ्यं पयस्वती। पय इत्युपलक्षितम् अभिमतफलम्। तद्युक्ता सती उत्तरामुत्तरां समाम् उत्तरोत्तरं संवत्सरम्। अत्यन्तसंयोगे द्वितीया। सर्वेष्वपि कालेषु इत्यर्थः। दुहाम् दुग्धाम्। अभिमतफलम् इति शेषः। यद्वा पयस्वती उदकवती सती दुहां व्रीहियवादिसस्यानि दुग्धाम् उत्तरोत्तरं संवत्सरम् इति द्विकर्मकः। 'अकथितं च' (पासू. १।४।५१) इति कर्मसंज्ञा। दुहाम् इति। 'लोपस्त आत्मनेपदेषु' (पासू. ७।१।४१) इति तलोपः।

असा.

**[१]शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभि यन्तु वाहैः।**
**शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम्।।**

(१) नः भूमिं फालाः भूमिविदारककाष्ठाः शुनं वि कृषन्तु। शुनं यथा भवति तथा कीनाशाः बलीवर्दरक्षकाः वाहैः बलीवर्दैः अभि यन्तु अभिगच्छन्तु। शुनं यथा भवति तथा पर्जन्यः मधुना मधुरैः पयोभिः उदकैः सिञ्चतु। हे शुनासीरा इन्द्रवायू वाय्वादित्यौ वा, शुनं सुखम् अस्मासु धत्तं धारयतम्। ऋसा.

(२) सुफालाः शोभनानि लाङ्गलमुखानि अस्माकं शुनं सुखं यथा भवति तथा भूमिं वि तुदन्तु विकृषन्तु। कीनाशाः कर्षकाः शुनं यथा भवति तथा वाहान् बलीवर्दान् अनु यन्तु अनुगच्छन्तु। वाह्यन्त इति वाहाः। कर्मणि

---

(१) **ऋसं.** ४।५७।६; **असं.** ३।१७।८ (सीते वन्दामहे त्वाऽर्वाची सुभगे भव। यथा नः सुमना असो यथा नः सुफला भुवः।।); **तैआ.** ६।६।२ (सीते वन्दामहे त्वाऽर्वाची सुभगे भव। यथा नः सुभगा ससि यथा नः सुफला ससि।).

(२) **ऋसं.** ४।५७।७; **असं.** ४।१७।४ नु यच्छतु (भि रक्षतु).

(१) **ऋसं.** ४।५७।८; **असं.** ३।१७।५ (शुनं सुफाला वि तुदन्तु भूमिं शुनं कीनाशा अनु यन्तु वाहान्। शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तमस्मै।।); **तैसं.** ४।२।५।६ कृषन्तु (तुदन्तु) वाहैः (वाहान्); **कासं.** १६।१२(१४७) (शुनं सुफाला वितुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः। शुनासीरा हव्यजुष्टिं जुषाणेदं बीजमवतमुप्यमानम्।।); **मैसं.** २।७।१२(१५७) (शुनं सुफाला वितुदन्तु भूमिं शुनं कीनाशो अभ्येतु वाहैः। शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मे।।); **शुसं.** १२।६९ (शुनं सु फाला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः। शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मै।।); **शब्रा.** ७।२।२।९ पूर्वार्धं शुसंवत्, पू.

घञ्। 'कर्षात्वतो घञोऽन्त उदात्तः' (पासू. ६।१।१५९) इति अन्तोदात्तत्वम्। शुनासीरा हे शुनासीरौ वाय्वादित्यौ, 'शुनो वायुः सीर आदित्यः' इति हि यास्कः। यद्वा शुनः सुखकरो देवः। सीरः लाङ्गलाभिमानी देवः। तौ युवां हविषा अस्मदीयेन तोषमाणा तोषमाणौ तुष्यन्तौ अस्मै यजमानाय ओषधीः व्रीहियवाद्याः सुपिप्पलाः शोभनफलोपेताः कर्तं कुरुतम्। असा.

अक्षाणां कृषेश्च स्तुतिः अक्षाणां
कितवानां निन्दा च

**[1]प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः।**
**सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान्॥**

बृहतः महतः विभीतकस्य फलत्वेन संबन्धिनः प्रवातेजाः प्रवणे देशे जाताः इरिणे आस्फारे वर्वृतानाः प्रवर्तमानाः प्रावेपाः प्रवेपिणः कम्पनशीलाः अक्षाः मा मां मादयन्ति हर्षयन्ति। किंच जागृविः जयपराजययोर्हर्षशोकाभ्यां कितवानां जागरणस्य कर्ता विभीदकः विभीतकविकारोऽक्षो मह्यं माम् अच्छान् अचच्छदत् अत्यर्थं मादयति। तत्र दृष्टान्तः – सोमस्येव यथा सोमस्य मौजवतस्य, मुजवति पर्वते जातो मौजवतः, तस्य। तत्र ह्युत्तमः सोमो जायते। भक्षः पानं यजमानान् देवांश्च मादयति तद्वदित्यर्थः। तथा च यास्कः – 'प्रवेपिणो मा महतो विभीत(? द)कस्य फलानि मादयन्ति। प्रवातेजाः प्रवणेजा इरिणे वर्तमाना इरिणं निर्ऋणमृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षो मौजवतो मुजवति जातो मुजवान् पर्वतो मुञ्जवान् मुञ्जो विमुच्यत इषीकयेषीकेषतेर्गतिकर्मण इयमपीतरेषीकैतस्मादेव विभीतको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्' (नि. ९।८) इति। ऋसा.

**न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत्।**
**अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम्॥**

एषा अस्मदीया जाया मा मां कितवं न मिमेथ न च चुक्रोध, न जिहीळे न च लज्जितवती। सखिभ्यः अस्मदीयेभ्यः कितवेभ्यः शिवा सुखकरी आसीत् अभूत्। उत अपि च मह्यं शिवाऽऽसीत्। इत्थम् अनुव्रताम् अनुकूलां जायाम् एकपरस्य एकः परः प्रधानं यस्य तस्य अक्षस्य हेतोः कारणात् अहम् अप अरोधं परित्यक्तवानस्मीत्यर्थः। ऋसा.

**द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम्।**
**अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम्॥**

श्वश्रूः जायाया माता गृहगतं कितवं द्वेष्टि निन्दतीत्यर्थः। किंच जाया भार्या अप रुणद्धि निरुणद्धि। अपि च नाथितः याचमानः कितवः धनं मर्डितारं धनदानेन सुखयितारं न विन्दते न लभते। इत्थं बुद्ध्या विमृशन् अहं जरतः वृद्धस्य वस्न्यस्य, वस्नं मूल्यम्, तदर्हस्य अश्वस्येव कितवस्य भोगं न विन्दामि न लभे। ऋसा.

**अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्यक्षः।**
**पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम्॥**

यस्य कितवस्य वेदने धने वाजी बलवान् अक्षः देवः अगृधत् अभिकाङ्क्षां करोति तस्य अस्य कितवस्य जायां भार्याम् अन्ये प्रतिकितवाः परि मृशन्ति वस्त्रकेशाद्याकर्षणेन संस्पृशन्ति। किंच, पिता जननी च भ्रातरः सहोदराश्च एनं कितवम् आहुः वदन्ति 'न वयमस्मदीयमेनं जानीमः। रज्ज्वा बद्धम् एतं कितवं हे कितवाः, यूयं नयत यथेष्टदेशं प्रापयत' इति। ऋसा.

**यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः।**
**न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव॥**

यत् यदा अहम् आदीध्ये ध्यायामि तदानीम् एभिः अक्षैः न दविषाणि न दूषये न परितपामि। यद्वा, न दविषाणि न देविष्यामीत्यर्थः। परायद्भ्यः स्वयमेव परागच्छद्भ्यः सखिभ्यः सखिभूतेभ्यः कितवेभ्यः अव हीये अवहितो भवामि। नाहं प्रथममक्षान् विसृजामीति।

(१) **ऋसं.** १०।३४।१-१२.

किंच, बभ्रवः बभ्रुवर्णाः अक्षाः न्युप्ताः कितवैरवक्षिप्ताः सन्तः वाचमक्रत शब्दं कुर्वन्ति। तदा संकल्पं परित्यज्य अक्षव्यसनेनाभिभूयमानोऽहम् एषाम् अक्षाणां निष्कृतं स्थानं जारिणीव यथा कामव्यसनेनाभिभूयमाना स्वैरिणी संकेत-स्थानं याति तद्वत् एमीत् गच्छाम्येव। ऋसा.

**सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा शूशुजानः।**
**अक्षासो अस्य वि तिरन्ति कामं प्रतिदीव्ने दधत आ कृतानि।।**

तन्वा शरीरेण शूशुजानः शोशुचानः दीप्यमानः कितवः 'कोऽत्रास्ति धनिकः? जेष्यामि' इति पृच्छमानः पृच्छन् सभां कितवसंबन्धिनीम् एति गच्छति। तत्र प्रतिदीव्ने प्रतिदेवित्रे कितवाय कृतानि देवनोपयुक्तानि कर्माणि आ दधतः जयार्थमाभिमुख्येन मर्यादया वा दधतः अस्य कितवस्य कामम् इच्छाम् अक्षासः अक्षाः वि तिरन्ति वर्धयन्ति। ऋसा.

**अक्षास इदङ्कुशिनो नितोदिनो निकृत्वानस्त — पनास्तापयिष्णवः।**
**कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा।।**

अक्षास इत् अक्षा एव अङ्कुशिनः अङ्कुशवन्तः, नितोदिनः नितोदितवन्तश्च, निकृत्वानः पराजये निकर्तन-शीलाश्छेत्तारो वा, तपनाः पराजये कितवस्य संतापकाः, तापयिष्णवः सर्वस्वहारकत्वेन कुटुम्बस्य संतापनशीलाश्च भवन्ति। किंच, जयतः कितवस्य कुमारदेष्णाः धनदानेन धान्यतां लम्भयन्तः कुमाराणां दातारो भवन्ति। अपि च, मध्वा मधुना संपृक्ताः प्रतिकितवेन बर्हणा परिवृद्धेन सर्वस्वहरणेन कितवस्य पुनर्हणः पुनर्हन्तारः भवन्ति। ऋसा.

**त्रिपञ्चाशः क्रीळति व्रात एषां देवइव सविता सत्यधर्मा।**
**उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत्कृणोति।।**

एषाम् अक्षाणां त्रिपञ्चाशः त्र्यधिकपञ्चाशत्संख्याकः व्रातः संघः क्रीळति आस्फारे विहरति। अक्षिकाः प्रायेण तावद्भिरक्षैर्दीव्यन्ति हि। तत्र दृष्टान्तः – सत्यधर्मा सविता सर्वस्य जगतः प्रेरकः सूर्यः देवइव। यथा सविता देवो जगति विहरति तद्वदक्षाणां संघ आस्फारे विहरतीत्यर्थः। किंच उग्रस्य चित् क्रूरस्यापि मन्यवे क्रोधाय एते अक्षाः न नमन्ते न प्रह्वीभवन्ति, न वशे वर्तन्ते। तं नमयन्तीत्यर्थः। राजा चित् जगत ईश्वरोऽपि एभ्यः नम इत् नमस्कारमेव देवनवेलायां कृणोति। नावज्ञां करोतीत्यर्थः। ऋसा.

**नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते।**
**दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति।।**

अपि चैतेऽक्षाः नीचा नीचीनस्थले वर्तन्ते। तथापि उपरि पराजयात् भीतानां द्यूतकराणां कितवानां हृदयस्योपरि स्फुरन्ति। अहस्तासः हस्तरहिताः अप्यक्षाः हस्तवन्तं द्यूतकरं कितवं सहन्ते पराजयकरणेनाभिभवन्ति। दिव्याः दिवि भवाः अपकृताः अङ्गाराः अङ्गारसदृशा अक्षाः इरिणे इन्धनरहिते आस्फारे न्युप्ताः शीताः शीतस्पर्शाः सन्तः अपि हृदयं कितवानामन्तःकरणं निर्दहन्ति पराजय-जनितसंतापेन भस्मीकुर्वन्ति। ऋसा.

**जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित्।**
**ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति।।**

क्व स्वित् क्वापि चरतः निर्वेदाद्गच्छतः कितवस्य जाया भार्या हीना परित्यक्ता सती तप्यते वियोगजसंतापेन संतप्ता भवति। माता जनन्यपि पुत्रस्य क्वापि चरतः कितवस्य संबन्धाद्धीना तप्यते पुत्रशोकेन संतप्ता भवति। ऋणावा अक्षपराजयादृणवान् कितवः सर्वतो बिभ्यद्धनं स्तेयजनितम् इच्छमानः कामयमानः अन्येषां ब्राह्मणादीनाम् अस्तं गृहम्, 'अस्तं पस्त्यम्' इति गृहनामसु पाठात्। नक्तं रात्रौ उप एति चौर्यार्थमुपगच्छति। ऋसा.

**स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम्।**
**पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद।।**

कितवं कितवः। विभक्तिव्यत्ययः। अन्येषां स्वव्यतिरिक्तानां पुरुषाणां जायां जायाभूतां स्त्रियं नारीं सुखेन वर्तमानां सुकृतं सुष्ठु कृतं योनिं गृहं च दृष्ट्वाय मज्जाया दुःखिता गृहं चासंस्कृतमिति ज्ञात्वा तताप तप्यते। पुनः पूर्वाह्णे प्रातःकाले बभ्रून् बभ्रुवर्णान् अश्वान् व्यापकानक्षान् युयुजे युनक्ति। पुनश्च वृषलः वृषलकर्मा सः कितवो रात्रौ अग्नेः अन्ते समीपे पपाद शीतार्तः सन् शेते।

ऋसा.

**यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव।**
**तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि।।**

हे अक्षाः वः युष्माकं महतो गणस्य संघस्य यः अक्षः सेनानीः नेता बभूव भवति व्रातस्य च। गणव्रातयोरल्पो भेदः। राजा ईश्वरः प्रथमः मुख्यो बभूव, तस्मै अक्षाय कृणोमि अहमञ्जलिं करोमि। अतः परं धना धनानि अक्षार्थमहं न रुणध्मि न संपादयामीत्यर्थः। एतदेव दर्शयति – अहं दश दशसंख्याका अङ्‌गुलीः प्राचीः प्राङ्‌मुखीः करोमि। तत् एतत् अहम् ऋतं सत्यमेव वदामि। नानृतं ब्रवीमीत्यर्थः। ऋसा.

[१]**अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः।**
**तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सविताऽयमर्यः।।**

हे कितव, बहु मन्यमानः मद्वचने विश्वासं कुर्वंस्त्वम् अक्षैर्मा दीव्यः द्यूतं मा कुरु। कृषिमित् कृषिमेव कृषस्व कुरु। वित्ते कृष्या संपादिते धने रमस्व रतिं कुरु। तत्र कृषौ गावः भवन्ति। तत्र जाया भवति। तत् एव धर्मरहस्यं श्रुतिस्मृतिकर्ता सविता सर्वस्य प्रेरकः अयं दृष्टिगोचरः अर्यः ईश्वरः वि चष्टे विविधमाख्यातवान्।

ऋसा.

[२]**मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु।**
**नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु।।**

हे अक्षाः, यूयं मित्रं कृणुध्वम् अस्मासु मैत्रीं कुरुत। खलु इति पूरणः। नः अस्मान् मृळत सुखयत च। नः अस्मान् धृष्णु धृष्णुना, तृतीयार्थे प्रथमा, घोरेण असह्येन मा अभि चरत मा गच्छत। किंच वः युष्माकं मन्युः क्रोधः अरातिः अस्माकं शत्रुः नि विशताम् अस्मच्छत्रुषु तिष्ठतु। अन्यः अस्माकं शत्रुः कश्चित् बभ्रूणां बभ्रुवर्णानां युष्माकं प्रसितौ प्रबन्धने नु क्षिप्रम् अस्तु भवतु।

ऋसा.

### आदिपुरुषात् चातुर्वर्ण्यसृष्टिः

[१]**ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत।।**

(१) इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति – ब्राह्मण इति। अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषः मुखमासीत् मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियत्वजातिमान् पुरुषः सः बाहू कृतः बाहुत्वेन निष्पादितः। बाहुभ्यामुत्पादित इत्यर्थः। तत् तदानीम् अस्य प्रजापतेः यत् यौ ऊरू तद्रूपः वैश्यः संपन्नः। ऊरुभ्यामुत्पन्न इत्यर्थः। तथाऽस्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषः अजायत। इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' (तैसं. ७।१।१।४) इत्यादौ विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये।

ऋसा.

(२) 'पद्भ्यां शूद्रः' इति व्यधिकरणनिर्देशो वेदानधिकारसूचनार्थः।

मच. १।८७

---

(१) **ऋसं.** १०।३४।१३; **आन.** ५०८ श्रुतिः.

(२) **ऋसं.** १०।३४।१४.

(१) **ऋसं.** १०।९०।१२; **असं.** १९।६।६ न्यः कृतः। ऊरू (न्योऽभवत्। मध्यं); **शुसं.** ३१।११; **तैआ.** ३।१२।५-६; **ममु.** १२।९७ प्रथमचरणमात्रम्, वेदः; **स्मृकौ.** ३ श्रुतिः; **मच.** १।८७ (ब्राह्मणोऽस्य मुखमासीत्, पद्भ्यां शूद्रः) एतावदेव, श्रुतिः : १०।३ सर्वं ममुवत् : १२।९७ वेदः; **शूशि.** २ श्रुतिः; **शूक.** १ चतुर्थचरणमात्रम्, बह्वृचश्रुतिः; **सस्मृ.** ११२ श्रुतिः.

अग्निचयनभूमिकर्षणसंबन्धीनि
सीरयोजनादीनि
कर्माणि

**[1]युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम्।**
**गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्।।**

हे सखायः, यूयं सीरा सीराणि युनक्त युङ्ग्ध्वम् अनडुद्भिः सह। युजेर्लोटि 'तप्तनप्तनथनाश्च' (पासू. ७।१।४५) इति तबादेशः। अत एव अङित्वात् 'श्नसोरल्लोपः' (पासू. ६।४।१११) इत्यल्लोपाभावः। तदर्थं युगा युगानि वितनुध्वं विस्तारयध्वम्। कृते च योनौ इह सीतायां बीजं § ग्राम्यमारण्यं च वपत निधत्त। तिलमाषव्रीह्यादिकं ग्राम्यसप्तकं वेणुश्यामाकनीवारादिकमारण्यबीजसप्तकं च कृष्टाकृष्टयोर्निवपतेत्यर्थः। 'सप्त ग्राम्याः कृष्टे सप्ताऽऽरण्या अकृष्टे' (आपश्रौ. १६।१९।१४) इत्यापस्तम्बः। तथा नः अस्माकं गिरा स्तुत्या प्रशस्त्या सहास्माकं श्रुष्टिः अन्नं सभराः सभरम् असत् भवति भवतु। तथा नेदीय इत् अन्तिकमेव सृण्यः सृणिः अङ्कुशः अङ्कुशवद्वक्रो लवित्रः पक्वं स्तम्बम् एयात् आभिमुख्येन गच्छतु।

ऋसा.

(२) विराजः अन्नस्य व्रीहियवादिरूपस्य, 'अन्नं वै विराट्' (ऐब्रा. १।५) इति श्रुतेः। श्रुष्टिः आशुप्रापकः स्तम्बः सभराः फलभारसहितः नः अस्माकम् असत् भवतु। .... आयवम् आ यौतु प्राप्नोतु। असा.

**[1]सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक्।**
**धीरा देवेषु सुम्नया।।**

कवयः मेधाविनः ऋत्विजः सीरा सीराणि कर्षणसाधनानि युञ्जन्ति योजयन्ति। युगा युगान्यपि पृथक् परस्परं वि तन्वते भिन्नप्रदेशानि कुर्वन्ति। कीदृशाः कवयः? देवेषु विषये धीराः धीमन्तः। किमर्थम् *सुम्नया। सुम्नमिति सुखनाम। सुखेच्छया। सुम्नशब्दात् क्यजन्ताद्भावे 'अ प्रत्ययात्' (पासू. ३।३।१०२) इत्यकारप्रत्ययः। 'सुपां सुलुक्' (पासू. ७।१।३९) इति तृतीयाया आकारः। अथवा धीराः धीमन्तः देवेषु सुम्नया सुम्नेन। देवेषु सुखं भूयादिति। 'सुपां सुलुक्' इति विभक्तेर्याजादेशः। ऋसा.

**[2]निराहावान् कृणोतन सं वरत्रा दधातन।**
**सिञ्चामहा अवतमुद्रिणं वयं सुषेकमनुपक्षितम्।।**

(१) हे सखायः, आहावान्। आहूयन्ते पानार्थं गावोऽत्रेत्याहावाः निपानानि। अत्रौचित्यादग्निचयनप्रदेशकर्षणार्थगोपानसाधनद्रुममयपानपात्राण्युच्यन्ते। तानाहावान् निः कृणोतन निष्कुरुत। आह्वयतेः 'निपानमाहावः' (पासू. ३।३।७४) इति निपातितः। थाथादिस्वरः। कृणोतन। 'तप्तनप्' (पासू. ७।१।४५) इत्यादिना तनप्। पित्त्वेनाङित्त्वाद्गुणः।+ 'श्नाभ्यस्तयोरातः' (पासू. ६।४।११२)

---

§ सीताशब्दस्य लाङ्गलपद्धतिवाचकत्वात् सीतायामकृष्टवाप्यारण्यबीजवापनोक्तिरियं चिन्त्या।

(१) **ऋसं.** १०।१०१।३; **असं.** ३।१७।२ तनुध्वं (तनोत) गिरा च श्रु (विराजः श्नु) मे यात् (मा यवन्); **तैसं.** ४।२।५।५-६ तनुध्वं (तनोत) इत्सृण्यः (इत्सृण्या) मेयात् (माऽयत्); **कासं.** १६।१२ (१४५) तनुध्वं कृते योनौ व (तनोत कृतो योनिर्व) मेयात् (मायत्); **मैसं.** २।७।१२ (१५५) तनुध्वं (तनोत) नेदीय (नेदीया) मेयात् (मायत्); **शुसं.** १२।६८; **शब्रा.** ७।२।२।५ सर्वे पादाः व्यवधानेन.

* अत्र 'क्यचि च' (पासू. ७।४।३३) इतीत्त्वेन सुम्नीया इति न भवति, 'न च्छन्दस्यपुत्रस्य' (पासू. ७।४।३५) इतीत्त्वनिषेधात्।

\+ अत्रत्यो ग्रन्थस्त्रुटितः। द्वितीयचरणव्याख्यानं नास्ति। कृणोतनेति रूपे आकारलोपो नास्ति। दधातनेत्यत्राऽऽकारलोपाभावोऽस्ति, न त्वाकारलोपः। तत्रापि पूर्वत्र गुणे इव पित्त्वेनाङित्त्वमेव हेतुः। त्रुटितो ग्रन्थोऽस्मदीयादर्शपुस्तके तदीयान्यतमादर्शपुस्तकस्थोऽशुद्धः पाठभेदत्वेन निर्दिष्टः। स चेत्थम् – 'तथा वरत्राणि सं दधातन लुङ्गेलबन्धनसाधनानि प्रग्रहान् दधातन स्थापयत। यद्वा प्रधनो रक्षणसाधनरूपो वा आहावः। तस्मिन्नाहावे वरत्रान्युदकोन्ययसाधनान्युच्यन्ते' इति। ततः परम् 'अत्रापि पूर्वप' इत्यादिः 'प्रदेशः' इत्यन्तो यथाश्रुतो ग्रन्थः। तत्र 'श्नाभ्यस्त.... लोपः' इत्ययं ग्रन्थः 'दधातन' इत्यस्मात्परं युक्तः।

(१) **ऋसं.** १०।१०१।४; **असं.** ३।१७।१ सुम्नया (सुम्नयौ); **तैसं.** ४।२।५।५; **कासं.** १६।१२(१४४); **मैसं.** २।७।१२ (१५४); **शुसं.** १२।६७; **शब्रा.** ७।२।२।४ सर्वे पादाः व्यवधानेन.

(२) **ऋसं.** १०।१०१।५; **तैसं.** ४।२।५।५ (सं वरत्रा दधातन निराहावान् कृणोतन। सिञ्चामहा अवटमुद्रिणं वयं विश्वाऽहाऽ-

इत्याकारलोपः। किमर्थमाहावकरणं वरत्रस्थापनं चेति? अत्रोच्यते – वयम् अवतम् अवटं सिञ्चामहै। कीदृशमवटम्? उद्रिणम् उद्राववन्तम्, सुषेकं सुष्ठु सेक्तुं शक्यम्, अनुपक्षितम् अनुपक्षीणं कदाचिदप्युदकोपक्षयरहितम्। ऋसा.

(२) वरत्रा (:) चर्ममयी रज्जुः (? ज्जूः)। ... अवटम् उदकोद्धारणाय संपादितं कूपम् उद्रिणं बहुलोदकयुक्तं यथा भवति तथा सिञ्चामहै, भूतलगतपङ्कोद्धारणेन सेकयुक्तं प्रस्रवणोपेतमवटं कुर्मः। कीदृशमवटम्? विश्वाऽहा सर्वेष्वप्यहःसु अदस्तं कूलपातराहित्येनाहिंसितम्। अक्षितं घर्मकालेऽपि शोषाभावलक्षणम्। तैसा.

**[१]इष्कृताहावमवतं सुवरत्रं सुषेचनम्।**
**उद्रिणं सिञ्चे अक्षितम्।।**

(१) इष्कृताहावं संस्कृताहावं अवतम् अवटं द्रोणं सिञ्चे सेचयामि। पुनः कीदृशमवतम्? सुवरत्रं शोभनवरत्रोपेतम्, सुषेचनं शोभनोदकसेकोपेतम्, उद्रिणम्, उद्राववन्तम्, अक्षितम् अक्षीणम्। ऋसा.

(२) काष्ठपाषाणनिर्मितानां द्रोणीनामन्तस्थितावकाशरूपो योऽयमवटस्तमवटमहं सिञ्चे तत्रोदकं क्षारयामि। कीदृशमवटम्? निष्कृताहावं पार्श्वेषु सच्छिद्रत्वेन निष्कृताः निष्पादिताः आहावाः द्रोण्यः यस्यावटस्य सोऽयं निष्कृताहावः, तं सुवरत्रं कूपादुदकमुद्धर्तुं शोभनाः दृढाः वरत्राः चर्ममयरज्जवः यस्यासौ सुवरत्रः तम्। सुषेचनं सुष्ठु सेक्तुं योग्यान्युदकोद्धरणसाधनानि पात्राणि यस्यासौ सुषेचनः तम्। उद्रिणम् उदकवन्तम्। अक्षितम् उदकस्यागलितत्वेनापक्षयरहितम्। तैसा.

**[२]प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथमित्कृणुध्वम्।**
**द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम्।।**

हे ऋत्विजः, यूयम् अश्वान् व्यापनशीलान् बलीवर्दान् प्रीणीत उचितघासोदकादिप्रदानेन प्रीणयत। यथा क्षेत्रकर्षणाय प्रभवन्ति तथा कुरुतेत्यर्थः। तथा कृत्वा हितं चयनायोचितं कर्षणं जयाथ जयथ संपादयथ। तथा रथं चयनाख्यं हलाख्यं वा स्वस्तिवाहम् इत् सुखस्य वाहकमेव कृणुध्वं कुरुध्वम्। तदर्थं द्रोणाहावम्। आह्वयन्त्यत्र पानार्थं बलीवर्दानित्याहावो जलाधारः पात्रविशेषः। स च द्रोणमयः द्रुममयः आहावो यस्य तादृशम् अवतम् अवटवन्निम्नभूतम् अश्मचक्रं व्याप्तक्रमणमश्ममयचक्रं वा, अंसत्रकोशम् अंसत्रं कवचं यथा कायं रक्षति तद्वदुदकस्य कोशं कोशस्थानीयम्, नृपाणं नृणां कर्मनेतॄणां पानयोग्यम्, ईदृशमवतं सिञ्चत हे ऋत्विजः। ऋसा.

**[१]व्रजं कृणुध्वं स हि वो नृपाणः।।**

हे ऋत्विजः, व्रजं कृणुध्वं व्रजं गोष्ठं कुरुध्वम्। ¶आशिरदोहार्थं गोस्थानं कुरुत। स हि खलु वः नृपाणः नेतॄणां देवानां पातव्यः, देवपानसाधन इति। सांनाय्यरूपेण वाऽऽशिररूपेण वा गोः पयआदिकं देवाः पिबन्ति खलु। ऋसा.

सवित्रादिदेवतानां गवां च प्रार्थनया पशुपालनवृत्तिसमृद्धेराशासनम्

**[२]एह यन्तु पशवो ये परेयुर्वायुर्येषां सहचारं जुजोष।**
**त्वष्टा येषां रूपधेयानि वेदास्मिन् तान् गोष्ठे सविता नि यच्छतु।।**

'एह यन्तु पशवः' इति सूक्तेन गोपुष्टिकामः अभिनवं पयः वत्सलालामिश्रितं संपात्य अभिमन्त्र्य अश्नीयात्। तथा अनेन सूक्तेन गाम् अभिमन्त्र्य दद्यात्। तथैव अनेन उदपात्रम् अभिमन्त्र्य गोष्ठमध्ये निनयेत्। एवं सारूपवत्सौदने गुग्गुलुलवणशकृत्पिण्डान् प्रक्षिप्य पश्चादग्नेस्त्रिरात्रं निखाय चतुर्थेऽहनि उद्धृत्य अनेन संपात्य अभिमन्त्र्य अश्नीयात्। अत्रोक्तं कौशिकेन – 'एह यन्तु पशवः, सं वो गोष्ठेन'

---

दस्तमक्षितम्।।); **कासं.** ३८।१४ (१५६) पूर्वार्धं तैसंवत्, उत्तरार्धे (सिञ्चामहा अवतं वयमुद्रिणं विश्वाहादस्तमक्षितम्।।).

(१) **ऋसं.** १०।१०१।६; **तैसं.** ४।२।५।५ इष्कृ (निष्कृ) वतं (वटं).

(२) **ऋसं.** १०।१०१।७; **नि.** ५।२६.

¶ आशिरं श्रपणीयं क्षीरादि इति वाचस्पत्ये।

(१) **ऋसं.** १०।१०१।८; **असं.** १९।५८।८; **कासं.** ३८।१३ (१४३).

(२) **असं.** २।२६।१-५.

इति प्रक्रम्य 'गृष्टेः पीयुषं श्लेष्ममिश्रमश्नाति गां ददात्युदपात्रं निनयति' इत्यादि (कौसू. १९।१४-१७)। ये पशवः परेयुः परागताः पराङ्मुखाः पुनरावृत्तिरहिता अगमन् ते सर्वे इह अस्मिन् गोष्ठे आ यन्तु पुनरागच्छन्तु। 'इण् गतौ'। 'इणो यण्' (पासू. ६।४।८१) इति यण् आदेशः। ईयुरिति। अस्मादेव धातोर्लिटि उसि पूर्ववत् यणि कृते 'द्विर्वचनेऽचि' (पासू. १।१।५९) इति स्थानिवद्भावात् द्विर्वचनम्। 'दीर्घ इणः किति' (पासू. ७।४।६९) इत्यभ्यासस्य दीर्घः। येषां पशूनां वायुः सहचारम् सहसंचरणं जुजोष सेवते तद्रक्षणार्थं सह वर्तते। जुषेर्व्यत्ययेन परस्मैपदम्। गोष्ठात् विनिर्गतानां गवां वायुरेव रक्षक इत्ययमर्थस्तैत्तिरीयके स्पष्टम् आम्नायते – 'वायवः स्थेत्याह। वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैनान् परिददाति' (तैब्रा. ३।२।१।३-४) इति। येषां पशूनां त्वष्टा एतन्नामको देवः रूपधेयानि। 'भागरूपनामभ्यो धेयः' (वार्तिकम्) इति स्वार्थे धेयप्रत्ययः। गर्भगतवत्सरूपाणि वेद कर्तुं जानाति, करोतीत्यर्थः, 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायते'(तैसं.१।५।९।१-२), 'त्वष्टा वै पशूनां मिथुनानां रूपकृत्' (तैब्रा. ३।८।११।२) इत्यादिश्रुतेः। यद्वा रूपधेयानि रूपाणि धेयानि विधातव्यानि वेद। धात्रः कर्मणि यत्। 'ईद्यति' (पासू. ६।४।६५) इति ईत्वम्। तान् उक्तान् सर्वान् पशून् अस्मिन् गोष्ठे। गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्। तस्मिन् सविता सर्वप्रेरको देवो नि यच्छतु नियमयतु। यथा पुनर्न गच्छन्ति तथा स्थापयतु इत्यर्थः। निपूर्वात् यमेः शपि 'इषुगमियमां छः' (पासू. ७।३।७७) इति छत्वम्। असा.

**इमं गोष्ठं पशवः सं स्रवन्तु बृहस्पतिरा नयतु प्रजानन्।**
**सिनीवाली नयत्वाऽग्रमेषामाजग्मुषो अनुमते नि यच्छ।।**

पशवः गवाद्याः इमम् अस्मदीयं गोष्ठं सं स्रवन्तु संप्राप्नुवन्तु। बृहस्पतिः देवः प्रजानन् आनयनप्रकारं विद्वान् आ नयतु गोष्ठं प्रापयतु। तथा सिनीवाली एतन्नामिका देवपत्नी, दृष्टेन्दुकलामावास्यादेवता वा, एषाम्। कर्मणि षष्ठी। इमान् पशून् अग्रम् पुरोदेशम् आ नयतु। सिनीवालीशब्दो यास्केन बहुधा व्याख्यातः – 'सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ताः। अमावास्ये इति याज्ञिकाः। या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूरिति विज्ञायते। सिनीवाली। सिनम् अन्नं भवति। सिनाति भूतानि। वालं पर्व, वृणोतेः तस्मिन्नन्नवती। वालिनी वा। वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा।' (नि. ११।३१) इति। आजग्मुषः आगतान् पशून् §अनुगते हे अनुगमनकारिणि, हे देवपत्नि, पूर्वपौर्णमास्य (? पूर्वामावास्या)भिमानिदेवते वा, त्वं नि यच्छ गोष्ठे नियमय। आजग्मुष इति। आङ्पूर्वाद्गमेः क्वसुः। शसि 'वसोः संप्रसारणम्' (पासू. ६।४।१३१) इति संप्रसारणम्।

असा.

**सं सं स्रवन्तु पशवः समश्वाः समु पूरुषाः।**
**सं धान्यस्य या स्फातिः संस्राव्येण हविषा जुहोमि।।**

पशवः गवाद्याः सं सं स्रवन्तु सम्यग् आगच्छन्तु। 'प्रसमुपोदः पादपूरणे' (पासू. ८।१।६) इति समो द्विर्वचनम्। तथा अश्वाः। सम् इत्युपसर्गश्रवणात् सर्वत्र स्रवन्तु इति संबन्धः। तथा पुरुषाश्च सेवकाद्याः। धान्यस्य व्रीहियवादेः या स्फातिः अभिवृद्धिः साऽपि (सं)स्रवतु। अहमपि तत्सिद्धये संस्राव्येण संस्रावणार्हेण आज्येन हविषा जुहोमि।

असा.

**सं सिञ्चामि गवां क्षीरं समाज्येन बलं रसम्।**
**संसिक्ता अस्माकं वीरा ध्रुवा गावो मयि गोपतौ।।**

गवाम्। अत्र गोशब्देन गृष्टयो विवक्षिताः। गृष्टीनां क्षीरम् अभिनवं पयः आज्येन सं सिञ्चामि गवां क्षीरं सम् आज्येन संपातयामि। गवाम् इति। '(न) गोश्वन्त्साववर्ण॰' (पासू. ६।१।१८२) इति विभक्त्युदात्तत्वप्रतिषेधः। तथा आज्येन बलम् बलकरम् अन्नं रसम् उदकं च बलकरं रसमेव वा। सं सिञ्चामीति संबन्धः। अस्माकं वीराः पुत्राद्याः संसिक्ताः घृतादिना संसिक्तशरीराः दृढगात्राः। भवन्तु इति शेषः। तदर्थं गोपतौ गोस्वामिनि मयि गावः ध्रुवाः स्थिराः भवन्तु। गोपताविति। 'पत्यावैश्वर्ये' (पासू. ६।२।१८) इति पूर्वपदप्रकृतिस्वरत्वम्। असा.

§ उभयोरप्यादर्शयोर्मूले 'अनुमते' इत्येव पाठः।

**आ हरामि गवां क्षीरमाहार्षं धान्यं रसम्।**
**आहृता अस्माकं वीरा आ पत्नीरिदमस्तकम्।।**

गवां क्षीरमुक्तप्रयोगेण आ हरामि आनयामि। गोसंपत्त्या बहुतरं क्षीरसंपन्नो भवामीत्यर्थः। तथा धान्यं रसं च आहार्षम् आहृतवान् अस्मि। तथा अस्माकं वीराः पुत्राद्याः आहृताः आनीताः प्राप्ताः। पत्नीः पत्न्यश्च। आ इत्युपसर्गश्रवणात् हृता इति संबन्धः। उक्तानां सर्वेषां किं प्रति आहरणम् इति तत् आह – इदं संनिहितम् अस्मत्संबन्धि अस्तकम्। अस्तम् इति गृहनाम। स्वार्थे कः। गृहम्। गोधान्यपुत्रादिभिरस्मद्गृहं सर्वतः पूर्णं भवतु इति भावः।

असा.

**[1]सं वो गोष्ठेन सुषदा सं रय्या सं सुभूत्या।**
**अहर्जातस्य यन्नाम तेना वः सं सृजामसि।।**

'सं वो गोष्ठेन' इति सूक्तेन गोपुष्टिकामः अभिनवं पयो गृष्टेः श्लेष्ममिश्रितं कृत्वा संपात्य अभिमन्त्र्य अश्नाति। तथा अनेन सूक्तेन गाम् अभिमन्त्र्य ददाति गोपुष्टिकाम एव। एवम् अनेन सूक्तेन उदपात्रम् अभिमन्त्र्य गोवाटे निनयति। अपि च करीषं सव्येन हस्तेन आक्रम्य दक्षिणेन अर्धं विक्षिपति गोवाटे गोपुष्टिकामः। तथैव अनेन सूक्तेन सारूपवत्से ओदने शकृत्पिण्डान् गुग्गुलुलवणे च एकीकृत्य पश्चाद् अग्नेर्निखनति त्रिरात्रं यावत्। चतुर्थेऽहनि प्रातः संपात्य अभिमन्त्र्य अश्नाति अविकृतश्चेत् स ओदनः। विकृते तु सति अनशनम्। अनशितेऽपि च फलं संपन्नमिति मन्तव्यम्। उक्तं हि कौशिकेन – "सं वो गोष्ठेन', 'प्रजावतीः'(असं. ७।७५।१), 'प्रजापतिः' (असं.१।७।१) इति गोष्ठकर्माणि। गृष्टेः पीयूषं श्लेष्ममिश्रमश्नाति। गां ददाति। उदपात्रं निनयति। समुह्य सव्येनाधिष्ठायार्धं दक्षिणेन विक्षिपति। सारूपवत्से शकृत्पिण्डान् गुग्गुलुलवणे प्रतिनीय पश्चादग्नेर्निखनति। तिसृणां प्रातरश्नाति†" (कौसू. १९।१४-२०) इति। हे गावः, वः युष्मान् सुषदा। सुखेन सीदन्ति निवसन्ति गावोऽत्रेति सुषत्। सदेरधिकरणे क्विप्। सुखनिवासेन गोष्ठेन गोशालया। सं सृजामसि इति व्यवहितक्रियापदेन सर्वत्र संबन्धः। संसृजामः। तथा रय्या आहारादिरूपेण धनेन संसृजामः। सुभूत्या समृद्ध्या च संसृजामः। तथा अहर्जातस्य। अहन्यहनि जायत इत्यहर्जातः प्राणिविशेषः। तस्य यन्नाम अहर्जात इति तेन नाम्ना वः युष्मान् सं सृजामसि संसृजामः। एतन्नामयोगेन गवां पुत्रपौत्रादिरूपेण अहरहरुत्पत्तिरुक्ता।

असा.

**[1]सं वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः।**
**समिन्द्रो यो धनंजयो मयि पुष्यत यद्वसु।।**

हे गावः, अर्यमा एतन्नामको देवः वः युष्मान् सं सृजतु उत्पादयतु। पूषा पोषकः समृद्धिकरो देवः (सं) सृजतु। बृहस्पतिः देवः सं सृजतु। यः इन्द्रः धनंजयः। (धनानि) शत्रुसंबन्धीनि जयति अपहरतीति धनंजयः। 'संज्ञायां भृतॄवृजि (धारि) सहि' (पासू. ३।२।४६) इत्यादिना खच्। 'अरुर्द्विषदजन्तस्य मुम्' (पासू. ६।३।६८) इति पूर्वपदस्य मुम् आगमः। चित्स्वरेण अन्तोदात्तः। स इन्द्रः सं सृजतु। एवम् अर्यमादिभिरुत्पाद्य संवर्धिता हे गावः, यूयं यद्वसु क्षीरघृतादिकं धनम् अस्ति तत् मयि साधके पुष्यत पोषयत। 'पुष पुष्टौ'। दैवादिकः। 'युष्मदस्मदोर्ङसि, ङयि च' (पासू. ६।२।२११-२१२) इति अस्मद आद्युदात्तत्वम्।

असा.

**[2]संजग्माना अबिभ्युषीरस्मिन् गोष्ठे करीषिणीः।**
**बिभ्रतीः सोम्यं मध्वनमीवा उपेतन।।**

अस्मिन् मदीये गोष्ठे संजग्मानाः पुत्रपौत्रादिभिः संगच्छमानाः। संपूर्वात् गमेरकर्मकात् छान्दसो लिट्। 'समो गम्यृच्छि' (पासू. १।३।२९) इत्यात्मनेपदविधानात् कानच्। अबिभ्युषीः चोरव्याघ्रादिभ्यः अबिभ्यत्यः। 'ञिभी भये' इत्यस्मात् छान्दसे लिटि क्वसुः। उगित्त्वात् ङीप्। 'वसोः संप्रसारणम्' (पासू. ६।४।१३१)। छान्दसो जसः पूर्वसवर्णदीर्घः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। तथा करीषिणीः। करीषं शकृत्। भूम्नि मत्वर्थीय इनिः। चिरकालजीवनेन

---

† 'विकृते संपन्नम्' इत्येतदपि सूत्रमत्रोद्धर्तव्यम्, उद्धृतं वा विनष्टम्, 'विकृते तु ... मन्तव्यम्' इति ग्रन्थेनैतत्सूत्रार्थस्यापि पूर्वमुक्तत्वात्।

(१) **असं.** ३।१४।१.

(१) **असं.** ३।१४।२; **मैसं.** ४।२।१० (६८) पूषा (पोषा) चतुर्थचरणो नास्ति.

(२) **असं.** ३।१४।३; **मैसं.** ४।२।१० (६९) (संजग्माना अविह्रुता अस्मिन् गोष्ठे पुरीषिणीः। स्वावेशा ना आगत।।).

प्रभूतकरीषयुक्ता इत्यर्थः। अनमीवाः। अमीवः रोगः तद्रहिताः। सोम्यं सोममयम्, 'सोमः खलु (वै) सांनाय्यम्' (तैब्रा. ३।२।३।११) इति श्रुतेः। सोमार्हं वा। 'सोममर्हति यः, मये च' (पासू. ४।४।१३६-१३७) इति सोमशब्दात् यप्रत्ययः। तथाविधं मधु मधुरसं क्षीरं बिभ्रतीः धारयन्त्यः पीनोध्न्यः सत्यः उपेतन उपेत उपगच्छत। 'तप्तनप्तनथनाश्च' (पासू. ७।१।४५) इति तस्य तनादेशः। असा.

**'इहैव गाव एतनेहो शकेव पुष्यत।**
**इहैवोत प्र जायध्वं मयि संज्ञानमस्तु वः।।**

हे गावः, यूयम् इहैव मदीये गोष्ठ एव एतन आगच्छत। इहो इह उ। उशब्दः अवधारणे। इहैव शकेव। शका मक्षिका, सा यथा क्षणेनैव समृद्धा असंख्याता भवति तथा यूयं पुष्यत भूयस्यो भवत। उत अपि च इहैव गोष्ठे प्र जायध्वम् पुत्रपौत्रादिरूपेण प्रजाता भवत। 'ज्ञाजनोर्जा' (पासू. ७।३।७९) इति जादेशः। मयि साधके वः युष्माकं समृद्धानां संज्ञानं संप्रीतिः अस्तु। मां विहाय न गच्छतेति भावः। असा.

**शिवो वो गोष्ठो भवतु शारिशाकेव पुष्यत।**
**इहैवोत प्र जायध्वं मया वः सं सृजामसि।।**

हे गावः, वः युष्माकं गोष्ठः वासस्थानं शिवः सुखकरः भवतु। यूयं शारिशाकेव। क्षणेन सहस्रशोऽभिवर्धमानाः प्राणिविशेषाः शारिशाकाः, तद्वत् पुष्यत समृद्धा भवत। इहैवोतेति निगदसिद्धोऽर्थः। असा.

**मया गावो गोपतिना सचध्वमयं वो गोष्ठ इह पोषयिष्णुः।**
**रायस्पोषेण बहुला भवन्तीर्जीवा जीवन्तीरुप वः सदेम।।**

हे गावः, यूयं गोपतिना गोस्वामिना मया सचध्वं समवेता भवत। 'षच समवाये'। भौवादिकः। गोपतिना। गवां पतिः गोपतिः। 'पत्यावैश्वर्ये' (पासू. ६।२।१८) इति पूर्वपदप्रकृतिस्वरत्वम्। इह मदीये गृहे अयं गोष्ठः वः युष्मान् पोषयिष्णुः पोषकः। पोषयतेः 'णेश्छन्दसि' (पासू. ३।२।१३७) इति इष्णुच् प्रत्ययः। 'न लोकाव्यय०' (पासू. २।३।६९) इति षष्ठीनिषेधात् व इति द्वितीया। रायः धनस्य पोषेण। 'षष्ठ्याः पतिपुत्र०' (पासू. ८।३।५३) इति विसर्जनीयस्य सत्वम्। धनसमृद्ध्या बहुलाः असंख्याताः भवन्तीः, जीवन्तीः चिरकालजीवनोपेता वः युष्मान् जीवाः चिरजीविनः वयम् उप सदेम उपगच्छेम। सदेराशीर्लिङि 'लिङ्याशिष्यङ्' (पासू. ३।१।८६) इति अङ् प्रत्ययः। असा.

वाणिज्यव्यवहारे इन्द्रादिकर्तृकाया निर्विघ्नतायाः समृद्धेश्चाऽऽशंसनम्

**'इन्द्रमहं वणिजं चोदयामि स न ऐतु पुरएता नो अस्तु।**
**नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम्।।**

'इन्द्रमहं वणिजम्' इति वाणिज्यलाभार्थं विनियुज्यते। विक्रयार्थं पण्यानि विपणिं नयन् वणिक् कर्म वाणिज्यलाभार्थं कुर्यात्। तद्यथा – 'इन्द्रमहम्' इति सूक्तेन वज्रं वस्त्रं वा पूगीफलं वा अश्वान् वा हस्तिनो वा रत्नादि वा संपात्य अभिमन्त्र्य तत उत्थापयति। सूत्रितं हि – "इन्द्रमहम्' इति पण्यं संपातवदुत्थापयति" (कौसू. ५०।१२) इति। तथा अनेनैव सूक्तेन पण्यकामः इन्द्रं यजते उपतिष्ठते वा। सूत्रितम् – "इन्द्रमहम्' इति पण्यकामः" (कौसू. ५९।६) इति। .... अहं व्यवहर्ता इन्द्रं परमैश्वर्योपेतं देवं वणिजम् वाणिज्यकर्तारं चोदयामि प्रेरयामि प्रवर्तयामि। 'णुद प्रेरणे (? चुद संचोदने)'। सः वणिक्त्वेन प्रेरित इन्द्रः नः अस्मान् ऐतु आगच्छतु। आगत्य च नः अस्माकं पुरएता पुरतो गन्ता अस्तु भवतु। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पासू. ५।३।३९) इति पूर्वशब्दात् असिप्रत्ययः तत्संनियोगेन पुरादेशश्च। शत्रन्तेन समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। किं कुर्वन्? अरातिं वाणिज्यविघातकं शत्रुम्, परिपन्थिनं पर्यवस्थातारं मार्गनिरोधकं चोरम्। 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (पासू. ५।२।८९) इति इनिप्रत्ययान्तो निपातितः। मृगं व्याघ्रादिकं च नुदन् हिंसन् ईशानः ईश्वरः नियन्ता सः इन्द्रः मह्यं वणिजे धनदाः वाणिज्यलाभ-

(१) **असं.** ३।१४।४-६.

(१) **असं.** ३।१५।१-२.

रूपधनप्रदाता अस्तु भवतु। ईशान इति। 'ईश ऐश्वर्ये'। अदादित्वात् शपो लुक्। अनुदात्तेत्त्वात् '०लसार्वधातुक०' (पासू. ६।१।१८६) इति अनुदात्तत्वे धातुस्वरः। धनदाः। ददातेः 'आतो मनिन्०'(पासू. ३।२।७४) इति विच्-प्रत्ययः। असा.

**ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति।**
**ते मा जुषन्तां पयसा घृतेन यथा क्रीत्वा धनमाहराणि।।**

§ते प्रसिद्धाः देवयानाः देवा यान्ति येष्विति देवयानाः। अधिकरणे ल्युट्। देवानुकूल्ययुक्ता इत्यर्थः। यद्वा दीव्यन्ति व्यवहरन्तीति देवाः वणिजः। ते यत्र यान्ति ते देवयानाः। प्रहता इत्यर्थः। ईदृशा बहवः बहुदेशसंबन्धिनः ये पन्थानः मार्गाः द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये संचरन्ति वर्तन्ते। द्यौश्च पृथिवी च द्यावापृथिव्यौ। 'दिवो द्यावा' (पासू. ६।३।२९) इति द्यावादेशः। 'वा छन्दसि' (पासू. ६।१।१०६) इति पूर्वसवर्णदीर्घः। 'नोत्तरपदेऽनुदात्तादौ०' (पासू. ६।२।१४२) इति प्रतिषेधस्य '०अपृथिवीरुद्रपूषमन्थिषु' (पासू. ६।२।१४२) इति पर्युदस्तत्वात् 'देवताद्वन्द्वे च' (पासू. ६।२।१४१) इत्युभयपदप्रकृतिस्वरत्वम्। 'अन्तराऽन्तरेण युक्ते' (पासू. २।३।४) इति द्वितीया। ते मार्गाः पयसा घृतेन च मा मां जुषन्तां सेवन्ताम्। मार्गश्रमनिवर्तकक्षीरघृतोपलक्षितान्नपानोपेता भवन्तु इत्यर्थः। यथा येन प्रकारेण अहं क्रीत्वा पण्यं विक्रीय धनं लाभसहितं मूल्यधनम् आहराणि स्वगृहं प्रापयाणि। तथा जुषन्तामिति संबन्धः। हरतेः प्रार्थनायां लोट्। असा.

**'इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय।**
**यावदीशे ब्रह्मणा वन्दमान इमां धियं शतसेयाय देवीम्।।**

हे अग्ने, इच्छमानः वाणिज्यलाभं कामयमानः। 'इषु इच्छायाम्'। व्यत्ययेन शानच्। 'इषुगमियमां छः' (पासू. ७।३।७७) इति छादेशः। '०अदुपदेशाल्लसार्वधातुक०' (पासू. ६।१।१८६) इति अनुदात्तत्वे शप्रत्ययस्वरः। सोऽहम् इध्मेन इन्धनसाधनेन समित्समूहेन घृतेन आज्येन च सह हव्यं हविः जुहोमि। किमर्थम्? तरसे वेगाय शीघ्रगमनाय, बलाय शरीरसामर्थ्याय च। ब्रह्मणा मन्त्रेण स्तोत्ररूपेण वन्दमानः त्वां स्तुवन् देवीं द्योतमानां व्यवहारकुशलाम् इमां मदीयां धियं बुद्धिं शतसेयाय। शतमिति अपरिमितनाम। असंख्यातधनलाभाय यावत् अहम् ईशे शक्नोमि लब्धुम्। तावज्जुहोमीति संबन्धः। यद्वा यावत् अहम् ईशे ईश्वरः धनाढ्यः भवामि तावत् स्तोत्रेण स्तुवन् द्योतमानाम् इमां धियम्। धीरिति कर्मनाम। इदं वाणिज्यलाभनिमित्तं होमलक्षणं कर्म। करोमीति शेषः। ईश इति। 'ईश ऐश्वर्ये'। लटि उत्तमैकवचने अनुदात्तेत्त्वात् '०लसार्वधातुक०' (पासू. ६।१।१८६) इति अनुदात्तत्वे धातुस्वरः। 'यावद्यथाभ्याम्' (पासू. ८।१।३६) इति निघातप्रतिषेधः। शतसेयायेति। 'षणु दाने'। व्यत्ययेन यत्प्रत्यये '(ये) विभाषा' (पासू. ६।४।४३) इत्यात्वे 'ईद्यति' (पासू. ६।४।६५) इति ईत्वे गुणः। 'यतोऽनावः' (पासू. ६।१।२१३) इत्याद्युदात्तत्वे धातुस्वरः। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। यद्वा धातूनामनेकार्थत्वात् 'षोऽन्तकर्मणि' इत्यस्मादेव यत् प्रत्ययः। असा.

**'इमामग्ने शरणिं मीमृषो नो यमध्वानमगाम दूरम्।**
**शुनं नो अस्तु प्रपणो विक्रयश्च प्रतिपणः फलिनं मा कृणोतु।**
**§इदं हव्यं संविदानौ जुषेथां शुनं नो अस्तु चरितमुत्थितं च।।**

हे अग्ने, नः अस्माकम् इमां शरणिं प्रवासनिबन्धनां व्रतलोपलक्षणां हिंसां मीमृषः क्षमस्व। 'मृष तितिक्षायाम्'। स्वार्थिको णिच्। छान्दसो लुङ्। यम् अध्वानं मार्गं दूरम् अगाम गतवन्तः स्मः। तदध्वगमनजनिताम् इमां शरणिम् इति पूर्वत्रान्वयः। 'इण् गतौ'। लुङि 'इणो गा लुङि' (पासू. २।४।४५) इति गादेशः। यद्वा यमध्वानं दूरम् अगाम इमां शरणिम्। वर्णव्यत्ययः। इमम् अध्वानं नः

---

§ 'ये ते पन्थानो' इति सायणाभिमतो मूले पाठः।

(१) **ऋसं.** ३।१८।३; **असं.** ३।१५।३.

§ 'इदं हव्यम्० येन धनेन०।।', 'तन्मे भूयो० येन धनेन०।।', 'तस्मिन्म इन्द्रो०' इति द्विपाच्चेति सायणाभिमता मन्त्रव्यवस्था। एतामनुसृत्य व्याख्यानविभागः कृतः।

(१) **असं.** ३।१५।४-७.

अस्मान् मीमृषः मर्षय तितिक्षय। तज्जनितदुःखनिवर्तने सह्यं कुर्वित्यर्थः। प्रपणः व्यवहर्तुं पण्यद्रव्यस्य परिमाणकल्पनम्, विक्रयः तस्यैव सलाभमूल्यस्वीकारेण परेषां प्रदानम्, तदुभयमपि नः अस्माकं शुनं सुखं यथा भवति तथा अस्तु भवतु। विक्रय इति। क्रीणातेः 'एरच्' (पासू. ३।३।५६) इति अच्प्रत्ययः। तथा प्रतिपणः। प्रत्यानेतुं परद्रव्यस्य परिमाणकल्पनं प्रतिपण इत्युच्यते। सोऽपि मा माम्। ‡ प्रपणः। 'पण व्यवहारे' इत्यस्मात् 'नित्यं पणः परिमाणे' (पासू. ३।३।६६) इति अच्प्रत्ययः। फलिनं प्रभूतलाभोपेतं कृणोतु करोतु।

इन्द्राग्न्योः प्रकृतत्वात् तावेवात्र प्रयुक्तौ प्रार्थ्येते – हे इन्द्राग्नी, युवां संविदानौ संजानानौ ऐकमत्यं गतौ। संपूर्वाद्वेत्तेरकर्मकात् 'समो गम्यृच्छि०' (पासू. १।३।२९) इत्यात्मनेपदम्। अदादित्वात् शपो लुक्। इदं मया हूयमानं हव्यं हविः जुषेथां सेवेथाम्। युवयोः प्रसादात् नः अस्माकं चरितम् आचरितं विक्रयादिकम् उत्थितं तस्माव्द्यवहारादुत्पन्नं लाभयुक्तं धनं च शुनं सुखमस्तु।

असा.

**येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः।**
**तन्मे भूयो भवतु मा कनीयोऽग्ने सातघ्नो देवान् हविषा नि षेध।।**
**येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः।**
**तस्मिन् म इन्द्रो रुचिमा दधातु प्रजापतिः सविता सोमो अग्निः।।**

हे देवाः, धनेन मूल्यधनेन धनं वृद्धियुक्तं धनम् इच्छमानः कामयमानः अहं येन धनेन प्रपणं व्यवहर्तुं परिमाणकल्पनं चरामि करोमि, तदपि शुनमस्तु इति पूर्वेण संबन्धः।

हे अग्ने, सातघ्नः। सातं लाभः। 'षणु दाने' इत्यस्माद्भावे निष्ठा। 'जनसनखनां सञ्झलोः' (पासू. ६।४।४२) इति आत्वम्। सातं लाभं घ्नन्तीति सातघ्नः। 'बहुलं छन्दसि' (पासू. ३।२।८८) इति हन्तेः क्विप्। शसि 'गमहन०' (पासू. ६।४।९८) इत्युपधालोपः। 'हो हन्तेः०' (पासू. ७।३।५४) इति घत्वम्। लाभप्रतिबन्धकान् देवान् हविषा हूयमानेन नि षेध परितोष्य निवारय। 'षिधु गत्याम्'। भौवादिकः। 'उपसर्गात् सुनोति०' (पासू. ८।३।६५) इत्यादिना षत्वम्।

येन धनेनेत्यादि पूर्ववत्। हे देवाः, युष्मत्प्रसादात् तन्मे मदीयं धनं भूयः बहुतरं भवतु। कनीयः अल्पतरं मा भवतु। भूय इति। बहुशब्दात् ईयसुनि 'बहोर्लोपो भू च बहोः' (पासू. ६।४।५८) इति ईयस आदेर्लोपः बहोर्भूभावश्च। कनीय इति। 'युवाल्पयोः कनन्यतरस्याम्' (पासू. ५।३।६४) इति अल्पशब्दस्य कनादेशः।

येनेति यत् प्रकृतं धनं तस्मिन् मे मदीये धने रुचिं सर्वजनप्रीतिं धनप्रदानेन आदानेच्छाम् इन्द्र आ दधातु स्थापयतु। तथा प्रजापत्यादयश्च रुचिं कुर्वन्तु।

असा.

**उप त्वा नमसा वयं होतर्वैश्वानर स्तुमः।**
**स नः प्रजास्वात्मसु गोषु प्राणेषु जागृहि।।**

हे होतः देवानाम् आह्वातः, वैश्वानर विश्वनरहित अग्ने, त्वा त्वां वयं नमसा हविर्लक्षणेन अन्नेन सह उप स्तुमः उपेत्य स्तोत्रं कुर्मः। सः स्तुतस्त्वं नः अस्माकं प्रजासु पुत्रपौत्रादिलक्षणासु आत्मसु अस्मासु, गोषु अस्मदीयेषु पशुषु, प्राणेषु च जागृहि बुध्यस्व। प्रजादिषु दुःखलेशोऽपि यथा न प्राप्नोति तथा रक्षन् अवहितो वर्तस्वेत्यर्थः। असा.

**[1]विश्वाहा ते सदमिद्भरेमाश्वायेव तिष्ठते जातवेदः।**
**रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम।।**

(१) हे जातवेदः जातानां वेदितः अग्ने, तिष्ठते स्वगृहे नित्यं वर्तमानाय ते तुभ्यं विश्वाहा सर्वाण्यहानि। अत्यन्तसंयोगे द्वितीया। सदमित् सदैव भरेम हरेम। हविरिति शेषः। तत्र दृष्टान्तः – अश्वायेव। स्वगृहे वर्तमानाय अश्वाय काले काले यथा घासः प्रदीयते तद्वत्। हे अग्ने,

‡ प्रतिपणशब्दघटितवाक्यव्याख्यानमध्ये प्रपणशब्दव्युत्पादनं न संगच्छते। उभौ शब्दौ वा ग्राह्यौ निरुपसर्गः पणशब्द एव वा ग्राह्यः। पणो महाराष्ट्रभाषायां 'पेंडी, गड्डी' इत्युच्यते।

(१) **असं.** ३।१५।८; **शुसं.** ११।७५ (अहरहरप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै। रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम।।); **शब्रा.** ६।६।३।८ शुसंवत्, सर्वे चरणाः व्यवधानेन वर्तन्ते.

ते तव प्रतिवेशाः परिचरणादिना प्रत्यासन्नाः वयं रायः धनस्य पोषेण समृद्ध्या इषा इष्यमाणेन अन्नेन च सं मदन्तः संमाद्यन्तः हृष्यन्तः। व्यत्ययेन शप्। मा रिषाम विनष्टा मा भूम। 'रुष रिष हिंसायाम्'। पुष्पादित्वात् च्लेरङादेशः। असा.

(२) हे अग्ने, तव प्रातिवेशाः प्रतिवेशिकाः प्रत्यासन्नाः त्वदाश्रयाः सन्तो वयं मा रिषाम मा हिंसनं प्राप्नुमः मा विनश्येमेत्यर्थः। किं कुर्वन्तः? अहरहः प्रत्यहं संततम् अप्रयावम् अप्रमत्तं यथा तथा अस्मै अग्ने घासं समिद्रूपं भक्ष्यं भरन्तः संपादयन्तः। प्रयवणं प्रयावः, 'यु मिश्रणे' घञ्प्रत्ययः। नास्ति प्रयावः प्रमादो यस्यां क्रियायाम्। तत्र दृष्टान्तः – अश्वायेव तिष्ठते वाजिशालायामवस्थितायाश्वाय यथा प्रत्यहमप्रमादेन घासं यच्छन्ति तद्वत्। पुनः किं कुर्वन्तः? रायः पोषेण धनस्य पुष्ट्या दक्षिणालक्षणेन इषा अन्नेन च संमदन्तः हर्षं कुर्वन्तः। त्वामुत्साहयन्त इत्यर्थः। शुम.

कृष्यङ्गैर्लाङ्गलादिकृताया देवता-
कृतायाश्च कृषिफलाद्यभि-
वृद्धेराशंसनम्

**[१]लाङ्गलं पवीरवत् सुशीमं सोमसत्सरु।**
**उदिद्वपतु गामविं प्रस्थावद्रथवाहनं पीबरीं च प्रफर्व्यम्।।**

(१) पवीरवत्। पवीरं पविः वज्रम्। स्वार्थिको रप्रत्ययः। यद् वज्रमिव निशितधारं लाङ्गलाग्रे प्रोतं सदयोमयं शल्यं भूमिं विपाटयति तत्सहितम्। पविशब्दात् 'कृदिकाराद-क्तिनः' इति ङीष्। सुशीमम् कर्षकस्य सुखकरम्, सोम-सत्सरु व्रीह्यादिसंपादनद्वारा सोमयागनिष्पादकः त्सरुः भूमौ प्रच्छन्नगमनं कर्षकहस्तग्राह्योऽवयवविशेषो वा यस्य तत् तथोक्तम्। 'त्सर छद्मगतौ' इत्यस्मात् 'भृमृशीतृचरित्सरि०' (उणादिसूत्रम् १।७) इत्यादिना उप्रत्ययः। एवंगुणविशिष्टं लाङ्गलम् उदिद्वपतु। इत् इत्यवधारणे। उद्धरतु। संपादयतु इत्यर्थः। किं तत्? इत्याह – गाम् अविं च प्रस्थावत् प्रस्थानयुक्तं गमनसमर्थम्। प्रपूर्वात् तिष्ठतेः 'आतश्चोपसर्गे' (पासू. ३।३।१०६) इति भावे अङ्। रथवाहनम् रथवाहन-समर्थम् अश्वबलीवर्दादिकं पीवरीम् स्थूलां सर्वकामसमर्थां प्रफर्व्यम्, प्रथमवयाः कन्या प्रफर्वी, ताम्।+'वा छन्दसि' (पासू. ६।१।१०६) इति अमिपूर्वत्वस्य विकल्पनात् यण्। कर्षणेन धान्यादिसमृद्धौ सत्याम् एतद्गवादिसमृद्धिर्भवतीति भावः। असा.

(२) इदं लाङ्गलम् उदित्कृषति उद्धृतानि प्रौढलोष्टानि यथा भवन्ति तथैव कृषतु। कीदृशं लाङ्गलम्? .... सुशेवं कर्षकैः सुष्ठु सेवितुं शक्यम्। अतितीक्ष्णत्वेन सहसा भूमिभेदात्कर्षकाणां नास्ति प्रयास इत्यर्थः। सुमतित्सरु कर्षकैः शोभनमिदमिति मन्यमानः सुमति(:)त्सरुः भूमौ निम्नोन्नतत्वेन विच्छिद्य गमनविशेषो यस्य तत् सुमतित्सरु। अनेन कर्षणेन फलाधिक्ये सति गवादिकं यजमानः प्राप्नोतीति शेषः। तैसा.

**[१]घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः।**
**सा नः सीते पयसाऽभ्याववृत्स्वोर्जस्वती घृतवत् पिन्वमाना।।**

(१) घृतेन उदकेन मधुना मधुररसेन समक्ता सम्यग्

---

(१) **असं.** ३।१७।३; **तैसं.** ४।२।५।६ (लाङ्गलं पवीरवं सुशेवं सुमतित्सरु। उदित्कृषति गामविं प्रफर्व्यं च पीवरीम्। प्रस्थावद्रथवाहनम्।।); **कासं.** १६।१२(१४८) (लाङ्गलं पवीरवं सुशेवं सोमपित्सरु। उदिद्वपति गामविं प्रस्थावद्रथवाहनं प्रफर्व्यं च पीवरीम्।।); **मैसं.** २।७।१२ (१५६) 'द्वपतु' इत्येतावदादर्शवत्, शेषं कासंवत्; **शुसं.** १२।७१ (लाङ्गलं पवीरवत्सुशेवं सोमपित्सरु। तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणम्।।); **शब्रा.** ७।२।२।११ शुसंवत्, सर्वे चरणाः व्यवधानेन वर्तन्ते; **मेधा.** १०।८४ तैसंवत्, (प्रस्था... हनम्०)(=).

+ यद्यप्यस्य सूत्रस्य 'अमि पूर्वः' (पासू. ६।१।१०७) इति सूत्रात्पूर्वपठितत्वेन तत्पूर्वविधिविषयत्वं विद्यते, तथापि 'उत्तरसूत्रद्वयेऽपीदं वाक्यभेदेन संबध्यते' इति व्याख्यातत्वादमि-पूर्वत्वविषयकत्वमप्यस्यास्ति।

(१) **असं.** ३।१७।९; **तैसं.** ४।२।५।७ उत्तरार्धे (ऊर्जस्वती पयसा पिन्वमानाऽस्मान्त्सीते पयसाऽभ्याववृत्स्व।।); **कासं.**१६।१२ (१४९) समक्ता (समज्यतां) मता (मतं) उत्तरार्धे (ऊर्जो भागं मधुमत्पिन्वमानाऽस्मान् सीते पयसाऽभ्याववृत्स्व।।); **मैसं.**२।७।१२ (१६०) समक्ता (समज्यतां) उत्तरार्धं कासंवत्; **शुसं.** १२।७० समक्ता (समज्यतां) उत्तरार्धं तैसंवत्; **शब्रा.** ७।२।२।१० शुसंवत् सर्वे चरणाः व्यवधानेन.

अक्ता सिक्ता। 'गतिरनन्तरः' (पासू. ६।२।४९) इति गतेः प्रकृतिस्वरत्वम्। सा सीता विश्वैर्देवैः मरुद्भिश्च अनुमता अङ्गीकृता। हे सीते, सा त्वं पयसा उदकेन नः अस्मान् अभ्याववृत्स्व अभिमुखम् आवर्तस्व। 'बहुलं छन्दसि' (पासू. २।४।७६) इति वृतेः शपः श्लुः। कथंभूता? ऊर्जस्वती बलोपेता, घृतवत् घृतयुक्तम् अन्नं पिन्वमाना सिञ्चन्ती। 'पिवि सेचने'। व्यत्ययेन आत्मनेपदम्। 'अदुपदेशाल्लसार्वधातुक०' (पासू. ६।१।१८६) (इति) अनुदात्तत्वे धातुस्वरः। असा.

(२) इयं सीता..... ऊर्जस्वती पयसा पिन्वमाना जलेनाऽऽप्यायिता वर्तसे(? ते)। हे सीते जलेनाऽऽप्यायिता त्वमस्मान्प्रत्यभ्याववृत्स्व अभित आवृत्ता भव। तैसा.

**'पयस्वतीरोषधयः पयस्वन्मामकं वचः।**
**अथो पयस्वतीनामा भरेहं सहस्रशः।।**

'पयस्वतीः' इत्यस्य धान्यसमृद्धिकर्मसु विनियोगः। 'पयस्वतीरिति स्फातिकरणं शान्तफलं०' इत्यादि 'आ भक्तयातनादनुमन्त्रयते' (कौसू. २१।१-६) इत्यन्तं सूत्रं द्रष्टव्यम्। ओषधयः व्रीहियवाद्याः पयस्वतीः पयस्वत्यः सारवत्यः भवन्तु। 'तसौ मत्वर्थे' (पासू. १।४।१९) इति भसंज्ञया पदसंज्ञाया बाधनात् रुत्वाभावः। तथा मामकं मदीयं वचः वचनं पयस्वत् सारयुक्तं सर्वैरुपादेयं भवतु। अस्मच्छब्दात् शैषिके अणि 'तवकममकावेकवचने' (पासू. ४।३।३) इति ममकादेशः। अथो अपि च पयस्वतीनां सारवतीनाम् ओषधीनां संबन्धि धान्यं सहस्रशः अनेकप्रकारेण आ ‡भरेयम् आहरेयम्। संपादयेयमित्यर्थः। 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' (पासू. ५।४।४२) इति सहस्रशब्दात् शस्प्रत्ययः। असा.

‡ नायं पाठः क्वचिदुपलभ्यते।

(१) **ऋसं.** १०।१७।१४ उत्तरार्धे (अपां पयस्वदित्पयस्तेन मा सह शुन्धत।।); **असं.** ३।२४।१ : १८।३।५६ उत्तरार्धे (अपां पयसो यत्पयस्तेन मा सह शुम्भतु।।); **तैसं.** १।५।१०।२-३ न्मामकं (द्वीरुधां) उत्तरार्धे (अपां पयसो यत्पयस्तेन मामिन्द्र संसृज।।); **कासं.** ३५।४।(२६) (पयस्वतीराप ओषधयः पयस्वन्मामकं वचः। अपां पयस्वद्यत् पयस्तेन नस्सह वर्धताम्।।); **तैब्रा.** ३।७।४।७.

**'वेदाहं पयस्वन्तं चकार धान्यं बहु।**
**संभृत्वा नाम यो देवस्तं वयं हवामहे यो यो अयज्वनो गृहे।।**

पयस्वन्तं सारवन्तं देवम् अहं वेद जानामि। स देवः धान्यं व्रीहियवादिकं बहु चकार अधिकं स्फीतं कृतवान्। तथा संभृत्वा संभरणशीलः यत्र कुत्रापि सर्वत्र स्थितस्य सारांशस्य मधुकरवत् संभर्ता (नाम) एतत्संज्ञः यो देवस्तं देवं वयं हवामहे स्तुतिभिराह्वयामः। संभृत्वेति। संपूर्वात् भृञः 'अन्येभ्योऽपि दृश्यन्ते' (पासू. ३।२।७५) इति क्वनिप्। 'ह्रस्वस्य पिति०' (पासू. ६।१।७१) इति तुक्। अधुना संभर्तव्यं निर्दिशति - यो य इति। अयज्वनः अकृतयागस्य धनाढ्यस्य गृहे यो यः व्रीहियवगोहिरण्यादिरूपः पदार्थः अस्ति। तं सर्वमाहृत्य संभृत्वा नाम देवः अस्मभ्यं प्रयच्छतु इत्यर्थः। अयज्वन इति। 'सुयजोर्ङ्वनिप्' (पासू. ३।२।१०३)। नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। असा.

**इमा याः पञ्च प्रदिशो मानवीः पञ्च कृष्टयः।**
**वृष्टे शापं नदीरिवेह स्फातिं समावहान्।।**

इमाः परिदृश्यमानाः याः प्रदिशः प्रकृष्टा दिशः प्राच्याद्याः पञ्च सन्ति, तथा मानवीः मानव्यः (मनोः) सकाशादुत्पन्नाः पञ्च कृष्टयः। मनुष्यनामैतत्। निषादपञ्चमाश्चत्वारो वर्णाः पञ्चविधा मनुष्याः सन्ति, ते सर्वे इह अस्मिन् यजमाने स्फातिं धनधान्यसमृद्धिं समावहान् समावहन्तु सम्यक् प्रापयन्तु। तत्र दृष्टान्तः - वृष्ट इति। देवे वृष्टे वर्षजलं मुञ्चति सति नदीरिव नद्य इव नदनशीला आपो यथा प्रवाहमध्यस्थं शापं प्राणिजातं वेगेन देशान्तरं प्रापयन्ति तद्वदित्यर्थः। स्फातिमिति। 'स्फायी वृद्धौ' अस्मात् क्तिनि 'तितुत्र०' (पासू. ७।२।९) इति इट्प्रतिषेधः। 'लोपो व्योर्वलि' (पासू. ६।१।६६) इति यकारलोपः। समावहान् इति। उपसर्गद्वययुक्ताद्वहेर्लेटि आडागमः। असा.

**उदुत्सं शतधारं सहस्रधारमक्षितम्।**
**एवास्माकेदं धान्यं सहस्रधारमक्षितम्।।**

उत्सं जलोत्पत्तिस्थानं शतधारं शतसंख्याकाभिरुदकस्य धाराभिर्युक्तं तथा सहस्रधारम् अपरिमितधारोपेतं सत् अक्षितं

(१) **असं.** ३।२४।२-७.

क्षयरहितम्। उत् इति उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। उद्भवतीत्यर्थः। एव एवम् अस्माक अस्माकम्। अन्त्यलोपश्छान्दसः। इदं परिदृश्यमानं कुसूलादिस्थं धान्यं सहस्रधारम् अपरिमितधाराभिर्युक्तं बहुप्रकारेण उपायेन अभिवृद्धं सत् अक्षितं क्षयरहितं भवतु। असा.

**शतहस्त समाहर सहस्रहस्त सं किर।**
**कृतस्य कार्यस्य चेह स्फातिं समावह।।**

हे शतहस्त शतसंख्याकैर्हस्तैरुपेत देव, समाहर। बहुभिस्त्वदीयैर्हस्तैर्धनधान्यं समाहृत्य प्रयच्छेत्यर्थः। हे सहस्रहस्त। इदमपि हेतुगर्भविशेषणम्। यतस्त्वं सहस्रसंख्याकैर्हस्तैरुपेतः अतस्तैर्हस्तैः सं किर अस्मासु धनं विक्षिप। 'कॄ विक्षेपे'। तुदादित्वात् शः। 'ॠत इद्धातोः' (पासू. ७।१।१००) इति इत्त्वम्। तथा सति(कृतस्य नि)ष्पन्नस्य कार्यस्य कर्तुम् अर्हस्य च धनधान्यादेः इह अस्मिन् स्थाने स्फातिं समृद्धिं समावहं संप्राप्तोऽस्मि। असा.

**तिस्रो मात्रा गन्धर्वाणां चतस्रो गृहपत्न्याः।**
**तासां या स्फातिमत्तमा तया त्वाऽभि मृशामसि।।**

गन्धर्वाणां विश्वावसुप्रभृतीनां संबन्धिन्यः तिस्रः मात्राः समृद्धिहेतवः कलाः सन्ति। तथा गृहपत्न्याः पतिव्रतायाः। यद्वा जातावेकवचनम्। गन्धर्वाणां संबन्धिन्यो या गृहपत्न्यः सन्ति तासाम् अप्सरसां स्वभूता याः चतस्रो मात्राः समृद्धिहेतवः अंशाः। तासां मात्राणां मध्ये या स्फातिमत्तमा अतिशयितसमृद्धियुक्ता तया हे धान्य, त्वा त्वाम् अभि मृशामसि अभिमृशामः अभितः संस्पृशामः। अभिमर्शनेन वर्धस्वेत्यर्थः। असा.

**उपोहश्च समूहश्च क्षत्तारौ ते प्रजापते।**
**ताविहाऽऽवहतां स्फातिं बहुं भूमानमक्षितम्।।**

उप समीपम् ऊहति प्रापयति धान्यादिकम् इति उपोहः एतत्संज्ञो देवः। समूहः प्राप्तं धनं समूहति अभिवर्धयतीति समूहकरणसमर्थो देवः समूहः। परस्परसमुच्चयार्थौ चकारौ। तावुभौ हे प्रजापते, ते तव क्षत्तारौ सारथी अभिमतकार्यसंपादकौ। तौ तादृशौ इह अस्मिन् स्थाने स्फातिम् समृद्धिम् आ वहतम् (? ताम्) प्रापयताम्। एतदेव विवृणोति – बहुमिति। बहुम् अनेकप्रकारं भूमानम् धनधान्यविषयं बहुभावम् अक्षितम् क्षयरहितम्। एवमात्मिकां स्फातिम् इति संबन्धः। भूमानम् इति। बहुशब्दात् इमनिचि 'बहोर्लोपो भू च बहोः' (पासू. ६।४।१५८) इति इमनिच आदिवर्णलोपो बहोर्भूभावश्च।। असा.

यमलजननदोषशान्त्यर्थं यमलजनन्या
गोर्ब्राह्मणाय दानं तस्याः
प्रार्थना च

**'एकैकयैषा सृष्ट्या सं बभूव यत्र गा असृजन्त**
**भूतकृतो विश्वरूपाः।**
**यत्र विजायते यमिन्यपर्तुः सा पशून् क्षिणाति रिफती**
**रुशती।।**

'एकैकयैषा सृष्ट्या' इत्यनेन गवाश्वागर्दभीमानुषीणां यमलजनने अद्‌भुते तच्छान्त्यर्थम् आज्यं हुत्वा मातृपुत्रयोर्मूर्ध्नि संपातम् आनीय उदपात्रे उत्तरसंपातं कृत्वा तेनोदकेन आचमनं प्रोक्षणं च कुर्यात्। सूत्रितं हि – 'अथ यत्रैतद्यमसूर्गौः' (कौसू. १०९।१) इति प्रक्रम्य "एकैकयैषा सृष्ट्या सं बभूव' इत्यनेन सूक्तेनाऽऽज्यं जुह्वन्नमीषां मूर्ध्नि समातृपुत्रयोरित्यनुपूर्वं संपातानानयति" (कौसू. १११।६) इत्यादि। एषा विधातृकृता साधारणी सृष्टिः एकैकया एकैकव्यक्त्या सृष्ट्या सृज्यमानया सं बभूव संभूता विधात्रा निर्मिता। एकैकव्यक्त्युत्पत्तिरेव न्याय्या, यमलजननं तु न तथेत्यर्थः। यत्र एकैकव्यक्तिविशिष्टायां शुभसृष्ट्यां भूतकृतः पृथिव्यादीनां भूतानां कर्तारः एतत्संज्ञाः प्रसिद्धा ऋषयः विश्वरूपाः नानावर्णाः गाः गवोपलक्षिता मानुषीवडवाद्याः असृजन्त उदपादयन्। एषा सा साधारणी सृष्टिरिति पूर्वेण संबन्धः। यत्र यस्याम् औत्पत्तिकसृष्टौ अपर्तुः अपकृष्टार्तवबीजोपेता सती गौः यमिनी यमलवत्सोपेता विजायते प्रसूते सा यमलसृष्टिः यजमानसंबन्धिनः पशून् गवाद्यान् क्षिणाति क्षयं प्रापयति। 'क्षि क्षये' इति धातुः। किं कुर्वती? रिफती। 'रिफ रिन्फ हिंसायाम्'। भक्षयन्ती। रुशती चोरव्याघ्रादिभिर्नाशयन्ती। 'रुश हिंसायाम्'। उभावपि तुदादी। असा.

**एषा पशून्त्सं क्षिणाति क्रव्याद्‌भूत्वा व्यद्वरी।**
**उतैनां ब्रह्मणे दद्यात् तथा स्योना शिवा स्यात्।।**

एषा यमसूर्गौः पशून् यजमानगृहे वर्तमानान् गवादीन्

(१) असं. ३।२८।१-४.

सं क्षिणाति संक्षयं विनाशं प्रापयति। 'क्षि क्षये'। व्यत्ययेन श्ना। कथंभूता? क्रव्यात् भूत्वा। क्रव्यं मांसम् अत्तीति क्रव्यात्। 'क्रव्ये च' (पासू. ३।२।६९) इति विट्प्रत्ययः। मांसादनशीला भूत्वा। व्यध्वरी व्यध्वो दुःखहेतुर्दुष्टमार्गः, तद्वती। रो मत्वर्थीयः। यद्वा विरुद्धफलदा अध्वरा अभिचारयज्ञा व्यध्वराः। 'छन्दसीवनिपौ' (वार्तिकम्) इति मत्वर्थीय ईकारः§। उत इति प्रश्ने। एवंविधे दोषे किं कर्तव्यमित्यर्थः। एनां यमजननीं ब्रह्मणे ब्राह्मणाय दद्यात्। तथा सति सा गौः स्योना सुखकरी। यद्वा पुत्रपश्वादिभिः संतता। 'षिवु तन्तुसंताने'। औणादिको नप्रत्ययः। ततः ऊठि कृते 'असिद्धं बहिरङ्गम्०' (व्याकरणपरिभाषा) इत्यस्य 'नाजानन्तर्ये०' (व्याकरणपरिभाषा) इति निषेधात् यण्। शिवा कल्याणात्मिका च स्यात् भवेत्। असा.

**शिवा भव पुरुषेभ्यो गोभ्यो अश्वेभ्यः शिवा।**
**शिवाऽस्मै सर्वस्मै क्षेत्राय शिवा न इहैधि।।**

हे यमलवत्सजननि, पुरुषेभ्यः मनुष्येभ्यः शिवा सुखकरी भव। तथा गोभ्यः अश्वेभ्यश्च शिवा सुखहेतुः भव। अस्मै सर्वस्मै क्षेत्राय शालिगोधूमादिक्षेत्राय शिवा सुखकरी भव। किं बहुना? इह अस्मिन् देशे नः अस्माकं सर्वविषयेषु शिवा एधि सुखप्रदा भव। अस्तेर्लोटि 'ध्वसोरेद्धौ०' (पासू. ६।४।११९) इति एत्त्वे कृते तस्य 'असिद्धवदत्राऽऽभात्' (पासू. ६।४।२२) इति असिद्धत्वात् 'हुझल्भ्यो हेर्धिः' (पासू. ६।४।१०१) इति झलन्तलक्षणं हेर्धित्वं भवति। असा.

**इह पुष्टिरिह रस इह सहस्रसातमा भव।**
**पशून् यमिनि पोषय।।**

इह अस्मिन् गृहे पुष्टिः गवादिसर्वधनस्य पोषः भवतु। ततश्च इह अस्मिन् यजमानगृहे रसः क्षीराज्यादिरूपः समृद्धो भवतु। हे यमिनि यमलवत्सजननि, इह अस्मिन् यजमानगृहे सहस्रसातमा सहस्रसंख्याकं धनं सनोति प्रयच्छतीति सहस्रसाः। 'षणु दाने'। 'जनसनखनक्रमगमो विट्' (पासू. ३।२।६७)। 'विड्वनोरनुनासिकस्याऽऽत्' (पासू. ६।४।४१) इति आत्त्वम्। तत आतिशायनिकस्तमप्। अतिशयेन सहस्रधनस्य दात्री भवेत्यर्थः। एवं यजमानसंबन्धिनः पशून् हे यमिनि, पोषय समर्धय। असा.

[१]**यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः।**
**तं लोकं यमिन्यभिसंबभूव सा नो मा हिंसीत् पुरुषान् पशूंश्च।।**

यत्र यस्मिंश्च लोके सुहार्दः शोभनहृदयाः, सुकृतः शोभनकर्माणः पुरुषाः मदन्ति हृष्यन्ति। 'मदी हर्षे'। व्यत्ययेन शप्। किं कृत्वा? स्वायास्तन्वः स्वकीयात् शरीरात् रोगं ज्वरादिकं विहाय त्यक्त्वा। हृष्यन्तीत्यर्थः। तं तादृशं लोकं यमिनी यमलवत्सजननी गौः अभिसंबभूव। आभिमुख्येन संप्राप्तवती। अतः सा नः अस्माकं पुरुषान् पशूंश्च मा हिंसीत् मा हिनस्तु। असा.

[२]**यत्रा सुहार्दां सुकृतामग्निहोत्रहुतां यत्र लोकः।**
**तं लोकं यमिन्यभिसंबभूव सा नो मा हिंसीत् पुरुषान् पशूंश्च।।**

यत्र यस्मिन् लोके सुहार्दां शोभनहृदयानां शोभनज्ञानानाम्, सुकृतां शोभनं कर्म कृतवताम्। 'सुकर्मपाप०' (पासू. ३।२।८९) इत्यादिना भूते क्विप्। तादृशानाम् अग्निहोत्रहुताम् अग्निहोत्रहोमादिकं जुह्वताम् अग्निहोत्रहोमादिकं शोभनं कर्म प्रतिष्ठितं भवति। यत्र च स्थाने लोकः, लोक्यते अनुभूयते इति लोकः, तस्याग्निहोत्रादेः फलं प्रतिष्ठितं भवति। तं लोकमित्यादि व्याख्यातम्। असा.

मनुष्यैराहूता मनुवत्सका विराट्
मनुष्योपजीव्ये कृषिसस्ये
दुग्धा

[३]**सोदक्रामत् सा मनुष्यानागच्छत् तां मनुष्या उपाह्वयन्तेरावत्येहीति।।**

---

§ "ततः 'सुपां सुलुक्०' (पासू. ७।१।३९) इति छान्दसः सुपो लुक्" इत्यपि वक्तव्यम्। लुगभावे 'सुमङ्गलीरियं वधूः' इतिवत् 'व्यध्वरीः' इति स्यात्।

(१) **असं.** ३।२८।५ : ६।१२०।३ उत्तरार्धं (अश्लोणा अङ्गैरहुताः स्वर्गे तत्र पश्येम पितरौ च पुत्रान्।।); **तैआ.** २।६।२ (यत्र सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वां स्वायाम्। अश्लोणाङ्गैरहुताः स्वर्गे तत्र पश्येम पितरं च पुत्रम्।।).

(२) **असं.** ३।२८।६.

(३) **असं.** ८।१०।४।९-१२.

**तस्या मनुर्वैवस्वतो वत्स आसीत्, पृथिवी पात्रम्।।**
**तां पृथ्वीं वैन्योऽधोक्, तां कृषिं च सस्यं चाधोक्।।**
**ते कृषिं च सस्यं च मनुष्या उपजीवन्ति।**
**कृष्टराधिरुपजीवनीयो भवति य एवं वेद।।**

अवेः उभयतोदतश्च

प्रतिग्रहस्य निन्दा

[1]**आव्यं वा एष प्रतिगृह्णाति योऽविं प्रतिगृह्णाति।।**

अवत्यस्मादिति आव्यम् पापम्। श्लेष्मरोग इति केचित्।

तैसा. १।५।११।५

[2]**आत्मनो वा एष मात्रामाप्नोति य उभयादत्प्रति-गृह्णात्यश्वं वा पुरुषं वा।।**

मात्रां हिंसाम्। उभयतो दन्ता यस्य तत्स्वरूपमुभयादत्।

तैसा. १।५।११।५

चातुर्वर्ण्यम्

[3]**त्रयो वा अन्ये राजन्यात्पुरुषाः – ब्राह्मणो वैश्यः शूद्रः।।**

यज्ञीयकर्षणप्रसङ्गेन लाङ्गल-
पद्धतेः प्रार्थना

[4]**कामं कामदुघे धुक्ष्व मित्राय वरुणाय च।**
**इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः।।**

कर्षणकाले कश्चिद्विशेष उच्यते। कल्पः – "पुच्छाच्छिरोऽधि कृषति 'कामं कामदुघे धुक्ष्व' इति प्रदक्षिणमावर्तयंस्तिस्रस्तिस्रः सीताः संहिताः कृषति मध्ये संभिन्ना भवन्ति दक्षिणात्पक्षादुत्तर(मुत्तर)स्माद्दक्षि(णं दक्षि)णायै श्रोणेरुत्तरमंसमुत्तरायै दक्षिणम्" (आपश्रौ. १६।१९।४-७)। काम्यन्त इति कामाः भोगाः, तान्दोग्धि संपादयतीति कामदुघा लाङ्गलपद्धतिः। हे कामदुघे, मित्रादीनां कामम् अपेक्षितं भोगं धुक्ष्व संपादय। कर्षणकाले प्रादक्षिण्येनाऽऽवृत्तिं विधत्ते– 'दक्षिणा पर्यावर्तन्ते स्वमेव वीर्यमनु पर्यावर्तन्ते। तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरः अथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तन्ते। तस्मात्पराञ्चः पशवो वि तिष्ठन्ते प्रत्यक्ष आ वर्तन्ते' (तैसं. ५।२।५।४) इति। दक्षिणा प्रादक्षिण्येन। दक्षिणभागमवस्थाप्य वामभागस्य परिभ्रामणं प्रादक्षिण्यम्। पुरुषस्य दक्षिणभागे सामर्थ्यसद्भावात्तदेवानुसृत्य पर्यावृत्तिः कृता भवति। यस्माद्दक्षिणभागे वीर्यं श्रुत्यभिप्रेतं तस्माल्लोके सर्वव्यापारे दक्षिणहस्तस्यैव वीर्यातिशय उपलभ्यते। किं चाऽऽदित्यो मेरुं प्रदक्षिणीकुरुते तदप्यत्रानुसृतं भवति। यस्मादत्राऽऽवृत्तिः कृता तस्माल्लोकेऽपि प्रातःकाले पशवः पराञ्चोऽरण्ये गत्वा विविधं संचरन्ति, पुनः सायंकाले गृहं प्रत्यभिमुखा आवर्तन्ते। कर्षणे प्रकारविशेषं विधत्ते – 'तिस्रस्तिस्रः सीताः कृषति त्रिवृतमेव यज्ञमुखे वि यातयति' (तैसं. ५।२।५।४) इति। लाङ्गलपद्धतिः सीता। पुच्छादारभ्य शिरःपर्यन्तं तिस्रः सीताः कृषेत्। तथा दक्षिणात्पक्षादारभ्योत्तरपक्षपर्यन्तं तिस्रः सीताः कृषेत्। तथा दक्षिणस्याः श्रोणेरारभ्योत्तरांसपर्यन्तं तिस्रः सीताः कृषेत्। तथोत्तरस्याः श्रोणेरारभ्य दक्षिणांसपर्यन्तं तिस्रः सीताः कृषेत्। एवं द्वादश सीताः संपद्यन्ते। एवमावृत्तया त्रिसंख्यया त्रिवृत्स्तोममेव यज्ञप्रारम्भे प्रसारयति।

तैसा.

(१) **तैसं.** २।२।६।३.

(२) **तैसं.** २।२।६।३; **बौवि.** १।२।७ (आत्मनो वा एष मात्रामाप्नोति०) श्रुतिः.

(३) **तैसं.** २।५।१०।१.

(४) **तैसं.** ४।२।५।६-७; **कासं.** १६।१२(१५१) उत्तरार्धे (इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः।।); **मैसं.** २।७।१४ (१८८) (कामं कामदुघे धुक्ष्व प्रजाभ्या ओषधीभ्यः। इन्द्रायाग्नये पूष्णे मित्राय वरुणाय च।।); **शुसं.** १२।७२ कासंवत्; **शब्रा.** ७।२।२।१२.

यज्ञीयकर्षणबीजा-
वापप्रकारः

[1]**षड्गवेन कृषति। षड्वा ऋतवः।**
**ऋतुभिरेवैनं कृषति यद्द्वादशगवेन संवत्सरेणैव।।**

बलीवर्दसंख्यां विधत्ते – षड्गवेनेति। कक्ष्यात्रयरूपेणावस्थितेषु त्रिषु युगेषु बध्यमानाः षट्संख्याकाः गावः बलीवर्दाः यस्य लाङ्गलस्य तत्षड्गवम्। पक्षान्तरं विधत्ते– यदिति। कक्ष्याषट्कगतेषु बध्यमाना द्वादशसंख्याका गावो यस्य लाङ्गलस्य तद्द्वादशगवम्। तेन यदि कृषेत् तदानीं द्वादशमासात्मकेन संवत्सरेणैव कर्षणं कृतं भवति।

तैसा. ४।२।५।६

(१) **तैसं.** ५।२।५।२, ४-५.

**+ दक्षिणा पर्यावर्तन्ते स्वमेव वीर्यमनु पर्यावर्तन्ते। तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरः। अथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तन्ते। तस्मात्पराञ्चः पशवो वि तिष्ठन्ते प्रत्यञ्च आ वर्तन्ते। तिस्रस्तिस्रः सीताः कृषति त्रिवृतमेव यज्ञमुखे वि यातयति।।**

**ओषधीर्वपति। ब्रह्मणाऽन्नमव रुन्धे अर्केऽर्कश्चीयते।।**

एतैर्मन्त्रैः साध्यमोषधिवापं विधत्ते – ओषधीरिति। ब्रह्मणा ओषधिवापहेतुभूतमन्त्रसामर्थ्येन अन्नं व्याप्नोति। किंचैवं सति अर्के अर्चनीये स्थाने अर्कः अर्चनीयः अग्निश्चितो भवति। तैसा. ४।२।६।५

**चतुर्दशभिर्वपति सप्त ग्राम्या ओषधयः सप्ताऽऽरण्या उभयीषामवरुद्ध्यै। अन्नस्यान्नस्य वपत्यन्नस्यान्नस्यावरुद्ध्यै।।**

मन्त्रसंख्यां विधत्ते – चतुर्दशभिरिति। तिलमाषव्रीहियवाः प्रियङ्ग्वणवो गोधूमाश्चेति सप्त ग्राम्या ओषधयः। वेणुश्यामाकनीवारजर्तिला गवीधुका मर्कटका गार्मुताश्चेति सप्ताऽऽरण्या ओषधयः। नानाविधस्यान्नस्य बीजवापेन नानाविधमन्नमाप्नोति। तैसा. ४।२।६।५

**कृष्टे वपति। कृष्टे ह्योषधयः प्रतितिष्ठन्ति।।**

यदुक्तं सूत्रकारेण – 'सप्त ग्राम्याः कृष्टे सप्ताऽऽरण्या अकृष्टे' (आपश्रौ. १६।१९।१४) इति, तत्र ग्राम्याणां देशविशेषं विधत्ते – कृष्ट इति। कृष्टे देशे वपति। ग्राम्या इति शेषः। मूलानां सर्वतः प्रसरणे दृढावस्थानं प्रतिष्ठा। तैसा. ४।२।६।५

**अनुसीतं वपति प्रजात्यै।।**

एकैकस्यां सीतायां मूलमारभ्याग्रपर्यन्तमनुगतं वपनं विधत्ते – अनुसीतमिति। प्रभूतत्वेनोत्पत्तिः प्रजातिः। तैसा.

**द्वादशसु सीतासु वपति। द्वादश मासाः संवत्सरः। संवत्सरेणैवास्मा अन्नं पचति।।**

सर्वास्वपि सीतासु बीजावापं विधत्ते – द्वादशस्विति। तैसा. ४।२।६।५

+ अस्य व्याख्यानं 'कामं कामदुघे' इति मन्त्रव्याख्याने (पृ. ९८७) द्रष्टव्यम्।

**[१]तस्माद्राज्ञा राजानमꣳशभुवा घ्नन्ति, वैश्येन वैश्यम्, शूद्रेण शूद्रम्।।**

प्रजापतिकृता चातुर्वर्ण्यस्य सृष्टिः
मुख्यत्वादयो यथाक्रमं गुणाश्च
सहेतुकाः

**[२]प्रजापतिरकामयत प्र जायेयेति। स मुखतस्त्रिवृतं निरमिमीत। तमग्निर्देवताऽन्वसृज्यत, गायत्री छन्दः, रथंतरꣳ साम, ब्राह्मणो मनुष्याणाम्, अजः पशूनाम्। तस्मात्ते मुख्याः, मुखतो ह्यसृज्यन्त।।**

तस्य च प्रजोत्पादनसाधनत्वं यत्पूर्वमुक्तम् 'अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत' (तैब्रा. ७।१।१।२) इति, तदिदं मुखादिस्थानचतुष्टयेन प्रपञ्चयितुं मुखजन्यां सृष्टिं दर्शयति – प्रजापतिरिति। सिसृक्षुः प्रजापतिः तत्साधनत्वेनाग्निष्टोममनुष्ठाय तत्सामर्थ्येन सत्यसंकल्पः सन् 'स्वकीयान्मुखात् त्रिवृदादय उत्पद्यन्ताम्' इति संकल्प्य तथैव निर्मितः सन्नादौ त्रिवृत्स्तोमः सृष्टः। तमनु देवतानां मध्येऽग्निः। तमप्यनु च्छन्दसां मध्ये गायत्री सृष्टा। तामप्यनु साम्नां मध्ये रथंतरं सृष्टम्। तदप्यनु मनुष्याणां मध्ये ब्राह्मणः सृष्टः। तमप्यनु पशूनां मध्येऽजः सृष्टः। यस्मादेते मुखतः सृष्टास्तस्मात् मुख्याः वक्ष्यमाणेभ्यः श्रेष्ठाः।

तैसा.

**उरसो बाहुभ्यां पञ्चदशं निरमिमीत। तमिन्द्रो देवताऽन्वसृज्यत। त्रिष्टुप्छन्दः, बृहत्साम, राजन्यो मनुष्याणाम्, अविः पशूनाम्। तस्मात्ते वीर्यावन्तः, वीर्याद्ध्यसृज्यन्त।।**

अथ द्वितीयस्थानादुत्पत्तिं दर्शयति – उरस इति। पूर्ववद्व्याख्येयम्। वीर्ययुक्ताद्बाहुदेशादुत्पन्नत्वात्तेषामपि सामर्थ्याधिक्यम्। तैसा.

**मध्यतः सप्तदशं निरमिमीत। तं विश्वे देवा देवता अन्वसृज्यन्त। जगती छन्दः, वैरुपꣳ साम, वैश्यो**

(१) **तैसं.** ६।४।८।३.

(२) **तैसं.** ७।१।१।४-६; **शूक.** १ (शूद्रो मनुष्याणामश्वः पशूनाम्) एतावदेव, तैत्तिरीयश्रुतिः : ४ (तस्माच्छूद्रो यज्ञेऽनवक्लृप्तो न हि देवता अन्वसृज्यत) एतावदेव, तैत्तिरीयश्रुतिः : १० (तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः) एतावदेव (=).

**मनुष्याणाम्, गावः पशूनाम्। तस्मात्त आद्याः, अन्नधानाद्ध्यसृज्यन्त। तस्माद्भूयाꣳसोऽन्येभ्यः। भूयिष्ठा हि देवता अन्वसृज्यन्त।।**

अथ तृतीयस्थानादुत्पत्तिं दर्शयति – मध्यत इति। मध्यतः उदरप्रदेशात्। यस्मादन्नाधारादुदरादसृज्यन्त तस्मात् आद्याः भोग्याः। वैश्या वाणिज्येन धनसंपादकत्वाद्भोग्याः। गावश्च क्षीरादिसंपादनेन भोग्याः। यस्मादतिबहून्विश्वान्देवानन्वेते वैश्याः सृष्टास्तस्माद्वाणिज्यकर्तारो लोके भूयांसः।

तैसा.

**पत्त एकविꣳशं निरमितीत तमनुष्टुप्छन्दोऽन्वसृज्यत। वैराजꣳसाम, शूद्रो मनुष्याणाम्, अश्वः पशूनाम्, तस्मात्तौ भूतसंक्रामिणावश्वश्च शूद्रश्च। तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः न हि देवता अन्वसृज्यत। तस्मात्पादावुप जीवतः। पत्तो ह्यसृज्येताम्।।**

अथ चतुर्थस्थानादुत्पत्तिं दर्शयति – पत्त इति। पत्तः पादतः। भूतानां पूर्वोत्पन्नानां ब्राह्मणादीनां संक्रामः सम्यगाक्रमणं तदधीनत्वेनावस्थानमित्यर्थः। सोऽयं भूतसंक्रामो ययोरश्वशूद्रयोस्तावुभौ भूतसंक्रामिणौ। शूद्राणां वर्णत्रयपरिचर्यामुख्यत्वेन तदधीनत्वम्, अश्वानां च वहनेन तदधीनत्वम्। अत्र पूर्वस्थानेभ्य इव पादतो न काचिद्देवता सृष्टा, तस्माद्देवतामनु सृज्यत्वाभावाच्छूद्रो यज्ञे प्रवर्तितुं न योग्यः। यस्मादश्वशूद्रौ पादत उत्पन्नौ तस्मात्पादावेव तयोर्जीवनसाधनम्। शूद्रो हि ब्राह्मणाद्याज्ञया पद्भ्यां यत्र क्वापि गमनागमने कुर्वञ्जीवति, अश्वश्च ब्राह्मणादिवाहिपादै( ? वाही पादै)र्यत्र क्वापि गच्छन्खाद्यं लभते।

तैसा.

क्षत्रियाणां धूम्रवर्णत्वं वैश्यानां शुक्लवर्णत्वं सहेतुकम्

[1]**क्षत्रं वै वरुणः। वरुण ऐवैनं क्षत्रमवगमयति। उभे विशा अवगच्छति देवविशां च मनुष्यविशां च। यच्छुक्लानामादित्येभ्यो निर्वपति तस्माच्छुक्ल इव वैश्यो जायते। यत् कृष्णानां वारुणं तस्माद्धूम्र इव राजन्यः।।**

(१) **कासं.** ११।६ (११-१२).

हिरण्यादिदानोद्देश्यत्वं चातुर्वर्ण्यस्य

[1]**हिरण्यं ब्राह्मणे ददाति। तेजस्तेन परिक्रीणाति। तिसृधन्वं राजन्याय। ओजस्तेन परिक्रीणाति। अष्ट्रां वैश्याय। पुष्टिं तेन परिक्रीणाति। माषकमण्डलुं शूद्राय। आयुस्तेन परिक्रीणाति।।**

कर्षणकाले शुनासीरयोर्धान्यसमृद्ध्यर्थं प्रार्थना

[2]**शुनं नरो लाङ्गलेनानडुद्भि –**
**भंगः फालैः सीरपतिर्मरुद्भिः।**
**पर्जन्यो बीजमीरयानो धिनोतु**
**शुनासीरा कृणुतं धान्यं नः।।**
**शुनासीरा प्रकृषतं कृणुतं धान्यं बहु।**
**भूमिरियमृत्वियवती तां फाला उपजिघ्नन्तु।।**

ब्राह्मणवैश्यशूद्राणां गुणाः

[3]***ब्राह्मणकल्पस्ते प्रजायामाजनिष्यत आदाय्यापाय्यावसायी यथाकामप्रयाप्यः।।**

आदानं प्रतिग्रहः, तच्छील आदायी। प्रतिग्रहश्च ब्राह्मणगुणः। ऋत्विग्भूत्वा सोममा समन्तात्पाययतीति आपायी। तदेतद्याजनमपि ब्राह्मणगुणः। अवसम् अन्नम्, तस्य संबन्धि याचनम् आवसः, तमावसमेति प्राप्नोतीति आवसायी। परगृहे सदा भोजनयाचनमपि ब्राह्मणगुणः। कामम् इच्छाम् अनतिक्रम्य यथाकामम्, तदनुसारेण प्रयाप्यः निर्वासयितुं शक्यः, क्षत्रियवैश्यादिवच्छौर्यधनाद्यभावात्। यः कोऽप्यागत्य दुर्बलं ब्राह्मणं तद्गृहात्तदीयग्रामाद्वा निष्कासयितुमिच्छति, तदानीमयं ब्राह्मणो दुर्बलत्वात्तेन निःसारयितुं शक्यते। एवमेते चत्वारो धर्मा ब्राह्मणगुणाः। ऐब्रासा.

* क्षत्रियकर्तृके सोमयागे यजमानचमसस्य न्यग्रोधफलादिरसैः प्रपूरणं तस्यैव क्षत्रिययजमानेन भक्षणं च विधास्यते। तत्र यद्यनभिज्ञैर्ऋत्विग्भिः सोमेन दध्ना अद्भिश्च क्रमेण ब्राह्मणवैश्यशूद्रयोग्यैर्भक्षैश्चमस आपूर्यते तदाऽऽपतिते सोमादिभक्षणे ब्राह्मणादिकल्पा संततिः क्षत्रियकुले प्रजायेतेति दोषोक्तिरियम्।

(१) **कासं.** ३७।१ (१-२).

(२) **मैसं.** २।७।१२ (१५८-१५९).

(३) **ऐब्रा.** ३५।३.

**वैश्यकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य बलिकृदन्यस्याऽऽद्यो यथाकामज्येयः।।**

वैश्यश्च वाणिज्यं कुर्वन् अन्यस्य राज्ञः बलिकृत् बलिं पूजां करोति करं प्रयच्छतीत्यर्थः। अत एवान्यस्य राज्ञः आद्यः भक्ष्यः अधीनः भवतीत्यर्थः। तस्य राज्ञः कामम् इच्छाम् अनतिक्रम्य ज्येयः अभिभवनीयः भवति। 'ज्या अभिभवे' इति धातुः। त एते करप्रदानपराधीनत्वतिरस्कार्यत्वाख्या वैश्यगुणाः। ऐब्रासा.

**शूद्रकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यः।।**

शूद्रश्च अन्यस्य उत्तमवर्णत्रयस्य प्रेष्यः प्रेषणीयः भृत्यः भवति। तथा कामोत्थाप्यः मध्यरात्रादौ यदाकदाचिद्दिन इच्छा भवति तदानीमयमुत्थाप्यते। तथा तदीयं कामम् इच्छाम् अनतिक्रम्य वध्यः कुपितेन स्वामिना ताड्यः भवति। एते शूद्रगुणाः। ऐब्रासा.

त्रिवृदादिस्तोमानां ब्राह्मणादिवर्णरूपत्वम्

**[1]ब्रह्म वै स्तोमानां त्रिवृत्। क्षत्रं पञ्चदशः। ब्रह्म खलु वै क्षत्रात्पूर्वम्। ‡ब्रह्म पुरस्तान्म उग्रं राष्ट्रमव्यथ्यमसदिति। विशः सप्तदशः। शौद्रो वर्ण एकविंशः। विशं चैवास्मै तच्छौद्रं च वर्णमनुवर्त्मानौ कुर्वन्ति। अथो तेजो वै स्तोमानां त्रिवृत्। वीर्यं पञ्चदशः। प्रजातिः सप्तदशः। प्रतिष्ठैकविंशः। तदेनं तेजसा वीर्येण प्रजात्या प्रतिष्ठयाऽन्ततः समर्धयति। तस्माज्ज्योतिष्टोमः स्यात्।।**

तस्मिन्नग्निष्टोमे ये त्रिवृदादयश्चत्वारः स्तोमास्तान्ब्राह्मणादिवर्णचतुष्टयरूपेण तेजआदिगुणचतुष्टयरूपेण च प्रशंसति – ब्रह्मेति। प्रजापतेर्मुखबाहुमध्यदेहपादेभ्य उत्पत्तिसाम्यात्त्रिवृदादिस्तोमानां ब्राह्मणादिवर्णचतुष्टयरूपत्वम्। तत्र ब्राह्मणपूर्वकं राष्ट्रं मदीयमुग्रमव्यथनीयं वाऽस्त्वित्यभिप्रायेण क्षत्रियस्य त्रिवृत्पञ्चदशौ क्रमेणानुष्ठेयौ। सप्तदशैकविंशयोरनुष्ठानं वैश्यशूद्रौ वर्णौ क्षत्रियस्यानुगामिनौ †कुर्वन्ति। त्रिवृदादिस्तोमानां तेजोवीर्यप्रजननप्रतिष्ठासाधनत्वात्तत्तद्रूपत्वम्। तेषामनुष्ठानेनैनं क्षत्रियमन्ततो यज्ञस्यान्ते तेजआदिभिः समृद्धं करोति। तस्मात्क्षत्रियस्य त्रिवृदादिस्तोमचतुष्टयविशिष्टो ज्योतिष्टोमः स्यात्।

ऐब्रासा.

ब्राह्मणा देवतारूपाः शूद्रा असुररूपाः, ऋग्यजुःसामभ्यः क्रमेण वैश्यक्षत्रियब्राह्मणानामुत्पत्तिः

**[2]दैव्यो वै वर्णो ब्राह्मणः। असुर्यः शूद्रः।।**

तत्र देवस्वरूपो ब्राह्मणः, असुरस्वरूपः शूद्रः।

तैब्रासा.

**[3]ब्राह्मणो वै सर्वा देवताः।।**

**[3]ऋग्भ्यो जातं वैश्यं वर्णमाहुः। यजुर्वेदं क्षत्रियस्याऽऽहुर्योनिम्। सामवेदो ब्राह्मणानां प्रसूतिः। पूर्वे पूर्वेभ्यो वच एतदूचुः।।**

यथा देवव्यवहारस्य सर्वस्य हि वेदत्रयमेव कारणम्, एवं मनुष्यव्यवहारस्यापीत्येतद्वचः पूर्वे सृष्ट्यादावुत्पन्ना महर्षयः पूर्वेभ्यः तदानींतनेभ्यः स्वशिष्येभ्यः ऊचुः।

तैब्रासा.

हस्तिप्रतिग्रहनिषेधः

**[4]तस्मादाहुर्न हस्तिनं प्रतिगृह्णीयात्।।**

---

‡ अत्राऽऽदर्शपुस्तके महाराष्ट्रभाषानुवादपुस्तके च 'ब्रह्म पुरस्तात्' इति व्यस्ते पदे मुद्रिते। श्रीविश्वबन्धुशास्त्रिभिरपि स्वीये वैदिकपदानुक्रमकोशे द्वयोः पदयोस्तत्तद्वर्णानुक्रमेणैतत्स्थलं निर्दिष्टम्, समस्तपदं न संगृहीतम्। सायणाचार्याणां तु 'ब्रह्मपुरस्तात्' इति समस्तपदं राष्ट्रविशेषणमभिमतम्। व्यस्तपाठे "मे राष्ट्रमुग्रमव्यथ्यं चास्तु' इत्युद्देशेन ब्रह्म ब्रह्मरूपः त्रिवृत्स्तोमः पुरस्तात् क्षत्ररूपात्पञ्चदशस्तोमात् पूर्वम् अनुष्ठेयः" इत्यर्थो बोध्यः।

(१) **ऐब्रा.** ३६।४.

† 'यजमानाः... अनुष्ठानं यत् कुर्वन्ति तत्... अनुगामिनौ कुर्वन्ति' इत्यध्याहारेणान्वयो बोध्यः। यथाश्रुते अनुष्ठानस्य कर्तृत्वप्रतीतेर्बहुवचनं न संगच्छते।

(१) **तैब्रा.** १।२।६।७.

(२) **तैब्रा.** १।४।४।२ : १।४।४।५; **मुक्ता.** ७०; **आन.** ६४१.

(३) **तैब्रा.** ३।१२।९।२; **नन्द.** २।२३० (सामवेदो ब्राह्मणानां प्रसूतिः) एतावदेव.

(४) **शब्रा.** ३।१।३।४.

वर्णानां चतुष्ट्वम्

**[1]चत्वारो वै वर्णाः ब्राह्मणो राजन्यो वैश्यः शूद्रः।।**

गमनव्यवहारे क्वचिद्ब्राह्मणस्यैव
क्वचित् क्षत्रियस्यैव प्राथम्यम्,
वैश्यशूद्रयोर्न कदाऽपि
प्राथम्यम्

**[2]अथैतान् पशूनावर्तयन्ति। तेषामजः प्रथम एति, अथ रासभः, अथाश्वः। अथेतो यतामश्वः प्रथम एति, अथ रासभः, अथाजः। क्षत्रं वा अन्वश्वो वैश्यं च शूद्रं चानु रासभो ब्राह्मणमजः।।**

**तद्यदितो यतामश्वः प्रथम एति तस्मात् क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति। अथ यदमुत आयतामजः प्रथम एति तस्माद्ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति। अथ यन्नैवेतो यतां नामुतो रासभः प्रथम एति तस्मान्न कदाचन ब्राह्मणश्च क्षत्रियश्च वैश्यं च शूद्रं च पश्चादन्वितः। तस्मादेवं यन्ति अपापवस्यसाय। अथो ब्रह्मणा चैवैतत् क्षत्रेण चैतौ वर्णावभितः परिगृह्णीतेऽनपक्रमिणौ कुरुते।।**

अथैतेषां पशूनामावर्तनं विधत्ते – अथैतान् पशूनिति। स्वस्थानावस्थितानामेवाऽऽवर्तनम्। तत्राऽऽगन्तॄणां पशूनां क्रमं विधत्ते – तेषामजः प्रथम इति। पूर्वम् इतः मृदाहरणार्थं यतां गन्तॄणां पशूनां मध्ये अश्वः प्रथमो गतः, रासभः मध्ये, पश्चात् अजः। अधुना अजः प्रथमः, रासभः मध्ये, पश्चात् अश्वः। गमनागमनयोरुभयोरपि रासभस्य मध्येऽवस्थानम्, अश्वाजयोरेव पौर्वापर्यम्। क्षत्रं वा अन्वश्वः इत्यादेरयमर्थः – अश्वादिपशुत्रयस्य क्षत्रियादिजातिसंबन्धः। क्षत्रियस्य राज्ञ इतरेभ्यस्त्रिभ्यो वैश्यशूद्रब्राह्मणेभ्यः पुरस्ताद्गमनं लोके दृष्टमिति तत्र यथापूर्वं गमनसमये अश्वस्य प्राथम्यम्, तथा ब्राह्मणस्यानूचानस्य स्वव्यतिरिक्तवर्णत्रयात् प्रथमगमनं च दृश्यत इति अधुना अजस्य प्राथम्यम्। वैश्यशूद्रयोः क्षत्रियाद्ब्राह्मणाद्वा पुरस्ताद्गमनं नास्तीति मृदाहरणसमये पुनरागमनसमये च रासभस्य न प्राथम्यम्। तस्मात् कारणादेवं यन्ति अश्वपूर्वाः प्रथमे, अधुनाऽजपूर्वा आगच्छन्ति अपापवस्यसाय पापपरिहाराय। ब्राह्मणेन क्षत्रियेण च एतौ वैश्यशूद्रौ अभितः मध्ये परिगृह्णीते अनपक्रमिणौ अनपक्रान्तौ कुरुते।

शब्रासा.

(१) **शब्रा.** ५।५।४।९.

(२) **शब्रा.** ६।४।४।१२-१३.

यज्ञीयकर्षणेतिकर्तव्यता
समन्त्रव्याख्याना

**[1]प्रायणीयेन प्रचर्य सीरं युनक्ति। एतद्वा एनं देवाः संस्करिष्यन्तः पुरस्तादन्नेन समार्धयन्। तथैवैनमयमेतत्संस्करिष्यन् पुरस्तादन्नेन समर्धयति। सीरं भवति। सेरᳫ हैतद्यत् सीरम्। इरामेवास्मिन्नेतद्दधाति।।**

प्रायणीयान्ते शंय्वन्ते प्राक्सोमनिवपनात् सीरयोजनं विधत्ते – प्रायणीयेन प्रचर्य सीरं युनक्तीति। प्रायणीयेन प्रायणीयशेषेण प्रचारं कृत्वा सीरं हलं युनक्ति युञ्ज्यात्। विहिते सीरयोजने प्रजापतेः सीरलक्षणेनान्नेन समर्धनद्वारा देवकर्तृकं संस्कारं प्रतिपादयति – एतद्वा एनमिति। एतत् एतर्हि एतस्मिन्नवसरे खलु एनं पितरं प्रजापतिं विस्रस्तावयवं चयनेन संस्करिष्यन्तो देवाः पुरस्तात् ततः प्रागेव सीरलक्षणेनान्नेन समृद्धमकुर्वन्। एवमेव अयं यजमानोऽपि एनं प्रजापतिं चित्याग्निरूपेण संस्करिष्यन् ततः प्रागेव सीरलक्षणेनान्नेन समर्धयति। नामनिर्वचनेन तस्यान्नरूपतामाविष्करोति – सीरं भवतीत्यादिना। इरया अन्नेन सह वर्तत इति 'सेरम्। एतदेव पारोक्ष्येण सीरमित्युच्यते। अतः कर्षणसाधनत्वेन सीरस्य विधानात् इराम् अन्नम् एव अस्मिन् संस्क्रियमाणे चित्याग्निरूपे प्रजापतौ एतत् एतर्हि दधाति स्थापयति। शब्रासा.

**औदुम्बरं भवति। ऊर्ग्वै रस उदुम्बरः। ऊर्जैवैनमेतद्रसेन समर्धयति। मौञ्जं परिसीर्यं त्रिवृत्। तस्योक्तो बन्धुः।।**

सीरोपादानभूतं वृक्षविशेषं विधाय स्तौति – औदुम्बरं भवतीति। उदुम्बरस्य विकारः औदुम्बरः। ऊर्ग्वै रस उदुम्बर इति। ऊर्क् बलकरमन्नम्, तदात्मको रस एव उदुम्बरवृक्षात्मना परिणतः। अत एव श्रूयते – 'देवा वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठत्' (शब्रा. ३।२।

(१) **शब्रा.** ७।२।२।२-२१.

१।३३) इति। ऊर्जैवैनमित्यादि। ऊर्ग्रूपेण रसेनेत्यर्थः। सीरयोजनार्थानां रज्जूनां प्रकृतिद्रव्यं विधत्ते – मौञ्जमिति। परिसीर्यं परितः सीरस्य योजनायोपयुज्यमानं दाम मौञ्जं मुञ्जतृणैर्निर्मितं त्रिवृत् त्रिगुणं च कर्तव्यम्। तस्योक्तो बन्धुरिति। तस्य मौञ्जत्वस्य त्रिवृत्त्वस्य च स्तावकं 'सैषा योनिरग्नेर्यन्मुञ्जः' (शब्रा. ६।३।१।२६) इत्यादिकम्, 'त्रिवृदग्निर्यावानग्निः' (शब्रा. ६।३।१।२५) इत्यादि च वाक्यं प्रागाम्नातम् अत्रानुसंधेयमित्यर्थः।

शब्रासा.

**सोऽग्नेर्दक्षिण॰श्रोणिं जघनेन तिष्ठन्नुत्तरस्या॰सस्य पुरस्ताद्युज्यमानमभिमन्त्रयते — 'सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक्' इति। ये विद्वा॰सस्ते कवयः। ते सीरं च युञ्जन्ति युगानि च वितन्वते पृथक्। 'धीरा देवेषु सुम्नया' (शुसं. १२।६७) इति। यज्ञो वै सुम्नम्। धीरा देवेषु यज्ञं तन्वाना इत्येतत्॥**

युज्यमानस्य सीरस्य स्थानविशेषविशिष्टमभिमन्त्रणं विधत्ते – सोऽग्नेरिति। चेष्यमाणस्याग्नेर्यावान् भूभागः शौल्बेन मानेन चतुरस्रीकृतः तस्य दक्षिणां श्रोणिं जघनेन दक्षिणापरेण तस्य पश्चात् तिष्ठन् उत्तरांसस्य अग्निक्षेत्रसंबन्धिन उत्तरपूर्वकोणस्य पुरस्तात् युज्यमानं सीरं युगबलीवर्दादिभिः सह रज्ज्वा बध्यमानं 'सीरा युञ्जन्ति' इति मन्त्रद्वयेन अभिमन्त्रयते। अभिमन्त्रणं नाम मन्त्रेण स्मर्यमाणस्यार्थस्येक्षणपूर्वकमनुसंधानम्। उक्तं हि – 'मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्। सेक्षणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्। एतदेवाभिमन्त्रणलक्षणं चेक्षणावधि॥' इति। अत्र च सीरयोजनस्य तदभिमन्त्रणस्य च भिन्नदेशकर्मकर्तव्यतया यौगपद्याय कर्तृभेदोऽवसीयते। तत्राभिमन्त्रणस्य (? तत्र सीरयोजनस्य) संस्कार्यतया प्रधानत्वात् सीरयोजनमध्वर्युः कुर्यात्, तत्संस्कारात्मकमभिमन्त्रणं तु द्वितीयः प्रतिप्रस्थाता कुर्यात्। उक्तं हि सूत्रभाष्यकृता कर्कोपाध्यायेन "प्रतिप्रस्थाताऽभिमन्त्रयते 'सीरा युञ्जन्ति' इत्यनेन मन्त्रेण, योजनं तु प्रधानत्वादध्वर्युः" (काश्रौ. १७।२।११) इति। तत्र 'सीरा युञ्जन्ति' इति गायत्री प्रथमो मन्त्रः। तस्याः पूर्वार्धमनूद्य व्याचष्टे – सीरा युञ्जन्तीति। ये विद्वांसस्ते कवय इति। मन्त्रगतेन कविशब्देन सीरयोजनप्रकारं सम्यग्जानानास्तदभिज्ञा विवक्षिता इत्यर्थः। सीरं चेति। 'सुपां सुलुक्' (पासू. ७।१।३९) इत्यनेन मन्त्रे सीरशब्दात् परस्य अमः आकारः। युगानि चेति। 'शेश्छन्दसि बहुलम्' (पासू. ६।१।७०) इति युगशब्दात् परस्य शेर्मन्त्रे लोप इत्यर्थः। उत्तरार्धमनूद्य व्याचष्टे – धीरा देवेष्विति। सुम्नशब्दात् परस्य द्वितीयैकवचनस्य या आदेशः। सुखहेतुत्वात् यज्ञः खलु सुम्नशब्दाभिधेयः। वितन्वत इति प्रकृतस्य कर्मणोऽनुषङ्गमाह– तन्वाना इत्येतदिति। तदयं मन्त्रार्थः – कवयः सीरं च युञ्जन्ति कर्मणो योग्यं बध्नन्ति, षड्द्वादशादिसंख्यानामनडुहां योजनाय पृथक् भेदेन युगानि च वितन्वते विस्तारयन्ति। किं कुर्वन्तः? देवेषु सुम्नम् अग्निचयनलक्षणं यज्ञं तन्वानाः विस्तारयन्त इति। अत एव धीराः तदुपायभूतया धिया युक्ताः इति।

शब्रासा.

**'युनक्त सीरा वि युगा तनुध्वम्' इति। युञ्जन्ति हि सीरं वि युगानि तन्वन्ति। 'कृते योनौ वपतेह बीजम्' इति। बीजाय वा एषा योनिष्क्रियते यत् सीता। यथा ह वा अयोनौ रेतः सिञ्चेत् एवं तद्यदकृष्टे वपति। 'गिरा च श्रुष्टिः सभरा असन्नः' इति। वाग्वै गीः। अन्न॰श्रुष्टिः। 'नेदीय इत्सृण्यः पक्वमेयात्' (शुसं. १२।६८) इति। यदा वा अन्नं पच्यतेऽथ तत् सृण्योपचरन्ति। द्वाभ्यां युनक्ति गायत्र्या च त्रिष्टुभा च। तस्योक्तो बन्धुः॥**

युनक्तेति त्रिष्टुप्। तद्द्वितीयोऽभिमन्त्रणमन्त्रः। पुरा परोक्षवदुक्तोऽत एवास्य पादेन प्रत्यक्षवदुच्यते। हे यजमानपुरुषाः, सीरा, पूर्ववदाकारः, सीरं युनक्त बध्नीत। युजेः लोटि मध्यमपुरुषे बहुवचनस्य 'तप्तनप्तनथनाश्च' (पासू. ७।१।४५) इति तबादेशः। अत एव श्नमोऽल्लोपाभावः। युगा, पूर्ववच्छेर्लोपः। युगानि च वितनुध्वं विस्तारयतेति। प्रत्यक्षवदुक्तार्थं श्रुतिः स्वयं परोक्षवद्व्याचष्टे – युञ्जन्ति हीति। सीरं युञ्जन्ति युगानि च वितन्वन्ति। कवय इति शेषः। द्वितीयपादमनूद्य व्याचष्टे – बीजाय वा इति। बीजवपनाय सीतारूपा योनिर्विधीयते। विपक्षे दोषमुद्भावयति – यथा ह वा इति। अकृष्टे अलिखिते यत् यदि

वपति तर्हि अयोनौ गर्भाशयादन्यत्र यथा रेतःसेकस्तथा व्यर्थं भवेदित्यर्थः। तृतीयपादमनूद्य तत्रत्ययोर्गीःश्रुष्टिशब्दयोः क्रमेण वागन्नार्थतामाह – वाग्वै गीरन्नं श्रुष्टिरिति। चतुर्थपादमनूद्य तत्तात्पर्यमाह – यदा वा इति। यदा खलु समये अन्नं व्रीहियवादि स्वयं पक्वं भवति, अथ तदानीं सृण्या दात्रेण उपचरन्ति लुनन्तीत्यर्थः। मन्त्रार्थस्तु – हे यजमानपुरुषाः, सीरा सीरं हलं युनक्त योजयत, युगा युगानि वितनुध्वं विशेषेण योक्त्रप्रभृतिभिर्विस्तारयत। इह क्षेत्रे योनौ स्थाने कृते संस्कृते सति बीजं व्रीह्यादि वपत निक्षिपतेत्यर्थः। केन साधनेनेत्यपेक्षायामाह – गिरा चेति। गिरा वाचा 'या ओषधीः' (शुसं. १२।७५) इत्यादिवक्ष्यमाणमन्त्ररूपया, चशब्दाच्चमसेनापि, वपतेति संबन्धः। श्रुष्टिः व्रीह्यादिकान्नजातिः, सभराः फलकृतेन भरसा भरणेन सह वर्तत इति सभराः। अमितफलेति यावत्। तादृशी नः अस्माकं यथा असत् भवेत्। इत्शब्दोऽनर्थकः। सृण्यः अङ्कुशाकारस्य लवनसाधनस्य दात्रस्य नेदीयः अन्तिकतमं पक्वं व्रीह्याद्यन्नं यथा आ इयात् आगच्छेत्, तथा वपतेति संबन्धः। 'सृणिरङ्कुशो भवति सरणात्' (नि. ५।२८) इति हि यास्कः। तच्च युञ्जमानाभिमन्त्रणं द्वाभ्यां गायत्रीत्रिष्टुब्भ्यां कुर्यादित्याह – द्वाभ्यामिति। तस्य द्विसंख्यायोगस्यार्थवादो 'द्वाभ्यां प्रवृणक्ति, द्विपाद्यजमानः' (शब्रा. ६।६।२।७) इत्यादिना षष्ठकाण्डे प्रागाम्नात इत्याह – तस्योक्त इति। शब्रासा.

**स दक्षिणमेवाग्रे युनक्ति। अथ सव्यम्। एवं देवत्रा। इतरथा मानुषे। षड्गवं भवति, द्वादशगवं वा, चतुर्वि॰शतिगवं वा। संवत्सरमेवाभिसंपदम्।।**

विहिते सीरयोजने दक्षिणसव्ययोर्धुर्ययोः पौर्वापर्यं विधत्ते – स दक्षिणमेवाग्र इति। सः अध्वर्युः दक्षिणमेव धुर्यं प्रथमं युञ्ज्यात्, तदनु सव्यं वामं धुर्यमित्यर्थः। एवम् उक्तकरणं देवत्रा देवेषु कृतं स्यात्। मनुष्यव्यवहारे तु इतरथा सव्यः पूर्वो दक्षिणः पश्चादिति भेदः। सीरयोजने अनडुहां वैकल्पिकं संख्यात्रितयं विधत्ते – षड्गवमित्यादिना। §षट् गावः समाहृताः षड्गवम्। 'तद्धितार्थोत्तरपदसमाहारे च' (पासू. २।१।५१) इति समाहारे तत्पुरुषैकदेशो द्विगुः। ततः 'गोरतद्धितलुकि' (पासू. ५।४।९२) इति टच् समासान्तः। तथा द्वादशगवं चतुर्विंशतिगवं चेति पक्षौ। तत्रापि पक्षद्वये तथैव समासः समासान्तश्च। 'षट् द्वादश चतुर्विंशतिं वा युनक्ति पूर्वेणोत्तरांसम्' (काश्रौ. १७।२।१०-११) इति हि सूत्रम्। संख्यात्रितयेऽप्युपपत्तिमाह – संवत्सरमेवेति। संपद्यत इति संपत्। षड्तुद्वादशमासचतुर्विंशत्यर्धमाससंपत्त्यात्मको यस्तं तादृशं संवत्सरमभिलक्ष्य त्रयोऽप्येते पक्षा उपपन्ना इत्यर्थः।

शब्रासा.

**अथैनं विकृषति। अन्नं वै कृषिः। एतद्वा अस्मिन्देवाः संस्करिष्यन्तः पुरस्तादन्नमदधुः। तथैवास्मिन्नयमेतत् संस्करिष्यन्पुरस्तादन्नं दधाति।।**

अथ चित्याग्निक्षेत्रमध्ये विकर्षणं विधत्ते – अथैनमिति। एनम् आत्मानम्। तदेव कर्षणमन्नात्मना स्तौति – अन्नं वा इति। अन्नं खलु कृषिः, तद्धेतुत्वात्। कृष्टे एव हि सम्यगन्नं पच्यते। कर्षणमेव तद्देवकर्तृकान्नाधानतया स्तौति- एतद्वा इति। पुरस्तात् चयनात् प्रागेव देवाः संस्कारं करिष्यन्तः अस्मिन् आत्मनि एतत् एतेन कर्षणेन अन्नम् एव स्थापितवन्तः। तथैवायं यजमानोऽपि इति।

शब्रासा.

**स वा आत्मानमेव विकृषति, न पक्षपुच्छानि। आत्मंस्तदन्नं दधाति। यदु वा आत्मन्नन्नं धीयते तदात्मानमवति तत्पक्षपुच्छानि। अथ यत्पक्षपुच्छेषु नैव तदात्मानमवति न पक्षपुच्छानि।।**

अथ पक्षपुच्छानि विहायाऽऽत्मन्येव कर्षणं विधत्ते – स वा आत्मानमिति। आत्मंस्तदिति। तत् तेन विकर्षणेन आत्मन् आत्मनि अन्नम् एव स्थापितवान् भवति। अथाऽऽत्मन्यन्नाधानं स्तौति – यदु वा इति। आत्मन् आत्मनि यदेव अन्नम् धीयते स्थाप्यते तत् एवान्नं पक्षपुच्छसहितम् आत्मानं रक्षति। पक्षपुच्छेष्वन्नाधानं त्वकिंचित्करमित्याह – अथ यदित्यादिना।

शब्रासा.

§ 'तद्धितार्थोत्तर०' इति सूत्रे समाहारशब्दः कर्मव्युत्पन्न इति प्राचीनमतानुसारेणेदं विग्रहवाक्यम्। पञ्चखट्व्यादीन्याबन्तोत्तरपदद्विगुरूपाणि कर्मव्युत्पत्तिपक्षे न सिध्यन्तीत्यतो भावव्युत्पन्नः समाहारशब्द इति नव्यमते 'षण्णां गवां समाहारः' इति विग्रहवाक्यम्।

**स दक्षिणार्धेनाग्नेरन्तरेण परिश्रितः प्राचीं प्रथमा१सीतां कृषति – *'शुन१सुफाला विकृषन्तु भूमि१शुनं कीनाशा अभियन्तु वाहैः' (शुसं. १२।६९) इति। शुन१शुनमिति। यद्वै समृद्धं तच्छुनम्। समर्धयत्येवैनामेतत्।।**

अथ परिश्रितां समीपे आत्मनो दक्षिणभागेऽन्तरतः प्रागायतां सीतां विधत्ते – स दक्षिणार्धेनेति। परिश्रितोऽन्तरेण तत्संलग्नमेव चित्याग्नेः आत्मनो दक्षिणार्धेन दक्षिणपार्श्वे प्रागपवर्गां प्रथमां सीतां लाङ्गलपद्धतिं कृषेत्। 'अन्तराऽन्तरेण युक्ते' (पासू. २।३।४) इति परिश्रिच्छब्दे द्वितीया। तत्र पूर्वार्धोपादानेन मन्त्रं विधाय तत्रत्यशुनशब्दस्य समृद्धार्थवाचकतया प्रथमसीतायाः समर्धनमाह – शुनं सुफाला इत्यादिना। मन्त्रस्यायमर्थः – शुनम् इति सुखनाम। तच्च क्रियाविशेषणम्। सु शोभनाः फालाः लाङ्गलाग्रस्थिताः कुशीभेदाः शुनं सुखं यथा स्यात् तथा भूमिं विकृषन्तु विलिखन्तु। फाला इति। 'ञिफला विशरणे' इति। फालयन्ति भूमिं विदारयन्ति ते फालाः। कीनाशाः कर्षकाः वाहैः अनडुद्भिः सहिताः शुनं सुखम् अभियन्तु अभिगच्छन्तु। 'कीनाशस्तु कदर्ये स्याद्राक्षसे कर्षुके यमे' इत्यनेकार्थतिलकः। शुनासीरा। द्विवचनस्य 'सुपां सुलुक्' (पासू. ७।१।३९) इति डादेशः। वाय्वादित्यावित्यर्थः। तौ हविषा उदकेन तोशमाना भूमिं निघ्नन्तौ। तोशतिर्वधकर्मा। अस्मे अस्मभ्यम् ओषधीः व्रीह्यादिकान्यन्नानि सुपिप्पलाः शोभनफलोपेताः कर्तन कुरुतम्। 'शुनो वायुः शु एत्यन्तरिक्षे। सीर आदित्यः सरणात्' (नि. ९।४०) इति हि यास्कः। हविःशब्दः उदकनामसु 'कम्, अन्नम्, हविः' (निघण्टुः १।१२) इति पठितः। कर्तनेति 'तप्तनप्तनथनाश्च' (पासू. ७।१।४५) इति तनप्। द्वित्वे बहुवचनं छान्दसम्। शन्नासा.

**अथ जघनार्धेनोदीचीम् – 'घृतेन सीता मधुना समज्यताम्' इति। यथैव यजुस्तथा बन्धुः। 'विश्वैर्देवैरनुमता मरुद्भिः' इति। विश्वे च वै देवा मरुतश्च वर्षस्येशते। 'ऊर्जस्वती पयसा पिन्वमाना' इति। रसो वै पयः। ऊर्जस्वती रसेनान्नेन पिन्वमानेत्येतत्। 'अस्मान्त्सीते पयसाऽभ्याववृत्स्व' (शुसं. १२।७०) इति। अस्मान्त्सीते रसेनाभ्याववृत्स्वेत्येतत्।।**

ततो दक्षिणश्रोणेरारभ्योदगपवर्गां पश्चिमपार्श्वे द्वितीयां सीतां विधत्ते – अथ जघनार्धेनेति। तत्र मन्त्रं विधत्ते – घृतेनेति। तत्र तु प्रथमपादो निगदव्याख्यात इत्याह – यथैव यजुरिति। द्वितीयपादे अनुमतेति शब्दस्य विश्वदेवानां मरुतां च वृष्टेरीशितृत्वं प्रयोजकमिति व्याचष्टे – विश्वे च वै देवा इति। वर्षस्य वृष्टेः ईशते प्रयोजका भवन्ति। 'अधीगर्थ' (पासू. २।३।५२) इति कर्मणि षष्ठी। तृतीयपादे पयः-शब्दस्य रसोऽर्थः इति व्याचष्टे – अन्नेन पिन्वमानेत्येतदिति। चतुर्थेऽपि पयःशब्दो रसवचन एव। मन्त्रस्यायमर्थः – सीता पश्चिमत उदीची क्रियमाणा लाङ्गलपद्धतिः मधुना घृतेन मधुरेणोदकेन समज्यतां संसिच्यताम्। 'घृतमित्युदकनाम जिघर्तेः सिञ्चतिकर्मणः' (नि. ७।२४) इति हि यास्कः। विश्वैर्देवैः वृष्टेरीशानैः मरुद्भिश्च गणदेवैः अनुमता अभ्यनुज्ञाता, तथा पयसा रसेन ऊर्जस्वती बलकररसोपेता, तथा पिन्वमाना सेचनं कुर्वती, अन्नेनेति शेषः। तथा श्रुतिरेव व्याचष्टे – अन्नेन पिन्वमानेत्येतदिति। एवं स्तुते हे सीते, त्वम् अस्मान् अभ्याववृत्स्व अतिशयेनाभिमुखमावृत्ता भवेत्यर्थः। शन्नासा.

**अथोत्तरार्धेन प्राचीम् – 'लाङ्गलं पवीरवत्' इति। लाङ्गलम१रयिमदित्येतत्। 'सुशेव१सोमपित्सरु' इति। अन्नं वै सोमः। 'तदुद्वपति गामविं प्रफर्व्यं च पीवरीम्। प्रस्थावद्रथवाहणम्।।' (शुसं. १२।७१) इति। एतद्धि सर्वं सीतोद्वपति।।**

अथोत्तरपार्श्वे प्रागपवर्गां तृतीयां सीतां विधत्ते – अथोत्तरार्धेनेति। 'प्रकृत्या साधुः' इतिवत् तृतीया सप्तम्यर्थे। तत्र मन्त्रं विधत्ते – लाङ्गलमिति। तत्र प्रथमपादे +भूमेः

---

* संपूर्णो मन्त्रोऽत्र विनियुक्तः। व्याख्यानानुरोधेनार्धमेवात्र गृहीतम्। अत एव भाष्ये उत्तरार्धमपि व्याख्यातम्। 'शुनं नः फालाः' इति ऋसंमन्त्रे शुसंपाठभेदो द्रष्टव्यः।

+ ग्रन्थोऽयं व्याकुल इव भाति। मूले पवीरवदिति लाङ्गलविशेषणं रयिमदिति व्याख्यातम्। तदुपपादयितुं फालापरपर्यायस्य पवीरशब्दस्य लक्षणया रयिपरत्वमत्र विवक्ष्यते। तच्च 'फालस्य भूमिखननद्वारा श्रीरूपान्ननिष्पादनसाधनत्वात्' इत्येवं वक्तव्यम्। यथाश्रुतग्रन्थान्नायमर्थो बुध्यते।

खननेन श्रीरूपान्ननिष्पादनद्वारा फालस्य साधनत्वात् लक्षणया पवीरवद्रयिमदिति व्याचष्टे – लाङ्गलं रयिमदिति। द्वितीये पादे सोमपित्सरु इति पदैकदेशभूतस्य सोमशब्दस्यान्नमर्थ इत्याह – अन्नं वै सोम इति। उत्तरार्धपरिष्ठितस्य पदार्थजातस्य सीतैवोद्गमयित्रीत्याह – एतद्धि सर्वं सीतोद्वपतीति। उद्वपति उद्गमयतीत्यर्थः। मन्त्रार्थस्तु – लाङ्गलं हलं पवीरवत्। पविः धारा, सा अस्यास्तीति पवीरं फालः। रो मत्वर्थे। §दैर्घ्यं तु छान्दसम्। तत् पवीरमस्य लाङ्गलस्यास्तीति पवीरवत् फालसंयुक्तमित्यर्थः। शेवमिति सुखनाम। सुष्ठु शोभनं शेवयति सुखयति तत् सुशेवम्। सोमं पिबतीति सोमपाः यजमानः, तस्मिन् सोमपि यजमाने त्सरति पापादिकं नाशयतीति सोमपित्सरु। यद्वा सोमम् अन्नं पाति रक्षति स सोमपाः, तस्मिन् वर्तमानम् अशनायादुःखं त्सरति नाशयति इति तथा। श्रुतेरभिमतमेतद्व्याख्यानम्। सोमपीत्यत्र सप्तम्याः अलुक् छान्दसः। यदित्थंभूतं लाङ्गलं तत् कर्तृ गवादिरथवाहनान्तम् उद्वपति उद्गमयति। गां गोजातिम्, अविं मेषजातिम्, प्रफर्व्यं प्रथमयुवतिं तरुणीमित्यर्थः। फर्वतिर्गतिकर्मा। प्रकर्षेण फर्व्या गम्या ताम्। छान्दसो ह्रस्वः। कीदृशीं ताम्? पीवरीम् उन्नतस्तनकपोलाम्। प्रस्था प्रस्थानम् तद्वत् उत्कृष्टजवोपेतं रथवाहणम् अश्वं रथं वहतीति यानम्।

शब्रासा.

**अथ पूर्वार्धेन दक्षिणाम् – 'कामं कामदुघे धुक्ष्व मित्राय वरुणाय च। इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः॥' (शुसं. १२।७२) इति। सर्वदेवत्या वै कृषिः। एताभ्यो देवताभ्यः सर्वान्कामान्धुक्ष्वेत्येतत्। इत्यग्रे कृषति, अथेति, अथेति। तद्दक्षिणावृत्। तद्धि देवत्रा॥**

अथ पूर्वपार्श्वे दक्षिणापवर्गां चतुर्थीं सीतां विधत्ते – अथ पूर्वार्धेनेति। तत्र मन्त्रः – 'कामं कामदुघे' इति। मन्त्रस्यायमर्थः – हे कामदुघे कामानां प्रपूरणे हे सीते, मित्राय वरुणाय च तथा इन्द्राय अश्विभ्यां युग्मदेवाभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः च कामं काम्यमानं फलं धुक्ष्व प्रपूरय। इतिशब्दो मन्त्रसमाप्तिद्योतकः। कृषेः सर्वदेवतासंबन्धद्वारा मन्त्रोक्तदेवताभ्यः कामप्रपूरणमाशास्यमिति मन्त्रतात्पर्यमाह – सर्वदेवत्या वै कृषिरिति। इत्थं दक्षिणादिचतसृषु दिक्षु प्रादक्षिण्येन कृतं कर्षणमभिनयेन निर्दिश्य स्तौति – इत्यग्र इति। अग्रे प्रथमम् इति अनेन प्रकारेण 'स दक्षिणार्धेन' इत्युक्तलक्षणेन दक्षिणतः प्राचीं सीतां कृषति। अथ अनन्तरम् इति अनेन प्रकारेण 'अथ जघनार्धेन' इत्युक्तलक्षणेन पश्चिमतः उदीचीं कृषति। अथ अनन्तरम् इति अनेन प्रकारेण 'अथोत्तरार्धेन' इत्युक्तलक्षणेन उत्तरतः प्राचीं कृषति। अथ अनन्तरम् इति अनेन प्रकारेण 'अथ पूर्वार्धेन' इत्युक्तलक्षणेन पूर्वस्यां दिश्युदग्दक्षिणायतां सीतां कृषति। तत् एवं सति दक्षिणावृत् प्रादक्षिण्येनाऽऽवृत्तिर्भवति। तत् खलु देवत्रा देवसंबन्धिनि कर्मणि योग्यम्। तदुक्तमापस्तम्बेन – 'यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोति' (आपश्रौ. २४।२।१५) इति।

शब्रासा.

**चतस्रः सीता यजुषा कृषति। तद्यच्चतसृषु दिक्ष्वन्नं तदस्मिन्नेतद्दधाति। तद्वै यजुषा। अद्धा वै तद्यद्यजुः। अद्धो तद्यदिमा दिशः॥**

उक्तं कर्षणं समन्त्रकमनूद्य स्तौति – चतस्र इति। 'स दक्षिणार्धेन' इत्यादिना चतसृषु दिक्षु क्रमेण प्रोक्ताः चतस्रः सीताः 'शुनं सुफाला विकृषन्तु भूमिम्' (शुसं. १२।६९) इत्यादिना यजुषा यजुर्वेदपठितमन्त्रेणेत्यर्थः। चतसृषु दिक्ष्वित्यादि। प्रागादिषु दिक्षु यत् प्रसिद्धं कृष्टपच्यं व्रीहियवादिकम् अन्नम् अस्ति तत् अस्मिन् अग्नौ यजमाने वा एतत् एतेन कर्षणेन दधाति स्थापयति। यजुर्मन्त्रेण कर्षणं प्रकारान्तरेण स्तौति – तद्वा इति। तत् खलु कर्षणं यजुषा क्रियते। यजुरिति यदस्ति तत् अद्धा वै अनुष्ठेयार्थप्रकाशकत्वात् प्रत्यक्षतो विस्पष्टम्, इमाः प्रागाद्याः दिशः च प्रत्यक्षत्वात् विस्पष्टतराः, अतो यजुषो दिशां चाद्धात्वसाम्यात् दिक्षु यजुषा कर्षणं युक्ततरमिति भावः।

शब्रासा.

**अथाऽऽत्मानं विकृषति। तद्यदेव संवत्सरेऽन्नं तदस्मिन्नेतद्दधाति। तूष्णीम्। अनिरुक्तं वै तद्-**

§ वाक्यभेदात् तुशब्दाच्च रस्य लोकवेदसाधारणत्वं प्रतीयते। तत्तु रविधायकसूत्रवार्तिकपरिगणितशब्देषु पविशब्दस्यासत्त्वाच्चिन्त्यम्।

**यत्तूष्णीम्। सर्वं वा अनिरुक्तम्। सर्वेणैवास्मिन्नेतदन्नं दधाति। इत्यग्रे कृषति, अथेति, अथेति, अथेति। तद्दक्षिणावृत्। तद्धि देवत्रा।।**

अमन्त्रकं द्वादशसंख्याकानां सीतानां कर्षणं विधाय स्तौति – अथाऽऽत्मानमित्यादिना। यदेव संवत्सर इति। सीतानां संवत्सरसंबन्धिनां मासानां च द्वादशसंख्यासाम्यात् कृत्स्ने संवत्सरे यदेव व्रीहियवादिकमन्नं पच्यते तत् सर्वम् अस्मिन् अग्नौ एतत् एतेन द्वादशसीताकर्षणेन दधाति स्थापयतीत्यर्थः। अमन्त्रकत्वमनूद्य स्तौति – तूष्णीमिति। तूष्णीम् अमन्त्रं कृषेत्। तूष्णीम् इति यदस्ति तत् अनिरुक्तं वै, मन्त्रवाक्येन कस्यचिदर्थस्य निष्कृष्यानभिधानात्। अत एव तदनिरुक्तं सर्वात्मकम्। अतः सर्वेणैव साधनेन अस्मिन् अग्नौ अन्नं स्थापितं भवतीत्यर्थः। पूर्ववदत्राप्या( ? प्य)-भिनयेन कर्षणप्रकारं निर्दिश्य स्तौति – इत्यग्र इति। इति अनेन प्रकारेण अग्रे प्रथममात्मनो दक्षिणार्धमारभ्य उत्तरार्ध-पर्यन्तं कृषति कर्षणं कुर्यात्। अथ अनन्तरम् इति अनेन प्रकारेण दक्षिणां श्रोणिमारभ्य उत्तरांसपर्यन्तमक्ष्णया विकृषेत्। अथ अनन्तरम् इति अनेन प्रकारेण पश्चाद्भाग-मारभ्य पूर्वार्धपर्यन्तं विकृषेत्। एतदनन्तरम् इति अनेन प्रकारेणोत्तरां श्रोणिमारभ्य दक्षिणांसपर्यन्तं विकृषेत्। इममेवार्थमभिप्रेत्य सूत्रितम् – 'तूष्णीं तिस्रस्तिस्रः प्रदक्षिणं तिर्यगनूके अक्ष्णया श्रोण्यंसयोरनूके श्रोण्यंसयोः' (काश्रौ. १७।२।१५-१९) इति। तत् तथा उक्तप्रकारेण कर्षणे सति प्रदक्षिणावर्तनं सिध्यति। तच्च देवत्रा देवेषु योग्यम्। 'देवमनुष्य०' (पासू. ५।४।५६) इत्यादिना सप्तम्यर्थे त्राप्रत्ययः।

शब्रासा.

**तिस्रस्तिस्रः सीताः कृषति। त्रिवृदग्निः। यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति।।**

**द्वादश सीतास्तूष्णीं कृषति। द्वादश मासाः संवत्सरः। संवत्सरोऽग्निः। यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति।।**

विहितानाममन्त्रकाणां चतसृणां सीतानां प्रत्येकं त्रित्वं विधाय स्तौति – तिस्रस्तिस्र इति। त्रिवृदग्निरित्यादि। स्तोत्रियानवकात्मको हि त्रिवृत्स्तोमः। अग्नेरपि रुद्रादि-नामाष्टकाभिधेयैरष्टाभिरग्निरूपैः स्वात्मना च नवसंख्यो-पेतत्वात् त्रिवृत्त्वम्। तथा हि 'तमब्रवीद्रुद्रोऽसि' (शब्रा. ६।१।३।१०) इत्यारभ्य 'तान्येतान्यष्टावग्निरूपाणि कुमारो नवमः सैवाग्नेस्त्रिवृत्ता' (शब्रा. ६।१।३।१८) इति षष्ठे समाम्नातम्। एष च यावान् यत्परिमाणविशिष्टोऽग्निः, अस्य अग्नेः यावती यत्परिमाणविशिष्टा मात्रा अवयवः तावता तादृक्परिमाणविशिष्टेन कृत्स्नेन चाग्निरूपेण अस्मिन् चीयमानेऽग्नौ यजमाने वा एतत् एतेन त्रिसंख्या-युक्तेन कर्षणेन अन्नं धारयति। † एवं सर्वत्र त्रिवृदग्निरिति वाक्यशेषो व्याख्येयः। शब्रासा.

**ता उभय्यः षोडश संपद्यन्ते। षोडशकलः प्रजापतिः। प्रजापतिरग्निः। आत्मसंमितमेवास्मिन्नेतदन्नं दधाति। यदु वा आत्मसंमितमन्नं तदवति, तन्न हिनस्ति। यद्भूयो हिनस्ति तत्। यत्कनीयो न तदवति।।**

अमन्त्रकसीतासंख्यां संभूय प्रशंसति – ता उभय्य इति। उभय्यः उभयविधाः समन्त्रकामन्त्रकभेदेन द्विविधाः संभूय षोडशसंख्याका भवन्ति। षोडशकलः षोडशावयवसमुदायो हि स्थूलशरीराभिमानी विराडात्मकः प्रजापतिरभिधीयते। तथा हि – तस्य ज्ञानेन्द्रियाणि पञ्च, तथा कर्मेन्द्रियाणि, मन एकम्, पञ्चभिर्भूतैर्वा प्राणैर्वा सह षोडश कलाः। गतमन्यत्। आत्मसंमितमिति। आत्मना शरीरेण समानं मितम्, न तु न्यूनमधिकं वेत्यर्थः। आत्मसंमितान्नस्य तृप्ति-हेतुतामाह – यदु वा इति। यत् खलु आत्मसंमितमन्नं तद्भोक्तॄन् अवति रक्षति, अत एतदन्नं सात्म्यं सत् न हिनस्ति न बाधते। अधिकन्यूनयोरुक्तवैपरीत्यं क्रमेणाऽऽह – यद्भूय इति। भूयः बहुलतरम् आत्मनोऽधिकम्, कनीयः अल्पतरम् आत्मनोऽपर्याप्तमित्यर्थः।

शब्रासा.

**यद्वेवैनं विकृषति। एतद्वा अस्मिन्देवाः संस्करिष्यन्तः पुरस्तात् प्राणानदधुः। तथैवास्मिन्नयमेतत्संस्करिष्यन् पुरस्तात्प्राणान्दधाति। लेखा भवन्ति। लेखासु हीमे प्राणाः।।**

विकर्षणं प्रकारान्तरेण स्तोतुमनुवदति – यद्वेवैनमिति। पुरा खलु पितरं प्रजापतिं संस्करिष्यन्तो देवाः पुरस्तात्

† उत्तरप्रपाठकेऽयं वाक्यशेषो बहुवारमावर्तितः।

चयनलक्षणात् संस्कारात् पूर्वम् अस्मिन् प्रजापतौ प्राणान् एतत् एतेन विकर्षणेन अदधुः अधारयन्। तथैव अयं यजमानोऽपि संस्करिष्यन् अस्मिन् चेष्यमाणेऽग्निलक्षणे प्रजापतौ पूर्वं प्राणान् स्थापयति। कथमेतदित्यत आह– लेखा भवन्तीति। हि यस्माल्लोके चक्षुरादिगोलकात्मिकासु लेखासु रेखासु इमे प्राणाः चक्षुरादीन्द्रियाणि वर्तन्ते, अतस्तेषामत्र स्थाप्यमानानां संचरणार्थं कर्षणेन रेखाकरणं युक्तमिति भावः। शब्रासा.

**चतस्रः सीता यजुषा कृषति। तद्य इमे शीर्षंश्चत्वारो निरुक्ताः प्राणास्तानस्मिन्नेतद्दधाति। तद्वै यजुषा। अद्धा वै तद्यद्यजुः। अद्धो तद्यदिमे शीर्षन्प्राणाः।।**

समन्त्रकं कर्षणमनूद्य संख्याद्वारा स्तौति – चतस्र इति। शीर्षन् शीर्ष्णि शिरसि ये इमे चत्वारः निरुक्ताः चक्षुः श्रोत्रं नासिका मुखमिति निःशेषेणोक्ताः प्रकाशमानाः प्राणाः तान् अस्मिन् अग्नौ एतेन सयजुष्केण सीताचतुष्टयेन स्थापितवान् भवति। एतदेव विवृणोति – तद्वै यजुषेति। अद्धेत्यादि प्रागुक्तार्थम्। शब्रासा.

**यद्वेवाऽऽत्मानं विकृषति। य एवेमेऽन्तरात्मन्प्राणा-स्तानस्मिन्नेतद्दधाति। तूष्णीम्। को हि तद्वेद यावन्त इमेऽन्तरात्मन्प्राणाः।।**

अमन्त्रकं कर्षणमनूद्य स्तौति – यद्वेवाऽऽत्मानमिति। अन्तरात्मन् आत्मनि देहे अन्तः मध्ये य एवेमे प्राणाः प्राणवृत्तयः प्राणापानादिलक्षणाः मनोबुद्ध्यादिरूपा अन्तः-करणवृत्तयश्च तान् अस्मिन् अग्नौ एतत् एतेनामन्त्रक-कर्षणेन दधाति स्थापयति। एतदेव विवृणोति – तूष्णीमिति। यावन्तः यत्परिमाणविशिष्टाः इमे अन्तरात्मन्यवस्थिताः प्राणाः इति को नाम तद्वेद? तेषाम् आनन्त्यात्, किंतु न कश्चिदपि वेत्तुं शक्नोति। तस्मादनिरुक्तानां तेषां संग्रहणाय तूष्णीमात्मनो द्वादशसीताकर्षणं युक्तमित्यर्थः।।

शब्रासा.

**अथैनान्विमुञ्चत्याप्त्वा तं कामं यस्मै कामा-यैनान्युङ्क्ते – 'विमुच्यध्वमघ्न्याः' इति। अघ्न्या हैते देवत्रा। देवयाना इति। दैव९ह्येभिः कर्म करोति। अगन्म तमसस्पारमस्येति। अशयाना वै तमः। अगन्मास्या अशनायायै पारमित्येतत्। ज्योतिरापामेति। ज्योतिर्ह्याप्नोति यो देवान् यो यज्ञम्। अथैनानुदीचः प्राचः प्रसृजति। तस्योक्तो बन्धुः। तानध्वर्यवे ददाति। स हि तैः करोति। तांस्तु दक्षिणानां कालेऽनुदिशेत्।।**

कर्षणानन्तरमनडुहां विमोचनं विधत्ते – अथैनानिति। (अघ्न्या इत्यादि?) यस्मै खलु प्रयोजनाय एनान् पूर्वं युक्तवान् तं कामं कर्षणलक्षणं प्रयोजनम् आप्त्वा लब्ध्वा, तेषां विमोचनं युक्तमिति शेषः। विमोचने मन्त्रं विधाय व्याचष्टे – विमुच्यध्वमिति। अघ्न्या इति गोनाम। एते खल्वनड्वाहो देवत्रा देवेषु अघ्न्याः अहन्तव्याः, देव-संबन्धिनो गाव इत्यर्थः। दैवं ह्येभिरिति। एभिः अन-डुद्भिः दैवं देवसंम्बन्धि कर्षणलक्षणं कर्म करोति। तस्माद्देवान् याति प्राप्नोति एभिरिति व्युत्पत्त्या देवयानाः इत्यनडुद्विशेषणं युक्तमिति भावः। द्वितीयं पादमनूद्य तत्रत्यतमःशब्दस्य विवक्षितमर्थमाह – अगन्मेति। अशन-स्येच्छा अशनाया क्षुत्पीडा। स्पष्टमन्यत्। ज्योतिर्हीत्यादि। यो हि हविःप्रदातृत्वेन यज्ञं तत्रत्यान् देवांश्च प्राप्नोति एष हि ज्योतिः ज्योतिर्मयं स्वर्गादिभोगयोग्यं शरीरम् आप्नोति। अत एव तैत्तिरीयके समाम्नायते – 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' (तैसं. ५।४।१।३) इति। अतोऽत्र मन्त्रे 'ज्योतिरापाम' इति ज्योतिराप्तिप्रतिपादनं युक्त-तरमित्यर्थः। उत्तरपूर्वस्यां दिशि तेषामनडुहां प्रस्थापनं विधत्ते – अथैनानुदीच इति। अथ विमोचनानन्तरमेव अनडुहः उदीचः उदङ्मुखान् प्राचः प्राङ्मुखांश्च कृत्वा प्रसृजति प्रस्थापयति। प्रागुदक्त्वस्य स्तावकं प्रागाम्नातं वाक्यशेषमतिदिशति – तस्योक्त इति। 'एषा ह्येभयेषां देवमनुष्याणां दिग्यदुदीची प्राची' (शब्रा. ६।६।२।३) इत्यादि। तेषां दक्षिणाकाले दानं विधत्ते – तानध्वर्यव इति। अत एव सूत्रितम् – 'दक्षिणाकालेऽध्वर्यवे ददाति' (काश्रौ. १७।२।२२) इति। अन्यानृत्विजो विहायाध्वर्योरेव संप्रदानत्वे कारणमाह – स हीति। हि यस्मात् सः अध्वर्युः तैः अनडुद्भिः कर्षणं करोति, तस्मादध्वर्यवे दानं युक्तमिति भावः। तस्मिन् दाने कालविशेषं विधत्ते – तांस्त्विति। ऋत्विक्परिक्रयहेतवो दातव्या गावो दक्षिणाः, तासां यः कालो माध्यंदिनसवनात्मकः तस्मिन् तान् अनडुहः अनुदिशेत् दद्यादिति यावत्। शब्रासा.

### चातुर्वर्ण्यसृष्टिः, तत्र ब्राह्मणस्य श्रेष्ठत्वम्, वर्णधर्मस्य वर्णनियन्तृत्वम्

**[१]ब्रह्म वा इदमग्र आसीदेकमेव। तदेक॰सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रम्, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्मात्क्षत्रात्परं नास्ति। तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये। क्षत्र एव तद्यशो दधाति। सैषा क्षत्रस्य योनिर्यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम्। य उ एन॰हिनस्ति स्वा॰स योनिमृच्छति। स पापीयान्भवति यथा श्रेया॰स॰हि॰सित्वा।।**

सूत्रितः शास्त्रार्थः – 'आत्मेत्येवोपासीत' इति। तस्य च व्याचिख्यासितस्य सार्थवादेन 'तदाहुर्यद्ब्रह्मविद्यया' इत्यादिना संबन्धप्रयोजने अभिहिते। अविद्यायाश्च संसाराधिकारकारणत्वमुक्तम् – 'अथ योऽन्यां देवतामुपास्ते' इत्यादिना। तत्र अविद्वान् ऋणी पशुवद्देवादिकर्मकर्तव्यतया परतन्त्र इत्युक्तम्। किं पुनर्देवादिकर्मकर्तव्यत्वे निमित्तम्? वर्णा आश्रमाश्च। तत्र के वर्णा इत्यत इदमारभ्यते। यन्निमित्तसंबद्धेषु कर्मसु अयं परतन्त्र एवाधिकृतः संसरति। एतस्यैवार्थस्य प्रदर्शनाय अग्निसर्गानन्तरमिन्द्रादिसर्गो नोक्तः। अग्नेस्तु सर्गः प्रजापतेः सृष्टिपरिपूरणाय प्रदर्शितः। अयं च इन्द्रादिसर्गः तत्रैव द्रष्टव्यः, तच्छेषत्वात्। इह तु स एवाभिधीयते अविदुषः कर्माधिकारहेतुप्रदर्शनाय।

ब्रह्म वा इदमग्र आसीत्। यदग्निं सृष्ट्वा अग्निरूपापन्नं ब्रह्म ब्राह्मणजात्यभिमानात् ब्रह्मेत्यभिधीयते वै, इदं क्षत्रादिजातम्, ब्रह्मैव अभिन्नमासीत् एकमेव, न आसीत्क्षत्रादिभेदः। तत् ब्रह्मैकं क्षत्रादिपरिपालयित्रादिशून्यं सत् न व्यभवत् न विभूतवत् कर्मणे नालमासीदित्यर्थः। ततः तत् ब्रह्म 'ब्राह्मणोऽस्मि, ममेत्थं कर्तव्यम्' इति ब्राह्मणजातिनिमित्तं कर्म चिकीर्षु आत्मनः कर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपम् अति असृजत अतिशयेन असृजत सृष्टवत्। किं पुनस्तत् यत्सृष्टम्? क्षत्रं क्षत्रियजातिः। तद्व्यक्तिभेदेन प्रदर्शयति – यान्येतानि प्रसिद्धानि लोके देवत्रा देवेषु क्षत्राणीति। जात्याख्यायां पक्षे बहुवचनस्मरणात् व्यक्तिबहुत्वाद्वा भेदोपचारेण बहुवचनम्। कानि पुनस्तानीत्याह, तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते – इन्द्रो देवानां राजा, वरुणो यादसाम्, सोमो ब्राह्मणानाम्, रुद्रः पशूनाम्, पर्जन्यो विद्युदादीनाम्, यमः पितृणाम्, मृत्युः रोगादीनाम्, ईशानो भासाम्, इत्येवमादीनि देवेषु क्षत्राणि। तदनु इन्द्रादिक्षत्रदेवताधिष्ठितानि मनुष्यक्षत्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येव द्रष्टव्यानि। तदर्थ एव हि देवक्षत्रसर्गः प्रस्तुतः। यस्मात् ब्रह्मणा अतिशयेन सृष्टं क्षत्रं तस्मात्क्षत्रात्परं नास्ति ब्राह्मणजातेरपि नियन्तृ। तस्माद्ब्राह्मणः कारणभूतोऽपि क्षत्रियस्य क्षत्रियम् अधस्तात् व्यवस्थितः सन् उपरि स्थितम् उपास्ते। क्व? राजसूये। क्षत्र एव तत् आत्मीयं यशः ख्यातिरूपं ब्रह्मेति दधाति स्थापयति। राजसूयाभिषिक्तेन आसन्द्यां स्थितेन राज्ञा आमन्त्रितो 'ब्रह्मन्' इति ऋत्विक् पुनस्तं प्रत्याह – 'त्वं राजन्, ब्रह्मासि' इति। तदेतदभिधीयते – क्षत्र एव तद्यशो दधातीति। सैषा प्रकृता क्षत्रस्य योनिरेव यद्ब्रह्म। तस्मात् यद्यपि राजा परमतां राजसूयाभिषेकगुणं गच्छति आप्नोति, ब्रह्मैव ब्राह्मणजातिमेव अन्ततः अन्ते कर्मपरिसमाप्तौ उपनिश्रयति आश्रयति स्वां योनिम्। पुरोहितं पुरो निधत्त इत्यर्थः। यस्तु पुनर्बलाभिमानात् स्वां योनिं ब्राह्मणजातिं ब्राह्मणं य उ एनं हिनस्ति हिंसति न्यग्भावेन पश्यति, स्वामात्मीयामेव स योनिम् ऋच्छति स्वं प्रसवं विच्छिनत्ति विनाशयति। स एतत्कृत्वा पापीयान् पापतरो भवति। पूर्वमपि क्षत्रियः पाप एव, क्रूरत्वात्, आत्मप्रसवहिंसया सुतराम्। यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापतरो भवति, तद्वत्। शंकर.

**स नैव व्यभवत्। स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति।।**

क्षत्रे सृष्टेऽपि स नैव व्यभवत्, कर्मणे ब्रह्म तथा न व्यभवत्, वित्तोपार्जयितुरभावात्। स विशमसृजत कर्मसाधनवित्तोपार्जनाय। कः पुनरसौ विट्? यान्येतानि देवजातानि। स्वार्थे निष्ठा। य एते देवजातिभेदा इत्यर्थः। गणशः गणं गणम् आख्यायन्ते कथ्यन्ते। गणप्राया हि विशः।

---

(१) **शब्रा.** १४।४।२।२३-२८; **बृउ.** १।४।११-१५.

प्रायेण संहता हि वित्तोपार्जने समर्थाः, न एकैकशः। वसवः अष्टसंख्यो गणः, तथैकादश रुद्राः, द्वादश आदित्याः, विश्वेदेवाः त्रयोदश विश्वाया अपत्यानि सर्वे वा देवाः, मरुतः सप्त सप्त गणाः। शंकर.

**स नैव व्यभवत्। स शौद्रं वर्णमसृजत पूषणम्। इयं वै पूषा। इय१ँहीद१ँसर्वं पुष्यति यदिदं किंच।।**

सः परिचारकाभावात्पुनरपि नैव व्यभवत्। स शौद्रं वर्णमसृजत। शूद्र एव शौद्रः, स्वार्थेऽणि वृद्धिः। कः पुनरसौ शौद्रो वर्णः, यः सृष्टः? पूषणम्। पुष्यतीति पूषा। कः पुनरसौ पूषेति विशेषतस्तन्निर्दिशति – इयं पृथिवी वै पूषा। स्वयमेव निर्वचनमाह – इयं हि इदं सर्वं पुष्यति यदिदं किंच। शंकर.

**स नैव व्यभवत्। तच्छ्रेयोरूपमत्यसृजत धर्मम्। तदेतत्क्षत्रस्य क्षत्रं यद्धर्मः। तस्माद्धर्मात्परं नास्ति। अथो अबलीयान्बलीया१ँसमाश१ँसते धर्मेण। यथा राज्ञैवम्। यो वै स धर्मः सत्यं वै तत्। तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति, धर्मं वा वदन्त१ँसत्यं वदतीति। एतद्ध्येवैतदुभयं भवति।।**

सः चतुरः सृष्ट्वाऽपि वर्णान् नैव व्यभवत् उग्रत्वात्क्षत्रस्यानियताशङ्कया। तत् श्रेयोरूपम् अत्यसृजत। किं तत्? धर्मम्। तदेतत् श्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रम्, क्षत्रस्यापि नियन्तृत्वात्। धर्मात्परं नास्ति, तेन हि नियम्यन्ते सर्वे। तत्कथमिति उच्यते – अथो अपि अबलीयान् दुर्बलतरः बलीयांसम् आत्मनो बलवत्तरमपि आशंसते कामयते जेतुं धर्मेण बलेन, यथा लोके राज्ञा सर्वबलवत्तमेनाल्पः कुटुम्बिकः, एवम्। तस्मात्सिद्धं धर्मस्य सर्वबलवत्तरत्वात्सर्वनियन्तृत्वम्। यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः सत्यं वै तत्। सत्यमिति यथाशास्त्रार्थता। स एवानुष्ठीयमानो धर्मनामा भवति, शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति। यस्मादेवं तस्मात् सत्यं यथाशास्त्रं वदन्तं व्यवहारकाले आहुः समीपस्था उभयविवेकज्ञाः धर्मं वदतीति। तथा विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः सत्यं वदति, शास्त्रादनपेतं वदतीति। एतत् यदुक्तं उभयं ज्ञायमानमनुष्ठीयमानं च एतत् धर्म एव भवति। तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानेव नियमयति। तस्मात् स क्षत्रस्यापि क्षत्रम्। अतस्तदभिमानोऽविद्वान् तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यते। तानि च निसर्गतः एव कर्माधिकारनिमित्तानि। शंकर.

**तदेतद्ब्रह्म क्षत्रं विट् शूद्रः। तदग्निनैव देवेषु ब्रह्माभवत्, ब्राह्मणो मनुष्येषु, क्षत्रियेण क्षत्रियः, वैश्येन वैश्यः, शूद्रेण शूद्रः। तस्मादग्नावेव देवेषु लोकमिच्छन्ते, ब्राह्मणे मनुष्येषु। एताभ्या१ँहि रूपाभ्यां ब्रह्माभवत्।।**

तदेतच्चातुर्वर्ण्यं सृष्टम् – ब्रह्म क्षत्रं विट् शूद्र इति। उत्तरार्थ उपसंहारः। यत्तत् स्रष्टृ ब्रह्म तदग्निनैव, नान्येन रूपेण, देवेषु ब्रह्म ब्राह्मणजातिः अभवत्, ब्राह्मणः ब्राह्मणस्वरूपेण मनुष्येषु ब्रह्माभवत्। इतरेषु वर्णेषु विकारान्तरं प्राप्य क्षत्रियेण क्षत्रियोऽभवत् इन्द्रादिदेवताधिष्ठितः, वैश्येन वैश्यः, शूद्रेण शूद्रः। यस्मात्क्षत्रादिषु विकारापन्नम्, अग्नौ ब्राह्मण एव चाविकृतं स्रष्टृ ब्रह्म, तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्मफलम् इच्छन्ति, अग्निसंबद्धं कर्म कृत्वेत्यर्थः। तदर्थमेव हि तद्ब्रह्म कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितम्। तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्ते इत्येतत् उपपन्नम्। ब्राह्मणे मनुष्येषु मनुष्याणां पुनर्मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा, किं तर्हि? जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः। यत्र तु देवाधीना पुरुषार्थसिद्धिः तत्रैवाग्न्यादिसंबद्धक्रियापेक्षा। स्मृतेश्च – 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते।।' (मस्मृ. २।८७) इति। पारिव्राज्यदर्शनाच्च। तस्माद्ब्राह्मणत्व एव मनुष्येषु लोकं कर्मफलम् इच्छन्ति, यस्मादेताभ्यां हि ब्राह्मणाग्निरूपाभ्यां कर्मकर्त्रधिकरणरूपाभ्यां यत्स्रष्टृ ब्रह्म साक्षादभवत्।

अत्र तु परमात्मलोकमग्नौ ब्राह्मणे चेच्छन्तीति केचित्। तदसत्, अविद्याधिकारे कर्माधिकारार्थं वर्णविभागस्य प्रस्तुतत्वात्, परेण च विशेषणात्। यदि ह्यत्र लोकशब्देन पर एवाऽऽत्मोच्येत, परेण विशेषणमनर्थकं स्यात् – 'स्वं लोकमदृष्ट्वा' इति। स्वलोकव्यतिरिक्तश्चेदग्न्यधीनतया प्रार्थ्यमानः प्रकृतो लोकः, ततः स्वमिति युक्तं विशेषणं प्रकृतपरलोकनिवृत्त्यर्थत्वात्। स्वत्वेन च अव्यभिचारात्पर-

मात्मलोकस्य, अविद्याकृतानां च स्वत्वव्यभिचारात्। ब्रवीति च कर्मकृतानां व्यभिचारम् – 'क्षीयत एव' इति

शंकर.

निषिद्धयाजनप्रतिग्रहयोः
प्रतिप्रसवः

**[1]प्राणस्य वै सम्राट् कामायायाज्यं याजयति, अप्रतिगृह्यस्य प्रतिगृह्णाति।।**

(१) प्राणस्य वै, हे सम्राट्, कामाय प्राणस्यार्थाय अयाज्यं याजयति पतितादिकमपि। अप्रतिगृह्यस्यापि उग्रादेः प्रतिगृह्णात्यपि।

शंकर.

(२) जीवितात्ययमापन्नस्य प्राणरक्षार्थमयाज्ययाजनमपि संभाव्यते। तथा वाजसनेयब्राह्मणम् – प्राणस्येति।

पमा. १।१६३

हस्तिन उभयतोदतश्च प्रतिग्रहस्य
निषेधः, केशरिदान-
निषेधः

**[2]तस्माद्धस्ती दुष्परिग्रह इत्याहुः।।**

**[3]न केशरिणो ददाति। नोभयतोदतः प्रतिगृह्णाति।।**

ब्राह्मणशूद्रयोर्यज्ञाङ्गविवादे
ब्राह्मणोज्जापनेन
ब्राह्मणप्रशंसा

**[4]शूद्रार्यौ चर्मणि व्यायच्छेते तयोरार्यं वर्णमुज्जापयन्ति।।**

अथ चर्मनिमित्तं ब्राह्मणशूद्रयोर्विवादं विधत्ते – शूद्रार्याविति। शूद्रश्चाऽऽर्यश्चोभौ चर्मणि परिमण्डले आदित्यप्रतिरूपे निमित्ते व्यायच्छेते व्यायमनं विविधमाकर्षणं मदीयं मदीयमिति तत् कुरुतः। तयोर्मध्ये आर्यं वर्णं ब्राह्मणजातिम् उज्जापयन्ति यथा ब्राह्मणो जयेत् तथा कुर्युरित्यर्थः।

तासा.

(१) **शब्रा.** १४।६।१०।३; **बृउ.** ४।१।३; **पमा.** १।१६३ गृह्यस्य (ग्राह्यस्य वा) वाजसनेयब्राह्मणम्.

(२) **निप्र.** २।२८२ शतपथश्रुतिः.

(३) **निप्र.** २।२८२ क्रमेण शतपथश्रुतिः.

(४) **ताब्रा.** ५।५।१४, १६.

**यदार्यं वर्णमुज्जापयन्त्यात्मानमेव तदुज्जापयन्ति।।**

ब्राह्मणस्य जयो यथा स्यात् तथा कर्तव्यमित्युक्तम्। तदेव प्रशंसति – यदिति। आर्यं ब्राह्मणं वर्णम् उज्जापयन्तीति उत्कर्षेणामुं प्रापयन्तीति यत् तत् तेन सत्रिण आत्मानमेव उज्जापयन्ति। जयतेर्णिच्। 'क्रीङ्जीनां णौ' (पासू. ६।१।४८) इत्यात्वे 'अर्तिह्रीव्लीο' (पासू. ७।३।३६) इत्यादिना पुगागमः।

तासा.

पुंश्चलीक्लीबपातकिभ्यः
प्रतिग्रहस्य निषेधः

**[1]यामस्मादपाहन् सा पुंश्चली प्राविशत्, यामन्तरिक्षात्सा क्लीबम्, याममुष्मात्सैनस्विनम्।।**

अथापगतानां शुचामन्यत्र प्राप्तिं दर्शयति – यामिति। यां शुचमिन्द्रोऽस्माद्भूर्लोकादपाहन् सा पुंश्चलीम् अन्यान् पुरुषान् प्रति चलन्तीं व्यभिचारिणीमित्यर्थः। एवमुत्तरत्रापि योज्यम्। क्लीबः षण्ढः। एनस्वी महापातकदोषग्रस्तः।

ताब्रासा.

**तस्मात्तेषां नाऽऽशैतव्या। य एषामाशामेति तस्मा एव शुचोऽपभजते।।**

अथैतेषु धनादीच्छामन्वयव्यतिरेकाभ्यां प्रसङ्गान्निन्दति – तस्मादिति। तस्मात् प्राप्तशोकत्वात् तेषामाशा पुंश्चल्यादीनां संबन्धिनी धनादीच्छा नैतव्या न प्राप्तव्या। यस्तु मोहादाशां प्राप्नोति तस्मा एव शुचः तामेव शुचम् अपभजते कष्टं प्राप्नोति।

ताब्रासा.

बहुप्रतिग्रहेण प्रत्यवायः

**[2]यो बहु प्रतिगृह्य गरगीरिव मन्येत स एतेन यजेत।।**

(१) यागस्योपनयनस्य वा योग्यतारहितान्याजयित्वा उपनीय वा प्रकारान्तरेण वा निषिद्धं द्रव्यं बहु प्रतिगृह्य नरकाद्भीतो विषभक्षीव 'नष्टोऽस्मि' इति यश्चिन्तयति स एतेन पुनःस्तोमेन यजेत।

ताब्रासा.

(२) गरं विषं गिरतीति गरगीः। विषभोजिनमात्मानं मन्यत इत्यर्थः। एवं च प्रीतिदायरूपेणापि बहुधनस्वीकारो निषिद्ध एवेत्यवगम्यते।

निप्र. २।२८४

(१) **ताब्रा.** ८।१।१०, ११.

(२) **ताब्रा.** १९।४।२; **निप्र.** २।२८४ एतेन (पुनस्तोमेन) छन्दोगब्राह्मणम्.

ऋषिच्छन्दोदैवतब्राह्मणज्ञस्यैव
याजनाध्यापन-
योरधिकारः

**'अथापि ब्राह्मणं भवति – 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति। यातयामान्यस्य छन्दांसि भवन्ति। अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति, श्रेयान् भवति। अयातयामान्यस्य छन्दांसि भवन्ति। तस्मादेतानि मन्त्रे मन्त्रे विद्यात्'।।**

(१) ऋष्यादिज्ञानमवश्यं कर्तव्यमित्यत्र ब्राह्मणान्तरं संवादयति – अथापीति। यो ह वै यः खलु अविदितार्षेयच्छन्दोदैवतब्राह्मणेन। आर्षेयम् ऋषिसंबन्धि परिज्ञानम्, छन्दः गायत्र्यादि, दैवतम् अग्न्यादिकम्, ब्राह्मणं विनियोजकवाक्यम्। एतानि आर्षेयादीनि अविदितानि अज्ञातानि यस्य तादृशेन मन्त्रेण याजयति वाऽध्यापयति वा स याजकः अध्यापयिता वा स्थाणुं स्थावरतां वा ऋच्छति प्राप्नोति। गर्तं वा श्वभ्रं वा पद्यति गच्छति। स्थाणुत्वं गर्तपातो वा तस्य प्राप्नोतीत्यर्थः। अथ वा प्रमीयते म्रियते। 'मीङ् हिंसायाम्' इति धातुः। एवमार्षेयादिकमजानानो याजकोऽध्यापको वा पापीयान् भवति निकृष्टतरो भवति। अपि चास्य छन्दांसि छन्दःसंयुक्तान्यधीतानि वेदवाक्यानि यातयामानि गतसाराणि निर्वीर्याणि भवन्ति। स्मृतिश्च भवति – 'अविदित्वा ऋषिच्छन्दोदैवतं योगमेव वा। योऽध्यापयेज्जपेद्वाऽपि पापीयान् स तु जायते।।' इति। इत्थं विपक्षे बाधकमुपन्यस्य अथ तत्परिज्ञानफलान्याह – अथ यो मन्त्र इत्यादिना छन्दांसि भवन्तीत्यन्तेन। अथशब्दः पूर्वोक्तफलवैलक्षण्यद्योतनार्थः। यो याजकोऽध्यापको वा मन्त्रे मन्त्रे प्रतिमन्त्रम् आर्षेयच्छन्दोदैवतब्राह्मणानि वेद जानाति सर्वं संपूर्णम् वर्षशतम् आयुः जीवनलक्षणम् एति प्राप्नोति। श्रेयान् प्रशस्यतमश्च भवति। अस्य वेदितुश्छन्दांसि अयातयामानि अगतसाराणि भवन्ति। यस्मादेवं तस्मादेतानि आर्षेयच्छन्दोदैवतब्राह्मणानि मन्त्रे मन्त्रे प्रतिमन्त्रं विद्यात् जानीयात्। आब्रासा.

(२) गोपीनाथदीक्षितास्तु केवलमृषिदैवतच्छन्दःपठनवत्.... कर्मजातं प्रौढ्यैवालिखन्। ननु कथं दीक्षितवचसः प्रौढिवादमात्रत्वम्? यतस्तैः 'ऋषिं च देवतां छन्दो विनियोगं मनोस्तथा। विज्ञायैव क्रियाः कार्या याज्ञवल्क्यमुनिस्मृतेः।।' इत्यादिना सप्रमाणमेव तदुपन्यासात्, 'यो ह वाऽविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वा स्थाणुमृच्छति गर्तं वा पात्यते प्रमीयते वा पापीयान्भवति तस्मादेतानि मन्त्रे विद्यात्' इति तैत्तिरीयसंहिताभाष्यारम्भोदाहृतच्छन्दोगब्राह्मणाच्चेति चेत्, बाढम्। उदाहृतब्राह्मणादिना तावदृष्यादिज्ञानस्यैवाऽऽवश्यकत्वमुच्यत इति निर्विवादमेव। तथा च यदिदं संस्काररत्नमालायां पठनं लिखितं तत्तु तादृगेव। न च ज्ञानार्थमेव पठनमिति वाच्यम्, तत्पठतोऽपि माणवकादेरविचारितसपरिकरस्वशाखातद्भाष्यादेस्तज्ज्ञानासंभवात्, तादृशस्य तज्ज्ञानवतो मेधाविनः कस्यचित्कर्मकाले तत्पठनाभावेऽपि प्राक्तनमहिम्ना कर्मवैकल्याभावाच्च। किंच 'नैव ब्रूयादृषिं छन्दः श्रौते स्मार्ते च कर्मणि। मन्त्रादौ प्रणवं चेति देवस्वामीयभाष्यके।' इत्यभ्यु( ? भियु)क्तकारिकया तदुच्चारणस्य प्रत्युत निषेधोऽपि। इति देवस्वामीयभाष्यकेऽस्तीति कारिका योज्या। आचरन्ति शिष्टाः सर्वेऽप्येवमेव श्रौते। स्मार्ते तु यद्यपि शाकलाद्याः पठन्त्येव पठन्तु नाम ते तथा, शिष्टाचारस्यापि प्रामाण्यात्। वस्तुतस्तु तेषामपि सर्वानुक्रमणिकायां तज्ज्ञाने सति श्रेयोधिगम इत्युक्तत्वादृष्यादिज्ञानमेवापेक्षितम्। तैत्तिरीयाणां तु तादृशशिष्टाचारस्याप्यभावादनुपयुक्तमेवैतत्। ननु बह्वृचगृह्यपरिशिष्टप्रथमाध्यायाष्टमखण्डे 'अथास्य मन्त्राणामृषिदैवतच्छन्दांसि' (आगृप. १।८) इत्यादिना संध्यावन्दनकर्मण्यपि ऋष्याद्युच्चारणं विहितमिति चेत्सत्यम्। तत्रैव प्राक्षष्ठे खण्डे 'सावित्र्या ऋषिदैवतच्छन्दांस्यनुस्मृत्य' इत्यारभ्य 'एषोऽङ्गन्यासः' इति ऋष्यादिन्यासान्तमुक्त्वा

---

(१) **आब्रा.** १।१।६; **पमा.** १।१६२ (अथापि ब्राह्मणं भवति०) (मन्त्रेण०) पद्यति (पद्यते) वेद (विद्यात्) छन्दोगब्राह्मणम्; **मुक्ता.** २८ (अथापि ब्राह्मणं भवति०) पद्यति (पद्यते) (अथ यो..... विद्यात्०) छन्दोगब्राह्मणे; **आन.** ५७४ (अथापि ब्राह्मणं भवति०) (ह०) पद्यति (पद्यते) (अथ यो.. विद्यात्०) छन्दोगश्रुतिः; **आभू.** ९५ (यो ह वाऽविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वा स्थाणुमृच्छति गर्तं वा पात्यते प्रमीयते वा पापीयान्भवति। तस्मादेतानि मन्त्रे विद्यात्।।) एतावदेव, छन्दोगब्राह्मणम्.

'एनमप्येके नेच्छन्ति स विधिरवैदिकः' (आगृप. १।५) इति तेनैव तस्यावैदि( ? तस्य वैकल्पि)कत्वोक्तेः। नच 'एषोऽङ्गन्यास एनमप्येके' इत्येकवचनादङ्गन्यासस्यैवावैदिकत्वम्, नत्वृष्यादेरिति वाच्यम्, 'शिरसि ऋषिर्मुखे छन्दो हृदि देवता' इति ऋष्यादीनामपि न्यासौपयिकत्वात्। अत्रत्यमवैदिकपदं तु शुद्धवैदिकेतराधिकारिविषयकत्वपरम्। अधिकारिणस्तूक्ताः श्रौतसिद्धान्ते पुरुषार्थप्रबोधसंगृहीतवचनैः सप्रपञ्चं द्वितीयेऽध्याये – 'शुद्धवैदिक इत्येकः परस्तान्त्रिकवैदिकः। शुद्धतान्त्रिक इत्यन्योऽपरो वैदिकतान्त्रिकः।। एते चत्वार आत्मज्ञाः स्वस्वकर्मानुसारतः। मार्गाधिकारिणः प्रोक्ताः शिवेन परमात्मना।। तन्त्रगन्धं न सहते यः सोऽयं शुद्धवैदिकः। सतन्त्रांशश्रुतिप्रीतः प्रोक्तस्तान्त्रिकवैदिकः। वेदगन्धं न सहते यः सोऽयं शुद्धतान्त्रिकः। सवेदाङ्गागमप्रीतो योऽसौ वैदिकतान्त्रिकः। वेदे वेदानुकूले चाधिकारी शुद्धवैदिकः। तन्त्रोपसर्जने शास्त्रेऽधिकृत्तान्त्रिकवैदिकः। वेदगन्धासहे तन्त्रेऽधिकारी शुद्धतान्त्रिकः। वेदोपसर्जने तन्त्रेऽधिकृद्वैदिकतान्त्रिकः।' इति। तस्माद्येषां शिष्टाचारादिकमस्ति तेषामपि ऋष्यादिपठनमनावश्यकम्, तदा तच्छून्यानां तैत्तिरीयाणां तु तत्कैमुत्यसिद्धमेव। तज्ज्ञानं परं समपेक्षितमेवेत्यधस्तादेवोक्तम्। तदपि विचारे क्रियमाणे समुदाहृतब्राह्मणवाक्ये यजति याजयतीतिप्रयोगाद्यज्ञादावेव प्राधान्येन तदपेक्षा। संध्योपासनादावौपासनादौ स्मार्ते च तत्सत्त्वे फलभूयस्त्वमेव, न त्वभावे क्षतिरपि। अन्यथा सद्यः समुपनीतमाणवककर्तृकसंध्यावन्दनादिवैयर्थ्यापत्तेर्दुर्वारत्वात्। किंच तैत्तिरीयसंहितायाः श्रीमाधवाचार्यविरचिते प्रथमप्रश्नस्य त्रयोदशानुवाकभाष्येऽप्युक्तं तैत्तिरीयाणामृषिदैवतच्छन्दोज्ञानाद्यनावश्यकत्वम् – 'यजुषां छन्दो न श्रुतेरभिमतम्। तथा सति स्वशक्त्या किंचिन्नूतनं छन्दः कल्पयितुं न शक्यते। किंतु पूर्वसिद्धसंप्रदायागतं छन्दोलक्षणं यत्र यत्रास्ति तस्यां तस्यामृचि च्छन्दो जानीयात्' (तैसा. १।१।१३) इति। सा च ऋग्गायत्र्यादिरेव। उपलक्षणमिदमृषिदैवतयोरपि। अन्यच्च तैत्तिरीयाणां स्वकीययावन्मन्त्रर्षिच्छन्दोदैवतविनियोगज्ञानाभावप्रयुक्तकर्मवैगुण्यपरिहारार्थं प्रधानीभूतप्रणवगायत्र्याख्यमन्त्रयोरेवर्ष्यादिश्रुत्यैव, 'ओमित्येकाक्षरं ब्रह्म' (नाउ. ३३) इत्यादि 'गायत्रिया गायत्री छन्दः' (नाउ. ३५) इत्यादि च पठितम्। न चैतेनैवोपलक्षणविधया यावन्मन्त्राणामपि प्रत्युत तत्पठनावश्यकत्वमेव सूचितमित्येवास्त्विति वाच्यम्। तथात्वे श्रौते कर्मणि कारीर्याख्ये तत्पठनाभावलक्षणाङ्गवैकल्येन फलीभूता साद्यस्कवृष्टिर्न स्यात्। दृश्यते च साऽद्य कलिकालेऽपि शिष्टैः साङ्गमनुष्ठितात्ततः। तस्मात्प्रणवगायत्र्यभिधमहामन्त्रर्षिच्छन्दोदैवतविनियोगपठनमात्रेणैव परिहृतयावद्वैदिकमन्त्रर्ष्यादिज्ञानाभावापादितप्रत्यवायानां तैत्तिरीयाणां नैव तदितरत्र तत्पठनापेक्षेति तल्लेखनं संस्काररत्नमालायां प्रौढिवादमात्रमेवेति दिक्। आभू. ९५-९७

वर्णानां क्रमेण ज्यायस्त्वम्

**[1]ब्रह्म वै क्षत्राज्ज्यायः.... क्षत्रमु वै विशो ज्यायः... वैश्यो वै शूद्राज्ज्यायान्।।**

ब्राह्मणप्रशंसा

**[2]एष ह वै सांतपनोऽग्निर्यद्ब्राह्मणः। यस्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनगोदानचूडाकरणोपनयनप्लावनाग्निहोत्रव्रतचर्यादीनि कृतानि भवन्ति स सांतपनः।।**

सर्वदेवताधिष्ठानत्वेन

ब्राह्मणप्रशंसा

**[3]यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति। तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यात्। नाश्लीलं कीर्तयेत्। एता एव देवताः प्रीणाति।।**

'अग्निरवमो देवतानां विष्णुः परमः' (तैसं. ५।५।१।४) इत्युक्तत्वादग्निप्रभृतयो विष्णुपर्यन्ता यावत्यो देवताः सन्ति ताः सर्वाः पाठतोऽर्थतश्च वेदविदि ब्राह्मणे वसन्ति। एकैकस्मिन्मन्त्र एकैको देवः प्रतिपाद्यते। ते च मन्त्राः सर्वेऽध्येतुर्वाचि वेदितुर्मनसि च वर्तन्ते। अतो वेदविदां ब्राह्मणानां सर्वदेवतात्मकत्वात्तेभ्यः प्रतिदिनं नमस्कुर्यात्।

---

(१) **जैब्रा.** २।३२.

(२) **गोब्रा.** १।२।२३.

(३) **तैआ.** २।१५।१; **पमा.** २।१०३ (यावतीर्वै देवातास्ताः सर्वा वेदविद्ब्राह्मणे वसन्ति) एतावदेव, श्रूयते; **मुक्ता.** ७० (यावतीर्वै.... वसन्ति) एतावदेव; **आन.** ६४१ मुक्तावत्.

अश्लीलं तदीयमशुभं किमपि विद्यमानमविद्यमानं वा न कीर्तयेत्। एतेन वेदविदो ब्राह्मणस्य सत्कारेण सर्वा अप्येता देवताः परितोषयति। तैआसा.

अत्यन्तापदि अभोज्यान्नभोजने
दोषाभावः

[1]**मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास।।**

उद्गीथोपासनप्रसङ्गेन प्रस्तावप्रतिहारविषयमप्युपासनं वक्तव्यमिति इदमारभ्यते। आख्यायिका तु सुखावबोधार्था। मटचीहतेषु, मटच्यः अशनयः, ताभिर्हतेषु नाशितेषु कुरुषु, कुरुसस्येष्वित्यर्थः। ततो दुर्भिक्षे जाते आटिक्या अनुपजातपयोधरादिस्त्रीव्यञ्जनया सह जायया उषस्तिर्ह नामतः, चक्रस्यापत्यं चाक्रायणः। इभः हस्ती, तमर्हतीति इभ्यः ईश्वरः हस्त्यारोहो वा, तस्य ग्रामः इभ्यग्रामः तस्मिन् प्रद्राणकः अन्नालाभात्, 'द्रा कुत्सायां गतौ', कुत्सितां गतिं गतः, अन्त्यावस्थां प्राप्त इत्यर्थः। उवास उषितवान् कस्यचिद्गृहमाश्रित्य। शंकर.

[2]**स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे। तꣳहोवाच। नेतोऽन्ये विद्यन्ते यच्चये म इम उपनिहिता इति।।**

सः अन्नार्थमटन् इभ्यं कुल्माषान् कुत्सितान् माषान् खादन्तं भक्षयन्तं यदृच्छयोपलभ्य, बिभिक्षे याचितवान्। तमुषस्तिं होवाच इभ्यः – न इतः अस्मात् मया भक्ष्यमाणात् उच्छिष्टराशेः कुल्माषा अन्ये न विद्यन्ते, यत् चये राशौ मे मम उपनिहिताः प्रक्षिप्ता इमे भाजने। किं करोमि? शंकर.

[3]**एतेषां मे देहीति होवाच। तानस्मै प्रददौ। हन्तानुपानमिति। उच्छिष्टं वै मे पीतꣳस्यादिति होवाच।।**

इत्युक्तः प्रत्युवाच उषस्तिः – एतेषां एतानित्यर्थः। मे मह्यं देहीति होवाच। तान् स इभ्यः अस्मै उषस्तये प्रददौ प्रदत्तवान्। पानाय समीपस्थमुदकं च गृहीत्वा उवाच – हन्त गृहाणानुपानम्। इत्युक्तः प्रत्युवाच – उच्छिष्टं वै मे मम इदमुदकं पीतं स्यात् यदि पास्यामि। शंकर.

(१) छाउ. १।१०।१; उ. १।१८।८.
(२) छाउ. १।१०।२; उ. १।१८।८ (तँ हो... इति०).
(३) छाउ. १।१०।३-६.

**न स्विदेतेऽप्युच्छिष्टा इति। न वा अजीविष्यमिमानखादन्निति होवाच। कामो म उदपानमिति।।**

इत्युक्तवन्तं प्रत्युवाचेतरः – किं न स्विदेते कुल्माषा अप्युच्छिष्टाः? इत्युक्त आहोषस्तिः – न वै अजीविष्यं न जीविष्यामि इमान्कुल्माषान् अखादन् अभक्षयन् इति होवाच। कामः इच्छतः मे मम उदकपानं लभ्यते इत्यर्थः। अतश्चैतामवस्थां प्राप्तस्य विद्याधर्मयशोवतः स्वात्मपरोपकारसमर्थस्य एतदपि कर्म कुर्वतो नाघस्पर्श इत्यभिप्रायः। तस्यापि जीवितं प्रति उपायान्तरे अजुगुप्सिते सति जुगुप्सितमेतत्कर्म दोषाय। ज्ञानावलेपेन कुर्वतो नरकपातः स्यादेवेत्यभिप्रायः, प्रद्राणकशब्दश्रवणात्। शंकर.

**स ह खादित्वाऽतिशेषाञ्जायाया आजहार। साऽग्र एव सुभिक्षा बभूव। तान्प्रतिगृह्य निदधौ।।**

तांश्च स खादित्वा अतिशेषान् अतिशिष्टान् जायायै कारुण्यादाजहार। सा आटिकी अग्रे एव कुल्माषप्राप्तेः, सुभिक्षा शोभनभिक्षा लब्धान्नेत्येतत्, बभूव संवृत्ता। तथापि स्त्रीस्वाभाव्यात् अनवज्ञाय तान् कुल्माषान् पत्युर्हस्तात्प्रतिगृह्य निदधौ निक्षिप्तवती। शंकर.

**स ह प्रातः संजिहान उवाच। यद्बतान्नस्य लभेमहि, लभेमहि धनमात्राम्। राजाऽसौ यक्ष्यते। स मा सर्वैरार्त्विज्यैर्वृणीतेति।।**

स तस्याः कर्म जानन् प्रातः उषःकाले संजिहानः शयनं निद्रां वा परित्यजन् उवाच पत्न्याः शृण्वत्याः। यत् यदि बतेति खिद्यमानः अन्नस्य स्तोकं लभेमहि, तत् भुक्त्वाऽन्नं समर्थो गत्वा लभेमहि धनमात्रां धनस्याल्पम्। ततोऽस्माकं जीवनं भविष्यतीति। धनलाभे च कारणमाह – राजाऽसौ नातिदूरे स्थाने यक्ष्यते। यजमानत्वात्तस्य आत्मनेपदम्। स च राजा मा मां पात्रमुपलभ्य सर्वैरार्त्विज्यैः ऋत्विक्कर्मभिः, ऋत्विक्कर्मप्रयोजनायेत्यर्थः, वृणीतेति। शंकर.

वर्णाः तेषु ब्राह्मण-
श्रैष्ठ्यं च

[1]**ब्रह्मक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णाः। तेषां वर्णानां ब्राह्मण एव प्रधानः।।**

(१) वज्रउ. २.

नृसिंहमन्त्राद्वर्णोत्पत्तिः

**§[1]स तस्या आद्यैर्द्वादशभिरक्षरैर्ब्राह्मणमजनयत्। दशभिर्दशभिर्विट्क्षत्रे। तस्माद्ब्राह्मणो मुख्यो भवति। एवं तन्मुख्यो भवति य एवं वेद। तूर्ष्णी शूद्रमजनयत्। तस्माच्छूद्रो निर्विद्योऽभवत्।।**

यज्ञसंबन्धेन ब्राह्मणत्वमुत्पद्यते, आपद्यपि ब्राह्मणः शूद्रवृत्त्या शूद्रश्च ब्राह्मणवृत्त्या न वर्तेत, रथकारस्य याज्यत्वम्

**[2]ब्राह्मणो हि जायते यो यज्ञाज्जायते।।**

**†[3]उत्कृष्टं चापकृष्टं च विद्येते कर्मणी तयोः। मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते।।**

**[4]रथकारं याजयेत्।।**

ब्राह्मणवृत्तिः

**+[5]द्रव्यमार्जयन् ब्राह्मणः प्रतिगृह्णीयाद्याजयेदध्यापयेद्वा।।**

(१) सत्प्रतिग्रहे(ण) याज्ययाजनेनार्त्विगित्या(? न आर्त्विज्या)दिना सच्छिष्याध्ययनलब्धगुरुदक्षिणाग्रहणेन च धनं संपादयेदित्यर्थः। यानि तु 'प्रतिग्रहाध्यापनयाजनानां प्रतिग्रहं श्रेष्ठतमं वदन्ति। प्रतिग्रहः शुध्यति जाप्यहोमैर्याज्यं तु पापं न पुनन्ति वेदाः।।', 'जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्। प्रतिग्रहनिमित्तं तु त्यागेन तपसैव हि।।' इत्यादीनि वचनानि तानि निषिद्धायाज्ययाजनादिविषयाणि।

मर. १६९

(२) 'द्रव्यमा... पयेद्वा' इति श्रुत्यैव याजनाध्यापनप्रतिग्रहाणां द्रव्यमार्जयतो ब्राह्मणस्य नियमनेन (? मेन) विहितानामपि जीवनार्थमेव विहितत्वादकरणे प्रत्यवायास्मरणात् यदि ब्राह्मणस्य द्रव्यार्जनस्येच्छा जायते तदा एतैरेवार्जयेन्नान्यथेति नियमार्थविधिता(त्पर्या)द्विहितं प्रायश्चित्तमपि कर्तव्यमेवेत्यवगम्यते।

आन. ५७६-५७७

वर्णोत्पत्तिः

**[1]गायत्र्या ब्राह्मणमसृजत, त्रिष्टुभा राजन्यम्, जगत्या वैश्यम्। न केनचिच्छन्दसा शूद्रम्। असंस्कार्यो विज्ञायते।।**

## आश्वलायनगृह्यसूत्रम्

क्षेत्रकर्षणविधिः, गवामनुमन्त्रणमुपस्थानं च

**[2]क्षेत्रं प्रकर्षयेदुत्तरैः प्रोष्ठपदैः फल्गुनीभी रोहिण्या वा।।**

(१) क्षेत्रं कर्ष्टुं प्रारभेत उत्तरैः प्रोष्ठपदैः फल्गुनीभिर्वा रोहिण्या वा। एतेषामन्यतमेन नक्षत्रेण प्रारम्भं कुर्यात्।

देभा.

(२) फल्गुनीभिरित्यत्रापि उत्तराभिरित्येवं संबध्यते। तेन त्रीणि नक्षत्राणि। नित्यकर्मणां द्रव्यसाध्यत्वात् द्रव्यार्थं क्षेत्रं प्रकर्षयेत्। णिच्प्रयोगः स्वयंकृषिनिवृत्त्यर्थः। तथा चानापदि गौतमः – 'कृषिवाणिज्ये वा स्वयंकृते' (गौध. १०।५) इति। मनुरपि – 'ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा' (मस्मृ. ४।४) इति, 'प्रमृतं कर्षणं स्मृतम्' (मस्मृ. ४।५) इति। अक्षसूक्ते चेयमेव वृत्तिरुक्ता 'अक्षैर्मा दीव्यः कृषिमित् कृषस्व' (ऋसं. १०।३४।१३) इति। प्रतिग्रहादयश्चाऽऽपत्कल्पाः। त्रिषु नक्षत्रेषु कृषिं प्रारभेत।

† नावृ.

---

§ "सः प्रजापतिः। तस्याः 'उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्। नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्।।' इत्यृचः" इत्ययमर्थः पूर्वग्रन्थतः।

† अस्य तात्पर्यं 'वैश्योऽजीवन्' इति मनुवचने मेधातिथिना सूचितं द्रष्टव्यम्।

+ अस्य पमाव्याख्यानमस्य प्रकरणस्य शास्त्रार्थे विद्यते। मुक्ताव्याख्यानं तस्मिन् पमाव्याख्याने गतार्थम्।

(१) **अव्यउ.** ५.

(२) **विश्व.** १।८७ आम्नायः.

(३) **मेधा.** १०।९८ श्रूयते.

(४) **स्मृकौ.** ५८ श्रुतिः.

(५) **पमा.** १।१५९ मार्ज (मर्ज) श्रुतिः : १।१८२ मार्ज (मर्ज) (याजयेदध्यापयेद्वा०) श्रुतिः; **मर.** १६९ मार्ज (मर्ज) जयेद (जयेता) श्रुतिः; **मुक्ता.** २७; **आन.** ५७६ श्रुतिः.

---

† आपा. नावृवत्।

(१) **अप.** १।१० पृ. २३ श्रुतिः; **वीमि.** १।१० णमसृजत (णं समसृजत्) (असंस्कार्यो विज्ञायते०) श्रुतिः.

(२) **आगृ.** २।१०।३; **आपा.** १३८ रैः प्रोष्ठपदैः फा (रेरेप्रोष्ठपदैफा) भी रोहिण्या (भिः रोहिण्यां).

(३) सर्वत्र 'नक्षत्रे च लुपि' (पासू. २।३।४५) इत्यधिकरणे तृतीया। + अना.

**'क्षेत्रस्यानुवातं 'क्षेत्रस्य पतिना वयम्' इति प्रत्यृचं जुहुयाज्जपेद्वा।।**

(१) क्षेत्रस्यानुवातं गत्वा 'क्षेत्रस्य पतिना वयम्' (ऋसं. ४।५७।१) इति प्रत्यृचं जुहुयात्, अथवा जपेत्। तेन जपहोमयोर्विकल्पः। देभा.

(२) इदं च प्रारम्भदिवसे कुर्यादित्याह – क्षेत्रस्येति। क्षेत्रस्यानुवातं देशं गत्वा तत्रोपलेपनादि कृत्वा जुहुयात् जपेद्वेदं सूक्तं तत्रस्थ एव। पादग्रहणेऽपि सामर्थ्यात्सूक्तग्रहणम्। प्रत्यृचमिति व्याख्यातम्। ‡ नावृ.

(३) क्षेत्रस्यानुवातं यस्यां दिशि होमे कृते क्षेत्रं धूमो व्याप्नोति तस्यां दिग्होमः (? दिशि होमः) कर्तव्यः, जपेद्वा। जपहोमयोर्विकल्पः। अना.

**²गाः प्रतिष्ठमाना अनुमन्त्रयेत – 'मयोभूर्वातो अभिवातूस्राः' (ऋसं. १०।१६९।१) इति द्वाभ्याम्।।**

(१) गावः प्रतिष्ठमानाः प्रगच्छमानाः अनुमन्त्रयितव्याः 'मयोभूर्वातः' इति द्वाभ्यामृग्भ्याम्। देभा.

(२) भक्षणार्थमरण्यं प्रति गच्छन्तीर्गा अनुमन्त्रयेताहरहः आत्मीया अन्या वा, न नियमः। नावृ.

(३) आत्मीया गावो यदा प्रतिष्ठन्ते गृहान्निर्गच्छन्ति तदा। † अना.

**³आयतीः – 'यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च। ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः।। उप मैतु मयोभुव ऊर्जं चौजश्च बिभ्रतीः। दुहाना अक्षितं पयो मयि गोष्ठे निविशध्वं यथा भवाम्युत्तमः।।', 'या देवेषु तन्वा(? न्व)मैरयन्त' (ऋसं. १०।१६९।३) इति च सूक्तशेषम्।।**

+ शेषं नावृगतम्।

‡ आपा. नावृवत्।

† शेषं देभावत्।

(१) **आगृ.** २।१०।४; **आपा.** १३८ याज्जपेद्वा (याद्वा जपेद्वा).

(२) **आगृ.** २।१०।५.

(३) **आगृ.** २।१०।६; **देभा.** २।१०।६-७; **अना.** २।१०।६-७ (उप मैतु.... भवाम्युत्तमः।।०).

(१) ताः आयतीर्गाः अनुमन्त्रयेत 'यासामूध' +इत्यनेन मन्त्रेण। देभा.

(२) भक्षयित्वा ग्रामं प्रत्यागच्छन्तीर्गा अनुमन्त्रयेताहरहः 'यासाम्' इत्यृग्भ्यां सूक्तशेषेण च। नावृ.

(३) इतिकरणाध्याहारेण मन्त्रसमाप्तिः। आयतीर्गृहान्। प्रत्यागच्छन्तीरनुमन्त्रयते 'यासामूधः' इति मन्त्रेण। अना.

**¹आगावीयमेके।।**

(१) एके आचार्याः आगावीयमिच्छन्ति गवामनुमन्त्रणे आयतीनाम्। 'आ गावो अग्मन्' (ऋसं. ६।२८।१) इत्येतत् सूक्तम्। § देभा.

(२) पूर्वासां बाधः। † नावृ.

**²गणानासामुपतिष्ठेतागुरुगवीनाम् – 'भूताः स्थ प्रशस्ताः स्थ शोभनाः प्रियाः प्रियो वो भूयासं शं मयि जानीध्वं शं मयि जानीध्वम्।।' ।।**

+ देवस्वामिभाष्यपुस्तके 'आयतीः.... भवाम्युत्तमः' इत्येतावत् षष्ठं सूत्रम्, 'या देवेषु...... सूक्तशेषम्' इति च पृथक् सप्तमं सूत्रं भाष्यरहितमिति तत्संपादकैर्व्यवस्था स्वीकृता। सेयं व्यवस्था सूक्तशेषस्यानुमन्त्रणकरणत्वे सत्यपि 'अनेन मन्त्रेण' इति पूर्वमन्त्रस्यैव केवलस्य करणत्वोक्त्या व्याख्यानन्यूनतापादकत्वान्न मनोहरा। सूक्तशेषस्यानुमन्त्रणकरणत्वं देवस्वामिनो नाभिमतमिति तन्मते सप्तमं सूत्रं नास्त्येवेति कल्पनं तु नारायणहरदत्तमतविरुद्धं सत् प्रबलप्रमाणाभावे नाऽऽत्मलाभं लभते। अत्रास्माकं त्वेवं प्रतिपत्तिः – देवस्वामी 'आयतीः' इत्यादि 'सूक्तशेषम्' इत्यन्तमेकमेव सूत्रं मन्यते। तत्र 'या देवेषु' इत्यादिसूत्रांशस्य स्पष्टार्थत्वात् सः 'इत्यनेन मन्त्रेण' इत्यतः परं यथाक्षरं भाष्येऽनूदितः। तेन न व्याख्यानन्यूनता। सोऽयं सूत्रांशानुवादरूपो भाष्यांश इति वस्तुस्थितेरनाकलनात् भाष्यपुस्तकस्य संपादकैः पौनरुक्त्यभ्रमेण स सूत्रांशानुवादो भाष्यादुच्चाटितः। तदुच्चाटने च सूत्रैक्ये 'इत्यनेन मन्त्रेण' इत्येकवचनानुपपत्तेः पृथक्सूत्रत्वं कल्पितमिति। इदमप्यत्रावधेयम् – 'इत्यनेन मन्त्रेण' इत्येकवचनात् 'उप मैतु' इत्ययं द्वितीयो मन्त्रो हरदत्तवद्देवस्वाम्यपि न पठतीति प्रतीयते। न हि ऋङ्मन्त्रोऽष्टचरणकः क्वचित् प्रसिद्धः। वैदिकसंप्रदाये विद्यतेऽयं मन्त्रः।

§ अना. देभागतम्।

† शेषं देभावत्।

(१) **आगृ.** २।१०।७; **देभा.** २।१०।८; **अना.** २।१०।८.

(२) **आगृ.** २।१०।८; **देभा.** २।१०।९-१०; **अना.** २।१०।९ (वो०).

(१) आसां गवां गणानुपतिष्ठेत। गणाः संघा इत्येतदुक्तं भवति। किं सर्व एवोपस्थेया गणा गवाम्? नेत्युच्यते। अगुरुगवीनां ये गणास्तानुपतिष्ठेत। अत्र गुरुगवीप्रतिषेधात् परगवीनामेतदुपस्थानं भवति। तत्र त्वयं मन्त्र उपदिश्यते। अनेनोपस्थानं कर्तव्यम् – 'भूताः स्थ' इति। देभा.

(२) आसां गवाम् अगुरुगवीनां संघानुपतिष्ठेताहरहः 'भूताः स्थ' इति। गुरोर्गावस्तासु तिष्ठन्ति चेन्नोपतिष्ठेत। सर्वत्र स्थित्वैवोपस्थेयम्, नोपविश्य। तथा चोक्तम् – 'उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम्' इति। 'शं मयि जानीध्वम्' इति सकृदेव वक्तव्यम्। अध्यायपरिसमाप्ति-लक्षणार्थं हि द्विर्वचनम्। नावृ.

(३) गणान् संघातान् यत्र यत्र (? तत्र) दृष्टानुपतिष्ठेत।.... इतिकरणं चाध्याहार्यम्+।

* अना.

## कौषीतकगृह्यसूत्रम्

### गवानुमन्त्रणम्, प्रथमप्रसूतायाः पयसा होमः, अङ्ग-लक्षणविधिः

**"परि वपस्वेदं वृञ्जन्तु घोषिण्यः स मा स्वस्थ गोपते मा वो रक्षो मनो रिषत्', 'पूषा गा अन्वेतु नः' (ऋसं. ६।५४।५) इति गाः प्रतिष्ठमाना अनुमन्त्रयते।।**

'परि वपस्व' इत्यनेन मन्त्रेण 'पूषा गा अन्वेतु नः' इत्यनयर्चा च गाः प्रतिष्ठमाना अनुमन्त्रयते। भव.

**'परि पूषा' (ऋसं. ६।५४।१०) इति परिक्रान्तासु।।**

'परि पूषा' इत्यनयर्चा परिक्रान्तासु गोष्वनुमन्त्रयते। भव.

**'यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च। ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः।।', 'आ गावो अग्मन्' (ऋसं. ६।२८।१) इति सप्ताऽऽगतासु'।।**

'यासामूधः' इत्येतं मन्त्रं च 'आ गावः' इति सप्त ऋचश्च गोषु (? गोष्वा)गतासु जपति। भव.

+ सूत्रान्ते इति शेषः।

* शेषं नावृगतम्।

(१) **कौगृ.** ३।५।४-९.

**उत्तमामाकुर्वन् 'मयो भूर्वातः' (ऋसं. १०।१६९।१) इति च सूक्तेन गोष्ठगताः।।**

¶ उत्तमामाभिः सह कुर्वन् 'मयोभूर्वातः' इति सूक्तेनानुमन्त्रयते। भव.

**यासु प्रथमा प्रजायेत तस्याः पीयूषं जुहुयात् – 'संवत्सरीणं पय उस्रियायाः' (ऋसं. १०।८७।१७) इति द्वाभ्याम्।।**

प्रतिसंवत्सरं तासां या प्रथमा प्रजायेत तस्यां (? स्याः) पीयूषम् 'संवत्सरीणं पय उस्रियायाः' इति द्वाभ्यामृग्भ्यां जुहुयात्। यावदुक्तमत्र कर्म। भव.

**या फाल्गुन्या उत्तरामावास्या सा रेवत्या संपद्यते, तस्यामङ्गलक्षणानि कारयेत् – 'भुवनमसि सहस्रमसि रायस्पोषं मा वो दधत्। अक्षतमस्यरिष्टं विराळन्नं गोपायति। यावतीनामिदं करिष्यामि भूयसीनामुत्तरासां क्रियासम्' इति।।**

या फाल्गुन्या उत्तरामावास्या सा रेवत्या यदा संपद्यते, तस्यामङ्गलक्षणानि कारयेत् 'भुवनमसि' इत्यनेन मन्त्रेण। भव.

### उत्तरोत्तरलघीयस्यः सिलादयः षड्विधा वृत्तयः, आपदि वैश्यवृत्तिः

**'सिलमुञ्छमयाचितप्रतिग्रहः साधुभ्यो याचितो वा याजनमध्यापनं वृत्तिः।।**

सिल इति द्वाभ्यामङ्गुलिभ्यामाहृत्य परिगृहीतस्य संचयकरणम्। तथैव समूह्यकरणम् उञ्छम्। अयाचितः नाम प्रतिग्रहः 'देहि' इत्यनुक्त्वा आहृतहरणम्। याचितः 'देहि' इत्युक्त्वा (वा?) साधुभ्यो वा हरणम्। साधव इति द्विजातयः। अथवा स्वधर्मे वर्तमानाः साधवः। याजनं दक्षिणादानम्। अध्यापनं शिष्येभ्यो हरणम्। वृत्तिरिति जीवितोपायजातिवाचकत्वादेकवचनम्। भव.

**पूर्वं पूर्वं लघीयः।।**

¶ 'आ गावः' इत्यष्टर्चस्य सूक्तस्य आद्याः सप्त ऋचः पूर्वसूत्रे विनियुक्ताः। अवशिष्टा 'उपेदमुप' इत्यन्तिमा ऋगत्रोत्तमाशब्देन ग्राह्येति शाङ्खायनगृह्यसंग्रहात् प्रतीयते।

(१) **कौगृ.** ३।११।४४-४६.

तेषां वृत्तिकारणानां पूर्वं पूर्वं लघीयः कारणम्। पापापेक्षया लघीय इत्युक्तम्। धर्मापेक्षया चेत् गरीय इति भवति। एतद्विधानं ब्राह्मणस्योत्तरत्र वक्ष्यामः। भव.

**असंसिध्यमानायां वैश्यवृत्तिर्वा।।**

एतासु कस्यांचिदसंसिध्यमानायां वैश्यवृत्तिर्वा स्यात्। सर्वेषां वर्णानां वृत्तिविशेषाः शास्त्रान्तरेषूक्ताः। तस्माद्वैश्यवृत्तिरिति प्रसिद्धग्रहणम्। कृषिर्वणिक् पाशुपाल्यं पण्यापण्यविशेषश्च। भव.

कृषिसंबन्धिमुहूर्तहोमादि-
विधयः

**[१]रोहिण्यां कृषिकर्माणि कारयेत्।।**

**प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेत्।।**

कथमिति चेत्, आह – प्राच्यामिति। आत्मनः क्षेत्रस्य प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिमुपहरेत्। भव.

**गोमयेन परिमण्डलं स्थण्डिलमुपलिप्य प्रागग्रेषु नवेषु कुशेषु 'द्यावापृथिवीभ्यां नमः' इत्यपो दद्यात्।।**

कथमिति चेत्, आह – गोमयेनेति। तत्र गोमयेन परिमण्डलं स्थण्डिलमुपलिप्य तत्र प्रागग्रान् कुशानुपस्तीर्य। उदगग्रनिवृत्त्यर्थं प्रागग्रविधानम्। तेषु कुशेषु 'द्यावापृथिवीभ्यां नमः' इत्यपो दद्यात्। भव.

**एवमेव गन्धमाल्यधूपदीपस्थालीपाकानाम्।।**

एवमेव गन्धादीनामपि दानं कार्यम्। एवमेवेति अनेनैव मन्त्रेणेत्यर्थः। भव.

**पयसौदनं वा।।**

पयसौदनं वा स्थालीपाकस्य स्थाने कुर्यात्। भव.

**'नमो द्यावापृथिवीभ्यां नमः' इति चोपस्थानम्।।**

**न नित्यं परिस्तरणम्।।**

इह स्थालीपाकश्रवणलिङ्गाद्धोमोऽनुमीयते यथाप्रकृति। तस्येदमपि लिङ्गं 'न नित्यं परिस्तरणम्'। प्रकृतिवत्प्राप्तस्य परिस्तरणस्य विधिरयम्। द्यावापृथिवीभ्यां स्वाहा इति हुत्वा परिसमाप्य पुनर्बलिं हरेत्। भव.

**यथासमाम्नातो वा विकल्पः।।**

(१) **कौगृ.** ३।१३।१-१२.

यथा समाम्नातमेव वा विकल्पः स्यात्। यावदुक्तमपि कर्म स्यात्। होमकर्मानुमातव्यमित्यर्थः। भव.

**तच्छेषेण ब्राह्मणान् (? णम्) तर्पयति।।**

तच्छेषेण बलिशेषेण कंचिद्ब्राह्मणं वेदविदं तर्पयति। भव.

**प्रथमयोगे सीरस्य ब्राह्मणः सीरं स्पृशेत् – 'शुनं नः फालाः' (ऋसं. ४।५७।८) इति।।**

स ब्राह्मणः सीरस्य प्रथमयोगे 'शुनं नः फालाः' इत्यनयर्चा सीरं स्पृशेत्। भव.

**'क्षेत्रस्य पतिना' (ऋसं. ४।५७) इति सूक्तमनुब्रूयात्।।**

अथ 'क्षेत्रस्य पतिना' इति सूक्तमनुबूयात्। भव.

**कृतां परिहाप्य।।**

'शुनं नः फालाः' इत्येतां परिहाप्य। भव.

## शाङ्खायनगृह्यसूत्रम्

गवामनुमन्त्रणम्, गवामङ्कनकर्म,
प्रथमप्रसूतायाः पयसा
होमः

**[१]"परि वः सैन्याद्वधाद्व्या वृञ्जन्तु घोषिण्यः।**
**समानस्तस्य गोपतेर्गावो अंशो न वो रिषत्।।',**

**'पूषा गा अन्वेतु नः' (ऋसं. ६।५४।५) इति गाः प्रतिष्ठमाना अनुमन्त्रयेत।।**

**'परि पूषा' (ऋसं. ६।५४।१०) इति परिक्रान्तासु।।**

**'यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च। ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः।।' इति, 'आगावो अग्मन्' (ऋसं. ६।२८।१) इति च प्रत्यागतासु।।**

**उत्तमाममा कुर्वन्।।**

**'मयोभूर्वात' (ऋसं. १०।१६९।१) इति सूक्तेन गोष्ठे गताः।।**

गोसंवधकर्म वक्ष्यामः। 'पीरवः... रिषत्।।', 'पूषा गा अन्वेतु नः' इतिमन्त्रद्वयेन §परिक्रान्ता अनुमन्त्रयेत्। अपरे तु व्याचक्षते – पथः परिवृता अनुमन्त्रयेत्। 'यासामूध-

§ अत्रत्यो ग्रन्थस्त्रुटित इति प्रतीयते।

(१) **शागृ.** ३।९।१-५.

श्चतुर्बिलं मध्ये पूर्णं घृतस्य च। ता नः सन्तु पयस्वती-र्बह्वीर्गोष्ठे घृताच्यः' इति, 'आ गावो अग्मन्नुत भद्रमक्रन्' इति च प्रत्यागतासु गोषु जपेत्, ततः 'उपेदमुपसर्पनम्' इत्यनेन मन्त्रेण गोष्ठं प्रवेशयेत्। 'मयोभूर्वातो अभि वातूस्राः' इति चतसृभिर्गोष्ठगता अनुमन्त्रयते।

शागृसं. ४८-४९

**[1]या फाल्गुन्या उत्तराऽमावास्या सा रेवत्या संपद्यते। तस्यामङ्कलक्षणानि कारयेत्।।**

**'भुवनमसि सहस्रपोषमिन्द्राय त्वा श्रमो ददत्। अक्षतमस्यरिष्टमिडाऽन्नं गोपायनं यावतीनामिदं करिष्यामि भूयसीनामुत्तमां समां क्रियासम्' इति।।**

गवामङ्कनकर्म वक्ष्यामः। फ( ?फा)ल्गुनीपौर्णमासीम-तीत्यामावास्याप्रदेशे रेवत्यामङ्कं विकर्त्य आत्मीयं कुर्यात्। 'भुवनमसि सहस्रपोषमिन्द्राय त्वां श्रवो ददत्। अक्षत-मस्यरिष्टमिडाऽन्नं गोपायनं यावतीनामिदं करिष्यामि भूयसीनामुत्तमां समां क्रियासम्' इति स्वयं गोपतिः ऋत्विजो (? ग्) वा मन्त्रं जपति। अङ्कनकर्म त्वन्यः कुरुते। अङ्कबहुत्वे मन्त्रावृत्तिः। शागृसं. ४९

**या प्रथमा प्रजायेत तस्याः पीयूषं जुहुयात् – 'संवत्सरीणं पय $ उस्त्रियायाः' (ऋसं. १०।८७।१७) इत्येताभ्यामृग्भ्याम्।।**

पीयूषहोमकर्म वक्ष्यामः। अत्र स्तरणाघाराज्यभागा निर्विकल्पाः। अग्नये ग्रहणप्रोक्षणे। आवसथ्याग्नावुपलेप-नोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततः 'संवत्सरीणं पय उत्सि( ? स्त्रि)यायाः' इति द्वाभ्यामृग्भ्यां द्वे आहुती स्थाली-पाककर्मणा हुत्वा ततः स्विष्टकृत्, ततो महाव्याहृति-सर्वप्रायश्चित्तादि तन्त्रशेषं समापनीयम्। अपरे व्याच-क्षते – आहुतिद्वयमेव होतव्यम्, न प्रतिश्रुतकर्मेति।

शागृसं. ४९

$ अन्यतरादर्शपुस्तकेऽत्र 'उष्णियायाः' इति पाठो मुद्रितः। 'उस्त्रि' इति शाकलसंहितापाठोऽस्ति। संहिताभेदात् पाठभेददर्शनाच्च शाङ्खायनसंहितापाठो यद्यपि संदिग्धस्तथापि गृह्यसंग्रहे मुद्रितं 'त्सि' इत्यक्षरं वर्णतो लिपितश्च सदृशतरत्वात् 'स्त्रि' इति शाङ्खायनसंहितापाठं संभावयति। स्थलनिर्देशस्तु आदर्शपुस्तकेऽत्र च शाकलसंहितीयः कृतोऽस्ति।

(१) **शागृ.** ३।१०।१-३.

कृषिकर्मणि मुहूर्तादि-
विधयः

**[1]रोहिण्यां कृषिकर्माणि कारयेत्।।**

**पुरस्तात्कर्मणां प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवी-यं बलिं हरेत् § द्यावापृथिवीययर्चा।।**

**'नमो द्यावापृथिवीभ्याम् (शाश्रौ. १।६।११)' इति चोपस्थानम्।।**

**प्रथमप्रयोगे सीरस्य ब्राह्मणः सीरं स्पृशेत् 'शुनं नः फाला' इति एतामनुब्रुवन्।।**

**क्षेत्रस्य पतिना इति प्रदक्षिणं प्रत्यृचं प्रतिदिश-मुपस्थानम्।।**

कृषिकरणकर्म वक्ष्यामः। रोहिण्यां हलयोक्त्रकर्णगाल-वादीनां प्रारम्भे यत्कर्म तदन्येन ब्राह्मणेन कारयितव्यम्। गृहादेव सिद्धं हविष्यमन्नं गृहीत्वा क्षेत्रस्य पुरस्तात् 'मही द्यौः पृथिवी च न इमं यज्ञम्' (ऋसं. १।२२।१३) इति मन्त्रेण नमस्कारान्तेन बलिं दत्त्वा ततो 'नमो द्यावापृथिवीभ्यां होतृभ्यां पूर्वसूभ्यां विश्वकर्माणौ तनूपौ मे स्थस्तन्वं मे पातं मा मा हिंसिष्ठं मा मा संताप्तम्' इति प्रतिदिशमुपस्थानं कृत्वा वापयति। शागृसं. ६२

## आपस्तम्बगृह्यसूत्रम्

गोग्रहणमुहूर्तः

**[2]मघाभिर्गावो गृह्यन्ते।।**

यदि मघाभिः गावः क्रयादिना गृह्यन्ते, ताश्च गावः प्रतिनन्दिता भवन्ति। तस्मात् गोपरिग्रहे मघाः प्रशस्ताः।

अनाकुला.

## मानवगृह्यसूत्रम्

कृष्यङ्गभूतेष्वायोजनादिकर्मसु
देवताविधानम्

**[3]अग्निरिन्द्रः सोमः सीता सविता सरस्वत्यश्विना**

§ अयं सूत्रांश आधुनिकसंशोधितादर्शपुस्तके उत्तरसूत्रे समा-वेशितोऽस्ति। स तत्र संगत्यभावात् गृह्यसंग्रहानुरोधाच्चास्माभिरत्रा-ऽऽकृष्टः। आदर्शान्तरे सूत्रविभागो नास्ति।

(१) **शागृ.** ४।१३।१-५.

(२) **आपगृ.** ३।१.

(३) **मागृ.** २।१०।७.

**(? नाव) नुमती रेवती राका पूषा रुद्र इत्येतैरायोजन-पर्ययनप्रवपनप्रलवनसीतायज्ञखलयज्ञतन्तीयज्ञान-डुद्यज्ञेष्वेता देवता इति यजति सांवत्सरेषु च पर्वसु।।**

अथ हलाभियोगानां पदार्थानुक्रमाः कथ्यन्ते। तेषु हलाभियोगेषु पूर्वं पूर्वेद्युः श्राद्धकरणम्। विधिना मातृपूजन-माभ्युदयिकश्राद्धं च। हलाभियोगानां कर्मणां प्रारम्भनिमित्तं श्राद्धं पार्वणत्रयमित्यादिप्रयोगेण श्राद्धं कुर्यात्। तत्र हला-भियोगदेवतानुक्रमः – अग्निः, इन्द्रः (इति)। §एते द्वादश हलाभियोगदेवताः। अथ हलाभियोगकर्मनामधेयानि। अथानुक्रमः। आयोजनं कर्षणसामग्रीकरणम्। पर्ययनं प्रथमं क्षेत्रे गमनम्। प्रवपनं बीजवपनम्। कस्मिंश्चिद्देशे हेमन्तादौ पानीयेन क्षेत्रभूमिः प्लाव्यते तत्र मपरं सीतायज्ञकरणम्(?)। तत्र मोदकादिभिः सीतापूजनम्। यदा खले धान्यमानयति तदा खलयज्ञः। उत्पूते धान्ये तत्र अनडुहय(? द्य)ज्ञः। तत्राऽऽनडुहाभ्यां शृङ्गाभ्यां करणम् (?), मालामुकुट-बन्धनम्, पवित्रादिकानामासादनम्। 'ओम् अग्नये स्वाहा, ओम् इन्द्राय स्वाहा' इति द्वादश प्रधानाहुतीर्जुहोति। ततो जयहोमः। एवं सर्वेषु हलाभियोगेषु कुर्यात्। इति हलाभियोगानुक्रमः। स्वस्ति एतानि कर्माणि संवत्सरेषु च पर्वसु सर्वप्रायश्चित्तं तन्त्रेण कुर्यात्। नद्युदध्यायोजनं प्रथमसौरिकसंवदनम्। प्रथमं सीरिसं पर्यायनं स्वे क्षेत्रे प्रथमं परिगमनम्। प्रवपनं बीजवपनम्। प्रथमं प्रप्ल(? ल)-वनं प्रथमं धान्यानां लवनम्। प्रथमं प्लवनमिति केचि-त्पठन्ति। तत्र क्वचिद्देशान्तरे हेमन्तकाले पानीयेन क्षेत्रभूमिः प्लाव्यते। सीतायज्ञः। कृषिवृत्तिजीवनैरेतेषु निमित्तेषु एता देवता अवश्यं यष्टव्याः, नित्याधिकारात्। सांवत्सरेषु च पर्वसु एता एव देवता यजति। संवत्सरस्येमानि सांवत्सराणि पर्वाणि पक्षमासमन्वय(?) बहुवचनमृतसत्यमभिमनुनेति (?) सायं प्रातस्तथा दर्शपूर्णमासयोश्चेति स्यात्।

अष्टाभा.

§ 'पुमान् स्त्रिया' (पासू. १।२।६७) इत्येकशेष उद्देश्याभि-प्रायेण।

## भारद्वाजगृह्यसूत्रम्

वाणिज्यव्यवहारारम्भे कर्तव्यो होमः

**[1]व्यवजिहीर्षमाणः पण्यस्यावदाय जुहोति – 'यदहं धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः। तस्मि-न्सोमो रुचमादधात्वग्निरीशान इन्द्रो बृहस्पतिश्च स्वाहा।।'।।**

## काठकगृह्यसूत्रम्

गोयज्ञविधिः

**[2]'गावो भगः' (कासं. १३।१६ (८०, ८१) इति द्वाभ्यां गोयज्ञस्य।।**

(१) गवां प्रसूतानां स्वास्थ्यपुनःसद्गर्भग्रहणाद्यर्थो वसन्ते यज्ञः गोयज्ञः। अश्रुतद्रव्येषु आज्यं हविश्चतुर्गृहीतम्, यवव्री-हिनिर्मितं वा यावकादि, दृष्टार्थेषु लोके स्वस्त्ययनेषु प्रवृत्त्य-र्थत्वात्। प्रायेण पलाशादिस्रुवेण होमः, उपनयनादौ दृष्ट-त्वात्। प्रायेण स्वस्त्ययनानि इत ऊर्ध्वं दृष्टार्थानि। श्रावण्य-ष्टकादिप्र(? काप्र)भृतीन्यदृष्टार्थान्यपि। देव.

(२) गोयज्ञः गोमङ्गल्यमिति कश्मीरेषु प्रसिद्धः। गोयज्ञे च हलानि योजयन्ति प्रथमे वसन्ते हिमापगमे। यज्ञशब्दोऽत्र तन्त्रम्। गोमङ्गलयज्ञादीनां रात्रियज्ञादीनां सर्वेषामाज्यधान्या एवावदायाऽऽज्यप्रधानाहुतीर्यथोक्तं जुहुयात्। अत्र सर्वत्राऽऽ-ज्यं हविः। आज्यभागान्ते चतुर्गृहीतेन प्रचारम्(? रः)। 'गावो भगः', 'न ता अर्वा' इति गोमङ्गले प्रधानम्।

ब्राह्म.

कृषिसंबन्धिनामायोजनीय-यज्ञादिकर्मणां प्रयोगाः

**'सीरा युञ्जन्ति' (कासं. १६।१२(१४४-१४६) इति तिसृभिरायोजनीयस्य।।**

(१) अत्रैवावसरे प्रथमकर्मफलार्थं स्वस्त्ययनमाह – सीरेति। आयोजनं बलीवर्दसंबन्धः प्रयोजनं यस्य यज्ञस्य स आयोजनीयः। तस्य जुहुयात् 'सीरा युञ्जन्ति' इत्यादि-भिस्तिसृभिर्ऋग्भिः। देव.

(१) भागृ. २।२६.

(२) कागृ. ७१।१-११.

(२) 'सीरा युञ्जन्ति', 'युनक्त सीरा', 'पूषा युनक्तु' इति तिसृभिः। तदेव द्विपदा संतृतीया(?)।

ब्राह्म. २८३

**प्रथमोत्तमाभ्यां युनक्ति।।**

'सीरा युञ्जन्ति' इति या प्रथमा गायत्री, 'पूषा युनक्ति' इति च या उत्तमा द्विपदा त्रिष्टुप्, ताभ्यां यागानन्तरं बलीवर्दान् युनक्ति यूपैः संयोजयतीत्यर्थः। युनक्तियोक्त्रयतीतिशब्दौ बलीवर्दानां यूपसंयोजने रूढौ।

२।३९३-३९४

'सीरा युञ्जन्ति' इति तिस्रः अदितिनिर्ऋत्योरार्षम्। तत्र प्रथमोत्तमाभ्यां युनक्तीत्युक्तम्। प्रथमा गायत्री तावत् – 'सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक्। धीरा देवेषु *सुम्नयुः।।'। कवयः क्रान्तकालदर्शनाः सीराणि फालानि युञ्जन्ति यूपेषु नियोजयन्ति। युगा वितन्वते पृथक्। युगानि बलीवर्दस्कन्धेषु निदधति पृथक् पृथक्। धीरा देवेषु विजिगीषुषु द्योतमानेषु वा मध्ये बुद्धिमन्तः सुम्नयुः सुम्नयवः, व्यत्ययेनैकवचनम्, सुम्नं, सुखमिच्छन्ति आत्मन इति सुम्नयवः, 'क्याच्छन्दसि' (पासू. ३।२।१७०) इति उप्रत्ययः। अथोत्तमा – 'पूषा युनक्तु सविता युनक्तु बृहस्पतिः सविता देवो अग्निः।।'। द्विपदा, त्रिष्टुप्। पूषा यूपं युनक्तु दान्तस्कन्धे निदधातु। सविता युनक्तु इति (? त्यादि) समानम्। एकस्य सवितृशब्दस्य सकलकृषिफलप्रसवक्रियाणां कर्ता वाच्य इत्यपौनरुक्त्यम्।

+ देव. २।३९९-४००

**मध्यमया फालम्।।**

'युनक्त सीरा' इति मध्यमया फालं युनक्ति।

२।३९४

मध्यमया फालं युनक्तीत्युक्तम्। सा व्याख्यायते – 'युनक्त सीरा वि युगा तनोत कृतो योनिर्वपतेह बीजम्। गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः § पक्वमेयात्।।'। त्रिष्टुप्। सीराणि फालानि युनक्त यूपेषु योजयत। वि युगा तनोत युग्यानि वितनुत। अगम्यासु योक्त्राणि विसारयतेत्यर्थः। कृतो योनिः हलबलीवर्दादिकृतो योनिरस्ति। अतः इह क्षेत्रेषु बीजं वपत। गिरा च श्रुष्टिः सभरा असन्नः। नः अस्माकं श्रुष्टिः कीर्तिः असत् अस्तु कर्षणात् यज्ञादिद्वारेण। श्रूयते या श्रवणक्रियेप्सिततमा सा श्रुष्टिः। कया? गिरा वाचा श्रुतिस्मृतिरूपया। कीदृशी श्रुष्टिः? सभरा। भर इति तेजोनामसु पठ्यते, हरति साधुमनांसि तमांसि वेति भरः। 'हृग्रहोर्भश्छन्दसि' (वार्तिकम् ८।२।३२) इति हस्य भत्वम्, सभरा सतेजस्का इत्यर्थः। नेदीय इत्सृण्यः पक्वमेयात्। इदिति पादपूरणे। अतिशयेन निकटम् अचिरेणैव कालेन पक्वं सत् अन्नमस्माकं आ इयात् आगच्छतु। सृण्यः सृण्या इवाकृष्टो हस्ती। सृणिः अङ्कुशः।

+ देव. २।४००-४०१

**'शुनं सुफाला' (कासं. १६।१२(१४७) इति प्रदक्षिणं द्वे कृषति।।**

'शुनं सुफालाः' इत्यादिकया ऋचा प्रदक्षिणं कृत्वा द्वे सीते कृषति।

२।३९४

'शुनं सुफाला वितुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः। शुनासीरा हव्यजुष्टिं जुषाणेदं बीजमवतमुप्यमानम्।।'। शुनः वायुः, सीरः आदित्यः। हे शुनासीरौ, इदं बीजमवतम्, हव्यजुष्टिं जुषाणा हविर्जोषं जुषमाणौ हविः सेवमानौ। द्विवचनस्य 'सुपां सुलुक्' (पासू. ७।१।३९) इत्याकारः। किंच, युष्मत्प्रसादात् कीनाशाः कर्षकाः शुनं सुखं कृत्वा भूमिं वितुदन्तु व्यथयन्तु पाटयन्तु। तथा सुफालाः सुसंयुक्तफालाः सन्तः एतैः वाहैः बलीवर्दैः अभियन्तु अभिगच्छन्तु प्राप्नुवन्तु फलसमृद्धिम्।

देव. २।४०१

**'लाङ्गलं पवीरवम्' (कासं. १६।१२(१४८) इत्यपरे द्वे।।**

---

* अत्र न केवलकाठकसंहितायाम्, शाकलसंहितातैत्तिरीयसंहितामैत्रायणीसंहितास्वपि 'सुम्नया' इति पाठोऽस्ति। शौनकसंहितायां 'सुम्नयौ' इति पाठोऽस्ति। न कुत्रापि 'सुम्नयुः' इति पाठोऽस्मिन् मन्त्रे उपलभ्यते।

\+ ब्राह्म. देवगतम्।

§ अत्र सर्वकृष्णयजुःसंहितासु 'पक्वमायत्' इति पाठे सति ऋग्वेदाथर्ववेदयोः पाठोऽत्र धृत इति चित्रम्।

\+ ब्राह्म. देवगतम्।

'लाङ्गलं पवीरवम्' इत्यादिकया अन्ये द्वे सीते कृषति। २।३९४

'लाङ्गलं पवीरवं सुशेवं सोमपिच्छरु$। उदिद्वपति गामविं प्रस्थावद्रथवाहनं प्रहव्यं च पीवरीम्।।'। पङ्क्तिः। इत्, उत् एतौ निपातौ पादपूरणार्थौ। लाङ्गलं फालं वपति बीजम्। तदेतावन्न तावत् वक्तव्यं धान्यादिकमेवोत्पादयति, किं तर्हि? गवाश्वयागादिकं सर्वं सस्यव्रीह्यादिद्वारेण। बहुलादन्नात् सर्वं हि उद्भवति विक्रयादिमुखेन। अत उच्यते लाङ्गलं गां वपति, अविं च वपति, रथवाहनं च तुरगादिकम्। कीदृशम्? प्रस्थावत् सवेगगमनम्। प्रकृष्टं च हव्यं वपति यज्ञसाधनम्। पीवरीं तरुणं युवतिं च लिङ्गव्यत्ययेन तन्त्रेण। पवीरवम्। पविः चक्रनेमिः। पवेरिव रवो यस्य तत् पवीरवम्। यथा हि रथो गच्छन् शब्दविशेषं करोति तथा फालं धरणिं पाटयत्। सुशेवम्, शेवः सुखम्, सुसुखम्। सोमपिच्छरु। † शरु फालमूर्धा। अथवा, ये भूमिगताः प्रच्छन्ना दानवादयः सोमं पिबन्ति, अपहृत्य तान् भूमिविदारणव्याजेन श्रृणाति हिनस्तीति सोमपिच्छरु फालम्। देव. २।४०१-४०२

**'घृतेन सीता' (कासं. १६।१२(१४९) इति सीतायज्ञस्य।।**

(१) 'घृतेन सीता' इति मन्त्रेण सीतायज्ञस्य जुहुयात् कार्तिकशुक्लद्वादश्यां यवबीजवपनोपक्रमाय सीतायज्ञस्य आर्येषु प्रसिद्धेर्यत्र वीरणादिमयी सीता कुमारीदेवता विरच्यते। २।३९४

'घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमतं मरुद्भिः। उर्जो भागं मधुमत्पिन्वमानाऽस्मान्सीते पयसाऽभ्याववृत्स्व।।'। सीता भूमिदेवता घृतेन मधुना मधुररसेन समज्यतां संतृप्यताम्। त्वमपि च संतर्पिता सती हे सीते, अस्मान् पयसा क्षीरेण सह अभ्याववृत्स्व आभिमुख्येन आवर्तस्व पुनः पुनः सांमुख्यं भजस्व। किं कुर्वती? ऊर्जः अन्नस्य भागं विभजनं देवब्राह्मणाद्यर्थं मधुमत् मधुररसयुक्तं पिन्वमाना परिपोषयन्ती। कीदृशं भागम्? विश्वैः देवैः द्योतनैः रश्मिभिः अनुमतं संमतं मरुद्भिः वायुभिश्च। धरणिसमीरणरविकिरणसंघट्टनघटितं हि सकलमन्नम्। देव. २।४०२-४०३

(२) कर्मणि समाप्ते 'घृतेन सीता' इति चतुर्गृहीतेनाऽऽज्यस्य प्रधानम्। ततस्तन्त्रसमाप्तिः। एतद्गोमङ्गलम्। ब्राह्म.

**'या ओषधयः' (कासं. १६।१३(१५२) इति बीजवपनीयस्य।।**

बीजं वपनीयं यस्य स बीजवपनीयो यज्ञः। तस्य 'या ओषधयः' इत्यादिना जुहुयात्। सीतायज्ञानन्तरमेवैष यज्ञस्ततो यवबीजवपनम्। २।३९४-३९५

'या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामहं शतं धामानि सप्त च।।'। अनुष्टुप् छन्दः। आथर्वणस्य भिषज आर्षम्। ओषधीस्तुतिः। या देवेभ्यः प्रथमजाः ज्येष्ठाः ओषधयः। कियता कालेन ज्येष्ठाः? त्रियुगं पुरा, त्रिभिर्युगैः पूर्वभूता ज्येष्ठा इत्यर्थः। तासामोषधीनां बभ्रूणां पक्वरसयोगेन पाटलानाम् अहं धामानि स्थानानि नामानि तेजांसि च मनै मन्ये जानामि। कियन्ति? शतं सप्त च, सप्ताधिकं शतमित्यर्थः। पुरुषस्य मर्माणि सप्ताधिकं शतम्, तान्येवौषधीनामित्याहुः।

* देव. २।४१२-४१३

**'विमुच्यध्वम्' (कासं. १६।१२(१५०) इति विमोचनीयस्य।।**

(१) अत्रापि प्रयोजनार्थीयस्तद्धितः। 'विमुच्यध्वम्' इति (आदिना?) विमोचनीययज्ञस्य जुहुयात्। सर्वबीजवपनसमाप्तावयं यज्ञः स्वस्तये। २।३९५

'विमुच्यध्वमघ्न्या देवयाना अगन्म $तमसस्परं ज्योतिरपाम।।'। द्विपदा जगती। हे अघ्न्याः अहन्तव्याः, विमुच्यध्वम्। अस्मदुपकारेण परलोके देवयाना देवशरीरा भूयास्त। वयमपि युष्मत्प्रसादाहितान्नादिना सत्कर्माणि कृत्वा तमसः अविद्यायाः परम् अगन्म गमिष्यामः, गत्वा च तमसः परं ज्योतिरपाम परं ब्रह्म प्राप्स्यामः। देव. २।४०३

---

$ 'त्सरु' इति काठकसंहिपाठः।

† फालमूर्धार्थकत्वपक्षे सोमपिच्छब्दार्थो न व्याख्यातः।

* ब्राह्म. देवगतम्।

$ 'तमसस्पारम्। ज्योतिरापाम।।' इति काठकादिसंहितासु पाठः।

(२) 'विमुच्यध्वम्' इति यदा बलीवर्दाः†हले समाप्ते विमुच्यन्ते। ब्राह्य.

**'त्रातारमिन्द्रम्' (कासं. १७।१८(९८,९९) इति द्वे पर्ययणस्य।।**

(१) पर्ययणं खलप्राप्तानां व्रीहीणां क्षोदनं बलीवर्दचरणैर्गाहनम्, यत्र गाहिकेति प्रसिद्धिरार्याणाम्। तत्प्रयोजनस्य यज्ञस्य 'त्रातारमिन्द्रम्' इत्यादिना द्वयेन जुहुयात्। पर्ययणे द्वे साधने इति तु सूत्रान्वयः। २।३९५

'त्रातारमिन्द्रम्' इति द्वे। 'त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः।।'। ऐन्द्री। त्रिष्टुप्। अश्विनोरार्षम्। इन्द्रं ह्वयामि आह्वयामि परमेश्वरम्। कीदृशम्? त्रातारं रक्षकम्, अवितारं गन्तारं सर्वगतमित्यर्थः, हवे हवे आह्वाने होमे होमे वा सुहवं सुखाह्वानं सुखहवनं वा, शूरं विक्रमयुक्तम्, शक्रं शक्तम्, पुरुहूतं बहुभिराहूतं हुतं वा। आहूतश्चेन्द्रः मघवा धनवान् अस्माकं स्वस्ति अविनाशं ददातु। पुनरिन्द्रशब्दोऽन्यत्र निवृत्त्यतिशयद्योतनार्थः।

२।३०८

द्वितीया तु – 'उग्रो जज्ञे वीर्याय स्वधावाञ्चक्रिरपो नर्यो यत्करिष्यत्*। जग्मिर्युवा नृषदनमवोभिस्त्राता न इन्द्र एनसो महश्चित्।।'। इन्द्रः नः अस्माकं महश्चित् महतः एनसः पापात् त्राता गोपायिता। स हि उग्रः प्रचण्डः जज्ञे जातः वीर्याय रिपुवधाय। स्वधावान् स्वधायाः अन्नस्य यज्ञे भोक्ता उत्पादयिता वृष्ट्यादिद्वारेण। नरेभ्यो हितः। अपश्चक्रिः। अप इति कर्मनाम, करोति चक्रिः। कर्म करोति यत् करिष्यत् यच्चिकीर्षितम्। जग्मिर्युवा नृषदनम्। नरः सीदन्ति अस्मिन् नृषदनं यज्ञः, गच्छतीति जग्मिः, यज्ञस्य गन्ता। युवा नित्यतरुणः समर्थः। यौति मिश्रयति चाऽऽत्मजीवात्मानौ ज्ञानकर्मसमुच्चययुक्त्येति युवा। अवोभिः अवनैः रक्षणप्रकारैः, त्रातेति संबन्धः।

देव. २।४०३-४०४

(२) 'त्रातारमिन्द्रम्', 'उग्रो जज्ञे' इति च धान्यादिक्षोदनारम्भे। ब्राह्य.

---

† अत्र 'फले' इत्यादर्शपुस्तके पादटिप्पण्यां पाठान्तरम्।

* '...... ष्यन्' इति संहितापाठः।

**एवं प्रथमोद्वपनस्य।।**

(१) प्रथमोद्वपनं व्रीह्यादीनां नवनिष्पन्नानामाद्यं वपनम्। तत्प्रयोजनस्य यज्ञस्य 'त्रातारमिन्द्रम्' इति द्वे साधनभूते ऋचौ।

देव.

(२) एताभ्यामेव प्रथमं खलादिधान्यं गृहं वा कोष्ठागारं नीयते, कोष्ठागाराद्वा यदा वसन्त आनीयते।

ब्राह्य.

## आग्निवेश्यगृह्यसूत्रम्

कृषिसंबन्धीनि बीज-
निवापनादीनि
कर्माणि

**'अथ बीजनिवापनं व्याख्यास्यामः। रोहिण्यां तिष्यमूलयोर्विशाखयोर्मघासु श्रवणायां रेवत्यां मित्रावरुणयोर्म( ?र्मा)रुत उत्तरास्वेकस्मिन् नक्षत्रे बीजानादाय दत्वा ( ? दका)धिवासं करोति। एषु नक्षत्रेषु एकस्मिन् नक्षत्रे क्षेत्रं गत्वा पूर्वायां दिशि गन्धादिभिराराध्य शिरीषपर्णैरवकीर्य गन्धशेषैरात्मानमुपलिप्य कर्षकाय गन्धादि दत्त्वा बीजानि वपेत् – 'या जाता ओषधयः' (तैसं. ४।२।६) इत्येतेनानुवाकेन। अथालह्वा( ? ह्वल)नात् पूर्वं चरूर्जं श्रपयित्वाऽथ पुण्याहं वाचयित्वाऽद्भिर्मार्जयित्वा – 'आपो हि ष्ठा मयोभुवः' (तैसं. ४।१।५।१) इति तिसृभिः, 'हिरण्यवर्णाः शुचयः पावकाः' (तैसं. ५।६।१।१) इति चतसृभिः, 'पवमानः सुवर्जनः' (तैब्रा. १।४।८) इत्येतेनानुवाकेन, अथ पिण्डं ददाति – 'क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व। मधुश्च्युतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु' (इति)। अथ दक्षिणापुरस्तात् ततो दक्षिणापश्चात् ततः पुरस्तादुत्तरतः $पश्चादथ मध्ये यथोदितं लवनं करोति। तेन धान्येन पश्चादाग्रयणं करोति।।**

---

$ प्रक्रमानुरोधेनात्र 'ततः पश्चादुत्तरतोऽथ' इति शुद्धः पाठः संभाव्यते।

(१) आग्निगृ. २।५।१२.

## पारस्करगृह्यसूत्रम्

लाङ्गलयोजनादीनि

कृषिकर्माणि

**¹पुण्याहे लाङ्गलयोजनं ज्येष्ठया वेन्द्रदैवत्यम्।।**

(१) यस्य कृषिकर्मण्यधिकारः तस्येदमुच्यते। पुण्येऽहनि साधकैर्लाङ्गलयोजनं भवति। लाङ्गलं सीरमुच्यते। ज्येष्ठायामिन्द्रदेवत्ये वा। वाशब्दो विकल्पार्थः। ज्येष्ठायां वा लाङ्गलयोजनं कुर्यात् इन्द्रदेवत्ये। यस्मादिन्द्राधीनं कृषिकर्म, वृष्टिनिमित्तत्वात्तस्य। स्मर्यमाणस्यैवार्थस्योपपत्तित्वेन हेतूपादानम्। येषां 'वार्षिकदेवत्यम्' इति पाठस्तेषां नक्षत्रपरं नपुंसकाभिधानम्। भर्तृभा.

(२) प्रथमं कृषिप्रवृत्तस्यैतद्भवति। पुण्याहग्रहणमापूर्यमाणपक्षोदगयनाद्यनादरार्थम्। लाङ्गलयोजनं हलयोजनमित्यर्थः। 'ज्येष्ठ..... त्यम्'। §ज्येष्ठया वेति हेतौ तृतीया। अपुण्याहेऽपि ज्येष्ठया भवति लाङ्गलयोजनम्। कुतः? एतत् इन्द्रदैवत्यम् ज्येष्ठानक्षत्रम्, इन्द्रायत्ता च कृषिरिति। † कभा.

(३) योजनम् अनुसंधानम्। ‡ जभा.

(४) पुण्याहे उदगयनशुक्लपक्षादिव्युदासेन चन्द्रतारानुकूले दिवसे। योजनं प्रवर्तनम्। एतच्च मातृपूजाभ्युदयिकश्राद्धपूर्वकम्। ‡ हभा.

(५) पुण्याहे *उदगयने शुक्लपक्षे चन्द्राद्यनुकूलदिने। 'उदगयन आपूर्यमाणपक्षे पुण्याहे' (पागृ. १।४।५) इत्यनेनैव #प्राप्तत्वादत्र पुण्याहग्रहणमग्रिमसूत्रे अपुण्याहत्वद्योतनार्थम्। पक्षान्तरमाह – ज्येष्ठेति। अथवा अपुण्याहेऽपि ज्येष्ठया नक्षत्रेण युते दिने। + गभा.

(६) पुण्याहपदं शुक्लपक्षाद्यनादरार्थम्। तच्च न संभवति, गौण्या मुख्यया वा तस्य तत्रावृत्तेः। ¶ विभा.

**¹इन्द्रं पर्जन्यमश्विनौ मरुत उदलाकाश्यप॰स्वातिकारी॰सीतामनुमतिं च दध्ना तण्डुलैर्गन्धैरक्षतैरिष्ट्वाऽनडुहो मधुघृते प्राशयेत्।।**

(१) इन्द्राद्या देवता अनुमत्यन्ताः। दध्ना तण्डुलैर्गन्धैरक्षतैश्चेष्ट्वा। ततो मधुघृते प्राशयेदनडुहः। यागशब्देन देवतोद्देशेन बल्युपसंहार उच्यते। भर्तृभा.

(२) इन्द्रादिदेवताविशेषान् दध्यादिभिरिष्ट्वा। इष्ट्वेत्यनेन नमस्कारान्तैरेभिर्मन्त्रैर्बलिहरणमिन्द्राय नम इत्येवमादिभिः। कभा.

(३) अनडुहः चतुःप्रभृतीन्। † जभा.

(४) ... तद्यथा – दधितण्डुलगन्धाक्षतान् पात्रे कृत्वा शुचिराचान्तः प्राङ्मुख उपविश्य कृषिक्षेत्रैकदेशे गोमयेनो-

---

§ इदं व्याख्यानमुपपत्तिविरोधादनाकलनीयम्। एवमपि भर्तृयज्ञातिरिक्तसर्वभाष्यकाराणामेवमेव व्याख्यानं दृष्ट्वा चित्तं व्यामुह्यति। अत्र वैकल्पिको नक्षत्रविधिः स्पष्टं प्रतीयते। तत्र च इन्द्रदेवत्यत्वस्य हेतुत्वम्। स्वयमप्यग्रे तथैव व्याख्यातम्। न हि विधेयं नक्षत्रं हेतुः संभवति। वस्तुतोऽत्र 'नक्षत्रे च लुपि' (पासू. २।३।४५) इत्यनेनाधिकरणे तृतीयेति सरला प्रतिपत्तिः।

† निप्र. कभागतम्।

‡ शेषं कभावत्।

(१) **पागृ.** २।१३।१; भूयःसु सूत्रेषु भूयोभिर्भाष्यकारादिभिरादर्शसूत्रपुस्तकधृतसूत्रच्छेदेभ्यो विपरीतानां सूत्रच्छेदानां स्वीकृतत्वात् ग्रन्थगौरवभियाऽस्माभिः पारस्करसूत्रच्छेदविषयकाः पाठभेदा न संगृहीताः। सर्वत्रैवं बोध्यम्; **भर्तृभा.** ज्येष्ठया वेन्द्रदैवत्यम् (ज्येष्ठायामिन्द्रदेवत्ये वा) (ज्येष्ठायां वार्षिकदेवत्यम्) इत्यपि पाठः, गदाधरभाष्ये (ज्येष्ठायामिन्द्रदेवत्यम्) इति भर्तृयज्ञपाठो निर्दिष्टः; **निप्र.** २।३१० (पुण्याहे लाङ्गलयोजनम्) एतावदेव, गृह्यम्; **विभा.** 'अनडुहो' इत्यत्र 'अनडुहौ' इति वा 'अनडुद्भ्याम्' इति वा पाठः.

‡ शेषं कभावत्।

* यद्यपि निर्देक्ष्यमाणविवाहसूत्रे पुण्याह उदगयनशुक्लपक्षाभ्यां भिन्नस्तथापि अत्रत्यः पुण्याहशब्दस्तयोरप्युपलक्षक इत्यस्माद्व्याख्यानाद्गम्यते। कर्कादयस्तु नैवमुपलक्षकत्वं मन्यन्ते इति तद्व्याख्यानात् प्रतीयते।

# यद्यपि अत्रोद्धृतसूत्रांशस्य 'कुमार्याः पाणिं गृह्णीयात्' इत्यनेनैकवाक्यत्वस्य यथाश्रुतसूत्रात्प्रतीयमानत्वेनास्य कालस्य विवाहरुद्धत्वान्नात्र प्राप्तिरुपपद्यते इत्याभाति, तथापि अस्य सूत्रांशस्य 'दैवानि कुर्वीत' इति शेषपूरणेन वाक्यभेदेन पृथग्विधित्वस्य तत्र व्याख्याततत्वादस्ति प्राप्तिः। हरिहरविश्वनाथाभ्यां तूक्तसूत्रांशस्य सामान्यविधिपरत्वं तत्राव्याख्यायाप्यत्र तत्कालप्राप्तिः सिद्धत्वेन गृहीता।

+ शेषं भर्तृभागतं कभागतं च।

¶ शेषं कभागतं हभागतं च।

† शेषं भर्तृभागतं कभावच्च।

(१) **पागृ.** २।१३।२; **भर्तृभा.** सूत्रस्य प्रत्याहाररूपेण निर्देशः.

पलिप्ते हस्तेन गृहीत्वा 'इन्द्राय नमः.... अनुमत्यै नमः'। यथामन्त्रं त्यागाः इदमादिका नमोरहिताः। इत्यष्टौ बलीन् प्राक्संस्थान् दत्त्वा ततो बलीवर्दान् मधुघृते पात्रे कृत्वा तूष्णीं प्रत्येकं प्राशयेत् लेहयेत्। $ हभा.

(५) बलिदानं प्राक्संस्थमुदग्वा। 'प्राञ्च्युदञ्चि' इति परिभाषितत्वात्।...§ बलीवर्दाभ्यां प्राशयेत्। # विभा.

**[1]"सीरा युञ्जन्ति' (शुसं. १२।६७) इति योजयेत्।।**

(१) यागादनन्तरं 'सीरा युञ्जन्ति०' इत्यनेन मन्त्रेण तानेवानडुहो योजयेत्। भर्तृभा.

(२) योजनं च लाङ्गले बलीवर्दयोः 'सीरा युञ्जन्ति' इति मन्त्रेण। तत्र बुधः, गायत्री, सीरायोजने। + जभा.

(३) 'सीरा युञ्जन्ति' इत्यनयर्चा वृषभौ हले योजयेद्दक्षिणोत्तरक्रमेण। * हभा.

**[2]"शुनं सुफालाः' (शुसं. १२।६९) इति कृषेत् फालं वाऽऽलभेत।।**

(१) योजनादनन्तरं 'शुनं सुफालाः' इति कृषेत्। फालं वाऽऽलभेत। वाशब्दो विकल्पार्थः। 'शुनं सुफालाः' इत्यनेन मन्त्रेण फालं वा अभिमृशेत्। फालः हलमुखमायसम्। कल्पमूलत्वादभिमर्शनस्य, प्रत्यक्षत्वाच्च कर्षणविधिः (? धेः) 'प्राची प्रथमां सीतां कृषति। शुनं सुफाला विकृषन्तु भूमिम्' (शब्रा. ७।२।२।९) इति, विशिष्टसर्वकल्पानुपपत्तिः। तस्मात्प्रथम एकैको (? एवैको) विधिः। (अस्तित्वे ?)। भर्तृभा.

(२) कुत एतत्? लिङ्गाच्च मन्त्रयोः। कभा.

(३) विकल्पो मन्त्रलिङ्गात्। तत्र कुमारहरितस्त्रिष्टुप्, सीताकर्षणे०। जभा.

(४) उभयलिङ्गत्वान्मन्त्रस्य। † हभा.

(५) फालः कर्षणसाधनं लौहम्। कर्षणस्पर्शयोर्विकल्पार्थो वाशब्दः। विभा.

**[1]न वाऽग्न्युपदेशाद्वपनानुषङ्गाच्च।।**

(१) पूर्व एको विधिः स्यात्। प्रत्यक्षमूलः स इति। कथं तर्हि विकल्प इति। उभयोरपि प्रत्यक्षानुमानिकयोर्वैयर्थ्याद्विकल्पानुपपत्तिरित्युक्तम्।×नानुपपत्तिः, उभयोरानुमानिकत्वात्। ननु प्रत्यक्ष एषः, "प्राची प्रथमां सीतां कृषति – 'शुनं सुफाला विकृषन्तु भूमिम्" इति प्रत्यक्षाग्न्युपदेशात् आग्निके कर्षणे एष उपदेशः, प्रकरणात्। लौकिके तु स्मरणादेव। तस्माद्विकल्पः। यदि च प्रकरणावरुद्धे (?द्धो) विधिः सर्वत्र विकल्प्येत, ततः प्रवपनविधिरप्यनुषज्येत पृथक्। अत्र सर्वबीजेषूप्यमानेषु दृष्टार्थसिद्धिरेव स्यात्। भर्तृभा.

(२) न चैतौ मन्त्रौ विनियोक्तव्यौ। किं कारणम्? अग्नौ ह्येतावुपदिष्टौ। न चाग्निप्रकरणपठितयोरिहोपदेशः, नातिदेशः। किंच, वपनेऽपि तन्मन्त्राणामनुषङ्गः प्राप्नोति। न चैतदिष्यते। * कभा.

---

$ शेषं कभावत् । गभा. हभागतम्।

§ अनेन द्विवचनेन मूले द्विवचनान्तं पाठं मन्यते इति गम्यते। तत्र लाघवात् 'अनडुहो' इत्यस्मात् एकशिरोरेखामात्रेण विलक्षणः 'अनडुहौ' इति व्याख्यात्रभिमतः पाठो यदि कल्प्यते तदा तृतीयान्तशब्देन व्याख्यानात् 'गतिबुद्धिप्रत्यवसानार्थ०' (पासू. १।४।५२) इति प्रयोज्यकर्तुः कर्मत्वं व्याख्यात्रा विस्मृतमिति कल्पनीयम्। यदि व्याख्यानानुरोधेन 'अनडुद्भ्याम्' इति मूलपाठः कल्प्यते तदा कर्मत्वाभाव आर्षः कल्पनीयः।

# शेषं हभागतम्।

+ विभा. जभागतम्।

* गभा. हभावत्।

(१) **पागृ.** २।१३।३.

(२) **पागृ.** २।१३।४; **भर्तृभा.** सूत्रस्य प्रत्याहाररूपेण निर्देशः.

† शेषं जभागतम्। गभा. भर्तृभागतम् हभावच्च।

× एतदादिग्रन्थेन भर्तृयज्ञेन पूर्वसूत्रोक्तविकल्पे तदनुपपत्तिरूपो य उत्सूत्र आक्षेपः पूर्वमुत्थापितस्तन्निराकरणे प्रकृतसूत्रतात्पर्यं व्याख्यातम्। तेन भर्तृयज्ञाभिप्राय एवं गम्यते – प्रकृतसूत्रोक्तहेतुद्वयेन पूर्वोक्तः सूत्रबहिर्भूतो विकल्पानुपपत्तिरूप आक्षेपः 'न वा' इत्यनेन निराक्रियते। तेन पूर्वोक्तं समन्त्रकमनडुद्योजनं समन्त्रककर्षणफालालम्भयोर्विकल्पश्चेत्युभयं सिद्धान्त एवेति। अन्यैर्भाष्यकारैस्तु तदुभयं पूर्वपक्षत्वेनोक्तं प्रकृतसूत्रे हेतुद्वयेन निराक्रियते, तेन अनडुद्योजनादि समन्त्रकं नेति सिद्धान्त इति प्रकृतसूत्रतात्पर्यं वर्णितम्। उक्तभर्तृयज्ञाभिप्रायमनुरुध्य पूर्वसूत्रव्याख्यानगतः 'कल्पमूलत्वादभिमर्शनस्य' इत्यादिर्ग्रन्थः प्रकृतसूत्रव्याख्यानोपोद्घातरूपः सन् पूर्वसूत्रव्याख्याने प्रमादेन समावेशित इति भाति।

* जभा., हभा., गभा., विभा. कभावत्।

(१) **पागृ.** २।१३।५; **भर्तृभा.** शाद्वप (शात्प्रवप).

[1]**अग्र्यमभिषिच्याकृष्टं तदा कृषेयुः।।**

(१) अग्र्यः प्रथमयुक्त उच्यते। प्रथमयुक्तं बलीवर्दमभिषिच्य यदकृष्टं तत्कृषेयुः। तदेति कालवचनमविच्छेदार्थम्, न पुण्ये अहनि प्रारम्भमात्रं कृत्वा कामचारेण कर्तव्यम्। प्रारभ्य तदैवाविच्छेदेन कर्तव्यमिति।

भर्तृभा.

(२) यः अग्र्यः वल्लभः बलीवर्दस्तस्य चाभिषेको घुर्घुरमालादिना। अनेन प्रकारेणाकृष्टं कृषेयुः।

¶ कभा.

(३) अग्र्यस्य श्रेष्ठस्य। तदा एतत्प्रवृत्तिकाले।

§ जभा.

(४) अग्र्यं श्रेष्ठम् । अभिषिच्य गन्धमाल्यादिभिर्भूषयित्वा। अकृष्टम् अविलिखितं यत् तत् क्षेत्रम् आकृषेयुः विलिखेयुः। हभा.

(५) लाङ्गलयोजनेन भूमिं वपनयोग्यां संपादयेत्।

+ विभा.

[2]**स्थालीपाकस्य पूर्ववद्देवता यजेदुभयोर्व्रीहियवयोः प्रवपन्सीतायज्ञे च।।**

(१) स्थालीपाकस्योभयोर्व्रीहियवयोः प्रवपणकाले स्थालीपाकस्य पूर्ववद्देवता यजेत्। पूर्ववच्छब्देन लाङ्गलयोजनदेवता इन्द्राद्या लक्ष्यन्ते। स्थालीपाकधर्मेण तावच्च देवतायागवत् वक्ष्यति। सीतायज्ञ उपदिश्यते।

भर्तृभा.

(२) इदमपरं कर्मान्तरम्। स्थालीपाकस्येत्यवयवलक्षणा षष्ठी। पूर्ववल्लाङ्गलयोजनोपयुक्तदेवता इन्द्रमित्याद्या यजेत। किं कुर्वन् व्रीहियवयोः प्रवपन् पूर्ववत् सीतायज्ञे च वक्ष्यमाणे। अत्र च स्थालीपाकस्य श्रपणानुपदेशात् सिद्धस्योपादानमिति। जभा.

(३) अथ साग्निकस्य कृषिकर्मणि विशेषमाह – स्थालीति। स्थालीपाकस्य चरोः। प्रवपन् सीरामुप्तिं कुर्वन्। व्रीहियवयोर्वपनकाले। * हभा.

(४) इदानीं वपनकर्तव्यतामाह – 'स्थाली ...... पन्' मातृपूजाभ्युदयिके विधाय परिसमूहनाद्युपयमनप्रक्षेपान्ते विशेषः। ग्रहणे इन्द्राय पर्जन्यायाश्विभ्यां मरुद्भ्य उदलाकाश्यपाय स्वातिकार्यै सीतायै अनुमत्यै जुष्टं गृह्णामि। प्रोक्षणे त्वाशब्दोऽधिकः। आज्यभागानन्तरं स्थालीपाकस्य चरोः पूर्ववत् लाङ्गलयोजनोक्तदेवताः इन्द्रादिकाः यजेत्। किं कुर्वन्? प्रवपन् उप्तिं कुर्वन्। कयोः? व्रीहियवयोरित्यन्वयः। 'इन्द्राय स्वाहा' इत्यादि अनुमत्यन्तम्, स्विष्टकृद्धोमादि ब्राह्मणभोजनान्तम्, तदनन्तरं वैश्वदेवः। सीतायज्ञे च। सिद्धेषु व्रीहिषु यवेषु च सीतायज्ञो भवति। स च वक्ष्यते। तत्रापीन्द्रादयोऽनुमत्यन्ता लाङ्गलयोजनदेवताः होमकर्मणा बलिदानेन च यष्टव्या इत्यतिदिश्यत इत्यर्थः।

विभा.

[1]**ततो ब्राह्मणभोजनम्।।**

(१) ततः संस्थिते कर्मणि ब्राह्मणभोजनं भवति।

भर्तृभा.

(२) ततो ब्राह्मणस्य भोजनं कार्यम्। गभा.

(३) दश पञ्चदश वा परिशिष्टात्। एतच्च प्रवपनं व्रीह्यादीनां लौकिकाग्नौ भवतीत्यवसीयते। अन्ये तु निरग्नेरेव लौकिकाग्नौ, कृतावसथ्यस्याऽऽवसथ्ये भवतीत्याहुः।

विभा.

कृषिसंबन्धी सीतायज्ञः

[2]**अथ सीतायज्ञः।।**

(१) व्याख्यास्यत इति सूत्रशेषः। सीतायज्ञ इति वक्ष्यमाणस्य कर्मणो नामधेयम्। भर्तृभा.

(२) स चायं कृष्यादिप्रवृत्तस्यैव भवति। $ कभा.

(३) स चायं कृष्यभिप्रवृत्तस्यैव साग्नेर्भवति।

§ जभा.

---

¶ गभा. कभावत्।

§ शेषं कभावत्।

+ शेषं जभागतम्।

(१) **पागृ.** २।१३।६; **हभा.** तदा कृ (तदाकृ).

(२) **पागृ.** २।१३।७; **भर्तृभा.** सूत्रस्य प्रत्याहाररूपेण निर्देशः; **जभा.** यजेदु (यजेतो).

* शेषं जभागतम्। गभा. हभावत्।

$ शेषं भर्तृभागतम्।

§ शेषं भर्तृभागतम्। हभा., विभा. जभावत्। गभा. भर्तृभावत् जभागतं च।

(१) **पागृ.** २।१३।८.

(२) **पागृ.** २।१७।१.

[1]व्रीहियवानां यत्र यत्र यजेत तन्मयः स्थालीपाकः श्रपयेत्।।

(१) व्रीहियवानां प्रवेशनकाले एष भवति व्रीहियवानां संस्कारकः। यत्र यत्र यजेत तन्मयं स्थालीपाकं श्रपयेत्। यदि व्रीहीणां प्रवेशनकाले यजेत, व्रीहिमयं स्थालीपाकं श्रपयेत्, यवानां प्रवेशनकाले, ततो यवमयमिति।

* भर्तृभा.

(२) अभ्यस्तेन यत्रपदेन कालदेशरूपे अधिकरणे। यत्र काले व्रीहियवयोरुत्पत्तिर्यत्र देशे चासौ यज्ञः, तत्र तन्मयम्। † विभा.

[2]कामादीजानोऽन्यत्रापि व्रीहियवयोरेवान्यतरः स्थालीपाकः श्रपयेत्।।

(१) ततोऽन्यत्रापि यागं कुर्वन् पक्षादिप्रभृतिषु व्रीहियवयोरेवान्यतरमिच्छया स्थालीपाकः श्रपयेत्।

‡ कभा.

(२) कामात् इच्छातः। ईजानः यागं कुर्वन्।

¤ हभा.

(३) कामात् इच्छातः अन्यत्रापि उक्तरूपदेशकालौ विहाय सीतायज्ञेन ईजानः। व्रीहियवयोरित्यत्रैवकारेण द्रव्यान्तरे साधनत्वव्यवच्छेदः। विभा.

§ [3]न पूर्वचोदितत्वात्संदेहः।।

(१) आक्षेपसूत्रमेतत्। नैवैतद्वक्तव्यम्, यतः संदेह एव नास्ति यथा व्रीहियवौ मुक्त्वा अन्यद्रव्यस्थालीपाको भवति। कथं (न) संदेहः? पूर्वचोदितत्वात् पूर्वमेव व्रीहिभिर्यजेतेति, यवैर्यजेतेति विकल्पसूत्रे – 'व्रीहीन् यवान्वा हविषि' (काश्रौ. १।९।१) इति। अर्थादपि चैवमेव प्राप्नोति यतः (? यत्) एत एव स्थालीपाकद्रव्ये इति। † भर्तृभा.

(२) नैवात्र संदेहः। पूर्वं चोदितमेवैतत् – 'व्रीहीन् यवान् वा हविषी (? षि)' इति। अतो न वक्तव्यमेतत्। कभा.

(३) पूर्वचोदितत्वात् श्रौतेषूक्तत्वात्। + जभा.

(४) अत्र व्रीहियवयोरन्यतरस्य यागमात्रसाधनद्रव्यत्वे न संदेहः। # हभा.

असंभवाद्विनिवृत्तिः।।

(१) प्रत्युदाहरणसूत्रमेतत्। विनिवृत्तिः स्मार्तेषु स्थालीपाकेषु 'व्रीहिभिर्यजेत' इति, 'यवैर्यजेत' इति पूर्वचोदनायाः, 'व्रीहीन् यवान्वा हविषि' इति च कल्पसूत्रचोदनायाः। तस्मात्सूत्रयितव्यम्। कथं विनिवृत्तिः? असंभवात्, यतः प्रकरण(वि?)रुद्धो विधिः स्मार्तेषु नैव संभवति। दर्शपूर्णमासप्रकरणे हि श्रूयते। कल्पसूत्रेऽपि चैतद्विषयमेव प्राप्नोति। अर्थादन्यान्यपि धान्यानि प्राप्नुवन्ति। तस्मादपि वक्तव्यमेव। भर्तृभा.

(२) यावस्य चरोरसंभवाद्विनिवृत्तिरधस्तनस्य शास्त्रान्तरस्य। तेन पुनरारम्भः। अनवस्रावितान्तरोष्मपाकविशदविषय(?)सिद्धे तण्डुलपाके चरुशब्दस्य प्रयोगप्रत्ययादिति। कभा.

(३) यद्वा, ननु यावस्य चरोर्विनिवृत्तिदर्शनात् कथमेकतरं श्रपयेत्? तत्राऽऽह – असंभवादिति। यावस्य चरोर्विनिवृत्तिः, सा चासंभवात्, न तु शास्त्रतः।

‡ जभा.

(४) ननु यावस्य चरोर्विनिवृत्तिर्दृश्यते, कथमन्यतरं स्थालीपाकं श्रपयेदिति चेत्, उच्यते – यावचरोर्या विनिवृत्तिः सा असंभवात्, न शास्त्रात्, अतो नायमसंभवविनिवृत्तस्य यावस्य चरोः प्रतिप्रसवः। यतः सामान्यशास्त्रविहितं क्वचिच्छास्त्रान्तरेण प्रतिषिद्धं पुनर्विधीयमानं हि *प्रतिप्रसव-

---

* कभा., जभा., हभा., गभा. भर्तृभागतम्।

† शेषं भर्तृभागतम्।

‡ जभा. कभावत्।

¤ शेषं कभावत्। गभा. हभावत्।

§ विश्वनाथः 'न पूर्वचोदितत्वात्। संदेहोऽसंभवात्। विनिवृत्तिः।' इति सूत्रच्छेदं मन्यते इति तद्व्याख्यानात् गम्यते। अतस्तद्व्याख्यानमुत्तरसूत्रे संगृहीतम्।

(१) **पागृ.** २।१७।२; **भर्तृभा.** सूत्रस्य प्रत्याहाररूपेण निर्देशः.

(२) **पागृ.** २।१७।३; **भर्तृभा.** सूत्रस्य प्रत्याहाररूपेण निर्देशः.

(३) **पागृ.** २।१७।४-५.

† गभा. भर्तृभागतम्।

+ शेषं कभावत्।

# शेषं जभावत्।

‡ शेषं कभावत्।

* प्रतिप्रसवशब्दः पूर्वं भावप्रधानः प्रयुक्तः, तद्विवरणे त्वत्र कर्मप्रधानः प्रयुक्त इति वैषम्यं न मनोहरम्।

मुच्यते। इदं त्वसंभवात्प्रतिषिद्धम्। कथमसंभव इतिचेत्, अनवस्रावितान्तरोष्मपक्वे ईषदसिद्धे तण्डुलपाके चरुशब्द-प्रयोगप्रत्ययात्। अतो वाचनिको यावस्थालीपाको यत्र तत्र गुलिकाभिः संपाद्यते, यत्र पुनर्विकल्पः तत्रासंभवाद्वि-निवृत्तिरिति। हभा.

(५) अतः सर्वत्र स्थालीपाको व्रीहीणामेव।

+ गभा.

(६) ननु प्राक्सूत्रादेव तल्लाभाद्व्यर्थोऽस्याऽऽरम्भ इत्याह – न पूर्वचोदितत्वादिति। नन्वेतदारम्भो घटते। आसन्नसमयोत्पन्नयोर्व्रीहियवयोः साधनत्वावगमात्समयान्तरे च तदभावादासन्नसमयोत्पत्तिकद्रव्यान्तरसाधनत्वावगम-संदेहः। कुतः? समयान्तरे व्रीहियवयोः असंभवात् अनुत्पत्तेः इत्याह – संदेहोऽसंभवादिति। विनिवृत्तिः। विशेषेण कामि-कार्यताबोधकसूत्रे तयोरुपादानमहिम्ना संदेहनिवृत्तिरित्यर्थः।

§ विभा.

[1]**क्षेत्रस्य पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे फला-नुपरोधेन।।**

(१) क्षेत्रस्य $ पुरस्ताद्देशो नियम्यते। भर्तृभा.

(२) कर्तव्यः (इति शेषः)। कभा.

(३) क्षेत्रस्य पुरस्तात् पूर्वस्यां दिशि कृष्टे फालेन विलिखिते फलानुपरोधेन सस्याविनाशेन विधिना कार्यः।

जभा.

(४) क्षेत्रस्य सस्यवतः.... उत्तरतो वा उदीच्यां वा शुचौ अमेध्यद्रव्यरहिते देशे.... फलस्य सस्यस्य अनुपरोधः अबाधः फलानुपरोधः, तेन फलानुपरोधेन सीतायज्ञः कर्तव्यः। * हभा.

[2]**ग्रामे वोभयसंप्रयोगादविरोधात्।।**

(१) वाशब्दो विकल्पार्थः। ग्रामे सीतायज्ञं कुर्यात्। उभयसंयोगात्। यतः उभयसंयोगतः सीतायज्ञस्य स्मर्यते। किंच, त्वविरोधात्। अविरोधकृतमेतत्स्मरणम्। ग्रामे कर्तव्य इत्यर्थः। तस्मात् व्यवस्थितो विकल्पः। यदि सस्योपरोधः क्षेत्रसंनिहितः कृष्टो देशः उपहतस्ततो ग्रामेषु।

भर्तृभा.

(२) ग्रामे वा कर्तव्यम्। उभयं हि संप्रयोक्तुं शक्यते फलानुपरोधः कृष्टं च। न चात्र विरोधः। अतो वाशब्दो विकल्पार्थः। ‡ कभा.

(३) न चात्र विरोधः, एकतरोपादानेऽपरस्य बाधापत्तेः, ($तन्मिश्रे व्रीहिकाले?) विकल्पस्य विद्यमानत्वात्। अत्रापि कृष्ट एव। + जभा.

(४) यद्वा, ग्रामे कर्तव्यः। कुतः? उभयसंप्रयोगात्। उभयं क्षेत्रं ग्रामश्च संप्रयोक्तुम् अधिकरणतया संबोद्धुं शक्यते फलानुपरोधेन कृष्टत्वेन वा। पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे इति ग्रामस्यापि विशेषणत्वेन संबध्यते, अविरोधात्। व्यवस्थासंभवे हि अष्टदोषदुष्टोऽपि विकल्प आश्रीयते न्यायविद्भिः। § हभा.

[1]**यत्र श्रपयिष्यन्नुपलिप्त उद्धतावोक्षितेऽग्निमुप-समाधाय तन्मिश्रैर्दर्भैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽ-ज्याहुतीर्जुहोति।।**

(१) यत्र श्रपयिष्यन् स्यात् यदि यवेषु (यदि) व्रीहिषु, अथवा यदि क्षेत्रे, अथवा ग्रामे, तत्रेमं विधिं कुर्यात्। उपलिप्य(? प्ते) उद्धतावोक्षितेऽग्निमुपसमाधाय तन्मि-श्रैर्दर्भैः स्तीर्त्वा यन्मयस्थालीपाकः, तत आज्यभागाविष्ट्वा आज्याहुतीर्जुहुयात् 'पृथिवी द्यौः' इति पञ्चभिः प्रतिमन्त्रम्। उपलेपनादीनां पुनर्ग्रहणं परिसमूहनपरिसंख्यानार्थम्।

भर्तृभा.

---

+ शेषं कभावत्।

§ शेषं भाष्यान्तरकृतस्य 'कामादीजानः' इत्यादिसूत्रव्याख्यान-स्यानुवादः।

$ उत्तरदेशस्याप्यभिमतत्वे तदुपेक्षा न युज्यते। एवं जयराम-भाष्येऽपि। अत उभयत्र तद्विषयको ग्रन्थस्त्रुटितो वा, 'उत्तरतो वा' इति पाठस्तयोर्नाभिमतो वेति संभाव्यते।

* शेषं जभावत्। गभा. हभावत्। विभा. हभागतम्।

(१) **पागृ.** २।१७।६; **भर्तृभा.** सूत्रस्य प्रत्याहाररूपेण निर्देशः.

(२) **पागृ.** २।१७।७; **भर्तृभा.** संप्रयोगादवि (संयोगात्त्ववि).

‡ गभा. कभावत्।

$ इदं पदद्वयम् उत्तरसूत्रव्याख्यानगतमशुद्धं कृत्वाऽत्र प्रमादादा-वर्तितम्। आदर्शपुस्तके तु एतदादिः 'कृष्ट एव' इत्यन्तो ग्रन्थः प्रश्नचिह्नाङ्कितः कृतः।

+ शेषं कभावत्।

§ विरोधाविरोधौ जभावत्।

(१) **पागृ.** २।१७।८; **भर्तृभा.** लिप्त उद्धता (लिप्य उद्धृता) यत्र श्रपयि० इत्यादिसूत्रद्वयस्य प्रत्याहाररूपेण निर्देशः.

(२) उपलेपनोद्धतावोक्षितग्रहणं कृष्टेऽपि यथा स्यादिति। ‡ कभा.

(३) श्रपयिष्यन् भवति श्रपयितुमिच्छा भवति। ... उपलिप्ते गोमयोदकेन, उद्धते स्फ्येनोल्लिखिते, अवोक्षिते मणिकोदकेन सिक्ते अग्निम् आवसथ्यं स्थापयित्वा। अत्र पुनरुपलेपनाद्युपदेशः कृष्टेऽपि प्राप्त्यर्थः, न पुनः परिसमूहनोद्धरणनिवृत्त्यर्थः। † हभा.

(४) उपलेपनोद्धतावोक्षितग्रहणं कृष्टेऽपि पञ्चसंस्कारप्रज्ञप्त्यर्थम्, नेतरपरिसंख्यार्थम्। † गभा.

(५) पुनर्भूसंस्कारोक्तिः कृष्टेऽपि प्राप्त्यर्था इति कर्कोपाध्यायाः, निरग्नेरप्यधिकारं सूचयितुं लौकिकाग्निप्राप्त्यर्थेत्यन्ये। साग्नेरेषामाधिक्यं संभारवदित्यपरे। अग्निस्थापनाद्याज्यभागान्ते विशेषः – तन्मिश्रैर्दर्भैर्व्रीहिकाले व्रीहिमिश्रैः यवकाले यवमिश्रैर्दर्भैरग्नेः परिस्तरणम्, अपरः अप्रकृतः सिद्धस्थालीपाक आसाद्यः तण्डुलानन्तरमुपकल्पनीय– बलिपटलकं च, ग्रहणे सीतायै यजायै शमायै भूत्यै जुष्टम्, प्रोक्षणे त्वा। विभा.

**"पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृताः। तमिहेन्द्रमुपह्वये शिवा नः सन्तु हेतयः स्वाहा।। यन्मे किंचिदुपेप्सितमस्मिन्कर्मणि वृत्रहन्। तन्मे सर्व॰ समृध्यतां जीवतः शरदः शत॰ स्वाहा।। संपत्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्य॰ श्रैष्ठ्य॰ श्रीः प्रजामिहावतु स्वाहा।। यस्या भावे वैदिकलौकिकानां भूतिर्भवति कर्मणाम्। इन्द्रपत्नीमुपह्वये सीता॰ सा मे त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा।। अश्वावती गोमती सूनृतावती बिभर्ति या प्राणभृतो अतन्द्रिता। खलमालिनीमुर्वरामस्मिन्कर्मण्युपह्वये ध्रुवा॰ सा मे त्वनपायिनी भूयात्स्वाहा।।' इति।।**

(१) अथ मन्त्रार्थः। तत्र पञ्चानां प्रजापतिः, आद्ययोरनुष्टुप्, तृतीयादिषु प्रतिष्ठापङ्क्तिजगत्यः, लिङ्गोक्ताः, आज्यहोमे। पृथिव्यादिदेवताः यस्मै इन्द्राय इन्द्रमुपासितुं स्थिताः। प्रदिशः विदिशः। किंभूताः? द्युभिः कान्तिभिः आवृताः पूर्णाः। तमिन्द्रमिह सीतायज्ञे उपह्वये उपह्वानं करोमि। उपहूतस्येन्द्रस्य हेतयो वज्राद्यायुधानि शिवाः कल्याणकारिण्यः सन्तु, तस्मै च स्वाहा सुहुतमस्तु। द्वितीयस्यार्थः – हे वृत्रहन्, अस्मिन्कर्मणि सीतायज्ञे यत्किंचित् मे मम उपेप्सितं प्राप्तुमिष्टं तत्सर्वं शतं (शतं?) शरदः वत्सरान् जीवतः समृध्यतां समृद्धिं प्राप्नुताम्। तुभ्यं स्वाहेति समानं सर्वत्र। तृतीयस्यार्थः – संपत्तिः धनाद्युपचयः। भूतिः ऐश्वर्यम्। भूमिः आश्रयः। वृष्टिः अभीष्टवर्षणम्। ज्येष्ठतादिना(?) ज्येष्ठत्वम्। श्रैष्ठ्यं सर्वोपकारित्वम्। श्रीयते सेव्यते सर्वैरिति श्रीः लाङ्गलपद्धतेः प्रतिष्ठा। संपत्त्यादिगणः इह प्राप्तः सन् मदीयां प्रजां पुत्रादिकम् अवतु रक्षतु, इन्द्रो वा एतैर्युक्तां प्रजामवत्विति। चतुर्थस्यार्थः – यस्याः सीतायाः सद्भावे वैदिकलौकिकानां श्रौतस्मार्तकर्मणां भूतिः संपत्तिः भवति, ताम् इन्द्रपत्नीं सीताम् उपह्वये। सा सीता मे मम अन्नपायिनी अदनीयादिवृद्धिकारिणी कर्मणि कर्मणि प्रतिकर्म तु विशेषात् भूयात् भवतु इति। तस्यै स्वाहा। तामेव विंशिनष्टि – अश्वावती। अश्वाः विद्यन्ते यस्यां साऽश्ववती, सैवाश्वावती। दीर्घश्छान्दसः। गावो विद्यन्ते यस्यां सा गोमती। सूनृतं मधुरवाक्यं तिष्ठति यस्यां सा सूनृतवती, सैव सूनृतावती। प्राणभृतः अशेषजीवान् बिभर्ति पुष्णाति। अतन्द्रिता आलस्यरहिता सती। खलमालिनी खले धान्यराशिस्थाने मालते शोभते इति खलमालिनी ताम्, उर्वरां सर्वसस्याढ्याम्, ध्रुवां स्थिरां तां सीताम् अस्मिन्कर्मण्युपह्वये। सा मे अनपायिनी दुःखध्वंसिनी तु विशेषात् भूयात्स्वाहेति। जभा.

(२) आज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीत्युक्तम्, ता आह 'पृथिवी....यः स्वाहा' इदमिन्द्राय, 'यन्मे... शत॰ स्वाहा' इदमिन्द्राय, 'संपत्ति... वतु स्वाहा' इदमिन्द्राय, 'यस्या...णि स्वाहा' इदमिन्द्रपत्न्यै, 'अश्वा... यात्स्वाहेति' इदं ध्रुवायै। इतिशब्दः आज्याहुतिसमाप्त्यर्थः। विभा.

**'स्थालीपाकस्य जुहोति – 'सीतायै, यजायै, शमायै, भूत्यै' इति।।**

(१) स्थालीपाकस्योपहत्य चतस्र आहुतीर्जुहुयात् –

‡ शेषं भर्तृभागतम्। जभा. कभावत्।

† शेषं भर्तृभागतम्।

(१) **पागृ.** २।१७।९.

(१) **पागृ.** २।१७।१०; **भर्तृभा.** शमायै भूत्यै इति (समायै भूत्यै) सूत्रस्य प्रत्याहाररूपेण निर्देशः.

'सीतायै, यजायै, समायै, भूत्यै'। इतिकरणं न कृतम्, अपरिसमाप्तत्वाद्धोमानाम्। अन्ते तत् सूत्रितं भवति, लाङ्गलदेवतानामत ऊर्ध्वं स्थानमिति। भर्तृभा.

(२) स्थालीपाकस्येत्यवयवलक्षणा षष्ठी। $ कभा.

(३) सीताद्याभ्यश्चतसृभ्यो देवताभ्यश्चतस्र आहुतीः क्रमेण तन्नामभिरेव चतुर्थ्यन्तैः स्वाहाकारान्तैश्च जुहोति। † हभा.

(४) 'सीतायै' इति चतुर्भिर्मन्त्रैः प्रतिमन्त्रं स्थालीपाकेन चतस्र आहुतीर्जुहोति। † गभा.

(५) ततः सिद्धपाकेन लाङ्गलयोजनदेवताभ्यः अष्टावाहुतयः — 'इन्द्राय स्वाहा' इदमिन्द्राय, 'पर्जन्याय स्वाहा' इदं पर्जन्याय, 'अश्विभ्यां स्वाहा' इदमश्विभ्याम्, 'मरुद्भ्यः स्वाहा' इदं मरुद्भ्यः, 'उदलाकाश्यपाय स्वाहा' इदमुदलाकाश्यपाय, 'स्वातिकायै स्वाहा' इदं०, 'सीतायै स्वाहा' इदं०, 'अनुमत्यै स्वाहा' इदमनुमत्यै। प्रकृताप्रकृतयोरुभयोः स्विष्टकृत् – 'अग्नये स्विष्टकृते स्वाहा' इदमग्नये स्विष्टकृते। एताश्च देवताः 'सीतायज्ञे च' (पागृ. २।१३।७) इत्यतिदेशात्, अत्र प्रधानचरुहोमानन्तरं तद्धोमं प्रधानचरुबलिदानानन्तरं बलिदानं च। ‡ विभा.

§ **'मन्त्रवत्प्रदानमेकेषाम्।।**

**'स्वाहाकारप्रदाना इति श्रुतेर्विनिवृत्तिः।।**

(१) आचार्याणां मतम् – मन्त्र(वत्) प्रदानं भवेत्, 'सीतायै, यजायै, समायै, भूत्यै' इति देवतामात्रमुपदिष्टम्, न मन्त्रा इति। तस्मादेवं लिङ्गैर्मन्त्रैर्होतव्यमिति।

मन्त्रान्तरस्य। कुतः? 'स्वाहाकारप्रदानाः' इति श्रुतेः। यतोऽनारभ्य श्रूयते – 'वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' (शब्रा. ९।३।३।१४) इति। तत्र यजतिषु वषट्कारस्य नियतत्वात् जुहोतिषु स्वाहाकारेण भवितव्यमिति। तेन च सहितानि देवतापदानि साकाङ्क्षाणि तत्र वचनान्येव(? नादेव) भवन्ति। तस्मान्न मन्त्रान्तरमन्वेष्टव्यम्। भर्तृभा.

(२) एकेषाम् आचार्याणां मतं मन्त्रवदेव प्रदानं भवति, न स्वाहाकारेण, 'स्वाहा.....' श्रुतेः। श्रुतौ तु स्वाहाकारप्रदानता – 'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति। न चात्र वषट्कारः प्रवर्तते। याज्यापुरोनुवाक्यत्वे (? क्यावत्त्वे) हि वषट्कारस्य श्रवणम्। तस्मात् स्वाहाकारोऽप्यत्र (न) भवति।

विनिवृत्तिः अधस्तनस्य पक्षस्य मन्त्रवत्प्रदानमित्यस्य। अस्मिन्नवसरे लाङ्गलयोजनदेवताभ्यस्तद्भूतोपादानात् तेन स्थालीपाकेन होमः, स्थालीपाकहोमाधिकारात्। ततः स्विष्टकृदादि। कभा.

(३) तत्र विनिवृत्तिः मन्त्रवत्प्रदानपक्षस्य निरासः। कुतः? स्मार्तेऽपि कर्मणि स्वाहाकारप्रदानत्वस्य विधानात्। तद्यथा

---

$ जभा. भर्तृभागतं कभावच्च।

† शेषं कभावत्।

‡ शेषं हभावत्।

§ अत्र सूत्रविभागे व्याख्यातृमतभेदात् व्याख्यानसुबोधत्वाय सूत्रद्वयं गृहीत्वा व्याख्यानसंग्रहः कृतः। तत्र भर्तृयज्ञसंमतः सूत्रविभागः सर्वेषु पुस्तकेषु सत्त्वाभ्याय्यत्वाच्चास्माभिः स्वीकृतः। कर्कादीनां पञ्चानामपि भाष्यकाराणाम् 'मन्त्रवत्प्रदानमेकेषां स्वाहाकारप्रदाना इति श्रुतेः। विनिवृत्तिः।' इति सूत्रविभागोऽभिमत इति तद्व्याख्यानेभ्यो गम्यते। मन्त्रवत्प्रदानमपचारः, स्वाहाकारप्रदानं सिद्धान्ताचार इत्येवं सूत्रकाराभिप्रायः सर्वसंमतः। तेनात्रत्येन हेतुना भर्तृयज्ञमते सिद्धान्ताचारः साध्यते, कर्कादिमते पूर्वपक्षरूपोऽपचारः साध्यते इति तात्पर्यभेदः। अत्र एकेषामित्यस्यानुष्ठातृपरत्वं वा आचार्यान्तरपरत्वं वा संभवति। तत्रानुष्ठातृपरत्वपक्षेऽपचारस्य यादृच्छिकत्वं भ्रान्तिमूलकत्वं वेत्येकः पक्षः, विचारपूर्वकत्वं वेत्यपरः पक्षः; आचार्यान्तरपरत्वपक्षे तु विचारपूर्वकत्वमेव। यादृच्छिकत्वे भ्रान्तिमूलकत्वे वाऽपचारस्य हेत्वपेक्षैव नास्ति। विचारपूर्वकत्वपक्षे तस्य हेत्वपक्षत्वेऽप्यत्र हेतोः सिद्धान्तसाधकत्वमेव न्याय्यम्। हेतोः पूर्वपक्षसाधकत्वे तदुन्मथनेन पूर्वपक्षनिराकरणस्य सिद्धान्तसाधकहेतूक्तेश्चाऽऽवश्यकत्वात् अत्र च तदभावात् न हेतोः पूर्वपक्षसाधकत्वं युज्यते। सिद्धान्तसाधकत्वे तु पूर्वपक्षनिराकरणापेक्षया सिद्धान्तस्थापनस्याभ्यर्हितत्वेन तेनैव पूर्वपक्षायुक्तत्वस्याप्यर्थसिद्धत्वेन च क्वचित् पूर्वपक्षनिराकरणमुपेक्ष्य युक्त्या सिद्धान्तस्थापनमात्रं युज्यते, न तु वैपरीत्येन युक्त्या सिद्धान्तस्थापनमुपेक्ष्य युक्त्या पूर्वपक्षोपपादनमात्रं युज्यत इत्यदोषः। अत एव जयरामादिभिः स्मार्तवचनं सिद्धान्ते हेतूकृतम्। अत्र मन्त्रवदित्यत्र मन्त्रशब्दः सीतायजादिलिङ्गकसंहितामन्त्रपर इति भर्तृयज्ञोऽभिप्रैति, कर्कादयस्तु 'सीतायै, यजायै' इत्यादिस्वाहाकाररहितचतुर्थ्यन्तदेवतानामपर इत्यभिप्रयन्तीति गम्यते।

(१) **पागृ.** २।१७।११; **भर्तृभा.** मन्त्रवत्प्र (मन्त्रप्र); **संग.** ४१.

(१) **पागृ.** २।१७।१२; **संग.** ४१.

छन्दोगपरिशिष्टे कात्यायनः – 'स्वाहाकारवषट्कार-नमस्कारा दिवौकसाम्। हन्तकारो मनुष्याणां स्वधाकारः स्वधाभुजाम्।।' (कास्मृ. २।३६) इति। ‡ जभा.

(४) विनिवृत्तिः। मन्त्रवत्प्रदानस्येति शेषः। 'उपविष्ट-होमा स्वाहाकारप्रदाना जुहोतयः' (काश्रौ. १।२।७) इत्युक्तत्वात् पक्षादिप्रभृतीनां जुहोतित्वात् स्वाहाकारेण होम इत्यर्थः। महाव्याहृत्यादिदक्षिणादानान्तं स्विष्टकृदन्ते। † विश्व.

**'स्तरणशेषकुशेषु सीतागोप्तृभ्यो बलिं हरति पुरस्तात् 'ये त आसते सुधन्वानो निषङ्गिणः। ते त्वा पुरस्ताद्-गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलि-मेभ्यो हरामीमम्।।' इति।।**

(१) स्तरणशेषतृणकूर्चेषु सीतागोप्तृभ्यो बलिं हरेत् स्थालीपाकशेषादेव। सीतागोप्तारः वक्ष्यमाणा देवताः। पुरस्तात् एतस्याऽऽराधनस्य पुरस्तात् बलिं हरति 'ये त आसते' इति मन्त्रेण। भर्तृभा.

(२) स्तरणे ये शेषभावं गतास्त एव कुशाः, तेषु। § कभा.

(३) .... त एव कूर्चाः, तेषु....। अथ मन्त्रार्थः। तत्र चतुर्णां परमेष्ठी, यजुः, लिङ्गोक्ताः, बलिहरणे। हे सीते, ये देवाः सुधन्वानः शोभनधनुष्मन्तः, निषङ्गिणः सतूणीराः, ते तव पुरस्तात्पूर्वभागे आसते तिष्ठन्ति। ते त्वा त्वां पुरस्तात्प्राच्यां दिशि गोपायन्तु रक्षन्तु। 'गुपूधूपविच्छि-पणिपनिभ्य आयः' (पासू. ३।१।२८) इत्यायप्रत्ययः। किंभूताः? अप्रमत्ताः सावधानाः, अनपायिनः कष्टहराः। अहं चैषां देवानां *देवेभ्यः नमस्करोमि, बलिं चेममेभ्यो हरामि इति। ¤ जभा.

(४) तत्र पुरस्तात् 'ये' इत्यादिभिश्चतुर्भिर्मन्त्रैः स्तरणे शेषभावम् उपसर्जनत्वं गताः प्राप्ताः त एव कुशास्तेषु स्तरणशेषकुशेषु बलिं हरति। केभ्यः? सीतागोप्तृभ्यः। सीताः लाङ्गलपद्धतिः( ? तीः) (ताः ?) गोपायन्ति पाल-यन्ति ये ते सीतागोप्तारः, तेभ्यः सीतागोप्तृभ्यः। प्राच्यादिषु चतसृषु दिक्षु यथालिङ्गम्। हभा.

(५) अग्नेः परिस्तरणे ये कुशा व्रीहिसस्यमिश्रा यवसस्यमिश्रा वा त एव कूर्चाः आसनानि तेषु। # गभा.

(६) स्तरणावशिष्टकुशान् क्षेत्रस्य प्रतिदिशमास्तीर्य तेषु सीतागोप्तृभ्यो बलिदानं संस्कृतेन च प्रकृतचरुणा। विभा.

**'अथ दक्षिणतः 'अनिमिषा वर्मिण आसते। ते त्वा दक्षिणतो गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीमम्।।' इति।।**

(१) अथ अनन्तरं दक्षिणतो बलिं हरति – 'अनिमिषा वर्मिणः' इत्यनेन मन्त्रेण। भर्तृभा.

(२) दक्षिणतः तव दक्षिणपार्श्वे। ये अनिमिषाः निमेषमकुर्वाणाः। वर्मिणः संनद्धाः। शेषं समानम्। जभा.

(३) अथ पुरस्ताद्बल्यनन्तरम्, अग्नेर्दक्षिणपार्श्वे कूर्चेषु बलिं हरति। गभा.

**अथ पश्चात् 'आभुवः प्रभुवो भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिः। ते त्वा पश्चाद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीमम्।।' इति।।**

(१) अथ अनन्तरं पश्चाद्बलिं हरति – 'आभुवः प्रभुवः' इत्यनेन मन्त्रेण। भर्तृभा.

(२) आभुवः आसमन्ताद्भवाः। प्रभुवः प्रकृष्टेन भवाः। तानेवाह – भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिरित्येवंनामानः। शेषं समानम्। जभा.

**अथोत्तरतः 'भीमा वायुसमा जवे। ते त्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीमम्।।' इति।।**

---

‡ शेषं कभावत्। हभा., गभा. जभावत्।

† शेषं जभावत्।

§ शेषं भर्तृभागतम्।

* कारकविभक्तेर्बलीयस्त्वात् 'देवान्' इति व्याख्यानं युक्तम्।

¤ शेषं कभावत्।

(१) **पागृ.** २।१७।१३; **भर्तृभा.** कुशेषु (तृणकूर्चेषु) सूत्रस्य प्रत्याहाररूपेण निर्देशः; **जभा.** कुशेषु (कूर्चेषु); **गभा.** कुशेषु (कुशकूर्चेषु).

\# शेषं हभागतम्।

(१) **पागृ.** २।१७।१४-१६.

(१) अथ अनन्तरम् उत्तरतो बलिं हरेत् 'भीमा वायुसमा जवे' इत्यनेन मन्त्रेण। भर्तृभा.

(२) भीमा भीषणाः, जवे वेगे वायुना समाः तुल्याः क्षेत्रे खले गृहे अध्वनि वा वर्तमानं त्वा त्वां गोपायन्तु। शेषं समानम्। एवं मन्त्रलिङ्गाच्चतसृषु दिक्षु बलिदानम्। जभा.

**[१]प्रकृतादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म।।**

(१) प्रकृतत्वात्कतरस्मा( ? प्रकृतात्स्थालीपाकादितरस्मा)दन्नादाज्यशेषेण सह मिश्रयित्वा पूर्ववत् बलिहरणं कुर्यात्। पूर्ववच्छब्देन पूर्ववदेव प्रतिदिशं बलिकर्म उक्तम्, तदेव वर्णयन्ति। अपरे पुनश्च शब्दमात्रेणैतस्योत्कर्षसिद्धिं मन्यमाना.... यान्नकरणं लाङ्गलयोजनं ( ? नवत्) बलिहरणं मन्यन्ते। भर्तृभा.

(२) प्रकृतात् प्रधानदेवतासंबन्धिनो व्रैह्याद्यावाद्वा स्थालीपाकात् अन्यो यः सिद्धः पाकश्चरुस्तस्मात् स्थाल्येनाऽऽज्यशेषेण च पूर्ववत् लाङ्गलयोजनवत् 'इन्द्रं पर्जन्यम्' इत्यादिभ्यो बलिहरणम्। § जभा.

**[२]स्त्रियश्चोपयजेरन्नाचरितत्वात्।।**

(१) तदनन्तरं स्त्रियश्चोपयजेरन् लौकिकेन धर्मेण, लोके एव चरितत्वात्। भर्तृभा.

(२) स्त्रियश्च बलिकर्म कुर्युः। कुत एतत्? आचरितत्वात्। आचरन्ति हि स्त्रियो बलिकर्म। † कभा.

(३) ततो बलिपटलकेन स्त्रियश्चेन्द्रादिभ्यो हलयोजनदेवताभ्यः अन्येभ्यश्च वृद्धव्यवहारसिद्धेभ्यः क्षेत्रपालादिभ्यो बलिदानं कुर्युः। हभा.

(४) स्त्रियः भार्यादिकाः। उपयजेरन् बलिहरणं कुर्युः। आचरितत्वात् प्राचीनाभिः कृतत्वात् बलिकर्मणः। ‡ गभा.

(५) वृद्धाः स्त्रियो गृह्याः।....बलिपटलकं च वैणवपात्राधिकरणकं कुल्माषौदनम्।... ततः संस्रवप्राशनाद्युपयमनप्रक्षेपान्तम्। * विभा.

**[१]संस्थिते कर्मणि ब्राह्मणान् भोजयेत्।।**

(१) संस्थिते सीतायज्ञकर्मणि ब्राह्मणान् भोजयेत्। भर्तृभा.

(२) त्रिप्रभृतीन् भोजयेत्। # हभा.

(३) दश ब्राह्मणान् भोजयेत्। '$ दश' इति परिशिष्टात्। विभा.

## गोभिलगृह्यसूत्रम्

### लाङ्गलयोजनं सीतायज्ञश्च

**[२]अथातो हलाभियोगः।।**

अथेति पूर्वप्रकृतापेक्षः, यथा पूर्वाण्यष्टकादीनि नित्यानि एवमिदमप्येतस्मिन् निमित्ते सति नित्यरूपतयैव द्रष्टव्यमिति। अत इति हेत्वर्थः, यस्माद्ब्राह्मणस्यापि कृषिर्जीवनार्थं मन्वादिभिराम्नाता 'ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा' (मस्मृ. ४।४) इत्यादि, अतस्तत्रापि यत् कर्म तदुच्यते। हलं लाङ्गलम्, तस्य आभिमुख्येन योगः योजनं हलाभियोगः, कृषिप्रारम्भ इत्यर्थः। वर्तिष्यत इति वाक्यशेषः। भनाभा.

**पुण्ये नक्षत्रे स्थालीपाकं श्रपयित्वैताभ्यो देवताभ्यो जुहुयात् – इन्द्राय मरुद्भ्यः पर्जन्यायाशन्यै भगाय।।**

पुण्ये कर्तुर्बलवति नक्षत्रे। ऋज्वन्यत्। विसमासकरणं निर्वापहोमयोः पृथक्( ? क्त्व-)प्रज्ञापनार्थम्। भनाभा.

**सीतामाशामरडामनघां च यजेत।।**

ऋज्वर्थम्। नन्वत्र कस्मात् प्रकृतविभक्त्यतिक्रमः क्रियते? उच्यते – पूर्वासामेव चरुयागादिसंबन्धार्थम्, उत्तरास्तु प्राक् स्विष्टकृत आज्येनेज्येरन्। तदेतदुक्तमधस्तादेव। भनाभा.

---

§ हभा., गभा., विभा. जभावत्।

† जभा. कभावत्।

‡ शेषं हभावत्।

(१) **पागृ.** २।१७।१७; **विभा.** (बलिकर्म०).

(२) **पागृ.** २।१७।१८; **भर्तृभा.** रन्नाच (रन् च); **संप्र.** ९०३.

* शेषं हभागतम्।

# शेषं भर्तृभावत्। गभा. हभावत्।

$ भोजनीयब्राह्मणदशत्वविधायकं 'गर्भाधानादिसंस्कारे ब्राह्मणान्भोजयेद्दश' इति संस्कारविषयकं वचनं यज्ञपार्श्वे (१।८४) उपलभ्यते, उपलब्धपरिशिष्टेषु उक्तविषयकमन्यद्वाक्यं नोपलभ्यते।

(१) **पागृ.** २।१७।१९.

(२) **गोगृ.** ४।४।२६-३०.

**एता एव देवताः सीतायज्ञखलयज्ञप्रवपणप्रलवन-पर्ययणेषु।।**

सीता कृष्टं क्षेत्रम्, तत्र यज्ञः सीतायज्ञः। स च शरद्व-सन्तयोः पक्वव्रीहियवशस्यमध्ये क्षेत्रस्य पूर्वार्धे उत्तरार्धे वा शस्यमनुबध्नतः स्यात्। पक्वं शस्यं क्षेत्रादाहृत्य यत्र खलीक्रियते तत् खलम्, तत्र यज्ञः खलयज्ञः। स चोभयत्र स्यात् शारदे धान्यखले ग्रैष्मिके चेति। कुतः? † वक्ष्य-त्युपरिष्टाच्चोद्यपरिहारे। प्रकर्षेण वपनं क्षेत्रे बीजस्योप्तिः प्रवपणम्। प्रशब्दप्रयोगात् सर्वस्मिन्नुप्ते यज्ञः। प्रकर्षेण लवनं शस्यलूननं (? लवनम्) प्रलवनम्। प्रशब्दः पूर्ववत्। परीति सर्वतोभावम् (? भावे), सर्वस्य धान्यस्य कृष्ट-स्योत्पूतस्य च सतः खलात् गृहं प्रत्यानयनं पर्ययणम्। एतेषु सीतायज्ञादिषु एता एव पूर्वोक्ता देवताः। यजेतेति वर्तते। ननु प्रवणोपक्रमस्य युक्तत्वात् कस्मात् क्रमभेदः? उच्यते – नायं क्रमभेदः, कुतः? शारदधान्यं प्रति प्रवपणादीनामप्राप्तेः (?) पूर्वयोश्चोभयत्र प्राप्तेरित्यभेदः*। एवं चैते सप्त यज्ञा भवन्ति हलाभियोगोऽष्टम इति। उक्तं च 'सप्त सीतामखादयः' इति। अत्र संदेहः – एता एवेत्यनेन किमनन्तरोक्ता एव गृह्येरन्, उत पूर्वाः पञ्च, उत सर्वा इति। तत्रैक आहुः – पूर्वाः पञ्चेति। कुतः? देवताशब्दप्रयोगात् पूर्वास्वेव हि देवताशब्दः प्रयुक्तः, नोत्तरासु 'एताभ्यो देवताभ्यो जुहुयात्' इति। तदयुक्तम्। कुतः? उत्तरासां सीतायाः परित्यागः स्यात्, सीतायज्ञे च तत्परित्यागाद्विरोधः। अन्ये तु पूर्ववदेवेच्छन्ति – पूर्वाः पञ्च चर्वाहुतयः, उत्तराश्चाऽऽज्याहुतय इति। तदप्ययुक्तम्। कुतः? एवमित्यवचनात्। अन्ये तु अनन्तरा एवेच्छन्ति। तदप्ययुक्तम्। कुतः? सर्वनाम्नः प्रकृतग्राहित्वात्। कथं तर्हि? उच्यते – सर्वनाम्नः प्रकृतग्राहित्वादेवमित्यवचनाच्च पूर्वा उत्तराश्चाऽऽज्येनैवेज्येरन् इति। उक्तं च – 'केवला-ज्यहविष्काः स्युः सप्त सीतामखादयः।' इति।

भनाभा.

**आखुराजं चोत्करेषु यजेत।।**

किमेता एव यजेत? न। कथं तर्हि? आखुराजं चोत्करेषु यजेत। आखुराजः मूषकराजः, तं चोत्करेषु आखूत्कीर्ण-पांशुषु तदुपद्रवोपशमनाय सीतायज्ञादीनामन्ते क्षिप्रहोमन्याये-नाग्नावाज्येन यजेत। तथा चोक्तम् – 'आज्येनाऽऽखुं यजेदग्नौ तदन्ते नित्यहोमवत्' इति। 'आखुराजाय स्वाहा' इति होमः।

भनाभा.

† 'अयं जनः' इत्यात्मपरकर्तृपदाध्याहारोऽत्र कर्तव्यः।

* क्रमभेदाभाव इत्यर्थः।

## कौशिकगृह्यसूत्रम्

लाङ्गलयोजनादीनि

कृषिकर्माणि

**"सीरा युञ्जन्ति' (असं. ३।१७) इति युगलाङ्गलं प्रतनोति।।**

(१) 'सीरा युञ्जन्ति' इति सूक्तसंप्रत्ययः, अविशेष-निर्देशात्, सेनाग्निमन्थनसूक्तवत्। युगलाङ्गलमिति द्वन्द्वः। प्रतननं यथादेशकरणम्। प्रतनोतिर्विस्तारार्थः। 'सीरा युञ्जन्ति' इति योजनप्रतननयोरावर्तने मन्थनवद्विभागः स्यात्, वचनविरोधः 'पारं गत्वा' (कौसू. २०।८) इति च। प्रतीकक्रिया मन्त्रसंबन्धे सति वचनोपपत्तेः।

दाभा.

(२) कृषिकर्म वक्ष्यामः – सीरा इति। क्षेत्रे गत्वा 'सीरा युञ्जन्ति' इति सूक्तेन युगलाङ्गलं बध्नाति।

कौप.

**दक्षिणमुष्टारं प्रथमं युनक्ति।।**

(१) 'सीरा युञ्जन्ति' इत्यनया कर्ता दक्षिणस्यां युगधुरि। प्रथममित्यर्धम्, द्वयोर्मा भूत्। उष्टारं प्रजनयितारम्।

दाभा.

(२) 'सीरा युञ्जन्ति' इति सूक्तेन युगस्य दक्षिणतो वृषभं युनक्ति। कौप.

**'एहि पूर्णक' इत्युत्तरम्।।**

(१) उत्तरस्यां युगधुरि सेक्तारमेव। 'एहि पूर्णक' इति कल्पजः। ततो येऽन्ये सीरिणः स्युस्तान् प्रेष्यति – 'युनक्त सीरा वि युगा तनोत' (असं. ३।१७।२) इत्यनया कर्षकान्।

दाभा.

(२) 'एहि पूर्णक' इति मन्त्रेण उत्तरतो द्वितीयं वृषभं युनक्ति। कौप.

(१) कौसू. २०।१-२४.

**कीनाशा इतरान्।।**

(१) ततः कीनाशाः कृषीवलाः, ते युञ्जते प्रवर्तयन्ते। दाभा.

(२) 'शुनं कीनाशा अनुयन्तु वाहान्' (असं. ३।१७।५) इति पादेन हालिकोऽन्यान् चतुरो वृषभान् युनक्ति, 'षड्गवं हलम्' इति वचनात्। कौप.

**'अश्विना फालं कल्पयतामुपावतु बृहस्पतिः। यथासद्बहुधान्यमयक्ष्मं बहुपूरुषम्।।' इति फालमतिकर्षति।।**

(१) अनेन कुशीं हलसमीप आनयति। दाभा.

(२) 'अश्विना फालम्' इत्यृचा लोहफालमभिमन्त्र्य हले प्रतिकर्षति। कौप.

**'इरावानसि धार्तराष्ट्रे तव मे सत्त्रे राध्यताम्' इति प्रतिमिमीते।।**

(१) कुशीं फालापूरके प्रवेशयतीत्यर्थः। प्रतिपूर्वो मिनोतिः प्रक्षेपणार्थः। दाभा.

(२) 'इरावानसि' इति मन्त्रेण फालमभिमन्त्रयते। कौप.

**'अपहताः प्रतिष्ठाः' इत्यपूपैः प्रतिहत्य कृषति।।**

(१) अनेन मन्त्रेण फालमपूपैः सर्वतो वेष्टयति। अपूपाः घृतपक्वमण्डकाः। एवं कृत्वा कृषति। 'लाङ्गलं पवीरवत्' (असं. ३।१७।३) इत्येवमादयो मन्त्रा अत्र प्रयोक्तव्याः, प्रधानत्वात्। कृषिर्देवता। तथा च 'सूक्तस्य पारं गत्वा' इति वचनम्। दाभा.

(२) 'अपहताः' इति मन्त्रेणापूपानभिमन्त्र्य हले फालमुखे ददाति। ततः 'सीरा युञ्जन्ति' (असं. ३।१७) इति सूक्तेन कर्ता हलेन कृषति। कौप.

**सूक्तस्य पारं गत्वा प्रयच्छति।।**

उपर्युक्तस्य शेषस्य सूक्तस्यान्तं गत्वा कर्ता कर्षकेभ्यः प्रयच्छति हलम्। तावत्स्वयं कृषति यावत्सूक्तं न समाप्तम्, 'पारं गत्वा' इति वचनात्। 'सीते वन्दामहे त्वा' (असं. ३।१७।८) इत्यस्या अत्र प्रयोगार्थं 'सीते वन्दामहे त्वेत्यावर्तयित्वा' (कौसू. २०।१०) इत्यत्राग्रहणादन्यत्र ग्रहणं स्यात्। * दाभा.

* कौप. दाभागतम्।

**तिस्रः सीताः प्राचीर्गमयन्ति कल्याणीर्वाचो वदन्तः।।**

(१) तिस्रः सीताः प्राग्भवा आनयन्ति कर्षकाः। नेतारो गावः, तान् कर्षकाः प्रयोजयन्तीति, हेतुकर्तृकत्वात्। कल्याणीर्वाच उच्चारयन्ति। अभिवर्षतु, निष्पद्यतां बहुधान्यम्, भूयादारोग्यमित्येवमादयो वाचः। प्राचीरित्यनिवृत्त्य देशे उत्क्षिप्तस्य फालस्याऽऽनयनार्थं गमयन्ति। अतः सलिलार्थम्(?)। दाभा.

(२) तिस्रः सीताः प्राचीः हालिकः(? काः) कृषति (? न्ति) कल्याणीर्वाचो वदन्तः पुण्याहादीनि च। कौप.

**'सीते वन्दामहे त्वा' (असं. ३।१७।८) इत्यावर्तयित्वोत्तरस्मिन् सीतान्ते पुरोडाशेनेन्द्रं यजते।।**

(१) 'सीते वन्दामहे त्वा' एका अविधिकर्मत्वात्। आवर्त्य मन्त्रपूर्वं प्रयुज्येत्यर्थः। इतरथा हि यागसंबन्धः स्यात्, आवृत्तो हि चोत्तरः सीतान्तः स्यात्। उत्तरस्मिन् सीतान्ते पुरोडाशेनेन्द्रं यजते। य उत्तरः सीतान्तस्तस्मिन् पुरोडाशेन हविषा इन्द्रं यजते। इन्द्राय यागं कुर्यादित्यर्थः। सीतान्ते पाकयज्ञिकेन तन्त्रेण तण्डुलानां पेषणम्। अर्थात् न कपालाधिश्रयणे मन्त्रः। तत्र चरुग्रहणे तु एककपालसामर्थ्येनोपधानात्। उदकोपसेकमन्त्रस्तु स्यात्, क्रममात्रविपर्ययात्। होममन्त्रः 'सीरा युञ्जन्ति' इति सूक्तम्, प्रकरणात्। प्रत्यृचं होमः स्यात्। पूर्वार्धाच्च अवदायावदानधर्मेण जुहुयात्। व्यक्तचोदना धर्मा निर्वापादौ। दाभा.

(२) 'सीते....' इत्यृचा कर्ताऽनुमन्त्रयते। त्रिर्मन्त्रावृत्तिः। उत्तरस्मिन् सीताया अन्ते कृत्वा। तत्राऽऽज्यभागान्तं पाकतन्त्रं कृत्वा 'सीरा युञ्जन्ति' इति सूक्तेनेन्द्रदैवत्यं पुरोडाशं जुहोति। इन्द्रदेवताके पुरोडाशे चरुधर्मा अविरुद्धाः पुरोडाशस्य सर्वे भवन्ति। कौप.

**अश्विनौ स्थालीपाकेन।।**

(१) यजत इति वाक्यशेषः, एकतन्त्रक्रियाया विधिभेदात्। अभ्यातानार्थं च सूक्तं प्रकरणात्। दाभा.

(२) अश्वि(ना?)देवताकं चरुं 'सीरा युञ्जन्ति' इति सूक्तेन जुहोति। कौप.

**सीतायां संपातानानयन्ति।।**

(१) तस्यामुत्तरस्यां सीतायां संपातानानयति। संपातेष्वपि सूक्तम्, उक्तहेतुत्वात्। अभ्यातानास्तु सूक्तहेतुत्वात्। दाभा.

(२) ततः अभ्यातानानि हुत्वा 'सीरा युञ्जन्ति' इति सूक्तेनोत्तरस्यां सीतायां संपातानानयति। कौप.

**उदपात्र उत्तरान्।।**

(१) उदपात्रमन्यत् प्रकृतत्वात्। दाभा.

(२) उदपात्र उत्तरसंपातानानयति। कौप.

**शष्पहविषामवधाय।।**

(१) शष्पाणां हविषां च उदपात्रे प्रक्षिप्य। शष्पाणि विरूढं बीजम्। हवींषि हुतशिष्टानि। आज्यस्यापि ग्रहणम्, बहुत्वश्रुतेः। उदपात्रम्, प्रकृतत्वात्। अवयवसंप्रत्ययः षष्ठीश्रवणात् समवदानवत् 'सर्वेषां हविषाम्' इति यथा। दाभा.

(२) तत उदपात्रे हवींषि शष्पं व्रीहीन् विरूढं च निदधाति। कौप.

**सर्वमनक्ति।।**

'सर्वं हलं प्रक्षालयति तेनोदपात्रेण नालोडितेन' (इति) अत्रभवन्तो वत्सशर्मपादाः पठन्ति। अञ्जनं सीरस्य, कृषिसाधनत्वात्। सर्वग्रहणं युगादिसंप्रत्ययार्थम्। * दाभा.

**यत्र संपातानानयति ततो लोष्टं धारयन्तं पत्नी पृच्छति 'अकृक्षत' इति।।**

(१) कारयिता संपातितादृदेशात् मृत्पिण्डं गृहीत्वा धारयति। धारयन्तं पत्नी स्वामिनी यज्ञस्य पृच्छति 'अकृक्षत' इति। एवं संपातानामानयनकाले एवैतत्, भिन्न-कर्तृत्वात्। पूज्यस्य स्याद्बहुवचनम्। दाभा.

(२) यत्र सीता संपतिता तस्मात् स्थानात् मृत्तिकां पत्नी गृह्णाति हस्तेन। कौप.

**'अकृक्षाम' इति।।**

पतिः प्रत्याह – 'अकृक्षाम' इत्येवम्। प्रत्याहेति शेषः, प्रश्नसद्भावात्। दाभा.

* कौप. दाभागतम्।

**'किमाहार्षीः?' इति।।**

(१) पत्नी पतिं पृच्छति। किंयोगात् प्रतिप्रश्नवचनाच्च पत्न्याश्चैव पृच्छा प्रतिप्रश्नश्च पत्युः, ज्ञातत्वात्। दाभा.

(२) ततः अन्यो मनुष्यः पृच्छति 'किमाहार्षीः?'। कौप.

**'वित्तिं भूतिं पुष्टिं प्रजां पशूनन्नमन्नाद्यम्' इति।।**

(१) प्रतिप्रश्नः। वित्तिः वेदार्थविज्ञानम्। दाभा.

(२) ततः पत्नी ब्रूते 'वित्तिं भूतिम्' इति। कौप.

**उत्तरतो मध्यमायां निवपति।।**

(१) मध्यमायां सीतायां लोष्टं धारयति आस्थापयति उत्तरस्मिन् देशे। अत्रोत्तरम् उत्तरस्य कालान्तरयोगात् एकतन्त्रं न चैककालत्वात्। 'अश्विनौ स्थालीपाकेन' यजत इति वाक्यशेषः। एकयोगाद्विधिभेदो हविर्भेदात्। दाभा.

(२) ततो मध्यमायां सीतायां मृत्तिकां निदधाति पत्नी तूष्णीम्। कौप.

**अभ्यज्योत्तरफालं प्रातरायोजनाय निदधाति।।**

(१) उत्तरफालमभ्यज्य तेनोत्तरसंपातसंस्कृतेनोदकेन यदाऽऽयोजनं भविता तदर्थं स्थापयत्युत्तरफालवचनात् 'फालमतिकर्षति', 'तत्र फालापूरकः'। इह कुशी। आयोज-नार्थमास्थापयति तदुदकम्। प्रातर्द्वितीयेऽहनि यदाऽऽयोजनं भवति तदाऽऽयोजनं हलयुगफालयोक्त्ररश्मिफालोत्तर-फलानामेव। तदर्थमायोजनायेति तादर्थ्ये वचनम्। नाश-दोषापहारेषु पुनरुत्पत्त्यर्थम्। अन्यच्च द्वैयहकाल्यम्। दाभा.

(२) ततो लोहफालं घृतेनाभ्यज्य तत्रैव क्षेत्रे निदधाति, ततोऽभ्यातानाद्युत्तरतन्त्रम्। कौप.

**सीताशिरःसु दर्भानास्तीर्य प्लक्षोदुम्बरस्य त्रींस्त्रींश्चमसान् निदधाति।।**

(१) 'सीताशिरःसु दर्भानास्तीर्य' इत्यमन्त्रकम्। अभ्युक्षणं तु स्यात्, 'नानभ्युक्षितम्' इति वचनात्। प्लक्षोदुम्बरस्य। पिप्परीति प्रसिद्धः। पिप्पर्याः काष्ठात्। त्रींस्त्रींश्चमसान्नि-दधाति। कारयिता। तेषु दर्भेषु तांश्चमसान् त्रीन् त्रीनेकै-कस्मिन् कृत्वा स्थापयति। त्रिषु रसान्, त्रिषु विरूढकानि, त्रिषु पुरोडाशान् कृत्वा। दाभा.

(२) ततः सीताशिरःसु दर्भानास्तीर्य दर्भोपरि प्लक्षचमसानौदुम्बरचमसांस्त्रींस्त्रीन् निदधाति। कौप.

**रसवतो दक्षिणे शष्पवतो मध्यमे पुरोडाशवत उत्तरे।।**

(१) सीताशिरःस्विति प्रत्येकं वाक्यशेषः। अभिमन्त्र्य निधानम्, अनारभ्यवादात्। दाभा.

(२) एकैकस्याः सीतायाः दक्षिणेषु चमसेषु रसान् प्रक्षिप्य मध्यमेषु विरूढं प्रक्षिप्योत्तरेषु पुरोडाशं निदधाति। कौप.

**दर्भान् प्रत्यवभुज्य संवपति।।**

(१) ये चमसेषु दर्भा आस्थापितास्तान् दर्भान् प्रतीपान् कुटिलान् कृत्वा चमसानामुपरि करोति। ये चमसेऽपिबन्त इत्यर्थः। संवपति चमसस्थान् रसादीन् सीताशिरःसु। तथा मन्त्रलिङ्गम् – 'घृतेन सीता मधुना समक्त' (असं. ३।१७।९) इति। बीजं समस्तं वपति इत्यपरे। दाभा.

(२) चमसोपरि दर्भान् निदधाति। ततश्चमसान् पांसुना प्रच्छादयति। मृत्तिकां दधाति तत्र। ततः प्रभाते अवश्यं तस्मिन् क्षेत्रे द्वितीयेऽहनि कर्षयितव्यम्। एतत् सर्वमेकं कर्म। कृषिकर्म समाप्तम्। कौप.

**"उच्छ्रयस्व' (असं. ६।१४२) इति बीजोपहरणम्।।**

अनेन सूक्तेन बीजमभिमन्त्र्य क्षेत्रं नीयते। सर्वबीजान्युपहरति। विशेषावचनात्। ¶ दाभा.

**आज्यमिश्रान् यवानुर्वरायां कृष्टे फालेनोदुह्यान्वृचं काशीन् निनयति निवपति।।**

(१) कृष्टे भूमिप्रदेशे फालेनोदुह्य आयसेनोत्कर्षं कृत्वा। काशीन् मुष्टीमुष्टि त्रीन् तत्र निनयति, नीचैरानाय्य। निवपति सर्वमेव बीजं क्षेत्रे वपति। उपहरणं सर्वबीजानाम्। दाभा.

(२) 'आज्यमिश्रान्.... निवपति'। आज्यमिश्रमभिमन्त्र्य कृष्टे वा क्षेत्रे निवपति त्रीन् मुष्टीन् बीजस्य। ततः पांशुभिराच्छादयति। समाप्तं बीजक्षेत्रवापनकर्म। § कौप.

¶ कौप. दाभागतम्।

§ शेषं दाभागतम्।

(१) **कौसू.** २४।१-२, ३५-३६.

**पुरस्तादग्नेः सीरं युक्तमुदपात्रेण संपातवताऽवसिञ्चति।।**

(१)'सत्यं बृहत्' (असं. १२।१) इति संपातमन्त्राः, प्रकृतत्वात्। दाभा.

(२) तन्त्रं कृत्वा 'सत्यं बृहत्' (असं. १२।१) इत्यनुवाकेनोदपात्रं संपात्य पुरस्तादग्नेः सीरं युक्तं संप्रोक्षति। तत उत्तरतन्त्रम्। कौप.

**आयोजनानामप्ययः।।**

(१) कथितमेतत्। दाभा.

(२) 'सत्यं बृहत्' इत्यनुवाकेन कृषिकर्म। 'सीरा युञ्जन्ति'(असं. ३।१७)वत् कर्म भवति। कौप.

## ऋग्विधानम्

कृषिवृद्धिकराणि कर्माणि, खलदानेन
कृषिजन्यहिंसादोषनिवृत्तिः,
असत्प्रतिग्रहदोष-
निवर्तको
जपः

**[१]कृषिं प्रपद्यमानस्तु स्थालीपाकं यथाविधि।**
**जुहुयात्क्षेत्रमध्ये तु शुनं वाहास्तु पञ्चभिः।।**
**[२]यथालिङ्गं तु विहरेल्लाङ्गलं च कृषीवलः।**
**इन्द्राय च मरुद्भ्यश्च पर्जन्याय भगाय च।।**
**[३]पूष्णे धान्याय सीतायै शुनासीरमथोत्तरम्।**
**हुत्वा तु पृथगेतानि यजेदेताश्च देवताः।।**
**[४]गन्धमाल्योपहारैश्च फललाजासुरासवैः।**
**प्रलापने प्रणयने खलसीतोपहारयोः।।**
**[५]एता एव जपेन्नित्यं देवता विधिना शुचिः।**
**अमोघं कर्म भवति कृषिर्वर्धति सर्वदा।।**

(१) **ऋग्वि.** २४१; **आपा.** १३८ प्रपद्य (प्रदद्य) शुनं (शुभं).

(२) **ऋग्वि.** २४२; **आपा.** १३८ च कृषी (तु कृषी).

(३) **ऋग्वि.** २४३; **आपा.** १३८ तु पृथगेतानि (च पृथगातासां).

(४) **ऋग्वि.** २४४; **आपा.** १३८ लाजासु (लाजसु) लापने प्रणय (वापने प्रत्यव).

(५) **ऋग्वि.** २४५; **आपा.** १३८ जपे (यजे) चतुर्थचरणे (सर्वदा वर्धते कृषिः).

[1]क्षेत्रस्य पतिनेत्येतत्क्षे(?क्षै)त्रपत्यं† तृचं जपेत्।
ईक्षेत्सूर्यं द्विजो नित्यं विन्दते क्षेत्रमुत्तमम्।।
[2]या ओषधी जपेत्सूक्तं बीजारोपणसंग्रहे।
यदि स्पृष्टा (? ष्ट्वा) भूमिकुम्भं ‡भूमिं बीजपूर-
कुम्भं च (?)।।
[3]आखूत्करेषु चरुणा यजेदेतेन मूषकान्।
चित्र इद्राजेत्यनया स्तुत्वा चाऽऽखुपतिं सदा।।
[4]ब्राह्मणान्भोजयेदत्र कीनाशांश्चैव भोजयेत्।
अप्रमत्तः शान्तिपरः स्वयमेव कृषिं वपेत्।।
[5]भूमिभङ्गे गवां हिंसा तृणकीटादिनाशनम्।
एतेषु यत्कृतं पापं खलदानेन शुध्यति।।
धान्यानां विंशकं भागं श्रोत्रियेभ्यो निवेदयेत्।
विंशकस्य हि दानेन कृषिदोषात्प्रमुच्यते।।
प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम्।
जपंस्तरत्समन्दीयं प्रविश्याऽऽपस्त्र्यहाच्छुचिः।।

## जैमिनिसूत्राणि

आर्त्विज्याधिकारो

ब्राह्मणस्यैव

**[6]प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात्।।**

आर्त्विज्यं सर्ववर्णैः कार्यमुत ब्राह्मणैरेवेति संशये पूर्वपक्षमाह – प्रभुत्वादिति। प्रभुत्वात् सामर्थ्यात्। सुबोधिनी.

**स्मृतेर्वा स्याद्ब्राह्मणानाम्।।**

सिद्धान्तमाह – स्मृतेरिति। कल्पसूत्रे ब्राह्मणानामार्त्विज्यमिति स्मृतेः। सुबोधिनी.

**फलचमसविधानाच्चेतरेषाम्।।**

लिङ्गमप्याह – फलेति। 'यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य$ तमस्मै भक्षं प्रयच्छेत्, न सोमम्' (आपश्रौ. १२।२४।५) इति सोमपाननिषेधात्, ऋत्विजां सोमपानावश्यकत्वान्नार्त्विज्यमितरेषाम्। सुबोधिनी.

**सांनाय्येऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात्।।**

सांनाय्येऽपि 'न राजन्यो न वैश्यो वा सांनाय्यं पिबेत्, असोमपीथो ह्येषः' इति सांनाय्यपाननिषेधहेतुतया सोमपानानर्हत्वं दर्शयतीत्याह – सांनाय्य इति। स्पष्टम्। सुबोधिनी.

**चतुर्धाकरणे च निर्देशात्।।**

दर्शपूर्णमासे चतुर्धाकरणमन्त्रलिङ्गमपि ब्राह्मणस्यैवाऽऽर्त्विज्यं द्रढयतीत्याह – चतुरिति। निर्देशात् लिङ्गनिर्देशात्। 'ब्राह्मणानामिदं हविः सौम्यानां सोमपीथिनाम्। नेहाब्राह्मणस्यास्ति' (आपश्रौ. ४।११।१) इति इदं चतुर्धाकरणमब्राह्मणस्य नास्तीत्याह। सुबोधिनी.

**अन्वाहार्ये च दर्शनात्।।**

अन्वाहार्ये अन्वाहार्यार्थवादे च 'यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद्ब्राह्मणास्तानेष(?व) तेन प्रीणाति' (तैसं. १।७।३।१) इति दर्शनात्। सुबोधिनी.

## गौतमः

ब्राह्मणस्याऽऽपद्वृत्तयः, तत्र अप्रशस्तयाजनादौ
दोषतारतम्यम्, वैश्यवृत्त्या जीवने
विक्रयविनिमयविषये नियमा
निषेधाश्च

**[1]याजनाध्यापनप्रतिग्रहाः सर्वेषाम्।।**

(१) 'आपत्कल्पो ब्राह्मणस्य' इत्यनुवृत्तौ गौतमः – 'याजना....' इति। याजनादयः सर्वेषां वर्णानां ब्राह्मणेन कार्या इत्यर्थः। ३।३४ पृ. ९२९

---

† अश्वपत्याद्यण्णन्ताच्चातुर्वर्ण्यादिष्यञ् कल्पनीयः।

‡ इदं भूमिकुम्भपदव्याख्यानम्, श्लोकचतुर्थचरण उच्छिन्न इति कल्प्यते।

(१) **ऋग्वि.** २४६; **आपा.** १३८ त्येतत्क्षेत्रपत्यं तृ (त्येत क्षेत्रपत्यं ऋ) तृतीयचरणे (पश्यंत्सूर्यं द्विजो नित्यं).

(२) **आपा.** १४२.

(३) **ऋग्वि.** २४७ देतेन मू (देतानमू); **आपा.** १४२ उत्तरार्धे (ततः स्विष्टकृतं हुत्वा सूर्यादाखुपतिं सदा।।).

(४) **ऋग्वि.** २४८ वपेत् (व्रजेत्); **आपा.** १४२.

(५) **ऋग्वि.** २४९-२५०, ३७३-३७४.

(६) **जैसू.** १२।४।४२-४७.

$ अत्रत्यो वाक्यांशस्त्रुटितो वा न गृहीतो वा। अन्ते 'न सोमम्' इति वाक्यं मूले नास्ति।

(१) **गौध.** ७।४; **अप.** ३।३४, ३।४०; **गृक.** १८५; **स्मृच.** २।४७६; **गृर.** ४२५; **निप्र.** २।२५६; **बौवि.** २।४।१६ याजनाध्यापन (अध्यापनयाजन) (=); **बाल.** १।१२१ पृ. ३८२.

सर्वेषां *द्विजानां संबन्धिनो याजनादयो ब्राह्मणस्याऽऽपत्कल्पः। अप. ३।४० पृ. ९३६

(२) इदानीमन्योऽप्यापत्कल्प उच्यते - याजनेति। सर्वग्रहणेनाप्रशस्तास्त्रय एव वर्णा गृह्यन्ते, प्रशस्तानामनापदि विधानात्, शूद्रस्य 'वृत्तिश्चेन्नान्तरेण शूद्रात्।' (गौध. १७।५) इत्यारम्भात्। §पञ्चम्यन्तः सर्वशब्दः प्राप्नोतीति चेत् - सकाशादित्यध्याहारान्न दोषः। सर्वेषामिति बहुवचनमनुलोमोपसंग्रहार्थम्। ब्राह्मणस्यैतदुच्यते, अधिकारात्, 'तदलाभे क्षत्रवृत्तिः' इति च लिङ्गात्। ततश्चास्यामवस्थायां गर्हितयाजनादिभिर्न दोषः, शास्त्रचोदनासामर्थ्यात्। तथाऽऽह मनुः - 'नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते।।' (मस्मृ. १०।१०३), 'सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः' (मस्मृ. १०। १०२) इत्यादि। तथा च श्रुतिः - 'तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्' (तैउ. ३।१०) इति।

मभा.

(३) सर्वेषाम् अप्रशस्तानामपि।

+ गृक. १८६

(४) याजनादयो ब्राह्मणस्य वृत्तयः, ता आपदि सर्वेषामनुज्ञायन्ते, न तु ब्राह्मणस्यैवेति। अपर आह - आपदि सर्वे याजयितव्याः सर्वेऽध्याप्याः सर्वतश्च प्रतिग्राह्यम्, न तु गर्हादोषोऽस्तीति। # गौमि.

(५) सर्वेषां ब्राह्मणादीनाम् (च?), कार्या इति शेषः। तत्राऽऽपत्कल्प इत्यनुवर्तते। अतः सर्वग्रहणेनाप्रशस्ता गृह्यन्ते, प्रशस्तानामनापदि विधानात्।

स्मृच. २।१७६

**[1]पूर्वः पूर्वो गुरुः।।**

(१) स च पूर्वः पूर्वः गुरुः अ(†धिक)दोषः। यत्तु मनुना याजनाद्यपेक्षया प्रतिग्रहस्य गुरुदोषत्वमुक्तम्, तच्छूद्रसंबन्धिप्रतिग्रहविषयम्। अथवा मनुवाक्यवशाद्याजनादीनां यथापूर्वं गुरुत्वमभ्युदयगौरवजनकत्वेन गौतमोक्तमिति मन्तव्यम्। अप. ३।४०

(२) एषां याजनादीनां यो यः पूर्वं निर्दिष्टः स स उत्तरस्माद्गुरुर्ज्ञेयः। ततश्च उत्तरेणोत्तरेण जीवनासंभवे पूर्वेण पूर्वेण जीवेदिति क्रमप्रतिपादनार्थं पूर्ववचनम्। क्रमलङ्घने प्रायश्चित्तं द्रष्टव्यम्, 'पूर्वः पूर्वः सन्' इति वक्तव्ये गुरुग्रहणात्। + मभा.

(३) गुरुः दोषावहः। यच्च मनुवचनम् - 'प्रतिग्रहः प्रत्यवरः' इति प्रतिग्रहनिन्दा, सा प्रशस्तयाजना(द्य)पेक्षया।

गृक. १८६

(४) अनेन याजनाध्यापनाभ्यां प्रतिग्रहः प्रशस्त इत्युक्तं भवति। यमोऽपि 'प्रतिग्रहाध्यापनयाजनानां प्रतिग्रहं श्रेष्ठतमं वदन्ति। प्रतिग्रहाच्छुध्यति जप्यहोमैर्याज्यं तु पापैर्न पुनन्ति वेदाः।।'। याज्यं याजकमित्यर्थः। एतद्द्विजातिप्रतिग्रहाभिप्रायम्, शूद्रविषयस्यैव मनुना याजनाध्यापनाभ्यां निकृष्टत्वाभिधानात् - 'प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि। प्रतिग्रहः प्रत्यवरः स तु विप्रस्य गर्हितः।।' इति। प्रत्यवरः निकृष्टः। अत्र हेतुमाह स एव - 'याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम्। प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः।। जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्। प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च।।' इति। संस्कृतात्मनां द्विजातीनामिति यावत्। अतो याजनाध्यापनाभ्यां द्विजातेः प्रतिग्रह एव श्रेयानिति मन्तव्यम्।

स्मृच. २।४७६-४७७

(५) याजनाध्यापनप्रतिग्रहा मुख्या वृत्तयः। तत्रापि प्रतिग्रहासंभवे अध्यापनम्। अध्यापनासंभवे याजनम्। ब्राह्मणस्येत्यनुवृत्तौ गौतमः - 'याजनाध्यापनप्रतिग्रहाः सर्वेषां पूर्वः पूर्वो गुरुः।' सर्वेषां प्रशस्तानामपि गुरुः दोषावहः। विशुद्धप्रतिग्रहात् विशुद्धाध्यापनं गुरुः। विशुद्धाध्यापनाच्च विशुद्धयाजनं गुरुरिति भावः। युक्तं चैतत्, पतितसंसर्गे

---

* 'वर्णानाम्' इति पूर्वव्याख्यानेनास्य विरोधः स्पष्ट एव।

§ इदं प्रतिग्रहमात्रविषयम्, याजनाध्यापनयोः पञ्चम्यर्थानपेक्षणात्।

+ गृर. गृकवत्।

# बाल. हरदत्तमतानुवादः स्मृच-निप्रगतं च।

(१) **गौध.** ७।५; **अप.** ३।३४, ३।४०; **गृक.** १८५; **स्मृच.** २।४७६; **गृर.** ४२५; **निप्र.** २।२५६; **बौवि.** २।४।१६ (=); **बाल.** १।१२१ पृ. ३८२.

† उत्तरग्रन्थानुरोधेनेयं शुद्धिः कल्प्यते।

+ गौमि. मभागतम्।

याजनाध्यापनयोः सद्यः पातित्यहेतुत्वम्, पतितप्रतिग्रहस्य संवत्सरेणेति गौरवस्य व्यक्तत्वात्। यत्तु याजनाध्यापनप्रतिग्रहमध्ये प्रतिग्रहस्य गर्हिततत्ववचनं मानवे – 'प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः' इति तद्विशुद्धयाजनाध्यापनापेक्षया गर्हितप्रतिग्रहविषयम्। तथा च वाक्यशेषे – याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम्। प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः।।' इति। याज्यशिष्ययोः संस्कृतत्वेन प्रशस्तत्वं याजनाध्यापनप्राशस्त्ये हेतुः। अन्त्यः शूद्रः चाण्डालादिरूपः प्रतिग्रहगर्हितत्वे हेतुरुक्तः। यच्च हेत्वन्तरमुक्तम् – 'जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्। प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च।।' इति तदपि विशुद्धयाजनाध्यापनापेक्षया गर्हितप्रतिग्रहस्य निन्दापक्षे संगच्छते, अन्यथा निन्दितयाजनाध्यापनयोरिति (? रपि) धनत्यागपूर्वकमेव प्रायश्चित्तमिति 'जपहोमैरपैत्येनः' इत्यसंगतेः, 'यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्। तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च।।' इति मनुविष्णुभ्यां गर्हितार्जनमात्रे सामान्येन त्यागविधानात्।

निप्र. २।२५६-२५८

**[१]तदलाभे क्षत्रवृत्तिः।।**

(१) स्यादिति शेषः। पूर्वप्रकाराया ब्राह्मणवृत्तेरलाभे क्षत्रवृत्तिः सं(?से)वादिना उपजीवनं रक्षणादिना वा। तद्ग्रहणमत्यन्तनिर्गुणाऽपि ब्राह्मणवृत्तिरेव वरमिति ज्ञापनार्थम्। तथा च मनुः – 'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्। परधर्मेण जीवन् हि सद्यः पतति जातितः।।' इति। 'तथा वा क्षत्रवृत्तिः' इत्युक्ते अभावे वैकल्पिकेन वाशब्देनैव ब्राह्मणवृत्त्यभावे क्षत्रवृत्तिरिति लभ्यमाने अलाभग्रहणं क्षत्रवृत्त्या जीवतोऽपि यदा ब्राह्मणवृत्तिरेव जीवनायालं भवति तदा क्षत्रवृत्तिमुत्सृज्य ब्राह्मणवृत्तिरेवाऽऽश्रयितव्येति। तथा च नारदः – 'आपदं ब्राह्मणस्तीर्त्वा क्षत्रवृत्त्या भृते जने। उत्सृजेत्क्षत्रवृत्तिं तां कृत्वा पावनमात्मनः।।'।

मभा.

---

(१) **गौध.** ७।६; **अप.** ३।३४; **मभा.** ७।४; **गृक.** १८५; **उ.** १।२०।११ क्षत्र (क्षत्रिय); **स्मृच.** २।४७६; **गृर.** ४२५ लाभे क्षत्र (भावे क्षत्रिय); **बौवि.** २।४।१६ उवत् (=); **मुक्ता.** ६० उवत्; **बाल.** १।१२१ पृ. ३८२.

(२) इदं ब्राह्मणविषयम्। गर्हितयाजनादेरप्यलाभे क्षत्रवृत्तिः स्यात्। ब्राह्मणः सेवादिना जीवेत्। * गौमि.

**[२]तदलाभे वैश्यवृत्तिः।।**

(१) अलाभग्रहणं वृत्तिसंकरो मा भूदिति। एवं च संकरेऽपि प्रायश्चित्तं द्रष्टव्यम्। तद्ग्रहणमुक्तव्याख्यानम्। अत्र तु विधानाभावादेव उत्तमवृत्त्याश्रयणप्रसङ्ग एव नास्ति। यथाऽऽह वसिष्ठः – 'न तु कदाचिज्ज्यायसीम्' इति। मभा.

(२) क्षत्रियस्य वैश्यवृत्त्युपजीवनं दण्डापूपन्यायेन सिद्धम्। † गौमि.

**[३]तस्यापण्यम्।।**

(१) अत्र ब्राह्मणानुवृत्तौ गौतमः 'तस्यापण्यम्' इति।

अप. ३।३७

(२) तद्ग्रहणं ब्राह्मणस्यैव, न क्षत्रियस्य वैश्यवृत्तिस्थितस्येति। एवं च वैश्यस्यार्थसिद्धं विक्रेयत्वं प्रतिषिद्धं त्यक्त्वा दत्त्वा प्रतिषिद्धस्याप्रतिषिद्धस्य चाऽऽदानम्। तदभावे अपण्यमपि विक्रेयम्। मभा.

(३) तस्य वैश्यवृत्तेर्ब्राह्मणस्य अपण्येन (? पण्यम् अ–) विक्रेयं वक्ष्यते। तस्येति वचनात्क्षत्रियस्य वैश्यवृत्त्युपजीविनो वक्ष्यमाणमपण्यं न भवति। § गौमि.

**[४]गन्धरसकृतान्नतिलशाणक्षौमाजिनानि।।**

किं तदपण्यमित्यत आह – गन्धेति। गन्धम् अनुलेपनम्। रसः तैलादि। कृतान्नं मोदकादि। तिलाः प्रसिद्धाः। शाणं

---

* शेषं मभागतम्।

† शेषं मभागतम्।

§ मुक्ता. गौमिगतम्।

(१) **गौध.** ७।७; **अप.** ३।३४; **गृक.** १८५; **उ.** १।२०।११; **गृर.** ४२५; **बौवि.** २।४।१६ (=); **मुक्ता.** ६०; **बाल.** १।१२१ पृ. ३८२.

(२) **गौध.** ७।८; **अप.** ३।३५-३८; **गृक.** २०२; **स्मृच.** २।४७८; **गृर.** ४३५; **मर.** १८३; **निप्र.** २।३१५; **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७२.

(३) **गौध.** ७।९; **अप.** ३।३५-३८ तिल + (पिण्याक); **गृक.** २०२ शाण (मांस); **स्मृच.** २।४७८; **गृर.** ४३५ सकृ (सं कृ) तिलशाण (माष); **मर.** १८३ शाण (माष); **मुक्ता.** ६२ रसकृ (रसः कृ); **बाल.** १।११९ पृ. ३७२ कृतान्न (जातान्न).

शणविकारः। क्षौमं क्षुमा अतसी तद्विकारः। विकारप्रतिषेधात् प्रकृतेरप्रतिषेधः। अजिनं चर्म। + मभा.

[1]**रक्तनिर्णिक्ते वाससी।।**

(१) रक्तं लाक्षादिविकृतम्, निर्णिक्तं प्रक्षालितम्।

$ मभा.

(२) रक्तं तान्तवम्, 'रक्तं शाणक्षौमाविकानि च' इति मनुस्मरणात्। निर्णिक्तं प्रक्षालितम्।

स्मृच. २।४७८

(३) रक्तं च निर्णिक्तं च रक्तनिर्णिक्ते।

बाल. १।११९ पृ. ३७२

[2]**क्षीरं सविकारम्।।**

क्षीरं पयः विकारैः सह दध्यादिभिः। इह विकारग्रहणात् तिलविकाराणामप्रतिषेधो विज्ञायते। अथवा यत्र केवलस्य क्षीरस्यैव निर्देशः तत्र सविकारस्यापि ग्रहणमित्येवमर्थं विकारग्रहणम्। यः पूर्वः पक्षः तस्मिन् शाणक्षौमयोर्विकारनिर्देशः प्रकृतिप्रतिषेधार्थ इति वक्तव्यम्।

# मभा.

[3]**मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि।।**

(१) मूलं हरिद्रादि। फलं क्रमुकफलादि। पुष्पं दमनकादि। औषधं मसूरादि। मधु माक्षिकादि। रसग्रहणेनैव मधुनः प्रतिषेधे सिद्धे 'सर्वथा तु वृत्तिरशक्तौ' (७।२२) इत्यत्रापि पक्षे प्रतिषेधार्थं पुनर्वचनम्। मांसोदके प्रसिद्धे। तृणं प्रसिद्धम्। अपथ्यं विषम्।

‡ मभा.

(२) अपथ्यं विषादि। ¤ गृक. २०२

[1]**पशवश्च हिंसासंयोगे।।**

पशवः गवादयः हिंसासंयोगे न विक्रेयाः। योग इति सिद्ध उपसर्गारम्भाद्यजमानहस्तेऽपि न विक्रेयाः। तत्र हिंसायां दोषाभावात् हिंसासंयोगो नास्तीति चेत्, सत्यम्, स तु यजमानस्यैव, नेतरस्येति। चशब्दान्मयूरादीनि च।

¶ मभा.

[2]**पुरुषवशाकुमारीवेहतश्च नित्यम्।।**

(१) वशा वन्ध्या गौः। वेहत् गर्भघातिनी।

§ अप. ३।३८ पृ. ९३१

(२) पुरुषः मनुष्यः। तद्ग्रहणं स्त्रिया अपि, जातिवचनत्वात्। तथा च श्रुतिः – 'पुरुषशीर्षमुपदधाति न स्त्रियाः' इति। वशा वन्ध्या गौः। कुमारी गौरेव, मनुष्यकुमार्याः स्त्रीत्वात् पुरुषग्रहणेनैव सिद्धत्वात्। वेहत् गर्भघातिनी। साऽपि गौरेव, पूर्वोक्तेनैव न्यायेन। चशब्दः काकवन्ध्याद्युपसंग्रहणार्थः। नित्यं हिंसासंयोगादन्यत्रापीति केचित्। तदयुक्तम्, हिंसासंयोगे पशुत्वादेव सिद्धे पुनरारम्भसामर्थ्यादेवान्यत्र लब्धुं शक्यत इति। नित्यशब्देन द्रव्यं विशेषयन्ति – नित्यमेवंरूपा इति। तदप्ययुक्तम्, पुरुषादयः कदाचिदप्यनेवंरूपा न भवेयुरिति। ततश्च नित्यशब्दोऽन्येषां तिलादीनामनित्यत्वसूचनार्थः। ततः स्वयं कृष्योत्पादितानां तिलादीनां विक्रेयत्वम्, अन्यथोत्पादितानामविक्रेयत्वमिति द्रष्टव्यम्। यथाऽऽह वसिष्ठः – 'कामं वा स्वयं कृष्योत्पाद्य तिलान्विक्रीणीरन्' इति। तिलानपि विक्रीणीरन्, किं

---

+ गौमि. मभावत्। स्मृच. मभागतम्।

$ गौमि., मुक्ता. मभावत्।

# गौमि., बाल. मभागतम्।

(१) **गौध.** ७।१०; **अप.** ३।३५-३८; **गृक.** २०२ रक्तनि (रक्तानि नि); **स्मृच.** २।४७८; **गृर.** ४३५-४३६; **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७२.

(२) **गौध.** ७।११; **मिता.** ३।३६-३८; **अप.** ३।३५-३८; **गृक.** २०२; **स्मृच.** २।४७८; **गृर.** ४३६ (सविकारम्०); **मर.** १८३; **निप्र.** २।३१५; **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७२.

(३) **गौध.** ७।१२; **अप.** ३।३५-३८ दका (दक); **गृक.** २०२ पुष्पौषधम (मौषधं म); **स्मृच.** २।४७८; **गृर.** ४३६ मूलफलपुष्पौषधम (मूलकं फलमौषधं म); **मर.** १८३ पुष्पौषध (मौषध) मांस (मांसा); **निप्र.** २।३१५ (अपथ्यानि) एतावदेव; **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७२.

‡ गौमि. मभावत्। स्मृच. मभागतम्।

¤ गृर., मर., निप्र., मुक्ता., बाल. गृकवत्।

¶ गौमि., स्मृच., मुक्ता., बाल. मभागतम्।

§ स्मृच. अपवत्।

(१) **गौध.** ७।१३; **गृक.** २०२; **स्मृच.** २।४७८; **गृर.** ४३६; **मर.** १८३ (पशवश्च) एतावदेव; **निप्र.** २।३१५; **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७२.

(२) **गौध.** ७।१४; **अप.** ३।३५-३८ पुरुष (नारीपुरुष); **गृक.** २०२; **स्मृच.** २।४७८ पुरुष (पुरीष) कुमारी (कुमारि); **गृर.** ४३६; **मर.** १८३; **निप्र.** २।३१५; **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७२.

पुनरन्यान्? इति तत्रार्थः। ‡ मभा.

(३) कुमारी अल्पवयस्का गौरेव। + गृक. २०२

(४) पुरुषाः दासादयः। नित्यमित्युक्तत्वाद्धिंसासंयोगादन्यत्रापि निषेधः। अपर आह – इह नित्यग्रहणात्पूर्वेषु तिलादिष्वनित्यः प्रतिषेध इति। तत्र वसिष्ठः – 'कामं वा स्वयमुत्पाद्य तिलान्विक्रीणीरन्।' इति। $ गौमि.

(५) पुरुषः ना। # बाल. १।११९ पृ. ३७२

**[१]भूमिव्रीहियवाजाव्यश्वर्षभधेन्वनडुहश्चैके।।**

(१) धेनुः नवप्रसूता। अप. ३।३८

(२) भूमिः गृहम्, 'क्षयो वेश्म गृहं भूमिर्निकेतनम्' इत्यादिनैघण्टुके गृहपर्यायश्रवणात्। व्रीहिः प्रसिद्धः, यवश्च। तद्ग्रहणं धान्योपलक्षणम्। अजः छागः। अविः प्रसिद्धः। अश्वः हयः। ऋषभः पुंगवः। धेनुः दोग्ध्री। अनड्वान् शकटवहनसमर्थो बलीवर्दः। एते न विक्रेया हिंसासंयोगादन्यत्रापीत्येके आचार्याः, न तु गौतमः। उष्ट्रोपसंग्रहणार्थश्चकारः। यथाऽऽहोशना – 'उष्ट्रर्षभहया न विक्रेयाः' इति। नित्यत्वानुकर्षणार्थश्चः इत्येके। § मभा.

(३) ऋषभः सेचनसमर्थो गौः। धेनुः सकृत्प्रसूता। अत्राप्यजाविग्रहणं हिंसासंयोगविषयपरम्। × गौमि.

(४) वृ(? ऋ)षभः आधानसमर्थो वृषभः, तदन्योऽनडुहप(? डुत्प)देनोक्त इत्यपौनरुक्त्यम्। गृर. ४३६

‡ गृर., मर., निप्र. मभागतम्।

+ शेषम् अपवत्।

$ शेषं मभागतम्। मुक्ता. गौमिगतम् ।

# शेषं गृकानुवादः गौमिस्थस्यापरमतस्य हरदत्तीयत्वेनानुवादश्च।

§ स्मृच. मभानुवादः अंशतः।

× शेषं मभागतम्।

(१) **गौध.** ७।१५; **अप.** ३।३५-३८ (व्रीहियवजातयश्च वृषभधेन्वनडुहश्चैके); **गृक.** २०२ व्यश्वर्षभ (व्यऋषभ); **स्मृच.** २।४७८; **गृर.** ४३६ जाव्यश्वर्षभ (ऽवयश्च ऋषभ); **मर.** १८३ व्यश्वर्षभ (व्यश्च ऋषभ); **निप्र.** २।३१५ (भूमि०) व्यश्वर्षभ (श्व। ऋषभ); **मुक्ता.** ६२ व्यश्वर्ष (व्यश्ववृष); **बाल.** १।११९ पृ. ३७२ र्षभधेन्वनडुह (वृषानड्वाँ).

(५) अविः मेषः। × बाल. १।११९ पृ. ३७२

**[१]*निमयस्तु।।**

(१) कर्तव्य इति शेषः। निमयः द्रव्याभ्यां प्रतिषिद्धाभ्यां परिवृत्तिः। तुशब्दो विशेषवाची। समतो हीनतो वाऽपि निमयः कर्तव्यः। तथा च वसिष्ठः – 'समतो हीनतो वाऽपि निमातव्यः' (वाध. २।३७) इति। + मभा.

(२) निमयः विनिमयः परिवर्तनम्। तुशब्देन निमयोऽनुज्ञायते इति। गौमि.

**[२]रसानां रसैः।।**

(१) निमये कर्तव्ये रसानां तैलादीनां रसैः गुडादिभिरेव निमयः कर्तव्य इति नियमार्थः सूत्रारम्भः। मभा.

(२) तैलघृतगुडादीनां रसैरेव विनिमयः कार्यः। तद्यथा – तैलं दत्त्वा घृतं ग्राह्यमिति। 'रसैः समतो हीनतो वा' इति वसिष्ठः। ‡ गौमि.

**[३]पशूनां च।।**

(१) तृतीयान्तपशुशब्दप्रापणार्थश्चकारः, पशूनां पशुभिरिति। प्रतिषिद्धविक्रयपशुविषयं द्रष्टव्यम्, अप्रतिषिद्धानां विक्रेयत्वादेव सिद्धत्वात्। मभा.

(२) पशूनां च पशुभिरित्यर्थः। § गृक.

(३) पशूनां चतुष्पदां पशुभिर्विनिमयः कार्यः। गौमि.

× शेषं मभागतम्।

* केषुचित्पुस्तकेषु निमयशब्दस्थाने नियमशब्दो मुद्रितः, स प्रामादिक इति मत्वाऽस्माभिः शोधितः।

+ बाल. मभागतम्।

‡ गृर., मुक्ता. गौमिगतम्।

§ गृर., निप्र., बाल. गृकवत्।

(१) **गौध.** ७।१६; **गृक.** २०९ (नियमनम्); **उ.** १।२०।१५ (विनिमयस्तु); **गृर.** ४४० उक्तवत्; **निप्र.** २।३१९ उक्तवत्; **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७३.

(२) **गौध.** ७।१७; **गृक.** २०९; **उ.** १।२०।१५; **गृर.** ४४०; **निप्र.** २।३१९ (रसै रसानाम्); **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७३.

(३) **गौध.** ७।१८; **गृक.** २०९; **उ.** १।२०।१५; **गृर.** ४४०; **निप्र.** २।३१९; **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७३.

**[१]न लवणकृतान्नयोः।।**

(१) लवणं रसान्तरेण न निमातव्यम्। 'रसानां रसैः' इति नियमात्प्राप्तं प्रतिषिध्यते। कृतान्नं येनकेनचिदपि द्रव्यान्तरेण, प्राप्त्यभावात्। मभा.

(२) लवणस्य कृतान्नस्य च विनिमयोऽपि प्रतिषिद्धः। गौमि.

(३) लवणस्य रसव्यतिरिक्तेन केनापि समेन, कृतान्नस्य केनापि समेन कृतान्नेन। गृर. ४४०

(४) लवणस्य च रसत्वेन रसेन विनिमये प्राप्ते पर्युदासः। तेन लवणव्यतिरिक्तरसै रसानि मातव्यानीत्यर्थः। एवं च तस्य रसव्यतिरिक्तद्रव्यान्तरेण विनिमये दोष इति प्रतिभाति। निप्र. २।३१९

(५) 'न लवण' इत्यादिना लवणादीनां विनिमयप्रतिषेधः। मन्वादिभिस्तु धान्येन समेन विनिमय उक्तः। तथा च सर्वथाऽऽवश्यककर्मासंभवे विनिमयः, संभवे तु नेति व्यवस्था। यद्वा समेन धान्येन विनिमय इत्येतत्परं मन्वादिवचनम्, विषमविनिमयनिषेधकं गौतमवचनमिति न विरोधः। बाल. १।११९ पृ. ३७३

**[२]तिलानां च।।**

(१) निमयप्रतिषेधानुकर्षार्थश्चशब्दः। येनकेनचिदपि निमयो नास्तीत्यर्थः। आपदि धान्येन समेन निमयाभ्यनुज्ञानार्थं पृथग्ग्रहणम्। तथाऽऽह मनुः – 'तिला धान्येन तत्समाः' (मस्मृ. १०।९४) इति। मभा.

(२) तिलानां च विनिमयो न कार्यः। लवणकृतान्नतिलानां द्रव्यान्तरस्वीकारेण प्रदानं निषिद्धम्, समानद्रव्यविषये प्रवृत्त्यसंभवात्। गौमि.

(३) तिलानां धान्येन समेन। गृर. ४४०

(४) तिलानां च धान्यैर्विनाऽन्यैर्विनिमयो न कर्तव्यः। $ मुक्ता. ६२

$ शेषं गौमिगतम्।

(१) **गौध.** ७।१९; **गृक.** २०९ (न०); **उ.** १।२०।१५; **गृर.** ४४० (न०); **निप्र.** २।३१९; **मुक्ता.** ६२ (न कृतान्नलवणयोः); **बाल.** १।११९ पृ. ३७३.

(२) **गौध.** ७।२०; **गृक.** २०९; **उ.** १।२०।१५; **गृर.** ४४०; **निप्र.** २।३१९; **मुक्ता.** ६२; **बाल.** १।११९ पृ. ३७३.

**[१]समेनाऽऽमेन तु पक्वस्य संप्रत्यर्थे।।**

(१) इदानीं कृतान्नस्य प्रतिप्रसवार्थमाह – समेनेति। समेन तुल्येनाऽऽमेन सह पक्वस्य निमयो भवति। संप्रत्यर्थे यदि तस्मिन्नेव काले कृतान्नमुपभुज्यते। तुशब्दः समविशेषवाची, ततश्च तण्डुलेनेति द्रष्टव्यम्। केचित् तेनैव प्रकारेण निमयः कर्तव्यः, नान्येनेति नियमार्थं तुशब्दमाहुः। तदयुक्तम्, सूत्रारम्भसामर्थ्यादेव नियमसिद्धेः। यदि येन केनचिन्निमयो भवेत्तदानीं 'निमयस्तु' इति सामान्यविहितेनैव सिद्धत्वादनारम्भः संप्राप्नोति। ततश्च रसादीनि यानि द्रव्याणि तानि द्रव्यविशेषैरेव निमातव्यानि। शेषाणां त्रयाणां येन केनचिदिति द्रष्टव्यम्। तण्डुलैः प्रस्थादिपरिमितैः सह *तन्मात्रैरेव पक्वान्नस्य निमयः कर्तव्य इत्यर्थः। एवं च – 'गन्धरसकृतान्न' इत्यत्र कृतान्नशब्दस्तण्डुलेष्वपि वर्तते इति ज्ञापयति। अन्यथा विक्रयप्रतिषेधाभावान्निमयारम्भो न प्राप्नोति, यस्मात्प्रतिषिद्धानामेव निमयारम्भ इति। मभा.

(२)§संप्रत्यर्थे आमस्य तत्कालोपयोगे, यस्यैव पक्वान्न-

* निर्वर्तितस्येति शेषः।

§ इदमत्र प्रत्येतव्यम् – गृक – गृरग्रन्थयोः 'न लवणकृतान्नयोः' इति सूत्रे नकारो न पठ्यते। तस्मात् रत्नाकरव्याख्यानाच्च 'लवणकृतान्नयोस्तिलानां च समेन' इत्येकं विधिसूत्रम्, 'आमेन तु पक्वस्य संप्रत्यर्थे' इति चापरं सूत्रमिति कल्पतरुकाररत्नाकरकारौ मन्येते इति प्रतीयते। तत्र लवणस्य रसान्तरेण विनिमयस्य पूर्वसूत्रेण प्राप्तौ पुनरारम्भसामर्थ्यात् रसव्यतिरिक्तेन समेन द्रव्येण लवणस्य, कृतान्नान्तरेण समेन कृतान्नस्य, धान्यत्वसाधर्म्यात् समेन धान्यान्तरेण तिलानां च विनिमयः प्रतिप्रसूयते इति कल्पतरुकारोऽभिमन्यते। प्रतिप्रसवश्च निषेधसापेक्ष इति नवमसूत्रे यः कृतान्नविक्रयनिषेधस्तदपेक्षोऽयं प्रतिप्रसव इति मन्यते। अत एव निषेधप्रतिप्रसवयोः समानाधिकारिकत्वनियमात् विक्रयनिषेधे कृतान्नस्वामिनोऽधिकारादस्मिन् प्रतिप्रसवेऽपि स एवाधिक्रियत इति कृतान्नस्वामिना कृतान्नं दत्त्वा यदामं स्वीक्रियते तस्याऽऽमस्य सांप्रतिकार्थत्वं कल्पतरुकारेणोक्तम्। वस्तुतस्तु गृकपाठे आमकृतान्नविनिमयविधेः प्रतिप्रसवत्वे मानाभावात्, प्रतिप्रसवत्वाभावेऽपि विध्युपपत्तेः, गौतमधर्मसूत्रे विक्रयविनिमययोः पदार्थान्तरत्वस्य स्पष्टत्वेन भिन्नविषयत्वात् विक्रयनिषेधसापेक्षस्य प्रतिप्रसवत्वस्य विनिमयविधावसंभवाच्च आमस्य सांप्रतिकार्थत्वं कल्पतरुकारव्याख्यातमिदं चिन्त्योपपत्तिकमिति प्रतिभाति!

(१) **गौध.** ७।२१; **गृक.** २०९; **उ.** १।२०।१५; **स्मृच.** २।४८१ (संप्रत्यर्थे०); **गृर.** ४४० त्यर्थे (त्यर्थः); **पमा.** १।४३१ नाऽऽमेन

विक्रयो निषिद्धस्तं प्रत्येव प्रतिप्रसवात्। गृक. २०९

(३) समेन समपरिमाणेन आमेन तण्डुलेन संप्रत्यर्थे तादात्मि(? त्वि)कोपयोगार्थे पक्वान्नस्य निमयः कार्यः। मनुस्तु 'तिलधान्येन तत्समाः' इति समेन धान्येन तिलानां निमयमनुजानाति। अपण्यमिति विक्रयनिषेधात्सर्वत्र यावदुपयोगक्रये निषेधो न स्यात्। रसादीनामपि निमयशब्देन प्रदानमेव विवक्षितम्। अन्यथा त्वविद्यमानेन रसान्तरादेर्द्रव्याण्यावृत्त्यसंभवात् (?)। गौमि.

(४) आमेन तु पक्वस्य संप्रत्यर्थः तात्कालिकावश्यककार्यार्थम्। गृर. ४४०

(५) पक्वान्नस्य संप्रत्यर्थे आमस्य तदानीमुपयोगाय पक्वान्नं दत्त्वा संग्राह्यमित्यर्थः (?)। निप्र. २।३१९

(६) कृतान्नविषये प्रतिप्रसवमाह – समेनेत्यादि। समेनाऽऽमान्नेन पक्वस्यान्नस्य विनिमयो भवति। यदि तदानीमेव तत्पक्वमुपजीव्यते। यथा क्षुधितस्य प्रस्थमिततण्डुलदानपूर्वकतावत्परिमितौदनाद्यादानम्।

बाल. १।११९ पृ. ३७३

ब्राह्मणस्यात्यन्तापदि निषिद्धाया अपि वैश्य-
वृत्तेरनुमतिः शूद्रवृत्तिनिषेधश्च, संकरा-
दिवर्जशूद्रवृत्त्यनुमतिर्मतभेदेन,
वैश्यकर्म क्षत्रियस्याऽऽ-
पद्वृत्तिः

[१]**सर्वथा तु वृत्तिरशक्तावशौद्रेण।।**

(१) प्रतिषिद्धविक्रयनिमयजात्यन्तरवृत्तिसमुच्चयैरपि जीवेत् अशक्तौ अत्यन्तापदि। अशौद्रेण तत्रापि शूद्रवृत्तिम् उच्छिष्टाशनशिल्पवृत्त्यादि वर्जयेत्। आपद्विहितस्य किंचित्पापसूचनार्थस्तुशब्दः। उदाहृतं च स्मृत्यन्तरम् – 'कृत्वा पावनमात्मनः' इति। † मभा.

(२) सर्वथा प्रतिषिद्धविक्रयवृत्तिसंकरादिभिः। अशक्तौ नित्यनैमित्तिकानुष्ठानासंपत्तौ। अशौद्रेण शूद्रकर्मव्यतिरिक्तेन, उ(? नो)च्छिष्टभक्षणशिल्पादिना।

‡ गृक. २२४

[२]**तदप्येके प्राणसंशये।।**

(१) तदपि शूद्रकर्म मरणसंदेहे प्राप्ते एके इच्छन्ति, प्राणानामवश्यरक्षणीयत्वात्। तथा च व्यासः – 'धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः। तान्निघ्नता किं न हतं रक्षता किं न रक्षितम्।।' इति। प्राणग्रहणेन च तदधीनवृत्तीनां पुत्रदारादीनामपि ग्रहणम्, 'प्राणा ह्येते बहिश्चराः' इति दर्शनात्। एकेग्रहणान्न तु गौतमः, अस्यामप्यवस्थायां गर्हितत्वादिति। इह प्राणसंशयग्रहणात् विज्ञायते अन्याऽप्यापदस्तीति। ततश्च यस्यामवस्थायां पूर्वकल्पोपदेशः सा नित्यानां कर्मणामनुष्ठान(? ना)सामर्थ्यलक्षणा विज्ञेया। यथाऽऽह मनुः – 'देवतातिथिभृत्यानां पितृणामात्मनश्च यः। न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति।।'

# मभा.

(२) तदपि शौद्रकर्मापि प्राणसंशये। आत्मनोऽवश्यभर्तव्यानां चेति शेषः। § गृक. २२४

[३]**तद्वर्णसंकराभक्ष्यनियमस्तु।।**

(१) तद्ग्रहणेन शूद्र उच्यते। संकरः सहासनादिना। अभक्ष्यं तदुच्छिष्टादि, तद्योग्यं वा लशुनादि, तयोः नियमः वर्जनम्। तुशब्दो विशेषवाची अस्यामवस्थायां विशेषेण ब्राह्मणस्येति। मभा.

(२) तद्वर्णसंकरः सहासनादिः। अभक्ष्यं लशुनादि। नियमः निवृत्तिः। गृक. २२४

(३) न तु शूद्रवृत्तिरस्मीति य(? या)थाकाम्यमिति।

$ गौमि.

---

† गौमि., स्मृच., गृर., मुक्ता. मभागतम्।

(नासमेन) शेषं स्मृचवत्; **आपा.** १४५ (संप्रत्यर्थे०) अशुद्धः पाठः; **निप्र.** २।३१९ नाऽऽमेन (नासमेन) पक्वस्य सं (पक्वान्नसं); **मुक्ता.** ६२ नाऽऽमेन तु (न तु); **बाल.** १।११९ पृ. ३७३.

(१) **गौध.** ७।२२; **गृक.** (तु०); **उ.** १।२१।३; **स्मृच.** २।४७४ (अशौद्रेण) एतावदेव; **गृर.** ४४९ गृकवत्; **निप्र.** २।३२६ (तु०) (अशौद्रेण०) : २।३२९ शौद्रेण (शूद्रेण); **मुक्ता.** ६२ निप्र. २।३२९-वत्.

‡ निप्र. गृकगतम्।

# गौमि., स्मृच., मुक्ता. मभागतम्।

§ गृर. गृकवत्।

$ शेषं मभागतम्।

(१) **गौध.** ७।२३; **गृक.** २२४; **उ.** १।२१।३; **स्मृच.** २।४७४; **गृर.** ४४९; **निप्र.** २।३२९; **मुक्ता.** ६२.

(२) **गौध.** ७।२४; **गृक.** २२४ तद्व (तद्वद्व); **गृर.** ४४९; **निप्र.** २।३२९ राभक्ष्य (रोऽभक्ष्य).

(४) तद्वर्णसंकरः तेन शूद्रवर्णेन संकरः सहासनादिः। अभक्ष्यं लशुनादि, (तस्य) नियमः निवृत्तिः (तस्य?) अभावः अभक्ष्यनियमः। तेन प्राणसंशये वर्णसंकरदोषो भक्ष्यनियमो नास्तीत्यर्थः। गृर. ४५०

[१]**राजन्यो वैश्यकर्म।।**

क्षत्रियोऽपि स्वकर्मणा जीवितुमशक्तः सन् वैश्यवृत्तिमातिष्ठेत्। तस्याप्यपण्यप्रतिषेधो नास्तीत्युक्तम्। यथा ब्राह्मणस्य क्षत्रियवृत्तिरेवं क्षत्रियस्यापि वैश्यवृत्तिः, तथा वैश्यस्यापि शूद्रवृत्तिः; यथा ब्राह्मणस्य वैश्यवृत्तिरेवं क्षत्रियस्यापि शूद्रवृत्तिरित्येवं कल्पना न भवेदिति ज्ञापनार्थः सूत्रारम्भः। कुतः? यदि ब्राह्मणवदितरेषामभीष्टं तदा सर्वे अनन्तरैकान्तरां वृत्तिमातिष्ठेयुरित्यवक्ष्यत्, तदनुक्त्वा 'राजन्यो वैश्यकर्म' इत्यारम्भात् क्षत्रियस्यैवाऽऽपदि विहिता वृत्तिः, न वैश्यशूद्रयोः, क्षत्रियस्यापि न शूद्रवृत्तिरिति ज्ञापयति। ततश्च क्षत्रियोऽपि वैश्यवृत्तिमातिष्ठेदापदि। तथा च मनुः – 'जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः' (मस्मृ. १०।९५) इति। § मभा.

ब्राह्मणस्याध्यापनयाजनप्रतिग्रहा अस्वयंकृतानि
कृषिवाणिज्यकुसीदानि च वृत्तयः,
वृत्तीनामनित्यता, अध्यापन-
संप्रदानानि

[२]**ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः।।**

(१)ब्राह्मणग्रहणं द्विजातेरधिकारात्। आधिक्यं *पूर्वेषु सत्सु भवतीति। ननु 'वैश्यस्याधिकम्', 'राज्ञोऽधिकम्' इति च वक्ष्यति, ततश्च ब्राह्मणस्यैवैतद्भवतीति ब्राह्मणग्रहणं न कर्तव्यमिति। उच्यते – पूर्ववन्नैते आश्रमधर्माः, किंतु वर्णधर्मा इति ज्ञापनार्थम्। ततश्चानुपनीतस्यापि प्रतिग्रहाधिकारोऽस्ति। याजनाध्यापने त्वसंभवान्न स्तः। 'ब्राह्मणस्य प्रवचनयाजनप्रतिग्रहाश्च' इति वक्तव्ये अधिकग्रहणमेते वृत्त्यर्था अपि भवन्तीति ज्ञापनार्थम्। पूर्वसूत्रवदसमासो न कृतः समुच्चयेनाप्यनुष्ठानार्थम्, एकार्थत्वाद्विकल्पो मा भूदिति। प्रवचनम् अनुवचनम्। शेषं निगदव्याख्यानम्। मभा.

(२) प्रवचनम् अध्यापनम्। याजनम् आर्त्विज्यम्। प्रतिग्रहः प्रसिद्धः। एते ब्राह्मणस्याधिकाः पूर्वेभ्योऽध्ययनादिभ्यः। ते चामी च समुच्चिता इत्युक्तं भवति। अत्राप्यनुपनीतस्यापि प्रतिग्रहो भवति। याजनाध्यापने त्वसंभवान्न भवतः। 'ब्राह्मणस्य प्रवचनयाजनप्रतिग्रहाः' इत्येव सिद्धेऽधिकग्रहणं पूर्वत्र यथासंख्यं मा भूदिति। पूर्वे तावदवस्थिताः। गौमि.

(३) ब्राह्मणग्रहणं क्षत्रियव्युदासार्थम्। स्मृच. २।४४९

[१]**पूर्वेषु नियमस्तु।।**

(१) प्रथमेष्वध्ययनादिष्ववश्यकर्तव्यता। ततश्चाक्रियायां दोषः, क्रियायां चाभ्युदयः। प्रवचनादिष्वनियमः। ततश्च क्रियायामभ्युदयः, अक्रियायां प्रत्यवायाभावश्च। तुशब्दो विशेषवाची। क्षत्रियवैश्ययोरप्येतेषु नियमः, ब्राह्मणस्य विशेषतः इति। अत एवैवं सूत्रं न कृतम् – 'द्विजातीनामध्ययनमिज्या दानं नियमतः' इति, उत्तरेष्वपि नियमाधिकारः प्रसज्येतेति। मभा.

(२) नियमः अवश्यकर्तव्यता। पूर्वाण्यध्ययनादीन्यवश्यकर्तव्यानि। अकुर्वन्प्रत्यवैति कुर्वंश्चाभ्युदेति। प्रवचनादीनि तु वृत्त्यर्थानि। अतोऽकरणे न प्रत्यवायः, करणे नाभ्युदयः। गौमि.

(३) पूर्वेष्वध्ययनादिषु आवश्यकत्वं नियमः, न तु प्रवचनादिषु, विभागादिप्राप्तकुटुम्बपोषणपर्याप्तधनस्य धनार्जननियमाभावादिति विज्ञानेश्वरः। निप्र. २।२५३

[२]**आचार्यज्ञातिप्रियगुरुधनविद्यानियमे(?मये)षु ब्रह्मणः संप्रदानमन्यत्र यथोक्तात्।।**

आचार्यः उक्तलक्षणः। ज्ञातिः मातृपितृसंबन्धः। प्रियः सखा। गुरुः पिता, ज्येष्ठः, ऋत्विक् इत्यादिः। धननियमः

---

§ गौमि. मभागतम्।

* अध्ययनेज्यादानेष्वित्यर्थः।

(१) **गौध.** ७।२६.

(२) **गौध.** १०।२; **मिता.** १।११८; **स्मृच.** २।४४९ धिकाः प्र (धिकारः। प्र); **निप्र.** २।२५३; **मुक्ता.** १८.

(१) **गौध.** १०।३; **मिता.** १।११८ (तु०); **स्मृच.** २।४४९ (पूर्वेष्वनियमाः); **निप्र.** २।२५३ मितावत्; **मुक्ता.** १८ मितावत्.

(२) **गौध.** १०।४; **ब्रक.** २४१.

(? निमयः) धनपरिवर्तनम्। विद्यानियमः (? निमयः) विद्यान्तरेण परिवर्तनम्। ब्रह्मग्रहणं वेदार्थम्। ततश्चाङ्गादावनियमः। संप्रदानम् अध्यापनम्, कर्तव्यमिति शेषः। अन्यत्र यथोक्तात् 'अनुज्ञात उपविशेत्' (गौध. १।६०) इत्यादिकायाः शुश्रूषायाः। अन्यत्रोक्तादिति वक्तव्ये यथाग्रहणं येन विधिना अध्ययनमुक्तं तस्यैवायमपवादः, न पुनः 'शिष्टाध्यापकः' (गौध. ९।६९) इत्यस्यापि। ततश्च धनविद्यानियमे(? मये)नाप्ययोग्याय न देयम्। § मभा.

[1]**कृषिवाणिज्ये चास्वयंकृते॥**

(१) यदप्युक्तं गौतमेन – 'कृषिवाणिज्ये...' इति, अनापद्येव। तत्राप्यस्वयंकरणपक्षे दोषोऽस्त्येव, लघीयांस्तु भविष्यति। मेधा. ४।९

(२) कृषिवाणिज्ये प्रसिद्धे, ते अन्येन कारिते ब्राह्मणस्याधिके। चशब्दात्पशुपालनं चास्वयंकृतमेव।

† मभा.

(३) कृषिः कर्षणेन सस्योत्पादनम्। वाणिज्या क्रयविक्रयव्यवहारः। ते च ब्राह्मणस्याधिके यदि अस्वयंकृते अन्येन कारयितुं शक्येते। गौमि.

(४) वैश्यकर्मणि विशेषमाह – कृषीति।

स्मृच. २।४७०

(५) न दोषायेति शेषः। गृर. ४१७

[2]**कुसीदं च॥**

(१) कुसीदम् उपचयार्थो धनप्रयोगः, तदस्वकृतमेव, चशब्दप्रयोगात्। + मभा.

(२) पृथग्ग्रहणं चास्य स्वयंकृतस्याप्यनुज्ञानार्थं, 'कुसीदवृत्तिः धर्म्या' इति प्रदेशान्तरेऽभिधानात्।

‡ गृक. १७१

(३) गौतमः 'कृषि.... कुसीदं वा' इति ब्राह्मणमधिकृत्याऽऽह। सूत्रे विभागः पूर्ववृत्तिद्वयासंभवेऽत्यन्तापदि कुसीदाश्रयणमित्येतदर्थमित्याहुः।

मवि.

(४) कुसीदमपि अस्वयंकृतमेवाधिका वृत्तिरिति हरदत्तः। पृथक्कुसीदग्रहणं स्वयंकृतस्याप्यभ्यनुज्ञानार्थम्, 'कुसीदवृत्तिर्धर्म्या' इति प्रदेशान्तरे उक्तेरिति कल्पतरुः। युक्तस्तु आद्यः, तस्यान्यथाऽसुयोजत्वात्तयोर्भेदाच्च। अत्र द्वितीयपक्षः कृषिवाणिज्ययोरभावे। तथा च कूर्मपुराणम् – 'कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम्। कृषेरभावे वाणिज्यं तदभावे कुसीदकम्॥' इति।

बाल. १।११८ पृ. ३६५

राज्ञो भूतरक्षणं वृत्तिः, सैव जातिक्षत्रियस्य राजाश्रयेण, कुटुम्बपोषणपर्याप्तादधिकेन न वृत्तिः

[1]**राज्ञोऽधिकं रक्षणं सर्वभूतानाम्॥**

(१) राज्ञः क्षत्रियस्याभिषेकवतो रक्षणं पालनं सर्वभूतानां सर्वप्राणिनाम्। सर्वशब्दप्रयोगात् स्थावराणां च। तद्द्वारेण वृत्तिर्भवतीत्यधिकग्रहणम्। मभा.

(२) सर्वग्रहणात्स्थावरादीना(? राणा)मश्वत्थादीनां छेदननिरोधेन। गौमि.

[2]**क्षत्रियश्चेदन्यस्तमुपजीवेत्तद्वृत्त्या॥**

(१) अन्यः जातिमात्रसंबन्धः। तं राजानमुपजीवेत्।

---

§ गौमि. मभावत्।

† बाल. मभागतम्।

(१) **गौध.** १०।५; **मेधा.** ४।२,९ : १०।८२ (=); **मिता.** १।११८ चास्वयंकृ (वा स्वयं कृ); **अप.** ३।४१ ज्ये चास्व (ज्ये अस्व); **गृक.** १७१ चास्व (वाऽस्व); **मवि.** ४।५ चास्व (वा स्व); **स्मृच.** २।४७०; **ममु.** ४।६ चास्वयंकृते (स्वयं चाऽकृते); **गृर.** ४१७; **आपा.** १३८; **मर.** १७९ गृकवत्; **निप्र.** २।२५४ चास्वयंकृ (वाऽस्वयं कृ); **आत.** ३४९ (कृषिगोरक्षवाणिज्येऽस्वयं कृते); **मुक्ता.** ६२; **संम.** ७८ (वाणिज्यं कृषिवदेव); **वीमि.** १।११८ गृकवत्; **बाल.** १।११८ पृ. ३६५ अपवत्; **इन्दु.** १९८ गृकवत्.

(२) **गौध.** १०।६; **मेधा.** ४।२, ९ : १०।८२ (=); **मिता.** १।११८; **अप.** ३।४१; **गृक.** १७१; **मवि.** ४।५ च (वा); **स्मृच.** २।४७०; **ममु.** ४।६; **गृर.** ४१७; **मर.** १७९ च (वा); **निप्र.** २।२५४; **आत.** ३४९; **बाल.** १।११८ पृ. ३६५; **इन्दु.**१९८.

+ गौमि. मभागतम्।

‡ शेषं मभागतम्। गृर., स्मृच., निप्र., इन्दु. गृकगतम्। आत. गृकानुवादः.

(१) **गौध.** १०।७.

(२) **गौध.** १०।१८; **गृक.** २५४; **गौमि.** १०।१९; **मर.** ११ चेदन्य (चान्य) : १९० यश्चेदन्य (यस्यान्य).

तद्वृत्त्या 'चर्या च रथधनुर्भ्याम्' (गौध. १०।१४) इत्यादिना।

मभा.

(२) तद्वृत्त्या शस्त्रधारित्वेन।

* गृक. २५४

(३) अन्यश्चेत्क्षत्रियस्तं राजानं देशोपप्लवादिनोपजीवेत्तदा तद्वृत्त्या तस्य राज्ञः या वृत्तिः 'चर्या रथधनुर्भ्याम्' इत्यादिका तया युक्तः सन् जीवेत्, तेन राज्ञैवमसौ संमत इति।

गौमि.

(४) तं राजानम्। अस्वयंकृतकृषिवाणिज्यकुसीदान्यप्यस्य वृत्तिः। अत एव पराशरः – 'क्षत्रियोऽपि कृषिं कृत्वा देवान्विप्रांश्च पूजयेत्। वैश्यः शूद्रस्तथा कुर्यात्पशुवाणिज्यशिल्पकम्।।' (पस्मृ. २।१३) इति।

$ मर. १९०-१९१

'अधिके न वृत्तिः।।

(१) स्यादिति शेषः। कुटुम्बपोषणादधिकं यत्कोशरूपेणानुप्रविष्टं तस्मिन् कोशे वृत्तिर्न स्यात्। कुटुम्बपोषणार्थमन्यत्राऽऽपदः तस्मिन् न गृह्णीयादित्यर्थः। तथा च व्याघ्रः – 'कुटुम्बपोषणं कुर्यान्नित्यं कोशं च वर्धयेत्। अन्यत्राऽऽपत्तितः कोशं न गृह्णीयात् कदाचन।।' इति। केचिद्व्याचक्षते – अधिकेन रक्षणद्वाराऽऽगतेन जीवनं स्यादिति। तत्र 'राज्ञोऽधिकम्' (गौध. १०।७) इत्यनेन पुनरुक्तप्रसङ्गोऽस्ति उत नास्तीति निरूपणीयम्।

मभा.

(२) 'राज्ञोऽधिकं रक्षणम्' (गौध. १०।७) इति यदुक्तं तद्द्वारेण यदागतं धनं तदधिकम्, तेनाऽऽत्मनः पोष्यवर्गस्य च हस्त्यश्वादीनां च वृत्तिः स्यात्, न तु पूर्वैर्यत्संचित्य खातं कोशरूपेण तेन जीवेत्। आपदि तु तेनापि जीवेत्। तथा च व्याघ्रः – 'कुटुम्बपोषणं कुर्यान्नित्यं कोशं च धारयेत्। आपदोऽन्यत्र कोशात्तु न गृह्णीयात्कदाचन।।' इति।

गौमि.

* शेषं मभावत्।

$ शेषं मभावत्।

(१) **गौध.** १०।२९; **मभा.** के न (केन) इति पाठस्यापि संदिग्धत्वेन निर्देशः; **गौमि.** १०।३० के न (केन).

वैश्यस्य कृषिवाणिज्यपाशुपाल्यकुसीदानि वृत्तयः, शूद्रश्चतुर्थो वर्णः, शूद्रस्य त्रैवर्ण्यसेवा त्रैवर्ण्यदत्तजीर्णवस्तुभुक्तशिष्टान्नानि शिल्पं च वृत्तयः, त्रैवर्णिकशूद्रयोः सेव्यसेवकयोरन्यतरस्य दुरवस्थस्यापरेण पोष्यता, शूद्रस्य सेव्यपोषणार्थं धनसंग्रहानुज्ञा

'वैश्यस्याधिकं कृषिवणिक्पाशुपाल्यकुसीदम्।।

(१) कृष्यादि प्रसिद्धम्। कृषिश्च वणिक्चेति द्वन्द्वैकवद्भावः। वणिगिति वाणिज्यं कर्मोच्यते। मभा.

(२) पशुपालस्य कर्म पाशुपाल्यम्। कुसीदं वृद्ध्यर्थो धनप्रयोगः। कृष्यादिभिर्यल्लब्धं तदधिकं स्वं वैश्यस्य।

गौमि.

'शूद्रश्चतुर्थो वर्णः।।

(१) शूद्र इति संज्ञा श्रुतितो द्रवतीति। वर्ण इति त्रयाणां ब्राह्मणादीनां वर्णसंज्ञाप्रतिपत्त्यर्थम्। अतश्चतुर्णामेव वर्णसंज्ञा, नान्तरजानाम्। तथा च वसिष्ठः – 'चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः' इति। मभा.

(२) चतुर्थो वर्ण इति वर्णसामान्यत्वे सत्यपि चतुर्थग्रहणं पूर्वेषां त्रयाणां ब्राह्मणादिवर्णानां पृथग्वर्णत्वोपपादनार्थम्, त्रैवर्णिका इति सिद्धत्वात्। गौमि.

'परिचर्या चोत्तरेषाम्।।

(१) परिचर्या परिचरणं शुश्रूषा उत्तरेषां त्रयाणां वर्णानाम्। चशब्दात्कृष्यादि च। सच्छूद्रस्य शुश्रूषा, इतरस्य कृष्यादिरिति केचित्। गौतमस्य तावदयमभिप्रायः – यः सच्छूद्रस्तेनोभयमप्यविरोधेन कर्तव्यम्, इतरेण कृष्याद्येवेति। इतरेषा-

(१) **गौध.** १०।४८; **गौमि.** १०।५०.

(२) **गौध.** १०।४९; **गृक.** २६७; **गौमि.** १०।५१; **गृर.** ४७७; **मपा.** २३० (चतुर्वर्णः) एतावदेव; **स्मृकौ.** ८९; **मर.** १२; **शूशि.** ३४; **चमव्या.** ८३; **मुक्ता.** ६७, ६८, ६९; **शूक.** ६७; **बाल.** १।१२१ पृ. ३७६, १।१६६ पृ. ४३०; **संग.** ६३६ वचनमशुद्धम्; **सस्मृ.** ११० (=): १२७.

(३) **गौध.** १०।५६; **गृक.** २६७; **गौमि.** १०।५७; **गृर.** ४७७; **मपा.** २३० चोत्त (चेत); **मर.** १२; **शूशि.** ३४; **मुक्ता.** ६७, ६८, ६९; **बाल.** १।१२१ पृ. ३७६; **सस्मृ.** ११० (=).

मिति सिद्धे उत्तरग्रहणं यो य उत्तरस्तत्र तत्र फलभूयस्त्वज्ञापनार्थम्। तथा चाऽऽपस्तम्बः – 'पूर्वस्मिन् पूर्वस्मिन् वर्णे निश्रेयसं भूयः' इति। * मभा.

(२) उत्तरेषाम् उत्कृष्टानां ब्राह्मणादीनाम्। + गृक. २६८

(३) .... इतरेषां द्विजातीनाम्। मपा. २३१

[1]**तेभ्यो वृत्तिं लिप्सेत।।**

इदानीं § यस्य शुश्रूषा स कथं वर्तते? इत्यत आह – तेभ्य इति। यान्परिचरेत् तेभ्य एव जीवनं लब्धुमिच्छेत्। एवं च वृत्त्यर्थिन एव परिचर्या, नावश्यं सर्वस्येति सिद्धम्। $ मभा.

¶ [2]**तत्र पूर्वं पूर्वं परिचरेत्।।**

तथा चाऽऽपस्तम्बः – पूर्वस्मिन्पूर्वस्मिन्वर्णे निःश्रेयसं भूय इति। तदेवं यथा याजनाध्यापनप्रतिग्रहेषु ब्राह्मणस्य प्रतिग्रहो मुख्या वृत्तिस्तथा शूद्रस्य परिचर्या, तत्रापि पूर्वस्मिन्पूर्वस्मिन्वर्ण इति। गौमि.

[3]**जीर्णान्युपानच्छत्रवासःकूर्चादीनि।।**

(१) किं पुनरेभ्यः प्रार्थयेत्? तैर्वाऽस्मै किं देयम्? इत्याह – जीर्णानीति। जीर्णानि उपभुक्तानि। आदिशब्दाच्चान्यानि चाल्पसाराणि। यथाऽऽह मनुः – 'उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च। पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः' (मस्मृ. १०।१२५) इति। छत्रग्रहणं शिखिपत्रकृतानामप्युपलक्षणम्। अन्यत्प्रसिद्धम्। मभा.

(२) कूर्चः तृणमयमासनम्। $ गृक. २६८

(३) कूर्चं तृणादि। शेषं प्रसिद्धम्। जीर्णानि उपभुक्तान्युपानदादीनि परिचरते शूद्राय देयानि। अयं तु शुश्रूषावृत्तेः शूद्रस्य नियमः, न गृहस्थवृत्तेः। तस्य तु वृत्त्यनपेक्षं सामान्याकारेण विशेषत्वम्। × गौमि.

[1]**उच्छिष्टाशनं शिल्पवृत्तिश्च।।**

(१) पानीयस्यानियमः, अशनशब्दस्योपादानात्। उच्छिष्टं भुक्तशिष्टम्। तदप्यकृतदारस्यैव, इतरस्य तु पाकयज्ञाधिकारादप्रवृत्तेः। कुत एतत्? #असमासनिर्देशात् स्मृत्यन्तराच्च। यथाऽऽह व्याघ्रः – 'उच्छिष्टमन्नं दातव्यं शूद्रायागृहमेधिने। गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिने।।' इति। शिल्पवृत्तिः तक्षायस्कारादिकर्मोपजीवनम्। चशब्दात्कारुकर्माणि। विसमासः आपत्कल्पप्रदर्शनार्थः। तथा च मनुः – 'अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम्। पुत्रदारात्ययं प्राप्तो जीवेत्कारुककर्मभिः।।' (मस्मृ.१०।९९) इति। शुश्रूषां कर्तुमशक्नुवन् शिल्पवृत्त्योपजीवेत्, तयाऽपि जीवनासंभवे कारुवृत्तिरिति द्रष्टव्यम्। शिल्पकारुकर्मणोश्च भेदो लोका-

---

* गौमि. मभागतम्।

\+ गृर., मर., शूशि., बाल. गृकवत्।

§ यस्येति कर्तरि षष्ठी। वर्तते जीवति। तथा च यः केवलं शुश्रूषामेव कुरुते स कथं जीवतीत्यर्थः।

$ गौमि., मर., शूशि., बाल. मभागतम्।

¶ हरदत्तमिताक्षरादर्शपुस्तकेऽस्य सूत्रत्वेन मुद्रणेऽपि हरदत्तोक्तिरूपत्वे बाधकाभावात्, 'पूर्वः पूर्वो गुरुः' (गौध. ७।५) इति सूत्रस्य स्पष्टार्थत्वेऽपि सूत्रार्थव्याख्यानवदत्र सूत्रार्थव्याख्यानाभावात्, प्रायः शब्दतोऽर्थतो वा हरदत्तव्याख्यानमनुवदता बालंभट्टेनास्य सूत्रस्याग्रहणाच्च हरदत्तमतेऽप्यस्य सूत्रत्वे संदेहः।

(१) **गौध.** १०।५७; **गृक.** २६७; **गौमि.** १०।५८; **गृर.** ४७७; **मपा.** २३० (एभ्यो वृत्तिं लिप्सेत्); **मर.** १२, १९७; **शूशि.** ३४; **मुक्ता.** ६७; **शूक.** ७० लिप्सेत (विलिप्सेत); **बाल.** १।१२१ लिप्सेत (लिप्स्येत).

(२) **गौमि.** १०।५९.

(३) **गौध.** १०।५८; **गृक.** २६७; **गौमि.** १०।६०; **गृर.** ४७७; **शूशि.** ३४ र्णान्यु (र्णानु) नच्छ (नहः छ); **मुक्ता.** ६७; **शूक.** ७०; **बाल.** १।१२१ पृ. ३७६.

$ गृर. गृकवत्।

× शूशि., मुक्ता., बाल. गौमिगतम्।

\# अत्रासमासशब्दवाच्यस्य अग्रे विसमासशब्दवाच्यस्य च समासाभावस्य भिन्नार्थयोर्ज्ञापकत्वमुक्तम्। न ह्येकस्य ज्ञापकस्यानेकार्थज्ञापकत्वं युज्यते। तस्मात् समासाभावभेदो वक्तव्यः। तत्रेदं कल्प्यते – उच्छिष्टाशने पूर्वसूत्रोक्तजीर्णत्वायोगात् जीर्णपदस्य उपानच्छत्रवासःकूर्चादिपदेन कर्मधारयं कृत्वा ततस्तस्य उच्छिष्टाशनपदेन द्वन्द्वसमासाभावोऽत्रासमासशब्देन ग्राह्यः, उच्छिष्टाशनशब्दस्य शिल्पवृत्तिशब्देन समासाभावोऽग्रे विसमासशब्देन ग्राह्य इति। तदिदं क्लिष्टमप्यगत्या कल्प्यते।

(१) **गौध.** १०।५९; **गृक.** २६७; **गौमि.** १०।६१-६२; **गृर.** ४७७; **मर.** १२, १९७; **शूशि.** ३४; **चमव्या.** ८० मरवत्; **मुक्ता.** ६७; **शूक.** ७० शिल्पवृ (शिल्पं वृ); **संम.** ४७; **बाल.** १।१२१ पृ. ३७६ (शिल्पवृत्तिश्च०).

दवगन्तव्यः। कारुकर्माणि† नापितरजकचित्रकारादीनि प्रतिलोमकर्मत्वादनुलोमकर्मभ्यो निन्दितानि, शिल्पानि तु तक्षायस्कारादीनि अनुलोमकर्मत्वात्कारुकर्मभ्यो विशिष्टानीति। मभा.

(२) भोजनपात्रे यद्भुक्तावशिष्टं तदस्याशनम्। नाब्राह्मणायोच्छिष्टं प्रयच्छेदित्येतत्तु दासविषयम्। गृहस्थशूद्रविषयमन्ये। * गौमि.

**[1]यं चाऽऽर्यमाश्रयेद्भर्तव्यस्तेन क्षीणोऽपि।।**

(१) यं ब्राह्मणादिम् आश्रयेत परिचरेत् तेनासौ पोषणीयः। चशब्दादनार्यं स्वजातीयमपि कर्मान्तरेण, आर्याणामेव परिचरणोपदेशात्। यं चाऽऽश्रयेतेति वक्तव्ये आर्यग्रहणं समानजातीयेऽपि साधूनां विशेषज्ञापनार्थम्। तेनेति तस्यावश्यकर्तव्यतासूचनार्थम्। क्षीणोऽपि व्याधिजराद्युपहतोऽपीत्यर्थः। मभा.

(२) तेन आर्येण। क्षीणः वृत्तिहीनः।

# गृक. २६८

(३) परिचर्यया वर्तमानः शूद्रो यदि क्षीणः कर्म कर्तुमसमर्थः भवति तथाऽपि यमसौ पूर्वम् आश्रितः कर्माण्यकरोत् तेनासौ भर्तव्यः पूर्वकृतापेक्षया। ‡ गौमि.

**[2]तेन चोत्तरः।।**

(१) यत्तु गौतमीयम् – 'तेन चोत्त... निचयः' इति तदाश्रितशूद्रविषयं द्रष्टव्यम्। विश्व. १।२१२

(२) तेन च शूद्रेणोत्तरो यमाश्रयेत। एवं च वृत्तिक्षीणस्य शूद्राश्रयणमप्यस्तीति ज्ञापयति। आश्रयणमप्यात्मसंदर्शनमात्रम्। यथाऽऽह जातूकर्णिः – 'यो नीचमाश्रयेदार्य आत्मानं दर्शयेत्सदा। आत्मानं दासवन्मत्वा चरेन्नीचोऽपि तं प्रति।।' चशब्दादनाश्रितोऽप्यवसन्नः। तथा च जातूकर्णिः – 'दरिद्रो ब्राह्मणो दान्तो वेदानां चैव पारगः। शूद्रेणापि सदा ह्येष भर्तव्योऽनाश्रितोऽपि सन्।।' इति। 'तेन चेतरः' इति वक्तव्ये उत्तरग्रहणं ब्राह्मण एव नियमतो भर्तव्यः, इतरोऽनियमत इति ज्ञापनार्थम्। तथा च जातूकर्णिः – 'बिभृयाद्ब्राह्मणं नित्यं सर्वयत्नेन बुद्धिमान्। अन्यं चाप्यानृशंस्यार्थं शूद्रोऽपि द्रव्यवान् सदा।।' इति। ‡ मभा.

(३) उत्तरः आर्यः। क्षीण इत्यनुवर्तते।

§ गृक. २६७

**[1]तदर्थोऽस्य निचयः स्यात्।।**

(१) दानायैवैषां स्थित्यतिरिक्तवित्तसंग्रहाधिकारोऽपि। 'तदर्थोऽस्य निचयः' इत्यनेनाप्येतदेवोक्तमित्यवसेयम्।

विश्व. १।२१२

(२) तदर्थः उत्तरपोषणार्थः अस्य शूद्रस्य निचयः संचयः स्यात् भवति। यस्मादित्यध्याहर्तव्यम्। एवं चास्य अन्यार्थो द्रव्यपरिग्रहः प्रतिषिद्धो भवति। हेतुवचनमपि पूर्ववदसारद्रव्येण भरणं न भवति, किंतु स्वकुटुम्बाविरोधेन सर्वस्वदानेनेति। ‡ मभा.

(३) तदर्थः आर्यार्थः अस्य शूद्रस्य निचयः धनसंचयः।

# गृक. २६७

गोग्न्यर्थे अदत्ततृणादिग्रहणानुज्ञा,
कुसीदवृद्धिविषयका
विधिनिषेधाः

**[2]गोग्न्यर्थे तृणमेधान् वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम्।।**

---

† नापितादिशब्दा नापितादिकर्मसु लाक्षणिकाः।

* बाल. गौमिवत्। शूशि., चमव्या. गौमिगतम्।

# गृर., मर., शूक. गृकवत्।

‡ शूशि., मुक्ता., बाल. गौमिवत्।

(१) **गौध.** १०।६० येद्भ (यीत भ); **मेधा.** ३।७२ (भर्तव्यस्तेन क्षीणवृत्तिः) एतावदेव; **गृक.** २६७; **मभा.** येद्भ (येत भ); **गौमि.** १०।६३ चाऽऽर्यमाश्रयेद्भ (चायमाश्रितो भ); **मर.** १२, १९७; **शूशि.** ३४ अशुद्धो ग्रन्थः; **मुक्ता.** ६७ गौमिवत्; **शूक.** ७० यं चाऽऽर्य (यद्यर्य); **बाल.** १।१२१ अशुद्धो ग्रन्थः.

(२) **गौध.** १०।६१; **विश्व.** १।२१२; **गृक.** २६७; **गौमि.** १०।६४; **गृर.** ४७७; **मर.** १२, १९७; **शूशि.** ३४; **मुक्ता.** ६७; **शूक.** ७० तेन (शूद्रेण); **बाल.** १।१२१ पृ. ३७६.

‡ गौमि., शूशि., मुक्ता., बाल. मभागतम्।

§ मर. गृकवत्।

# मर. गृकवत्।

(१) **गौध.** १०।६२; **विश्व.** १।२१२ (स्यात्०); **गृक.** २६७; **गौमि.** १०।६५; **गृर.** ४७७; **मर.** १२, १९७; **शूशि.** ३४; **मुक्ता.** ६७; **शूक.** ७०; **बाल.** १।१२१ पृ. ३७६.

(२) **गौध.** १२।२५; **मेधा.** ८।३३९ (पुष्पाणि स्ववदाददीत फलानि चापरिवृत्तानाम्) एतावदेव; **गृक.** ३२२ (गोग्न्यर्थ्यं तृणमेधन् वीरुद्वनस्पतीनां पुष्पाणि स्वयमाददीत फलानि वाऽपरिवृत्तानाम्);

(१) अपरिवृत्तानां अपरिरक्षितानाम्। गृक. ३२२

(२) गवार्थं तृणानि। अग्निग्रहणेन श्रौतस्य स्मार्तस्यापि ग्रहणम्, न लौकिकस्य। तदर्थम् एधान् काष्ठानि। वीरुधां करवीरादीनां पुष्पाणि। वनस्पतिशब्दोऽत्र वृक्षपर्यायः, साक्षाद्वनस्पतीनां पुष्पासंभवात्। यथाऽऽह मनुः – 'अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः।।' (मस्मृ. १।४७) इति। पुष्पाणि देवार्चनार्थानि, नानुभवार्थानि, गोग्निसाहचर्यात्। चकारात्पत्राणि ब्राह्मणभोजनार्थानि। वीरुद्वनस्पतिपुष्पाणि चेति वक्तव्ये औषधार्थं मूलादेरपि ग्रहणार्थमसमासः। स्ववत् यथा तेषां पीडा न भवति तथा ग्रहीतव्यमिति। यथाऽऽह व्यासः – 'पक्वं पक्वं प्रचिन्वीत मूलच्छेदं तु वर्जयेत्। मालाकार इवाऽऽरामे न यथाऽङ्गारकारकः।।' इति। फलानि चाऽऽम्रफलादीनि। आपत्सूचनार्थं पृथगभिधानम्। चकाराच्छाकं च। अपरिवृतानां अनारामीकृतानाम्। उभयविशेषणं चेदम्। एवंचाऽऽरामे तृणादेरपि प्रतिषेधः सिद्धः। मभा.

(३) एतानि तृणादीनि स्वामिभिरदत्तान्यपि स्ववदाददीत। यथा स्वामी निःशङ्कमादत्ते तद्वदाददीत। ते वीरुद्वनस्पतयोऽपरिवृताश्चेत्तेषां फलान्यपि स्ववदाददीत, न स्वाम्यपेक्षा। फलविषयमेतदपरिवृतत्वम्, न तृणादिविषयम्, पृथग्वाक्यत्वात्। + गौमि.

(४) अपरिवृतानाम् अदत्तवृतीनाम्, अपरिरक्षितानामिति यावत्। अत एव परिगृहीते दण्डमाह मनुः – 'तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्। अनापृष्टस्तु गृह्णानो हस्तच्छेदनमर्हति।।'।

+ स्मृच. २।४६८

(५) स्ववत् आत्मवत्। * गृर. ५२०

+ शेषं मभागतम्।

* शेषं गृकवत्।

**वीमि.** ८।३३९ (अपरिवृतानाम्) एतावदेव; **स्मृच.** २।४६८; **ममु.** ८।३३९ (वीरुद्वनस्पतीनां पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम्) एतावदेव; **गृर.** ५१९ मेधान्वी (मेधं वी) (च०) वृतानाम् (वृत्तानाम्); **मच.** ८।३३९ चापरिवृता (चानृता) (गोग्न्यर्थे तृणमेधान्०); **आत.** ४०० (गोग्नर्थतृणमेधांसि यज्ञार्थे वीरुद्वनस्पतीनां पुष्पाणि स्ववदाददीत फलानि च परिबृंहितानाम्); **मुक्ता.** ५९ वीरु (वीरू).

**[1]कुसीदवृद्धिर्धर्म्या विंशतिः पञ्चमाषिकी मासम्।।**

(१) कुसीदं द्रव्यप्रयोगः, तत्र वृद्धिः उपचयः धर्म्या धर्मादनपेता। यदा विंशतिः कार्षापणानां मासं प्रयुक्ता भवति तदा तस्याः प्रतिमासं पञ्चमाषपरिमाणा वृद्धिर्भवति। प्रतिमासं निष्कस्यार्धगुञ्जामात्रा वृद्धिरित्यर्थः। माषशब्देन व्रीहिपरिमितं वस्त्वभिधीयत इति। एवं च मनुनोक्तस्याशीतिभागस्यैव ग्रहणं संपद्यते। तथाऽऽह मनुः – 'वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्धिनीम्। अशीतिभागं गृह्णीयान्मासं वार्धुषिकः शते।।' (मस्मृ. ८।१४०) इति। वसिष्ठविहितां 'कामं वा परिलुप्तकृत्याय पापीयसे दद्याताम्' (वाध. २।४३) इति। सुवर्णकार्षापणपक्षे चतुःषष्टिभागो भवति 'ते सुवर्ण तु षोडश' (मस्मृ. ८।१३४) इति। मभा.

(२) वृद्ध्यर्थं प्रयुक्तस्य द्रव्यस्य कुसीदसंज्ञा। माषः कार्षापणस्य विंशतितमो भाग इत्युशनसोक्तम्। पञ्च माषा वृद्धिरूपेण दीयन्ते यत्र विंशतौ सा पञ्चमाषिकी। 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते' (पासू. ५।१।४७) इत्यत्रार्थे †प्राग्वहतेष्ठक्। 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' (पासू. ५।१।२८) इति लुक्प्राप्तो न कृतः स्वाच्छन्द्यादृषिणा। कार्षापणानां विंशतिः प्रतिमासं पञ्चमाषिकी यथा भवति तथा भवन्ती कुसीदवृद्धिर्धर्मादनपेता। अत्र मनुः 'वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्धिनीम्। अशीतिभागं

† नेदं विचारसहम्, ठग्विधायकस्य प्रकृतसूत्रस्य 'प्राग्वहतेष्ठक्' (पासू. ४।४।१) इति वहतिमर्यादकठगधिकाराद्बहिर्भूतत्वात्। 'प्राग्वतेः' इति शुद्धिकल्पनमपि नोपपद्यते, ठगधिकारस्य वतिमर्यादकत्वाभावात्, 'प्राग्वतेष्ठञ्' (पासू. ५।१।१८) इति ठञधिकारस्य वतिमर्यादकत्वात्। नापि 'प्राग्वतेष्ठञ्' इति शुद्धिर्युज्यते, प्रकृतसूत्रेण ठको विधानात्। ठञधिकारान्तर्गते 'आर्हादगोपुच्छ०' (पासू. ५।१।१९) इत्यधिकारे प्रकृतसूत्रसत्त्वात् 'आर्हीयष्ठक्' इति व्याख्यानं तु युज्यते। किंचात्र केवललुगभावे एव स्वाच्छन्द्यं हेतूकृतम्, तदपि न्यूनम्। वस्तुतोऽत्र पञ्चमाषशब्दात् 'पणपादमाषशताद्यत्' (पासू. ५।१।३४) इत्यनेन यत्प्रत्ययः प्राप्तः, तस्य च विधानसामर्थ्याल्लुक् न भवति 'द्विपण्यम्' इत्यत्रेव। ऋषिणा प्राप्तोऽयं यत् न कृतः, तत्रापि स्वाच्छन्द्यमेव हेतुः।

(१) **गौध.** १२।२६; **निप्र.** २।२५४ (कुसीदवृत्तिर्धर्म्या) एतावदेव.

गृह्णीयान्मासाद्वार्धुषिकः शते।।' (मस्मृ. ८।१४०) इति। अत्रापीयमेव वृद्धिरुक्ता। कथम्? पणस्य विंशतितमो भागो माषः। पणानां विंशतिश्चतुःशती माषाणां संपद्यते। चतुःशत्याः पञ्च माषा वृद्धिः, अशीतेरेकः। पञ्चशतीति यश्चतुरशतीति (? पञ्चाशीतयश्चतुःशतीति)। याज्ञवल्क्यस्तु – अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके। वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा।।' (यास्मृ. २।३७) इति। विश्वासार्थं यदाधीयते सुवर्णादि तद्बन्धकम्, तदु- (? तद्यु)क्ते धनप्रयोगे। वर्णानुपूर्व्याद्ब्राह्मणादिष्वधमर्णेषु धनं द्वित्र्यादियुक्तं क्रमाद्भवति। गौमि.

[1]**नाति सांवत्सरीमेके।।**

(१) मासमतिक्रम्य संवत्सरवृद्धिर्न ग्राह्येत्येके मन्यन्ते। एतदुक्तं भवति – मासि मासि यद्ग्रहीतव्यं तत्सर्वं संभूय संवत्सरे परिपूर्ण एव गृह्णामीत्येवं मत्वा प्रतिसंवत्सरं न ग्रहीतव्यमिति। प्रतिसंवत्सरप्रतिषेधात् प्रतिमासं प्रतिषा- (? ष)ण्मासं चाभ्यनुज्ञायते। ततश्च मासि मासि षण्मासे षण्मासे वा ग्रहीतव्यम्, न प्रतिसंवत्सरमित्येकेषामभिप्रायः। प्रतिमासवृद्धिग्रहणे चैतद्द्रष्टव्यम्। यावद्धनसंव्यवहारस्तावद्ग्राह्यैवेति गौतमः। तद्विच्छेदे तु 'नाति सांवत्सरीम्' इति व्यवस्थितविभागो द्रष्टव्यः। मभा.

(२) येयमशीतिभागलक्षणा धर्म्या वृद्धिस्तामतिसांवत्सरीं संवत्सरेऽतिक्रान्ते भवां न गृह्णीयात्। एकस्मिन्नेव संवत्सरे प्रतिमासमशीतिभागो ग्राह्यः, तत ऊर्ध्वं न किंचिदपि ग्राह्यम्, एषा धर्म्या भवतीत्येके मन्यन्ते। अतिसांवत्सरीमिति रूपसिद्धिश्चिन्त्या। गौमि.

[2]**चिरस्थाने द्वैगुण्यं प्रयोगस्य।।**

(१) चिरस्थाने अगृहीतायां वृद्धौ तया वृद्ध्या यावता कालेन द्विगुणं भवति ततः परं न वर्धते। प्रयोगग्रहणं प्रयोगान्तरे द्वैगुण्यव्यतिक्रमार्थम्। यथाऽऽह मनुः – 'कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता।।' (मस्मृ. ८।१५१) इति। हिरण्यस्यैव द्विगुणानतिक्रमणमिति ज्ञापनार्थं स्थानग्रहणम्। धान्यादयो द्विगुणमप्यतिक्रम्य वर्धन्त एव। तथा च वसिष्ठः 'द्विगुणं हिरण्यं त्रिगुणं धान्यम्', 'धान्येनैव रसा व्याख्याताः', 'पुष्पमूलफलानि च', 'तुलाधृतमष्टगुणम्' (वाध. २।४४-४७) इति। एवं च ब्रुवता 'कुसीदवृद्धिर्धर्म्या' इति योक्ता वृद्धिस्तस्याः सार्वत्रिकत्वं प्रदर्शितं भवति, अन्यथा प्रसङ्गाभावाद्धिरण्यस्यैव सिद्धत्वात् तदर्थं स्थानग्रहणमनर्थकमिति। ततश्च सर्वत्राशीतिभागो द्रष्टव्यः। चिरग्रहणं संवत्सरसहस्रैरपि न वर्धत इति। मभा.

(२) स्वमतमाह – चिरस्थाने इति। * गौमि.

**भुक्ताधिर्न वर्धते।।**

(१) भोग एव तत्र वृद्धिर्भवतीति। मभा.

(२) विश्वासार्थं यदाधीयते कांस्याभरणादि स आधिः। स चेदुपभुक्तः प्रयुक्तोऽर्थः, न वर्धते, भोग एव तत्र वृद्धिरिति। गौमि.

**दित्सतोऽवरुद्धस्य च।।**

(१) किंच, दातुमिच्छतो धनिने स यदा धनी वृद्धिलोभाद्व्याजेन न गृह्णाति ततोऽपि न वर्धते। यो दातुमिच्छति तेन साक्षिमल्लाञ्छना $संस्था कर्तव्या, अनभिज्ञानाद्बुद्धिव्यापारस्य। एवमवरुद्धस्य च निःस्वो भूत्वा देशान्तरगतस्येत्यर्थः। चकारः पूर्वविशेषणाशङ्का मा भूदिति। तद्दिवसादारभ्येति द्रष्टव्यम्। केचिद्राजादिना निगलबन्धनमाहुः, तत्र भूमिदेवाः प्रमाणम्। मभा.

(२) धनिने धनं दातुमिच्छतोऽधमर्णस्य धनं न वर्धते। धनी वृद्धिलोभाद्व्याजेन न गृह्णाति चेत्तस्मिन्नेव दिवसे परहस्ते स्थाप्यम्, तदारभ्य वृद्धिर्न वर्धते। तथा यो दित्सन्नधमर्णो राजादिनाऽवरुद्धस्तस्यापि दातुमसमर्थस्य द्रव्यं तत आरभ्य न वर्धते। गौमि.

**चक्रकालवृद्धिः।।**

(१) इदानीमापदि स्वयं कृता वृद्धिप्रकारा अभ्यनुज्ञायन्ते – चक्रेति। वृद्धिशब्दः प्रत्येकमभिसंबध्यते। चक्रवृद्धिः – वृद्धिरपि पुनर्वर्धते †यस्मिन् द्रव्यप्रयोगे सा चक्रवृद्धिः। यथाऽऽह नारदः – 'वृद्धेरपि पुनर्वृद्धिश्चक्र-

---

(१) **गौध.** १२।२७; **गृक.** २२०.

(२) **गौध.** १२।२८-३३.

* शेषं मभागतम्।

$ प्रयोगसमाप्तिरित्यर्थः।

† अस्मिन्वाक्ये प्रयुक्तयत्तच्छब्दार्थयोः परस्परसाकाङ्क्षत्वाभावात् 'या यस्मिन्.... तस्मिन् सा' इत्यतिरिक्तयत्तच्छब्दावध्याहार्य वाक्यं पूरणीयम्। एवमुत्तरत्रापि।

वृद्धिरुदाहृता' (नासं. २।८९) इति। कालवृद्धिः – 'अस्मात्कालात्प्राक्केवलं वा प्रकृतवृद्ध्या वा मम दातव्यम्, यदि न ददासि ततस्तस्मादूर्ध्वं त्रिगुणं (च?) चतुर्गुणं वा देयम्' इति समयं कृत्वा यस्मिन्बह्वी वृद्धिर्गृह्यते सा कालवृद्धिः। प्रकृतलब्धमपि वृद्धिग्रहणं क्रियते+स्वयंकृताया एवेयं कल्पना, न पञ्चमाषपरिमिताया इति। सहनिर्देशः एकया जीवनासंभवे द्वाभ्यामपि जीवने न दोष इति। ननु च (इदं) 'कुसीदवृद्धिर्धर्म्या विंशतिः पञ्चमाषिकी मासम्' इत्यत्रैव वक्तव्यम्। तत्रैव पृथगुपदेशादापदर्थत्वं च ज्ञायते। 'नातिसांवत्सरीम्' इत्येतदपि 'व्याख्यानतो विशेषप्रतिपत्तिः‡' इत्यनेन न्यायेन व्याख्यानत एव पञ्चमाषपरिमितवृद्धिविषयमिति ज्ञातुं शक्यत इति। अत्रोच्यते – कुसीदस्य स्वयंकरणपक्षे आपद्यनापदि च (चक्रादिवृद्धिं गृह्णीयात्), अस्वयंकृतपक्षे चानाप्रदि (? तु आपद्यनापदि च) पञ्चमाषपरिमितामेव गृह्णीयात्, नास्वयंकृतपक्ष आपदि चक्रादिवृद्धिमपि, अनेनाभिप्रायेणात्रोपदेश इति। 'नातिसांवत्सरीम्' इत्यस्यापि विस्पष्टीकरणार्थस्तत्रोपदेश इति। मभा.

(२) यावता कालेन यावती वृद्धिस्तामपि मूलीकृत्य तावतो मूलस्य पुनर्वृद्धिश्चक्रवृद्धिः। * गौमि.

**कारिताकायिकाशिखाधिभोगाश्च।।**

(१) कारिता शास्त्रानपेक्षया यस्मिन्नात्मनैव क्रियते प्रतिसंवत्सरं निष्कस्य तत्पादमर्धं वा देयमित्येवमादिः सा कारिता वृद्धिः। कायिका अभ्युपगताया वृद्धेरधिकं दिवसे दिवसे मासि मासि संवत्सरे संवत्सरे वा यस्मिन् गृह्यते सा कायिका। तथा च नारदः – 'कायाविरोधिनी शश्वत् पणपादादिकाधिका (? दि कायिका)' (नासं. २।८८) इति। शिखा धान्यस्य, यथा चतुर्णां प्रस्थानां पञ्चम इत्यादि। अधिभोगः वृद्ध्यर्थमहरहर्यस्मिन् घृतादि गृह्यते साऽधिभोगवृद्धिः। वृद्धिशब्दानुकर्षणार्थश्चकारः। गौरवप्रदर्शनार्थः पृथङ्निर्देशः। मभा.

(२) वृद्धय इति शेषः। प्रयोक्त्रा ग्रहीत्रा च देशकालकार्यावस्थापेक्षया प्रभूता न्यूना वा स्वयमेव कल्पिता वृद्धिः कारिता। कायिका कायकर्मसंशोध्या। यथा बृहस्पतिः – 'कायिका कर्मसंयुक्ता' इति। व्यासस्तु – 'दोह्यबाह्यकर्मयुक्ता कायिका समुदाहृता' इति। शिखावृद्धिं कात्यायन आह – प्रत्यहं गृह्यते या हि शिखावृद्धिस्तु सा स्मृता। शिखेव वर्धते नित्यं शिरश्छेदान्निवर्तते। मूले दत्ते तथैवैषा शिखावृद्धिस्ततः स्मृता।।' इति। उदाहरणम्– तण्डुलप्रस्थस्य प्रत्यहं तण्डुलमुष्टिर्गृह्यत इति। आधिभोगः आहितस्य क्षेत्रस्य भोगः अनुभवः। तत्रानुभव एव वृद्धिः। सा च शतेनापि संवत्सरैर्न निवर्तते, क्षेत्रं चोत्तमर्णस्य न भवति। यदाकदाचिदपि मूलप्रदाने सत्यधमर्णस्य भवति। अधिभोग इत्यन्ये भोगमधिकृत्य वर्तत इत्यधिभोगवृद्धिः। तत्राप्येष एवार्थः। एतासु चक्रवृद्ध्यादिषु वृद्धे(? द्धि)द्वैगुण्यात्परमपि भवत्येव। गौमि.

**कुसीदं पशूपजलोमक्षेत्रशदवाह्येषु नातिपञ्चगुणम्।।**

(१) अधिकृतमपि कुसीदग्रहणं क्रियते अन्यरूपोऽयं प्रयोग इति ज्ञापनार्थम्। पशूपजं घृतादि, तत्क्रीत्वा अमुष्मिन् काले मूल्यं दातव्यम्, तस्मिन्नदीयमानं वर्धत इति यत् परिभाषितमित्यभिप्रायः। वत्सस्य ग्रहणं मा भूदित्युपशब्दप्रयोगः। लोम ऊर्णादि। प्रकृतिग्रहणेन विकाराणामपि ग्रहणं द्रष्टव्यम्। तस्यापि क्रयमूल्यस्यादीयमानस्यैव। क्षेत्रशदः क्षेत्रं यदा परिमितेन धान्येन प्रयुज्यते तस्मिन्काले अदीयमानं वर्धत इति। वाह्यः प्रापणनिमित्तम्। यथा बलिवर्दादिभिः कस्यचिद्धान्यं प्रापयति, अमुष्मिन्कालेऽस्य शुल्कमदीयमानं वर्धत इति। एतेषु यत्कुसीदम् उपरि सवृद्धिकं दातव्यमिति प्रयुक्तमित्यर्थः। तत्पञ्चगुणत्वं नातिवर्तते। पशूपजग्रहणेनैव सिद्धस्य लोम्नः पुनर्ग्रहणं मयूरपत्रकृतानामपि ग्रहणार्थम्। 'पक्षाणां पत्ररोमाणामग्ने ब्रूहि मया श्रुतम्' इति श्रुतिदर्शनात्। 'चिरस्थाने द्वैगुण्यं प्रयोगस्य' इत्यत्रैव वक्तव्यमिति चेत्,

---

+ स्वयंकृतकुसीदे या वृद्धिस्तस्या इत्यर्थः, कुसीदस्य स्वयंकृतास्वयंकृतत्वयोरुक्तत्वात्। इदमत्र बोध्यम् – यत्रैवकारेण विशेषणार्थो निर्धार्यते तत्र समभिव्याहृतविशेषणविरुद्धविशेषणार्थ एव व्यावर्त्यते इति भाषानियमात् यद्यप्यत्र स्वयंकृतात्वनिर्धारणात् अस्वयंकृतात्वमेव व्यावर्तयितुं घटते, न पञ्चमाषपरिमितात्वम्, तथापि पञ्चमाषपरिमिताशब्देनात्र तद्व्याप्या अस्वयंकृता वृद्धिर्लक्ष्यते इति ज्ञेयम्। अस्वयंकृतकुसीदत्वस्य पञ्चमाषपरिमितवृद्धिकत्वव्याप्यत्वमुत्तरेण ग्रन्थेन स्पष्टीकरिष्यत इति।

‡ 'न हि संदेहादलक्षणम्' इति शेषः।

* शेषं मभागतम्।

नैष दोषः, एषां चक्रवृद्धिप्रयोगाभावज्ञापनार्थं इहोपदेश इति। पञ्चगुणमित्यनेन सिद्धे नातिग्रहणं प्रयोगान्तरे अतिक्रमणसूचनार्थम्। मभा.

(२) क्षेत्रशदः क्षेत्रभोगः। ... एतेषु पशूपजादिषु प्रयुक्तेषु तत्कुसीदं यावत्पञ्चगुणं वर्धते, पञ्चगुणतां नात्येति। अपर आह – पशूपजादिषु मूल(? ल्य)त्वेन कल्पितस्य द्रव्यस्य तदानीमप्रदाने यावत्पञ्चगुणं वर्धते, धर्म्यया च वृद्ध्या पञ्चगुणतां नात्येति। * गौमि.

प्रशस्तानि प्रतिग्रहापादानानि, अयाचितप्रति-
ग्राह्याः पदार्थाः, अत्यन्तापदि
शूद्रादपि प्रतिग्रहः

**§[१]प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत।।**

**[२]प्रतिगृह्णीयाच्च।।**

(१) एषां धनम्। एतानध्यापयेद्याजयेच्चेत्येवमर्थश्चकारः। मभा.

(२) प्रतिग्रहोऽप्येषामेव सकाशात्, नान्येषामिति। † गौमि.

**[३]एधोदकयवसमूलफलमध्वभयाभ्युद्यतशय्यासनावसथयानपयोदधिधानाशफरीप्रियङ्गुस्रङ्मार्गशाकान्यप्रणोद्यानि सर्वेषाम्।।**

(१) एवमपि – एधोदकेति। एधः काष्ठम्। उदकं कुम्भाद्यवस्थितमपि। यवसं तृणानि। मूलफले प्रसिद्धे। मधु माक्षिकम्। अभयं परित्राणम्। अभ्युद्यतशय्यासनानि प्रसिद्धानि। आवसथः प्रतिश्रयादिः। यानादीनि प्रसिद्धानि। शफरी मत्स्यविशेषः। प्रियङ्गुः धान्यविशेषः। स्रक् ग्रथितानि कुसुमानि। मार्गं मृगमांसम्। शाकं प्रसिद्धम्। अप्रणोद्यानि अप्रत्याख्येयानि अयाचितानि, अप्रणोद्यग्रहणात्। अस्मिन् सूत्रे अभ्युद्यतशब्देन प्रतिग्रहीतृसकाशं यदानीयते तदुच्यते। तत्र जातिविशेषो नास्ति। तथाऽऽह मनुः – 'उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम्। भोज्यां प्रजापतिर्मेने अपि दुष्कृतकर्मणः।।' (मस्मृ. ४।२४८) इति। अस्यापवादः – 'श्रद्दधानस्य भोक्तव्यं चोरस्यापि विशेषतः। न त्वेव बहुयाज्यस्य यश्चोपनयते बहून्।।' इति। तथा चापरम् – 'चिकित्सकस्य मृगयोः शल्यहर्तुश्च पाशिनः। षण्डस्य कुलटायाश्च उद्यताऽपि न गृह्यते।।' (मस्मृ. ४।२१२) इति। तत्रापि भोज्यद्रव्यमेव द्रष्टव्यम्, 'भोज्यां प्रजापतिर्मेने' इति लिङ्गात्। एवं चाभ्युद्यतमपि भोज्यं न प्रतिग्राह्यम्। अप्रणोद्यग्रहणात् प्रणोदने दोषः। तथा च वसिष्ठः – 'नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च। न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते।।' इति। तत्रापि भोज्यद्रव्यमेव प्रतिगृह्णीयात् अप्रशस्तेभ्यो द्विजातिभ्यः, पृथग्ग्रहणात्। सर्वग्रहणात् शूद्रादपि। सर्वेभ्य इति वक्तव्ये सर्वेषामित्युपादानमात्मसंबन्धिज्ञापनार्थम्। एवं च परकीयं मुषित्वा यो ददाति तस्याग्रहणे न दोषः। मभा.

(२) अभ्युद्यतम् अभिमुखं दातुमानीतमेधादिभ्योऽन्यदपि। पयोदधिधानानि तु अनभ्युद्यतान्यपि दातुर्गृहादिवर्तीनि। अयाचितदत्तानि न प्रत्याख्येयानि। आवसथं गृहम्। मार्गं मृगमांसम्। * गृक. २४०-२४१

(३) मूलम् आर्द्रकादि। फलम् आम्रादि। अभ्युद्यतम् अयाचितेनापि दात्रा स्वयमानीतम् 'इदं गृहाण' इति। शय्या कटादि। आसनं पीठादि। यानं शकटादि। धानाः भृष्टा यवाः। मार्गं मृगमांसम्, पन्था वा मार्गः। शाकं वास्तुकादि। एतान्येधादीन्यप्रणोद्यानि सर्वतः प्रतिग्राह्याणि याचित्वाऽपि। $ गौमि.

---

* शेषं मभागतम्।

§ व्याख्यानमस्याऽऽह्निकभागे भोजनप्रकरणे द्रष्टव्यम्। उत्तरसूत्रसंगत्यर्थमिदमत्र गृहीतम्।

† मुक्ता. गौमिगतम्।

(१) **गौध.** १७।१; **मिता.** १।१६० (तस्मात्प्रशस्तानां स्वकर्मणा शुद्धजातीनां ब्राह्मणो भुञ्जीत।।); **मुक्ता.** ५७; **आभू.** २९७ (तस्मात्प्रशस्तानां स्वकर्मविशुद्धजातीनां ब्राह्मणानाम्।।).

(२) **गौध.** १७।२; **मिता.** १।१६०; **मुक्ता.** ५७; **आभू.** २९७.

(३) **गौध.** १७।३ शफरी (शफरि); **गृक.** २४० (यवस०) शफरी (सर्षप) (स्रङ्०) सर्वेषाम् (सर्वेभ्यः); **स्मृच.** २।४६३; **गृर.** ४६२ (यवस०) धानाशफरी.... सर्वेषाम् (धान्यसर्षपप्रियङ्गुमार्गशाकानि अप्रणोद्यानि सर्वेभ्यः); **निप्र.** २।२९७ (एधोदकमूलफलशय्यासनावसथयानपयोदधिधानाप्रियङ्गुशाकान्यप्रणोद्यानि सर्वेभ्यः); **मुक्ता.** ५७; **बाल.** १।२१६ पृ. ४७० मयाभ्यु (स्रपाण्यु).

* गृर. गृकवत्।

$ शेषं मभागतम्। मुक्ता. गौमिगतम्।

(४) शफर्यः सूक्ष्ममत्स्याः। # स्मृच. २।४६३

(५) सर्वेभ्य इति निन्दितेभ्योऽपि दातृभ्यः। केवलमयाचितप्रतिग्रहे येषां कुसूलादीनां प्रतिप्रसवः येषा( ? तेषा)-मयाचितप्रतिग्रहे ( ? हः)। न चैतदेवमपि वचनमयाचित-प्रतिग्रहविषयं किन्त्वेष्यते ( ? किं नेष्यते), अत्राभ्युदित-पदेनायाचितस्य द्रव्यमात्रस्य पृथगुपादानात् अयाचितप्रतिग्रहे निषिद्धकृष्णाजिनादिव्यतिरिक्तद्रव्यमात्रस्याप्रत्याख्येयत्वेन द्रव्यविशेषानर्थक्यात्। तेन सामान्यप्रार्थनया दाता चेदेधोद-कादिद्रव्यं दित्सति तदा तन्न प्रत्याख्येयमित्येवं युज्यते। एवमुत्तरत्रापि। निप्र. २।२९७-२९८

(६) यवसं हरिततृणम्। शफरी मत्स्यविशेषः। इदं च मत्स्यमात्रोपलक्षणम्, मूलवचनात् (यास्मृ. १।२१४)। प्रियङ्गुः कङ्गुः। # बाल. १।२१६ पृ. ४७०

**[1]पितृदेवगुरुभृत्यभरणे चान्यत्।।**

(१) भरणवचनमावश्यककर्मार्थम्। पितृभरणमेकोद्दिष्टादि अविच्छेदेन श्राद्धकरणम्। देवभरणं सायंप्रात-रग्निहोत्रहोमादि। गुरवः पित्रादयः। भृत्याः पुत्रदासादयः। एतेषां भरणं भक्ताच्छादनादीनां दानम्। एतेषु निमित्तेष्वन्य-दप्यप्रणोद्यम्। चशब्दादेधोदकादि च। भरणमित्युक्तत्वात् न स्वयं ततो गृहीत्वा पुष्टो भवेत्। केचिच्चकार-मातिथ्यार्थमाहुः। तथाऽऽह वसिष्ठः – 'गुर्वर्थे दारमुज्जि-हीर्षन्नर्चिष्यन् देवतातिथीन्। सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः।।' इति। आपदि तु 'याजनाध्यापनप्रतिग्रहाः सर्वेषाम्' इत्यनेन याचित्वा प्रतिग्रहणमुक्तम्, इह तु लभ्यमानस्याप्रणोदः। एवं चाऽऽपद्ययाचितालाभ एव याचित्वा प्रतिग्रहणमिति प्रदर्शितम्। आपद्विषयत्वादनापदि न ग्राह्यमिति द्रष्टव्यम्। * मभा.

(२) श्राद्धाद्यर्थमन्यदपि दत्तमप्रत्याख्येयमित्यर्थः। + गृक. २४१

# शेषं मभागतम्।

* गौमि., मुक्ता., बाल. मभागतम्।

+ गृर. गृकवत्।

(१) **गौध.** १७।४; **गृक.** २४०; **गौमि.** णे चान्यत् (णेऽप्यन्यत्); **गृर.** ४६२ (भृत्य०); **निप्र.** २।२९७ : २९८ (गुरु०); **मुक्ता.** ५७ गौमिवत्; **बाल.** १।२१६ पृ. ४७० (गुरु०).

(३) पितृदेवभृत्यभरणार्थं याचितमयाचितं वा लब्ध्वा न प्रत्याख्यानं कुर्यादित्यर्थः। केवलम् – 'न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचित्। यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते।।' (मस्मृ. ११।२४) इति मनुवचनान्न यज्ञार्थं शूद्रात्प्रार्थनम्। अयाचितं यज्ञार्थं शूद्रादपि ग्राह्यम्, 'पितृदेव-भृत्यभरणे चान्यत्' इति देवार्थस्य प्रत्याख्याननिषेधात्। केवलम् – 'यज्ञार्थं लब्धमददन् ( ? दत्) भासः काकोऽपि वा भवेत्।' (यास्मृ. १।१२७) इति याज्ञवल्क्यवचनात् तस्यान्यत्र विनियोगो न कार्यः। निप्र. १।२९८

**[1]वृत्तिश्चेन्नान्तरेण शूद्रात्।।**

अप्रणोद्यमिति वर्तते। न तु पूर्वेण वृत्तिश्चेदिति। यदि जीवनं शूद्रप्रतिग्रहणमन्तरेण न निर्वर्तेत तत्र शूद्रात् प्रतिगृह्णीयात्, न तु याजनभोजनप्रवचनानि कुर्यात्। तथाऽऽह मनुः – 'नाद्याच्छूद्रस्य पक्वान्नं विद्वानाशौचिनोऽपि वा। आममेवाऽऽददीतास्मादवृत्तावेकरात्रिकम्।।' (मस्मृ. ४।२२३) इत्यादि। तथा च वसिष्ठः – 'शूद्रान्नेनोदरस्थेन योऽधिगच्छति मैथुनम्। यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्लं प्रवर्तते।।' इति। याजने तु वक्ष्यति – 'शूद्रयाजकं शूद्रार्थयाजकम्' (गौध. २०।१) इत्यादि। तथाऽध्यापने तु 'शूद्रशिष्यो गुरुश्चैव' इत्यादि। * मभा.

## वृद्धगौतमः

सफलब्राह्मणसत्कारतिरस्कारयोः
सविस्तरवर्णनेन ब्राह्मण-
प्रशंसा

**[2]ब्राह्मणानां परीवादं यः करोति नराधमः।**
**सहसैव शुनां योनिं स गच्छेद्ब्रह्मदूषकः।।**
**स्वल्पपापेन निन्दित्वा परीवादात्खरो भवेत्।**
**परिभाय कृमिर्भवति कीटो भवति मस्करी।।**
**दुर्वृत्ता वा सुवृत्ता वा प्राकृता वा सुसंस्कृताः।**
**ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः।।**

* गौमि., मुक्ता., बाल. मभागतम्।

(१) **गौध.** १७।५; **गृक.** २४०; **गृर.** ४६२; **मुक्ता.** ५७; **बाल.** १।२१६ पृ. ४७०.

(२) **वृगौसं.** ७७५-७७६.

क्षत्रियं चैव स पञ्च (? सर्पं च) ब्राह्मणं च बहुश्रुतम्।
नावमन्येत मेधावी कृशानपि कदाचन।।
इह तं चापि पुरुषं निर्दहेदवमानितम्(? तः)।
तस्मादेतं प्रयत्नेन नावमन्येत बुद्धिमान्।।
यथा सर्वास्ववस्थासु पावको दैवतं महत्।
तथा सर्वास्ववस्थासु ब्राह्मणो दैवतं महत्।।
व्यङ्गान् काणांश्च कुब्जांश्च वामनान् गास्तथैव च।
स निर्वदेदयुक्तं च मिश्रिता वेदपारगैः।।
मन्युं नोत्पादयेत्तेषां न चानिष्टं समाचरेत्।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः।।
मन्युना घ्नन्ति ते शत्रून् वज्रेणेन्द्र इवासुरान्।
ब्राह्मणो हि महद्दैवं कथितं वेदपारगैः।।
द्विजाश्च सर्वभूतानां धर्मकोशस्य गुप्तये।
किं पुनस्ते च कौन्तेय सर्वे नित्यमुपासते।।
यस्याऽऽस्येन सदाऽश्नन्ति हव्यानि विविधानि च।
तरामस्तान् द्विजान् वै किं भूतमधिकं ततः।।
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते।।
भुक्तेषु तेषु स्ववशे तस्य धर्मं ददाति च।
आनृशंस्याद्ब्राह्मणस्य भुञ्जतेऽपीतरे जनाः।।
तस्मात्ते नावमन्तव्या मद्भक्ताश्च द्विजाः सदा।
आरण्यकोपनिषदि ये तु पश्यन्ति मां द्विजाः।।
कलावस्थान् द्विजान् सर्वान् प्रयत्नेन प्रपूजयेत्।
स्वगृहे वा प्रवासे वा दिवा रात्रौ तथैव च।।
वृद्धाश्च ब्राह्मणाः पूज्या मद्भक्ता ये च पाण्डव।
नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः।।
नास्ति विप्रात्परो बन्धुर्नास्ति विप्रात्परो निधिः।
नास्ति विप्रात्परं तीर्थं न पुण्यं ब्राह्मणात्परम्।
नास्ति विप्रात्परो धर्मो नास्ति विप्रात्परा गतिः।।

श्रीभगवानुवाच –

[१]यदि भारसहस्रं तु गुग्गुल्या(? ल्वा)दि प्रधूपयेत्।
करोषि(? ति) च नमस्कारमुपहारं च कारयेत्।।
पूजयेत्स्तुतिभिर्मां च ऋग्यजुःसामतस्तथा।
न (चेत्) तुष्यन्ति ते विप्रा नाहं तुष्यामि भारत।।
ब्राह्मणे पूजिते नित्यं पूजितोऽस्मि न संशयः।
आ(? अ)तुष्टे चाहमाकृष्यो(? ष्टो)भवामि भरतर्षभ।।
परमाधिगतिस्तेषां पूजयन्ति च मां हि ते।
यदहं द्विजरूपेण वसामि वसुधातले।।
यस्तान् पूजयति प्राज्ञो मद्गतेनान्तरात्मना।
तमहं स्वेन रूपेण पश्यामि नरपुंगव।।
काणाः कुब्जा वामनाश्च दरिद्रा व्याधितास्तथा।
नावमान्या द्विजाः प्राज्ञैर्ममरूपा हि ते द्विजाः।।
ये तेऽपि सागरान्तायां पृथिव्यां द्विजसत्तमाः।
ममरूपेषु तेष्वेवमर्चितेष्वर्चितो भवान् (? तोऽभवम्)।।
बहवस्तु न जानन्ति नरा ज्ञानबहिष्कृताः।
यथाऽहं द्विजरूपेण वसामि वसुधातले।।
अवमन्यन्ति ये विप्रान्विकर्माऽऽपादयन्ति च।
प्रेषयन्ते च सततं सुश्रूषां(?शुश्रूषां)कारयन्ति च।।
भूतांस्तान् करपत्रेण यमदूता महाबलाः।
निष्कृन्तन्ति यथा काष्ठं सूत्रमार्गेण शिल्पिनः।।
आक्रोशपरिवादाभ्यां ये रमन्ते द्विजादिषु।
तान् †दूता यमलोकस्थान् निपात्य धरणीतले।।
आक्रुश्योरसि पादेन श्रद्धा(‡?अद्धा)संरक्तलोचनाः।
अग्निवर्णैस्तु सदृशैर्यमो हिंसनमाचरेत्।।
ये च विप्रा निरीक्षन्ते पापाः पापेन चक्षुषा।
अब्रह्मण्यश्रुतेर्बाह्या नित्यं ब्रह्मद्विषो नराः।।

(१) वृगौसं. ७७८-७७९.

† प्रथमाबहुवचनान्तदूतपदस्यानन्वितत्वात् अग्निवर्णादितृतीयान्तपदानुरोधाच्च दूतपदेन लोचनपदेन च तृतीयान्तेन भाव्यम्। तृतीया प्रयोज्यकर्तरि। आचरेदिति आक्रुश्येति च अन्तर्भावितण्यर्थं ग्राह्यम्। अग्निवर्णैरिति पृथगेव दूतविशेषणम्, लाघवात्। सादृश्यं तु प्रत्यासत्त्या यमेन ग्राह्यम्।

‡ अद्धा इति याथार्थ्यपरत्वे व्यस्तं पदम्, अतिशयपरत्वे संरक्तपदेन समस्तं ग्राह्यम्।

तेषां घोरमहाकायं (? या) वज्रतुल्या महाबलाः।
उद्धरन्ति मुहूर्तेन खगाश्चक्षुर्यमाज्ञया।।
यः प्रहारं द्विजेन्द्राय दद्यात्कुर्याच्च शोणितम्।
अस्थिभागं(? भङ्गं) च यः कुर्यात् प्राणैर्वा विप्र-
योजयेत्।।
सोऽनुपूर्वेण* यातीमान्नरकानेकविंशतिम्।
शूलमारोपितो गत्वा ज्वलनेनापि दह्यते।।
बहुवर्षसहस्राणि पच्यमानस्त्ववाक्शिराः।
नावमुच्येत दुर्मेधा न तस्य क्षीयते गतिः
(# ? मतिः)।।
ब्राह्मणानविचार्यैव जयन्वै धर्मकाङ्क्षया।
शतवर्षसहस्राणि तामिस्रोपरि पच्यते।।
उत्पाद्य शोणितं गात्रात् संरम्भा इति पू(? म्भाह-
तिपू)र्वकम्।
स पर्यायेण यातीमान्नरकानेकविंशतिम्।।
तस्मान्नाकुशलं ब्रूयान्न शुष्कां गिरमीरयेत्।
तच्छ्रु(? न श्रु)त्वा परुषां वाणीं चैवैतानप्यति-
क्रमेत्।।
ये विप्रं स्निग्धया वाचा पूजयन्ति नरोत्तमाः।
तच्छ्रुत्वा वै स्तुतश्चैव भवामि च युधिष्ठिर।।
संजयन्ति च ये विप्रान् क्रोधयन्ति च भारत।
आकृष्टस्तर्जितश्चाहं तैर्भवामि न संशयः।।
यश्चन्दनैश्चागुरुधूपदीपै-
रभ्यर्च्य यत्काष्ठमधूममर्च्यात्(?)।
तेनार्चितो नैव भवामि सद्यो
विप्रार्चनादर्चितोऽहं भवामि।।
विप्रप्रसादाद्धरणीधरोऽहं
विप्रप्रसादादसुराञ्जयामि।
विप्रप्रसादाच्च सदक्षिणोऽहं
विप्रप्रसादादजितोऽहमस्मि।।

* भावप्रधानोऽयं शब्दः।

# दीर्घकालतीव्रदुःखाघातेनापि मतिः संवेदना न नश्यति, मूर्च्छा नाऽऽगच्छति इत्यभिप्रायेणेयं शुद्धिः कल्पिता।

प्रवासापदि शूद्रतोऽकृतान्नग्रहणानुमतिः, प्रति-
ग्रहाधिकारी, यजनरक्षणवार्ताशुश्रूषोद्देशेन
वर्णसृष्टिः, ब्राह्मणस्य राजा-
श्रयेण जीवने शूद्रत्व-
प्राप्तिः

[1]दूराध्वगमनात् खिन्नो द्विजालाभे तु शूद्रतः।
अकृतान्नं च यत्किंचिद्गृह्णीयादात्मवृत्तये।।
[2]अनग्निरनधीयानः प्रतिग्रहरुचिस्तु यः।
यत्र कुत्र च भुञ्जानस्तं विद्यात्पङ्क्तिदूषकम्।।
[3]यजनार्थं द्विजाः सृष्टास्तारका भुवि दैवताः।
क्षत्रिया रक्षणार्थं तु वैश्या वार्तानिमित्ततः।
शुश्रूषार्थं त्रयाणां तु शूद्राः सृष्टाः स्वयंभुवा।।
[4]यस्तु राजाश्रयेणैव जीवेद्द्वादशवार्षिकम्।
स शूद्रत्वं व्रजेद्विप्रो वेदानां पारगो यदि।।

## हारीतः

देववेदाद्यधिष्ठितत्वादिना ब्राह्मणप्रशंसा,
याजनादय ऋतामृतादयश्च
ब्राह्मणवृत्तयः

[5]देवा लोकास्तथा वेदा गावो यज्ञास्तथैव च।
सर्वस्थानेषु भूयिष्ठं ब्राह्मणेषु व्यवस्थिताः।।
[6]पूजितैः पूजिता ह्येते द्विष्टैर्द्विष्टा भवन्त्युत।
निन्दितैर्निन्दिता ह्येते तस्माद्विप्रोऽधिदैवतम्।।
[7]समीपस्थो दहत्यग्निस्तेजसैवेन्द्रियं तनुम्।
मन्युना तद्दहेद्विप्रः कुलमायुर्गतिं यशः।।
गतिः स्वर्गादिगतिः। गृर. ५७४
[8]आसन्नः प्रदहत्यग्निर्दूरात्तु दहति द्विजः।
तस्मात्तं पूजयेन्न्यायात्स हि तीव्रतरोऽनलात्।।

(१) वृगौसं. ८२५.
(२) वृगौसं. ८२६.
(३) वृगौसं. ८३३.
(४) वृगौसं. ८४५.
(५) गृक. ३९५; गृर. ५७४.
(६) गृक. ३९५; गृर. ५७४ द्विष्टैर्द्विष्टा (दुष्टैर्दुष्टा).
(७) गृक. ३९५ कुलमायुर्ग (कुशलमाप्रकृ); गृर. ५७४ तद्द (च द).
(८) गृक. ३९५ सन्नः (सन्नं) रात्तु (राच्च); गृर. ५७५.

पूजयेत् प्रणामादिना। † गृक. ३९६

**[१]छिन्नं रोहति शस्त्रेण दग्धं रोहति वह्निना।**
**विप्रमन्युप्रदग्धस्य रोहणं नैव विद्यते।।**

**[२]ब्राह्मणान्भोजयेन्नित्यं ब्राह्मणानर्चयेत्सदा।**
**ब्राह्मणानां प्रसादेन सर्वतः शान्तिमाप्नुयात्।।**

‡ अर्चनं सुवर्णादिना। गृर. ५७५

**[३]यथाऽर्णवे नौर्महती प्रयुक्ता**
**संतारयत्याशु जलाच्च दुर्गात्।**
**हृष्टा द्विजास्तद्वदिह क्षणेन**
**संतारयेयुर्महतोऽपि दुर्गात्।।**

**[४]सर्वात्मना तु देवा वै ब्राह्मणेषु व्यवस्थिताः।**
**अग्निवच्च द्विजं प्राहुस्तस्माद्विप्रोऽधिदैवतम्।**
**यथाऽग्नौ संस्थिता देवास्तद्वद्विप्रेषु संस्थिताः।।**

**[५]अध्यापयेदधीयीत याजयेत यजेत च।**
**प्रतिगृह्णीत दद्याच्च षट्कर्मा ब्राह्मणः स्मृतः।।**

**[६]याजनाध्यापनादिभ्यस्तथा दानप्रतिग्रहैः।**
**विराजः स्वर्गमायान्ति विमानैः संयुता द्विजाः।।**

विराजः शोभमानाः। याजनाध्यय(? ध्याप)नादिभ्यः इति हेतौ पञ्चमी। अत्र आदिशब्देन यजनाध्ययनयोर्ग्रहणम्। # गृक. १६७

**[७]ऋतामृतसत्योपहितसंपन्नापवृत्तयो भवन्ति।।**

(१) ऋतम् उञ्छशीलं भैक्षम्। अमृतम् अयाचितोपपन्नान्नं सद्भ्यः। अध्यापनाच्छिष्योपहितवृत्तिः। अर्थवृत्तिः सन्नवृत्तिः। आपद्वृत्तिः कृषिः। आसां पूर्वाः श्रेयस्यो भवन्ति। अध्यापनात् इति च यथाविहितवृत्त्युपलक्षणम्।

* गृक. १६९-१७०

(२) ऋतम् उञ्छशीलम्। भैक्ष्यम् अमृतम्। अयाचितोपपन्नं सत्यम्। अध्यापनाच्छिष्योपहितम्। संपन्नवृत्तिः सद्भ्यो याचितम्। अपवृत्तिः कृषिः। तासां पूर्वाः पूर्वाः श्रेयस्यो भवन्ति। निप्र. २।२५४

शूद्रयाजनप्रायश्चित्तम्, एकान्नवृत्त्यपेक्षया भैक्षवृत्तिः प्रशस्ता, चिकित्सकादयो भिक्षायां वर्जनीयाः, आपदि शूद्रेभ्योऽप्ययाचितं ग्राह्यम्

**[१]शूद्रयाजको गर्हितं द्रव्यं नागह्रदे प्रक्षिप्य ब्राह्मणानुपेत्य ब्रूयात्त्रायन्तु मां भवन्तो वर्णसाम्यम्।।**

नागह्रदः अक्षोभ्यह्रदः। स्मृच. २।४६२

**[२]चातुर्वर्ण्यं तु वा भैक्ष्यमेकान्नं वा द्विजादिषु।**
**भैक्षमेव प्रशंसन्ति न त्वेकान्नं द्विजातिषु।।**

**[३]स्वकर्मोपार्जितं भैक्ष्यं विधिना त्वनसूयया।**
**वायुतुल्यं प्रशंसन्ति ऋषयो धर्मकोविदाः।।**

स्वकर्मणा यथोक्ताध्ययनादिप्रयोजनेन। विधिना 'यावदर्थममायया' इत्यादिनिरूपितप्रकारेण। वायुतुल्यं शुद्धत्वेन।

$ गृक. २२५

**[४]चिकित्सककृतघ्नानां शल्यकर्तुश्च वार्धुषेः।**
**षण्डस्य कुलटायाश्च उद्यतामपि वर्जयेत्।।**

---

† गृर. गृकवत्।

‡ अस्माद्व्याख्यानादादर्शपुस्तके सदपि पूर्वार्धं भ्रष्टमिति ज्ञायते।

# गृर. गृकगतम्।

(१) **गृक.** ३९६; **गृर.** ५७५ नैव (नेह).

(२) **गृक.** ३९६; **गृर.** ५७५ उत्त.

(३) **गृक.** ३९६; द्वितीयचरणोऽशुद्धिबहुलः; **गृर.** ५७५ यथाऽर्णवे (यथा प्लवे) हृष्टा (दृष्ट्वा) पि दुर्गात् (घसंघात्).

(४) **निक.** १८०.

(५) **गृक.** १६७; **गृर.** ४१४ त च (त वा) त दद्या (याद्दद्या).

(६) **गृक.** १६७; **गृर.** ४१४ यान्ति (याति) संयुता द्विजाः (सहितो द्विजः).

(७) **गृक.** १६९; (ऋतामृतोपहितमध्यापनात्सन्नवृत्त्यापद्वृत्तयो भवन्ति); **गृर.** ४१५ (ऋतामृतोपहतसंपन्नवृत्त्यापत्षड्वृत्तयो भवन्ति); **निप्र.** २।२५४.

* गृर. गृकवत्।

$ गृर. गृकवत्।

(१) **स्मृच.** २।४६२; **आपा.** १११ तं द्रव्यं (तद्द्रव्यं) भवन्तो (भवतां) साम्यम् (सामिछताम्); **निप्र.** २।२५८ (शूद्रयाजने गर्हितधनं न... प्रक्षिप्य ब्राह्मणानुपेत्य ब्रूयादिति) एतावदेव.

(२) **गृक.** २२५; **गृर.** ४५० चातुर्वर्ण्यं तु (चतुर्वर्णेषु) द्विजादि (द्विजाति) पू.

(३) **गृक.** २२५; **गृर.** ४५० धर्म (न्याय).

(४) **स्मृच.** ४६४; **आपा.** ११४ कर्तुश्च (हस्तस्य) षण्ड (षण्ढ).

**[1]ब्राह्मणक्षत्रियविड्भ्योऽयाचितोपपन्नं शूद्रेभ्योऽप्येक आपदि।।**

अयाचिते प्रीतिदाये च जातिमात्रद्विजातिभ्योऽप्यलाभे शूद्रादपि प्रसङ्गोऽस्ति। तदुक्तं हारीतेन – ब्राह्मण.... आपदि इति। एवं च 'नार्त्यामपि यतस्ततः' इति मनुवचनं चाण्डालादिपरम्। अत एव कल्पतरौ 'तस्य स्वधर्म एव श्रेयान् नान्य आदरसेवितः स स्यात्प्रशस्तसमयाचारः, सर्वतः प्रतिगृह्णीयात्' इति शङ्खलिखितवाक्ये 'सर्वतः शूद्रादेः प्रतिगृह्णीयात्, न तु क्षत्रियादिवृत्तिं कुर्यात्' इति व्याख्यातम्। याचितविषये तु द्रव्यविशेषप्रतिग्रहगुणदोषौ वक्ष्यामः। यत्तु "याज्ञवल्क्यः – 'शूद्रेषु दासगोपालकुलमित्रार्धचारिणः। भोज्यान्ना नापितश्चैव यश्चाऽऽत्मानं निवेदयेत्।।' इति। एतद्व्यतिरिक्तशूद्रेभ्योऽयाचितमग्राह्यम्" इति, तन्न, हारीतेनायाचितविषये द्विजातिभ्योऽलाभे शूद्रादपि अयाचितप्रतिग्रहानुज्ञानादस्याविशेषप्रवृत्तस्य याचितविषयत्वौचित्यात्।

निप्र. २।२७८

मण्यादिप्रतिग्रहे प्रायश्चित्तम्, राज्ञः सकाशात् प्रतिग्रहे पतितादितश्च प्रतिग्रहे दोषः

**[2]मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत्। पञ्च मध्यमे दशोत्तमे।।**

**[3]दशसूनासहस्राणि अह्ना राजा करोति वै। तान्येव कुरुते रात्रौ घोरस्तस्य प्रतिग्रहः।।**

(१) यदपि हारीतेन – 'दश..... ग्रहः' इति, तदुच्छास्त्रवर्तिराजप्रतिग्रहविषयम्। $ स्मृच. २।४६०

(२) यद्यपि क्षत्रियनृपस्यापि दण्डादिना दशसूनासहस्रकरणं समानं तथापि तस्य सम्यक्परिपालनात् तद्राज्यवासिधर्माचरणषष्ठांशेन तत्पापक्षयात् तद्दोषाभावात् तत्प्रतिग्रहे न दोषः। यथा गृहस्थस्य पञ्चस्थानसूनावतः पञ्चमहायज्ञानुष्ठाने तद्दोषाभावात् तदन्नभोजनम्, यस्य तु पञ्चमहायज्ञानुष्ठानं नास्ति तदन्नमभोज्यमिति।

निप्र. २।२७६

**[1]अर्धार्धं तु ततोऽमात्याः सेनानीदण्डनायकौ। ततोऽर्धार्धमथार्धार्धमाश्रितेषु च जायते।।**

**[2]पतितदुष्कृतेभ्यः प्रतिगृहीतमस्वर्ग्यमयाज्ञिकम्। न तेन पुण्यार्थानाप्नोति। अतिदेशवादाभ्यामर्थात् स्वयं ब्राह्मणमभिजित्य तामसमन्यस्मै दीयमानं प्रतिषिध्य स्वयं प्रतिगृह्णन् तस्य दुष्कृतमाप्नोति। आनृशंस्यार्थे प्रतिगृह्य तेभ्योऽकृत्वोपयोगानां स्तैन्यमसत्कार्यार्थे निमज्जत्यात्मार्थे निबध्नाति। एतैः प्रतिग्रहोपशयैः प्रतिगृह्णन्निरयाय कल्पते।।**

दुष्कृतेभ्य उपपातकिभ्यः। गृर. ४६०

ब्राह्मणस्य कृषिरापद्वृत्तिः, शकटवृत्तिदूषणम्

**[3]सहसूनं लाङ्गलम्। तद्ब्राह्मणे न विद्यते। आपद्याचरितत्वाद्यदि कुर्याद्यथार्थं कुर्यात्।।**

यथार्थं यावताऽर्थेनाऽऽपन्निस्तीर्यते तावतोऽनतिक्रमेण।

* गृक. १९१

---

$ आपा. स्मृचवत्।

(१) **निप्र.** २।२७८.

(२) **बाल.** २।२८२.

(३) **गृक.** २३६; **स्मृच.** २।४६०; **गृर.** ४५९; **मपा.** २१९ वै (च); **आपा.** ११३; **मर.** १७१; **निप्र.** २।२७६ तान्येव (अन्यच्च); **बाल.** १।१४१ पृ. ४०२.

* गृर. गृकवत्।

(१) **गृक.** २३६; **गृर.** ४५९ मात्याः (मात्यः) ततोऽर्धा (तदर्धा) तेषु च जायते (तोपाश्रितेषु च); **मपा.** २१९ अर्धार्धं (अर्धेन) मथा (तद) तेषु च जायते (तोपाश्रितेषु च); **मर.** १७१ अर्धार्धं (अर्धेन) तेषु च जायते (तोपाश्रितेषु च); **बाल.** १।१४१ पृ. ४०२ मरवत्.

(२) **गृक.** २३८; याज्ञिकम् (यज्ञियम्) अतिदेशवादाभ्यामर्थात् स्वयं (देवादार्थाभ्यनार्था नर्थो) शंस्यार्थे (ण्यार्थे) निमज्ज (मज्ज); **गृर.** ४६०; **निप्र.** २।२५२ याज्ञिकम्। न (यज्ञीयं न च) (अतिदेश.... कल्पते०) : २।२९७ स्वर्ग्यमयाज्ञिकम्। न तेन (स्पर्श्यमयज्ञीयं तेन न) अतिदेशवादाभ्यामर्थात् स्वयं (आदेशवद्यथार्थं) ह्णन् तस्य (हीतस्य) शंस्यार्थे (ण्यार्थे) ह्य तेभ्यो (हीतेभ्यो) गानां (गात्) र्यार्थे (र्यार्थं) ध्नाति। एतैः (ध्नीतेत्याहुः। एते) शयैः (योगाः। यैः).

(३) **गृक.** १९१; **गृर.** ४२९ (कुर्यात्०).

**+ [1]युक्तभरमयोगक्षेमं पञ्चसूनमनो मन्यन्ते। दशसूनं रात्रौ। शतसूनं वर्षासु। तस्मान्नानसा रात्रौ चरेन्न वर्षासु। मासेनानोवृत्तिः पततीति धर्मविदः। अग्निदेवतातिथिगृहयज्ञोपकरणेनानेनो ( ? ना) भवतीत्याहुः।।**

(१) शतमूलम् इक्षुपत्रम्( ?), तद्यज्ञार्थं कुर्यात्( ?)। भरः अत्र उपरि स्थाप्यमानो व्रीह्यादिसमूहः। अयोगक्षेमम् अयोग्यशाकटिकान्वितत्वेन। अनः शकटम्। सयोगक्षेममपि रात्रौ दशमूलम्। एवं शतमूलं वर्षासु। अग्न्युपकरणं समित्पुष्पयवसव्रीह्याद्याहरणेन। अनेनः( ? नाः) निष्पापः। यज्ञा(द्य)र्थे कुर्यात्, न वृत्त्याद्यर्थम्। गृक. २२४

(२) यत्तु हारीतस्मृतौ शकटनिन्दनं तत् सुस्थविषयम्। यथाऽऽह – 'युक्तभार.... त्याहुः'।

+ निप्र. २।२२८

ब्राह्मणस्याविक्रेयविक्रये पातित्यादिदोषाः, विनिमयानुमतिः, यज्ञार्थमविक्रेयविक्रयानुमतिः, न्यूनमानेन द्रव्यसंकरेण च विक्रेतुर्दोषः, हिङ्ग्वाद्यविक्रेयविक्रये प्रायश्चित्तम्, आपदि तृणादिविक्रयगोरक्षणानुमतिः

**[2]न त्वेवा (न ?) विक्रेयविक्रयी स्यात्। एवं त्वाह –**

**[3]सद्यः पतति मांसेन लाक्षया लवणेन च।**
**त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्।।**

+ अस्मदादर्शकल्पतरुपुस्तके वचनमिदं सूनशब्दघटितं मुद्रितम्, व्याख्याने तु सूनशब्दस्थाने सर्वत्र मूलशब्दो मुद्रितः। सकारमकाराक्षरलिप्योरल्पतरविशेषकत्वेन मूलशब्दस्य प्रामादिकत्वसंभवात् सूनशब्दस्यैव युक्तार्थत्वाच्च व्याख्यानपाठोऽत्र कल्पतरुकारीयत्वेन नाऽऽदृतोऽस्माभिः।

+ शेषं गृकवत्।

(१) **गृक.** २२३; णेनानेनो (णमनेन); **निप्र.** २।३२८ मं पञ्चसू (मपञ्चशू) सूनं (शूनं) मन्यन्ते (मन्यते) तस्मान्नानसा (तस्मान्न) मासेनानो (मासेन किलानो) तीति धर्मविदो (ति।धर्मविद्यो) देवता (देवा).

(२) **गृक.** २०७.

(३) **गृक.** २०७; पू. हारीतमनुवसिष्ठशातातपाः; **गृर.** ४३९ मनुहारीतौ; **निप्र.** २।३१३ श्लोकार्धे व्यत्यासेन पठिते, हारीतमनुवसिष्ठशातातपाः.

पतति अतिशयितपापो भवति। न तु तस्य ब्राह्मणकर्तव्यकर्मानधिकारः, तस्य ब्रह्महत्यादिपञ्चकान्यतमसाध्यत्वात्। शूद्रो भवतीत्यपि निन्दातिशयद्योतनाय, ब्राह्मणस्य शूद्रत्वासंभवात्। गृर. ४३९

**[1]इतरेषामपण्यानां विक्रयादिह कामतः।**
**ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति।।**

इतरेषाम् एतद्वाक्योक्तमांसादिचतुष्कातिरिक्तानाम्। नियच्छति प्राप्नोतीत्यर्थः। गृर. ४३९

**[2]नियम( ? मय)स्तु रसादीनां विक्रयो नैव दुष्यति।**
**यज्ञार्थं दक्षिणानां च प्रजापतिवचो यथा।।**

(१) रसादीनां नियमो न दुष्यति। यज्ञार्थं दक्षिणानां विक्रयोऽपि न दुष्यतीत्यर्थः। गृक. २१०

(२) योऽयं नियतविनिमयरूपो विक्रयः स यज्ञार्थं दक्षिणार्थं च कृतो न दुष्यति। गृर. ४४१

(३) यद्यपि 'द्रव्यविनिमयः' इति स्मृतेः क्रयोऽपि विनिमय एव, तथापि लोके साक्षादुपयोगिद्रव्यं गृहीत्वा द्रव्या( ?-व्य)दानं विनिमय उच्यते, कपर्दकताम्रमुद्रादिग्रहणपूर्वकं द्रव्या( ? व्य)दानं विक्रय उच्यते। द्रव्य( ? व्यव)हारद्वैविध्येन पदार्थद्वैविध्यम्। स्मृतावपि 'क्रयश्च परिवृत्तिश्च' इत्येवं निर्देशभेदो दृश्यते। तेन येषां पदार्थानां विक्रये दोषः स विनिमये नास्ति। कपर्दकसंकलनया यदि द्रव्यमेव मूल्यरूपेण गृह्यते तदा क्रय एव। तदा च क्रयदोषः स्यादेव। न च येषामेव द्रव्याणां 'रसा रसैर्निमातव्याः' इत्येवं विनिमयः श्रूयते तेषामेव विनिमयदो( ? ये दो)षाभावः, नान्येषाम्, (अन्येषां) विनिमये दोषः स्यादिति वाच्यम्, तथा सति परिसंख्यायां त्रिदोषापत्तेः। न च विनिमयस्य विक्रयविशेषत्वे दोषप्रसङ्गे प्रतिप्रसवार्थं वचनम्, यत्र प्रतिप्रसववचनं नास्ति तत्र दोष एवेति वाच्यम्, व्यवहार-द्वैविध्येन क्रयत्वसिद्धेः। किं त्वप्राप्तविध्यपेक्षया

(१) **गृर.** ४३९ षामप (षां तु प); **निप्र.** २।३१३ ब्राह्मणः (ब्राह्मणं).

(२) **गृक.** २१०; **स्मृच.** २।४८२ नियम (विनिमय) र्थं दक्षिणानां च (र्थे दक्षिणादीनां); **गृर.** ४४१ नां च (र्थं च); **मर.** १८५; **निप्र.** २। ३१८ नियम (विनिमय) र्थं द (र्थद); **बाल.** १। ११९ पृ. ३७४ गृरवत्.

नियमविधेर्लाघवात् तेषु द्रव्येषु विनिमये द्रव्यविनिमयः (? द्रव्यनियमः), सोमाभावे पूतिकाप्रतिनिधिनियमवदिति। द्रव्यान्तरे यथेष्टद्रव्यैरेव विनिमये न दोष इति। नन्वेवं 'विनिमयस्तु.... यथा।।' इति हारीतेन विनिमयरूपे विक्रये रसादीनां दोषाभावात्*इति चेन्मैवम्, तत्र रसादिविनिमये दोषाभावमनूद्य यज्ञार्थदक्षिणाविक्रये विभागार्थमश्वादेः क्रियमाणे ऋत्विजां न दोष इति कथ्यते, अन्यथा वाक्य-भेदापत्तेः।

निप्र. ३१७-३१८

**[1]यस्तु संभृत्य संभारं दुर्भिक्षं समुदीक्षते।**
**हीनार्घमानदाता वै प्रोक्तो दुर्भिक्षकण्टकः।।**
**[2]हीनसंकरमानैस्तु यश्चैव हरते मलम्।**
**स मलः प्रोच्यते प्राज्ञैः प्रजानां मलहारकः।।**

(१) हीनार्घमानदाता हीनार्घेण मानेन बहुमूल्यमादाय विक्रेतेत्यर्थः। दुर्भिक्षकण्टकः दुर्भिक्षे जनानां कण्टकः शत्रुः। हीनसंकरमानैः हीनेन अल्पेन अधिकं संकरेण अपद्रव्यमिश्रीकरणेन। मानेनेति विशेषणेन मेयद्रव्याल्पत्व-हेतुना। एतैर्यो हरते मलं मलिनं द्रव्यम्, पापहेतुत्वात्।

‡ गृक. २०८

(२) हीनः अर्थः मानं च यस्य द्रव्यस्य तस्य बहुमूल्येन विक्रीणीत(? विक्रेता) इत्यर्थः।

+ निप्र. २।३१७

**[3]हिङ्गुहिङ्गुलसर्जरसमनःशिलाञ्जनक्षीरलवण-गैरिकमणिमौक्तिकप्रवालावर्तनशङ्खशुक्तिवेणुवैणव-मृन्मयविक्रये तथाऽऽरामतडागोदपानपुष्करिणी-पुण्यसुकृतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालभुक् संवत्सरेण पूतो भवति।।**

* आक्षेपस्यानवसितत्वादत्रत्यः कश्चिद्ग्रन्थस्त्रुटित इति निश्चीयते।

‡ गृर. गृकवत्।

+ शेषं गृकवत्।

(१) **गृक.** २०७-२०८; **गृर.** ४३९; **निप्र.** २।३१७ हीनार्घ (हीनार्थ).

(२) **गृक.** २०८; **गृर.** ४३९ मानैस्तु (मानैश्च); **निप्र.** २।३१७ मानैस्तु (मानैश्च) प्राज्ञैः (पापः).

(३) **निप्र.** २।३१७.

**[1]पूर्ववृत्तिष्वजीवञ्छुष्ककाष्ठतृणविक्रयं वा कुर्यात्। गा एव वा रक्षेत्।।**

वृद्धिजीवननिन्दा, औषधविक्रयादीनाम-
सद्वृत्तीनां नरकपूर्वकपापयोनिः
फलम्, क्षत्रियवैश्य-
शूद्राणां वृत्तयः

**[2]ब्रह्मघ्नं वृद्धिजीवं च तुलायां समधारयत्।**
**आतिष्ठद्ब्रह्महा कोट्यां वृद्धिजीवस्त्वकम्पत।।**

बृहद्वृद्ध्यनन्तरं हारीतः – ब्रह्मघ्नमिति।

$ गृक. २१६

**[3]आरोग्यवृत्तिश्चिकित्सितमुपपतिवृषवेश्योपजीवनं वैतस्या वणिक् कैराटी वार्धुषिक्यनृती कितववृत्तिर्वाद-प्रैष्यतार्किकाश्ववृत्तिः राजपौरुष्यं दम्भजीवनं कल्कवृत्तिः परस्वापहरणं स्तेयवृत्तिः। वधबन्धोपजीवनप्रभृतय-श्चैताः किल्बिषवृत्तयो भवन्ति। किल्बिषवृत्तयो निरयानुशिष्टाः पापयोनिषु जायन्ते। तस्मान्नासद्वृत्तिः स्यात्।।**

(१) उपपत्युपजीवनं भार्याजारोपजीवनम्। गवाश्वा-देर्वृषभस्य मूल्येन तत्स्त्रीषूत्सर्जनम्। एषा तस्या नाम वृषवृत्तिः(?)। वणिक् पण्यविक्रयी। किराटी घृततैल-तण्डुलाद्यविक्रेयविक्रयी। कुसीदवृत्त्युपजीवित्वं वार्धुषिक-वृत्तिः। एषाऽनृतवृत्तिः। कितववृत्तिता द्यूतवृत्तित्वम्। विवादवृत्तिः कलहशौण्डतया जीवनम्। प्रैष्यवृत्तिः सेवकः।

$ गृर. गृकवत्।

(१) **अप.** ३।३३८ वृत्तिष्वजी (वृत्तेश्वाजी); **गृक.** २१२; **गृर.** ४४२ काष्ठतृणविक्रयं वा कुर्यात् (काष्ठविक्रयं कुर्वीत).

(२) **गृक.** २१६; **स्मृच.** २।४७२ द्वितीयचरणे (तुलया समतोलयेत्) आति (अति) कोट्यां (कोठ्यां); **गृर.** ४४५ रयत् (रयन्) आति (अति) लघुहारीतः.

(३) **गृक.** २२७ वेश्यो (वैश्यो) वैतस्या (चैतस्या) र्वादप्रैष्यता (र्विवादप्रैष्यवृत्तिस्ता); **गृर.** ४५१ स्वापहर (स्वाहर) जीवनप्रभृत (पत्युजीववृत्त) (किल्बिषवृत्तयो भवन्ति०); **निप्र.** २।३२६-३२७ (अपरे श्ववृत्तिश्चिकित्सितम्। उपपतिवृषवेश्योपजीवनम्। वणिक् किरटकवार्धुषिकी। अनृता कितववृत्तिः। विवादप्रेष्यवृत्तिस्तार्कि-कवृत्तिः। राजपौरुषादिभिर्सी(?)जीवनं बकवृत्तिः परस्वापहरणं स्तेयवृत्तिः। वधबन्धोपजीवनप्रभृतयश्चैताः किल्बिषवृत्तयो भवन्ति। किल्बिषवृत्तयो निरयानुशिष्टाः पापयोनिषु जायन्ते।।).

तार्किकः हेतुवादजीवी छलादिकुशलः सद्विद्योपमर्दनेन यो जीवति। एषा चतुःप्रकाराऽश्ववृत्तिः। राजपौरुष्यं राजभयोपदर्शनेनोत्कोचग्रहणम्। दम्भस्य व्यक्ता कल्कता। छलेन परस्वापहरणं स्तेयवृत्तिः। निरयानुशिष्टाः नरकयातनां लम्भिता इत्यर्थः। * गृक. २२७

(२) आरोग्यवृत्तिः औषधविक्रयवृत्तिः। चिकित्सितं रुक्प्रतिक्रियावृत्तिः। वेश्योपजीवनं मूल्येन स्त्रीसमर्पणम्। वैतस्या नाम्रवृत्तिः। अनृतवृत्तिः कपटवृत्तिः। आश्ववृत्तिः छलादिना परद्रव्योपमर्दनवृत्तिः। दम्भजीवनं कल्कवृत्तिरिति सामानाधिकरण्यम्। दम्भस्य व्यक्ता हि कल्कता। # गृर. ४५१-४५२

**[1]धनुर्वेदव्रतस्नातः क्षत्रियोऽध्ययनयजनदानधर्माऽशिष्टनिग्रहरतोऽभिजितषड्भागवृत्तिर्वेदव्रतैकदेशी। वैश्योऽध्ययनयजनदानधर्मा कृषिपशुपाल्यवणिग्वृत्तिः।।**

अभिजितानां शत्रोर्भूम्यादीनां षष्ठभागग्रहणम्। † गृक. २५३

**[2]शूद्रस्य धर्मो द्विजातिशुश्रूषाऽपवर्जनं कलत्रादिपोषणं कर्षणं पशुपालनं भारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामृदङ्गवादनानि।।**

**[3]कृषिगोरक्षवाणिज्यं शूद्रस्यापि हितं हि तत्।।**

**[4]न शूद्राय वृत्तिं प्राहुः। त्रिवर्णशुश्रूषैवास्य वृत्तिः। दानं धर्म इत्येके।।**

---

* निप्र. गृकगतम्।

\# शेषं गृकवत्।

† गृर., बाल. गृकवत्।

(१) **गृक.** २५२-२५३ वेदव्र (वेदो व्र) निग्रहरतो (निग्रहतो); **गृर.** ४७० धर्माऽशिष्ट (धर्मशिष्टपरिपालनाशिष्ट) वृत्तिर्वेदव्र (वृत्तिव्र) धर्माकृषि (धर्मकृषि); **बाल.** १।११९ पृ. ३६६ (धनुर्वेदव्रतस्नातोऽध्ययनयजनदानधर्मशिष्टपालनाशिष्टनिग्रहानभिजितषड्भागवृत्तिर्वेदव्रतैकदेशी) एतावदेव.

(२) **पमा.** १।३१०-३११.

(३) **सस्मृ.** १५९.

(४) **गृक.** २६६ धर्म इ (धर्ममि); **गृर.** ४७६ षैवास्य वृत्तिः। दानं ध (षा वाऽस्य वृत्तिः। दानध); **मर.** १२ : १९५ य वृत्तिं प्राहुस्त्रि (पद्वृत्तिं प्राह त्रि) (दानं धर्म इत्येके०).

## ब्राह्मणस्य कृषिरापद्वृत्तिः, वृत्तिरूपकृषौ यज्ञीयकृष्यतिदेशः, हालिकवृषभविषयकः समाचारः, राजब्राह्मणयोः कृषिफलविभाजनम्

**[1]आपत्सु च कृषिं प्राहुः। कृषेद्य आयोजनवदायोज्य बालवृद्धकृशार्तादीन् वर्जयेत्।।**

(१) आयोजनवत्, आयोजनमग्निचयने गृह्ये चोक्तं तद्वत्। गृक. १९५

(२) आर्तः पिपासार्तः। आदिशब्देन रोगा(? रुग्णा)-दिग्रहणम्। § गृर. ४३१

(३) आयोजनवत् चयनभूसंस्कारः। कृषावायोजनं यथा समन्त्रकं क्रियते तथेत्यर्थः।

निप्र. २।३११

**[2]अदीर्घेण प्रतोदेन शनैर्वाहयेत्।।**

वाहयेत्, वृषभानिति शेषः।

गृर. ४३१

**[3]यष्टिमुष्टिलोष्टारत्निजानुयोक्त्रैर्द्रावणाक्रोशनप्रभृतिभिर्नाभिनिघ्नीत।।**

(१) अरत्निः प्रसृताङ्गुलिर्हस्तः(?)। द्रावणम् उद्वासनम्। गृक. १९५

(२) अरत्निरिह प्रसृति(? त)कनिष्ठाङ्गुलिहस्तः। द्रावणं त्रासार्थकशाद्युत्था(? त्थाप)नम्। आक्रोशनं म्रियस्वेत्यादिसापेक्षभाषणम्। आदिशब्देन कशाद्वारकतर्जनादिग्रहणम्। गृर. ४३१

---

§ शेषं गृकवत्।

(१) **अप.** ३।४१ पृ. ९३७ कृषेद्य आयोजननवदा (कृषिश्चेदायोवानविदा) वर्जयेत् (वर्जयन्); **गृक.** १९३ वर्जयेत् (वर्जयन्); **गृर.** ४३० कृषेद्य आयोजनवदा (कृषिर्वेदायोजनवदा); **निप्र.** २।३११ (च०) कृषेद्य आ (कृषेरा) योज्य (योज्यं) र्तादीन् (दीन्).

(२) **अप.** ३।४१ पृ. ९३७ अदीर्घेण (अदीर्घारेण); **गृक.** १९३; **गृर.** ४३० र्घेण प्र (र्घवेणप्र); **निप्र.** २।३११ शनैर्वा (शनैः शनैर्वा).

(३) **अप.** ३।४१ पृ. ९३७ क्त्रैर्द्रावणा (क्त्रप्रोषणा) र्नाभिनिघ्नीत (र्नातिहन्यात्); **गृक.** १९३-१९४; **गृर.** ४३० लोष्टा (लोष्ट्रा) निघ्नीत (घ्नितान्).

**[1]न पर्वसु संधिवेलयोर्वाहयेत्।।**

**[2]द्विहलकृते वा परियोगोऽवमृज्य मोक्षणम्।।**

(१) द्विहलकृते पुनःकर्षणाय परियोगः हले संयोजनम्। पर्वादावपि कुर्यादित्यर्थः। अवमृज्य हस्तादिना धूलिकर्दमादीनपनीय। गृक. १९५

(२) परियोगः हलस्य सम्यक् योगः। तेन द्वितीयवाहनं पर्वादावपि कुर्यादित्यर्थः।

§ गृर. ४३१

**[3]मृदुवच्छायायां पानाहारादीन्दद्यात्।।**

(१) मृदुवत् अक्रुध्यन्।

गृक. १९५

(२) मृदुवत् आश्वासयन्निव।

गृर. ४३१

**[4]कृमिकीटकिलीतकदंशमशकमक्षिकानिवृत्तिसृमरशीतवातोष्णवर्षेषूद्धरणकर्णकण्डूयनधूमाग्निनिवातप्रच्छन्नसमुपस्तीर्णादिषु च गोपायेत्।।**

(१) किलीतकः गवादिस्तनादिदेशे यो भवति रक्तपः कीटविशेषः। निवृत्तयः चमराः। सृमराः क्षुद्रमक्षिका गणचारिण्यः। कृमिकीटादिष्वेतेषूपद्रवेषु यथायोगं समुद्धरणादिना गोपायेत्। ‡ गृक. १९५

(२) तथा वाहकानां छायासु करणं जलदानं घासदानं दंशाद्युपद्रवनिवारणं रोगार्तानां चिकित्सनं च हारीतोक्तं कर्तव्यम्। निप्र. २।३११

§ शेषं गृकवत्।

‡ गृर. गृकवत्।

(१) **अप.** ३।४१ पृ. ९३७; **गृक.** १९४ संधि (न संधि); **स्मृच.** २।४५३; **गृर.** ४३० न पर्वसु (पर्वसु न); **निप्र.** २।३११.

(२) **अप.** ३।४१ पृ. ९३७ (विह्वाल्येत चेत् परित्यागो न मृद्य मोक्षणम्); **गृक.** १९४; **गृर.** ४३०; **निप्र.** २।३११ (द्विहलकृते परित्यागेऽवसृज्य मेक्षणम्).

(३) **अप.** ३।४१ पृ. ९३७ मृदुवच्छायायां (वृद्धावस्थायां); **गृक.** १९४; **गृर.** ४३०.

(४) **अप.** ३।४१ पृ. ९३७ किली (कोकिली) मक्षिकानिवृत्तिः .... द्धरणकर्ण (मक्षिकातिवातसमीरशीतार्कात्युष्णातिवर्षेषूद्धरणावरण) च गोपा (गोपा); **गृक.** १९४; **गृर.** ४३० मक्षिका (माक्षिका) ष्णव (ष्णाभिव) माग्निनिवात (वाग्निवात) गोपा (गोप).

**[1]सन्नभग्नविलग्नार्तानौषधयवसलवणस्नेहादिषु यथार्थं पवनलवनमर्दनपुलाकाभिहारेषु बलिहोमादि कुर्यात्।।**

(१) सन्नः अवसन्नः। विलग्नः पङ्कादौ मग्नः। यथार्थम् एतानार्तानौषधयवसादिषु भोजयेदित्यर्थः। पवनं श्रमापनयनम्। अतिहारः खलाद्गृहानयनम्।

गृक. १९५

(२) यथार्थम् एतान् भग्नादीन् औषधयवसादिषु भोजयेत्। पवनः प्लवनम्। पुलाकः यूपाद्यपनयहेतुव्यापारः।

+ गृर. ४३१

(३) धान्यवपनकाले छेदनकाले मर्दनकाले निर्वपणकाले गृहानयनकाले च बलिहोमकरणं च हारीतोक्तम्।

निप्र. २।३११-३१२

**[2]स्नात्वाऽनडुहोऽलंकृत्य ब्राह्मणान्भोजयेत् सौरभेयाणां पुण्यमिति।।**

(१) सौरभेयाणां पुण्यं कल्याणम् अस्त्विति ब्राह्मणान् भोजयेदित्यर्थः। ‡ गृक. १९५

(२) स्नापयित्वाऽनडुहामलंकरणम्।

+ निप्र. २।३१२

**[3]षड्भागं राज्ञे दत्त्वा पञ्चमाद्ब्राह्मणांस्तोषयेत्।।**

षड्भागं राज्ञे दत्त्वेति। तदुक्तं बृहस्पतिना – 'राज्ञे दद्याच्च षड्भागं देवतानां च विंशकम्। त्रिंशद्भागं च विप्राणां कृषिं कृत्वा न दोषभाक्।।' इति।

गृर. ४३१

+ शेषं गृकवत्।

‡ गृर. गृकवत्।

(१) **अप.** ३।४१ पृ. ९३७ र्तानौष (दीनामौष) पवनलवनमर्दनमपुलाकाभि (वपनलवणमर्दनपवनाभि) होमादि (होमादीन्); **गृक.** १९४ पुलाकाभि (पवनाति); **गृर.** ४३० पवनलवन (पवललवण) होमादि (होमादीन्).

(२) **अप.** १।४१ पृ. ९३७ मिति (निमित्तम्); **गृक.** १९४ देवलः; **स्मृच.** २।४५४ स्नात्वा (स्नापयित्वा) (सौरभेयाणां पुण्यमिति०); **गृर.** ४३० सर्वं गृकवत्; **पमा.** १।४२८ स्मृचवत्; **आपा.** १३९ स्मृचवत्.

(३) **अप.** १।४१ पृ. ९३७; **गृक.** १९४ णांस्तो (णान् दत्त्वा तो) देवलः; **गृर.** ४३० णांस्तोषयेत् (णान् भोजयेत्) देवलः.

खले दक्षिणादिदानं हिंसादोषनिवर्तकम्,
हालिकगोसंख्याभेदप्रयुक्तः
फलभेदः, हालिक-
गोविषयकः
समाचारः

[१]**अथाप्यत्रोदाहरन्ति –**

**यूपोऽयं निहितो मध्ये मेधिनामेह कर्षकैः।**
**तस्मादतन्द्रितो दद्यादन्नधान्यार्थदक्षिणाः।।**
[२]**भूमिं भित्त्वौषधीश्छित्त्वा हत्वा कीटपिपीलिकाः।**
**पुनन्ति खलयज्ञेन कर्षका नात्र संशयः।।**

(१) अत एव तस्याकरणे दोषः पराशरेण दर्शितः – 'यो न दद्याद्द्विजातिभ्यो राशिमूलमुपागते। स चोरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत्।।'।

स्मृच. २।४५४

(२) खलयज्ञः यथोक्तरूपेण खले विभज्य दानम्।

निप्र. २।३१२

(३) कर्षकस्यायं खलयज्ञो नित्यकाम्य इति वचनद्वयबलादवसीयते। अकरणे प्रत्यवायात्तस्य नित्यत्वात् (? त्वम्), छेदनादिपापनिवर्तकत्वात्काम्यत्वम्।

मुक्ता. ६३

[१]**अष्टगवं धर्महलं षड्गवं जीवितार्थिनाम्।**
**चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्।।**

(१) तथा बलीवर्दनियमेऽपि स एवाऽऽह – अष्टेति।

अप. ३।४१ पृ. ९३७

(२) तत्र, कृषौ हालिकस्य बलीवर्दसंख्यानियममाह हारीतः – अष्टेति। ¶ तत्रान्तौ(? न्त्यौ) पक्षौ हेयौ, इतरावपि क्रमेण मुख्यानुकल्पौ द्रष्टव्यौ।

§ पमा. १।४२७

(३) कृष्युपयुक्तहले विशेषमाह – अष्टेति। द्विगवं ब्रह्मघातवन्निन्दितमित्यर्थः। इदं च कठिनभूमिविषयत्वेन योज्यम्।

संम. ७९

(४) एकहले वृषसंख्यामाह – अष्टेति।

बाल. १।११९ पृ. ३६९

[२]**बालानां दमनं चैव वाहनं च न शस्यते।**
**वृद्धानां दुर्बलानां च प्रजापतिवचो यथा।।**

नस्तनं नासिकाभेदः।

अप. १।१५४ पृ. २२६

[३]**पुंस्त्वोपघातं नस्यं वा वाहानां न च कारयेत्।**
**वृषं युगे न युञ्जीत जीर्णं व्याधितमेव वा।।**

---

(१) **अप.** १।४१ पृ. ९३७ अथाप्यत्रो (तथाऽप्यु) द्वितीयचरणे (मेथीनामेह कार्षकैः); **गृक.** १९४ नामेह (नामिह) देवलः; **स्मृच.**२।४५४ (अथाप्यत्रोदाहरन्ति०) नामेह (नामिह) दन्नधा (दत्र धा); **गृर.** ४३० देवलः; **पमा.** १।४३३ (अथाप्यत्रोदाहरन्ति०) मेधिनामेह (मेधिर्नाम हि) द्यादन्न (द्यात्तत्र) दक्षिणाः (दक्षिणाम्); **आपा.** १४३ निहितो (विहितो) मेधिनामेह (अर्थिनामिह) दक्षिणाः (दक्षिणाम्) शेषं स्मृचवत्; **मर.** १७९ नामेह (नामिह) शेषं स्मृचवत्, अशुद्धिबहुलो ग्रन्थः; **निप्र.** २।३१२ (अथाप्यत्रोदाहरन्ति०) मेधिनामेह (मेध्यानामिह) दन्नधान्यार्थद (दत्र धान्यं च द).

(२) **अप.** ३।४१ पृ. ९३७ लिकाः (लकान्) कर्षका (कार्षिका); **गृक.** १९४ लिकाः (लिकान्) देवलः; **स्मृच.** २।४५४; **गृर.** ४३० भित्त्वौषधीश्छि (कृष्ट्वोषधिं छि) लिकाः (डिकाम्) खलय (खलु य) देवलः; **पमा.** १।४३३; **आपा.** १४३ अशुद्धिबहुलो ग्रन्थः; **मर.** १७९ नात्र (न); **निप्र.** २।३१२ धीश्छित्त्वा ह (धीर्भित्त्वा भि); **मुक्ता.** ६३ धीश्छित्त्वा हत्वा की (धिं छित्त्वा कृमिकी) चन्द्रिकायाम्.

¶ "तत्राऽऽद्यौ पक्षावक्षमतया हेयौ' इति मु. पुस्तके पाठः" इत्यस्मदादर्शपुस्तके टिप्पणी।

§ आपा. पमावत्।

(१) **अप.** ३।४१ पृ. ९३७; **गृक.** १९५-१९६; **स्मृच.** २।४५३ धर्म (धर्म्य); **गृर.** ४३१ अष्ट (अष्टा); **पमा.** १।४२७ स्मृचवत् गृरवत् च; **मपा.** २२९ जीविता (जीविका) शेषं गृरवत्; **आपा.**१३९; **मर.** १७७ सानां (सादीनां); **निप्र.** २।३०९; **आत.** ३४९ गृरवत्; **मुक्ता.** ६३ पमावत्; **संम.** ७९ स्मृचवत्; **बाल.** १।११९ पृ. ३६९ षड्गवं (बहुदं) द्विगवं (द्वित्रवं).

(२) **अप.** १।१५४ पृ. २२६ प्रथमचरणे (नस्तनं दमनं बाले), ३।४१ पृ. ९३८; **गृक.** १९६ च न (न च); **स्मृच.** २।४५३; **गृर.** ४३१-४३२; **मपा.** २२९ शस्यते (शक्यते); **निप्र.** २।३१० गृकवत्; **मुक्ता.** ६३.

(३) **अप.** १।४१ पृ. ९३८; **गृक.** १९६ नस्यं वा वाहानां न च (नास्ये वा वाहनानां न) वृषं युगे (वृद्धं युग्मे) मेव वा (मेव च) देवलः; **गृर.** ४३२ नस्यं वा वाहानां न च (नस्यां वा वाहनानां न) वृषं युगे (वृद्धं युग्मं) देवलः; **मपा.** २२९ पूर्वार्धे (पुंस्त्वोपघातनं नासौ वाहानां कारयेत्ततः।) वृषं युगे (वृद्धं युग्मे) मेव वा (मेव

**[1]न षण्ढं वाहयेद्गां च न गां भारेण पीडयेत्।।**
गां स्त्रीगवीमिति नव्यवर्धमानः।

आत. ३५२

कर्षणे निषिद्धा भूमयः, हलयोजन-
धान्यवापनलवनादिविधिः,
पापशुद्ध्यर्थं कृषिफल-
विभाजनम्

**[2]देवतायतनोद्याननिपानस्थानगोव्रजान्।**
**श्रीमाञ्श्मशानभूमिं च वृक्षच्छायाक्षितीस्तथा।।**
**भूमिं निखातपूर्वां च रणस्य स्थानमेव च।**
**अन्यामपि हि चावाह्यां न कृषेत्कृषिकृद्बलात्।।**
**नोखेत्संवाहयेद्भूमिं तथाऽश्मशर्करैर्युताम्।**
**वाहयेन्नाप्रदक्षां च न नदीपुलिनं तथा।।**
**यद्यसौ वाहयेल्लोभाद्द्वेषाद्वाऽपि हि मानवः।**
**क्षीयते सोऽचिरात्पापः सपुत्रपशुबान्धवः।**
**नरकं घोरतामिस्त्रं पापीयान्पाति चैनसा।।**
कर्षणे वर्ज्यमहीमाह – देवतेत्यादि।

बाल. १।११९ पृ. ३६९

**योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा।**
**ज्येष्ठानक्षत्रसंयुक्ते पुण्येऽहनि तद्विधीयते।**
**अन्यत्र वा शुभे चैव तच्च कार्यं विपश्चिता।।**
**मातृश्राद्धं द्विजः कुर्याद्यथोक्तविधिना गृही।**
**द्रव्यकारणसंपत्त्यै कुर्वतो धर्मतः कृषीम्।**
**प्रोल्लिख्य मण्डलं पुष्पधूपदीपैः समर्चयेत्।।**
कृषिप्रारम्भे कर्तव्यमाह – योजनमित्यादि।

बाल. १।११९ पृ. ३७०

**भद्राय च तथाऽश्विभ्यां मरुद्भ्यश्च तथा द्विजः।**
**कुर्याद्बलिहृतिं विद्वान् तदगाः (?) कश्यपाय च।।**

भद्रः बलभद्रः। बाल. ११९ पृ. ३७०

**तथा कुमार्यै सीतायै अनुमत्यै तथा बल।**
**भद्रः (?) स्वाहेति मन्त्रेण स त्विच्छन्नात्मनो हितम्।।**
**दधिगन्धाक्षतैः पुष्पैः शमीपुष्पैस्तिलैस्तथा।**
**दद्याद्बलिं वृषाणां च मध्वाज्यप्राशनं तथा।।**
**संबध्य सीरकाग्रेण हेम्ना वा राजतेन वा।**
**प्रलिप्य मधुसर्पिभ्यां कुर्यात्तत्र प्रदक्षिणम्।।**
**अग्न्योक्ष्णोर्मण्डनं कृत्वा कुर्यात्सीरप्रवाहणम्।**
**§ पुण्यलाङ्गू( ? ङ्ग)लकल्याणकल्याणाय नमोऽस्त्विति।।**
**सीतायाः स्थापनं कृत्वा पराशरमृषिं स्मरन्।**
**'सीता संयुजे' इत्याद्यैर्मन्त्रैः सीरं प्रवाहयेत्।।**
**दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुण्यदैः।**
**सीतापुण्यवृषौ भक्त्या रक्तवस्त्रविषाणकैः।।**
**सप्तधान्यानि चाऽऽदाय प्रोक्ष्य पूर्वामुखो हली।**
**तानि दत्त्वा क्षयौ( ?) क्षेत्रे किरन् भूमिं कृषेद्द्विजः।।**
**यथोक्तेन विधानेन लाङ्गूलादिप्रयोजनम्।**
**सीते सौम्ये कुमारि त्वं देवि देवार्चिते प्रिये।**
**शक्तिसूनोर्यथा सिद्धा तथा मे सिद्धिदा भव।।**
**शक्तिसूनोर्विना नाम्ना सीतायाः स्थापनं विना।**
**विप्राक्ष्यु( ? विनाभ्यु)क्षणरक्षाभ्यां सर्वं हरति राक्षसः।।**
**वापने लवने क्षेत्रे खले गन्त्रीप्रवाहने।**
**एष एव विधिर्ज्ञेयो धान्यानां च प्रवेशने।।**
**नखैर्विलेखने यस्याः कुर्युर्दोषं मनीषिणः।**
**तस्याः सीरविदारेण किं तु पापं क्षितेर्भवेत्।।**
**वर्णानां च गृहस्थानां तत्पापं कृषिजीव( ? वि)नाम्।।**
**तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः।**
**+ द्वादशो नवमो वाऽपि सप्तमः पञ्चमोऽपि वा।**
**धान्यभागः प्रदातव्यः सीरिणा क्षेत्रिणो ध्रुवम्।।**
क्षेत्रिणः क्षेत्रस्वामिनः। बाल. १।११९ पृ. ३७१

---

च); **मर.** १७७ पूर्वार्धे (पुंस्त्वोपधानं वासो वा वाहनं कारयेत्ततः।) वृषं युगे (वृद्धं युग्मे) मेव वा (मेव च) देवलः; **निप्र.** २।३१० वाहानां न च (वाहनानां न) वृषं (वृद्धं) मेव वा (मेव च) देवलः; **आत.** ३५२ पूर्वार्धे (पुंस्त्वोपघातनं नैव वाहानां कारयेत्ततः।) वृषं युगे (वृद्धं युग्ये) मेव वा (मेव च).

(१) **आत.** ३५२.

(२) **बाल.** १।११९ पृ. ३६९-३७१.

§ पुण्यादीनि त्रीणि व्यस्तानि संबोधनपदानि स्युः।

+ 'पञ्चमः सप्तमो वाऽपि नवमो द्वादशोऽपि वा' इति न्याय्यं वक्तुं शक्यत्वेऽपि विपरीतोक्तौ युक्तिश्चिन्त्या। अत्र सीरिभागः क्षेत्रिभागादधिक उक्त इत्यप्यवधेयम्।

ब्राह्मणेन राजादिभ्यः
कृषिफलभागा
न देयाः

**ब्राह्मणस्तु कृषिं कुर्वन् वाहयेदिच्छया धराम्।**
**न किंचित्कस्यचिद्दद्यात्स सर्वस्य प्रभुर्यतः।।**
**ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ।**
**नैतयोरन्तरं किंचित्प्रजाधर्माभिरक्षणात्।।**
**तस्मान्न ब्राह्मणो दद्यात्कुर्वाणो धर्मतः कृषिम्।**
**ग्रामेशस्य नृपस्यापि क्रियता( ? कियन्त)मप्यसौ बलिम्।।**

बृहस्पतिः – 'राज्ञे दत्त्वाऽथ षड्भागं देवतानां च विंशकम्' इति। मनुः – 'पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः। धान्यानामष्टमो भागः षष्ठो द्वादश एव वा।।' (मस्मृ. ७।१३०)। एते च भागदाने पक्षा भूवर्णादि-तारतम्येन व्यवस्थिता द्रष्टव्याः।

बाल. १।११९ पृ. ३७१

गोदोहनप्रकारः,
धर्म्या वृद्धिः

[1]**द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत्।**
**चतुर्थे त्रिस्तनं शेषं यथान्यायं यथाबलम्।।**

[2]**पुराणपञ्चविंशत्यां मासे अष्टपणा वृद्धिः। एवं षड्भिर्मासैश्चतुर्भिर्वर्षैः। द्विपर्यागतं संतिष्ठते।।**

पुराणं षोडश पणाः। पणः काकिणीचतुष्टयम्, तथैव प्रसिद्धेः। द्विपर्यागतं द्विगुणीभूतम्। संतिष्ठते व्यवतिष्ठते न पुनर्वर्धत इति यावत्। † गृक. २१९

[3]**एषा वृद्धिर्धर्मवृद्धिः, नाऽनया धर्माच्च्यवते।।**

## लघुहारीतः

वृद्धिविचारः, अनेकलग्नकेभ्यो
द्रव्यग्रहणमपराधः, स्त्रीगव्या
हलवाहनस्य निषेधः

[1]**वर्धितं द्विगुणं यत्स्यात्पुनस्तेनैव वर्धते।**
**या मातुः कुरुते वृद्धिर्न सा वृद्धिर्विधीयते।।**
**मूले तु द्विगुणीभूते रिक्ते सिद्धे तथोदिते।**
**मूलतस्तु भवेद्वृद्धिश्चतुर्भागेन( ? ण) नान्यथा।।**
**स्वादुको वित्तहीनः स्याल्लग्नको वित्तवान्यदि।**
**मूलं तस्य भवेद्देयं न वृद्धिर्दा( ? र्द्धिं दा)तुमर्हति।।**
**द्विगुणं त्रिगुणं वाऽपि यः साधयति लग्नकम्।**
**राजग्राह्यं च तद्द्रव्यं साधको दण्डमर्हति।।**
**हलं वाहयते यस्तु गां चैव पापकृन्नरः।**
**रौरवे द्वादशाब्दानि पितृभिः सह पच्यते।।**

अधिकारिणः स्वामिधनेन
धर्माचरणस्य
निषेधः

[2]**अधिकारी तु यो यस्य स दासस्तस्य कीर्तितः।**
**तस्माद्द्विजोत्तमेनैतत् कार्यं कर्म न कर्हिचित्।।**

इति हारीतवचनं स्वस्थविषयम्। अधिकारः परद्रव्य-रक्षणाय व्ययादिकरणेनोपजीवनम्।

निप्र. २।३३०

[3]**अधिकारी तु यः पूर्तमिष्टं वा कर्म कारयेत्।**
**स गच्छेन्नरकं घोरं यस्यार्थस्तस्य तत्फलम्।।**

(१) यस्यार्थस्तस्य तत्फलम् इति। वृत्त्यर्थदत्तधन-व्यतिरिक्तेन स्वामिधनेन धर्मं न कुर्यादित्यर्थः।

गृक. २२९

(२) जीवनार्थदत्तधनातिरिक्तप्रभुधनेनाधिकारी न धर्म-माचरेदिति तात्पर्यम्। गृर. ४५३

---

† गृर. गुकवत्।

(१) **अप.** १।१५४ पृ. २२६; **निक.** ४६० शेषं (चैव); **निप्र.** २।५६९ पायये (पातये) दुहेत् (हरेत्) शेषं (चैव) बलम् (कुलम्); **गप.** ३९४ पायये (पालये) शेषं य (दुह्याद्य); **मुक्ता.** ४६४ अपरार्के; **विपा.** ४।४१६ तृतीये द्विस्त (द्वितृतीये स्त) त्रिस्तनं शेषं (द्विस्तनं चैव); **बाल.** १।१७० पृ. ४३४ शेषं य (दुह्याद्य).

(२) **गृक.** २१९; **गृर.** ४४७ र्भिर्वर्षै (र्भिर्वत्सरै).

(३) **गृक.** २१९; **गृर.** ४४७ वृद्धिर्ध (ध).

---

(१) **लहास्मृ.** ४५-४८, ५३.

(२) **गृक.** २२९ नैतत् (नैव न) कर्म + (न); **गृर.** ४५३; **निप्र.** २।३२९ द्वितीयचरणे (सदस्यस्तस्य कीर्तितः) उत्तरार्धे (तस्यापि योत्तमेनैतदकार्यं कर्मगर्हितम्।।) हारीतः.

(३) **गृक.** २२९ पूर्त (पूर्व) न्नरकं घोरं (न्नरके घोरे); **गृर.** ४५३.

## वृद्धहारीतः

वर्णद्विजानां परिगणनम्, सवर्णात्सवर्णायां सवर्णोत्पत्तिः, दातृद्रव्यविशेषप्रयुक्तं प्रतिग्रहस्य धर्म्यत्वम-धर्म्यत्वं च

**[1]ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णा यथाक्रमम्।**
**आद्यास्त्रयो द्विजाः प्रोक्तास्तेषां वै मन्त्रसत्क्रियाः।**
**सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।।**
**एतेषां ब्राह्मणाद्याश्च (? श्चाऽऽद्याः) षट्कर्मसु नियोजिताः।**
**त्रिकर्मसु क्षत्रविशावेकस्मिन् शूद्रयोनिजः।।**
**प्रतिग्रहं च वृत्त्यर्थं ब्राह्मणस्तु समाचरेत्।**
**असदेवासतां प्रोक्तं निषिद्धं तद्विवर्जयेत्।।**
**पाषण्डाः पतिताः पापास्तथैव प्रतिलोमजाः।**
**कुलटाश्च विकर्मस्था असतः परिकीर्तिताः।।**
**लवणं तिलकार्पासं चर्म च त्रपुसीसकम्।**
**आयसं मधु मांसं च विषमन्नं घृतं रुजम्।।**
**किल्बिषं गजमुष्ट्रं च सर्षपं जलमेव च।**
**तृणं काष्ठं च कूष्माण्डं शिंशपां च विवर्जयेत्।।**
**महिषीं गर्दभं चैव वाजिनं च तथाऽऽविकम्।**
**दासीमजां यानवृक्षानपञ्चानडुहं तुलाम्।।**
**एवमाद्यमसद्द्रव्यं प्रयत्नेन विवर्जयेत्।।**
**धान्यं वासांसि भूमिं च सुवर्णं रत्नमेव च।**
**पुष्पाणि फलमूलाद्यं सद्द्रव्यं मुनिभिः स्मृतम्।।**
**सर्वत्र प्रतिगृह्णीयाद्भूमिं धान्यं फलादिकम्।**
**भूमिं यस्तु प्रगृह्णाति भूमिं यस्तु प्रयच्छति।**
**तावुभौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ।।**
**धन्यं करोति दातारं प्रग्रहीतारमेव च।**
**धान्यं नृपवरश्रेष्ठ इह लोके परत्र च।**
**तस्माद्धान्यं धरित्रीं च प्रतिगृह्णीत सर्वतः।।**

कुसूलधान्यत्वकुम्भधान्यत्वशिलोञ्छेषु परं परं श्रेयः, ब्राह्मणस्य यायावरकृषिवृत्त्योरनुमतिः कृषौ ब्राह्मकर्मकरणनियमः, वर्ज्या वृत्तयः

**कुसूलधान्य एव स्यात्कुम्भधान्योऽथ वा नृप।**
**शिलोञ्छेनापि वा जीवेच्छ्रेयानेषां परोऽवरः (? ऽवरात्)।।**
**जीवेद्यायावरेणैव विप्रः सर्वत्र सर्वदा।**
**वर्जयित्वैव पाषण्डान्पतितांश्चान्यदैविकान्।**
**कृषिणा वाऽपि जीवेत सतां चानुमतेन वा।।**
**न वाहयेदनडुहं क्षुधितं श्रान्तमेव च।**
**तस्य पुंस्त्वमहित्वैव वाहयेद्द्विजपुंगवः।।**
**कर्मलोपमकुर्वन्वै कृषिं कुर्वीत वै द्विजः।**
**हरेः पूजां यथाकालं कृषिलोपे समाचरेत्।।**
**न ब्राह्म्यं संत्यजेद्विप्रस्तथा यज्ञादिकर्म च।**
**आपद्यपि न कुर्वीत सेवां वाणिज्यमेव च।।**
**असत्प्रतिग्रहं स्तेयं तथा धर्मस्य विक्रयम्।**
**अन्यायोपार्जितं द्रव्यमापद्यपि विवर्जयेत्।।**
**भृतकाध्यापनं चैव न कुर्याद्वेदविक्रयम्।**
**विदित्वैवं च सद्वृत्तिमेवं जीवति धार्मिकः।।**

महाभागवते दानमसत्प्रतिग्रहदोषनिवारकम्, वर्णानां साधारणासाधारणवृत्तयः, आपदि राज्ञो वैश्य-शूद्रवृत्त्यनुमतिः, अविक्रेयाः पदार्थाः

**महाभागवते दत्तं यत्किंचिन्मिश्रितं भवेत्।**
**असत्प्रतिगृहीतं स्ववि(स्वं वि)मलं तन्न संशयः।।**
**प्रीतये वासुदेवस्य यद्दत्तमसतामपि।**
**महाभागवतस्पर्शात्तत्सदित्युच्यते बुधैः।।**
**तापादिपञ्चसंस्कारैस्तथाकारैस्त्रिभिर्युतः।**
**हरेरनन्यशरणो महाभागवतः स्मृतः।।**
**यक्षराक्षसभूतानां तामसानां दिवौकसाम्।**
**तेषां यत्प्रीतये दत्तं तथा य( ? तदाप)द्यपि वर्जयेत्।।**
**बुद्धरुद्रौ तथा वायुर्दुर्गागणपभैरवाः।**
**यमः स्कन्दो नैर्ऋतश्च तामसा देवताः स्मृताः।।**
**एवं विशुद्धिं द्रव्यस्य ज्ञात्वा गृह्णीत सत्तमः।**
**कृषिस्तु सर्ववर्णानां सामान्यो धर्म उच्यते।।**

(१) वृहास्मृ. ७।१४९-१५०, १५६-१८३.

**प्रतिग्रहस्तु विप्राणां राज्ञां क्ष्मापालनं तथा।**
**कुसीदं चैव वाणिज्यं विशामेव प्रकीर्तितम्।**
**सेवावृत्तिस्तु शूद्राणां कृषिर्वा संप्रकीर्तिता।।**
**अशक्तस्तु भवेद्राजा पृथिव्याः परिपालने।**
**जीवेद्वाऽपि विशां वृत्त्या शूद्राणां वा यथासुखम्।**
**कृषिर्भृतिः पाशुपाल्यं सर्वेषां न निषिध्यते।।**
**स्तेयं परस्त्रीहरणं हिंसा कुहककौतुके।**
**स्त्रीमद्यमांसलवणविक्रयं पतितं स्मृतम्।।**

सबन्धकाबन्धककुसीदे वृद्धिविचारः
बन्धकद्वैविध्यं च

[1]**अशीतिभागो वृद्धिः स्यान्मासे मासे सबन्धके।**
**अबन्धके स्याद्द्विगुणं यथातत्कालसांप्रतम्।।**
**आदिस्तु(?आधेयं) द्विविधं प्रोक्तं भोग्यं गोप्यं तथैव च।**
**क्षेत्रारामादिकं भोग्यं गोप्यं द्रव्यमुपस्करम्।।**
**गोप्याधिभोगे नो वृद्धिः सोपस्कारार्थदापिते।**
**नष्टं देयं विनष्टं च द्रव्यं राजकृतादृते।**
**उपस्थितस्य भोक्तव्यमाधिस्ते (? धिः स्ते)–नोऽन्यथा भवेत्।।**
**प्रयोजने सति धनं कुलेऽन्यस्याऽऽधिमाप्नुयात्।**
**तत्कालकृतमूल्ये वा तत्र तिष्ठेदवृद्धिकम्।।**

## बौधायनः

वैश्यवृत्तिः कुसीदं तत्र वृद्धिपरिमाणं च, ऋणार्जित-
स्याल्पवृद्धिधनस्य महत्यै वृद्ध्यै प्रयोक्तुर्निन्दा,
गोरक्षणवाणिज्यकुसीदादिवृत्तयो ब्राह्मणाः
शूद्रसमाः, लुप्ताचारकदर्यनास्तिक-
पापीयःसु धनप्रयोगस्य ब्राह्मण-
क्षत्रिययोरनुज्ञा, वेदाध्ययना-
विरोधिन्येव कृषिः कार्या

[2]**वैश्यः कुसीदमुपजीवेत्।।**

वर्णधर्मप्रसङ्गादिदमुच्यते मा भूत् तत्प्रसारणमिति – वैश्य इति। कुसीदः वृद्ध्यर्थं द्रव्यस्य प्रयोगः।

बौवि.

(१) **बृहस्मृ.** ७।२३५, २४१-२४४.
(२) **बौध.** १।१०।२२; **गृक.** २१५.

[1]**पञ्चविंशतिस्त्वेव पञ्चमाषकी स्यात्।।**

(१) पञ्चविंशतिः कार्षापणानाम्। गृक. २५५

(२) तमेव विस्तारयति – पञ्चविंशतिरिति। माषो नाम कार्षापणस्य विंशतितमो भागः, 'विंशो भागः पणस्य परिकीर्तितः' इति स्मृत्यन्तरदर्शनात्। पञ्चविशतिसंख्यानां कार्षापणानां प्रतिमासं पञ्च माषा वृद्धिरित्यर्थः।

बौवि.

[2]**अथाप्युदाहरन्ति –**
**यः समर्घमृणं गृह्य महार्घं यः प्रयोजयेत्।**
**स वै वार्धुषिको नाम सर्वधर्मेषु गर्हितः।।**
**वृद्धिं च भ्रूणहत्यां च तुलया समतोलयत्।**
**अतिष्ठद्भ्रूणहा कोट्यां वार्धुषिः समकम्पत।।इति।।**

(१) एवं च विशिष्टस्यैव निषेधात् कथंचित्स्वकीयस्व-वृद्ध्यर्थं धनप्रयोगो न निषिध्यत इति गम्यते।

स्मृच. २।४७२

(२) एतदतिक्रमे दोषमाह – अथेति। अर्घः वृद्धिः। समित्ययमुपसर्गो गृह्यते। अनेन संपद्यते य एकस्य हस्ताल्ल-घीयस्या वृद्ध्या द्रव्यं गृहीत्वाऽन्यस्मै भूयस्यै प्रयच्छति स एको वार्धुषिकः। अपरस्तु परेणोपार्जितं द्रव्यं पूर्व-सूत्रोक्तात् परिमाणात् भूयस्यै प्रयच्छति। अयमर्थो द्वितीयेन यच्छब्देन लभ्यते। तत्र निन्दा – सर्वधर्मेषु गर्हित इत्यादि। *यो य इति वीप्सया ब्राह्मणादन्येषां निषेधो द्रष्टव्यः।

बौवि.

* मूलवचने यच्छब्दद्विर्वचनस्य वीप्सार्थकत्वं न संभवति, शब्दान्तरैर्व्यवहितत्वात्। किंच, वीप्सार्थकत्वे पूर्वोक्तं वार्धुषिकद्वैविध्यं न लभ्यते। तथाहि – द्विर्यच्छब्दप्रयोगबलात् 'महार्घं प्रयोजयेत्' इति शब्दयोरावृत्त्या 'यः समर्घमृणं गृह्य महार्घं प्रयोजयेत्' इत्येकम्, 'यः महार्घं प्रयोजयेत्' इति चापरमिति वाक्यद्वयं निष्पद्यते। तत्र द्वितीयवाक्यापेक्षिता प्रयोजनीयधनस्य लब्धिः ऋणातिरिक्तोपायेन परिशिष्यते। एवं वार्धुषिकद्वैविध्यं संपद्यते। तदुक्तम् – 'अयमर्थो

(१) **बौध.** १।१०।२३; **गृक.** २५५ माष (माषि).
(२) **बौध.** १।१०।२४; **गृक.** २१५ (समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति। स गृहीतवर्णे महार्घं यः प्रयच्छति।।?) एतावदेव; **स्मृच.** ४७२ (अथाप्युदाहरन्ति०) समर्घ (समार्घ) यः प्र (संप्र) सर्वधर्म (ब्रह्मवादि) भ्रूणह (ब्रह्मह) ष्ठद्भ्रूणहा (ष्ठद्ब्रह्महा) (इति०); **गृर.** ४४४ (यः समर्घं गृहीत्वार्णं महार्घं संप्रयच्छति। स वै वार्धुषिको ज्ञेयः सर्वधर्मेषु गर्हितः।।) एतावदेव.

**[1]गोरक्षकान् वाणिजकान् तथा कारुकुशीलकान्।**
**प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेत्।।**

गोरक्षकान् विप्रानधीतवेदानपि। एतेन क्षत्रियवैश्यावपि व्याख्यातौ। शूद्रवदाचरेत्। गोरक्षकादिब्राह्मणहिंसायामपि ब्रह्महत्या भवत्येव। साक्षिशपथे तावद्विशेषः – 'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः।।' (मस्मृ. ८।११३) इति। तथा दिव्येऽपि 'अग्निं जलं वा शूद्रस्य' इति। वृद्धिप्रयोगे तु स्वयमेव वक्ष्यति। बौवि.

**कामं तु परिलुप्तकृत्याय कदर्याय नास्तिकाय पापीयसे पूर्वौ दद्याताम्।।**

परिलुप्तकृत्यः विच्छिन्नाचारः। कदर्यः सत्यपि द्रव्ये द्रव्यार्जनस्वभावः। नास्तिकः वेदब्राह्मणनिन्दकः। पापीयान् शूद्रः। एतेभ्यो यथाकामं भूयस्यै वृद्ध्यै पूर्वौ वर्णौ ब्राह्मण-क्षत्रियौ दद्याताम्। यः पुनः स्मृतिषु ब्राह्मणस्य वार्धुष्य-प्रतिषेधः स कृतकृत्यविषयो द्रष्टव्यः। बौवि.

**गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया।**
**कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः।।**

किंच – गोभिरश्वैश्चेति। अत्र संव्यवहारेणेत्यध्याहार्यम्। बौवि.

**[2]वेदः कृषिविनाशाय कृषिर्वेदविनाशिनी।**
**शक्तिमानुभयं कुर्यादशक्तस्तु कृषिं त्यजेत्।।**

अधुना नानाविधानां पुरुषार्थानां परस्परविरोधं दर्शयित्वा हेयोपादेयविवेकायाऽऽह – वेद इति। कृषिग्रहणं वेदतदर्थ-ज्ञानविरोधप्रदर्शनार्थम्। आह च मनुः – 'सर्वान्परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः' (मस्मृ. ४।१७) इति। बौवि.

---

द्वितीयेन यच्छब्देन लभ्यते' इति। यदि तु वीप्सार्थः स्यात् तदा 'यो यः' इति कर्त्रैक्यात् वाक्यभेदासिद्धेर्वार्धुषिकद्वैविध्यं न लभ्येत। तस्मात् वीप्साशब्दोऽयं केवले द्विःप्रयोगे लाक्षणिकः। तथा वीप्सया ब्राह्मणादन्येषां निषेधस्य लाभो दुर्बोधः। 'वैश्यादन्येषां ब्राह्मणादीनाम्' इत्यर्थपरायाः 'ब्राह्मणाद्यन्येषाम्' इति शुद्धेः कल्पनायामपि वीप्सया उक्तार्थलाभो दुर्बोध एव।

(१) **बौध.** १।१०।२५, २६, २९.

(२) **बौध.** १।१०।३१; **गृक.** १९१ पूर्वार्धे (कृषिर्वेदविनाशाय वेदः कृषिविनाशकः); **गृर.** ४२९ पूर्वार्धे (कृषिर्वेदविनाशाय वेदः कृषिविनाशकृत्); **मुक्ता.** ६४ क्तस्तु (क्तश्च).

वर्णगणना, वर्णानां सवर्णा जघन्यवर्णाश्च भार्याः, सवर्णायामनन्तरवर्णायां च जातस्य जनकसवर्णत्वम्

**[1]चत्वारो वर्णा ब्राह्मणक्षत्रियविट्शूद्राः।।**

चतुःसंख्या प्रतिलोमानुलोमानां वर्णसंज्ञानिवृत्त्यर्था। बौवि.

**तेषां वर्णानुपूर्व्येण चतस्रो भार्या ब्राह्मणस्य।।**

वर्णचतुष्टयप्रभवाः इतरा मनुष्ययोनय इति वक्तुं ब्राह्मणा-दीनां भार्या आह – तेषामिति। तेषां मध्ये ब्राह्मणस्येति संबन्धः। आनुपूर्व्यग्रहणात् प्रथमं ब्राह्मणी, ततः क्षत्रिया इत्येवं द्रष्टव्यम् अस्वजातीयापरिणयनम्, इतरथा '(ऽ ?) सदृशीम्' (गौध. ४।१) इत्यविशेषकं स्यात्। आह च मनुः – 'सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः।।' (मस्मृ. ३।१२) इति। बौवि.

**तिस्रो राजन्यस्य।।**

**द्वे वैश्यस्य।।**

आनुपूर्व्येण कामत इति चानुसंधेयम्। बौवि.

**एका शूद्रस्य।।**

कामप्रवृत्तस्यापि शूद्रस्य शूद्रैव भार्या। बौवि.

**तासु पुत्राः सवर्णानन्तरासु सवर्णाः।।**

संव्यवहारार्थं संज्ञाकरणम्। सवर्णास्वनन्तरासु चेति विग्रहः। सवर्णाः समानजातीयाः। अनन्तराः इतराः। ब्राह्म-णस्य क्षत्रिया वाऽनन्तरेत्यादि योज्यम्। तत्र सवर्णायां जातः पुत्रः §स एव वर्ण इति व्युत्पत्त्या सवर्णः। अनन्तरायां तु सवर्णसदृशः (? सवर्णः सदृशवर्णः) इति। आह च मनुः – 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्। सदृशानेव तानाहुर्मातृदोषविगर्हितान्।।'(मस्मृ. १०।६)इति। बौवि.

---

§ व्युत्पत्त्यर्थवर्णनमिदम्, नेयं व्युत्पत्तिः, छान्दसत्वापत्तेः। व्युत्पत्तिस्तु एकार्थकसमानशब्दमादाय 'समानः वर्णः यस्य' इति बहुव्रीहिः। तत्र 'समानस्य' (पासू. ६।३।८४) इति योगविभागात् समानशब्दस्य सादेशः। अनन्तराजाते तु सदृशार्थकं समानशब्दं सहशब्दं वाऽऽदाय बहुव्रीहिणा व्युत्पन्नः। तत्रोक्तयोगविभागात् 'वोपसर्जनस्य' (पासू. ६।३।८२) इत्यनेन वा सादेशः।

(१) **बौध.** १।१६।१-६.

वर्णानां वृत्तयः

**[1]ब्रह्म वै स्वं महिमानं ब्राह्मणेष्वदधादध्ययनाध्यापन-यजनयाजनदानप्रतिग्रहसंयुक्तं वेदानां गुप्त्यै ।।**

एष हि षट्कर्मयुक्तो ब्रह्मणः स्वो महिमा। किमर्थमेवं कृतवत् ब्रह्मेत्याह – वेदानां गुप्त्यै। गुप्तिः रक्षणम्। बौवि.

**[2]क्षत्रे बलमध्ययनयजनदानशस्त्रकोशभूतरक्षणसंयुक्तं क्षत्रस्य वृद्ध्यै ।।**

सर्वेषां वर्णानां रक्षणायेमे क्षत्रधर्मा इत्याह – क्षत्रेति। अदधादित्यनुवर्तते। किं तत्? बलं शक्तिः वेदाध्ययनादि-संयुक्तम्। शस्त्रम् आयुधम्। तथा च वसिष्ठः – 'शस्त्रेण च प्रजापालनं स्वधर्मः' (वाध. २।१७) इति। भूतग्रहणं चतुर्विधस्यापि भूतस्य ग्रहणार्थम्। तथा च गौतमः – 'चतुर्विधस्य मनुष्यजातस्यान्तःसंज्ञानां चलनपतनसर्पणाना-मायत्तं जीवनं प्रसूतिरक्षणम्' (गौध. ८।२) इति। क्षत्रस्य वृद्धिः अभ्युदयः। बौवि.

**[3]विट्स्वध्ययनयजनदानकृषिवाणिज्यपशुपालनसंयुक्तं कर्मणां वृद्ध्यै ।।**

वैश्येषु वैश्यकर्मादधादित्याह – विडिति। अध्ययनादि-संयुक्तम् अध्ययनादिनिष्पादितमित्यर्थः। कृषिः भूविलेखनम्। वाणिज्यं क्रयविक्रयव्यवहारः। कर्माणि यागादीनि। तेषां साधने सति वृद्धिर्भवति। बौवि.

**[4]शूद्रेषु पूर्वेषां परिचर्या ।।**

अदधादित्येव। पूर्वेषां ब्राह्मणादीनाम्। परिचर्या शुश्रूषा। आह चाऽऽपस्तम्बः – 'शुश्रूषा शूद्रस्येतरेषां वर्णानाम्' (आध. १।१।७) इति। बौवि.

**पत्तो ह्यसृज्यन्तेति ।।**

किमिति शुश्रूषा शूद्राणामित्यत आह – पत्त इति। हिशब्दो हेतौ। यस्मात्प्रजापतेः पादात्सृष्टः तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः। अतो द्विजानां शुश्रूषैव शूद्रस्य धर्मः। बौवि.

(१) **बौध.** १।१८।२; **गृक.** २५३ (ब्रह्मादधात्) एतावदेव.

(२) **बौध.** १।१८।३; **गृक.** २५३ क्षत्रे ब (क्षत्रब).

(३) **बौध.** १।१८।४; **गृक.** २५३ कर्मणां (कर्मणो).

(४) **बौध.** १।१८।५-६.

ब्राह्मणस्य तिलतण्डुलदुहितरः अविक्रेयाः, तृणकाष्ठपशु-पाषाणतन्तुविशेषा विक्रेयाः

**[1]भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः।**
**श्वविष्ठायां क्रिमिर्भूत्वा पितृभिः सह मज्जति ।।**

'सर्वपण्यैर्व्यवहरणम्' (बौध. २।२।२) इति पतनीय-मुक्तम्। तत्र किल विषये किंचिदुच्यते – भोजनेति। नात्र तिरोहितं किंचिदस्ति। बौवि.

**[2]पितॄन्वा एष विक्रीणीते यस्तिलान्विक्रीणीते।**
**प्राणान्वा एष विक्रीणीते यस्तण्डुलान्विक्रीणीते ।।**

निन्दैषा तिलतण्डुलयोर्विक्रयस्य। बौवि.

**[3]सुकृतांशान्वा एष विक्रिणीते यः पणमानो दुहितरं ददाति ।।**

सुकृतं पुण्यम्, तदंशाः सुकृतांशाः। §पणमानो योऽन्य-स्माद्द्रव्यं गृहीत्वाऽन्यस्मै द्रव्यान्तरप्राप्त्यर्थं प्रयच्छति। बौवि.

**[4]तृणं काष्ठमविकृतं विक्रेयम् ।।**

अथ प्रसङ्गात्पण्यमाचष्टे – तृणमिति। तृणविकारा रज्ज्वासनकटादयः। काष्ठविकाराः स्रुक्स्रुवप्रतिमादयः। तद्वर्जं तृणं काष्ठं ब्राह्मणैरप्यापदि विक्रेयम्। बौवि.

§ प्रकृतसूत्रं न प्रथमविक्रयपरम्, अपि तु विक्रीताविक्रयपरमिति व्याख्यातुरभिमतेऽर्थे हेतुश्चिन्त्यः।

(१) **बौध.** २।२।१३; **गृक.** २०४ नाद्दाना (नादाना) तृतीयचरणे (कृमिर्भूत्वा स विष्ठायां) (इति०) वसिष्ठमनुपैठीनसिबौधायनाः.

(२) **बौध.** २।२।१४; **गृक.** २०४; **गृर.** ४३६-४३७; **निप्र.** २।३१५ (प्राणान्वा एष विक्रीणीते यः०); **मुक्ता.** ६१ प्राणान् (ब्राह्मणान्); **बाल.** १।११९ पृ. ३७३ ते यस्ति (त यस्ति).

(३) **बौध.** २।२।१५; **गृक.** २०४ सुकृतांशान् (सुकृतानंशान्); **गृर.** ४३७ सुकृतांशान् (सुकृतं); **बाल.** १।११९ पृ. ३७३.

(४) **बौध.** २।२।१६; **अप.** ३।३८ कृतं (क्रीतं); **गृक.** २११ तृणं का (तृणका); **गृर.** ४४२ (तृणकाष्ठमविकृतं विज्ञेयम्); **मर.** १८५ (तृणकाष्ठमविकृतं ज्ञेयम्).

[१]**अथाप्युदाहरन्ति –**

**पशवश्चैकतोदन्ता अश्मा च लवणोद्धृतः।**

**एतद्ब्राह्मण ते पण्यं तन्तुश्चारजनीकृतः।। इति।।**

(१) लवणरवदात (? णावटात्) उद्धृतः स न तथा। अरजनीकृतो नीराग इत्यर्थः। अप. ३।३८

(२) अश्मा पाषाणः। लवणोद्धृतः लवणादन्यः। अयं चाश्मनो विक्रयोऽत्यन्तापदि बोद्धव्यः, स्मृत्यन्तरे विक्रयनिषेधात्। अरजनीकृतः कुसुम्भादिभिः न रक्तीकृतः। $ गृक. २११

(३) ब्रह्मा ब्राह्मणमाह – हे ब्राह्मण, तवैतत्पण्यं यदेकतोदन्ताः पशवः शृङ्गिणः, तेष्वेकतोदन्ताः। † बौवि.

ब्राह्मणस्याऽऽपदि क्षात्रवृत्तौ मतभेदः,
वैश्यवृत्तौ कृषौ विशेषः

[२]**अध्यापनयाजनप्रतिग्रहैरशक्तः क्षत्रधर्मेण जीवेत्प्रत्यनन्तरत्वात्।।**

(१) क्षत्रधर्मेण शस्त्रधारणव्यतिरिक्तेनेति बोद्धव्यम्, ब्राह्मणस्य धर्मार्थमेव शस्त्रधारणविधानात्। ‡ गृक. १८८

(२) इदानीं ब्राह्मणस्य स्वकीयवृत्त्या जीवनाशक्तावनुकल्पमाह – अध्यापनेति। अशक्तिः नित्यकर्मावसादो भृत्यावसादो वा। अध्यापनादिष्वेकेनैव जीवनाशक्तौ द्वितीयं तृतीयं चाधितिष्ठेत्। तत्रापि लघूपायासंभवे गुरूपाय आस्थेयः। कुत एतत्? 'यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः। अक्लेशेन शरीरस्य कुर्वीत धनसंचयम्।।' (मस्मृ. ४।३) इति स्मरणात्। क्षत्रधर्मः शस्त्रधारणम्। प्रत्यनन्तरत्वात्। प्रतिशब्दोऽत्यन्तानन्तर्ये वर्तते। क्षत्रधर्मो हि वैश्यधर्मादनन्तरो ब्राह्मणस्य। अनेनैतद्दर्शयति – क्षत्रधर्मासंभवे वैश्यधर्मेणोपजीवेदिति। सोऽपि प्रत्यन्तर एव शूद्रधर्मव्यपेक्षया, 'अध्यापनयाजनप्रतिग्रहाः सर्वेषाम्। पूर्वः पूर्वो गुरुः। तदलाभे क्षत्रियवृत्तिः। तदलाभे वैश्यवृत्तिः' (गौध. ७।४-७) इति। बौवि.

[१]**नेति गौतमोऽत्युग्रो हि क्षत्रधर्मो ब्राह्मणस्य।।**

न क्षत्रधर्मो ब्राह्मणेनाऽऽस्थेय इति गौतम आचार्यो मन्यते स्म। प्रसिद्धगौतमीये 'तदलाभे क्षत्रियवृत्तिः' इति वचनात् अन्यद्गौतमशास्त्रमस्तीति कल्प्यते। तथा 'आहिताग्निश्चेत्प्रवसन् म्रियेत पुनः संस्कारं कृत्वा शववच्छौचमिति गौतमः' (वाध. ४।३७) इति वासिष्ठे। अत्युग्रः अतितीक्ष्णः, 'संग्रामे संस्थानमनिवृत्तिश्च। न दोषो हिंसायामाहवे' (गौध. १०।१५-१६) इत्येवंलक्षणो ह्यसौ। बौवि.

[२]**अथाप्युदाहरन्ति –**

**गवार्थे ब्राह्मणार्थे वा वर्णानां वाऽपि संकरे।**

**गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया।।**

अथेदानीं विप्रविशोश्च शस्त्रग्रहणे कारणमाह – अथेति। अर्थशब्दश्चात्र रक्षणप्रयोजनवचनः। वर्णानां संकरः अनर्हस्त्रीपुंसलक्षणः। शस्त्रग्रहणे हेतुः – धर्मव्यपेक्षयेति। धर्मबुद्ध्येति यावत्। बौवि.

[३]**वैश्यवृत्तिरनुष्ठेया प्रत्यनन्तरत्वात्।।**

प्रत्यनन्तरत्वादिति हेतुना वैश्यवृत्त्याऽपि जीवनमुक्तम्, इदानीं त्वनुवदत्युत्तरविधित्सया – वैश्येति। न हीनवर्णेनोत्कृष्टवर्णवृत्तिरास्थेया, 'न तु कदाचिज्ज्यायसीम्' (वाध. २।२३) इति वासिष्ठे निषेधात्। तत्र कृषिवाणिज्यलक्षणादिः वैश्यवृत्तिः। तत्र वाणिज्यविशेषो विहितः 'तृणकाष्ठमविकृतं विक्रेयम्' इत्येवमादिना। बौवि.

---

$ गृर., मर. गृकवत्। निप्र. गृकग्रन्थानुवादः।

† शेषं गृकगतम्।

‡ गृर. गृकवत्।

(१) **बौध.** २।२।१७; **अप.** ३।३८ च ल (त्वल) ण ते प (णतोऽप) (इति०) ; **गृक.** २११ ण ते प (णतोऽप) व्याख्यानं तु आदर्शपाठानुसारि; **गृर.** ४४२; **मर.** १८५ (इति०); **निप्र.** २।३१३ (अथाप्युदाहरन्ति०) णोद्धृतः (णादृते).

(२) **बौध.** २।४।१६; **गृक.** १८७ अध्यापनयाजनप्रतिग्रहैरशक्तः (तदशक्तौ); **गृर.** ४२६ गृकवत्.

(१) **बौध.** २।४।१७; **गृक.** १८७ गौतमोऽ(मः। हास्यार्थमपि ब्राह्मण आयुधं नाऽऽददीता); **गृर.** ४२६ गौतमोऽ(मः – न हास्यार्थमपि ब्राह्मण आयुधमादधीता).

(२) **बौध.** २।४।१८; **गृक.** १८८ प्रथमचरणे (ब्राह्मणार्थे गवार्थे वा) वाऽपि (चापि); **गृर.** ४२६ पूर्वार्धे (ब्राह्मणार्थे गवार्थे वा सवर्णानां च संकरे).

(३) **बौध.** २।४।१९; **गृक.** १८८ (प्रत्यनन्तरत्वात्०); **गृर.** ४२६ गृकवत्.

[1]**प्राक्प्रातराशात् कर्षी स्यात्।।**

अथ कृषावाह – प्राक्प्रातरिति। प्रातराशः दिवाभोजनम्, तेन च मध्याह्नो लक्ष्यते। अष्टधाकृतस्य वासरस्य पञ्चमो भाग इत्यर्थः। तत्र हि भोजनं विहितम्, 'पञ्चमे भोजनं भवेत्' इति दक्षवचनात्। अस्मात् कालात्प्रागेवानडुद्भ्यां विकृष्याऽक्लिष्टौ तौ विसृजेत्। बौवि.

[2]**अस्यूतनासिकाभ्यां समुष्काभ्यामतुदन्नारया मुहुर्मुहुरभ्युच्छन्दयन्।।**

तौ विशिनष्टि – अस्यूतेति। अविद्धघोणाभ्यामित्यर्थः। समुष्काभ्यां साण्डाभ्याम् अनुत्कृत्ताण्डाभ्यामित्यर्थः। अण्डोत्कर्तनेन हि बीजशक्तिः क्षीयते। अतुदन्नारया। आरा नाम सलोहको दण्डः। तया तावनड्हौ अतुदन् तयोर्व्यथामकुर्वन्। अभ्युच्छन्दनं लोहफालायोयोक्त्रलग्नायाश्च मृदोऽपनयनं प्रियभाषणं कण्डूयनादिना लालनं च, तत् मुहुर्मुहुः कुर्वन्, विलिखेत् भूमिमिति शेषः। बौवि.

जातकर्माङ्गदानप्रति-
ग्रहानुमतिः

[3]**गुडतैलहिरण्यानां गोधान्यानां च वाससाम्।**
**तस्मिन्नहनि दानं च कार्यं विप्रैः प्रतिग्रहः।**
**प्राङ्नाभिच्छेदनाद्ग्राह्याण्येतानीत्यपरे जगुः।।**

प्रतिग्रहविषये अपादानविशेष-
द्रव्यविशेषविधयः

[4]**खलक्षेत्रगतं धान्यं वापीकूपगतं जलम्।**
**अभोज्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः।।**
[5]**विच्छिन्नेषु च पक्षेषु हविःष्वाग्रयणेषु च।**
**इष्टिं त्वविकृतां कुर्यात्सुकृतं तु न लोपयेत्।।**

पक्षेषु पक्षाधिकरणकालेषु। तथा आग्रयणादिषु अयनान्तेष्टिकालेषु। हविःषु विच्छिन्नेषु विच्छेदं प्राप्तेषु सत्सु सकलेष्टिपवितोधान्यादि( ? ष्टिर्यावता धान्यादिना) भवति तावदभोज्यान्नादपि यथोक्तधान्यादिकं ग्राह्यमित्यर्थः।

* बाल. १।२१६ पृ. ४७०

[1]**पक्वान्नवर्जं विप्रेभ्यो हविर्वा क्षत्रियादपि।**
**वैश्यात्तु सर्वधान्यानि शूद्राद्ग्राह्यं न किंचन।।**
[2]**यच्च क्षेत्रगतं धान्यं खले वाऽथ गृहाद्बहिः।**
**सर्वकालं ग्रहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम्।।**
[3]**प्रतिवर्णमिदं दृष्टं प्रतिग्राह्यं द्विजोत्तमैः।**
**तथापि च पयः पेयं द्विजेभ्योऽप्यङ्गिरोमतम्।।**

पयः जलमिह। गृर. ४६४

[4]**तथा राशीकृतं धान्यं खलक्षेत्रेऽथवा भवेत्।**
**सर्वकालं ग्रहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम्।।**

सर्वकालं सूतकादावपि। गृर. ४६४

[5]**सुपात्रे यत्तु विन्यस्तं दुग्धं तच्छुचि नित्यशः।**
**पात्रान्तरगतं ग्राह्यं शूद्रात् स्वगृहमागतम्।।**
[6]**शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि।**
**निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्।।**

निवृत्तेन प्रतिग्रहान्निवृत्तेन।

बाल. १।२१६ पृ. ४७०

[7]**आमं मांसं मधु घृतं धानाः क्षीरमथौषधम्।**
**गुडतक्ररसा ग्राह्या निवृत्तेनापि शूद्रतः।।**

---

(१) **बौध.** २।४।२०; **गृक.** १९२; **गृर.** ४२९ राशात्क (राक).

(२) **बौध.** २।४।२१; **गृक.** १९२; **गृर.** ४२९ न्नारया (न्नवया).

(३) **पमा.** १।५८३.

(४) **गृर.** ४६३ अङ्गिरोबौधायनौ; **बाल.** १।२१६ पृ. ४७० गतं धा (कृतं धा) यच्च गो (यद्यगो) अङ्गिरोबौधायनौ.

(५) **गृर.** ४६३-४६४ हविःष्वाग्र (हविराश्र) त्ववि (न वि) तु (च) अङ्गिरोबौधायनौ; **बाल.** १।२१६ पृ. ४७० अङ्गिरोबौधायनौ.

* गृर. बालवत्, अशुद्धत्वान्न गृहीतम्।

(१) **गृर.** ४६४ अङ्गिरोबौधायनौ; **बाल.** १।२१६ पृ. ४७० हविर्वा (गौर्धनं) अङ्गिरोबौधायनौ.

(२) **गृर.** ४६४ अङ्गिरोबौधायनौ; **बाल.** १।२१६ पृ. ४७० अङ्गिरोबौधायनौ.

(३) **गृर.** ४६४ अङ्गिरोबौधायनौ; **बाल.** १।२१६ पृ. ४७० दृष्टं (द्रष्टुं) अङ्गिरोबौधायनौ.

(४) **गृर.** ४६४ अङ्गिरोबौधायनौ.

(५) **गृर.** ४६४ दुग्धं (सुखं) अङ्गिरोबौधायनौ; **बाल.** १।२१६ पृ. ४७० सुपात्रे यत्तु (स्वपात्रे यत्र) अङ्गिरोबौधायनौ.

(६) **गृर.** ४६४; **बाल.** १।२१६ पृ. ४७० अङ्गिरोबौधायनौ.

(७) **गृर.** ४६४ अङ्गिरोबौधायनौ; **बाल.** १।२१६ पृ. ४७० धानाः (धाना) उत्तरार्धे (गुडतक्ररसादीनि द्विजैर्ग्राह्याणि सर्वतः।।) अङ्गिरोबौधायनौ.

रसाः लवणादयः।

बाल. १।२१६ पृ. ४७०

**[१]शाकं च मत्स्यमूलानि कटुकाः शक्तवस्तिलाः। इक्षुः फलानि पिण्याकं प्रतिग्राह्याणि सर्वतः।।**

(१) सर्वतः सर्ववर्णेभ्यः। कटुकाः तण्डुलानां कणाः।

गृर. ४६४

(२) कम्बूकाः तण्डुलानां कणाः।

बाल. १।२१६ पृ. ४७०

अविक्रेयाः पदार्थाः

**[२]श्लेष्मतोक्मकिण्वसुकृताः।।**

अविक्रेया इत्यर्थः। श्लेष्मा चर्मादिसंधानहेतुः वृक्षनिर्यासः। तोक्म ईषद्विरूढं बीजम्। किण्वं सुरासाधनमन्नम्। सुकृता दुहिता। निप्र. २।३१५

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

वर्णगणना, तत्र पूर्वः पूर्वः श्रेयान्, उग्रतः प्रतिग्राह्याप्रतिग्राह्यवस्तूनां विवेकः प्रतिग्राह्यपरिमाणं च, अत्यन्तापदि सर्वत्र भोजनम्, आपन्निवृत्तावापद्वृत्तित्यागः

**[३]चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः।।**

ब्राह्मणाद्याश्चत्वारो वर्णसंज्ञिकाः। ते च सामयाचारिकैर्धर्मैरधिक्रियन्ते। चतुर्णामेवोपदेशेऽपि पुनश्चतुर्ग्रहणं यथाकथंचिच्चतुर्ष्वन्तर्भूतानामपि ग्रहणार्थम्। ततश्च †ब्राह्मणः क्षत्रियो वैश्य इति बौधायनादिभिरुक्तानामनुलोमादीनामप्यत्र ग्रहणं मतम्। तथा च गौतमः प्रतिलोमानामेव धर्मेऽनधिकारमाह – 'प्रतिलोमास्तु धर्महीनाः' (गौध. ४।२५) इति। उ.

**[१]तेषां पूर्वः पूर्वो जन्मतः श्रेयान्।।**

जन्मत इति वचनात्सद्वृत्तादपि शूद्राद्वैश्यब्रुवोऽपि श्रेयान्। एवं वैश्यात्क्षत्रियः क्षत्रियाद्ब्राह्मणः। उ.

**[२]मध्वामं मार्गं मांसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिगृह्याणि।।**

(१) रक्षा त्राणम्। गव्यूतिः गोमार्गः। उग्रः उच्छास्त्रवर्ती। * गृक. २४१

(२) एवं तावन्निमित्तदुष्टं जातिदुष्टं कालदुष्टं चाभोज्यमुक्तम्। तत्र निमित्तदुष्टं 'यस्य कुले म्रियेत' (आध. १।१६।१८) इत्यादि। जातिदुष्टं कलञ्जादि। कालदुष्टं पर्युषितादि। इदानीं प्रतिग्रहाशुचीनि कानिचिदनुज्ञाय कानिचित्प्रतिषेधति – मध्विति। मधु पक्वमपक्वं वा। आमं तण्डुलादि। मृगस्य विकारो मार्गं मांसम्। भूमिः शालेयादिक्षेत्रम्। विश्रमस्थानमित्यन्ये। मूलफलानि मूलकाम्रादीनि। रक्षा अभयदानम्। गव्यूतिः गोमार्गः। निवेशनं गृहम्। युगं वहतीति युग्यः बलीवर्दः, तस्य घासः भक्ष्यं पलालादि। एतान्युग्रतोऽपि प्रतिगृह्याणि प्रतिग्राह्याणि अदुर्भिक्षेऽपि। उग्रः पापकर्मा द्विजातिः, वैश्याद्वा शूद्रायां जातः। उग्रग्रहणं तादृशानामुपलक्षणम्। $ उ.

**§ [३]एतान्यपि नानन्तेवास्याहृतानीति हारीतः।।**

---

† 'तासु पुत्राः सवर्णानन्तरासु सवर्णाः' (बौध. १।१६।६) इतिसूत्रोक्ता ब्राह्मणादिभ्योऽनन्तरासु जाता वर्णसादृश्येन सवर्णाः अत एव ब्राह्मणक्षत्रियवैश्यसंज्ञका येऽनुलोमास्तेऽत्र ब्राह्मणादिशब्दैर्गृह्यन्ते।

(१) **गृर.** ४६४ अङ्गिरोबौधायनौ; **बाल.** १।२१६ पृ. ४७० कटुकाः (कम्बूकाः) आदर्शपुस्तके वचनमिदं नास्ति, व्याख्यानात् तत्सद्भावः पाठभेदश्च निर्णीयते, अङ्गिरोबौधायनौ.

(२) **निप्र.** २।३१५.

(३) **आध.** १।१।४; **हिध.** २६।१।४; **मुक्ता.** ६९; **सस्मृ.** ११३.

* गृर. गृकवत्।

$ मुक्ता. उवत्।

§ कल्पतरुमते इदं विधिसूत्रम्, आदर्शपुस्तके तथैव पाठात् तथैव गृकव्याख्यानाच्च। रत्नाकरपुस्तके आपस्तम्बधर्मसूत्रादर्शपुस्तकमनुसृत्यास्मद्गृहीतपाठवत् निषेधसूत्रपाठ एव यद्यपि मुद्रितस्तथापि गृकवदेव व्याख्यानात् रत्नाकरकर्तुरपि गृकवत् विधिसूत्रमेवाभिमतमिति प्रतीयते। हरदत्तोऽपि प्रथमं विधिं व्याख्याय पश्चात् निषेधस्य व्याख्यानात् निषेधस्यार्थसिद्धत्वं मन्यते इत्यस्ति संभवः। तस्मादापस्तम्बोपज्ञं विधिपाठः स्यादिति संभाव्यते।

(१) **आध.** १।१।५; **हिध.** २६।१।५; **मुक्ता.** ६९.

(२) **आध.** १।१८।१; **हिध.** २६।५।७१; **गृक.** २४१ युग्यघा (युग्यं वा) गृह्याणि (ग्राह्याणि); **गृर.** ४६२ मध्वामं (मध्वन्नं) युग्यघा (युग्यं वा); **मुक्ता.** ५७ घासश्चो (घासं चो) गृह्या (ग्राह्या).

(३) **आध.** १।१८।२; **हिध.** २६।५।७२; **गृक.** २४१ (एतान्यपि अन्तेवास्युद्धृतानीति हारीतः) अत्र गृहस्थरत्नाकरे च 'हारीतः' इति पदं व्याख्यानव्यवधानेन; **गृर.** ४६२ (एतान्यपि नानन्तेवास्युद्धृतानि हारीतः).

(१) अन्तेवास्युद्धृतानि अन्तेवासिना शिष्येण नीतानि।

* गृक. २४१

(२) एतानि मध्वादीन्यपि अन्तेवास्याहृतान्येव प्रतिग्राह्याणि, न स्वयमुग्रत इति हारीत आचार्यो मन्यते।

उ.

[२]**आमं वा गृह्णीरन्।।**

(१) आमं व्रीहितण्डुलादि।

* गृक. २४२

(२) पूर्वोक्तेष्वामं # स्वयमेव वा गृह्णीरन् द्विजा इति हारीतस्यैव पक्षः। उ.

[३]**कृतान्नस्य वा विरसस्य।।**

(१) कृतान्नस्येति षष्ठीनिर्देशात् कृतान्नस्य वा विरसस्य लवणादिरसरहितस्य स्तोकं यावद्भृत्यभरणार्थं तावदुग्रतोऽपि प्रतिग्राह्यम्।

* गृक. २४२

(२) आमस्यालाभे..। स्वयमन्तेवास्याहृतं वा गृह्णीरन्।

† उ.

[१]**न सुभिक्षाः स्युः।।**

(१) ‡यदि न लोकाः सुखेन याचितान्नदातारो भवेयुस्तदा, दुर्भिक्षे इत्यर्थः।

$ गृक. २४२

(२) अनन्तरोक्तविधानद्वये यद्गृहीतमन्नं तेन सुभिक्षाः सुहिताः न भवेयुरेव। यावता प्राणयात्रा भवति तावदेव गृह्णीरन्, न यावता सौहित्यं तावदिति।

उ.

[२]**स्वयमप्यवृत्तौ सुवर्णं दत्त्वा पशुं वा भुञ्जीत।।**

यदि तु दुर्भिक्षतया आत्मनोऽपि वृत्तिर्न लभ्यते, प्रागेव पोष्यवर्गस्य, तदा स्वयमप्यवृत्तौ यत्रैव लभ्यते तत्रैव कृतान्नमपि भुञ्जीत। तत्र गुणविधिः – सुवर्णं दत्त्वा सकृदेवोपक्लृप्तमुपरिष्टात्सुवर्णेन स्पृष्ट्वा। एतेन पशुं वा दत्त्वेत्यपि व्याख्यातम्, 'पशुरग्निः', 'अग्निः पशुरासीत्' (तैसं. ५।७।२६।१) इति मन्त्रलिङ्गात् गोसूक्तेनाग्नेरुपस्थानदर्शनाच्च।* उ.

[२]**नात्यन्तमन्ववस्येत्।।**

(१) न पुनरत्यन्तमन्ववसीदेत्।

+ उ.

(२) अत्यन्तं नावसीदेत्, यथाकथंचिज्जीवेत्।

मुक्ता. ५७

[३]**वृत्तिं प्राप्य विरमेत्।।**

यदा विहिता वृत्तिर्लभ्यते तदा निषिद्धाया विरमेत्, न पुनः 'सकृत्प्रवृत्तायाः किमवगुण्ठनेन' इति न्यायेन तत्रैव रमेत। अत्र छान्दोग्योपनिषत् 'मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास। स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे' इत्यादि। मन्त्रवर्णश्च भवति 'अवर्त्या शुन आन्त्राणि पेच' (ऋसं. ४।१८।१३) इति। अवर्त्या वृत्त्यभावेन। अपर आह – दुर्भिक्षे स्वयमप्यवृत्तौ आ तन्निवृत्तेर्यत्र कुत्रचिन्नीचेऽपि दातरि भुञ्जानो वसेत् यां च यावतीं च स्वर्णमात्रां यं कंचन पशुं वा तस्मै दत्त्वा। न पुनरत्यन्तमन्ववस्येत्, वृत्तिं प्राप्य विरमेदिति।

§ उ.

---

* गृर. गृकवत्।

# उत्तरसूत्रव्याख्यानानुरोधादेवकारोऽयं व्यर्थः।

† शेषं गृकवत्।

‡ प्रकृतसूत्रस्योत्तरसूत्रेणैकवाक्यतां मत्वेदं व्याख्यानम्।

$ गृर. गृकवत्।

(१) **आध.** १।१८।३; **हिध.** २६।५।७३; **गृक.** २४१; **गृर.** ४६२.

(२) **आध.** १।१८।४; **हिध.** २६।५।७४ (वा०); **गृक.** २४१; **गृर.** ४६२.

(३) **आध.** १।१८।५; **हिध.** २६।५।७५; **गृक.** २४१-२४२; **गृर.** ४६२ (स्युः०).

* अत्र मतान्तरमेकान्तरितोत्तरसूत्रव्याख्याने द्रष्टव्यम्।

+ बाल. उवत्।

§ मुक्ता., बाल. उगतम्।

(१) **आध.** १।१८।६; **हिध.** २६।५।७६; **गृक.** २४२; **गृर.** ४६३ सुवर्णं + (वा).

(२) **आध.** १।१८।७; **हिध.** २६।५।७७; **गृक.** २४२ मन्वव (मव); **गृर.** ४६३ मन्ववस्ये (मभ्यसे); **मुक्ता.** ५७; **बाल.** १।१६० मन्वव (मन्व).

(३) **आध.** १।१८।८; **हिध.** २६।५।७७; **गृक.** २४२; **गृर.** ४६४; **मुक्ता.** ५७; **बाल.** १।१६०.

ब्राह्मणस्य वाणिज्यनिषेधो वस्तुविशेषाणां क्रयविक्रयव्यवहारविनिमययोरभ्यनुज्ञा च, आपन्निवृत्तावापद्वृत्तित्यागः

[1]**अविहिता ब्राह्मणस्य वणिज्या।।**

क्रयविक्रयव्यवहारो वणिज्या। सा स्वयं कृता ब्राह्मणस्य वृत्तिर्न विहिता। प्राप्तानुवादोऽयमपवादविधानार्थः।

$ उ.

[2]**आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन्।।**

(१) पण्यानां व्रीह्यादीनाम्। अपण्यानि व्युदस्यन् अपनयन्। गृक. २०३

(२) ब्राह्मणवृत्तेरभाव आपत्। तस्यां सत्यां पण्यानाम्, 'व्यवहृपणोः समर्थयोः'(पासू. २।३।५७)इति कर्मणि षष्ठी, व्यवहरेत। क्रयश्च विक्रयश्च व्यवहारः। पण्यानि क्रीणीयात् विक्रीणीत चेत्यर्थः। अपण्यानि वक्ष्यमाणानि व्युदस्यन् वर्जयन्। कृत्स्नाया वैश्यवृत्तेरुपलक्षणमिदम्। क्षत्रियवृत्तिश्च दण्डापूपिकया सिद्धा। तथा च गौतमः– 'तदलाभे क्षत्रियवृत्तिः। तदलाभे वैश्यवृत्तिः' इति। # उ.

[3]**मनुष्यान् रसान् रागान् गन्धानन्नं चर्म गवां वशां श्लेष्मोदके तोक्मकिण्वे पिप्पलीमरीचे धान्यं मांसमायुधं सुकृताशां च।।**

(१) विरूढधान्यं तोक्मम्। सुरासाधनं द्रव्यं किण्वम्। सुकृतं धर्मः। अप. ३।३५-३८

(२) श्लेष्म चर्मादिसंधानहेतुर्वृक्षनिर्यासः। तोक्म ईषद्विरूढं बीजम्। किण्वं सुराकारणद्रव्यम्। सुकृता सद्विहिता। + गृक. २०३

(३) अपण्यान्याह – मनुष्यानिति। मनुष्याः दारदासादयः। रसाः गुडलवणादयः क्षीरादयो वा। रागाः कुसुम्भादयः रज्यन्तेऽनेनेति। रज्यन्त इति वा रागाः वस्त्रादयः। गन्धाः चन्दनादयः। गवां मध्ये वशा वन्ध्या गौः। श्लेष्म जतुवज्रादिः, येन विश्लिष्टं चर्मादि संधीयते, 'यथा श्लेष्मणा चर्मण्यं वाऽन्यद्वा विश्लिष्टं संश्लेषयेत्' (ऐब्रा. २५।३२) इति बह्वृचब्राह्मणे दर्शनात्। उदकं कुम्भजलम्। तोक्मम् ईषदङ्कुरितानि व्रीह्यादीनि। किण्वं सुराप्रकृतिद्रव्यम्। सुकृतं पुण्यम्, तस्य फलं सुकृताशा। शिष्टानि प्रसिद्धानि। एतान्यपण्यानि वर्जयित्वा अन्येषां पण्यानां व्यवहरेत। मनुष्यादीन्वर्जयित्वेत्येव सिद्धे 'अपण्यानि' इति वचनमन्येषामप्यपण्यानां व्युदासार्थम्। तत्र मनुः – 'सर्वान् रसानपोहेत कृतान्नं च तिलैः सह। अश्मनो लवणं चैव पशवो ये च मानुषाः।। सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च। अपि चेत्स्युररक्तानि फलमूले तथौषधीः।। अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः। क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान्।। आरण्यांश्च पशून्सर्वान् दंष्ट्रिणश्च वयांसि च। मद्यं नीलीं च लाक्षां च सर्वांश्चैकशफान् पशून्।।' (मस्मृ. १०।८६-८९) इति। # उ.

(४) सुकृताशां तीर्थस्नानादिसुकृतफलम्। धर्मदानं तु विषयविशेषे स्मर्यते – 'देवतानां गुरूणां च मातापित्रोस्तथैव च। पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित्।।' इति।

* मुक्ता. २८६

---

$ मुक्ता. उगतम्।

# स्मृच., गृर., मुक्ता. उगतम्।

(१) **आध.** १।२०।१०; **हिध.** २६।६।२४; **अप.** ३।३५-३८; **गृक.** २०३ (अविहिता वाणिज्या ब्राह्मणस्य); **स्मृच.** २।४७९; **गृर.** ४३६ गृकवत्; **मुक्ता.** ६१ वणिज्या (वाणिज्या).

(२) **आध.** १।२०।११; **हिध.** २६।६।२५; **अप.** ३।३५-३८ आपदि व्यवहरेत (यदि व्यवहरेत्) स्यन् (स्येत्); **गृक.** २०३ आपदि व्यवहरेत (यदि व्यवहरेत्); **स्मृच.** २।४७९; **गृर.** ४३६ गृकवत्; **मुक्ता.** ६१ हरेत (हरेत्).

(३) **आध.** १।२०।१२; **हिध.** २६।६।२६ (गन्धानन्नं०); **अप.** ३।३५-३८ (रागान्०) मरीचे (मरिचे) वशां (वशाः) ताशां च (तासव-); **गृक.** २०३ रागान् (नागान्); **गृर.** ४३६ (रागान्०) श्लेष्मोदके... मरीचे (श्लेष्मचर्मादि तोष्मकील्वे पिप्पलिमरीचे); **मर.** १८२-१८३ (मनुष्यान्०) रागान् गन्धान् (गन्धान् रागान्) वशां (वासः) तोक्म (तोका) लीम (लीको म) ताशां च (तासु च); **मुक्ता.** ६१ किण्वे पिप्पली (विकिण्वे पिप्पलि) : २८६ (मांसमायुधं सुकृताशां च) एतावदेव; **आन.** २६३ (मांसमायुधं सुकृताशां) एतावदेव.

+ गृर. गृकवत्।

# मर. उगतम्।

* शेषम् उगतम्। आन. मुक्तावत्।

**'तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात्।।**

(१) धान्यस्य मध्ये तिलतण्डुला इत्यर्थः।

$ गृक. २०३

(२) धान्यांना मध्ये तिलतण्डुलानेव विशेषतोऽतिशयेन न विक्रीणीयात् न विक्रीणीत। अन्येषां विकल्पः। स्वयमुत्पादितेषु नायं प्रतिषेधः। मानवे हि श्रुतम्– 'काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः। विक्रीणीत तिलाञ्छुद्धान् धर्मार्थमचिरस्थितान्।।' (मस्मृ. १०।९०) इति। ¶ उ.

**²अविहितश्चैतेषां मिथो विनिमयः।।**

विनिमयः परिवर्तनम्। येषां विक्रयः प्रतिषिद्धः तेषां परस्परेण विनिमयोऽप्यविहितः प्रतिषिद्धः, न कर्तव्य इत्यर्थः। + उ.

**³अन्नेन चान्नस्य मनुष्याणां च मनुष्यै रसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानाम्।।**

तेष्वेव केषांचिद्विनिमयोऽनुज्ञायते – अन्नेनेति। अन्नादीनां विद्यान्तानां विनिमयो भवत्येवेत्यर्थः। तथा च वसिष्ठः – 'रसा रसैः समतो हीनतो वा तिलतण्डुलपक्वान्नं विद्यामनुष्याश्च विहिताः परिवर्तनेन' (वाध. २।३७, ३९) इति। मानवे तु विशेषः– 'रसा रसैर्निमातव्या न त्वेव लवणं रसैः। कृतान्नं चाकृतान्नेन तिला धान्येन तत्समाः।।' (मस्मृ. १०।९४) इति। गौतमीये तु – 'विनिमयस्तु। रसानां रसैः। पशूनां च। न लवणकृतान्नयोः। तिलानां च। समेनाऽऽमेन तु पक्वस्य संप्रत्यर्थः।' (गौध. ७।१६-२१) इति। तस्मादत्र प्रतिषेधानुवृत्तिर्न शङ्कनीया। पूर्वत्र चोक्तम् 'ब्रह्मणि मिथो विनियोगे न गतिर्विद्यत' (आध. १।१३।१७) इति। विनिमयाभ्यनुज्ञानादेव विद्यादीनां विक्रयोऽपि प्रतिषिद्धो वेदितव्यः। उ.

**¹अक्रीतपण्यैर्व्यवहरेत।।**

(१) अक्रीतं गृहोत्पन्नं पण्यं विक्रेयम्, न तु क्रीतम्।

अप. ३।३८

(२) अक्रीतपण्यैः क्रयव्यतिरिक्तप्रकारोपपन्नैः।

* गृक. २१०

(३) अक्रीतानि स्वयमुत्पादितानि अरण्यादाहृतानि वा यानि पण्यानि तैर्व्यवहरेत मुञ्जादिभिः।

× उ

(४) अनेनानाऽऽपद्यक्रीतपण्यैरपि न व्यवहरेदित्युक्तं भवति।

+ स्मृच. २।४७९

**²मुञ्जबल्वजैर्मूलफलैः।।**

---

$ गृर. गृकवत्।

¶ मुक्ता. उगतम्।

+ मुक्ता. उवत्।

(१) **आध.** १।२०।१३; **हिध.** २६।६।२७ धान्यस्य विशेषेण (विशेषेण धान्यस्य); **अप.** ३।३५-३८; **गृक.** २०३; **गृर.** ४३६; **मर.** १८३ लांस्त्वेव (लांश्चैव); **मुक्ता.** ६१, २८६; **आन.** २६३ मरवत्.

(२) **आध.** १।२०।१४; **हिध.** २६।६।२८; **अप.** ३।३८ (विहितश्चैषां विनिमयः); **गृक.** २१० (विहितश्चैषां मिथो नियमः); **गृर.** ४४१ अविहितश्चैतेषां (विहितश्चैषां); **मर.** १८६ (विहितश्चैषां मिथ्या विनिमयः); **निप्र.** २।३१९ गृरवत्; **मुक्ता.** ६१; **बाल.** १।११९ पृ. ३७४ गृरवत्.

(३) **आध.** १।२०।१५; **हिध.** २६।६।२९ (अन्नेन चान्नस्य रसानां च रसैर्मनुष्याणां च मनुष्यैर्विद्यया च विद्यानाम्); **अप.** ३।३८ (गन्धानां च गन्धैर्०); **गृक.** २१०; **स्मृच.** २।४८१; **गृर.** ४४१ ष्याणां च (ष्याणां) या च वि (या वि); **पमा.** १।४३१; **मर.** १८६ ष्याणां च (ष्याणां); **निप्र.** २।३१९ न चान्नस्य (नान्नस्य) (च०); **मुक्ता.** ६१; **बाल.** १।११९ पृ. ३७४ मरवत्.

* गृर., निप्र. गृकवत्। मर. गृकवत्।

× मुक्ता. उवत्।

+ शेषम् उगतम्।

(१) **आध.** १।२०।१६; **हिध.** २६।६।३० उत्तरसूत्रेण सह एकं सूत्रम्; **अप.** ३।३८ हरेत (हरेत्); **गृक.** २१० अपवत्; **मवि.** १०।८७ (क्रीतपण्यमेव हरेत्); **स्मृच.** २।४७९; **गृर.** ४४१ अपवत्; **मर.** १८६ अपवत्; **निप्र.** २।३१२; **मुक्ता.** ६१ पण्यै (पणै); **बाल.** १।११९ पृ. ३७२ : १।११९ पृ. ३७४ पण्यै (पुण्यै) हरेत (हरेत्) : ३।३६-३९ र्व्यवहरेत (र्न व्यवहरेत्).

(२) **आध.** १।२१।१; **हिध.** २६।६।३० पूर्वसूत्रेण सह एकं सूत्रम्; **अप.** ३।३८ (मुञ्जबिल्वजैः) एतावदेव; **गृक.** २१० (मुञ्जबल्वजैः) एतावदेव; **मवि.** १०।८७ बल्वजै (वल्कलै); **गृर.** ४४१; **मर.** १८६ गृकवत्; **निप्र.** २।३१२; **मुक्ता.** ६१; **बाल.** १।११९ पृ. ३७२: ३।३६-३९ बल्वजै (वल्कजै).

(१) मुञ्जबल्वजयोस्तृणशब्देनोपात्तयोरपि विक्र( ? क्रि)-याभ्यनुज्ञानार्थमुपादानम्। # गृक. २११

(२) मुञ्जबल्वजाः तृणविशेषाः। × उ.

(३) 'तृणकाष्ठैः' इत्यनेनोपात्तयोर्मुञ्जबल्वजयोः पुनरुपादानं $ विक्रयस्यातिशयाभ्यनुज्ञानाय।

गृर. ४४१

(४) अत्र मूलफलानामविक्रेयत्वे अक्रीतत्वेन विक्रेयत्वम्। विक्रयनिषेधः क्रीतमूलफलविषय इत्येके। एवं चास्य मते फलानां विक्रयनिषेधः क्रीतलब्धफलविषयः।

निप्र. २।३१२

[१]**तृणकाष्ठैरविकृतैः।।**

तृणानां विकारः रज्ज्वादिभावः। काष्ठानां विकारः स्थूणादिभावः। तृणत्वादेव सिद्धे मुञ्जबल्वजग्रहणं विकारार्थम्। † उ.

[२]**नात्यन्तमन्ववस्येत्।।**

(१) न चात्यन्तं वणिग्वृत्तिरध्यवसातव्या।

अप. ३।३८

(२) अन्ववस्येत् आसक्तो भवेत्।

‡ गृक. २११

(३) प्रतिषिद्धानामपि विक्रयविनिमयाभ्यां जीवेत्, न पुनरत्यन्तम् अन्ववस्येत् अवसीदेत्। तथा च गौतमः – 'सर्वथा तु वृत्तिरशक्तावशौद्रेण। तदप्येके प्राणसंशये' (गौध. ७।२२, २३) इति। मनुरपि – 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। आकाशमिव पङ्केन न स दोषेण लिप्यते।।' (मस्मृ. १०।१०४) इति। उ.

(४) नात्यन्तमर्थं कुर्यात्। गृर. ४४१

(५) अत्यन्तं प्राणात्ययदुःखं नानुभवेदित्यर्थः।

आन. ६२७

[१]**वृत्तिं प्राप्य विरमेत्।।**

स्वकीयां वृत्तिं प्राप्य परवृत्तितो विरमेत्।

§ अप. ३।३८

ब्राह्मणक्षत्रियवैश्यवृत्तयः,
अनधीयानस्यायाज्यत्वम्

[२]**स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं सिलोञ्छः।।**

(१) दायाद्यम्, दायमादत्ते इति दायादः पुत्रादिः, तस्य कर्म(णा ?) यद्धनग्रहणम्। + गृक. १६८

(२) 'सर्ववर्णानां स्वधर्मानुष्ठाने०' (२।२।२) इत्युक्तम्। तेऽमी स्वधर्मा उच्यन्ते – स्वकर्मेति। पुत्राय दीयत इति दायः। तमादत्ते इति दायादः। तस्य भावो दायाद्यं दायस्वीकारः। क्षेत्रादिषु पतितानि मञ्जरीभूतानि ततश्च्युतानि वा धान्यानि सिलशब्दस्यार्थः। तेषामुञ्छनम् अङ्गुलीभिर्नखैर्वाऽऽदानं सिलोञ्छः। एतान्यध्ययनादीन्यष्टौ ब्राह्मणस्य स्वकर्म। तेष्वध्ययनयज्ञदानानि द्विजातिसामान्येन कर्तव्यतया नियम्यन्ते। इतराण्यर्थितया द्रव्यार्जने प्रवृत्तस्योपायान्तर-

---

# निप्र. गृकवत्।

× मुक्ता. उवत्।

$ यथाश्रुतोऽयं ग्रन्थो नोपपद्यते। तथाहि – सामान्यविशेषार्थयोर्निर्विशेषत्वे विशेषार्थस्य पृथगुक्तिः प्रतिपाद्यार्थातिशयाय भवति। अत्र तु तृणरूपसामान्यार्थस्याविकृतत्वं विशेषः, मुञ्जबल्वजयोस्तदनुक्तेरिति।

† मुक्ता. उगतम्।

‡ मर., निप्र. गृकवत्।

(१) **आध.** १।२१।२; **हिध.** २६।६।३१; **अप.** ३।३८ (तृणकाष्ठैः) एतावदेव; **गृक.** २१०; **गृर.** ४४१; **मर.** १८६; **निप्र.** २।३१२; **मुक्ता.** ६१.

(२) **आध.** १।२१।३; **हिध.** २६।६।३२; **अप.** ३।३८ मन्वव (मनुव); **गृक.** २१०; **गृर.** ४४१ मन्ववस्येत् (मनुरमेत्); **मर.** १८६ नात्यन्त (नित्यं न); **निप्र.** २।३१२ मन्वव (मव); **मुक्ता.** ६१; **आन.** ६२७.

§ गृक., गृर., मर., आन. अपवत्।

+ गृर. गृकवत्।

(१) **आध.** १।२१।४; **हिध.** २६।६।३३; **अप.** ३।३८ प्राप्य + (परवृत्तितो); **गृक.** २१० वृत्तिं (तत्र वृत्तिं); **गृर.** ४४१ वृत्तिं (तच्च वृत्तिं); **मर.** १८६; **निप्र.** २।३१२; **मुक्ता.** ६१; **आन.** ६२७.

(२) **आध.** २।१०।५; **हिध.** २७।४।४ सिलोञ्छः (शिलोञ्छः); **गृक.** १६८ (दायाद्यं शिलोञ्छौ) एतावदेव : २५३ हिधवत्; **स्मृच.** २।४५२ हिधवत्; **गृर.** ४१४ (दायाद्यं शिलौञ्छौ च) एतावदेव; **निप्र.** २।२५४ गृक. १६८ वत्; **आत.** ४५७ गृरवत्; **वीमि.** १।१२८ (शिलोञ्छौ च) एतावदेव; **आभू.** १४६ हिधवत्.

निवृत्त्यर्थान्युपदिश्यन्ते – 'अध्यापनादिभिरेव द्रव्यमार्जयेत्, न चौर्यादिभिः' इति। $ उ.

(३) अत्र च शाल्यादेर्निपतित(स्य?)परित्यक्तवल्लरीग्रहणं शिलम्। एकैकस्य त्यक्तस्य कणस्योपादानम् उञ्छमिति विज्ञानेश्वरः। निप्र. २।२५५

[1]**अन्यच्चापरिगृहीतम्।।**

(१) अपरिगृहीतम् अस्वामिकं नीवारादि।

* गृक. १६८

(२) यच्चान्यत् केनाप्यपरिगृहीतमारण्यमूलफलादि तेनापि जीवेदिति प्रकरणाद्गम्यते। एतेन निधिर्व्याख्यातः।

# उ.

(३) अपरिगृहीतम् अस्वामिकं शाकनीवारादिकमिति लक्ष्मीधरः। निध्यादिकं वा। निप्र. २।२५४

[2]**एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि।।**

एतान्येव क्षत्रियस्यापि स्वकर्म अध्यापनादीनि त्रीणि वर्जयित्वा। दण्डलब्धं युद्धलब्धं चाधिकम्। उ.

[3]**क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष्यवणिज्याधिकम्।।**

गोरक्ष्यं गवां रक्षणम्। भावे ण्यत्प्रत्ययः। वणिजो भावो वणिज्या क्रयविक्रयव्यवहारः कुसीदं च। 'दूतवणिग्भ्यां च' (वार्तिकम्. ४३४) इति यत्प्रत्ययः। उ.

[4]**अयाज्योऽनधीयानः।।**

(१) अनधीयानो यद्यपि यज्ञविद्भ्यो धनवान्।

गृक. १६६

(२) अनधीतवेदं न याजयेत् तदानीमपेक्षितं मन्त्रं यथाशक्ति वाचयन्। § उ.

दोहनक्रियायां विशेषः, हलयुग्यसंख्याप्रयुक्तफलभेदः, वाहनदोहनातिचारणनासाभेदनादिना च गोमृतौ प्रायश्चित्तम्, गोबन्धनरज्जुविशेषः

[1]**द्वौ मासौ पाययेद्वत्सं द्वौ मासौ द्वौ स्तनौ दुहेत्।**
**द्वौ मासावेकवेलायां शेषकालं यथारुचि।।**
**हलमष्टगवं धर्म्यं षड्गवं जीवितार्थिनाम्।**
**चतुर्गवं नृशंसानां द्विगवं हि जिघांसिनाम्।।**
**अतिवाहातिदोहाभ्यां नासिकाभेदनेन वा।**
**नदीपर्वतसंरोहे मृते पादोनमाचरेत्।।**
**न नारिकेलबालाभ्यां न मुञ्जेन न चर्मणा।**
**एभिर्गास्तु न बध्नीयाद्बद्ध्वा परवशो भवेत्।**
**कुशैः काशैस्तु बध्नीयाद्वृषभं दक्षिणामुखम्।।**

शूद्रतः सर्वतश्च प्रतिग्राह्याः पदार्थाः

[2]**आममांसं मधु घृतं धानाः क्षीरं तथैव च।**
**गुडस्तक्रं रसा ग्राह्या निवृत्तेनापि शूद्रतः।।**
[3]**शाकं मांसं मृणालानि तुम्बुरुः सक्तवस्तिलाः।**
**रसाः फलानि पिण्याकं प्रतिग्राह्याणि सर्वतः।।**

## वैखानसधर्मसूत्रम्

वर्णानां गणना योनयश्च, चतुर्णां वर्णानां वृत्तयः

[4]**अथ वर्णाश्रमधर्मम्। ब्राह्मणक्षत्रियवैश्यशूद्रा मुखबाहूरुपादेषु जाताश्चत्वारो वर्णाः। यस्मात् 'ब्राह्मणोऽस्य**

---

$ आभू. उज्ज्वलानुवादः।

* गृर. गृकवत्।

# आत. उगतम्। आभू. उज्ज्वलानुवादः।

(१) **आध.** २।१०।६; **हिध.** २७।४।५; **गृक.** १६८ अन्य (अन्या), २५३; **स्मृच.** २।४५२; **गृर.** ४१४ अन्यच्चा (अन्यत्रा); **निप्र.** २।२५४ अन्यच्चा (यच्चा); **आत.** ४५७; **वीमि.** १।१२८.

(२) **आध.** २।१०।७; **हिध.** २७।४।६; **गृक.** २५३; **स्मृच.** २।४५२.

(३) **आध.** २।१०।८; **हिध.** २७।४।७ रक्ष्य (रक्ष); **गृक.** २५४ रक्ष्यव (रक्षवा); **स्मृच.** २।४५२ वणिज्या (वाणिज्या).

(४) **आध.** २।१०।१०; **हिध.** २७।४।९; **गृक.** १६६; **गृर.** १३२.

§ गृर. उगतार्थम्।

(१) **आपस्मृ.** १।२०-२५.

(२) **आपस्मृ.** ८।१७-१८; **इन्दु.** ३३५ मांसं (मन्त्रं) गुडस्तक्रं रसा (गुडमांसरसा).

(३) **आपस्मृ.** ८।१८-१९.

(४) **वैध.** १।१.

**मुखमासीत्' इति श्रुतिः। पूर्वेषां त्रयाणां निषेकाद्याः संस्कारा विधीयन्ते। तेषां द्विजन्मनां वेदाधिकारः। तस्माद्ब्राह्मणस्याध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाणि षट्कर्माणि भवन्ति। क्षत्रियवैश्ययोर्यजनाध्ययनदानानि। क्षत्रियस्य प्रजापालनदुष्टनिग्रहयुद्धाः। वैश्यस्य पाशुपाल्यकुसीदवाणिज्यानि। शूद्रस्य द्विजन्मनां शुश्रूषा कृषिश्चैव।।**

शूद्रानुलोमेभ्य आमं ग्राह्यम्, प्रतिलोमादिभ्य आमं पक्वं च न ग्राह्यम्, जीवनविशेषणत्वेनाद्रोहपरोपकारयोर्विधिः, तारतम्येन धान्यसंग्रहविधिः

**[1]स्वधर्मानुवर्तिनां शूद्रानुलोमानामामं क्षुधितस्य संग्राह्यम्।।**

**सर्वेषां प्रतिलोमान्तरालव्रात्यानामामं पक्वं च क्षुधितोऽपि यत्नान्न गृह्णीयात्।।**

**[2]सर्वप्राणिहितोऽद्रोहेणैव जीवेच्छुद्धार्थवान्कुसूलधान्यः कुम्भीधान्योऽश्वस्तनिको वा स्यात्।।**

शुद्धाशुद्धवर्णानां विवेकः तत्र केषांचिदशुद्धानां वृत्तयश्च

**[3]ब्रह्मणो मुखादुद्भूता ब्राह्मणा ब्राह्मण्यश्च ब्रह्मर्षयः पत्न्यो बभूवुः। तेषां गोत्रोत्पन्नाद्ब्राह्मण्यामसगोत्रायां विधिना समन्त्रकं गृहीतायां जातो ब्राह्मणः शुद्धो भवेत्। विधिहीनमन्यपूर्वायां मृतभर्तृकायां गोलको जीवभर्तृकायां कुण्डश्च विप्रौ द्वौ निन्दितौ स्याताम्। तस्मादधो बाहुभ्यामुत्पन्नात् क्षत्रियात्क्षत्रियायां विधिवज्जातः क्षत्रियः शुद्धः। तयोरविधिकं गूढोत्पन्नोऽशुद्धो भोजाख्यो नैवाभिषेच्यः(? च्योऽ)पट्टबन्धो राज्ञः सैनापत्यं करोति। शुद्धाभावेऽपट्टबन्धो नृन्यायात्। तद्वृत्तं राजवत्स्यात्। अधस्तादूरुभ्यामुत्पन्नाद्वैश्याद्वैश्यायां तथा वैश्यः शुद्धः। विधिवर्जं मणिकारोऽशुद्धो मणिमुक्तादिवेधः शङ्खवलयकारी स्यात्।।**

**[4]अथ पद्भ्यामुत्पन्नाच्छूद्राच्छूद्रायां न्यायेन शूद्रः शुद्धः। जारान्मालवको निन्दितः शूद्रोऽश्वपालोऽश्वतृणहारी च। इत्येते चातुर्वर्णिकाः।।**

## वसिष्ठः

ब्राह्मणप्रशंसा, वर्णगणना, चतुर्णां वर्णानां वृत्तयः

**[1]त्रयो वर्णा ब्राह्मणस्य निर्देशेन वर्तेरन्।।**

**ब्राह्मणो वेदमाढ्यं करोति। ब्राह्मण आपद उद्धरति। तस्माद्ब्राह्मणोऽनाद्यः। सोमोऽस्य राजा भवतीति ह।।**

**[2]चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः।।**

**[3]षट् कर्माणि ब्राह्मणस्य।।**

**स्वाध्यायाध्ययनमध्यापनं यज्ञो यजनं दानं प्रतिग्रहश्चेति।।**

**त्रीणि राजन्यस्य।।**

**अध्ययनं यज्ञो दानं च।।**

**शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत्।।**

**एतान्येव वैश्यस्य।।**

**कृषिर्वाणिज्यं पाशुपाल्यं कुसीदं च।।**

**[4]तेषां परिचर्या शूद्रस्य नियता च वृत्तिः।।**

एतेषां त्रैवर्णिकानाम्। अनियता एतावद्यातव्यमिति नियमरहिता। § गृक. २६८

---

(१) **वैध.** २।१५.
(२) **वैध.** ३।१.
(३) **वैध.** ३।११.

§ गृर., स्मृकौ., मर. गृकवत्। बाल. गृकगतम्।
(१) **वैध.** ३।१२.
(२) **वाध.** १।३९, ४५.
(३) **वाध.** २।१.
(४) **वाध.** २।१३-१९.
(५) **वाध.** २।२०; **गृक.** २६८ तेषां (एतेषां) स्य नियता च (स्यानियता); **गृर.** ४७६ गृकवत्; **स्मृकौ.** ९१ गृकवत्; **मर.** १४ तेषां (एतेषां) (च०); **शूशि.** ३८ मरवत्; **संम.** ८० (परिचर्या तु शूद्रस्य) एतावदेव; **विपा.** ३।२।३१८ (तेषां०) (च०); **बाल.** १।८९ पृ. २४५ विपावत् : १।१२१ पृ. ३७८ मरवत्; **सस्मृ.** १८९ (परिचर्या तु शूद्रस्य) एतावदेव.

### वर्णानामापद्वृत्तयः, आपद्वृत्तौ वाणिज्ये अपण्यानि वस्तूनि

[1]**अजीवन्तः स्वधर्मेणानन्तरां यवीयसीं वृत्तिमातिष्ठेरन्।।**

[2]**न तु कदाचिज्ज्यायसीम्।।**

(१) आपद्यपि न हीनवर्णेन ब्राह्मी वृत्तिराश्रयणीया, किंतु ब्राह्मणेन क्षात्री, क्षत्रियेण वैश्यसंबन्धिनी, वैश्येन च शौद्री इत्येवं स्वानन्तरहीनवर्णवृत्तिरेव, 'अजीवन्तः .... ज्यायसीम्' इति वसिष्ठस्मरणात्। ज्यायसी च ब्राह्मी वृत्तिः। तथा च स्मृत्यन्तरम् – 'उत्कृष्टं वाऽपकृष्टं वा तयोः कर्म न विद्यते। मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते।।' इति। शूद्रस्योत्कृष्टं ब्राह्मं कर्म न विद्यते, तथा ब्राह्मणस्यापकृष्टं शौद्रं कर्म। मध्यमे क्षत्रियवैश्यकर्मणी पुनरापद्गतसर्ववर्णसाधारणे इति। मिता. ३।३५

(२) क्षत्रियोऽप्यापदि वैश्यवृत्त्याऽनन्तरया वैश्यश्चानन्तरया शूद्रवृत्त्या। यदाह वसिष्ठः – 'अजीवन्तः... ज्यायसीम्।।' इति। शिलोञ्छाद्यन्तं स्वधर्मः। तदसंभवे क्षत्रियवृत्त्या वैश्यवृत्त्या वा। अप. ३।३४

(३) पापीयसीं हीनवर्णविषयाम्। ज्यायसीम् उपरितनवर्णविषयाम्। स्मृच. २।४७४

(४) यथा वर्णसांकर्ये प्रातिलोम्यमधमम्, आनुलोम्यमुत्तमम्, तथा वृत्तिसांकर्येऽपि। तद्यथा – क्षत्रियस्याऽऽपद्यपि याजनादिब्राह्मणवृत्त्युपजीवनमधमम्, 'न तु कदाचिज्ज्यायसीम्' इति वसिष्ठेन निषिद्धत्वात्। पाशुपाल्यादिवैश्यवृत्त्युपजीवनमुत्तमम्, 'अजीवन्तः .... तिष्ठेरन्' इति वसिष्ठेनाऽऽपदि विधानादिति। पमा. १।५१५

[3]**वैश्यजीविकामास्थाय पण्येन जीवतोऽश्मलवणमपण्यं शाणकौशेयक्षौमाजिनानि च।।**

[4]**तान्तवं रक्तं सर्वं च।।**

[5]**कृतान्नं पुष्पफलमूलानि गन्धरसा उदकं चौषधीनां रसः सोमश्च शस्त्रं विषं मांसं च क्षीरं च सविकारमयस्त्रपु जतु सीसं च।।**

[6]**अथाप्युदाहरन्ति –**

**सद्यः पतति मांसेन लाक्षया लवणेन च।**
**त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्।। इति।।**

[7]**इतरेषामपण्यानां विक्रयादिह कामतः।**
**ब्राह्मणं( ? णः) सप्तरात्रेण वैश्यभावं नियच्छति।।**

[8]**ग्रामपशूनामेकशफाः केशिनश्च सर्वे चाऽऽरण्याः पशवो वयांसि दंष्ट्रिणश्च।।**

ग्राम्यारण्याः पशवो ग्राम्या( ? ग्रामा)रण्यवासिनो वा पारिभाषिका वा। यद्गृह्यपरिशिष्टम् – 'गौरश्वः पुरुषोऽजावी गर्दभाश्वतरावुभौ। एते ग्राम्यास्तु संख्याताः पशवः सप्त साधुभिः।। सिंहा वराहा व्याघ्राश्च वारणा महिषास्तथा। ऋक्षाश्च वानराश्चैव सप्ताऽऽरण्याः प्रकीर्तिताः।।' इति। द्व्यन्तरास्तु ग्राम्यारण्यत्वादपण्यमेव। $'गोमृगोऽथ वृक-

---

(१) **वाध.** २।२२; **मिता.** ३।३५ यवी (पापी); **अप.** १।९६ अजी (आजी) शेषं मितावत् : १।११८, ३।३४ पृ. ९३० मितावत्; **स्मृच.** २।४७४ (अजीवन् स्वधर्मेणानन्तरां पापीयसी वृत्तिं तिष्ठेन्न कदाचिज्ज्यायसीम्); **पमा.** १।५१५ मितावत्; **शूशि.** ३१ मितावत्; **वीमि.** १।९६ पृ. १७२ (वृत्तिमातिष्ठेरन्) एतावदेव :३।३५-४१ पृ. ८१७ मितावत्; **बाल.** १।९६ मितावत्.

(२) **वाध.** २।२३; **मिता.** ३।३५; **अप.** १।९६ यसीम् (यसी), १।११८, ३।३४; **मभा.** ७।७; **स्मृच.** २।४७४ (तु०); **पमा.** १।५१५; **शूशि.** ३१; **बौवि.** २।४।१९; **वीमि.** १।९६ पृ. १७३ तु (च) , ३।३५-४१ पृ. ८१७; **बाल.** १।९६.

$ यदि गोर्मृगस्य च पृथक्त्वं तदा 'गौर्मृगोऽथ' इति शुद्धिः कल्प्या, अन्तस्थशब्दश्च श्वविशेषणमास्थेयम्। यदि तु गोमृगशब्दो गवयपरस्तदा अन्तस्थस्य पृथक्त्वमापद्यते। अन्तस्थशब्दस्य पशुपक्षिविशेषपरत्वं तु कोशेषु नोपलभ्यते।

(१) **वाध.** २।२४; मपण्यं शा (मणिशा); **अप.** ३।३५-३८ तोऽश्म (तामश्म) (च०); **बौवि.** १।२।७ (अश्मलवणमपण्यम्) एतावदेव.

(२) **वाध.** २।२५; **अप.** ३।३५-३८ वं र (वस्य च र).

(३) **वाध.** २।२६; **अप.** १।३५-३८ फल..... रसा (मूलफलानि च गन्धा रसा) सोमश्च शस्त्रं (सोमः) क्षीरं च (क्षीरं).

(४) **वाध.** २।२७; **गृक.** २०७ (सद्यः...... च) एतावदेव, हारीतयमवसिष्ठशातातपाः; **निप्र.** २।३१३ (अथाप्युदाहरन्ति०) श्लोकार्धे व्यत्यासेन पठिते (इति०) हारीतमनुवशिष्ठशातातपाः.

(५) **निप्र.** २।३१३ हारीतमनुवशिष्ठशातातपाः.

(६) **वाध.** २।२८; **अप.** १।३५-३८ ग्राम (ग्राम्य) चा (वा); **बौवि.** १।२।७ (ग्राम्यपशूनामेकशफाः केशिनश्च) एतावदेव.

श्चैव अन्तस्थः श्वाऽथ कुक्कुटः। चातकः कलविङ्कश्च सप्तैते व्यन्तराः स्मृताः' इति।

अप. ३।३५-३८

[1]**धान्यानां तिलानाहुः।।**

[2]**अथाप्युदाहरन्ति –**

**भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः।**

**कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति।। इति।।**

[3]**कामं वा स्वयं कृष्योत्पाद्य तिलान्विक्रीणीरन्।।**

(१) तिलानपि विक्रीणीरन्, किं पुनरन्यान्? इति तत्रार्थः।

मभा. ७।१४

(२) यदपि वसिष्ठेन 'कामं.... रन्' इति, तद्विनिमयलक्षणविक्रयाभिप्रायम्। स्मृच. २।४८०-४८१

कृषिविषये विधि-
विशेषाः

[4]**तस्मात्साण्डाभ्यामनस्योताभ्यां प्राक्प्रातराशात्कर्षी स्यात्।।**

[5]**निदाघेऽपः प्रयच्छेत्।।**

[6]**'लाङ्गलं पवीरवत्सुशेवꣳ सोमपित्सरु। तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहनम्।।' (शुसं. १२।७१) इति।।**

**'लाङ्गलं पवीरवद्वीरवत्सुमनुष्यवदनडुद्वत्सुशेवं कल्याणनासिकं कल्याणी ह्यस्य नासिका नासिकयोद्वपति दूरेऽपविध्यति सोमपित्सरु सोमो ह्यस्य प्राप्नोति तत्सरु तदुद्वपति गां चाविं चाजानश्वानश्वतरखरोष्ट्रांश्च प्रफर्व्यं च पीवरीं दर्शनीयां कल्याणीं च प्रथमयुवतीम्।।**

परी(? वी)रवत्, परी(? वी)रं फालः, तद्वल्लाङ्गलम्, 'परिः(? विः) शल्यो भवति। यद्धि(? यद्वि)पुनाति भूमिं (?)§तद्वत् परीरवम् (? पवीरम्)' (नि. १२।३०) इति निरुक्तकारवचनात्। परी(? वी)रवदित्यस्य प्रदर्शनार्थमाह वसिष्ठः – मनुष्यवदनडुद्वदिति। सुशेवं सुमुखम्। नासिका हलाग्रभागः। अपविध्यति मदमुत्सादयति। सोमपीति सोममाप्नोतीति णिनिप्रत्ययान्तम्। धात्वाकारस्य छान्दसो लोपः। सोमः यवादिः, 'अन्नं वै सोमः' इति शतपथश्रुतेः। त्सरुः यस्मिन् स्थाने वृत्या वाह्यते। तत् उद्वपति उत्पादयति। प्रफर्व्यां प्रकृष्टपर्ववतीम्। छान्दसो वर्णविकारः।

गृक. १९३

[2]**कथं हि लाङ्गलमुद्वपेदन्यत्र धान्यविक्रयात्।।**

उद्वपेत् उत्पादयेत्, गवादीनिति शेषः।

गृक. २०८

विनिमेयाविनिमेयविवेकः,
कुसीदे विधि-
विशेषाः

[3]**रसा रसैः समतो हीनतो वा निमातव्याः।।**

---

(१) **वाध.** २।२९; **गृक.** २०४ वसिष्ठमनुपैठीनसिबौधायनाः; **गृर.** ४३७ वशिष्ठादयः.

(२) **वाध.** २।३०; **गृक.** २०४ नाद्दाना (नादाना) मिभूतः श्ववि (मिर्भूत्वा स वि) (इति०); वसिष्ठमनुपैठीनसिबौधायनाः; **गृर.** ४३७ अथा (अत्रा) मिभूतः श्ववि (मिर्भूत्वा स वि) (इति०) वशिष्ठादयः.

(३) **वाध.** २।३१; **अप.** ३।३४; **मभा.** ७।१४; **गृक.** १८६; **गौमि.** ७।१४ स्वयं कृष्यो (स्वयमु); **स्मृच.** २।४८१; **गृर.** ४२५; **पमा.** १।४३१; **आपा.** १४५.

(४) **वाध.** २।३२; **गृक.** १९२ मनस्यो (मनस्यू) राशात्क (राशक).

(५) **वाध.** २।३३; **गृक.** १९२.

(६) **वाध.** २।३४; **गृक.** १९२-१९३ वत्सु (वं सु) गामविं + (चाजानश्वानश्वतरखरोष्ट्रांश्च); **आपा.** १३९ (लाङ्गलं परिक्यं सुशेवरा सुमति फभु। उदत्कृषान्तगामविप्रगव्य च पीवरी प्रस्थानश्रव्यवाहनम्।।).

§ निरुक्ते पवीरशब्दमायुधपर्यायं मत्वर्थीयरप्रत्ययान्तं व्याख्याय ततः 'तद्वान् इन्द्रः पवीरवान्' इति व्याख्यातम्।

(१) **वाध.** २।३५; **गृक.** १९३ चाविं चाजा (चाविमजा) कल्याणीं च (कल्याणीं).

(२) **वाध.** २।३६; **गृक.** २०८.

(३) **वाध.** २।३७ सैः सम (सैर्मह); **अप.** ३।३८; **मभा.** ७।१६ (समतो हीनतो वाऽपि निमातव्यः); **गृक.** २१०; **गौमि.** ७।१७ (रसैः समतो हीनतो वा) एतावदेव; **ड.** १।२०।१५ (निमातव्याः०); **स्मृच.** २।४८१; **गृर.** ४४१; **पमा.** १।४३१; **आपा.** १४५ (रसा०); **मर.** १८६ निमा (निर्मा); **निप्र.** २।३१८ (रसा रसैः समतो वा न्यूनतो वा विनिमातव्याः); **मुक्ता.** ६१ उवत्; **बाल.** १।११९ पृ. ३७४.

(१) समतो हीनतो वा इति तृतीयान्तात्तसिः। तेन समैर्न्यूनैर्वा परिवर्तनीया रसाः, न त्वधिकं ग्राह्यमित्यर्थः।

* गृक. २१०

(२) अत्र समतो हीनत इत्युपादानात्परिवर्तनेऽधिकग्रहणनिषेधः। तेन तिलतण्डुलादिभिरधिकैरपि विनिमयः कार्यः। बाल. १।११९

**[1]न त्वेव लवणं रसैः।।**

**[2]तिलतण्डुलपक्वान्नं विद्या मानुष्याश्च विहिताः परिवर्तकेन।।**

**[3]ब्राह्मणराजन्यौ वार्धुषं न दद्याताम्।।**

**[4]अथाप्युदाहरन्ति –**

**समर्घं धान्यमुद्धृत्य महार्घं यः प्रयच्छति।**
**स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः।।**

(१) वार्धुषं वृद्ध्यर्थं धनप्रयोगं न कुर्यातामित्यर्थः। एतत्सर्वमन्यहस्तादादाय प्रयोगनिषेधपरम्। यतोऽनन्तरमाह स एव – 'समार्घं.... गर्हितः।।' इति। अन्यहस्तादल्पिकया वृद्ध्या धनं गृहीत्वा अन्यस्मै महत्या वृद्ध्या यो ददाति स वार्धुषिको ब्रह्मवादिषु गर्हित इत्यर्थः।

स्मृच. २।४७१

(२) अर्घमिति शेषः। समर्घमत्र यथाप्रचरन्मूल्यम्। महार्घं शास्त्रानुमतलाभातिरिक्तमूल्यम्।

बाल. १।११९ पृ. ३६८

**[1]भ्रूणहत्यां च वृद्धिं च तुलया समतोलयत्।**
**अतिष्ठद्भ्रूणहा कोट्यां वार्धुषिः समकम्पत।।इति।।**

**[2]कामं वा परिलुप्तकृत्याय पापीयसे दद्याताम्।।**

**[3]द्विगुणं हिरण्यं त्रिगुणं धान्यम्।।**

**धान्येनैव रसा व्याख्याताः।।**

**पुष्पमूलफलानि च।।**

**[4]तुलाधृतमष्टगुणम्।।**

**[5]अथाप्युदाहरन्ति –**

**द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं स्मृतम्।**
**मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः।।**
**राजा तु मृतभावेन द्रव्यवृद्धिं विनाशयेत्।**
**पुना राजाभिषेकेण द्रव्यमूलं च वर्धते।।**
**[6]वसिष्ठवचनप्रोक्तां वृद्धिं वार्धुषिके शृणु।**
**पञ्च माषास्तु विंशत्या एवं धर्मो न हीयते।।' इति, न हीयत इति।।**

विंशतिकार्षापणानां पञ्चमाषा वृद्धिर्ग्राह्या, 'माषो विंशतिभागश्च ज्ञेयः कार्षापणस्य तु' इति नारदवचनात्। पञ्च माषा अशीतिभागतुल्या भवन्ति। इयं च वृद्धिः प्रतिमासं ग्राह्या, 'अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकः शते' (मस्मृ. ८।१४०) इति मनुवचनात्।

\+ गृक. २१७-२१८

---

* स्मृच., गृर., मर. गृकवत्।

(१) **वाध.** २।३८; **अप.** ३।३८ (न त्वेवं लवणं रसेन); **गृक.** २१०; **गृर.** ४४१; **मर.** १८६; **निप्र.** २।३१८; **बाल.** १।११९ पृ. ३७४.

(२) **वाध.** २।३९; **अप.** ३।३८ न्नं विद्या मा (न्नविद्याम); **गृक.** २१० अपवत्; उ. १।२०।१५ द्या मानु (द्यामनु) वर्तकेन (वर्तनेन); **गृर.** ४४१ मानु (मनु); **मर.** १८६ ष्याश्च (ष्याः) शेषम् अपवत्; **निप्र.** २।३१८ अपवत्; **मुक्ता.** ६१ (तिलतण्डुलपक्वान्नविहिता मनुष्याश्च परिवर्तनीयाः); **बाल.** १।११९ पृ. ३७४ न्नं विद्या मा (न्नाविम).

(३) **वाध.** २।४० वार्धुषं (वार्धुषी); **गृक.** २१४ षं (षिकं); **स्मृच.** २।४७१; **बाल.** १।११९ पृ. ३६८ वार्धुषं (वार्धुष्यं) वसिष्ठपैठीनसी.

(४) **वाध.** २।४१; **गृक.** २१४ धान्य (धन) वसिष्ठपैठीनसी; **स्मृच.** २।४७१ (अथाप्युदाहरन्ति०) समर्घं धान्य (समार्घं धन); **आपा.** ११४ (अथाप्युदाहरन्ति०) धान्य (धन) महा (मह) यच्छ (तिष्ठ) वार्धुषि (वार्धुषु); **बाल.** १।११९ पृ. ३६८ चतुर्थचरणे (ये च वृद्ध्या प्रयुञ्जते) वसिष्ठपैठीनसी; **कृभ.** १४३१ धान्य (धन) महार्घं (महर्घं) वादिषु (चारिषु) स्मृतिः; **प्रभा.** १।९४ समर्घं (समर्घ्यं) धान्य (धन) महार्घं (महार्घ्यं) स्मृतिः.

\+ गृर. गृकवत्।

(१) **वाध.** २।४२ भ्रूण (ब्रह्म); **स्मृच.** २।४७१.

(२) **वाध.** २।४३; **गृक.** २१७; **गृर.** ४४६ परिलु (विलु) वशिष्ठः; **बाल.** १।११९ पृ. ३६८.

(३) **वाध.** २।४४-४६; **निप्र.** २।३२१.

(४) **वाध.** २।४७; **निप्र.** २।३२१ तुला (अतुला).

(५) **वाध.** २।४८-४९.

(६) **वाध.** २।५०; **गृक.** २१७ अन्ते द्विरुक्तिर्नास्ति; **गृर.** ४४६ षास्तु (षाश्च) त्या एवं (त्यामेवं) शेषं गृकवत्.

प्रकृतयः संस्काराश्च चातुर्वर्ण्य-
विभाजकाः

[1]प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च।।
'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत।।'
इत्यपि निगमो भवति।।

प्रतिग्राह्याप्रतिग्राह्याः पदार्थाः

[2]आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु।
विनश्येत्पात्रदौर्बल्यान्न च पात्रं रसाश्च ते।।
एवं गा वा हिरण्यं वा वस्त्रमश्वं महीं तिलान्।
अविद्वान्प्रतिगृह्णानो भस्मीभवति काष्ठवत्।।
[3]शस्त्रं विषं सुरा चाप्रतिग्राह्याणि ब्राह्मणस्य।।
[4]एधोदकयवसकुशलाजाभ्युद्यतयानावसथशफरी-प्रियङ्गुस्रग्गन्धमधुमांसानीत्येतेषां प्रतिगृह्णीयात्।।
[5]अथाप्युदाहरन्ति-
§ गुर्वर्थं दारमुज्जिहीर्षन्नर्चिष्यन्देवतातिथीन्।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः।। इति।।
[6]न मृगयोरिषुचारिणः परिवर्ज्यमन्नम्।।
विज्ञायते हि - अगस्त्यो वर्षसाहस्रिके सत्रे मृगयां चचार। तस्याऽऽसंस्तरसमयाः पुरोडाशा मृगपक्षिणां प्रशस्तानाम्।।
[7]अपि ह्यत्र प्राजापत्याञ्श्लोकानुदाहरन्ति —
उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम्।
भोज्यां प्रजापतिर्मेने अपि दुष्कृतकारिणः।।
[1]अश्रद्दधानस्य भोक्तव्यं चोरस्यापि विशेषतः।
न त्वेव बहुयाज्यस्य यश्चोपनयते बहून्।।
[2]न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते।।
[3]चिकित्सकस्य मृगयोः शल्यहर्तुस्तु पापिनः।
षण्ढस्य कुलटायाश्च उद्यताऽपि न गृह्यते।। इति।।
पाशिनः वागुरिकस्य।

गृर. ४६६

कर्षणार्थं फलपुष्पवृक्षच्छेदानु-
मतिः

[4]पुष्पफलोपगान्पादपान्न हिंस्यात्।।
[5]कर्षणकारणार्थं चोपहन्यात्।।

ब्राह्मणप्रशंसा

[6]ब्राह्मणो भवत्यग्निः।।
'अग्निर्वै ब्राह्मणः' इति श्रुतेः।।
तच्च कथम्।।
तत्र सदो ब्राह्मणस्य शरीरं वेदिः संकल्पो यज्ञः पशुरात्मा रशना बुद्धिः सदो मुखमाहवनीयं नाभ्या - मुदरोऽग्निर्गार्हपत्यः प्राणोऽध्वर्युरपानो होता व्यानो ब्रह्मा समान उद्गाताऽऽत्मेन्द्रियाणि यज्ञपात्राणि य एवं विद्वानिन्द्रियैरिन्द्रियार्थं जुहोतीत्यपि च काठके विज्ञायते।।
अथाप्युदाहरन्ति —
पाति त्राति च दातारमात्मानं चैव किल्बिषात्।
वेदेन्धनसमृद्धेषु हुतं विप्रमुखाग्निषु।।
न स्कन्दते न व्यथते नैनमध्यापतेच्च यत्।
वरिष्ठमग्निहोत्रात्तु ब्राह्मणस्य मुखे हुतम्।।

---

§ अस्य विश्वव्याख्यानं 'सुरातिथ्यर्चन०' इति याज्ञवल्क्यवचने द्रष्टव्यम्।

(१) **वाध.** ४।१-२.

(२) **वाध.** ६।३१-३२.

(३) **वाध.** १३।५५; **गृक.** २४७; **गृर.** ४६६; **निप्र.** २।२८० (शस्त्रं विषम् अग्राह्याणि ब्राह्मणस्य).

(४) **वाध.** १४।१२; **विश्व.** १।१६४ कुशलाजा (मूलफलमध्व-भया) (मधु०) नीत्येतेषां (न्येषामपि) : १।२१३ (उदकाद्येषामपि प्रतिगृह्णीयात्).

(५) **वाध.** १४।१३; **विश्व.** १।२१३ (अथाप्युदाहरन्ति०) र्थं (र्थे) (इति०).

(६) **वाध.** १४।१४, १५.

(७) **वाध.** १४।१६; **यसं.** ८३ (अपि.... रन्ति०) अत्रिः.

(१) **वाध.** १४।१७; **गृर.** ४६६ चोर (चौर) न त्वेव (न त्वेवं).

(२) **वाध.** १४।१८.

(३) **वाध.** १४।१९; **गृर.** ४६६ स्तु पापि (श्च पाशि) षण्ढ (षण्ड) (इति०).

(४) **वाध.** १९।११; **पमा.** २।४३५ पुष्पफलो (फलपुष्पो) स्मरणात्.

(५) **वाध.** १९।१२; **पमा.** २।४३५ कारणार्थं चोप (कार्यार्थमुप) स्मरणात्.

(६) **वाध.** ३०।२-७.

प्रतिषिद्धयाजनप्रतिग्रहौ

द्विजोत्तमस्यानुमतौ

[१]न त्वेवायाज्ययाजनं प्रतिषिद्धिप्रतिग्रहो वाऽस्तीति।।

[२]अथाप्युदाहरन्ति –

**अग्नय इव दीप्यन्ते जपहोमैर्द्विजोत्तमाः।**
**प्रतिग्रहेण शाम्यन्ति उदकेनाग्नयो यथा।।**

प्रतिग्रहेण निषिद्धेनेति शेषः।

+ गृक. १८६

संस्कारार्हो

वर्णः

[३]**सुबीजं चैव सुक्षेत्रे जातं संपद्यते यथा।**
**तथाऽऽर्याज्जात आर्यायां सर्वसंस्कारमर्हति।।**

प्रथमक्षेत्रप्रवेशे कर्षणे बीजावापे च

मुहूर्ताः, धान्यसंग्रहारम्भे

दध्योदनबलिदानम्

[४]**उत्तरासु मघास्वेव स्वात्यां पुष्यानुराधयोः।**
**त्वाष्ट्रे रौद्रे च याम्ये च कुर्याद्भूमिप्रवेशनम्।।**

एतत्प्रथमस्वीकृतभूविषयम्। तथा चोक्तं विधिरत्ने– 'मन्त्रार्य (?) भिरोहिण्यामहिर्बुध्न्ये कुजान्विते। स्वात्युत्तरासु पुष्ये च रौद्रे याम्ये च चैत्रभे। कुर्यात्प्रवेशनं भूषु प्रथमस्वीकृतासु च।।' इति।

आपा. १३५

[५]**वृषवृश्चिककर्काख्याः श्रेष्ठा भूमिप्रवेशने।।**
[६]**शुक्रार्केन्दुज्ञजीवानां प्रशस्ता दिवसास्तथा।**
**आर्क्यारवारौ वर्ज्यौ द्वौ कृष्यारम्भणकर्मणि।।**

**प्राङ्मुखोदङ्मुखो भूत्वा प्रारभेच्च कृषिं स्वयम्।**
**एकां तिस्रोऽथवा पञ्च पश्चाद्रेखाः सुपूजिताः।**
**अत ऊर्ध्वं न कुर्यात्तत्कृष्यारम्भणवासरे।।**
**गोकर्किमृगमीनाश्च मिथुनश्चैव पूजिताः।**
**शेषास्तु वर्जिता नित्यं राशयः कृषिकर्मसु।।**
[१]**मूलमैत्रमघाहे ( ? हस्त) पौष्णशूर्पो( ?) त्तरास्त्रयः।**
**प्राजापत्यपुष्पा( ? त्यश्च पुष्य)श्च स्वातीश्रवणवारुणाः।**
**एते चतुर्दश श्रेष्ठा नक्षत्रा बीजकर्मणि।।**
**सखा( ? विशाखा)दित्यसौम्याश्च धनिष्ठा मध्यमाः स्मृताः।**
**त्वाष्ट्रेन्द्राह्यग्नियाम्यार्द्रात्रि( ? र्द्रा त्रीणि) पूर्वाणि वर्जयेत्।।**
[२]**सिंहो गोकर्किमीनाश्च मकरश्चैव पूजिताः।**
**नृयुक्कुम्भतुला मध्याः शेषाः सर्वे विगर्हिताः।।**
**पञ्चमी सप्तमी पौर्णमासी चैव त्रयोदशी।**
**तिथिरेकादशी चैव प्रशस्ता बीजकर्मणि।।**
**द्वितीया दशमी षष्ठी तिथयो मध्यमाः स्मृताः।**
**शेषास्तु तिथयः सर्वा बीजकर्मणि वर्जिताः।**
**षष्ठी वर्ज्या प्रशस्तानि चराणि करणानि षट्।।**
**शुक्रेन्दुजीवसौम्यानां द्रेक्काणा दिवसांशकाः।**
**उदयाश्चैव पूज्याः स्युर्नान्येषां बीजवापने।।**
**बीजमार्तवसंयोगात्सफलं जायते सदा।**
**अनार्तवयुतं बीजं विनाशमुपगच्छति।।**
**तस्यासु तत्र ( ? § तस्मिन्कलत्र) संयोगो यथा भवति निष्फलः।**
**तस्मादार्तवसंयोगे वापयेद्बीजमुत्तमम्।।**
[३]**इन्द्राग्निविष्णुयाम्यानामन्त्यांशे वानिकर्कर्क( ?)।**
**प्रथमं लवनं कुर्यात् सर्वसंपद्विवृद्धये।।**
**परितः क्षेत्रपालेभ्यो दत्त्वा दध्योदनं बलिम्।**
**मौनीभूत्वा ततः पश्चाद्धान्यसंग्रहमारभेत्।।**

---

\+ गृर. गृकवत्। निप्र. कल्पतरोरनुवादः।

(१) **अप.** ३।३४ षिद्धप्र (षिद्धं प्र); **गृक.** १८६ (अनृणत्वे नायाज्ययाजनं प्रसिद्धमिति ग्रहोऽस्तीति); **गृर.** ४२५ न त्वेवा (न त्व) प्रतिषि (प्रतिनिषि) हो वाऽस्ती (होऽस्ती).

(२) **अप.** ३।३४ जप (तपो); **गृक.** १८६; **गृर.** ४२५; **निप्र.** २।२५८ (अथाप्युदाहरन्ति०) जोत्तमा (जातयः).

(३) **बाल.** १।९४ पृ. २८५.

(४) **आपा.** १३५.

(५) **आपा.** १३६.

(६) **आपा.** १३७.

§ तस्मिन् अनार्तवे अनृतुकाले इत्यर्थः।

(१) **आपा.** १४०.

(२) **आपा.** १४१.

(३) **आपा.** १४२

## वृद्धवसिष्ठः

कृषिसंबन्धिकर्मणां वाणिज्यस्य
पशुकर्मणां शिल्पादिकर्मणां
च मुहूर्ताः

[1]मुक्ताम्बुशङ्खस्फटिकेक्षुरौप्य-
क्षीरौषधोद्यानकृषिक्रियाद्यम्।
स्त्रीनृत्यगीताखिलवास्तुकर्म
शशाङ्कवारे रविवासरोक्तम्।।
उद्यानकृष्यम्बुलतास्त्रपण्य-
माङ्गल्यपुष्यादि सितेऽह्नि कुर्यात्।।
[2]साहसदारुणशत्रु-
प्रशमननिक्षेपकूपकृष्याद्यम्।
विषवधबन्धनदहन-
प्रहरणकार्याणि भरणीषु।।
सुरनरसद्माद्यखिलं
विवाहधनधान्यसंग्रहोपनयम्।
उत्सवभूषणमङ्गल-
मजभे कार्यं सपौष्टिकं कर्म।।
सुरसंस्थापनवास्तु-
क्षेत्रारम्भादि सिध्यते सौम्ये।।
छेदनदहनोच्चाटन-
मारणकृत्यं च रौद्रभे कुर्यात्।।
भूषणवास्तुविधानं
वाहनकृषिकर्म सप्तमे धिष्ण्ये।।
उद्धृतरिपुमदभञ्जन-
साहसवाणिज्यकपटकर्म।
अनलायससंग्रहण-
क्ष्वेडस्तेयादि सर्पभे कार्यम्।।
उपनयनं वास्तुकृषि-
क्षितिपतिकार्यं च चित्रायाम्।।
बीजारोपणशस्त्र-
क्षितिपतिसमरं विभूषणं स्वातौ।।

कृषिभवनविपिनकार्यं
वापीकूपादिबीजनिर्वापम्।
समरविभूषणशिल्पं
विग्रहसंधिश्च मूलनक्षत्रे।।
बीजारोपणवाहन-
भूषणवस्त्रं च वैश्वभे कार्यम्।।
शान्तिकपौष्टिकमङ्गल-
विचित्रकृषिशिल्पमम्बराद्यं च।
धामविधानस्थापन-
मुपनयनं विष्णुभे कार्यम्।।
कृषिभवनाहवमम्बर-
विपिनोद्यानाश्मभूषणं वसुभे।।
अजचरणर्क्षे कुर्यात्-
साहसजलयन्त्रशिल्पकर्माद्यम्।
मृद्धातुर्वादच्छेदन-
कृषिमहिषोष्ट्राजेभविक्रयणम्।।
स्थिरसंज्ञं भचतुष्टय-
मम्बुजयोन्युत्तरात्रितयम्।
नरपतिपत्तनसदनं
प्रवेशबीजादि सिध्यते तत्र।।
सुरसचिवाश्विनीहस्त-
ताराः स्युः क्षिप्रसंज्ञितास्ताश्च।
औषधपण्यविभूषण-
शिल्पलताज्ञानकर्मसिद्धिः स्यात्।।
धातृद्वये कोणपपितृ( ? त्र्य)पुष्ये
हस्तत्रये त्र्युत्तरमैत्रभेषु।
पौष्णे धनिष्ठास्वथ वाऽश्विनीषु
बीजोप्तिरुत्कृष्टफलप्रदा स्यात्।।
ध्रुवोग्रसाधारणदारुणर्क्षे
निक्षिप्तमर्थं त्वथवा प्रनष्टम्।
चौरैर्हृतं दत्तमुपप्लवे वा
विष्ट्यां च पाते तु न लभ्यते तत्।।
मृदुध्रुवक्षिप्रचरेषु मूल-
मघाविशाखासु हलप्रवाहम्।

(१) वृवसं. १३।२, ६.
(२) वृवसं. १४।३, ५,६,७,८,१०,१५,१६,२०,२२,२३,२४, २६,२९,३२, ४२,४८,५५,६०,१००.

धान्याभिवृद्‍ध्यै प्रथमं प्रकुर्यात्
 समुष्कसंपूर्णगुणैर्वृषैश्च।।
त्वाष्ट्रध्रुवश्रीपतिभेषु रिक्ता-
 दशाष्टमीपातदिने पशूनाम्।
यात्राप्रवेशं न कदाचिदेव
 कुर्याच्च तेषामभिवृद्धिकाङ्क्षी।।
पूर्वात्रये पुष्यपुनर्वसौ च
 मित्रत्रये पौष्णवसुद्वये च।
दस्रेन्दुहस्तद्वितयेषु भेषु
 गवां प्रकुर्यात्क्रयविक्रयं हि।।
अर्कगतागतसंस्थं
 भत्रितयं नेष्टमुभयतस्त्विष्टम्।
षोडशधिष्ण्यं नवकं
 शिष्टमनिष्टं च लाङ्गले चक्रे।।
[1]चौलं च बीजरोपं च स्त्रीसङ्गं दन्तकल्पनम्।
काष्ठकर्म रिपूच्चाटं विष्कम्भे तु प्रकारयेत्।।
बीजवापं धनग्राहमायुरारोग्यकर्म च।
विवाहं व्रतबन्धं च ह्यायुष्मति च कारयेत्।।
छेदनं वञ्चनं क्षुद्रमतिगण्डे प्रकारयेत्।।
क्षेत्रसेवां गदायुद्धं गण्डयोगे प्रकारयेत्।।
बीजवापं धनग्राहं विवाहं वस्त्रबन्धनम्।
तडागं सेतुबन्धं च वृद्धियोगे प्रकारयेत्।।
बन्धनं रोधनं चैव घातनं छेदनं तथा।
क्रूराणि बहुकर्माणि व्याघाते तु प्रकारयेत्।।
बन्धनं छेदनं चैव भेदनं विषदीपनम्।
तथाऽन्यत्क्रू( ?न्यक्रू)रकर्माणि परिघे तु प्रकारयेत्।।
बीजवापं गृहोत्साहं धनधान्यादिसंग्रहम्।
सर्वरत्नमहीग्राह्यं शुभयोगे प्रकारयेत्।।
छेदनं क्रूरकर्माणि वैधृतौ तु प्रकारयेत्।।
[2]चरस्थिरद्विजहितः पशुधान्यकरादि यत्।
धातुवादवणिग्धान्यकर्म सर्वं बवे हितम्।।
संधिविग्रहयात्रादि क्रयविक्रयकर्म यत्।
तडागकूपखननं कार्यं तैतिलसंज्ञके।।

(१) वृवसं. १५।९, ११, १४, १८-१९, २१, ३१, ३५, ३९.
(२) वृवसं. १६।५, ८, ११.

वधबन्धविषाग्न्यस्त्रछेदनोच्चाटनादि यत्।
तुरंगमहिषोष्ट्रादिकर्म विष्ट्यां च सिध्यति।।
[1]क्षेत्रारम्भणमखिलं
 भूषणशिल्पादिकार( ? रु)कं वृषभे §।।
मेषवृषोक्तं कर्म
 गजतुरगोष्ट्रादिकं च गोकर्म।
अविकलमाहिषमेष-
 क्षितिपतिसेवादिकं मिथुने।।
परयोगो नृपसेवा
 कृषिकर्मवणिङ्महाहवाद्यखिलम्।
स्थिरकर्माखिलवास्तुनि( ? वास्तु-)
 वेश्म( ? निवेश)शिल्पादि सिंहभे कार्यम्।।
कन्योक्ताखिलकार्यं
 तुलादिमानानि भाण्डकर्माणि।
यात्रावास्तुविधानं
 तौलिनि कृषिकर्म वाणिज्यम्।।
आहवकृषिवाणिज्यं
 क्षितिपतिवादश्च वृश्चिके कार्यम्।।
शम्बरमोचनबन्धन-
 भूषणरत्नादि शिल्पधान्यादि।
क्रयविक्रयमखिलं य-
 द्रिपुहननोद्योगमाहवं मकरे।।
युद्धोपकरणभूषण-
 जलधान्यशिल्पाश्च गोधनाद्यं यत्।
पण्यासवपुरनगर-
 प्रवेशनं कर्म घटे लग्ने।।
यज्जलबन्धनमोचन-
 जलयात्रारत्नभूषणं कर्म।
रथतुरगेभपशूनां
 कार्यं मीनोदये शिल्पम्।।
शुभखचरा घटराशिं
 विसृज्य धनलाभलग्नकर्मस्थाः।

§ लग्ने इति शेषः। एवमुत्तरत्रापि।
(१) वृवसं. २३।२, ३, ५, ७, ८, १०-१२, २०-२१, २३, २९, ३५, ४१-४२.

**अव्ययपगास्त्वशुभखगा**
**विपणिं यदि सेन्दुभार्गवे योगे।।**
**धर्मात्मजनैधनभे**
**चरवर्गे त्वर्थसंग्रहः कार्यः।।**
**शुभखचरे लग्नगते**
**शुभवर्गे चाथ नैधने शुद्धे।**
**पशुसंग्रहणं कार्यं**
**रक्षावृद्धिर्विशेषतस्तेषाम्।।**
**हिमकिरणे लग्नगते**
**जीवे केन्द्रे च चन्द्रसितवारे।**
**रससंग्रहणं कार्यं**
**सस्यारामादिनिखिलजलकर्म।।**
**लग्नगते तुहिनकरे**
**त्रिकोणकेन्द्रस्थितैः शुभदैः।**
**सततं घटभं हित्वा**
**पण्यं कर्म लाभदं भवति।।**
**शक्तियुते भृगुतनये**
**चन्द्रे वाऽसितार्कधरणिसुतैः।**
**बलहीने हिमकिरणे**
**लाभे जीवे कृषिक्रिया लग्ने।।**
**भवरिपुसहजैः पापै-**
**स्त्रिकोणकेन्द्रस्थितैश्च शुभैः।**
**कथितेषु च धिष्ण्येष्वपि**
**शुभलग्ने बीजवापनं कार्यम्।।**

## विष्णुः

वर्णगणना वर्णानां
वृत्तयश्च

**'ओं ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति वर्णाश्चत्वारः।।**

एवं शास्त्रोत्पत्तिनिमित्तमभिधाय भूमिजिज्ञासितान् वर्णाश्रमधर्मानभिधातुं द्वितीयाध्यायमारभते। तत्राऽऽदौ वर्णानाह-ओं ब्राह्मण इति। वक्ष्यमाणधर्माणां त्रयीमूलकत्वद्योतनाय तन्मूलस्य प्रणवस्याऽऽदावुपन्यासः। तेन च प्रणवाधिकारिणां त्रैवर्णिकानामेवास्मिन् शास्त्रेऽधिकारो ध्वनितः। वक्ष्यति चान्ते – 'ये द्विजा धारयिष्यन्ति' इति। ब्राह्मणादयश्चत्वारो वर्णसंज्ञाः। स्वशास्त्रे व्यवहारलाघवाय संज्ञाकरणम्। तत्प्रयोजनं च 'वर्णाश्रमाणां स्वे स्वे धर्मे व्यवस्थापनम्' (विस्मृ. ३।३) इत्यादिषु स्फुटम्। उद्देशेनैव चतुष्ट्वसिद्धावपि चतुर्ग्रहणं 'ब्राह्मणात् क्षत्रियायामुत्पन्नः क्षत्रिय एव। वैश्यायामुत्पन्नो वैश्य एव' इत्यादिशङ्खादि-प्रयोगेणानुलोमानामपि वर्णसंज्ञां वारयितुम्। तेन च तेषां 'राजा राजसूयेन' इत्यादिवर्णधर्मानधिकारः। प्रयोगश्च गौणः तत्तद्दण्डाजिनादिप्राप्त्यर्थः। यद्वा वर्णजात्यनन्तर्गतायाः वैश्यायाः वर्णतावारणाय। तेन च वर्णधर्मानधिकारेण सामान्यधर्मानधिकारः। अन्ये तु अनुलोमानां कथंचित् वर्णान्तर्भावात् वर्णधर्मप्राप्त्या प्रतिलोमजानां तन्निवृत्त्यर्थ-मित्याहुः। इतिकरणं त्रयीमार्गानुवर्तिनामेव वर्णत्वम्, अन्यथा नग्नत्वमिति बोधयितुम्। यथाऽऽह विष्णुपुराणम् – 'ब्राह्मणाद्याश्च ये वर्णाः स्वधर्मादन्यतोमुखम्। यान्ति ते नग्नसंज्ञा हि हीनकर्मस्ववस्थिताः।।' इति। वै.

**अथैतेषां वृत्तयः।।**

दृष्टार्थान् धर्मान् वक्तुं पृथक् प्रतिजानीते – अथेति। एतेषां ब्राह्मणादीनां चतुर्णां वर्णानां वृत्तयः जीवनोपाया उच्यन्ते। वै.

**ब्राह्मणस्य याजनप्रतिग्रहौ।।**

याजनम् आर्त्विज्यम्। प्रतिग्रहः त्यक्तस्य स्वत्वानुकूलो व्यापारः। द्वन्द्वनिर्देशात् अध्यापनमपि, '†चतुर्थस्तु ब्रह्मसत्रेण जीवति' (मस्मृ. ४।९) इति मानवात्। तेनाध्यापनमुभय-रूपं भवति। वक्ष्यति – 'धर्मार्थौ यत्र न स्याताम्' (विस्मृ. २९।८) इति। वै.

**क्षत्रियस्य क्षितित्राणम्।।**

क्षत्रियस्य साक्षादन्योपसर्जनतया वा क्षितेः तद्वासिनां भूतानां त्राणं चौरादिभयापनयनेन वक्ष्यमाणबल्यादानम्, 'क्षत्रियश्चेदन्यस्तमुपजीवेत् तद्वृत्त्या' (गौध. १०।१८) इति गौतमस्मरणात्। वै.

**कृषिगोरक्षवाणिज्यकुसीदयोनिपोषणानि वैश्यस्य।।**

कृषिः कर्षणेन सस्योत्पादनम्। गोरक्षः, रक्षणं रक्षः,

---

(१) **विस्मृ.** २।१, १०-१५.

† मिताक्षरामतमनुमोद्येदं वचनं हेतूकृतम्। ब्रह्मसत्रम् अध्यापनमिति मितक्षरामतम्, शिलोञ्छाविति मेधातिथिमतम्।

गवां रक्षः गोरक्षः गोपालनम्। गावः पशुमात्रोपलक्षणम्, 'पाशुपाल्यं विशः स्मृतम्' (यास्मृ. १।११९) इति योगिस्मरणात्। वाणिज्यं क्रयविक्रयौ। कुसीदं वृद्ध्यर्थं धनप्रयोगः। योनिः यवव्रीह्यादिबीजम्, तस्य पोषणं रक्षणम्, 'बीजानामुप्तिविच्च स्याद्बीजक्षेत्रगुणस्य च' (मस्मृ.९। ३३०) इति मानवात्। एतानि वैश्यस्य वृत्तयः। वै.

**शूद्रस्य सर्वशिल्पानि।।**

शिल्पानि चित्रकरणादीनि। सर्वशब्देन वैश्यवृत्तीनां कृष्यादीनामपि ग्रहणम्। यदाह देवलः – 'शूद्रधर्मस्त्रिवर्णशुश्रूषा कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि' इति। वै.

**आपद्यनन्तरा वृत्तिः।।**

आपदि ब्राह्मणादीनां याजनादिभिरनिर्वाहे अनन्तरा संनिहिता कनीयसी, न तु ज्यायसी, वृत्तिः। यथाऽऽह वसिष्ठः – 'अजीवन्तः स्वधर्मेणानन्तरां कनीयसीं वृत्तिमातिष्ठेरन्। न कदाचिज्ज्यायसीम्' (वाध. २।२२) इति। गौतमस्तु तामप्याह, आपत्कालानुवृत्तौ – 'याजनाध्यापनप्रतिग्रहाः सर्वेषाम्' (गौध. ७।४) इति। तद्विरोधं परिहरति नारदः – 'उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते। मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते।।' इति। शूद्रब्राह्मणयोरुत्कृष्टापकृष्टे कर्मणी न स्तः। परं तु मध्यमे क्षत्रियवैश्यकर्मणी (हित्वा)। यतस्ते सर्वसाधारणे। ततश्च ब्राह्मणस्य क्षत्रियवैश्यकर्मणी भवतः न शौद्रम्, शूद्रस्यापि वैश्यक्षत्रियकर्मणी भवतः, न ब्राह्ममिति पर्यवस्यति। यतः स एवाऽऽह – 'न कथंचन कुर्वन्ति ब्राह्मणाः कर्म वार्षलम्। वृषलः कर्म वा ब्राह्मं पतनीये हि ते तयोः।।' इति। अनेन गौतमीयं सर्वपदं त्रैवर्णिकपरमेव। तेनैकान्तरेत्यपि। यथाऽऽह गौतमः – 'तदलाभे क्षत्रवृत्तिः, तदलाभे वैश्यवृत्तिः' (गौध. ७।६-७) इति । एवमेव क्षत्रियस्य वैश्यवृत्तिः, तदलाभे शूद्रवृत्तिरिति। तत्राप्यानुलोम्ये प्रातिलोम्ये वा पूर्वमनन्तरा, तदसंभवे एकान्तरा, न कथंचन द्व्यन्तरेति। ब्राह्मणस्य विशेषमाह गौतमः – 'सर्वथा तु वृत्तिरशक्तावशौद्रेण। तदप्येके प्राणसंशये' (गौध. ७।२२, २३) इति। वै.

निधिलाभे तस्य वर्णभेदेन
विभागव्यवस्था

**[1]निधिं ब्राह्मणो लब्ध्वा सर्वमादद्यात्।।**

पूर्वोक्तं निधिं ब्राह्मणो लब्ध्वा सर्वमेवाऽऽदद्यात्, राज्ञे न दद्यात्, षट्कर्माभिरतश्चेत्। यथाऽऽह वसिष्ठः – 'ब्राह्मणश्चेदधिगच्छेत् षट्कर्मसु वर्तमानो न राजा हरेत्' (वाध. ३।१४) इति। वै.

**[2]क्षत्रियश्चतुर्थमंशं राज्ञे दद्यात्, चतुर्थमंशं ब्राह्मणेभ्यः, अर्धमादद्यात्।।**

क्षत्रियश्चेत् पूर्वोक्तं निधिं लभते तदा तं चतुर्धा विभज्य एकं चतुर्थांशं राज्ञे, अपरं चतुर्थांशं ब्राह्मणेभ्यो दद्यात्, अवशिष्टमर्धं स्वयमादद्यात्। वै.

**[3]वैश्यस्तु चतुर्थमंशं राज्ञे दद्यात्, ब्राह्मणेभ्योऽर्धम्, चतुर्थमंशमादद्यात्।।**

यदि वैश्यो निधिं लभते तदा तं चतुर्धा विभज्य एकमंशं राज्ञे, अंशद्वयं ब्राह्मणेभ्यो दत्त्वा अवशिष्टं चतुर्थांशं स्वयमादद्यात्। वै.

**[4]शूद्रश्चावाप्तं द्वादशधा विभज्य पञ्चांशान् राज्ञे दद्यात्, पञ्चांशान् ब्राह्मणेभ्यः, अंशद्वयमादद्यात्।।**

यदि शूद्रो निधिं लभते तदा तं द्वादशधा विभज्य पञ्चांशान् राज्ञे, पञ्चांशान् ब्राह्मणेभ्यो दत्त्वा अवशिष्टमंशद्वयं स्वयमादद्यात्। एतेन 'अप्रज्ञायमानं वित्तं योऽधिगच्छेत् राजा तद्धरेत, अधिगन्त्रे षष्ठमंशं प्रदाय' (वाध. ३।१३) इति वासिष्ठे, 'अब्राह्मणोऽप्याख्याता षष्ठमंशं लभते' (गौध. १०।४४) इति गौतमीये च यच्छब्दाब्राह्मणशब्दौ

---

(१) **विस्मृ.** ३।५८; **स्मृच.** २।४५०; **आपा.** ११० त्रुटितो ग्रन्थः.

(२) **विस्मृ.** ३।५९; **स्मृच.** २।४५०-४५१ दद्यात् (दत्त्वा) भ्यः अर्धं (भ्यो दद्यात्। स्वयमर्धं); **आपा.** ११० अर्धं (स्वयमर्धं).

(३) **विस्मृ.** ३।६०; **स्मृच.** २।४५१ (वैश्यश्चतुर्थमंशं राज्ञे दत्त्वा स्वयं चतुर्थमंशं गृहीत्वा ब्राह्मणेभ्योऽर्धं दद्यात्); **आपा.** ११० (वैश्यश्चतुर्थमंशं राज्ञे दद्याद्दद्यादर्धं ब्राह्मणेभ्यो दद्यादेकमंशं स्वार्थमादद्यात्).

(४) **विस्मृ.** ३।६१; **स्मृच.** २।४५१ राज्ञे दद्यात्... अंशद्वय (ब्राह्मणेभ्यो राज्ञे पञ्चांशान् स्वयमंशद्वय); **आपा.** ११० श्चावाप्तं (श्चाप्तं) द्वयमा (द्वयं स्वार्थमा).

शूद्रपरावेव व्याख्यातौ। यत्तु 'इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्' (यास्मृ. २।३५) इति योगीश्वरवाक्ये इतरशब्दः अविद्वद्ब्राह्मणक्षत्रियादिपरो व्याख्यातो मिताक्षरायाम्, तत् क्षत्रियवैश्यविषयकैतद्वचनद्वयादर्शननिबन्धनमिति मन्तव्यम्। यत्तु अपरार्केण इतरशब्दोऽविद्वद्ब्राह्मणमात्रपरोऽभिहितः, तत् गोरक्षकादिब्राह्मणपरतया कथंचित् साधु, 'गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान्। प्रेष्यान् वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेत्।।' (मस्मृ. ८।१०२) इति स्मरणात्। वै.

कुसीदलक्षणम्, वृद्धिविषयकाणि विधानानि, आधिविषयकाणि विधानानि

**[1]अथोत्तमर्णोऽधमर्णाद्यथादत्तमर्थं गृह्णीयात्।।**

एवं पञ्चमे ऋणादानातिरिक्तानि पदानि दण्डाभिधानमुखेन व्याख्यायेदानीं षष्ठाध्याये ऋणादानं निरूपयति। तत्स्वरूपमाह नारदः – 'ऋणं देयमदेयं च येन यत्र यथा च यत्। दानग्रहणधर्माभ्यामृणादानमिति स्मृतम्।।' (नासं. २।१) इति। तत्राधमर्णे देयादेयाधिकारकालप्रकाराः पञ्चवि-(? ञ्च वि) धाः, उत्तमर्णे दानादाने द्विवि(? द्वे वि)धे। तत्रोत्तमर्णस्याऽऽदानविधिमाह, तदाक्षेपादितरेषाम्। अथेत्यधिकारः। उत्तमर्णः ऋणप्रयोक्ता अधमर्णात् ऋणग्रहीतुः यथादत्तं यया संख्यया, यया वृद्ध्या, यया परिभाषया, यत् द्रव्यं दत्तं तत् तथैव गृह्णीयात्। वै.

**[2]द्विकं त्रिकं चतुष्कं पञ्चकं च शतं वर्णानुक्रमेण प्रतिमासम्।।**

वृद्धिपरिमाणमाह – द्विकमित्यादि। द्वौ वृद्धिर्दीयते यस्मिन् शते तत् द्विकं शतम्। एवं त्रिकादिशब्देषु। 'तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते' (पासू. ५।१।४७) इति कन्। शते द्वौ त्रीन् चतुरः पञ्च च ब्राह्मणादिवर्णादधमर्णात् प्रतिमासमुत्तमर्णो वृद्धिं गृह्णीयात्। इयं चाबन्धकालग्नके प्रयोगे वृद्धिः। सबन्धकादौ तु विशेषमाह व्यासः – 'सबन्धे भाग आशीतः षाष्टो भागः सलग्नके। निराधाने द्विकशतं मासलाभ उदाहृतः।।' इति। सेयं वृद्धिः प्रतिमासं गृह्यते इति कालिका। अन्या अपि तिस्रः नारदेनोक्ताः – 'कायिका कालिका चैव कारिता च तथा परा। चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा।।' (नासं. २।८७) इति। तल्लक्षणमाह स एव – 'कायाविरोधिनी शश्वत् पणपादादि कायिका। प्रतिमासं स्रवन्ती च वृद्धिः सा कालिका मता।। वृद्धिः सा कारिता नाम यर्णिकेन स्वयंकृता। वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता।।' (नासं. २।८८-८९) इति। अत्र विशेषमाह बृहस्पतिः – 'वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्तिता। षड्विधाऽन्यैः समाख्याता तत्त्वतस्तां निबोधत।। कायिका कालिका चैव चक्रवृद्धिस्तथाऽपरा। कारिता च शिखावृद्धिर्भोगलाभस्तथैव च।। कायिका कर्मसंयुक्ता' इति। अन्यदुक्तसमानम्। 'प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा मता। गृहात् तोषः शदं क्षेत्राद्भोगलाभः प्रकीर्तितः।।' इति। यदा तु शिखावृद्धिः कायिकैव, 'पणपादादि कायिका' इति लक्षणात्, तदा पञ्चधा। यदा तु कर्मकरणं कायिकालक्षणं तदा षोढेत्यर्थः। तोषः भोगः, शदः धान्यमिति। वै.

**'सर्वे वर्णा वा स्वप्रतिपन्नां वृद्धिं दद्युः।।**

कारितावृद्धिमाह – सर्व इति। सर्वे ब्राह्मणादयोऽधमर्णाः स्वप्रतिपन्नां स्वेच्छयाऽङ्गीकृतां वृद्धिं सर्वेषु वर्णेषु दद्युः। अनुवृत्तावपि वर्णग्रहणमनुलोमजप्रतिलोमजप्राप्त्यर्थम्। यथाऽऽह योगीश्वरः – 'दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु' (यास्मृ. २।३८) इति। अधमर्णविशेषेण वृद्धिविशेषमाह स एव – 'कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्' (यास्मृ. २।३८) इति। वै.

**[2]अकृतामपि वत्सरातिक्रमेण यथाविहितम्।।**

(१) द्विकत्रिकादिनेत्यर्थः। ममु. ८।१५२

(२) अकृतामपि वृद्धिमाह – अकृतामपीति। सर्वे सर्वेषु याचितादावकृतामपि वृद्धिं संवत्सरातिक्रमे यथाविहितं द्विकशतादिक्रमेण दद्युः। यथाऽऽह कात्यायनः – 'यो याचितकमादाय तमदत्त्वा दिशं व्रजेत्। ऊर्ध्वं संवत्सरात्

---

(१) **विस्मृ.** ६।१; **गृक.** २२० थादत्त (था दत्त) वसिष्ठः.

(२) **विस्मृ.** ६।२; **गृक.** २२० (च०) वसिष्ठः.

---

(१) **विस्मृ.** ६।३; **ममु.** ८।१५२ (वृद्धिं दद्युः) एतावदेव; **मच.** ८।१५२ ममुवत्.

(२) **विस्मृ.** ६।४; **ममु.** ८।१५२ (अकृता अपि वत्सरातिक्रमे यथाभिहिता वर्णक्रमेण); **मच.** ८।१५२ (अकृतामपि) एतावदेव.

तस्य तद्धनं वृद्धिमाप्नुयात्।।' इति। एतच्चाप्रतियाचिते। प्रतियाचिते तु स एवाऽऽह – 'कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत्। ऊर्ध्वं मासत्रयात् तस्य तद्धनं वृद्धिमाप्नुयात्।।' इति। कृतोद्धारं याचितकम्। देशान्तरगमनाभावे तु याचनकालादेव वृद्धिमाह स एव – 'स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित्। तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत्।।' इति। ततः याचनकालात्। प्रीतिदत्ते तु वत्सरार्धवृद्धिमाह नारदः – 'न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित्। अनाकारितमप्यूर्ध्वं वत्सरार्धाद्धि वर्धते।।' (नासं. २।९३) इति। याचिते तु तस्मिन् अर्वागपि वृद्धिविशेषमाह स एव – 'प्रीतिदत्तं तु यत् किंचिन्न च वर्धत्ययाचितम्। याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम्।।' इति। अत्रापि याचनकालादेव वृद्धिः। अयाचिते तु स एव – 'पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः। वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः।।' इति। पण्यमूल्ये वृद्ध्यभावः प्रवासप्रतियाचिताभावे, न्यासे यथावस्थाने प्रतियाचनाभावे च ज्ञेयः। संवर्तोऽपि – 'न वृद्धिः स्त्रीधने लाभे निक्षिप्ते च यथास्थिते। संदिग्धे प्रातिभाव्ये च यदि न स्यात् स्वयं कृता।।' इति। स्त्रीधने ऋणत्वेन गृहीते, लाभे क्रीतस्य वस्तुनः देयत्वेन स्वीकृते यथास्थिते अपरावर्तिते संदिग्धे अनिर्णीते ऋणादौ, प्रातिभाव्ये प्रतिभुवा देये। वै.

**[1]आध्युपभोगे वृद्ध्यभावः।।**

क्वचित् वृद्ध्यपवादमाह – आध्युपभोगे इति। गृहीते धने विश्वासार्थमधमर्णेनोत्तमर्णस्य यत् वस्तु आधीयते स आधिः। तल्लक्षणमाह नारदः – * 'अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः। जङ्गमः स्थावरश्चैव स पुनर्द्विविधः स्मृतः।। विश्वासार्थर्णशोध्यश्च स पुनर्द्विविधः स्मृतः। कृतकालोपनेयश्च यावद्देयोद्यतस्तथा। स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च।।' इति। ऋणं शोध्यं यस्यासौ ऋणशोध्यः, ऋणशोधनार्थ इति यावत्। कृते परिभाषिते काले उपनीयते मोच्यते इति कृतकालोपनेयः। यावद्देयं यावदृणदानं स्थापितो यावद्देयोद्यतः गोप्यः गोपनीयः। भोग्यः भोगार्हः। तत्र गोप्यस्याऽऽधेर्भोगे उत्तमर्णो वृद्धिं न लभेतेत्यर्थः। यथाऽऽह योगीश्वरः – 'गोप्याधिभोगे नो वृद्धिः' (यास्मृ. २।५९) इति। स्वल्पभोगे तु अर्धवृद्धिहानिः। यथाऽऽह मनुः – 'यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः। तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः'।। (मस्मृ. ८।१५०) इति। यत्तु 'अल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या, समयातिक्रमात्' इति विज्ञानेश्वरव्याख्यानम्, तन्मनुवचनविरोधादुपेक्ष्यम्। भोगस्यापि सवृद्धिकस्यात्यन्तभोगेन व्यवहारक्षमत्वे वृद्ध्यभावः, 'सोपकारेऽप्यहापितः' इति बृहस्पतिस्मरणात्। क्वचित् धनदानेन सह वृद्धिनाशस्य विकल्पमाह कात्यायनः – 'अकाममननुज्ञातमाधिं यः कर्म कारयेत्। भोक्ता कर्मफलं दाप्यो वृद्धिं च न लभेत सः।।' इति। कर्मफलं वेतनम्। दासाद्याधिविषयमेतत्। वै.

**दैवराजोपघातादृते विनष्टमाधिमुत्तमर्णो दद्यात्।।**

आत्यन्तिकाधिविनाशे त्वाह – दैवे इति। विविधमप्याधिं स्वदोषेण विनष्टमुत्तमर्णो मूल्यकल्पनयाऽधमर्णाय दद्यात्। यथाऽऽह व्यासः – 'ग्रहीतृदोषान्नष्टश्चेद्बन्धो हेमादिको भवेत्। ऋणं सलाभं संशोध्य तन्मूल्यं दाप्यते धनी।।' इति। विकृतश्चेत् पूर्ववत् कृत्वा देयः, 'नष्टो देयो विनष्टश्च' (यास्मृ. २।५९) इति योगिस्मरणात्। विनष्टोऽत्र विकृतिगतः। परंतु दैवराजोपघातं विना, 'विनष्टे मूलनाशः स्याद्दैवराजकृतादृते' (नासं. २।१०७) इति नारदस्मरणात्। मूलनाशस्त्वाधिमूल्यसाम्ये। मूल्यं वृद्धेरप्युपलक्षणम्, दण्डापूपिकान्यायात्। न्यूनाधिकमूल्ये त्वाधौ सवृद्धिकमृणं दत्त्वा मूल्यं गृह्णीयात्, 'बहुमूल्यं यत्र नष्टमृणिकं तत्र तोषयेत्' इति बार्हस्पत्यात्। दैवराजोपघाते तु आध्यन्तरमृणं वा सवृद्धिकमधमर्णो दद्यात्, 'स्रोतसाऽपहृते क्षेत्रे राज्ञा चैवापहारिते। आधिरन्योऽथ कर्तव्यो देयं वा धनिने धनम्।।' इति स्मरणात्। स्रोतसेति दैविकमात्रोपलक्षणम्। रक्ष्यमाणस्यासारत्वे आध्यन्तरं वा देयम्, † 'रक्ष्यमाणोऽप्यसारताम्। यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत्।।' (यास्मृ. २।६०) इति योगिस्मरणात्। क्वचिदविनष्टमप्याधिमुत्तमर्णो

* एतदादिषु पञ्चसु श्लोकार्धेषु प्रथमचतुर्थपञ्चमान्यर्धानि (नासं. २।१०५, १०६) मूलपुस्तके उपलभ्यन्ते।

(१) **विस्मृ.** ६।५-१७, ४०.

† 'धनभाग्वा धनी भवेत्' इत्यर्थकमत्रत्यं वाक्यं त्रुटितं स्यात्।

न दद्यादित्याह योगीश्वरः – 'आधिः प्रणश्येद् द्विगुणे धने यदि न मोक्ष्यते। काले कालकृतो नश्येत्' (यास्मृ. २।५८) इति। वृद्ध्या द्विगुणीभूते मूले यद्याधिर्न मोच्यते, स चाऽऽधिर्नश्येत् उत्तमर्णस्यैव स्वं भवतीत्यर्थः। द्वैगुण्यं चेदं हिरण्याभिप्रायेण। वस्त्रधान्यादौ ‡चतुस्त्रैगुण्यादि द्रष्टव्यम्। तथैव कृतकालावधिराधिः काले न मोच्यते चेत् नश्यतीति। अत्र विशेषमाह व्यासः – 'हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधेः। बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च। तदन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात्।।' इति। द्वैगुण्ये अवधौ चातीते चतुर्दशदिनानन्तरमाधौ अधमर्णस्य स्वत्वं निवर्तते; उत्तमर्णस्य स्वत्वमुत्पद्यत इत्यर्थः। इदं च हिरण्यादिविषयम्, हिरण्योपादानात्। वस्त्रादौ च बृहस्पतिः – 'पूर्णेऽवधौ शान्तलाभे बन्धस्वामी धनी भवेत्। अनिर्गते दशाहे तु ऋणी मोक्षितुमर्हति।।' इति। शान्तलाभे वैगुण्यादिना वृद्ध्यनुत्पत्तौ। अयं चाऽऽधिनाशः ऋणसमानाधिविषयः। न्यूनाधिकमूल्ये त्वाधौ द्विगुणं द्रव्यमेव देयम्, न नाशः, 'चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम्' (यास्मृ. २।६१) इति योगिस्मरणात्। चरित्रं श्रद्धाश्रयः, तेन यत् न्यूनाधिकमूल्यं बन्धकीकृतं तत्रेत्यर्थः। ऋणिकासंनिधौ तु बृहस्पतिः – 'हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके। आधिं राज्ञो निवेद्याथ विक्रीणीत ससाक्षिकम्। सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत्।।' इति। भोग्याधेस्तु न नाशः, 'फलभोग्यो न नश्यति' (यास्मृ. २।५८) इति योगिस्मरणात्। अकृतकालविषयं चैतत्। वै.

**अन्तवृद्धौ प्रविष्टायामपि।।**

आधिविशेषे मोचनकालमाह – अन्तवृद्धाविति। आधिर्द्विविधः – विश्वासार्थः, ऋणापाकरणार्थश्च। ऋणापाकरणार्थोऽपि त्रिविधः – वृद्धिमात्रापाकरणार्थः, मूलमात्रापाकरणार्थः, सवृद्धिकर्णापाकरणार्थश्च। यथा – 'एतद्गोमहिष्याद्युत्पन्नेन द्रव्येण वृद्धिर्मूलं सवृद्धिकमृणं वा त्वया ग्राह्यम्' इति परिभाष्य अधमर्णेनोत्तमर्णायाऽऽदौ मध्ये अन्ते वा गवादि दीयते इति। तमेनं क्षयाधिमाचक्षते लौकिकाः। तत्र वृद्धिमात्रापाकरणार्थं यदाधीकृतं गवादि, तदुत्पन्नेन द्रव्येणान्तवृद्धौ, वृद्धेरन्तमन्तवृद्धिः वृद्ध्यन्तम्, नाश इति यावत्। तस्मिन् प्रविष्टे प्राप्ते मूलद्रव्यं गृहीत्वा आधिमुत्तमर्णोऽधमर्णाय दद्यात्। यथाऽऽह व्यासः – 'फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं च सामकम्। अतोऽन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात्।।' इति। फलभोग्यं फलभोगार्थं दत्तं वृद्धिसमदानेन पूर्णकालमाधिं सामकं सममेव सामकं मूलद्रव्यं दत्त्वा प्राप्नुयात् ऋणी। यदि पुनः अन्तरा मध्ये एव सवृद्धिकं धनं ददाति तदा तु अपूर्णेऽपि काले बन्धं प्राप्नुयादिति। अस्यापवादमाह बृहस्पतिः – 'यदि प्रकर्षितं तत् स्यात् तदा न धनभाग्धनी। ऋणी च न लभेद्‌बन्धं परस्परमतं विना।।' इति। यदि तत् बन्धकं प्रकर्षितं वृद्धेरप्यधिकफलं स्यात् तदा न धनभाक् धनी, परिभाषितादधिकस्य प्राप्तत्वात्। तत्रापि यावदधिकं प्राप्तं तावत् मूलं न्यूनं कार्यम्। यावत् न प्राप्तं तावत् देयमेव। अथ वृद्धेरप्यपर्याप्तम्, तदा मूलं दत्त्वाऽपि न लभेत् बन्धम्, किंतु वृद्धिशेषमपि दत्त्वैवेत्यर्थः। पुनरुभयापवादमाह – परस्परमतं विनेति। (परस्परमतं विना; ?) परस्परमते तु उत्कृष्टमपि यावन्मूलदानं भुङ्क्ते; निकृष्टमपि मूलदानेन लभतेऽधमर्ण इति। वै.

**न स्थावरमाधिमृते वचनात्।।**

अस्यापवादमाह – न इति। 'यावद्‌वृद्धिलाभमेव त्वयेदमाम्रवणादि उपभोक्तव्यम्' इति वचनव्यक्तिं विना यत्र वृद्ध्यपाकरणायाऽऽम्रवणादि स्थावरमाधीकृतं तत्रान्त्य- (? न्त)वृद्धिप्रवेशेऽपि न तदुत्तमर्णो दद्यात्, किंतु तदनन्तरमपि भुञ्जीतैव यावन्मूललाभम्, 'आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते' (यास्मृ. २।९०) इति योगिस्मरणात्। स्थावरमिति वचनात् जङ्गमे गवादौ विनाऽपि परिभाषावचनं वृद्धिलाभे मोक्षो गम्यते; भोगाधिक्ये फलप्रत्यावृत्तिस्मरणात्। यथाऽऽह कात्यायनः – 'अकाममननुज्ञातमाधिं यत् कर्म कारयेत्। भोक्ता कर्मफलं दाप्यो वृद्धिं वा न लभेत सः।।' इति। अकामं बलात्कारेण, अननुज्ञातम् अपरिभाषितमाधिं गवादि यत् कर्म कारयेत् तत्फलं दुग्धादिद्रव्यं भोक्ता उत्तमर्ण एव अधमर्णस्य दाप्यः, वृद्धिर्वा( ? द्धिं वा) न हार्य इति। 'ऋते वचनात्' इत्यनेन तादृशपरिभाषावचने तावदेव भोगः, अधिके भोगे मूलनाशोऽपीत्यवगम्यते, 'यदि प्रकर्षितम्' इत्यादिपूर्वोक्तबृहस्पतिवचनात्। वै.

‡ अस्य शब्दस्य साधुत्वं चिन्तनीयम्।

**गृहीतधनप्रवेशार्थमेव यत् स्थावरं दत्तं तद्गृहीतधनप्रवेशे दद्यात्।।**

मूलापनयनार्थस्याऽऽधेर्मोचनकालमाह – गृहीत इति। गृहीतं धनं मूलम्, तत्प्रवेशार्थं तत्प्रतिपादनार्थं यत् स्थावरं क्षेत्रादि बन्धकत्वेन दत्तमधमर्णेन तत् बन्धकं गृहीतधनस्य मूलस्य प्रवेशे प्रत्यागमे सति उत्तमर्णो दद्यात्। गृहीतधनेति सवृद्धिकस्याप्युपलक्षणम्। तेन सवृद्धिकमूलापाकरणार्थोऽपि आधिः उत्पन्ने तावति द्रव्ये प्रविष्टे सति मोच्य इति। यथाऽऽह बृहस्पतिः – 'क्षेत्रादिकं यदा भुक्तमत्यन्तमधिकं ततः। मूलोदयं प्रविष्टं चेत् तदाऽऽधिं प्राप्नुयादृणी।। परिभाष्य यदा क्षेत्रं दद्यात्तु धनिके ऋणी। प्रविष्टे सोदये द्रव्ये प्रदातव्यं त्वया मम।।' इति। उक्तपरिभाषया ततः मूलात् अत्यन्तमधिकं वृद्धेरपि पर्याप्तं यदा भुक्तम्, तेन मूलोदये प्रविष्टे सति आधिं प्राप्नुयादित्यर्थः। आधिमोचने कालान्तरमप्याह योगीश्वरः – 'उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत्। प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात्।।' (यास्मृ. २।६२) इति। उत्तमर्णे असति तद्बन्धुहस्ते द्रव्यं दत्त्वाऽपि गृह्णीयादित्यर्थः। पक्षान्तरमप्याह स एव – 'तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः' (यास्मृ. २।६३) इति। वै.

**दीयमानं प्रयुक्तमर्थमुत्तमर्णस्यागृह्णतस्ततः परं न वर्धते।।**

पुनरपि क्वचिदपवादमाह – दीयमानमिति। अधमर्णेन दीयमानमर्थं यद्युत्तमर्णः वृद्धिलोभेन न गृह्णाति तदा ततः परं न वर्धते मध्यस्थहस्ते स्थापितं चेत्। यथाऽऽह योगीश्वरः – 'दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्। मध्यस्थस्थापितं तत् स्याद्वर्धते न ततः परम्।।' (यास्मृ. २।४४) इति। वै.

**हिरण्यस्य परा वृद्धिर्द्विगुणा।।**

वृद्धेः परमावधिमाह – हिरण्यस्येति। वृद्ध्यर्थं प्रयुक्तस्य हिरण्यस्य सुवर्णरजतमुद्रादेः स्वस्वकालाग्रहणेनैकीभूता वृद्धिरेकदैव गृह्यमाणा द्विगुणैव परा, नातोऽधिका ग्राह्येति। यथाऽऽह मनुः – 'कुसीदवृद्धिर्द्विगुणं नात्येति सकृदाहृता' (मस्मृ. ८।१५१) इति। यद्यपि मूलाद्द्विगुणेति मूलेन सह त्रैगुण्यं प्रतीयते, तथापि 'ग्राह्यं स्याद्द्विगुणं द्रव्यं प्रयुक्तं धनिना सदा' इति कात्यायनेन प्रयुक्तस्यैव द्वैगुण्याभिधानात् मूलेन सह द्वैगुण्यं सिध्यति। एवमुत्तरत्रापि ज्ञेयम्। वै.

**धान्यस्य त्रिगुणा।।**

प्रयुक्तं धान्यं चिरमगृहीतवृद्धिकं त्रिगुणमेव ग्राह्यम्, नाधिकम्। वै.

**वस्त्रस्य चतुर्गुणा।।**

प्रयुक्तं वस्त्रं चिरमगृहीतवृद्धिकं चतुर्गुणमेव ग्राह्यम्, नाधिकम्। वै.

**रसस्याष्टगुणा।।**

रसस्य तैलघृतादेः अगृहीतवृद्धिकस्याष्टगुणैव वृद्धिः, नाधिका। बृहस्पतिस्तु वृद्धिवैलक्षण्यमाह – 'हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके। धान्ये चतुर्गुणा प्रोक्ता शदे वाह्ये लवेषु च।।' इति। कुप्यं त्रपुसीसादि। शदः क्षेत्रफलम्। वाह्यः बलीवर्दादिः। लवः ऊर्णाचामरादिः। 'उक्ता पञ्चगुणा शाके बीजस्था षड्गुणा स्मृता। लवणस्वेदमद्येषु वृद्धिरष्टगुणा स्मृता। गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके।।' इति। बीजानि पूगपनसादीनाम्। चकारात् तैलादेरपि, 'तैलानां चैव सर्वेषां मद्यानां चैव सर्पिषाम्' इति कात्यायनस्मरणात्। तत् देशकालादिवशेन व्यवस्थाप्यम्। एवं स्मृत्यन्तराण्यपि। वै.

**संततिः स्त्रीपशूनाम्।।**

यदा पुनः कश्चित् स्वयं पोषणासमर्थः तत्पुष्टिसंततिकामनया स्त्रीः दासीः, पशून् गवादीन् वा प्रयुङ्क्ते, क्षीरपरिचर्यार्थी च गृह्णाति, तदाऽऽसां वृद्धिः संततिरेव भवति, नान्या। अधमर्णगृहे यान्यपत्यानि जनयन्ति तावद्भिरपत्यैः सहिताः प्रत्यर्पणीया इत्यर्थः। यदि ता न प्रसूयन्ते, तदा स्वगृहस्थाः प्रसूता एकापत्यसहिताः तत्स्थाने देया इति, वृद्धिभूतायां संततौ संख्यान्तरप्रापकाभावेन प्रथमोपस्थितैकत्वपरित्यागे कारणाभावात्। वै.

**किण्वकार्पाससूत्रचर्मायुधेष्टकाङ्गाराणामक्षया।।**

अक्षयां वृद्धिमाह – किण्वे इति। किण्वं सुरोपादानकारणं मधूकपुष्पादि, 'सुराबीजं तु किण्वकम्' इति शाङ्र्गधरस्मरणात्। कार्पासः तूलम्। सूत्रं प्रसिद्धम्। चर्म दृतिः। वर्मेति पाठे कवचम्। आयुधं शस्त्रम्। इष्टकाङ्गारौ

प्रसिद्धौ। एषामक्षया वृद्धिः कदाऽपि न निवर्तत इत्यर्थः। यथाऽऽह बृहस्पतिः – 'तृणकाष्ठेष्टकासूत्रकिण्ववर्मास्थिचर्मणाम्। हेतिपुष्पफलानां च वृद्धिस्तु न निवर्तते।।' इति। वै.

**अनुक्तानां द्विगुणा।।**

प्रतिद्रव्यं वक्तुमशक्तेर्लाघवार्थमाह – अनुक्तानामिति। पूर्वत्रानुक्तानां द्रव्याणां मणिमुक्ताप्रवालादीनां द्विगुणा परा वृद्धिः। यथाऽऽह कात्यायनः – 'मणिमुक्ताप्रवालानां सुवर्णरजतस्य च। तिष्ठति द्विगुणा वृद्धिः फालकैटाविकस्य च।।' इति। तिष्ठति अवर्धमाना। फालं फलभवम्। कैटं कीटभवं त्रसरादि। आविकं कम्बलादि। वै.

**यो गृहीत्वा ऋणं सर्वं श्वो दास्यामीति सामकम्। न दद्याल्लोभतः पश्चात् तथा वृद्धिमवाप्नुयात्।।**

कृतावधिकामकृतां वृद्धिमाह – य इति। यः सर्वमृणं हिरण्यं धान्यादि वा गृहीत्वा श्वः परश्वो वेत्यादिकृते अवधौ सामकं सममेव दास्यामीति प्रतिज्ञापयंश्च (? प्रतिजानानश्च) लोभादिना कृतेऽवधौ न दद्यात्, स तदवध्येव यथा विहिता द्विकशतादिक्रमेण तथा वृद्धिम् अवाप्नुयात् दद्यात्। अनेन कृतावध्यपगमे यथाविहितवृद्धिर्भवतीति बोधितम्। वै.

सवर्णोत्पत्तिः

**'समानवर्णासु पुत्राः सवर्णा भवन्ति।।**

भर्त्रपेक्षया समानवर्णासु। इदमुपलक्षणम्, तेन प्रशस्तविवाहोढासु अक्षतयोनिषु असमानार्षगोत्रासु असपिण्डासु यवीयसीषु भ्रातृमतीषु चेत्यपि द्रष्टव्यम्। तासु भर्त्रा जनिताः पुत्रा मातृपितृसमानवर्णा भवन्ति। यथाऽऽह बौधायनः - 'एतानार्यस्य विवाहानाहुः। एतैः संस्कृतायामुत्पन्नास्तज्जातीया भवन्ति नान्ये' इति। एतान् ब्राह्मादींश्चतुरः। आर्यस्य त्रैवर्णिकस्य। आर्यग्रहणात् शूद्रस्य विवाहान्तरोढायामपि जातस्य सवर्णत्वं भवति, न त्वनूढायाम्। मनुरपि- 'सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते।।' (मस्मृ. १०।५) इति। आनुलोम्यं यवीयस्त्वं कन्यायाः। न तु वर्णानुलोम्यम्, तस्य जात्यन्तरापादकत्वात्। तेनावरात् ज्यायस्यामुत्पन्नस्य न वर्णतेति। सगोत्रादिषु तु चण्डालत्वमेव स्मर्यते –'आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः। सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः।।' इति। भ्रातृमतीत्वं 'भ्राता लाजानावपति' इति लाजावापे भ्रातुः कर्तृत्वेन तदभावे होमवैगुण्येन संस्कारानुत्पत्तेरावश्यकम्। न च भ्रातृस्थानीयेन तत्सागुण्यम्, तस्याप्यभावे वैगुण्यतादवस्थ्यात्। एतेन कानीनसहोढपौनर्भवगूढोत्पन्नकुण्डगोलकानामसवर्णत्वमुक्तं भवति, ब्राह्मण्यादिजातेः शास्त्रैकसमधिगम्यत्वात्, अन्यथा जातिविवेकशास्त्रानर्थक्यप्रसङ्गात्। न चाभिव्यञ्जकनिरूपणाय तत्, तावताऽप्यलौकिकत्वसिद्धेः, यूपाहवनीयादिवत्। न च जन्यजनकभाव एवाभिव्यञ्जकः, स च मातुः प्रत्यक्ष एवेति वाच्यम्, तावन्मात्रस्यातिप्रसक्तत्वेन जन्यजनकयोरपि ब्राह्मण्यादिविशेषणाभ्युपगमात्। तज्ज्ञानं न मातुरपि प्रत्यक्षेण। नापि शब्देन, प्रत्यक्षाधीनत्वात् तस्येति तस्यापि प्रत्यक्षत्वासिद्धेः। एवं च स्त्रियाः स्वजातिः पुरुषजातिर्वा यदि न प्रत्यक्षा, तदा कथमिव स्वपुत्रजातिः प्रत्यक्षा स्यात्? तस्मात् शास्त्रजन्यानुभवमूलकानादिस्मरणपरंपराप्रमाणिकैव ब्राह्मण्यादिजातिरिति साधु मन्यताम्। वस्तुतस्तु 'ब्राह्मण्यमलौकिकम्, लौकिकार्थक्रियासाधनत्वाभावात्, आहवनीयादिवत्' इत्यनुमानादेवालौकिकम्। तत्र यद्यपि गमनभोजनादिकारित्वं ब्राह्मणस्याप्यस्ति, तथापि तत्र ब्राह्मण्यपुरस्कारेण, किंतु प्राणित्वादिनैव, ताद्रूप्येण त्वलौकिकक्रियायामेव साधनत्वात्। यत्रापि 'ब्राह्मणाः शतं दण्ड्याः' इत्यादिदुष्टराजादेशादौ ब्राह्मण्यमेव दण्डप्रयोजकम्, तत्राप्यर्थपदेन तन्निवृत्तिः, तस्य बलवदनिष्टानुबन्धीष्टार्थत्वात्। न च दण्डनमर्थवती क्रिया, दोषश्रवणात्। अनिष्टातिरिक्ता तु सर्वाऽपीष्टक्रिया सामान्यविधिनाऽर्थवत्येवेति न क्वाप्यसिद्धिः। अत एव वसिष्ठः – 'प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषात्' इत्युक्त्वा 'ब्राह्मणोऽस्य मुखमासीदित्यपि निगमो भवति' इत्याह। एवं क्षत्रियत्वाद्युन्नेयमित्यलं प्रपञ्चेन। विशेषस्तु मिताक्षराटीकायां प्रमिताक्षरायामस्मत्कृतायामवगन्तव्यः। वै.

(१) **विस्मृ.** १६।१; **अप.** १।९१ पृ. ११७ सवर्णा + (एव); **पमा.** ५१२; **बाल.** १।९१ पृ. २८१.

असदुपायेन धनार्जने प्रायश्चित्तम्, प्रतिग्रह-
वर्जनप्रशंसा, अवर्जनीयः प्रतिग्रहः
तदपवादश्च, साधवः
प्रतिग्रहार्हधनाः

**[1]यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसा तथा।।**

परावृत्तिविपरिवृत्तिप्रायश्चित्ते (?) पूर्वकर्तव्यमाह – यदिति। गर्हितेन शास्त्रनिषिद्धेन क्षत्रादिकर्मणा यद्धनमर्जयन्ति, तत् परित्यज्यैव जपतपसी कुर्युः। गर्हितपदोपादानात् निषिद्धप्रतिग्रहादावप्येतदेव ज्ञेयम्। तच्चोक्तमेव प्राक्। वै.

**[2]सर्व एवाभोज्याश्चाप्रतिग्राह्याः।।**

त्यक्तधर्मानाह – सर्व इति। *त्यक्ताः सर्वेऽपि अभोज्याः न भोज्यं भोजनार्हमन्नं येषां तादृशाः। अप्रतिग्राह्याः न प्रतिग्रहार्हं धनं येषां ते तथा। चकारादसंभाष्याश्च। वै.

**अप्रतिग्राह्येभ्यश्च प्रतिग्रहप्रसङ्गं वर्जयेत्।।**

प्रसङ्गादाह – अप्रतिग्राह्येभ्य इति। अप्रतिग्राह्याः पूर्वोक्ताः, तेभ्यः प्रतिग्रहाभ्यासो न कार्यः। प्रसङ्गवचनात् आपदि सकृत्प्रतिग्रहे न दोष इत्युक्तं भवति, 'आपद्गतः संप्रगृह्णन् भुञ्जानोऽपि यतस्ततः। न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः।।' (यास्मृ. ३।४१) इति योगिस्मरणात्। वै.

**प्रतिग्रहेण ब्राह्मणानां ब्राह्मं तेजः प्रणश्यति।।**

प्रतिग्रहवर्जने हेतुमाह – प्रतिग्रहेणेति। ब्राह्मं ब्रह्मलोकार्हम्। ब्राह्म्यमिति पाठे वेदाभ्यासजन्यः तेजोविशेषः प्रतिग्रहतारतम्येन प्रणश्यति। वै.

**द्रव्याणां वाऽविज्ञाय प्रतिग्रहविधिं यः प्रतिग्रहं कुर्यात् स दात्रा सह निमज्जति।।**

प्रतिग्रहविध्यज्ञाने दोषान्तरमाह – द्रव्याणामिति। द्रव्याणां गवाश्वादीनां प्रतिग्रहविधिम् 'अनुमन्त्रयेत प्राण्यभिमृशेदप्राणि' (आश्रौ. ५।१३) इत्यादिकमजानतः प्रतिग्रहे दात्रा सह नरकपातः। वै.

**प्रतिग्रहसमर्थश्च यः प्रतिग्रहं वर्जयेत् स दातृलोकमवाप्नोति।।**

दानं विनैव दानफलोपायमाह – प्रतिग्रहसमर्थ इति। प्रतिग्रहे सामर्थ्यं तपोविद्याचाराः। तद्वानपि यस्तु प्रतिग्रहपराङ्मुखो भवति, स तद्दानजन्यं लोकमाप्नोति। वै.

**एधोदकमूलफलाभयामिषमधुशय्यासनगृहपुष्पदधिशाकांश्चाभ्युद्यतान् न निर्णुदेत्।।**

प्रतिग्रहनिषेधापवादमाह – एधोदकेति। एधः काष्ठम्। उदकं जलम्। मूलं कन्दादि। फलम् आम्रादि। अभयं भयात् त्राणम्। आमिषं भक्ष्यं मांसम्। मधु क्षौद्रम्। शय्या खट्वा। आसनम् और्णादि। गृहं वेश्म। पुष्पं मल्लिकादि। दधि प्रसिद्धम्। शाकं वास्तुकादि। चकारात् कुशादीन्। अभ्युद्यतान् दातुमानीतान् न निर्णुदेत् प्रत्याचक्षीत। यथाऽऽह योगीश्वरः – 'कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः। मांसं शय्याऽऽसनं धानाः प्रत्याख्येयं न वारि च।।' (यास्मृ. १।२१४) इति। मनुरपि – 'शय्यां गृहान् कुशान् गन्धानपः पुष्पं मणीन् दधि। मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत्।।' (मस्मृ. ४।२५०) इति, 'एधोदकं मूलफलमन्नमभ्युद्यतं च यत्। सर्वतः प्रतिगृह्णीयान्मध्वाज्याभयदक्षिणाम्।।' (मस्मृ. ४।२४७) इति च। क्षितिः उद्धृतमृत्तिका। सर्वतः निषिद्धादपि। वसिष्ठोऽपि – 'एधोदकयवसकुकुशलाजाभ्युद्यतयानावसथशफरीप्रियङ्गुस्रग्गन्धमधुमांसानीत्येतेषां प्रतिगृह्णीयात्' इति। ननु गृहशय्यादिप्रतिग्रहे प्रायश्चित्ताम्नानात् कथमत्राभ्यनुज्ञेति चेत्, सत्यम्, अत्राभ्युद्यतत्वविशेषेण प्रायश्चित्तस्य याचितादिविषयत्वकल्पनात्। वै.

**आहूयाभ्युद्यतां भिक्षां पुरस्तादनुचोदिताम्।
ग्राह्यां प्रजापतिर्मेने अपि दुष्कृतकर्मणः।।**

किंच 'गृहाण भोः इमां भिक्षाम्' इत्याहूय पुरस्तादानीतां दुष्कृतकर्मणो यथोक्तसंध्याद्यकारिणोऽपि, न तु पतितादेः, प्रजापतिर्ग्राह्यामाह। वै.

---

* 'व्रात्याः, पतिताः, त्रिपुरुषं मातृतः पितृतश्चाशुद्धाः' इति पूर्वमुक्ताः।

(१) **विस्मृ.** ५४।२८; **निप्र.** २।२५८ सा तथा (सैव च) मनुविष्णू.

(२) **विस्मृ.** ५७।५-१२.

**नाश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च।**
**न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते।।**

तत्प्रत्याख्याने दोषमाह – नाश्नन्तीति। अयाचितोपस्थित-भिक्षाप्रत्याख्याने पञ्चदशवर्षाणि देवपितृकर्माणि विफलानि भवन्तीत्यर्थवादकल्प्यो दोषः। वै.

[1]**गुरून् भृत्यानुज्जिहीर्षुरर्चिष्यन् पितृदेवताः।**
**सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः।।**

प्रतिग्रहनिवृत्तेरपवादान्तरमाह – गुरूनिति। गुरवः मातृ-पित्रादयः। भृत्याः भार्यादयः। तान् आपद्गतान् उज्जिहीर्षुः मुमोचयिषुः पितॄन् सांवत्सरिकादौ, देवताः कुलधर्मादौ अर्चिष्यन् अर्चनेच्छुश्च सर्वतो निषिद्धादपि प्रतिगृह्णीयात्। परं तु तादृशात् प्रतिगृहीतात् धनात् स्वतृप्त्युपायं न कुर्यात्, अनापन्नश्चेत्। आपदि तु स्वयमपि तेन वर्तेत, 'सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव वा' (यास्मृ. १।२१६) इति योगिस्मरणात्। वै.

[2]**एतेष्वपि च कार्येषु समर्थस्तत्प्रतिग्रहे।**
**नाऽऽदद्यात् कुलटाषण्ढपतितेभ्यस्तथा द्विषः।।**

अत्रैवापवादमाह – एतेष्विति। एतेषु पूर्वोक्तेषु मातृपितृ-भरणादिष्वपि कर्तव्येषु प्रतिग्रहसमर्थोऽपि सर्वतः प्रतिग्रहं न कुर्यात्। कुलात् कुलम् अटतीति कुलटा स्वैरिणी। षण्ढः नपुंसकः। षड्विधाः पतिताः महापातक्यादयः। द्विट् शत्रुः। तथाशब्दात् चिकित्सकादेर्ग्रहणम्, 'चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य च। षण्ढसूनकयोश्चैव उद्यतामपि वर्जयेत्।।' इति यमस्मरणात्। कितवः द्यूतकृत्। सूनकः हिंसकः। वै.

[3]**गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन्।**
**आत्मनो वृत्तिमन्विच्छन् गृह्णीयात् साधुतः सदा।।**

(१) तैर्विना वा गृहे वसन्निति तेषां प्रकारान्तरेण वृत्ति-सिद्धाविति भावः। गप. २२६-२२७

(२) गुर्वाद्यर्थं सर्वतः प्रतिग्राह्यम्। स्वार्थं तु कथम्? इत्यत आह – गुरुष्विति। गुरुषु पूर्वोक्तेषु अतीतेषु मृतेषु, जीवद्भिरपि तैर्विना वा वसन् गृहस्थः आत्मजीवनाय साधुभ्यः त्रैवर्णिकेभ्य एव प्रतिगृह्णीयात्, न शूद्रादिभ्यः, 'प्रशस्तानां स्वकर्मशुद्धानां द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्च' इति गौतमस्मरणात्। वै.

(१) **विस्मृ.** ५७।१३; **वीमि.** १।२१४-२१६ जिहीर्षुर (जिहीर्षन्न) पितृदेवताः (देवतातिथीन्) न्न तु तृप्येत् (न्न तृप्येत).

(२) **विस्मृ.** ५७।१४; **वीमि.** १।२१४-२१६.

(३) **विस्मृ.** ५७।१५; **गप.** २२६ मन्विच्छन् (सिद्ध्यर्थं) (=).

शुक्लशबलकृष्णरूपास्त्रिविधार्थाः तल्लक्षणानि तद्विनियोगफलानि च, अन्यजातिलिङ्ग-धारणेनान्यजातिवृत्त्या जीवने दुष्फलम्, अविक्रेयविक्रये प्रायश्चित्तम्

[1]**अथ गृहाश्रमिणस्त्रिविधोऽर्थो भवति।।**

वक्ष्यमाणगृहस्थधर्माणामर्थसाध्यतया अर्थविवेकं ताव-दष्टपञ्चाशत्तमेनाऽऽह – अथेति। अथेति अर्थनिर्णया-धिकारः। गृहस्थस्य अर्थः धनं वक्ष्यमाणप्रकारेण त्रिविधं भवति। गृहाश्रमिण इत्याश्रमान्तरनिरासाय, धनार्जनस्य गृहस्थप्रकरण एवाभिधानात्, 'व्रतिना स्नातकेनापि कार्या शुद्धेषु याचना। गुरोरर्थप्रदानाय कन्यालाभाय चाऽऽत्मनः। यात्रामात्रादृते नित्यं यतीनां च न शस्यते।।' इति अत्रिस्मृतौ भिक्षाकन्यातिरिक्तयाचननिषेधात्, (न ?) व्रतस्थस्यापि 'नित्यं दद्यान्न प्रतिगृह्णीयात्' इति प्रतिग्रहनिषेधात्, 'अनंशा-स्त्वाश्रमान्तरगाः' (वाध. १७।५२) इति वसिष्ठेन रिक्थ-निषेधात्, याजनाध्यापननिषेधाच्च ब्रह्मचार्यादीनाम्। त्रिविध इति विधान्तरनिरासः। वै.

[2]**शुक्लः शबलोऽसितश्च।।**

ता विधा आह – शुक्ल इति। शुक्लादिलक्षणं वक्ष्यति। प्रवृत्तिनिमित्तं तु शुद्धिः, (शुद्धि)मिश्रिता (अशुद्धिः), अशुद्धिश्चेति। वै.

[3]**शुक्लेनार्थेन यदौर्ध्वदेहिकं करोति तेनास्य देवत्व-मासादयति।।**

(१) **विस्मृ.** ५८।१; **गृक.** २६२; **आपा.** ११० धोऽर्थो (धमर्थ-जातं); **निप्र.** २।२४७.

(२) **विस्मृ.** ५८।२; **गृक.** २६२; **आपा.** ११० (शुक्ल-शबलमसितं च); निप्र. २।२४७.

(३) **विस्मृ.** ५८।३; **गृक.** २६२ तेनास्य... दयति (तद्देवत्व-मासाद्याश्नाति); **आपा.** ११० गृकवत्; **निप्र.** २।२४७.

(१) संपद्यापदि वा यस्य या वृत्तिर्विहिता तल्लब्धं शुक्लम्। तेन कर्मकरणे देवत्वम्।

निप्र. २।२४७

(२) तासां प्रयोजनमाह – शुक्लेनार्थेनेति। मृतस्य पित्रादेः पुत्रादिः यत् शुक्लेन धनेन और्ध्वदेहिकं पारलौकिकं पिण्डोदकदानादि करोति, तेनास्य देवत्वं संपादयति।

वै.

[2]**यच्छबलेन तन्मानुष्यम्॥**

(१) यदविहितमप्रतिषिद्धं सामान्येनानुज्ञातं तल्लब्धं शबलम्। निप्र. २।२४७

(२) शबलेन धनेन कृतेऽस्मिन् मानुष्यं नयति।

वै.

[2]**यत् कृष्णेन तत् तिर्यक्त्वम्॥**

(१) यदत्यन्तविगर्हितं विपद्यपि निषिद्धं तत्कृष्णम्। तेन तिर्यक्त्वमिति विभागः। § एतदेव सात्त्विकं राजसं तामसं चेत्याख्यायन्ते। यद्यपि धनार्जननियमो न क्रत्वर्थः, पुरुषार्थ एवेति चतुर्थे साधितम्, तथापि वचनबलात्फलतारतम्यमिति उपायान्तरेणार्जने क्रतुवैगुण्याभावः। तथा उपायाः। तत्र विष्णुनारदौ – 'क्रमागतं... अविशेषेण वर्णानाम्' इत्यनेन सर्वेषां शुद्धधनत्वेन कथितवन्तौ।

निप्र. २।२४७

(२) कृष्णेन धनेन कृतेऽस्मिन् तत् तिर्यक्त्वं पशुतां नयति। वै.

[3]**स्ववृत्त्युपार्जितं सर्वेषां शुक्लम्॥**

असाधारणं शुक्लादिलक्षणमाह – स्ववृत्त्युपार्जितमिति। स्ववृत्तयः ब्राह्मणादीनां प्रतिग्रहादयः, ताभिः आर्जितं शुक्लमुच्यते। सर्वेषामिति अनुलोमप्रतिलोमजानामपि उक्तवृत्त्यार्जितं शुक्लं ज्ञेयम्। वै.

§ 'एतदेव' इत्यस्य प्रत्येकं सात्त्विकादिना संबन्धः। तेन 'आख्यायन्ते' इति बहुवचनेन न विरोधः।

(१) **विस्मृ.** ५८।४; **गृक.** २६२; **आपा.** ११० तन्मानु (मानु); **निप्र.** २।२४७.

(२) **विस्मृ.** ५८।५; **गृक.** २६२; **आपा.** ११० (तत्०); **निप्र.** २।२४७.

(३) **विस्मृ.** ५८।६; **गृक.** २६२ (वृत्त्युपात्तं सर्वमेव शुक्लम्); **आपा.** ११०-१११ पार्जितं (पात्तं); **निप्र.** २।२४७.

[1]**अनन्तरवृत्त्युपात्तं शबलम्॥**

ब्राह्मणस्य क्षत्रवृत्तिः, क्षत्रियस्य वैश्यवृत्तिः, वैश्यस्य शूद्रवृत्तिः अनन्तरा, तया तैरार्जितं शबलम्। वै.

[2]**एकान्तरितवृत्त्युपात्तं च कृष्णम्॥**

एकान्तरितया वृत्त्या आर्जितं कृष्णमुच्यते। यथा ब्राह्मणेन वैश्यवृत्त्या, क्षत्रियेण शूद्रवृत्त्या वेति। वै.

[3]**क्रमागतं प्रीतिदायं प्राप्तं च सह भार्यया।**
**अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम्॥**

(१) तेषां स्वरूपमाह स एव – क्रमागतमिति।

आपा. १।१

(२) साधारणानि तल्लक्षणान्याह – क्रमागतमिति। पितृपितामहादिक्रमेण यद्दायरूपतया प्राप्तम्, यच्च प्रीत्या मित्रादिभ्यो लब्धम्, यच्च विवाहकाले भार्यया सह श्वशुरादिभ्यो लब्धम्, तत् सर्वेषां वर्णानामनुलोमजप्रतिलोमजानामविशेषेण शुक्लमुक्तम्। वै.

[4]**उत्कोचशुल्कसंप्राप्तमविक्रेयस्य विक्रयैः।**
**कृतोपकारादाप्तं च शबलं समुदाहृतम्॥**

उत्कोचः लञ्चः। शुल्कं घट्टादिदेयं कन्यादिमूल्यं च। अविक्रेयं लाक्षालवणादि, तद्विक्रयेण यल्लब्धम्। यच्च पूर्वोपकृतात् लब्धम्। तत् सर्वेषां शबलमुच्यते।

वै.

[5]**पार्श्विकद्यूतचौर्याप्तप्रतिरूपकसाहसैः।**
**व्याजेनोपार्जितं यच्च तत् कृष्णं समुदाहृतम्॥**

(१) **विस्मृ.** ५८।७; **गृक.** २६२; **आपा.** १११; **निप्र.** २।२४७ पात्तं शबलम् (पार्जितं कृष्णम्).

(२) **विस्मृ.** ५८।८; **गृक.** २६२ एकान्तरित (अन्तरितवृत्त्युपात्तमनुत्तम); **आपा.** १११ एकान्तरित (अतीत) (च०).

(३) **विस्मृ.** ५८।९; **गृक.** २६२ दायं (दायः); **आपा.** १११ प्राप्तं च (प्रपन्नं) अविशेषेण (विशेषेण च); **निप्र.** २।२४७ गृकवत् : २।२४७ सर्वेषां (वर्णानां) शेषं गृकवत्, चतुर्थचरणो नास्ति, विष्णुनारदौ.

(४) **विस्मृ.** ५८।१०; **गृक.** २६२ विक्रयैः (विक्रयात्); **आपा.** १११ शुल्कसंप्रा (स्तेयतः प्रा).

(५) **विस्मृ.** ५८।११; **गृक.** २६२ पार्श्विकद्यूतचौर्याप्तप्र (पार्श्विकं द्यूतचौर्याप्तं प्र); **आपा.** १११ प्रथमचरणे (प्रार्थितं द्यूतचौर्याप्तं) पक (पिक).

पार्श्वे स्थित्वा चामरचालनादि पार्श्विकम्। द्यूतम् अक्षादि-क्रीडनम्। तत् समाह्वयस्याप्युपलक्षणम्। समाह्वयः मेषादिभिः क्रीडनम्। चौर्यं प्रसिद्धम्। आप्तं भैक्ष्यकर्म। प्रतिरूपकम् अन्यप्रदर्शनेन स्वयं दानादिग्रहणं कृत्रिम-सुवर्णादिकरणं वा। साहसं पणपूर्वकं गिरिवृक्षाद्यारोहणम्। व्याजम् अन्यद्रव्यप्रदर्शनेनान्यद्रव्यम्। तत् कृष्णमित्युक्तम्। नारदोऽपि – 'पार्ष्णिकद्यूतचौर्यार्तिप्रतिरूपकसाहसैः। व्याजेनोपार्जितं यच्च तत् कृष्णं समुदाहृतम्।।' (नासं. २।४३) इति। पार्ष्णिकं पृष्ठेऽनुयानम्। आर्तिः परपीडाकरणं दैन्यातिशयो वा।

वै.

**[1]यथाविधेन द्रव्येण यत्किंचित् कुरुते नरः।**
**तथाविधमवाप्नोति स फलं प्रेत्य चेह च।।**

और्ध्वदेहिकन्यायमन्यत्राप्यतिदिशति – यथाविधेनेति। उक्तविधद्रव्यमध्ये यादृशेन शुक्लादिना द्रव्येण यत् ऐहिका-मुष्मिकफलसाधनं कर्म करोति, तादृशमेवोत्कृष्टापकृष्ट-मध्यमाद्यैहिकमामुष्मिकं वा फलं प्राप्नोति।

वै.

**[2]अलिङ्गी लिङ्गिवेषेण यो वृत्तिमुपजीवति।**
**स लिङ्गिनां हरत्येनस्तिर्यग्योनौ प्रजायते।।**

अवेदविदं लक्षयति – अलिङ्गीति। न विद्यन्ते शिखा-सूत्रादीनि त्रैवर्णिकलिङ्गानि यस्यासौ अलिङ्गी शूद्रः लिङ्गिनाम् उक्तलिङ्गवतां त्रैवर्णिकानां शिखासूत्रादिधारणेन वृत्तिं जीवनोपायम् उपजीवति, तस्यैवैनः प्राप्नोति, तिर्यग्योनिं च प्राप्नोतीत्यसौ अवेदवित् अवधेयः। यद्यप्यत्र अवेदविदिति विशेष्यं नोपात्तम्, तथापि स्थानप्रमाणेन तस्यैवेदं लक्षणमिति पर्यवस्यति।

वै.

**[3]श्लेष्मतोक्ममधूच्छिष्टशङ्खशुक्तित्रपुसीसकृष्ण-लोहोदुम्बरविक्रयी महासांतपनम्।।**

(१) **विस्मृ.** ५८।१२; **आपा.** १११.
(२) **विस्मृ.** ९३।१३.
(३) **निप्र.** २।३१५.

## लघुविष्णुः

पूर्वपूर्वतः श्रेयान् चतुर्विधो गृहस्थो
धान्यसंग्रहासंग्रहाभ्याम्,
वैश्यवृत्तयः

**[1]चतुष्प्रकारं भिद्यन्ते गृहिणो धर्मसाधकाः।**
**वृत्तिभेदेन सततं ज्यायांस्तेषां परः परः।।**
**कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा।**
**त्र्यहैहिको वाऽपि भवेत्सद्यःप्रक्षालकोऽथ वा।।**
**[2]वाणिज्यं कर्षणं चैव गवां च परिपालनम्।**
**ब्राह्मणक्षत्रसेवा च वैश्यकर्म प्रकीर्तितम्।।**

## शङ्खः

चतुर्णां वर्णानां
वृत्तयः

**[3]यजनं याजनं दानं तथैवाध्यापनक्रिया।**
**प्रतिग्रहं चाध्ययनं विप्रकर्माणि निर्दिशेत्।।**
**क्षत्रियस्य विशेषेण प्रजानां परिपालनम्।**
**कृषिगो(? गौ)रक्ष्यवाणिज्यं विशश्च परिकीर्तितम्।।**
**शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि चाप्यथ।।**

शूद्रात् धनभिक्षाया निषेधः,
याज्यप्रतिग्राहकयो-
र्योग्यतापादक-
गुणाः

**[4]न भिक्षेत धनं शूद्रात्सर्वं दद्याच्च भिक्षितम्।।**
**† वृतं तु न त्यजेद्विद्वानृत्विजं पूर्वमेव च।**
**कर्मणा जन्मना शुद्धं विधया च वृणीत तम्।।**
**एतैरेव गुणैर्युक्तं धर्मार्जितधनं तथा।**
**याजयीत सदा विप्रो ग्राह्यस्तस्मात्प्रतिग्रहः।।**

† वचनमिदं धर्मविषयमपि उत्तरश्लोकानुरोधेनात्र गृहीतम्। अत्र 'विधया यथाविधि वृणीत' इत्यप्यन्वयः संभवति, तथापि उत्तरत्र 'एतैः' इति बहुवचनप्रयोगात् तदनुरोधेन 'विधया जीवनोपाय-प्रकारभूतया वृत्त्या शुद्धं च' इत्यन्वयस्वीकारो न्याय्यः।

(१) **लविस्मृ.** २।१६-१७.
(२) **लविस्मृ.** ५।६.
(३) **शंस्मृ.** १।२, ४-५.
(४) **शंस्मृ.** ५।१७-१९.

## शङ्खलिखितौ

ब्राह्मणप्रशंसा, जघन्यवृत्तिनिषेधो ब्राह्मणस्य,
सर्वतः प्रतिग्रहः, वर्णत्रययाजनम्,
प्रतिग्रहयाजनलब्धस्य
विनियोगः

**[१]प्रत्याश्रमं स्थिता वर्णाः कर्मभिर्व्यक्ततां गताः।**
**नियमाचारधर्माणां ब्राह्मणस्तत्र देशकः।।**
**[२]संपूज्यः सोऽर्चनीयश्च गुरुः संस्कारकर्मकृत्।**
**अग्नयस्तन्मुखाः सर्वे देवाश्चाग्निमुखाः स्मृताः।।**

पूज्यः मधुपर्कादिना, अर्चनीयः दक्षिणादिना।

गृर. १०८

**[३]ऋचो यजूंषि सामानि अथर्वाङ्गिरसानि च।**
**तानि विप्रेष्वधीतानि ते यज्ञा आप्तदक्षिणाः।।**

सम्यग्वित्ताद्याप्ता दक्षिणा यैस्ते आप्तदक्षिणाः। अनेन च ब्राह्मण(प्रशंसा) द्वारेण संपूर्णदक्षिणादानं प्रतिपाद्यते।

+ गृक. १३५

**[४]तस्य स्वधर्म एव श्रेयान् स्वल्पोऽप्यनुष्ठितो नावरसेवितः। जघन्यसेवी हि ब्राह्मणो जघन्येष्ववपद्यते। तस्मात्प्रशस्तसमयाचारः सर्वतः प्रतिगृह्णीयात्। नाऽऽत्मनस्ततस्तृप्तिमिच्छेत्। कामं त्रयाणां वर्णानां याजनं कुर्वीत। धर्मेण तेभ्यो वृत्तिमादाय धर्मकृत्येषूपहरेत्।।**

(१) तस्य ब्राह्मणस्य। स्वधर्मः स्ववृत्त्युपायः। स्वल्पोऽपि यथाकथंचिदनुष्ठितोऽपि। अवरः क्षत्रियादिः। प्रशस्तानां शिष्टानां समयः सिद्धान्तः, तमाचरतीति प्रशस्तसमयाचारः सर्वतः शूद्रादेरपि गृह्णीयात्। ततः शूद्रादिप्रतिग्रहेण। तृप्तिं भोगाकारमवरम् (?)। धर्मेण शास्त्रतः।

* गृक. १८५

(२) स्वधर्मः स्ववृत्तिः शिलोञ्छप्रतिग्रहादिः। अन्योऽपि यथाकथंचिद्विहितोऽपि। सर्वतः शूद्रादेरपि प्रतिगृह्णीयात्, अन्यकृत्यापेक्षया शूद्रप्रतिग्रहस्यापि कथितत्वात्। ततः शूद्रादिप्रतिग्रहेण। वृत्तिं भोगम्। तेन जीवनमात्रार्थं तत्कार्यम्, न तु भोगार्थमिति।

+ गृर. ४२४

भिक्षासंबन्धीनि विधानानि,
मद्यप्रतिग्रहनिषेधः

**[१]भिक्षमाणो निमित्तान्तरं ब्रूयात्। न रङ्गावतारं कुर्यात्। न स्त्रीं नाप्राप्तव्यवहारं नापर्याप्तसंनिधानमनुद्दिश्यान्नं भिक्षेत। यदर्थं भिक्षेत तमेवार्थं कुर्यात्। शेषमृत्विग्भ्यो निवेदयेत्। यो वाऽन्यः साधुतमस्तस्मै दद्यात्।।**

(१) निमित्तं भिक्षाप्रयोजकं विवाहादि। रङ्गः नृत्यादिस्थानम्, तत्रावतारः भिक्षार्थं तत्प्रदेशगमनम्। अप्राप्तव्यवहारः ऊनषोडशवर्षः। अपर्याप्तसंनिधानः दानायोग्यप्रदेशकालस्थितः। अनुद्दिश्य अनिर्दिश्य। अन्यम् (? न्नम्) अकृतादर्धा(? र्था)न्तरम्। भिक्षेतेति न स्त्रीमित्यादिभिः संबध्यते।

गृक. २३३-२३४

(२) निमित्तान्तरं भिक्षाप्रयोजकं विवाहयज्ञादि। अनुद्दिश्यान्नं(? न्यत्)भिक्षानिमित्तं यज्ञविवाहाद्यतिरिक्तं निमित्तमनभिधाय।

+ गृर. ४५७

**[२]न मद्यं दद्यान्न प्रतिगृह्णीयाद्वा।।**

मद्यं मादकं सुराभिन्नमपि जातिफलादि।

निप्र. २।२८०

---

+ गृर. गृकवत्।

(१) **गृक.** १३५; **गृर.** १०७.

(२) **गृक.** १३५; **गृर.** १०७-१०८ देवा (वेदा).

(३) **गृक.** १३५; **गृर.** १०८.

(४) **अप.** ३।३४ रसेवितः। जघन्य (रं सेवेत। जघन्यता) चारः (चारं) त्मनस्त (त्मनस्तु त); **गृक.** १८५ हि (ह) ष्ववपद्यते (षूपपद्येत); **गृर.** ४२४ स्वल्पो (अन्यो) जघन्य (यद्यन्य) ष्ववपद्यते (षु प्रवर्तत इति) सर्वतः + (च) तस्तृप्ति (तो वृत्ति); **निप्र.** २।२७३ (तस्य स्वधर्म एव श्रेयान्, स्वल्पोऽप्यनुष्ठितो नान्य आदरसेवितः, स स्यात् प्रशस्तसमयाचारः, सर्वतः प्रतिगृह्णीयात्) एतावदेव : २।२७८ (तस्य स्वधर्म एव श्रेयान् नान्य आदरसेवितः, स स्यात् प्रशस्तसमयाचारः, सर्वतः प्रतिगृह्णीयात्) एतावदेव.

* निप्र. अंशतः कल्पतरोरनुवादः।

+ शेषं गृकवत्।

(१) **गृक.** २३३; **गृर.** ४५७ माणो + (वा) रं नापर्याप्तसंनिधानम् (रानपर्याप्तसंनिधानान).

(२) **गृक.** २४७; **गृर.** ४६६ (न मद्यं प्रतिगृह्णीयात्) एतावदेव; **निप्र.** २।२८० (वा०).

निषिद्धा वृत्तयः, आपदि ब्राह्मणस्यानन्तर-
वर्णवृत्तिः, अत्यापदि वाणिज्यम्,
अपण्याः पदार्थाः

**[1]नान्तरितां नाविशिष्टां नाधिकां न समां न हीनां न कुत्सितां नानर्थकरीं वृत्तिं लिप्सेत्।।**

अन्तरिता व्यवहिता। यथा क्षत्रियस्य शूद्रवृत्तिः। अविशिष्टा विशुद्धप्रतिग्रहसंभवे सत्यविशुद्धप्रतिग्रहादिरूपा। अधिका स्वोत्कृष्टवर्णसंबन्धिनी। समा आवश्यककर्म-भृत्यभरणेऽप्यसमर्था। हीना हीनवर्णसंबन्धिनी। कुत्सिता निन्दितकर्मार्जिता। अनर्थकारी अहिता।

† गृक. २२८

**[2]आपत्काले ब्राह्मणस्य मातापितृमतो बहुभृत्य-स्यानन्तरिका वृत्तिरिति विकल्पः। तत्र ब्राह्मणेषु चरित्र-गुणसंपन्नेषु वृत्तेर्दौबल्यमाख्येयम्। यद्ब्रूयुस्ते स धर्मः। तस्यानन्तरा वृत्तिः क्षात्रोऽभिनिवेशस्त्रयाणां ब्राह्मण-कर्मणां व्यावृत्तौ याजनाध्यापनप्रतिग्रहाणाम्।।**

(१) त्रिगुणसंपन्नाः इज्याध्ययनदानसंपन्नाः। वैश्यवृत्त्य-संभवे ब्राह्मणस्य न शूद्रवृत्तिः।

अप. ३।३४

(२) विकल्पः विमर्शः। क्षात्रेऽभिनिवेशः क्षत्रियवृत्ति-निष्ठत्वम्।

गृक. १८७

(३) विकल्पः विमर्षः, निश्चय इति यावत्। अनापत्काले ब्राह्मणवृत्तिरपि आपत्काले अनन्तरवृत्तिरिति व्यवस्थित-विकल्प इति हलायुधः। क्षात्रोऽभिनिवेशः क्षत्रिय-वृत्तिनिष्ठता। गृर. ४२५-४२६

**[1]एवमप्यजीवन् वैश्यवृत्तिमेवोपजीवेत्। तत्र संवत्सर-सत्राणामाधारमुद्धृत्य शेषेण द्रव्यमाहरेदन्यत्र पुष्परस-गन्धमद्यमांसौदनतिलशाकदधिपयःसोमजलमधुनील-कौशेयपानभक्ष्यजतुलोहपाषाणकुतपशस्त्रविषमानुषक्षौम-कृष्णाजिनैकशफप्रभृतिभ्यः।।**

(१) वैश्यं वैश्यवृत्तिमित्यर्थः। अप. ३।३४

(२) संवत्सरसत्राणामिति। संवत्सरं यावत् अवश्य-कर्तव्यधर्मार्थं धनमवस्थाप्य शेषेण (वाणिज्येन?) वाणिज्यं कुर्यात्। गृक. २०१

**[2]आपद्गतो ब्राह्मणः कामं जिजीविषुरेकान्तरितां वृत्तिमास्थाय न पण्यं पण्यमिति ब्रूयात्। सकृदेवोक्तं मूल्यमिच्छेत्।।**

कृष्या जीवनासंभवे स्वयंकृतवाणिज्येन जीवनम्। तत्र शङ्खलिखितौ – 'आपद्गतो .... मिच्छेत्'।

निप्र. २।३१२

ब्राह्मणस्याविक्रेयाणि, द्विजस्या-
दत्तग्राह्याणि, क्षत्रिय-
वैश्यवृत्तयः

**[1]न विक्रीणीयादविक्रेयाणि। तिलदधिक्षौद्रलवण-लाक्षामद्यमांसकृतान्नस्त्रीपुरुषहस्त्यश्वगोवृषगन्धरस-क्षौमकृष्णाजिनसोमोदकनीलविक्रयात् सद्यः पतति ब्राह्मणः।।**

(१) नीलं नीलवर्णवस्त्रम्। ‡ गृक. २०६

(२) अन्नं कृतान्नम्। मर. १८५

---

† गृर., निप्र. गृकवत्।

(१) **गृक.** २२८; **गृर.** ४५२; **निप्र.** २।३३६.

(२) **अप.** ३।३४ (ब्राह्मणस्य०) रिका (रका) विकल्पः (कल्पः) चरित्रगुण (त्रिगुण) वृत्तेर्दौ (वृत्तिदौ) नन्तरा (नन्तरका) व्यावृत्तौ या (या वृत्तिर्या); **गृक.** १८६-१८७ तत्र (यत्र) ब्राह्मणेषु (ब्राह्मणे मातापितृषु) (तस्यानन्तरावृत्तिः ०) क्षात्रो (क्षात्रे); **गृर.** ४२५ संपन्नेषु वृ (संपन्नवृ) ख्येयम् (ख्यातम्).

‡ गृर. गृकवत्।

(१) **अप.** ३।३४ (एवमप्यजीवन् वैश्यमुपजीवेत्) एतावदेव; **गृक.** १८७ (एवमप्य... जीवेत्) एतावदेव, २०१; **गृर.** ४२५ (एवमप्य.... जीवेत्) एतावदेव; **निप्र.** २।३१४-३१५ (यान-भक्षजतुलोहपाषाणकुतपशस्त्रविषमानुषक्षौमकृष्णाजिनैकशफेभ्यः) एतावदेव.

(२) **अप.** ३।३८ आपद्गतो ब्राह्मणः कामं (आपदि कामं ब्राह्मणो); **गृक.** २१२ (न०) देवोक्तं (देवैकं); **गृर.** ४४२ (न पण्यं०) क्तं मू (क्तमू); **निप्र.** २।३१२ षुरेकान्तरितां (षुः वैश्याचरणम्).

(३) **गृक.** २०६; **स्मृच.** २।४७९ (गो०) वृष (वृषभ) (क्षौम०) दकनीलविक्रयात् (दकात्); **गृर.** ४३९; **मर.** १८४ अशुद्धः पाठः; **निप्र.** २।३१६ निर्देशमात्रम्.

**[1]तिलमुद्गमाषयवगोधूमादीनां शस्यमुष्टिग्रहणेष्व-दोषः पथिकानामप्यपञ्चदलानां तथेक्षोर्मूलकयोः शाकपुष्पफलप्रचयने च। विदितस्य प्रकाशं गृह्णतो न दोषः।।**

(१) शस्यम् फलम्। अपथ्यदलानाम् संबलरहितानाम्। विदितस्य आख्यातस्य साधुत्वेनेति शेषः।

गृक. ३२३

(२) अपञ्चदलानाम् पञ्चदलशून्यानाम्। शाखासंबल-हीनानामिति यावत्। + गृर. ५२०

**[2]पूर्वधर्म एव क्षत्रियः। शस्त्रार्जनक्षतत्राणव्यवहार-दण्डरक्षणानुशासनमिति वृत्तयः।।**

(१) § पूर्वधर्मः अध्ययनयज्ञदानानि। शस्त्रेणार्जनं शस्त्रा-र्जनम्। क्षतात् त्राणं क्षतत्राणम्। व्यवहारः वादिप्रतिवादिनोः संदेहहरणम्। अनुशासनं वर्णाश्रमाणां स्वधर्मे व्यवस्थापनम्।

गृक. २५२

(२) क्षतत्राणं क्षतात् अभिभवात् रक्षणम्।

+ गृर. ४७०

(३) क्षत्रियस्य धर्मं वृत्तिं चाऽऽहतुः शङ्खलिखितौ-'पूर्वधर्म.... वृत्तिः'। पूर्वाणि अध्ययनयजनदानानि धर्मा यस्य स पूर्वधर्मः। एवकारेणाध्यापनादिधर्मकत्वं क्षत्रियस्य निरस्यते। अनेन च क्षत्रियस्य धर्म उक्तः। शस्त्रेत्यादिनाऽनु (?ना तु) वृत्तिरुच्यते। दण्डः दुष्टदण्डनम्। रक्षणं शिष्ट-परिपालनम्। + मर. १९०

**[3]पूर्वधर्म एव वैश्यः। कृषिः पशुपाल्यं वाणिज्यं योनिपोषणं वृद्धिप्रयोग इति वृत्तिः।।**

---

+ शेषं गृकवत्।

§ तत्पुरुषोऽयमनन्वितार्थः। मूले तु क्षत्रियविशेषणत्वाद्ब-हुव्रीहिः।

(१) **गृक.** ३२३ व्यपञ्च (प्यपथ्य) चयने (चायने); **गृर.** ५२० माष + (मसूर) मादीनां (मानां) णेष्वदोषः (णेषु) (शाक०).

(२) **गृक.** २५२; **गृर.** ४६९ वृत्तयः (वृत्तिः); **मर.** १९० गृरवत्.

(३) **गृक.** २५२; **गृर.** ४६९ वृद्धि (वृत्ति); **मर.** १९१ पशु (पाशु) वृद्धि + (योग).

(१) योनिपोषणं वृद्ध्यर्थे गवादिपालनम्। पशुपाल्यं वेतनेन पशुरक्षणम्। § गृक. २५२

(२) मासपाटिकादि(ना) गवादीनां पालनम्।

+ मर. १९२

ब्राह्मणस्य विक्रेयाणि, गोरक्षणं
तत्र विधानानि
च

**[1]शुद्धकाष्ठबदरेङ्गुदबिल्वकार्पासिकसूत्रैरविकृतै-र्द्रव्यमाहरेत्।।**

**[2]गा रक्षेत। तास्वपीतासु न पिबेत्। न तिष्ठन्ती-षूपविशेत्। न स्वयमुत्थापयेत्। शनैरार्द्रशाखया पृष्ठतो हन्यात्। नातीर्थेन विषमेनाल्पोदकेनावतारयेत्। बालवृद्धरोगार्तश्रान्ता उपासीत। शक्तितः प्रतीकारं कुर्यात्। गवामेष धर्मोऽन्यथा विप्लवः।।**

उपासीत उपचरेत्। गवामेष धर्मः, नाऽजादीनाम्।

§ गृक. २१३

---

§ गृर गृकवत्।

+ शेषं गृकवत्।

(१) **अप.** ३।३८ पृ. ९३३ **शुद्ध** (**शुष्क**) बिल्व + (रज्जु); **गृक.** २१२; **गृर.** ४४२ **शुद्ध** (**शुष्क**); **बाल.** ३।३६ पृ. ८४ (शुष्क-काष्ठबदरेङ्गुदकार्पासिकरज्जुकार्पासिकसूत्रकृतं न व्यवहरेत्).

(२) **अप.** ३।३८ पृ. ९३४ गा रक्षेत.... पिबेत् (गा वा रक्षेत् (तासु नापीतासु पिबेत्) शाखया + (सपलाशया) तो ह (तोऽभिह) नावतार... उपासीत (न वा तारयेत्। बालवृद्धरोगार्ताः श्रान्ता उपावेशयेत्); **गृक.** २१३ गा रक्षेत.... पिबेन्न (गावो रक्षेत्तासु नापीतासु पिबेन्न) तो ह (तोऽभिह) केनाव (के चाव) र्तश्रान्ता (र्ताः शान्ता) कारं (कारं च); **स्मृच.** २।४५०; **गृर.** ४४३ गा रक्षेत... रोगार्तश्रान्ता (गावो रक्षेत् तासु पीतासु पिबेत्। अवतिष्ठ-न्तीषूपविशेत्। न स्वयं सुस्वापयेत्। न शनैरार्द्रशाखया पृष्ठतोऽ-भिहन्यात्। नातीर्थेन विषमेनान्योदकेऽवतारयेत् बालवृद्धकृशरोगार्ताः शान्ता); **निप्र.** २।३२५ गा रक्षेत... पिबेन्न (गां रक्षेत्। तासु पीतासु पिबेत्) तो ह (तोऽभिह) तीर्थेन विषमे... उपासीत (तीर्थे न विषमे नाल्पोदके अवतारयेत्। बालवृद्धरोगार्तश्रान्तमुपासीत) था विप्लवः (थाऽभिप्लवः); **बाल.** १।११९ पृ. ३७४ तास्वपीतासु न (तास्वनापीतासु नो) तो ह (तोऽभिह) नातीर्थेन विषमे.. विप्लवः (न तीर्थे न विषमे नाल्पोदकेऽवतारयेद्बालवृद्धरोगार्तास्त्रायीत। उपासीत। शक्तौ तत्प्रतीकारं कुर्याद्गवामेष धर्मान्यथाविप्लवः).

## महाभारतम्

ब्राह्मणप्रशंसा

[1]न तु ते ब्राह्मणं हन्तुं कार्या बुद्धिः कथंचन।
अवध्यः सर्वभूतानां ब्राह्मणो ह्यनलोपमः।।
[2]अग्निरर्को विषं शस्त्रं विप्रो भवति कोपितः।
गुरुर्हि सर्वभूतानां ब्राह्मणः परिकीर्तितः।।
[3]एवमादिभि रूपैस्तु सतां वै ब्राह्मणो मतः।
स ते तात न हन्तव्यः संक्रुद्धेनापि सर्वथा।।
ब्राह्मणानामभिद्रोहो न कर्तव्यः कथंचन।
न ह्येवमग्निर्नाऽऽदित्यो भस्म कुर्यात्तथाऽनघ।।
यथा कुर्यादभिक्रुद्धो ब्राह्मणः संशितव्रतः।
तदेतैर्विविधैर्लिङ्गैस्त्वं विद्यास्तं द्विजोत्तमम्।।
[4]भूतानामग्रभुग्विप्रो वर्णश्रेष्ठः पिता गुरुः।।

गरुड उवाच –
[5]किंरूपो ब्राह्मणो मातः किंशीलः किंपराक्रमः।
किंस्विदग्निनिभो भाति किंस्वित्सौम्यप्रदर्शनः।।
[6]यथाऽहमभिजानीयां ब्राह्मणं लक्षणैः शुभैः।
तन्मे कारणतो मातः पृच्छतो वक्तुमर्हसि।।

विनतोवाच –
यस्ते कण्ठमनुप्राप्तो निगीर्णं बडिशं यथा।
दहेदङ्गारवत्पुत्र तं विद्याद्ब्राह्मणर्षभम्।।
बडिशं मत्स्यादिधरणार्थो गलग्रहः।

नीटी.

* [7]गरीयान्ब्राह्मणवधः सर्वभूतवधाद्यतः।
तस्मात्त्वं किल्बिषादस्माच्छूद्रयोनौ जनिष्यसि।।
वधः पीडाऽपमानो वा। नीटी.

भार्गवेण क्षत्रियनाशे ब्राह्मणेभ्यः क्षत्रियासु क्षत्रियोत्पत्तिः

[1]त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा।
जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे।।
त्रिःसप्तकृत्वः एकविंशतिवारान्।

नीटी.

[2]तदा निःक्षत्रिये लोके भार्गवेण कृते सति।
ब्राह्मणान्क्षत्रिया राजन्गर्भार्थिन्योऽभिचक्रमुः।।
[3]ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः।
ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा।।
[4]तेभ्यस्तु लेभिरे गर्भान्क्षत्रियास्ताः सहस्रशः।
ततः सुषुविरे राजन्क्षत्रियान्वीर्यसंमतान्।
कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये।।
[5]एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः।
जातमृध्यत धर्मेण सुदीर्घेणाऽऽयुषान्वितम्।
चत्वारोऽपि तदा वर्णा बभूवुर्ब्राह्मणोत्तराः।।
ब्राह्मणोत्तराः ब्राह्मणप्रधानाः।

नीटी.

कश्यपात् दक्षकन्यायां कपिलायां ब्राह्मणोत्पत्तिः, मानवेषु ब्राह्मणः श्रेष्ठः

[6]अमृतं ब्राह्मणा गावो गन्धर्वाप्सरसस्तथा।
अपत्यं कपिलायास्तु पुराणे परिकीर्तितम्।।
[7]ब्राह्मणो द्विपदां श्रेष्ठः।।

---

* अणीमाण्डव्यस्य शापोक्तिरियं धर्मं प्रति।
(१) भा. १।२४।३; भामु. १।२८।३ न तु (न च).
(२) भा. १।२४।४ पू.; भामु. १।२८।४.
(३) भामु. १।२८।५-७.
(४) भा. १।२४।४; भामु. १।२८।८ भुग्वि (भूर्वि).
(५) भामु. १।२८।८-९.
(६) भा. १।२४।५-६; भामु. १।२८।९-११.
(७) भा. १।५७।८०; भामु. १।६३।९५-९६ षादस्माच्छू (षी धर्म शू).

(१) भा. १।५८।४; भामु. १।६४।४.
(२) भा. १।५८।५; भामु. १।६४।५ गर्भा (सुता).
(३) भा. १।५८।६; भामु. १।६४।६.
(४) भा. १।५८।७; भामु. १।६४।७-८ तेभ्यस्तु (तेभ्यश्च) गर्भान् (गर्भं) संमतान् (वत्तरान्).
(५) भा. १।५८।८; भामु. १।६४।८-९ जातमृध्यत (जातं वृद्धं च) तदा (ततो).
(६) भा. १।५९।५०; भामु. १।६५।५२.
(७) भा. १।६८।५६; भामु. १।७४।५७.

ब्राह्मणक्षत्रियवर्णयोः संकीर्णत्वमित्याक्षेपः एकेश्वर-
देहोत्पन्नानामपि वर्णानां तद्धर्माणां च
पृथक्त्वमिति समाधानं च,
ब्राह्मणप्रशंसा

**देवयान्युवाच –**

**[1]संसृष्टं ब्रह्मणा क्षत्रं क्षत्रं च ब्रह्मसंहितम्।**
**ऋषिश्च ऋषिपुत्रश्च नाहुषाङ्ग वहस्व माम्।।**

संसृष्टम् उच्छिन्नस्य क्षत्रस्य ब्राह्मणवीर्यादेव पुनरुद्भवात् ब्रह्मणा क्षत्रं संसृष्टम्। क्षत्रियकन्यासु लोपामुद्रादिषु ब्राह्मणानामुत्पत्तिदर्शनात् क्षत्रेण ब्रह्म संहितं संमिश्रम् ऋषिः। बुधादिलायां पुरूरवास्तत आयुस्ततो नहुषस्ततस्त्वमिति। क्षत्रियकन्यायां ब्राह्मणाज्जातो ब्राह्मणः, क्षत्रियदारेषु ब्राह्मणाज्जातस्तु क्षत्रिय एवेत्याग्रहेऽपि इलायां क्षत्रियदारत्वाभावाद्युष्माकमृषित्वमेव तथ्यमित्यर्थः। हे अङ्ग वहस्व परिणयस्व। नीटी.

**ययातिरुवाच –**

**[2]एकदेहोद्भवा वर्णाश्चत्वारोऽपि वराङ्गने।**
**पृथग्धर्माः पृथक्शौचास्तेषां तु ब्राह्मणो वरः।।**

एकस्य ईश्वरस्य देहः देहावयवाः मुखबाहूरुपादाः, तदुद्भवाः। नीटी.

**ययातिरुवाच –**

**[3]क्रुद्धादाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात्।**
**दुराधर्षतरो विप्रः पुरुषेण विजानता।।**

ययातिस्तु स्वस्य शर्मिष्ठासक्त्या देवयान्याः प्रकोपे सति शुक्राद्भीतः सन्मनस्येव उवाच – क्रुद्धादिति। नीटी.

**देवायान्युवाच –**

**[4]कथमाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात्।**
**दुराधर्षतरो विप्र इत्यात्थ पुरुषर्षभ।।**

**ययातिरुवाच –**

**एकमाशीविषो हन्ति शस्त्रेणैकश्च वध्यते।**
**हन्ति विप्रः सराष्ट्राणि पुराण्यपि हि कोपितः।।**
**दुराधर्षतरो विप्रस्तस्माद्भीरु मतो मम।**
**अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम्।।**

अदत्तामिति च्छेदः। नीटी.

भार्गवेण क्षत्रियनाशे ब्राह्मणेभ्यः
क्षत्रियासु क्षत्रियो-
त्पत्तिः

**[1]एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना।**
**त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा।।**
**[2]एवं निःक्षत्रिये लोके कृते तेन महर्षिणा।**
**[3]ततः संभूय सर्वाभिः क्षत्रियाभिः समन्ततः।**
**उत्पादितान्यपत्यानि ब्राह्मणैर्नियतात्मभिः।।**

ब्राह्मणैः संभूय सङ्गं कृत्वा उत्पादितानीति संबन्धः। नीटी.

**[4]पाणिग्राहस्य तनय इति वेदेषु निश्चितम्।**
**धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः।**
**लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः।।**

ननु कथं तर्हि 'माता भस्त्रा पितुः पुत्रो येन जातः स एव सः' (भामु. १।९५।३०) इत्युक्तम्? 'अन्योदर्यो मनसा मन्तवा उ' (ऋसं. ७।४।८) 'इति श्रुतेः, 'अन्योदर्यो मनसाऽपि न मन्तव्यो ममायं पुत्रः' (नि. ३।३) इति तन्निर्वचनात्, 'न शेषो अग्ने अन्यजातमस्ति' (ऋसं. ७।४।७) इति श्रुतेश्चान्यक्षेत्रेऽन्यस्मात्स्वस्माद्वा जातः शेषशब्दितो न स्वपुत्रः, किं तु क्षेत्रपतेरेवेति निश्चयात्। तेन दत्तक्रीतान्यक्षेत्रजादीनामपुत्रत्वं सिद्धम्। अत आह- धर्ममिति। धर्मं 'ममायं पुत्रो भविष्यति' इत्यभिलाषम्। 'अथ खलु क्रतुमयः पुरुषः' (छाउ. ३।१४।१) इति संकल्पप्राधान्यश्रुतेः स्त्रीपुंसयोर्मध्ये यस्य संकल्पो दृढस्तस्यैव

---

(१) **भा.** १।७६।१८; **भामु.** १।८१।१९ क्षत्रं च ब्रह्मसं (क्षत्रेण ब्रह्म सं) श्च ऋषि (श्चाप्यृषि).

(२) **भा.** १।७६।१९; **भामु.** १।८१।२०.

(३) **भा.** १।७६।२२; **भामु.** १।८१।२३ प्रः पुरुषेण (प्रो ज्ञेयः पुंसा).

(४) **भा.** १।७६।२३ - २५; **भामु.** १।८१।२४-२६.

(१) **भा.** १।९८।३; **भामु.** १।१०४।४.

(२) **भामु.** १।१०४।५.

(३) **भा.** १।९८।४; **भामु.** १।१०४।५-६ नियतात्मभिः (वेदपारगैः).

(४) **भा.** १।९८।५; **भामु.** १।१०४।६-७.

पुत्र इत्यर्थः। 'माता भस्त्रा' इति तु विवाहविषयम्। नन्वेवं शालिक्षेत्रे यवबीजादपि शाल्यङ्कुरोत्पत्तिः स्यादिति चेन्न, दावाग्निदग्धात् कदलीकाण्डादपि वेत्राङ्कुरोत्पत्तिदृष्टेः श्वमस्तके न्युप्तगोधूमयावनालादेः पलाण्डुलशुनाङ्कुरोत्पत्तिदृष्टेश्च भावनाविशेषजन्यधर्मस्यैव विशेषाधायकत्वाभ्युपगमात्। धनादिनोपनिमन्त्रणाच्च क्षेत्रपतेरेव सा संततिः न विप्रस्य लोकेऽपीति। कल्माषपादक्षेत्रे मदयन्त्यां वसिष्ठेन पुत्रा उत्पादिता इति लोकेऽपि आचरितः अनुष्ठितः दृष्टः। क्षत्रियाणां भवः उत्पत्तिः, ब्राह्मणेभ्य इति शेषः।

नीटी.

[1]**ततः पुनः समुदितं क्षत्रं समभवत्तदा।।**

ब्राह्मणप्रशंसा

[2]**धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्।**
**बलाबलं विनिश्चित्य तप एव परं बलम्।।**

[3]**राज्ञा सर्वेषु धर्मेषु देयः पन्था द्विजातये।।**

[4]**न च तद्विद्यते किंचित्कर्म लोकेषु यद्भवेत्।**
**ब्राह्मणानामसाध्यं च त्रिषु संस्थानचारिषु।।**

लोकेषु ब्रह्मलोकान्तेषु नृषु पुरुषेषु संस्थानचारिषु देवासुराद्याकारैश्चरत्सु तत्कर्म न विद्यते यत् ब्राह्मणानामसाध्यमिति संबन्धः। नीटी.

[5]**अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः।**
**दुर्बला हि बलीयांसो विप्रा हि ब्रह्मतेजसा।।**

[6]**ब्राह्मणो नावमन्तव्यः सद्वाऽसद्वा समाचरन्।**
**सुखं दुःखं महद्ध्रस्वं कर्म यत्समुपागतम्।।**

महद्ध्रस्वं महदपि क्षुद्रं भवति यत्र तत् कर्म।

नीटी.

[7]**ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह।**
**उदीर्णौ दहतः शत्रून्वनानीवाग्निमारुतौ।।**

(१) **भामु.** १।१०४।८.

(२) **भा.** १।१६५।४२; **भामु.** १।१७५।४५-४६.

(३) **भामु.** १।१७६।८.

(४) **भा.** १।१७९।११; **भामु.** १।१८८।११-१२ त्रिषु (नृषु).

(५) **भा.** १।१७९।१२; **भामु.** १।१८८।१२-१३ उत्तरार्धं (दुर्बला अपि विप्रा हि बलीयांसः स्वतेजसा।।).

(६) **भा.** १।१७९।१३; **भामु.** १।१८८।१३-१४ द्वाऽस (दस).

(७) **भा.** ३।२७।१०; **भामु.** ३।२६।१० उदीर्णौ (उदीर्णे).

[1]**नाब्राह्मणस्तात चिरं बुभूषे -**
**दिच्छन्निमं लोकममुं च जेतुम्।**
**विनीतधर्मार्थमपेतमोहं**
**लब्ध्वा द्विजं नुदति नृपः सपत्नान्।।**

अब्राह्मणः ब्राह्मणहीनो नृपः। बुभूषेत् ऐश्वर्यमिच्छेत्। तस्येच्छतोऽपि जयो दुर्लभ इत्यर्थः। विनीतौ सम्यक् शिक्षितौ धर्मार्थौ येन। नीटी.

**चरन्नैःश्रेयसं धर्मं प्रजापालनकारितम्।**
**नाध्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात्।।**

तीर्थम् उपायम्। नीटी.

[2]**अनूनमासीदसुरस्य कामै-**
**र्वैरोचनेः श्रीरपि चाक्षयाऽऽसीत्।**
**लब्ध्वा महीं ब्राह्मणसंप्रयोगा -**
**त्तेष्वाचरन्दुष्टमतो व्यनश्यत्।।**

वैरोचनेः बलेः। नीटी.

[3]**नाब्राह्मणं भूमिरियं सभूति -**
**र्वर्णं द्वितीयं भजते चिराय।**
**समुद्रनेमिर्नमते तु तस्मै**
**यं ब्राह्मणः शास्ति नयैर्विनीतः।।**

[4]**कुञ्जरस्येव संग्रामेऽपरिगृह्याङ्कुशग्रहम्।**
**ब्राह्मणैर्विप्रहीणस्य क्षत्रस्य क्षीयते बलम्।।**

अङ्कुशग्रहं अङ्कुशेन निगृह्णाति तं परिगृह्य वर्जयित्वा। परिः वर्जने। नीटी.

[5]**ब्रह्मण्यनुपमा दृष्टिः क्षात्रमप्रतिमं बलम्।**
**तौ यदा चरतः सार्धमथ लोकः प्रसीदति।।**

[6]**यथा हि सुमहानग्निः कक्षं दहति सानिलः।**
**तथा दहति राजन्यो ब्राह्मणेन समं रिपून्।।**

(१) **भा.** ३।२७।११-१२; **भामु.** ३।२६।११-१२.

(२) **भा.** ३।२७।१३; **भामु.** ३।२६।१३ मतो (मथो).

(३) **भा.** ३।२७।१४; **भामु.** ३।२६।१४ नीतः (नीतम्).

(४) **भा.** ३।२७।१५; **भामु.** ३।२६।१५ मेऽपरि (मे परि) हीणस्य (हीनस्य).

(५) **भा.** ३।२७।१६; **भामु.** ३।२६।१६ ब्रह्मण्य (ब्राह्मण्य) र्धमथ (र्धं तदा).

(६) **भा.** ३।२७।१७; **भामु.** ३।२६।१७ रिपून् (रिपुम्).

[1]**ब्राह्मणेभ्योऽथ मेधावी बुद्धिपर्येषणं चरेत्।**
**अलब्धस्य च लाभाय लब्धस्य च विवृद्धये।।**
बुद्धिपर्येषणं बुद्धेः साकल्येन संग्रहणम्।
नीटी.

[2]**अलब्धलाभाय च लब्धवृद्धये**
**यथार्हतीर्थप्रतिपादनाय।**
**यशस्विनं वेदविदं विपश्चितं**
**बहुश्रुतं ब्राह्मणमेव वासय।।**
यथार्हतीर्थे यथायोग्यपात्रे प्रतिपादनाय दानाय।
नीटी.

**ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर।**
**तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः।।**
वृत्तिः वर्तनम्। नीटी.

क्षत्रियस्य शौर्यं वृत्तिः,
न भिक्षा

[3]**न चार्थो भैक्षचर्येण नापि क्लैब्येन कर्हिचित्।**
**वेत्तुं शक्यः सदा राजन्केवलं धर्मबुद्धिना।।**
क्लैब्येन कातर्येण। वेत्तुं लब्धुम्। नीटी.

[4]**प्रतिषिद्धा हि ते याच्ञा यया सिध्यति वै द्विजः।**
**तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ।।**
द्विजः ब्राह्मणः। तेजसा पराभिभवशक्त्या।
नीटी.

[5]**भैक्षचर्या न विहिता न च विट्शूद्रजीविका।**
**क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम्।।**
औरसम् उत्साहः। नीटी.

ब्राह्मणप्रशंसा

[6]**न गङ्गासदृशं तीर्थं न देवः केशवात्परः।**
**ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः।।**

(१) **भा.** ३।२७।१८; **भामु.** ३।२६।१८ भ्योऽथ (ष्वेव) च विवृ (परिवृ).
(२) **भा.** ३।२७।१९-२०; **भामु.** ३।२६।१९-२०.
(३) **भा.** ३।३४।४८; **भामु.** ३।३३।४९ भैक्ष (भैक्ष्य).
(४) **भा.** ३।३४।४९; **भामु.** ३।३३।५०.
(५) **भा.** ३।३४।५०; **भामु.** ३।३३।५१ भैक्ष (भैक्ष्य).
(६) **भामु.** ३।८५।९६.

**अष्टावक्र उवाच –**

[1]**अन्धस्य पन्था बधिरस्य पन्थाः**
**स्त्रियः पन्था वैवधिकस्य पन्थाः।**
**राज्ञः पन्था ब्राह्मणेनासमेत्य**
**समेत्य तु ब्राह्मणस्यैव पन्थाः।।**
अन्धस्येति। अन्धादीनामक्षमत्वान्मार्गो देय इत्यर्थः। असमेत्य समीपम् अप्राप्य। नीटी.

**राजोवाच –**

[2]**पन्था अयं तेऽद्य मया निसृष्टो**
**येनेच्छसे तेन कामं व्रजस्व।**
**न पावको विद्यते वै लघीया -**
**निन्द्रोऽपि नित्यं नमते ब्राह्मणानाम्।।**

वर्णवृत्तयः तासां लोकयात्रा-
संपादकत्वं च

[3]**पण्याकरवणिज्याभिः कृष्याऽथो योनिपोषणैः।**
**वार्तया धार्यते सर्वं धर्मैरेतैर्द्विजातिभिः।।**
पणः भृतिः, तामर्हतीति पण्या सेवा। 'पणो वराटमाने स्यात्' इत्युपक्रम्य 'व्यवहारे भृतौ धने' इति मेदिनी। वार्ता जीविकार्था वृत्तिः। नीटी.

[4]**त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या विजानताम्।**
**ताभिः सम्यक्प्रयुक्ताभिर्लोकयात्रा विधीयते।।**
सा च क्रमेण ब्राह्मणस्य त्रयी याजनाध्यापनादिः। वैश्यस्य वार्ता पण्यादिः। क्षत्रियस्य दण्डादिः।
नीटी.

[5]**सा चेद्धर्मक्रिया न स्यात्त्रयीधर्ममृते भुवि।**
**दण्डनीतिमृते चापि निर्मर्यादमिदं भवेत्।।**
सा लोकयात्रा। नीटी.

(१) **भा.** ३।१३३।१; **भामु.** ३।१३३।१ वैवधिकस्य (भारवाहस्य).
(२) **भा.** ३।१३३।२; **भामु.** ३।१३३।२ या निसृष्टो येनेच्छसे (यातिदिष्टो येनेच्छसि).
(३) **भा.** ३।१४९।३०; **भामु.** ३।१५०।३० ष्याऽथो योनि (ष्या गोजावि).
(४) **भा.** ३।१४९।३१; **भामु.** ३।१५०।३१.
(५) **भा.** ३।१४९।३२; **भामु.** ३।१५०।३२ क्रिया (कृता).

[1]वार्ताधर्मे ह्यवर्तन्त्यो विनश्येयुरिमाः प्रजाः।
सुप्रवृत्तैस्त्रिभिर्ह्येतैर्धर्मैः सूयन्ति वै प्रजाः।।
[2]याजनाध्यापने चोभे ब्राह्मणानां प्रतिग्रहः।
पालनं क्षत्रियाणां वै वैश्यधर्मश्च पोषणम्।।
[3]शुश्रूषा तु द्विजातीनां शूद्राणां धर्म उच्यते।।

ब्राह्मणप्रशंसा, कृष्यादिभिरैहिकं जीवनं दण्डनीतित्रयीविद्याभ्यां परलोकप्राप्तिश्च

[4]न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन।
ब्राह्मणो रुषितो हन्यादपि लोकान्प्रतिज्ञया।।
[5]नानुयोगा ब्राह्मणानां भवन्ति
वाचा राजन्मनसा कर्मणा वा।
यस्त्वेवं ब्रह्म तपसाऽन्वेति विद्वां -
स्तेन श्रेष्ठो भवति हि जीवमानः।।

अनुयोगः शासनम्। अदण्ड्या ब्राह्मणा इत्यर्थः। ब्रह्म ब्राह्मणजातिम्। यो ब्राह्मणसेवी स जीवति, अन्यो नश्यतीत्यर्थः। नीटी.

**युधिष्ठिर उवाच –**

[6]चातुर्वर्ण्यस्य सर्वस्य वर्तमानाः प्रतिग्रहे।
केन विप्रा विशेषेण तारयन्ति तरन्ति च।।

**मार्कण्डेय उवाच –**

जपैर्मन्त्रैश्च होमैश्च स्वाध्यायाध्ययनेन च।
नावं वेदमयीं कृत्वा तारयन्ति तरन्ति च।।
ब्राह्मणांस्तोषयेद्यस्तु तुष्यन्ते तस्य देवताः।
वचनाच्चापि विप्राणां स्वर्गलोकमवाप्नुयात्।।
कपिलायां तु दत्तायां यत् फलं ज्येष्ठपुष्करे।
तत् फलं भरतश्रेष्ठ विप्राणां पादधावने।।

(१) भा. ३।१४९।३३; भामु. ३।१५०।३३ वर्तन्त्यो (वर्तिन्यो) धर्मैः (धर्मै).

(२) भा. ३।१४९।३५; भामु. ३।१५०।३५ ने चोभे ब्राह्मणानां (नं विप्रे धर्मश्चैव).

(३) भा. ३।१४९।३६; भामु. ३।१५०।३६ तु (च).

(४) भा. ३।१८९।१८; भामु. ३।१९१।२०-२१ णो रुषितो (णः कुपितो).

(५) भा. ३।१९०।६६-६७; भामु. ३।१९२।५६.

(६) भामु. ३।२००।१२-१४, ६६-६८, ७७-७८, ८३-९३.

द्विजपादोदकक्लिन्ना यावत् तिष्ठति मेदिनी।
तावत् पुष्करपर्णेन पिबन्ति पितरो जलम्।।
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः।
पितरः पादशौचेन अन्नाद्येन प्रजापतिः।।
हव्यं कव्यं च यत् किंचित्सर्वं तच्छ्रोत्रियोऽर्हति।
दत्तं हि श्रोत्रिये साधौ ज्वलितेऽग्नौ यथा हुतम्।।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रयोधिनः।
निहन्युर्मन्युना विप्रा वज्रपाणिरिवासुरान्।।
सायं प्रातश्च संध्यां यो ब्राह्मणोऽभ्युपसेवते।
प्रजपन् पावनीं देवीं गायत्रीं वेदमातरम्।।
स तया पावितो देव्या ब्राह्मणो नष्टकिल्बिषः।
न सीदेत् प्रतिगृह्णानो महीमपि ससागराम्।।
ये चास्य दारुणाः केचिद्ग्रहाः सूर्यादयो दिवि।
ते चास्य सौम्या जायन्ते शिवाः शिवतराः सदा।।
सर्वे नानुगतं चैनं दारुणाः पिशिताशनाः।
घोररूपा महाकाया धर्षयन्ति द्विजोत्तमम्।।
नाध्यापनाद्याजनाद्वा अन्यस्माद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलिताग्निसमा द्विजाः।।
दुर्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः।।
यथा श्मशाने दीप्तौजाः पावको नैव दुष्यति।
एवं विद्वानविद्वान् वा ब्राह्मणो दैवतं महत्।।
प्राकारैश्च पुरद्वारैः प्रासादैश्च पृथग्विधैः।
नगराणि न शोभन्ते हीनानि ब्राह्मणोत्तमैः।।
वेदाढ्या वृत्तसंपन्ना ज्ञानवन्तस्तपस्विनः।
यत्र तिष्ठन्ति वै विप्रास्तन्नाम नगरं नृप।।
व्रजे वाऽप्यथवाऽरण्ये यत्र सन्ति बहुश्रुताः।
तत् तन्नगरमित्याहुः पार्थ तीर्थं च तद्भवेत्।।
रक्षितारं च राजानं ब्राह्मणं च तपस्विनम्।
अभिगम्याभिपूज्याथ सद्यः पापात् प्रमुच्यते।।

**ब्राह्मण उवाच –**

[1]ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः।
गृहस्थधर्मे वर्तन्ती ब्राह्मणानवमन्यसे।।

(१) भा. ३।१९७।२१; भामु. ३।२०६।२१.

[1]**इन्द्रोऽप्येषां प्रणमते किं पुनर्मानुषा भुवि।**
**अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया।**
**ब्राह्मणा ह्यग्निसदृशा दहेयुः पृथिवीमपि।।**

**स्त्र्युवाच –**

[2]**नावजानाम्यहं विप्रान्देवैस्तुल्यान्मनस्विनः।**
**अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ।।**
**जानामि तेजो विप्राणां महाभाग्यं च धीमताम्।**
**अपेयः सागरः क्रोधात्कृतो हि लवणोदकः।।**
**तथैव दीप्ततपसां मुनीनां भावितात्मनाम्।**
**येषां क्रोधाग्निरद्यापि दण्डके नोपशाम्यति।।**

दण्डके दण्डकारण्ये। नीटी.

[3]**ब्राह्मणानां परिभवाद्वातापिश्च दुरात्मवान्।**
**अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः।।**
[4]**प्रभावा बहवश्चापि श्रूयन्ते ब्रह्मवादिनाम्।**
**क्रोधः सुविपुलो ब्रह्मन्प्रसादश्च महात्मनाम्।।**
[5]**कृषिगोरक्ष्यवाणिज्यमिह लोकस्य जीवनम्।**
**दण्डनीतिस्त्रयी विद्या तेन लोका भवन्त्युत।।**

लोकः परलोकः। नीटी.

**व्याध उवाच –**

[6]**ब्राह्मणा वै महाभागाः पितरोऽग्रभुजः सदा।**
**तेषां सर्वात्मना कार्यं प्रियं लोके मनीषिणा।।**
[7]**शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः।**
**वैश्यत्वं लभते ब्रह्मन् क्षत्रियत्वं तथैव च।**
**आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते।।**

जातस्येति कर्मणि षष्ठी। वैश्यत्वं कर्तृ। सद्गुणवन्तं वैश्यत्वादयः स्वयमायान्तीति गुणकृत एव वर्णविभागः, न जातिकृत इति भावः। नीटी.

(१) **भा.** ३।१९७।२२; **भामु.** ३।२०६।२२-२३ मानुषा (मानवो).
(२) **भा.** ३।१९७।२३-२५; **भामु.** ३।२०६।२४-२७.
(३) **भा.** ३।१९७।२६; **भामु.** ३।२०६।२७-२८ पिश्च दु (पिः सुदु).
(४) **भा.** ३।१९७।२७; **भामु.** २।२०६।२८-२९ पूर्वार्धे (बहुप्रभावाः श्रूयन्ते ब्राह्मणानां महात्मनाम्।).
(५) **भा.** ३।१९८।२३; **भामु.** ३।२०७।२४ का भवन्त्युत (को भवत्युत).
(६) **भा.** ३।२०१।१३; **भामु.** ३।२१०।१४.
(७) **भा.** ३।२०३।११-१२; **भामु.** ३।२१२।११-१२.

[1]**ब्राह्मणा हि परं तेजो ब्राह्मणा हि परं तपः।**
**ब्राह्मणानां नमस्कारैः सूर्यो दिवि विराजते।।**
[2]**अमानयन्हि मानार्हान्वातापिश्च महासुरः।**
**निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च।।**
[3]**ब्राह्मणा हि महाभागाः पूजिताः पृथिवीपते।**
**तारणाय समर्थाः स्युर्विपरीते वधाय च।।**
[4]**अपराधे हि राजेन्द्र राज्ञामश्रेयसे द्विजाः।**
**भवन्ति च्यवनो यद्वत्सुकन्यायाः कृते पुरा।।**
[5]**सूर्यः प्रतपतां श्रेष्ठो द्विपदां ब्राह्मणो वरः।।**

वर्णानां वृत्तयः

[6]**चातुर्वर्ण्यस्य कर्माणि विहितानि मनीषिभिः।**
**धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति।।**

यदुक्तं 'नैते महाभये प्राप्ते संप्रष्टव्याः' (भा. ४।४२।२६) इत्यादिना ब्राह्मणानां भोजनादावेव कौशलम्, न युद्धे इति, तत्र तवापि वैश्यत्वान्न युद्धे सामर्थ्यमस्तीति दर्शयिष्यन् वर्णानां कर्माणि विभजते – चातुर्वर्ण्यस्येत्यादिना। नीटी.

[7]**अधीत्य ब्राह्मणो वेदान्याजयेत यजेत च।**
**क्षत्रियो धनुराश्रित्य यजेतैव न याजयेत्।**
**वैश्योऽधिगम्य द्रव्याणि ब्रह्मकर्माणि कारयेत्।।**

वित्तान्यधिगम्य कृष्यादिनेति शेषः। ब्रह्मकर्माणि वेदोक्तकर्माणि आधानादीनि कारयेत्। स्वार्थे णिच्। नीटी.

[8]**शूद्रः शुश्रूषणं कुर्यात्त्रिषु वर्णेषु नित्यशः।**
**वन्दनायोगविधिभिर्वैतर्सी वृत्तिमास्थितः।।**

(१) **भा.** ३।२८७।१६; **भामु.** ३।३०३।१६ ब्राह्मणा (ब्राह्मणो).
(२) **भा.** ३।२८७।१७; **भामु.** ३।३०३।१७.
(३) **भा.** ३।२८८।७; **भामु.** ३।३०४।७.
(४) **भा.** ३।२८८।९; **भामु.** ३।३०४।९ धे हि (धेऽपि).
(५) **भा.** ४।२।१२; **भामु.** ४।२।१५.
(६) **भा.** ४।४५।४; **भामु.** ४।५०।४ मनीषिभिः (स्वयंभुवा).
(७) **भा.** ४।४५।५; **भामु.** ४।५०।५-६ त च (त वा) तैव (च्चैव) द्रव्याणि (वित्तानि).
(८) **भामु.** ४।५०।६.

ब्राह्मणप्रशंसा, अविक्रेयाणि

**द्रुपद उवाच –**

**[१]भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।**
**बुद्धिमत्सु नराः श्रेष्ठा नराणां तु द्विजातयः।।**
**[२]द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः।**
**कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः।**
**स भवान्कृतबुद्धीनां प्रधान इति मे मतिः।।**

वैद्याः विद्यावन्तः। कृतबुद्धयः सिद्धान्तज्ञाः।

नीटी.

**‡ [३]अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।**
**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति।।**

प्रसङ्गात् प्रकृतेऽनुपयुक्तानपि धर्मानाह – अद्भ्य इति। एतेषां च यथालाभं प्रकृतोपयोगित्वमप्यूह्यम्। अद्भ्य इत्यादिना मैत्रेयादीनां ब्राह्मणानामवज्ञा न कार्येति सूचितम्।

नीटी. ५।३८।१३-१४.

**[४]अविक्रेयं लवणं पक्वमन्नं**
**दधि क्षीरं मधु तैलं घृतं च।**
**तिला मांसं मूलफलानि शाकं**
**रक्तं वासः सर्वगन्धा गुडश्च।।**

श्रुतिविक्रयकप्रसङ्गादन्यदप्यविक्रेयं यो विक्रीणाति सोऽपि मान्य एवेति विवक्षयाऽविक्रेयाण्याह – अविक्रेयमिति।

नीटी.

**[५]आशा धृतिं हन्ति समृद्धिमन्तकः**
**क्रोधः श्रियं हन्ति यशः कदर्यता।**
**अपालनं हन्ति पशूंश्च राज-**
**न्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम्।।**

**[१]सर्वान्स्विष्टकृतो देवान्विद्याद्य इह कश्चन।**
**न समानो ब्राह्मणस्य यस्मिन्प्रयतते स्वयम्।।**

सर्वक्रतुभ्यो ब्रह्मज्ञानमेव श्रेष्ठमित्याह – सर्वानिति। स्विष्टं शोभनमिष्टं दिव्यस्त्र्यन्नपानादिकं ये यागेन प्रीताः सन्तो यजमानाय कुर्वन्ति ते स्विष्टकृतो देवाः। तान् सर्वान् योऽश्वमेधान्तसकलक्रतुकर्ता वेद साक्षात् कुर्यात् सोऽपि ब्राह्मणस्य ब्रह्मविदः समानो न भवति। तत्र हेतुः- तस्मिन्निति। यतः तस्मिन् स्विष्टे निमित्ते स्वयं प्रयतते यत्नवान् भवति। अयं भावः – स्विष्टं क्रियासाध्यत्वादनित्यफलं ब्रह्म तु स्वतःसिद्धमेवाभिव्यज्यत इति न स्विष्टं ब्रह्मज्ञानसममिति।

नीटी.

**[२]श्रीः सुखस्येह संवासः सा चापि परिपन्थिनी।**
**ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय।।**

धनाभिजनैश्वर्यरूपा लक्ष्मीः सुखस्य मानरूपस्य संवासःअधिष्ठानम्, तथाऽपि सा परिपन्थिनी चोरतुल्या परलोकस्य नाशिनी। योगिनां तु सुतरामनिष्टकरीत्यर्थः। ब्राह्मी ब्राह्मणस्य योग्या श्रीः ऋग्यजुःसामात्मिका, 'ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्' इति श्रुतेः। प्रज्ञाहीनेन ऋगादीनां रहस्यं न प्राप्तुं शक्यमित्यर्थः।

नीटी.

**[३]द्वाराणि तस्या हि वदन्ति सन्तो**
**बहुप्रकाराणि दुरावराणि।**
**सत्यार्जवे ह्रीर्दमशौचविद्याः**
**षण्मानमोहप्रतिबाधनानि।।**

तस्य ब्राह्मसुखस्य द्वाराणि प्राप्तिसाधनानि दुराधराणि दुःसंरक्ष्याणि। सत्यं यथार्थभाषणम्। आर्जवम् अवक्रता। ह्रीः लोकापवादभयम्। दमः इन्द्रियनिग्रहः। शौचं मृज्जलाभ्यां बाह्यम्, आन्तरं तु मनःशुद्धिः। विद्या वेदशास्त्राधिगमः। यथेति। एतेषु सत्सु अनादिवासनया आगतोऽपि मोहो यथावन्न प्रभवति। 'षण्मानमोहप्रतिबन्धकानि' इति पाठे स्पष्टोऽर्थः।

नीटी.

---

‡ अस्य 'अग्नेरापः' (तैउ. २।१) इति श्रुत्या विरोधो नीलकण्ठेन न समाहित इति चित्रम्।

(१) **भा.** ५।६।१; **भामु.** ५।६।१ राणां तु (रेष्वपि).

(२) **भा.** ५।६।२ द्वितीयार्धं नास्ति; **भामु.** ५।६।२-३; **मच.** १२।१०३ (कर्तृषु ब्रह्मवेदिनः) एतावदेव.

(३) **भा.** ५।१५।३२, ५।३८।१३; **भामु.** ५।१५।३४, ५।३८।१३-१४.

(४) **भा.** ५।३८।५; **भामु.** ५।३८।५ मूलफला (फलमूला) गुडश्च (गुडाश्च).

(५) **भा.** ५।४०।७; **भामु.** ५।४०।८.

(१) **भा.** ५।४२।२७; **भामु.** ५।४२।४० यस्मिन् (तस्मिन्).

(२) **भा.** ५।४२।३१; **भामु.** ५।४२।४५.

(३) **भा.** ५।४२।३२; **भामु.** ५।४२।४६ तस्या हि (तस्येह) वराणि (धराणि) विद्याः षण्मानमोहप्रतिबाधनानि (विद्या यथा न मोहप्रतिबोधनानि).

वर्णानां वृत्तयः ब्राह्मण-
प्रशंसा च

**[1]शूद्रः करोति शुश्रूषां वैश्या विपणिजीविनः।**
**वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतम्।।**

कपालं भिक्षापात्रम्। नीटी.

**[2]गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक्।।**

प्रसृतं प्रदत्तं च तदग्रं च, तस्य भोक्ता प्रसृताग्रभुक्। पूज्य इत्यर्थः। नीटी.

**[3]अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टः स्वयंभुवा।**
**उरस्तः क्षत्रियः सृष्टो बाहुवीर्योपजीविता।**
**क्रूराय कर्मणे नित्यं प्रजानां परिपालने।।**
**[4]ब्राह्मणः प्रचरेद्भैक्षं क्षत्रियः परिपालयेत्।**
**वैश्यो धनार्जनं कुर्याच्छूद्रः परिचरेच्च तान्।।**
**भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते।**
**क्षत्रियोऽसि क्षतात्त्राता बाहुवीर्योपजीविता।।**

गुणकर्मविभागेन मुखाद्यवयवेभ्यश्च
चातुर्वर्ण्यसृष्टिः, वर्णवृत्तयः,
ब्राह्मणप्रशंसा

**[5]चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्।।**

चतुर्णां वर्णानां हितं चातुर्वर्ण्यम्। गुणाश्च कर्माणि चेति गुणकर्म। द्वन्द्वैकवद्भावः। कर्माणि अग्निहोत्रादीनि। गुणाश्च द्रव्यदेवतादिरूपाः। विभागशः साधारणासाधारण-विभागेन। तथा हि – दानजपादिकं सर्वसाधारणम्, अग्नि-होत्रादिकं त्रैवर्णिकस्यैव, न शूद्रस्य, राजसूयादिकं राज्ञ एव नेतरेषामिति विभागो दृश्यते। यद्वा, गुणविभागशः कर्मविभागश इति योज्यम्। तथाहि – सत्त्वप्रधाना ब्राह्मणाः, तेषां कर्म शमदमादिकम्। सत्त्वोपसर्जनरजःप्रधाना वैश्याः, तेषां कर्म कृष्यादि। रजउपसर्जनतमःप्रधानाः शूद्राः, तेषां कर्म शुश्रूषैव, इति गुणकर्मविभागो दृश्यते। तदा चातुर्वर्ण्य-मिति स्वार्थे ष्यञ्। चत्वारो वर्णाः गुणकर्मविभागशो मया सृष्टा इत्यर्थः। ननु यद्येवं त्वं स्वसंततितर्पणेन स्वाज्ञाकरणेन प्रीयसे, तदर्थं च त्वया चातुर्वर्ण्यं सृष्टम्, तर्हि महान् संसारी त्वमसीत्याशङ्क्याऽऽह – तस्येति। कर्तारं मायायोगात्, वस्तुतोऽकर्तारम्, अत एव अव्ययम् अविकारिणम्। नीटी.

**[1]कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्।।**

(१) गोरक्षं पशुपाल्यम्। ब्रक. १०
(२) परिचर्यात्मकं वर्णत्रयशुश्रूषात्मकम्।

× गृर. १३

**[2]आदित्यस्तेजसां श्रेष्ठो गिरीणां हिमवान्वरः।**
**जातीनां ब्राह्मणः श्रेष्ठः श्रेष्ठस्त्वमसि धन्विनाम्।।**
**[3]ब्राह्मणा ब्रह्मणा सृष्टा मुखात्क्षत्रमथोरसः।**
**ऊरुभ्यामसृजद्वैश्याञ्शूद्रान्पद्भ्यामिति श्रुतिः।।**
**[4]याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः।**
**लोकस्यानुग्रहार्थाय स्थापिता ब्रह्मणा भुवि।।**
**कृषिश्च पाशुपाल्यं च विशाम्.......।।**
**[5]प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु विधाय च।**
**वर्णे वर्णे समाधत्त एकैकं गुणवत्तरम्।।**

ब्राह्मणप्रशंसा

**शकुनिरुवाच –**

**[6]चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम्।**
**शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः।।**

---

(१) **भा.** ५।७०।४७; **भामु.** ५।७२।४७ विपणिजीविनः (वै पण्यजीविकाः).

(२) **भा.** ५।८०।१७; **भामु.** ५।८२।१७.

(३) **भा.** ५।१३०।७; **भामु.** ५।१३२।७-८ द्वितीयपङ्क्तौ (बाहुभ्यां क्षत्रियाः सृष्टा बाहुवीर्योपजीविनः।).

(४) **भा.** ५।१३०।२८-२९; **भामु.** ५।१३२।३०-३१.

(५) **भा.** ६।२६।१३; **भामु.** ६।२८।१३.

× शेषं ब्रकवत्।

(१) **भा.** ६।४०।४४; **भामु.** ६।४२।४४ रक्ष्य (रक्ष); **ब्रक.** ९-१० भामुवत्; **कृर.** १३ स्यापि (स्य तु) शेषं भामुवत्; **पमा.** १।७८ वैश्यक (वैश्यं क) शेषं भामुवत्; **बाल.** १।११९ पृ. ३६६ प्रथमचरणे (कुसीदं कृषिवाणिज्यं) पृ.

(२) **भा.** ६।११६।३३; **भामु.** ६।१२१।३५.

(३) **भा.** ८।२३।३२; **भामु.** ८।३२।४३-४४ पूर्वार्धे (ब्रह्मणा ब्राह्मणाः सृष्टा मुखात्क्षत्रं च बाहुतः।).

(४) **भा.** ८।२३।३४-३५; **भामु.** ८।३२।४६-४७.

(५) **भा.** १०।३।१८; **भामु.** १०।३।१८ त्त एकैकं गुणवत्तरम् (त्ते ह्येकैकं गुणभागगुणम्).

(६) **भा.** १२।११।११; **भामु.** १२।११।११.

[१]ब्राह्मणस्यापि चेद्राजन्क्षत्रधर्मेण तिष्ठतः।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंस्थितम्।।

वासुदेव उवाच –

[२]ब्राह्मणास्तात लोकेऽस्मिन्नर्चनीयाः सदा मम।
एते भूमिचरा देवा वाग्विषाः सुप्रसादकाः।।
[३]पुरा कृतयुगे तात चार्वाको नाम राक्षसः।
तपस्तेपे महाबाहो बदर्यां बहुवत्सरम्।।
[४]छन्द्यमानो वरेणाथ ब्रह्मणा स पुनः पुनः।
अभयं सर्वभूतेभ्यो वरयामास भारत।।
[५]द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम्।
अभयं सर्वभूतेभ्यस्ततस्तस्मै जगत्प्रभुः।।
[६]स तु लब्धवरः पापो देवानमितविक्रमः।
राक्षसस्तापयामास तीव्रकर्मा महाबलः।।
[७]ततो देवाः समेत्याथ ब्रह्माणमिदमब्रुवन्।
वधाय रक्षसस्तस्य बलविप्रकृतास्तदा।।
[८]तानुवाचाव्ययो देवो विहितं तत्र वै मया।
यथाऽस्य भविता मृत्युरचिरेणैव भारत।।

विहितः मया आज्ञप्तः। नीटी.

[९]राजा दुर्योधनो नाम सखाऽस्य भविता नृप।
तस्य स्नेहावबद्धोऽसौ ब्राह्मणानवमंस्यते।।
[१०]तत्रैनं रुषिता विप्रा विप्रकारप्रधर्षिताः।
धक्ष्यन्ति वाग्बलाः पापं ततो नाशं गमिष्यति।।

(१) भा. १२।२२।६; भामु. १२।२२।६ तिष्ठतः (वर्ततः) संस्थितम् (संभवम्).

(२) भा. १२।३९।३८; भामु. १२।३९।१.

(३) भा. १२।३९।३९; भामु. १२।३९।२ तात चा (राजंश्चा) वत्सरम् (वार्षिकम्).

(४) भा. १२।३९।४०; भामु. १२।३९।३ प्रथमचरणे (वरेण च्छन्द्यमानश्च) स पु (च पु).

(५) भा. १२।३९।४१; भामु. १२।३९।४ भ्यस्ततस्तस्मै जगत्प्रभुः (भ्यो ददौ तस्मै जगत्पतिः).

(६) भा. १२।३९।४२; भामु. १२।३९।५.

(७) भा. १२।३९।४३; भामु. १२।३९।६ त्याथ (ताश्च).

(८) भा. १२।३९।४४; भामु. १२।३९।७ चाव्ययो (च ततो) तं तत्र (तस्तत्र) णैव (णेति).

(९) भा. १२।३९।४५; भामु. १२।३९।८ नृप (नृषु).

(१०) भा. १२।३९।४६-४७; भामु. १२।३९।९-१०.

स एष निहतः शेते ब्रह्मदण्डेन राक्षसः।
चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ।।

भार्गवेण क्षत्रियनाशे हेमकारादिजात्याश्रितेभ्यः क्षत्रियेभ्यः कश्यपेन क्षत्रियवंशानां प्रतिष्ठापनम्

[१]त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः।
दक्षिणामश्वमेधान्ते कश्यपायाददत्ततः।।
[२]क्षत्रियाणां तु शेषार्थं करेणोद्दिश्य कश्यपः।
स्रुक्प्रग्रहवता राजञ्श्रीमान्वाक्यमथाब्रवीत्।।

स्रुक्प्रग्रहवता करेणेति कश्यपोऽध्वर्युः सन् कर्मान्तर एव माध्यंदिनसवने दक्षिणाकाले इदमब्रवीदिति सूच्यते। नीटी.

[३]गच्छ पारं समुद्रस्य दक्षिणस्य महामुने।
न ते मद्विषये राम वस्तव्यमिह कर्हिचित्।।
[४]ततः शूर्पारकं देशं सागरस्तस्य निर्ममे।
संत्रासाज्जामदग्न्यस्य सोऽपरान्तं महीतलम्।।
[५]कश्यपस्तु महाराज प्रतिगृह्य महीमिमाम्।
कृत्वा ब्राह्मणसंस्थां वै प्रविवेश महावनम्।।
[६]ततः शूद्राश्च वैश्याश्च यथास्वैरप्रचारिणः।
अवर्तन्त द्विजाग्र्याणां दारेषु भरतर्षभ।।
[७]अराजके जीवलोके दुर्बला बलवत्तरैः।
बाध्यन्ते न च वित्तेषु प्रभुत्वमिह कस्यचित्।।
[८]ततः कालेन पृथिवी प्रविवेश रसातलम्।
अरक्ष्यमाणा विधिवत्क्षत्रियैर्धर्मरक्षिभिः।।

(१) भा. १२।४९।५६; भामु. १२।४९।६४.

(२) भा. १२।४९।५७; भामु. १२।४९।६५ क्षत्रियाणां तु (स क्षत्रियाणां) राजञ्श्रीमान् (राजंस्ततो).

(३) भा. १२।४९।५८; भामु. १२।४९।६६ पारं (तीरं).

(४) भा. १२।४९।५९; भामु. १२।४९।६७ संत्रासाज्जा (सहसा जा) न्तं म (न्तम).

(५) भा. १२।४९।६०; भामु. १२।४९।६८ पस्तु (पस्तां) महीमिमाम् (वसुंधराम्) चतुर्थचरणे (प्रविष्टः सुमहद्वनम्).

(६) भा. १२।४९।६१; भामु. १२।४९।६९.

(७) भा. १२।४९।६२; भामु. १२।४९।७० उत्तरार्धे (पीड्यन्ते न हि विप्रेषु प्रभुत्वं कस्यचित्तदा।।).

(८) भा. १२।४९।६३; भामु. १२।४९।७१-७२ (ततः कालेन पृथिवी पीड्यमाना दुरात्मभिः। विपर्ययेण तेनाऽऽशु प्रविवेश रसातलम्।।).

[1]तां दृष्ट्वा द्रवतीं तत्र संत्रासात्स महामनाः।
[2]ऊरुणा धारयामास कश्यपः पृथिवीं ततः।
निमज्जन्तीं तदा राजंस्तेनोर्वीति मही स्मृता।।
[3]रक्षिणश्च समुद्दिश्य प्रायाचत्पृथिवी तदा।
प्रसाद्य कश्यपं देवी क्षत्रियान्बाहुशालिनः।।
[4]सन्ति ब्रह्मन्मया गुप्ता नृषु क्षत्रियपुंगवाः।
हैहयानां कुले जातास्ते संरक्षन्तु मां मुने।।
[5]अस्ति पौरवदायादो विडूरथसुतः प्रभो।
ऋक्षैः संवर्धितो विप्र ऋक्षवत्येव पर्वते।।
[6]तथाऽनुकम्प्यमानेन यज्वनाऽथामितौजसा।
पराशरेण दायादः सौदासस्याभिरक्षितः।।
[7]सर्वकर्माणि कुरुते तस्यर्षेः शूद्रवद्धि सः।
सर्वकर्मेत्यभिख्यातः स मां रक्षतु पार्थिव।।

द्विजः क्षत्रियोऽपि। नीटी.

[8]शिबेः पुत्रो महातेजा गोपतिर्नाम नामतः।
वने संरक्षितो गोभिः सोऽभिरक्षतु मां मुने।।
[9]प्रतर्दनस्य पुत्रस्तु वत्सो नाम महायशाः।
वत्सैः संवर्धितो गोष्ठे स मां रक्षतु पार्थिवः।।
[10]दधिवाहनपौत्रस्तु पुत्रो दिविरथस्य ह।
अङ्गः स गौतमेनापि गङ्गाकूलेऽभिरक्षितः।।

(१) भामु. १२।४९।७२.

(२) भा. १२।४९।६४; भामु. १२।४९।७३ तृतीयचरणे (धृता तेनोरुणा येन).

(३) भा. १२।४९।६५; भामु. १२।४९।७४ रक्षिणश्च (रक्षणार्थं) प्रायाचत् (ययाचे) चतुर्थचरणे (वरयामास भूमिपम्).

(४) भा. १२।४९।६६; भामु. १२।४९।७५ श्लोकादौ (पृथिव्युवाच) प्ता नृषु (प्ताः स्त्रीषु).

(५) भा. १२।४९।६७; भामु. १२।४९।७६ विडू (विंदू) त्येव (त्यथ).

(६) भा. १२।४९।६८; भामु. १२।४९।७७.

(७) भा. १२।४९।६९; भामु. १२।४९।७८ द्वितीयचरणे (शूद्रवत्तस्य स द्विजः) पार्थिव (पार्थिवः).

(८) भा. १२।४९।७०; भामु. १२।४९।७९ शिबेः पु (शिबिपु) रक्षितो (वर्धितो).

(९) भा. १२।४९।७१; भामु. १२।४९।८० यशाः (बलः).

(१०) भा. १२।४९।७२; भामु. १२।४९।८१ ह (च) अङ्गः (गुप्तः) नापि ग (नासीद्ग).

[1]बृहद्रथो महाबाहुर्भुवि भूतिपुरस्कृतः।
गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः।।
[2]मरुत्तस्यान्ववाये तु क्षत्रियास्तुर्वसोस्त्रयः।
मरुत्पतिसमा वीर्ये समुद्रेणाभिरक्षिताः।।
[3]एते क्षत्रियदायादास्तत्र तत्र परिश्रुताः।
[4]द्योकारहेमकारादिजातिं नित्यं समाश्रिताः।।
[5]सम्यङ्मामभिरक्षन्तु ततः स्थास्यामि निश्चला।।

द्योतुल्यान्विचित्रप्रासादादीन्कुर्वन्ति ते द्योकाराः शिल्पिनः। ज्याकारेति पाठान्तरे स्पष्टोऽर्थः। नीटी.

[6]एतेषां पितरश्चैव तथैव च पितामहाः।
मदर्थं निहता युद्धे रामेणाक्लिष्टकर्मणा।।
[7]तेषामपचितिश्चैव मया कार्या न संशयः।
न ह्यहं कामये नित्यमविक्रान्तेन रक्षणम्।।

अपचितिः आनृण्यार्थं पूजा। नित्यमतिक्रान्तेन धर्मातिक्रमिणा। नीटी.

[8]वर्तमानेन वर्तेयं तत्क्षिप्रं संविधीयताम्।
[9]ततः पृथिव्या निर्दिष्टांस्तान्समानीय कश्यपः।
अभ्यषिञ्चन्महीपालान्क्षत्रियान्वीर्यसंमतान्।।
[10]तेषां पुत्राश्च पौत्राश्च येषां वंशाः प्रतिष्ठिताः।।

(१) भा. १२।४९।७३; भामु. १२।४९।८२ पूर्वार्धे (बृहद्रथो महातेजा भूरिभूतिपरिष्कृतः।).

(२) भा. १२।४९।७४; भामु. १२।४९।८३ तु (च) द्वितीयचरणे (रक्षिताः क्षत्रियात्मजाः).

(३) भा. १२।४९।७५; भामु. १२।४९।८४.

(४) भामु. १२।४९।८४.

(५) भा. १२।४९।७५; भामु. १२।४९।८५ सम्यङ्मा (यदि मा) रक्षन्तु (रक्षन्ति).

(६) भा. १२।४९।७६; भामु. १२।४९।८५-८६.

(७) भा. १२।४९।७७; भामु. १२।४९।८६-८७ न संशयः (महामुने) मवि (मति).

(८) भामु. १२।४९।८७.

(९) भा. १२।४९।७८; भामु. १२।४९।८८ श्लोकादौ (वासुदेव उवाच).

(१०) भा. १२।४९।७९; भामु. १२।४९।८९.

ब्राह्मणप्रशंसा, क्षत्रियशब्द-
निर्वचनम्

[१]**भूतमेतत्परं लोके ब्राह्मणा नाम भारत।।**
[२]**अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।**
**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति।।**
[३]**अयो हन्ति यदाऽश्मानमग्निश्चापोऽभिपद्यते।**
**ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः।।**
[४]**एतज्ज्ञात्वा महाराज नमस्या एव ते द्विजाः।**
**भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति शमान्विताः।।**
भौमं ब्रह्म वेदान् यज्ञांश्च। नीटी.
[५]**ब्राह्मणानां क्षतत्राणात्ततः क्षत्रिय उच्यते।।**

वैश्यशूद्रयोर्वृत्तयः

[६]**प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून्।**
**ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः।।**
[७]**तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्।**
**षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत्।।**
[८]**लये च सप्तमो भागस्तथा शृङ्गे कला खुरे।**
**सस्यस्य सर्वबीजानामेषा सांवत्सरी भृतिः।।**

षण्णां धेनूनां रक्षको वैश्य एकस्याः क्षीरं स्ववेतनं हरेत्। शतस्य रक्षको वर्षे एकं गोवृषभमिथुनं वेतनं हरेत्। वाणिज्ये तु लब्धात्सप्तमं भागं धनिकाद्धरेत्। गवयादिशृङ्गवाणिज्ये लाभात्सप्तममेव। खुरे पशुविशेषखुरे महामूल्ये। कला षोडशो भागः। एवं सस्यानामपि सप्तममेवांशं हरेत्। नीटी.

(१) **भा.** १२।५६।२२; **भामु.** १२।५६।२२ द्वितीयचरणे (ब्राह्मणो नाम पाण्डव).

(२) **भा.** १२।५६।२४; **भामु.** १२।५६।२४.

(३) **भा.** १२।५६।२५; **भामु.** १२।५६।२५ द्वितीयचरणे (अग्निना वारि हन्यते).

(४) **भा.** १२।५६।२६; **भामु.** १२।५६।२६ एतज्ज्ञात्वा (एवं कृत्वा) शमान्विताः (समर्चिताः).

(५) **भा.** १२।५९।१२८; **भामु.** १२।५९।१२६.

(६) **भा.** १२।६०।२३; **भामु.** १२।६०।२३-२४ ददे पशून् (ददौ पशून्).

(७) **भा.** १२।६०।२४; **भामु.** १२।६०।२४-२५.

(८) **भा.** १२।६०।२५; **भामु.** १२।६०।२५-२६ प्रथमचरणे (लब्धाच्च सप्तमं भागं) सस्यस्य (सस्यानां).

[१]**न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति।**
**वैश्ये चेच्छति नान्येन रक्षितव्याः कथंचन।।**
[२]**शूद्र एतान्परिचरेत्त्रीन्वर्णाननसूयकः।**
**संचयांश्च न कुर्वीत जातु शूद्रः कथंचन।।**
[३]**पापीयान्हि धनं लब्ध्वा वशे कुर्याद्गरीयसः।**
**राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः।।**

(१) गरीयसः द्विजातीन् वशे कुर्यात् आक्रामेत्, न गणयेदित्यर्थः। राजा वेत्यादि। अथवा शूद्रो यदि राजा भवेत् तदा द्विजैः अनुज्ञातः सन् कामं धनसंचयं कुर्वीत। यद्वा, राजावासं राजपरिग्रहं स्थानपालादित्वं प्राप्य अनुज्ञातो द्विजैः सन् कामं धनसंचयं कुर्यात्। शूशि. ६४

(२) कुर्वीत, संचयानिति ¤अपकृष्यते। धार्मिकः कर्मप्रधानः, न तु भोगलोभप्रधानः। नीटी.

[४]**तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्।**
**अवश्यभरणीयो हि वर्णानां शूद्र उच्यते।।**
[५]**छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च।**
**यातयामानि देयानि शूद्राय परिचारिणे।।**

औशीरं वेष्टनं वीरणमूलकृता छदिः। यातयामानि भुक्तभोगानि। जीर्णानीति यावत्। नीटी.

¤ उत्कृष्यते इत्यर्थः।

(१) **भा.** १२।६०।२६; **भामु.** १२।६०।२६-२७.

(२) **भा.** १२।६०।२९; **भामु.** १२।६०।२९-३० नसूयकः (नुपूर्वशः); **पमा.** १।४२० उत्त.; **स्मृकौ.** ९० उत्त., क्रमेण आनुशासनिके पर्वणि; **शूशि.** ६४. सर्वं स्मृकौवत्; **शूक.** ६६ सर्वं स्मृकौवत्; **सस्मृ.** १७२ यांश्च (यं च) उत्त., आनुशासनिके.

(३) **भा.** १२।६०।३०; **भामु.** १२।६०।३०-३१; **पमा.** १।४२० पापीयान्हि (सेवया हि) वा सम (दानम); **स्मृकौ.** ९० धार्मिकः (धर्मतः) क्रमेण आनुशासनिके पर्वणि; **शूशि.** ६४. राज्ञा (राजा) राज्ञा वा स (राजावास) इत्यपि पाठः, शेषं सर्वं स्मृकौवत्; **शूक.** ६६ वशे कुर्याद्ग (बाधेतापि ग) शेषं सर्वं स्मृकौवत्; **सस्मृ.** १७२ पापीयान्हि (पापाय वा) धार्मिकः (धर्मतः) आनुशासनिके पर्वणि.

(४) **भा.** १२।६०।३१; **भामु.** १२।६०।३१-३२ श्यभर (श्यं भर).

(५) **भा.** १२।६०।३२; **भामु.** १२।६०।३२-३३; **पमा.** १।४२० पूर्वार्धे (छत्रवेष्टनपुञ्जानि उपानद्व्यजनानि च।).

[1]अधार्याणि विशीर्णानि वसनानि द्विजातिभिः।
शूद्रायैव विधेयानि तस्य धर्मधनं हि तत्॥
[2]यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत्।
कल्प्यां तस्य तु तेनाऽऽहुर्वृत्तिं धर्मविदो जनाः।
देयः पिण्डोऽनपेताय भर्तव्यौ वृद्धदुर्बलौ॥

द्विजातीनां मध्ये यं कंचित्प्रति। तेन द्विजातिना।

नीटी.

ब्राह्मणप्रशंसा

[3]दैवतं परमं विप्राः स्वेन स्वेन परस्परम्।
अयजन्निह सत्रैस्ते तैस्तैः कामैः सनातनैः॥
[4]संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः।
देवानामपि ये देवा यद्ब्रूयुस्ते परं हि तत्।
तस्माद्वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया॥

सृष्टयः संतानानि। तेन सर्वेषां वर्णानां ब्राह्मणजत्वादस्त्येव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थः। यद्ब्रूयुस्ते तत् ते तव परं हितम्। वर्णैः सशूद्रैः सर्वयज्ञाः श्रौताः स्मार्ताश्च न काम्यया स्वभावात् संसृज्यन्ते इति पूर्वस्योपसंहारः।

नीटी.

ब्राह्मणस्य निषिद्धा वृत्तयः

[5]ज्याकर्षणं शत्रुनिबर्हणं च
कृषिर्वणिज्या पशुपालनं च।
शुश्रूषणं चापि तथाऽर्थहेतो-
रकार्यमेतत्परमं द्विजस्य॥

[1]राजप्रैष्यं कृषिधनं जीवनं च वणिज्यया।
कौटिल्यं कौलटेयं च कुसीदं च विवर्जयेत्॥

कौटिल्यम् अनार्जवम्। कौलटेयं कुलटाप्रधानं जारकर्म पारदार्यं वा। अन्ये तु कौटिलीयामिति पाठं प्रकल्प्य मात्सर्यमिति व्याचक्षते। कुसीदं वृद्धिजीविकाम्।

नीटी.

वर्णानामुत्पत्तिः, ब्राह्मणक्षत्रिय-
सहयोगप्रशंसा

**ऐल उवाच –**

[2]कुतः स्विद्ब्राह्मणो जातो वर्णाश्चापि कुतस्त्रयः।
कस्माच्च भवति श्रेयानेतद्वायो विचक्ष्व मे॥

**वायुरुवाच –**

[3]ब्रह्मणो मुखतः सृष्टो ब्राह्मणो राजसत्तम।
बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य उच्यते॥
[4]वर्णानां परिचर्यार्थं त्रयाणां पुरुषर्षभ।
वर्णश्चतुर्थः पश्चात्तु पद्भ्यां शूद्रो विनिर्मितः॥
[5]ब्राह्मणो जातमात्रस्तु पृथिवीमन्वजायत।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये॥
[6]ततः पृथिव्या गोप्तारं क्षत्रियं दण्डधारिणम्।
द्वितीयं वर्णमकरोत्प्रजानामनुगुप्तये॥
[7]वैश्यस्तु धनधान्येन त्रीन्वर्णान्बिभृयादिमान्।
शूद्रो ह्येनान्परिचरेदिति ब्रह्मानुशासनम्॥

---

(१) **भा.** १२।६०।३३; **भामु.** १२।६०।३३-३४ विधेया (प्रदेया).

(२) **भा.** १२।६०।३४; **भामु.** १२।६०।३४-३५ यश्च कश्चिद् (यं च कंचिद्) तस्य तु तेनाऽऽहुर् (तेन तु ते प्राहुर्) पेताय (पत्याय); **पमा.** १।४२० उत्तरार्धे (प्रकल्प्या तस्य तैराहुर्वृत्तिर्धर्मविदो जनाः॥) तृतीयार्धं नास्ति; **संम.** ८० ल्प्यां तस्य तु तेनाऽऽ (ल्प्या तस्य वनैरा) तृतीयार्धं नास्ति.

(३) **भा.** १२।६०।४०; **भामु.** १२।६०।४१-४२ परमं (हि परं) सनातनैः (समाहिताः).

(४) **भा.** १२।६०।४१; **भामु.** १२।६०।४२-४३ हि तत् (हितम्).

(५) **भा.** १२।६३।१; **भामु.** १२।६३।१.

(१) **भा.** १२।६३।३; **भामु.** १२।६३।३ प्रैष्यं (प्रेष्यं) ज्यया (क्पथा).

(२) **भा.** १२।७३।३; **भामु.** १२।७२।३ ऐल (पुरूरवा) उत्तरार्धे (कस्माच्च भवति श्रेष्ठस्तन्मे व्याख्यातुमर्हसि॥).

(३) **भा.** १२।७३।४; **भामु.** १२।७२।४ वायुरु (मातरिश्वो) ब्रह्मणो (ब्राह्मणो) ब्राह्मणो (ब्रह्मणो) उच्यते (एव च).

(४) **भा.** १२।७३।५; **भामु.** १२।७२।५ पुरुष (भरत) पश्चात्तु (संभूतः).

(५) **भा.** १२।७३।६; **भामु.** १२।७२।६ पूर्वार्धे (ब्राह्मणो जायमानो हि पृथिव्यामनुजायते।).

(६) **भा.** १२।७३।७; **भामु.** १२।७२।७ ततः (अतः) गोप्तारं (यन्तारं) धारिणम् (धारणे) वर्ण (दण्ड).

(७) **भा.** १२।७३।८; **भामु.** १२।७२।८ बिभृया (विधृया) ह्येनान् (ह्येतान्).

**ऐल उवाच –**

**[1]द्विजस्य क्षत्रबन्धोर्वा कस्येयं पृथिवी भवेत्।**
**धर्मतः सह वित्तेन सम्यग्वायो प्रचक्ष्व मे।।**

**वायुरुवाच –**

**विप्रस्य सर्वमेवैतद्यत्किंचिज्जगतीगतम्।**
**ज्येष्ठेनाभिजनेनेह तद्धर्मकुशला विदुः।।**
**स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च।**
**गुरुर्हि सर्ववर्णानां ज्येष्ठः श्रेष्ठश्च वै द्विजः।।**
**[2]पत्यभावे यथा स्त्री हि देवरं कुरुते पतिम्।**
**आनन्तर्यात्तथा क्षत्रं पृथिवी कुरुते पतिम्।।**
**[3]एष ते प्रथमः कल्प आपद्यन्यो भवेदतः।**
**यदि स्वर्गे परं स्थानं धर्मतः परिमार्गसि।।**
**[4]यः कश्चिद्विजयेद्भूमिं ब्राह्मणाय निवेदयेत्।**
**श्रुतवृत्तोपपन्नाय धर्मज्ञाय तपस्विने।।**
**[5]स्वधर्मपरितृप्ताय यो न वित्तपरो भवेत्।**
**यो राजानं नयेद्बुद्ध्या सर्वतः परिपूर्णया।।**
**[6]ब्राह्मणो हि कुले जातः कृतप्रज्ञो विनीतवाक्।**
**श्रेयो नयति राजानं ब्रुवंश्चित्रां सरस्वतीम्।।**
**[7]ब्रह्मक्षत्रस्य संमानात्प्रजाः सुखमवाप्नुयुः।।**
**[8]ब्रह्मक्षत्रं हि सर्वेषां धर्माणां मूलमुच्यते।।**
**[9]अग्र्यो हि ब्राह्मणः प्रोक्तः सर्वस्यैवेह धर्मतः।।**

(१) भा. १२।७३।९-११; भामु. १२।७२।९-११.
(२) भा. १२।७३।१२; भामु. १२।७२।१२ यथा स्त्री हि (यथैव स्त्री) पू.
(३) भा. १२।७३।१३; भामु. १२।७२।१२-१३ स्वर्गे (स्वर्गं) धर्मतः (स्वधर्म).
(४) भा. १२।७३।१४; भामु. १२।७२।१३-१४ पूर्वार्धे (यत्किंचिज्जयसे भूमिं ब्राह्मणाय निवेदय।).
(५) भा. १२।७३।१५; भामु. १२।७२।१४-१५.
(६) भा. १२।७३।१६; भामु. १२।७२।१५-१६ वाक् (वान्).
(७) भा. १२।७४।४; भामु. १२।७३।४ प्रजाः (प्रजा) प्नुयुः (प्नुयात्).
(८) भा. १२।७४।५; भामु. १२।७३।५ धर्माणां (वर्णानां).
(९) भा. १२।७४।२९; भामु. १२।७३।२९ अग्र्यो (अग्रं) प्रोक्तः (प्रोक्तं).

**[1]पूर्वं हि ब्राह्मणाः सृष्टा इति धर्मविदो विदुः।**
**ज्येष्ठेनाभिजनेनास्य प्राप्तं सर्वं यदुत्तरम्।।**
**[2]तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक्।**
**सर्वं श्रेष्ठं वरिष्ठं च निवेद्यं तस्य धर्मतः।।**
**[3]एवं यो ब्रह्मविद्राजा ब्रह्मपूर्वं प्रवर्तते।**
**जयत्यविजितामुर्वीं यशश्च महदश्नुते।।**

अत्यन्तापदि ब्राह्मणस्य वैश्यवृत्तिः, तत्राविक्रेयाणि, विनिमयविधिः, ब्राह्मणप्रशंसा

**युधिष्ठिर उवाच –**

**[4]व्याख्याता क्षत्रधर्मेण वृत्तिरापत्सु भारत।**
**कथंचिद्वैश्यधर्मेण जीवेद्वा ब्राह्मणो न वा।।**

व्याख्याता, ब्राह्मणस्येति शेषः। राजधर्मेणेति। शस्त्रधारणादिना वृत्तिः जीविका। आपदि विकर्मस्थोऽपि ब्राह्मणादिर्न राज्ञः पापाय भवतीति भावः। नीटी.

**भीष्म उवाच –**

**[5]अशक्तः क्षत्रधर्मेण वैश्यधर्मेण वर्तयेत्।**
**कृषिगोरक्षमास्थाय व्यसने वृत्तिसंक्षये।।**

वर्तयेत् ब्राह्मणः। नीटी.

**युधिष्ठिर उवाच –**

**[6]कानि पण्यानि विक्रीणन्स्वर्गलोकान्न हीयते।**
**ब्राह्मणो वैश्यधर्मेण वर्तयन्भरतर्षभ।।**

**भीष्म उवाच –**

**[7]सुरा लवणमित्येव तिलान्केसरिणः पशून्।**
**ऋषभान्मधु मांसं च कृतान्नं च युधिष्ठिर।।**

(१) भा. १२।७४।३०; भामु. १२।७३।३० पूर्वार्धे (पूर्वं हि ब्रह्मणः सृष्टिरिति ब्रह्मविदो विदुः।) सर्वं (पूर्वं).
(२) भा. १२।७४।३१; भामु. १२।७३।३१ वरिष्ठं (विशिष्टं).
(३) भा. १२।७५।२१; भामु. १२।७४।२१ ब्रह्मवि (धर्मवि).
(४) भा. १२। ७९।१; भामु. १२।७८।१ क्षत्र (राज) कथंचिद् (कथं स्विद्) जीवेद्वा (संजीवेद्).
(५) भा. १२।७९।२; भामु. १२।७८।२ रक्ष (रक्ष्य).
(६) भा. १२।७९।३; भामु. १२।७८।३ विक्रीणन् (विक्रीय).
(७) भा. १२।७९।४; भामु. १२।७८।४ तृतीयचरणे (वृषभान्मधुमांसं च).

केसरिणः अश्वान्। पशून् गोजाविमहिषादीन्। कृतान्नं पक्वमन्नम्। नीटी.

**[1]सर्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्जयेत्।**
**एतेषां विक्रयात्तात ब्राह्मणो नरकं व्रजेत्।।**
**अजोऽग्निर्वरुणो मेषः सूर्योऽश्वः पृथिवी विराट्।**
**धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथंचन।।**

अजादीनां विक्रयेऽग्न्यादयो देवता एव विक्रीताः, ततश्चायज्ञियो भवतीत्यर्थः। विराट् अन्नमिति प्राञ्चः। अन्नविक्रयात्पृथिवीविक्रयपापं भवतीति तेषामाशयः। पृथिवीविक्रयात्सर्वदेवतासमष्टिरूपो विराडेव विक्रीतः, तेन तदसंबन्धाद्वेदा(? देवा)दिरहितो भवतीत्यर्थः। नीटी.

**पक्वेनाऽऽमस्य निमयं न प्रशंसन्ति साधवः।**
**† निमयेत्पक्वमामेन भोजनार्थाय भारत।।**

पक्वेनाऽऽमस्य विनिमये पक्वदो दुष्यति, न त्वामद इत्यर्थः। नीटी.

**§ [2]वयं सिद्धमशिष्यामो भवान्साधयतामिदम्।**
**एवं समीक्ष्य निमयन्नाधर्मोऽस्ति कदाचन।।**

इदमप्यपवदति वयमिति। नीटी.

**[1]भवतेऽहं ददानीदं भवानेतत्प्रयच्छतु।**
**रुचिते वर्तते धर्मो न बलात् संप्रवर्तते।।**

भवतेऽहमिति। रुचितः सर्वेऽपि विनिमया युक्ताः, न तु लाभलोभ इत्यर्थः। नीटी.

**[2]क्षत्रस्याभिप्रवृद्धस्य ब्राह्मणेषु विशेषतः।**
**ब्रह्मैव संनियन्तृ स्यात् क्षत्रं हि ब्रह्मसंभवम्।।**
**[3]अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।**
**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति।।**
**[4]यदा छिनत्त्ययोऽश्मानमग्निश्चापोऽभिपद्यते।**
**क्षत्रं च ब्राह्मणं द्वेष्टि तदा शाम्यन्ति ते त्रयः।।**
**[5]तस्माद्ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर।**
**समुदीर्णान्यजेयानि तेजांसि च बलानि च।।**
**[6]धर्मस्य ब्राह्मणा योनिस्तस्मात्तान् पूजयेत्सदा।।**

आपद्वृत्तिरनापद्यधर्मः, क्षत्रियस्याऽऽपद्वृत्तिः, ब्राह्मणस्याऽऽपदि विज्ञानबलेन यथाकथंचिज्जीवनम्

**[7]अन्यो धर्मः समर्थानामापत्स्वन्यश्च भारत।**
**प्राक्कोशः प्रोच्यते धर्मो बुद्धिर्धर्माद्गरीयसी।।**

प्राक्कोशात् विनाऽपि कोशं तपआदिना धर्मः। वृत्तिः जीवनम्। तल्लोपप्रसक्तौ तु कोशसंचयविरोधी धर्मो नाऽऽदर्तव्य इत्यर्थः। नीटी.

**[8]धर्मं प्राप्य न्यायवृत्तिमबलीयान्न विन्दति।**
**यस्माद्धनस्योपपत्तिरेकान्तेन न विद्यते।।**

---

† 'मी गतौ' इति चौरादिकधातोर्विभाषितणिचो णिजभावपक्षे रूपमिदम्।

§ इदमत्र विचार्यम् – एकस्मिन्नेव विनिमयव्यवहारे पक्वदो दुष्यति, आमदस्तु न दुष्यतीत्युक्तम्। अस्मिन्नपवादे 'वयं भवता दीयमानं सिद्धम् अशिष्यामः, भवानस्माभिर्दीयमानमिदमामं साधयतां सिद्धं कुरुताम्' इति समीक्षणवाक्यार्थ आमदकर्तृकसमीक्षणरूपः सारल्येन प्रतीयते, किंतु स न युज्यते, उत्तरार्धे निमयदधर्मशब्दयोः सामानाधिकरण्येन पक्वदस्यैव प्रसक्ताधर्मत्वेन च समीक्ष्येति ल्यपा बोधितेन समीक्षणस्य पक्वदकर्तृकत्वेन विरोधात्, दोषतदपवादघटकसमीक्षणयोर्वैयधिकरण्यस्यायुक्तत्वाच्च। अतः समीक्षणवाक्यार्थः किंचित्क्लेशेनैवं कल्प्यताम् – 'वयं भवता दीयमानमामं सिद्धं कृत्वा अशिष्यामः, भवानस्माभिर्दीयमानमिदं पक्वं साधयतां बाढं कुरुताम्, स्वीकुरुतामित्यर्थः' इति। अत्र साधयतामित्यत्र बाढशब्दात् 'तत्करोति' इत्यर्थे णिच् बाढशब्दस्य साधादेशश्च। अधर्म इति नास्ति धर्मो यस्येति बहुव्रीहिः। 'समेनाऽऽमेन तु पक्वस्य संप्रत्यर्थे' (गौध. ७।२१) इति गौतमवचनानुरोधेन 'सिद्धमशिष्यामः' इत्यस्य सद्यःसाधनभोजनयोस्तात्पर्यमास्थेयमिति।

(१) भा. १२।७९।५-७; भामु. १२।७८।५-७.

(२) भा. १२।७९।८; भामु. १२।७८।८ समीक्ष्य (संवीक्ष्य) कदा (कथं).

(१) भा. १२।७९।१०; भामु. १२।७८।१० रुचिते (रुचितो).

(२) भा. १२।७९।२१; भामु. १२।७८।२१ प्रथमचरणे (क्षत्रियस्यातिवृत्तस्य).

(३) भा. १२।७९।२२; भामु. १२।७८।२२.

(४) भा. १२।७९।२३; भामु. १२।७८।२३ पद्यते (गच्छति) शाम्यन्ति (नश्यन्ति).

(५) भा. १२।७९।२४; भामु. १२।७८।२४.

(६) भा. १२।९१।१९; भामु. १२।९०।२१.

(७) भा. १२।१२८।१३-१४; भामु. १२।१३०।१४ शः प्रोच्य (शात्प्रात्य) बुद्धि (वृत्ति).

(८) भा. १२।१२८।१४-१५; भामु. १२।१३०।१५ त्तिमब (त्तिं नब) द्धन (द्बल).

**[१]तस्मादापद्यधर्मोऽपि श्रूयते धर्मलक्षणः।**
**अधर्मो जायते यस्मिन्निति वै कवयो विदुः।।**

नबलीयान्। नैकधेतिवत्समासः। दुर्बलो धर्मं प्राप्य अनुरुध्य न्यायवृत्तिं न्यायोपेतां श्रेष्ठां जीविकां न विन्दति यस्मात्, यत्नाच्चावश्यं फलं भवतीति नियमो नास्ति यस्मात्, तस्मादापदि अधर्मोऽपि कर्तव्यत्वेन श्रूयते। तत्र च योऽधर्मलक्षणो धर्मः स अधर्म एव भवतीति शास्त्रमर्यादेति श्लोकद्वयार्थः। प्रजाकर्षणादिरधर्मोऽप्यापदि धर्म एव, अ(? अनापदि) कृतश्चेत् स एवाधर्म इति भावः। नीटी.

**[२]क्षत्रियो वृत्तिसंरोधे कस्य नाऽऽदातुमर्हति।**
**अन्यत्र तापसस्वाच्च ब्राह्मणस्वाच्च भारत।।**
**यथा वै ब्राह्मणः सीदन्नयाज्यमपि याजयेत्।**
**अभोज्यान्नानि चाश्नीयात्तथेदं नात्र संशयः।।**
**[३]तस्य कोशबलज्यान्या सर्वलोकपराभवः।**
**भैक्षचर्या न विहिता न च विट्शूद्रजीविका।।**

न विहिता, यस्येत्यनुषज्जते। नीटी.

**[४]स्वधर्मानन्तरा वृत्तिर्याऽन्याननुपजीवतः।**
**वहतः प्रथमं कल्पमनुकल्पेन जीवनम्।।**

स्वधर्मः विजयेन क्षत्रियस्य धनार्जनम्, तस्य अनन्तरा प्रत्यासन्ना स्वपरराष्ट्रावमर्दन धनार्जनम्, तेन वृत्तिः, तस्य विहितेत्यनुषङ्गः। जात्यान् सजातीयान् अनुपजीवतः अयाचमानस्य नित्यं प्रथमं कल्पं वहतोऽपि आपदि अनुकल्पेन जीवनं युक्तमित्यर्थः। नीटी.

**[५]आपद्गतेन धर्माणामन्यायेनोपजीवनम्।**
**अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये।।**

(१) भा. १२।१२८।१५-१६; भामु. १२।१३०।१६ पद्य (पत्स्व) यस्मि (तस्मि).

(२) भा. १२।१२८।२०-२१; भामु. १२।१३०।२०-२१.

(३) भा. १२।१२८।२३; भामु. १२।१३०।२३ तस्य (यस्य) ज्यान्या (ग्लान्या) भैक्ष (भैक्ष्य).

(४) भा. १२।१२८।२४; भामु. १२।१३०।२४ याऽन्या (जात्या).

(५) भा. १२।१२८।२५; भामु. १२।१३०।२५.

**[१]क्षत्रिये संशयः कः स्यादित्येतन्निश्चितं सदा।**
**आददीत विशिष्टेभ्यो नावसीदेत्कथंचन।।**

अन्यायेन विपर्ययेण। 'बुभुक्षितस्त्र्यहं विप्रो धान्यमब्राह्मणाद्धरेत्' इति प्रतिग्रहालाभे ब्राह्मणस्य यथा चौर्यं विहितम्। नीटी.

**[२]अन्यत्र राजन् हिंसाया वृत्तिर्नेहास्ति कस्यचित्।**
**अप्यरण्यसमुत्थस्य एकस्य चरतो मुनेः।।**

अस्यापवादमाह – अन्यत्रेति। अन्यत्र हिंसायाः कृशजनपीडामकृत्वेत्यर्थः। इह हिंसायाम्(?) कस्यचिदपि वृत्तिर्हिंसापूर्विका न हिताऽस्तीति नेत्यर्थः। अरण्यसमुत्थस्य वन एव तिष्ठतः। नीटी.

**[३]न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम्।**
**विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सता।।**

शङ्खे ललाटास्थ्नि लिखितां वृत्तिम् दिष्टमात्रालम्बिना राज्ञा जीवितुं न शक्यम्। 'शङ्खः कम्बुललाटास्थि' इति विश्वलोचनः। ईप्सया औत्कण्ठ्येन प्रजापालनम्, चिकीर्षतेति शेषः। नीटी.

**[४]केनास्मिन्ब्राह्मणो जीवेज्जघन्ये काल आगते।**
**असंत्यजन्पुत्रपौत्राननुक्रोशात्पितामह।।**

जघन्ये आपद्बहुले। ब्राह्मणः केन जीवेदित्यस्य ब्राह्मणं कथं रक्षेदित्यर्थः। नीटी.

**भीष्म उवाच –**

**[५]विज्ञानबलमास्थाय जीवितव्यं तथागते।**
**सर्वं साध्वर्थमेवेदमसाध्वर्थं न किंचन।।**

सर्वं धनादिकं साध्वर्थं सतामर्थे। नीटी.

(१) भा. १२।१२८।२६; भामु. १२।१३०।२६ कः स्यादित्येतन्नि (तस्मादित्येवं नि).

(२) भा. १२।१२८।२८; भामु. १२।१३०।२८.

(३) भा. १२।१२८।२९; भामु. १२।१३०।२९ मीप्सता (मीप्सया).

(४) भा. १२।१३०।२; भामु. १२।१३२।२ केनास्मिन्ब्रा (केन स्विद्ब्रा).

(५) भा. १२।१३०।३; भामु. १२।१३२।३.

ब्राह्मणप्रशंसा, अत्यन्तापदि ब्राह्मणो यथाकथंचित् जीवेत्, तत्र विश्वामित्रस्य श्वजाघनी-भक्षणं दृष्टान्तः

**[१]सर्वभूतेष्वपि च वै ब्राह्मणो मोक्षमर्हति।**
**कार्या चापचितिस्तेषां सर्वस्वेनापि या भवेत्।।**

उपचितिः वृद्धिः। नीटी.

**[२]यस्य ह्येते संप्ररुष्टा मन्त्रयन्ति पराभवम्।**
**न तस्य त्रिषु लोकेषु त्राता भवति कश्चन।।**
**[३]यो ब्राह्मणान्परिभवेद्विनाशं वाऽपि रोचयेत्।**
**सूर्योदय इवावश्यं ध्रुवं तस्य पराभवः।।**

ध्वान्ते ध्वान्तस्य। नीटी.

**[४]सर्वस्मिन् दस्युसाद्भूते पृथिव्यामुपजीवने।**
**केन स्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते।।**
**[५]अतितित्यक्षुः पुत्रपौत्राननुक्रोशान्नराधिप।**
**कथमापत्सु वर्तेत तन्मे ब्रूहि पितामह।।**

अतितिक्षुः त्यक्तुमनिच्छुः। अनुक्रोशात् दयातः। ब्राह्मणान् पालयितुमशक्तो राजा किं कुर्यादित्यर्थः। नीटी.

**[६]तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके।**
**विज्ञानबलमास्थाय जीवितव्यं तदा भवेत्।।**
**[७]अत्राप्युदाहरन्तीममितिहासं पुरातनम्।**
**विश्वामित्रस्य संवादं चण्डालस्य च पक्कणे।।**

पक्कणे चाण्डालागारे। नीटी.

**[८]तस्मिन्प्रतिभये काले क्षीणे धर्मे युधिष्ठिर।**
**बभ्रमुः क्षुधिता मर्त्याः खादन्तः स्म परस्परम्।।**

**[१]ऋषयो नियमांस्त्यक्त्वा परित्यक्ताग्निदैवताः।**
**आश्रमान्संपरित्यज्य पर्यधावन्नितस्ततः।।**
**[२]विश्वामित्रोऽथ भगवान्महर्षिरनिकेतनः।**
**क्षुधा परिगतो धीमान्समन्तात्पर्यधावत।।**
**[३]त्यक्त्वा दारांश्च पुत्रांश्च कस्मिंश्च जनसंसदि।**
**भक्ष्याभक्ष्यसमो भूत्वा निरग्निरनिकेतनः।।**
**[४]स कदाचित्परिपतञ्श्वपचानां निवेशनम्।**
**हिंस्राणां प्राणिहन्तॄणामाससाद वने क्वचित्।।**
**[५]विभिन्नकलशाकीर्णं श्वचर्माच्छादनायुतम्।**
**वराहखरभग्नास्थिकपालघटसंकुलम्।।**
**[६]मृतचेलपरिस्तीर्णं निर्माल्यकृतभूषणम्।**
**सर्पनिर्मोकमालाभिः कृतचिह्नकुटीमठम्।।**
**[७]कुक्कुटारावबहुलं गर्दभध्वनिनादितम्।**
**उद्घोषद्भिः खरैर्वाक्यैः कलहद्भिः परस्परम्।।**
**[८]उलूकपक्षध्वजिभिर्देवतायतनैर्वृतम्।**
**लोहघण्टापरिष्कारं श्वयूथपरिवारितम्।।**
**[९]तत्प्रविश्य क्षुधाविष्टो गाधेः पुत्रो महानृषिः।**
**आहारान्वेषणे युक्तः परं यत्नं समास्थितः।।**
**[१०]न च क्वचिदविन्दत्स भिक्षमाणोऽपि कौशिकः।**
**मांसमन्नं मूलफलमन्यद्वा तत्र किंचन।।**

---

(१) **भा.** १२।१३३।१६; **भामु.** १२।१३५।१६ चाप (चोप).
(२) **भा.** १२।१३३।१७; **भामु.** १२।१३५।१७.
(३) **भा.** १२।१३३।१८; **भामु.** १२।१३५।१८ परिभवे (परिवदे) वाऽपि (चापि) इवावश्यं (इव ध्वान्ते).
(४) **भा.** १२।१३९।६; **भामु.** १२।१४१।६.
(५) **भा.** १२।१३९।७; **भामु.** १२।१४१।७ त्यक्षुः (तिक्षुः).
(६) **भा.** १२।१३९।११; **भामु.** १२।१४१।११ तदा भवेत् (भवेत्तदा).
(७) **भा.** १२।१३९।१२; **भामु.** १२।१४१।१२ चण्डा (चाण्डा).
(८) **भा.** १२।१३९।२४; **भामु.** १२।१४१।२४ क्षीणे (क्षते) बभ्रमुः (बभूवुः) खादन्तः स्म (खादमानाः).

(१) **भा.** १२।१३९।२५; **भामु.** १२।१४१।२५ त्यक्ताग्निदै (त्यज्याग्निदे).
(२) **भा.** १२।१३९।२६; **भामु.** १२।१४१।२६ क्षुधा प (क्षुधाप).
(३) **भामु.** १२।१४१।२७.
(४) **भा.** १२।१३९।२७; **भामु.** १२।१४१।२८ हन्तॄणा (घाताना).
(५) **भा.** १२।१३९।२८; **भामु.** १२।१४१।२९ र्माच्छादना (र्मच्छेदना).
(६) **भा.** १२।१३९।२९; **भामु.** १२।१४१।३० चेल (चैल).
(७) **भामु.** १२।१४१।३१.
(८) **भा.** १२।१३९।३०; **भामु.** १२।१४१।३२ ध्वजि (ध्वनि).
(९) **भा.** १२।१३९।३१; **भामु.** १२।१४१।३३ गाधेः पुत्रो (विश्वामित्रो).
(१०) **भा.** १२।१३९।३२; **भामु.** १२।१४१।३४ मूलफल (फलं मूल).

[१]अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः।
पपात भूमौ दौर्बल्यात्तस्मिंश्चण्डालपक्कणे।।
[२]चिन्तयामास स मुनिः किं नु मे सुकृतं भवेत्।
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम।।
वृथा अन्नं विना। नीटी.
[३]स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः।
चण्डालस्य गृहे राजन्सद्यः शस्त्रहतस्य च।।
कुतन्त्रीं दण्डिकाम्। नीटी.
[४]स चिन्तयामास तदा स्तेयं कार्यमितो मया।
न हीदानीमुपायोऽन्यो विद्यते प्राणधारणे।।
[५]आपत्सु विहितं स्तेयं विशिष्टसमहीनतः।
परं परं भवेत्पूर्वमस्तेयमिति निश्चयः।।
[६]हीनादादेयमादौ स्यात्समानात्तदनन्तरम्।
असंभवादाददतीत विशिष्टादपि धार्मिकात्।।
[७]सोऽहमन्तावसानानां हरमाणः प्रतिग्रहात्।
न स्तेयदोषं पश्यामि हरिष्याम्येतदामिषम्।।
प्रतिग्रहात तज्जदोषात् स्तैन्यदोषमधिकं न पश्यामीत्यर्थः।
श्वजाघनीं शुनो जङ्घाम्। नीटी.
[८]एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः।
तस्मिन्देशे प्रसुष्वाप पतितो यत्र भारत।।

(१) भा. १२।१३९।३३; भामु. १२।१४१।३५ चण्डा (चाण्डा).
(२) भा. १२।१३९।३४; भामु. १२।१४१।३६ प्रथमचरणे (स चिन्तयामास मुनिः).
(३) भा. १२।१३९।३५; भामु. १२।१४१।३७ कुतन्त्रीं (कुतन्त्रीं) चण्डा (चाण्डा) च (वै).
(४) भा. १२।१३९।३६; भामु. १२।१४१।३८ स्तेयं (स्तैन्यं) योऽन्यो (यो मे).
(५) भा. १२।१३९।३७; भामु. १२।१४१।३९ (आपत्सु विहितं स्तैन्यं विशिष्टं च महीयसः। विप्रेण प्राणरक्षार्थं कर्तव्यमिति निश्चयः।।).
(६) भा. १२।१३९।३८; भामु. १२।१४१।४० वादाद (वे वाऽऽद).
(७) भा. १२।१३९।३९; भामु. १२।१४१।४१ (सोऽहमन्त्यावसायानां हराम्येनां प्रतिग्रहात्। न स्तैन्यदोषं पश्यामि हरिष्यामि श्वजाघनीम्।।); मेधा. ११।१५ द्वितीयतृतीयचरणयोः (तदलाभे समादपि। असंभवे त्वाददीत).
(८) भा. १२।१३९।४०; भामु. १२।१४१।४२ प्रसु (स सु) पतितो (श्वपचो).

[१]स विगाढां निशां दृष्ट्वा सुप्ते चण्डालपक्कणे।
शनैरुत्थाय भगवान्प्रविवेश कुटीमठम्।।
[२]स सुप्त एव चण्डालः श्लेष्मापिहितलोचनः।
परिभिन्नस्वरो रूक्ष उवाचाप्रियदर्शनः।।
श्वपच उवाच –
[३]कः कुतन्त्रीं घट्टयति सुप्ते चण्डालपक्कणे।
जागर्मि नावसुप्तोऽस्मि हतोऽसीति च दारुणः।।
घट्टयति चालयति। नीटी.
[४]विश्वामित्रोऽहमित्येव सहसा तमुवाच सः।
सहसाभ्यागतभयः सोद्वेगस्तेन कर्मणा।।
[५]विश्वामित्रोऽहमायुष्मन्नागतोऽहं बुभुक्षितः।
मा वधीर्मम सद्बुद्धे यदि सम्यक् प्रपश्यसि।।
मम माम्। नीटी.
[६]चण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः।
शयनादुपसंभ्रान्त इयेषोत्पतितुं ततः।।
[७]स विसृज्याश्रु नेत्राभ्यां बहुमानात्कृताञ्जलिः।
उवाच कौशिकं रात्रौ ब्रह्मन्किं ते चिकीर्षितम्।।
नेत्राभ्यां श्लेष्मपिहिताभ्याम्। नीटी.
विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन्।
क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम्।।
[८]अवसीदन्ति मे प्राणाः स्मृतिर्मे नश्यति क्षुधा।
दुर्बलो नष्टसंज्ञश्च भक्ष्याभक्ष्यविवर्जितः।
स्वधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम्।।

(१) भा. १२।१३९।४१; भामु. १२।१४१।४३ चण्डा (चाण्डा) टीमठम् (टीमतः).
(२) भा. १२।१३९।४२; भामु. १२।१४१।४४ चण्डा (चाण्डा) रूक्ष उ (रूक्षः प्रो).
(३) भा. १२।१३९।४३; भामु. १२।१४१।४५ तन्त्रीं (तन्त्रीं) चण्डा (चाण्डा) नावसु (नात्र सु).
(४) भा. १२।१३९।४४; भामु. १२।१४१।४६ त्रोऽहमित्येव (त्रस्ततो भीतः) सः (ह) सहसाभ्यागतभयः (तत्र व्रीडाकुलमुखः).
(५) भामु. १२।१४१।४७.
(६) भा. १२।१३९।४५; भामु. १२।१४१।४८ चण्डा (चाण्डा) इयेषोत्पतितुं (उद्ययौ प्रति तं).
(७) भा. १२।१३९।४६-४७; भामु. १२।१४१।४९-५०.
(८) भा. १२।१३९।४८ द्वितीयार्धं नास्ति; भामु. १२।१४१।५२-५३ स्मृति (श्रुति) स्वधर्मं (सोऽधर्मं).

**[1]अटन्भैक्षं न विन्दामि यदा युष्माकमालये।**
**तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम्।।**
**[2]तृषितः कलुषं पाता नास्ति ह्रीरशनार्थिनः।**
**क्षुद्धर्मं दूषयत्यत्र हरिष्यामि श्वजाघनीम्।।**

कलुषं यातः पापं कर्मानुसृतः। नीटी.

**[3]अग्निर्मुखं पुरोधाश्च देवानां शुचिपाद्विभुः।**
**यथा स सर्वभुग्ब्रह्मा तथा मां विद्धि धर्मतः।।**

अग्निर्देवानां मुखं च पुरोधाश्च, सः शुचिषाट् शुचि मेध्यमेव सहते, नामेध्यम्। तस्यापि यथा सर्वभुक्त्वं तथाऽहं ब्रह्मा ब्राह्मणोऽपि तत्तुल्यत्वात्सर्वभुग्भविष्यामीत्यर्थः। नीटी.

**[4]तमुवाच स चण्डालो महर्षे शृणु मे वचः।**
**श्रुत्वा तथा समातिष्ठ यथा धर्मान्न हीयसे।।**
**[5]धर्मं तवापि विप्रर्षे शृणु यत्ते ब्रवीम्यहम्।।**
**[6]मृगाणामधमं श्वानं प्रवदन्ति मनीषिणः।**
**तस्याप्यधम उद्देशः शरीरस्योरुजाघनी।।**
**[7]नेदं सम्यग्व्यवसितं महर्षे कर्म वैकृतम्।**
**चण्डालस्वस्य हरणमभक्ष्यस्य विशेषतः।।**
**[8]साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे।**
**न मांसलोभात्तपसो नाशस्ते स्यान्महामुने।।**
**[9]जानतोऽविहितो मार्गो न कार्यो धर्मसंकरः।**
**मा स्म धर्मं परित्याक्षीस्त्वं हि धर्मविदुत्तमः।।**

(१) **भा.** १२।१३९।४९; **भामु.** १२।१४१।५३-५४ भैक्षं (भैक्ष्यं).
(२) **भा.** १२।१३९।५०; **भामु.** १२।१४१।५१ प्रथमचरणे (क्षुधितः कलुषं यातो) क्षुद्धर्मं (क्षुच्च मां).
(३) **भा.** १२।१३९।५१; **भामु.** १२।१४१।५४-५५ पाद्विभुः (षाड्विभुः) यथा स (यथावत्).
(४) **भा.** १२।१३९।५२; **भामु.** १२।१४१।५५-५६ चण्डा (चाण्डा) उत्तरार्धे (श्रुत्वा तत्त्वं तथाऽऽतिष्ठ यथा धर्मो न हीयते।।).
(५) **भामु.** १२।१४१।५६.
(६) **भा.** १२।१३९।५३; **भामु.** १२।१४१।५७ मृगाणाम (शृगालाद) स्योरु (स्य श्व).
(७) **भा.** १२।१३९।५४; **भामु.** १२।१४१।५८ कर्म वैकृतम् (धर्मगर्हितम्) चण्डा (चाण्डा).
(८) **भा.** १२।१३९।५५; **भामु.** १२।१४१।५९.
(९) **भा.** १२।१३९।५६; **भामु.** १२।१४१।६० प्रथमचरणे (जानता विहितं धर्मं) विदुत्तमः (भृतां वरः).

**[1]विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ।**
**क्षुधार्तः प्रत्युवाचेदं पुनरेव महामुनिः।।**
**[2]निराहारस्य सुमहान्मम कालोऽभिधावतः।**
**न विद्यतेऽभ्युपायश्च कश्चिन्मे प्राणधारणे।।**
**[3]येन तेन विशेषेण कर्मणा येन केनचित्।**
**अभ्युज्जीवेत्सीदमानः समर्थो धर्ममाचरेत्।।**
**[4]ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाऽऽग्निकः।**
**ब्रह्मवह्निर्मम बलं भक्ष्यामि समयं क्षुधा।।**

ऐन्द्रः पालनात्मकः। आग्निकः सर्वभुक्त्वरूपः। ब्रह्म वेदः, स एव वह्निः। नीटी.

**[5]यथा यथा वै जीवेद्धि तत्कर्तव्यमपीडया।**
**जीवितं मरणाच्छ्रेयो जीवन्धर्ममवाप्नुयात्।।**
**[6]सोऽहं जीवितमाकाङ्क्षन्नभक्षस्यापि भक्षणम्।**
**व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम्।।**
**[7]जीवन्धर्मं चरिष्यामि प्रणोत्स्याम्यशुभानि च।**
**तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः।।**

ज्योतींषीव तपइन्धनेन बलवन्तं करिष्यामि, आत्मानमिति शेषः। नीटी.

**श्वपच उवाच –**

**[8]नैतत्खादन्प्राप्स्यसे प्राणमन्यं**
**नाऽऽयुर्दीर्घं नामृतस्येव तृप्तिम्।**
**भिक्षामन्यां भिक्ष मा ते मनोऽस्तु**
**श्वभक्षणे श्वा ह्यभक्षो द्विजानाम्।।**

(१) **भा.** १२।१३९।५७; **भामु.** १२।१४१।६१.
(२) **भा.** १२।१३९।५८; **भामु.** १२।१४१।६२ भ्युपा (प्युपा).
(३) **भा.** १२।१३९।५९; **भामु.** १२।१४१।६३ तेन (येन) सीद (साद्य).
(४) **भा.** १२।१३९।६०; **भामु.** १२।१४१।६४ समयं क्षुधा (शमयन् क्षुधाम्).
(५) **भा.** १२।१३९।६१; **भामु.** १२।१४१।६५ यथा वै (यथैव) मपीडया (महेलया).
(६) **भा.** १२।१३९।६२; **भामु.** १२।१४१।६६ भक्षस्या (भक्ष्यस्या).
(७) **भा.** १२।१३९।६३; **भामु.** १२।१४१।६७ जीवन् धर्मं चरि (बलवन्तं करि) नि च (नि तु).
(८) **भा.** १२।१३९।६४; **भामु.** १२।१४१।६८ पूर्वार्धे (नैतत् खादन् प्राप्नुते दीर्घमायुर्नैव प्राणान्नामृतस्येव तृप्तिः।) भक्षो (भक्ष्यो).

**विश्वामित्र उवाच –**

**[१]न दुर्भिक्षे सुलभं मांसमन्य-**
**च्छ्वपाक नान्नं न च मेऽस्ति वित्तम्।**
**क्षुधार्तश्चाहमगतिर्निराशः**
**श्वमांसे चास्मिन्षड्रसान्साधु मन्ये।।**

**श्वपच उवाच –**

**[२]पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै द्विज।**
**यदि शास्त्रं प्रमाणं ते माऽभक्ष्ये मानसं कृथाः।।**

पञ्च शशशल्यकादयः पञ्चैव भक्ष्याः, नान्ये इति हेतोरभक्ष्ये श्वमांसे मनो मा कृथाः। नीटी.

**विश्वामित्र उवाच –**

**[३]अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै।**
**अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीम्।।**

**श्वपच उवाच –**

**[४]भिक्षामन्यामाहरेति न चैतत्कर्तुमर्हसि।**
**न नूनं कार्यमेतद्वै हर कामं श्वजाघनीम्।।**

इति कर्तुं नार्हसीति योजना। नीटी.

**विश्वामित्र उवाच –**

**[५]शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तये।**
**परां मेध्याशनादेतां भक्ष्यां मन्ये श्वजाघनीम्।।**

शिष्टाः अगस्त्यादयः। नीटी.

**श्वपच उवाच –**

**[६]असता यत्समाचीर्णं न स धर्मः सनातनः।**
**नावृत्तमनुकार्यं वै मा छलेनानृतं कृथाः।।**

(१) **भा.** १२।१३९।६५; **भामु.** १२।१४१।६९ नान्नं (मन्ये).
(२) **भा.** १२।१३९।६६; **भामु.** १२।१४१।७० द्विज (विशः) यदि (यथा).
(३) **भा.** १२।१३९।६७; **भामु.** १२।१४१।७१ क्षुब्धो (क्षुत्तो).
(४) **भा.** १२।१३९।६८; **भामु.** १२।१४१।७२ चैतत्कर्तुम (च कर्तुमिहा).
(५) **भा.** १२।१३९।६९; **भामु.** १२।१४१।७३.
(६) **भा.** १२।१३९।७०; **भामु.** १२।१४१।७४ न स (न च) तृतीयचरणे (नाकार्यमिह कार्यं वै) नानृतं (नाशुभं).

**विश्वामित्र उवाच –**

**[१]न पातकं नावमतमृषिः सन्कर्तुमर्हति।**
**समौ च श्वमृगौ मन्ये तस्माद्भक्ष्या श्वजाघनी।।**

समौ पशुत्वादिति भावः। नीटी.

**श्वपच उवाच –**

**[२]यद्ब्राह्मणार्थे कृतमर्थितेन**
**तेनर्षिणा तच्च भक्ष्याधिकारम्।**
**स वै धर्मो यत्र न पापमस्ति**
**सर्वैरुपायैर्हि स रक्षितव्यः।।**

तेन अगस्त्येन ब्राह्मणानामर्थे अर्थितेन प्रार्थितेन, अर्थात् ब्राह्मणैरेव, वातापिभक्षणं कृतम्, न स्वार्थे, तदपि अवस्थाधिकारे। स तादृश एव समयः, नान्यत् किंचित्कर्तुं शक्यमित्यर्थः। नृशंसमपि भक्षित्वा तेन वातापिना भक्ष्यमाणा ब्राह्मणा रक्षिता इति धर्म एवेत्यर्थः। नीटी.

**विश्वामित्र उवाच –**

**[३]मित्रं च मे ब्राह्मणश्चायमात्मा**
**प्रियश्च मे पूज्यतमश्च लोके।**
**तं भर्तुकामोऽहमिमां हरिष्ये**
**नृशंसानामीदृशानां न बिभ्ये।।**

तर्हि अयमात्मा देहः मम मित्रम् एतस्य रक्षणार्थं मया अप्येतद्भुक्तं चेन्न कश्चिद्दोषोऽस्तीत्याह – मित्रं चेति। नीटी.

**श्वपच उवाच –**

**[४]कामं नरा जीवितं संत्यजन्ति**
**न चाभक्ष्यैः प्रतिकुर्वन्ति तत्र।**
**सर्वान्कामान्प्राप्नुवन्तीह विद्व-**
**न्प्रियस्व कामं सहितः क्षुधा वै।।**

(१) **भा.** १२।१३९।७१; **भामु.** १२।१४१।७५ भक्ष्या श्वजाघनी (भोक्ष्ये श्वजाघनीम्).
(२) **भा.** १२।१३९।७२; **भामु.** १२।१४१।७६ तच्च भक्ष्याधिकारम् (तदवस्थाधिकारे) हि स रक्षितव्यः (गुरवो हि रक्ष्याः).
(३) **भा.** १२।१३९।७३; **भामु.** १२।१४१।७७ श्चाय (स्याय) भर्तु (धर्तु) हरिष्ये (जिहीर्षे).
(४) **भा.** १२।१३९।७४; **भामु.** १२।१४१।७८ द्वितीयचरणे (न चाभक्ष्ये क्वचित्कुर्वन्ति बुद्धिम्) क्षुधा वै (क्षुधैव).

क्षुधैव जितया सर्वान्कामानन्ये आप्नुवन्ति अतस्त्वमपि क्षुधैव सहितः अनाहारेणैव कामं प्रियस्व पूरयस्व। नीटी.

**विश्वामित्र उवाच –**

**[1]स्थाने तावत्संशयः प्रेत्यभावे**
**निःसंशयं कर्मणां वा विनाशः।**
**अहं पुनर्वर्त इत्याशयात्मा**
**मूलं रक्षन्भक्षयिष्याम्यभक्ष्यम्।।**

सः कामः प्रेत्यभावे मरणे सति यशः यशस्कर भवेदिति स्थाने युक्तम्। अनशनेन मरणं श्रेय इति सत्यमित्यर्थः। जीवतस्त्वनश्नतो धर्मलोपः प्रत्यक्षः। मूलं धर्मस्य शरीरं रक्ष्यम्। तस्य वैकल्येन धर्मविरोधो भवतीत्यर्थः। नीटी.

**[2]बुद्ध्यात्मके व्यस्तमस्तीति तुष्टो**
**मोहादेकत्वं यथा चर्म चक्षुः।**
**यद्यप्येनःसंशयादाचरामि**
**नाहं भविष्यामि यथा त्वमेव।।**

बुद्ध्यात्मके प्रमातरि विचारिते श्वजाघनीभक्षणेऽपि पुण्यमस्तीति जाने। ज्ञानोत्पत्तियोग्यं शरीरमपथेनापि रक्ष्यमेवेति भावः। मोहात्मके कर्तृत्वाद्यभिमानभाजि यथा श्वभक्षणे दोषस्तथैव तत्र विषयेऽस्ति। संशयात्मा, अन्यतरस्याऽऽत्मनो दृढपरिग्रहाभावात्। तथापि श्वभक्षण-मात्रेण त्वादृशः श्वपचोऽहं न भविष्यामि। तपसा दोषं दूरीकर्तुं शक्तोऽस्मीति भावः। नीटी.

**श्वपच उवाच –**

**[3]पतनीयमिदं दुःखमिति मे वर्तते मतिः।**
**दुष्कृती ब्राह्मणं सन्तं यस्त्वामहमुपालभे।।**

इदं श्वजाघनीभक्षणजं दुःखं पापं गोपनीयं गूहनीयं त्वया क्रियमाणं निरसनीयमिति मे बुद्धिर्निश्चिताऽस्ति। ततोऽहं दुष्कृतः पापीयानपि अब्राह्मणोऽपि त्वामुपालभे यः सोऽहं सत्रं कैतवकारी अस्मि। स त्वमितिपाठे स त्वं प्रसिद्धो विश्वामित्रः, त्वां यदब्राह्मणोऽहमुपालभेऽतः दुष्कृ-तोऽस्मीति योजना। नीटी.

**विश्वामित्र उवाच –**

**[1]पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि।**
**न तेऽधिकारो धर्मेऽस्ति मा भूरात्मप्रशंसकः।।**

धर्मे धर्मानुशासने। नीटी.

**श्वपच उवाच –**

**[2]सुहृद्भूत्वाऽनुशास्मि त्वा कृपा हि त्वयि मे द्विज।**
**तदेवं श्रेय आधत्स्व मा लोभाच्छ्वानमादिथाः।।**

**विश्वामित्र उवाच –**

**[3]सुहृन्मे त्वं सुखेप्सुश्चेदापदो मां समुद्धर।**
**जानेऽहं धर्मतोऽऽत्मानं श्वानीमुत्सृज जाघनीम्।।**

**श्वपच उवाच –**

**[4]नैवोत्सहे भवते दातुमेतां**
**नोपेक्षितुं ह्रियमाणं स्वमन्नम्।**
**उभौ स्यावः स्वमलेनावलिप्तौ**
**दाताऽहं च त्वं च विप्र प्रतीच्छन्।।**

पापलोकौ च ताववलिप्तौ चेति समासः। प्रतीच्छन् प्रतिगृह्णन्। नीटी.

**विश्वामित्र उवाच –**

**[5]अद्याहमेतद्वृजिनं कर्म कृत्वा**
**जीवंश्चरिष्यामि महापवित्रम्।**
**प्रपूतात्मा धर्ममेवाभिपत्स्ये**
**यदेतयोर्गुरु तद्वै ब्रवीहि।।**

---

(१) **भा.** १२।१३९।७५; **भामु.** १२।१४१।७९ तावत् संशयः (भवेत्सयशः) शयं (शयः) वा (वै) तृतीयचरणे (अहं पुनर्व्रतनित्यः शमात्मा) रक्षन् (रक्ष्यं).

(२) **भा.** १२।१३९।७६; **भामु.** १२।१४१।८० पूर्वार्धे (**बुद्ध्यात्मके** व्यक्तमस्तीति पुण्यं मोहात्मके यत्र यथा श्वभक्ष्ये।) प्येनःसं (प्येतत्सं) दाच (त्मा च).

(३) **भा.** १२।१३९।७७; **भामु.** १२।१४१।८१ पतनीय (गोपनीय) वर्तते (निश्चिता) तृतीयचरणे (दुष्कृतोऽब्राह्मणः सत्रं).

(१) **भा.** १२।१३९।७८; **भामु.** १२।१४१।८२.

(२) **भा.** १२।१३९।७९; **भामु.** १२।१४१।८३ शास्मि त्वा (शासे त्वां) तदेवं (यदिदं) च्छ्वानमादि (त्पातकं कृ).

(३) **भा.** १२।१३९।८०; **भामु.** १२।१४१।८४ श्वानी (शौनी).

(४) **भा.** १२।१३९।८१; **भामु.** १२।१४१।८५ भवते (भवतो) स्वमलेना (पापलोका) चतुर्थचरणे (दाता चाहं ब्राह्मणस्त्वं प्रतीच्छन्).

(५) **भा.** १२।१३९।८२; **भामु.** १२।१४१।८६ प्रपूता (सपूता).

**श्वपच उवाच –**

**[1]आत्मैव साक्षी किल लोककृत्ये**
**त्वमेव जानासि यदत्र दुष्टम्।**
**यो ह्याद्रियेद्भक्ष्यमिति श्वमांसं**
**मन्ये न तस्यास्ति विवर्जनीयम्।।**

**विश्वामित्र उवाच –**

**[2]उपादाने खादने वाऽस्य दोषः**
**कार्यो न्यायैर्नित्यमत्रापवादः।**
**यस्मिन्न हिंसा नानृते वाक्यलेशो**
**भक्ष्यक्रिया तत्र न तद्गरीयः।।**

कार्यात्यये प्राणात्ययेऽभक्ष्यमपि भक्षणीयमिति भक्ष्याभक्ष्यविधेरपवादोऽस्ति। तथा च सूत्रम् – 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' (ब्रसू. ३।४।२८) इति। यत्र अभक्ष्यक्रिया अभक्ष्यतापादकं वाक्यं तच्छास्त्रं गरीयो न। यतः यस्मिन्नभक्ष्यभक्षणे हिंसाऽनृतं च न। इदमेव द्वयम् अधर्मस्य ज्ञापकम्। किं तर्हि भक्ष्याभक्ष्यशास्त्रमनर्थकम्? नेत्याह – वाच्यलेश इति। भावप्रधानो निर्देशः। तत्र वाच्यत्वस्य निन्द्यत्वस्य लेशमात्रम्, न तु तद्धिंसानृतवदत्यन्तं निन्द्यमित्यर्थः। नीटी.

**श्वपच उवाच –**

**[3]यद्येष हेतुस्तव खादनस्य**
**न ते वेदः कारणं नान्यधर्मः।**
**तस्मादभक्ष्ये भक्षणाद्वा द्विजेन्द्र**
**दोषं न पश्यामि यथेदमात्थ।।**

हेतुः प्राणपोषणेच्छाऽस्ति। कारणं प्रमाणम्। भक्ष्ये भक्षणे। अभक्षणे इति च्छेदः। नीटी.

**विश्वामित्र उवाच –**

**[1]न पातकं भक्षणमस्य दृष्टं**
**सुरां पीत्वा पततीतीह शब्दः।**
**अन्योन्यकर्माणि तथा तथैव**
**न लेशमात्रेण कृत्यं हिनस्ति।।**

अतिपापं हिंसावदभक्ष्यं भक्षमाणस्य न दृष्टम्। पततीति शब्दः शब्दशास्त्रस्याऽऽज्ञामात्रम्। परं तु पापहेतुर्मुख्यो हिंसाख्योऽत्र न दृश्यत इति भावः। अन्योन्यकार्याणि मैथुनानि। (न) पापमात्रेण कृतं पुण्यं हिनस्ति नाशयति। तेन ईषत्पापोत्पत्तिरस्तु, न तु ब्राह्मण्यादिधर्महानिरस्तीति भावः। नीटी.

**श्वपच उवाच –**

**[2]अस्थानतो हीनतः कुत्सिताद्वा**
**तं विद्वांसं बाधते साधुवृत्तम्।**
**स्थानं पुनर्यो लभते निषङ्गा-**
**त्तेनापि दण्डः सहितव्य एव।।**

अस्थानतः चाण्डालगृहात्, हीनतः चौर्यतः, कुत्सितात् अदित्सतः कदर्यात्, अभिषङ्गात् अत्याग्रहात्, श्वानं लभते तेनापि तेनैव दण्डः सहितव्यः सोढव्य एव। न तु दातुर्मम दोषोऽस्तीति भावः। नीटी.

**भीष्म उवाच –**

**[3]एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा।**
**विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम्।।**
**[4]ततो जग्राह पञ्चाङ्गीं जीवितार्थी महामुनिः।**
**सदारस्तामुपाकृत्य वने यातो महामुनिः।।**
**[5]अथास्य बुद्धिरभवद्विधिनाऽहं श्वजाघनीम्।**
**भक्षयामि यथाकामं पूर्वं संतर्प्य देवताः।।**

---

(१) **भा.** १२।१३९।८३; **भामु.** १२।१४१।८७ किल लोक (कुलधर्म) दुष्टम् (दुष्कृतम्) येद्भ (याद्भ).

(२) **भा.** १२।१३९।८४; **भामु.** १२।१४१।८८ वाऽस्य (चास्ति) र्यो न्यायैर् (र्यात्यये) न्न हिंसा नानृते वाक्य (न् हिंसा नानृतं वाच्य) तत्र (यत्र).

(३) **भा.** १२।१३९।८५; **भामु.** १२।१४१।८९ नस्य न (ने स्यान्न) नान्य (नाऽऽर्य) दभक्ष्ये भक्षणाद्वा (द्भक्ष्येऽभक्षणे वा) दमात्थ (दमत्र).

(१) **भा.** १२।१३९।८६; **भामु.** १२।१४१।९० (नैवातिपापं भक्षमाणस्य दृष्टं सुरां तु पीत्वा पततीति शब्दः। अन्योन्यकार्याणि यथा तथैव न पापमात्रेण कृतं हिनस्ति।।).

(२) **भा.** १२।१३९।८७; **भामु.** १२।१४१।९१ तं वि (तद्वि) स्थानं (श्वानं) ते नि (तेऽभि).

(३) **भा.** १२।१३९।८८; **भामु.** १२।१४१।९२.

(४) **भा.** १२।१३९।८९; **भामु.** १२।१४१।९३ पञ्चाङ्गीं (स श्वाङ्गं) कृत्य (हृत्य) चतुर्थचरणे (वने भोक्तुमियेष सः).

(५) **भामु.** १२।१४१।९४-९६.

**ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः।**
**ऐन्द्राग्नेयेन विधिना चरुं श्रपयत स्वयम्।।**
**ततः समारभत्कर्म दैवं पित्र्यं च भारत।**
**आहूय देवानिन्द्रादीन् भागं भागं विधिक्रमात्।।**
**[1]एतस्मिन्नेव काले तु प्रववर्षाथ वासवः।**
**संजीवयन्प्रजाः सर्वा जनयामास चौषधीः।।**
**[2]विश्वामित्रोऽपि भगवांस्तपसा दग्धकिल्बिषः।**
**कालेन महता सिद्धिमवाप परमाद्भुताम्।।**
**[3]स संहृत्य च तत्कर्म अनास्वाद्य च तद्धविः।**
**तोषयामास देवांश्च पितॄंश्च द्विजसत्तमः।।**
**[4]एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः।**
**सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत्।।**

अत्यन्तापदि स्तेयानुमतिः, ब्राह्मणप्रशंसा

**[5]तथैव सप्तमे भक्ते भक्तानि षडनश्नता।**
**अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः।**
**खलात्क्षेत्रात्तथाऽगाराद्यतो वाऽप्युपपद्यते।।**

भक्तम् एकाह(? काहार)पर्याप्तं धान्यम्। भक्तानि षडनश्नतः त्र्यहमुपोषितस्य। नीटी.

**[6]न ब्राह्मणान्वेदयेत कश्चिद्राजनि मानवः।**
**अवीर्यो वेदनाद्विद्यात्सुवीर्यो वीर्यवत्तरम्।।**

न निवेदेत अहं ब्राह्मणोऽस्मीति न निवेदयेत्। नीटी.

**[7]तस्माद्राज्ञा सदा तेजो दुःसहं ब्रह्मवादिनाम्।**
**मन्ता शास्ता विधाता च ब्राह्मणो देव उच्यते।**
**तस्मिन्नाकुशलं ब्रूयान्न शुक्तामीरयेद्गिरम्।।**

(१) भा. १२।१३९।९०; भामु. १२।१४१।९७ वर्षाथ (वर्ष स).
(२) भा. १२।१३९।९१; भामु. १२।१४१।९८.
(३) भामु. १२।१४१।९९.
(४) भा. १२।१३९।९२; भामु. १२।१४१।१००.
(५) भा. १२।१५९।११; भामु. १२।१६५।११-१२ प्रथमचरणे (तथैव शृणु मे भक्तं) श्नता (श्नतः) गारा (रामा).
(६) भा. १२।१५९।१७; भामु. १२।१६५।१८ (न ब्राह्मणो निवेदेत किंचिद्राजनि वेदवित्। स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम्।।).
(७) भा. १२।१५९।१८; भामु. १२।१६५।१९-२० राज्ञा (राज्ञः) मन्ता (कर्ता) शुक्ता (शुष्का).

**[1]क्षत्रियो बाहुवीर्येण तरत्यापदमात्मनः।**
**धनेन वैश्यः शूद्रश्च मन्त्रैर्होमैश्च वै द्विजः।।**
**[2]मनुष्ययोनिमिच्छन्ति सर्वभूतानि सर्वशः।**
**मनुष्यत्वे च विप्रत्वं सर्व एवाभिनन्दति।।**

सर्वः देवादिरपि अभिनन्दति विप्रत्वमभिलक्ष्य नन्दति। नीटी.

वर्णोत्पत्तिः, वर्णाः श्वेतलोहितपीतकृष्णवर्णाः, तत्राऽऽक्षेपः, मूलत एकस्यैव ब्राह्मण-वर्णस्य गुणकर्मभेदेन जात्यन्तरतापत्तिः

**भृगुरुवाच –**

**[3]असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतिः।**
**आत्मतेजोभिनिर्वृत्तान्भास्कराग्निसमप्रभान्।।**

'कथं सृष्टानि भूतानि' इत्यस्योत्तरमुक्त्वा 'कथं वर्णविभक्तयः' इत्यस्योत्तरमाह – असृजदित्यादि। तत्र पूर्वं चित्तप्रसादेन आनन्त्यमश्नुत इत्युक्तम्। चित्तप्रसादश्च स्वधर्मफलम्। अतो धर्मं निरूपयति – ब्राह्मणान् ब्रह्मनिष्ठान् प्रजापतीन् मरीच्यङ्गिरआदीन्। आत्मनस्तेजः सत्यसंकल्पत्वादिसामर्थ्यम्, तेन निर्वृत्तान् उत्पादितान् ब्रह्मणा। नीटी.

**[4]ततः सत्यं च धर्मं च तपो ब्रह्म च शाश्वतम्।**
**आचारं चैव शौचं च स्वर्गाय विदधे प्रभुः।।**

धर्मं यज्ञादिम्। तपः कृच्छ्रचान्द्रायणादि। शाश्वतं ब्रह्म नित्यं (? नित्यं ब्रह्म) वेदः। आचारं स्नानादिम्। शौचं प्रायश्चित्तादि। नीटी.

**[5]देवदानवगन्धर्वदैत्यासुरमहोरगाः।**
**यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा।।**
**[6]ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम।**
**ये चान्ये भूतसंघानां संघास्तांश्चापि निर्ममे।।**

(१) भा. १२।१५९।१९; भामु. १२।१६५।२०-२१ तरत्या (तरेदा) धनेन वैश्यः (धनैर्वैश्यश्च).
(२) भा. १२।१७३।८; भामु. १२।१८०।८.
(३) भा. १२।१८१।१; भामु. १२।१८८।१ पतिः (पतीन्).
(४) भा. १२।१८१।२; भामु. १२।१८८।२.
(५) भा. १२।१८१।३; भामु. १२।१८८।३ वंदैत्या (र्वा दैत्या).
(६) भा. १२।१८१।४; भामु. १२।१८८।४ संघास्तां (वर्णास्तां).

वर्णाः, सात्त्विकं राजसं तामसं मिश्रं चेति स्वच्छत्वादि-साम्यात् गुणवृत्तं वर्णशब्देनोच्यते। नीटी.

**[1]ब्राह्मणानां सितो वर्णः क्षत्रियाणां तु लोहितः।**
**वैश्यानां पीतको वर्णः शूद्राणामसितस्तथा।।**

सितः स्वच्छः सत्त्वगुणः प्रकाशात्मा शमदमादि-स्वभावः। लोहितः रजोगुणः प्रवृत्त्यात्मा शौर्यतेजआदि-स्वभावः। पीतकः रजस्तमोव्यामिश्रः कृष्यादिनिहीनकर्म-प्रवर्तकः। असितः कृष्णः आवरणात्मा तमोगुणः स्वतः-प्रकाशप्रवृत्तिहीनः शकटवत् परप्रेर्यः। नीटी.

**भरद्वाज उवाच –**

**[2]चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते।**
**सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः।।**

इदमाक्षिपति – चातुर्वर्ण्यस्येति। वर्णेन जात्या वर्णः सात्त्विकत्वादि भिद्यते। तन्नेति शेषः। तत्र हेतुः – सर्वेषामिति। नीटी.

**[3]कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः।**
**सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते।।**

नः अस्माकं ब्राह्मणानामपि कामक्रोधादि रजस्तमः-कार्यं निग्रहाय प्रभवति समर्थं भवति। अतः सत्त्वादि-व्यभिचारान्न तत्प्रयुक्ता जात्यादिव्यवस्थेत्यर्थः। नीटी.

**[4]स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम्।**
**तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते।।**
**जङ्गमानामसंख्येयाः स्थावराणां च जातयः।**
**तेषां विविधवर्णानां कुतो वर्णविनिश्चयः।।**

जङ्गमानां पश्वादीनाम्। तस्मात्सर्वेषां समानधर्मत्वात् पशुवृक्षादिष्विव मनुष्येष्वपि न जातिभेदनिश्चय इत्यर्थः। नीटी.

**भृगुरुवाच –**

**न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।**
**ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्।।**

ब्राह्मं ब्राह्मणजातिमत्। तत्र हेतुः – ब्रह्मणेति। वर्णतां क्षत्रियादिभावम्। नीटी.

**कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः।**
**त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः।।**

रक्ताङ्गाः रजोगुणमयाः। नीटी.

**[1]गोषु वृत्तिं समाधाय पीताः कृष्युपजीविनः।**
**स्वधर्मं नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः।।**

पीताः रजस्तमोमयाः। नीटी.

**[2]हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः।**
**कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः।।**

कृष्णाः केवलतमोमयाः। नीटी.

**[3]इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः।**
**धर्मो यज्ञक्रिया चैषां नित्यं न प्रतिषिध्यते।।**

व्यस्ताः पृथक्कृताः। द्विजाः ब्राह्मणाः। तेषां चतुर्णामपि वर्णानाम्। नीटी.

**[4]वर्णाश्चत्वार एते हि येषां ब्राह्मी सरस्वती।**
**विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः।।**

चतुरः चत्वारः। ब्राह्मी वेदमयी चतुर्णामपि वर्णानां ब्रह्मणा पूर्वं विहिता। लोभदोषेण तु अज्ञानतां तमोभावं गताः शूद्रा अनधिकारिणो वेदे जाता इत्यर्थः। नीटी.

**[5]ब्राह्मणा धर्मतन्त्रस्थास्तपस्तेषां न नश्यति।**
**ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा।।**

ब्रह्मतन्त्रं वेदोक्तानुष्ठानम्, तत्स्थाः तत्पराः। अतस्तेषां ब्रह्म आत्मानं धारयतां पुरुषार्थत्वेन निश्चिन्वतां जिज्ञासूनां तपआदिकं न नश्यति। नीटी.

**[6]ब्रह्म चैतत्पुरा सृष्टं ये न जानन्त्यतद्विदः।**
**तेषां बहुविधास्त्वन्यास्तत्र तत्र हि जातयः।।**

---

(१) **भा.** १२।१८१।५; **भामु.** १२।१८८।५.
(२) **भा.** १२।१८१।६; **भामु.** १२।१८८।६ भज्यते (भिद्यते).
(३) **भा.** १२।१८१।७; **भामु.** १२।१८८।७ भज्यते (भिद्यते).
(४) **भा.** १२।१८१।८-११; **भामु.** १२।१८८।८-११.

(१) **भा.** १२।१८१।१२; **भामु.** १२।१८८।१२ गोषु (गोभ्यो) धाय (स्थाय) मं ना (र्मान्ना).
(२) **भा.** १२।१८१।१३; **भामु.** १२।१८८।१३.
(३) **भा.** १२।१८१।१४; **भामु.** १२।१८८।१४ चैषां (तेषां).
(४) **भा.** १२।१८१।१५; **भामु.** १२।१८८।१५ प्रथमचरणे (इत्येते चतुरो वर्णा).
(५) **भा.** १२।१८१।१६; **भामु.** १२।१८८।१६ धर्म (ब्रह्म).
(६) **भा.** १२।१८१।१७; **भामु.** १२।१८८।१७ चैतत्पुरा (चैव परं) न्त्यतद्विदः (न्ति तेऽद्विजाः).

सृष्टं सर्वकार्यं परं ब्रह्माभेदेन ये अद्विजाः हीनद्विजास्ते न जानन्तीति योजना। तत्र तत्र योनिषु जातयः जन्मानि। नीटी.

**[1]पिशाचा राक्षसाः प्रेता बहुधा म्लेच्छजातयः।**
**प्रनष्टज्ञानविज्ञानाः स्वच्छन्दाचारचेष्टिताः।।**

तानेवाह – पिशाचा इति। नीटी.

**[2]प्रजा ब्राह्मणसंस्काराः स्वधर्मकृतनिश्चयाः।**
**ऋषिभिः स्वेन तपसा सृज्यन्ते चापरे परैः।।**

ब्राह्मणः ब्रह्मणि वेदे विहितः, ब्राह्मणः संस्कारो यासां ताः वेदोक्तसंस्कारवत्यः। अपरे अर्वाचीना ऋषयः परैः प्राचीनैः सृज्यन्ते। नीटी.

**[3]आदिदेवसमुद्भूता ब्रह्ममूलाऽक्षयाऽव्यया।**
**सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा।।**

एवं प्राप्तां मीमांसकसंमतामनवस्थां निवारयति – आदीति। अक्षया नाशहीना, अव्यया अपचयहीना, यतो मानसी रज्जूरगवन्मनोमात्रजन्या। न हि रज्जूरगो नश्यत्यपचीयते वा, अनुत्पन्नत्वात्। धर्मतन्त्रं योगानुष्ठानम्, तदेव परम् अयनं विलयस्थानं यस्याः सा तथा। नीटी.

परमेश्वरावयवेभ्यो वर्णानामुत्पत्तिः,
ब्राह्मणप्रशंसा

**[4]ततः कृष्णो महाबाहुः पुनरेव युधिष्ठिर।**
**ब्राह्मणानां शतं श्रेष्ठं मुखादसृजत प्रभुः।।**

शतम् अनन्तम्। नीटी.

**[5]बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम्।**
**पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ।।**
**[6]सर्वेषामेव भूतानां पुरुषः श्रेष्ठ उच्यते।**
**पुरुषेभ्यो द्विजानाहुर्द्विजेभ्यो मन्त्रवादिनः।।**

(१) भा. १२।१८१।१८; भामु. १२।१८८।१८ बहुधा (विविधा).
(२) भा. १२।१८१।१९; भामु. १२।१८८।१९ धर्म (कर्म) रे परैः (रेऽपरैः).
(३) भा. १२।१८१।२०; भामु. १२।१८८।२०.
(४) भा. १२।२००।३१; भामु. १२।२०७।३१ बाहुः (भागः) दसृजत प्र (देवासृजत्प्र).
(५) भा. १२।२००।३२; भामु. १२।२०७।३२.
(६) भा. १२।२०७।२; भामु. १२।२१४।२ वादिनः (दर्शिनः).

पुरुषः मनुष्यः। द्विजाः त्रैवर्णिकाः। मन्त्रदर्शिनः ब्राह्मणाः। नीटी.

**[1]सर्वभूतविशिष्टास्ते सर्वज्ञाः सर्वदर्शिनः।**
**ब्राह्मणा वेदतत्त्वज्ञास्तत्त्वार्थगतिनिश्चयाः।।**

तत्त्वार्थं प्रति गतः निश्चयो येषाम्। नीटी.

भूतधर्मापीडनेन अल्पभूतपीडनेन
वर्तितव्यम्, विक्रेयाः पदार्थाः,
ब्राह्मणप्रशंसा

**[2]असंरोधेन भूतानां वृत्तिं लिप्सेत वै द्विजः।।**
**[3]असंरोधेन धर्मस्य वृत्तिं लिप्सेदगर्हिताम्।।**
**[4]अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।**
**या वृत्तिः स परो धर्मस्तेन जीवामि जाजले।।**

अल्पद्रोहेण आपदि वा 'नानुपहत्य भूतानि भोगः संभवति' इति न्यायेनाद्रोहेण वृत्त्यसंभवाद्वा। नीटी.

**परिच्छिन्नैः काष्ठतृणैर्मयेदं शरणं कृतम्।**
**अलक्तं पद्मकं तुङ्गं गन्धांश्चोच्चावचांस्तथा।।**

अलक्तं लाक्षारससारम्। पद्मकं तुङ्गं च काष्ठविशेषौ। कस्तूर्यादीन् गन्धान्। नीटी.

**[5]रसांश्च तांस्तान् विप्रर्षे मद्यवर्जानहं बहून्।**
**क्रीत्वा वै प्रतिविक्रीणे परहस्तादमायया।।**

(१) तिलादिविक्रयस्य विहितनिषिद्धस्याऽऽपदनापद्विषयत्वेन व्यवस्था द्रष्टव्या।

मर. १९४

(२) रसान् लवणादीन् क्रीत्वैव न तु स्वयमुत्पाद्य। नीटी.

(१) भा. १२।२०७।३; भामु. १२।२१४।३ तविशिष्टा (तात्मभूता) तत्त्वज्ञा (शास्त्रज्ञा) गति (गत).
(२) भा. १२।२२७।३; भामु. १२।२३५।४.
(३) भा. १२।२२७।२५; भामु. १२।२३५।२६ धर्मस्य (लोकस्य).
(४) भा. १२।२५४।६-७; भामु. १२।२६२।६-७.
(५) भा. १२।२५४।८; भामु. १२।२६२।८ द्वितीयचरणे (मद्यवर्ज्यान्बहूनहम्).

**[१]यद्ददामि न तन्न्यूनं यद्गृह्णामि न चाधिकम्।**
**विक्रीणामि रसांश्चाहं मद्यवर्जममायया।।**
**[२]ब्राह्मणो नाम भगवाञ्जन्मप्रभृति पूज्यते।।**

ब्राह्मणः वेदवित्। नीटी.

**[३]सर्वावस्थं त्वमप्येषां द्विजातीनां प्रियं कुरु।**
**इमे हि भूतले देवाः प्रथिता कुरुनन्दन।।**

शोभना वृत्तिः, वर्णानां वृत्तयः,
शूद्रस्याऽऽपद्वृत्तिः

**पराशर उवाच –**

**[४]वृत्तिः सकाशाद्वर्णेभ्यस्त्रिभ्यो हीनस्य शोभना।**
**प्रीत्योपनीता निर्दिष्टा धर्मिष्ठान्कुरुते सदा।।**

पूर्वाध्याये यतः स्वस्योपकर्ताऽन्यो नास्ति, अत आत्मोपकाराय स्वयं मानं त्यक्त्वाऽन्यान्सेवेतेत्युक्तम्। तत्र वृद्धसेवाप्रशंसार्थं शूद्रवृत्तिं महीकरोति – वृत्तिरिति। वर्णेभ्यो ब्राह्मणक्षत्रियवैश्येभ्यः हीनस्य शूद्रस्य वृत्तिः जीविका वृद्धसेवा सेवकान् धर्मिष्ठान्कुरुतेऽतः शोभना, दृष्टादृष्टोभयार्थत्वात्। न हि याजनकरादानवाणिज्यादयो विप्रादिजीविकास्तेषां धर्मिष्ठतायै भवन्ति। अतः सत्सेवया लोकद्वयं साधयेदिति भावः। नीटी.

**[५]वृत्तिश्चेन्नास्ति शूद्रस्य पितृपैतामही ध्रुवा।**
**न वृत्तिं परतो मार्गेच्छुश्रूषां तु प्रयोजयेत्।।**

परतः त्रैवर्णिकसेवाव्यतिरेकेण। नीटी.

**पराशर उवाच –**

**[६]प्रतिग्रहागता विप्रे क्षत्रिये शस्त्रनिर्जिताः।**
**वैश्ये न्यायार्जिताश्चैव शूद्रे शुश्रूषयाऽर्जिताः।**
**स्वल्पाऽप्यर्थाः प्रशस्यन्ते धर्मस्यार्थे महाफलाः।।**

(१) मर. १९४ प्रथमचरणे (यद्ददामि न तच्छून्यं) जाजल्युपाख्याने; संम. ७९; बाल. १।११९ पृ. ३६७ मि न (सि न) णामि (णासि) श्चाहं (श्चापि) जाजलोपाख्याने.

(२) भा. १२।२६१।११; भामु. १२।२६९।१२.

(३) भा. १२।२७३।५९; भामु. १२।२८३।६१.

(४) भा. १२।२८२।१; भामु. १२।२९३।१.

(५) भा. १२।२८२।२; भामु. १२।२९३।२ षां तु (षा तु).

(६) भा. १२।२८३।१; भामु. १२।२९४।१-२ शस्त्रनि (युधि नि).

दानप्रशंसा प्राक्कृता 'प्राणसंतापनिर्दिष्टाः' इत्यादिना। तदर्थमर्थार्जनोपायं नियमयन्नन्यानपि प्रसङ्गाद्धर्मान्वक्ष्यति- प्रतिग्रहागता इत्यादि। नीटी.

**[१]नित्यं त्रयाणां वर्णानां शूद्रः शुश्रूषुरुच्यते।**
**क्षत्रधर्मा वैश्यधर्मा नावृत्तिः पतति द्विजः।**
**शूद्रकर्मा यदा तु स्यात्तदा पतति वै द्विजः।।**

न पततीति संबन्धः। नीटी.

**[२]वाणिज्यं पाशुपाल्यं च तथा शिल्पोपजीवनम्।**
**शूद्रस्यापि विधीयन्ते यदा वृत्तिर्न जायते।।**

शिल्पं चित्रलेखनादि। वृत्तिः सेवारूपा। नीटी.

**[३]रङ्गावतरणं चैव तथा रूपोपजीवनम्।**
**मद्यमांसोपजीव्यं च विक्रयो लोहचर्मणोः।।**

रङ्गे स्त्र्यादिवेषेण अवतरणम्। रूपोपजीवनं जलमण्डपिकेति दाक्षिणात्येषु प्रसिद्धम्। यत्र सूक्ष्मवस्त्रं व्यवधाय चर्ममयैराकारै राजामात्यादीनां चर्या प्रदर्श्यते। नीटी.

**[४]अपूर्विणा न कर्तव्यं कर्म लोके विगर्हितम्।**
**कृतपूर्विणस्तु त्यजतो महान्धर्म इति श्रुतिः।।**

अपूर्विणा येन पूर्वं मद्याद्युपजीवनं न कृतं सोऽपूर्वी। तेन तन्न कर्तव्यम्। नीटी.

**[५]न संकरेण द्रविणं विचिन्वीत विचक्षणः।**
**धर्मार्थं न्यायमुत्सृज्य न तत्कल्याणमुच्यते।।**

(१) भा. १२।२८३।२; भामु. १२।२९४।२-३ शूद्रः शुश्रूषुरु (शुश्रूषुः शूद्र उ) पतति द्वि (पतते द्वि).

(२) भा. १२।२८३।३; भामु. १२।२९४।४.

(३) भा. १२।२८३।४; भामु. १२।२९४।५ विक्रयो (विक्रयं).

(४) भा. १२।२८३।५; भामु. १२।२९४।६ पूर्विणस्तु (पूर्वं तु).

(५) भा. १२।२८३।२४; भामु. १२।२९४।२५ त विच (याद्विच).

बीजक्षेत्रगतसत्त्वादिगुणतारतम्येन शुद्धहीन-
जात्युत्पत्तिः, सत्त्वादितारतम्यं
वर्णजननापादानभूतेश्वरा-
वयवभेदप्रयुक्तम्

**जनक उवाच –**

**[1]वर्णो विशेषवर्णानां महर्षे केन जायते।**
**एतदिच्छाम्यहं श्रोतुं तद्ब्रूहि वदतां वर।।**

एवं धर्मान् श्रुत्वा उत्तरोत्तरमुत्कर्षं प्रपित्सुः पृच्छति– वर्ण इति। तत्र वर्णाः पूर्वोक्ताः षट् कृष्णधूम्रनीलरक्तपीत-श्वेताः क्रमेण बुद्धिसत्त्वे तमोरजोंशयोराधिक्यसाम्या-पकर्षजाः। तत्र विशेषः स्वाभाविकवर्णादाधिक्यं तमोरज-सोर्ह्रास इत्यर्थः। नीटी.

**[2]यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः।**
**कथं ब्राह्मणतो जातो विशेषग्रहणं गतः।।**

सात्त्विकस्य ब्रह्मणः अपत्यैः लोकैः सात्त्विकैरेव ब्राह्मणै-र्भवितव्यम्, कथं रजआदिप्रधानं क्षत्रादिविशेषजातिग्रहणं तत उत्पन्नस्य? इत्याक्षेपार्थः। नीटी.

**पराशर उवाच –**

**एवमेतन्महाराज येन जातः स एव सः।**
**तपसस्त्वपकर्षेण जातिग्रहणतां गतः।।**
**सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति संभवः।**
**अतोऽन्यतरतो हीनादवरो नाम जायते।।**

तपसोऽप्यपकर्षः कुत इत्यत आह – सुक्षेत्रादिति। सात्त्विकयोर्दम्पत्योः पुण्यः संभवस्तयोरन्यतरस्य हीनत्वे हीन इत्यर्थः। नीटी.

**वक्त्राद्भुजाभ्यामूरुभ्यां पद्भ्यां चैवाथ जज्ञिरे।**
**सृजतः प्रजापतेर्लोकानिति धर्मविदो विदुः।।**

अन्यतरहीनत्वमपि कुत इत्याशङ्क्योत्पत्तिस्थानभेदा-दित्याह – वक्त्रादिति द्वाभ्याम्। नीटी.

**[3]मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रबन्धवः।**
**ऊरुजा धनिनो राजन्पादजाः परिचारकाः।।**

(१) भा. १२।२८५।१; भामु. १२।२९६।१ श्रोतुं (ज्ञातुं).

(२) भा. १२।२८५।२-५; भामु. १२।२९६।२-५.

(३) भा. १२।२८५।६; भामु. १२।२९६।६ क्षत्रबन्धवः (क्षत्रियाः स्मृताः).

**[1]चतुर्णामेव वर्णानामागमः पुरुषर्षभ।।**
**[2]प्रतिग्रहो याजनं च तथैवाध्यापनं नृप।**
**विशेषधर्मो विप्राणां रक्षा क्षत्रस्य शोभना।।**
**[3]कृषिश्च पाशुपाल्यं च वाणिज्यं च विशामपि।**
**द्विजानां परिचर्या च शूद्रकर्म नराधिप।**
**विशेषधर्मा नृपते वर्णानां परिकीर्तिताः।।**

परेशावयवेभ्यो वर्णोत्पत्तिः, ब्राह्मणप्रशंसा-
पराणि बहूनीतिहासकथनानि,
क्षत्रियप्रशंसा

**[4]ब्रह्मास्यतो ब्राह्मणाः संप्रसूता**
**बाहुभ्यां वै क्षत्रियाः संप्रसूताः।**
**नाभ्यां वैश्याः पादतश्चापि शूद्राः**
**सर्वे वर्णा नान्यथा वेदितव्याः।।**

**[5]ततो भूतसर्गे प्रवृत्ते प्रजाक्रमवशाद्ब्रह्मक्षत्रमुपा-तिष्ठत्। यः सोमस्तद्ब्रह्म यद्ब्रह्म ते ब्राह्मणाः। योऽग्निस्तत्क्षत्रं क्षत्राद्ब्रह्म बलवत्तरम्। कस्मादिति लोकप्रत्यक्षगुणमेतत्तद्यथा। ब्राह्मणेभ्यः परं भूतं नोत्पन्न-पूर्वम्। दीप्यमानेऽग्नौ जुहोतीति कृत्वा ब्रवीमि। भूतसर्गः कृतो ब्रह्मणा भूतानि च प्रतिष्ठाप्य त्रैलोक्यं धार्यत इति।।**

ब्रह्मणा ब्राह्मणेन। मन्त्रवादोऽपि ब्राह्मणमाहात्म्य-प्रख्यापकः। नीटी.

**[6]ब्राह्मणस्य हि याजनं विधीयते न क्षत्रवैश्ययोर्द्वि-जात्योः। तस्माद्ब्राह्मणा ह्यग्निभूता यज्ञानुद्वहन्ति। यज्ञा देवांस्तर्पयन्ति देवाः पृथिवीं भावयन्ति।।**

ब्राह्मणस्य वेदधारित्वेन ब्रह्मभावमुपपादयति। नीटी.

(१) भा. १२।२८५।७; भामु. १२।२९६।७.

(२) भा. १२।२८५।२०; भामु. १२।२९६।२० धर्मो (धर्मा).

(३) भा. १२।२८५।२१-२२; भामु. १२।२९६।२१-२२.

(४) भा. १२।३०६।८७; भामु. १२।३१८।९०; स्मृकौ. ६८ नान्यथा (नान्यतो).

(५) भा. १२।३२९।५; भामु. १२।३४२।९ सर्गे प्रवृत्ते (सर्गेषु सृष्टेषु) दीप्यमानेऽग्नौ + (जुहोति। यो ब्राह्मणमुखे).

(६) भा. १२।३२९।७; भामु. १२।३४२।१३ यज्ञा दे (यज्ञास्ते दे).

**[1]शतपथे हि ब्राह्मणं भवति। अग्नौ समिद्धे स जुहोति यो विद्वान् ब्राह्मणमुखे दानाहुतिं जुहोति। एवमप्यग्निभूता ब्राह्मणा विद्वांसोऽग्निं भावयन्ति। अग्निर्विष्णुः सर्वभूतान्यनुप्रविश्य प्राणान्धारयति। अपि चात्र सनत्कुमारगीताः श्लोका भवन्ति।।**

अग्नौ हुते सति ब्राह्मणो न तृप्यति, ब्राह्मणमुखे हुतं चेदग्न्यादयो देवता ब्राह्मणशरीरं प्रविश्य धारयन्ति, अतस्तत्तृप्त्या तृप्यन्तीति शतपथवाक्यार्थः। नीटी.

**[2]विश्वं ब्रह्मासृजत्पूर्वं सर्वादिर्निरवस्करम्।**
**ब्रह्मघोषैर्दिवं तिष्ठन्त्यमरा ब्रह्मयोनयः।।**

**[3]ब्राह्मणानां मतिर्वाक्यं कर्म श्रद्धा तपांसि च।**
**धारयन्ति महीं द्यां च शैत्याद्वार्यमृतं यथा।।**

शैक्य इव। शैक्यः शिक्यसमुदायः। यथा शिक्यं गव्यादीन्धारयति एवं ब्राह्मणो मत्यादीनि इत्यर्थः। नीटी.

**[4]नास्ति सत्यात्परो धर्मो नास्ति मातृसमो गुरुः।**
**ब्राह्मणेभ्यः परं नास्ति प्रेत्य चेह च भूतये।।**

**[5]नैषामुक्षा वर्धते नोत वाहा**
**न गर्गरो मथ्यते संप्रदाने।**
**अपध्वस्ता दस्युभूता भवन्ति**
**येषां राष्ट्रे ब्राह्मणा वृत्तिहीनाः।।**

गर्गरः दधीक्षुतैलादिनिपीडनयन्त्रम्। येषां राज्ञाम्। कृष्यादिहीनत्वात्तादृशा राजानो नष्टाश्चोराश्च भवन्तीत्यर्थः। नीटी.

**[6]वेदपुराणेतिहासप्रामाण्यान्नारायणमुखोद्गताः सर्वात्मानः सर्वकर्तारः सर्वभावनाश्च ब्राह्मणाः। वाक्समकालं हि तस्य देवस्य वरप्रदस्य ब्राह्मणाः प्रथमं प्रादुर्भूता ब्राह्मणेभ्यश्च शेषा वर्णाः प्रादुर्भूताः। इत्थं च सुरासुरविशिष्टा ब्राह्मणा यदा मया ब्रह्मभूतेन पुरा स्वयमेवोत्पादिताः सुरासुरमहर्षयो भूतविशेषाः स्थापिता निगृहीताश्च।।**

**[1]अहल्याधर्षणनिमित्तं हि गौतमाद्धरिश्मश्रुतामिन्द्रः प्राप्तः। कौशिकनिमित्तं चेन्द्रो मुष्कवियोगं मेषवृषणत्वं चावाप। अश्विनोर्ग्रहप्रतिषेधोद्यतवज्रस्य पुरंदरस्य च्यवनेन स्तम्भितो बाहुः। क्रतुवधप्राप्तमन्युना च दक्षेण भूयस्तपसा चाऽऽत्मानं संयोज्य नेत्राकृतिरन्या ललाटे रुद्रस्योत्पादिता।।**

**[2]त्रिपुरवधार्थं दीक्षामभ्युपगतस्य रुद्रस्योशनसा शिरसो जटा उत्कृत्य प्रयुक्ताः। ततः प्रादुर्भूता भुजगाः। तैरस्य भुजगैः पीड्यमानः कण्ठो नीलतामुपनीतः। पूर्वे च मन्वन्तरे स्वायंभुवे नारायणहस्तबन्धग्रहणान्नीलकण्ठत्वमेव वा।।**

**[3]अमृतोत्पादने पुरश्चरणतामुपगतस्याङ्गिरसो बृहस्पतेरुपस्पृशतो न प्रसादं गतवत्यः किलाऽऽपः। अथ बृहस्पतिरपां चुक्रोध। यस्मान्ममोपस्पृशतः कलुषीभूता न प्रसादमुपगतास्तस्मादद्यप्रभृति झषमकरमत्स्यकच्छपजन्तुसंकीर्णाः कलुषीभवतेति। तदाप्रभृत्यापो यादोभिः संकीर्णाः संवृत्ताः।।**

**[4]विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्स्वस्रीयोऽसुराणाम्। स प्रत्यक्षं देवेभ्यो भागमददत्परोक्षमसुरेभ्यः।।**

---

(१) **भा.** १२।३२९।८; **भामु.** १२।३४२।१३-१६ पथे हि ब्राह्मणं (पथेऽपि हि ब्राह्मणमुखे) खे दाना (खेना) यति (यन्ति).

(२) **भा.** १२।३२९।९; **भामु.** १२।३४२।१६ प्रथमचरणे (ब्रह्मा विश्वं सृजत्पूर्वं) करम् (कृतम्) तिष्ठ (गच्छ).

(३) **भा.** १२।३२९।१०; **भामु.** १२।३४२।१७ चतुर्थचरणे (शैक्यो वागमृतं तथा).

(४) **भा.** १२।३२९।११; **भामु.** १२।३४२।१८.

(५) **भा.** १२।३२९।१२; **भामु.** १२।३४२।१९ वर्धते (वहति) मथ्यते (मथ्यति).

(६) **भा.** १२।३२९।१३; **भामु.** १२।३४२।२०-२२ भावनाश्च ब्राह्मणाः (भावाश्च ब्राह्मणाश्च) वाक्सम... ब्राह्मणाः (वाक्संयमकाले हितस्य वरप्रदस्य देवदेवस्य ब्राह्मणाः) यदा (य एव).

(१) **भा.** १२।३२९।१४; **भामु.** १२।३४२।२३-२५ तो बाहुः (तौ बाहू).

(२) **भा.** १२।३२९।१५; **भामु.** १२।३४२।२६ मभ्युप (मुप) शिरसो जटा (जटाः शिरस) नीतः (गतः) (बन्ध०) मेव वा (मेव च).

(३) **भा.** १२।३२९।१६; **भामु.** १२।३४२।२७ दने पु (दनपु) भूता न + (च) (मत्स्य०) जन्तुसंकीर्णाः (जन्तुभिः) संवृत्ताः (संप्रवृत्ताः).

(४) **भा.** १२।३२९।१७; **भामु.** १२।३४२।२८ वै (हि वै) मदद (मदा).

[1]अथ हिरण्यकशिपुं पुरस्कृत्य विश्वरूपमातरं स्वसारमसुरा वरमयाचन्त। हे स्वः, अयं ते पुत्रस्त्वाष्ट्रो विश्वरूपस्त्रिशिरा देवानां पुरोहितः प्रत्यक्षं देवेभ्यो भागमददत्परोक्षमस्माकम्। ततो देवा वर्धन्ते, वयं क्षीयामः। तदेनं त्वं वारयितुमर्हसि तथा यथाऽस्मान्भजेदिति।।

[2]अथ विश्वरूपं नन्दनवनमुपगतं मातोवाच। पुत्र किं परपक्षवर्धनस्त्वं मातुलपक्षं नाशयसि? नार्हस्येवं कर्तुमिति। स विश्वरूपो मातुर्वाक्यमनतिक्रमणीयमिति मत्वा संपूज्य हिरण्यकशिपुमगात्।।

हैरण्यगर्भाच्च वसिष्ठाद्धिरण्यकशिपुः शापं प्राप्तवान्। यस्मात्त्वयाऽन्यो वृतो होता तस्मादसमाप्तयज्ञस्त्वमपूर्वात्सत्त्वजाताद्वधं प्राप्स्यसीति। तच्छापदानाद्धिरण्यकशिपुः प्राप्तवान्वधम्।।

[3]विश्वरूपो मातृपक्षवर्धनोऽत्यर्थं तपस्यभवत्। तस्य व्रतभङ्गार्थमिन्द्रो बह्वीः श्रीमत्योऽप्सरसो नियुयोज। ताश्च दृष्ट्वा मनः क्षुभितं तस्याभवत्तासु चाप्सरःसु नचिरादेव सक्तोऽभवत्। सक्तं चैनं ज्ञात्वाऽप्सरस ऊचुर्गच्छामहे वयं यथागतमिति।।

[4]तास्त्वाष्ट्र उवाच – क्व गमिष्यथ? आस्यतां तावन्मया सह श्रेयो भविष्यतीति। तास्तमब्रुवन् – वयं देवस्त्रियोऽप्सरस इन्द्रं वरदं पुरा प्रभविष्णुं वृणीमह इति।।

[5]अथ ता विश्वरूपोऽब्रवीत्। अद्यैव सेन्द्रा देवा न भविष्यन्तीति। ततो मन्त्राञ्जजाप। तैर्मन्त्रैः प्रावर्धत त्रिशिराः। एकेनाऽऽस्येन सर्वलोकेषु द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं पपावेकेनाप एकेन सेन्द्रान्देवान्। अथेन्द्रस्तं विवर्धमानं सोमपानाप्यायितसर्वगात्रं दृष्ट्वा चिन्तामापेदे।।

[1]देवाश्च ते सहेन्द्रेण ब्रह्माणमभिजग्मुरूचुश्च। विश्वरूपेण सर्वयज्ञेषु सुहुतः सोमः पीयते। वयमभागाः संवृत्ताः। असुरपक्षो वर्धते वयं क्षीयामः। तदर्हसि नो विधातुं श्रेयो यदनन्तरमिति।।

[2]तान्ब्रह्मोवाच – ऋषिर्भार्गवस्तपस्तप्यते दधीचः। स याच्यतां वरं यथा कलेवरं जह्यात्। तस्यास्थिभिर्वज्रं क्रियतामिति।।

[3]देवास्तत्रागच्छन्यत्र दधीचो भगवानृषिस्तपस्तेपे। सेन्द्रा देवास्तमभिगम्योचुः – भगवंस्तपसः कुशलमविघ्नं चेति। तान्दधीच उवाच – स्वागतं भवद्भ्यः। किं क्रियताम्? यद्वक्ष्यथ तत्करिष्यामीति। ते तमब्रुवञ्शरीरपरित्यागं लोकहितार्थं भगवान्कर्तुमर्हतीति। अथ दधीचस्तथैवाविमनाः सुखदुःखसमो महायोगी आत्मानं समाधाय शरीरपरित्यागं चकार।।

[4]तस्य परमात्मन्यवसृते तान्यस्थीनि धाता संगृह्य वज्रमकरोत्। तेन वज्रेणाभेद्येनाप्रधृष्येण ब्रह्मास्थिसंभूतेन विष्णुप्रविष्टेनेन्द्रो विश्वरूपं जघान। शिरसां चास्य छेदनमकरोत्। तस्मादनन्तरं विश्वरूपगात्रमथनसंभवं त्वष्ट्रोत्पादितमेवारिं वृत्रमिन्द्रो जघान।।

[5]तस्यां द्वैधीभूतायां ब्रह्मवध्यायां भयादिन्द्रो देवराज्यं परित्यज्य अप्सु संभवां शीतलां मानससरोगतां नलिनीं

---

(१) भा. १२।३२९।१८; भामु. १२।३४२।२९ मदद (मदा).

(२) भा. १२।३२९।१९-२०; भामु. १२।३४२।३०-३१.

(३) भा. १२।३२९।२१; भामु. १२।३४२।३२ विश्व (अथ विश्व).

(४) भा. १२।३२९।२२; भामु. १२।३४२।३३ इन्द्रं + (देवं).

(५) भा. १२।३२९।२३; भामु. १२।३४२।३४ न्त्रैः प्रावर्धत (न्त्रैरवर्धत) द्विजैः (यथावद्द्विजैः) प एकेन (प्रमेकेन) पेदे + (सह देवैः).

(१) भा. १२।३२९।२४; भामु. १२।३४२।३५ देवाश्च.... रूचुश्च (ते देवाः सेन्द्रा ब्रह्माणमभिजग्मुस्त ऊचुः) श्रेयो यदनन्त (श्रेयोऽनन्त).

(२) भा. १२।३२९।२५; भामु. १२।३४२।३६ वरं + (स) जह्यात् + (तथा विधीयतां).

(३) भा. १२।३२९।२६; भामु. १२।३४२।३७-४० देवा (ततो देवा) स्तमभि (स्तं तथाऽभि) पसः कुशलमविघ्नं (पः सुकुशलमभिन्नं) द्भ्यः किं क्रियताम् (द्भ्य उच्यतां किं क्रियतामिति) ष्यामीति (ष्यामि).

(४) भा. १२।३२९।२७; भामु. १२।३४२।४१ न्यवसृते (न्यपसृते) त्वष्ट्रो (त्वाष्ट्रो).

(५) भा. १२।३२९।२८; भामु. १२।३४२।४२ परित्यज्य अप्सु संभवां (पर्यत्यजदप्सु संभवां च) प्रपेदे (प्रतिपेदे).

प्रपेदे। तत्र चैश्वर्ययोगादणुमात्रो भूत्वा बिसग्रन्थिं प्रविवेश।।

[१]अथ ब्रह्मवध्याभयप्रनष्टे त्रैलोक्यनाथे शचीपतौ जगदनीश्वरं बभूव। देवान्रजस्तमश्चाविवेश। मन्त्रा न प्रावर्तन्त। महर्षीणां रक्षांसि प्रादुरभवन्। ब्रह्म चोत्सादनं जगाम। अनिन्द्राश्चाबला लोकाः सुप्रधृष्या बभूवुः।।

[२]अथ देवा ऋषयश्चाऽऽयुषः पुत्रं नहुषं नाम देवराजत्वेऽभिषिषिचुः। नहुषः पञ्चभिः शतैर्ज्योतिषां ललाटे ज्वलद्भिः सर्वतेजोहरैस्त्रिविष्टपं पालयांबभूव। अथ लोकाः प्रकृतिमापेदिरे स्वस्थाश्च बभूवुः।।

[३]अथोवाच नहुषः — सर्वं मां शक्रोपभुक्तमुपस्थितमृते शचीमिति। स एवमुक्त्वा शचीसमीपमगमदुवाच चैनाम् — सुभगेऽहमिन्द्रो देवानां भजस्व मामिति। तं शची प्रत्युवाच — प्रकृत्या त्वं धर्मवत्सलः सोमवंशोद्भवश्च। नार्हसि परपत्नीधर्षणं कर्तुमिति।।

[४]तामथोवाच नहुषः — ऐन्द्रं पदमध्यास्यते मया। अहमिन्द्रस्य राज्यरत्नहरो नात्राधर्मः कश्चित्त्वमिन्द्रभुक्तेति। सा तमुवाच — अस्ति मम किंचिद्व्रतमपर्यवसितम्। तस्यावभृथे त्वामुपगमिष्यामि कैश्चिदेवाहोभिरिति। स शच्यैवमभिहितो नहुषो जगाम।।

[५]अथ शची दुःखशोकार्ता भर्तृदर्शनलालसा नहुषभयगृहीता बृहस्पतिमुपागच्छत्। स च तामभिगतां दृष्ट्वैव ध्यानं प्रविश्य भर्तृकार्यतत्परां ज्ञात्वा बृहस्पतिरुवाच — अनेनैव व्रतेन तपसा चान्विता देवीं वरदामुपश्रुतिमाह्वय। सा तवेन्द्रं दर्शयिष्यतीति।।

(१) भा. १२।३२९।२९; भामु. १२।३४२।४३.

(२) भा. १२।३२९।३०; भामु. १२।३४२।४४-४५ राजत्वे (राज्ये) स्वस्थाश्च + (हृष्टाश्च).

(३) भा. १२।३२९।३१; भामु. १२।३४२।४६ दुवाच चै (दुवाचै).

(४) भा. १२।३२९।३२; भामु. १२।३४२।४७ मिन्द्रभु (मिन्द्रोपभु) हितो नहुषो ज (हितो ज).

(५) भा. १२।३२९।३३; भामु. १२।३४२।४८ भिगतां (त्युद्विग्नां) सा तवेन्द्रं (तदा सा ते इन्द्रं).

[१]साऽथ महानियममास्थिता देवीं वरदामुपश्रुतिं मन्त्रैराह्वयत्। सोपश्रुतिः शचीसमीपमगात्। उवाच चैनाम्-इयमस्मि त्वयोपहूतोपस्थिता। किं ते प्रियं करवाणीति। तां मूर्ध्ना प्रणम्योवाच शची — भगवत्यर्हसि मे भर्तारं दर्शयितुं त्वं सत्या मता चेति। सैनां मानसं सरोऽनयत्। तत्रेन्द्रं बिसग्रन्थिगतमदर्शयत्।।

[२]तामिन्द्रः पत्नीं कृशां ग्लानां च दृष्ट्वा चिन्तयांबभूव। अहो मम महद्दुःखमिदमद्योपगतम्। नष्टं हि मामियमन्विष्योपागमद्दुःखार्तेति। तामिन्द्र उवाच — कथं वर्तयसीति। सा तमुवाच — नहुषो मामाह्वयति। कालश्चास्य मया कृत इति।।

[३]तामिन्द्र उवाच — गच्छ। नहुषस्त्वया वाच्योऽपूर्वेण मामृषियुक्तेन यानेन त्वमधिरूढ उद्वहस्व। इन्द्रस्य हि महान्ति वाहनानि मनसः प्रियाण्यधिरूढानि मया। त्वमन्येनोपयातुमर्हसीति। सैवमुक्ता हृष्टा जगाम। इन्द्रोऽपि बिसग्रन्थिमेवाऽऽविवेश भूयः।।

[४]अथेन्द्राणीमभ्यागतां दृष्ट्वोवाच नहुषः — पूर्णः स काल इति। तं शच्यब्रवीच्छक्रेण यथोक्तम्। स महर्षियुक्तं वाहनमधिरूढः शचीसमीपमुपागच्छत्।।

[५]अथ मैत्रावरुणिः कुम्भयोनिरगस्त्यो महर्षीन्विक्रियमाणांस्तान्नहुषेणापश्यत्। पद्भ्यां च तेनास्पृश्यत। ततः स नहुषमब्रवीत् — अकार्यप्रवृत्त पाप पतस्व महीम्। सर्पो भव यावद्भूमिर्गिरयश्च तिष्ठेयुस्तावदिति। स महर्षिवाक्यसमकालमेव तस्माद्यानादवापतत्।।

(१) भा. १२।३२९।३४; भामु. १२।३४२।४८ नियममा (नियम) ह्वयत् (ह्वयति) स्मि त्वयोप (स्मीति त्वयाऽऽ) मता (ऋता).

(२) भा. १२।३२९।३५; भामु. १२।३४२।४९ तामिन्द्रः (तामथ) च (चेन्द्रो) महद्दुःखमिदमद्यो (दुःखमिदमु) ष्योपा (ष्य यत्पत्न्यभ्य) ह्वयति + (पत्नीं कर्तुं).

(३) भा. १२।३२९।३६; भामु. १२।३४२।४९ उद्वहस्व (उद्वहस्वेति) (हि०) मनसः प्रिया (सन्ति मनःप्रिया).

(४) भा. १२।३२९।३७; भामु. १२।३४२।५० दृष्ट्वोवा (दृष्ट्वा तामुवा).

(५) भा. १२।३२९।३८; भामु. १२।३४२।५१ स्त्यो महर्षीन् विक्रि (स्त्य ऋषिवरो महर्षीन् धिक्कि) तेनास्पृश्यत (तमस्पृशत्).

[१]अथानिन्द्रं पुनस्त्रैलोक्यमभवत्। ततो देवा ऋषयश्च भगवन्तं विष्णुं शरणमिन्द्रार्थेऽभिजग्मुः। ऊचुश्चैनम्-भगवन्निन्द्रं ब्रह्मवध्याभिभूतं त्रातुमर्हसीति। ततः स वरदस्तानब्रवीत् – अश्वमेधं यज्ञं वैष्णवं शक्रोऽभियजतु। ततः स्वं स्थानं प्राप्स्यतीति।।

[२]ततो देवा ऋषयश्चेन्द्रं नापश्यन्यदा तदा शचीमूचुः-गच्छ सुभगे इन्द्रमानयस्वेति। सा पुनस्तत्सरः समभ्यगच्छत्। इन्द्रश्च तस्मात्सरसः समुत्थाय बृहस्पतिमभिजगाम। बृहस्पतिश्चाश्वमेधं महाक्रतुं शक्रायाऽऽहरत्। ततः कृष्णसारङ्गं मेध्यमश्वमुत्सृज्य वाहनं तमेव कृत्वा इन्द्रं मरुत्पतिं बृहस्पतिः स्वस्थानं प्रापयामास।।

[३]ततः स देवराड्देवैर्ऋषिभिः स्तूयमानस्त्रिविष्टपस्थो निष्कल्मषो बभूव। ब्रह्मवध्यां चतुर्षु स्थानेषु वनिताग्निवनस्पतिगोषु व्यभजत्। एवमिन्द्रो ब्रह्मतेजःप्रभावोपबृंहितः शत्रुवधं कृत्वा स्वस्थानं प्रापितः।।

[४]आकाशगङ्गागतश्च पुरा भरद्वाजो महर्षिरुपास्पृशंस्त्रीन्क्रमान्क्रमता विष्णुनाऽभ्यासादितः। स भरद्वाजेन ससलिलेन पाणिनोरसि ताडितः सलक्षणोरस्कः संवृत्तः।।

[५]भृगुणा महर्षिणा शप्तोऽग्निः सर्वभक्षत्वमुपनीतः।।

[६]अदितिर्वै देवानामन्नमपचदेतद्भुक्त्वाऽसुरान्हनिष्यन्तीति। तत्र बुधो व्रतचर्यासमाप्तावागच्छत्। अदितिं चावोचत् – भिक्षां देहीति। तत्र देवैः पूर्वमेतत्प्राश्यं नान्येनेत्यदितिर्भिक्षां नादात्। अथ भिक्षाप्रत्याख्यानरुषितेन बुधेन ब्रह्मभूतेन विवस्वतो द्वितीये जन्मन्यण्डसंज्ञितस्याण्डं मारितमदित्याः। स मार्तण्डो विवस्वानभवच्छ्राद्धदेवः।।

[१]दक्षस्य वै दुहितरः षष्टिरासन्। ताभ्यः कश्यपाय त्रयोदश प्रादाद्दश धर्माय दश मनवे सप्तविंशतिमिन्दवे। तासु तुल्यासु नक्षत्राख्यां गतासु सोमो रोहिण्यामभ्यधिकां प्रीतिमकरोत्। ततस्ताः शेषाः पत्न्य ईर्ष्यावत्यः पितुः समीपं गत्वेममर्थं शशंसुः – भगवन्नस्मासु तुल्यप्रभावासु सोमो रोहिणीमधिकं भजतीति। सोऽब्रवीद्यक्ष्मैनमावेक्ष्यतीति।।

[२]दक्षशापात्सोमं राजानं यक्ष्माऽऽविवेश। स यक्ष्मणाऽऽविष्टो दक्षमगमत्। दक्षश्चैनमब्रवीत् – न समं वर्तस इति। तत्रर्षयः सोममब्रुवन्क्षीयसे यक्ष्मणा। पश्चिमस्यां दिशि समुद्रे हिरण्यसरस्तीर्थम्। तत्र गत्वाऽऽत्मानमभिषेचयस्वेति। अथागच्छत्सोमस्तत्र हिरण्यसरस्तीर्थम्। गत्वा चाऽऽत्मनः स्नपनमकरोत्। स्नात्वा चाऽऽत्मानं पाप्मनो मोक्षयामास। तत्र चावभासितस्तीर्थे यदा सोमस्तदाप्रभृति तीर्थं तत्प्रभासमिति नाम्ना ख्यातं बभूव। तच्छापादद्यापि क्षीयते सोमोऽमावास्यान्तरस्थः। पौर्णमासीमात्रेऽधिष्ठितो मेघलेखाप्रतिच्छन्नं वपुर्दर्शयति। मेघसदृशं वर्णमगमत्तदस्य शशलक्ष्मविमलमभवत्।।

[३]स्थूलशिरा महर्षिर्मेरोः प्रागुत्तरे दिग्भागे तपस्तेपे। तस्य तपस्तप्यमानस्य सर्वगन्धवहः शुचिर्वायुर्विवायमानः

---

(१) भा. १२।३२९।३९; भामु. १२।३४२।५२ वध्या (हत्या) तु। ततः स्वं स्था (तां ततः स्वस्था).

(२) भा. १२।३२९।४०; भामु. १२।३४२।५२ समुत्थाय (प्रत्युत्थाय) स्वस्थानं (स्वं स्थानं).

(३) भा. १२।३२९।४१; भामु. १२।३४२।५३ बभूव + (ह) स्वस्थानं (स्वं स्थानं).

(४) भा. १२।३२९।४२; भामु. १२।३४२।५४ स्पृशंस्त्रीन् (स्पृशत्त्रीन्).

(५) भा. १२।३२९।४३; भामु. १२।३४२।५५ मुप (मुपा).

(६) भा. १२।३२९।४४; भामु. १२।३४२।५६ भूतेन... मदित्याः (भूतेनादितिः शप्ता अदितेरुदरे भविष्यति व्यथा विवस्वतो द्वितीयजन्मन्यण्डसंज्ञितस्य अण्डं मातुरदित्या मारितं).

---

(१) भा. १२।३२९।४५; भामु. १२।३४२।५७ मकरोत् (मानभूत्) शेषाः (शिष्टाः) णीमधि (णीं प्रत्यधि) वेक्ष्यती (विश्येते).

(२) भा. १२।३२९।४६; भामु. १२।३४२।५७-५८ यक्ष्माऽऽवि (यक्ष्मा वि) मगमत् (मगात्) स इति (यसीति) मस्यां (मायां) स्नपन (सेचन) प्रभृति + (च).

(३) भा. १२।३२९।४७; भामु. १२।३४२।५९ दिग्भागे (दिग्विभागे) तस्य (ततस्तस्य) युर्विवाय (युर्वाय) हृदयप (हृदये प) तत्र + (किल) न दर्शि (निदर्शि).

**शरीरमस्पृशत्। स तपसा तापितशरीरः कृशो वायुनोपवीज्यमानो हृदयपरितोषमगमत्। तत्र तस्यानिलव्यजनकृतपरितोषस्य सद्यो वनस्पतयः पुष्पशोभां न दर्शितवन्त इति स एतान् शशाप – न सर्वकालं पुष्पवन्तो भविष्यथेति।।**

**[1]नारायणो लोकहितार्थं वडवामुखो नाम महर्षिः पुराऽभवत्। तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नाऽऽगतः। तेनामर्षितेनाऽऽत्मगात्रोष्मणा समुद्रः स्तिमितजलः कृतः। स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः। उक्तश्चापेयो भविष्यसि। एतच्च ते तोयं वडवामुखसंज्ञितेन पीयमानं मधुरं भविष्यति। तदेतदद्यापि वडवामुखसंज्ञितेनानुवर्तिना तोयं सामुद्रं पीयते।।**

**[2]हिमवतो गिरेर्दुहितरमुमां रुद्रश्चकमे। भृगुरपि च महर्षिर्हिमवन्तमागम्याब्रवीत्कन्यामुमां मे देहीति। तमब्रवीद्धिमवानभिलषितो वरो रुद्र इति। तमब्रवीद्भृगुर्यस्मात्त्वयाऽहं कन्यावरणकृतभावः प्रत्याख्यातस्तस्मान्न रत्नानां भवान्भाजनं भविष्यतीति। अद्यप्रभृत्येतदवस्थितमृषिवचनम्।।**

**[3]तदेवंविधं माहात्म्यं ब्राह्मणानाम्। क्षत्रमपि शाश्वतीमव्ययां पृथिवीं पत्नीमभिगम्य बुभुजे। तदेतद्ब्रह्माग्नीषोमीयम्। तेन जगद्धार्यते।।**

ब्राह्मणमाहात्म्यकथनपरो ग्रन्थः स्पष्टार्थः। क्षत्रियमाहात्म्यमप्याह – क्षत्रमिति। उपसंहरति – यदेतदिति। यदेतत् ब्रह्मक्षत्रगतं तेजः अग्नीषोमीयम् अतस्तेनैव तेजसा जगद्धार्यते। अतो जगदप्याग्नीषोमीयमित्यर्थः।

नीटी.

(१) **भा.** १२।३२९।४८; **भामु.** १२।३४२।६०-६१ महर्षिः पुराऽभवत् (पुरा महर्षिर्बभूव) पीयमानं (पेपीयमानं) सामुद्रं (समुद्रात्).

(२) **भा.** १२।३२९।४९; **भामु.** १२।३४२।६२-६३ मुम + (कन्यां) मागम्या (मागत्या) मुमां मे (मिमां मे) लषितो (लक्षितो).

(३) **भा.** १२।३२९।५०; **भामु.** १२।३४२।६३-६४ मपि + (च ब्राह्मणप्रसादादेव) व्ययां + (च) तदे (यदे).

## ब्राह्मणस्य गुणवर्णनं क्षत्रियपूज्यत्वं च

**युधिष्ठिर उवाच –**

**[1]के पूज्याः के नमस्कार्याः कान्नमस्यसि भारत।**
**एतन्मे सर्वमाचक्ष्व येषां स्पृहयसे नृप।।**

'के पूज्याः' इत्यादिना पूर्वोक्तधर्मान् विवृणोति। तत्रापि 'चक्षुर्दद्यात्' (भामु. १३।७।६) इत्यादिना आतिथ्यं कर्तव्यमुक्तं तद्विवृणोत्यध्यायेन। नीटी.

**[2]उत्तमापद्गतस्यापि यत्र ते वर्तते मनः।**
**मनुष्यलोके सर्वस्मिन्यदमुत्रेह चाप्युत।।**

यदमुत्रेह च, हितं तद्वदेति शेषः। नीटी.

**भीष्म उवाच –**

**[3]स्पृहयामि द्विजातीनां येषां ब्रह्म परं धनम्।**
**येषां स्वप्रत्ययः स्वर्गस्तपःस्वाध्यायसाधनः।।**

ब्रह्म आनन्दात्मा। स्वर्गः सत्यसंकल्पत्वादिसिद्धिः। तपःस्वाध्यायौ साधनं यस्य स्वर्गस्य, 'यस्तमात्मानमनुविद्य विजानाति सर्वांश्च कामान्' (छाउ. ८।७।१) इति श्रुतेः सः स्वप्रत्ययः। नीटी.

**[4]येषां वृद्धाश्च बालाश्च पितृपैतामहीं धुरम्।**
**उद्वहन्ति न सीदन्ति तेषां वै स्पृहयाम्यहम्।।**

**[5]विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम्।**
**श्रुतवृत्तोपपन्नानां सदाऽक्षरविदां सताम्।।**

अक्षरं ब्रह्म, तद्विदाम्। नीटी.

**[6]संसत्सु वदतां येषां हंसानामिव संघशः।**
**मङ्गल्यरूपा रुचिरा दिव्यजीमूतनिःस्वनाः।।**

हंससादृश्यं क्षीरनीरयोरिवाऽऽत्मानात्मनोर्विवेचनात्।

नीटी.

(१) **भा.** १३।८।१; **भामु.** १३।८।१ येषां (येभ्यः).

(२) **भा.** १३।८।२; **भामु.** १३।८।२.

(३) **भा.** १३।८।३; **भामु.** १३।८।३ तीनां (तिभ्यो) साधनः (साधनम्).

(४) **भा.** १३।८।४; **भामु.** १३।८।४ वृद्धाश्च बाला (बालाश्च वृद्धा) तेषां (तेभ्यो).

(५) **भा.** १३।८।५; **भामु.** १३।८।५.

(६) **भा.** १३।८।६; **भामु.** १३।८।६ येषां (तात).

[१]सम्यगुच्चारिता वाचः श्रूयन्ते हि युधिष्ठिर।
शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः।।

नृपतौ नृपतेः समीपे उच्चरिताः। नीटी.

[२]ये चापि तेषां श्रोतारः सदा सदसि संमताः।
विज्ञानगुणसंपन्नास्तेषां च स्पृहयाम्यहम्।।

[३]सुसंस्कृतानि प्रयताः शुचीनि गुणवन्ति च।
ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर।
ये चापि सततं राजंस्तेषां च स्पृहयाम्यहम्।।

[४]शक्यं ह्येवाऽऽहवे योद्धुं न दातुमनसूयितम्।
शूरा वीराश्च शतशः सन्ति लोके युधिष्ठिर।
तेषां संख्यायमानानां दानशूरो विशिष्यते।।

अनसूयितम् असूयावर्ज्यं यथा स्यात्तथा। नीटी.

[५]धन्यः स्यां यद्यहं भूयः सौम्य ब्राह्मणकोऽपि वा।
कुले जातो धर्मगतिस्तपोविद्यापरायणः।।

ब्राह्मणकः कुत्सितब्राह्मणोऽपि यद्यहं स्यां तर्हि धन्यः, किमुत कुले जातः? नीटी.

[६]न मे त्वत्तः प्रियतरो लोकेऽस्मिन्पाण्डुनन्दन।
त्वत्तश्च मे प्रियतरा ब्राह्मणा भरतर्षभ।।

[७]यथा मम प्रियतरास्त्वत्तो विप्राः कुरूद्वह।
तेन सत्येन गच्छेयं लोकान्यत्र स शंतनुः।।

[८]न मे पिता प्रियतरो ब्राह्मणेभ्यस्तथाऽभवत्।
न मे पितुः पिता वाऽपि ये चान्येऽपि सुहृज्जनाः।।

[९]न हि मे वृजिनं किंचिद्विद्यते ब्राह्मणेष्विह।
अणु वा यदि वा स्थूलं विदितं साधुकर्मभिः।।

वृजिनं संकटम्, फलाशेति यावत्। पूज्यत्वादेव तान्पूजयामि, न तु फलायेत्यर्थः। नीटी.

[१]कर्मणा मनसा वाऽपि वाचा वाऽपि परंतप।
यन्मे कृतं ब्राह्मणेषु तेनाद्य न तपाम्यहम्।।

तेन ब्राह्मणाराधनेन अद्य शरपञ्जरस्थोऽपि न तपामि न व्यथां प्राप्नोमीति स्वानुभवं दर्शयति। नीटी.

[२]ब्रह्मण्य इति मामाहुस्तया वाचाऽस्मि तोषितः।
एतदेव पवित्रेभ्यः सर्वेभ्यः परमं स्मृतम्।।

ब्रह्मण्यः ब्रह्मजातौ आसक्तः। नीटी.

पश्यामि लोकानमलाञ्छुचीन्ब्राह्मणयायिनः।
तेषु मे तात गन्तव्यमह्नाय च चिराय च।।

यायिनः अनुचरस्य मे। नीटी.

[३]यथा पत्याश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर।
स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः।।

[४]क्षत्रियः शतवर्षी च दशवर्षी च ब्राह्मणः।
पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणः पिता।।

[५]नारी तु पत्यभावे वै देवरं कुरुते पतिम्।
पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिम्।।
पुत्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते।
अग्निवच्चोपचर्या वै ब्राह्मणाः कुरुसत्तम।।

[६]ऋजून्सतः सत्यशीलान्सर्वभूतहिते रतान्।
आशीविषानिव क्रुद्धान्द्विजानुपचरेत्सदा।।

[७]तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर।
उभे चैते परित्याज्ये तेजश्चैव तपस्तथा।।

ब्राह्मणाद्बिभ्येत्, न तु तत्र तेजस्तपसी स्वीये प्रकाशयेदित्यर्थः। तेजः क्रोधबलम्। तपः योगबलम्। नीटी.

व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते।
हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः।।

---

(१) भा. १३।८।७; भामु. १३।८।७ च्चारिता (च्चरिता).
(२) भा. १३।८।८; भामु. १३।८।८ स्तेषां च (स्तेभ्यश्च).
(३) भा. १३।८।९; भामु. १३।८।९-१० स्तेषां च (स्तेभ्यश्च).
(४) भा. १३।८।१०; भामु. १३।८।१०-११ तेषां (येषां).
(५) भा. १३।८।११; भामु. १३।८।१२.
(६) भा. १३।८।१२; भामु. १३।८।१३ श्च मे (श्चापि).
(७) भा. १३।८।१३; भामु. १३।८।१४ तरा (तमा) द्वह (त्तम) शंतनुः (शांतनुः).
(८) भा. १३।८।१४; भामु. १३।८।१५.
(९) भा. १३।८।१५; भामु. १३।८।१६ चतुर्थचरणे (विद्यते साधु कर्मसु).

(१) भा. १३।८।१६; भामु. १३।८।१७ णेषु ते (णेभ्यस्ते).
(२) भा. १३।८।१७-१८; भामु. १३।८।१८-१९.
(३) भा. १३।८।१९; भामु. १३।८।२० पत्या (भर्त्रा).
(४) भा. १३।८।२०; भामु. १३।८।२१ च ब्राह्मणः (द्विजोत्तमः) णः पिता (णो गुरुः).
(५) भा. १३।८।२१-२२; भामु. १३।८।२२-२३.
(६) भा. १३।८।२३; भामु. १३।८।२४ जानुप (जान्परि).
(७) भा. १३।८।२४-२६; भामु. १३।८।२५-२७.

तयोः तपस्तेजसोर्ब्राह्मणक्षत्रियस्थयोः व्यवसायः फलम् अभिभवरूपं शीघ्रं तीव्रम्, तथापि तपस्विन एवेतरान् हन्युः, न तेजस्विन इत्यर्थः। नीटी.

**भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात्।**
**कुर्यादुभयतः शेषं दत्तशेषं न शेषयेत्।।**

ल्यब्लोपे पञ्चमी। अकोपनं ब्राह्मणं प्राप्य यद्भूयः बहुतरम् उभयं तपस्तेजआख्यं स्यात् तद्दत्तं खण्डितम्, भवतीति शेषः। क्षमावत्सु प्रयुक्तं तत्तेजो बह्वपि तूलराशिवत्सद्यो नश्यतीत्यर्थः। उभयतः उभयं चेत् शेषं कुर्यात् न तद्दत्तशेषं शेषयेदित्यन्वयः। द्वाभ्याम् अन्योन्यस्मिन्प्रयुक्तं तेजआदिद्वयं न निःशेषं नश्यति, किंतु शेषं क्षमावता खण्डितस्य तस्यावशिष्टं तु न शेषयेन्न शिष्यते अपि तु निःशेषमेव नश्यतीत्यर्थः। नीटी.

**[1]दण्डपाणिर्यथा गोषु पालो नित्यं स्थिरो भवेत्।**
**ब्राह्मणान्ब्रह्म च तथा क्षत्रियः परिपालयेत्।।**
**[2]पितेव पुत्रान्रक्षेथा ब्राह्मणान्ब्रह्मतेजसः।**
**गृहे चैषामवेक्षेथाः कच्चिदस्तीह जीवनम्।।**

अभावे तद्देयमित्यर्थः। नीटी.

ब्राह्मणप्रशंसा, गोकुलतृषा-
विघातनिषेधः

**[3]न हर्तव्यं विप्रधनं क्षन्तव्यं तेषु नित्यशः।**
**बालाश्च नावमन्तव्या दरिद्राः कृपणा अपि।।**
**[4]एतद्धि परमं तेजो ब्राह्मणस्येह दृश्यते।**
**सहस्रकिरणस्येव सवितुर्धरणीतले।।**
**[5]महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते।।**

तीर्थमपि ब्राह्मण एवेत्याह – महदिति। नीटी.

(१) भा. १३।८।२७; भामु. १३।८।२८ स्थिरो भवेत् (हि रक्षयेत्) ब्राह्मणान् (ब्राह्मणा).
(२) भा. १३।८।२८; भामु. १३।८।२९ ब्रह्मतेजसः (धर्मचेतसः) कच्चिदस्तीह (किंस्विदस्तीति).
(३) भामु. १३।९।१८.
(४) भा. १३।९।२०; भामु. १३।९।२४.
(५) भा. १३।९।२४; भामु. १३।९।२८.

**[1]गोकुलस्य तृषार्तस्य जलार्थे वसुधाधिप।**
**उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम्।।**

अब्राह्मणेन ब्राह्मण्यं भूयिष्ठजन्म-
साध्यम्, तत्तात्पर्यकं
मतङ्गाख्यानम्

**युधिष्ठिर उवाच –**

**[2]प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च यथा भवान्।**
**गुणैः समुदितः सर्वैर्वयसा च समन्वितः।**
**तस्माद्भवन्तं पृच्छामि धर्मं धर्मभृतां वर।।**

'तुल्या गङ्गा संमता ब्राह्मणानाम्' (भा. १३।२७।९१) इति ब्रह्मविदां कृतकृत्यानामपि गङ्गा पूज्यत्वेन संमतेत्युक्तम्, तेन ब्राह्मण्यं महदिति मत्वा पृच्छति – प्रज्ञेति। वृत्तम् आचारः। शीलं विनयः। नीटी.

**[3]क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम।**
**ब्राह्मण्यं प्राप्नुयात्केन तन्मे व्याख्यातुमर्हसि।।**
**[4]तपसा वा सुमहता कर्मणा वा श्रुतेन वा।**
**ब्राह्मण्यमथ चेदिच्छेत्तन्मे ब्रूहि पितामह।।**

चेदिच्छेत्, तर्हि केन प्राप्नुयात्तदिति अनुषज्य व्याख्येयोऽयमर्थः। नीटी.

**भीष्म उवाच –**

**[5]ब्राह्मण्यं तात दुष्प्रापं वर्णैः क्षत्रादिभिस्त्रिभिः।**
**परं हि सर्वभूतानां स्थानमेतद्युधिष्ठिर।।**
**[6]बह्वीस्तु संसरन्योनीर्जायमानः पुनः पुनः।**
**पर्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते।।**

पर्याये आवृत्तौ जन्मनाम्। नीटी.

(१) भा. १३।२५।७; भामु. १३।२४।७; निक. ४६२ जलार्थे (जलान्ते) चतुर्थचरणे (तमाहुर्ब्रह्मघातकम्); निप्र. २।५७१ द्वितीयचरणे (जलार्थं प्रतिधावतः) शेषं निकवत्.
(२) भा. १३।२८।१; भामु. १३।२७।१-२ णैः समुदितः (णैश्च विविधैः) द्वितीयपङ्क्त्यनन्तरम् (भवान् विशिष्टो बुद्ध्या च प्रज्ञया तपसा तथा।).
(३) भा. १३।२८।२; भामु. १३।२७।३ पूर्वार्धात्पूर्वम् (नान्यस्त्वदन्यो लोकेषु प्रष्टव्योऽस्ति नराधिप।) यात्केन (याद्येन).
(४) भा. १३।२८।३; भामु. १३।२७।४.
(५) भा. १३।२८।४; भामु. १३।२७।५ प्रापं (प्राप्यं).
(६) भा. १३।२८।५-६; भामु. १३।२७।६-७.

**अत्राप्युदाहरन्तीममितिहासं पुरातनम्।**
**मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर।।**
**[1]द्विजातेः कस्यचित्तात तुल्यवर्णः सुतः प्रभुः।**
**मतङ्गो नाम नाम्नाऽभूत्सर्वैः समुदितो गुणैः।।**

तुल्यवर्णः अन्यवर्णजोऽपि जातकर्मादिसंस्कारयोगात्तुल्यवर्णत्वं गतः। नाम प्रसिद्धम्। नीटी.

**[2]स यज्ञकारः कौन्तेय पित्रा सृष्टः परंतप।**
**प्रायाद्गर्दभयुक्तेन रथेनेहाऽऽशुगामिना।।**

यज्ञकारः यज्ञं कारयन् आर्त्विज्यं कुर्वन्नित्यर्थः। प्रायात् अग्निचयनार्थमिष्टका आनेतुमित्यर्थाद्गम्यते। नीटी.

**[3]स बालं गर्दभं राजन्वहन्तं मातुरन्तिके।**
**निरविध्यत्प्रतोदेन नासिकायां पुनः पुनः।।**

बालम् अशिक्षितम्। नीटी.

**[4]तं तु तीव्रव्रणं दृष्ट्वा गर्दभी पुत्रगृद्धिनी।**
**उवाच मा शुचः पुत्र चण्डालस्त्वाऽधितिष्ठति।।**
**[5]ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मण उच्यते।**
**आचार्यः सर्वभूतानां शास्ता किं प्रहरिष्यति।।**

आवाप इति पाठे आलवालम्, पितृमातृतुल्य इत्यर्थः। 'आवापो भाण्डचयने परिक्षेपालवालयोः' इति मेदिनी। नीटी.

**[6]अयं तु पापप्रकृतिर्बाले न कुरुते दयाम्।**
**स्वयोनिं मानयत्येष भावो भावं निगच्छति।।**

बाले त्वयि। भावः जातिस्वभावः भावं बुद्धिं नियच्छति मार्गान्तरादपकर्षति। नीटी.

**[7]एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभीवचः।**
**अवतीर्य रथात्तूर्णं रासभीं प्रत्यभाषत।।**

(१) भा. १३।२८।७; भामु. १३।२७।८ तः प्रभुः (तस्त्वभूत्) म्नाऽभूत् (म्ना वै).

(२) भा. १३।२८।८; भामु. १३।२७।९ पित्रा सृ (पित्रोत्सृ) नेहाऽऽशु (नाप्याशु).

(३) भा. १३।२८।९; भामु. १३।२७।१०.

(४) भा. १३।२८।१०; भामु. १३।२७।११ तं तु तीव्रव्र (तत्र तीव्रं व्र) चण्डालस्त्वा (चाण्डालस्त्व).

(५) भा. १३।२८।११; भामु. १३।२७।१२.

(६) भा. १३।२८।१२; भामु. १३।२७।१३ गच्छति (यच्छति).

(७) भा. १३।२८।१३-१४; भामु. १३।२७।१४-१५.

**ब्रूहि रासभि कल्याणि माता मे येन दूषिता।**
**कथं मां वेत्सि चण्डालं क्षिप्रं रासभि शंस मे।।**
**[1]केन जातोऽस्मि चण्डालो ब्राह्मण्यं येन मेऽनशत्।**
**तत्त्वेनैतन्महाप्राज्ञे ब्रूहि सर्वमशेषतः।।**

ब्राह्मण्यं लोकदृश्यं नश्यते अन्तर्धीयते येन लक्षणेन तत्कथम्? यतः मां चण्डालं वेत्सि। नीटी.

**गर्दभ्युवाच —**

**[2]ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह।**
**जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत्।।**

अनशत् नष्टं क्रूरत्वलिङ्गेन। नीटी.

**[3]एवमुक्तो मतङ्गस्तु प्रत्युपायाद्गृहं प्रति।**
**तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत्।।**
**[4]मया त्वं यज्ञसंसिद्धौ नियुक्तो गुरुकर्मणि।**
**कस्मात्प्रतिनिवृत्तोऽसि कच्चिन्न कुशलं तव।।**

संसिद्धौ संसिद्ध्यर्थम्। नीटी.

**मतङ्ग उवाच —**

**[5]अयोनिरग्र्ययोनिर्वा यः स्यात्स कुशली भवेत्।**
**कुशलं तु कुतस्तस्य यस्येयं जननी पितः।।**

अन्त्ययोनिः चण्डालजातिः। अयोनिः तदन्यः कुत्सितयोनिः। तयोर्हीनकर्मतया कुशलित्वं नास्तीत्यर्थः। नीटी.

**[6]ब्राह्मण्यां वृषलाज्जातं पितर्वेदयतीह माम्।**
**अमानुषी गर्दभीयं तस्मात्तप्स्ये तपो महत्।।**
**[7]एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः।**
**ततो गत्वा महारण्यमतप्यत महत्तपः।।**

(१) भा. १३।२८।१५; भामु. १३।२७।१६ प्रथमचरणे (कथं मां वेत्सि चण्डालं) मेऽनशत् (नश्यते).

(२) भा. १३।२८।१६; भामु. १३।२७।१७ चण्डा (चाण्डा).

(३) भा. १३।२८।१७; भामु. १३।२७।१८ प्रत्युपा (प्रतिप्रा).

(४) भा. १३।२८।१८; भामु. १३।२७।१९.

(५) भा. १३।२८।१९; भामु. १३।२७।२० अयोनिरग्र्य (अन्त्ययोनिर) यः स्यात्स (कथं स).

(६) भा. १३।२८।२०; भामु. १३।२७।२१ तीह (तीव).

(७) भा. १३।२८।२१; भामु. १३।२७।२२ तप्यत म (तपत्सुम).

**[१]ततः संतापयामास विबुधांस्तपसाऽन्वितः।**
**मतङ्गः सुसुखं प्रेप्सुः स्थानं सुचरितादपि।।**

सुचरितात्तपसश्च हेतोः स्थानं ब्राह्मण्यं सुखेन प्रेप्सुः विबुधांस्तापयामासेति संबन्धः। नीटी.

**[२]तं तथा तपसा युक्तमुवाच हरिवाहनः।**
**मतङ्ग तप्यसे किं त्वं भोगानुत्सृज्य मानुषान्।।**

हरिवाहनः इन्द्रः। नीटी.

**[३]वरं ददानि ते हन्त वृणीष्व त्वं यदिच्छसि।**
**यच्चाप्यवाप्यमन्यत्ते सर्वं प्रब्रूहि मा चिरम्।।**

**मतङ्ग उवाच –**

**[४]ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः।**
**गच्छेयं तदवाप्येह वर एष वृतो मया।।**

**[५]एतच्छ्रुत्वा तु वचनं तमुवाच पुरंदरः।**
**मतङ्ग दुर्लभमिदं विप्रत्वं प्रार्थ्यते त्वया।**
**ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः।।**

**[६]विनशिष्यसि दुर्बुद्धे तदुपारम मा चिरम्।**
**श्रेष्ठं यत्सर्वभूतेषु तपो यन्नातिवर्तते।**
**तदग्र्यं प्रार्थयानस्त्वमचिराद्विनशिष्यसि।।**

श्रेष्ठतारूपमर्थं ब्राह्मण्यं तपः नातिवर्तते न वशीकर्तुमर्हति। नीटी.

**[७]देवतासुरमर्त्येषु यत्पवित्रं परं स्मृतम्।**
**चण्डालयोनौ जातेन न तत्प्राप्यं कथंचन।।**

**भीष्म उवाच –**

**[८]एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः।**
**अतिष्ठदेकपादेन वर्षाणां शतमच्युत।।**

**[१]तमुवाच ततः शक्रः पुनरेव महायशाः।**
**ब्राह्मण्यं दुर्लभं तात प्रार्थयानो न लप्स्यसे।**
**मतङ्ग परमं स्थानं प्रार्थयन्नतिदुर्लभम्।।**

**[२]मा कृथाः साहसं पुत्र नैष धर्मपथस्तव।**
**न हि शक्यं त्वया प्राप्तुं ब्राह्मण्यमिह दुर्मते।**
**अप्राप्यं प्रार्थयानो हि नचिराद्विनशिष्यसि।।**

**[३]मतङ्ग परमं स्थानं वार्यमाणो मयाऽसकृत्।**
**चिकीर्षस्येव तपसा सर्वथा न भविष्यसि।।**

**[४]तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति।**
**स जायते पुल्कसो वा चण्डालो वा कदाचन।।**

**[५]पुंश्चलः पापयोनिर्वा यः कश्चिदिह लक्ष्यते।**
**स तस्यामेव सुचिरं मतङ्ग परिवर्तते।।**

**[६]ततो दशगुणे काले लभते शूद्रतामपि।**
**शूद्रयोनावपि ततो बहुशः परिवर्तते।।**

**[७]ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि।**
**वैश्यतायां चिरं कालं तत्रैव परिवर्तते।।**

**[८]ततः षष्टिगुणे काले राजन्यो नाम जायते।**
**राजन्यत्वे चिरं कालं तत्रैव परिवर्तते।।**

**[९]ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम्।**
**ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्तते।।**

**[१०]ततस्तु द्विशते काले लभते काण्डपृष्ठताम्।**
**काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते।।**

---

(१) **भा.** १३।२८।२२; **भामु.** १३।२७।२३ संताप (स ताप) सुसुखं प्रे (सुखसंप्रे).

(२) **भा.** १३।२८।२३; **भामु.** १३।२७।२४ तप्य (तप्स्य).

(३) **भा.** १३।२८।२४; **भामु.** १३।२७।२५ ददानि (ददामि) प्यमन्यत्ते सर्वं प्र (प्यं हृदि ते सर्वं तद्).

(४) **भा.** १३।२८।२५; **भामु.** १३।२७।२६.

(५) **भा.** १३।२८।२६ द्वितीयपङ्क्तिर्नास्ति; **भामु.** १३।२७। २७-२८ श्लोकादौ 'भीष्म उवाच' इत्युक्तम्.

(६) **भा.** १३।२८।२७ प्रथमपङ्क्तिर्नास्ति; **भामु.** १३।२७। २८-२९ श्रेष्ठं यत्स (श्रेष्ठतां स) पो यन्ना (पोऽर्थं ना).

(७) **भा.** १३।२८।२८; **भामु.** १३।२७।३०.

(८) **भा.** १३।२९।१; **भामु.** १३।२८।१ मच्युत (मच्युतः).

(१) **भा.** १३।२९।२ द्वितीयपङ्क्तिर्नास्ति; **भामु.** १३।२८। २-३ षष्ठ चरणे (प्रार्थयन्विनशिष्यसि).

(२) **भा.** १३।२९।३ द्वितीयपङ्क्तिर्नास्ति; **भामु.** १३।२८। ३-४.

(३) **भा.** १३।२९।४; **भामु.** १३।२८।५ णो मयाऽसकृत् (णोऽसकृन्मया).

(४) **भा.** १३।२९।५; **भामु.** १३।२८।६ वा कदाचन (वाऽप्यसंशयः).

(५) **भा.** १३।२९।६; **भामु.** १३।२८।७ पुंश्चलः (पुल्कसः).

(६) **भा.** १३।२९।७; **भामु.** १३।२८।८ गुणे (शते).

(७) **भा.** १३।२९।८; **भामु.** १३।२८।९.

(८) **भा.** १३।२९।९; **भामु.** १३।२८।१० पू.

(९) **भा.** १३।२९।१०; **भामु.** १३।२८।१०-११ तत्रैव (ततस्तु).

(१०) **भा.** १३।२९।११; **भामु.** १३।२८।११-१२ पृष्ठश्चि (पृष्ठिश्चि).

काण्डपृष्ठतां शस्त्रजीवित्वम्। 'शस्त्राजीवी काण्डपृष्ठः' (२।७।६७) इत्यमरः। 'वेश्यापतिः काण्डपृष्ठः सद्भिरेव निगद्यते' इति यमः। नीटी.

[1]**ततस्तु त्रिशते काले लभते द्विजतामपि।**
**तां च प्राप्य चिरं कालं तत्रैव परिवर्तते।।**

जपतां गायत्रीमात्रसेविनाम्। कुले जन्मेति शेषः। नीटी.

[2]**ततश्चतुःशते काले श्रोत्रियो नाम जायते।**
**श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्तते।।**

श्रोत्रियः अधीतवेदः। नीटी.

[3]**तदेव क्रोधहर्षौ च कामद्वेषौ च पुत्रक।**
**अतिमानातिवादौ तमाविशन्ति द्विजाधमम्।।**

तत् तदा श्रोत्रियत्वलाभेऽपि। नीटी.

[4]**तांश्चेज्जयति शत्रून्स तदा प्राप्नोति सद्गतिम्।**
**अथ ते वै जयन्त्येनं तालाग्रादिव पात्यते।।**

ते शोकादयः। एनं श्रोत्रियम्। पात्यते अत्यन्तं नीचयोनिं प्राप्नोतीत्यर्थः। नीटी.

[5]**मतङ्ग संप्रधार्यैतद्यदहं त्वामचूचुदम्।**
**वृणीष्व काममन्यं त्वं ब्राह्मण्यं हि सुदुर्लभम्।।**

**भीष्म उवाच –**

[6]**एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः।**
**सहस्रमेकपादेन ततो ध्याने व्यतिष्ठत।।**

सहस्रं वत्सरान्। नीटी.

**तं सहस्रावरे काले शक्रो द्रष्टुमुपागमत्।**
**तदेव च पुनर्वाक्यमुवाच बलवृत्रहा।।**

**मतङ्ग उवाच –**

**इदं वर्षसहस्रं वै ब्रह्मचारी समाहितः।**
**अतिष्ठमेकपादेन ब्राह्मण्यं नाऽऽप्नुयां कथम्।।**

**शक्र उवाच –**

**चण्डालयोनौ जातेन नावाप्यं वै कथंचन।**
**अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः।।**

**भीष्म उवाच –**

[1]**एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः।**
**अतिष्ठत गयां गत्वा सोऽङ्गुष्ठेन शतं समाः।।**

[2]**सुदुष्करं वहन्योगं कृशो धमनिसंततः।**
**त्वगस्थिभूतो धर्मात्मा स पपातेति नः श्रुतम्।।**

[3]**तं पतन्तमभिद्रुत्य परिजग्राह वासवः।**
**वराणामीश्वरो दाता सर्वभूतहिते रतः।।**

अभिद्रुत्य गत्वा। नीटी.

**शक्र उवाच –**

[4]**मतङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते।**
**ब्राह्मण्यं दुर्लभतरं संवृतं परिपन्थिभिः।।**

दुर्लभतरमपि परिपन्थिभिः कामाद्यैश्चोरैः संवृतम्, अतो दुःसंरक्ष्यमपीत्यर्थः। नीटी.

[5]**मतङ्ग ब्राह्मणत्वं ते संवृतं परिपन्थिभिः।**
**पूजयन्सुखमाप्नोति दुःखमाप्नोत्यपूजयन्।।**

पूजयन् ब्राह्मणमिति शेषः। नीटी.

[6]**ब्राह्मणे सर्वभूतानां योगक्षेमः समाहितः।**
**ब्राह्मणेभ्योऽनुतृप्यन्ति पितरो देवतास्तथा।।**

ब्राह्मणेभ्यः तद्द्वारा देवादयस्तृप्यन्तीत्यर्थः। नीटी.

[7]**ब्राह्मणः सर्वभूतानां मतङ्ग पर उच्यते।**
**ब्राह्मणः कुरुते तद्धि यथा यद्यच्च वाञ्छति।।**

यद्यद्वाञ्छति तत्तत्कुरुते। नीटी.

---

(१) **भा.** १३।२९।१२; **भामु.** १३।२८।१२-१३ द्विजता (जपता) तां च (तं च).

(२) **भा.** १३।२९।१३; **भामु.** १३।२८।१३.

(३) **भा.** १३।२९।१४; **भामु.** १३।२८।१४ तदेव क्रोध (तदेवं शोक) च काम (तु काम) तमाविशन्ति (च प्रविशेते).

(४) **भा.** १३।२९।१५; **भामु.** १३।२८।१५.

(५) **भा.** ३।२९।१६; **भामु.** १३।२८।१६ तद्यद (वं यद).

(६) **भामु.** १३।२९।१-४.

(१) **भा.** १३।३०।१; **भामु.** १३।२९।५ अतिष्ठत ग (अध्यतिष्ठद्ग).

(२) **भा.** १३।३०।२; **भामु.** १३।२९।६ दुष्करं (दुर्वहं).

(३) **भा.** १३।३०।३; **भामु.** १३।२९।७.

(४) **भामु.** १३।२९।८.

(५) **भा.** १३।३०।४; **भामु.** १३।२९।९ उत्त.

(६) **भा.** १३।३०।५; **भामु.** १३।२९।९-१० ब्राह्मणे (ब्राह्मणः) मः समाहितः (मसमर्पिता) तृप्यन्ति (तृप्यन्ते).

(७) **भा.** १३।३०।६; **भामु.** १३।२९।१०-११.

**[1]बह्वीस्तु संसरन्योनीर्जायमानः पुनः पुनः।**
**पर्याये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति।।**
**[2]तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः।**
**अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः।।**

**मतङ्ग उवाच –**

**[3]किं मां तुदसि दुःखार्तं मृतं मारयसे च माम्।**
**तं तु शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूषते।।**

लब्ध्वाऽपि न बुभूषसे न प्राप्नोषि। मादृशेऽपि तपस्विनि कारुण्याभावात्तन्नाशयसीति भावः। नीटी.

**[4]ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैः शतक्रतो।**
**सुदुर्लभं तदावाप्य नानुतिष्ठन्ति मानवाः।।**

दुर्लभं ब्राह्मण्यं प्राप्यापि नानुतिष्ठन्ति तदुचितान् 'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्।।' (भगी. १८।४२) इति भगवदुक्तान् न सेवन्ते। अतः प्राप्तमपि दुःसंरक्ष्यमिति भावः। नीटी.

**[5]यः पापेभ्यः पापतमस्तेषामधम एव सः।**
**ब्राह्मण्यं योऽवजानीते धनं लब्ध्वेव दुर्लभम्।।**

न जानीते, रक्षितुमिति शेषः। नीटी.

**[6]दुष्प्रापं खलु विप्रत्वं प्राप्तं दुरनुपालनम्।**
**दुरवापमवाप्यैतन्नानुतिष्ठन्ति मानवाः।।**
**[7]एकारामो ह्यहं शक्र निर्द्वन्द्वो निष्परिग्रहः।**
**अहिंसादमदानस्थः कथं नार्हामि विप्रताम्।।**
**[8]दैवं तु कथमेतद्वै यदहं मातृदोषतः।**
**एतामवस्थां संप्राप्तो धर्मज्ञः सन्पुरंदर।।**

(१) भा. १३।३०।७; भामु. १३।२९।११-१२ संसर (संविश).
(२) भामु. १३।२९।१२-१३.
(३) भा. १३।३०।८; भामु. १३।२९।१३-१४ तं (त्वां) भूषते (भूषसे).
(४) भा. १३।३०।९; भामु. १३।२९।१४-१५ तदावा (सदाऽवा).
(५) भा. १३।३०।१०; भामु. १३।२९।१५-१६ योऽवजा (यो न जा).
(६) भा. १३।३०।११; भामु. १३।२९।१६-१७ दुरवा (दुरावा).
(७) भा. १३।३०।१२; भामु. १३।२९।१७-१८ दानस्थः (मास्थाय).
(८) भामु. १३।२९।१८-२२.

दैवं प्राक्कर्म। यत् यतः। एताम् अब्राह्मणत्वरूपाम्। नीटी.

**नूनं दैवं न शक्यं हि पौरुषेणातिवर्तितुम्।**
**यदर्थं यत्नवानेव न लभे विप्रतां विभो।।**
**एवंगते तु धर्मज्ञ दातुमर्हसि मे वरम्।**
**यदि तेऽहमनुग्राह्यः किंचिद्वा सुकृतं मम।।**

**वैशम्पायन उवाच –**

**वृणीष्वेति तदा प्राह ततस्तं बलवृत्रहा।**
**चोदितस्तु महेन्द्रेण मतङ्गः प्राब्रवीदिदम्।।**
**[1]यथाकामविहारी स्यां कामरूपी विहंगमः।**
**ब्रह्मक्षत्राविरोधेन पूजां च प्राप्नुयामहम्।**
**यथा ममाक्षया कीर्तिर्भवेच्चापि पुरंदर।।**
**[2]कर्तुमर्हसि तद्देव शिरसा त्वां प्रसादये।।**

**इन्द्र उवाच –**

**[3]छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि।**
**कीर्तिश्च तेऽतुला वत्स त्रिषु लोकेषु यास्यति।।**

**भीष्म उवाच –**

**[4]एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत।**
**प्राणांस्त्यक्त्वा मतङ्गोऽपि प्राप तत्स्थानमुत्तमम्।।**
**[5]एवमेतत्परं स्थानं ब्राह्मण्यं नाम भारत।**
**तच्च दुष्प्रापमिह वै महेन्द्रवचनं यथा।।**

एतत्परम् एतस्मात् देवताभावात् परं श्रेष्ठम्। तपसा देवभावोऽपि लब्धुं शक्यः, न विप्रता इत्येतत्कथयामास मतङ्गकथया मुनिरिति। नीटी.

**युधिष्ठिर उवाच –**

**[6]किं राज्ञः सर्वकृत्यानां गरीयः स्यात्पितामह।**
**किं कुर्वन्कर्म नृपतिरुभौ लोकौ समश्नुते।।**

(१) भा. १३।३०।१३; भामु. १३।२९।२२-२३ यथाका (यथा का).
(२) भामु. १३।२९।२४.
(३) भा. १३।३०।१४ उत्तरार्धं नास्ति; भामु. १३।२९। २४-२५ इन्द्र उवाच (शक्र उवाच).
(४) भा. १३।३०।१५; भामु. १३।२९।२५-२६ (भीष्म उवाच०) प्राप तत्स्थान (संप्राप्तः स्थान).
(५) भा. १३।३०।१६; भामु. १३।२९।२६.
(६) भा. १३।३३।१; भामु. १३।३३।१ किं कुर्वन् (कुर्वन् किं).

**भीष्म उवाच –**

**[1]एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत।**
**ब्राह्मणानामनुष्ठानमत्यन्तं सुखमिच्छता।।**
**कर्तव्यं पार्थिवेन्द्रेण तथैव भरतर्षभ।**
**श्रोत्रियान्ब्राह्मणान्वृद्धान्नित्यमेवाभिपूजयेत्।।**

अनुष्ठानम् आराधनम्। नीटी.

**[2]पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान्।**
**सान्त्वेन भोगदानेन नमस्कारैस्तथाऽर्चयेत्।।**

**[3]एतत्कृत्यतमं राज्ञो नित्यमेवेति लक्षयेत्।**
**यथाऽऽत्मानं यथा पुत्रांस्तथैतान्परिपालयेत्।।**

**[4]ये चाप्येषां पूज्यतमास्तान्दृढं प्रतिपूजयेत्।**
**तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते।।**

एषां ब्राह्मणानां मध्ये। नीटी.

**[5]ते पूज्यास्ते नमस्कार्यास्ते रक्ष्याः पितरो यथा।**
**तेष्वेव यात्रा लोकस्य भूतानामिव वासवे।।**

वासवे पर्जन्ये। नीटी.

**[6]अभिचारैरुपायैश्च दहेयुरपि तेजसा।**
**निःशेषं कुपिताः कुर्युरुग्राः सत्यपराक्रमाः।।**

अभिचारैः श्येनादिभिः। उपायैः कौलिकशास्त्रप्रसिद्धैः। चेतसा संकल्पमात्रेण। नीटी.

**[7]नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः।**
**कुपिताः समुदीक्षन्ते दावेष्वग्निशिखा इव।।**

अन्तं नाशकरम्। दिशश्चैषां न अपावृताः सर्वत्राकुण्ठिता गतिरेतेषामित्यर्थः। अग्निशिखा इव दहन्तः। नीटी.

(१) भा. १३।३३।२ तृतीयपङ्क्तिर्नास्ति; भामु. १३।३३।२-३.
(२) भा. १३।३३।३; भामु. १३।३३।४.
(३) भा. १३।३३।४; भामु. १३।३३।५ वेति ल (वोपल) परि (प्रति).
(४) भा. १३।३३।५; भामु. १३।३३।६ प्रतिपू (प्रति पू).
(५) भा. १३।३३।६; भामु. १३।३३।७ र्यास्ते रक्ष्याः (र्या मान्यास्ते) लोकस्य (लोकानां).
(६) भा. १३।३३।७; भामु. १३।३३।८ तेजसा (चेतसा).
(७) भा. १३।३३।८; भामु. १३।३३।९.

**[1]विद्यन्तेषां साहसिका गुणास्तेषामतीव हि।**
**कूपा इव तृणच्छन्ना विशुद्धा द्यौरिवापरे।।**

एषाम् एभ्यः साहसिकाः अकार्यकारिणोऽपि बिभ्यति, किमुत विवेकिनः? छन्नाः केचिज्जडभरतादयः। अपरे वसिष्ठादयः। नीटी.

**[2]प्रसह्यकारिणः केचित्कार्पासमृदवोऽपरे।**
**सन्ति चैषामतिशठास्तथाऽन्येऽतितपस्विनः।।**

प्रसह्यकारिणः दुर्वासःप्रभृतयः। मृदवः गौतमादयः, ये पादचारेऽपि हिंसाभयात्पादयोरेवाक्षि चक्रुरित्यक्षपादत्वं गताः। अतिशठा अगस्त्यादयः वातापिं जरयितुं मांसे लोलुपतां दर्शयन्तः। नीटी.

**[3]कृषिगोरक्ष्यमप्यन्ये भैक्षमन्येऽप्यनुष्ठिताः।**
**चोराश्चान्येऽनृताश्चान्ये तथाऽन्ये नटनर्तकाः।।**

कृषिं कुर्वन्तः उद्दालकगुर्वादयः। गोरक्ष्यं गुरोरेव उपमन्युप्रभृतयः। भैक्ष्यं दत्तात्रेयादयः। चौराः वाल्मीकिविश्वामित्रादयः। अनृताः कलहप्रिया नारदादयः। नटनर्तकाः भरतादयः। नीटी.

**[4]सर्वकर्मसु दृश्यन्ते प्रशान्तेष्वितरेषु च।**
**विविधाचारयुक्ताश्च ब्राह्मणा भरतर्षभ।।**

सर्वकर्मसहाः समुद्रशोषणादावपि समर्थाः।
नीटी.

**[5]नानाकर्मसु युक्तानां बहुकर्मोपजीविनाम्।**
**धर्मज्ञानां सतां तेषां नित्यमेवानुकीर्तयेत्।।**

स्वरूपप्रच्छादनार्थं लोकरक्षार्थं वा निषिद्धेनापि कर्मणा वर्तमानाः, वस्तुतस्तु धर्मज्ञाः, तेषां तान् नित्यमेवानुकीर्तयेत्। नीटी.

(१) भा. १३।३३।९; भामु. १३।३३।१० विद्यन्तेषां (बिभ्यत्येषां).
(२) भा. १३।३३।१०; भामु. १३।३३।११ तथाऽन्येऽतित (तथैवान्ये त).
(३) भा. १३।३३।११; भामु. १३।३३।१२ प्यन्ये भैक्ष (प्येके भैक्ष्य) चोरा (चौरा).
(४) भा. १३।३३।१२; भामु. १३।३३।१३ पूर्वार्धे (सर्वकर्मसहाश्चान्ये पार्थिवेष्वितरेषु च।) चार (कार).
(५) भा. १३।३३।१३; भामु. १३।३३।१४ युक्ता (रक्ता).

**[1]पितॄणां देवतानां च मनुष्योरगरक्षसाम्।**
**पुरोहिता महाभागा ब्राह्मणा वै नराधिप।।**
एते पूज्या इति शेषः, यतो महाभागाः। नीटी.

**[2]नैते देवैर्न पितृभिर्न गन्धर्वैर्न राक्षसैः।**
**नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः।।**
**[3]अदेवं दैवतं कुर्युर्दैवतं चाप्यदैवतम्।**
**यमिच्छेयुः स राजा स्याद्यं द्विष्युः स पराभवेत्।।**
**[4]परिवादं च ये कुर्युर्ब्राह्मणानामचेतसः।**
**सत्यं ब्रवीमि ते राजन् विनश्येयुर्न संशयः।।**
**निन्दाप्रशंसाकुशलाः कीर्त्यकीर्तिपरावराः।**
**परिकुप्यन्ति ते राजन्सततं द्विषतां द्विजाः।।**
परायणाः हेतवः। नीटी.
**[5]ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते।**
**ब्राह्मणैर्यः पराक्रुष्टः पराभूयात्क्षणाद्धि सः।।**
**[6]शका यवनकाम्बोजास्तास्ताः क्षत्रियजातयः।**
**वृषलत्वं परिगता ब्राह्मणानामदर्शनात्।।**
अदर्शनात् अननुग्रहात्। नीटी.
**[7]द्रमिळाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः।**
**कौलाः सर्पा माहिषकास्तास्ताः क्षत्रियजातयः।।**
**[8]वृषलत्वं परिगता ब्राह्मणानामदर्शनात्।**
**श्रेयान्पराजयस्तेभ्यो न जयो जयतां वर।।**
**यस्तु सर्वमिदं हन्याद्ब्राह्मणं च न तत्समम्।**
**ब्रह्मवध्या महान्दोष इत्याहुः परमर्षयः।।**

(१) **भा.** १३।३३।१४; **भामु.** १३।३३।१५ पुरोहिता (पुराऽप्येते) नरा (जना).
(२) **भा.** १३।३३।१५; **भामु.** १३।३३।१६.
(३) **भा.** १३।३३।१६; **भामु.** १३।३३।१७ द्यं द्विष्युः (द्यो नेष्टः).
(४) **भा.** १३।३३।१७ द्वितीयपङ्क्तिर्नास्ति; **भामु.** १३।३३। १८-१९ वराः (यणाः).
(५) **भा.** १३।३३।१८; **भामु.** १३।३३।२० क्रुष्टः (कृष्टः).
(६) **भा.** १३।३३।१९; **भामु.** १३।३३।२१.
(७) **भा.** १३।३३।२०; **भामु.** १३।३३।२२ द्रमिळा (द्राविडा) कौलाः सर्पा मा (कौलिसर्पा म).
(८) **भा.** १३।३३।२१-२२; **भामु.** १३।३३।२३-२४.

**[1]परिवादो द्विजातीनां न श्रोतव्यः कथंचन।**
**आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा।।**
**[2]न स जातो जनिष्यो वा पृथिव्यामिह कश्चन।**
**यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत्।।**
**[3]दुर्ग्रहो मुष्टिना वायुर्दुःस्पर्शः पाणिना शशी।**
**दुर्धरा पृथिवी मूर्ध्ना दुर्जया ब्राह्मणा भुवि।।**

क्षत्रियपूज्यत्वदानपात्रत्वासुरसेव्यत्व-
पर्यवसानकैर्बहुभिर्गुणैर्विस्तरेण
ब्राह्मणप्रशंसा

**भीष्म उवाच –**
**[4]ब्राह्मणानेव सततं भृशं संप्रतिपूजयेत्।**
**एते हि सोमराजान ईश्वराः सुखदुःखयोः।।**
ब्राह्मणानित्याद्यध्यायत्रयेण दानपात्रत्वं ब्राह्मणानामुच्यते। सोमो राजा येषां ते सोमराजानः। नीटी.
**[5]एते भोगैरलंकारैरन्यैश्चैव किमिच्छकैः।**
**सदा पूज्या नमस्कार्या रक्ष्याश्च पितृवन्नृपैः।**
**अतो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात्।।**
किमिच्छसीति प्रश्नपूर्वकं यत्तदिष्टं दीयते तत्किमिच्छकम्। नीटी.
**[6]जायतां ब्रह्मवर्चस्वी राष्ट्रे वै ब्राह्मणः शुचिः।**
**महारथश्च राजन्य एष्टव्यः शत्रुतापनः।।**
**ब्राह्मणं जातिसंपन्नं धर्मज्ञं संशितव्रतम्।**
**वासयेत गृहे राजन्न तस्मात्परमस्ति वै।।**
**ब्राह्मणेभ्यो हविर्दत्तं प्रतिगृह्णन्ति देवताः।**
**पितरः सर्वभूतानां नैतेभ्यो विद्यते परम्।।**

(१) **भा.** १३।३३।२३; **भामु.** १३।३३।२५ त वा (च्च वा).
(२) **भा.** १३।३३।२४; **भामु.** १३।३३।२६ प्रथमचरणे (न स जातोऽजनिष्यद्वा).
(३) **भा.** १३।३३।२५; **भामु.** १३।३३।२७ दुर्ग्रहो (दुर्ग्राह्यो) मूर्ध्ना (राजन्).
(४) **भा.** १३।३४।१; **भामु.** १३।३४।१ संप्रति (संपरि).
(५) **भा.** १३।३४।२; **भामु.** १३।३४।२-३ स्कार्या (स्कारै) अतो (ततो).
(६) **भा.** १३।३४।३-५; **भामु.** १३।३४।३-६.

[1]**आदित्यश्चन्द्रमा वायुर्भूमिरापोऽम्बरं दिशः।**
**सर्वे ब्राह्मणमाविश्य सदाऽन्नमुपभुञ्जते।।**
[2]**न तस्याश्नन्ति पितरो यस्य विप्रा न भुञ्जते।**
**देवाश्चाप्यस्य नाश्नन्ति पापस्य ब्राह्मणद्विषः।।**
**ब्राह्मणेषु तु तुष्टेषु प्रीयन्ते पितरः सदा।**
**तथैव देवता राजन्नात्र कार्या विचारणा।।**
[3]**तथैव तेऽपि प्रीयन्ते येषां भवति तद्धविः।**
**नं च प्रेत्य विनश्यन्ति गच्छन्ति परमां गतिम्।।**
तेऽपि दातारोऽपि। तत् प्रदेयं द्रव्यम्।
नीटी.

[4]**येन येनैव हविषा ब्राह्मणांस्तर्पयेन्नरः।**
**तेन तेनैव प्रीयन्ते पितरो देवतास्तथा।।**
**ब्राह्मणादेव तद्भूतं प्रभवन्ति यतः प्रजाः।**
**यतश्चायं प्रभवति प्रेत्य यत्र च गच्छति।।**
तत् यज्ञादिकं भूतम् उत्पन्नम्, 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः।।' (मस्मृ. ३।७६) इति स्मृतेः। नीटी.

[5]**वेदैष मार्गं स्वर्गस्य तथैव नरकस्य च।**
**आगतानागते चोभे ब्राह्मणो द्विपदां वरः।**
**ब्राह्मणो भरतश्रेष्ठ स्वधर्मं वेद मेधया।।**
[6]**ये चैनमनुवर्तन्ते ते न यान्ति पराभवम्।**
**न ते प्रेत्य विनश्यन्ति गच्छन्ति न पराभवम्।।**
[7]**ये ब्राह्मणमुखात्प्राप्तं प्रतिगृह्णन्ति वै वचः।**
**कृतात्मानो महात्मानस्ते न यान्ति पराभवम्।।**
भूतात्मानः भूतः प्राप्तः वशीकृतः आत्मा चित्तं यैस्ते।
नीटी.

(१) **भा.** १३।३४।६; **भामु.** १३।३४।६-७ युर्भूमिरापोऽम्ब (युरापो भूरम्ब).

(२) **भा.** १३।३४।७-८; **भामु.** १३।३४।७-९.

(३) **भा.** १३।३४।९; **भामु.** १३।३४।९-१० परमां (च परां).

(४) **भा.** १३।३४।१०-११; **भामु.** १३।३४।१०-१२.

(५) **भा.** १३।३४।१२; **भामु.** १३।३४।१२-१३ वेद मेधया (चैव वेद यः).

(६) **भा.** १३।३४।१३; **भामु.** १३।३४।१४.

(७) **भा.** १३।३४।१४; **भामु.** १३।३४।१५ ये ब्रा (यद्ब्रा) कृता (भूता).

[1]**क्षत्रियाणां प्रतपतां तेजसा च बलेन च।**
**ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च बलानि च।।**
[2]**भृगवोऽजयंस्तालजङ्घान्नीपानङ्गिरसोऽजयन्।**
**भरद्वाजो वैतहव्यानैलांश्च भरतर्षभ।।**
[3]**चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः।**
**प्रक्षिप्याथ च कुम्भान्वै पारगामिनमारभेत्।।**
कुं पृथिवीं ब्राह्मणाय प्रक्षिप्य दत्त्वा पारगामिनं परलोकहितं कर्म आरभेत् आचरेत् भान् दीप्तिं कुर्वन्, उभयलोके इति शेषः। नीटी.

[4]**यत्किंचित्कथ्यते लोके श्रूयते पश्यतेऽपि वा।।**
**सर्वं तद्ब्राह्मणेष्वेव गूढोऽग्निरिव दारुषु।।**
यत्किंचित् अतीतानागतं व्यवहितं स्थूलसूक्ष्मं ब्राह्मणे हार्दाकाशाख्यब्रह्मविदि काष्ठाग्निवद्ध्याननिर्मथनादभिव्यज्यत इत्यर्थः। नीटी.

[5]**अत्राप्युदाहरन्तीममितिहासं पुरातनम्।**
**संवादं वासुदेवस्य पृथ्व्याश्च भरतर्षभ।।**

**वासुदेव उवाच –**

[6]**मातरं सर्वभूतानां पृच्छे त्वा संशयं शुभे।**
**केनस्वित्कर्मणा पापं व्यपोहति नरो गृही।।**

**पृथिव्युवाच –**

[7]**ब्राह्मणानेव सेवेत पवित्रं ह्येतदुत्तमम्।**
**ब्राह्मणान्सेवमानस्य रजः सर्वं प्रणश्यति।**
**अतो भूतिरतः कीर्तिरतो बुद्धिः प्रजायते।।**
रजः ध्यानेऽन्तरायभूतो विक्षेपः, भूतिः ऐश्वर्यम्, बुद्धिः आत्मज्ञानम्। सार्धश्लोकः। नीटी.

[8]**महारथश्च राजन्य एष्टव्यः शत्रुतापनः।**
**इति मां नारदः प्राह सततं सर्वभूतये।।**

(१) **भा.** १३।३४।१५; **भामु.** १३।३४।१६.

(२) **भा.** १३।३४।१६; **भामु.** १३।३४।१७ पूर्वार्धे (भृगवस्तालजङ्घांश्च नीपानाङ्गिरसोऽजयन्।).

(३) **भा.** १३।३४।१७; **भामु.** १३।३४।१८.

(४) **भा.** १३।३४।१८; **भामु.** १३।३४।१९ पश्य (पठ्य).

(५) **भा.** १३।३४।१९; **भामु.** १३।३४।२०.

(६) **भा.** १३।३४।२०; **भामु.** १३।३४।२१ त्वा (त्वां).

(७) **भा.** १३।३४।२१-२२; **भामु.** १३।३४।२२-२३.

(८) **भामु.** १३।३४।२३.

**[1]ब्राह्मणं जातिसंपन्नं धर्मज्ञं संशितं शुचिम्।**
**अपरेषां परेषां च परेभ्यश्चैव ये परे।।**

अपरे 'ब्राह्मणं सर्वभूतये इच्छेत्' इत्याहुरिति विपरिणामेनानुषङ्गः। नीटी.

**[2]ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते।**
**अथ यो ब्राह्मणाक्रुष्टः पराभवति सोऽचिरात्।।**

क्रुष्टः क्रोशति। कर्तरि क्तः। नीटी.

**[3]यथा महार्णवे क्षिप्त आमलोष्टो विनश्यति।**
**तथा दुश्चरितं कर्म पराभावाय कल्पते।।**

सीतानेष्टुः लाङ्गलपद्धतिगतः पांसुपिण्डः। 'लोष्ठो लेष्टुः' इति कोशकारा अन्तस्थादिमिमं शब्दं पठन्ति। दुश्चरितं ब्राह्मणद्रोहः। नीटी.

**[4]पश्य चन्द्रे कृतं लक्ष्म समुद्रे लवणोदकम्।**
**तथा भगसहस्रेण महेन्द्रं परिचिह्नितम्।।**

**[5]तेषामेव प्रभावेन सहस्रनयनो ह्यसौ।**
**शतक्रतुः समभवत्पश्य माधव यादृशम्।।**

**[6]इच्छन्भूतिं च कीर्तिं च लोकांश्च मधुसूदन।**
**ब्राह्मणानुमते तिष्ठेत्पुरुषः शुचिरात्मवान्।।**

विधेयमाह – ब्राह्मणेत्यर्धेन। नीटी.

**[7]इत्येतद्वचनं श्रुत्वा मेदिन्या मधुसूदनः।**
**साधु साध्वित्यथेत्युक्त्वा मेदिनीं प्रत्यपूजयत्।।**

**[8]एतां श्रुत्वोपमां पार्थ प्रयतो ब्राह्मणर्षभान्।**
**सततं पूजयेथास्त्वं ततः श्रेयोऽभिपत्स्यसे।।**

(१) भा. १३।३४।२२ उत्त.; भामु. १३।३४।२४ परे (ऽपरे).

(२) भा. १३।३४।२३; भामु. १३।३४।२५ पुरुषः स (स मनुष्यः) णाक्रुष्टः (णान्क्रुष्टः).

(३) भा. १३।३४।२४; भामु. १३।३४।२६ प्त आमलोष्टो वि (प्ता सीता नेष्टुर्वि) कर्म (सर्वं).

(४) भा. १३।३४।२५; भामु. १३।३४।२७ द्वितीयचरणे (समुद्रो लवणोदकः) चतुर्थचरणे (महेन्द्रः परिचिह्नितः).

(५) भा. १३।३४।२६; भामु. १३।३४।२८.

(६) भा. १३।३४।२७; भामु. १३।३४।२९ भूतिं च कीर्तिं (कीर्तिं च भूतिं).

(७) भा. १३।३४।२८; भामु. १३।३४।३० श्लोकादौ 'भीष्म उवाच' इति निर्देशः, त्यथेत्युक्त्वा (ति कौरव्य).

(८) भा. १३।३४।२९; भामु. १३।३४।३१.

**भीष्म उवाच –**

**[1]जन्मनैव महाभागो ब्राह्मणो नाम जायते।**
**नमस्यः सर्वभूतानामतिथिः प्रसृताग्रभुक्।।**

जन्मनैव संस्काराद्यभावेऽपि ब्राह्मणो नमस्य एव। प्रसृतं प्रश्रितं पक्वमन्नम्, तत्स्वाग्रे भोक्तुमर्हः प्रसृताग्रभुक्। नीटी.

**[2]सर्वान्नः सुहृदस्तात ब्राह्मणाः सुमनोमुखाः।**
**गीर्भिर्मङ्गलयुक्ताभिरनुध्यायन्ति पूजिताः।।'**

सर्वे अर्थाः धर्मादयो येभ्यस्ते। सुमनसां देवानां मुखमिव भूताः सुमनोमुखाः। नीटी.

**[3]सर्वान्नो द्विषतस्तात ब्राह्मणा जातमन्यवः।**
**गीर्भिर्दारुणयुक्ताभिरभिहन्युरपूजिताः।।**

नः अस्माकं द्विषतः शत्रून् तैरपूजिता ब्राह्मणा दारुणयुक्ताभिः 'तव शत्रवो नश्यन्तु' इत्यादिभिर्गीर्भिः अभिध्यासुः अभिध्यायन्तु। अभिहन्युरिति स्पष्टार्थः पाठः। नीटी.

**[4]अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः।**
**सृष्ट्वा द्विजातीन्धाता हि यथापूर्वं समादधत्।।**

समादधत् समाधिं नियमं कृतवान्। नीटी.

**[5]न वोऽन्यदिह कर्तव्यं किंचिदूर्ध्वं यथाविधि।**
**गुप्ता गोपायत ब्रह्म श्रेयो वस्तेन शोभनम्।।**

ब्रह्म ब्राह्मणः। वः शोभनं श्रेयः तेनैव। नीटी.

**[6]स्वमेव कुर्वतां कर्म श्रीर्वो ब्राह्मी भविष्यति।**
**प्रमाणं सर्वभूतानां प्रग्रहं च गमिष्यथ।।**

स्वं कर्म ब्राह्मणगोपनम्। प्रग्रहाः दमनक्षमा रज्जव इव। नीटी.

**[7]न शौद्रं कर्म कर्तव्यं ब्राह्मणेन विपश्चिता।**
**शौद्रं हि कुर्वतः कर्म धर्मः समुपरुध्यते।।**

(१) भा. १३।३५।१; भामु. १३।३५।१.

(२) भा. १३।३५।२; भामु. १३।३५।२ सर्वान्नः (सर्वार्थाः).

(३) भा. १३।३५।३; भामु. १३।३५।३ हन्यु (ध्यासु).

(४) भा. १३।३५।४; भामु. १३।३५।४ था (थाः) ब्रह्मगी (पुरागी).

(५) भा. १३।३५।५; भामु. १३।३५।५ वोऽन्य (चान्य) गुप्ता (गुप्तो) त ब्रह्म (ते ब्रह्म).

(६) भा.१३।३५।६; भामु. १३।३५।६ हं च गमि (ह्मश्च भवि).

(७) भा. १३।३५।७; भामु. १३।३५।७.

शौद्रं कर्म सेवा। कर्तव्यं कारयितव्यम्। कुर्वतः कारयतः। नीटी.

[1]श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी।
स्वाध्यायेनैव माहात्म्यं विमलं प्रतिपत्स्यथ।।

श्रीश्चेत्यादेः श्रियमित्यर्थः। नीटी.

[2]हुत्वा चाऽऽहवनीयस्थं महाभाग्ये प्रतिष्ठिताः।
अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्म्याऽनुकल्पिताः।।

आहवनीयस्थं देवतागणम्। प्रसूतीनां शिशुभ्योऽपि अग्रे भोज्यं येषां ते। ब्राह्म्या श्रिया विद्यया अनुकल्पिताः पात्रीभूताः। नीटी.

श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया।
दमस्वाधायनिरताः सर्वान्कामानवाप्स्यथ।।

[3]यच्चैव मानुषे लोके यच्च देवेषु किंचन।
सर्वं तत्तपसा साध्यं ज्ञानेन विनयेन च।।

[4]इत्येता ब्रह्मगीतास्ते समाख्याता मयाऽनघ।
विप्रानुकम्पार्थमिदं तेन प्रोक्तं हि धीमता।।

[5]भूयस्तेषां बलं मन्ये यथा राज्ञस्तपस्विनः।
दुरासदाश्च चण्डाश्च रभसाः क्षिप्रकारिणः।।

चण्डत्वादिदोषवन्तोऽपि पूज्या एवेत्यर्थः। नीटी.

[6]सन्त्येषां सिंहसत्त्वाश्च व्याघ्रसत्त्वास्तथाऽपरे।
वराहमृगसत्त्वाश्च गजसत्त्वास्तथाऽपरे।।

[7]कर्पासमृदवः केचित्तथाऽन्ये मकरस्पृशः।
विभाष्यघातिनः केचित्तथा चक्षुर्हणोऽपरे।।

[8]सन्ति चाऽऽशीविषनिभाः सन्ति मन्दास्तथाऽपरे।
विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर।।

(१) भा. १३।३५।८; भामु. १३।३५।८ येनैव (ये चैव) चतुर्थचरणे (विपुलं प्रतिपत्स्यते).

(२) भा. १३।३५।९-१०; भामु. १३।३५।९-१०.

(३) भा. १३।३५।११; भामु. १३।३५।११ तत्त (तु त) विनयेन (नियमेन).

(४) भा. १३।३५।१२; भामु. १३।३५।१२ इत्येता (इत्येवं) तृतीयचरणे (विप्राणामनुकम्पार्थं).

(५) भा. १३।३५।१३; भामु. १३।३५।१३.

(६) भा. १३।३५।१४; भामु. १३।३५।१४ गज (जल).

(७) भा. १३।३५।१५; भामु. १३।३५।१५ कर्पासमृदवः (सर्पस्पर्शसमाः).

(८) भा. १३।३५।१६; भामु. १३।३५।१६ निभाः (समाः).

[1]मेकला द्रमिडाः काशाः पौण्ड्राः कोल्लगिरास्तथा।
शौण्डिका दरदा दर्वाश्चौराः शबरबर्बराः।।

[2]किराता यवनाश्चैव तास्ताः क्षत्रियजातयः।
वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात्।।

अमर्षणात् ब्राह्मणकोपासहनात्। नीटी.

[3]ब्राह्मणानां परिभवादसुराः सलिलेशयाः।
ब्राह्मणानां प्रसादाच्च देवाः स्वर्गनिवासिनः।।

[4]अशक्यं स्रष्टुमाकाशमचाल्यो हिमवान्गिरिः।
अवार्या सेतुना गङ्गा दुर्जया ब्राह्मणा भुवि।।

[5]न ब्राह्मणविरोधेन शक्या शास्तुं वसुंधरा।
ब्राह्मणा हि महात्मानो देवानामपि देवताः।।

तान्पूजयस्व सततं दानेन परिचर्यया।
यदीच्छसि महीं भोक्तुमिमां सागरमेखलाम्।।

[6]प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ।
प्रतिग्रहं ये नेच्छेयुस्तेऽपि रक्ष्यास्त्वयाऽनघ।।

तेभ्यो रक्ष्यम्, स्वकुलमिति शेषः। नीटी.

**भीष्म उवाच –**

[7]अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
शक्रशम्बरसंवादं तन्निबोध युधिष्ठिर।।

अत्रापीत्यध्यायस्य तात्पर्यम् असुराणामपि श्रीर्ब्राह्मणप्रसादलभ्यैवेति। नीटी.

[8]शक्रो ह्यज्ञातरूपेण जटी भूत्वा रजोरुणः।
विरूपं रूपमास्थाय प्रश्नं पप्रच्छ शम्बरम्।।

(१) भा. १३।३५।१७; भामु. १३।३५।१७ द्रमिडाः काशाः (द्राविडा लाटाः) कोल्लगिरा (कान्वशिरा) दर्वा (दार्वा).

(२) भा. १३।३५।१८; भामु. १३।३५।१८ दर्शनात् (मर्षणात्).

(३) भा. १३।३५।१९; भामु. १३।३५।१९.

(४) भा. १३।३५।२०; भामु. १३।३५।२० वार्या (धार्या).

(५) भा. १३।३५।२१-२२; भामु. १३।३५।२१-२२.

(६) भा. १३।३५।२३; भामु. १३।३५।२३ चतुर्थचरणे (तेभ्यो रक्ष्यं त्वया नृप).

(७) भा. १३।३६।१; भामु. १३।३६।१.

(८) भा. १३।३६।२; भामु. १३।३६।२ जोरुणः (जोगुणः) रूप (रथ).

[1]केन शम्बर वृत्तेन स्वजात्यानधितिष्ठसि।
श्रेष्ठं त्वां केन मन्यन्ते तन्मे प्रब्रूहि पृच्छतः।।

शम्बर उवाच –

[2]नासूयामि सदा विप्रान्ब्रह्माणं च पितामहम्।
शास्त्राणि वदतो विप्रान्संमन्यामि यथासुखम्।।
[3]श्रुत्वा च नावजानामि नापराध्यामि कर्हिचित्।
अभ्यर्च्यानपृच्छामि पादौ गृह्णामि धीमताम्।।
[4]ते विश्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा।
प्रमत्तेष्वप्रमत्तोऽस्मि सदा सुप्तेषु जागृमि।।
[5]ते मा शास्त्रपथे युक्तं ब्रह्मण्यमनसूयकम्।
समासिञ्चन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः।।

मां मयि, मधु अमृततुल्यां विद्यां समासिञ्चन्ति क्षौद्रं मधुपटलं मक्षिका मध्विवेत्यावृत्त्या योज्यम्।　　नीटी.

[6]यच्च भाषन्ति ते तुष्टास्तत्तद्गृह्णामि मेधया।
समाधिमात्मनो नित्यमनुलोममचिन्तयन्।।

समाधिं ब्राह्मणेषु निष्ठाम्।　　नीटी.

[7]सोऽहं वागग्रसृष्टानां रसानामवलेहकः।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः।।

वागग्रे जिह्वाग्रे सृष्टं विद्यामृतं येषां ब्राह्मणानाम्। रसानाम् उक्तिसुधानाम्।　　नीटी.

[8]एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम्।
यद्ब्राह्मणमुखाच्छास्त्रमिह श्रुत्वा प्रवर्तते।।
[9]एतत्कारणमाज्ञाय दृष्ट्वा देवासुरं पुरा।
युद्धं पिता मे हृष्टात्मा विस्मितः प्रत्यपद्यत।।

(१) भा. १३।३६।३; भामु. १३।३६।३ श्लोकादौ 'शक्र उवाच' इति, तन्मे (तद्वै) पृच्छतः (तत्त्वतः).
(२) भा. १३।३६।४; भामु. १३।३६।४ सदा (यदा) द्वितीयचरणे (ब्राह्ममेव च मे मतम्).
(३) भा. १३।३६।५; भामु. १३।३६।५ ननु (भ्यनु).
(४) भा. १३।३६।६; भामु. १३।३६।६ संयच्छन्ति (संपृच्छन्ते).
(५) भा. १३।३६।७; भामु. १३।३६।७ मा (मां).
(६) भा. १३।३६।८; भामु. १३।३६।८ ते तु (संतु) स्तत्तद्गृ (स्तच्च गृ) यन् (यम्).
(७) भा. १३।३६।९; भामु. १३।३६।९ सृष्टानां (मृष्टानां).
(८) भा. १३।३६।१०; भामु. १३।३६।१०.
(९) भा. १३।३६।११; भामु. १३।३६।११ प्रत्यप (समप).

[1]दृष्ट्वा च ब्राह्मणानां तु महिमानं महात्मनाम्।
पर्यपृच्छत्कथमिमे सिद्धा इति निशाकरम्।।

सोम उवाच –

[2]ब्राह्मणास्तपसा सर्वे सिध्यन्ते वाग्बलाः सदा।
भुजवीर्या हि राजानो वागस्त्राश्च द्विजातयः।।
[3]प्रवसन्वाऽप्यधीयीत बह्वीर्दुर्वसतीर्वसन्।
निर्मन्युरपि निर्मानो यतिः स्यात्समदर्शनः।।

ब्राह्मीः वेदार्थाः दुर्वसतीः, गुरुकुलवासक्लेशात्। अपि अपि वा, सति वैराग्ये यतिः स्यात् नैष्ठिकब्रह्मचर्यात् पारिव्राज्यमेव कुर्यादित्यर्थः।　　नीटी.

[4]अपि चेज्जातिसंपन्नः सर्वान्वेदान्पितुर्गृहे।
श्लाघमान इवाधीयेद्ग्राम्य इत्येव तं विदुः।।

पितुर्गृहे वेदाध्ययनं निन्दति – अपि चेदिति।　　नीटी.

[5]भूमिरेतौ निगिरति सर्पो बिलशयानिव।
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम्।।

अप्रवासिनं वेदार्थं ग्रामान्तरे वासमकुर्वाणम्।　　नीटी.

[6]अतिमानः श्रियं हन्ति पुरुषस्याल्पमेधसः।
गर्भेण दुष्यते कन्या गृहवासेन च द्विजः।।
[7]इत्येतन्मे पिता श्रुत्वा सोमादद्भुतदर्शनात्।
ब्राह्मणान्पूजयामास तथैवाहं महाव्रतान्।।

भीष्म उवाच –

श्रुत्वैतद्वचनं शक्रो दानवेन्द्रमुखाच्च्युतम्।
द्विजान्संपूजयामास महेन्द्रत्वमवाप च।।

(१) भा. १३।३६।१२; भामु. १३।३६।१२ मिमे (ममी).
(२) भा. १३।३६।१३; भामु. १३।३६।१३ वीर्या हि (वीर्याश्च).
(३) भा. १३।३६।१४; भामु. १३।३६।१४ प्रवसन्वाऽप्य (प्रणवं चाप्य) बह्वी (ब्राह्मी) र्मानो यतिः (र्माणो यदि).
(४) भा. १३।३६।१५; भामु. १३।३६।१५ चेज्जाति (च ज्ञान) येद्ग्राम्य (याद्ग्राम्य).
(५) भा. १३।३६।१६; भामु. १३।३६।१६.
(६) भा. १३।३६।१७; भामु. १३।३६।१७ अतिमा (अभिभा).
(७) भा. १३।३६।१८-१९; भामु. १३।३६।१८-१९.

ब्राह्मणात् त्रैवर्णिकस्त्रीषु ब्राह्मणोत्पत्तिः,
चत्वार एव वर्णा यज्ञार्थं सृष्टाः

**[1]अब्राह्मणं तु मन्यन्ते शूद्रापुत्रमनैपुणात्।**
**त्रिषु वर्णेषु जातो हि ब्राह्मणाद्ब्राह्मणो भवेत्।।**

अब्राह्मणं त्विति दीर्घतमसः पुत्रेषु शूद्रायां जातेषु काक्षीवदादिषु ब्राह्मण्यादर्शनादिति भावः। एवं च तस्य अमन्त्रकाः संस्कारा अपि भवन्ति। त्रिषु क्षत्रियादिषु। एतच्च दायार्थम् अवध्यत्वार्थं चोक्तम्, विप्राद्वैश्यायां शूद्रायां च जातस्य मातृजातीयत्वस्य वक्ष्यमाणत्वात्। नीटी.

**[2]स्मृता वर्णाश्च चत्वारः पञ्चमो नाधिगम्यते।।**
**[3]ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः।**
**क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि।।**

**भीष्म उवाच –**

**[4]चातुर्वर्ण्यस्य कर्माणि चातुर्वर्ण्यं च केवलम्।**
**असृजत्स हि यज्ञार्थे पूर्वमेव प्रजापतिः।।**

तत्र प्रथमं चत्वार एव वर्णा यज्ञार्थं सृष्टाः। तत्र शूद्राणां सेवाद्वारा यज्ञार्थत्वम्, न तु साक्षात्, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तैसं. ७।१।१।६) इति श्रुतेः। नीटी.

ब्राह्मणप्रशंसा, ब्राह्मण्यं दुर्लभम्, ब्राह्मणः
क्षत्रियवैश्याभ्यां संस्पृश्य शूद्रेणा-
संस्पृश्य परिचरणीयः

**[5]अनर्घेया महाराज द्विजा वर्णमहत्तमाः।**
**गावश्च पृथिवीपाल गौर्मूल्यं परिकल्प्यताम्।।**
**[6]अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः।**
**इच्छन्नेष तपोवीर्यादन्याँल्लोकान्सृजेदपि।।**

(१) भा. १३।४७।१७; भामु. १३।४७।१७.
(२) भा. १३।४७।१८; भामु. १३।४७।१८ ता वर्णाश्च च (ताश्च वर्णाश्च).
(३) भा. १३।४७।२८; भामु. १३।४७।२८.
(४) भा. १३।४८।३; भामु. १३।४८।३.
(५) भा. १३।५१।२२; भामु. १३।५१।२२ र्णमहत्तमाः (र्णेषु चोत्तमाः) पृथिवीपाल (पुरुषव्याघ्र).
(६) भा. १३।५४।२७; भामु. १३।५४।२७-२८ इच्छन्ने (इच्छयै).

**[1]ब्राह्मणा एव जायेरन्पुण्यवाग्बुद्धिकर्मणः।**
**उत्सहेदिह कर्तुं हि कोऽन्यो वै च्यवनादृते।।**
**[2]ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः।**
**ब्राह्मण्यस्य प्रभावाद्धि रथे युक्तौ स्वधुर्यवत्।।**
**[3]ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते।**
**अवमन्य नरेन्द्रत्वं देवेन्द्रत्वं च पार्थिव।।**
**[4]एवमेतद्यथाऽऽत्थ त्वं ब्राह्मण्यं तात दुर्लभम्।**
**ब्राह्मण्ये सति चर्षित्वमृषित्वे च तपस्विता।।**
**[5]आशिषं ये न देवेषु न मर्त्येषु च कुर्वते।**
**अर्हन्तो नित्यसत्त्वस्था यथालब्धोपजीविनः।।**
**[6]आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत।**
**तान्युक्तैरुपजिज्ञास्य तथा द्विजवरोत्तमान्।।**

येऽन्नार्थं देवादीन्नार्थयन्ते तेभ्य आत्मानं रक्षस्वेत्युक्तम्। तत्र रक्षणप्रकारमाह – तानिति। युक्तैश्चारैः। मुक्तैरिति पाठे निसृष्टैर्नरैः उपजिज्ञास्यः निमन्त्रयेथा इति संबन्धः। नीटी.

**[7]कृतैरावसथैर्नित्यं सप्रेष्यैः सपरिच्छदैः।**
**निमन्त्रयेथाः कौरव्य सर्वकामसुखावहैः।।**

आवसथैः आवसथादिसमर्पणेन। नीटी.

**[8]यदि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर।**
**कार्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः।।**

धर्मार्थमेव धर्मं कुर्वन्ति, न तु फलान्तरार्थमिति भावः। नीटी.

**[9]विद्यास्नाता व्रतस्नाता ये व्यपाश्रित्यजीविनः।**
**गूढस्वाध्यायतपसो ब्राह्मणाः संशितव्रताः।।**

(१) भा. १३।५४।२८; भामु. १३।५४।२८-२९ कर्तुं हि (कृत्वैव).
(२) भा. १३।५४।२९; भामु. १३।५४।२९-३०.
(३) भा. १३।५५।२८; भामु. १३।५५।२९.
(४) भा. १३।५५।२९; भामु. १३।५५।३० ब्राह्मण्ये (ब्राह्मणे).
(५) भा. १३।५८।१३; भामु. १३।५९।१३ मर्त्येषु च (च मर्त्येषु) सत्त्वस्था यथाल (संतुष्टास्तथा ल).
(६) भा. १३।५८।१४; भामु. १३।५९।१४ स्य त (स्यस्त).
(७) भा. १३।५८।१५; भामु. १३।५९।१५ सप्रे (संप्रे).
(८) भा. १३।५८।१६; भामु. १३।५९।१६.
(९) भा. १३।५८।१७; भामु. १३।५९।१७ त्यजी (त्य जी).

व्यपाश्रित्य प्रभोराश्रयमकृत्वा जीवितुंस्वभावाः। नीटी.

**[1]तेषु शुद्धेषु दान्तेषु स्वदारनिरतेषु च।**
**यत्करिष्यसि कल्याणं तत्त्वा लोकेषु धास्यति।।**

**[2]यथाऽग्निहोत्रं सुहुतं सायं प्रातर्द्विजातिना।**
**तथा भवति दत्तं वै द्विजेभ्योऽथ कृतात्मना।।**

**[3]एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः।**
**विशिष्टः सर्वयज्ञेभ्यो ददतस्तात वर्तताम्।।**

ददतः दातुः तव वर्ततां सर्वदाऽस्तु। नीटी.

**[4]निवापो दानसदृशस्तादृशेषु युधिष्ठिर।**
**निवपन्पूजयंश्चैव तेष्वानृण्यं निगच्छति।।**

यज्ञविशेषणं निवापदानसलिल इति। निवापः पितृतर्पणम् तद्वदेव दानादि यस्मिन्स तथा। तादृशेषु निवसन् तानाश्रित्य स्थितः सन्। आनृण्यं देवादीनाम्। 'निवापो दानसदृशः' इति पाठे दानं महादानम्। नीटी.

**[5]य एव नो न कुप्यन्ति न लुभ्यन्ति तृणेष्वपि।**
**त एव नः पूज्यतमा ये चान्ये प्रियवादिनः।।**

**[6]ये नो न बहु मन्यन्ते न प्रवर्तन्ति चापरे।**
**पुत्रवत्परिपाल्यास्ते नमस्तेभ्यस्तथाऽभयम्।।**

एते दातारं न बहु मन्यन्ते, निःस्पृहत्वात्। तेभ्यो नमोऽस्तु, तथाऽभयमस्तु। तथोभयमिति पाठे तेभ्यस्तुष्टेभ्यो रुष्टेभ्यश्च उभयं स्वर्गो नरकश्च, भवतीति शेषः। नीटी.

**[7]ऋत्विक्पुरोहिताचार्या मृदुब्रह्मधरा हि ते।**
**क्षत्रेणापि हि संसृष्टं तेजः शाम्यति वै द्विजे।।**

मृदवः, शिष्येषु स्नेहवत्त्वात्। ते च ते ब्रह्मधराश्च वेदधराः। क्षात्रेण संसृष्टमपि ब्राह्मं तेजः शाम्यति शान्ते द्विजेऽदीप्यमानम् अस्त्येवेत्यर्थः। नीटी.

**[1]अस्ति मे बलवानस्मि राजाऽस्मीति युधिष्ठिर।**
**ब्राह्मणान्मा स्म पर्यश्नीर्वासोभिरशनेन च।।**

मा पर्यश्नीः परित्यज्य मा भुङ्क्ष्व। नीटी.

**[2]यच्छोभार्थं बलार्थं वा वित्तमस्ति तवानघ।**
**तेन ते ब्राह्मणाः पूज्याः स्वधर्ममनुतिष्ठता।।**

ते त्वया। नीटी.

**[3]नमस्कार्यास्त्वया विप्रा वर्तमाना यथातथम्।**
**यथासुखं यथोत्साहं ललन्तु त्वयि पुत्रवत्।।**

ललन्तु रमन्ताम्। नीटी.

**[4]को ह्यन्यः सुप्रसादानां सुहृदामल्पतोषिणाम्।**
**वृत्तिमर्हत्युपक्षेप्तुं त्वदन्यः कुरुसत्तम।।**

अवक्षेप्तुं समर्पितुम्। नीटी.

**[5]यथा पत्याश्रयो धर्मः स्त्रीणां लोके सनातनः।**
**स देवः सा गतिर्नान्या तथाऽस्माकं द्विजातयः।।**

**[6]यदि नो ब्राह्मणास्तात संत्यजेयुरपूजिताः।**
**पश्यन्तो दारुणं कर्म सततं क्षत्रिये स्थितम्।।**

**[7]अवेदानामकीर्तीनामलोकानामयज्वनाम्।**
**कोऽस्माकं जीवितेनार्थस्तद्धि नो ब्राह्मणाश्रयम्।।**

अवर्तिनाम् अवृत्तीनाम्। आर्यः( ? अर्थः)गुणः। अकीर्तिनामिति पाठे व्रीह्यादित्वादिनिः। अकीर्तिमताम्। नीटी.

**[8]अत्र ते वर्तयिष्यामि यथा धर्मः सनातनः।**
**राजन्यो ब्राह्मणं राजन्पुरा परिचचार ह।**
**वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुतिः।।**

---

(१) **भा.** १३।५८।१८; **भामु.** १३।५९।१८ निरतेषु च (परितोषिषु) चतुर्थचरणे (तत्ते लोके युधांपते).

(२) **भा.** १३।५८।१९; **भामु.** १३।५९।१९ उत्तरार्धे (तथा दत्तं द्विजातिभ्यो भवत्यथ यतात्मसु।।).

(३) **भा.** १३।५८।२०; **भामु.** १३।५९।२०.

(४) **भा.** १३।५८।२१; **भामु.** १३।५९।२१ पो दानसदृश (पदानसलिल) निवप (निवस) गच्छति (यच्छति).

(५) **भा.** १३।५८।२२; **भामु.** १३।५९।२२ प्रथमचरणे (य एवं नैव कुप्यन्ते) चान्ये (चापि).

(६) **भा.** १३।५८।२३; **भामु.** १३।५९।२३ ये नो न (एते न).

(७) **भा.** १३।५८।२४; **भामु.** १३।५९।२४ क्षत्रे (क्षात्रे).

(१) **भा.** १३।५८।२५; **भामु.** १३।५९।२५ स्म (च).

(२) **भा.** १३।५८।२६; **भामु.** १३।५९।२६.

(३) **भा.** १३।५८।२७; **भामु.** १३।५९।२७ स्त्वया (स्तथा).

(४) **भा.** १३।५८।२८; **भामु.** १३।५९।२८ ह्यन्यः सुप्र (ह्यक्षयप्र) त्युप (त्यव).

(५) **भा.** १३।५८।२९; **भामु.** १३।५९।२९ स देव (सदैव).

(६) **भा.** १३।५८।३०; **भामु.** १३।५९।३०.

(७) **भा.** १३।५८।३१; **भामु.** १३।५९।३१ कीर्तीना (यज्ञाना) यज्वनाम् (वर्तिनाम्) कोऽस्माकं (कस्तेषां) स्तद्धि नो (स्त्वां विना).

(८) **भा.** १३।५८।३२; **भामु.** १३।५९।३२-३३ र्मः सनातनः (र्मं सनातनम्) णं रा (णान् रा).

पुरा पूर्वम्। नीटी.

[1]दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन्।
संस्पृश्य परिचर्यस्तु वैश्येन क्षत्रियेण च।।
[2]मृदुभावान्सत्यशीलान्सत्यधर्मानुपालकान्।
आशीविषानिव क्रुद्धांस्तानुपाचरत द्विजान्।।
[3]अपरेषां परेषां च परेभ्यश्चैव ये परे।
क्षत्रियाणां प्रतपतां तेजसा च बलेन च।
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च।।
[4]न मे पिता प्रियतरो न त्वं तात तथा प्रियः।
न मे पितुः पिता राजन्न चाऽऽत्मा न च जीवितम्।।
त्वत्तश्च मे प्रियतरः पृथिव्यां नास्ति कश्चन।
त्वत्तोऽपि मे प्रियतरा ब्राह्मणा भरतर्षभ।।
[5]ब्रवीमि सत्यमेतच्च यथाऽहं पाण्डुनन्दन।
तेन सत्येन गच्छेयं लोकान्यत्र स शंतनुः।।
[6]पश्येयं च सतां लोकाञ्छुचीन्ब्रह्मपुरस्कृतान्।
तत्र मे तात गन्तव्यमह्नाय च चिराय च।।
सोऽहमेतादृशाँल्लोकान्दृष्ट्वा भरतसत्तम।
यन्मे कृतं ब्राह्मणेषु न तप्ये तेन पार्थिव।।

ब्राह्मणप्रशंसा

[7]आनृशंस्यं परो धर्मो याचते तत्प्रदीयते।
अयाचतः सीदमानान्सर्वोपायैर्निमन्त्रय।।
[8]यदि वै तादृशा राष्ट्रे वसेयुस्ते द्विजोत्तमाः।
भस्मच्छन्नानिवाग्नींस्तान्बुध्येथास्त्वं प्रयत्नतः।।

राष्ट्रान् राष्ट्रम्। नीटी.

(१) भा. १३।५८।३३; भामु. १३।५९।३३-३४ स्पृश्य प (स्पर्शप).
(२) भा. १३।५८।३४; भामु. १३।५९।३४-३५.
(३) भा. १३।५८।३५; भामु. १३।५९।३५-३६ श्चैव (श्चापि).
(४) भा. १३।५८।३६-३७; भामु. १३।५९।३७-३८.
(५) भा. १३।५८।३८; भामु. १३।५९।३९ स शंतनुः (च शान्तनुः).
(६) भा. १३।५८।३९-४०; भामु. १३।५९।४०-४१.
(७) भा. १३।५९।६; भामु. १३।६०।६ मन्त्रय (मन्त्रयेत्).
(८) भा. १३।५९।७; भामु. १३।६०।७ राष्ट्रे (राष्ट्रान्).

[1]तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि।
अपूज्यमानाः कौरव्य पूजार्हास्तु तथाविधाः।
पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः।।
[2]तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परंतप।
ददद्बहुविधान्दायानुपच्छन्दानयाचताम्।।
[3]ब्राह्मणो हि महद्भूतं स्वयं देहीति याचते।
अकामो वा सकामो वा दत्त्वा पुण्यमवाप्नुयात्।।
[4]ब्राह्मणः सर्वभूतानामतिथिः प्रसृताग्रभुक्।
विप्रा यमभिगच्छन्ति भिक्षमाणा गृहं सदा।।
[5]सत्कृताश्च निवर्तन्ते तदतीव प्रवर्धते।
महाभोगे कुले जन्म प्रेत्य प्राप्नोति भारत।।
[6]ब्राह्मणो हि महद्भूतं क्षेत्रं चरति पादवत्।
उप्यते तत्र यद्बीजं तद्धि पुण्यफलं महत्।।

गोपालनम्, गोब्राह्मण-
प्रशंसा

[7]तथा गवार्थे शरणं शीतवर्षसहं महत्।
आसप्तमं तारयति कुलं भरतसत्तम।।
[8]प्रचोदनं देवकृतं गवां कर्मसु वर्तताम्।
पूर्वमेवाक्षरं नान्यदभिधेयं कथंचन।।

गवां बलीवर्दानां कर्मसु यज्ञाद्यर्थेषु कृष्याद्यर्थेषु कर्षणादिषु वर्ततां प्रचोदनं प्रतोदेन प्रेरणं देवैः कृतमिति न तत्र दोष इति भावः। तथापि पूर्वं यज्ञार्थमेव चोदनम् अक्षरं श्रेयस्करम्।

(१) भा. १३।५९।८; द्वितीयपङ्क्तिर्नास्ति; भामु. १३।६०। ८-९.
(२) भा. १३।५९।९; भामु. १३।६०।९-१० पच्छन्दान (पागच्छन्न).
(३) भा. १३।६२।२१; भामु. १३।६३।२१ याचते (याचति).
(४) भा. १३।६२।२२; भामु. १३।६३।२२ यमभि (यदभि).
(५) भा. १३।६२।२३; भामु. १३।६३।२३ भोगे (भागे) जन्म प्रेत्य प्रा (प्रेत्य जन्म चा).
(६) भा. १३।६२।२८; भामु. १३।६३।२८ द्वितीयचरणे (क्षेत्रभूतं युधिष्ठिर).
(७) भा. १३।६५।२९; भामु. १३।६६।३०-३१ महत् (दृढम्); निक. ४६२ तथा (कृत्वा) वर्षसहं (वातक्षमं); निप्र. २।५७१ तथा (कृत्वा) वर्ष (वात).
(८) भा. १३।६८।८; भामु. १३।६९।९ नान्य (चान्य) कथंचन (ततः परम्).

अन्यत् कृष्याद्यर्थं तु ततः परं वैदिककर्षणमनु प्रवृत्तम् अभिधेयं वाच्यं निन्द्यमित्यर्थः। तथा च स्मृतिः – 'हलान्तं ब्रह्मवर्चसम्' इति। तेन गोद्रोहकारित्वात्कृष्यर्थं कर्षणं दोषावहमित्यर्थः। नीटी.

**[1]प्रचारे वा निपाने वा बुधो नोद्वेजयेत गाः।**
**तृषिता ह्यभिवीक्षन्त्यो नरं हन्युः सबान्धवम्।।**

प्रचारे पलायने। निवाते कठिनोपवेशने। अभिवीक्षन्त्यः जलमलभमानाः। नीटी.

**[2]न जातु ब्राह्मणो वाच्यो यदवाच्यं शचीपते।**
**मनसा गोषु न द्रुह्येद्गोवृत्तिर्गोनुकम्पकः।।**

गोवृत्तिः असंग्रहपरः। गवां घासादेः अनुकल्पकः संपादकः गोनुकल्पकः। नीटी.

**[3]कान्तारे ब्राह्मणान्गाश्च यः परित्राति कौशिक।**
**क्षेमेण च विमुच्येत तस्य पुण्यफलं शृणु।**
**अश्वमेधक्रतोस्तुल्यं फलं भवति शाश्वतम्।।**

**[4]ब्राह्मणो ह्यग्निरुच्यते।।**

**[5]प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा।**
**असृजद्वृत्तिमेवाग्रे प्रजानां हितकाम्यया।।**

**[6]यथा ह्यमृतमाश्रित्य वर्तयन्ति दिवौकसः।**
**तथा वृत्तिं समाश्रित्य वर्तयन्ति प्रजा विभो।।**

**[7]अचरेभ्यश्च भूतेभ्यश्चराः श्रेष्ठास्ततो नराः।**
**ब्राह्मणाश्च ततः श्रेष्ठास्तेषु यज्ञाः प्रतिष्ठिताः।।**

**[8]यज्ञैराप्यायते सोमः स च गोषु प्रतिष्ठितः।**
**सर्वे देवाः प्रमोदन्ते पूर्ववृत्तास्ततः प्रजाः।।**

**[1]एतान्येव तु भूतानि प्राक्रोशन् वृत्तिकाङ्क्षया।**
**वृत्तिदं चान्वपद्यन्त तृषिताः पितृमातृवत्।।**

**[2]ब्रह्मा पितामहः पूर्वं देवताभिः प्रसादितः।**
**इमे नः संतरिष्यन्ति प्रजाभिर्जगदीश्वराः।।**

नः अस्मान् संतरिष्यन्ति संतारयिष्यन्ति। नीटी.

**[3]सर्वे प्रजानां पतयः सर्वे चातितपस्विनः।**
**त्वत्प्रसादादिमं लोकं तारयिष्यन्ति शाश्वतम्।।**

**[4]तथैव वंशकर्तारस्तव तेजोविवर्धनाः।**
**भवेयुर्वेदविदुषः सर्वे वाक्पतयस्तथा।।**

विदुषः विद्वांसः। नीटी.

**[5]देवपक्षधराः सौम्याः प्राजापत्या महर्षयः।**
**आप्नुवन्ति तपश्चैव ब्रह्मचर्यं परं तथा।।**

**[6]ब्राह्मणा निन्दिता राजन्हन्युस्त्रिपुरुषं कुलम्।।**

असाधुप्रतिग्रहनिषेधपरो वृषादर्भि-
सप्तर्षिसंवादः

**युधिष्ठिर उवाच –**

**[7]ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च।**
**दातृप्रतिग्रहीत्रोर्वा को विशेषः पितामह।।**

**भीष्म उवाच –**

**[8]साधोर्यः प्रतिगृह्णीयात्तथैवासाधुतो द्विजः।**
**गुणवत्यल्पदोषः स्यान्निर्गुणे तु निमज्जति।।**

गुणवति दातरि प्रतिग्रहीतुरल्पो दोषः। नीटी.

**अत्राप्युदाहरन्तीममितिहासं पुरातनम्।**
**वृषादर्भेश्च संवादं सप्तर्षीणां च भारत।।**

---

(१) **भा.** १३।६८।९; **भामु.** १३।६९।१० निपाने (निवाते).

(२) **भा.** १३।७२।२१; **भामु.** १३।७३।२२ कम्पकः(कल्पकः).

(३) **भा.** १३।७२।४४; **भामु.** १३।७३।४६-४७ च विमु (विप्रमु).

(४) **भा.** १३।७४।३६; **भामु.** १३।७५।३७.

(५) **भा.** १३।७६।११; **भामु.** १३।७७।११ प्रजाः (प्रजा) व्यादि (चाऽऽदि).

(६) **भा.** १३।७६।१२; **भामु.** १३।७७।१२.

(७) **भा.** १३।७६।१३; **भामु.** १३।७७।१३ ष्ठास्ततो (ष्ठाः सदा).

(८) **भा.** १३।७६।१४; **भामु.** १३।७७।१४ राप्याय (रवाप्य) सर्वे (ततो) पूर्ववृत्ता (पूर्वं वृत्ति).

(१) **भा.** १३।७६।१५; **भामु.** १३।७७।१५ एतान्येव तु (प्रजातान्येव).

(२) **भा.** १३।८५।४६; **भामु.** १३।८५।१३८ दीश्वराः (तीश्वराः).

(३) **भा.** १३।८५।४७; **भामु.** १३।८५।१३९ शाश्वतम् (सांप्रतम्).

(४) **भा.** १३।८५।४८; **भामु.** १३।८५।१४० वाक्पतय (च कृतिन).

(५) **भा.** १३।८५।४९; **भामु.** १३।८५।१४१ धराः (चराः).

(६) **भा.** १३।९०।४५; **भामु.** १३।९०।५२ स्त्रिपु (स्त्रैपु).

(७) **भा.** १३।९४।१; **भामु.** १३।९३।१८ र्वा (र्वै).

(८) **भा.** १३।९४।२-५; **भामु.** १३।९३।१९-२२.

**कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः।**
**विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती।।**
**सर्वेषामथ तेषां तु गण्डाऽभूत्कर्मकारिका।**
**शूद्रः पशुसखश्चैव भर्ता चास्या बभूव ह।।**
गण्डेति नामतः। नीटी.
[1]**ते वै सर्वे तपस्यन्तः पुरा चेरुर्महीमिमाम्।**
**समाधिनोपशिक्षन्तो ब्रह्मलोकं सनातनम्।।**
उपशिक्षन्तः अर्जयन्तः। नीटी.
[2]**अथाभवदनावृष्टिर्महती कुरुनन्दन।**
**कृच्छ्रप्राणोऽभवद्यत्र लोकोऽयं वै क्षुधाऽन्वितः।।**
[3]**कस्मिंश्चिच्च पुरा यज्ञे याज्येन शिबिसूनुना।**
**दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रो निजः किल।।**
[4]**तस्मिन्कालेऽथ सोऽल्पायुर्दिष्टान्तमगमत्प्रभो।**
**ते तं क्षुधाऽभिसंतप्ताः परिवार्योपतस्थिरे।।**
दिष्टान्तं मरणम्। नीटी.
[5]**याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः।**
**अपचन्त तदा स्थाल्यां क्षुधार्ताः किल भारत।।**
[6]**निराद्ये मर्त्यलोकेऽस्मिन्नात्मानं ते परीप्सवः।**
**कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः।।**
आत्मानं शरीरं परीप्सवः रक्षितुकामाः। नीटी.
[7]**अटमानोऽथ तान्मार्गे पचमानान्महीपतिः।**
**राजा शैब्यो वृषादर्भिः क्लिश्यमानान्ददर्श ह।।**

**वृषादर्भिरुवाच –**

[8]**प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्णताम्।**
**मयि यद्विद्यते वित्तं तच्छृणुध्वं तपोधनाः।।**

(१) **भा.** १३।९४।६; **भामु.** १३।९३।२३ ते वै (ते च).
(२) **भा.** १३।९४।७; **भामु.** १३।९३।२४.
(३) **भा.** १३।९४।८; **भामु.** १३।९३।२५ याज्येन (शैब्येन) त्रो निजः (त्रः पुरा).
(४) **भा.** १३।९४।९; **भामु.** १३।९३।२६ तस्मिन्का (अस्मिन्का) त्प्रभो (त्प्रभुः).
(५) **भा.** १३।९४।१०; **भामु.** १३।९३।२७.
(६) **भा.** १३।९४।११; **भामु.** १३।९३।२८ निराद्ये (निरन्ने).
(७) **भा.** १३।९४।१२; **भामु.** १३।९३।२९.
(८) **भा.** १३।९४।१३; **भामु.** १३।९३।३० गृह्ण (गृह्य) तच्छृ (तद्वृ).

पुष्टिः पुष्टिहेतुः। नीटी.
[1]**प्रियो हि मे ब्राह्मणो याचमानो**
**दद्यामहं वोऽश्वतरीसहस्रम्।**
**एकैकशः सवृषाः संप्रसूताः**
**सर्वेषां वै शीघ्रगाः श्वेतलोमाः।।**
[2]**कुलंभराननडुहः शतंशता-**
**न्धुर्यांञ्शुभान्सर्वशोऽहं ददानि।**
**पृथ्वीवाहान्पीवरांश्चैव ताव-**
**दग्र्या गृष्ट्यो धेनवः सुव्रताश्च।।**
[3]**वरान्ग्रामान्व्रीहियवं रसांश्च**
**रत्नं चान्यद्दुर्लभं किं ददानि।**
**मा स्माभक्ष्ये भावमेवं कुरुध्वं**
**पुष्ट्यर्थं वै किं प्रयच्छाम्यहं वः।।**

**ऋषय ऊचुः –**

[4]**राजन्प्रतिग्रहो राज्ञो मध्वास्वादो विषोपमः।**
**तज्जानमानः कस्मात्त्वं कुरुषे नः प्रलोभनम्।।**
[5]**क्षत्रं हि दैवतमिव ब्राह्मणं समुपाश्रितम्।**
**अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः।।**
ब्राह्मणान् क्षेत्रं ब्राह्मणस्वरूपस्थानम्। (दैवतं) देवतासमूहः। 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' इति श्रुत्यर्थ उक्तः। नीटी.
[6]**अह्नाऽपीह तपो जातु ब्राह्मणस्योपजायते।**
**तद्दाव इव निर्दह्यात्प्राप्तो राजप्रतिग्रहः।।**

(१) **भा.** १३।९४।१४; **भामु.** १३।९३।३१ याच (याच्च) लोमाः (रोमाः).
(२) **भा.** १३।९४।१५; **भामु.** १३।९३।३२ तंशतान्धुर्यांञ्शुभान् (तं शतान्धुर्यान् श्वेतान्) ददानि (ददामि) तृतीयचरणे (पष्ठौहीनां पीवराणां च ताव).
(३) **भा.** १३।९४।१६; **भामु.** १३।९३।३३ यवं रसांश्च (रसं यवांश्च) मा स्माभ (नास्मिन्न) वै (वः) वः (वै).
(४) **भा.** १३।९४।१७; **भामु.** १३।९३।३४ राज्ञो (राज्ञां).
(५) **भा.** १३।९४।१८; **भामु.** १३।९३।३५ क्षत्रं (क्षेत्रं) मिव ब्राह्मणं (मिदं ब्राह्मणान्).
(६) **भा.** १३।९४।१९; **भामु.** १३।९३।३६.

[१]कुशलं सह दानेन राजन्नस्तु सदा तव।
अर्थिभ्यो दीयतां सर्वमित्युक्त्वा ते ततो ययुः।।

अन्येन पथा। नीटी.

[२]अपक्वमेव तन्मांसमभूत्तेषां च धीमताम्।
अथ हित्वा ययुः सर्वे वनमाहारकाङ्क्षिणः।।

[३]ततः प्रचोदिता राज्ञा वनं गत्वाऽस्य मन्त्रिणः।
प्रचीयोदुम्बराणि स्म दानं दातुं प्रचक्रमुः।।

[४]उदुम्बराण्यथान्यानि हेमगर्भाण्युपाहरन्।
भृत्यास्तेषां ततस्तानि प्रग्राहितुमुपाद्रवन्।।

[५]गुरूणीति विदित्वाऽथ न ग्राह्याण्यत्रिरब्रवीत्।
न स्म हे मूढविज्ञाना न स्म हे मन्दबुद्धयः।
हैमानीमानि जानीमः प्रतिबुद्धाः स्म जागृमः।।

न स्महे न स्मः। अस्तेरार्षस्तङ्। नीटी.

[६]इह ह्येतदुपादत्तं प्रेत्य स्यात्कटुकोदयम्।
अप्रतिग्राह्यमेवैतत्प्रेत्य चेह सुखेप्सुना।।

**वसिष्ठ उवाच –**

[७]शतेन निष्कं गणितं सहस्रेण च संमितम्।
यथा बहु प्रतीच्छन्हि पापिष्ठां लभते गतिम्।।

प्रतीच्छन् प्रतिगृह्णन्। नीटी.

**कश्यप उवाच –**

[८]यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
सर्वं तन्नालमेकस्य तस्माद्विद्वाञ्छमं व्रजेत्।।

(१) भा. १३।९४।२०; भामु. १३।९३।३७ क्त्वा ते ततो (क्त्वाऽन्येन ते).

(२) भा. १३।९४।२१; भामु. १३।९३।३८ च धीमताम् (महात्मनाम्).

(३) भा. १३।९४।२२; भामु. १३।९३।३९ चतुर्थचरणे (दातुं तेषां प्रचक्रिरे).

(४) भा. १३।९४।२३; भामु. १३।९३।४०.

(५) भा. १३।९४।२४; भामु. १३।९३।४१-४२ स्म हे (स्महे) मूढ (मन्द) गृमः (गृम).

(६) भा. १३।९४।२५; भामु. १३।९३।४२ त्य चेह (त्येह च).

(७) भा. १३।९४।२६; भामु. १३।९३।४३ निष्कं ग (निष्कग) यथा (तथा) न्हि (न्वै) लभते (पतते).

(८) भा. १३।९४।२७; भामु. १३।९३।४४ व्रजेत् (चरेत्).

**भरद्वाज उवाच –**

[१]उत्पन्नस्य रुरोः शृङ्गं वर्धमानस्य वर्धते।
प्रार्थना पुरुषस्येव तस्य मात्रा न विद्यते।।

तस्य लाभसुखस्य मात्रा इयत्ता। नीटी.

**गौतम उवाच –**

न तल्लोके द्रव्यमस्ति यल्लोकं प्रतिपूरयेत्।
समुद्रकल्पः पुरुषो न कदाचन पूर्यते।।

**विश्वामित्र उवाच –**

कामं कामयमानस्य यदा कामः समृध्यते।
अथैनमपरः कामस्तृष्णा विध्यति बाणवत्।।

कामः तृष्णारूपः। नीटी.

**जमदग्निरुवाच –**

प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम्।
तद्धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत्।।

तद्धनं तपोधनम्। नीटी.

**अरुन्धत्युवाच –**

[२]धर्मार्थं संचयो यो वै द्रव्याणां पक्षसंमतः।
तपःसंचय एवेह विशिष्टो द्रव्यसंचयात्।।

पक्षसंमतः पाक्षिकत्वेन मतः। नीटी.

**गण्डोवाच –**

[३]उग्रादितो भयाद्यस्माद्बिभ्यतीमे ममेश्वराः।
बलीयांसो दुर्बलवद्बिभेम्यहमतः परम्।।

**पशुसख उवाच –**

यद्वै धर्मे परं नास्ति ब्राह्मणास्तद्धनं विदुः।
विनयार्थं सुविद्वांसमुपासेयं यथातथम्।।

यत् यतो हेतोः वैधर्मे, विधर्मः एव वैधर्मः, तस्मिन् लोभादिदोषे सति परम् उत्कृष्टं पदं नास्ति न लभ्यते, अतः तत् अलोभाख्यमेव धनं ब्राह्मणा विदुः। विनयः शिक्षा, तदर्थम्। शिक्षितुमिति यावत्। नीटी.

(१) भा. १३।९४।२८-३१; भामु. १३।९३।४५-४८.

(२) भा. १३।९४।३२; भामु. १३।९३।४९.

(३) भा. १३।९४।३३-३४; भामु. १३।९३।५०-५१.

ऋषय ऊचुः –

[1]कुशलं सह दानाय तस्मै यस्य प्रजा इमाः।
फलान्युपधियुक्तानि य एवं नः प्रयच्छसि।।

उपधिः छलम्। नीटी.

भीष्म उवाच –

[2]इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि ते।
ऋषयो जग्मुरन्यत्र सर्व एव धृतव्रताः।।

§ [3]ब्रह्मस्वरजसा ध्वस्तं भुक्त्वा मां पश्य यादृशम्।।

[4]तस्मात्सोमोऽप्यविक्रेयः पुरुषेण विपश्चिता।
विक्रयं हीह सोमस्य गर्हयन्ति मनीषिणः।।

प्रसङ्गात्सोमविक्रयं निन्दति – तस्मादिति। नीटी.

[5]ये चैनं क्रीणते राजन् ये च विक्रीणते जनाः।
ते तु वैवस्वतं प्राप्य रौरवं यान्ति सर्वशः।।

(१) क्रीणते वाणिज्यार्थमिति प्रकरणात्। तातेति संबोधनम्। गृर. ४३८

(२) एनं ब्रह्मस्वसृष्टम्। नीटी.

[6]सोमं तु रजसा ध्वस्तं विक्रीयाद्बुद्धिपूर्वकम्।
श्रोत्रियो वार्धुषी भूत्वा चिररात्राय नश्यति।
नरकं त्रिंशतं प्राप्य श्वविष्ठामुपजीवति।।

चिरं न विनश्यतीति न, अपि तु चिरं नरकवासान्नश्यत्येव। नीटी.

### ब्राह्मणप्रशंसा

[1]त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः।
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः।।
दहत्याशीविषः क्रुद्धो यावत्पश्यति चक्षुषा।
क्षत्रियोऽपि दहेत्क्रुद्धो यावत्स्पृशति तेजसा।।
ब्राह्मणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च।
तस्मादेतत्त्रयं यत्नादुपसेवेत पण्डितः।।

[2]ब्राह्मणेभ्यः परं नास्ति पावनं दिवि चेह च।।

[3]तपः श्रुतं च योनिश्चाप्येतद्ब्राह्मण्यकारणम्।
त्रिभिर्गुणैः समुदितस्ततो भवति वै द्विजः।।

श्रुतं शास्त्रज्ञानम्। नीटी.

[4]तस्मिंस्तृप्ते च तृप्यन्ते पितरो दैवतानि च।
न हि श्रुतवतां किंचिदधिकं ब्राह्मणादृते।।

[5]अन्धं स्यात्तम एवेदं न प्रज्ञायेत किंचन।
चातुर्वर्ण्यं न वर्तेत धर्माधर्मावृतानृते।।

ब्राह्मणादृते इदमन्धं तम एव स्याद्यतो वर्णधर्मादिकं तेन विना न प्रज्ञायेतेति संबन्धः। नीटी.

[6]ये योनिशुद्धाः सततं तपस्यभिरता भृशम्।
दानाध्ययनसंपन्नास्ते वै पूज्यतमाः सदा।।

[7]तैर्हि सद्भिः कृतः पन्थाश्चेतयानो न मुह्यते।
ते हि स्वर्गस्य नेतारो यज्ञवाहाः सनातनाः।।

भीष्म उवाच –

[8]केन ते च भवेत्प्रीतिः कथं तुष्टिं तु गच्छसि।
इति पृष्टः सुरेन्द्रेण प्रोवाच हरिरीश्वरः।।

---

§ ब्रह्मस्वहरणस्यातिघोरफलत्वं प्रतिपादयन्त्यां कथायां चण्डालोक्तिरियम्। अत्र प्रागतं 'गोरजसा ध्वस्तम्' इति श्लोकांशस्य नीटीव्याख्यानमनुसंधेयम्। तद्यथा – 'गोरजसा गोपरागेण।..... प्रचलन्त्या धेनोरूधसः सकाशात्प्रसरन्त्यः क्षीरविप्रुषोऽत्र परागपर्यायेण रजःपदेनोच्यन्ते। ..... ध्वस्तं व्याप्तम्।' इति। अत्र धेनुः प्रकरणात् ब्राह्मणस्येति बोध्यम्।

(१) भा. १३।९४।३५; भामु. १३।९३।५२ दानाय (दानेन) यच्छसि (यच्छति).

(२) भा. १३।९४।३६; भामु. १३।९३।५३ ते (वै).

(३) भा. १३।१०४।११; भामु. १३।१०१।११ स्वर (स्वं र).

(४) भा. १३।१०४।१२; भामु. १३।१०१।१२ हीह (त्विह); गृक. २०५ उत्त.; गृर. ४३७ उत्त.

(५) भा. १३।१०४।१३; भामु. १३।१०१।१३ राजन् (तात); गृक. २०५ चैनं (वैनं) राजन् (तात) ते तु (ते वै); गृर. ४३७-४३८ गृकवत्.

(६) भा. १३।१०४।१४; भामु. १३।१०१।१४-१५ याद्बुद्धि (णन्विधि) चिररात्राय (न चिरं स वि) श्ववि (स्ववि).

(१) भा. १३।१०७।४३-४५; भामु. १३।१०४।७७-७९.

(२) भा. १३।१०९।६३; भामु. १३।१०६।६६.

(३) भा. १३।१२२।७; भामु. १३।१२१।७.

(४) भा. १३।१२२।८; भामु. १३।१२१।८ तस्मिं (अस्मिं).

(५) भामु. १३।१२१।९.

(६) भा. १३।१२२।१५; भामु. १३।१२१।१६.

(७) भा. १३।१२२।१६; भामु. १३।१२१।१७ श्चेतयानो (स्तेन यातो).

(८) भामु. १३।१२६।१-३.

**विष्णुरुवाच –**

**ब्राह्मणानां परीवादो मम विद्वेषणं महत्।**
**ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः।।**
**नित्याभिवाद्या विप्रेन्द्रा भुक्त्वा पादौ तथाऽऽत्मनः।**
**तेषां तुष्यामि मर्त्यानां यश्चक्रे च बलिं हरेत्।।**

पादौ स्वीयावप्यभिवाद्यौ संध्यायां शिष्टाचारात्। चक्रे गोमयोपलिप्ते मण्डले सुदर्शनमन्त्रेण पूजिते।

नीटी.

**[1]पादमुद्यम्य यो मर्त्यः स्पृशेद्गाश्च सुदुर्मतिः।**
**ब्राह्मणं वा महाभागं दीप्यमानं तथाऽनलम्।।**
**तस्य दोषान्प्रवक्ष्यामि तच्छृणुध्वं समाहिताः।**
**दिवं स्पृशत्य( ? ति) शब्दोऽस्य त्रस्यन्ति पितरश्च वै।।**
**वैमनस्यं च देवानां कृतं भवति पुष्कलम्।**
**पावकश्च महातेजा हव्यं न प्रतिगृह्णति।।**
**आजन्मनां शतं चैव नरके पच्यते तु सः।**
**निष्कृतिं च न तस्यापि अनुमन्यन्ति कर्हिचित्।।**
**तस्माद्गावो न पादेन स्प्रष्टव्या वै कदाचन।**
**ब्राह्मणश्च महातेजा दीप्यमानस्तथाऽनलः।।**
**श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता।**
**एते दोषा मया प्रोक्तास्त्रिषु यः पादमुत्सृजेत्।।**

वैश्यस्य वृत्तयः, तत्राविक्रेयाणि,
ब्राह्मणप्रशंसा, धर्मेणार्थसंग्रहः,
अर्थविनियोगः, चातुर्वर्ण्यं
नैसर्गिकम्

**[2]वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा।।**
**वाणिज्यम्..... ...... ........ ........ ...... ।।**
**[3]तिलान् गन्धान् रसांश्चैव न विक्रीणीत वै क्वचित्।**
**वणिक्पथमुपासीनो वैश्यः सत्पथमाश्रितः।।**

**महेश्वर उवाच –**

**[1]ब्राह्मणा लोकसारेण सृष्टा धात्रा गुणार्थिना।**
**लोकांस्तारयितुं कृत्स्नान्मर्त्येषु क्षितिदेवताः।।**
**[2]धर्मेणार्थः समाहार्यो धर्मलब्धं त्रिधा धनम्।**
**कर्तव्यं धर्मपरमं मानवेन प्रयत्नतः।।**
**[3]एकेनांशेन धर्मार्थश्चर्तव्यो भूतिमिच्छता।**
**एकेनांशेन कामार्थ एकमंशं विवर्धयेत्।।**

**महेश्वर उवाच –**

**[4]ब्राह्मण्यं देवि दुष्प्रापं निसर्गाद्ब्राह्मणः शुभे।**
**क्षत्रियो वैश्यशूद्रौ वा निसर्गादिति मे मतिः।।**
**[5]ब्राह्मणो हि महत्क्षेत्रं लोके चरति पादवत्।**
**यत्तत्र बीजं वपति सा कृषिः पारलौकिकी।।**
**[6]ब्राह्मण्यमेव संप्राप्य रक्षितव्यं यतात्मभिः।**
**योनिप्रतिग्रहादानैः कर्मभिश्च शुचिस्मिते।।**

ब्राह्मण्यमिति। कुयोनिसंबन्धात् कुप्रतिग्रहात् आ-(? अ)दानाच्च ब्राह्मण्यं नश्यतीति भावः।

नीटी.

अनेकगुणवर्णनेन
ब्राह्मणप्रशंसा

**युधिष्ठिर उवाच –**

**[7]के पूज्याः के नमस्कार्याः कथं वर्तेत केषु च।**
**किमाचारः कीदृशेषु पितामह न रिष्यते।।**

**भीष्म उवाच –**

**[8]ब्राह्मणानां परिभवः सादयेदपि देवताः।**
**ब्राह्मणानां नमस्कर्ता युधिष्ठिर न रिष्यते।।**

---

(१) **भामु.** १३।१२६।२९-३४.

(२) **भा.** १३।१२८।५३, ५४; **भामु.** १३।१४१।५४, ५५.

(३) **भा.** १३।१२८।५५; **भामु.** १३।१४१।५६ द्वितीयचरणे (विक्रीणीयान्न चैव हि); **गृक.** २५८ तिलान् गन्धान् र (तिलधान्यर) तृतीयचरणे (वाणिज्यार्थमुपासीत); **बाल.** १।११९ पृ. ३६८ श्रितः (स्थितः).

(१) **भा.** १३।१२९।२; **भामु.** १३।१४।६२.

(२) **भा.** १३।१२९।१८; **भामु.** १३।१४१।७८.

(३) **भा.** १३।१२९।१९; **भामु.** १३।१४१।७९ र्थश्चर्त (र्थो कर्त).

(४) **भा.** १३।१३१।६; **भामु.** १३।१४३।६ शूद्रौ (शूद्रो).

(५) **भा.** १३।१३१।५३; **भामु.** १३।१४३।५४ णो हि (णोऽपि) पारलौकिकी (प्रेत्य भाविनि).

(६) **भा.** १३।१३१।५७; **भामु.** १३।१४३।५८ ण्यमेव (ण्यं देवि) त्मभिः (त्मना).

(७) **भा.** १३।१३६।१; **भामु.** १३।१५१।१.

(८) **भा.** १३।१३६।२; **भामु.** १३।१५१।२ णानां नमस्कर्ता (णांस्तु नमस्कृत्य).

[1]ते पूज्यास्ते नमस्कार्या वर्तेथास्तेषु पुत्रवत्।
ते हि लोकानिमान्सर्वान्धारयन्ति मनीषिणः।।
ब्राह्मणाः सर्वलोकानां महान्तो धर्मसेतवः।
धनत्यागाभिरामाश्च वाक्संयमरताश्च ये।।
रमणीयाश्च भूतानां निधानं च धृतव्रताः।
प्रणेतारश्च लोकानां शास्त्राणां च यशस्विनः।।
[2]तपो येषां धनं नित्यं वाक्चैव विपुलं बलम्।
प्रभवश्चापि धर्माणां धर्मज्ञाः सूक्ष्मदर्शिनः।।
[3]धर्मकामाः स्थिता धर्मे सुकृतैर्धर्मसेतवः।
यानुपाश्रित्य जीवन्ति प्रजाः सर्वाश्चतुर्विधाः।।
[4]पन्थानः सर्वनेतारो यज्ञवाहाः सनातनाः।
पितृपैतामहीं गुर्वीमुद्वहन्ति धुरं सदा।।
[5]धुरि ये नावसीदन्ति विषमे सद्गवा इव।
पितृदेवातिथिमुखा हव्यकव्याग्रभोजिनः।।
[6]भोजनादेव ये लोकांस्त्रायन्ते महतो भयात्।
दीपाः सर्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि।।
[7]सर्वशिल्पादिनिधयो निपुणाः सूक्ष्मदर्शिनः।
गतिज्ञाः सर्वभूतानामध्यात्मगतिचिन्तकाः।।
[8]आदिमध्यावसानानां ज्ञातारश्छिन्नसंशयाः।
परावरविशेषज्ञा गन्तारः परमां गतिम्।।
[9]विमुक्ता धुतपाप्मानो निर्द्वन्द्वा निष्परिग्रहाः।
मानार्हा मानिता नित्यं ज्ञानविद्भिर्महात्मभिः।।
[10]चन्दने मलपङ्के च भोजनेऽभोजने समाः।
समं येषां दुकूलं च शाणक्षौमाजिनानि च।।

(१) भा. १३।१३६।३-५.
(२) भा. १३।१३६।६; भामु. १३।१५१।६ श्चापि (श्चैव).
(३) भा. १३।१३६।७; भामु. १३।१५१।७ यानुपा (यान्समा).
(४) भा. १३।१३६।८; भामु. १३।१५१।८.
(५) भा. १३।१३६।९; भामु. १३।१५१।९ विषमे (विषये).
(६) भा. १३।१३६।१०; भामु. १३।१५१।१० ये लोकां (लोकांस्त्रीं) दीपाः (दीपः).
(७) भा. १३।१३६।११; भामु. १३।१५१।११ पूर्वार्धे (सर्वशिक्षाश्रुतिधना निपुणा मोक्षदर्शिनः।).
(८) भा. १३।१३६।१२; भामु. १३।१५१।१२.
(९) भा. १३।१३६।१३; भामु. १३।१५१।१३ धुत (धूत).
(१०) भा. १३।१३६।१४; भामु. १३।१५१।१४ शाणक्षौ (तथा क्षौ).

[1]तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि।
शोषयेयुश्च गात्राणि स्वाध्यायैः संयतेन्द्रियाः।।
[2]अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम्।
लोकानन्यान्सृजेयुश्च लोकपालांश्च कोपिताः।।
[3]अपेयः सागरो येषामभिशापान्महात्मनाम्।
येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति।।
[4]देवानामपि ये देवाः कारणं कारणस्य च।
प्रमाणस्य प्रमाणं च कस्तानभिभवेद्बुधः।।
येषां वृद्धश्च बालश्च सर्वः संमानमर्हति।
तपोविद्याविशेषात्तु मानयन्ति परस्परम्।।
अविद्वान्ब्राह्मणो देवः पात्रं वै पावनं महत्।
विद्वान्भूयस्तरो देवः पूर्णसागरसंनिभः।।
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।
प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत्।।
[5]श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति।
हविर्यज्ञेषु च वहन्भूय एवाभिशोभते।।
[6]एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु।
सर्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत्परम्।।

पवनसहस्रार्जुनसंवादरूपेण युधिष्ठिर-
वासुदेवसंवादरूपेण च विस्तरेण
ब्राह्मणप्रशंसा

**युधिष्ठिर उवाच –**

[7]कां तु ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा जनाधिप।
कं वा कर्मोदयं मत्वा तानर्चसि महामते।।

व्युष्टिं समृद्धिं फलं वा। 'व्युष्टिः फले समृद्धौ च' इत्यमरः। नीटी.

(१) भा. १३।१३६।१५; भामु. १३।१५१।१५.
(२) भा. १३।१३६।१६; भामु. १३।१५१।१६ युश्च (युस्ते).
(३) भा. १३।१३६।१७; भामु. १३।१५१।१७ मभिशा (मपि शा ) के नोप (केनोप).
(४) भा. १३।१३६।१८-२१; भामु. १३।१५१।१८-२१.
(५) भा. १३।१३६।२२; भामु. १३।१५१।२२ उत्तरार्धे (हविर्यज्ञे च विधिवद्गृह एवातिशोभते।।).
(६) भा. १३।१३६।२३; भामु. १३।१५१।२३.
(७) भा. १३।१३७।१-३; भामु. १३।१५२।१-३.

**भीष्म उवाच –**

**अत्राप्युदाहरन्तीममितिहासं पुरातनम्।**
**पवनस्य च संवादमर्जुनस्य च भारत।।**
**सहस्रभुजभृच्छ्रीमान्कार्तवीर्योऽभवत्प्रभुः।**
**अस्य लोकस्य सर्वस्य माहिष्मत्यां महाबलः।।**
**[1]स तु रत्नाकरवती सद्वीपां सागराम्बराम्।**
**शशास सर्वां पृथिवीं हैहयः सत्यविक्रमः।।**
**[2]स्ववित्तं तेन दत्तं तु दत्तात्रेयाय कारणे।**
**क्षत्रधर्मं पुरस्कृत्य विनयं श्रुतमेव च।।**
**[3]आराधयामास च तं कृतवीर्यात्मजो मुनिम्।**
**न्यमन्त्रयत संहृष्टः स द्विजश्च वरैस्त्रिभिः।।**
**[4]स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत्।**
**सहस्रबाहुर्भूयां वै चमूमध्ये गृहेऽन्यथा।।**
**[5]मम बाहुसहस्रं तु पश्यन्तां सैनिका रणे।**
**विक्रमेण महीं कृत्स्नां जयेयं विपुलव्रत।**
**तां च धर्मेण संप्राप्य पालयेयमतन्द्रितः।।**
**[6]चतुर्थं तु वरं याचे त्वामहं द्विजसत्तम।**
**तं ममानुग्रहकृते दातुमर्हस्यनिन्दित।**
**अनुशासन्तु मां सन्तो मिथ्यावृत्तं तदाश्रयम्।।**
**[7]इत्युक्तः स द्विजः प्राह तथाऽस्त्विति नराधिपम्।**
**एवं समभवंस्तस्य वरास्ते दीप्ततेजसः।।**
**[8]ततः स रथमास्थाय ज्वलनार्कसमद्युतिः।**
**अब्रवीद्वीर्यसंमोहात्को न्वस्ति सदृशो मया।**
**वीर्यधैर्ययशःशौर्यैर्विक्रमेणौजसाऽपि वा।।**

(१) भा. १३।१३७।४; भामु. १३।१५२।४ सर्वां पृथिवीं (पृथिवीं सर्वां).
(२) भा. १३।१३७।५; भामु. १३।१५२।५.
(३) भा. १३।१३७।६; भामु. १३।१५२।६ हृष्टः स द्विजश्च (तुष्टो द्विजश्चैनं).
(४) भा. १३।१३७।७; भामु. १३।१५२।७.
(५) भा. १३।१३७।८; भामु. १३।१५२।८-९ पश्यन्तां (पश्यतां) विपुल (संशित).
(६) भा. १३।१३७।९; भामु. १३।१५२।९-१० थ्यावृत्तं त (थ्योद्वृत्तं त्व).
(७) भा. १३।१३७।१०; भामु. १३।१५२।११.
(८) भा. १३।१३७।११; भामु. १३।१५२।१२-१३ द्युतिः(द्युतिम्) न्वस्ति (वाऽस्ति) मया (मम) पञ्चमचरणे (धैर्येवीर्यायशःशौर्ये).

**[1]तद्वाक्यान्ते चान्तरिक्षे वागुवाचाशरीरिणी।**
**न त्वं मूढ विजानीषे ब्राह्मणं क्षत्रियाद्वरम्।**
**सहितो ब्राह्मणेनेह क्षत्रियो रक्षति प्रजाः।।**

**अर्जुन उवाच –**

**[2]कुर्यां भूतानि तुष्टोऽहं क्रुद्धो नाशं तथा नये।**
**कर्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः।।**
**[3]पूर्वो ब्रह्मोत्तरो वादो द्वितीयः क्षत्रियोत्तरः।**
**त्वयोक्तौ यौ तु तौ हेतू विशेषस्त्वत्र दृश्यते।।**

पूर्वो वादो ब्रह्मोत्तरः ब्राह्मणाधिक्यवचनं पूर्वपक्षः, क्षत्रियाधिक्यं सिद्धान्त इत्यर्थः। हेतुयुक्तौ प्रजापालनेन हेतुना युक्तौ सहितौ तौ ब्राह्मणक्षत्रियौ।　　　नीटी.

**[4]ब्राह्मणाः संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितम्।**
**श्रितान्ब्रह्मोपधा विप्राः खादन्ति क्षत्रियान्भुवि।।**

ब्रह्म वेदो यज्ञो वा अध्यापनयजनार्थम् एव उपधा छलं येषां ते तथा क्षत्रियान् खादन्ति उपजीवन्ति।　　　नीटी.

**[5]क्षत्रियेष्वाश्रितो धर्मः प्रजानां परिपालनम्।**
**क्षत्राद्वृत्तिर्ब्राह्मणानां तैः कथं ब्राह्मणो वरः।।**
**सर्वभूतप्रधानांस्तान्भैक्षवृत्तीनहं सदा।**
**आत्मसंभावितान्विप्रान्स्थापयाम्यात्मनो वशे।।**
**[6]कथितं ह्यनयाऽसत्यं गायत्र्या कन्यया दिवि।**
**विजेष्याम्यवशान्सर्वान्ब्राह्मणांश्चर्मवाससः।।**

गायत्र्या सरस्वत्या असत्यं कथितम्। चर्मवाससः अजिनवस्त्रान्।　　　नीटी.

**[7]न च मां च्यावयेद्राष्ट्रात्त्रिषु लोकेषु कश्चन।**
**देवो वा मानुषो वाऽपि तस्माज्ज्येष्ठो द्विजादहम्।।**

(१) भा. १३।१३७।१२; भामु. १३।१५२।१३-१४ यो रक्षति (यः शास्ति वै).
(२) भा. १३।१३७।१३; भामु. १३।१५२।१५ था नये (थाऽनये).
(३) भा. १३।१३७।१४; भामु. १३।१५२।१६ यौ तु तौ हेतू (हेतुयुक्तौ तौ) स्त्वत्र (स्तत्र).
(४) भा. १३।१३७।१५; भामु. १३।१५२।१७ श्रितान्ब्र (क्षिता न्ब्र).
(५) भा. १३।१३७।१६-१७; भामु. १३।१५२।१८-१९.
(६) भा. १३।१३७।१८; भामु. १३।१५२।२० ह्यन (त्वन).
(७) भा. १३।१३७।१९-२१; भामु. १३।१५२।२१-२३.

**अथ ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम्।**
**न हि मे संयुगे कश्चित्सोढुमुत्सहते बलम्।।**
ब्रह्मोत्तरं सन्तम्। नीटी.
**अर्जुनस्य वचः श्रुत्वा वित्रस्ताऽभून्निशाचरी।**
**अथैनमन्तरिक्षस्थस्ततो वायुरभाषत।।**
निशाचरी अन्तर्हिता सरस्वती। यद्वा निशाचरी राक्षस्यपि वित्रस्ताऽभूत्, किमुतान्ये आस्तिकाः? इति भावः। नीटी.

[1]**त्यजैनं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु।**
**एतेषां कुर्वतः पापं राष्ट्रक्षोभो हि ते भवेत्।।**
[2]**अथ वा त्वां महीपाल शमयिष्यन्ति वै द्विजाः।**
**निरसिष्यन्ति वा राष्ट्राद्धतोत्साहं महाबलाः।।**
[3]**तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः।**
**वायुर्वै देवदूतोऽस्मि हितं त्वां प्रब्रवीम्यहम्।।**

**अर्जुन उवाच –**
[4]**अहो त्वयाऽद्य विप्रेषु भक्तिरागः प्रदर्शितः।**
**यादृशं पृथिवी भूतं तादृशं ब्रूहि वै द्विजम्।।**
पृथिवीभूतं पृथिव्यात्मकं भूतम्। नीटी.
[5]**वायोर्वा सदृशं किंचिद्ब्रूहि त्वं ब्राह्मणोत्तमम्।**
**अपां वै सदृशं ब्रूहि सूर्यस्य नभसोऽपि वा।।**

**वायुरुवाच –**
[6]**शृणु मूढ गुणान्कांश्चिद्ब्राह्मणानां महात्मनाम्।**
**ये त्वया कीर्तिता राजंस्तेभ्योऽथ ब्राह्मणो वरः।।**
[7]**त्यक्त्वा महीत्वं भूमिस्तु स्पर्धयाऽङ्गनृपस्य ह।**
**नाशं जगाम तां विप्रो व्यष्टम्भयत कश्यपः।।**

(१) भा. १३।१३७।२२; भामु. १३।१५२।२४ हि ते भवेत् (भविष्यति).
(२) भा. १३।१३७।२३; भामु. १३।१५२।२५ वा (ते) त्साहं (त्साहा).
(३) भा. १३।१३७।२४; भामु. १३।१५२।२६.
(४) भा. १३।१३७।२५; भामु. १३।१५२।२७ याऽद्य (याऽयं) वी भूतं (वीभूतं) वै (मे).
(५) भा. १३।१३७।२६; भामु. १३।१५२।२८ ब्रूहि (वह्नेः).
(६) भा. १३।१३८।१; भामु. १३।१५३।१.
(७) भा. १३।१३८।२; भामु. १३।१५३।२ व्यष्टम्भ (व्यस्तम्भ).

[1]**अक्षया ब्राह्मणा राजन्दिवि चेह च नित्यदा।**
**अपिबत्तेजसा ह्यापः स्वयमेवाङ्गिराः पुरा।।**
[2]**स ताः पिबन्क्षीरमिव नातृप्यत महातपाः।**
**अपूरयन्महौघेन महीं सर्वां च पार्थिव।।**
[3]**तस्मिन्नहं च क्रुद्धे वै जगत्त्यक्त्वा ततो गतः।**
**व्यतिष्ठमग्निहोत्रे च चिरमङ्गिरसो भयात्।।**
अहं वायुः। नीटी.
[4]**अभिशप्तश्च भगवान्गौतमेन पुरंदरः।**
**अहल्यां कामयानो वै धर्मार्थं च न हिंसितः।।**
[5]**तथा समुद्रो नृपते पूर्णो मृष्टेन वारिणा।**
**ब्राह्मणैरभिशप्तः सँल्लवणोदः कृतो विभो।।**
[6]**सुवर्णवर्णो निर्धूमः संहतोर्ध्वशिखः कविः।**
**क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्जितः।।**
कविः अग्निः। नीटी.
[7]**मरुतश्चूर्णितान्पश्य येऽहसन्त महोदधिम्।**
**सुवर्णधारिणा नित्यमवशप्ता द्विजातिना।।**
महतः सगरपुत्रान्। आसन्त उपासन्त। सुवर्णधारिणा शोभनो ब्राह्मणवर्णस्तस्य धारिणा धर्त्रा द्विजातिना कपिलेन। नीटी.

[8]**समो न त्वं द्विजातिभ्यः श्रेष्ठं विद्धि नराधिप।**
**गर्भस्थान्ब्राह्मणान्सम्यङ्नमस्यति किल प्रभुः।।**
[9]**दण्डकानां महद्राज्यं ब्राह्मणेन विनाशितम्।**
**तालजङ्घं महत्क्षत्रमौर्वेणैकेन नाशितम्।।**

(१) भा. १३।१३८।३; भामु. १३।१५३।३ अक्षया (अजेया).
(२) भा. १३।१३८।४; भामु. १३।१५३।४ तपाः (मनाः).
(३) भा. १३।१३८।५; भामु. १३।१५३।५.
(४) भा. १३।१३८।६; भामु. १३।१५३।६ अभिश (अथ श).
(५) भा. १३।१३८।७; भामु. १३।१५३।७ ष्टेन वारिणा (ष्टस्य वारिणः) उत्तरार्धे (ब्राह्मणैरभिशप्तश्च बभूव लवणोदकः।।).
(६) भा. १३।१३८।८; भामु. १३।१५३।८ संह (सङ्ग).
(७) भा. १३।१३८।९; भामु. १३।१५३।९ मरु (मह) येऽहस (ये हास).
(८) भा. १३।१३८।१०; भामु. १३।१५३।१० श्रेष्ठं (श्रेयो).
(९) भा. १३।१३८।११; भामु. १३।१५३।११ महत्क्ष (महाक्ष).

**[1]त्वया च विपुलं राज्यं बलं धर्मः श्रुतं तथा।**
**दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभम्।।**
**[2]अग्निं त्वं यजसे नित्यं कस्मादर्जुन ब्राह्मणम्।**
**स हि सर्वस्य लोकस्य हव्यवाट् किं न वेत्सि तम्।।**

अग्निं ब्राह्मणमित्यन्वयः। नीटी.

**[3]अथ वा ब्राह्मणश्रेष्ठमनु भूतानुपालकम्।**
**कर्तारं जीवलोकस्य कस्माज्जानन्विमुह्यसे।।**

अनुभूतं प्रतिभूतम्। अनुपालकं पोषकम्। नीटी.

**[4]तथा प्रजापतिर्ब्रह्मा अव्यक्तः प्रभवाप्ययः।**
**येनेदं निखिलं विश्वं जनितं स्थावरं चरम्।।**
**[5]अण्डजातं तु ब्रह्माणं केचिदिच्छन्त्यपण्डिताः।**
**अण्डाद्भिन्नादबभुः शैला दिशोऽम्भः पृथिवी दिवम्।।**

ननु ब्रह्माण्डे जातत्वात्कथमण्डमजनयदित्यत्राऽऽह– अण्डेति। केचिदिति। तत्रेत्यर्थः। नीटी.

**[6]द्रष्टव्यं नैतदेवं हि कथं ज्यायस्तमो हि सः।**
**स्मृतमाकाशमण्डं तु तस्माज्जातः पितामहः।।**

दूषयति – द्रष्टव्यमिति। अजत्वादेव ब्रह्मा न अण्डजातः, अण्डजत्ववचनं त्वस्य प्रकारान्तरेणेत्याह – स्मृतमिति। आकाशम् अव्याकृतम्। नीटी.

**[7]तिष्ठेत्कथमिति ब्रूहि न किंचिद्धि तदा भवेत्।**
**अहंकार इति प्रोक्तः सर्वतेजोगतः प्रभुः।।**

आकाशजः पितामहः किमाश्रयेण तिष्ठेदिति चेत् कश्चिद्ब्रूयात्तं प्रति ब्रूहि – 'तदा न किंचिद्भवेत्' इति। पितामहस्य निरधिष्ठानत्वे सति तज्जमिदं सर्वं शून्यमेव स्यात्, न किंचिद्भूयादित्यर्थः। ननु कोऽयं प्रजापतिपदेनोच्यते? अत आह – अहंकार इति प्रोक्त इति। प्रभुः व्यापकः, यतः सर्वतेजोगतः जलचन्द्रन्यायेन कृत्स्नं चैतन्यज्योतिः प्राप्तः। 'द्वितीया श्रिता०' (पासू. २।१।२४) इति समासः। अयं भावः – सुषुप्तिसदृशादव्याकृताकाशादुत्थितोऽहंकाररूप उपाधिः। तेन साक्षी सर्वात्मनाऽवच्छिन्नः। सोऽयमहंकारविशिष्टो बाह्यं व्योमादिकं कल्पितवान्। एवं शास्त्रानुभवाभ्यां जानाति स ब्राह्मणो जगत्कर्ता। तेन तव साम्यं समुद्रेण तरङ्गस्येव कदाचिदपि न संभवतीति। नीटी.

**[1]नास्त्यण्डमस्ति तु ब्रह्मा स राजल्लँोकभावनः।**
**इत्युक्तः स तदा तूष्णीमभूद्वायुस्तमब्रवीत्।।**

अत एव अण्डं नास्ति, रज्जूरगवत्कल्पनामात्रत्वात्। कल्पकस्तु स ब्रह्मा ब्राह्मणोऽस्तीत्युक्तम्। स राजाऽर्जुन इति वायुनोक्तः संस्तूष्णीमभूत्। ततो वायुरब्रवीत्, वक्ष्यमाणमर्थमिति शेषः। नीटी.

**वायुरुवाच –**

**[2]इमां भूमिं ब्राह्मणेभ्यो दित्सुर्वै दक्षिणां पुरा।**
**अङ्गो नाम नृपो राजंस्ततश्चिन्तां मही ययौ।।**
**[3]धारणीं सर्वभूतानामयं प्राप्य वरो नृपः।**
**कथमिच्छति मां दातुं द्विजेभ्यो ब्रह्मणः सुताम्।।**
**[4]साऽहं त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः पदम्।**
**अयं सराष्ट्रो नृपतिर्मा भूदिति ततोऽगमत्।।**

भूमित्वं त्यक्त्वा ब्रह्मणः पदं गमिष्यामीति संबन्धः। नीटी.

**ततस्तां कश्यपो दृष्ट्वा व्रजन्तीं पृथिवीं तदा।**
**प्रविवेश महीं सद्यो मुक्त्वाऽऽत्मानं समाहितः।।**

आत्मानं देहं त्यक्त्वा निर्जीवं महीदेहं प्रविश्य सजीवं योगबलेन कृतवान्। नीटी.

**[5]रुद्धा सा सर्वतो जज्ञे तृणौषधिसमन्विता।**
**धर्मोत्तरा नष्टभया भूमिरासीत्ततो नृप।।**

---

(१) **भा. १३।१३८।१२; भामु. १३।१५३।१२** धर्मः (धर्म).

(२) **भा. १३।१३८।१३; भामु. १३।१५३।१३** द्वितीयचरणे (कस्माद्ब्राह्मणमर्जुन).

(३) **भा. १३।१३८।१४; भामु. १३।१५३।१४** मनु भू (मनुभू).

(४) **भा. १३।१३८।१५; भामु. १३।१५३।१५** भवाप्य (भुरव्य).

(५) **भा. १३।१३८।१६; भामु. १३।१५३।१६.**

(६) **भा. १३।१३८।१७; भामु. १३।१५३।१७** ज्यायस्तमो (जायेदजो).

(७) **भा. १३।१३८।१८; भामु. १३।१५३।१८.**

(१) **भा. १३।१३८।१९; भामु. १३।१५३।१९** राजल्लँो (राजा लो) मब्र (तोऽब्र).

(२) **भा. १३।१३९।१; भामु. १३।१५४।१** ब्राह्मणेभ्यो (द्विजातिभ्यो).

(३) **भा. १३।१३९।२; भामु. १३।१५४।२** धार (धारि).

(४) **भा. १३।१३९।३-४; भामु. १३।१५४।३-४.**

(५) **भा. १३।१३९।५; भामु. १३।१५४।५** रुद्धा (ऋद्धा).

भूमिस्तु धर्मोत्तरा स्वधर्मबलेन ब्रह्मलोकं गत्वा नष्टभयाऽऽसीदित्यर्थः। नीटी.

[1]एवं वर्षसहस्राणि दिव्यानि विपुलव्रतः।
त्रिंशतं कश्यपो राजन्भूमिरासीदतन्द्रितः।।

कश्यपो भूमिर्भूत्वाऽऽसीदित्यन्वयः। नीटी.

[2]अथाऽऽगम्य महाराज नमस्कृत्य च कश्यपम्।
पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः।।
[3]एष राजन्नीदृशो वै ब्राह्मणः कश्यपोऽभवत्।
अन्यं प्रब्रूहि वाऽपि त्वं कश्यपात्क्षत्रियं वरम्।।
[4]तूष्णीं बभूव नृपतिः पवनस्त्वब्रवीत्पुनः।
शृणु राजन्नुतथ्यस्य जातस्याऽऽङ्गिरसे कुले।।
भद्रा सोमस्य दुहिता रूपेण परमा मता।
तस्यास्तुल्यं पतिं सोम उतथ्यं समपश्यत।।
[5]सा च तीव्रं तपस्तेपे महाभागा यशस्विनी।
उतथ्यं तु महाभागं तत्कृतेऽवरयत्तदा।।
[6]तत आहूय सोतथ्यं ददावत्र यशस्विनीम्।
भार्यार्थे स च जग्राह विधिवद्भूरिदक्षिणः।।

सः अत्रिः सोमपिता उतथ्यमाहूय तां तस्मै ददौ। सोतथ्यमिति संधिरार्षः। नीटी.

[7]तां त्वकामयत श्रीमान्वरुणः पूर्वमेव ह।
स चाऽऽगम्य वनप्रस्थं यमुनायां जहार ताम्।।
[8]जलेश्वरस्तु हृत्वा तामनयत् स्वपुरं प्रति।
परमाद्भुतसंकाशं षट्सहस्रशतह्रदम्।।
[9]न हि रम्यतरं किंचित्तस्मादन्यत्पुरोत्तमम्।
प्रासादैरप्सरोभिश्च दिव्यैः कामैश्च शोभितम्।
तत्र देवस्तया सार्धं रेमे राजञ्जलेश्वरः।।

देवः वरुणः। तया भद्रया। नीटी.

अथाऽऽख्यातमुतथ्याय ततः पत्न्यवमर्दनम्।।
[1]तच्छ्रुत्वा नारदात्सर्वमुतथ्यो नारदं तदा।
प्रोवाच गच्छ ब्रूहि त्वं वरुणं परुषं वचः।
मद्वाक्यान्मुञ्च मे भार्यां कस्माद्वा हृतवानसि।।
[2]लोकपालोऽसि लोकानां न लोकस्य विलोपकः।
सोमेन दत्ता भार्या मे त्वया चापहृताऽद्य वै।।
[3]इत्युक्तो वचनात्तस्य नारदेन जलेश्वरः।
मुञ्च भार्यामुतथ्यस्येत्यथ तं वरुणोऽब्रवीत्।
ममैषा सुप्रिया भार्या नैनामुत्स्रष्टुमुत्सहे।।
[4]इत्युक्तो वरुणेनाथ नारदः प्राप्य तं मुनिम्।
उतथ्यमब्रवीद्वाक्यं नातिहृष्टमना इव।।
गले गृहीत्वा क्षिप्तोऽस्मि वरुणेन महामुने।
न प्रयच्छति ते भार्यां यत्ते कार्यं कुरुष्व तत्।।
नारदस्य वचः श्रुत्वा क्रुद्धः प्राज्वलदङ्गिराः।
अपिबत्तेजसा वारि विष्टभ्य सुमहातपाः।।
[5]पीयमाने च सर्वस्मिंस्तोये वै सलिलेश्वरः।
सुहृद्भिः क्षिप्यमाणोऽपि नैवामुञ्चत तां तदा।।
[6]ततः क्रुद्धोऽब्रवीद्भूमिमुतथ्यो ब्राह्मणोत्तमः।
दर्शयस्व स्थलं भद्रे षट्सहस्रशतह्रदम्।।
[7]ततस्तदिरिणं जातं समुद्रश्चापसर्पितः।
तस्माद्देशान्नदीं चैव प्रोवाचासौ द्विजोत्तमः।।

---

(१) भा. १३।१३९।६; भामु. १३।१५४।६ शतं (शतः).

(२) भा. १३।१३९।७; भामु. १३।१५४।७.

(३) भा. १३।१३९।८; भामु. १३।१५४।८ वाऽपि त्वं (वा त्वं च).

(४) भा. १३।१३९।९-१०; भामु. १३।१५४।९-१०.

(५) भा. १३।१३९।११; भामु. १३।१५४।११ उत्तरार्धे (उतथ्यार्थे तु चार्वङ्गी परं नियममास्थिता।।).

(६) भा. १३।१३९।१२; भामु. १३।१५४।१२ वत्र य (वत्रियं).

(७) भा. १३।१३९।१३; भामु. १३।१५४।१३.

(८) भा. १३।१३९।१४; भामु. १३।१५४।१४ स्वपुरं (स्वं पुरं).

(९) भा. १३।१३९।१५-१६; भामु. १३।१५४।१५-१६.

(१) भा. १३।१३९।१७; भामु. १३।१५४।१७-१८ कस्माद्वा (कस्मात्तां).

(२) भा. १३।१३९।१८; भामु. १३।१५४।१८-१९.

(३) भा. १३।१३९।१९; भामु. १३।१५४।१९-२० द्वितीयपङ्क्तौ (मुञ्च भार्यामुतथ्यस्य कस्मात्त्वं हृतवानसि। इति श्रुत्वा वचस्तस्य सोऽथ तं वरुणोऽब्रवीत्।।).

(४) भा. १३।१३९।२०-२२; भामु. १३।१५४।२१-२३.

(५) भा. १३।१३९।२३; भामु. १३।१५४।२४ च (तु) ये वै (येऽपि) दृभिः क्षिप्य (दृभिर्मिक्ष).

(६) भा. १३।१३९।२४; भामु. १३।१५४।२५.

(७) भा. १३।१३९।२५; भामु. १३।१५४।२६ दिरिण (दीरिण) श्चापसर्पितः (स्यावसर्पतः).

[1]अदृश्या गच्छ भीरु त्वं सरस्वति मरुं प्रति।
अपुण्य एष भवतु देशस्त्यक्तस्त्वया शुभे।।
[2]तस्मिन्संचूर्णिते देशे भद्रामादाय वारिपः।
अददाच्छरणं गत्वा भार्यामाङ्गिरसाय वै।।
[3]प्रतिगृह्य तु तां भार्यामुतथ्यः सुमनाऽभवत्।
मुमोच च जगद्दुःखाद्वरुणं चैव हैहय।।
जगद्वरुणं च दुःखान्मुमोच मोचयामास। नीटी.
ततः स लब्ध्वा तां भार्यां वरुणं प्राह धर्मवित्।
उतथ्यः सुमहातेजा यत्तच्छृणु नराधिप।।
मयैषा तपसा प्राप्ता क्रोशतस्ते जलाधिप।
इत्युक्त्वा तामुपादाय स्वमेव भवनं ययौ।।
एष राजन्नीदृशो वै उतथ्यो ब्राह्मणर्षभः।
ब्रवीम्यहं ब्रूहि वा त्वमुतथ्यात्क्षत्रियं वरम्।।

भीष्म उवाच —

[4]इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत्।
शृणु राजन्नगस्त्यस्य माहात्म्यं ब्राह्मणस्य ह।।
[5]असुरैर्निर्जिता देवा निरुत्साहाश्च ते कृताः।
यज्ञाश्चैषां हृताः सर्वे पितृभ्यश्च स्वधा तथा।।
[6]कर्मेज्या मानवानां च दानवैर्हैहयर्षभ।
भ्रष्टैश्वर्यास्ततो देवाश्चेरुः पृथ्वीमिति श्रुतिः।।
ततः कदाचित्ते राजन्दीप्तमादित्यवर्चसम्।
ददृशुस्तेजसा युक्तमगस्त्यं विपुलव्रतम्।।
[7]अभिवाद्य च तं देवा दृष्ट्वा च यशसा वृतम्।
इदमूचुर्महात्मानं वाक्यं काले जनाधिप।।
[8]दानवैर्युधि भग्नाः स्म तथैश्वर्याच्च भ्रंशिताः।
तदस्मान्नो भयात्तीव्रात् त्राहि त्वं मुनिपुंगव।।

(१) भा. १३।१३९।२६; भामु. १३।१५४।२७ मरुं प्र (मरून्प्र).
(२) भा. १३।१३९।२७; भामु. १३।१५४।२८ चूर्णिते (शोषिते).
(३) भा. १३।१३९।२८-३१; भामु. १३।१५४।२९-३२.
(४) भा. १३।१४०।१; भामु. १३।१५५।१ तदा तू (नृपस्तू).
(५) भा. १३।१४०।२; भामु. १३।१५५।२ चतुर्थचरणे (पितृणां च स्वधास्तथा).
(६) भा. १३।१४०।३-४; भामु. १३।१५५।३-४.
(७) भा. १३।१४०।५; भामु. १३।१५५।५ पूर्वार्धे (अभिवाद्य तु तं देवाः पृष्ट्वा कुशलमेव च।).
(८) भा. १३।१४०।६-७; भामु. १३।१५५।६-७.

इत्युक्तः स तदा देवैरगस्त्यः कुपितोऽभवत्।
प्रजज्वाल च तेजस्वी कालाग्निरिव संक्षये।।
[1]तेन दीप्तांशुजालेन निर्दग्धा दानवास्तदा।
अन्तरिक्षान्महाराज न्यपतन्त सहस्रशः।।
[2]दह्यमानास्तु ते दैत्यास्तस्यागस्त्यस्य तेजसा।
उभौ लोकौ परित्यज्य ययुः काष्ठां स्म दक्षिणाम्।।
[3]बलिस्तु यजते यज्ञमश्वमेधं महीं गतः।
येऽन्ये खस्था महीस्थाश्च ते न दग्धाः महासुराः।।
[4]ततो लोकाः पुनः प्राप्ताः सुरैः शान्तं च तद्रजः।
अथैनमब्रुवन्देवा भूमिष्ठानसुराञ्जहि।।
[5]इत्युक्त आह देवान्स न शक्नोमि महीगतान्।
दग्धुं तपो हि क्षीयेन्मे धक्ष्यामीति च पार्थिव।।
[6]एवं दग्धा भगवता दानवाः स्वेन तेजसा।
अगस्त्येन तदा राजंस्तपसा भावितात्मना।।
ईदृशश्चाप्यगस्त्यो हि कथितस्ते मयाऽनघ।
ब्रवीम्यहं ब्रूहि वा त्वमगस्त्यात्क्षत्रियं वरम्।।
[7]इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत्।
शृणु राजन्वसिष्ठस्य मुख्यं कर्म यशस्विनः।।
[8]आदित्याः सत्रमासन्त सरो वै मानसं प्रति।
वसिष्ठं मनसा गत्वा श्रुत्वा तत्रास्य गोचरम्।।

(१) भा. १३।१४०।८; भामु. १३।१५५।८ न्यपतन्त (निपेतुस्ते).
(२) भा. १३।१४०।९; भामु. १३।१५५।९ ययुः काष्ठां स्म (गताः काष्ठां तु).
(३) भा. १३।१४०।१०; भामु. १३।१५५।१० न्ये खस्था (न्येऽधस्था) ते न (तेन).
(४) भा. १३।१४०।११; भामु. १३।१५५।११ न्तं च तद्रजः (न्तभयैर्नृप).
(५) भा. १३।१४०।१२; भामु. १३।१५५।१२ क्त आह (क्तः प्राह) शक्नोमि (शक्तोऽस्मि) धक्ष्यामीति च (न शक्यामीति).
(६) भा. १३।१४०।१३-१४; भामु. १३।१५५।१३-१४.
(७) भा. १३।१४०।१५; भामु. १३।१५५।१५ श्लोकादौ 'भीष्म उवाच' इति निर्देशः.
(८) भा. १३।१४०।१६; भामु. १३।१५५।१६ चतुर्थचरणे (ज्ञात्वा तत्तस्य गौरवम्).

[1]यजमानांस्तु तान्दृष्ट्वा व्यग्रान्दीक्षानुकर्शितान्।
हन्तुमिच्छन्ति शैलाभाः खलिनो नाम दानवाः।।
[2]अदूरात्तु ततस्तेषां ब्रह्मदत्तवरं सरः।
हता हता वै ते तत्र जीवन्त्याप्लुत्य दानवाः।।
[3]ते प्रगृह्य महाघोरान्पर्वतान्परिघान्द्रुमान्।
विक्षोभयन्तः सलिलमुत्थिताः शतयोजनम्।।
[4]अभ्यद्रवन्त देवांस्ते सहस्राणि दशैव ह।
ततस्तैरर्दिता देवाः शरणं वासवं ययुः।।
[5]स च तैर्व्यथितः शक्रो वसिष्ठं शरणं ययौ।
ततोऽभयं ददौ तेभ्यो वसिष्ठो भगवानृषिः।।
[6]तथा तान्दुःखिताञ्जानन्नानृशंस्यपरो मुनिः।
अयत्नेनादहत्सर्वान्खलिनः स्वेन तेजसा।।
[7]कैलासं प्रस्थितां चापि नदीं गङ्गां महातपाः।
आनयत्तत्सरो दिव्यं तया भिन्नं च तत्सरः।।
[8]सरो भिन्नं तया नद्या सरयूः सा ततोऽभवत्।
हताश्च खलिनो यत्र स देशः खलिनोऽभवत्।।
एवं सेन्द्रा वसिष्ठेन रक्षितास्त्रिदिवौकसः।
ब्रह्मदत्तवराश्चैव हता दैत्या महात्मना।।
[9]एतत्कर्म वसिष्ठस्य कथितं ते मयाऽनघ।
ब्रवीम्यहं ब्रूहि वा त्वं वसिष्ठात्क्षत्रियं वरम्।।

भीष्म उवाच —

[10]इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्तमब्रवीत्।
शृणु मे हैहयश्रेष्ठ कर्मात्रेः सुमहात्मनः।।
घोरे तमस्ययुध्यन्त सहिता देवदानवाः।
अविध्यत शरैस्तत्र स्वर्भानुः सोमभास्करौ।।
अथ ते तमसा ग्रस्ता निहन्यन्ते स्म दानवैः।
देवा नृपतिशार्दूल सहैव बलिभिस्तदा।।
[1]असुरैर्वध्यमानास्ते क्षीणप्राणा दिवौकसः।
अपश्यन्त तपस्यन्तमत्रिं विप्रं महावने।।
[2]अथैनमब्रुवन्देवाः शान्तक्रोधं जितेन्द्रियम्।
असुरैरिषुभिर्विद्धौ चन्द्रादित्याविमावुभौ।।
[3]वयं वध्यामहे चापि शत्रुभिस्तमसाऽऽवृते।
नाधिगच्छाम शान्तिं च भयात् त्रायस्व नः प्रभो।।
[4]कथं रक्षामि भवतस्तेऽब्रुवंश्चन्द्रमा भव।
तिमिरघ्नश्च सविता दस्युहा चैव नो भव।।
[5]एवमुक्तस्तदाऽत्रिस्तु सोमवत्प्रियदर्शनः।
अपश्यत्सौम्यभावं च सूर्यस्य प्रतिदर्शनम्।।
[6]दृष्ट्वा नातिप्रभं सोमं तथा सूर्यं च पार्थिव।
प्रकाशमकरोदत्रिस्तपसा स्वेन संयुगे।।
जगद्वितिमिरं चापि प्रदीप्तमकरोत्तदा।
व्यजयच्छत्रुसंघांश्च देवानां स्वेन तेजसा।।
[7]अत्रिणा दह्यमानांस्तान्दृष्ट्वा देवा महासुरान्।
पराक्रमैस्तेऽपि तदा व्यत्यघ्नन्नत्रिरक्षिताः।।
[8]उद्भासितश्च सविता देवास्त्राता हतासुराः।
अत्रिणा त्वथ सोमत्वं कृतमुत्तमतेजसा।।

---

(१) भा. १३।१४०।१७; भामु. १३।१५५।१७ व्यग्रान्दी (सर्वान्दी) मिच्छन्ति (मैच्छन्त).

(२) भा. १३।१४०।१८; भामु. १३।१५५।१८ ते तत्र (तत्रैते).

(३) भा. १३।१४०।१९; भामु. १३।१५५।१९ ताः शत (तं शत).

(४) भा. १३।१४०।२०; भामु. १३।१५५।२० ह (हि).

(५) भा. १३।१४०।२१; भामु. १३।१५५।२१.

(६) भा. १३।१४०।२२; भामु. १३।१५५।२२ तथा (तदा) ताञ्जानन्ना (तान्ज्ञात्वा आ).

(७) भा. १३।१४०।२३; भामु. १३।१५५।२३ चापि (चैव).

(८) भा. १३।१४०।२४-२५; भामु. १३।१५५।२४-२५.

(९) भा. १३।१४०।२६; भामु. १३।१५५।२६ ते (हि).

(१०) भा. १३।१४१।१-३; भामु. १३।१५६।१-३.

(१) भा. १३।१४१।४; भामु. १३।१५६।४ महावने (तपोधनम्).

(२) भा. १३।१४१।५; भामु. १३।१५६।५.

(३) भा. १३।१४१।६; भामु. १३।१५६।६ गच्छाम (गच्छामि).

(४) भा. १३।१४१।७; भामु. १३।१५६।७ श्लोकादौ 'अत्रिरुवाच' इति निर्देशः, हा चैव (हन्ता च).

(५) भा. १३।१४१।८; भामु. १३।१५६।८ (एवमुक्तस्तदाऽत्रिर्वै तमोनुदभवच्छशी। अपश्यत्सौम्यभावाच्च सोमवत्प्रियदर्शनः।।).

(६) भा. १३।१४१।९-१०; भामु. १३।१५६।९-११.

(७) भा. १३।१४१।११; भामु. १३।१५६।११-१२ व्यत्यघ्नन्नत्रि (व्यघ्नन्नत्रिसु).

(८) भा. १३।१४१।१२; भामु. १३।१५६।१२-१३ सोमत्वं (सामर्थ्यं).

[1]अद्वितीयेन मुनिना जपता चर्मवाससा।
फलभक्षेण राजर्षे पश्य कर्मात्रिणा कृतम्।।
[2]तस्यापि विस्तरेणोक्तं कर्मात्रेः सुमहात्मनः।
ब्रवीम्यहं ब्रूहि वा त्वमत्रितः क्षत्रियं वरम्।।
[3]इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्तमब्रवीत्।
शृणु राजन्महत्कर्म च्यवनस्य महात्मनः।।
[4]अश्विनोः प्रतिसंश्रुत्य च्यवनः पाकशासनम्।
प्रोवाच सहितं देवैः सोमपावश्विनौ कुरु।।

इन्द्र उवाच –

[5]अस्माभिर्वर्जितावेतौ भवेतां सोमपौ कथम्।
देवैर्न संमितावेतौ तस्मान्मैवं वदस्व नः।।
[6]अश्विभ्यां सह नेच्छामः पातुं सोमं महाव्रत।
यदन्यद्वक्ष्यसे विप्र तत्करिष्याम ते वचः।।

च्यवन उवाच –

[7]पिबेतामश्विनौ सोमं भवद्भिः सहिताविमौ।
उभावेतावपि सुरौ सूर्यपुत्रौ सुरेश्वर।।
क्रियतां मद्वचो देवा यथा वै समुदाहृतम्।
एतद्वः कुर्वतां श्रेयो भवेन्नैतदकुर्वताम्।।

इन्द्र उवाच –

[8]अश्विभ्यां सह सोमं वै
न पास्यामि द्विजोत्तम।
पिबन्त्वन्ये यथाकामं
नाहं पातुमिहोत्सहे।।

च्यवन उवाच –

[1]न चेत्करिष्यसि वचो मयोक्तं बलसूदन।
मया प्रमथितः सद्यः सोमं पास्यसि वै मखे।।
[2]ततः कर्म समारब्धं हिताय सहसाऽश्विनोः।
च्यवनेन ततो मन्त्रैरभिभूताः सुराऽभवन्।।
[3]तत्तु कर्म समारब्धं दृष्ट्वेन्द्रः क्रोधमूर्च्छितः।
उद्यम्य विपुलं शैलं च्यवनं समुपाद्रवत्।
तथा वज्रेण भगवानमर्षाकुललोचनः।।
तमापतन्तं दृष्ट्वैव च्यवनस्तपसाऽन्वितः।
अद्भिः सिक्त्वाऽस्तम्भयत्तं सवज्रं सहपर्वतम्।।
[4]अथेन्द्रस्य महाघोरं सोऽसृजच्छत्रुमेव ह।
मदं मन्त्राहुतिमयं व्यादितास्यं महामुनिः।।
[5]तस्य दन्तसहस्रं तु बभूव शतयोजनम्।
द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः।
हनुस्तस्याभवद्भूमावेकश्चास्यास्पृशद्दिवम्।।
[6]जिह्वामूले स्थितास्तस्य सर्वे देवाः सवासवाः।
तिमेरास्यमनुप्राप्ता यथा मत्स्या महार्णवे।।
[7]ते संमन्त्र्य ततो देवा मदस्याऽऽस्यगतास्तदा।
अब्रुवन्सहिताः शक्रं प्रणमास्मै द्विजातये।
अश्विभ्यां सह सोमं च पिबामो विगतज्वराः।।
[8]ततः स प्रणतः शक्रश्चकार च्यवनस्य तत्।
च्यवनः कृतवांस्तौ चाप्यश्विनौ सोमपीथिनौ।।

---

(१) भा. १३।१४१।१३; भामु. १३।१५६।१३-१४ प्रथमचरणे (द्विजेनाग्निद्वितीयेन).

(२) भा. १३।१४१।१४; भामु. १३।१५६।१४.

(३) भा. १३।१४१।१५; भामु. १३।१५६।१५ मब्र (तोऽब्र).

(४) भा. १३।१४१।१६; भामु. १३।१५६।१६ तं दे (तो दे).

(५) भा. १३।१४१।१७; भामु. १३।१५६।१७ वर्जिता (निन्दिता).

(६) भा. १३।१४१।१८ पू.; भामु. १३।१५६।१८ पातुं सोमं (सोमं पातुं).

(७) भामु. १३।१५६।१९-२०.

(८) भा. १३।१४१।१८ पू.; भामु. १३।१५६।२१.

---

(१) भा. १३।१४१।१९; भामु. १३।१५६।२२.

(२) भा. १३।१४१।२०; भामु. १३।१५६।२३ श्लोकादौ 'वायुरुवाच' इति निर्देशः.

(३) भा. १३।१४१।२१-२२; भामु. १३।१५६।२४-२६.

(४) भा. १३।१४१।२३; भामु. १३।१५६।२६-२७ ह (हि) मन्त्रा (नामा).

(५) भा. १३।१४१।२४; भामु. १३।१५६।२७-२८ वेकश्चा (वास्यं चा).

(६) भा. १३।१४१।२५; भामु. १३।१५६।२९.

(७) भा. १३।१४१।२६; भामु. १३।१५६।३०-३१ स्यगतास्तदा (स्य समीपगाः).

(८) भा. १३।१४१।२७; भामु. १३।१५६।३१-३२ वांस्तौ चाप्य (वानेताव) पीथि (पायि).

[१]ततः प्रत्याहरत्कर्म मदं च व्यभजन्मुनिः।
अक्षेषु मृगयायां च पाने स्त्रीषु च वीर्यवान्।।
[२]एतैर्दोषैर्नरो राजन्क्षयं याति न संशयः।
तस्मादेतान्नरो नित्यं दूरतः परिवर्जयेत्।।
[३]एतत्ते च्यवनस्यापि कर्म राजन्प्रकीर्तितम्।
ब्रवीम्यहं ब्रूहि वा त्वं च्यवनात्क्षत्रियं वरम्।।

भीष्म उवाच –

[४]तूष्णीमासीदर्जुनस्तु पवनस्त्वब्रवीत्पुनः।
शृणु मे ब्राह्मणेष्वेव मुख्यं कर्म जनाधिप।।
[५]मदस्याऽऽस्यमनुप्राप्ता यदा सेन्द्रा दिवौकसः।
तदेयं च्यवनेनेह हृता तेषां वसुंधरा।।
[६]उभौ लोकौ हृतौ मत्वा ते देवा दुःखिताभवन्।
शोकार्ताश्च महात्मानं ब्रह्माणं शरणं ययुः।।

देवा ऊचुः –

मदास्यव्यतिषिक्तानामस्माकं लोकपूजित।
च्यवनेन हृता भूमिः कपैश्चापि दिवं प्रभो।।

कपैः असुरविशेषैः। दिवं द्यौः। नीटी.

ब्रह्मोवाच –

गच्छध्वं शरणं विप्रानाशु सेन्द्रा दिवौकसः।
प्रसाद्य तानुभौ लोकाववाप्स्यथ यथा पुरा।।
[७]ते ययुः शरणं विप्रांस्त ऊचुः काञ्जयामहे।
इत्युक्तास्ते द्विजान्प्राहुर्जयतेह कपानिति।
भूगतान्हि विजेतारो वयमित्येव पार्थिव।।
[८]ततः कर्म समारब्धं ब्राह्मणैः कपनाशनम्।
तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनी कपैः।।

धनी (? नि)नामको दूतः। नीटी.

स च तान्ब्राह्मणानाह धनी कपवचो यथा।
भवद्भिः सदृशाः सर्वे कपाः किमिह वर्तते।।
सर्वे वेदविदः प्राज्ञाः सर्वे च क्रतुयाजिनः।
सर्वे सत्यव्रताश्चैव सर्वे तुल्या महर्षिभिः।।
[१]श्रीश्चैव रमते तेषु धारयन्ति श्रियं च ते।
वृथा दारान्न गच्छन्ति वृथा मांसं न भुञ्जते।।
[२]दीप्तमग्निं जुह्वति च गुरूणां वचने स्थिताः।
सर्वे च नियतात्मानो बालानां संविभागिनः।।
[३]उपेत्य शकटैर्यान्ति न सेवन्ति रजस्वलाम्।
स्वर्गतिं चैव गच्छन्ति तथैव शुभकर्मिणः।।
[४]अभुक्तवत्सु नाश्नन्ति गर्भिणीवृद्धकादिषु।
पूर्वाह्णेषु न दीव्यन्ति दिवा चैव न शेरते।।
[५]एतैश्चान्यैश्च बहुभिर्गुणैर्युक्तान्कथं कपान्।
विजेष्यथ निवर्तध्वं निवृत्तानां शुभं हि वः।।

ब्राह्मणा ऊचुः –

[६]कपान्वयं विजेष्यामो ये देवास्ते वयं स्मृताः।
तस्माद्वध्याः कपाऽस्माकं धनिन्याहि यथागतम्।।
[७]धनी गत्वा कपानाह न वो विप्राः प्रियंकराः।
गृहीत्वाऽस्त्राण्यथो विप्रान्कपाः सर्वे समाद्रवन्।।
[८]समुदग्रध्वजान्दृष्ट्वा कपान्सर्वे द्विजातयः।
व्यसृजञ्ज्वलितानग्नीन्कपानां प्राणनाशनान्।।

---

(१) भा. १३।१४१।२८; भामु. १३।१५६।३२-३३.

(२) भा. १३।१४१।२९; भामु. १३।१५६।३३-३४ नरो (नरा) याति (यान्ति).

(३) भा. १३।१४१।३०; भामु. १३।१५६।३५ च्यवनात्क्षत्रियं व (क्षत्रियं ब्राह्मणाद्व).

(४) भा. १३।१४२।१; भामु. १३।१५७।१.

(५) भा. १३।१४२।२; भामु. १३।१५७।२ तदेयं (तदैव).

(६) भा. १३।१४२।३-५; भामु. १३।१५७।३-५.

(७) भा. १३।१४२।६; भामु. १३।१५७।६-७ प्रांस्त ऊचुः (प्रानूचुस्ते) त्येव पार्थिव (त्यब्रुवन् द्विजाः).

(८) भा. १३।१४२।७-९; भामु. १३।१५७।७-१०.

(१) भा. १३।१४२।१०; भामु. १३।१५७।१०-११ वृथा दा (वृथादा).

(२) भा. १३।१४२।११; भामु. १३।१५७।११-१२ जुह्वति (जुह्वते).

(३) भा. १३।१४२।१२ पू.; भामु. १३।१५७।१२ शकटै (शनकै).

(४) भा. १३।१४२।१२ द्वितीयतृतीयचरणौ न स्तः; भामु. १३।१५७।१३.

(५) भा. १३।१४२।१३; भामु. १३।१५७।१४ शुभं (सुखं).

(६) भा. १३।१४२।१४; भामु. १३।१५७।१५.

(७) भा. १३।१४२।१५; भामु. १३।१५७।१६ ण्यथो (ण्यतो).

(८) भा. १३।१४२।१६; भामु. १३।१५७।१७.

[1]ब्रह्मसृष्टा हव्यभुजः कपान् भुक्त्वा सनातनाः।
नभसीव यथाऽभ्राणि व्यराजन्त नराधिप।
प्रशशंसुर्द्विजांश्चैव ब्रह्माणं च यशस्विनम्।।
[2]तेषां तेजस्तथा वीर्यं देवानां ववृधे ततः।
अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम्।।
[3]इत्युक्तवचनं वायुमर्जुनः प्रत्यभाषत।
प्रतिपूज्य महाबाहो यत्तच्छृणु नराधिप।।
[4]जीवाम्यहं ब्राह्मणार्थे सर्वथा सततं प्रभो।
ब्रह्मणे ब्राह्मणेभ्यश्च प्रणमामि च नित्यशः।।
[5]दत्तात्रेयप्रसादाच्च मया प्राप्तमिदं यशः।
लोके च परमा कीर्तिर्धर्मश्च चरितो महान्।।
[6]अहो ब्राह्मणकर्माणि यथा मारुत तत्त्वतः।
त्वया प्रोक्तानि कार्त्स्न्येन श्रुतानि प्रयतेन ह।।

वायुरुवाच –

[7]ब्राह्मणान् क्षत्रधर्मेण पालयस्वेन्द्रियाणि च।
भृगुभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति।।
§ [8]व्युष्टिं ब्राह्मणपूजायां रौक्मिणेय निबोध मे।
एते हि सोमराजान ईश्वराः सुखदुःखयोः।।
[9]अस्मिंल्लोके रौक्मिणेय तथाऽमुष्मिंश्च पुत्रक।
ब्राह्मणप्रमुखं सौख्यं न मेऽत्रास्ति विचारणा।।

---

§ प्रद्युम्नं प्रति वासुदेवस्योक्तिरियम्।

(१) भा. १३।१४२।१७; भामु.१३।१५७।१८,२१ भुक्त्वा (हत्वा) तृतीयपङ्क्तौ (प्रशशंसुर्द्विजांश्चापि ब्राह्मणांश्च यशस्विनः।।).

(२) भा. १३।१४२।१८; भामु. १३।१५७।२२.

(३) भा. १३।१४२।१९; भामु. १३।१५७।२३ प्रत्यभाषत (प्रत्युवाच ह) नराधिप (युधिष्ठिर).

(४) भा. १३।१४२।२०; भामु. १३।१५७।२४ श्लोकादौ 'अर्जुन उवाच' इति निर्देशः, ब्राह्मणार्थे (ब्राह्मणार्थं) ब्रह्मणे (ब्रह्मण्यो).

(५) भा. १३।१४२।२१; भामु. १३।१५७।२५ यशः (बलम्) श्च चरि (श्चाऽऽचरि).

(६) भा. १३।१४२।२२; भामु. १३।१५७।२६ यथा (मया) ह (च).

(७) भा. १३।१४२।२३; भामु. १३।१५७।२७ क्षत्र (क्षात्र).

(८) भा. १३।१४४।६; भामु. १३।१५९।७.

(९) भा. १३।१४४।७; भामु. १३।१५९।८ सौख्यं (सौम्यं).

सौम्यं कल्याणम्। नीटी.

[1]ब्राह्मणप्रमुखं वीर्यमायुः कीर्तिर्यशो बलम्।
लोका लोकेश्वराश्चैव सर्वे ब्राह्मणपूर्वकाः।।
[2]त्रिवर्गे चापवर्गे च यशःश्रीरोगशान्तिषु।
देवतापितृपूजासु संतोष्याश्चैव नो द्विजाः।।
[3]तत्कथं नाऽऽद्रियेयं वै ईश्वरोऽस्मीति पुत्रक।
मा ते मन्युर्महाबाहो भवत्वत्र द्विजान्प्रति।।
[4]ब्राह्मणो हि महद्भूतमस्मिंल्लोके परत्र च।
भस्म कुर्युर्जगदिदं क्रुद्धाः प्रत्यक्षदर्शिनः।।
[5]अन्यानपि सृजेयुश्च लोकांल्लोकेश्वरांस्तथा।
कथं तेषु न वर्तेय सम्यग्ज्ञानात्सुतेजसः।।
[6]अवसन्मद्गृहे तात ब्राह्मणो हरिपिङ्गलः।
चीरवासा बिल्वदण्डी दीर्घश्मश्रुनखादिमान्।
दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि।।
[7]स स्म संचरते लोकान्ये दिव्या ये च मानुषाः।
इमा गाथा गायमानश्चत्वरेषु सभासु च।।
[8]दुर्वाससं वासयेत्को ब्राह्मणं सत्कृतं गृहे।
रोषणः सर्वभूतानां सूक्ष्मेऽप्यपकृते कृते।।
परिभाषां च मे श्रुत्वा को नु दद्यात्प्रतिश्रयम्।
यो मां कश्चिद्वासयेत न स मां कोपयेदिह।।
[9]तं स्म नाऽऽद्रियते कश्चित्ततोऽहं तमवासयम्।।

---

(१) भा. १३।१४४।८; भामु. १३।१५९।९ प्रमुखं वीर्य (प्रतिपूजाया) पूर्वकाः (पूजकाः).

(२) भामु. १३।१५९।१०.

(३) भा. १३।१४४।९; भामु. १३।१५९।११ नाऽऽद्रियेयं वै ई (वै नाऽऽद्रियेयमी).

(४) भा. १३।१४४।१०; भामु. १३।१५९।१२ णो हि (णा हि).

(५) भा. १३।१४४।११; भामु. १३।१५९।१३ वर्तेय (वर्तेरन्).

(६) भा. १३।१४४।१२; भामु. १३।१५९।१४-१५ श्रुनखादिमान् (श्रुः कृशो महान्).

(७) भा. १३।१४४।१३; भामु. १३।१५९।१५-१६ स्म संच (स्वैरं च) मा गाथा (मां गाथां).

(८) भा. १३।१४४।१४ द्वितीयपङ्क्तिर्न विद्यते; भामु. १३।१५९।१६-१८ येत (यीत) येदिह (येदिति).

(९) भा. १३।१४४।१५; भामु. १३।१५९।१८ तं स्म ना (यस्मान्ना) तमवा (समवा).

¹स स्म भुङ्क्ते सहस्राणां बहूनामन्नमेकदा।
एकदा स्माल्पकं भुङ्क्ते न वैति च पुनर्गृहान्।।
²अकस्माच्च प्रहसति तथाऽकस्मात्प्ररोदिति।
न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा।।
³सोऽस्मदावसथं गत्वा शय्याश्चाऽऽस्तरणानि च।
कन्याश्चालंकृता दग्ध्वा ततो व्यपगतः स्वयम्।।
⁴अथ मामब्रवीद्भूयः स मुनिः संशितव्रतः।
कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः।।
⁵सदैव तु मया तस्य चित्तज्ञेन गृहे जनः।
सर्वाण्येवान्नपानानि भक्ष्याश्चोच्चावचास्तथा।
भवन्तु सत्कृतानीति पूर्वमेव प्रचोदितः।।
⁶ततोऽहं ज्वलमानं वै पायसं प्रत्यवेदयम्।
तद्भुक्त्वैव तु स क्षिप्रं ततो वचनमब्रवीत्।
क्षिप्रमङ्गानि लिम्पस्व पायसेनेति स स्म ह।।
⁷अविमृश्यैव च ततः कृतवानस्मि तत्तथा।
तेनोच्छिष्टेन गात्राणि शिरश्चैवाभ्यमृक्षयम्।।
⁸स ददर्श तदाऽभ्याशे मातरं ते शुभाननाम्।
तामपि स्मयमानः स पायसेनाभ्यलेपयत्।।
⁹मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत्।
तमारुह्य रथं चैव निर्ययौ स गृहान्मम।।
अग्निवर्णो ज्वलन्धीमान्स द्विजो रथधुर्यवत्।
प्रतोदेनातुददबालां रुक्मिणीं मम पश्यतः।।

(१) भा. १३।१४४।१६; भामु. १३।१५९।१९ स्म भु (संभु) स्माल्प (सोऽल्प) वैति च (चैवैति).

(२) भा. १३।१४४।१७; भामु. १३।१५९।२०.

(३) भा. १३।१४४।१८; भामु. १३।१५९।२१ सोऽस्मदाव (अथ स्वाव) शय्याश्चा (स शय्या) स्वयम् (पुनः).

(४) भा. १३।१४४।१९; भामु. १३।१५९।२२.

(५) भा. १३।१४४।२०; भामु. १३।१५९।२३-२४ सदैव (तदैव) ण्येवान्नपा (ण्यन्नानि पा) नीति (नीह).

(६) भा. १३।१४४।२१; भामु. १३।१५९।२४-२५ तद्भुक्त्वैव तु स (तं भुक्त्वैव स तु).

(७) भा. १३।१४४।२२; भामु. १३।१५९।२६.

(८) भा. १३।१४४।२३; भामु. १३।१५९।२७ मानः (मानां).

(९) भा. १३।१४४।२४-२५; भामु. १३।१५९।२८-२९.

¹न च मे स्तोकमप्यासीदुःखमीर्ष्याकृतं तदा।
ततः स राजमार्गेण महता निर्ययौ बहिः।।
²तद्दृष्ट्वा महदाश्चर्यं दाशार्हा जातमन्यवः।
तत्राजल्पन्मिथः केचित्समाभाष्य परस्परम्।।
ब्राह्मणा एव जायेरन्नान्यो वर्णः कथंचन।
को ह्येनं रथमास्थाय जीवेदन्यः पुमानिह।।
³आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरं विषम्।
ब्रह्माशीविषदग्धस्य नास्ति कश्चिच्चिकित्सकः।।
⁴तस्मिन्व्रजति दुर्धर्षे प्रास्खलद्रुक्मिणी पथि।
तां नामर्षयत श्रीमांस्ततस्तूर्णमचोदयत्।।
⁵ततः परमसंक्रुद्धो रथात्प्रस्कन्द्य स द्विजः।
पदातिरुत्पथेनैव प्राधावद्दक्षिणामुखः।।
⁶तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम्।
तथैव पायसादिग्धः प्रसीद भगवन्निति।।
ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह।
जितः क्रोधस्त्वया कृष्ण प्रकृत्यैव महाभुज।।
⁷न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत।
प्रीतोऽस्मि तव गोविन्द वृणु कामान्यथेप्सितान्।
प्रसन्नस्य च मे तात पश्य व्युष्टिर्यथाविधा।।
⁸यावदेव मनुष्याणामन्ने भावो भविष्यति।
यथैवान्ने तथा तेषां त्वयि भावो भविष्यति।।
यावच्च पुण्या लोकेषु त्वयि कीर्तिर्भविष्यति।
त्रिषु लोकेषु तावच्च वैशिष्ट्यं प्रतिपत्स्यसे।
सुप्रियः सर्वलोकस्य भविष्यसि जनार्दन।।
यत्ते भिन्नं च दग्धं च यच्च किंचिद्विनाशितम्।
सर्वं तथैव द्रष्टाऽसि विशिष्टं वा जनार्दन।।

(१) भा. १३।१४४।२६; भामु. १३।१५९।३० ततः (तथा).

(२) भा. १३।१४४।२७-२८; भामु. १३।१५९।३१-३२.

(३) भा. १३।१४४।२९; भामु. १३।१५९।३३ रं विषम् (रो द्विजः).

(४) भा. १३।१४४।३०; भामु. १३।१५९।३४ तां ना (तन्ना).

(५) भा. १३।१४४।३१; भामु. १३।१५९।३५ प्राधाव (प्राद्रव).

(६) भा. १३।१४४।३२-३३; भामु. १३।१५९।३६-३७.

(७) भा. १३।१४४।३४; भामु. १३।१५९।३८-३९ ष्टिर्यथाविधा (ष्टिं यथाविधि).

(८) भा. १३।१४४।३५-३७; भामु. १३।१५९।३९-४२.

[1]यावदेतत्प्रलिप्तं ते गात्रेषु मधुसूदन।
अतो मृत्युभयं नास्ति यावदिच्छा तवाच्युत।।
[2]न तु पादतले लिप्ते कस्मात्ते पुत्रकाद्य वै।
नैतन्मे प्रियमित्येव स मां प्रीतोऽब्रवीत्तदा।
इत्युक्तोऽहं शरीरं स्वमपश्यं श्रीसमायुतम्।।
[3]रुक्मिणीं चाब्रवीत्प्रीतः सर्वस्त्रीणां वरं यशः।
कीर्तिं चानुत्तमां लोके समवाप्स्यसि शोभने।।
[4]न त्वां जरा वा रोगो वा वैवर्ण्यं चापि भामिनि।
स्प्रक्ष्यन्ति पुण्यगन्धा च कृष्णमाराधयिष्यसि।।
[5]षोडशानां सहस्राणां वधूनां केशवस्य ह।
वरिष्ठा सहलोक्या च केशवस्य भविष्यसि।।
[6]तव मातरमित्युक्त्वा ततो मां पुनरब्रवीत्।
प्रस्थितः सुमहातेजा दुर्वासा वह्निवज्ज्वलन्।।
[7]एषैव ते बुद्धिरस्तु ब्राह्मणान्प्रति केशव।
इत्युक्त्वा स तदा पुत्र तत्रैवान्तरधीयत।।
[8]तस्मिन्नन्तर्हिते चाहमुपांशुव्रतमादिशम्।
यत्किंचिद्ब्राह्मणो ब्रूयात्सर्वं कुर्यामिति प्रभो।।
[9]एतद्व्रतमहं कृत्वा मात्रा ते सह पुत्रक।
ततः परमहृष्टात्मा प्राविशं गृहमेव च।।
प्रविष्टमात्रश्च गृहे सर्वं पश्यामि तन्नवम्।
यद्भिन्नं यच्च वै दग्धं तेन विप्रेण पुत्रक।।

(१) भा. १३।१४४।३८; भामु. १३।१५९।४३ दिच्छा तवा (दिच्छसि चा).

(२) भा. १३।१४४।३९; भामु. १३।१५९।४४-४५ त्येव (त्येवं) स्वमपश्यं (स्वं ददर्श).

(३) भा. १३।१४४।४०; भामु. १३।१५९।४५-४६.

(४) भा. १३।१४४।४१; भामु. १३।१५९।४६-४७ भामिनि (भाविनि).

(५) भा. १३।१४४।४२; भामु. १३।१५९।४७-४८ सहलोक्या (च सलोक्या).

(६) भा. १३।१४४।४३; भामु. १३।१५९।४८-४९ सा वह्निवज्ज्व (साऽग्निरिव ज्व).

(७) भा. १३।१४४।४४; भामु. १३।१५९।४९-५०.

(८) भा. १३।१४४।४५; भामु. १३।१५९।५०-५१ शुव्रत (शु व्रत) दिशम् (चरम्).

(९) भा. १३।१४४।४६-४७; भामु. १३।१५९।५१-५३.

[1]ततोऽहं विस्मयं प्राप्तः सर्वं दृष्ट्वा नवं दृढम्।
अपूजयं च मनसा रौक्मिणेय द्विजं तदा।।
[2]इत्यहं रौक्मिणेयस्य पृच्छतो भरतर्षभ।
माहात्म्यं द्विजमुख्यस्य सर्वमाख्यातवांस्तदा।।

ब्राह्मणप्रशंसा, वृत्त्यर्थविद्याहीनाश्रयनिषेधः,
ब्राह्मणसंबन्धाभावेन स्वकर्मत्यागाच्च
क्षत्रियाणां वृषलत्वप्राप्तिः,
क्षत्रियासु ब्राह्मणेभ्यः
क्षत्रियोत्पत्तिः

[3]ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता।
तामन्वेहि महाबाहो स्वर्गस्यैते हि देशिकाः।।
[4]ब्राह्मणानेव सेवस्व सत्कृत्य बहुमन्य च।
एतेष्वेव त्विमे लोकाः कृत्स्ना इति निबोध तान्।।
[5]अमृतं ब्राह्मणा गाव इत्येतत्त्रयमेकतः।
तस्माद्गोब्राह्मणं नित्यमर्चयेत यथाविधि।।
[6]यदि विद्यामुपाश्रित्य नरः सुखमवाप्नुयात्।
न विद्वान्विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत्।।
[7]ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः।
आचार्या ऋत्विजश्चैव पूजनीया नराधिप।।
[8]विदिताः क्षत्रधर्मास्ते येषां युद्धेन जीविका।।
[9]क्षत्रादेवं ब्रह्मबलं गरीयो
न ब्रह्मतः किंचिदन्यद्गरीयः।
सोऽहं जानन्ब्रह्मतेजो यथाव-
न्न संवर्तं गन्तुमिच्छामि शक्र।।

(१) भा. १३।१४४।४८; भामु. १३।१५९।५३-५४ द्विजं तदा (सदा द्विजान्).

(२) भा. १३।१४४।४९; भामु. १३।१५९।५४-५५.

(३) भा. १३।१४७।२३; भामु. १३।१६२।२४ स्वर्ग (धर्म).

(४) भा. १३।१४७।२५; भामु. १३।१६२।२६.

(५) भा. १३।१४८।१६; भामु. १३।१६२।४२-४३.

(६) भा. १३।१४९।७; भामु. १३।१६३।८-९.

(७) भा. १३।१५३।५०; भामु. १३।१६७।५२ नरा (जना).

(८) भा. १४।२।१६; भामु. १४।२।१६.

(९) भा. १४।९।३७; भामु. १४।९।३७ क्षत्रादेवं ब्र (क्षात्राद्बलाद्ब्र) गन्तु (जेतु).

[१]**ततस्तु क्षत्रियाः केचिज्जमदग्निं निहत्य च।**
**विविशुर्गिरिदुर्गाणि मृगाः सिंहार्दिता इव।।**
[२]**तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठताम्।**
**प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात्।।**
[३]**त एते द्रमिडाः काशाः पुण्ड्राश्च शबरैः सह।**
**वृषलत्वं परिगता व्युत्थानात्क्षत्रधर्मतः।।**
[४]**ततस्तु हतवीरासु क्षत्रियासु पुनः पुनः।**
**द्विजैरुत्पादितं क्षत्रं जामदग्न्यो न्यकृन्तत।।**

ब्राह्मणक्षत्रियवैश्यवृत्तयः, आपन्निवृत्तौ आपद्वृत्तित्यागः, अनावश्यकधर्मार्थ-वित्तार्जनात् वित्तानर्जनं श्रेयः

[५]**त्रीणि कर्माणि यानीह ब्राह्मणानां तु जीविका।**
**याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः।।**
[६]**यद्ददाति यज्जुहोति यत्तपस्यति यदर्चति।**
**तस्य षड्भागभुग्राजा सम्यग्भवति रक्षणात्।।**
**आहिताग्निस्तु यो विप्रः प्रातःस्नायी जितेन्द्रियः।**
**तस्य षड्भागमात्रेण तत्पापं संतरिष्यसि।।**
[७]**तिलचर्मरसाश्चैव विक्रेयाः पशुवाजिनः।**
**वणिक्पथमुपासीनैर्वैश्यैर्वैश्यपथि स्थितैः।।**
[८]**फलाच्छुल्काच्च वसनान्मृदुस्निग्धाच्च भोजनात्।**
**अपरप्रेष्यभावाच्च ऊर्ध्वमिच्छन्व्रजत्यधः।।**
अपरप्रेष्यभावः स्वातन्त्र्यमात्रम्। गृर. ४२८
[९]**धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी।**
**प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्।।**

(१) **भा.** १४।२९।१४; **भामु.** १४।२९।१४ द्वितीयचरणे (ज्जामदग्न्यभयार्दिताः).

(२) **भा.** १४।२९।१५; **भामु.** १४।२९।१५.

(३) **भा.** १४।२९।१६; **भामु.** १४।२९।१६ प्रथमचरणे (एवं ते द्रविडाऽऽभीराः) धर्मतः (धर्मिणः).

(४) **भा.** १४।२९।१७; **भामु.** १४।२९।१७ ततस्तु (ततश्च).

(५) **भा.** १४।४५।२२; **भामु.** १४।४५।२२ यानीह (जानीत).

(६) **निप्र.** २।२७६.

(७) **पमा.** १।४१६ आनुशासनिके; **मर.** १९४ तिल (नील).

(८) **गृक.** १९० फला (स्थूला) वस (वच) ऊर्ध्वमि (भूय इ); **गृर.** ४२८.

(९) **गृक.** २४९-२५०; **गृर.** ४६८; **निप्र.** २।२४९.

(१) धर्मार्थमिति आवश्यककर्मातिरिक्तधर्माभिप्रायम्।

† गृक. २५०

(२) 'धर्मार्थं.....' इत्येतन्महाभारतवचनं (तत् ?) निन्दितमहादानादिप्रतिग्रहादिपरमेव, 'प्रक्षालनाद्धि पङ्कस्य' इति वाक्यशेषात्, दायाद्यादिधने पङ्काभावात्।

निप्र. २।२४९

हलवाहकबलीवर्दविषयका धर्माः

[१]**वाहयेद्धुंकृतेनैव शाखया वा सपत्रया।**
**न दण्डेन न यष्ट्या वा न पाशेन न दारुणा।।**
[२]**न क्षुत्तृष्णाश्रमश्रान्तं वाहयेद्विकलेन्द्रियम्।**
**सुतृप्तेषु च भुञ्जीयात्पिबेत्पीतेषु चोदकम्।।**
[३]**अह्नः पूर्वं द्वियामं वा धुर्याणां वाहनं स्मृतम्।**
**विश्राम्येन्मध्यमे भागे भागे चान्त्ये यथासुखम्।।**
[४]**यत्र वा त्वरया कृत्यं संश्रयो यत्र वाऽध्वनि।**
**वाहयेत्तत्र धुर्यांस्तु न स पापेन लिप्यते।।**
[५]**अन्यथा वाहयन्राजन् नियतं याति रौरवम्।।**
[६]**रुधिरं वाहयेत्तेषां यस्तु मोहान्नराधमः।**
**भ्रूणहत्यासमं पापं तस्य स्यात्पाण्डुनन्दन।।**

† गृर. गृकवत्।

(१) **पमा.** १।४२८ न दारुणा (च वा पुनः) आश्वमेधिके; **आपा.** १३९ सपत्रया (सुयन्त्रया) आश्वमेधिके; **मर.** १७८ द्धुंकृते (द्धुकृते) पू. आश्वमेधिके; **संम.** ७९ भारते.

(२) **पमा.** १।४२८ आश्वमेधिके; **आपा.** १३९ च (तु) यात्पिबेत्पीतेषु चो (त पिबेत्पीतेम्बु वो) आश्वमेधिके; **मर.** १७८ वाहये (योजये) आश्वमेधिके.

(३) **पमा.** १।४२८ आश्वमेधिके; **आपा.** १३९ विश्राम्ये (विश्रमे) भागे चान्त्ये (भागस्यान्ते) आश्वमेधिके; **मर.** १७८ पूर्वं द्वियामं (पूर्वेऽह्नि यामं) (स्मृतम्०) विश्राम्ये (विश्रामे) चान्त्ये (वान्ते).

(४) **पमा.** १।४२८ कृत्यं (नित्यं) धुर्या (धूर्या), आश्वमेधिके; **आपा.** १३९ वा त्व (च त्व) संश्रयो (संशयो) धुर्या (धूर्या) आश्वमेधिके; **मर.** १७८ वा त्व (च त्व) श्रयो (शयो) आश्वमेधिके.

(५) **पमा.** १।४२८ आश्वमेधिके; **आपा.** १३९ यन्रा (येद्रा) आश्वमेधिके; **मर.** १७८ आश्वमेधिके.

(६) **पमा.** १।४२८ आश्वमेधिके; **आपा.** १३९ आश्वमेधिके; **मर.** १७८ येत्तेषां (येदेषां) समं (कृतं) आश्वमेधिके.

## हरिवंशः

वानप्रस्थानां वनं वृत्तिः, वर्णोत्पत्तिः, श्वेतादि-
वर्णप्रयुक्तं वर्ण इति जातिनाम, त्रैवर्णिकानां
वेदाधिकारः, शूद्रस्य नास्ति
वेदाधिकारः

[1]**द्विजानां वृत्तयस्तिस्रो ये गृहाश्रमवासिनः।**
**अस्माकं तु वनं वृत्तिर्वन्याश्रमनिवासिनाम्।।**

तिस्रः याजनाध्यापनप्रतिग्रहाख्याः वृत्तयः जीविकाः। नीटी.

[2]**अक्षराद्ब्राह्मणाः सौम्याः क्षरात्क्षत्रियबान्धवाः।**
**वैश्या विकारतश्चैव शूद्रा धूमविकारतः।।**

अक्षरं शुद्धसत्त्वमयत्वान्निष्कामो धर्मः श्वेतः सुधावत्। क्षरं सत्त्वरजोमयत्वादुभयमिश्रो धर्मः रक्तः। तदुभयसंघातवत् विकारो रजोमयत्वात्सकामो धर्मः पीतो हरिद्रावत्। धूमः तमोमयत्वाद्विधर्मः कृष्णः धूमवत्। नीटी.

**श्वेतलोहितकैर्वर्णैः पीतैर्नीलैश्च ब्राह्मणाः।**
**अभिनिर्वर्तिता वर्णाश्चिन्तयानेन विष्णुना।।**
**ततो वर्णत्वमापन्नाः प्रजा लोके चतुर्विधाः।**
**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महीपते।।**

ततः वर्णगुणोपचारात्। नीटी.

**एकलिङ्गाः पृथग्धर्मा द्विपदाः परमाद्भुताः।**
**यातनायाभिसंपन्ना गतिज्ञाः सर्वकर्मसु।।**

एकलिङ्गाः तुल्याकृतयः। यातनाय कर्मफलभोगाय संपन्नास्तेन तेन वर्णेन। नीटी.

**त्रयाणां वर्णजातानां वेदप्रोक्ताः क्रियाः स्मृताः।**
**तेन ब्राह्मणयोगेन वैष्णवेन महीपते।।**

येन कारणेन त्रयाणामेव वेदप्रोक्ताः क्रियाः स्मृतास्तेन कारणेन वः युष्माकं त्रयाणां ब्राह्मणक्षत्रियविशामेव वैष्णवेन योगेन ब्रह्मास्ति, विष्णुभक्त्या वेदोऽस्तीति त्रैवर्णिकत्वं भगवत्कृपैकफललभ्यमित्यर्थः। नीटी.

**ततो निर्माणसंभूताः शूद्राः कर्मविवर्जिताः।**
**तस्मान्नार्हन्ति संस्कारं न ह्यत्र ब्रह्म विद्यते।।**

(१) **हरि.** ३५।३४; **हरिमु.** १।४५।३४ वन्या (वना).
(२) **हरिमु.** ३।२१।९-१३, १५-१७.

प्रकृतां सृष्टिमनुसरति – तत इति। निर्माणं शिल्पं त्रैवर्णिकसेवाकरणं वा, तदर्थमेव संभूताः। संस्कारम् उपनयनम्। ब्रह्म वेदः। नीटी.

**यथाऽग्नौ धूमसंघातो ह्यरण्या मथ्यमानया।**
**प्रादुर्भूतो विसर्पन्वै नोपयुञ्जन्ति कर्मणि।।**
**एवं शूद्रा विसर्पन्तो भुवि कार्त्स्न्येन जन्मना।**
**नासंस्कृतेन धर्मेण वेदप्रोक्तेन कर्मणा।।**

असंस्कृतं संस्काराभावः, तेन हेतुना वेदप्रोक्तेन धर्मेण नोपयुञ्जन्तीति पूर्वश्लोकगतक्रिययाऽन्वयः। नीटी.

[1]**ब्राह्मणः सर्वथा पूज्यो जन्तुभिर्धर्मकाङ्क्षिभिः।**
**पिशाचा घोरकर्माणो यतन्ते ब्रह्महिंसने।**
**न हन्तव्याः सदा विप्रास्तद्धिंसा नरकावहा।।**
[2]**तव वक्त्राज्जगन्नाथ ब्राह्मणो लोकरक्षकः।**
**प्रादुरासीत्पुराणात्मन्षट्कर्मनिरतः सदा।।**
**राजन्यस्तु तथा बाह्वोरासीत्संरक्षणे रतः।**
**ऊर्वोर्वैश्यस्तथा विष्णोः पादाच्छूद्र उदाहृतः।।**
**एवं वर्णा जगन्नाथ तव देहाज्जनार्दन।।**

## वाल्मीकिरामायणम्

ब्राह्मणप्रशंसा, वर्णोत्पत्तिः,
वाहनकर्मणि दुर्बल-
वृषभयोजन-
निषेधः

[3]**न बलं क्षत्रियस्याऽऽहुर्ब्राह्मणो बलवत्तरः।**
**ब्रह्मन्ब्रह्मबलं दिव्यं क्षत्रात्तु बलवत्तरम्।।**
[4]**विश्वामित्रोऽपि निकृतो विनिःश्वस्येदमब्रवीत्।**
**धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्।।**

क्षत्रियबलं बलं धिक् निन्द्यं बलमित्यर्थः। 'धिगुपर्यादिषु' इति द्वितीया। ब्रह्मतेजसः ब्राह्मण्यरूपतेजसः बलं बलम्। तदेव प्रशस्तमिति यावत्। राभू.

(१) **हरिमु.** ३।८३।११-१२.
(२) **हरिमु.** ३।८८।३६-३८.
(३) **वारा.** १।५३।१४; **वाराकु.** १।५५।१४.
(४) **वारा.** १।५५।२२-२३; **वाराकु.** १।५६।२२-२३ विनिःश्व (विनिश्व).

**[1]एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे।**
**तदेतत्समवेक्ष्याहं प्रसन्नेन्द्रियमानसः।**
**तपो महत्समास्थास्ये यद्वै ब्रह्मत्वकारकम्।।**

सर्वास्त्राणि ब्रह्मास्त्रभिन्नानि। ब्रह्मत्वकारणं ब्राह्मण्यापादकम्। प्रसन्नेन्द्रियमानसः परित्यक्तक्षत्ररोष इत्यर्थः। राभू.

**[2]मनुर्मनुष्याञ्जनयत्कश्यपस्य महात्मनः।**
**ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्च मनुजर्षभ।।**

मनुः कश्यपपत्नी। राभू.

**[3]मुखतो ब्राह्मणा जाता उरसः क्षत्रियास्तथा।**
**ऊरुभ्यां जज्ञिरे वैश्याः पद्भ्यां शूद्रा इति श्रुतिः।।**

**[4]यो दुर्बलं परिश्रान्तं बालिशः पापनिर्भयः।**
**वाहयिष्यत्यनड्वाहं स गोघ्नः पापमाप्स्यति।।**

**[5]शक्तं समर्थं बलिनं वृषं यो वाहयिष्यति।**
**ग्रासोपहारसंयुक्तं न स पापमवाप्स्यति।।**

## मनुः

परमेश्वरस्य मुखाद्यवयवेभ्यो
वर्णसृष्टिः, वर्णानां
वृत्तयः

**[6]लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः।**
**ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत्।।**

(१) पृथिव्यादीनां लोकानां विवृद्ध्यर्थम्। वृद्धिः पुष्टिर्बाहुल्यं वा। ब्राह्मणादिषु चतुर्षु वर्णेषु सत्सु त्रयाणां लोकानां वृद्धिः। 'इतः प्रदानं देवा उपजीवन्ति' (तैसं. ३।२।९।७)। ते च यागाद्यधिकृताः। अतस्तैः कर्म कृतमुभौ लोकौ वर्षयति। पुरुषकर्मप्रचोदिता देवाः। 'आदित्याज्जायते वृष्टिः' (मस्मृ. ३।७६) इति अस्यापि लोकस्य सृ( ? वृ)ष्टिः वृद्धिः। ब्राह्मणादीन् वर्णान्निरवर्तयत् निर्वर्तितवान् असृजत्। मुखबाहूरुपादतः यथाक्रमं मुखाद्ब्राह्मणम्, बाहुभ्यां राजन्यम्, ऊरुभ्यां वैश्यम्, शूद्रं पादत इति। तसिः अपादाने। कारणात्कार्यं निष्कृष्यत इवेति भाति। अपाये सति अपादानत्वम्। आद्यं कंचित् ब्राह्मणं( ? णादिं) स्वमुखा(द्य)वयवेभ्यो दैव्या शक्त्या निर्मितवान्, अद्यतनानां सर्वेषां मिथुनसंप्रयोगद्वारेण तत्तेभ्य उत्पत्तिदर्शनात्। परमार्थतः स्तुतिरेषा वर्णानामुत्कर्षापकर्षप्रदर्शनार्थम्। सर्वेषां भूतानां प्रजापतिः श्रेष्ठः। तस्यापि सर्वेषामङ्गानां मुखम्। ब्राह्मणोऽपि सर्वेषां वर्णानां प्रशस्यतमः। एतेन सामान्येन ब्रह्ममुखादुत्पन्न इत्युच्यते। मुखकर्माध्यापनाद्यतिशयाद्वा मुखत इत्युच्यते। क्षत्रियस्यापि बाहुकर्म युद्धम्। वैश्यस्याप्यूरुकर्म पशून् रक्षतो गोभिश्चरन्तीभिर्भ्रमणम्, स्थलपथवारिपथादिषु वाणिज्यायै गमनम्। शूद्रस्य पादकर्म शुश्रूषा। * मेधा.

(२) लोकानामिति। मुखादिना मुखेन होमादिना ब्राह्मणं क्षत्रेण रक्षयेदित्यादिक्रियाभिः तैस्तैर्वर्णैः लोकरक्षणसंवर्तनार्थम्। मवि.

(३) भूरादीनां बाहुल्यार्थं मुखबाहूरुपादेभ्यो ब्राह्मणक्षत्रियवैश्यशूद्रान्यथाक्रमं निर्मितवान्। ब्राह्मणादिभिः सायंप्रातरग्नावाहुतिः प्रक्षिप्ता सूर्यमुपतिष्ठते, सूर्याद्वृष्टिः, वृष्टेरन्नम्, अन्नात्प्रजाबाहुल्यम्। वक्ष्यति च – 'अग्नौ प्रास्ताहुतिः सम्यगादित्यम्–' इत्यादि। दैव्या च शक्त्या मुखादिभ्यो ब्राह्मणादिनिर्माणं ब्रह्मणो न विशङ्कनीयम्, श्रुतिसिद्धत्वात्। तथाच श्रुतिः – 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादि। ममु.

(४) अथ चातुर्वर्ण्याभिमानि(नी)नां देवतानां सृष्टिमाह – लोकानामिति। प्रभुरित्यनुवर्तते। + नन्द.

(५) वेदादिष्वधिकारार्थं वर्णानां जनिस्थानकृतश्रैष्ठ्यान्याह – लोकानां त्विति। विवृद्ध्यर्थं स्वधर्मानुष्ठानेन विविधप्रकारवृद्ध्यर्थं निरवर्तयत् मुखादिभ्यो विप्रादिचतुष्टयं जनितवान्। मच.

---

(१) **वारा.** १।५५।२३-२४; **वाराकु.** १।५६।२३-२४ कारकम् (कारणम्).

(२) **वारा.** ३।१३।२९; **वाराकु.** ३।१४।२९ द्वितीयचरणे (रामपुत्रान्यशस्विनः).

(३) **वारा.** ३।१३।३०; **वाराकु.** ३।१४।३०.

(४) **गृक.** १९८ बालिशः (बालिशं); **गृर.** ४३३; **निप्र.** २।३१० निर्भयः (निश्चयः).

(५) **गृक.** १९८ वृषं यो (यो वृषं); **गृर.** ४३३ पमवाप्स्यति (पं प्रयास्यति); **निप्र.** २।३१०.

(६) **मस्मृ.** १।३१; **मुक्ता.** १७; **शूक.** ३.

* गोरा., भाच. मेधागतम्।

\+ शेषं मेधागतम्।

[1]**सर्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः।**
**मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयत्।।**

(१) उक्तः कालविभागः। ब्राह्मणादीनां गुणा इदानीं कथ्यन्ते। तत्रायमुपक्रमः। सर्वस्य सर्गस्य सर्वेषां लोकानां गुप्त्यर्थं रक्षार्थं महातेजाः प्रजापतिः मुखादिजातानां ब्राह्मणादीनां चतुर्णां वर्णानां दृष्टादृष्टार्थानि कर्माण्यकल्पयत् व्यवस्थापितवान्। मेधा.

(२) स महादीप्तिर्ब्रह्माऽस्य सर्गस्य जगतः 'अग्नौ प्रास्ताहुतिः' (मस्मृ. ३।७६) इत्यादिन्यायेन रक्षार्थं मुखादिजातानां ब्राह्मणादीनां पृथक् पृथक् कर्माणि अदृष्टार्थानि वृत्त्यर्थानि च कल्पितवान्। एतानि सृष्टिशेषत्वेनेहाभिधीयन्ते। तथाच 'सर्वस्यास्य तु सर्गस्य गुप्त्यर्थम्' इत्युक्तम्। विधिस्त्वेषामस्यार्थवादप्रकरणत्वादुत्तरत्र भविष्यति। * गोरा.

(३) 'येषां तु यादृशम्' (मस्मृ. १।४२) इति प्राक्प्रतिज्ञातं प्रक्रमते – सर्वस्येति। गुप्त्यर्थं ब्राह्मणैर्यज्ञादिद्वारा अन्यै रक्षणादिद्वारा गुप्तिं रक्षां कर्तुम्। मवि.

(४) संप्रत्यनुवादपुरःसरं प्रतिवर्णव्यवस्थया धर्मानाह- सर्वस्येति पञ्चभिः। सर्वस्य सृज्यमानप्रपञ्चस्य। सः ब्रह्मा मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयदित्यन्वयः। तथाच श्रुतिः – 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादि। 'पद्भ्यां शूद्र' इति व्यधिकरणनिर्देशो वेदानधिकारसूचनार्थः। अकल्पयदिति 'यथापूर्वमकल्पयत्' इति श्रुतिस्मरणार्थः। तेनानादिव्यवस्थेति। मच.

(५) अथ वर्णधर्मनियमोऽपि हिरण्यगर्भेणैव कल्पितः। तस्मादविमर्शमादरोऽत्र कर्तव्य इत्यभिप्रायेणाऽऽह – सर्वस्येति। (सः) हिरण्यगर्भ( ? र्भः।) सर्गस्य प्रपञ्चस्य। मुखबाहूरुपज्जा(ती ?)नां ब्राह्मणादीनाम्। मुखाद्यङ्गजातत्वोपन्यासः वर्णानामुत्कर्षापकर्षप्रदर्शनार्थः। नन्द.

[2]**अध्यापनमध्ययनं यजनं याजनं तथा।**
**दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्।।**

* ममु., भाच. गोरागतम्।

(१) **मस्मृ.** १।८७; **सस्मृ.** १००.

(२) **मस्मृ.** १।८८; **ब्रक.** ८; **कृर.** १२; **पप्र.** ४५; **सस्मृ.** १३२.

(१) तानीदानीं कर्माण्युच्यन्ते – अध्यापनमिति। † मेधा.

(२) अध्ययनाध्यापने साङ्गवेदस्मृतीनां पठनप्रवचने, यजनयाजने यागार्त्विज्ये, अन्नोदकानि( ? कादिना) यथाशक्त्या प्राणिनामार्त्यपहरणं दानम्, साधुतः प्रतिग्रहं ब्राह्मणानां कल्पितवान्। ‡ गोरा.

(३) ब्राह्मणस्य षट्कर्माण्याह – अध्यापनमिति। स्वयमधीयीत, शिष्यानध्यापयेदित्यर्थः। स्वयं यजेत् अन्यान्याजयेत् दानं दद्यात् स्वयं गृह्णीयाच्च। भाच.

[1]**प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च।**
**विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः।।**

(१) विषयाः अभिलाषजनका गीतशब्दादयो भावा उच्यन्ते। तत्र अप्रसङ्गः पुनःपुनरसेवनम्। ¶ मेधा.

(२) इज्या यागः। विषयेषु स्त्र्यादिगतरूपादिषु अत्यन्तमेव परिहारः। समासतः संक्षेपेण। § गोरा.

(३) विषयाप्रसक्तिः इन्द्रियविजयः। $ ब्रक. ९

(४) विषयेषु स्त्र्यादिषु प्रसक्तिः अतिशयेन चित्तस्य निवेशनम्। यद्यपि विप्रादेरप्येतदवश्यं कार्यं तथापि विप्रादीनां व्यसनैर्नापकर्षणम्, य एव व्यसनी तस्यैव नाशः, राज्ञस्तु व्यसनाकृष्टत्वे राष्ट्रस्यैव विनाश इत्येतदर्थमत्रोक्तम्। मवि.

(५) क्षत्रस्य धर्मानाह – प्रजेति। प्रजानां रक्षणं दानमिज्या यागः अध्ययनं वेदाध्ययनं विषये अप्रसक्तिम् अनासक्तिं स ब्रह्मा आदिशत्। भाच.

[2]**पशूनां रक्षणं दानमिज्याऽध्ययनमेव च।**
**वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च।।**

† नन्द. मेधावत्।

‡ मवि., ममु., मच. गोरागतम्।

¶ मच. मेधागतम्।

§ ममु. गोरा–मविगतम्।

$ कृर., पप्र. ब्रकवत्।

(१) **मस्मृ.** १।८९; **ब्रक.** ८ सक्तिश्च (सक्तिं च) समासतः (समादिशत्); **कृर.** १२ ब्रकवत्; **पमा.** १।३९६ ब्रकवत्; **पप्र.** ४५ सक्तिश्च (सक्तिं च); **सस्मृ.** १३२-१३३ ब्रकवत्, अशुद्धो ग्रन्थः.

(२) **मस्मृ.** १।९०; **ब्रक.** ८-९; **कृर.** १२; **पमा.** १।४१६; **मुक्ता.** ६६; **पप्र.** ४५; **आन.** ६३८; **सस्मृ.** १३३.

(१) वणिक्पथः वणिक्कर्मणा स्थलपथवारिपथादिना धनार्जनम्। उपयुज्यमानदेशान्तरीयद्रव्यसंनिधापनं यस्य राज्ञो विषये वसति। कुसीदं वृद्ध्या धनप्रयोगः।

# मेधा.

(२) एषु च त्रयाणामपि वर्णानामिज्याध्ययन-दानान्यदृष्टार्थानि, इतराणि जीविकाः। * मवि.

**¹एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्।**
**एतेषामेव वर्णानां शुश्रूषामनसूयया।।**

(१) प्रभुः प्रजापतिः एकं कर्म शूद्रस्याऽऽदिष्टवान् - एतेषां ब्राह्मणक्षत्रियवैश्यानां शुश्रूषा त्वया कर्तव्या। अनसूयया अनिन्दया। चित्तेनापि तदुपरि विषादो न कर्तव्यः। शुश्रूषा परिचर्या तदुपयोगिकर्मकरणं शरीरसंवाहनादि तच्चित्तानुपालनम्। एतद् दृष्टार्थं शूद्रस्य। अविधायक-त्वाच्चैकमेवेति न दानादयो निषिध्यन्ते। विधिरेषां कर्मणा-मुत्तरत्र भविष्यति। अतः स्वरूपं विभागेन यागादीनां तत्रैव दर्शयिष्यामः। + मेधा.

(२) शुश्रूषा(? अनसूया) अद्वेषः शुश्रूष्यमाणेष्वपि द्विजेषु तद्रहिते कस्मिंश्चन ब्राह्मणे क्षत्रिये वैश्ये वा। शुश्रूषा परिचरणम्। एतच्चास्य जीविकार्थं पारत्रिकं च। अत एवास्य जीविकात्वेन प्रसिद्धेः पारत्रिकत्वेनाध्ययनादेः प्रसङ्गमाशङ्क्यैकमेवेति व्यवच्छिनत्ति। मवि.

(३) प्रभुः ब्रह्मा शूद्रस्य ब्राह्मणादिवर्णत्रयपरिचर्यात्मकं कर्म निर्मितवान्। एकमेवेति प्राधान्यप्रदर्शनार्थम्, दानादेरपि तस्य विहितत्वात्। अनसूयया गुणानिन्दया। ममु.

(४) एकमेवेत्यापद्यपि धर्मान्तरव्यावृत्त्यर्थम्। प्रभुः विराट्। अनसूयेत्ययमभिप्रायः – द्विजानां वेदाध्ययनाद्यु-त्कर्षासहिष्णुतया तत्र न प्रवर्तितव्यम्, 'वेदमुपशृण्वतः त्रपुजतुभ्यां कर्णपूरणम्' इति श्रुतेः प्राणान्तिकप्रायश्चित्त-श्रवणादिति भावः। मच.

# गोरा., ब्रक., ममु., कृर., मच., पप्र., आन., नन्द., भाच. मेधागतम्।

* शेषं मेधागतम्।

\+ गोरा., कृर., नन्द., भाच. मेधागतम्।

(१) मस्मृ. १।९१; ब्रक. ९; कृर. १२; पप्र. ४५; सस्मृ. १३३ तु (च) दिशत् (चरेत्).

### ब्राह्मणप्रशंसा

**¹ऊर्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्तितः।**
**तस्मान्मेध्यतमं त्वस्य मुखमुक्तं स्वयंभुवा।।**

(१) आ पादान्तान्मेध्यः पुरुषः। तस्य नाभेरूर्ध्वमतिशयेन मेध्यम्। ततोऽपि मुखम्। एतच्च स्वयमेव जगत्कारण-पुरुषेणोक्तम्। मेधा.

(२) इदानीं ब्राह्मणादिकर्मविवेकार्थत्वमुखेन शास्त्रस्य स्तुतिमध्ययनश्रवणानुष्ठानफलां कर्तुं ब्राह्मणस्तुतिमाह— ऊर्ध्वमिति। † गोरा.

(३) चतुर्वर्णकार्यमुक्त्वा प्रकृतशास्त्राध्यापकत्वेन ब्राह्मणान्नियन्तुं तत्प्रशंसामुपक्रमते – ऊर्ध्वं नाभेरिति। † मवि.

(४) इदानीं प्राधान्येन सर्गरक्षार्थत्वाद्ब्राह्मणस्य तदु-पक्रमधर्माभिधानत्वाच्चास्य शास्त्रस्य ब्राह्मणस्य स्तुति-माह – ऊर्ध्वमिति। † ममु.

(५) इदानीमर्थवादपूर्वकं ब्राह्मणस्यैव श्रैष्ठ्यं हव्य-कव्यादिभोक्तृत्वं निध्यादिस्वामित्वमेतच्छास्त्राधिकारित्वं च विधत्ते – ऊर्ध्वमिति। † मच.

(६) एवं तावद्वर्णधर्माणां श्रद्धेयतमत्वमुक्तम्। इदानीं तत्प्रवचनाधिकारिणां ब्राह्मणानां वैशिष्ट्यं वक्तुमाह – ऊर्ध्वमिति। † नन्द.

**²उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात्।**
**सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः।।**

(१) उत्तमाङ्गं मूर्धा। ततः उद्भवः उत्पत्तिः ब्राह्मणस्य। ज्येष्ठश्चासावन्येभ्यो वर्णेभ्यः पूर्वं ब्रह्मणा सृष्टः। ब्रह्मणः वेदस्य धारणात्। तस्य हि सविशेषं तद्विहितम्। अतः सर्वस्य जगतोऽस्माद्धेतुत्रयाद्ब्राह्मणः प्रभुः प्रभुरिव। प्रभु-र्विनयेनोपसर्पणीयः, तदाज्ञायां च धर्मे स्थातव्यम्। धर्मतः प्रभुः धर्मे प्रभुरित्यर्थः। आद्यादित्वात्तसिः।

× मेधा.

† शेषं मेधावत्।

× गोरा., मवि., ममु., नन्द., भाच. मेधागतम्।

(१) मस्मृ. १।९२; सस्मृ. १३३ मं त्वस्य (रं चास्य).

(२) मस्मृ. १।९३; ममु. १०।३ द्वितीयचरणमात्रम्; मुक्ता. ६९; सस्मृ. १३३.

(२) ब्रह्मणः वेदस्य सर्गस्य सृष्टस्य ब्राह्मणादेः धर्मादौ शास्ता। 'अन्योन्यं गुरवो विप्राः' इत्युक्तेः विप्रस्यापि विप्रः शास्ता। § मच.

**[1]तं हि स्वयंभूः स्वादास्यात्तपस्तप्त्वाऽऽदितोऽसृजत्।**
**हव्यकव्याभिवाह्याय सर्वस्यास्य च गुप्तये।।**

(१) पूर्वस्यैव हेतुत्रयस्य विशेषार्थमिदम्। अन्यस्यापि पुरुषस्योत्तमाङ्गं प्रधानम्, तं पुनर्ब्राह्मणं स्वयंभूः स्वात् आस्यात् मुखात् असृजत्। तपश्च कृत्वैषोत्तमाङ्गादुत्पत्तिः। ज्यैष्ठ्यमाह – आदितः। यद्देवानुद्दिश्य क्रियते तद्धव्यम्, पितॄनुद्दिश्य यत् क्रियते तत्कव्यम्, तयोरभिवहनाय देवान्पितॄंश्च प्रति प्रापणाय। अभिवाह्यायेति भावे कृत्यः कथंचिद्द्रष्टव्यः, सकर्मत्वाद्वहतेः। तेन च कर्मणा सर्वस्य त्रैलोक्यस्य गुप्तिः परिपालनं भवति। इतःप्रदानं देवा उपजीवन्ति, ते च शीतोष्णवर्षैरोषधीः पचन्ति पाचयन्ति, अतः परस्परोपकाराद्गुप्तिः। * मेधा.

(२) तपस्तप्त्वा। अतस्तपःप्रभावादपि प्रभुरसौ। न त्वेवमन्ये तपसा सृष्टा इत्यर्थः। § मवि.

(३) अभिवाह्याय साक्षाद्वहनाय देवाद्यर्थम्, गुप्तये संरक्षणाय च। यथा गुप्तं च धनमुत्तरकाले सुखहेतुस्तथा ब्राह्मणार्पितमपि। 'ब्राह्मणो हि निधिर्देवः' इति वक्ष्यति। मच.

(४) न चैषां हेतूनामसिद्धिराशङ्कनीयेत्याह – तं हीति। आस्यात् मुखात्। हव्यकव्यातिवाह्याय। हव्यं दैवम्। कव्यं पित्र्यम्। अतिवाह्यम् अतिवाहनं प्रापणम्। देवान् पितॄंश्च हव्यकव्यादिमन्त्रैः प्रापयितुमिति यावत्। अत्र स्वादास्यादित्युत्तमाङ्गोद्भवत्वं समर्थ्यते। तपस्तप्त्वेत्यादरातिशयः। आदित इति ज्यैष्ठ्यम्। हव्यकव्यातिवाह्यायेति वेदधारणम्। अस्य गुप्तय इति प्रपञ्चरक्षणम्। गुप्तिश्चाध्यापनयाजनप्रतिग्रहैरित्यवगन्तव्यम्। नन्द.

**[2]यस्याऽऽस्येन सदाऽश्नन्ति हव्यानि त्रिदिवौकसः।**
**कव्यानि चैव पितरः किं भूतमधिकं ततः।।**

(१) हव्यादिवहनं पूर्वोक्तं दर्शयति। त्रिदिवम् ओकः गृहं येषां त एवमुच्यन्ते स्वर्गवासिनो देवाः। ब्राह्मणेन भुक्तमन्नं देवा उपतिष्ठन्ति। श्राद्धे पित्र्यस्य कर्मणोऽङ्गभूतं विश्वेदेवानुद्दिश्य ब्राह्मणभोजनं विहितम्, तदपेक्ष्यैतदुक्तम्। किं भूतमन्यत् अधिकं श्रेष्ठं ततः तस्मादिति स्वयं विस्मयते। देवाः पितरश्चोत्तमस्थाना मध्यमस्थानाश्चाप्रत्यक्षाः, न तेषां भोजनोपायोऽन्योऽस्ति (अन्यतो ?) ब्राह्मणभोजनात्। अतो महान्ब्राह्मणः। * मेधा.

(२) तमेवाऽऽह – यस्येति। यस्य ब्राह्मणस्य आस्येन मुखेन 'ब्राह्मणे मनुष्येषु' इति श्रुतेः। अग्निरिव देव इति शेषः। हव्यानि देवतोद्देश्यानि चरुपुरोडाशादीनि। कव्यानि पित्रुद्देश्यानि श्राद्धादीनि। किं भूतं जन्तुः दत्तस्य फलप्रापकं वा। ततः विप्रात्। मच.

**[1]भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।**
**बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः।।**

(१) पृथिव्यां ये भावाः स्थावरा वृक्षादयो जङ्गमाः कृमिकीटादयस्ते भूतशब्देनोच्यन्ते। तेषां ये प्राणिनः आहारविहारादिचेष्टासमर्थाः ते श्रेष्ठाः। ते हि पटुतरं सुखमनुभवन्ति। तेषां ये बुद्ध्या जीवन्ति हिताहिते विचिन्वन्ति श्वशृगालादयः। ते हि घर्मेणोपतप्ताः छायामुपसर्पन्ति, शीतेनार्दिता आतपम्, निराहारं स्थानं त्यजन्ति। तेषामधिकतरा मनुष्याः। तेषां च ब्राह्मणाः। ते हि लोके पूज्यतमाः, न च सर्वेण परिभूयन्ते। जातिमात्राश्रयं हि तद्वधे महत्प्रायश्चित्तम्। + मेधा.

(२) अधुना विद्वत्तादिगुणयोगेन ब्राह्मणं स्तोतुमाह – भूतानामिति। तेभ्योऽपि ब्राह्मणाः, अपवर्गाधिकारयोग्यत्वात्। # गोरा.

(३) तर्हि यथा तथा ब्राह्मणः श्रेयानित्यध्ययनादिप्रकर्षो व्यर्थ इति। नेत्याह – भूतानामिति। भूतानाम् आकाशादिभूतविशेषाणां मध्ये प्राणिनः प्राणवन्तः शरीरभूतानि भूतानि।

---

§ शेषं मेधागतम्।

* गोरा., ममु., भाच. मेधागतम्।

(१) **मस्मृ.** १।९४; **मुक्ता.** ६९ कव्याभि (कव्यादि); **सस्मृ.** १३३ मुक्तावत्, अशुद्धिबहुलो ग्रन्थः.

(२) **मस्मृ.** १।९५; **मुक्ता.** ६९; **सस्मृ.** १३३ ततः (तथा).

* गोरा., मवि., ममु., भाच. मेधागतम्।

+ मच., भाच. मेधागतम्। ममु. मेधागतं गोरागतं च।

# शेषं मेधागतम्।

(१) **मस्मृ.** १।९६; **समु.** १३१ (भूतानां प्राणिन श्रेष्ठो नरेषु ब्राह्मणस्तथा।) एतावदेव, व्यासः; **मुक्ता.** ७०; **आन.** ६४१.

तेषां वरस्वरूपाणां मध्ये वरा बुद्धिजीविनः स्वबुद्धिकृतचेष्टया स्वहिताचरणक्षमाः श्रेष्ठाः। मवि.

(४) न च सर्वत्र ब्राह्मणेषु तुल्यबुद्धिः कर्तव्येति श्लोकाभ्यामाह – भूतानामिति। अनयोः पूर्वश्लोको दृष्टान्तार्थः। भूतानां जङ्गमस्थावराणाम्। प्राणिनः जङ्गमाः। बुद्धिजीविनः पश्वादयः। नन्द.

**[1]ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः।**
**कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः।।**

(१) विदुषां श्रैष्ठ्यं महाफलेषु यागादिष्वधिकारात्। तेषामपि कृतबुद्धयः। परिनिष्ठितवेदतत्त्वार्था न बौद्धादिभिः कलुषीक्रियन्ते। तेषामपि कर्तारः कर्मणामनुष्ठातारः। ते हि विहितकरणात्प्रतिषिद्धासेवनाच्च नोपहन्यन्ते। तेषामपि ब्रह्मवादिनः, ब्रह्मस्वरूपत्वात्। तत्र ह्यक्षय्यानन्दः। मेधा.

(२) तेभ्योऽपि विद्वांसः, महाफलकर्माधिकारात्। तेभ्योऽपि कृतबुद्धयः शास्त्रार्थानुष्ठानेषूत्पन्नसंकल्पाः। तेभ्योऽप्यनुष्ठातारः, इष्टानिष्टप्राप्तिपरिहारयुक्तत्वात्। तेभ्योऽपि ज्ञातात्मानः, अपवर्गफलत्वात्। गोरा.

(३) विद्वांसः कर्मकाण्डदण्डनीत्यादिवेदितारः। कृतबुद्धयः कुशलाः सम्यक्तत्त्वज्ञाः। कर्तारः विदित्वाऽनुष्ठातारः। ब्रह्मवादिनः ब्रह्मकाण्डार्थतत्त्वविदः। ब्रह्मवेदिन इति क्वचित्पाठः। अत्र च सर्वत्र पूर्वपूर्वविशेषणवतामेवोत्तरोत्तरविशेषणसंबन्धाद्वैशिष्ट्यम्, अन्यथा ब्राह्मणत्वस्याप्युत्तरेषु अननुवृत्त्यापत्तेः। मवि.

(४) तेष्वपि विद्वांसः यज्ञशास्त्रविदः। तेषु कृतबुद्धयः 'कृतं कर्तव्यं ब्राह्मणेन मयेदम्' इति बुद्धिर्येषां तथा। आलस्यादिना केवलं न कुर्वन्तीति। तथात्वनिश्चये अनुष्ठातारो ये ते कर्तारः। तेष्वपि ब्रह्मविदः ब्रह्मतत्त्वज्ञाः। श्रेष्ठा इति सर्वत्रानुषज्यते, सर्वकर्मणां पारंपर्येण ब्रह्मण्येव तात्पर्येणोपयोगात्, 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति भगवदुक्तेः। मच.

(५) विद्वांसः वेदविदः। कृतबुद्धयः परिचितवेदार्थक-(? र्थाः। क)र्तारः चोदितकर्मकृतः। ब्रह्मवेदिनः परमात्मवेदिनः। एवं वदता ब्रह्मविद्भिरपि कर्म कर्तव्यमिति सूचितम्। + मुक्ता. ७०

**[2]तेषां न पूजनीयोऽन्यस्त्रिषु लोकेषु विद्यते।**
**तपोविद्याविशेषेण पूजयन्ति परस्परम्।**
**ब्रह्मविद्भ्यः परं भूतं न किंचिदिह विद्यते।।**

**[3]उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।**
**स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते।।**

(१) विद्वत्तादिगुणसंबन्धिनो ब्राह्मणस्य विशेषे दर्शिते जातिमात्रं ब्राह्मणं कश्चिदवमन्येत, तन्निवृत्त्यर्थमिदमुच्यते – उत्पत्तिरिति। उत्पत्तिरेव गुणानपहाय जन्मैव ब्राह्मणस्य जातिरेव शाश्वती धर्मस्य मूर्तिः शरीरम्। धर्मार्थमुत्पन्नः द्वितीयेन जन्मनोपनयनेन संस्कृतः। सा हि तस्य धर्मार्थोत्पत्तिर्ब्रह्मत्वाय कल्पते संपद्यते। धर्मशरीरमुज्झित्वा परानन्दभाग्भवतीति स्तुतिः। * मेधा.

(२) या विप्रस्य शरीरोत्पत्तिः सा धर्मस्य मूर्तिः मूर्तावस्था शरीर्यवस्थेति यावत्। शाश्वती चिरस्थायिनी, विप्रस्योत्पत्त्या धर्मस्य चिरमुपचयसिद्धेः। तदाह – स हीति। धर्मार्थं धर्मोत्पादनार्थम्। किंच, अन्येभ्योऽस्यैतदधिकं यथाऽसौ ब्रह्मभूयाय कल्पते मोक्षाय समर्थः। न क्षत्रियादयः, पारिव्राज्यानधिकारात्। अत एवोक्तं पुराणे क्षत्रियस्यापि यतिधर्मो विधीयते इति। यतिधर्मः यमनियमादिः, न तु यतितैव। अत्रापि षष्ठाध्याये 'ब्राह्मणस्य' (मस्मृ. ६।९७) इत्युपसंहरिष्यति। मवि.

**[1]ब्राह्मणो जायमानो हि पृथिव्यामधि जायते।**
**ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये।।**

(१) सर्वलोकस्योपरि भवति। श्रैष्ठ्यमुपरिभावेनाऽऽह। ईश्वरः सर्वभूतानामिति प्रभुत्वम्। धर्माख्यस्य कोषस्य गुप्तये जायते। द्रव्यसंचयः कोषः। उपमानाद्धर्मसंचय उच्यते कोष इति। मेधा.

---

(१) **मस्मृ.** १।९७; **समु.** १३१ वेदिनः (वादिनः) व्यासः; **मेधा.** समुवत्; **मवि.** 'ब्रह्मवादिनः' इत्यपि पाठः; **ममु.** 'ब्रह्मविदः' इति व्याख्येयं पदमुपात्तम्; **मच.** ६।८४ ममुवत्; **मुक्ता.** ७० च (तु); **आन.** ६४१ समुवत्.

+ नन्द. मुक्तावत्। आन., भाच. मुक्तागतम्।
* गोरा., ममु., मच., नन्द., भाच. मेधागतम्।
(१) **मस्मृ.** १।९७ इत्यस्यानन्तरं प्रक्षिप्तः.
(२) **मस्मृ.** १।९८; **मुक्ता.** ६९.
(३) **मस्मृ.** १।९९; **मुक्ता.** ६९ हि (वै).

(२) ब्राह्मण इति। यस्माद्ब्राह्मण उत्पद्यमानो धर्मसंचय-रक्षणार्थं सर्वभूतानाम् ईश्वरः प्रभुः सन् पृथिव्याम् अधिकः एकः श्रेष्ठः शुक्लैः गुणैः जायते तस्मादसौ मूर्तिर्धर्मस्य शाश्वती। पूर्वोक्तहेतुरयम्। कोशः धनसंचयः (न ?)। इहोपचारात् कोशशब्दः। तद्गोप्तृत्वं च ब्राह्मणो( ? णस्यो)-पदेशकत्वात् सर्वधर्माणाम्। ¤ गोरा.

(३) किंच जायमानो जातमात्रः पृथिव्यां वर्तमानो नामा-धिक्येन। आधिक्यमाह – ईश्वर इति। धर्मकोशस्य वेदस्य, 'वेदाद्धर्मो हि निर्बभौ', तथा 'कर्म ब्रह्मोद्भवं विद्धि' इति स्मृतेः। मच.

(४) पृथिव्यां पृथिवीजातेषु अधिजायते उपरि जायते सर्वस्माद्विशिष्ट इत्यर्थः। अत एव सर्वभूतानामीश्वरः। धर्मकोशस्य वेदस्य। नन्द.

ब्राह्मण एव सर्वस्य जागतिकधनस्य
स्वामी सर्वेषामाचारो-
पदेष्टा च

**[१]सर्वं स्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम्।**
**श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति।।**

(१) असंतुष्टस्य प्रतिग्रहादिषु पुनः प्रवृत्तौ दुष्कृति-तामाशङ्क्य समाधत्ते – सर्वमिदं त्रैलोक्यान्तर्वर्ति धनं ब्राह्मणस्य स्वम्। नात्र प्रतिग्रहो विद्यते। प्रभुत्वेनासौ गृह्णाति, न प्रतिग्रहीतृतयेति। प्रशंसैषा, न विधिः। अत एवार्हतिशब्दः। अभिजनः अभिजातताविशिष्टत्वम्। मेधा.

(२) वक्ष्यमाणास्तेयादिशास्त्रविरोधादस्य च श्रुतिप्रधान-त्वात् सर्वं जगद्गतं द्रव्यजातं ब्राह्मणस्वमिव स्तुत्योच्यते। तत्र स्वयमेव यस्मात् श्रेष्ठेनाभिजनेन मुखोद्भवत्वेन सर्वं ब्राह्मणो योग्यो भवति स्वीकर्तुम्, तस्मात्तस्येदं सर्वं स्वमेव। ‡ गोरा.

(३) सर्वस्वमिति। सर्वस्याब्राह्मणस्य यत् संबन्धि स्वं तत् ब्राह्मणस्यैव। एतच्च तस्य हरणे दोषाल्पत्वेनोपचारात्। तत्र हेतुः – श्रैष्ठ्येनेति। अभिजन उत्पत्तिस्थानं पुण्यरूपम्। मवि.

**[१]स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च।**
**आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः।।**

(१) यत्परगृह आतिथ्यादिरूपेण भुङ्क्ते तदात्मीयमेव, नैवं मन्तव्यं परपाकेनेति। स्वं वस्ते। याचित्वाऽयाचित्वा वा वस्त्रं लभते नासौ तस्य लाभाय, अपि तु स्वकस्याऽऽ-च्छादने विनियोगः। तिष्ठतु तावदात्मोपयोगि यद्गृह्णाति तत्र प्रभुत्वम्, यदन्येभ्यो ददाति परकीयं तदपि तस्य नानुचितम्। आनृशंस्यं कारुण्यम्। तदीयया महासत्त्वतया पृथिव्यां राजानः स्वानि धनान्युपभुञ्जते। अन्यथा यद्यसा-विच्छेत् 'अहमेतदादाय स्वकार्ये विनियुञ्जीय' इति तदा सर्वे निर्धना निरुपभोगाः स्युः। † मेधा.

(२) क्षत्रियादिर्यत्स्वार्जितमपि भुङ्क्ते आच्छादयति ददाति च तद् ब्राह्मणस्वमेव। अतस्तद्धनोपभोक्तृत्वात्तस्यासौ प्रेष्य इव प्रेष्यो भृत्यः भृत्य इवेत्यत आह – आनृशंस्यादिति। ब्राह्मणस्य करुणया प्राणिनां स्वेच्छया भोग्यत्वम्। धनस्य विसृष्टत्वान्न मुख्या प्रभुतेत्यर्थः। मवि.

* **[२]एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः।।**

शूद्रयाजनस्य शूद्रात्प्रतिग्रहस्य च
निन्दा

**[३]यावतः संस्पृशेदङ्गैर्ब्राह्मणाञ्छूद्रयाजकः।**
**तावतां न भवेद्दातुः फलं दानस्य पौर्तिकम्।।**

(१) यावतो ब्राह्मणान् स्पृशत्यङ्गैः पङ्क्तिगतः। अत्राप्यङ्गस्य स्पर्शनं न विवक्षितम्। किं तर्हि? पूर्ववत्त-द्देशसंनिधिः। पौर्तिकं फलम्। पूर्तेः भवं पौर्तिकम्। बहि-र्वेदिदानाद्यत् फलं तत् पौर्तिकम्। मेधा.

---

¤ मवि., ममु., भाच. गोरागतम्।

‡ ममु. गोरावत्। मच., मुक्ता., नन्द., भाच. गोरागतम्।

(१) **मस्मृ.** १।१००; **गोरा.** श्रैष्ठ्ये (श्रेष्ठे); **मवि.** सर्वं स्वं (सर्वस्वं); **मुक्ता.** ६९ सर्वं स्वं (सर्वस्वं) श्रैष्ठ्ये (ज्यैष्ठ्ये).

† गोरा., ममु., मच., भाच. मेधागतम्।

* अस्य व्याख्यानानि 'धर्मदेशाः' इत्यस्मिन् प्रकरणे द्रष्टव्यानि।

(१) **मस्मृ.** १।१०१; **मुक्ता.** ६९.

(२) **मस्मृ.** २।२० अन्ये स्थलादिनिर्देशाः 'धर्मदेशाः' इत्यस्मिन् प्रकरणे द्रष्टव्याः।.

(३) **मस्मृ.** ३।१७८; **मेधा.** स्पृशेद (स्पृशत्य); **गोरा.** मेधावत्; **मवि.** तावतां (तावतो); **ममु.** मेधावत्; **भाच.** मेधावत्.

(२) शूद्रस्य पाकयज्ञादेरुपदेष्टा कर्ता च यत्संख्याकान् ब्राह्मणान् अङ्गैः स्पृशति 'आसनेषूपक्लृप्तेषु बर्हिष्मत्सु पृथक्' (मस्मृ. ३।२०८) इति स्पर्शनिषेधात् यावतां पङ्क्तावुपविशति तत्संख्याकानां संबन्धि भोजनफलं न भवतीति। शूद्रयाजकभोजनफलम् (?)। अत एव चाग्रनिषिद्धगणापठितस्यापि निषेधो बोद्धव्यः। गोरा.

(३) तावतः तावद्भ्यः दानस्य फलम्। पौर्तिकमित्यैष्टिकस्याप्युपलक्षणम्। शूद्रयाजकस्य श्राद्धासनसोमयाजनकन्यादानमतीव निरस्तमिति। मवि.

(४) शूद्रस्य यज्ञादावृत्विक् यावत्संख्याकान् ब्राह्मणान् स्पृशति 'आसनेषूपक्लृप्तेषु' इत्यासनभेदस्य वक्ष्यमाणत्वात् मुख्यस्पर्शासंभवे यावतां श्राद्धभोजिनां पङ्क्तावुपविशति तावतां संबन्धि पौर्तिकफलं श्राद्धीयं दातुर्न भवति। 'तावतां पौर्तिकं फलं बहिर्वेदिदानाच्च यत्फलं तन्न भवति' इति मेधातिथिगोविन्दराजौ। अतस्तयैव निन्दया निषिद्धगणापठितस्यापि शूद्रयाजकस्य भोजननिषेधः कल्प्यते।

ममु.

(५) श्राद्धभोजनकाले परस्परं स्पर्शाभावात् शूद्रयाजकस्य पङ्क्तौ प्रवेशाभावपरं (शूद्रयाजक ?)स्पर्शयोग्यदेश(? देशे प्रवेशाभाव)परं वा। पौर्तिकं श्राद्धीयम्।

मच.

(६) ब्राह्मणान् अपङ्क्तिस्थान्। पूर्तं श्राद्धादि, तत्र भवं पौर्तिकम्। नन्द.

(७) शूद्रयाजकः शूद्रयज्ञकर्ता। यावतो ब्राह्मणानङ्गैः स पृशति तावतां दातुर्दानस्य फलं न भवेत्। भाच.

**'वेदविच्चापि विप्रोऽस्य लोभात्कृत्वा प्रतिग्रहम्।**
**विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि।।**

(१) प्रसङ्गाच्छूद्रयाजकस्याप्रतिग्राह्यताऽनेन कथ्यते। वेदविदपि यदि तस्य शूद्रयाजकस्य संबन्धिनो द्रव्यस्य प्रतिग्रहं करोति, लोभादित्यनुवादः, सोऽपि विनाशं व्रजति अभिलषितेनार्थेन वियुज्यते धनपुत्रपशुशरीरादिना। किं पुनरवेदवित्? वेदविदः किल प्रतिग्रहे नातीव दोष इति वक्ष्यति। आमपात्रम् अपक्वं शरावादिभाजनम् अम्भसि जले क्षिप्तम्। « मेधा.

(२) प्रसङ्गाल्लाघवार्थमप्रकृतमप्येतदुक्तम्। अन्यत्र हि क्रियमाणे शूद्रयाजकग्रहणं कर्तव्यं स्यात्। × गोरा.

(३) केचिदस्येति शूद्रस्य परामर्श इत्याहुः। तदसमञ्जसम्, शूद्रस्य तत्राधिकाराभावप्रयोगात्पौनरुक्त्यं स्यात् (?)। तस्मात्तद्याजकस्येत्यस्येति पदम्। * मवि.

अनापदि ब्राह्मणेन यथासंभवं परद्रोहाल्पद्रोहाभ्यां स्वशरीराक्लेशेन च वर्तितव्यम्, ब्राह्मणस्य मुख्या ऋतादयो वृत्तयस्तासां लक्षणानि च, सेवावृत्तिनिषेधः

**'अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।**
**या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि।।**

(१) 'देहि देहि' इति याच्यमानस्य यः परस्य चित्तविकारः खेदात्मको जायते स द्रोहोऽभिप्रेतः, न पुनर्हिंसैव, तस्याः सर्वसामान्येनैव प्रतिषेधात्। अल्पद्रोहेणेति। याच्ञया विना यदि न वर्त्यते तदा स्वल्पं याचितव्यम्, एषोऽल्पद्रोहः। या वृत्तिः जीवनोपायः कृषिसेवादि, यस्यां वृत्तौ परस्य पीडा न भवति सा आश्रयितव्या। सामान्योपदेशोऽयम्। समास्थाय आश्रित्य जीवेत्। आपदि दशमे विधिर्भविष्यति। अस्माच्चोपदेशाद्वक्ष्यमाणाभ्य अन्याऽपि वृत्तिर्भवतीति गम्यते। अन्यथा वक्ष्यमाणविशेषनिष्ठत्वे सामान्यस्योपदेशस्याऽऽनर्थक्यमेव स्यात्। तेन च याजनाध्यापने, कुसीदम् अमृतादिमध्ये अपठितमपि लभ्यते। अल्पीयसी या उञ्छवृत्तिर्गृहीता असौ हि अल्पद्रोहः। तथा च गौतमः- 'कृषिवाणिज्ये चास्वयंकृते। कुसीदं च'(गौध. १०।५-६)। जीवनमात्रोऽयं विधिः, धनसंचयस्तु वक्ष्यमाणैरेव नियतैः कर्मभिः। $ मेधा.

---

(१) **मस्मृ.** ३।१७९; **मेधा.** क्षिप्र (क्षिप्त); **गृक.** २३८ म्भसि (म्भसा); **गृर.** ४६०; **निप्र.** २।२६८ विच्चापि (वानपि): २।२९९ लोभात्कृत्वा (कृत्वा लोभात्).

« नन्द., भाच. मेधागतम्।

× शेषं मेधागतम्। ममु. गोरागतम्।

* शेषं मेधागतम्।

$ गृक., गृर. मेधागतम्।

(१) **मस्मृ.** ४।२; **मेधा.** ४।५ (अल्पद्रोहेण) एतावदेव; **मिता.** १।१२८; **गृक.** १७०; **गृर.** ४१६; **मपा.** २१५ णैव (ण च); **निप्र.** २।२५३:२।२७२ प्रथमचरणमात्रम्; **मुक्ता.** ५९; **विपा.** ३।२।२४६ मपावत्; **नन्द.** ४।२५९ प्रथमचरणमात्रम्; **बाल.** १।११८ पृ. ३६४.

(२) वक्ष्यमाणवृत्तीनां मध्यात् भूतानुपपीडनेन या जीविका शिलोञ्छादिना, तदलाभे अल्पोपपीडनेन याचितादिना या तामाश्रित्य भार्यादिभरणनित्यानुष्ठानसंपत्तौ सत्यां विप्रो जीवेत्। न चात्राल्पजिघांसाभ्यनुज्ञानम्, हिंसाया निषिद्धत्वात्। विप्रग्रहणं क्षत्रियादिव्युदासार्थम्। + तयाऽपि जीवेत्। गोरा.

(३) अद्रोहेण दुःखानुत्पादनेन। अल्पद्रोहेण वृत्त्यसंभवे। जीवेदनापदीत्यापदि बहुद्रोहामपि वृत्तिं कुर्यादित्यर्थः। मवि.

(४) आपदि दशमे विधिर्मविष्यति। अयं च सामान्योपदेशो याजनाध्यापनविशुद्धप्रतिग्रहादिसंग्रहार्थः। वक्ष्यमाणर्तादिविशेषमात्रनिष्ठत्वे सं( ? त्वेऽसं)कुचितस्वरसत्वहानिः, अनधिका(रा ?)र्थत्वम्, याजनादेर्वृत्तिप्रकरणानिवेशश्च स्यात्। तयाऽपि जीवेत्। * ममु.

**[1]यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः।**
**अक्लेशेन शरीरस्य कुर्वीत धनसंचयम्॥**

(१) पूर्वेणान्वाहिकजीवनविधावुपाय उक्तः, अनेन धनसंचये नियम उपदिश्यते। स्वैः कर्मभिः धनसंचयं कुर्यात्। तानि च कर्माण्युत्तरत्र वक्ष्यन्ते। संचयप्रयोजनमाह – यात्रामात्रप्रसिद्ध्यर्थम्। न भोगाय धनसंचयक्लेशः कर्तव्यः, किं तर्हि? यात्रामात्रप्रसिद्ध्यर्थम्। आत्मकुटुम्बस्थितिः यात्रा, तत्परिमाणं यात्रामात्रम्, तस्य प्रसिद्धिः निष्पत्तिः, तदर्थः तत्प्रयोजनम् ( ? नः)। नित्यकर्मनिर्वृत्तिः आत्मस्थितावेवान्तर्भूता (नि ?) तानि ह्यकुर्वतो न आत्मस्थितिः। आह च – 'न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति।' (मस्मृ. ३।७२)। (अथवा ?) सत्यपि शास्त्रीयत्वे यत्र लोको गर्हते तद्वर्ज्यमेव। यथा नरस्य महाकुलीनस्य भुक्तविभवस्य निकृष्टकुलात्प्राप्तश्रीकात् समानजातीयादपि प्रतिग्रहादिना केनचिदुपायेन जीवनम्। अक्लेशेन शरीरस्य। सेवावाणिज्ये महाक्लेशे दूराध्वगमनादिना। तादृशे न कर्तव्ये। संचयः राशीकृतपरिरक्षणम्। + मेधा.

(२) शास्त्रोक्तैः कर्मभिर्वक्ष्यमाणैर्ऋतादिभिरनिन्दितैः शरीरक्लेशपरिहारेण भार्याभरणनित्यानुष्ठानपूर्वकं प्रा( ?-कप्रा)णवृत्तिसमाप्तपरिमाणमर्थसंग्रहं कुर्वीत, नाधिकमिति नियमः। गोरा.

(३) प्राणयात्रा प्राणधारणम्। स्वैः प्रतिग्रहादिभिः। अगर्हितैः असत्प्रतिग्रहादिरहितैः। अक्लेशेन आयासानुत्पादनेन शरीरस्य स्वदेहस्य। धनस्य संचयं संग्रहम्। # मवि.

(४) यात्रा प्राणस्थितिः। शास्त्रीयकुटुम्बसंवर्धननित्यकर्मानुष्ठानपूर्वकप्राणस्थितिमात्रार्थम्, न भोगार्थम्, स्वसंबन्धितया शास्त्रविहितार्जनरूपैः कर्मभिर्ऋतादिवक्ष्यमाणैः कायक्लेशं विनाऽर्थसंग्रहं कुर्यात्। $ ममु.

(५) अगर्हितानि कर्माणि अध्यापनादीनि। « पमा. १।३०८

(६) लौकिकवैदिककर्मणामवश्यकर्तव्यानां निर्वृत्तिः यात्रा। × मुक्ता. ५९

(७) परपीडावदात्मपीडाऽप्यविहिता वर्जनीयेति ज्ञापितमक्लेशेन शरीरस्येति। § नन्द.

(८) अगर्हितानि याजनादीनि। इन्दु. १९८

**[1]ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा।**
**सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन॥**

---

+ अत्रत्यो ग्रन्थस्त्रुटित इति ममुव्याख्यानात्प्रतीयते।

* शेषं गोरावत्। मच., नन्द., भाच. ममुगतम्।

(१) **मस्मृ.** ४।३; **गृक.** १७०; **मवि.** यात्रामात्र (प्राणयात्रा); **स्मृच.** २।४४८; **ममु.** ४।१८६ प्रथमचरणमात्रम्; **गृर.** ४१६; **पमा.** १।३०८; **आपा.** १०८; **निप्र.** २।२५३; **बौवि.** २।४।१६ स्मरणम्; **मुक्ता.** ५९, ३७५; **आन.** ६३२; **बाल.** १।११८ पृ. ३६४; **सस्मृ.** १५८ अशुद्धः पाठः; **आभू.** १४६ स्वैः कर्म (स्वकर्म); **इन्दु.** १९७; **भाच.** मविवत्.

+ गृक., स्मृच., गृर. मेधा-गोरागतम्।

# भाच. मविगतम्।

$ मच. ममुगतम्।

« आभू. पमावत्।

× आन. मुक्तावत्।

§ शेषं मुक्तावत्।

(१) **मस्मृ.** ४।४; **गृक.** १७० न वा (न तु) कदा (कथं); **स्मृच.** २।४५१; **ममु.** १०।८२ (ऋतामृताभ्यां जीवेत) एतावदेव; **गृर.** ४१६ जीवेत्तु (जीवेत) कदा (कथं); **पमा.** १।३०९ गृरवत्; **मपा.** २१६ (ऋतामृताभ्यां जीवेत न श्ववृत्त्या कदाचन।) एतावदेव; **आपा.** ११० न वा (न च) शेषं गृरवत्; १३८ गृरवत्; **मर.** १७६

(१) तानीदानीं कर्माणि नामतस्तावदाह – ऋतामृताभ्यामिति। नाम्नैव केषांचित् स्तुतिः प्रतीयते। प्रयोजनं च प्रशस्ताभावे निन्दितेषु प्रवृत्तिः। तत्र मृतप्रमृते अत्यन्तनिन्दिते। ततोऽपि सत्यानृतम्। यत आह – 'तेनैव वा जीवितव्यम् (? तेन चैवापि जीव्यते – मस्मृ. ४।६)' इति। अपिशब्दोऽरुचिसूचनार्थः। मेधा.

(२) कैस्तैः कर्मभिरित्यत आह – ऋतामृताभ्यामिति। ऋतादिभिरनापदि जीवेत्, न त्वनापदि कदाचिदपि सेवयेति। * गोरा.

(३) ऋतामृताभ्यामिति। ऋतेनामृतेन वेत्यर्थः। सत्यानृताभ्यां तद्द्वयोपलक्षितेन वाणिज्येनेत्यर्थः। मवि.

(४) अद्रोहाल्पद्रोहौ नाम्नैव स्पष्टयन्नगर्हितानि कर्माणि स्वयं व्याचष्टे – ऋतेति। मच.

(५) पूर्वपूर्ववृत्त्युपायालाभे परः पर आस्थेयः। † मुक्ता. ५९

(६) द्वाभ्यामाह – ऋतेति। ऋतामृताभ्यां वा जीवेत् अमृतवृत्त्या वा मृतेन वृत्त्या वा प्रमृतवृत्त्या वा सत्यानृताभ्यां वा। श्ववृत्त्या कथंचन न जीवेत्। भाच.

**ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।**
**मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्।।**

(१) नामतो निर्दिश्य स्वरूपतो व्याचष्टे – ऋतमिति। उञ्छश्च शिलश्च उञ्छशिलम्। तत् ऋतं ज्ञेयं सत्यव्रततुल्यम्। क्षेत्राल्लूनस्य व्रीह्यादेर्गृहं खलं वा नीयमानस्य यः पुलाकः पतितः स्वामिनोऽनपेक्षितस्तस्योच्चयनमुञ्छः, तत् ऋतम्। न तत्रेयं बुद्धिराधेया – 'परकीयमेत्, न गृह्णामि' इति। एवं खलात्परिभ्रष्टस्य लूनस्यालूनस्य वाऽनेकप्ररोहवतो ग्रहणं शिलः। अमृतं स्यादयाचितम्, अत्यन्तप्रीतिकरत्वात्। मृतमिव याचितं भैक्षमिति। याचितमित्येव सिद्धे भैक्षशब्देन सामूहिकतद्धितान्तेन बहवो याचितव्या इत्युच्यते, नैकः कदर्थनीयः। तदुक्तम् – 'अल्पद्रोहेण' इति। प्रायेण च भैक्षशब्दस्य 'भैक्षाश्यात्मविशुद्ध्यर्थम्' (मस्मृ. ११।७२) इत्येवमादौ सिद्धान्नविषये प्रयोगसिद्धेः सामान्यविषयार्थं याचितशब्दोपादानम्। तेन नेदं सिद्धान्नभक्षणमेव, अग्निमतः पराग्निपक्वेन वैश्वदेवादिविरोधात्। न चेदं भोजनार्थमेव भिक्षणम्। किं तर्हि? स्थित्यर्थम्। स्थितिश्च न भोजनमात्रसाध्या गृहस्थस्य। किं तर्हि? यावत्किंचित् गृहोपयोगि। अत एधोदकपरिधानाद्यपि भिक्षितव्यम्, गृहोपकरणं च स्थाल्यपिधानादि। ब्रह्मचारिणस्तु भोजनकाले विधिना पाकासंभवान्नियमतः सिद्धान्नविषयं भैक्षं प्रतीयते। भिक्षाशब्दश्चायं भिक्ष्यमाणद्रव्यगतं परिमाणमप्याचष्टे। भिक्षामात्रं न ददाति याचितः, प्रसृतिमात्रं भिक्षेति। तेन गोहिरण्यादिभिक्षणं न अमृत(? मृत) शब्देनाभ्यनुज्ञायते (अ)प्रतिग्रहाद्यर्था याच्ञेति। ननु भैक्षग्रहणमपि प्रतिग्रह एव। नैव ग्रहणमात्रं प्रतिग्रहः। विशिष्ट एव स्वीकारे प्रतिपूर्वो गृह्णातिर्वर्तते। तेन न स्वीकारमात्रे। 'प्रतिग्रहसमर्थोऽपि' (मस्मृ. ४।१८६) 'प्रतिग्रहः प्रत्यवरः' (मस्मृ. १०।१०९) इति अदृष्टबुद्ध्या दीयमानं मन्त्रपूर्वं गृह्णतः प्रतिग्रहो भवति। न च भैक्षे देवस्य त्वादिमन्त्रोच्चारणमस्ति, न च प्रीत्यादिना दानग्रहणे। न च तत्र प्रतिग्रहव्यवहारः। अतः प्रतिग्रहादर्थान्तरमेवेदं मृतामृतशब्दाभिधेयम्। अतश्च नात्र याच्यमानस्य अयाच्यमानस्य वा महासत्त्वतया उपकारान्तरापेक्षा जायते, येन (? न) वा ददतो जात्याद्यपेक्षा युक्तिमती प्रतिग्राह्यस्य। एव (? वं) करुणया च प्रदीयमानं गृह्णतो न प्रतिग्रहः। ननु च करुणया दानमदृष्टायैव। नेति ब्रूमः। न च तत्र

---

* ममु. गोरावत्।

† नन्द. मुक्तावत्।

जीवेत्तु (जीवेत) न वा (न च) भ्यामपि वा (भ्यां जीवेत); निप्र. २।२५३ जीवेत्तु (जीवेत) मपि (मथ); मच. ४।९ (ऋतामृताभ्यां जीवेत्) एतावदेव; मुक्ता. ५९ न वा (न च); विपा. ३।२।२४६ भ्यामपि वा (भ्यां जीवेत); आन. ३९३ सर्वं ममुवत् : ६३५ भ्यामपि वा (भ्यां जीवेत) शेषं गृरवत्; बाल. १।११८ पृ. ३६४ मपि (मथ) शेषं गृरवत्.

(१) मस्मृ. ४।५; मेधा. १०।८२ चतुर्थचरणमात्रम्; गृक. १७०; स्मृच. २।४५१; गृर. ४१६ भैक्षं (भैक्ष्यं); पमा. १।३०९ भैक्षं (प्रोक्तं); मपा. २१६-२१७ गृरवत्; आपा. ११०: १३८ (ऋतमुञ्छशिलं प्रोक्तं प्रमृतं कर्षणं स्मृतम्) एतावदेव; मर. १७६; निप. ४५२ गृरवत्, तृतीयचरणमात्रम् (=); निप्र. २।२५४ गृरवत्; मुक्ता. ५९ शिलं ज्ञेय (सिलं प्रोक्त) भैक्षं (प्रोक्तं); विपा. ३।२।२४६; आन. ३९३ शिलं ज्ञेय (सिलं प्रोक्त) पू. (=): ५६० द्वितीयचरणमात्रम् (=): ६३१ शिलं ज्ञेय (सिलं प्रोक्त); बाल. १।११८ पृ. ३६४ तु (च).

दानधर्मः। किं तर्हि? करुणाभ्यासात्परोपकाराद्वा। तत्र यथा हितोपदेशादावनुग्राह्यस्य विधिर्जात्यादि नापेक्षते तद्वत्करुणया दाने। तथा च शिष्टा नैवंविधे दाने 'वेदतत्त्वार्थविदुषे ब्राह्मणाय' (मस्मृ. ३।९६) इत्येतदनुरुध्यन्ते। अत एवाब्राह्मणा अपि दैन्यमापन्नाः परेण दत्तं गृह्णाना न ब्राह्मणवृत्तिं प्रतिग्रहमाश्रिता भवन्ति। स्थितमेतत्। प्रतिग्रहे यद्यपि याचितायाचितपूर्वकत्वं विद्यते तथापि न तेनैव मृतामृतशब्दार्थः, विषयान्तरस्य दर्शितत्वात्। याजनाध्यापनयोरप्येतद्रूपमस्ति। कश्चिद्याचित्वा याजकत्वं लभते, कश्चित्प्रार्थ्यते। एवमध्यापने योज्यम्। अतो यावता काचिद्वृत्तिर्याच्ञया सा दैन्यावहत्वात् मरणमिवेति मृतशब्देनाभिधीयते। कर्षणं तु मरणादपि पापीयः। लाङ्गलाकर्षणं हि भारवाहत्वम्। तच्च खलु जनपदकर्म। § मेधा.

(२) कर्षणं च 'भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्' इति बहूनां मरणनिमित्तत्वात्प्रकर्षेण मृतम्। « गोरा.

(३) उञ्छो वा शिलो वा उञ्छशिलम्। तत्र उञ्छः रथ्यादिपतितैकैकबीजग्रहणम्। शिलं सस्यमञ्जरी तदुपलक्षितं(शिलं?)क्षेत्रभूपरित्यक्तैकैकसस्यमञ्जरीग्रहणम्। उभयमृतम्, सत्यलोकप्राप्तिहेतुत्वात्। अयाचितं याच्ञां विनाऽन्यतो लब्धम् अमृतम्, अन्याहिंसनात्। याचितस्य भैक्षमिति नामान्तरम्। तन्मृतम्, परदुःखोत्पादनेन हिंसाहेतुत्वात्। कृषिः प्रमृतम्, प्रकर्षेण प्राणिनां मारकत्वात्। सत्यानृतम्, एकदेशमिथ्याभिधाननियमात्। अत्र याजनाध्यापनप्रतिग्रहैर्लाभोऽपि याचितोऽयाचितो वा भवतीति मृतामृतयोरेवान्तर्भूतत्वान्न पृथगुक्तः। तथाऽत्र 'द्विजातिमुख्यवृत्तीनाम्' (मस्मृ. ३।२८६) इत्युपक्रम्य कृषिवाणिज्ययोरभिधानान्नानयोरापदि वर्णान्तरवृत्तितया ब्राह्मणैरनुष्ठानम्, किंतु स्ववृत्तितयैव। तथा च क्षत्रियवृत्त्यपेक्षया नानयोरुत्कृ(? रपकृ)ष्टत्वम्। कुसीदपाशुपाल्ये तु वैश्यवृत्तितया क्षत्रवृत्तेरप्यपकृष्टे इति ग्राह्यम्। क्व(? के)चित् 'तत्रापि-शब्दात्कुसीदमपि ग्राह्यम्। अत एव गौतमः – 'कृषिवाणिज्ये वा स्व (? अस्व)यंकृते। कुसीदं वा' इति ब्राह्मणमधिकृत्याऽऽह। सूत्रे विभागं (? सूत्रविभागः) पूर्ववृत्तिद्वयासंभवेऽत्यन्तापदि कुसीदाश्रयणमित्येतदर्थम्' इत्याहुः। × मवि.

(४) ऋतादीनामप्रसिद्धत्वात्तत्कथं ज्ञेयम्? तत्राऽऽह – ऋतेति द्वाभ्याम्। आपणादेर्धान्यादीनामेकैकशो ग्रहणम् उञ्छम्, शिलं लूनक्षेत्रादेरनेकधान्यादिकमञ्जर्या ग्रहणमिति द्वयम् (ऋतम्), 'ऋतं च सूनृतावाणी' इत्युक्तेस्तद्वदनुद्वेजकत्वात् (तत् द्वयम्?)। अमृतम्, अयाचितस्यामृतवदयत्नोपस्थित्या तृप्तिहेतुत्वात्। भैक्ष्यं 'देहि देहि' इति चित्तभेत्तृत्वान्मृतम्। मच.

**'सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते।**
**सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्।।**

(१) नैवं मन्तव्यं सत्यानृतोभयरूपता शास्त्रेण वाणिज्येऽभ्यनुज्ञायत इति। किं तर्हि? वस्तुस्वभाववादोऽयम्। लोभग्रहणमेवानृतम्। जीव्यत इतिवचनाद्वाणिज्या जीवनायैव, न धनसंचयाय। सेवा श्ववृत्तिः। यथा हि श्वा प्रेर्यते, कृच्छ्रेण च लभते, तथा च सेवकः। सेवा प्रेष्यत्वम्। यत्रकुत्रचित्कर्मणि प्रेष्यते उचितेऽनुचिते वा स सेवकः। अत उत्कृष्टेनाऽऽयुधकर्मादिना ये राजानमुपसर्पन्ति ते न श्ववृत्तयः। मेधा.

(२) वाणिज्यं च सत्यासत्यव्यवहरणसाध्यत्वात् सत्यानृतम्। तेनापि 'कृषिवाणिज्ये चास्वयंकृते कुसीदं च' इति गौतमस्मरणात् अस्वयंकृतेन जीव्यन्ते (? ते)। सेवा च दीनदृष्टिसंदर्शनादिरूपतया श्ववृत्तिरित्युक्ता। तस्मात्तां प्रकृतो ब्राह्मणः परिवर्जयेत्। ‡ गोरा.

---

§ ममु., गुर., पमा., नन्द. मेधागतम्।

« शेषं मेधागतम्।

× स्मृच. विपा., बाल. मविगतम्।

‡ ममु. गोरागतम्।

(१) **मस्मृ.** ४।६; **मेधा.** ४।४ द्वितीयचरणे (तेनैव वा जीवितव्यम्): १०।८२ प्रथमचरणमात्रम्; **मिता.** १।१०० उत्त.; **गृक.** १७० वृत्तिरा (वृत्तिर्वा) उत्त.; **मवि.** १०।११६ उत्तरार्धस्य निर्देशमात्रम्; **स्मृच.** २।४५१ तु (च); **गृर.** ४१६; **पमा.** १।३०९-३१० वृत्तिरा (वृत्तिर्वि); **मपा.** २१७ वापि जी (वोपजी); **आपा.** ११० पमावत् मपावत् च; **मर.** १७६ न चैवापि जी (नैवोपजी); **निप्र.** २।२५४; **मुक्ता.** ५९; **विपा.** ३।२।२४६ **आन.** ६३१ गृकवत्; **बाल.** १।११८ पृ. ३६५ त्तां (त्तं) शेषं मपावत्; **सस्मृ.** १५९ चैवापि जी (वैश्योपजी) शेषं गृकवत्.

(३) श्ववृत्तिः शुन इव वृत्तिः, तां परिवर्जयेत् प्राणरक्षामात्रस्यान्यतः संभवे। तदभावे तु तामपि ब्राह्मणः कुर्यादित्येतदर्थं ब्राह्मणवृत्तेर्मध्येऽभिधानम्। अत्र चोत्तरोत्तरापेक्षया पूर्वा पूर्वा वृत्तिः श्रेष्ठेति वक्ष्यति। मवि.

(४) सत्यानृतं सत्यं स्वीयं द्रव्यं परकीयमनृतम्, तदात्मकत्वाद्वाणिज्यस्य। सेवा श्ववृत्तिः उन्निद्रादिसप्तगुणः सारमेयस्तद्वृत्तिः। दुःखात्मिका मनुष्यसेवेत्यनुभवसिद्धम्। आपदनापद्भेदेन ऋतादिव्यवस्था। मच.

(५) उञ्छशिलादीनामृतादिसंज्ञाव्यवहारो वृत्तीनां तत्तत्संज्ञानुरूपगुणदोषतारतम्यप्रतिपत्त्यर्थः। नन्द.

(६) सत्यानृतं सत्यं च अनृतं च सत्यानृतं वाणिज्यम्। श्ववृत्तिः सेवा कष्टेन युद्धादिना आख्याता, तस्मात्तां सेवां परिवर्जयेत्। भाच.

धान्यसंचयपरिमाणानां तज्ज्यायस्त्वस्य च तारतम्यम्, धान्यसंचयपरिमाणानां वृत्तिसंख्यानां च परस्पर-संबन्धः

**[१]कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा।**
**त्र्यहैहिको वाऽपि भवेदश्वस्तनिक एव वा।।**

(१) उक्तमात्मकुटुम्बस्थित्यै धनसंचयः कार्यः, न भोगाय क्लेश आश्रयणीयः। तत्तु किमन्वहमर्जनीयम्, उतैकदैव चिरकालपर्याप्तम्? इति नोक्तम्। तत्र कालविलम्बार्थमिदमारभ्यते। कुसूले धान्यमस्येति गमकत्वाद्व्यधिकरणो बहुव्रीहिः। पाठान्तरम् – 'कुशूलधान्यिकः' इति। कुसूलपरिमितं धान्यं कुसूलधान्यम्, तदस्यास्तीति मत्वर्थीय इकशब्दः। धान्याधिकरणमिष्टकादिकृतं कुसूलः कोष्ठः इति चोच्यते। तेन चात्र परिमाणं लक्ष्यते। तत्र यावन्माति तावत्संचेतव्यम्। न पुनराधारनियमोऽस्ति। कुसूलेन च महापरिग्रहणस्यापि बहुभृत्यबन्धुदारदासपुत्रगवाश्वादिमतोऽपि यावता सांवत्सरी स्थितिर्भवति तावदनुज्ञायते। यतो वक्ष्यति – 'यस्य त्रैवार्षिकं भक्तम्' (मस्मृ. ११।७) इति। धान्यग्रहणमप्यविवक्षितम्। सुवर्णरूप्याद्यपि तावत्याः स्थितेः पर्याप्तमर्जयतो न दोषः। सर्वथाऽधिकं ततो नार्जनीयमिति वाक्यार्थः। कुम्भी उष्ट्रिका। षण्मासिको निचय एतेन प्रतिपाद्यत इति स्मरन्ति। त्र्यहमैहिकमस्येति त्र्यहैहिकः। कुटुम्बस्य नित्यकर्मार्थं च भक्तचयं करोति यः स त्र्यहैहिकः। श्वो भवं श्वस्तनं भक्तम्, तदस्यास्तीति पूर्ववत् मत्वर्थीयं कृत्वा नञ्समासः कर्तव्यः। सद्यस्तात्कालिको भवेत्। तदहरर्जितं व्ययीकर्तव्यम्। मेधा.

(२) स च ब्राह्मणः शौचसंकोचधर्मतारतम्यापेक्षया कुसूलधान्यक इति। कोष्ठकप्रमाणधान्यादिसंचयो वा स्यात् द्वादशाहमात्रपर्याप्तधनः। उष्ट्रिकाप्रमाणधान्यादिसंग्रहो वा षडहमात्रपर्याप्तधनः। त्र्यहमात्रपर्याप्तम् ईहायां चेष्टायां भवं धान्यादि यस्य तथा वा स्यात्। श्वोभवं धान्यादि यस्य नाद्याह्निकश्वस्तनो (?) वा स्यात्। एवं यात्रामात्रप्रसिद्ध्यर्थं नित्यस्य संचयसंकोचधर्मतारतम्यापेक्षयाऽयमपवादः। गोरा.

(३) एतच्चानतिसंपन्नं संयतं यायावरं प्रत्युच्यते, न विप्रमात्राभिप्रायेण। तथा सति 'त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः।' (यास्मृ. १।१२४) इत्यनेन न विरोधः। मिता. १।१२८

(४) कुसूलधान्यकः कोष्टिकापरिमितधान्यवान्। कुम्भी मृद्भाण्डविशेषः। त्र्यहैहिकः। ईहा (चेष्टा), तस्यां भवमैहिकं धान्यम्, त्र्यहमैहिकं यस्य स तथा। श्वोभवं श्वस्तनं धान्यम्। †'श्वसस्तुट्च' (पासू. ४।३।१५) इति तुट्। तदस्यास्तीति श्वस्तनिकः। न श्वस्तनिकः अश्वस्तनिकः, सद्यःप्रक्षालक इत्यर्थः। कुसूलकुम्भीपरिमाणं तु एकदिने स्वकुटुम्बवर्तनोचितधान्यस्वीकर्तुः (अ)श्वस्तनापेक्षया त्र्यहैहिकदिनत्रैगुण्यदर्शनात्तदनुसारेणैव कुसूलधान्यककुम्भीधान्यक-

---

(१) **मस्मृ.** ४।७; **मेधा.** धान्यको (धान्यिको) इत्यपि पाठः; **मिता.** १।१२८ कुसू (कुशू) पू.; **अप.** १।१२८; **गृक.** १७१ स्तनिक एव वा (स्तनिक एव च); **मवि.** मितावत्; **स्मृच.** २।४५२ पू.; **गृर.** ४१७ मितावत्; **मपा.** २१६ मितावत्; **निप्र.** २।२५८; **मुक्ता.** ५९ धान्यक एव वा (धान्यक एव च) त्र्यहै (व्यहै); **नन्द.** त्र्यहै (द्व्यहै); **बाल.** १।१२८ पृ. ३८६ उत्त.; **कृभ.** १२९९ उत्त. (=).

† रभसोक्तिरियम्। अनेन सूत्रेण 'कालाट्ठञ्' (पासू. ३।३।११) इत्यधिकृतष्ठञ् तत्संनियोगेन तुट् च विकल्पेन विधीयते। तेनानेन 'शौवस्तिकम्' इति रूपं साध्यते, न 'श्वस्तनम्' इति। श्वस्तनशब्दस्तु 'सायंचिरंप्राह्णे०' (पासू. ४।३।२३) इत्यनेन साध्यते।

योरप्युत्तरोत्तरं दिनत्रैगुण्येन बोद्धव्यम्। अयं च वृत्तिविशेष-परिग्रहो धर्मातिशयार्थं गृहस्थमात्रविषयः, न यायावरविषयः, अनन्तरमेव चतुर्णामे(व ?)तेषामुत्तरोत्तरश्रेष्ठत्वमभिधाय 'षट्कर्मैको भवत्येषाम्' इत्यभिधानात्।

गृक. १७२

(५) तत्र ऋतामृतेषु तत्तद्वृत्त्याश्रितातिरिक्तफलार्थिनां संचयनियममाह – कुशूलेति। कुशूलधान्यः वर्षषण्मासत्रि-मासमासानामन्यतमकालतः कुटुम्बभोजनपर्याप्तधान्यवा-न्कुशूलधान्यवान्। कुम्भीधान्यः षडह(: ?)पर्याप्तधान्यवान् कुम्भस्थधान्यवान्। त्र्यहार्थम् ईहा चेष्टा यस्य स त्र्यहैहिकः। श्वस्तनजीवनपर्याप्ता यस्य वृत्तिर्न भवति सोऽश्वस्तनिकः एकदिनमात्रपर्याप्तधान्यवान्। * मवि.

(६) 'कुसूलो व्रीह्यगारं स्यात्' इत्याभिधानिकाः। इष्टकादिनिर्मितागारधान्यसंचयो भवेत्। अत्र कालविशेषा-पेक्षायां 'यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये। अधिकं वाऽपि विद्येत स सोमं पातुमर्हति।।' (मस्मृ. ११।७) इति मनूक्त एव कालो ग्राह्यः। तेन नित्यनैमित्तिकधर्मकृत्य-पोष्यवर्गसहितस्य गृहिणो यावता धान्यादिधनेन वर्षत्रयं समधिकं वा निर्वाहो भवति तावद्धनः कुसूलधान्यक उच्यते। वर्षनिर्वाहोचितधान्यादिधनः कुम्भीधान्यः, 'प्राक् सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिक भवेत्।' (यास्मृ. १।१२४) इति याज्ञवल्क्येन गृहस्थस्य वार्षिकसंचयाभ्यनुज्ञानात्। मनुरपि यदा वानप्रस्थस्यैव § 'समानिचय एव वा' (मस्मृ. ६।१८)इत्यनेन समानिचयं वक्ष्यति, तदपेक्षया बहुपोष्यवर्गस्य गृहिणः समुचितः संवत्सरं संचयः। मेधातिथिस्तु यावता धान्यादिधनेन बहुभृत्यदारादिमतस्त्रि-संवत्सरस्थितिर्भवति तावत्सुवर्णादिधनवानपि कुसूलधान्य इत्यभिधाय, कुम्भी उष्ट्रिका, षाण्मासिकधान्यादिनिचयः कुम्भीधान्यक इति व्याख्यातवान्। गोविन्दराजस्तु कुसूल-धान्यक इत्येतद्व्याचक्ष्य(? ष्टे) – 'कोष्ठप्रमाणधान्य-संचयो वा स्यात् द्वादशाहमात्रपर्याप्तधनः'। कुम्भीधान्यक इत्येतद्व्याचष्टे – 'उष्ट्रिकाप्रमाणधान्यादिसंचयो वा षडहमात्रपर्याप्तधनः'। 'द्वादशाहं कुसूलेन वृत्तिः कुम्भ्या दिनानि षट्। इमाममूलां गोविन्दराजोक्तिं नानुरुन्ध्महे।।'। ईहा चेष्टा, तस्यां भवम् ऐहिकम्। त्र्यहपर्याप्तमैहिकं धनं यस्य स त्र्यहैहिकः। तथा वा स्यात्। दिनत्रयनिर्वाहोचित-धनमि(? न इ) त्यर्थः। श्वो भवं श्वस्तनं भक्तम्, तदस्या-स्तीति मत्वर्थीयमिकं कृत्वा नञ्समासः। तथा वा भवेत्।

$ ममु.

(७) अश्वस्तनिकापेक्षया त्र्यहैहिकस्य त्रैगुण्यदर्शनात् तदव्यवहितकुशूलधान्यकुम्भीधान्ययोः(तदव्यवहित ?) * षडहद्वादशाहपर्यन्तेन(? पर्याप्तत्वेन)धान्य(मादाय ?) परिमाणं बोध्यम्। × गृर. ४१८

(८) अत्र चाश्वस्तनापेक्षया त्र्यहैहिके त्रैगुण्यदर्शनात् कुसूलकुम्भीधान्यकयोरपि पूर्वं पूर्वं त्रिगुणम्। कुम्भीधान्यकः त्र्यहत्रिगुणनवदिनकुटुम्बभरणयोग्यधान्यवान्। एवं कुसूल-धान्यकः नवत्रिगुणसप्तविंशतिदिनकुटुम्बभरणयोग्यधान्य-वान्। दर्शाद्यर्थघृतश्राद्धाद्युपकरणवस्त्रव्यजनदक्षिणादि-साधनमजाद्रव्यं प्रविश्य (?) दिनपर्याप्तिसाधनत्वं धान्यानां बोद्धव्यम्। × निप्र. २।२५९

(९) कुसूलात्किंचिन्न्यूना धान्याधारी कुम्भी। द्वयोर-ह्नोरैहिकमिह भोग्यं वस्तु यस्य स द्व्यहैहिकः। श्वो भोज्यं वस्तु श्वस्तनं तद्यस्य नास्ति स अश्वस्तनिकः।

+ मुक्ता. ५९

(१०) कुशूलं मृत्तिकाकोष्ठकम्। कुम्भी उष्ट्रिका। कुशूलधान्यको वा स्यात् कुम्भीधान्यो वा स्यात्। (स्व-कुटुम्बपोषणे द्वादशाहमात्रपर्याप्तान्नः ?) कुशब्दो धान्याधि-करणम्। शूलः कोष्ठः। कुशूलधान्यः स्वकुटुम्बपोषणे पर्याप्तान्नो वर्षपर्यन्तम्। (स्वकुटुम्बपोषणे द्वादशाहमात्र-पर्याप्तान्नः) स कुम्भीधान्यः उष्ट्रिकाप्रमाणसंचयपरः। त्र्यहपर्याप्तान्नमस्यास्तीति त्र्यहैहिकः। श्वोभवं धान्यादि

---

* बाल. मविगतम्।

§ संवत्सरपर्याप्तसंचयवानित्यर्थः।

$ मच. ममुगतम्।

* त्रैगुण्यशब्दस्य त्रिरावृत्तत्वमर्थः। तेन कुम्भीधान्यकस्य षड्दिन-पर्याप्तधान्यकत्वं कुसूलधान्यकस्य द्वादशदिनपर्याप्तधान्यकत्वं च नोपपद्यते, त्र्यहैहिकदिनापेक्षया कुम्भीधान्यकदिनानां षण्णां तदपेक्षया कुसूलधान्यकदिनानां च द्वादशानां त्रैगुण्याभावात्। नित्याचार-प्रदीपव्याख्यानं तु साधु।

× शेषं गृकवत्।

+ नन्द. मुक्तावत्।

 

श्वस्तनम्, न विद्यते श्वस्तनं यस्यासौ अश्वस्तनिक एव वा भवेत्। भाच.

**¹चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम्।**
**ज्यायान्परः परो ज्ञेयो धर्मतो लोकजित्तमः।।**

(१) अस्य विकल्पस्य व्यवस्थामाह – यो यः स्वल्पकालसंचयः स स धर्मैः ज्यायान् अधिकः। धर्माधिक्याच्च फलाधिक्यं भवति। लोकजित्तमः लोकान् जयति आधिपत्येनावतिष्ठते, भोग्यतया स्वीकरोति। प्रकर्षविवक्षायां तमः। अविशेषोपादानात् लोकः स्वर्गः प्रतीयते। तेनेयमत्र व्यवस्था – महापरिग्रहो यो बह्वपत्योऽसंविभक्तपुत्रः अकृतकन्याविवाहश्च स कुसूलधान्यकः। यस्तु परिणतवयाः अप्राप्तपुत्रः †कृतकरणः स यावद्यावच्छममेति तावत्तावदितरान्कल्पानाश्रयेत्। ¤ मेधा.

(२) चतुर्णामिति। एषां कुशूलधान्यकादीनां चतुर्णामपि ब्राह्मणानां गृहस्थानां मध्याद्यः पश्चात्पठितः स स प्रशस्यतरो बोद्धव्यः। यतोऽसौ वृत्तिसंकोचसंयमधर्मातिशयेन स्वर्गादिलोकजित् भवति। ‡ गोरा.

(३) चतुर्णामपीत्यपिशब्देन पूर्वोक्तानां षण्णां वृत्तीनामपि मध्ये असंकुचितां वृत्तिमपेक्ष्य संकुचिता ज्यायसीति। परशब्दोऽत्र संकोचलब्धोत्कर्षवृत्तिपरः। तेनात्र चतुष्के परः परः, षट्सु तत्पूर्व(? तु पूर्वः पूर्वः)इति ग्राह्यम्। मवि.

(४) एते च वृत्तिप्रकारा न सर्वेषां ब्राह्मणानाम्, तथा सति 'यस्य त्रैवार्षिकं द्रव्यं पर्याप्तं भृत्यवृत्तये। अधिकं वाऽपि विन्देत स सोमं पातुमर्हति।।' (मस्मृ. ११।७) इत्यादिना मनुनैव सप्तविंशतिदिनाधिकधनवतो गृहस्थस्य दर्शितत्वात् तद्विरोधापत्तेः। किंतु धनसाध्यकर्मणा यः परलोकजयं नेच्छति, धनजीव(न)योरनियतकालनाशित्वात्, किंतु वृत्तिसंकोचेनैव तपोरूपेण परलोकमिच्छति तस्येमे वृत्तिविशेषाः। तत्राप्युत्तरोत्तरस्य दुःखातिशयेन तपःप्रकर्षात् श्रेष्ठलोकप्राप्तिः फलम्। तदेतदुक्तम् – 'ज्यायान् परः परो ज्ञेयो धर्मतो लोकजित्तमः।' इति। तेन कृच्छ्रचान्द्रायणादिकतपोरूपत्वेनैषां वृत्तिविशेषाणां फलसाधनत्वम्, 'कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमाप्नुयात्।' इत्यादिवत्। तदुक्तं श्रीधरेण – अयं च वृत्तिविशेषपरिग्रहो धर्मातिशयार्थिगृहस्थमात्रविषयः। निप्र. २।२६०

(५) अत्र ऋतादयः षडुपायाः, तेन जीवन्नित्युक्तत्वात्। कुसूलादयश्चत्वार उपायाः(?), तेष्वेव श्रेष्ठत्वनिर्धारणमाह – चतुर्णामिति। कुसूलादिचतुष्टयसंचयिनामेषां कुटुम्बाल्पबहुत्वाद्यपेक्षया कुसूलधान्यकादीनाम्। अर्थवादः श्रेयानित्यादि। मच.

**¹षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते।**
**द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति।।**

(१) एषां कुसूलधान्यकादीनां गृहस्थानामेकः षट्कर्मा भवति यो महापरिग्रहः प्रागुक्तस्तस्य षड् वृत्तिकर्माणि भवन्ति। कानि पुनस्तानि? प्रकृतानि उञ्छशिलायाचितयाचितलाभकृषिवाणिज्यानि। अध्यापनयाजनप्रतिग्रहा याचितायाचितग्रहणादन्तर्भवन्ति। बहुकुटुम्बको नित्यकर्मसंपत्त्यर्थं च सर्वा वृत्तीः समुच्चिताः कुर्यात्, कृषिवाणिज्ये अपि। येऽपि 'अध्यापनमध्ययनम्' (मस्मृ. १।८८) इत्यादीनि प्रथमाध्यायपठितानि षट्कर्माणि व्याचक्षते तेषां प्रकरणविरोधो निष्प्रयोजनं चाध्ययनादीनामुपादानम्, अन्यत्रैव तेषां विहितत्वात्। अन्यः द्वितीयः कुम्भीधान्यः त्रिभिः प्रवर्तते। प्रोऽनर्थकः, यावद्वर्तते तावत्प्रवर्तत इति। वर्तनं

---

† कृतानि शिक्षितानि हिंसितानि वा करणानि इन्द्रियाणि येन सः।

¤ बाल. मेधावत्।

‡ ममु. गोरावत्। नन्द., भाच. गोरागतम्।

(१) **मस्मृ.** ४।८; **अप.** १।१२८; **गृक.** १७१ जित्तमः (वित्तमः); **गृर.** ४१७; **मपा.** २१६ चैतेषां (सर्वेषां) ज्यायान्परः (यायावरः); **निप्र.** २।२५९:२।२६० उत्त.; **मच.** ज्याया (श्रेया); **मुक्ता.** ५९ चतुर्थचरणे (लोकजो धर्मवित्तमः); **बाल.** १।१२८ पृ. ३८६.

(१) **मस्मृ.** ४।९; **मिता.** १।१२८; **अप.** १।१२८ मैको भवत्ये (र्मको भवेत्ते); **गृक.** १७१-१७२; **मवि.** अपवत्; **स्मृच.** २।४५२ भवत्ये (भवेदे); **ममु.** ४।१३ प्रथमचरणमात्रम्; **गृर.** ४१७-४१८; **पमा.** १।३१० जीवति (जीव्यते); **मपा.** २१६ अपवत्; **निप.** ४५२ प्रथमचरणमात्रम् (=); **निप्र.** २।२५९, २।२६१ वत्येषां (वेदेषां); **मुक्ता.** ५९ सत्रे (सूत्रे); **संम.** ८३ मेक (मन्य); **विपा.** ३।२।२४७; **आन.** ६३१; **भाच.** निप्रवत्; **बाल.** १।१२८ पृ. ३८७ मूलोद्धृतस्य प्रतीकमात्रम्.

च स्थितिसंपत्तिः। प्रकृतानां च यानि कानिचित् क्वचित् कृषिवाणिज्ये विहाय। प्रशस्ततरो हि पूर्वस्मात् कुम्भीधान्यकः। यतो वक्ष्यति – 'सा वृत्तिः सद्भिर्गर्हिता' (मस्मृ. १०।८४), 'गोरक्षकान्वाणिजिकान्' (मस्मृ. ८।१०२) इति। यदप्युक्तं गौतमेन – 'कृषिवाणिज्ये चास्वयंकृते कुसीदं च' (गौध. १०।५-६) इत्यनापद्येव, तत्राप्यस्वयंकरणपक्षे दोषोऽस्त्येव, लघीयांस्तु भविष्यति। द्वाभ्यामेकः। अत्रापि याचितलाभं वर्जयित्वा त्रयाणां यथासंभवं द्वे गृह्येते। अयाचितमपि तावत् गृह्यते यावत् त्र्यहपर्याप्तम्। चतुर्थस्तु ब्रह्मसत्रेण जीवति। ब्रह्मसत्रं शिलोञ्छयोरन्यतरा वृत्तिः। सततभवत्वात्सत्रमिव, न तदहःपरिसमापनीया वृत्तिः, अतः सत्रमित्युच्यते, अहरहर्नित्यमनुष्ठानात्। ब्रह्मशब्दो ब्राह्मणपर्यायः। तेषामिदं सत्रम्। अस्माद्ब्रह्मशब्दात्पूर्वोऽयं वृत्तिप्रपञ्चो ब्राह्मणविषय एव विज्ञेयः। क्षत्रियादीनां तु तत्र तत्र वक्ष्यति। कथं पुनः शिलोञ्छवृत्त्या जीवनं संभवति? यावता शरद्ग्रीष्मयोरेव क्षेत्रे खले वा शिलपुलाकपातसंभवः। अथोच्यते – ग्रैष्मेभ्यो ग्रैष्माणि, शारदानि शारदेभ्योऽर्जयिष्यतीति। षाण्मासिकवृत्तिरेव स्यात्, नाश्वस्तनिकः। अथ अन्यथाऽपि संभवति यावतस्तावतो व्रीह्यादेः कथंचित्पतितस्योपादानम्। सत्यम्, न तद्भोजनाय पर्याप्तम्। संचिन्वानो यदा पर्याप्तं प्राप्स्यति तदाऽशिष्यति पञ्चाहाद्यसंभवात्। तथा च महाभारते शिलोञ्छवृत्तिः पक्षान्ताशनो वर्ण्यते। सोऽयमस्यामवस्थायां गृहस्थस्तापसः संवृत्त इति चेत्। किंतु एवमप्यश्वस्तनिकत्वं विरुध्यते। यथोपपादस्थितिकस्तदा स्यात्, नाश्वस्तनिकः। अश्वस्तनिको ह्युच्यते – योऽहन्यहन्यर्जयति यात्रिकम्, तदहरेव च व्ययीकरोति, न द्वितीयेऽह्नि स्थापयति। यदि च न प्रत्यहं शिलोञ्छवृत्तेर्भोजनं निर्वर्तते, कुतोऽश्वस्तनिको भवेत्, कथं च तथाविधस्य जीवनं पुत्रदारभरणं च? अत एव केचित् 'त्रिभिरन्यः प्रवर्तते' इत्यत आरभ्यान्यथा व्याचक्षते – त्रिभिः याजनाध्यापनप्रतिग्रहैः, द्वाभ्यां 'प्रतिग्रहः प्रत्यवरः' (मस्मृ. १०।१०९) इति प्रतिग्रहव्युदासेन याजनाध्यापने प्रतिगृह्येते। ब्रह्मसत्रम् अध्यापनम्। तद्धि वृत्तये पर्याप्तम्। यत्तु 'वर्तयंश्च शिलोञ्छाभ्याम्' (मस्मृ. ४।१०) इति स चतुष्टयव्यतिरिक्तोऽन्य एव। अत्रोच्यते – यः शिलपरिमाणान् दशद्वादशान् यवान्व्रीहीन्वा बहुभ्य आदत्ते यावदेकाहयात्रिकं स शिलवृत्तिः। यस्त्वेकैकं यात्रार्थमाहरति स उञ्छवृत्तिः। स्मृत्यन्तरे चायं यायावरवृत्तिरुक्तः। अतश्च सार्वकालिकमप्युपपद्यते। न च वैश्वदेवादिक्रियाविरोधः, न च पुत्रदाराणामभरणदोषश्च, याचितभैक्षादत्यन्ताल्पग्रहणात्। मेधा.

(२) एषां गृहस्थानां मध्यात्कश्चिद्गृहस्थः परिग्रहभूयस्त्वाद्यपेक्षया प्रा (? प्र)कृतऋतादिकर्मा भवति। अन्यः पुनर्याजनाध्यापनप्रतिग्रहाणां ब्राह्मणस्य नोदितत्वादेतैस्त्रिभिर्जीवितुं प्रवर्तते। अपरः पुनः 'प्रतिग्रहः प्रत्यवरः' इति वक्ष्यमाणत्वात् तत्त्यागेन द्वाभ्यां याजनाध्यापनाभ्यां जीवितुं प्रवर्तते। उक्तत्रयापेक्षया चतुर्थः पुनरध्यापनेन जीवति। गोरा.

(३) शालीनोऽपि चतुर्विधः याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवत्येकः। याजनादिभिस्त्रिभिरन्यः। याजनाध्यापनाभ्यामपरः। चतुर्थस्त्वध्यापनेनैव। तथाऽऽह मनुः – 'षट्कर्मैको.... जीवति।।' इति। § मिता. १।१२८

(४) षट्कर्मशब्देन यजनयाजनादीनि ब्राह्मणकर्माणि निर्दिशति तदन्तर्गतस्य प्रतिग्रहादिवृत्तित्रयस्य विधानार्थम्। त्रिभिरन्यः प्रवर्तत इति कुम्भीधान्यस्यापि वृत्तित्रयविधिः। द्वाभ्यामेक इति त्र्यैहिकस्य याजनाध्यापनानुज्ञा। प्रतिग्रहोऽपि (? ग्रहः) कुत्सितादपि स्यादिति तद्वर्जनम्। चतुर्थः अश्वस्तनः, स ब्रह्मसत्रेण अध्यापनेन जीवेदिति। एवं च ब्राह्मणस्यैव कुसूलधान्यत्वादयो धर्माः। न ह्यन्यस्य प्रतिग्रहादिवृत्तिसंभवः। अप. १।१२८

(५) षड्वृत्तयोऽत्र वाणिज्यान्तर्भावेन, पूर्वोक्तानामुञ्छादिवृत्तीनां परित्यागकारणाभावात्।.... षट्कर्माणि उञ्छशिलायाचितयाचितकृषिवाणिज्यरूपाणि। त्रिभिः उञ्छशिलायाचितैः। द्वाभ्याम् उञ्छशिलाभ्याम्। ब्रह्मसत्रेण उञ्छेन। ब्रह्मसत्रशब्दः ब्राह्मणानां सततं त्रायमाणत्वेनोञ्छपरः। † गृक. १७२

(६) पूर्वं हि ऋतामृतमृताख्यं वृत्तित्रयमनापदि, अन्यत्तु

---

§ संम. मितावत्। विपा. मितागतम्।

† गृर. गृकवत्। मपा. गृकवत् मविगतं च।

त्रयमापदीति दर्शितम्। यत्तु 'सेवाऽनूपं नृपे भैक्ष्यमापत्तौ जीवनानि तु।' (यास्मृ. ३।४२) इति याज्ञवल्क्येनोक्तं तत्सिद्धान्नभैक्ष्यविषयम्। तेषु कुशूलधान्यादिचतुष्टयमध्य एकः कुशूलधान्यः। षट्कर्मा याजनाध्यापनप्रतिग्रहा हि मृतामृतभेदेन द्विविधाः सन्तः षट् भवन्ति, तैः समुदितैर्वर्तते। अन्यः कुम्भीधान्यः त्रिभिः अमृतभेदभूतैः याजनादिभिस्त्रिभिः। अन्यः त्र्यहैहिको द्वाभ्यां शिलोञ्छाभ्याम्। चतुर्थः अश्वस्तनवृत्तिः ब्रह्मसत्रेण ब्रह्मलोकप्राप्तिहेतुना सत्रं यागस्तत्तुल्यफलतया सत्रेण उञ्छग्रहणेन जीवति।

मवि.

(७) एकः कुसूलधान्यो ‡ य(? या)जनादिषट्कर्मा भवेत्। अन्यः द्वितीयः त्रिभिः याजनाध्यापनप्रतिग्रहैर्वर्तते। एकः तृतीयः द्वाभ्यां प्रतिग्रहेतराभ्याम्। चतुर्थस्तु ब्रह्मसत्रेण अध्यापनेनेति। एते च कुसूलधान्यत्वादयो ब्राह्मणस्यैव, इतरस्य प्रतिग्रहादेरसंभवात्। शिलोञ्छे तु वर्णत्रयसाधारणे।

स्मृच. २।४५२

(८) एषां गृहस्थानां मध्ये कश्चिद्गृहस्थो यो बहुपोष्यवर्गः स प्रकृतैर्ऋतायाचितभैक्षकृषिवाणिज्यैः पञ्चभिस्तेन चैव इत्यनेनैव चशब्दसमुच्चितेन कुसीदेनेत्येवं षड्भिः कर्मभिः षट्कर्मा भवति षड्भिरेतैर्जीवति। कृषिवाणिज्यकुसीदान्येतान्यस्वयंकृतानि गौतमोक्तानीत्युक्तम्। अन्यः पुनस्ततोऽल्पपरिकरः त्रिभिः याजनाध्यापनप्रतिग्रहैः 'अद्रोहेण' (मस्मृ. ४।२) इत्येतच्छ्लोकसंगृहीतैः प्रवर्तते। प्रशब्दोऽनर्थकः, वर्तेत इत्यर्थः। अपरः पुनः 'प्रतिग्रहः प्रत्यवरः' इति वक्ष्यमाणत्वात्तत्परित्यागेन द्वाभ्यां याजनाध्यापनाभ्यां प्रवर्तते। उक्तत्रयापेक्षया चतुर्थः पुनः ब्रह्मसत्रेण अध्यापनेन जीवति।

* ममु.

(९) अयमर्थः – एकः कुशूलधान्यो याजनादिषट्कर्मा भवेत्, अन्यो द्वितीयः कुम्भीधान्यो याजनाध्यापनप्रतिग्रहैर्वर्तेत, एकः तृतीयः त्र्याहिकः प्रतिग्रहेतराभ्याम्, चतुर्थस्तु अश्वस्तनः ब्रह्मसत्रेण अध्यापनेन जीव्यत इत्यर्थः।

पमा. १।३१०

‡ यजनशब्दोऽयं प्रामादिकः, अनुपपत्तेः। याजनशब्द एव साधुः। बालंभट्टीव्याख्यानमप्यत्र प्रमाणम्।

* शेषं मेधातिथिमतानुवादः।

(१०) एषां चर्तुणां मध्य एकः कुसूलधान्यकः षट्कर्मा भवेत् षड्भिः कर्मभिः सप्तविंशतिदिनपर्याप्तधनमर्जयेत्। षट्कर्माणि च पूर्वोक्तानि उञ्छशिलायाचितयाचितकृषिवाणिज्यरूपाणि। अन्यो द्वितीयः कुम्भीधान्यकः त्रिभिः उञ्छशिलायाचितैः नवदिनपर्याप्तधनमर्जयेत्। एकः तृतीयः त्र्यहैहिक उञ्छशिलाभ्यां त्रिदिनपर्याप्तधनमर्जयेत्। चतुर्थस्तु अश्वस्तनिकः केवलेन उञ्छेन जीवति दिनमात्रपर्याप्तधनमर्जयेत्। ब्रह्मसत्रशब्द उञ्छपरः 'ब्रह्म सततं त्रायते' इति व्युत्पत्त्या। निप्र. २।२५९-२६०

(११) "एषां कुसूलधान्यकादीनां मध्ये बहुपरिकरः कुसूलधान्यकः षडुञ्छादिकर्मा स्यादित्याह–षट्कर्मैक इति। कुम्भीधान्यकस्तु मध्यमपरिकरः कृषिवाणिज्ये याच्ञां विहायान्यैस्त्रिभिर्जीवेत्, श्रेष्ठत्वात्। त्र्यहैहिको द्वाभ्यां शिलोञ्छाभ्याम्, श्रेष्ठतरत्वात्। अश्वस्तनिकस्त्वयाचितेनैकेन, श्रेष्ठतमत्वात्। 'ऋतामृताभ्यां जीवेत्' इति जीविकोपक्रमात् 'वृत्तय (? वर्तयं) स्तु शिलोञ्छाभ्याम्' इत्युपसंहाराच्चेति जीविकालिङ्गात्प्रकरणाच्च" इति केचित्। परे त्वाहुः– "षडिति यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाः षडस्य सन्तीति षट्कर्मेति, कर्मशब्दप्रयोगात्। त्रिभिर्याजनाध्यापनप्रतिग्रहैः। द्वाभ्यां याजनाध्यापनाभ्याम्, 'प्रतिग्रहप्रसङ्गेन दोषमृच्छत्यसंशयः' इति प्रतिग्रहस्य निन्दितत्वात्। चतुर्थोऽध्यापनशीलः, 'सा ह्यस्य कृतकृत्यता' इति वक्ष्यमाणत्वात्" इति। चतुर्थस्त्वध्यापनरत एतेषु प्रकृष्टः। ब्रह्म वेदः, तदेव सत्रम्, 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्' इति श्रुतेः सत्रवदावश्यकत्वबहुकालव्यापित्वाभ्यां स एव स्तूयते। मच.

(१२) चतुर्णां कुसूलधान्यादीनामेव तावदुपेयपरिमाणतश्चातुर्विध्यं गृहमेधिनामुक्तम्। उपायपरिमाणतोऽप्याह स एव – षट्कर्मैक इति। एषां मध्य एकः षट्कर्मा भवति। षड्भिः ब्राह्मणनियतैर्याजनाध्यापनप्रतिग्रहैस्त्रैवर्णिकनियतैः प्रमृतसत्यानृतकुसीदैश्च अर्थसंचये प्रवर्तत इत्यर्थः। त्रिभिः याजनाध्यापनप्रतिग्रहैः। द्वाभ्यां याजनाध्यापनाभ्याम्। 'प्रतिग्रहः प्रत्यवरः' इति निन्दितत्वात्प्रतिग्रहो विवर्जनीय इत्यर्थः। ब्रह्मसूत्रेण अध्यापनेन। × मुक्ता. ५९

× आन., नन्द. मुक्तावत्।

(१३) वर्णानां वृत्तिमाह – षट्कर्मेति। एषां कुशूलधान्यकादीनां मध्य एकः ब्राह्मणः षट्कर्मा उञ्छशिलायाचितयाचितकर्षणवाणिज्यसेवावृत्तिभिर्भवेत्। प्रतिग्रहादीनि वा षट्कर्माणि। क्षत्रियस्त्रिभिः अध्ययनदानयजनादिभिः। वैश्यः द्वाभ्यां वृत्तिभ्यां गोरक्षावाणिज्याभ्यां जीवेत्। चतुर्थः शूद्रः स्वस्य ब्रह्मसत्रेण ब्राह्मणानां वा त्रैवर्णिकानां सेवारूपवृत्त्या जीवति। 'शूद्रस्तु द्विजसेवया' इति योगी। षट्कर्माणि इज्याऽध्ययनं दानं याजनमध्यापनं प्रतिग्रहश्चेति। भाच.

(१४) एकः कुसूलधान्यः षट्कर्मा याजनादिप्रागुक्तषट्कर्मा। अन्यः कुम्भीधान्यः त्रिभिः याजनादिभिः प्रवर्तते जीवति। एकः त्र्यहैहिकः द्वाभ्यां याजनाध्यापनाभ्याम्। चतुर्थः अश्वस्तनिकः ब्रह्मसत्रेण वेदादिनिरन्तराध्यापनेन जीवतीत्यर्थः। चन्द्रिकाकारादयोऽप्येवम्। §मेधातिथिकल्पतरुपारिजातप्रभृतयस्तु षट्कर्मेत्यादेरन्यथाऽर्थमाहुः। तथाहि – षट्कर्मा उञ्छशिलायाचितयाचितलाभकर्षणवाणिज्याख्यषट्कर्मा। याजनाध्यापनप्रतिग्रहाणां याचितायाचितग्रहणात्तत्रैवान्तर्भावः। इदं च समुच्चितवृत्तिसेवनं बहुकुटुम्बस्य नित्यकर्मसंपत्त्यर्थम्। त्रिभिरुञ्छशिलायाचितैः। द्वाभ्यामुञ्छशिलाभ्याम्। ब्रह्मसत्रेण उञ्छेन, ब्रह्मसत्रशब्दो ब्राह्मणानां सततत्रायकत्वेनोञ्छपर इति। 'ब्रह्मलोकप्राप्तिहेतुत्वेन सत्रयागतुल्यफलेनोञ्छेन' इति तु मदनः। मेधातिथिस्तु उञ्छशिलयोरन्यतरेणेत्याह। सर्वज्ञनारायणस्त्वन्यथाऽऽह – षडिति। याजनाध्यापनप्रतिग्रहाः मृतामृतभेदेन षट् बोध्याः। त्रिभिः अमृतभेदभूतैः याजनादिभिः। द्वाभ्यां शिलोञ्छाभ्याम्। ब्रह्मसत्रेणोञ्छेन। ब्रह्मलोकप्राप्तिहेतुना सत्रयागेन तुल्यफलकतया तत्त्वम्। अत्र मनुवाक्यस्य मध्यमव्याख्यैव युक्ता, न त्वाद्यन्ते, प्रकरणविरोधात्। टीकायास्तु भेदमात्रकथने तात्पर्यम्, न तु तथैवेति। बाल. १।१२८ पृ. ३८७

वृत्तिर्धर्मसाधनम्, वृत्त्यङ्गभूतः सदाचारः

**'वर्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः।**
**इष्टीः पार्वायनान्तीयाः केवला निर्वपेत्सदा।।**

(१) पर्व चायनान्तश्च तयोर्भवाः पार्वायणान्तीयाः। स्वार्थिकमणं कृत्वा वृद्धाच्छः कर्तव्यः। पर्वेष्टिः दर्शपूर्णमासौ, अयनान्ते च यज्ञ आग्रयणाख्यः। केवलग्रहणात्काम्या इष्टयो निषिध्यन्ते। वैश्वदेवहोमबलिहरणे अपि तस्य नान्वहं भवतः। न हि तस्य सर्वदा तावद्धनं भवति। अतः केवलग्रहणान्महायज्ञनिवृत्तिः। ननु चाग्निहोत्रमपि तत्तस्य नैव भवति, तदपि द्रव्या(? व्य)साध्यमेव। पक्षहोमान् होष्यति। भार्याभरणं कथम्? इति चेत्साऽपि तां वृत्तिमाश्रयिष्यति। यदा च भार्या व्रतमेतद्धारयितुमशक्ता तदा भर्तुरपि नास्त्यधिकारः। अथ चान्द्रायणादिषु प्रवृत्तस्य कथं भार्याया जीवनम्? इति चेत्। अचोद्यमेतत् (स्त्रीधनस्य) विद्यमानत्वात् अतिथ्यादिशिष्टमशिष्यते इति। ननु वैश्वदेवहोमाभावात् विद्यमानेऽपि स्त्रीधने न भोजनं युक्तम्, उभयोर्विघसाशित्वविधानात्। अतः स्त्रीधनेन वैश्वदेवं करिष्यति, धर्मकार्येऽनुज्ञानात्स्त्रीधनग्रहणस्य। नैवम्। तस्यामवस्थायामग्निहोत्रमात्रं धर्मः, न वैश्वदेवहोमः। भवतु वा। यस्यास्तर्हि धनं नास्ति कथं जीवतु? तस्माद्यस्यासमर्था भार्या नासौ शिलोञ्छवृत्तावधिक्रियते। वर्तयन् आत्मानं जीवयन्। $ मेधा.

(२) शिलोञ्छाभ्यां जीवन् कर्मान्तरासंभवे सायंप्रातर्होमनिष्ठः सन् दर्शपूर्णमासान् यागान् केवलान् सर्वकालं कुर्यात्। गोरा.

(३) इष्टीः केवलाः इष्टीरेव दर्शपूर्णमास्योः पर्वणोरन्ते समीपे प्रतिपदि कार्ये पर्वान्ते ये इष्टी दर्शपूर्णमासाख्ये, तथाऽयनान्तीयाः अयनान्तकार्याः आग्रयणेष्टयः। अन्तशब्दोऽत्र सामीप्यार्थः। आग्रयणेष्टिर्हि यवैरुत्तरायणे श्यामाकैः व्रीहिभिश्च दक्षिणायने क्रियत इत्ययनान्तीया

§ मेधातिथ्यादीनां 'तथाहि' इत्यादिनोक्तेऽर्थे संप्रतिपत्तिरत्रोक्ता न युज्यते, 'त्रिभिः, द्वाभ्याम्, ब्रह्मसत्रेण' इत्येतेष्वंशेषु मेधातिथेर्विप्रतिपत्तेः, तत्र 'ब्रह्मसत्रेण' इत्यंशे विप्रतिपत्तेर्वक्ष्यमाणत्वेन तदंशे संप्रतिपत्तेरविवक्षायामपि अंशान्तरयोर्विप्रतिपत्तेस्तादवस्थ्यात्।

$ ममु., मच. मेधागतम्।

(१) **मस्मृ.** ४।१०; **मेधा.** ४।९ प्रथमचरणमात्रम्; **गृक.** १८३; **निप्र.** २।२६७ वर्तयं (वृत्तय) यना (यणा); **मुक्ता.** २१ यंश्च (यंस्तु) यना (यणा); **आन.** ५६३ शिलो (सिलो) यना (यणा).

भवन्ति। एता एव कुर्वन्, न तु चातुर्मास्यपशुसोमादि। अत्राग्निहोत्रपरायण इति निर्वपेत्सदेति वचनात् त्रेताग्निमत एव शिलोञ्छयोरधिकारो गम्यते। 'शिलानत्युञ्छतः' (मस्मृ. ३।१००) इत्यत्र तूभयाभिधानं वृत्तिसंकोचधर्मान्तरसंभवयोरुपदर्शनार्थम्। मवि.

(४) केवलाः फलरहिता इष्टीः निर्वपेत् कुर्यात्, न ततोऽधिकं श्रौतं कर्म कुर्यात्। तावन्मात्रसिद्धये द्रव्यमर्जयितव्यम्, नाधिकमित्यभिप्रायः। § नन्द.

**[1]न लोकवृत्तं वर्तेत वृत्तिहेतोः कथंचन।**
**अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम्।।**

(१) लोकवृत्तं नामोच्यते येन प्राकृतजनोऽल्पसत्त्वो वर्तते दम्भेनासत्प्रियाख्यानेन च 'त्वं विष्णुस्त्वं ब्रह्मा जय जीव' इति। तथा विचित्रपरिहासकथाभिः। वृत्तिहेतोः जीविकार्थतया न कर्तव्यमेतत्। यस्तु नर्मशीलस्तस्य न दोषः। अजिह्माम्। यस्यान्यच्च हृदये अन्यच्च बहिः स जिह्म उच्यते। द्वेषमत्सरात्मा दर्शयति (अ ?) प्रियंवदताम्। अशठाम्। अग्निहोत्रकर्मानुष्ठानं लोकार्जनेन प्रतिग्रहादिलाभार्थम्, न शास्त्रार्थश्रद्दधानतया कुर्यात् स शठः। आत्मधर्मत्वेऽपि जैह्म्यशाठ्ययोः जीविकाऽप्यभेदोपचाराद्व्यपदिश्यते अजिह्मामशठाम्। शुद्धामिति। शुद्धिः वृत्त्यन्तरेणामिश्रीकरणं पूर्वदोषद्वयेन च। एकपदलभ्योऽप्ययमर्थो वृत्तानुरोधाद्गोबलीवर्दवत् बहुपदैः प्रतिपाद्यते। अथ कथं ब्राह्मणजीविकां जीवेदिति द्वितीया? यावता जीवतिरकर्मकः। कथं चैकस्यैव धातोरेकत्र द्विः प्रयोगः? न हि भवति 'गमनं गच्छेत्' इति साध्यसाधनभावः। उच्यते – सामान्यविशेषभावात् साध्यसाधनभावो न विरुद्धः। यथा 'अश्वपोषं पुष्टः' इति। अनुष्ठानाङ्गे च वर्तनार्थे जीवतिर्वर्तते। तेन सकर्मकत्वमिति न दोषः। जीवेत् जीवनार्थमनुतिष्ठेत्। * मेधा.

(२) लोकवृत्तं वृत्त्यर्थितया प्रायशो यदाचरति स्वगुणानुख्यापनानुरूपवेषधारणादिकं लोकः तत्र वर्तेत न वर्तयेत्। अजिह्माम् अवक्राशयतया लभ्याम्। अशठां परवञ्चनरहिताम्। शुद्धां पतितादिसंबन्धशून्याम्। ब्राह्मणजीविकाम्, न क्षत्रियवैश्यजीविकाम्। मवि.

(३) अशठाम् अवैश्यादिवृत्तिम्। § मच.

(४) कथंचन आपद्यपि। § नन्द.

**[1]संतोषं परमास्थाय सुखार्थी संयतो भवेत्।**
**संतोषमूलं हि सुखं दुःखमूलं विपर्ययः।।**

(१) त्र्यहैहिकाश्वस्तनवृत्तिदार्ढ्यार्थं प्रसंख्यानमिदमाह – संतोषमिति। संतोष आश्रयितव्यः, न बहूनामुपजीव्यः स्यामिति याच्ञाक्लेश आस्थेयः। सुखार्थी संयतो भवेत्। संयमः यात्रिकाद्धनादधिके नाभिलाषः। संतोषो मनस्विनां सुखमूलम्। दुःखस्य मूलं विपर्ययः असंतोषः। महद्बिदुषां दैन्यम् अभिलषिते वस्तुन्यसंपत्तिः(? त्तौ)। तस्मात्संतोषमाश्रयेत्। # मेधा.

(२) संतोषमिति। यः समः स्व(? समस्तस्व)र्गादिदृष्टादृष्टसुखार्थी सोऽपगतविशेषस्पृहः सन्नात्मकुटुम्बनित्यानुष्ठानमात्रपर्याप्तसंचय एव धने प्रकृष्टां निवृत्तिमाश्रित्य धनार्जनं संचयं कुर्यात्। यस्मात्संतोषप्रभवं समस्तस्वर्गादिदृष्टादृष्टसुखम्, असंतोषः पुनर्दृष्टादृष्टदुःखस्य मूलम्। गोरा.

(३) संयतः असद्वृत्तिनिवृत्तः। सुखं संतोषो मूलं यस्य स(? तत्) तथा। दुःखस्य मूलं विपर्ययः असंतोषः। शिलोञ्छादावसंतुष्टस्य तद्वृत्तित्यागसंभवादत्र वृत्तिनियमनिर्वाहहेतुः संतोषः कार्यतया दर्शितः। मवि.

(४) संयतः प्रत्याहृतेन्द्रियः। * स्मृच. २।४५९

(५) यथासंभवभृत्यात्मप्राणधारणावश्यकपञ्चयज्ञाद्यनुष्ठानमात्रोचितधनानधिका‡ स्पृहा संतोषः, तमतिशयित-

---

§ शेषं मेधागतम्।

* गोरा., गृक., ममु., भाच. मेधागतम्। बाल. मेधागतं मविगतं च।

(१) मस्मृ. ४।११; गृक. १८३; मुक्ता. ६०; आन. ६३२; बाल. १।१२८ पृ. ३८७.

§ शेषं मेधागतम्।

# मच., भाच. मेधागतम्।

* आपा. स्मृचवत्।

‡ नास्ति पूर्वोक्तधनापेक्षया अधिकं धनं यस्या विषयः सा अनधिकेति योजनीयम्।

(१) मस्मृ. ४।१२; मिता. १।१२९ पृ.; अप. १।१२९ सुखार्थी (सुखार्थं); गृक. १८३; स्मृच. २।४५९; आपा. ११३; निप्र. २।४३० पृ.; मुक्ता. ६०; वीमि. १।१२९ पृ.; आन. ६३२.

मालम्ब्य प्रचुरधनार्जने संयमं कुर्यात्। यतः संतोषहेतुकमिति (? मिह) सुखम्, परत्र चाव्यग्रस्य विहितानुष्ठानात्स्वर्गादि-सुखम्। विपर्ययस्तु असंतोषः दुःखमूलम्, बहुधनार्जन-प्रयासेन प्रचुरदुःखादसंपत्तौ च क्लेशात्। ममु.

(६) निषिद्धकर्मणा सुखं नेच्छेत्। अनिषिद्धेनाल्पेनापि साधनेन मनो रमयेदित्यर्थः। निप्र. २।४३०

(७) संकुचितवृत्तित्वं सुखहेतुरित्यभिप्रायेणाऽऽह – संतोषमिति। 'एतावताऽलम्' इति बुद्धिः संतोषः। संयतः भोगविस्तारप्रसङ्गोपरतः। संतोषमूलमिति बहुव्रीहिः। दुःख-मूलमिति तत्पुरुषः। विपर्ययः असंतोषः। नन्द.

आपदि राजयाज्यशिष्येभ्यः प्रतिग्रहानुमतिः,
अक्षत्रियराजादिभ्यः प्रतिग्रहे क्षत्रियादपि
लुब्धोच्छास्त्रवर्तिनो राज्ञः प्रतिग्रहे
च महान् दोषः

**'राजतो धनमन्विच्छेत्संसीदन्स्नातकः क्षुधा।**
**याज्यान्तेवासिनोर्वाऽपि न त्वन्यत इति स्थितिः ।।**

(१) राजग्रहणमाढ्यवर्णोपलक्षणार्थम्। तथा च वक्ष्यति 'सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः। याच्यः स्यात्' (मस्मृ. १०।११३) इति। तेन राजशब्दः क्षत्रियजातौ मुख्यः, तथापि शास्त्रान्तरपर्यालोचनया जनपदेश्वरवचन इति गम्यते। जनपदेश्वरा हि बहुधना भवन्ति। तेनैतदुक्तं भवति – येऽत्यन्तसंपन्ना गोजाविधनधान्यैस्तेभ्यः प्रति-ग्रहीतव्यम्। तथा सति 'अद्रोहेण' इत्येतदादृतं भवति। आढ्या हि ददतो नातीव पीड्यन्ते। स्वल्पधनेभ्यस्तु परिगृह्णतो दोषः स्यात्। मुख्यार्थवृत्तौ च राजशब्दे ब्राह्मणादिभ्यः प्रतिग्रहः प्रतिषिध्येत। तत्र सर्वस्मृतिविरोधः स्यात्। स्मृत्यन्तरे हि पठ्यते – 'आददीत प्रशस्तद्विजादिभ्यः शश्रूषोश्च शूद्रादपक्वान्नम्' इति। प्रतिषेधेऽपि 'न राज्ञः प्रतिगृह्णीयात्' इति राजशब्दो जनपदेश्वरवचन एव। किंच न क्षत्रियस्य तत्र प्रतिषेधः 'अराजन्यप्रसूतितः' इति वचनात्। अत एव न क्षत्रियजातीयात्तत्र तन्निषेधः, तथा सति 'अराजन्यप्रसूतितः' इति न वक्तव्यं स्यात्। न ह्यराजन्य-प्रसूतितः(? सूतयः) क्षत्रिया भवन्ति। तेनेयमत्र व्यवस्था – क्षत्रियाद्राज्ञो यथाशास्त्रवर्तिनः प्रतिग्रहः कर्तव्यः, अन्यस्मात्पुनर्न। याज्यान्तेवासिनोः। धनापेक्षा षष्ठी। तसन्तो वा पठितव्यः। क्रियानिमित्तत्वादेतयोः शब्दयोर्याजनाध्या-पनाभ्यां जीवेदित्युक्तं भवति। अन्ये त्वाहुः – अन्येषामुप-पातकप्राप्तिश्चौर्यादीनां चोपायानां निषिद्धत्वात् ईश्वरमाराध्य जीवेत्प्रीतिदायेन स्वस्तिवाचनकेन वा (?)। न चायं सेवकः। सा वृत्तिर्निषिद्धा। एवं कृतोपकारादयाजयन्नपि याज्यादाददीत। निवृत्तेऽपि संबन्धे कृत्यो वर्तत इति। संसीदन्निति। पित्रादिधने सति न कर्तव्यम्। तदुक्तम् – 'न कल्पमानेष्वर्थेषु' (मस्मृ. ४।१५)। तस्यैवायमनुवादः। न चायमापद्धर्मः। न हि अवसाद आपत्, किं तर्हि? अर्जितधनाभावः। आपत् तु विहितोपायाभावो धनक्षयश्च। सत्यपि (धान्य ?) धनबहुत्वे अन्नपरिक्षये दुर्भिक्षादावातिथ्यसं (? क्षादावसं) निहितान्नता क्षुत्पीडितस्य आपत्, अक्षुधित-स्यापि धनाभावात् अवसाद इत्येष एतयोर्विशेषः। न त्वन्यतः स्वल्पधनान्नानुपकार्यात् गृह्णीयात्। मेधा.

(२) स्नातकः क्षुधाऽवसादं गच्छन् अन्यजातिप्रतिग्रह-संभवेऽपि क्षत्रियाद्राज्ञः शास्त्रानुवर्तिनो याज्यशिष्याभ्यां वा प्रथमं लिप्सेत, न त्वन्यस्मात् द्विजातेरपि। तदसंभवे पुनरन्यस्माद्द्विजातेर्गृह्णीयात्। अनापद्विहितोपायासंभवे पुनः 'सर्वतः प्रतिगृह्णीयात्' (मस्मृ. ४।२५४) इत्यापद्धर्मं वक्ष्यति। राज्ञो महाधनत्वाद्याज्यान्तेवासिनोः स्वसुकृतोप-कारत्वादिदं प्रथमधनग्रहणं नियम्यते। एवं चानापदि प्रथम-राजयाज्यशिष्यव्यतिरिक्तधनग्रहणनिषेधार्थमिदं वचनम्। अत एवोक्तम् – न त्वन्यत इति। यत्तु संसीदन्नितिलिङ्गादा-पद्विषयतामस्याऽऽहुः, तदसत्, अप्रकरणात्। न च धना-भावमात्रमापदुच्यते, अपि तु धनाभावे सति विहितोपाय-परिक्षयः। अन्यथा सद्यःप्रक्षालकस्याऽऽपद्धर्मा आवि-र्भवेयुः। आपद्विषये चास्य 'न त्वन्यतः' इत्येतत् 'सर्वतः

---

(१) **मस्मृ.** ४।३३; **मेधा.** ४।८४, १०।७६ प्रथमचरणात्रम्; **गोरा.** नोर्वा (नो वा) इति पाठो व्याख्यानात्प्रतिभाति; **गृक.** २३१; **स्मृच.** २।४५७; **ममु.** गोरावत्; **गृर.** ४५५ नोर्वा (नो वा); **मपा.** २१७ गृरवत्; **आपा.** ११२ द्वितीयचरणे (सीदन्स्नातः क्षुधाऽन्वितः); **निप्र.** २।२५६, २७० स्नातकः (ब्राह्मणः) नोर्वा (नो वा); **मच.** ४।८४ प्रथमचरणमात्रम्; **मुक्ता.** १२३; **नन्द.** धन (अन्न); **भाच.** गोरावत्; **बाल.** १।१३० पृ. ३९०.

प्रतिगृह्णीयात्' इत्यनेन विरुध्येत। यत्तु 'सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः। याच्यः स्यात्' इति, तदापत्प्रकरणात् (अ)क्षत्रियाद्राज्ञः प्रतिग्रहार्थम्। अत एव तत्र पृथिवीपतिग्रहणम्, इह तु राजग्रहणम्।

\+ गोरा.

(३) अन्विच्छेत् अनुगम्य इच्छेत्। स्नातकः गृहस्थः। एतेनात्यन्ताभ्यर्थनया धनार्जनमेभ्यस्त्रिभ्य एवेत्यर्थः।

मवि.

(४) अपणपूर्वकं ये याजनाध्यापने तयोरनापद्वृत्तित्वम्। अत एव 'कृतज्ञोऽद्रोही मेधावी शुचिः कल्याणसूचकः। अध्याप्या धर्मतः साधुशक्ताप्तज्ञातिवित्तदाः।।' (यास्मृ. १।२८) इति याज्ञवल्क्यवचने वित्तदस्याध्यापनानुज्ञा। तत्र च वित्तद इति अपणपूर्वकमर्थप्रदातेति विज्ञानेश्वरेण व्याख्यातम्। यत्तु मनुः – 'राजतो धन..... इति स्थितिः।।', तथा च याज्ञवल्क्यः – 'राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा' इति याजनाध्यापनयोरापद्धर्मत्वमुक्तम्(? क्तवान् तत्) वृत्तौ (? स्मृतौ) सीदन्निति पदात् विधाना(? विभागा)भाव इति विज्ञानेश्वरेण व्याख्यानात् न वृत्त्यन्तरासंभवरूपत्वेन आपद्वृत्तित्वम्। यद्वा, राजप्रतिग्रहसाहचर्यात् पणपूर्वकयाजनाध्यापनपरम्, सीदन्निच्छेदिति धनकामनया पणपूर्वकयाजनाध्यापनप्रतीतेः। तेन अपणपूर्वकप्रशस्तयाजनाध्यापनयोरनापद्यपि स्नातकधर्मत्वम्। २।२५६

अत्र सीदन्निति प्रशस्तद्विजातिभ्यो याचितायाचितप्रतिग्रहवृत्त्यसंभवे राजतोऽपि अयाचितं धनं ग्राह्यमिति गम्यते। विज्ञानेश्वरेण तु सीदन्निति दायाद्यधनाभावे राजप्रतिग्रहशिष्यधन(प्रति)ग्रहयोर्ग्राह्यत्वमिति व्याख्यातम्। न चैतद्राजपदं परिपालनवृत्तिक्षत्रियपरमिति वाच्यम्, नारदेन परिपालनवृत्तिक्षत्रियधनग्रहणस्य मुख्यकल्पत्वेनाभिधानात्।

निप्र. २।२७०

(५) स्नातकः वेदस्नातकः विद्यास्नातकः व्रतस्नातको वा। « भाच.

\+ स्मृच. गोरागतम्। ममु. गोरावत्। मच., नन्द. गोरागतम्।
« शेषं मेधागतम्।

**[१]न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः।**
**सूनाचक्रध्वजवतां वेशेनैव च जीवताम्।।**

(१) उक्तं 'राजतो धनमन्विच्छेत्' (मस्मृ. ४।३३) इति। राजशब्दश्चायं क्षत्रियजातावक्षत्रियेऽपि जनपदेश्वरे दृष्टप्रयोगः 'ब्राह्मणानां राज्यम्' इति। तत्र प्रतिग्रहविधौ तन्निषेधे च जनपदेश्वरवचनो गृह्यते। येनाऽऽह – अराज्यन्यप्रसूतित इति। जनपदैश्वर्यं हि सर्ववर्णसंभवि लिप्सया। अतो विशेष्यते राजन्यात्क्षत्रियाद्यस्य प्रसूतिः उत्पत्तिः नास्ति तस्माद्राज्ञो जनपदेश्वरान्न गृह्णीयात्। क्षत्रियादपि लुब्धादुच्छास्त्रवर्तिनः वक्ष्यमाणेन प्रतिषेधेन। सूना पशुमारणम्। संज्ञपनपूर्वकेण मांसक्रयेण यो जीवति स सूनावान्। खटिक इति लोके प्रसिद्धः। ध्वजो मद्यपण्यः, तत्क्रयविक्रयजीवी। वेशः पण्यवृत्तिः, तया यो जीवति स्त्री वा पुमान् वा।

× मेधा.

(२) 'राज्ञोऽपत्ये जातिग्रहणम्' (वार्तिकम्) इति क्षत्रिय एव राजन्य उच्यते। तस्य संततिः (? प्रसूतिः) अपत्यं विशेषवचनात् क्षत्रिय एव राजन्यप्रसूतिः। न राजन्यप्रसूतिः अराजन्यप्रसूतिः अक्षत्रियः। तस्मादक्षत्रियाद्राज्ञः प्रकरणादनापदि न प्रतिगृह्णीयात्। तथा सौनिकतैलिकमद्यवणिजां पण्यस्त्रीव्यवहारेण च जीवतां न प्रतिगृह्णीयात्।

§ गोरा.

(३) राज्ञः जनपदपालकस्य अराजन्यप्रसूतेः विप्रादेः। सूनेति। दशमहाप्राणिवधस्थानं सूना। तत्प्रवर्तकः सूनावान्। तिलनिष्पीडकः चक्रवान्। शौण्डिकः सुराध्वजवत्तया ध्वजवान्। वेशेन अङ्गोपस्कारेण जीवन्वेश्याजनः। एषामपि न ग्राह्यमापद्यपि। मवि.

(४) सूना प्राणिवधस्थानम्। चक्रं सर्षपादिवहनस्थानम्। तदस्यास्तीति चक्री। ध्वजवान् शौण्डिकः। वेशोऽत्र गणिकावृत्तिः। गृर. ४५८

× बाल. मेधागतम्। ममु., नन्द., भाच. मेधागतं गोरागतं च।
§ गृक., मुक्ता. गोरागतम्।
(१) मस्मृ. ४।८४; विम्व. १।१४० चतुर्थचरणमात्रम्; मेधा. ४।३३ पू.: १०।११३ प्रथमचरणमात्रम्; गृक. २३४; ममु.; ४।३३ पू.; गृर. ४५५ पू.; (=): ४५७ सूनाचक्र (सूनिचक्रि); मपा. २१८:२१९ उत्त.; निप्र. २।२७४ : २।५१२ पू.; मुक्ता. ५५ जीवताम् (जीविनाम्); आन. ६२३ सूतितः (सूतेः); बाल. १।१४१ पृ. ४०१.

(५) न राज्ञ इति। लोभात् प्रजापीडकस्य।

मपा. २१८

(६) 'राजतो धनमन्विच्छेत्' इति सीदत्कुटुम्बस्य राजप्रतिग्रहस्योक्तत्वात् प्रजापालनकर्तरि अतज्जातौ राजपदं भाक्तमिति मीमांसास्तबके स्थापितम्। अतोऽतज्जातेः प्रतिग्रहो निषिद्ध इति सार्थवादमाह – नेत्यष्टभिः। सूना स्वयं निहत्य मांसविक्रयः, चक्रं तिलादिपेषणम्, ध्वजः मद्यम्, एतद्वताम्। वेशः संभोगार्थं स्त्रीपुंसयोर्भृतिः। मच.

(७) ध्वजः सुराविक्रयगृहमिति गृहद्वारे ध्वजस्थापनम्। तद्वतामित्यर्थः। $ आन. ६२३

**'दशसूनासमं चक्रं दशचक्रसमो ध्वजः।**
**दशध्वजसमो वेशो दशवेशसमो नृपः॥**

(१) उत्तरस्योत्तरस्य दोषगुरुत्वज्ञापनार्थमेतत्। आपद्युपायो वक्ष्यते। मेधा.

(२) सूना आघातनस्थानम्। दशसु सूनासु यावान् सौनिकस्य दोषस्तावान् चक्रवर्तिनि तैलिके। दशसु च तैलिकेषु यावांस्तावान् ध्वजिनि मद्यवणिजि। दशसु ध्वजिषु यावांस्तावान् वेशवति। दशसु वेशवत्सु यावांस्तावान्नृपे। एवं च उत्तरोत्तरनिन्दातिशयदर्शनेनाऽऽपदि पूर्वदातृसद्भावे उत्तरः परिहरणीयः। × गोरा.

(३) दशसूनासमं तावत्पापयुक्तम्। सूनादिपदानि तद्वल्लक्षकाणि। वेश्या तु स्वपदेनैवोपात्ता। तत्रापि वेश इति पठन्ति। नृपः अराजन्यप्रसूतिः, तत्प्रक्रमात्। एवं राजेत्यत्रापि। मवि.

(४) गोविन्दराजस्तु 'दशवेश्यासमो नृपः' इति *पठति। मेधातिथिप्रभृतयः प्राञ्चो 'दशवेशसमो नृपः' इति पठन्ति। सूनादिशब्दैस्तद्वानुपलक्ष्यते। # ममु.

(५) एतेषां सौनिकादिचतुर्णामपि प्रतिग्रहो न कार्यः। दोषवत्त्वेऽप्येतेषां नाराजन्यनृपतुल्यतेत्याह – दशेति। सूनाया दोषप्रायश्चित्तार्थं संकरीकरणं(? णत्वं) 'खरोष्ट्र-(? राश्वोष्ट्र) मृगेभाणाम्' (मस्मृ. ११।६८) इत्युक्तम्। तद्दशगुणश्चक्रिणि, तद्दशगुणः शौण्डिके, तद्दशगुणो वेश्यायाम्, तद्दशगुणो नृपे इति। आपदि पूर्वपूर्वालाभ उत्तरोत्तरस्य धनं ग्राह्यमिति तात्पर्यम्, उत्तरोत्तरस्य दोषाधिक्यात्। गोविन्दराजः तु 'दशवेश्यासमः' इति पठति। मच.

(६) एतेषां तारतम्यमाह – दशेति। नृपः अराजन्यप्रसूतिरिति विभक्तिं परिणमय्यानुषज्यते। राजनिन्दार्थो दशसूनादीनामुपन्यास इति केचित्। नन्द.

(७) सूनादयः अर्शआद्यजन्ता इति केचित्। वस्तुतः 'द्वयोः स्वरूपतो निन्द्यत्वम्, त्रयाणां तु न तथा, किंतु सूनादिकृतम्' इति सूचनाय वैषम्योक्तिः, तात्पर्यं तु तत्रैव इति यथाश्रुतमेव साध्विति बोध्यम्।

बाल. १।१४१ पृ. ४०१

**'दश सूनासहस्राणि यो वाहयति सौनिकः।**
**तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः॥**

(१) सूनया चरति सौनिकः। वाहयति स्वार्थसाधने व्यापारयति। घोरः भीषणोऽयम्, नरकादिहेतुत्वात्।

† मेधा.

(२) एवं चोक्तकलनया – दश सूनासहस्राणीति। दश सूनासहस्राणि यः सौनिकः स्वार्थे व्यापारयति तेन तुल्यो राजा मन्वादिभिः स्मृतः। अतस्तत्संबन्धी प्रतिग्रहो नरकपातहेतुत्वात् भीषणीयः। गोरा.

(३) दश सूनासहस्राणीत्युक्तार्थसंक्षेपः। मवि.

(४) राजा अराजन्यः। ‡ मच.

---

$ शेषं मेधागोरागतम्।

× भाच. गोरागतम्।

* गोविन्दराजीयादर्शपुस्तके 'दशध्वजसमा वेश्या दशवेश्यासमो नृपः' इति पाठो मुद्रितः। गोविन्दराजव्याख्यानात्तु नायं पाठस्तदभिमत इति प्रतीयते। मचव्याख्यानेऽपीदमनुसंधातव्यम्।

(१) **मस्मृ.** ४।८५; **गृक.** २३४ मो वेशो दशवेश (मा वेश्या दशवेश्या); **मवि.** गृकवत्, आदर्शवदपि पाठः; **गृर.** ४५८; **निप्र.** २।२७४ मो वेशो दशवेश (मो वेश्या दशवेश्या); **मुक्ता.** ५५ (दशसूनासमश्चक्री दशचक्रिसमो ध्वजी। दशध्वजिसमा वेश्या दशवेश्यासमो नृपः॥); **वीमि.** १।१४१ निप्रवत्; **आन.** ६२३ मुक्तावत्; **बाल.** १।१४१ पृ. ४०१ गृकवत्.

# शेषं गोरावत्।

† ममु. मेधावत् गोरावच्च। नन्द. मेधागतं मचवत् च।

‡ शेषं मेधावत् गोरावच्च।

(१) **मस्मृ.** ४।८६; **अप.** १।१४१; **गृक.** २३४; **गृर.** ४५८ दश सू (दशशू) सौनिकः (शौण्डिकः); **निप्र.** २।२७४; **वीमि.** १।१४१ दश सू (दशसू); **बाल.** १।१४१ पृ. ४०१.

(५) सूना प्राणिहिंसा। $ भाच.

(६) दशेति भिन्नं पदम्।

* बाल. १।१४१ पृ. ४०१

**[१]यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः।**
**स पर्यायेण यातीमान्नरकानेकविंशतिम्।।**

(१) अवयुत्यवादेन राजप्रतिग्रहे निन्दा। लुब्धः आदानशीलः सामन्तकादिभ्यः। उच्छास्त्रवर्ती 'श्रुतशीले च विज्ञाय' (मस्मृ. ११।२२) इत्यादिशास्त्रमतिक्रम्य व्यवहरति असद्दण्डपरस्त्रीहरणादिना। पर्यायेण एकत्र फलमनुभूयान्यत्र गच्छति। नरकशब्दो निरतिशयदुःखवचनः। केवलदुःखश्रवणार्थापत्त्या वा देशविशेषवचनः। एकविंशतिसंख्याऽर्थवादः। ¤ मेधा.

(२) क्षत्रियस्यापि च कृपणस्य शास्त्रातिक्रमवर्तिनः राज्ञो यः प्रतिग्रहं करोति स इमान् वक्ष्यमाणान् नरकान् यातनास्थानानि क्रमेण प्राप्नोति। ¶ गोरा.

(३) राज्ञः राजन्यजातीयस्यापि लुब्धस्य वा शास्त्रविरुद्धाचरणशीलस्य वा यो गृह्णाति तस्य वक्ष्यमाणो दोषः। पर्यायेण क्रमेण। मवि.

(४) अत्र यो राज्ञः प्रतिगृह्णाति लुब्धस्येति निषेधान्तरम्। तेन लुब्धस्य शास्त्रातिक्रमकारिणः क्षत्रियाक्षत्रियस्य नृपमात्रस्य प्रतिग्रहोऽनेन निषिध्यते।

निप्र. २।२७५

(५) उक्तं दूषणमाह – यो राज्ञ इति। अनुवादमात्रं घोरनरकसंबन्धाय। लुब्धस्य परधनगर्धिनः कृपणस्य वा। एकविंशतिनरकलक्षणं मार्कण्डेयपुराणोक्तं ज्ञेयम्। याति भोगाय गच्छतीत्यर्थः। मच.

---

$ शेषं मेधागतं मचवच्च।

* शेषं मेधावत्।

¤ बाल. मेधागतम्।

¶ ममु., नन्द., भाच. गोरावत्।

(१) **मस्मृ.** ४।८७; **मेधा.** १०।११३ द्वितीयचरणमात्रम्; **अप.** १।१४१; **गृक.** २३४; **स्मृच.** २।४६०; **गृर.** ४५८ गृह्णाति लु (गृह्णीयाल्लु); **मपा.** २१९ यो (न) शेषं गृरवत्; **आपा.** ११३ गृरवत्; **निप्र.** २।२७५ : २।३३२ विंशतिम् (विंशतिः) (=); **मुक्ता.** ५५; **विपा.** ३।२।२४८ (=); **वीमि.** १।१४१; **आन.** ६२३-६२४; **बाल.** १।१४१ पृ. ४०१.

**[१]तामिस्रमन्धतामिस्रं महारौरवरौरवौ।**
**नरकं कालसूत्रं च महानरकमेव च।।**
**[२]संजीवनं महावीचिं तपनं संप्रतापनम्।**
**संघातं च सकाकोलं कुड्मलं पूतिमृत्तिकम्।।**
**[३]लोहशङ्कुमृजीषं च पन्थानं शाल्मलीं नदीम्।**
**असिपत्रवनं चैव लोहदारकमेव च।।**

(१) अत्र यातीत्यनुवर्तते। तत्रान्धकाररूपस्तामिस्रः। निबिडान्धकारात्मकान्धतामिस्रः। महारौरवरौरवौ महाकलकलकलकलात्मकौ। कालसूत्राख्यो नरकः यत्र सर्पैर्बाधः। महानरकः यत्र महती सर्वप्रकारा पीडा। संजीवनं यत्र § बहुशः संजीव्य व्यापाद्यन्ते। महावीचिः यत्र महाकल्लोलैर्नीयते। तपनः अग्न्यादिसंतापात्मकः। संप्रतापनः कुम्भीपाकः। संघातः अत्यन्तसंवृते प्रदेशे बहूनामवस्थानम्। काकोलं यत्र काकैर्भक्ष्यन्ते। कुड्मलं यत्र रज्जुभिः पीडनम्। पूतिमृत्तिकः पुरीषगन्धमृत्तिकः। लोहशङ्कुः सूचीभेदनं यत्र। ऋजीषं पिष्टपवनप्रक्षेपो यत्र। पन्थाः यत्राट्यते। शाल्मलः यत्र शाल्मलिकण्टकैस्तुद्यते। नदी यत्र नद्याऽपहृियते। असिपत्रवनं यत्र करपत्रैर्विदार्यते। लोहचारको यत्र निगडबन्धः। गोरा.

---

§ यत्र बहुशो व्यापाद्य संजीव्यन्ते इति व्याख्यातुमुचितम्।

(१) **मस्मृ.** ४।८८; **अप.** १।१४१; **गृक.** २३४; **स्मृच.** २।४६०; **गृर.** ४५८; **आपा.** ११३; **निप्र.** २।२७५; **वीमि.** १।१४१; **बाल.** १।१४१ पृ. ४०१ रौरवौ (रौरवे).

(२) **मस्मृ.** ४।८९; **अप.** १।१४१ वीचिं त (वीचिता); **गृक.** २३४ वीचिं (वीचीं); **स्मृच.** २।४६० संघातं (सहातं) कुड्मलं (कुट्मलं) पूतिमृत्ति (प्रतिमूर्ति); **गृर.** ४५८ तं च सका (तकं च का) कुड्मलं (कुशूलं) शेषं गृकवत् ; **आपा.** ११३ जीवनं म (दीपनम) कुड्म (कुम); **निप्र.** २।२७५; **वीमि.** १।१४१; **बाल.** १।१४१ पृ. ४०१ संघातं (संवातं).

(३) **मस्मृ.** ४।९०; **गोरा.** शाल्मलीं (शाल्मलं) दारक (चारक); **अप.** १।१४१ मृजीषं (मृबीसं) शाल्मलीं (शाल्मलां) दारक (चारक); **गृक.** २३५ शङ्कुमृजीषं (सङ्कुमृतीक्षं) लोहदा (लोहाङ्गा); **मवि.** दारक (चारक); **स्मृच.** २।४६१; **गृर.** ४५८ षं च (षं तु); **आपा.** ११३ कुमृजी (कुं मृगी) लीं न (लीन) दारक (भारक); **निप्र.** २।२७५ दारक (चारक); **वीमि.** १।१४१ लोहदा (लोहं क); **बाल.** १।१४१ पृ. ४०१.

(२) नरकमिति कालसूत्रविशेषणम्। पन्थानं सदा वर्त्मवहनेन श्रमहेतुम्। नदीं वैतरणीम्। लोहचारकं यत्र तप्तलोहोपरि गम्यते। तामिस्रादयोऽन्धःसंज्ञा नरकभेदाः। मवि.

(३) पूर्वश्लोके सामान्यतः 'नरकानिमा(? इमान्नरका)-नेकविंशतिम्' इत्युक्तम्। इदानीं तानेव नामतो निर्दिशति – तामिस्रमिति त्रिभिः। एतेषां नरकाणां स्वरूपं मार्कण्डेय-पुराणादिषु विस्तरेणोक्तं तत्रैवावगन्तव्यम्। * ममु.

**'एतद्विदन्तो विद्वांसो ब्राह्मणा ब्रह्मवादिनः।**
**न राज्ञः प्रतिगृह्णन्ति प्रेत्य श्रेयोभिकाङ्क्षिणः।।**

(१) पूर्वस्य प्रतिग्रहनिषेधविधेरुपसंहार एषः। राज्ञः प्रतिग्रहो विविधदुःखनरकादिहेतुरिति जानन्तो विद्वांसो ब्राह्मणा न राज्ञः प्रतिगृह्णीयुः। प्रेत्य भवान्तरे श्रेयः कल्याणं ये काङ्क्षन्ति कामयन्ते। प्रेत्येति तु ल्यबन्तप्रतिरूपकं शब्दान्तरम्। ब्रह्म वेदस्तं वदन्ति पठन्ति। विद्वद्ग्रहणं ब्रह्मवादिग्रहणं च दुःखातिशयदर्शनार्थम्। तेषां चा(? ना)-तीव प्रतिग्रहाद्दोषः। वक्ष्यति – 'तस्मादविद्वान् बिभीयात्' (मस्मृ. ४।१९१) इति। « मेधा.

(२) एतत् राजप्रतिग्रहफलं शास्त्रज्ञा वेदाध्यायिनो ब्राह्मणा जानन्तः परलोकदुःखाभावार्थिनो राज्ञो धनं न प्रतिगृह्णन्ति। गोरा.

(३) विद्वांसः वेदार्थज्ञाः। ब्रह्मवादिनः वेदाध्येतारः। राज्ञः राजमात्रस्य, लुब्धत्वादिदोषाशङ्कया। मवि.

(४) प्रतिग्रहो विविधनरकहेतुरिति जानन्तो ब्राह्मणा धर्मशास्त्रपुराणादिविदो वेदाध्यायिनो जन्मान्तरे श्रेयः कामयन्तो न राज्ञः प्रतिगृह्णीयुः। विदुषो हि प्रतिग्रहे नातीव दोषः। यतो वक्ष्यति – 'तस्मादविद्वान्बिभीयात्' इति। तेषामपि निषिद्धो राजप्रतिग्रहः प्रचुरप्रत्यवायफलक इति दर्शयितुं विद्वद्ग्रहणं ब्रह्मवादिग्रहणं च। ममु.

(५) एतत् उक्तं नरकसाधनत्वं विद्वांसो धर्मशास्त्र-पुराणादिविदः ब्रह्मवादिनो वेदार्थनिपुणा अपि प्रेत्य श्रेयोभि-काङ्क्षिणः अराजन्यप्रसूतेः राज्ञो न प्रतिगृह्णन्तीत्यर्थः। मच.

(६) उक्तं निगमयति – एतदिति। एतत् एकविंशति-नरकपतनम्। राज्ञः क्षत्रियस्याक्षत्रियस्य च लुब्धस्योच्छा-स्त्रवर्तिनः। नन्द.

(७) प्रतिगृहीतॄणामिहैव भोगरूपं श्रेयः, प्रेत्य श्रेयो नास्तीत्यवगम्यते। आन. ६२४

(८) एतत् राजप्रतिग्रहो विविधदुःखनरकादिहेतुरिति विदन्तः जानानाः विद्वांसो ब्राह्मणा न तथा कुर्युः। लेट् बोध्यः। प्रेत्येति। भवान्तरे कल्याणं ये कामयन्ते ते इत्यर्थः। गुणभूतक्रियान्वयात् कः(? क्त्वः) साधुत्वम्। एतेन ल्यबन्तप्रतिरूपकमिदमिति मेधातिथ्युक्तमपास्तम्।

* बाल. १।१४१ पृ. ४०१

### ब्राह्मणावगूरणताडन-रक्तस्रावणनिन्दया ब्राह्मणप्रशंसा

**'ब्राह्मणायावगूर्यैव द्विजातिर्वधकाम्यया।**
**शतं वर्षाणि तामिस्रे नरके परिवर्तते।।**

(१) अविशेषेण सर्वविषये ताडने निषिद्धे ब्राह्मणे तत्क्रियाया दोषातिशयदर्शनार्थं पञ्चश्लोकी। अवगूर्य उद्यम्य एव दण्डादि वधकाम्यया ताडनेच्छया, विनैव निपातेन, शतं वर्षाणि नरके पच्यते परिवर्तते तत्फलमुपभुङ्क्ते। # मेधा.

(२) द्विजातिरपि। x गोरा.

(३) द्विजातिः चातुर्वर्ण्यम्। $ मच.

---

* नन्द., भाच. ममुगतम्।

« मुक्ता., आन., भाच. मेधागतम्।

(१) **मस्मृ.** ४।९१; **मेधा.** गृह्णन्ति (गृह्णीयुः); **अप.** १।१४१; **गृक.** २३५; **स्मृच.** २।४६१; **ममु.** मेधावत्; **गृर.** ४५८ ब्रह्म (वेद); **आपा.** ११३ द्विदन्तो (द्वदन्तो) न राज्ञः प्र (नरकात्प्र) प्रेत्य (राज्ञः) भिका (धिका); **निप्र.** २।२७५; **मुक्ता.** ५५ द्विदन्तो (द्विदित्वा); **वीमि.** १।१४१; **आन.** ६२४ मुक्तावत्; **बाल.** १।१४१ पृ. ४०१ वादिनः (वेदिनः).

* शेषं मेधागतम्।

# मवि., नन्द., भाच. मेधागतम्।

x शेषं मेधागतम्। ममु. मेधागतं गोरावच्च।

$ शेषं मेधागतम्।

(१) **मस्मृ.** ४।१६५; **मेधा.** तामिस्रे (नरके) नरके (पच्यते); **गृक.** ३९४ णाया (णाद्या); **गृर.** ५७३ वर्तते (पद्यते).

**¹ताडयित्वा तृणेनापि संरम्भान्मतिपूर्वकम्।**
**एकविंशतिमाजातीः पापयोनिषु जायते।।**

(१) संरम्भः क्रोधावेशः। न तु नर्मणा। बुद्धिपूर्वम्। एकविंशतिमाजातीः। जातिः जन्म। आकारोऽनर्थकः, प्रलम्बत इतिवत्। पापानां योनय इति तिर्यग्जन्तवो दुःखबहुलाः। तिष्ठतु तावद्दण्डादिः पीडाकरः पदार्थः, तृणेनापि ताडने दीर्घकालो नरकानुभवः। + मेधा.

(२) आजातीरित्याङ् पादपूरणः। × गोरा.

(३) एतच्च तामिस्रे दुःखमनुभूय पश्चात्।
× मवि.

(४) ब्राह्मणविषये दण्डपातने दोषविशेषमाह – ताडयित्वेति। §आजातेः आजननात्। जायतेः सकर्मत्वमृषिनिपातनात्। नन्द.

**²अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः।**
**दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः।।**

(१) असृक् लोहितम्, तत् अङ्गतः अङ्गात् यत्रोत्पादयति ब्राह्मणस्य खड्गप्रहारादिना। अयुद्ध्यमानस्य, न तु द्रोणाचार्यवत्क्षात्रेण धर्मेण युयुत्सोः। सुमहद्दुःखं नरकादि प्रेत्य मृतो जन्मान्तरे। अप्राज्ञतयेत्यनुवादः। प्राज्ञो हि शास्त्रार्थज्ञानान्न कथमप्येवं कुर्यात्। « मेधा.

(२) युद्धं विना ब्राह्मणशरीरतो मौर्ख्यात् रुधिरं नर उत्पाद्य परलोके महत् दुःखं प्राप्नोति। गोरा.

(३) अयुध्यमानस्येति युध्यमानस्य क्षतकरणे दोषाल्पता दर्शिता। अत एव तद्वधेऽपि प्रायश्चित्ताल्पत्वमुन्नेयम्।
मवि.

(४) न तु दृश्यते दुःखमिति चेत्तत्राऽऽह – प्रेत्येति।
$ मच.

(५) अयुध्यमानस्य शास्त्रेण धर्मेण (अ)युयुत्सोः। .... अन्ततः मध्यतः। $ भाच.

**¹शोणितं यावतः पांसून् संगृह्णाति महीतलात्।**
**तावतोऽब्दानमुत्रान्यैः शोणितोत्पादकोऽद्यते।।**

(१) ईषत्प्रहारे पूर्वफलम्। अधिके तु पांसवः रजांसि धूल्यवयवाः तान्यावतः यत्परिमाणान् गृह्णाति संहन्ति ब्राह्मणाङ्गच्युतं भूमिपतितं लोहितम्, तावतोऽब्दान् तावन्ति वर्षाणि अमुत्र परलोके अद्यते श्वशृगालैर्यः शोणितस्य उत्पादकः प्रहर्ता। * मेधा.

(२) सामान्योक्तदुःखपरिमाणाभिधानम्– शोणितमिति। संगृह्णाति संग्रहीतुं शक्नोति। अमुत्र नरके। अद्यते भक्ष्यते।
मवि.

(३) यावतो धूलिद्व्यणुकान्। × ममु.

(४) पांशुः त्रसरेणुः। × मच.

(५) अन्यैः इह(?)लोकगतैः। नन्द.

(६) अद्यैः अदनीयैः सह शोणितोत्पादकः।
× भाच.

**²न कदाचिद्द्विजे तस्माद्विद्वानवगुरेदपि।**
**न ताडयेत्तृणेनापि न गात्रात्स्रावयेदसृक्।।**

(१) पूर्वस्य क्रियात्रयप्रतिषेधविधेरुद्यमननिपातनविषयस्योपसंहारः। न कदाचित् आपद्यपीत्यर्थः। + मेधा.

(२) न कदाचिदिति। यत एवं ब्राह्मणावगोरणादिना भवति तस्मात् शास्त्रविन्न कदाचिदपि ब्राह्मणस्य दण्डादि उद्यच्छेत्। नापि तं तृणेनापि हन्यात्। न च शरीराद्रुधिरमुत्पादयेत्। ¶ गोरा.

---

+ गृक., ममु., गृर., मच., भाच. मेधागतम्।
× शेषं मेधागतम्।
§ एतदादिर्ग्रन्थोऽत्यन्तं फल्गुः।
« ममु. मेधागतम्।
$ शेषं मेधागतम्।

(१) **मस्मृ.** ४।१६६; **गृक.** ३९४ माजातीः (मजातिः); **गृर.** ५७३; **नन्द.** जातीः (जातेः).

(२) **मस्मृ.** ४।१६७; **गृक.** ३९४ सृगङ्गतः (नृशंसिनः); **गृर.** ५७३ सुमह (स मह); **भाच.** गङ्गतः (गन्ततः).

$ शेषं मेधागतम्।
* गोरा. मेधागतम् । गृक., गृर. मेधागतं मविगतं च।
× शेषं मेधागतम्।
+ ममु. मेधागतं गोरागतं च।
¶ मवि., भाच. गोरागतम्।

(१) **मस्मृ.** ४।१६८; **मेधा.** (सं०); **गृक.** ३९४; **गृर.** ५७३ पांसून (पांशून्) तलात् (तले); **मच.** पांसून् (पांशून्); **भाच.** त्रान्यैः (त्राद्यैः).

(२) **मस्मृ.** ४।१६९; **गृक.** ३९४ द्विजे (द्विजं); **गृर.** ५७४ पूर्वार्धे (न कदाचिद्द्विजं रोषात्तस्मादश्रग्वरेदपि।) यमः.

(३) हिंसाप्रकरणमुपसंहरति – नेति। असृगिति द्वितीयान्तम्। § मच.

वर्ज्यः प्रतिग्रहः

**[१]प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्।**
**प्रतिग्रहेण ह्यस्याऽऽशु ब्राह्मं तेजः प्रशाम्यति।।**

(१) परस्माददृष्टप्रयुक्ताद्यल्लभ्यते स प्रतिग्रहः। तत्र समर्थः शक्तोऽपि प्रसङ्गं पुनः प्रवृत्तिं वर्जयेत्। श्रुताध्ययनशीलसंपत्तिर्द्रव्यविधिज्ञता च सामर्थ्यम्। $'तस्मादविद्वान्बिभियात्' (मस्मृ. ४।१९१) इत्यत्रोक्तमप्येतत् उत्तरार्थं पुनरनूद्यते। मेधा.

(२) श्रुताध्ययनादिना प्रतिग्रहे(ण?) समर्थोऽपि तत्र पुनः प्रवृत्तिं वर्जयेत्। यस्मात् प्रतिग्रहेणास्याध्ययनादिनिमित्तप्रभावः क्षिप्रमेव प्रलीयते। 'यात्रामात्रप्रसिद्ध्यर्थम्' (मस्मृ. ४।३) इत्यादिनोक्तमप्येतत् तेजःप्रशमफलकथनार्थं पुनरुच्यते। ‡ गोरा.

(३) प्रसङ्ग अत्यासक्तिः। # गृक. २४८

(४) प्रकारान्तरेण जीवन् प्रतिग्रहं न कुर्यादित्याह – प्रतीति। * मच.

(५) ब्राह्मं तेजः ब्राह्मी शक्तिः। समर्थोऽपीतिवचनाद(सम)र्थस्य दोषातिशयः सूचितः। ¶ नन्द.

§ नन्द. मचगतम्।

$ वचनस्यास्य वक्ष्यमाणत्वेनोक्तत्वोक्तिर्न युज्यते। किंच, पूर्वमुक्तस्य वक्ष्यमाणानुवादत्वमपि नोपपद्यते। अपि च, असमानार्थत्वादप्यनुवादत्वानुपपत्तिः। तथा वक्ष्यमाणवचनस्य निगमनरूपत्वेनापि प्रकृतवचनस्य तदनुवादत्वं न श्लिष्यते। तस्मात् 'यात्रामात्रप्रसिद्ध्यर्थम्' इत्यस्य स्थाने 'तस्मादविद्वान्' इति प्रमादेन पतितमिति संभाव्यते। गोराव्याख्यानमत्रोपोद्बलकम्।

‡ मवि. भाच. गोरागतम्। ममु. गोरावत्।

# गृर. गृकवत्।

* शेषं गोरागतम्।

¶ शेषं मेधागतम्।

(१) मस्मृ. ४।१८६; मेधा. ४।५ प्रथमचरणमात्रम्; गृक. २४८ ब्राह्मं ते (ब्रह्मते); गृर. ४६७; निप्र. २।२९५ ह्यस्या (तस्या); मच. ४।१९१ मेधावत्; चमव्या. ७७ पू.; मुक्ता. ५४ शाम्यति (ण्यश्यति); सिन्धु. १३०८ प्रथमचरणमात्रम् (=); संभ. ४८ पू.; स्मृतिकौ. ४७६ मेधावत् (=); आन. ६२० जः प्रशाम्यति (जो विनश्यति) शेषं निप्रवत्; कृभ. १३०८ पू. (=).

**[१]न द्रव्याणामविज्ञाय विधिं धर्म्यं प्रतिग्रहे।**
**प्राज्ञः प्रतिग्रहं कुर्यादवसीदन्नपि क्षुधा।।**

(१) तद्दर्शयति – नेति। अविज्ञाय कामोपभोगाद्यर्थं न प्रतिग्रहः कर्तव्यः। एतदुक्तं भवति – आत्मनः कुटुम्बस्थित्यै नित्यकर्मसंपत्त्यै च प्रतिग्रहः कर्तव्यः, नान्यथा। अवसीदन्नपि क्षुधा अप्रतिगृह्णन्यद्यप्यवसादं गच्छति। अवसादः शरीरस्यानभिवृद्धिः। ☐अथवा 'द्रव्याणां विधिं धर्म्यं प्रतिग्रहे' इत्येवं संबन्धः क्रियते। कोऽसौ धर्म्यो विधिः? धर्म्यं प्रयोजनं विज्ञाय प्रतिग्रहमन्त्रं द्रव्याणां च देवताः – 'अग्नये हिरण्यम्', 'रुद्राय गाम्' (तैआ. ३।१०।१,२) इत्यादिः। मेधा.

(२) प्रतिग्रहमन्त्रद्रव्यदेवतादिकं धर्मादनपेतं प्रतिग्रहविधानमबुद्ध्वा क्षुधाऽवसादं गच्छन्नपि न प्राज्ञः प्रतिग्रहं कुर्यात्, किं पुनरनापदि? इति। + गोरा.

(३) प्रतिग्रहे धर्म्यो विधिः प्रतिग्रहे इतिकर्तव्यता। # गृक. २४८

(४) तेन विना जीवन्तं प्रति द्रव्याद्यविज्ञाय प्रतिग्रहो न कार्य इत्याह – नेति पञ्चभिः। धर्म्यम् 'अग्नये हिरण्यं रुद्राय गाम्' इत्यादिप्रतिग्रहमन्त्रादिकम्। मच.

(५) "यत्किंच प्रतिगृह्णीयात्तत्सर्वम् 'उत्तानस्त्वाऽङ्गिरसः प्रतिगृह्णातु' इत्येव प्रतिगृह्णीयात्" (तैब्रा. २।३।४।६) इति विधिः। $ मुक्ता. ५८

☐ 'विधिं धर्म्यं प्रतिग्रहे' इत्यस्मिन् संबन्धे विकल्पासंभवात् 'द्रव्याणां प्रतिग्रहे इति, द्रव्याणां प्रतिग्रहम् इति वा' इति विकल्प एवावशिष्यते। तत्र कल्पान्तरस्य पूर्वमव्याख्यातत्वात् 'द्रव्याणां प्रतिग्रहे' इत्यस्य कल्पान्तरत्वोक्तिर्न संगच्छते। किंच, 'द्रव्याणां प्रतिग्रहम्' इति दूरान्वयो न सामञ्जसः। तेन 'अथवा' इति पदं लेखकप्रमादपतितमिति संभाव्यते।

+ मवि., भाच. गोरागतम्।

# गृर. गृकवत्।

$ आन., नन्द. मुक्तावत्।

(१) मस्मृ. ४।१८७; गृक. २४८ मवि (मनु) धर्म्यं (धर्म्ये) प्राज्ञः (प्रातः); गृर. ४६७ धर्म्यं (धर्म्ये) कुर्या (दद्या); मर. १७४ धर्म्यं (धर्मं); निप्र. २।२९०; मुक्ता. ५८; आन. ६२९.

**[1]हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान्घृतम्।**
**प्रतिगृह्णन्नविद्वांस्तु भस्मीभवति दारुवत्।।**

(१) अविदुषो द्रव्यविशेषं प्रति प्रतिग्रहे दोषातिशयमाह – हिरण्यमिति। भस्मीभवति दारुवत्। यथा दारु अग्निना दग्धं भस्मीभवति तथा यो ब्राह्मणो विद्यासंपन्नो न भवति स एतानि हिरण्यादीनि द्रव्याणि प्रतिगृह्णन् भस्मीभवति। § मेधा.

(२) श्रुताध्ययनशून्यः सुवर्णादीन् प्रतिगृह्णन्नग्निसंयोगेन दारुवत् भस्मीभवति। # गोरा.

(३) अन्नं पक्वान्नम्। अविद्वान् धर्म्यं विधिमजानन्। भस्मीभवति फलशून्यो भवति। मवि.

(४) विशेषतो हिरण्यादिकं विदुषा न प्रतिग्राह्यमित्याह – हिरण्यमिति। नन्द.

**[2]हिरण्यमायुरन्नं च भूर्गौश्चाप्योषतस्तनुम्।**
**अश्वश्चक्षुस्त्वचं वासो घृतं तेजस्तिलाः प्रजाः।।**

(१) भूर्गौश्च तनुं शरीरम् ओषतो दहतः। हिरण्यमायुः †विभक्तिपरिणामः ओषतीतिकर्तव्यः। एवम् अश्वश्चक्षुरित्यादिषु क्रियापदानुषङ्गः कर्तव्यः। * मेधा.

(२) हिरण्यान्ने प्रतिगृहीते अविदुषश्चाऽऽयुर्दहतः, गोभूमी च शरीरम्। अश्ववस्त्रघृततिला यथाक्रमं चक्षुश्चर्मतेजोपत्यानि दहन्ति। न केवलमविद्वान् प्रतिग्रहेण सर्वदा तं दह्यते यावत् (?)। + गोरा.

(३) तस्यैव प्रपञ्चो हिरण्यमायुरित्यादि। उषतः दहतः। त्वचो दाहः कुष्ठाद्युपहत्या। मवि.

(४) अविदुषः प्रतिग्रहीतुः भूर्गौश्च शरीरम् ओषतः दहतः। 'उष दाहे' भौवादिकः, तस्येदं रूपम्। भूगवोर्द्वित्वविवक्षया द्विवचनम्। एवं हिरण्यमन्नं चाऽऽयुरोषतः। अश्वश्चक्षुरित्यादिषु विभक्तिविपरिणामादोषतीत्येकवचनान्तस्यानुषङ्गः। ममु.

(५) ओषतः दहतः। दाहश्चात्र रोगः।

‡ मुक्ता. ५८

**[1]अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः।**
**अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति।।**

(१) यस्य तपो नास्ति। अनधीयानः न चाधीते। अध्ययनेन प्रकृता विद्वत्ता लक्ष्यते। समुदिते चैते विद्यातपसी प्रतिग्रहाधिकारनिमित्तम्। उभयगुणभ्रष्टः प्रतिग्रहे चाभिलाषी स तेन सह मज्जति अधो गच्छति। केन सह? अन्यस्यानिर्देशाद्दातुश्च संनिधानात् तेन दात्रा सहेति गम्यते। प्रतिग्रहीतारं (? ता तं) प्लवमिवाऽऽत्मोत्तरणायाऽऽश्रयते। यस्त्वीदृशोऽपात्रभूतः स दातारमात्मानमुभावप्यधो नयति, यथाऽम्भस्यश्मप्लवः। अश्ममयः प्लवः अश्मप्लवः। पारं तरति येन स प्लवो नावादिः। तत्र यथाऽश्मन्यारूढो नदीतरणार्थमम्भसि मज्जत्यश्मप्लवेन सह (गम्यते ?),

---

§ मच. मेधागतम्।

# ममु. भाच. गोरागतम्।

† विभक्तित्वस्य प्रतिवचनं पर्याप्तत्वात् वचनविपरिणाम इत्यर्थः। 'हिरण्यमायुरोषति', 'अन्नमायुरोषति' इति वाक्यभेदमभिप्रेत्य विभक्तिविपरिणामोऽयं व्याख्यातः। अत एव 'अन्नमायुः' इत्यपि वक्तव्यम्। वस्तुतस्तु द्वितीयचरणे चकारबलात् भुवो गोश्चौषणक्रियायां समुच्चित्यान्वयलाभात् वाक्यैकत्वेन 'ओषतः' इति द्विवचनमेव यथा साधु तथा प्रथमचरणेऽपि चकारबलात् हिरण्यस्यान्नस्य च समुच्चित्यैवौषणक्रियायामन्वयाद्वाक्यैकत्वेन 'ओषतः' इति द्विवचननान्तक्रियापदस्यैव साधुत्वेन विभक्तिविपरिणामोऽत्र न वक्तव्यः, उत्तरत्र तु वक्तव्यः। न च हिरण्यमेवैकं कर्तृ, आयुरन्नं चेति कर्मसमुच्चय इति वाच्यम्, पूर्वश्लोकेन समानविषयत्वात् हिरण्यादेरिवान्नस्याप्यत्र कर्तृत्वात्।

(१) **मस्मृ.** ४।१८८; **गृक.** २४८ तृतीयचरणे (अविद्वान्प्रतिगृह्णानो); **गृर.** ४६७ घृतम् (गृहम्) शेषं गृकवत्; **पमा.** १।१९० दारु (काष्ठ); **मपा.** २२१ गामन्नं (वा अन्नं) तृतीयचरणे (अविद्वान् प्रतिगृह्णीयाद्); **मर.** १७४ गृकवत्; **निप्र.** २।२९० गृकवत्; **मुक्ता.** ५८ गृकवत्; **आन.** ६३० गृकवत्.

(२) **मस्मृ.** ४।१८९; **गृक.** २४८; **गृर.** ४६७ श्चाप्योषत (र्वाऽप्युषत); **मर.** १७५; **निप्र.** २।२९०; **मुक्ता.** ५८.

* मच. मेधागतम्। मर. मेधावत्।

\+ गृक., गृर., भाच. गोरागतम्।

‡ नन्द. मुक्तावत्।

(१) **मस्मृ.** ४।१९०; **गोरा.** पास्त्व (पस्व्य); **गृक.** २४८ वेनेव (वेनैव); **मवि.** गोरावत्; **ममु.** ४।१९४ प्रथमचरणमात्रम्; **गृर.** ४६७ द्विजः (नरः); **मर.** १७५ गृकवत्; **निप्र.** २।२९४ पास्त्वन (पा ह्यन) सह ते (सहिते); **चमव्या.** ७७ गृकवत्; **मुक्ता.** ५८ सह तेनैव (दात्रैव सह); **आन.** ६३० सह तेनैव (दात्रैव सह) इत्यपि पाठान्तरं निर्दिशति; **भाच.** गोरावत्.

(तथा) दाता हि ब्राह्मणाय, द (? आद) दानश्च तादृशो ब्राह्मणः, उभावपि नरकं गच्छतः। * मेधा.

(२) अनधीयानोऽपि अतिशयिततया न मज्जतीत्ये-तदर्थमतपस्वीति। प्लवो भेडः। तेन दात्रा सह मज्जति। दातुरपि तादृक्फलाभावान्मज्जनोक्तिः। मवि.

(३) न केवलमविद्वान् प्रतिगृह्णन्नात्मानमेव पातयति, किंतु दातारमपीत्याह – अतपास्त्विति। अनधीयानः अविद्वान् अतपाश्च सन्नम्भस्यश्मप्लवेनेव तेन दात्रा सहैव मज्जति। यथा जले स्वयमेव मज्जन्नश्मा स्वाश्रितमप्यधो नयति एवं स्वयमेव नरके पतन्नविद्वान्स्वाश्रितं दातारमप्यधो नयतीत्यभिप्रायः। अतपा इति विशेषणात् सतपसो दोष-मात्रत्वं(? वत्त्वं) गम्यते। नन्द.

**[१]तस्मादविद्वान्बिभियाद्यस्मात्तस्मात्प्रतिग्रहात्।**
**स्वल्पकेनाप्यविद्वान् हि पङ्के गौरिव सीदति।।**

(१) अतो नरकभयात् अविद्वान् मूर्खः प्रतिग्रहात् बिभियात् त्रस्येत। न प्रतिगृह्णीयादिति यावत्। तिष्ठतु तावद्धिरण्यादीनि द्रव्याणि, स्वल्पकेनापि त्रपुसीसादिना असारेण स्वल्पया मात्रया प्रतिगृहीतेनाविद्वान् पङ्के कर्दमे गौरिव सीदति। # मेधा.

(२) यस्मात्तस्मात् यतः कुतश्चित् अविशुद्धादपि। गृक. २४८

(३) यस्मात्तस्मादपि सुविशुद्धादपि। गृर. ४६७

(४) अतोऽविद्वान् प्रतिग्रहीता बिभियात्। अल्पकेन हिरण्याद्यन्यतमेन सीदत्येव। अविद्वन्निषेधाभ्यासो निन्दा-तात्पर्यकः, न विद्वत्प्रतिग्रहतात्पर्यकः, 'प्रतिग्रहसमर्थोऽपि' (मस्मृ. ४।१८६) इत्यत्र तन्निषेधोक्तेः। मच.

(५) तस्मात् (अ)विद्वान् बिभियात्। स्वल्पकेनापि प्रतिग्रहेण अविद्वांस्तु सीदति। भाच.

### धनस्यार्जनोपायभेदप्रयुक्तं शुद्धशबलकृष्णत्वरूपं त्रैविध्यम्

**$ [१]श्रुतशौर्यतपःकन्यायाज्यशिष्यान्वयागतम्।**
**धनं सप्तविधं शुद्धमुभयोऽप्यस्य तद्विधः।।**

के पुनस्ते प्रशस्तधनोपायाः। अत उच्यते – श्रुतेति। अत्र श्रुततपसी प्रतिग्रहनिमित्तम्। एकोऽपि प्रतिग्रहो निमित्तभेदाद् भेदेनोक्तः। प्रतिग्राह्यगुणा अपि सामर्थ्यात्तत्र द्रष्टव्याः। यदि नात्यन्तदुष्टो दाता भवति तदा तस्मादागतं शुद्धं भवति। याज्यशिष्यशब्दाभ्यां याजनाध्यापने गृह्येते। अन्वयागतं पितृपैतामहादि। कन्यादानकाले श्वशुर-गृहाल्लब्धम्। शौर्येण क्षत्रियस्य। कन्यान्वयौ सर्वसाधारणौ। मेधा.

**कुसीदकृषिवाणिज्यशिल्पसेवानुवृत्तितः।**
**कृतोपकारादाप्तं च शबलं समुदाहृतम्।।**

सेवा प्रेष्यकरत्वं यथेच्छविनियोज्यता। अनुवृत्तिः प्रियतानुकूला। तत्र कुसीदकृषिवाणिज्यान्यवैशस्य, वैशस्य प्रशस्तान्येव। सेवा द्विजातिशुश्रूषा (अशूद्रस्य), शूद्रस्य प्रशस्तैव। अन्या तु तस्य निन्दिता। शबलग्रहणेनाचिर-स्थायिता फलस्योच्यते। (न) यावज्जीवं तत्फलं भवति। मेधा.

**पार्श्विकद्यूतचौर्यार्तिप्रतिरूपकसाहसैः।**
**व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम्।।**

पार्श्विकः पार्श्वस्थः उत्कोचादिना धनमर्जयति। ज्ञात्वा धनागमनं कस्यचित् 'अहं ते दापयामि मह्यं त्वया किंचिद्दातव्यम्' इति यो गृह्णाति स पार्श्विकः। न कर्ता कारयिता तटस्थो न त्वज्ञतया गृह्णाति। यथा च गृहीत्वाऽ-धमर्णाय प्रतिभूत्वेनावतिष्ठते। प्रतिरूपको दाम्भिकः।

---

* गोरा., ममु. मेधावत्। मर. मच., भाच. मेधागतम्।

\# गोरा., मवि., ममु., नन्द. मेधागतम्।

(१) **मस्मृ.** ४।१९१; **गृक.** २४८ प्यविद्वान्हि (पि गृह्णन्हि); **ममु.** ४।९१ (तस्मादविद्वान् बिभीयात्) एतावदेव; **गृर.** ४६७ गृकवत्; **मर.** १७५-१७६ नाप्यवि (नाथ वि); **निप्र.** २।२९४ स्मात्त (स्मात्क); **मुक्ता.** ५८ स्वल्प (अल्प) शेषं निप्रवत्; **आन.** ६३० बिभिया (बिभीया) शेषं मुक्तावत्.

$ एतदादिश्लोकत्रयं नारदीयमनुसंहितायां पाठभेदेनास्ति। तच्च तथात्वेनाग्रे संगृहीतम्। अस्मदादर्शमनुपुस्तकेषु घारपुरेसंपादित-मेधातिथिभाष्ययुतमनुस्मृतिपुस्तके एवैते श्लोकाः मानवत्वेन मुद्रिताः अन्येषु मेधातिथिभाष्यपुस्तकेषु सभाष्या एते वर्तन्ते, परं तत्संपादकानां मानवत्वे न संप्रतिपत्तिः। अतस्तैः मस्मृ.४।२२६ इतिमनुश्लोकभाष्ये समावेशिताः।

(१) **मस्मृ.** ४।२२७-२२९ (घारपुरेसंपादितपुस्तके).

कुसुम्भाद्युपहितकुङ्कुमादिविक्रयो व्याजः। आर्तिः परपीडा। प्रच्छन्नहरणं चौर्यम्। प्रसभं साहसम्। ननु चौर्यसाहसाभ्यां स्वाम्यमेव नास्ति, तन्निमित्तेष्वपठितत्वात् 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु' (गौध. १०।३८) इति, तथा 'विद्या शिल्पं भृतिः सेवा' (मस्मृ. १०।११६) इत्यादि, तथा 'सप्त वित्तागमा धर्म्याः' (मस्मृ. १०।११५) इति च। अथास्मादेव वचनात्स्वाम्यकारणत्वमनयोरिति। कथं तर्हि 'बलाद्भुक्तं न जीर्यति' इति। केचित्तावदाहुः – नैवायं पाठोऽस्ति द्यूतचौर्यार्तीति, अपि तु वैर्यार्तीति। वैरिणः सकाशाद्यद्गृह्यते संधानकाले 'यद्येतावद्ददासि तदा त्वया संधिं करोमि', शक्तिविहीनतया ददाति। साहसमपि न प्रसह्य हरणम्, किं तर्हि? यत्प्राणसंदेहेनार्ज्यते पोतयात्रतया रहसि राजप्रतिषिद्धप्रतिक्रयेण च। अन्ये तु मन्यन्ते – नैव बलादपहरणेन स्वाम्यं भोगेन वा जरणं विरुध्यते यतो बलं प्रथममपहारकाले त्वसत्यपि बल उपेक्षया भोगस्तत्र स्वाम्यम्। यत्र त्वारम्भात्प्रभृति सर्वकालिको बलोपभोगस्तत्र जीर्यतीति कथ्यते। तस्मादुभयमविरुद्धम्। इदं युक्तं यच्चौर्यसाहसाभ्यां स्वत्वानुत्पत्तिः, पाठविभागकृतत्वात् अन्यैश्च स्मृतिकारैः स्वत्वहेतुष्वपरिगणनात्।

मेधा.

प्रतिग्राह्याः पदार्थाः, आहृताभ्युद्यताप्रचोदित-
भिक्षाशय्याद्यनङ्गीकारे प्रत्यवायः,
गुर्वाद्यर्थं सर्वतः प्रतिग्रहस्तस्य
स्वभोगार्थतानिषेधश्च,
गुर्वाद्यभावे स्वार्थं
प्रतिग्रहः

**'एधोदकं मूलफलमन्नमभ्युद्यतं च यत्।**
**सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम्।।**

(१) एधः इन्धनं काष्ठादि। अन्नं पक्वमामं वा अभ्युद्यतम् अभिमुखमुपनीतम्। एतत्सर्वतः प्रतिग्रहीतव्यं पतिताभिशस्तचण्डालादिप्रतिलोमवर्जं शूद्रादन्यस्माद्वा ईषत्पापकर्मणः। मधु माक्षिकम्। अभयं दक्षिणेव। दृष्टान्तार्थमेतत्। प्रतिग्रहो हि परकीयस्य द्रव्यस्य तदिच्छया स्वीकारः, न चात्र(? न्य)रूपता। न ह्यत्र कस्यचित्स्वाम्यं निवर्तते, न च कस्यचिदुपजायते। अतः स्तुत्या दक्षिणाशब्दप्रयोगः। यथा चण्डालादिभ्योऽप्यरण्ये कान्तारे वा रक्षा चौरादिभ्योऽङ्गीक्रियमाणा न दोषाय, एवमेतदेधादि गृह्यमाणं न दोषाय। अनापदि चायं विधिः। आपदि तु चण्डालादिभ्योऽपि वक्ष्यति। अभ्युद्यतशब्दश्चान्नेनैव सह संबध्यते प्रत्यासत्त्या, नैधादिभिः। अत एधादिषु याच्ञाऽविरुद्धा। 'धार्मिकेभ्यो द्विजातिभ्यः कर्तव्यस्तु प्रतिग्रहः।' इत्यधार्मिकेभ्यो द्विजेभ्यः शूद्राच्चाप्राप्तः। इष्यते च द्रव्यविशेषोपयाच्ञा। तदर्थमिदम्।

* मेधा.

(२) काष्ठोदकफलमूलमाक्षिकमन्नं च अयाचितोपनतमनापत्प्रकरणात् पतिताद्यत्यन्तकुत्सितवर्जं सर्वतः प्रतिगृह्णीयात्। तथाऽभयं चाऽऽत्मपरित्राणम् अत्यन्तप्रीतिकरं मत्वा दक्षिणातुल्यम् आत्मभयरक्षणसमर्थमिति सर्वतश्चाण्डालादेरप्यङ्गीकुर्यात्। गोरा.

(३) अभयस्य मुख्यदानासंभवात् दृष्टान्तार्थमुपादानम्।

¶ गृक. २४३

(४) अत्राभयदक्षिणाव्यतिरिक्तेष्वभ्युद्यतमिति सर्वत्र संबध्यते। अभ्युद्यतम् अभ्यर्थ्य दत्तम्। सर्वतः अप्रतिग्राह्यवित्तादपि प्रतिगृह्णीयात् प्रतिग्रहीतृवृत्तौ(? ग्रहवृत्तिः), न तु तन्निवृत्तोऽपि। याचित्वा ग्रहणे तु दोषः। अभयरूपां दक्षिणाम्। मवि.

(५) काष्ठजलफलमूलमधूनि अन्नं च अभ्युद्यतम् अयाचितोपनीतम् 'अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः।' (यास्मृ. १।२१५) इति याज्ञवल्क्यवचनात्कुलटादिवर्जं सर्वतः शूद्रादिभ्योऽपि प्रतिगृह्णीयात्। 'आममेवाऽऽददीतास्मात्' (मस्मृ. ४।२२३) इत्युक्तत्वादामान्नमेव शूद्रात्प्रति-

(१) **मस्मृ.** ४।२४७; **मिता.** १।२१४; **गृक.** २४२; **ममु.** ४।२४८; (अन्नमभ्युद्यतं च यत्) एतावदेव; **गृर.** ४६३; **पमा.** १।१९० सर्वतः (असतः) न्मध्वथा (न्मधु चा); **मपा.** २२०; **मर.** १७४ न्मध्वथा (दन्यथा). **निप्र.** २।२९८ द्यतं (दितं) न्मध्वथा (त्तथैवा); **विपा.** ३।२।२४९; **वीमि.** १।२१४-२१६; **इन्दु.** १९९ ध्वथा (ध्वाज्या) मिताक्षरायाम्; **भाष.** एधो (गन्धो) द्यतं (दितं) सर्वतः (सर्वं च).

* मर. मेधागतम्।

¶ गृर. गृकवत्।

ग्राह्यम्। अभयं चाऽऽत्मत्राणात्मकं प्रीतिहेतुत्वाद्दक्षिणातुल्यं चण्डालादिभ्योऽपि स्वीकुर्यात्। § ममु.

(६) एधः इन्धनम्। $अत एव यद्दक्षिणाव्यतिरिक्तमभ्युद्यतमिति संबध्यते। अभ्युद्यतम् अभ्यर्थ्य दत्तम्। सर्वतः शूद्रादपि। अयं चोपदेशः प्रतिग्रह(प्र)वृत्तस्यैव, न तु निवृत्तस्य। अभयदक्षिणां तु म्लेच्छादिभ्योऽपि।

« मपा. २२०

(७) अभ्युद्यतम् अयाचितोपपन्नम् एधआदिषण्णां विशेषणम्। × मच.

(८) ग्राह्यवस्तून्याह – गन्धेति। गन्धं सुगन्धं कर्पूरादिकम्। यदभ्युदितम् अभ्यर्थ्य दत्तम्। च पुनः उदकादिकं सर्वं प्रतिगृह्णीयात्। भाच.

(९) एधःशब्दस्य सान्तत्वे उदकपर्यायो दकशब्दः, तस्यादन्तत्वे उदकशब्दः। समाहारद्वन्द्वः सर्वत्र। अभ्युद्यतम् अभिमुखमुपनीतम्। तदनुरोधेनैव प्राक् स्वयमिति व्याख्यातम्। मनुवाक्य इदमभयदक्षिणाभिन्नसर्वविशेषणमिति ¶ व्याख्यातृतात्पर्यम्। 'प्रत्यासत्त्याऽन्नस्यैव तद्विशेषणम्। अत एधादिषु याच्ञाऽप्यविरुद्धा' इति तु मेधातिथिः। निपातानामनेकार्थत्वादथशब्दो यथार्थे इति तात्पर्यम्। अत एव प्रतिगृह्णीयादित्यस्यापि तत्रासंबन्धः।

† बाल. १।२१४ पृ. ४६८-४६९

§ नन्द. ममुगतम्।

$ अत्र पूर्वोत्तरार्धयोर्हेतुमद्भावाप्रतीतेः 'अत एव' इत्यतः प्राचीनः पश्चिमो वा कश्चिद्ग्रन्थ उच्छिन्न इति कल्प्यते।

« विपा. मपागतम्।

× शेषं ममुगतम्।

¶ याज्ञवल्क्यस्मृतेर्व्याख्यातुर्विज्ञानेश्वरस्य तात्पर्यमित्यर्थः। तथाहि – विज्ञानेश्वरेण 'कुशाः शाकं पयो ..... प्रत्याख्येयं न वारि च।।' (यास्मृ. १।२१४) इति याज्ञवल्क्यवचनम् 'एतच्च कुशादिकं स्वयमुपानीतं न प्रत्याख्येयम्' इति व्याख्याय "चकाराद्गृहादि, 'शय्यां गृहान् कुशान्....।।' (मस्मृ. ४।२५०), तथा 'एधोदकं मूलफलम्....।।' इति मनुस्मरणात्" इत्युक्तम्। तथा च स्वयमुपानीतत्वविशिष्टेषु कुशादिपदार्थेषु मनुश्लोकद्वयोक्तानामावापात् 'अभ्युद्यतमित्येतदेधादीनां सर्वेषां विशेषणम्' इति विज्ञानेश्वराभिप्रायोऽर्थसिद्धः।

† शेषं मेधागतम्।

(१०) अभ्युद्यतं पक्वान्नाद्यपि। इन्दु. १९९

**'आहृताभ्युद्यतां भिक्षां पुरस्तादप्रचोदिताम्।**
**मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्मणः।।**

(१) एधाद(?द्य)तिरेकेण यदन्यद्द्रव्यं तस्याप्यनेन विशेषेण ग्राह्यतोच्यते। भिक्षाशब्दश्च प्रशंसायां प्रयुक्तः, न भिक्षैव विवक्षिता, यद्यप्ययं सिद्धान्नाल्पतावचनः। भिक्षा किल स्वल्पत्वान्नातीव दोषावहा, ब्रह्मचारिणश्च सार्ववर्णिकी विहिता। एवमन्यदप्यनेन विशेषेण तत्तुल्यं दृष्टम्। भिक्षाशब्दस्यैवंविधार्थविवक्षया प्रयोगः। तथाहि महाभारते – 'गत्वा ह्युभौ भार्गवकर्मशालां पार्थौ पृथां प्राप्य महानुभावौ। तौ याज्ञसेनीं परमप्रतीतौ भिक्षेत्यथाऽऽवेदयतां नराग्र्यौ।।' (भा. १।१८२।१) इति। आहृता उपहृता तं देशमानीता यत्र प्रतिग्रहीता स्थितः। अभ्युद्यता अग्रे स्थापिता, वचनेनेङ्गितेन वा 'गृह्यताम्' इति निवेदिता। पुरस्तात् पूर्वम् अप्रचोदिता अयाचिता प्रतिग्रहीत्रा स्वयं परमुखेन वा, दात्रा पूर्वं नोक्तम् 'इदं मे द्रव्यमस्ति, तत्प्रसादमाश्रित्य गृह्यताम्' इति केवलमतर्कितोपपादिता तत्काल एव दर्शिताभिप्राया। तादृशीं भिक्षां प्रजापतिः हिरण्यगर्भो मेने मन्यते स्म। किमिति? दुष्कृतकर्मणोऽपि सकाशाद्ग्राह्येति। दुष्कृतं पापं कर्म यस्यासौ दुष्कृतकर्मा। § मेधा.

(२) आहृताभ्युद्यतामिति प्रतिग्रहीतृदेशमानीतां दातुं चोद्यमिताम् 'इदं तुभ्यं दास्यामि' इत्येवं पूर्वमकथितां गोहिरण्यादिभिक्षां दुष्टकर्मकारिणोऽपि, अनापत्प्रकरणात् पतिताद्यत्यन्तकुत्सितवर्ज्यम्, हिरण्यगर्भो ग्राह्यां मन्यते स्म। ‡ गोरा.

(३) आहृता ग्राहकसमीपमानीता। भिक्षाऽत्र ग्रासमात्रम्, 'ग्रासप्रमाणा भिक्षा स्यात्' इति स्मृतेः। अप्रवेशिता साक्षात् परंपरया वा न याचिता। गृर. ४६५

§ स्मृच., मच., बाल., भाच. मेधागतम्। ममु. मेधा-गोरागतम्।

‡ मवि., आपा. गोरागतम्।

(१) **मस्मृ.** ४।२४८; **गृक.** २४५ भ्युद्यतां (मुद्यतां); **स्मृच.** २।४६२; **गृर.** ४६५ भ्युद्यतां (मुद्धृतां) चोदिताम् (वेशिताम्); **आपा.** ११३; **निप्र.** २।२६८ भ्युद्यतां (भ्युदितां); **मुक्ता.** ५७ प्रचो (प्रवे) ग्रह्या (भोज्या) कर्मणः (कारिणः) शेषं गृकवत्; **नन्द.** ग्राह्या (भोज्या); **बाल.** १।२१६ पृ. ४७० चोदि (णोदि).

(४) आहृताभ्युदितां प्रतिग्रहीतृगृहे आनीयोपस्थापिताम्। भिक्षां कुटुम्बभरणयोग्यद्रव्यरूपाम्। आमान्नसिद्धान्नरूपामिति भ्रमो न कार्यः। निप्र. २।२६९

(५) भिक्षाम् अन्नम्। मुक्ता. ५७

(६) न केवलमभ्युद्यतमन्नं प्रतिग्राह्यमेव, किंतु भोज्यमपीत्याह – आहृतेति। आहृतां दात्रा प्रतिग्रहीत्रे दातुमानीताम्। उद्यतां देयत्वेनोत्क्षिप्ताम्। भिक्षाम् अन्नम्। नन्द.

**[1]नाश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च।**
**न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते।।**

(१) अथाग्रहणनिन्दार्थवादः। अथ यो यत्रैतामवधीरयति तस्य पितरः श्राद्धं नाश्नन्ति न प्रतीच्छन्तीति। अग्निश्च देवेभ्यो हव्यं न वहति। पित्र्याद्दैवाच्च कर्मणो न फलं लभ्यत इत्यर्थः। अत्र कश्चिदाह – 'अनुपयुज्यमानमपि दातुरनुग्रहार्थमवश्यमीदृशं ग्रहीतव्यम्'। §तत्त्वयुक्तम्। निर्दोषताऽस्यायाचितप्रतिग्रहस्योच्यते। प्रतिप्रसवो ह्ययम्। प्रतिषिद्धस्य च प्रतिप्रसवो भवति। लौकिक्या चार्थितया प्राप्तिः प्रतिषिद्धा, सैव प्रतिप्रसूयते। मेधा.

(२) तदीयं कव्यं पञ्चदशवर्षाणि पितरो नादन्ति, हव्यं च पुरोडाशादि देवान्प्रत्यग्निर्न प्रापयति, यस्तां भिक्षां प्रत्याचष्टे। ‡ गोरा.

(३) पञ्चदशवर्षाणि पित्र्यं दैवं च तस्य वृथा भवति यस्ताम् अवमन्यते प्रतिक्षिपति इति निन्दार्थवादः। पूर्वविधि-(वि?)शेषो दोषाणां दृढीकरणार्थः। मवि.

**[1]शय्यां गृहान् कुशान् गन्धानपः पुष्पं मणीन्दधि।**
**धाना मत्स्यान्पयो मांसं शाकं चैव न निर्णुदेत्।।**

(१) शय्यादीन्यनाहृतान्यपि न निर्णुदेत् न प्रत्याचक्षीत। यदि गृहेऽवस्थितानि द्रव्याणि, कैश्चिदुच्यते च 'इदमिदमाहरामि, एतत्प्रतीक्ष्य(?ष्य)ताम्' तदा न प्रत्याख्येयानि। * मेधा.

(२) शयनगृहदर्भोदकपुष्परत्नदधिधानामत्स्यक्षीरमांसशाकानि गन्धवन्ति च कर्पूरादीन्ययाचितोपस्थितानि न प्रत्याचक्षीत। एधोदकादिवाक्यपठितस्योदकस्येह पुनः पाठः श्लोकद्वयस्य पठितयोः (अ)प्रत्याख्याने तुल्यत्वज्ञापनार्थः। तथा च गौतमः एधादीनि शय्यादिभिः सहैकस्मिन् सूत्रे पठितवान्। # गोरा.

(३) पयः दुग्धम्। न निर्णुदेत् न परिहरेत्। एतत्सर्वं प्रतिग्राह्यद्रव्यादा(?ग्राह्यम्।शय्याद्या)गतं प्रयोजनाभावादिप्रतिसंधानेन न त्याज्यम्, त्यागे तु दोष इत्यर्थः। मवि.

(४) गन्धान् गन्धवन्ति कर्पूरादीनि। धानाः भ्रष्टयवतण्डुलान्। पयः क्षीरम्। पूर्वमाहरणोपायनिबन्धेन « गवादीनामप्रत्याख्यानमुक्तम्, शय्यादीनि त्वयाचिताहृतान्यपि दात्रा स्वगृहस्थितान्ययाचितोपकल्पितानि न प्रत्याचक्षीत। + ममु.

---

§ 'अनुपयुज्यमानम्' इत्यत्र 'दुष्कृतकर्मणः सकाशात् भिक्षाया गृहीतत्वेन तदुपयोगस्य दुष्टत्वात्' इत्यनुपयुज्यमानत्वे हेतुं वक्त्रभिप्रेतमभिमत्येदमयुक्तताकथनम्। यदि तु प्रतिप्रसवत्वेन भिक्षाया ग्रहणे तदुपयोगे च दोषाभावं मन्यमानस्यापि सिद्धप्रयोजनत्वात् निःस्पृहत्वात् उपयोगस्य व्रतविशेषविरोधित्वाद्वाऽनुपयुज्यमानत्वमिति सुबोधो वक्त्रभिप्रायो गृह्यते तदेदमयुक्तताकथनं निरालम्बम्।

‡ ममु., मच., नन्द., भाच. गोरागतम्।

(१) **मस्मृ.** ४।२४९; **गृक.** २४५-२४६; **गृर.** ४६५ दश व (दशव); **निप्र.** २।२६८ स्तामभ्यव (स्तु तामव) शेषं गृरवत् (=): २।२९४ निर्देशमात्रम् (=); **मुक्ता.** ५७ गृरवत्; **बाल.** १।२१६ पृ. ४७० गृरवत्.

* मर. मेधानुवादः।

# गृक. गोरागतम्।

« गवादयः पूर्वश्लोकस्थभिक्षाशब्दार्थाः।

+ गृर. गोरागतं ममुगतं च।

(१) **मस्मृ.** ४।२५०; **मिता.** १।२१४; **गृक.** २४२ गृहान् (गृहं); **स्मृच.** २।४६२-४६३ गृकवत्; **गृर.** ४६३ गृहान् कुशान् (कुशं गृहान्) धाना (धान्यान्); **पमा.** १।१९० गृहान् कुशान् (कुशान् गृहान्) मणीन्द (मणिं द) धाना मत्स्यान्प (मत्स्यान्धानाः प); **मपा.** २२० पूर्वार्धे (शय्याऽऽसनं कुशान्गन्धान् पुष्पं पत्रं मणीन्दधि।); **आपा.** ११४ पूर्वार्धमशुद्धम्, तृतीयचरणे (धान्यं धानाश्च मांसं च) र्णुदेत् (र्दिशेत्); **मर.** १७३-१७४ मणीन्द (मणिं द) धाना मत्स्यान्प (मत्स्या धानाः प) अशुद्धिबहुलो ग्रन्थः; **निप्र.** २।२९८ गृहान् (गृहं) नपः (नापः) मणीन्द (मणिं द) धाना मत्स्यान्प (धान्यं मत्स्याः प) र्णुदेत् (र्वपेत्); **मुक्ता.** ५७ मणीन्द (मणिं द); **वीमि.** १।२१४-२१६ गृहान् (गृहं) धाना मत्स्यान्प (मत्स्यान् धानाः प).

(५) मणीन् विषादिनिवारकी(? कान्)।

मपा. २२०

(६) न नीत्वा कुर्यात्। एवं निन्दितद्विजातिभ्य एतानि द्रव्याणि प्रतिगृह्यन्ते, न शूद्रात् किमपि।

निप्र. २।२९८

(७) किं च, गुर्वादीनां पोष्टा नैतान्परित्यजेदित्याह– शय्यामिति। मणीन् मरकतादीन्। धानाः भृष्टयवान्। एतान्न निर्णुदेत् न त्यजेत्।

मच.

(८) अन्यदप्यभ्युद्यतं प्रतिग्राह्यमाह – शय्यामिति। निर्णुदेत् निराकुर्यात्। निर्णुदेत् इति वचनात् दातुमभ्युद्यतमिति गम्यते।

नन्द.

**'गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन्।**
**सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः।।**

(१) गुरव उपदेशातिदेशैर्बहवः। भृत्याः आश्रिताः स्मृत्यन्तरे तु संख्याताः – 'वृद्धौ तु मातापितरौ भार्या साध्वी सुतः शिशुः'। तानुद्धर्तुमिच्छुः क्षुधाऽवसन्नान्। देवतातिथींश्चार्चिष्यन्। नित्यकर्मसंपत्त्यर्थमित्यर्थः। सर्वतः प्रतिगृह्णीयात् साधुभ्योऽसाधुभ्यश्च। न तु तृप्येत्स्वयं ततः। तृप्तिः क्षुन्निवृत्तिरुपभोगश्च, तन्न कुर्यात्। गुर्वादिप्रयोजनमेव तत् ग्रहीतव्यम्, न त्वात्मार्थम्।

# मेधा.

(२) मातापित्रादीन् गुरून् भृत्यान् भार्यापुत्रादीनवश्यंभरणीयान् क्षुधाऽवसन्नानुद्धर्तुमिच्छन् देवतातिथींश्च पूजयिष्यन्, अनापत्प्रकरणात् पतिताद्यत्यन्तकुत्सिवर्जं सर्वतः प्रतिगृह्णीयात्, न रूपा(? तूपाया)न्तरसद्भावे सति तेन धनेनाऽऽत्मनस्तृप्तिं कुर्यात्। मुख्योपायपरिक्षये हि 'अवृत्तिकर्शितः (सं ?) सीदन्' (मस्मृ. १०।१०१) इत्यापद्धर्मं वक्ष्यति।

+ गोरा.

(३) न तु तृप्येत्स्वयं तत इति। प्राणयात्रामात्रातिरिक्तं भोगादि तेन न कुर्यादित्यर्थः।

† गृक. २४०

(४) गुरून् मातृपित्राचार्योपाध्यायादीन्। उज्जिहीर्षन् अवृत्त्या नश्यत उत्तरिष्यन्। देवता अतिथींश्चार्चिष्यन्निति प्राक्संकल्पिक(? त)त्वे सत्यर्चनस्य। सर्वतः निन्दितादपि। तृप्येत् उपयुञ्जीत तस्यांशेन।

मवि.

(५) न तु तृप्येत्, प्राणयात्रामात्रं कुर्यादेव।

$ निप्र. २।२४३

(६) गुर्वाद्युपजीवनार्थं सर्वमादेयम्। अतः कुलटादिभ्योऽपि प्रतिगृह्णीयादित्याह – गुरूनिति। गुरून् उपदेष्टॄन् भृत्यान् आश्रितान् भार्यादींश्च उज्जिहीर्षन् क्षुद्व्याधिभ्य उद्धर्तुमिच्छन्। अदृष्टार्थम् अर्चिष्यन्। न तु तृप्येत् तद्धनं स्वभोगाय नाऽऽदद्यात्।

मच.

(७) स्वजीवनमनिषिद्धं कुर्यादित्यर्थः(? त्यार्थम्)।

आन. ६२७

(८) गुरूनिति। एवं द्रव्यविशेषतः सर्वात्मा प्रतिग्रह उक्तः, इदानीमुपयोगविशेषतोऽप्याह – गुरूनिति।

‡ नन्द.

**'गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन्।**
**आत्मनो वृत्तिमन्विच्छन् गृह्णीयात्साधुतः सदा।।**

(१) कथं तर्ह्यात्मा यापयितव्यः? अत आह – गुरुष्विति। अभ्यतीतेषु अतीतेषु, विना वा तैः जीवन्तोऽपि यदि पृथग्वसन्ति। गुरुग्रहणं सर्वेषां च भृत्यानामपि प्रदर्शनार्थम्। आत्मनो वृत्तिं जीवनं प्रतीच्छन् अर्थयमानः साधुभ्यः धार्मिकेभ्यः प्रतिगृह्णीयात्। जातेरत्रानुपादानात् शूद्रादपि धार्मिकादस्ति परिग्रहः। तदुक्तं 'नाद्याच्छूद्रस्य' (मस्मृ. ४।२२३) इत्यादि।

मेधा.

---

# ममु. मेधागतं गोरागतं च। गृर. मेधागतं गृकगतं च।

+ भाच. गोरागतम्।

(१) **मस्मृ.** ४।२५१; **गृक.** २३९; **गौमि.** १७।४ ज्जिही (द्धरि); **गृर.** ४६१ त्यांश्चो (त्यानु) सर्वतः (सर्वथा); **निप्र.** २।२४३; **गप.** २२६; **चमव्या.** ७८; **मुक्ता.** ५७ हीर्ष (हीर्ष्य) तृप्ये (तृप्या); **संम.** ४८; **आन.** ६२७; **बाल.** १।२१६ पृ. ४७१ तृप्ये (तुष्ये).

† शेषं मेधागतम्।

$ गप. निप्रवत्।

‡ शेषं गोरागतम्।

(१) **मस्मृ.** ४।२५२; **मेधा.** वृत्तिमन्वि (वृत्तिं प्रती) इति वा, तृतीयचरणे (प्रतीच्छन्नात्मनो वृत्तिं) इति वा स्यात्; **गृक.** २४०; **मवि.** षु त्वभ्य (ष्वभ्यत्य); **गृर.** ४६१ त्वभ्यती (न व्यती) व्याख्यानुरोधात्तु नैवं पाठः संभवति; **निप्र.** २।२४३ मन्विच्छन् (सिद्ध्यर्थं); **आन.** ६२८ षु त्वभ्य (ष्वपि व्य); **बाल.** १।२१६ पृ. ४७१.

(२) मात्रादिष्वतीतेषु तैर्वा विना गृहे पृथग्वसन् आत्मजीव(न)मन्विच्छन् अनापदि सर्वदा साधुभ्य एव प्रतिगृह्णीयात्। « गोरा.

(३) जीवत्स्वपि गुर्वादिषु प्रकारान्तरेण संभवद्वृत्तिषु आत्मवृत्त्यर्थं साधुभ्यः धार्मिकेभ्यः एव प्रतिगृह्णीयादित्यर्थः। × गृक. २४०

(४) अत्यतीतेषु मृतेषु, विना तैः तेषु जीवत्स्वपि। वृत्तिं जीवनं साधुतः प्रतिग्राह्यत एव। मवि.

(५) मातापित्रादिषु मृतेषु तैर्वा जीवद्भिरपि स्वयोगावस्थितैर्विना गृहान्तरे वसन्नात्मनो वृत्तिमन्विच्छन्सर्वदा साधुभ्यो गृह्णीयादेव। ममु.

(६) गुर्वाद्युपरते तु न तथा कुर्यादित्याह – गुरुष्विति। पितृमात्राचार्येष्वभ्यतीतेषु प्रव्रज्यामरणमहापातकाद्यैरसंबद्धेषु। मच.

(७) तैर्विना गुरुभिर्विना। स्वप्रतिगृहीतद्रव्यनिरपेक्षेषु गुरुष्वित्यर्थः। सदा आपद्यपि। * नन्द.

कुसीदे वृद्धिपरिमाणम्, साधिधनप्रयोगविषयकमनुशासनम्

**[१]वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्धिनीम्।**
**अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकः शते।।**

(१) अशीतीति विधेयनिर्देशः। वसिष्ठविहितामित्यादिरर्थवादः। वसिष्ठो भगवान् त्रिकालज्ञो लोभादिदोषरहितः तां वृद्धिं गृहीतवान्, अत एषा प्रशस्ता। धनं तया वृद्धिमुपैति, न च लोभदोषोऽस्ति। सृजेत् प्रयुञ्जीत यदा धनं तदाऽधमर्णस्य तां वृद्धिं धनप्रयोगकाले निर्दिशेत्। सर्वद्रव्येषु वस्त्रधान्यहिरण्यादिष्वेतदेव वृद्धिपरिमाणं संख्येयपर(? रि)मेयादिषु। 'रसस्याष्टगुणा वृद्धिः' इत्यादिषु द्वैगुण्यापवाद इति वक्ष्यामः। मेधा.

(२) वसिष्ठोक्तां वृद्धिं धर्मत्वात् धनवृद्धिकरीं वृद्धिजीव्युत्पादयेत्। सा कत्यत आह – अशीतिभागमिति। शते प्रयुक्ते मासात् गतात् § तस्माच्छतादशीतिभागं वृध्द्यर्थं गृह्णीयात्। ¶ गोरा.

(३) अशीतिभाग इति वसिष्ठविहिता वृद्धिः पणशतात्पञ्चकाकिण्यः। एतच्च सबन्धके, स्मृत्यन्तरदर्शनात्, अनेन 'न त्वेवाऽऽधौ' (मस्मृ. ८।१४३) इति बन्धकावताराच्च। मवि.

(४) ऋणप्रसङ्गेन तल्लभ्यपरिमाणमाह – वसिष्ठेति त्रिभिः। सृजेत् गृह्णीयात् अधमर्णो वा दद्यात्। शते इति पणसुवर्णवस्त्रादिसाधारणम्, धान्यादेर्वक्ष्यमाणत्वात्। $ मच.

(५) सृजेत् कुर्यात्। वसिष्ठविहितादिभि (? ता वृद्धि)रुत्तरार्धेनोच्यते। नन्द.

**[१]द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन्।**
**द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी।।**

(१) द्वौ वृद्धिरस्मिन् शते दीयते तद् द्विकं शतम्। पूर्वयाऽजीवतो बहुकुटुम्बस्यायं द्विकशतविधिः। मासमनुवर्तते। सतामित्यादिरत्रायमर्थवादः। सतां धर्ममिति एषाऽपि वृद्धिः साधूनां धर्मः। नैतया साधुत्वं हीयते। नात्यन्तमर्थपर उच्यते। तद्दर्शयति – न भवत्यर्थकिल्बिषी। अन्यायेन परस्वग्रहणात्पापम् अर्थकिल्बिषम्, तदस्यास्तीत्यर्थकिल्बिषी। मेधा.

(२) पणशताद्वा मासेन द्वौ पणौ पूर्ववृद्ध्या च (अ)जीवन् साधूनामर्थधर्मः, नाधर्म इति मन्यमानो गृह्णीयात्। यस्मात् द्विकं शतं गृह्णन् परस्वादानपापयुक्तो न भवति। « गोरा.

(३) यथा अशीतिभागं गृह्णानो न भवत्यर्थकिल्बिषी

---

« भाच. गोरागतम्।

× गृर. गृकवत्। निप्र. गृकगतम्।

* शेषं मेधागतम्।

(१) **मस्मृ.** ८।१४०; **गृक.** २१८ उत्त.; **स्मृच.** २।४७२; **गृर.** ४४६ उत्त. (=); **मुक्ता.** ६४ उत्त.

§ पञ्चमीयं 'तत् प्रयुक्तं शतं विषयीकृत्य' इत्यर्थे ल्यब्लोपे ग्राह्या, न त्वपादाने, तथा सति वृद्धेर्मूलद्रव्यैकदेशतापत्तेः। अत एव मूले 'शते' इति सप्तमी वैषयिकाधिकरणे एव, न त्ववयवावयविसंबन्धेनौपश्लेषिकाधिकरणे। एतेन 'पणशतात्पञ्चकाकिण्यः' इति मविप्रयोगोऽपि व्याख्यातः।

¶ ममु. गोरावत्। भाच. गोरागतम्।

$ शेषं मेधांशानुवादः।

« शेषं मेधागतम्। ममु. गोरावत्।

(१) **मस्मृ.** ८।१४१; **गृक.** २१८-२१९ वा गृ (प्रगृ); **गृर.** ४४७ वा गृह्णीयात् (प्रगृह्णीत) (=).

तथा द्विकमपि शतं गृह्णानो न दोषभाक्। अत्र च (सबन्धका)संबन्धकविषयतया व्यवस्था, 'सबन्धे भाग आशीतिः' इत्यादिव्यासवचनानुसारात्। × गृक. २१९

(४) अबन्धके त्वाह – द्विकमिति। पणानां शतात्पण- द्वयमित्येतत् ब्राह्मणात्। † मवि.

(५) कार्यवशादपि न भवत्यर्थकिल्बिषी, युक्तत्वात्। ‡ मच.

(६) सबन्धकविषयमेतदुक्तं पक्षद्वयं ब्राह्मणविषयम्, नान्यवर्णविषयमिति सूचयन्नाह – द्विकमिति। द्विकादिषु पूर्ववत्कन्प्रत्ययः। नन्द.

**(१)द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम्।**
**मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः।।**

(१) ब्राह्मणादिवर्णक्रमेण चतुर्णां वर्णानां सकाशाद्द्विकादयश्चत्वारः कल्पा य(? या)थासङ्ख्येन ग्राह्यतयाऽनुज्ञायन्ते। समम्। न पादेन वाऽर्धेन वाऽधिकम्। तदाधिक्येऽपि सपादद्विकं सार्धद्विकमिति द्विकादिव्यपदेशस्यानिवृत्तेराशङ्कानिवारणार्थं समग्रहणम्। *यथा मात्रान्यत्वेऽपि संज्ञान्तरव्यपदेशं निवर्तयति। इदमपि पूर्वेणाजीवतः कल्पान्तरम्। यस्य वाऽल्पं धनं महते धर्माय, ग्रहीतारश्च नातिधार्मिकास्तत्रायं विधिः 'येऽसाधुभ्योऽर्थमादाय' इति न्यायेन। समामिति पाठान्तरम्। संवत्सरम् यावदेषा वृद्धिः न परतोऽपि महत्त्वाद्द्वैगुण्यं स्यात्। मेधा.

(२) द्विकमिति। ब्राह्मणादिवर्णानां क्रमेण द्विकत्रिकचतुष्कपञ्च(क)शतं समम् अन्यूनाधिकं मासस्य संबन्धि वृद्धिं गृह्णीयात्। # गोरा.

(३) द्विकं द्वि(? द्वौ)वृद्धिर्दीयते यस्मिन् मूले तत्। एवं त्रिकाद्यपि। समं मात्रयाऽप्यनधिकम्। $ गृक. २२०

(४) एतदेवानूद्य क्षत्रादिष्वाह – द्विकमिति। समं तन्न्यू(? न न्यू)नमधिकं वा। मवि.

(५) ब्राह्मणादिवर्णानां क्रमेण द्विकं त्रिकं चतुष्कं पञ्चकं शतं समम् इतो नाधिकं मासस्य संबन्धिनीं वृद्धिं गृह्णीयात्। नन्वशीतिभागो लघु, द्विकशतग्रहणं गुरु, कथमिमौ ब्राह्मणस्य लघुगुरुकल्पौ विकल्पेताम्? अत्र मेधातिथिगोविन्दराजौ तु पूर्ववृद्ध्या निर्वाहासंभवे द्विकशतपरिग्रह इति व्याचक्षाते। इदं तु वदामः – सबन्धकेष्वशीतिभागग्रहणम्, बन्धकरहिते तु द्विकशतवृद्धिपरिग्रहः। तदाह याज्ञवल्क्यः – 'अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके। वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा।।' (यास्मृ. २।३७)। वेदान्तोद्गीतमहसो मुनेर्व्याख्यानमाद्रिये। तद्विरुद्धं स्वबुद्ध्या च निबद्धमधुनातनैः।। + ममु.

**(१)न त्वेवाऽऽधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्।**
**न चाऽऽधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः।।**

(१) बहुधा प्रयोगः – गृहीत्वाऽऽधिमन्यथा च, आधिरपि द्विविधः – गोप्यो भोग्यश्च, भोग्योऽपि द्विविधः – समयादुह्यमानभोगः स्वरूपतो वा। आधिर्दोग्ध्री गौः पिहितसुवर्णादि। तत्र भोग्यमाधिमधिकृत्येदमुच्यते – न त्वेवाऽऽधौ सोपकार इति। विविधः सोपकारः – क्षीरिणी गौः क्षेत्रारामादि च। तस्मिन् भुज्यमाने। कुसीदे भवा कौसीदी अनन्तरोक्ता वृध्दिः, तां नाऽऽप्नुयात्। आधिं तु भुञ्जानो नान्यां वृद्धिं लभेत। गोप्येऽप्याधौ कालसंरोधाच्चिरमवस्थानात् द्विगुणीभूतेऽप्यमोक्ष(? क्ष्य)माणे न निसर्गोऽस्ति, न विक्रयः। अन्यत्र च विधिनाऽर्पणं निसर्गः। अन्यत्र संक्रामितं द्विगुणीभूतमपि पुनर्वर्धत एव। तथा च पठिष्यति 'सकृदाहृता' (मस्मृ. ८।१५१) इति। विक्रयः प्रसिध्दः। सोऽपि न कर्तव्यः। किं तर्ह्यस्यामवस्थायां कर्तव्यम्? तावदाधिं भुञ्जीत यावद्द्विगुणं धनं प्रविष्टम्, ततो मोच्य आधिः। तदुत्पन्ने प्रविष्टे द्विगुणे धने भोग्यस्तावदेव, अभोग्यस्तदनन्तरम्। भोग्यस्त्वाधिः शान्तलाभस्तिष्ठत्येव यावदाधाता नाऽऽगतः। यस्तु कथंचिद्धनिको दरिद्रता-

---

× गृर. गृकगतम्।
† शेषं मेधागतम्।
‡ शेषं गृकगतम्।
* 'एकदेशविकृतमनन्यवत्' इति न्यायोऽत्राभिप्रेतीति भाति।
# नन्द., भाच. गोरागतम्।
$ गृर. गृकवत्।
(१) मस्मृ. ८।१४२; मेधा. ८।१५३ तृतीयचरणमात्रम्; गृक. २१९; गृर. ४४७ मनु (मानु).

+ मच. ममुगतम्।
(१) मस्मृ. ८।१४३; मच. निसर्गो (विसर्गो); नन्द. कौसीदीं (कौशिदीं); भाच. न त्वे (नन्वे).

मुपगतस्तावन्मात्रशेषधनः स कंचित्कालं प्रतीक्ष्य राजनि निवेद्य विक्रीणीत बन्धम्, ततो विक्रयादुत्पन्नं द्विगुणमात्मनो धनं गृहीत्वा शेषं मध्यस्थहस्ते ऋणिकसात्कुर्यात्। ननु च 'आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्षयेत्' (यास्मृ. २।५८) इति पठ्यते। एतदुत्तरत्र व्याख्यास्यामः। प्रणाश्यत्वात्र (? त्वमत्र) पूर्वस्वामिनः स्वाम्यहानिः प्रयोक्तुश्च स्वत्वापत्तिः। यदि च निसर्गविक्रयौ न स्तः, कीदृशमस्य स्वाम्यमुच्यते? तस्मात्प्रतिषेधसामर्थ्येन प्रणाशवचनं प्रतिषिद्धभोगस्य भोगानुज्ञानार्थं व्याख्यायते। वस्त्रादिविषयं वा। तस्य हि भुज्यमानस्य प्रणाश एव। न क्षेत्रादेरिव तिष्ठतः स्वरूपात्प्रच्यवमानस्य भोग्यता संभवति। तेनैतत्स्मृतिव्यवस्थायां व्याख्येयम् – गौणौ चात्र प्रणाशनिसर्गौ। विक्रयप्रतिषेधस्तु मुख्य एव। न ह्यसौ गौणतया प्रतिपत्तुं शक्यते। एतदेव प्रस्तुत्य 'न स्यातां विक्रयाधीने' इति स्मृत्यन्तरे पठितम्। अत इह निसर्गः अन्यत्राऽऽधानम्, विक्रयसाहचर्यात्। सदृशौ हि तौ केनचिदंशेन। मेधा.

(२) भोजनार्थं बन्धे दत्ते धनप्रयोगभवाऽनन्तरोक्ता या वृध्दिस्तामुत्तमर्णो न लभते। न च वृद्धिदत्तस्य बन्धस्य द्विगुणीभूतधनकालादूर्ध्वम(व्य ?)वस्थानादन्यत्र बन्धवेतनत्वेनार्थ(? नार्पण)मस्ति, नापि विक्रयः (अपि ?)। द्विगुणीभूतधनकालादूर्ध्वं स(? अ)मोक्षणादाधिर्भुज्यत एव, अन्यथा धनप्राप्त्यभावात्। गोरा.

(३) सोपकारे गोप्यादिनाऽपि प्रसङ्गादुपकारसिद्धौ वृद्धिर्न ग्राह्या। कौसीदीं कुसीदवृत्तिसंबन्धिनीम्। कालसंरोधात् कालातिक्रमेऽपि द्वैगुण्योर्ध्वम् आधेः बन्धकद्रव्यस्य न निसर्गः दानमस्ति, न च विक्रयोऽस्ति, किंतु प्रतिरोधादिना धनस्यैव ग्रहणम्। मवि.

(४) न निसर्गः अन्यस्मै दानम्, न वाऽन्यतो विक्रयः। मेधातिथिगोविन्दराजौ तु आधेश्चिरकालावस्थानेऽपि न निसर्गो नान्यत्र बन्धके(? कत्वे)नार्पणमिति व्याचक्षाते। अत्र तु सर्वदेशीयशिष्टाचारविरोधः, बन्धकीकृतभूम्यादेरन्यत्राऽऽधीकरणसमाचारात्। * ममु.

(५) विसर्गः अत्र स्वच्छन्देनान्यस्मै दानम्। * मच.

(६) अथाऽऽधिविषये वृद्धिप्रकारमाह – न त्विति।

* शेषं मेधागतम्।

ऋणप्रदानार्थमधमर्णादुत्तमर्णेन गृहीते(? तो) बन्ध आधिः, तस्मिन्सोपकारे सत्ये च धेन्वनडुहादिरूपतया भोगक्षमे सत्यपि यो भोगानुज्ञापरस्परमाधिराहितः यस्य चाननुज्ञातभोगमन्तरेण वैगुण्यप्रसङ्गः(?) तस्मिन्नाधौ भुक्ते सत्यपीत्यर्थः। कौशिदीम् ऋणसंबन्धिनीम्। संरोधात् स कालः समाप्त इत्यधमर्णाय (न) दद्यात्, किंतु यावदृणलाभं भुञ्जीत। न च लब्धमृणमिति विक्रीणीयादिति। नन्द.

(७) ननु तर्के। वा पक्षान्तरे। सोपकारे आधौ बन्धके कौसीदीं वृद्धिमाप्नुयात् गृह्णीयात्। † भाच.

**[१]न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्।**
**मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत्।।**

(१) ननु च प्रागप्येतदुक्तं 'न त्वेवाऽऽधौ' इति। सत्यम्। यत्र यावत्येव वृद्धिस्तावानेव भोगः स पूर्वस्य विषयः। यत्र तु महती वृद्धिः स्वल्पोपभोगश्चेत् बलादिना भुञ्जानस्य सर्वेण सर्ववृद्धिहानिः। यत्र क्षेत्रगवादिर्बन्धः, तद्भोगश्च न वृद्धिसंमितः, स चोपचितामपि वृद्धिं न ददाति, न च बन्धनं द्विगुणम्, तत्र कयाचिदतिमत्यात्यन्तमुक्तैव वृद्धिर्निश्चेतव्या (?)। यदि तु वस्त्रादि भुज्यमानं नश्येत्तत्र मूल्येन तोषयेत् एनम् आधातारम्। इतरोऽपि वृद्धिं लभते। अतः अन्यथा अददन्मूल्यम् आधिस्तेनो भवेत्। यज्जातीयमाधिं भुक्तवांस्तदपहारे यो दण्डः स एव दाप्यः। स्तेनः चौरः। अन्ये व्याचक्षते – बलाद्भुक्ते वृद्धिहानिः। भुञ्जीत तन्मूल्यत एव वा। यदृणिकस्य मूल्यं मूल्यहिरण्यम्। यत्र भुञ्जान उच्यते 'मा मे बन्धं विनीनशः, मा भुङ्क्ष्व, कतिपयैरहोभिर्मोक्षयामि', तथाऽप्युच्यमानो भुङ्क्त एवेति सोऽस्य विषयः। मेधा.

(२) 'मा भुङ्क्ष्व' इति स्वामिवचनमवगणयन् (यत् ?) बलाद्बन्धं न भुञ्जीत। तथा भुञ्जानो वृद्धिं नाऽऽप्नुयात्। यदि भोगेन बन्धः क्षयं यातस्तदा अक्षतबन्धसंबन्धिमूल्येन बन्धस्वामिनं तोषयेत्। अन्यथा बन्धचौरः स्यात्। गोरा.

(३) शयनादिषु भुज्यमानेष्वव्य(? प्य)विनाशिषु बन्धकदात्रा यदि भोगनिषेधः कृतस्तदा न तद्भोक्तव्यम्।

† शेषं मचगतम्।

(१) मस्मृ. ८।१४४-१४७.

भोगे वृद्धित्यागः। यदा तु वृद्धिरतिभूयसी तदा वृद्धिं गृह्णीयात्। किंतु मूल्येन तोषयेत् यावता तावद्भोग-सिद्धिस्तद्देयम्। मवि.

(४) गोप्याधिविषयं वचनमिदम्। वस्त्रालंकारादि-र्गोप्याधिर्बलान्न भोक्तव्यः। भुञ्जानो वृद्धिमुत्सृजेत्। प्राङ्-मूल्येनात्रैनं तोषयेत्। यद्वा, भोगेनासारतामाधौ नीते सारा-वस्थाधिमूल्यदानेन स्वामिनं तोषयेत्, अन्यथा बन्धक-चौरः स्यात्। « ममु.

(५) उत्सृजेत् न गृह्णीयात्। × मच.

(६) भुञ्जान एनमधमर्णं मूल्येन भुक्तेन फलेन तोषयेत्। भुक्तं फलमधमर्णाय दद्यादित्यर्थः। अन्यथा यदि न तोषयेदा-धिस्तेनो भवेत् आधिचोरः स्यात्। नन्द.

**आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः।**
**अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ।।**

(१) आधिरुक्तार्थः। प्रीत्या भुज्यमानः उपनिधिस्तु शास्त्रान्तरवदन्त(?वशादनन्त)र्हितो न्यासः। तौ चिरकालं न स्थाप्यौ। किं तर्हि? प्राप्ते काले मोक्षणीयौ। आधेर्मोक्षण-कालो द्विगुणीभूतं धनम्। तस्यातिक्रमः तस्मिन्नपि कालेऽ-मोक्षणम्। उपनिधिरपि यावता कालेन नास्यावसरो भवति '+मदीयमेवैतद्भोक्ताऽहम्' इति, स प्रत्याहरणकालः। ततोऽधिकः कालः कालात्ययः। तं नार्हतः स न कर्तव्य इत्यर्थः। हेतुमाह – अवहार्यौ भवेतां ताविति। तौ हि दीर्घकालमवस्थितावप्रत्याह्रियमाणौ अवहार्याविति स्थितम्। तस्माद्द्विगुणीभूतधनेऽधिमोक्षणे प्रयतितव्यम्। सुहृदु-पदेशोऽयम्, न त्वेवाऽऽध्युपनिध्योर्भूयसाऽपि कालेनापहारः। यतो वक्ष्यति – 'आधिः सीमा बालधनम्' (मस्मृ. ८।१४९) इति। अतस्तस्यैवायमनुवादः। अन्ये त्वाधिविषयमुपदेश-मिच्छन्ति। यो द्वेषेण द्विगुणीभूते धने कालं क्षपयति 'तत्रि (?#तद्वि)लाभं धनं नाधिकं वर्धते, न चास्याधुनाऽन्यत्रा-ऽऽधानविक्रयौ स्तः, इह वृद्धिमयं मा लभताम्' इत्यनेन मात्सर्येण, तत्रेदमुच्यते – अवहार्यौ भवेतां ताविति। अनया बुद्ध्याऽमोक्षयतः स्वाम्यमस्य निवर्तते। यस्तु कथंचिदसति धने न मोक्षयति तस्य निसर्गविक्रयौ न स्त इति। अथवाऽ-परोऽर्थो मुखेनोपेक्षयति परहस्तगत(?तत)या शङ्कयोच्यते (?) – अवहार्यौ भवेतामिति। मेधा.

(२) बन्धः प्रीतिभोग्यश्च पदार्थः एतौ द्वौ कालातिक्रमणं नार्हतः। दीर्घकालमन्यहस्तावस्थितौ आधित्वोपनिधित्वात् साक्ष्याद्यभावेन हारयितुं शक्याविति। * गोरा.

(३) आधिग्रहणानन्तरमल्पमूल्याप्तौ तत्पूरकतया यत्नेन सह स्थाप्यते स उपनिधिः। कालात्ययं कालातिक्रमं नाशम्। अवहार्यौ स्वामिना आनेतव्यौ। मवि.

(४) आधिः बन्धकः, उपनिधीयत इत्युपनिधिः प्रीत्या भोगार्थमर्पितं द्रव्यम्। नारदस्मृतिलक्षितौ च निक्षेपोपनिधी तावेवात्रोपनिधिशब्देन गृह्येते। एतावाध्युपनिधी चिरकाला-वस्थितावपि न कालात्ययमर्हतः। यदैव स्वामिना प्रार्थितौ तदैव तस्य अवहार्यौ समर्पणीयावित्यर्थः। ममु.

(५) आधिप्रसङ्गेन उपनिधेः कालात्ययेऽपि दानविक्रयौ न स्त इत्याह – आधिरिति। स्वामिप्रार्थने सति सुदीर्घ-कालेऽपि उपनिधिरिवाऽऽधिरपि न नश्यतीति वाऽर्थः, 'न त्वेवाऽऽधौ' इत्यत्रात्ययाभावस्योक्तत्वात्। $ मच.

(६) स्वामिना स्वीकर्त्रपेक्षामात्रेण भोगमनुज्ञाय निहि-तोऽर्थः उपनिधिः। + नन्द.

(७) आधिश्च उपनिधिश्च उभौ कालात्ययं चिरकालं न नाशनम् अर्हतः। तौ आध्युपनिधी दीर्घकालस्थितौ अवहार्यौ प्रयत्नेन नेतव्यौ भवेताम्। 'असंख्यातमविज्ञातं समुद्रं यन्निधीयते। तं जानीयादुपनिधिं निक्षेपं गणितं विदुः।।'। भाच.

**संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन।**
**धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते।।**

(१) प्रीतिरेव संप्रीतिः। तया हेतुभूतयोपभुज्यन्ते धेन्वादयः ते न नश्यन्ति। पूर्वस्वामिसंबन्धहान्या भोक्तुः स्वत्वा-पत्तिर्नाशः, स धेन्वादीनां प्रीत्या भुज्यमानानां न भवति। ननु च सर्वस्यैवोपनिधेर्भोगेनापहारो नास्ति। वक्ष्यति 'निक्षे-

« भाच. ममुगतम्।
× शेषं ममुवत्।
+ भोक्तेत्यत्र तृन्, तेन न कर्मणि षष्ठी।
# विलाभं निवृत्तलाभमित्यर्थः।

* शेषं मेधागतम्।
$ शेषं ममुगतम्।
+ शेषं गोरावत्।

पोपनिधिस्त्रियः' (मस्मृ. ८।१४९) इति। को विशेषो धेन्वादीनाम्? उच्यते। यत्र दशवर्षो भोगः, न च स्वरूपनाशः, तत्र 'यत्किंचित्' (मस्मृ. १४७) इति सामान्यवचनेन प्राप्तेऽपहारे उपनिधेः प्रतिषेधः। धेन्वादीनां तूपनिधित्वमेव नास्ति, अतः प्रतिषेधस्य नायं विषय इति स्यादाशङ्का। धाननिमित्तो हि धेनुशब्दः यदि परसंवत्सरे धेनुः स्यात्, परत उपसर्या यदि गर्भमादध्यात् धेनुत्वमापद्येत, तदा जनयेदाशङ्काम् 'अस्यैवेयम्, न देवदत्तस्य'। यतः प्रष्ठौही न भोग्या, प्रीतिसंभोग्यश्चोपनिधिः। येन स्वकैर्भोग्यं परिपाल्य पुनर्भुज्यमानं दृष्टम्। न पुनरुपनिधेरेतद्रूपम्। भोग्यो ह्युपनिधिः। असद्भावाद्भोगस्य च कीदृशगुणमुपनिधित्वम्? उपनिधेश्चासौ प्रतिषेधः। तस्मादुपनिधिरूपातिक्रमादसति तस्मिन्प्रतिषेधे यत्नान्तरमुक्तम्। उष्ट्रादीनामपि दशवर्षाणि भुज्यमानानामवस्थान्तरापत्तिः। अतस्तत्रापि नोपनिधित्वम्। वहन्निति केचिदश्वविशेषणं मन्यन्ते। वृषस्य नायं विधिः। अपरे तु गर्दभाश्वतरार्थं मन्यन्ते। दम्यः बलीवर्दः। प्रयुज्यते वाहनार्थं यो दीयते। अन्ये तु पुनः प्रतिषेधं विकल्पार्थं मन्यन्ते। एतद्व्यतिरेकेणान्यस्योपनिधेरस्ति कादाचित्कोऽपहारः। तेन यद्वस्त्रादि प्रीत्या भुज्यते, तच्च परिक्षीणम्, तत्रास्त्येवापहारः। न हि प्रीत्या गृहीते वस्त्रे परिक्षीणे स्वामिनो(? नाऽ)पेक्ष्यते 'पुनरवसरोऽस्ति, देहि मे वस्त्रम्, विनाशितं त्वया तत्समेन मूल्येन संशोधय' इति। मेधा.

(२) दोग्ध्री गौरुष्ट्रो वहंश्चाश्व एते प्रीत्या अन्योन्यं भुज्यमाना न कदाचिदपि स्वामिनोपहार्यन्ते। अश्वादि दमनार्थं दमनस्य दीयते। 'संप्रीत्या भुज्यमानानि' इति सामान्योपक्रमविशेषाभिधानम्। गोरा.

(३) एते दशवर्षोर्ध्वमपि न नश्यन्ति। धेनुर्दुह्यमाना गौः। वहन्नश्वः, न त्ववहन्। दम्यः दमनीयः बलीवर्दः यः स्वय(म)दान्तः (दान्तः) कृत्वा प्रयुज्यते हले। मवि.

(४) एते प्रीत्याऽन्येन तु भुज्यमानाः कदाचिदपि स्वामिनो न नश्यन्ति। प्रदर्शनार्थमिदम्, प्रीत्योपसृज्यमानं न नश्यतीति विवक्षितम्। सामान्योपक्रमं चेदं विशेषाभिधानमिति नपुंसकलिङ्गता। ¶ ममु.

¶ शेषं मविवत्।

(५) 'यत्किंचित् दशवर्षाणि' इति भोगेन वक्ष्यमाणस्वत्वहानेर्बाधकमाह – संप्रीत्येति। न नश्यन्ति स्वामिनः सत्त्वे दशवर्षाभ्यन्तरेऽकृतेऽपि निषेधे भुञ्जानस्यापि स्वत्वं न जायते। अतः स्वामिप्रार्थनायां दातव्या धेन्वादयश्चत्वारः। 'चन्द्रे कलङ्कः सुजने दरिद्रता' इतिवन्न नश्यन्तीत्यन्वयः (?)। दुग्धार्थं धेनुर्वाहनार्थमुष्ट्रोऽश्वश्च दमनार्थमन्यद्बलीवर्दादि। मच.

(६) या धेनुः दुह्यमाना गौः वहन् उष्ट्रः अश्वः दम्यः बलीवर्दः प्रयुज्यते, तानि सर्वाण्याहितानि उपहितानि वा समवृत्त्या (? संप्रीत्या) भुज्यमानानि चिरकालावस्थानेऽपि (न) नश्यन्ति परिग्रहीत्रा 'ममेदम्' इति नापहर्तुं शक्यानीत्यर्थः। नन्द.

(७) संप्रीत्या अनुज्ञया धेन्वादीनि भुज्यमानानि कदाचन। भाच.

**यत्किंचिद्दश वर्षाणि संनिधौ प्रेक्षते धनी।**
**भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति।।**

(१) यत्किंचिद्भुज्यमानमिति व्यवहितेन संबन्धः। धनीति संनिधानात्सामान्यनिर्देशेऽपि भुज्यमानधनो(? ना)पेक्षणं प्रतीयते। यत्किंचिदिति दासीदासासारभाण्डादि सर्वं ग्राहयति। न हि तल्लोकेऽत्यन्तं धनमिति प्रसिद्धम्, गोभूहिरण्याद्येव महार्घं धनमिति प्रसिद्धतरम्। तेनायमत्र वाक्यार्थः – यत्किंचिद्द्रव्यं परेण भुज्यमानं धनी धनस्वामी दशवर्षाणि यावत्प्रेक्षते, न किंचिद्वक्ति, न राजनि व्यवहरति, न कुलसमक्षं भोक्तारं वदति, 'मदीयमेतत्किमिति त्वया स्वयं भुज्यते?' इति, स दशभ्यो वर्षेभ्य उत्तरकालं न तत् लब्धुं स्वीकर्तुम् अर्हति। निवर्ततेऽस्य स्व(त्व)मिति यावत्। प्रेक्षणेन ज्ञेयतामात्रमुच्यते, न प्रत्यक्षतैव। संनिधाविति वक्ष्यामः। परैः, न ज्ञातिसंबन्धिभिः। तथा च स्मृत्यन्तरं – 'ज्ञातिसंबन्धिभिर्विना' इति। 'संबन्धिबान्धवैश्चैव भुक्तं यज्ज्ञातिभिस्तथा। न तद्भोगो निवर्तेत भोगमन्यत्र कल्पयेत्।।' तदयुक्तम्। अव्यवस्थैवं सति स्यात्। 'के ज्ञातयः के वा संबन्धिनः' इति। संबन्धमात्रग्रहणे न किंचिद्व्यावर्त्यम्। तस्माद्येनान्यदीयं भुज्यते स एवं (? पर एव) भवति। किंतु तथा सति परशब्दोऽनुवादमात्रमनर्थः, कस्यापि न परव्यपदेशः। स निरस्यते। यथा भार्यापती

पितापुत्राविति। तत्र ह्यात्मन्यपि व्यपदेशोऽस्ति 'अर्धो ह वा एष आत्मनो यज्जाया', 'आत्मा वै पुत्र नामासि' इति। तेन दम्पत्योः पितृपुत्रयोर्न भोगाभोगौ कारणम्। तेषामपि विभक्तधनानां भोगकाले प्राप्तेऽभोगो बाधक एव। भार्याया अपि स्त्रीधने भर्तृसकाशाद्गृहीते बन्धेन पत्युर्भोगे नासिद्धिः। सा ह्यत्यन्तपरवती। नोभयोर्विभागोऽस्ति। स्त्रीधनमपि तेनैव तस्याः परिपालनीयम्। 'राजा स्त्रीश्रोत्रियद्रव्यादन्यत्र' इति च पठ्यते। एवमनेन स्वामिन उपेक्षमाणस्य स्वाम्यहानिरुक्ता।

मेधा.

(२) यदिति। यत्किञ्चिद्धनजातं समक्षमेवान्यैर्दशवर्षाणि भुज्यमानं धनस्वामी तूष्णीं प्रतीक्षते, 'किमेतत्?, मा मैवं भुङ्क्ष्व' इति न प्रतिबध्नाति, नासौ तत्पुनर्न्यायेन स्वीकर्तुमर्हति। गोरा.

(३) द्रव्यान्तरेष्वाह – यत्किंचिदिति।

मवि.

(४) प्रीत्यादिव्यतिरेकेण परैर्दश वर्षाणि भुज्यमानम्।

× ममु.

(५) भूम्यतिरिक्तं यत्किंचित्कालनियमार्थं दशवर्षाणि भुज्यमानं कदाऽपि 'मा भुङ्क्ष्व' इति न निषिद्धं स धनी स्वामी नाऽऽप्नुयादित्यन्वयः। अयमर्थः – प्रतिषेधभुक्त्योः समानत्वेऽपि स्वत्वानुत्पादकत्वम्। 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि। चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः।।' इति वचनात्, 'आगमेन प्रमाणेन भोगो याति विशुद्धताम्' इति कात्यायनोक्तेश्च प्रतिग्रहादि विना स्वत्वं नास्त्येव, किंतु पूर्वभुक्तभूम्यादिफलं बहुमूल्यमपि पूर्वस्वामिना न प्राप्यते, भूम्यादि प्राप्यते। एवं च वक्ष्यमाणं 'भग्नं तद्व्यवहारेण' इति भग्नं नष्टं न तद्धनम्, किंतु तदुत्पन्नं बहुसस्यादि नष्टमित्यर्थः। मच.

(६) आहितम् उपहितम् (वा) इति यावत्। किंचिद्वस्तु दशवर्षाणि परैः ग्रहीतृभिः भुज्यमानं तूष्णीमासीनो धनी आधातोपनिधाता वा यः प्रेक्षते, न तल्लब्धुमर्हति।

नन्द.

× शेषं गोरावत्।

**'अजडश्चेदपोगण्डो विषये चास्य भुज्यते।**
**भग्नं तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति।।**

(१) कस्य तर्हि तत्संभवतीत्येवमर्थमुत्तरश्लोकः 'न स तल्लब्धुमर्हति' इत्यस्य शेषः – अजडश्चेदपोगण्ड इति। जडः अप्रतिपत्तिमान्। पोगण्डः बालः। प्राक्षोडशाब्दाद्बालः पोगण्ड इत्युच्यते। एतच्च स्वधनसंरक्षणासामर्थ्यकारणानामन्येषामप्युपलक्षणार्थम्। मद्यद्यूतविषक्तता, दीर्घरोगगृहीतता, तपःस्वाध्यायैकपरत्वम्, व्यवहारेष्वनैपुण्यम्, वागिन्द्रियाभावः, बाधिर्यम् यस्यैतेऽसामर्थ्यहेतवः सन्ति न तदीये धने भोक्तुर्बहुतरेणापि कालेन स्वत्वमापद्यते। विषये चास्य भुज्यते। अस्येति धनिनः प्रत्यवमर्शः। विषयः काश्मीराणां कश्मीरः, पञ्चालानां च पञ्चालः। यदि भोक्ता च स्वामी चैकस्मिन्नेव देशे वसेत्तथाऽपि शक्तिविहीनस्यायं व्यवहारः। अत्रापि व्याख्याने प्रपञ्च एवायम्, अजडापोगण्डग्रहणस्य प्रदर्शनार्थतया व्याख्यातत्वात्। तेन यस्य जानतो यदुपेक्षाकारणं न संभाव्यते तदीयं धनं दश वर्षाणि भुञ्जानो भोक्तैवार्हति तस्य तत्स्वमित्यवगन्तव्यम्।

ननु च न भोगात्स्वत्वं युक्तम्। स्वत्वे सति भोगो युक्तः। भोगाद्धि स्वत्वेऽव्यवस्था स्यात्। यश्चायमवधिर्दश वर्षाणीति, स स्मृत्यन्तरेण न सर्वस्मिन्धन इष्यते। किं तर्हि? 'पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी' (यास्मृ. २।२४) इति। अन्ये तु विंशतिवार्षिकेणापि भोगेन स्वाम्यमनु-(? म्यं नानु)मन्यन्ते। एवं ह्याहुः – 'अनागमं च यो भुङ्क्ते बहून्यब्दशतान्यपि' तथा 'संभोगो यत्र दृश्येत न दृश्येताऽऽगमः क्वचित्। आगमः कारणं तत्र न संभोग इति स्थितिः।।'। त्रिपुरुषभुक्तिवादिनस्तावदेवं पठन्ति– 'यद्विनाऽऽगममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत्। न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्।।'। अस्यायमर्थः – आगमः दानादिः। असति तस्मिन्यद्भुक्तं पितृपितामहप्रपितामहैस्तच्चतुर्थस्य सिध्यति, न तु विंशत्या वर्षैः। तत्रान्यत्रोक्तम् – 'आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा। अन्ते तु भुक्तिरेवैका प्रमाणं स्थावरे भवेत्।।'। तृतीयस्य भोगात्सिद्धिः, न प्रथमद्वितीययोः पितृपितामहयोः। अस्यापि न विंशतिवर्षैर्भोगः प्रमाणम्। अन्ये त्वागमरहितस्य वार्ष-

(१) मस्मृ. ८।१४८; नन्द. तद्द्रव्य (तद्धन); भाच. नन्दवत्.

शतिकस्यापि भोगस्याप्रामाण्यमनुमन्यन्ते। तथा चाऽऽहुः- 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि। चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः।। भोगं केवलतो यस्तु कीर्तयेन्नाऽऽगमं क्वचित्। आगमः कारणं तत्र न संभोग इति स्थितिः।।'। या तु (? यत्तु) बहून्यब्दशतानीति, तदाहर्तृविषयमात्मीयमेव भोगं चिरकालत्वे हेतुमाह। तस्य पितृपितामहभोगेन विना न सिद्ध्यतीत्यर्थः। कथं पुनरेकस्यानेकाब्दशतो भोगः पुरुषस्य? नैष दोषः। चिरकालप्रतिपादनपरा बहुत्ववचनाः शतं सहस्रमित्यादयः शब्दाः। यथा 'शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रियः' (ऐब्रा. ७।७) इति। एतदुक्तं भवति – विंशतिवार्षिकाद्भोगादधिकादपि न प्रथमभोक्तुर्भोगात्स्वत्वसिद्धिः। अर्थात् पुत्रस्यापि न सिद्ध्यतीति यथाश्रुतमेव। न हि बहुष्वब्दशतेष्वागमस्मरणं संभवति। ततश्च चिरन्तनदेवायतनब्राह्मणमठग्रामा राजभिरपह्रियेरन्। लेख्यशासनमपि राजाधिकृतलेखकलिखितमिति चिरन्तनेषु नैव प्रत्यभिज्ञायेत। कूटशासनमपि संभाव्येत। तस्माच्चिरन्तनो भोगः स्वत्वस्य दानाद्यागमसंभावनाया ज्ञापको हेतुः, न तु कारकः। अत एव भुक्तिः प्रमाणमध्ये पठिता – 'लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्' इति, न तु स्वत्वकारणमध्ये – 'सप्तवित्तागमाः' (मस्मृ. १०।११५) इति, 'श्रुतशौर्यतपःकन्याः' इत्यादौ च। अथवा यत्र बलादि भोगकारणं संभाव्यते तद्विषयमेतत् 'अनागमम्' इत्यादि। अत्रैव प्रकरणे पठितम् 'अन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचितम्। अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना।।' इति। ननु च 'आधिः सीमा' इत्यनेनैवायमर्थः सिद्धः। उक्तस्य कालस्य त्रिपुरुषं यावद्भुङ्क्ते स एवार्थः। अयं तु तत उत्तरकालमपि निवृत्त्यर्थमारभते। तथा च 'बहून्यब्दशतानि' इत्यत्र वचनम्। अन्वाहितं यत्प्रकटम्, अन्यथा प्रदर्श्यान्तर्हितमन्यदवस्थाप्यते। हृतं रात्रौ सन्धिभेदच्छलादिना। बलावष्टब्धम्, प्रसह्येति शेषः। शिष्टं प्रसिद्धम्। यदि त्रिपुरुषा भुक्तिः प्रमाणं कस्तर्हि 'पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी' इत्यस्यार्थः? केचिदाहुः – कियन्तं कालं भुञ्जानस्य सति लेख्यदोषादौ सक्ताभियुक्तादिकृतत्वं क्रमाक्षरविलेपादसत्यनयाभ्यामधमर्ण उच्यते (?)। संदिग्धरूपमपि लेख्यमियता भोगकालेन निश्चीयते। अन्ये त्वाहुः – यत्रैव तामेव भूमिमेकस्य बन्धायार्पयति, तामेव चापरस्य। एकस्याऽऽद्यं प्रमाणम्, अपरस्य पाश्चात्त्यम्। तत्र सत्यपि प्रामाण्यस्याऽऽद्यत्वे पाश्चात्त्यो विंशतिवार्षिको भोगो बलवान्। एतच्चायुक्तम्। येनैव स्वीकृतो बन्धस्तथैव सः, 'आधेः स्वीकरणात्सिद्धिः' इति वचनात्। स्वीकारश्च भूमेर्भोगाभिलाषैव। तेनेदृशे विषये स्वल्पेनापि कालेन बन्धसिद्धिः। एतदेवाभिप्रेत्योक्तम् – 'विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु। विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम्।।' इति। विशेषग्रहणं गवाश्वादावभुज्यमानेऽपि नासिद्धिः, यतस्ते नावश्यं भोग्याः। तथाहि भवेत् – गौर्गर्भं न गृह्णाति, कीदृशोऽस्या अतो भोगः? भूमिस्तु सर्वदा फलदेति भोगलाभमन्तरेण न बन्धत्वसिद्धिः। तत्रापि कथंचिदुपेक्ष्यमाणस्य तु यच्छतः प्रथमभोगकाल एव यदि द्वितीयेनाऽऽधिग्राहकेण संनिकर्षादिना स्वीकृतः स्यात्, इतरेण वाऽऽद्यप्रमाणवता देशविप्रकर्षात्कार्यव्यासङ्गाद्वा न स्वीकृतः तदा विचार्यते नेयता तदसिद्धिः। यदा तु गृहीताधिरेव समनन्तरं राज्ञा प्रव्राजितो महान्तं व्याधिमाससाद, न वाऽस्यान्योऽर्थरक्षाद्यधिकृतः कश्चिदस्ति, स चिरेणाप्यागतः सिद्धावपि निरुपधिप्रमाणकालं लभत एव स्वीकृतमप्यन्येन। अन्ये तु – भ्रातॄणां न्यूनाधिकविभक्तानां पुनर्विभागः समीकरणार्थ उक्तः। स विंशतिवर्षेभ्य ऊर्ध्वं नास्तीत्येवमर्थमिदमाहुः। एतावन्मात्रफलत्वे तत्रैवाभिधानमुचितम्। सामान्याभिधानं तु प्रकरणोत्कर्षेणान्यविषयतामपि ज्ञापयति। अपरे तु – 'खिलीभूता भूमिर्येन क्षेत्रीकृता तत्र भूमिस्थानोपभोग उक्तः। स चेदेतावन्ति वर्षाणि निगृहीतस्तथा सूत्रक्षेत्रयन्त्रैश्च स्वामी भूमित्वेनं स च विषय(?)' इत्येवमाहुः। इहभवन्तस्त्वाहुः – यौ समानदेशौ समानसामर्थ्यौ समानस्वभावौ समानधनौ तुल्यप्रयोजनावपरस्परसंबन्धिनौ तयोरन्यतरस्येतरेण भुज्यमानमियन्तमवधिं समक्षमुपेक्षमाणस्यास्य नैव स्थावरेषु स्वाम्यम्। किंतु त्रिपुरुषभुक्तिविरोधात् सर्वेण सर्वम् (?)। विरुद्धे ह्येते स्मृती। तेन किमपि कल्पनमर्हतः, येनास्ति च स्वाम्यम्, नास्ति चेत् किंचिद्युज्यते(?)। तत एव(? वं) व्यवस्था युक्ता – यद्यपि स्वत्वागमकारणानि

बहूनि सन्ति दानविक्रयबन्धकारणादीनि तथाऽप्यनुपलभ्यमानकारणविशेषे विंशतिवार्षिकभोगेऽनन्तरादर्शितविषये बन्धरूपताऽभ्युपगन्तुं युक्ता। चञ्चलं भोग्यं च स्वत्वम्। वस्त्वपचये तत्प्रत्याहर्तुं लभ्यते। ततश्च त्रिपुरुषा भुक्तिः सर्वस्य स्वत्वमापादयति। दानविक्रयसंभावना च यावत्येव सा वार्षिकी भविष्यति। विंशतिवार्षिके भोगे न किंचिदनुपपन्ना। यत्रोभावप्यागममन्तरेण भोगमात्रबलात्प्रवृत्तौ तत्र पूर्वो भोगश्चिरन्तनोऽपि विंशतिवर्षभोग्येन सांप्रतिकेन निरुपाधिना बाध्यते। दण्डपूर्विकयाऽत्राऽऽगत इयत्कालो भोगः त्रिपुरुषागताया भुक्तेर्बाधक इत्युक्तं भवति। भग्नं तद्व्यवहारेणेति। व्यवहारग्रहणं धर्मनिवृत्त्यर्थम्। तेन यदि कथंचिज्जानीते तदा जीयेत। तदाऽपि त्वनेनोपनिधिभोगज्ञापने प्रमाणं नास्ति, तेन व्यवहरतो जीयन्ते(? ते), तद्धर्मो नास्ति, तादृशेन भोगेनापि हत इति तिष्ठत्वेतत्। मेधा.

(२) निधानस्वामी यदि बुद्धिविकलो न भवति, बालो वा, अस्य च तस्मिन्नेव देशे व्यवस्थितस्यान्येन तदीयं भुज्यते, तद्धनं व्यवहारेण भग्नं स्वामिनस्तत्र विवादो न भवति। यतो भोक्तैव तद्धनमर्हति। व्यवहारेण भग्नमिति वचनाद्धर्मेण तत्स्वामिन एव सर्वदा स्वम्। एवं चायं पूर्वशेषश्लोकः। गोरा.

(३) अत्रैव विशेषमाह – अजड इति। अजडः विकलेन्द्रियः। अपौगण्डः अबालः। विषये तस्य पुनः पुनर्ज्ञानविषये। भग्नं विनष्टं पूर्वस्वामिनः। अन्यथा तु दशवर्षोर्ध्वमपि न नश्यतीत्यर्थः। व्यवहारेणेति वचनाद्धर्मतः पूर्वस्वामिन एवेति केचित्। मवि.

(४) जडः बुद्धिविकलः। न्यूनषोडशवर्षः पोगण्डः। तथा च नारदः – 'बाल आषोडशाद्वर्षात्पोगण्डश्चापि शब्दितः'। स धनस्वामी यदि जडः पोगण्डश्च न भवति, तदीयदर्शनविषये च तद्धनं भुज्यते, तदा स्वामिनो व्यवहारेण नष्टम्, ततो भोक्तुरेव तद्धनं भवति। ममु.

(५) जडादेस्तदपि सस्यादिकं न नश्यतीत्याह – अजड इति। जडः बुद्धिविकलः। तेन बालोऽपि गृहीतः। स च 'बाल आषोडशाद्वर्षात्पौगण्डश्चापि शब्दितः' इति नारदोक्तलक्षणभिन्नः अपौगण्डः। धनी प्रेक्षते इत्यन्वयः। अस्येदृशधनस्वामिनो विषये दर्शनविषये। भग्नं तद्व्यवहारेण धनस्वामिनो व्यवहारेण प्रनष्टम्। तथाऽऽह याज्ञवल्क्यः– 'पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी। परेण भुज्यमानाया धनस्य दशवार्षिकी।।' (यास्मृ. २।२४) इति। मच.

(६) उक्तेऽर्थे विशेषमाह – अजडश्चेदिति। आधाता उपनीता(? निधाता वा) अजडः समर्थः। अपोगण्डः अबालश्चेत् अस्य आधातुरुपनिधातुः विषये निवारणयोग्ये देशे यद्भुज्यते तद्भुज्यमानं व्यवहारेण भग्नं पराजितं स्यात्। तस्माद्भोक्ता तद्धनमर्हति, न तु स्वामी। एतदुक्तं भवति – अजडादीनां संनिधौ भोगात्स्वत्वहानिर्भवति, न तु जडादीनामिति। नन्द.

(७) अजडः स्पष्टवाक् बुद्धिविकलो न चेत्, अपोगण्डः अपगतः(? तं) पौगण्डो(? ण्ड्यं) यस्य सः अपोगण्डः। पौगण्डः(? ण्ड्यं) दशमावधि। अस्य पूर्वस्वामिनः विषये समीपे भुज्यते तत् वस्तु व्यवहारेण भग्नं नष्टम्। भोक्ता तद्धनमर्हति। भाच.

भोगेनाऽऽधिनिक्षेपादिस्वामित्वं नोत्पद्यते,
अननुज्ञाताधिभोगे वृद्ध्यर्धं
मोक्तव्यम्

[1]**आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः।**
**राजस्वं श्रोत्रियस्वं च न भोगेन प्रणश्यति।।**

(१) आधीयत इत्याधिः बन्धकद्रव्यं गोभूहिरण्याद्युच्यते यच्चोत्त(? च्चाध)मर्णाद्धनमादीयते। उपनिधिः शास्त्रान्तरेणान्तर्हितो न्यास उक्तः, यदप्रदर्शितरूपं सचिह्नवस्त्रादिना पिहितं निक्षिप्यते। प्रीतिभोग्यं तु युक्तमुपनिधिशब्दवाच्यम्, तस्य निक्षेपग्रहणेनैव गृहीतत्वात्। सीमा मर्यादा ग्रामादीनाम्। बहुसाधारण्याद्धि तत्रोपेक्षा संभवति। गृहादीनां तु प्राकारपरिखादिरूपा द्वित्रिहस्तपरिमाणरूपा द्वयोः साधारणी याऽन्यतरे(? रेण) कथंचिदुपजीर्यमाणा। स्वल्पत्वाद्भोगश्च कश्चित्कियन्तं कालमुपक्ष्येतापि। तत्रापि दानादिस्वत्वापगमहेतुं संभावयतः। अतस्तत्पुत्राः पौत्रा वा गूढचिह्नादिना प्रज्ञापितसीमत्वादाच्छिन्दन्त्येव। बालधनं दृष्टान्तार्थं पोगण्डशब्दस्य दर्शितत्वादित्युक्तम्। स्त्रियः दास्यः भार्या वा। नेतरस्या-

(१) मस्मृ. ८।१४९; मच. णश्य (णंक्ष्य).

धनस्यापहार उक्तः - 'धनस्य दशवार्षिकी' (यास्मृ. २।२४) इति। ननु च नेह धनमस्ति। 'यत्किंचित्' (मस्मृ. ८।१४७) इति वस्तुमात्रनिर्देशोऽयम्। नैवम्। 'धनी' इति संबन्धेन धनविषयतैव यत्किंचिदिति सामान्यशब्दस्य प्रतीयते। क एवमाह स्त्रियो न धनमिति। इत्थं विनियोज्ये द्रव्ये धनशब्दो वर्तते। अथास्मादेव स्त्रीधनात्स्वत्वमात्रोपलक्षणम्। धनोपमानेन पुमांसोऽपि भोगेन दासाः स्वीक्रियन्त एव। राजस्वम्। देशेश्वरा राजानः, तेषां धनम्। ते हि महाधनत्वादुच्चत्वान्वयं धनमनन्विच्छन्तो विरुतभेदादिभिर्निर्धनीक्रियन्ते तदूनोपेक्षया(?)। श्रोत्रियद्रव्यं श्रोत्रियधनाभियुक्तिः। मेधा.

(२) बन्धः, क्षेत्रग्रामादिमर्यादा, बालधनम्, निक्षेपः, प्रीतिभोग्यम्, दास्यः, राजश्रोत्रियधनादि उक्तेन दशवर्षभोग्येन स्वामिनो नापहारयितुं च(?)अस्य दशवर्षभोग्यद्रव्यापवादत्वात्। बन्धादीनां चाल्पकालभोग्यत्वेन नेहाननुप्रवेशाशङ्कास्थानं प्रीत्या भुज्यमानानीति पृथग्वचनम्(?)। गोरा.

(३) सीमा चिन्हनिर्णीता। बालधनमिति पूर्वश्लोकव्यतिरेकः। स्त्रियः अन्यपरिणीता दास्यश्च। आध्यादिकबालधनमपि न नश्यतीत्येतदर्थं बालधनोक्तिः। प्रणश्यति भोक्तुः स्वं भवति। मवि.

(४) बन्धः, ग्रामादिमर्यादा, बालधनम्, निक्षेपः 'वासनस्थमनाख्याय समुद्रं यन्निधीयते' इति नारदोक्त उपनिधिलक्षणः, दास्यादिस्त्रियः, राजश्रोत्रियधनानि उक्तेन दशवर्षभोगेन न स्वामिनो नश्यन्ति न भोक्तुः स्वत्वं भजन्ते। ममु.

(५) उक्तार्थे प्रतिप्रसवमाह - आधिरिति। आधिः बन्धकत्वेन स्थापितः। आधिवन्निक्षेपादिर्न नश्यतीत्यन्वयः, आधेर(व ?)हार्य(त्व)स्योक्तत्वात्। सीमा चतुर्विधा वक्ष्यमाणा। बालधनं राजरक्षितातिरिक्तम्। निक्षेपः प्रसिद्धः। उपनिधिरत्र समुद्रं यन्निधीयते तत्। स्त्रियो दास्यादयः। राजस्वं करशुल्कादि। श्रोत्रियस्वं धनभूम्यादिमात्रम्। एषूत्पन्नं वृद्धिसस्यापत्याद्यपि न नङ्क्ष्यतीति भावः। मच.

(६) अस्यापवादमाह - आधिः सीमेति। सीमा क्षेत्रादिः (? देः)। बालः असमर्थः। निक्षेपः ऋणार्थं परत्र निहितोऽर्थः। स्त्रियः दास्यः। न भोगेन प्रणश्यति भोगेन भोक्तृत्वं(? स्वं) न भवतीत्यर्थः। आध्युपनिध्योः स्वामिना प्राप्तव्यकालात्प्राचीनभोगविषयोऽयमपवादो ग्राह्यः। अन्यथा 'आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः' (मस्मृ. ८।१४५) इत्यनेन विरोधप्रसङ्गः स्यादिति। नन्द.

(७) स्त्रियः दास्यः। भाच.

**'यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः।**
**तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः॥**

(१) उक्तं 'न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्' (मस्मृ. ८।१४४) इति सर्वस्य हि ग्रहणमुच्यते। तत्र निषिद्धे भोगे बलादाधिं भुञ्जानो सर्वां हारयत्येव वृद्धिम्। अननुज्ञाते प्रतिषेधनम्। रहस्युपभुज्यमानभोगे न चाऽऽधिर्नश्यति तत्र रूप्यसुवर्णालङ्कारादावर्धवृद्धित्यागोऽनेन श्लोकेनोच्यते। यत्तु नवं महार्घमलङ्करणवस्त्रादि परिधीयमानं नाशितं तत्र न केवलं वृद्धिहानिः, यावद्धनं नष्टं तत्परिपीड्य मूलतः प्रविशतीति महत्तरैर्व्याख्यातम्। यज्वना तु व्याख्यातम् - यत्र स्वामी व्यवहरति अध्यधीनश्च। तत्राध्यधीनेन बन्धो दत्तः, स्वामिना च दृष्टः। तत्र धारणकेन कस्मिंश्चिदवसरेऽध्यधीनः पृष्टः 'प्रयोजनं ममानेन बन्धे नास्ति'। तत्रोपनिधिन्यायेन तेनानुज्ञातः कालान्तरे भुञ्जानं यदि स्वामी पश्यंस्तदनुज्ञातं बन्धं क्षपितवान् - सतीदृशे विषयेऽर्धवृद्धित्यागः। तदयुक्तम्। यतस्तुल्यो व्यवहारः परस्परापेक्षः स्वामिभृत्ययोः। तत्रान्यतरेणानुज्ञातेनायमनुज्ञातः प्रयुज्यते धर्मतः। स्वामिशब्दस्यार्थे स्वत्वमीदृशि विषये भवति। अन्यथा बन्धं यो ददाति सोऽवश्यं स्वाम्येन युक्तः। अध्यधीनस्तु न स्वामी। यद्येवं चौरस्तर्हि। तस्मात्स्वामित्वाध्यारोपः। उपयोगे वाऽध्यधीने स्वाम्यनुज्ञाव्यवहाराद्ब्रह्मदत्तवत्। अतः पूर्व एवार्थः। स्वामिग्रहणं पादपूरणार्थम्। भुङ्क्तेऽविचक्षण इत्यकारः संहितया प्रश्लिष्टनिर्दिष्टो वेदितव्यः। यस्य ह्यस्ति बुद्धिः 'वृद्धिर्ममास्त्येव, अधिको लाभो वस्तुभोगः' इति, सोऽविचक्षणः। न हि लोकशास्त्रनियोजनीया स्थितिः यदुभौ लाभश्च भोगश्च वृद्धिः स्यात्। तेन सा वृद्धिर्मोक्तव्या। निष्कृतिः परशुद्धिः, विनिमय इति यावत्। अन्ये तु द्विगुणीभूतेऽप्यमोक्ष्यमाणे

---

(१) मस्मृ. ८।१५०.

प्रतिषेधमिममिच्छन्ति तस्य हि स्वल्पोऽपराध इति वदन्तः। प्रथमं तावदादावेव तैर्याज्ञवल्क्यवचनस्य विषयो देयः 'आधिः प्रणश्येत्' (यास्मृ. २।५८) इति। मेधा.

(२) यो वृद्धिदत्तं धनं भोगेनाविनश्य(द्)रूपं स्वामिनाऽननुज्ञातो मूर्खो रहसि भुङ्क्ते बलभो(? यो)गेन '(न) भोक्तव्यो बलाव(? दा) धिः' (मस्मृ. ८।१४४) इत्युक्तम्, तेन तस्य शुद्ध्यर्थमर्धवृद्धिस्त्यक्तव्या।

गोरा.

(३) अननुज्ञातं अनुज्ञां विना, न तु बलात्। एतच्च वृद्धेरल्पत्वे। बहुत्वे तद्भोगोचितमूल्यदानं प्रतिषिद्धाधिभोगे प्रागुक्तम्। मवि.

(४) यो वृद्ध्या दत्तं बन्धं स्वाम्यनुज्ञाव्यतिरेकेण मूर्खो निह्नवेन भुङ्क्ते तेन तस्य भोगस्य संशुद्ध्यर्थमर्धवृद्धिर्मोक्तव्या। बलभोगेन तु भोक्तव्ये(?) बलादधिभुञ्जाने सति सर्ववृद्धित्याग एवोक्तः। ममु.

(५) अननुमत्याऽऽधिं निह्नवेन भुक्तवतोऽर्धवृद्धित्यागप्रायश्चित्तमाह – य इति। तेन अविचक्षणेन। 'न भोक्तव्यो बलादाधिः' इत्यत्र निषेधमतिक्रम्य बलाद्भोजने सर्वा वृद्धिस्त्याज्या, (अ ?)निह्नवे अननुमत्याऽर्धमिति भेदः।

मच.

(६) अविचक्षणः वृद्धिहानिमजानन्। नन्द.

कालक्रमेण वर्धमानस्य वृद्धिराशेः परममर्यादा, ग्राह्यवृद्धेः परिमाणम्, निषिद्धा वृद्धयः

**'कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता।**
**धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम्।।**

(१) लाभार्थो धनप्रयोगः कुसीदम्, तत्र वृद्धिः। अथवा प्रयुज्यमानं प्रयोक्तृसंबन्धिधनमेव कुसीदम्। 'मदीयं स्वल्पं दत्त्वाऽधिकं ग्रहीष्यामि' इति धनं दीयते तत्कुसीदम्। तत्र वृद्धिः। सा द्विगुणत्वं नातिक्रामति। तावदुत्तमर्णेन वृद्ध्यर्थं धनं दत्तवताऽधमर्णाद्ग्रहीतव्यं यावन्मूलधनं द्विगुणं प्रविष्टम्। ननु वृद्धेर्द्वैगुण्यं श्रूयते। मूलेन सह त्रिगुणं प्राप्नोति। नैवम्। गुणोऽवयव उच्यते। स तावदवयविनमपेक्षते। प्रकृतं च धनम्। अतः प्रयोगविषयस्य धनस्यानेन प्रकारेण द्वैगुण्यमुक्तं भवति। तथा च स्मृत्यन्तरम् – 'चिरस्थाने द्वैगुण्यं प्रयोगस्य' (गौध. १२।२८), 'मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने' (यास्मृ. २।६४) इति। वृद्धिश्चानेकरूपा – कार्षापणेषु प्रयुक्तेषु कार्षापण एव वर्धते, क्वचित्संततिः – 'स्त्रीपशूनां वेति संततिः' (नासं. २।९२), क्वचिदाधिभोगः गोभूम्यादेः। तत्रेदं द्वैगुण्यं सरूपवृद्धिविषयं केचिदाहुः। तत्र हि मुख्यवृद्धेर्द्वैगुण्यं प्रतीयते। संततौ न विज्ञायते – किं संख्ययाऽस्या द्वैगुण्यमुत परिमाणेनोन्मानतो वेयम्। अतो वे(? अत एवे)त्याद्यनिश्चये पशूनां मूल्याद्धि महार्घत्वं हस्त्यश्वादिषु क्रयविक्रयादौ दृश्यत एव। महाप्रमाणा हि महार्घा भवन्ति। ननु च संततौ सारूप्यमस्त्येव। गोः संततिर्गौरेव। तत्र भेदोपन्यासो न युक्तो वृद्धिः सरूपा संततिश्चेति। उच्यते – नैकजातीयत्वमात्रेण सारूप्यं भवति, किंतु वयःपरिमाणादिसाम्येन। अतो युक्तो भेदोपन्यासः। भोगलाभेऽपि कुतो द्वैगुण्यप्रतीतिः? उपकारकाणि जनयितुं गावः प्रयुज्यन्ते। गोभूम्यादिपयोयवसादयो यथासंभवं भुज्यन्ते। तत्र कीदृशं द्वैगुण्यम्? समाचारश्च क्वचिद्दृश्यते – वर्षशतानि भूमिरामूलहिरण्या(? ण्य)दानाद्भुज्यते। पठति च याज्ञवल्क्यः – 'आधिश्च भुज्यते तावद्यावत्तन्न प्रदीयते' (यास्मृ. २।९०) इति। अत्रोच्यते – वृद्धिमात्रे श्रूयमाणे द्वैगुण्यं कथं विशेषेऽवस्थाप्यते? न हि श्रुत्वा सामान्यप्रतिपत्तिर्भवन्ती विना प्रमाणेन विशेषेऽवस्थातुमर्हति। यत्तु संततावनुपपन्नं द्वैगुण्यमिति, अवगमे यत्नः क्रियताम्। मूलमर्घेण परिनिश्चितवता(? तां) वृद्धिस्तत्सामान्या एव तज्जातानां भवति। भूमिभोगेऽपि यवसगोधूमादौ तत्पच्यमास्यार्घतः शक्यत एव समत्वं निश्चेतुम्। उपकारवचनोऽपि गुणशब्दोऽस्ति। क एवं सति समगुणो भवति क उपकारको भवतीति कथं गम्यते? अनेन यावन्मूल्यं गोधान्यविनिमयादुत्पद्यते तावदेव चेत्तत उत्पन्ना वृद्धिस्तदा भवति समगुणत्वं परिमाणादिसाम्याभावेऽपि। यस्तु क्वचित्समाचारः, भवतैव परिहृतः क्वचिद्ग्रहणं प्रयुञ्जानेन। समाचारभ्रंशसंभवे स्मृतयो नियामिका अर्थवत्यः। 'आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते' इत्यत्र यावद्दानात्तद्द्विगुणमप्रविष्टम् इत्यपि शक्यते नेतुम्। स्मृत्यन्तरैकवाक्यत्वा-

(१) **मस्मृ.** ८।१५१; **मेधा.** दाहृता (दाहिता) इत्यपि पाठान्तरम्; **निप्र.** २।३२१ सदे (शदे) उत्त.; **भाच.** निप्रवत्.

च्चैतदेव युक्तमध्यवसातुम्। उपपादितं चैतन्निपुणतोऽन्यत्र। सकृदाहिता। सकृदित्यनेन व्यवस्थापितोऽङ्गीकृतः पुनः-पुनःप्रयोग इति यावत्। आधानं स्थापनमुच्यते। वचन-व्यवस्थया च निरूपणं स्थापनमेव। पुनः प्रयोगश्च द्विगुणी-भूते धने आदीयमाने भवति। यदा द्विगुणो हि वृद्ध्यर्थं उत्तमर्णोऽधमर्णश्च तदीयेन धनेन महत्कार्यं करिष्यन् करण-परिवृर्त्ति करोतीति 'या प्राक्तनी वृद्धिरियं वाऽद्यप्रभृति वर्धते' इति, तदा द्विगुणीभूतमपि पुनर्वर्धत एव। पुरुषान्तर-संचारेण वा। यदि द्विगुणीभूतं धनिकस्योपयुज्यते तदाऽधमर्ण उच्यमानोऽन्यपुरुषं ददतमर्पयति 'एष त इयद्भिरहोभिर्दा-स्यति' इति, तत्र स्वहस्तं दीयमानं पुनर्वर्धते। न चायं दानं प्रति प्रतिभूः, किंतु निक्षेप्ता दातैव। एतत्तु §ऋजुना 'पुरुषान्तरमसं( ?रसं)क्रान्तम्' इति व्याख्यातम्। अथवा प्रागपि द्वैगुण्याद्यदा बन्धमन्यस्मै प्रत्यर्पयति, दीनारेषु सलाभेषु द्वित्वे तस्य बन्धस्य मोक्ष एव धर्म्यः। बन्धस्य प्राग्वृद्धौ स्थितायां तस्मादह्नः प्रभृति पुनर्द्वैगुण्यमाप्नोति। यदा तदीयं बन्धकं तदनुज्ञयोत्तमर्णेनान्यत्राऽऽधाय स्वधनं गृह्यते तदा वर्धत एष पुरुषान्तरसंचारः। उभयत्र द्विगुणीभूते प्रयोक्ताऽ-धमर्णकेन येन केन प्रकारेणान्यस्माद्ग्रहणमनुज्ञाप्यते। यदि वाऽस्मादन्यत् गृह्यते ग्रहीता देशान्तरं गमिष्यन् कार्यान्तरेण चान्यत्र संचारयति। ऋजुस्तु तस्मादेवाधमर्णादनवीकृते प्रयोगे द्विगुणाधिकां वृद्धिं नेच्छति। अत आह – 'पुरुषा-न्तरमसंक्रान्ते पुनःक्रिया प्रयोजनं च वक्ष्यामः'। ये तु व्याचक्षते – 'या वृद्धिरुपचिता सांवत्सरी युगपत्स-र्वैर्वाऽऽनीयते तत्रायं विधिः। या पुनः प्राप्तदानाऽपि सर्वा न दीयते तत्र द्विगुणादधिकग्रहणमपि', तेषां न नशब्दो यथार्थो नापि आहित इति। सांवत्सरी तावदुपचिता ग्राह्या द्वितीयसंवत्सरे पुनरानयनमस्त्येवेति न क्वचिद्द्वैगुण्यनियमः स्यात्। अथ – यो द्विगुणीभूतं सलाभं धनमानयति तत्राधिक-निषेधोऽस्तु। प्राग्द्वैगुण्याद्वृद्धिमात्रदानसमर्थो वृद्धिं ददाति। मूलं तस्यापरिमितग्रहणमिति। एतदपि न किंचित्। यः संवहति तस्यानुग्रहो न्याय्यः, नाधिकग्रहणम्। यस्तु राज्ञा द्विगुणीभूतमपि कथंचिद्दाप्यते तस्याधिकमोक्ष इत्येतद-न्याय्यम्। न चाऽऽहितेत्यस्य शब्दस्यायमर्थः। अथ आहृतेति पाठान्तरम्, तथापि सकृच्छब्दो न निश्चितार्थः, न्यायस्तु परित्यक्तः, स्वकृतश्च पाठः स्यात्, न मानवी स्मृतिरित्युक्तैव व्यवस्था न्याय्या। धान्यादिषु पञ्चतां पञ्चगुणतां नात्येति। स्मृत्यन्तरे धान्ये चतुर्गुणोक्ता 'हिरण्यवस्त्रधान्यानां वृद्धिर्द्वित्रि-चतुर्गुणा' (नास्मृ. २।९२) इति। तत्र व्यवस्था – यदि दरिद्रभूतः प्रयोक्ता, ग्रहीता च महाधनसंपन्नस्तेन धान्येन महान्तमर्थं कृतवांस्तदा पञ्चगुणा, अन्यथा चतुर्गुणा। सदं फलं वार्क्षम्, धान्यस्य पृथगुपादानात्। लवः उदीच्येषूर्णा-विषयः प्रसिद्धः। वाह्यः गर्दभोष्ट्रबलीवर्दादिः।

मेधा.

(२) यावद्वृद्ध्यर्थप्रयुक्तधनसंबन्धिनी वृद्धिरतिभूयस्य-(पि) काले गते सकृदधमर्णादानीता शनैः शनैः मासं प्रत्यब्दं वा, असौ द्वैगुण्यं नातिक्रामति, मूलद्विगुणैव भवति, न ततोऽधिका लभ्यते। धान्ये पुनर्वृद्धिप्रयुक्ते, सदे वा वृक्षफले, लवे वा ऊर्णमये, वाहनीये च बलीवर्दादौ प्रयुक्ते भूयस्यपि काले गते सकृदधमर्णादाहृता सती मूलधान्यादिना सह पञ्चगुणतां नातिक्रामति।

\+ गोरा.

(३) कुसीदवृद्धिः। कुसीदपदं वाणिज्यवृद्धिव्यवच्छे-दार्थम्। सकृदाहिता मूल्यग्रहणकालग्राह्या वृद्धिः। या तु प्रत्यहप्रतिमासग्राह्या वृद्धिः सा वृद्धिर्ग्रहणानन्तरं पुनःपुन-राधीयत इति न सकृदाहिता। तथा यत्र सवृद्धिकमेव मूलधनं मूलतया स्थाप्यते सोऽप्येवमित्येतदुभयं द्वैगुण्यमि-(? मत्ये)त्येव। धान्य इति। एषु पञ्चगुणपर्यन्तं याति, न तु ततोऽधिकम्। सदे सस्ये नालिकेरादौ। लवः शराद्यस्त्रम्। ऊर्णेति केचित्। वाह्ये वाहनीये वृषादौ। 'एतत्त्वया भोक्तव्यम्, भोगनिमित्तं चैतावत्, एतावता कालेन वर्धते' इति प्रयुक्ते। अशीतिभागवृद्धितोऽपि यदि सौहार्दादिना न्यूनाऽपि वृद्धिः स्थापिता सा। मवि.

(४) शदः क्षेत्रफलम्।.... पञ्चतां नातिक्रामति पञ्च-गुणपर्यन्तं वृद्धिर्भवतीत्यर्थः। * निप्र. २।३२१

(५) सकृदाहृता प्रतिमाससमग्राह्या सती सकृत् एकदा

---

§ अयं कश्चिदाचार्यः स्यात्। पूर्वश्लोकव्याख्याने 'यज्वना' इति कश्चिदाचार्यो निर्दिष्टः।

\+ ममु. गोरागतम्।

* शेषं गोरागतम्।

मूल्येन सह गृह्यमाणा। प्रतिमासग्रहणं तु वर्णक्रमेण द्विकादिकमेवेति भावः। * मच.

(६) द्रव्यविशेषे वृद्धिनियममाह – कुसीदवृद्धिरिति। .... धान्ये माषमुद्‌गादौ। सदे तद्व्यतिरिक्ते कृषिफले इक्ष्वादौ (? दौ। $लवे) यवव्रीहिशाल्यादौ। तथा चोक्तम् – 'व्रीहिशाल्यादिकं धान्यं श्रूयते च लवं तु तत्' इति। लवं क्षुमादिकमिति केचित्। वाह्ये बलीवर्दादौ। पञ्चतां पाञ्चगुण्यम्। पारिशेष्यादितरेषु द्वैगुण्यमवगन्तव्यम्। सकृदाहृतेतिविशेषणात् विरोधन(?)द्वैगुणात्ययानुज्ञा गम्यते। * नन्द.

(७) लवे चामरादौ। * भाच.

**[१]कृतानुसारादधिका व्यतिरिक्ता न सिध्यति।**
**कुसीदपथमाहुस्तं पञ्चकं शतमर्हति।।**

(१) अनुसरन्ति अनुधावन्ति अनुवर्तन्ते सर्व एवार्था एतमित्यनुसारः शास्त्रोदितः समाचारः। स च विविधोऽशीतिभागादिः पञ्चकशतपर्यन्तः। तस्मादधिका वृद्धिः कृता यावत्तथाऽधमर्णेनोत्तमर्णस्य न सिध्यति। कुतः? व्यतिरिक्ता यतः, शास्त्रबाह्येत्यर्थः। अर्थवादान्तरमाह – कुसीदपथमाहुस्तमिति। कुपुरुषा यत्र सीदन्ति तत् कुसीदम्। धर्मेण तद्धर्माणो लक्ष्यन्ते। कुसीदी(? दि)नामयं पन्थाः मार्गः व्यवहारः, न साधूनामिति निन्दा। यस्यावश्यमधिका कर्तव्या 'महद्धि कार्यमयं मदीयेन धनेन साधयति' इति बुद्ध्या, तदा वर्णविभागमनपेक्ष्य पञ्चकं शतं ग्रहीतुमर्हति लिप्सेत्, तदर्थमिदमुच्यते। पाठान्तरं 'कृता तु सारादधिका' इति। यस्याकिंचनस्य सतः स्वल्पा कृता, तेनैव धनेनान्यथा वा महार्थतां प्राप्तस्तस्य या पुरुषसारादधिका क्रियमाणा न सिध्यति, यः परं पञ्चकशतमर्हति। मेधा.

(२) ग्रहीतृनृगतमर्थिताविशेषमुत्तमर्णेन विज्ञाय उक्तवृद्धि(? द्धे)रधिका वृद्धिः कृता सती यतः शास्त्रबाह्या सा च नो सिध्यति। प्रतिषिद्धवृद्धिमार्गं किलैनं शिष्टाः प्राहुः। यदि परं शूद्रविषये यदुक्तं पञ्चकं शतं तदसावुत्तमर्णो द्विजातेरादातुमर्हति। शूद्रविट्क्षत्रियद्विजातेरप्यादातुमर्हति। गोरा.

(३) कृतादनुसारात् तदनुसरात् अधिका शास्त्रीयत्वेऽपि न सिध्यति। एवमशीतिभागाधिकवृद्धिनियमेन ऋणं गृह्यते तदाऽशीतिभागादेः(? दिः) शास्त्रीया, आर्ततया तदधिकं शताद्यत्पञ्चकग्रहणं शूद्र उक्तं तच्चतुर्षु वर्णेषु ग्राह्यम्। न तु ततो व्यतिरिक्ता विशेषेणातिरिक्ता कृतत्वमात्रेण सिध्यति। एतच्च कुसीदपथं वृद्धिजीविवर्त्म आहुः। अत्रैव वृद्धिकृतोऽदोष इत्यर्थः। मवि.

(४) कृता या वृद्धिर्द्विकं त्रिकमिति शास्त्रेण वर्णक्रमेणोक्ता तस्याः शास्त्रानुसारादधिका व्यतिरिक्ता (अ)कृता। अतोऽन्या वृद्धिरकृतेत्यर्थः। किंतु (अ)कृताऽपि वृद्धिः (वत्सरातिक्रमे) वर्णक्रमेण द्विकत्रिकशतादिरूपैः (या?) मासे ग्राह्या। तथा च विष्णुः – 'वृद्धिं दद्युरकृता(? ताम्) अपि वत्सरातिक्रमे यथाभिहिता(? ताम्)' (विस्मृ. ६।३-४) वर्णक्रमेण द्विकत्रिकादिनेत्यर्थः। (किं तु ?) अकृतवृद्धावपि विशेषान्तरमाह – कुत्सितात्प्रसरत्ययं पन्था इति कुसीदपथः। अयमधमर्णो यच्छूद्रविषयोक्तं पञ्चकं शतं द्विजातेरपि गृह्णातीत्येवं कुत्सितपन्थाः पूर्वोक्ताद्धर्म्यवृद्धिकरादपकृष्ट इत्येवं मन्वादयः आहुः। इयं चाकृता वृद्धिरुद्धारविषये याचनादूर्ध्वं बोद्धव्या। तदाह कात्यायनः – 'प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम्। याच्यमानं न दत्तं चेद्वर्धते पञ्चकं शतम्।।'। † ममु.

(५) लोकेन कृतानुसारात् परिमाणादधिका शास्त्रोक्तादधिका च कुसीदवृद्धिरुभयानुमतेत्येतावता न सिध्यति। तथाहि – यत्पञ्चकः(? कं) शतमर्हति तदेव कुसीदमर्हतीति तथाऽऽहुराचार्याः। अनाधिकम् (?) अत्रापि पूर्ववत्कन्प्रत्ययः। नन्द.

(६) व्यतिरिक्ता पञ्चकोत्तरशतातिरिक्ता। * भाच.

---

* शेषं गोरागतम्।

$ अग्रिमप्रमाणवचनानुरोधात् लवशब्दस्य क्षुमादिपरत्वस्य मतान्तरत्वेन निर्देशाच्चात्र 'लवे' इति पदमावश्यकम्।

(१) **मस्मृ.** ८।१५२; **मेधा.** कृतानुसा (कृता तु सा) इति पाठान्तरम्: ८।१५३ पृ. १४५ द्वितीयचरणमात्रम् : ८।१५३ पृ. १४६ द्वितीयचतुर्थचरणौ.

† मच. ममुवत्।

* शेषं ममुगतम्।

**¹नातिसांवत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत्।**
**चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या।।**

(१) संवत्सरे भवा सांवत्सरी। ताम् अतिक्रान्ता अतिसांवत्सरी। भवप्रत्ययार्थः सामर्थ्यादन्तर्भूतः। अथवा संवत्सरमतिक्रान्ता अतिसंवत्सरेति प्राप्ते वृद्धीकारौ छन्दस्तुल्यत्वात्कर्तव्यौ। येषां वृद्धिरनन्तरप्रक्रान्तं पञ्चकं शतं सर्ववर्णविषया सा संवत्सरं यावद्ग्रहीतव्या, नातीते संवत्सरे। अथवा यावत्संवत्सरम्। संवत्सरः वर्षः। तावद्वृद्धिर्न ग्रहणीया। अधमर्णेनापि संवत्सरादूर्ध्वं न विलम्बितव्यम्। विनिर्हरेत् विनिष्कृष्य स्वधनादारभ्योपनयेदित्यर्थः। अर्वागपि संवत्सरात् या दीयते साऽप्यतिक्रान्तसंवत्सरैव। अथवा मासादारभ्य संवत्सरं यावत् वृद्धिः परिमाणतो निरूपितव्या – 'मासेन यद्वर्धते संवत्सरेण वा' इति। एवं प्रयोगः कर्तव्यः, न तु संवत्सरद्वयस्य। लाभार्थी कदाचिच्चिरकालं ग्राहयति – 'किं मे कतिपयमासिकेन लाभेन, यदि द्वे वर्षे ततोऽधिकं वा गृह्णासि तद्ग्रहणे एषा वेयता कालेन वृद्धिः'। तत्रार्वाचीनमपि §दददधमर्णे द्विसांवत्सरीं यथा कालकृतां तदा(?था) दाप्येत। 'एकां वृद्धिमनादेयां न दद्यान्नापि दापयेत्' इति यथा मासिकी वृद्धिः प्रथमे मासि द्वितीय एवाह्नि शोधयन्दाप्यते तथा यदैवमभ्युपैति 'संवत्सरेण यद्वर्धते' इति, तदा तथैव दाप्यते, न तु तदधिककालकृता। न चादृष्टां विनिर्हरेत्। शास्त्रे या न दृष्टा दशैकादशिकाद्या (?दशकैकादशकाद्या) पञ्चकादधिका, न तां गृह्णीयात्। 'व्यतिरिक्ता न सिध्यति' (मस्मृ. ८।१५२) इत्यस्यैवायमनुवाद इति केचित्। इदं तु युक्तम् – अदृष्टाम् अनुपचितामित्यर्थः। यावद्बहुभिर्मासैर्न संहतीभूता तावन्न ग्राह्या दिवसवृद्धिर्मासवृद्धिः। ननु च 'मासस्य वृद्धिं गृह्णीयात्' (मस्मृ. ८।१४२) इत्युक्तम्। परिमाणं मासिकं तद्वृद्धेः, न तु ग्रहणम्। चक्रवृद्धिः कालवृद्धिः कारिका कायिका च या तामपि, न विनिर्हरेदित्यनुषङ्गः। नैव दद्यादिति। यद्यप्यधमर्णस्य प्रतिषेधस्तथापि सामर्थ्यादुत्तमर्णस्यैव द्रष्टव्यः। अधमर्णो ह्यार्तः किं न करोति? अथवा विनिर्हारः ग्रहणमेव। तेनोत्तमर्णस्यैव शाब्दः प्रतिषेधः। ननु च द्विकादिवृद्धिविधानाच्चक्रवृद्ध्यादीनां प्राप्तिरेव नास्ति, किं प्रतिषेधानुषङ्गेण? उच्यते। अप्राप्तः प्रतिषेधः पाक्षिकीं वृद्धिमनुमापयति। यथाऽऽधाने 'न ब्रह्मा सामाभिगायेत्' इत्यविहितं सा(?तसा)मगानं प्र(?नप्र)तिषेधेनास्तीति ज्ञापयति। तेनैता अपि प्रतिषेधद्वारेणाभ्यनुज्ञायन्ते। केषांचिदूनव्यवहारिणां चक्रवृद्ध्यादयोऽपि भवन्ति। तेन(?ते च) स्थलपथवारिपथिका वाणिजः। यथोक्तम् – 'कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्। दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु।।' (यास्मृ. २।३८) इति। कान्तारगादीनामेव स्वकृता सर्वजातिविषया साधारणी वृद्धिः, न त्वन्येषाम्। तत्र चक्रवृद्धिः स्मृत्यन्तरे पठिता – 'वृद्धेर्वृद्धिश्चक्रवृद्धिः'। अन्ये तु चक्रवद्यानं गन्त्र्यादि, तद्वृद्धिश्चक्रवृद्धिः। तेषां यस्मिन्नहनि चक्रं वर्तते तत्रैव वृद्धिः, यदा तु नदीसंतारे दुर्दिनादिना अप्रयाणं तदा नास्ति वृद्धिः। एवमन्येषामपि बलीवर्दादिवाह्यप्रयोक्तॄणामीदृशी वृद्धिश्चक्रवृद्धिरुच्यते। कालवृद्धिः 'प्रतिमासं तु कालिका'। मासग्रहणमुपलक्षणार्थम्। याऽनुपचिता वृद्धिर्दिवसे गृह्यते मासि मासि वा, यस्याः कालो न प्रतीक्ष्यते, अथ च 'एतस्मिन्काले यदि न ददासि तदा द्विगुणीभवति धनम्' इत्येक(?त्येवं)रूपा कालवृद्धिः। कारिता इत्थंकृतां यावतीं वा परस्परोपकारापेक्षयोत्तमर्णाधमर्णौ कुरुतः। एषाऽपि दिग्भागवणिजामेव। अन्येषां तु 'व्यतिरिक्ता न सिध्यति' इत्युक्तम्, 'पञ्चकं शतमर्हति' इति। अथवा हिरण्ये प्रयुक्ते वासांसि वृद्ध्या गृह्यन्ते तत्राऽऽधिलक्षणं द्रव्यम्, सा कारिता यथाभोगलाभे न्यासरूपविषये च स्यात्। कायिका कायकर्मणा संशोध्या कायजीविका च, एषां क्रमेलकाचैवाधिकादीनाम् (?)। § मेधा.

(२) कायिका कायकर्मसंख्यावाच्या स्यात्। « गोरा.

§ 'ददति' इति 'अधमर्णः' इति वाऽत्र शुद्धिः कल्पनीया।

(१) **मस्मृ.** ८।१५३; **मेधा.** पुन (विनि) कारिता (कारिका) इत्यपि पठति; **गृक.** २२० चादृष्टां (वाऽदृष्टां) काल (कला); **गृर.** ४४८ चादृष्टां (वा दुष्टां); **मपा.** २२९ न चादृष्टां (नाभीष्टां तु) लवृद्धिः कारिता (लिका च कारिका); **मच.** कारिता (कारिका); **विपा.** ३।२।२५२ न चादृष्टां (नाभीष्टां तु) कालवृद्धिः (कालिका वा) कारिता (कारिका).

§ गृक. मेधागतम्।
« शेषं मेधागतम्।

(३) अथ व्यवहारसिद्धा अप्यधर्महेतुतयाऽकर्तव्या वृद्धीराह – नातिसंवत्सरीमिति। .... कारिता द्विगुणादूर्ध्वं वृद्धिरशास्त्रीयत्वेऽपि तदूर्ध्वमपि मूल्यं वर्धत इति ऋणिकेनार्थितया कृता। कायिका यावन्न मूलमर्प्यते तावत्कायेन कलार्थं कार्यमिति। केचित्तु प्रथमान्तत्वादस्य पूर्वेणानन्वयात्कर्तव्यमित्यस्यार्धस्यार्थ इत्याहुः। तत्तुच्छम् (? तत्तु) यच्छब्देन येति पूर्वप्रकान्तप्रक्रियानुकर्षार्थेन त्वपास्तम्।
« मवि.

(४) 'ममैकस्मिन्मासि मासद्वये मासत्रये वा गते तस्य वृद्धिं विगणय्यैकदा दातव्या' इत्येवंविधनियमपूर्वकवृद्धिग्रहणमुत्तमर्णः संवत्सरपर्यन्तं कुर्यात्। नातिक्रान्ते संवत्सरे नियमस्य वृद्धिं गृह्णीयात्। न च शास्त्राददृष्टामुक्तधर्म्यद्विकत्रिकशताद्यधिकां गृह्णीयात्। अधर्मत्वबोधनार्थो निषेधः। चक्रवृद्ध्यादिचतुष्टयीं चाशास्त्रीयां न गृह्णीयात्। तासां स्वरूपमाह बृहस्पतिः – 'कायिका कायसंयुक्ता मासग्राह्या च कालिका। वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता'। तत्र चक्रवृद्धिः स्वरूपेणैव गर्हिता। कालवृद्धिस्तु द्विगुणाधिकग्रहणेन। कायिका चातिवाहदोहादिना। कारिता ऋणिकेन याऽनापत्काल एवोत्तमर्णपीडया कृता। चतस्रोऽपि वृद्धीरशास्त्रीया न गृह्णीयात्। तथा च बृहस्पतिः – 'भागो यद्द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते। पूर्णे च सोदयं पश्चाद्वार्धुष्यं तद्विगर्हितम्।।'। कात्यायनः – 'ऋणिकेन कृता वृद्धिरधिका संप्रकल्पिता। आपत्कालकृता नित्यं दातव्या कारिता तथा। अन्यथा कारिता वृद्धिर्न दातव्या कथंचन।।'।
† ममु.

(५) अतिसांवत्सरीं वृद्धिं न हरेत् न गृह्णीयात् च। पुनः अभीष्टां वृद्धिं न हरेत् न गृह्णीयात् च। पुनः या वृद्धेरपि वृद्धिः चक्रवृद्धिः, प्रतिमासं देया (कालवृद्धिः), कारिता द्विगुणेन मूल्यमिति कारिता, च पुनः कायिका कायमूल्यमिति। योगीश्वरः – 'वृद्धिर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु कालिका। इच्छाकृता कारिता स्यात् कायिका कायकर्मणि।।' इति। भाच.

« शेषं मेधागतम्।

† मच. ममुवत्। नन्द. ममुगतम्।

### ऋणापाकरणाशक्तौ ऋणव्यवहारपरिवर्तनम्

**(१)ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनःक्रियाम्।**
**स दत्त्वा निर्जितां वृद्धिं करणं परिवर्तयेत्।।**

(१) वृद्धिद्विगुणीभूतमृणं धनपरिक्षयाद्दातुमशक्तो यः स पुनःक्रियां कारयितव्यः। करणं लेख्यसाक्ष्यादि परिवर्तयितव्यम्। वृद्धिं तु दद्यात् निर्जिताम्। यावती गणनया भवतीत्यर्थः। द्विगुणादधिकं न ग्राह्यमिति यदुक्तं तस्यायमपवादः जयो(? नवो) ह्ययं प्रयोग इति। कुतः पुनः द्वैगुण्यापवादार्थता? यावता नेह किंचिदीदृशं वचनमस्ति वृद्धिसहितं धनं वर्धते मूलधनं वा। केवलं पुनःक्रिया श्रूयते। सा च 'करणं परिवर्तयेत्' इति व्याख्यान्तरेण व्याख्याता। यदि न वर्धते, किमर्थं तर्हि करणपरिवर्तनम्? उच्यते। शान्तलाभे धनेऽदीयमाने आलस्यादिसंभावना, साक्षिणश्च दीर्घे गच्छति काले विस्मरेयुः। यथोक्तम् – 'यत्र कार्ये भवेद्येन कृतोपेक्षा दशाब्दिकी। विवादस्तत्र नैव स्यात्साहसेषु विशेषतः।।'। तथा 'दशवर्षोपेक्षितमृणमसाध्यम्' इति। तथा च पूर्वे स्म व्याचक्षते – अयं च राज्ञ उपदेशः पीडितस्यानुग्रहः। यदि च द्विगुणस्य नवीकरणेन पुनः प्रयोगो वृद्धिसहितस्य पुनर्वृद्धिर्महानयं पीडितस्यानुग्रहः (?)। अथ सर्वं तदानीमवष्टभ्य न दाप्यते एषोऽनुग्रहो निर्धनस्य। ईदृशोऽनुग्रहो दैवेनैव कृतः। तथा च सर्वस्मृतिष्वस्यामवस्थायां विहितम् – 'अथ शक्तिविहीनः स्यादृणी कालविपर्ययात्। प्रेक्ष्य शक्तिमृणं दाप्यः काले देशे यथोदयम्।।'। यद्यधमर्णो दैवदोषान्निर्धनीभूतस्तदा न दुर्गावरोधादिना राज्ञा पीडयितव्यः। किं तर्हि कर्तव्यम्? यदाऽस्य कथंचिद्धनं भवेत्तदा यथासंभवं शनैः शनैर्दापयितव्यः। प्रेक्ष्य शक्तिं धनवत्तां ज्ञात्वेत्यर्थः। दाप्यः उचितस्य। वक्ष्यति – 'कर्मणाऽपि समं कुर्यात्' (मस्मृ. ८।१७७) इति। तस्मात् करणपरिवृत्तौ यदेवोक्तमस्माभिस्तदेव प्रयोजनम्। मेधा.

(२) यः अधमर्णः धनदानासामर्थ्यात् आनीतं स्यात् (?) इतिक्रियां कर्तुमिच्छेत्, आनीतां वृद्धिं दत्त्वा करणं लेख्यादि पुनः कुर्यात्। गोरा.

(१) मस्मृ. ८।१५४-१५५.

(३) ऋणं समूलां वृद्धिम्। पुनःक्रियां कलां दत्त्वा मूलस्य पुनर्वृद्धिनियमम्। निर्जितां तावत्कालेन संचिताम्। करणं यत्र(? पत्रं) साक्ष्यादिव्यवस्थां परिवर्तयेत् पुनः कुर्यात्। मवि.

(४) योऽधमर्णो धनदानासामर्थ्यात्पुनर्लेख्यादिक्रियां कर्तुमिच्छेत्स निर्जिताम् उत्तमर्णः (? र्णेन) स्वत्वतयाऽऽत्मसात्कृतां वृद्धिं दत्त्वा करणं लेख्यं पुनः कुर्यात्। ममु.

(५) ऋणादृते जीवितुमसमर्थः पूर्वोत्तमर्णादृणान्तरं लिप्सुरेवं कुर्यादित्याह – ऋणमिति। पुनःक्रियाम् ऋणान्तरम्। निर्जितां मासि मासि लभ्यत्वेनाऽऽनीतामुत्तमर्णप्राप्याम्, तां संपूर्णां दत्त्वा करणं क्रियते लिख्यते ऋणमत्रेति पत्रान्तरं कुर्यादित्यर्थः। मच.

(६) पुनःक्रियां ऋणस्य पुनःस्वीकरणक्रियाम्। निर्जिताम् उत्तमर्णेन निर्जिताम्, अधमर्णेन तदानीं दातव्यमिति यावत्। करणं मूल्यमात्रस्य ऋणस्य स्वीकरणं परिवर्तयेत्। अस्यां करणपरिवृत्तौ यावती संभवेत् वृद्धिस्तावतीं दातुमर्हति। नन्द.

(७) सः निर्जितां तत्कालसंचितां कृतां वृद्धिं दत्त्वा यदन्यत् करणं य(? प)त्रसाधनं परिवर्तयेत् अन्यत्कारयेदित्यर्थः। भाच.

**अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयेत्।**
**यावती संभवेद्वृद्धिस्तावतीं दातुमर्हति।।**

(१) अदर्शयित्वा हिरण्यम् अदत्त्वा निर्धनत्वात् वृद्धिहिरण्यं तत्रैव पुनः करणं परिवर्तयेत् साक्षिसमक्षमेवं ब्रूयात् 'एतावन्मूलमस्मै धारयामि, एतावती च वृद्धिः' इति, तत्रैवा(? पत्रे चा)ऽऽरोपयेत्। यावत्संवत्सरा(? यावती सांवत्सरी)वृद्धिरिति तावद्व्या(? यावत्। व्या)चक्षते पुनःकरणे वृद्धिसहित(? ते)मूलीभूते लघीयसी वृद्धिः कर्तव्या, यावत्या वृद्ध्या नातिपीड्यते। या प्रागासीत्ततो न्यूनेत्यर्थः। यज्वासहायनारदानां तु मते काकिणीमात्रमपि शक्तः करणपरिवृत्तिकाले दापयितव्यः। येन साक्षिणो न श्रवणमात्रे साक्षित्वम्, ददाति तत्समक्षमधमर्णः। अर्थसंबन्धोऽपि प्रत्यक्षीभवति। यतः श्रवणाश्रवणे च कृता भविष्यन्ति, ततश्चित्तं तिष्ठति, धने दशवर्षोपेक्षितमित्यादि व्यनश्चरो भविष्यति (?)। मेधा.

(२) दौर्गत्याद्वृद्धिहिरण्यमप्यदत्त्वा तत्रैव पुनः क्रियमाणे लेख्यादौ तदारोपयेत्। यत्परिमाणं किं(चित्)वृद्धिधनं तदानीं संभवति तद्दातुमर्हति, अवशिष्टं करणमा(? णे आ)रोपयेत्। गोरा.

(३) एतत्स्फोरयति – अदर्शयित्वेति। मूलभूतं हिरण्यं धनिके अदर्शयित्वा अदत्त्वा क्रियां परिवर्त(येत्)तदा च यावती संभवेत्तावता कालेन, वृद्धिं तामेव दातुमर्हति, न तु मूलस्य पुनःस्थापनार्थमधिकं तेन देयमित्यर्थः। मवि.

(४) यदि दैवगत्या वृद्धिहिरण्यमपि समये दातुं न शक्नोति तदा तद्गृहीत्वैव तत्रैव पुनः क्रियमाणे लेख्यादौ वृद्धिहिरण्यादिशेषमारोपयेत्। यत्प्रमाणं चक्रवृद्धिधनं तदानीं संभवति तद्दातुमर्हति। ममु.

(५) उत्तमर्णप्रत्युक्तलभ्याना(? भ्यदाना)समर्थस्य लभ्यं पूर्वपत्रोपरि वर्धयेदित्याह – अदर्शयित्वेति। अदर्शयित्वा आदौ लेख्यमदत्त्वा छेदनादिभयात्, तत्रैव लेख्ये हिरण्यं वृद्धिधनं दत्तावशिष्टं परिवर्तयेत् समारोपयेत्। अत एवाऽऽह – यावतीत्यादि। मच.

(६) वृद्धेर्वृद्धिरिति न वक्तव्यमित्यर्थः। नन्द.

(७) तत्रैव हिरण्यम् अदर्शयित्वा अदत्त्वा परिवर्तयेत्। तत्क्रियामिति शेषः। यावती वृद्धिः संभवेत्तावतीं वृद्धिम् अधमर्णः दातुमर्हति। भाच.

समयपूर्वकचक्रवृद्धौ समयबाधे सा न देया, संदिग्धफलकर्णादाने फलसिद्धावेव वृद्धिर्देया

**'चक्रवृद्धिं समारूढो देशकालव्यवस्थितः।**
**अतिक्रामन्देशकालौ न तत्फलमवाप्नुयात्।।**

(१) 'वाराणसीं यास्यामि, तदीयं पुण्यं (? त्वदीया युग्याः) मे भाण्डं च हेतुः(? ण्डं वहन्तु), एषा च ते वृद्धिः' इति, तत्र यदि कान्तारनदीसंतरणराष्ट्रोपप्लवादिना तं देशं न गतः, ततोऽर्वाग्देशात्कियता लाभेन प्रवृत्त्या व्यावृत्तः, तदा यथानिरूपिता वृद्धिर्न दाप्यते। यतस्तं देशं यावद्वहतां या वृद्धिरप्राप्तानां सा कथं स्यात्? दीर्घमध्वानं वहतां युग्यानां महान्क्लेशः, स्वामिनश्च तावन्तं कालं

(१) **मस्मृ.** ८।१५६; **मवि.** स्थितः (स्थिताम्) इति पाठो व्याख्यानात्प्रतीयते.

कृतैव वृद्धिर्युग्योपकारः। शीघ्रं तु प्रतिनिवृत्तानां स्वामिनः पुनरन्यत्रोपका( ? क)रणं संपद्यत एव। एष एवा( ? देशा)-तिक्रमः। एवं कालातिक्रमः – 'मासं मे वहन्तु बलीवर्दाः, इयती तव वृद्धिः' इति, तत्र यदि पक्षात्प्रत्येति। तत्र चक्रवृद्धिमधमर्णः समारूढः प्रतिपन्नः, अङ्गीकृतवानिति यावत्, तस्यां वृद्धौ देशकालौ व्यवस्थितौ यत्तया ( ? यत्र), पूर्वोक्तेन प्रकारेण देशविशेषं कालविशेषं वा (अङ्गीकृत-वान्), न निर्विशेषणमेव कृतवान्, स एवंविधोऽधमर्णस्तौ देशकालौ अतिक्रामन् न प्राप्नुयात्तत्फलं वृद्ध्याख्यं नाऽऽप्नुयात् न भजेत्, न दद्यादित्यर्थः। मेधा.

(२) भाटकपूर्वकं गन्त्र्यादिदानेन गन्त्र्यादिवृद्धिमाश्रित्य उत्तमर्णो देशकालव्यवस्थितस्य( ? स्थितः उप)गतदेश-कालविशेषः तौ देशकालौ देयादेया( ? दैवादेवा)परिपूरयन् तत्तन्त्रीवहनलाभं न प्राप्नोति। गोरा.

(३) यदि चक्रवृद्धिः कार्या तदा 'मयाऽत्र देशेऽत्र काले शोधनीया' इति यत्र व्यवस्था कृता, सा यदि ततोऽन्यत्रान्यदा च याच( ? च्य)ते तदा चक्रवृद्धिर्न लभ्यते, अपि तु अशीतिभागादिर्धर्म्यैवेत्यर्थः। तत्फलं चक्रवृद्धि-लाभम्। मवि.

(४) चक्रवृद्धिशब्देनात्र चक्रवच्छकटादिभाररूपा वृद्धिरभिमता। चक्रवृद्धिमाश्रित उत्तमर्णो देशकाल-व्यवस्थितः 'यदि वाराणसीपर्यन्तं लवणादि शकटेन वहामि तदा ममेदं यद्धनं ( ? ममेयद्धनं) दातव्यम्' इति वेतनरूप-देशव्यवस्थितिः, 'यदि मासं यावद्वहामि तदा मासं यद्धनं ( ? तदा ममेयद्धनं) दातव्यम्' इति कालव्यवस्थितिः, एवमभ्युपगतदेशकालनियमस्थौ ( ? नियमः तौ) देशकालौ दैवादपूरयन् शकटादिनाऽवहन् लाभरूपफलं सकलं न प्राप्नोति। * ममु.

(५) देशकालव्यवस्थितः अस्मिन् देशे अस्मिन् काले स्थितः सन् चक्रवृद्धिं समारूढः दातुमुद्यतः अधमर्णः देशकालौ अतिक्रामन् तं कालं तं देशम् अतिक्रामन् ग्रहीतुं नाऽऽयाति। मर्यादानन्तरं धनं धनिक आप्नुयात्। भाच.

* मच. ममुगतम्।

**'समुद्रयानकुशला देशकालार्थदर्शिनः।**
**स्थापयन्ति च यां वृद्धिं सा तत्राधिगमं प्रति।।**

(१) किं तत्र नैवास्ति वृद्धिः? अथवा पञ्चकं शतम्? नेत्याह – समुद्रयानकुशला इत्यादि। समुद्रयानग्रहणं यात्रो-पलक्षणार्थम्। स्थलपथिका वारिपथिकाश्च वणिजो यां वृद्धिं स्थापयन्ति सा तत्राधिगमं प्रति निश्चयं प्रति। सैव निश्चेतव्येत्यर्थः। देशकालार्थदर्शिनः 'अस्मिन्प्रदेशे इयानर्थलाभः, अस्मिन्नियान्' इति ये पश्यन्ति जानते, न तु समुद्रयान एव च ये कुशलाः कर्णधारादयः। अन्ये पूर्वश्लोकमेवं व्याचक्षते यदृच्छाध्याहारेण – अधमर्णेन या देश( ? शं)कालं चाऽऽश्रिता तां च (अ)प्राप्य तद्देशोदितं फलं लाभाख्यमन्यस्माद्देशाद्यदि (न ?) आप्नुयात्तदा कीदृशी तत्र वृद्धिरित्याकाङ्क्षायामुत्तरश्लोकः। चक्रवृद्धिग्रहणं कारिताया अपि प्रदर्शनार्थम्। लोभातिशयभाजां वणिजां क्षयव्ययायसंविधिज्ञाः परस्परस्य यां वृद्धिं स्थापयेयुस्तां राजा प्रमाणीकुर्यात् तत्राधिगमं प्रतीति। प्रतिः कर्मप्रवचनी-योऽधिगमस्य लक्षणत्वात् 'लक्षणेत्थंभूताख्याने ( ? न०)' (पासू. १।४।९०) (इति)। तद्युक्ते च द्वितीया। मेधा.

(२) वार्यध्वयानकुशलाः 'अस्मिन् देशे कालेऽस्मिन्नर्थे हिरण्यादिके उह्यमाने अयं लाभः' इत्येवमादिवेदिनो वणिक्प्रभृतयो यां वृद्धिं तथाविधविषये निरूपयन्ति सा तत्र निश्चयार्थं विज्ञेया। गोरा.

(३) दुर्गो देशः कालश्चाल्पोऽर्थस्तल्लभ्यो बहुरिति जानन्तः समुद्रयानकुशलाः, वर्त्मनो दुर्गत्वेन मूलनाशस्यापि संभवात्। यामिति बहुलामपि वृद्धिं कुर्वन्ति, सा अधिगमं प्रति अधिगमं लाभं प्रति ऋणिकेन वणिज्यफले प्राप्ते एव देया, नान्यथा। अत्राधिकवृद्धिग्रहणं समुद्रादौ प्रायिकीं विपत्तिमनुसंधायेत्यतः समुद्रयायिनां दैवाल्लाभाभावे वृद्धेरप्यदानमित्यर्थः। समुद्रेति चैवंविधाकारा( ?)देरप्युप-लक्षणम्। मवि.

(४) स्थलपथजलपथयाने निपुणा 'इयद्देशपर्यन्त-मियत्कालपर्यन्तमुह्यमाने सति एतावाँल्लाभो ग्रहीतुं युक्तः' इत्येवं देशलाभधनज्ञा वणिगादयो यां वृद्धिं तथाविषये

(१) मस्मृ. ८।१५७.

चावस्थापयन्ति सैव तत्र व्यवस्था तत्राधिगमं धनप्राप्तिं प्रति प्रमाणम्। ‡ ममु.

स्तेयापवादः, स्तेनतो याजनादिभिर्धन-
ग्राह्यपि स्तेन एव, शूद्रात्प्रति-
ग्रहानुज्ञा

**[1]वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च।**
**तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्।।**

(१) वनस्पतय एव वानस्पत्यं वृक्षाः। स्वार्थे प्रत्ययः। ग्रासार्थं गृह्यमाणमस्तेयं वंशाङ्कुरादि। मूलफलं वनस्पतीनामन्यत् बिससस्यादि। «सूत्रादिगणेऽग्रासार्थं मूलफलाहरणे दण्ड उक्तः। अस्तेयवचनं ग्रासार्थमात्रार्थम्। अक्षीणवृत्तेरपि कथंचिज्जातलौल्यस्य स्मृत्यन्तरदर्शनाच्चापरिवृतेभ्य दण्डः। तथा च गौतमः – 'पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम्' (गौध. १२।२५) इति। दार्वग्न्यर्थम्। आहिताग्नेरसंनिहिते वनस्पतौ उद्वात्यग्नौ तद्धारणार्थं काष्ठमदोषं पालाशीर्वा समिधो व्या(?ऽभ्या)दध्यात्। अप्रचुरपलाशे च ग्रामे (कथं स्यादित्यादिति?) यदि गृह्णीरन् न दोषः। तृणं च गोभ्यः। तादर्थ्ये चतुर्थी। गोग्रहणात्प्रस्तरार्थं दोष एव। ये तु ग्रासार्थपदेन गवामभिसंबन्धमिच्छन्ति तेषां गोभ्य इति नोपपद्यते। षष्ठी हि तत्र युक्ता। × मेधा.

(२) 'पुष्पाणि फलान्यपरिवृतानाम्' इति गौतमस्मरणादपरिवृतवनस्पत्यादिसंबन्धि मूलफलम्। गवाग्निसाहचर्यं दृष्टार्थं शास्त्रिताग्न्यर्थं च दारु गत्यन्तराभावे (च त्र?)। गोग्रासार्थं तृणम्। परकीयमपि अस्तेयं मनुराह। अतश्चात्र दण्डाद्यभावः। गोरा.

(३) वानस्पत्यं वनस्पतिप्रभवं पत्रादि। अग्न्यर्थम् आहितस्याग्नेः समिन्धनार्थम्। * गृक. ३२१

(४) वानस्पत्यम्, वनस्पतिः वृक्षमात्रम्, तद्भवम्। तेनौषधीमात्रव्यवच्छेदः। एतच्चारण्यगतम् 'अपरिवृतानाम्' इति गौतमस्मरणात्। अपरिवृता अपरिगृहीता अत्रेष्टाः। अग्न्यर्थं वैतानिकाग्न्यर्थम्। एवं च वृक्षास्तृणकाष्ठादीनि च गृहाच्छादनाद्यर्थमरण्यादपि राजाननुमत्या नीतानि स्तैन्यनिमित्तान्येवेत्युक्तम्। मवि.

(५) अग्न्यर्थम् आवश्यकसंवर्धनीयाग्न्यर्थम्।
+ गृर. ५१९

(६) उपसंहारस्य फलवादेन राज्ञो महत्कार्यं दण्डमित्यत्र सूचितस्य प्रतिप्रसवमाह – वानस्पत्यमिति। वानस्पत्यं वनस्पत्युद्भवम्, 'ग्राम्येच्छया गोप्रचारो भूमी राजवशेन वा। द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत्।।' (यास्मृ. २।१६६) इति याज्ञवल्क्योक्तेः। गोप्रचारः गोचरणार्था भूमिः। स्ववत् आत्मीयवत्। तथा गौतमोऽपि– 'वीरुद्वनस्पतीनां च पुष्पाणि स्ववदादीत फलानि चानृ(? चापरि)तानाम्' इति। मच.

(७) यत्तु भारते लिखितम् 'अपृष्ट्वा फलं गृह्णतो हस्तकर्तनम्' तत्प्रकारान्तरेण निर्वाहे सति तथा न कार्यमित्येतदर्थमित्यवधेयम्। विपा. ३।२।२५२

(८) वनस्पतयः वृक्षवल्ल्यादयः। तत्र भवः वानस्पत्यः। मूलफलादिरहित इति शेषः(?)। अग्न्यर्थम्। गोभ्यः गवाम्। नन्द.

**[1]योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्।**
**याजनाध्यापनेनापि यथा स्तेनस्तथैव सः।।**

(१) अतिदेशोऽयम्। यो ब्राह्मणश्चौरानुपजीवति स चौरवद्दण्ड्यः। याजनाध्यापनेनापि। अपिः क्रियान्तरसूचकः। तेन प्रतिग्रहप्रीत्यादायादि गृह्यते। क्षत्रियादीनामन्यथैव वृत्तिः वार्तादिस्वकर्मणा चोरधनं गृह्णताम्। ब्राह्मणग्रहणं तु 'मया किल धर्मेणार्जितं याजयता' इत्यभिमाननिवृत्त्यर्थम्। अदत्तमादत्ते गृह्णातीत्यदत्तादायी चोरः। लिप्सेत लब्धुमिच्छेत्। अगृहीतास्वपि दक्षिणासु तत्संबन्धादेव चौरनिग्रहः। मेधा.

---

‡ मच. ममुगतम्।
« मस्मृ. ८।३२६-३३१ श्लोकेषु।
× ममु. मेधागतम्।
* मपा., मर. गृकगतम्।
(१) **मस्मृ.** ८।३३९; **गृक.** ३२१ ग्न्यर्थं (ग्न्यर्थे) ग्रासा (घासा); **स्मृच.** २।४६७; **गृर.** ५१९ च गोभ्यो (गोभ्यश्च); **मपा.** २३४; **मर.** १८९; **मुक्ता.** ५८ मूलफलं (फलं मूलं) तथैव (तृणानि) ग्रासा (गृह्या); **विपा.** ३।२।२५२ मूलफलं (फलं मूलं); **नन्द.** स्पत्यं (स्पत्यो).

+ शेषं गृकवत्।
(१) **मस्मृ.** ८।३४०; **आन.** ५५७ (अदत्तादायिनो हस्ताद्धनं लिप्सेत कर्हिचित्। याजनाध्यापनाद्यौनाद्यथा स्तेनस्तथैव सः।।) याज्ञवल्क्यः.

(२) अदत्तग्राहिणश्चौरस्य ब्राह्मणो याजनाध्यापनप्रतिग्रहैरपि परकीयं धनमण्वपि गृह्णाति सोऽपि चौरो विज्ञेयः। अतश्चासौ चौरवद्दण्ड्यः। # गोरा.

(३) याजनाद्युपायैरपि चोराद्धनमिच्छन् स्तेनो भवतीत्याह – य इति। अदत्तमादातुं शीलं यस्य सोऽदत्तादायी। तस्य यज्ञाद्यर्थधनस्वत्वानुत्पत्तेरिति भावः। मच.

(४) अदत्तादायीति स्तेनसाहसिकयोर्ग्रहणम्। * नन्द.

**[१]द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके।**
**आददानः परक्षेत्रान्न दण्डं दातुमर्हति।।**

(१) द्विजग्रहणं शूद्रप्रतिषेधार्थम्। अध्वगः नैकग्रामवासी। तत्रापि क्षीणवृत्तिः क्षीणपथ्यौदनः। द्वाविक्षू दण्डौ। मूलके। प्रदर्शनार्थं चैतत् परिमितहरीतकमुद्गादिशमीधान्यानाम्। तथा च 'शमीत्रपुसयुग्यघासेषु च ना(? न) प्रतिषेधः' इति स्मृत्यन्तरम्। परक्षेत्रात् परकीयस्थानादित्यर्थः, परिवृतादपि। $ मेधा.

(२) आददानः अनुक्त्वा(? क्त्वा)ऽपि। मवि.

(३) इक्षुमूलयोर्ग्रहणं प्राणधारणार्थानां फलादीनामप्युपलक्षणार्थम्। नन्द.

**[२]विस्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत्।**
**न हि तस्यास्ति किंचित्स्वं भर्तृहार्यधनो हि सः।।**

(१) अत्र कश्चिदाह – धर्मोपगतशूद्रविषयमिदम्। तदयुक्तम्, विशेषे प्रमाणाभावात्। तस्मात्सर्वस्य दासः शूद्रः, तस्यैव प्रतिग्राह्य(धन)त्वमुच्यते। विस्रब्धं निःशङ्कम्। शूद्रधनं कथं प्रतिगृह्णीयात्? प्रतिषिद्धं हि तदित्येषा शङ्का न कर्तव्या। यतो न तस्य किंचित् (स्वम्) अर्थः। यस्य निचयः स्यादित्युक्तं भवति (?स्यात्। अतो युक्तं भवति)। स्वामी न (? स्वामिना) ह्रियते धनस्य (? धनमस्य।) एतदेवार्जने तस्य प्रयोजनं स्वामी (? मिना) ही(? ह्रि)यते। अतो विश्रब्धं द्रव्योपादानं द्रव्यग्रहणं कुर्यात् तेनोपनीयमानमपि स्वगृहस्थमिव विनियुञ्जीत सति प्रयोजने। एतद्यु(? एतदु)क्तं भवति – अविद्यमानधनस्य दासाच्छूद्रात्प्रतिगृह्णतो न दोषः। + मेधा.

(२) .... विस्रब्धं कृतविश्वासं यथा स्यात्तथा शूद्रात्सप्तविधदासात् द्रव्योपादानं द्रव्यादानं (तम्?) आचरेत्। तत्र हेतुः भर्तृहार्य(? र्त्राहार्य)धनो हि स इति। भर्त्रर्थमेवाऽऽहार्यम्, 'जीवेत्कारुककर्मभिः' (मस्मृ. १०।९९) इत्यादिनोक्तं धनं यस्य स इत्यर्थः। मच.

(३) ब्राह्मणः त्रैवर्णिकः। * नन्द.

क्षत्रपूज्यत्वेन ब्राह्मणप्रशंसा,
क्षत्रब्राह्मणसंयोगप्रशंसा

**[१]परामप्यापदं प्राप्तो ब्राह्मणान्न प्रकोपयेत्।**
**ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम्।।**

(१) यः क्षीणकोशो बलीयसा च राज्ञा दण्ड्यते, तथाऽपि न ब्राह्मणधनमप्यापदि ग्रहीतव्यम्। न चावज्ञानादिना प्रकोपनीयाः। मेधा.

(२) न प्रकोपयेदर्थग्रहणादिना। मवि.

(३) कोशक्षयादिना प्रकृष्टामप्यापदं प्राप्तो राजा ब्राह्मणान्न प्रकोपयेत् यस्मात्ते रुष्टाः सबलवाहनमेनं शापाभिचाराभ्यां हन्युः। ममु.

(४) एवंविधस्यापि नृपतेर्ब्राह्मणाधीनत्वं वक्तुं ब्राह्मणस्य निग्रहानुग्रहसामर्थ्यमाह – परामित्यादिना। मच.

(५) हि निश्चयेन। ते ब्राह्मणाः। एनं राजानम्। भाच.

**[२]यैः कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः।**
**क्षयी चाऽऽप्यायितः सोमः को न नश्येत्प्रकोप्य तान्।।**

(१) प्रागुक्तार्थसिद्धये ब्राह्मणमाहात्म्यमितिहासं लोकप्रसिद्धमनुवदति। एष्वर्थेष्वाख्यानानि महाभारतादवगमयित(? दवगन्त)व्यानि। मेधा.

# मवि., ममु., भाच. गोरागतम्।
* शेषं गोरागतम्।
$ गोरा., ममु., मच., भाच. मेधागतम्।

(१) **मस्मृ.** ८।३४१; **मपा.** २३४; **निप्र.** २।४२२ (पथिकः क्षीणवृत्तिस्तु द्वाविक्षू देवमूलकौ। आददानः परक्षेत्रान्न दोषं मनुरब्रवीत्।।) मनुयमौ; **गप.** ३९२ द्वितीयचरणमात्रम्; **मुक्ता.** ५९ दण्डं दातु (हस्तच्छेद); **संम.** ७८.

(२) **मस्मृ.** ८।४१७; **नन्द.** विस्रब्धं (विस्रब्धः).

+ गोरा., मवि., ममु., भाच. मेधागतम्।
* शेषं मेधागतम्।

(१) **मस्मृ.** ९।३१३; **मुक्ता.** ६५.

(२) **मस्मृ.** ९।३१४; **मवि.** भक्षो (भक्ष्यो); **ममु.** मविवत्.

(२) सर्वभक्ष्योऽग्निर्भृगुणा कृतः। वडवामुखो नार्मर्षिः, तेन मेरौ तपः कुर्वता समुद्र आहूतो नाऽऽगतः, तेन क्रोधादात्मगात्रोष्मणा समुद्रः स्तिमितजलः कृतः प्रस्वेदप्रस्यन्दसदृशश्चास्य लवणभावो जनितः, उक्तञ्च 'अपेयो भविष्यसि' इति भारते मोक्षधर्मेषूक्तम्। क्षयी(? यिणं) कृत्वा पश्चादाप्यायनेनोपायकथनेनाऽऽप्यायितश्चन्द्रो दक्षेण। * मवि.

**[1]लोकानन्यान्सृजेयुर्ये लोकपालांश्च कोपिताः।**
**देवान्कुर्युरदेवांश्च कः क्षिण्वंस्तान्समृध्नुयात्।।**

(१) क्षिणोति छादयति तदविशेषात्स्मृतीनां क्षिण्वन्हि संक्षेपोऽप्युत्तमानामेवेति युधिष्ठिरेण गाण्डीवे विक्षिप्ते व्यासमुनिना दर्शितम्(?)। मेधा.

(२) लोकनन्यानिति विश्वामित्रचरितम्। लोकपालानिति इन्द्रान्तरसृष्ट्याद्युद्यमेन गरुडं सृजतां वालखिल्यानां चरितम्। देवानदेवानिति वाय्वादीनां वृत्तम्। क्षिण्वन् दुःखजननादेव। मवि.

(३) ये स्वर्गादिलोकान्परानन्यांश्च लोकपालान्सृजन्तीति संभाव्यते, देवांश्च शापेन मानुषादीन्कुर्वन्ति, तान्पीडयन्कः समृद्धिं प्राप्नुयात्। § ममु.

(४) सृजेयुः विश्वामित्रादयः। एवं देवानित्यपि माण्डव्यशापेन यमोऽपि विदुरतां गतः। क्षिण्वन् पीडयन्। समृध्नुयात् समृद्धिं गच्छेत्। मच.

**[2]यानुपाश्रित्य तिष्ठन्ति लोका देवाश्च सर्वदा।**
**ब्रह्म चैव धनं येषां को हिंस्यात्ताञ्जिजीविषुः।।**

(१) लोकाः त्रयः पृथिव्यादयः। देवा आहुतिद्वारेण ब्राह्मणोपाश्रिताः। अध्यापनाधिक्येन कर्मबहुत्वेन ब्राह्मणो देवानामाश्रयः, न तथा क्षत्रियवैश्यौ। मेधा.

(२) यान्समाश्रित्य यत्साध्यान्यज्ञानाश्रित्य। ब्रह्म वेदः। † मवि.

(३) अपि च, यानित्यादि। यान् ब्राह्मणान्यजनयाजनकर्तृकान्+ आश्रित्य 'अग्नौ प्रास्ताहुतिः' इति न्यायेन पृथिव्यादिलोका देवाश्च स्थितिं लभन्ते, वेद एव च येषां धनम्, अभ्युदयसाधनतया याजनाध्यापनादिना धनोपायत्वाच्च, ताञ्जीवितुमिच्छन्को हिंस्यात्? ‡ ममु.

**[1]अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।**
**प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत्।।**

(१) जातिमात्राश्रयाणामनवज्ञानम्, न विद्वत्तामपेक्षेत दानादिक्रियास्विव। यथा च 'एतन्न(? एतं न) पादतः कुर्यात्' इत्यग्नौ। मेधा.

(२) अविद्वानपि, न तु विद्वानेव। प्रणीतोऽग्निः होमार्थमुद्धृतः। मवि.

(३) यथाऽऽहितोऽनाहितो वाऽग्निर्महती देवता एवं मूर्खो विद्वांश्च प्रकृष्टा देवतेति। # ममु.

**[2]श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति।**
**हूयमानश्च यज्ञेषु भूय एवाभिवर्धते।।**

(१) गतार्थोऽयम्। दुराचारोऽप्यनवज्ञेय इत्यर्थः। मेधा.

(२) श्मशानेष्वपि न दुष्यति न पापे युज्यते, यतः तज्जातीय(? यः)यज्ञे हूयमानो वर्धते। न ह्यग्निस्ततोऽन्यस्ततोऽन्यत्र, एकत्वाद्देवतायाः। मवि.

(३) यथाऽग्निर्महातेजाः श्मशाने शवं दहन् कार्येऽपि (? शवदहनकार्येऽपि) नैव दुष्टो भवति, किंतु पुनरपि यज्ञेषु हूयमानोऽभिवर्धते। § ममु.

(४) नैव दुष्यति, 'क्रव्यादमग्निम्' इत्यादिमन्त्रलिङ्गकाद् (? द)दृष्टदोषेऽपि दृष्टदोषाभावात्। न हि तदग्निर्दाहप्रकाशहीनः। हूयमानः होमेन संस्क्रियमाणः अदृष्टदोषं परिहृत्य फलजनकतया वर्धत इति भावः। मच.

**[3]एवं यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु।**
**सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत्।।**

---

* ममु., मच., भाच. मविगतम्।
§ नन्द., भाच. ममुगतम्।
† नन्द. मविगतम्।
\+ स्वार्थे कन्।
(१) मस्मृ. ९।३१५.
(२) मस्मृ. ९।३१६; मुक्ता. ६५ यानुपा (यान्समा).

‡ भाच. ममुगतम्।
\# मच., नन्द., भाच. ममुगतम्।
§ भाच. ममुगतम्।
(१) मस्मृ. ९।३१७; मुक्ता. ६५.
(२) मस्मृ. ९।३१८.
(३) मस्मृ. ९।३१९; मुक्ता. ६५ वर्तन्ते (वर्तते) णाः पूज्याः (णः पूज्यः) तत् (सः).

(१) अनिष्टेषु प्रतिषिद्धेषु वर्तमाना मृदूपक्रमैर्यथाशास्त्रं दण्ड्याः, न सहसाऽऽक्रम्य वर्णान्तरवत्। मेधा.

(२) अनिष्टेषु लोकविद्विष्टेषु। मवि.

(३) एवं कुत्सितकर्मस्वपि सर्वेषु यद्यपि ब्राह्मणाः प्रवर्तन्ते तथाऽपि सर्वप्रकारेण पूज्याः। यस्मात् प्रकृष्टं तद्दैवतम्। स्तुत्यर्थत्वाच्चास्य न यथाश्रुतार्थविरोधः शङ्कनीयः। + ममु.

(४) अनिष्टेषु कुत्सितकर्मसु। देववृन्दादपि परमं दृष्टशापानुग्रहहेतुत्वात्। (पूज्याः) धनमानादिना। मच.

**'क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान्प्रति सर्वशः।**
**ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम्।।**

(१) क्षत्रियस्य ब्राह्मणान् प्रतिबाधितुं प्रवृत्तस्य ब्राह्मणा एव संनियन्तारः। श्रीमदावलिप्ता व्यवस्थाभङ्गेन वर्तमानाः क्षत्रियाः जपहोमादिशापादिना ब्राह्मणैर्मार्गे व्यवस्थाप्यन्ते। अत्र हेतुः – क्षत्रं ब्रह्मसंभवं ब्राह्मणजातेः सकाशात्क्षत्रियाणां संभवः। अत्रार्थवाद एवायम्। $ मेधा.

(२) क्षत्रस्येति। क्षत्रियस्य ब्राह्मणान् प्रति सर्वथा पीडानुवृत्तस्य ब्राह्मणा एव शापाभिचारादिना सम्यङ्नियन्तारः। यस्मात्क्षत्रियो ब्राह्मणात्संभूतः, ब्राह्मणबाहुप्रसूतत्वात्। * ममु.

(३) ब्राह्मणान्प्रति अतिवृद्धस्य क्षत्रियस्यापि ब्रह्मैव नियन्तृ इत्यन्वयः। तत्र हेतुः – ब्रह्म ब्राह्मणत्वजात्यवच्छिन्नो जीवः, ततः संभवम्, 'सैषा क्षत्रस्य योनिर्यद्ब्रह्म' इति श्रुतेः, तदुत्तरभावित्वाद्वा क्षत्रियस्य। मच.

**अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।**
**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति।।**

(१) अद्भ्य ओषधिवनस्पतिभ्य एव जायत इत्येवमग्निरद्भ्य एव उत्पन्नः। तस्य सर्वगं तेजः सर्वदाह्यं दहति। तेजसाऽभिभवति। अपः प्राप्य तदस्य तेजः शाम्यति। अश्मनो लोहं खड्गादि। तेन सर्वं विदार्यते, अश्मसंपातात्स्फुटति। एवं क्षत्रियाः सर्वत्र जिगीषवो विजयन्ते, ब्राह्मणेषु चेदौद्धत्येन वर्तन्ते तदा विनश्यन्ति। « मेधा.

(२) अद्भ्योऽग्निरप्पर्यन्तत्वात्। ब्रह्मतः क्षत्रम्, क्षत्रक्षयानन्तरं ब्राह्मणैः सह संभूय क्षत्रियाभिः पुत्राणां जननात्। अश्मन आकरस्थपाषाणकणेभ्यः। शाम्यति भाः(? ताः) प्राप्य संघर्षणे नश्यति। मवि.

(३) अत एवाऽऽह – अद्भ्य इति। अयमर्थः – अग्न्यर्थमिन्धनं हि मथ्यमानं रसक्षयेऽग्निमभिव्यनक्ति। 'अथार्णवस्य क्षुब्धस्य तस्मिन्नम्भसि मन्थिते। कृष्णवर्त्मा समभवद्विभुर्वैश्वानरोऽविमान्।।' इत्यब्जोऽग्निः पौष्करे श्रुतः। विद्युद्भवाग्नेः प्रत्यक्षजलजत्वम्। पाषाणः लोहबीजगर्भः ध्मायमानो लोहं व्यनक्ति, तत्रासत्त्वे न ततः स्यात्। अतोऽभिव्यक्त्यपेक्षयाऽश्मजत्वम्। क्षत्रिये त्वानन्तर्यापेक्षया, 'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः' इति श्रुतेश्च। × मच.

(४) एतदेवोपपादयति – अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमिति। अद्भ्योऽग्निरिति च पौराणिकाः। ब्रह्मतः ब्राह्मणतः। ब्राह्मणा हि दक्षमरीच्यादयः स्रष्टारः। अग्निलोहयोरुपन्यासो दृष्टान्तार्थः। × नन्द.

**नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते।**
**ब्रह्म क्षत्रं च संपृक्तमिह चामुत्र वर्धते।।**

(१) यत् क्षत्रं यद्ब्राह्मणरहितं राज्यम्, मन्त्रिपुरोहितादयो यत्र न ब्राह्मणास्तत्र कुतः समृद्धिः? एवं ब्राह्मणा अपि राजो(? जानु)पाश्रिताः कुतः संपत्तिं लभन्ते? उभौ युक्तौ जगज्जयतः। ब्रह्मक्षत्रशब्दौ ब्राह्मणक्षत्रियजातिवचनौ। ¶ मेधा.

(२) ब्राह्मणरहितक्षत्रियो वृद्धिं न याति, शान्तिकपौष्टिकव्यवहारेक्षणादिधर्मविरहात्। एवं क्षत्रियरहितोऽपि ब्राह्मणो न वर्धते, रक्षां विना यागादिकर्मानिष्पत्तेः। किंतु ब्राह्मणः क्षत्रियश्च परस्परसंबद्ध एवेह लोके परलोके च धर्मार्थकाममोक्षावाप्त्या वृद्धिमेति। दण्डप्रकरणे चेयं ब्राह्मणस्तुतिर्ब्राह्मणानामपराधिनामपि लघुदण्डप्रयोगनियमार्था। ममु.

---

+ नन्द., भाच. ममुगतम्।
$ मवि. मेधागतम्।
* नन्द., भाच. ममुगतम्।
(१) मस्मृ. ९।३२०-३२२.

« ममु. मेधावत्, भाच. मेधागतम्।
× शेषं मेधागतम्।
¶ मवि., मच., भाच. मेधागतम्।

कृषिवाणिज्यपशुपालनानि वैश्यवृत्तयः,
तदुपकारकज्ञानमर्जनीयम्,
विप्रशुश्रूषा शूद्रवृत्तिः

**¹वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम्।**
**वार्तायां नित्ययुक्तः स्यात्पशूनां चैव रक्षणे।।**

(१) कृतसंस्कारः उपनीतः कृतविवाहश्च। वार्तायां वक्ष्यमाणकाल(? कार्य)समुदायो वार्ता। तत्र नित्ययुक्तः स्यात्। यथा बार्हस्पत्ये वार्ता समुपदिष्टा। मेधा.

(२) वार्तायां कृषौ। मवि.

(३) वैश्यः कृतोपनयनपर्यन्तसंस्कारो विवाहादिकं कृत्वा जीविकायां वक्ष्यमाणायां कृष्यादिकार्यार्थं पशुपालने च सदा समायुक्तः स्यात्। पशुरक्षणस्य वार्तात्वेऽपि प्राधान्यख्यापनार्थं पृथग्विधानम्। तथा चोत्तरश्लोकाभ्यां प्राधान्यं दर्शयति। $ ममु.

(४) कृषिवाणिज्यगोरक्षा वार्ताशब्देनोच्यन्ते। पमा. १।४१७

(५) वार्ता कृषिवाणिज्यरूपा। मर. १९३

(६) तत्राऽऽदौ वैश्यवृत्तीराह – वैश्यस्त्विति। मच.

(७) वार्तायां कृषौ। कृषिगोरक्षवाणिज्यानि वार्तापदेनोच्यन्ते इति केचित्। बाल. १।११९ पृ. ३६७

(८) संस्कारा जातकर्मादयो गोदानव्रतान्ताः। वार्तायां कृषिगोरक्षवाणिज्यवार्धुष्येषु। नन्द.

**²प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून्।**
**ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः।।**

(१) पशुरक्षणं वैश्यस्य न केवलं जीविकायै, यावद्धर्मायापीति दर्शयत्यर्थवादेन। कथं पुनर्दृष्टे सत्यदृष्टमुक्तम्? प्रजापालनवत् 'नियमात्परिपालनीयं(? याः) त्वया' इति नियोगय(? गः प)रिदानम्। क्षत्रियस्य प्रजापालनेऽधिकारो निरूपितः। ब्राह्मणस्य प्रायश्चित्तोपदेशादिना जपहोमादिना च 'आदित्याज्जायते वृष्टिः' (मस्मृ. ३।७६) इति सर्वाधिकारः। दृष्टान्तार्थं चैतत्। तथैव धर्म एव वैश्यस्य पशुरक्षणादिः। मेधा.

(२) परिददौ रक्षणाय ददौ। ब्राह्मणाय पारलौकिकसिद्ध्यर्थम्। मवि.

(३) प्रजापतिरिति। यस्माद्ब्रह्मा पशून्सृष्ट्वा रक्षणार्थं वैश्याय दत्तवानतो वैश्येन रक्षणीयाः पशव इति पूर्वानुवादः। प्रजाश्च सर्वाः सृष्ट्वा ब्राह्मणाय राज्ञे च रक्षणार्थं दत्तवानिति प्रसङ्गादेतदुक्तम्। ममु.

(४) पशुरक्षणे हेतुः – प्रजापतिरिति। ब्राह्मणायेत्यादि नियतरक्षणे दृष्टान्तार्थम्, ब्राह्मणक्षत्रिययोर्धर्मस्योक्तत्वात्। मच.

(५) परिदानं निक्षेपः। ‡ नन्द.

(६) राज्ञे क्षत्रियाय सर्वाः प्रजा रक्षार्थे परिददे। ‡ भाच.

**¹न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति।**
**वैश्ये चेच्छति नान्येन रक्षितव्याः कथंचन।।**

(१) ननु को(ऽ)जीवितार्थं कामः? यदुक्तं (यद्यपि?) अदृष्टं तदा (? तदपि) दृष्टाश्रितमेव भोजने प्राङ्मुखतायामे(? मि)व। तत्र कथंचिदि(? थमि)दमुच्यते 'न च वैश्यस्य कामः स्यात्' इति? न ह्यबुभुक्षमाणः प्रत्यवैति। सत्यमेवम्, कृष्टाविकृष्टं (? कृष्याद्युत्कृष्टं) पाशुपाल्यमिति ज्ञापयितुम्। कश्चिन्मन्यते सर्वाण्येतानि नियमार्थानि तुल्यफलानीति। तत्र तुल्यफलत्वे च पक्षेऽकामोऽपि स्यात् कर्मान्तरं कामयमानस्य। यदा त्वन्येभ्यो गुणवत्तरः तदा तु तेनाऽऽजीवेत्, न कर्मान्तरे प्रवृत्तिः। अत एव तदालम्बनो जीवेत्। मेधा.

(२) कामः स्यात् ईदृगुद्यमः स्यात्। वैश्ये चेच्छति उद्यमं कुर्वति नान्येन वर्णेन रक्ष्याः। तदभावे न शूद्रेण रक्ष्या इत्यर्थः। मवि.

(३) 'पशुरक्षणं न करोमि' इति वैश्येनेच्छा न कार्या। अतः कृष्यादिवृत्तिसंभवेऽपि वैश्येन पशुरक्षणमवश्यं

---

$ भाच. ममुगतम्।

(१) मस्मृ. ९।३२६; गृक. २५५; पमा. १।४१७; मपा. २२७ कृत्वा दा (कृतदा) ग्रहम् (ग्रहः); मर. १९२ वैश्यस्तु (वैश्यश्च); मुक्ता. ६६; बाल. १।११९ पृ. ३६७.

(२) मस्मृ. ९।३२७; गृक. २५५; मवि. ददे (ददौ); पमा. १।४१७ पू.; मर. १९२ पू.; बाल. १।११९ पृ. ३६७.

‡ शेषं मेधागतम्।

(१) मस्मृ. ९।३२८; गृक. २५६; पमा. १।४१७; मर. १९२ तव्याः (तव्यं) ग्रन्थस्त्रुटितः; बाल. १।११९ पृ. ३६७.

करणीयम्। वैश्ये च पशुरक्षणं कुर्वत्यन्यः पशुरक्षणं न कारयितव्यः। ममु.

(४) वैश्यस्य आवश्यकत्वमनुवदन् अनापद्धर्ममाह– न चेति। मच.

**'मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च।**
**गन्धानां च रसानां च विद्यादर्घबलाबलम्।।**

(१) लोहशब्देन ताम्रायस्कांस्यान्याह। अर्घबलाबलम् (न्यूनता ?) अर्घस्य न्यूनताधिक्ये देशकालापेक्षे – 'कस्मिन्देश इदं महार्घम्, कस्मिन्वाऽपचितार्घम्?'। एवं कालोऽपि। ¤ मेधा.

(२) मणिः अश्ममणिर्माणिक्यादिः। लोहानां हिरण्यादीनाम्। तान्तवस्य कौशेयादेः। अर्घबलाबलं मूल्योत्कर्षापकर्षौ। + मवि.

(३) किंच – मणीति। मणिमुक्ताविद्रुमलोहवस्त्राणां गन्धानां कर्पूरादीनां रसानां लवणादीनाम् उत्तममध्यमानां देशकालापेक्षया मूल्योत्कर्षापकर्षं वैश्यो जानीयात्। ¶ ममु.

(४) लोहानां धातूनाम्। मपा. २२७

(५) न केवलं पशुसंरक्षणमेव वैश्यस्य, अन्यदपीत्याह – मणीति। मणिमुक्तादीनाम्, लोहानां सुवर्णरजतादीनाम्, तान्तवस्य वस्त्रादेः, गन्धानां चन्दनकुङ्कुमादीनाम्, रसानां तैलादीनाम् अर्घबलाबलं देशकालाद्यपेक्ष्य न्यूनाधिकमूल्यम्। मच.

**'बीजानामुप्तिविच्च स्यात् क्षेत्रदोषगुणस्य च।**
**मानयोगांश्च जानीयात्तुलायोगांश्च सर्वशः।।**

(१) 'इदं बीजं विस्तृतमुप्यते, इदं संहतमुप्यते' इत्येनामुप्तिं विद्यात्। 'इदं बीजमस्मिन् क्षेत्रे प्ररोहति, इदं न, इदं च बलवत्फलति' एवमादयो गुणदोषाः। द्रोणशूर्पाढकादयो मानविशेषाः, तेषां योगाः ये हस्तेन मीयन्ते। * मेधा.

(२) बीजानामुप्तिवित् सम्यक् सस्योत्पत्त्यनुकूलघनविरलबीजवपनवेत्ता, स्वक्षेत्र( ? वेत्ता स्यात्। क्षेत्र)बीजगुणस्य। वेत्ता स्यादिति शेषः। मानयोगाः मानप्रकाराः। तुलायोगाः तुलाधरणप्रकाराः। § गृक. २५६

(३) उप्तिविच्च स्यात् वापनकलादिवित्स्यात्। क्षेत्रदोषगुणस्य वेदिता। मानयोगान् द्रोणादीन्। तुलायोगान् पलादीनि। योगपदेन यत्र यादृशमासनं बन्धस्तद्विद्यादित्युक्तम्। मवि.

(४) तथा 'इदमूषरम्, इदं सस्यप्रदम्' इत्यादिक्षेत्रदोषगुणज्ञश्च स्यात्। # ममु.

(५) क्षेत्रबीजगुणस्येत्यत्र उप्तिविदित्यतो विदित्यपकृष्यते। + मर. १९३

(६) अन्यदपि तत्कृत्यमाह बीजानामिति चतुर्भिः। उप्तिवित् वपनकालवित् इदं बीजमिदानीं प्ररोहति नेदमिदानीमिति ऊषरानूषरादिक्षेत्रदोषगुणयोर्ज्ञातेति शेषः। मानयोगांश्च प्रस्थद्रोणाढकादीनि मानानि यैः परिमाणप्रकारैर्युज्यन्ते संभवन्ति तान्मानोपायान्। तदुक्तं सप्तमेऽष्टमुष्टिरित्यादि। तुलायोगान् त्रसरेण्वादिपलान्तान्। मच.

(७) क्षेत्रबीजगुणस्य। वेत्ता स्यादिति विपरिणामः। नन्द.

**'सारासारं च भाण्डानां देशानां च गुणागुणान्।**
**लाभालाभं च पण्यानां पशूनां परिवर्धनम्।।**

(१) भाण्डशब्देन विक्रेयवस्त्राजिनान्युच्यन्ते। तत्र सारासारता यत्कालान्तरे स्थितं च न नश्यति तत् सारम्,

---

¤ गृक. मेधागतम्।

+ मर., बाल. मविगतम्।

¶ भाच. ममुगतम्।

(१) **मस्मृ.** ९।३२९; **गृक.** २५६ लोहा (लौहा); **पमा.** १।४१७ गृकवत्; **मपा.** २२७ दर्घ (दर्थ); **मर.** १९२; **मुक्ता.** ६६; **बाल.** १।११९ पृ. ३६७.

(२) **मस्मृ.** ९।३३०; **मेधा.** दोष (बीज); **गृक.** २५६ मेधावत्; **पमा.** १।४१७ सर्वशः (सर्वतः); **मपा.** २२७ प्रथमचरणे (बीजोप्तिविधियुक्तः स्यात्) शेषं मेधावत्; **मर.** १९२ दोष (बीज) मानयोगांश्च जा (मानयोगान्विजा); **मुक्ता.** ६६ सर्वशः (सर्वतः) शेषं मेधावत्; **नन्द.** मेधावत्; **बाल.** १।११९ पृ. ३६७ मरवत्.

* पमा., भाच. मेधागतम्।

§ बाल. गृकगतं मविगतं च।

# शेषं मेधागतम्।

+ शेषं मविगतम्।

(१) **मस्मृ.** ९।३३१; **गृक.** २५६ गुणान्(गुणम्) परिव(च विव); **मवि.** गुणान् (गुणम्); **पमा.** १।४१७ गृकवत्; **मपा.** २२७ गुणान् (गुणम्) परिवर्ध (वृद्धिरर्ज); **मर.** १९२ गृकवत्; **मच.** गृकवत्; **मुक्ता.** ६६ गृकवत्; **बाल.** १।११९ पृ. ३६७ गृकवत्.

तदितरदसारम्। अस्मिन् देशे व्रीहयो भूयांसः, अस्मिन् काले(? देशे) यवाः, अस्मिन्नीदृश आचारः, ईदृशो जानपदानां स्वभाव एवमादयो देशे गुणागुणाः। अनेन च यवसेनेदृशेन च लवणेनास्मिन्काले प्रयुक्तेन पशवो वर्धन्त इति। $ मेधा.

(२) भाण्डानां विक्रयद्रव्याणाम्। देशानां देशान्तराणाम्। गुणागुणं लाभालाभहेतुत्वम्। लाभालाभं कालान्तरेण। मवि.

(३) इदमुत्कृष्टमेतदपकृष्टमित्येकजातीनामपि द्रव्याणां विशेषं जानीयात्। तथा देशानां प्राक्पश्चिमादीनां क्व किमल्पमूल्यं किं बहुमूल्यं चेत्यादिदेशगुणदोषौ बुध्येत। विक्रेयद्रव्याणां चेयता कालेन इयानपचय उपचयो वेति विद्यात्। तथाऽस्मिन्देशे कालेऽनेन च तृणोदकयवादिना पशवो वर्धन्तेऽनेन क्षीयन्त इत्येतदपि जानीयात्। ममु.

(४) सारेति पक्वनिबिडादितारतम्येन स्थायित्वास्थायित्वे भाण्डानां मृन्मयादीनामेकजातीयानामपि। गुणागुणं लवणादिरसोत्पत्तिनिम्नोन्नतादिस(? म)त्त्वेन गौडादिदेशानाम्। पशूनां विवर्धनं वटकण्टकमाषतृणादिभक्षणीयद्रव्यम्। मच.

(५) भाण्डानां द्रव्याणाम्। देशानां क्षेत्रादीनाम्। नन्द.

**[1]भृत्यानां च भृतिं विद्याद्भाषाश्च विविधा नृणाम्।**
**द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ॥**

(१) भृत्याः दासाः प्रेष्यादयः गोपालाजपालमहामात्राद्याः। तेषां च कियती भृतिरिति विद्यात्। मालवकमगधद्रविडादिदेशभाषाः एतद्देशा अस्मिन्नर्थ ईदृशमुच्चारयन्ति। इदं द्रव्यमेवं स्थाप्यत एवं संवर्तते, एवमाव्रियते, अनेन योज्यते, इयता विक्रीयते। मेधा.

(२) भृत्याः कर्मकराः। भृतिः कर्मानुरूपं वेतनम्। स्थानयोगान् तद्रूपावस्थानोपायान्। ¤ गृक. २५६

(३) भृत्यानां भृतिम् एतया भृत्या एतत्कर्म मासं कार्यमिति। भाषाः दाक्षिणात्यादिभाषाभेदान्। द्रव्याणां स्थानयोगान् अत्रैतदुत्पद्यत इति। क्रयविक्रयम् अत्रास्य क्रयविक्रयाविति। मवि.

(४) गोपालमहिषपालानां भृतिम् इदमस्य देयमिति देशकालकर्मानुरूपं वेतनं जानीयात्। गौडदाक्षिणात्यादीनां च मनुष्याणां नानाप्रकारा भाषा विक्रयाद्यर्थं विद्यात्। तथा इदं द्रव्यमेवं स्थाप्यते, अनेन च संयुक्तं चिरं तिष्ठतीति बुध्येत, तथेदं द्रव्यमस्मिन् देशे काले चेयता विक्रीयत इत्येतदपि जानीयात्। § ममु.

(५) भृत्यानां कर्म कुर्वताम्। भाषाश्च क्रयविक्रयार्थं लडपा(? लेपा)भ्यङ्गतैलादिरूपाः। नृणाम् उत्कलादिस्थानाम्। नृणामिति विशेषणाद्वेदस्मृत्यादावन्येषामप्यधिकार इति। स्थानयोगांश्च पूगलवङ्गादीनां स्थापनोचितार्द्ररूक्षादीनि स्थानानि, सुवर्णाद्याकरान्वा। मच.

**[1]धर्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम्।**
**दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः ॥**

(१) बहु अन्नं दातव्यमित्यर्थः। अन्यथा राज्ञा दण्ड्यः। एवमर्थमत्रोच्यते। महाधनस्य चैतत्। मेधा.

(२) अन्नमेव दद्यात् दद्यादेवान्नम्, कृषीवलतया बह्वन्नत्वात्। « मवि.

(३) धर्मेण विक्रयादिनोक्तप्रकारेण धनवृद्धौ प्रकृष्टं यत्नं कुर्यात्। हिरण्यादिदानमपेक्ष्यान्नमेव प्राणिभ्यो विशेषेण दद्यात्। ममु.

(४) किंच, धर्मेण 'अशीतिभागो वृद्धिः स्यात्' इत्यनेन धनवृद्धौ यत्नं कुर्यात्। सर्वभूतानां क्षुधार्तानां कृष्यादिसंचितमन्नं दद्यात्। न तेषु क्लिश्यमानेषु अधिकलाभार्थं स्थापयेदित्यर्थः। मच.

---

$ गृक., पमा., बाल. मेधागतम्।

¤ मर. गृकगतम्।

(१) **मस्मृ.** ९।३३२; **गृक.** २५६; **पमा.** १।४१७ क्रयवि (क्रयं वि); **मपा.** २२७; **मर.** १९२; **मुक्ता.** ६६ गांश्च (गं च); **बाल.** १।११९ पृ. ३६७ क्रयवि (रूपं वि).

§ बाल., नन्द., भाच. ममुगतम्।

« नन्द. मविगतम्।

(१) **मस्मृ.** ९।३३३; **मभा.** १०।१ तानाम (तेभ्योऽप्य) उत्त.; **गृक.** २५६; **पमा.** १।४१७; **मपा.** २२८ ण च (ण हि) दद्या (विद्या) नामन्न (नां भक्ष्य); **मर.** १९२-१९३; **मुक्ता.** ६६ नामन्न (नां दान); **बाल.** १।११९ पृ. ३६७ द्रव्य (यत्न).

**[1]विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम्।**
**शुश्रूषैव तु शूद्रस्य धर्मो नैःश्रेयसः परः।।**

(१) यशस्विनामिति साध्वाचारो लक्ष्यते। शुश्रूषा परिचर्यैव तस्य धर्मः परं श्रेय आवहति। † मेधा.

(२) शूद्रधर्मानाह – विप्राणामिति। गृहस्थानामित्यन्यैर्भरणासंभवादित्युक्तम्। नैःश्रेयसः निःश्रेयसहेतुः। ‡ मवि.

(३) शूद्रस्य पुनर्वेदविदां गृहस्थानां स्वधर्मानुष्ठानेन यशोयुक्तानां ब्राह्मणानां या परिचर्या सैव प्रकृष्टस्वर्गादिश्रेयोहेतुर्धर्मः। ममु.

(४) उपसंहारव्याजेन शूद्रवृत्तिं कथयति – विप्राणामिति। गृहस्थानामिति विशेषणादाश्रमान्तरेषु शूद्रापेक्षो निषेधः, 'स्वयंदासास्तपस्विनः' इति न्यायान्। तत्रापि न तपस्विनामिति भावः। यशस्विनां यशोर्थिनाम्। कदर्यशुश्रूषा भृत्यदुःखकरी, न तु सुखकरी, उदर्केऽपि भक्ष्यालाभद्वेषादिना दुरदृष्टजदुःखरूपफलत्वात्। मच.

(५) अत्र परमित्यभिधानात् क्षत्रियवैश्ययोरपि शुश्रूषा शूद्रस्य धर्मः। शूशि. ३३

ब्राह्मणस्यैव सर्वजातिवृत्त्युपदेशाधिकारः,
चत्वार एव वर्णाः, तत्र त्रयो द्विजात-
यश्चतुर्थ एकजातिः

**[2]सर्वेषां ब्राह्मणो विद्याद्वृत्त्युपायान्यथाविधि।**
**प्रब्रूयादितरेभ्यश्च स्वयं चैव तथा भवेत्।।**

(१) 'न चास्योपदिशेद्धर्मम्' (मस्मृ. ४।८०) इति न कश्चिद्धर्मोपदेशः शूद्रस्य कर्तव्य इत्युक्तम्। वृत्तिधर्मा उपदेष्टव्या इति तस्यापवादः। वृत्तिः शरीरकुटुम्बस्थितिः, तदर्था उपाया तान् विद्यात्। प्रब्रूयात्सर्वेभ्य इतरेभ्य इति। बहुवचनं शूद्रावरोधार्थम्। स्वयं च तथा भवेत् तथोपदिष्टा वृत्तिनियमा अनुष्ठेया इत्यर्थः। मेधा.

(२) किंच, सर्वेषामिति। सर्वेषां संकरपर्यन्तानाम् आत्मकुटुम्बस्थित्युपायान् ब्राह्मणो यथाशास्त्रं जानीयात्। तथा तेभ्यश्चोपदिशेत् आत्मना च वृत्तिनियमाननुतिष्ठेत्। गोरा.

(३) ब्राह्मणो वृत्त्युपायान् धर्म्यान् जीवनोपायानध्यापनादीन् विद्यादिति ब्राह्मणस्य नियम्यते, न त्वन्यस्य निषिध्यते। तथा भवेत् तथा विहितवृत्त्या जीवेत्। + मवि.

**[1]वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्य च धारणात्।**
**संस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः।।**

(१)*किं पुनः कारणं ब्राह्मण एव प्रकृत(? प्रवक्तृ)त्वेनाधिक्रियते, न पुनः क्षत्रियादयोऽपि? य(?अ)त एतच्छेषतया प्ररोचनं पठति। वैशेष्यात् विशिष्टत्वादित्यर्थः, गुणाधिक्यादिति यावत्। तदिदानीमाधिक्यमाह – प्रकृतिश्रैष्ठ्यात्। उत्तमाङ्गोद्भवादिदमुक्तम्। प्रकृतिः कारणम्। नियमस्य च धारणात् मद्यपानप्रतिषेधात्। अयमेव नियमोऽभिप्रेतः। स्नातकव्रतानि वा वैणवधारणादीनि ब्राह्मणस्यैव। संस्कारस्य च विशेषः नियमोऽभिप्रेतः, स्नातकव्रतानि च विशेषः। हृदयङ्गमाभिरित्यादेः(? दिः), उपनयनादे(? दि)र्वा, बालस्यैव विधानात्। क्षत्रियवैश्ययोस्त्वतीतशैशवयोरेकादशद्वादशयोः। अतो हेतोर्वर्णानां ब्राह्मणः प्रभुः शासिता। मेधा.

(२) अत्रार्थवादः – वैशेष्यादिति। जात्युत्कर्षान्मुखोद्भवत्वेन च श्रेष्ठकारणजन्यत्वात् स्नातकस्य व्रतानां च करणात् संस्कारस्य चोपनयनाख्यस्य बालस्यैव विधानेन विशेषाद्वर्णानां वृत्तिवेदनतदुपदेशयोर्ब्राह्मण एवेशता। गोरा.

---

† स्मृकौ. मेधावत्।

‡ नन्द. मविगतम्।

(१) **मस्मृ.** ९।३३४; **मेधा.** परः (परम्); **गृक.** २६५; **गृर.** ४७५ नैःश्रे (निःश्रे); **पमा.** १।४१८ नैःश्रे (नैश्रे); **मपा.** २३० गृरवत्; **स्मृकौ.** ८६ परः (परम्) शेषं गृरवत्; **मर.** ११ नैःश्रे (निश्रे); **शूशि.** ३३ मेधावत्, मुद्रितग्रन्थस्तु न शुद्धः; **मुक्ता.** ६७ नैःश्रे (निश्रे) उत्त.; **शूक.** ६९ गृरवत्, उत्त., मनुपराशरौ; **आन.** ६३९ पमावत्, उत्त.; **बाल.** १।१२० पृ. ३७५ नैःश्रेयसः परः (निःश्रेयसं परम्) (=); **सस्मृ.** ११८ पमावत्.

(२) **मस्मृ.** १०।२; **विश्व.** १।११५ तृतीयचरणमात्रम् (=), १।१९७; **मेधा.** ४।८० चतुर्थचरणो नास्ति; **मुक्ता.** ४६५ द्याद्वृत्त्युपाया (द्यावृत्त्याचारा) स्मृत्यर्णवे.

---

+ ममु., नन्द., भाच. मविगतम्।

* वेद-वृत्त्युपायप्रवक्तृत्वं ब्राह्मणस्य पूर्वमुक्तम्।

(१) **मस्मृ.** १०।३.

(३) वैशेष्यात् जातिवैशिष्ट्यात्। प्रकृतेर्ब्रह्ममुखरूपोपादानस्य श्रैष्ठ्यात्। नियमस्य स्नातकव्रतादेः। संस्कारस्य उपनयनादेः अतिबाल्यकृतत्वादिना विशेषात्।

मवि.

(४) अत्रानुवादः – वैशेष्यादिति। जात्युत्कर्षात् प्रकृतिः कारणम्। हिरण्यगर्भोत्तमाङ्गरूपकारणोत्कर्षात्। नियम्यतेऽनेनेति नियमः वेदः, तस्याध्ययनाध्यापनव्याख्यानादियुक्तसातिशयवेदधारणात्। अत एव 'ब्रह्मणश्चैव धारणात्' (मस्मृ. १।९३) इति सातिशयवेदधारणेनैव ब्राह्मणोत्कर्ष उक्तः। गोविन्दराजस्तु स्नातकव्रतानां धारणादिति व्याख्यातवान्। तत्र, क्षत्रियादिसाधारण्यात्। संस्कारस्य उपनयनाख्यस्य क्षत्रियाद्यपेक्षया प्राधान्य(? बालस्य) विधाने(न) विशेषाद्वर्णानामध्यापनवृत्त्युपदेशयोर्ब्राह्मण एवेश्वरः।

§ ममु.

(५) ब्राह्मणस्यैव धर्मवदने जात्युत्कर्षब्रह्ममुखजत्ववेदाध्यापकत्वसोमपातृत्वानि चत्वारि हेतव इत्याह – वैशेष्यादिति। वैशेष्यात् ज्यैष्ठ्यात्, 'ब्रह्म वा इदमग्र आसीत्' इति श्रुतेः। प्रकृतिश्रैष्ठ्यात्, प्रकृतिः उत्पत्तिस्थलम्, 'ब्राह्मणोऽस्य मुखमासीत्' इति श्रुतेः। नियमस्य स्नातकव्रतकलापादेः। संस्कारस्य सोमपात्वसंन्यासित्वस्य।

मच.

(६) चतुर्षु हेतुषु प्रथमेन स्वरूपत उत्कर्ष उक्तः, द्वितीयेन कारणतः, तृतीयचतुर्थाभ्यां कर्मत इत्यनुसंधातव्यमिति।

* नन्द.

**'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।**
**चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः।।**

(१) के पुनरमी वर्णा नाम? मनुष्यजातिवचनो वर्णशब्दो नेत्याह – चत्वारो वर्णा ब्राह्मणाद्याः शूद्रपर्यन्ताः। अन्ये तु बर्बरकैवर्तादयः संकीर्णयोनयो यथा वक्ष्यन्ते। तत्र चतुर्णां त्रयो द्विजातयः, उपनयनस्य तेषां विहितत्वात्। एकजातिः शूद्रः। न हि तस्योपनयनमस्ति, उपनयनविधौ ब्राह्मणादिवर्णविशेषसंयोगात् 'अष्टमे ब्राह्मणमुपनयीतैकादशे राजन्यं द्वादशे वैश्यम्' इति। न कस्मिंश्चित्काले शूद्रं पठन्ति। ननु कालविशेषानुपादानादनियतकालं शूद्रोपनयनमस्तु। भवेद्यद्यसंयुक्ता सामान्येनोपनयनस्योत्पत्तिः स्यात्, एताश्च वर्णकालविशेषयुक्ता निमित्तार्थाः स्तुतयः स्युः। न तु पृथगुत्पत्तिरस्यास्ति। तत्कस्य प्रमाणस्य सामर्थ्येनास्योपनयनमनियतकालं क्रियताम्? यद्येवम्, किं तर्ह्यनेन 'चतुर्थ एकजातिः' इति? सत्यम्। आशङ्कामात्रनिवारणार्थम् 'मन्त्रवर्जं तदुच्यते(? न दुष्यति)' (मस्मृ. १०।१२७) इति अमन्त्रकस्यानियकालस्य प्राप्तिराशङ्क्येत। ननु च पाकयज्ञविधावेतद्वाक्यम्, तत्संनिधौ श्रवणात्, तत्र कृतार्थं नान्यत्र भवितुमर्हति। अत एवाऽऽशङ्कामात्रमित्युक्तम्। परमार्थतस्तु व्यवहारनियमार्थपरः श्लोकः।

# मेधा.

(२) पञ्चमः पुनर्वर्णो नास्ति, अन्तरप्रभवानां मातापितृजातिव्यतिरिक्तजात्यन्तरत्वात् अश्वतरवत्। एवं चायमेषां वर्णत्वोपदेशः शास्त्रे व्यवहारार्थः। शूद्रस्योपनयनानुपदेशादेवैकजातित्वसिद्धौ 'चतुर्थ एकजातिस्तु' इति इदं 'धर्मेप्सवस्तु धर्मज्ञाः' (मस्मृ. १०।१२७) इत्यनेनामन्त्रकेशवपनादिसंस्कारान्तरवत् उपनयनं नास्तीति सूचनार्थम्।

+ गोरा.

(३) शूद्रस्तु चतुर्थ एकजातिरित्यन्वयः। पञ्चमोऽनुलोमजो नास्तीति।

मच.

(४) उक्तमर्थं निगमयति – ब्राह्मणः क्षत्रियो वैश्य इति। क्रमोपादानं ब्राह्मणात् द्विजातेरपि क्षत्रियः किंचिदपकृष्टः, क्षत्रियाद्वैश्य इति ज्ञापनार्थम्। शूद्रस्यैकजातित्वग्रहणं पृथगुपादानं चापकृष्टतमत्वख्यापनार्थम्। पञ्चमो नास्ति, चत्वार एव वर्णा इत्यर्थः। नन्द.

---

§ भाच. ममुगतम्।

* शेषं ममुगतम्।

(१) **मस्मृ.** १०।४; **मेधा.** १०।३१ 'नास्ति तु पञ्चमः' एतावन्मात्रम्, १०।१२६ द्वितीयचरणमात्रम्; **स्मृच.** २।४०७; **स्मृकौ.** १३ उत्त., ५८ तृतीयचरणमात्रम्; **आपा.** ९३-९४; **मुक्ता.** ३०; **संम.** ८० तृतीयचरणमात्रम्; **वीमि.** १।१० शूद्रो (वर्णो) उत्त.; **सस्मृ.** १५३ अशुद्धो ग्रन्थः.

# भाच. मेधागतम्।

+ शेषं मेधागतम्। मवि., ममु., स्मृकौ. गोरागतम्।

वर्णेभ्यः सवर्णोढासु सवर्णोत्पत्तिः, ब्राह्मणोत्पादितायां शूद्रापत्यतदपत्यादिरूपायां स्त्रीपरंपरायां सप्तमे ब्राह्मणोत्पादितापत्ये ब्राह्मण्योत्पत्तिः, न्यायस्यास्य वर्णान्तरविषये योजना

**[१]सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।**
**आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते।।**

(१) के पुनरमी ब्राह्मणादयो नाम? न ह्येषां परस्परो भेदः शक्योऽवसातुम्। व्यक्त्यधीनाधिगमा हि जातयः। न च व्यक्तयः स्वावयवसंनिवेशविशेषावगमशून्याः शक्नुवन्ति तासां भेदमावेदयितुम्। न च ब्राह्मणक्षत्रियादीनां गवाश्वस्येव वाऽऽकारभेदोऽस्ति, येन रूपिसमवायाच्चाक्षुष्यः स्युः। नापि विलीनघृततैलगन्धरसादिभेदेन क्रियान्तरगोचराः। नापि शौचाचारपिङ्गलकेशत्वादिभिर्धर्मैः शक्यभेदावसानाः, तेषां सर्वत्र संकरोपलब्धेः। व्यवहारश्च पुरुषाधीनः। विप्रलम्भभूयिष्ठत्वाच्च पुरुषाणां नान्ततो वस्तुसिद्धिः इत्यतो जातिलक्षणमुच्यते।

सर्ववर्णेष्वेतल्लक्षणं जातेर्यत्तुल्यासु समानजातीयासु संभूतासु(? ताः)पत्नीषु ऊढासु जातास्त एव जात्या ज्ञेयाः। प्रायेण मातापित्रोर्या जातिः सैवापत्यस्योढायां जातस्य वेदितव्या। संबन्धिशब्दत्वात्पत्नीग्रहणस्य(अतः ?)वोढा पिता लभ्यते। तेन येनैवोढा तत एव यस्तस्यामेव जातस्तदा तज्जातीयो भवति। अक्षतयोनिग्रहणं पुनर्विवाहसंस्कारेण पत्नीत्वमाशङ्क(? ङ्क्य)मानं निवर्तयति, सहोढकानीनमातॄणां च। ननु च नैवैतासां विवाहसंस्कारोऽस्ति, 'पाणिग्रहणिका मन्त्राः कन्यासु' (मस्मृ. ८।२२६) इति वचनात्। यदपि 'वोढुः स गर्भो भवति' (मस्मृ. ९।१७३) इति विवाहश्रवणेन शास्त्रीयसंस्कारप्रतिपत्तिः, प्राप्तिमात्रवचनत्वात्तस्य न विहितवचनीयं प्रत्यभिज्ञानमस्ति। तस्मात्स्वीकारमात्रे धातुर्वर्तते, स्वीकर्तुरित्यर्थः। पित्रादीन् वञ्चयित्वा येनैव स्वीकृता तस्यैव सा भवति, ततः पुत्रश्चेति तस्यार्थः, पुनर्भूसंस्काराभावात्। 'सा चेदक्षतयोनिः स्यात्' (मस्मृ. ९।१७६) इति पठ्यते। गतप्रत्यागतायामपि पुनःशब्दप्रत्यभिज्ञानाद्भर्तुरुक्ताः। न च ताभिः सहाऽऽभिः सहाधिकारोऽस्ति? यज्ञसंयोगेऽस्ति पत्नीशब्दः। अतः अक्षतयोनिशब्दोऽतिरिच्यते। अत्र पूर्वे पत्नीशब्दपर्यायेण नारीष्विति पठन्ति, तदपि न किंचित्। केवले ह्यक्षतयोनिशब्दे त्वसंस्कृतास्वपि जातास्तज्जातीयाः स्युः। पत्नीशब्दपाठेन शास्त्रीयेण विधिना या संस्कृता भार्यात्वमापादिता सा गृह्यते। यास्तु कुमार्य एवोपगम्यन्ते, भवन्ति ता अक्षतयोनयः, न तु पत्न्यः। तस्मादक्षतयोनिशब्दस्य प्रयोजनं वाच्यम्।

उच्यते – यत्तावदुक्तं 'न ताः पत्न्यो यज्ञसंयोगाभावात्' इति, यदि विवाह्येरन् स एव यज्ञः स्यात्। तत्रापि पूषवरुणार्यम्णामस्त्येव यागः। समानार्थौ च यागयज्ञशब्दौ। तस्मात्स्युरेव पत्न्यः। अकन्यात्वादविवाह्यतयैव न पत्न्य इति युक्तम्।

अतश्चाऽऽनर्थक्येऽक्षतयोनिशब्दस्य प्रयोजनमुच्यते। दृश्यते लक्षणयाऽसत्यपि यज्ञसंयोगे पत्नीशब्दः प्रयुज्यमानो लोके रजकस्य पत्नी। यथाऽन्यत्रावरुद्धासु स्त्रीषु गृहिणीशब्दः। सोऽपि भार्यावचन एव केनचिद्धर्मसाम्येन तत्रापि प्रयुज्यते। यद्यपि सति मुख्ये लक्षणा न न्याय्या, तथापि मन्दधियां सुहृद्भूत्वा आशङ्कामात्रं निवर्तयति। किं नाम नाऽऽशङ्क्यते मूढमतिभिः? आनुलोम्यग्रहणमुत्तरार्थम्। येऽपि 'त एव ते' इति पठन्ति तेषामपि स एवार्थस्तज्जातीया इति।

अत्रोच्यते – किंप्रमाणमूलमेतत्स्मृतिकाराणां स्मरणम्? अकार्यरूपत्वान्न धर्माधर्मोपदेशतुल्यम्। प्रमाणान्तरं च नास्तीत्युक्तम्। स्मृत्यन्तरमूलत्वेऽन्धपरंपराप्रसङ्गः प्रमाणश्लोके दर्शितः। उच्यते – वृद्धव्यवहार एव मूलं साधुत्वस्मृतिवत्। ननु च सापराधाऽसावित्युक्तम्। अत एव नियामिकाः स्मृतयः फलवत्यः। अभियुक्तस्मरणमन्यथेति न शक्यते वक्तुम्। शास्त्रस्थाः प्रसिद्धाः प्रमाणतराः। संभवति च तेषामनादिव्यहारो मूलम्। एतत्स्मृतिसंस्कृतानां वाऽवगताभिजनजातीयानां प्रत्यक्षमप्युपपद्यत इति केषांचिद्दर्शनम्।

---

(१) **मस्मृ.** १०।५; **मेधा.** 'त एव ते' इत्यस्य पाठान्तरत्वेन निर्देशः : ९।९ द्वितीयचरणमात्रम्: **गोरा.** स्त एव (स्तथैव); **स्मृच.** ४।१७९-१८०; **पमा.** १।५११; **दीक.** १।९० सर्ववर्णेषु (सवर्णेषु च) स्त एव (स्तथैव); **मुक्ता.** ७०; **वीमि.** १।९० पृ. १६० सर्ववर्णेषु (ब्राह्मणादिषु); **बाल.** १।९० पृ. २७५.

एतत्स्मृतिविवेके प्रपञ्चितम्। ननु च स्मृत्यन्तरे नायं विशेषोऽस्ति 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः। अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः।।' (यास्मृ. १।९०) इति। आद्येनार्धेन जातिर्लक्ष्यते, उत्तरेण हि ब्राह्मादिविवाहजातानां संतानवर्धनत्वम्। तत्र 'सवर्णेभ्यः सवर्णासु' इति नात्र पत्नीशब्दोऽस्ति। कथं नास्ति? यावता 'विन्नास्वेष विधिः स्मृतः' (यास्मृ. १।९२) इति। मा वा भूत्, अविशेषस्मृतेर्विशेषस्मृतिर्बलीयसी। अदर्शनाद्दर्शनं बलीयः। यत एकेन विशेषो न दृष्टोऽपरेण दृष्ट इति संभवत्येतत्। अतोऽभियुक्तस्मरणं संभवन्मूलतया प्रमाणम्।

ननु चाव्याप्तेरलक्षणमेतत्। न हि सहोढकानीनपौनर्भवादीनामनेन ब्राह्मण्यं भवति, कुण्डगोलकयोः क्षेत्रजस्य च। अनभिप्रेतमेव तत्तेषामिति चेत् का तर्हि तेषां जातिः? कुण्डगोलकयोश्च असति ब्राह्मण्ये श्राद्धे प्राप्त्यभावादनर्थको निषेधः स्यात्, स्मृत्यन्तरविरोधश्च 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' (यास्मृ. २।१३३) इति। किंच यदेव लक्षणं तदेव लक्ष्यम्। अनिर्ज्ञातं लक्ष्यं भवति, निर्ज्ञातं लक्षणम्। यथा 'को देवदत्तः?' इति संशयेऽङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुः। इह तु यथा कश्चित् ब्रूयात् 'कः काकः?' इत्युक्ते 'काकाज्जातः' इत्युत्तरम्, तादृगेव 'को ब्राह्मणः? यो ब्राह्मणाज्जातः' इति। जनकेऽपि हि ब्राह्मण्यमप्रसिद्धमेव, न्यायविरोधश्च। सजातीयात्सजातीयायां जातः स लोके सजातीयो भवति। यथा गोर्गवि गौरश्वाद्वडवायामश्वः। अत्रोच्यते – यत्तावदुक्तं 'का तेषां जातिः?' इति किमन्यया जात्या? मनुष्यास्तावद्भवन्ति। पुरुषधर्मैश्चाधिक्रियन्ते अनुपात्तजातिविशेषैः, पुत्रत्वाच्छ्राद्धादिभिश्च। दाने च सर्वेषामधिकारः।

ननु च विशेषस्योपदेशेन विना व्यवहारो न सिध्यति, सर्वसाधारणत्वान्मनुष्यजातेः। असदेतत्। सर्वस्यैव स्वसंज्ञाविशेषो विद्यते प्रतिपुरुषं देवदत्तो यज्ञदत्त इति। अथापि संबन्धव्यपदेशः कर्तव्य इति, 'कानीनः, सहोढः' इत्येव व्यपदिश्यते। सोऽपि चातुर्वर्ण्ये सद्भावात्सामान्यरूप एवेति चेद्देवदत्तस्य कानीन इत्यादि जनकेन व्यपदेशः करिष्यते। तस्मादसंबद्धमेतद्यदुच्यते व्यपदेशः कथमिति।

एवं तर्हि सर्व एव धर्माश्चातुर्वर्ण्यं प्रति बोध्यन्ते अन्तरप्रभावाणां च तत्र बहुत्वं ब्राह्मणादिजातिचतुष्टयविषयम्। न चैतेषामप्येकजातिः, सर्वजातिष्वेतस्य लक्षणस्य प्रवृत्तेः। यथैव ब्राह्मणादूढायां ब्राह्मण्यां जातो ब्राह्मणः, एवं क्षत्रियादयोऽपि समजातीयमातृपितृजाताः। सर्वविशेषाभावे च कुतः सामान्यम्? न हि शिंशपादिसर्वविशेषाभावे वृक्षत्वसंभवः।

अन्तरप्रभवाश्चानुलोमप्रतिलोमाः। तत्रानुलोमाः मातृजातीयाः, प्रतिलोमास्तु धर्महीनाः अन्यत्राहिंसादिभ्यः। ते च सर्वे स्वसंज्ञाभिर्विशेषतो निर्दिष्टाः। न चैषां नामापि तत्रास्ति। तत्र कतमे ते धर्मा यत्रामी अधिक्रियेरन्? क्वच तद्वचनं यदेतानधिकुर्वीत? न हि कश्चिज्जातिविशेषः स्त्रियो(? षाश्रयो) धर्मविधिरस्ति, सर्ववर्णानाम् अन्तरभावानां च इति शास्त्रादधिकृतत्वाच्च। उच्यते – यत्तावदहिंसादिषु चातुर्वर्ण्यवचनं तन्नरमात्रोपलक्षणार्थमेव। सत्यपि प्रतिलोमाधिकारे मुख्यार्थ(? र्था)वृत्तेः। प्रत्युत सहचारिजात्यन्तरपरत्वमेव लक्षयितुं क्षमम्, नान्तराऽवस्थातुमर्हति। तत्रैव च वक्ष्यामः। इदं चास्ति – 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' (मस्मृ. १०।४१) इति। अपध्वंसः असंस्कारः। स चाष्टविधः 'व्यभिचारेण वर्णानाम्' (मस्मृ. १०।२४) इत्यादिनोक्तः। व्यभिचारः परस्त्रीषु गमनं सजातीया(द्या)सु। अन्यद्वक्ष्यामः। तस्मादसत्यपि वर्णत्वे वाचनिक एव तेषामधिकारः।

क्षत्रियस्य तु मातृजातीयत्वमेव, लिङ्गदर्शनात्। 'पुत्रो द्व्यामुष्यायणस्य संविधानात्' इति कर्तव्यताविशेषः श्रुतः। अन्येष्वपि श्रौतेषु तस्य विधानान्तरं दृश्यते। तस्मादेष ब्राह्मणादिजातीय एव समभागः स्वपितृव्येण, 'तस्माद्धर्मेण तं भजेत्' (मस्मृ. ९।१२१) इति। न च यथोक्ते विधौ तद्युक्तम्। तदा ह्ययं शूद्रधर्मा। धनस्य यथार्थतायामुक्तायां कुतस्तस्य तावद्भागः? कुण्डगोलकौ क्षेत्रजावेव। शिष्टसमाचारश्चैवमेव। पाण्डुधृतराष्ट्रविदुराः क्षेत्रजाः सन्तो मातृजातीयाः। अतो युक्तः श्राद्धे प्रतिषेधः। किंच, पतितोऽपि तत्र प्रतिषिद्धः, यस्य सर्वधर्मबहिष्कृतत्वात्प्राप्त्याशङ्कैव नास्ति। यत्तु 'सजातीयेषु' (यास्मृ. २।१३३) अपि (? इति) स्मृत्यन्तरं तदुक्तानुवादत्वाद्यथासंभवं व्याख्येयम्, कार्यपुत्रविषयतया वा। यच्च निर्ज्ञातं लक्षणं भवति तत्किं

ब्राह्मणा(द्य)र्थो नैव लोकप्रसिद्धः? यत्र ब्राह्मणादिशब्दः प्रयुज्यते तत्रापध्वंसनिवृत्त्यर्थं वचनम्। मातापित्रोरेतदेव जातिलक्षणम्। न चानवस्था, अनादित्वात्संसारस्य।

प्रस्तुतन्यायविरोधस्तु साक्षात् व्यवसायगम्यत्वे आसां जातीनां स्यात्। तास्तु स्मृतिलक्षणा यथास्मरणं भवितुमर्हन्ति। यथा वा वसिष्ठादयः शब्दा अन्तरेणैवान्वयधर्ममनवच्छिन्नस्मृतिपारंपर्यकैश्च विदितार्थेषु प्रयुज्यन्ते, भवन्ति व्यवहारहेतवो वसिष्ठब्राह्मणाः 'वासिष्ठाः शृण्वन्ति' इति, तद्वदेतद्द्रष्टव्यम्। यथा समाने ब्राह्मणत्वे केचिद्भृगवो वत्सा भारद्वाजा इत्यादिविशेषः स्मृत्येकप्रमाणः तथैव समाने पुरुषत्वेऽमी ब्राह्मणा अमी क्षत्रिया इत्यादिरुपपन्नो व्यवहारः।

यैरपि लिङ्गदर्शनत्वेन जाबालश्रुतिरुक्ता – §"सत्यकामो जाबालो मातरमपृच्छत्किंगोत्रोऽहमस्मि' इति। सैवं प्रत्यब्रवीत् – 'बह्वहं चरन्ती परिचारिणी यौवने त्वामालभे, नाहं तद्वेद' इति स एवमुपश्रुत्य 'हारिद्रुमतं गौतममियाय। तं होवाच ब्रह्मचर्यं भगवति विवत्स्यामि'। स एवमुवाच 'किंगोत्रस्त्वमसि' इति। स प्रत्युवाच 'अपृच्छं मातरं सा माता प्रत्यब्रवीत् यौवने त्वाम्" (छाउ. ४।४।१-४) इत्यादि। गौतमः 'न चैतदब्राह्मणो वक्तुमर्हति। समिधं सोम्याऽऽहर। उप त्वा नेष्ये' (छाउ. ४।४।५)। अस्यायमर्थः – बहुभिरहं यौवने पुंभिः संगताऽभूवम्, न जाने केन जातोऽसीति। गौतमस्तु सत्यवचनान्निश्चिकाय 'ब्राह्मणेनायं जातः', ततस्तमुपनिन्ये। अतो मन्यामहे स्वैरिणीष्वप्यनूढासु समानजातीयाज्जातासु तज्जातीया भवन्ति।

तदेतन्न किंचित्। यतो 'यौवने त्वामालभे'। यौवने किल न स्मृतिर्दृढीभवति, उत्कलिकाबहुलत्वाद्यौवने चेतसः। किंच, 'परिचारिणी परिचारिका(त्व)हेतोः क्षुधापीडिता बहु विचरन्ती नैकस्मिन् स्थाने, ततो मे न स्मृतिरस्ति भर्तुः किं गोत्रमिति'।

अतः स्थितमेतत्समानजातीयोढायां जातास्तज्जातीया इति। गौतमस्यापि न ततो वचनात् ब्राह्मणोऽयमित्यवगमः। प्रागेवासौ तं ब्राह्मण इति वेद। गोत्रं तु न वेद। गोत्रप्रश्नेन चरणप्रश्नो वेदितव्यः। तत्र उपनयनभेदोऽस्ति। न तु गोत्रभेदेनोपनयने प्रयोजनम्। ननु(? न तु) यथा केचिदाहुः – – जातिप्रश्नोऽयमाभिजात्यात्, 'गोत्र एव जातिमवगमिष्यामि'। साक्षाज्जातिप्रश्ने हि मुखरता स्यात्।

मेधा.

(२) ब्राह्मणादिचतुर्ष्वपि वर्णेषु समानजातीयासु अक्षतयोनिषु यथाशास्त्रं समूढासु आनुलोम्येन ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियायाम् इत्येवमनुक्रमेण ये जातास्ते पित्रोर्जातित(? र्या जातिस्त)ज्जातीया एव बोद्धव्याः। सर्ववर्णेषु इत्युपादानात् वर्णत्वमात्रेण तुल्यासु इत्याशङ्कानिवृत्त्यर्थमानुलोम्यग्रहणम्। इदमेव च सकलमातापितृप्रबन्धस्यापि जातिलक्षणम्, अनादित्वेन पुनः संसारस्यास्यैव व्यापकत्वात्। सर्वत्र चेह प्रकरणे जातिलक्षणप्रकरणं शास्त्रव्यवहारफलजातिपरिज्ञानार्थम्, गवाश्वादिवत् ब्राह्मणादीनां जातिभेदावबोधकस्याऽऽकारविशेषस्यानुपलब्धेः। एवं च पत्नीग्रहणात् अपत्न्युत्पन्नानां नैव तज्जातीयत्वम्। तथा च देवलः – 'द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अधरेट इति ख्यातः शूद्रधर्मा स जातितः।। व्रतहीना असंस्कार्याः सवर्णास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः।।' इत्याह। तथा – 'सवर्णेभ्यः सवर्णासु जायन्ते हि स्वजातयः' (यास्मृ. १।९०) इत्येतदपि याज्ञवल्क्यवाक्यं मानवैकवाक्यत्वात् 'विन्नास्वेष विधिः स्मृतः' (यास्मृ. १।९२) इति चोपसंहारात् पत्नीविषयम्। एवं व्यासः – 'स्वोढाजाताः समानाः स्युः संकराः स्युरतोऽन्यथा' इत्याह। बौधायनश्च 'एतान् वन्यान्(?) विवाहानाहुरेतैः संस्कृताभिरुत्पन्नास्तज्जातीया भवन्ति न त्वन्ये' इत्याह। बृहस्पतिश्च – 'प्रातिलोम्येन संभूता नियोगेन विना च ये। सावित्रीपतिता जातास्त्रयः संकरजातयः।।' इत्याह। अन्ये तु 'सत्यकामो जाबालो जबालां मातरमामन्त्रयांचक्रे। भवति, ब्रह्मचर्यं च वत्स्यामि। किंगोत्रोऽहमस्मीति। सा हैनमुवाच। नाहमेतद्वेद यद्गोत्रस्त्वमसि तात। बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साऽहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि। स सत्यकाम एव जाबालो ब्रुवीथ इति। स ह हारिद्रुमतं गौतममेत्योवाच। ब्रह्मचर्यं भगवति वत्स्यामि,

§ यथास्मरणमयं श्रुत्यनुवादः स्यात्। तेन महान् पाठभेदः संवृत्तः।

उपेयां भगवन्तमिति। तं होवाच किंगोत्रो नु सोम्य असीति। स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि। अपृच्छं मातरम्। सा मां प्रत्यब्रवीत्। बह्वहं चरन्ती परिचारिणी यौवने त्वामालभे। साऽहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला नु नामाहमस्मि। सत्यकामो नाम त्वमसि। सोऽहं सत्यकामो जाबालोऽस्मि भो इति। तं होवाच। नैतदब्राह्मणो विवक्तुमर्हति। समिधं सोम्य आहर, उप त्वा नेष्ये' इति जाबालश्रुतिदर्शनात् कुण्डगोलकयोश्च श्राद्धप्रतिषेधदर्शनाच्च एषां यस्यापि (? एषामपि) पितृजातीयत्वमिति। तच्चापरे न सहन्ते, 'नाऽहमेतद्वेद' इति मातुः निश्चयाभावात् 'नैतद-ब्राह्मणो विवक्तुमर्हति' इति पितृतोऽपि तस्योत्पत्तिसंभवात्, तदभिप्रायमेतत्स्यात्। यत्तु कुण्डगोलकयोः श्राद्धनिषेधदर्शनं तदुक्तश्रुतिभ्रमेण ब्राह्मण्याशङ्कायां परिहारार्थं स्यात्, न तु स्वभ्रष्टब्राह्मण्यजनकम्। § गोरा.

(३) वर्णेष्वित्युपलक्षणम्। संकीर्णेष्वपि तुल्यासु सवर्णासु मूर्धावसिक्तत्वादिजातिसजातीयासु वा पत्नीषु परिणीतासु, न त्वेवमेव गृहीतासु। अत एव याज्ञवल्क्यः 'विन्नास्वेष विधिः' इत्युपसंहारमाह। एतेन कुण्डगोलकयोर्वर्णबाह्य-तोक्ता। अत एव बौधायनः – 'एतानर्थस्य विवाहानाहुरेतैः संस्कृताभिरुत्पन्नास्तज्जातीया भवन्ति नान्ये' इति। व्यासश्च – 'भार्याजाताः समानाः स्युः संकराः स्युरतोऽन्यथा' इति। देवलश्च – 'द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अववाट इति ख्यातः शूद्रजन्मा स जातितः।। व्रतहीना असंस्कार्याः सवर्णास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः।।'। शूद्रजन्मेति त्रैवर्णाप्रवेश्यत्वाभि-प्रायेणोक्तम्। शूद्रस्य तु 'जातोऽपि दास्यां शूद्रेणांशहरः' इत्यभिधानादनूढोत्पन्नोऽपि परिणीतभार्योत्पन्नसम एव, अत एव स शूद्रः। न च कुण्डगोलकयोरब्राह्मणत्वे तत एव श्राद्धानधिकारात् श्राद्धप्रकरणे तद्वैयर्थ्यमेवं स्यात्। पङ्क्ति-दूषकतया हि तेषां तत्राभिधानम्, तच्च ब्राह्मणभ्रमस्य तत्र संभवात्प्रवेशे पङ्क्तेरेव दूषणात् श्राद्धं व्यर्थं भवतीत्येतदर्थ-मुक्तम्। आनुलोम्येन वयस आनुलोम्येन वरापेक्षया अल्प-वयसि, कन्यायामुत्पन्न इत्यर्थः। तेनाधिकवयसः परिणीतायाः सवर्णायाः अपि पुत्रो न ब्राह्मण इत्युक्तम्। अत एव यज्जातीयौ यन्मातापितरौ तज्जातीया एव(ते)। मवि.

(४) अथ वर्णानां लक्षणमाह – सर्ववर्णेष्विति। तुल्यासु अर्हासु सापिण्ड्यदोषरहितास्वित्यर्थः। अक्षतयोनिषु अनन्य-पूर्वासु। आनुलोम्यम् अनिन्द्या विवाहाः, तेषु संभूता ये वर्णास्ते जात्यन्तरा(?) एव ज्ञेयाः। नन्द.

(५) अक्षतयोनिषु संभोगान्न क्षता योनयो यासां ताः अक्षतयोनयस्तासु आनुलोम्येन संभूताः वयस आनुलोम्येन वरापेक्षया हीनवयसि कन्यायां जातास्ते अनुलोमजाः। भाच.

**'शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते।**
**अश्रेयाञ्छ्रेयसीं जातिं गच्छत्या सप्तमाद्युगात्।।**

(१) 'गर्भं गृह्णाति' 'गर्भश्च श्रवणाज्जातः' इति पुंल्लिङ्गनिर्देशेऽपत्यार्थयोगता विज्ञेया। अत इदमुक्तं भवति – शूद्रायां ब्राह्मणात् या जाता कुमारी, सा चेच्छ्रेयसा जात्युत्कर्षवता ब्राह्मणेनैव प्रजायते विवाहादिसंस्कृताऽ-पत्योत्पत्तिहेतुसंबन्धं प्राप्नोति। तस्यामपि यदि कुमारी जायते सा ब्राह्मणेनैव विवाह्यते। एवमनया परंपरया सप्तमे पुरुषे प्राप्ते ब्राह्मण्यां(? ण्यं) यस्तत्र जायते तस्य भवति। श्रेयसेति यद्यप्युत्कृष्टजातीयमात्रे वर्तते, तथाऽपीह ब्राह्मण-पदसंनिधानादुत्तरत्र च 'शूद्रो ब्राह्मणतामेति' इति वचनात् ब्राह्मण्यप्राप्तिः शूद्रवर्णस्य विज्ञेया। अनयैव कल्पनया पञ्चमे वैश्यायां जातस्य वर्णस्य, तृतीये क्षत्रियायाम्। अत्रापि स्त्रीत उत्कर्षः। एवं वैश्यस्य तृतीये क्षत्रियत्वम्। शूद्रायां जातायाः कुमार्या वैश्यान्तरेण संयोगे तृतीये जन्मनि वैश्यत्वम्। क्षत्रियजातायाः शूद्रायाः पञ्चमे युग इति। युगशब्दो जन्मवचनः। अश्रेयान्निकृष्टजातीयः श्रेयसीम् उत्कृष्टां जातिं गच्छति प्राप्नोति। आङ् अभिविधौ व्यापकार्थः। मेधा.

(२) इदानीं 'सर्ववर्णेषु तुल्यासु' इत्येतल्लक्षण-व्यतिरेकेणापि ब्राह्मण्यादि दर्शयितुमाह – शूद्रायामिति। शूद्रायां ब्राह्मणाज्जातः पारशवाख्यो वर्णः स्त्रीलक्षणः। सा यदि स्त्री ब्राह्मणेनोढा सती प्रसूते, दुहितरं च जनयति,

---

§ ममु. गोरागतम्।

(१) **मस्मृ.** १०।६४; **मेधा.** प्रथमचरणमात्रम्; **मभा.** ४।२२ गच्छत्या (प्राप्नोत्या); **स्मृकौ.** ३८; **दीक.** १।९६ ज्जातः (ज्जाता).

साऽप्यन्येन ब्राह्मणेनोढा सती दुहितरमेव जनयति, साऽप्येवमेवेत्येवं स पारशवाख्यो निकृष्टे(? ष्टो) बीजप्राधान्यात् सप्तमे युगे ब्राह्मणजातिं प्राप्नोति। सप्तमो जातो ब्राह्मणः संपद्यते। * गोरा.

(३) यः पारशव उक्तः श्रेयसा श्रेष्ठवर्णेन सह प्रजायते श्रेष्ठायां पारशव्यामेव वृत्तादिमत्यामपत्यं जनयति एवमा सप्तमाद्युगादा सप्तमात् उत्कर्षतोत्कर्षभावतः पितृपरंपरया विच्छिद्यते स्वधर्मान्तरच्युतिः(?) तदाऽश्रेयानपि सप्तमे श्रेयसीं जातिं द्विजातितामाप्नोति। तस्य सप्तमी संततिर्द्विजातितां याति। यदि मध्ये श्वश्रूतुल्यैरेव विवाहैरुत्पत्तिरित्यर्थः। युगशब्दो मातापित्रोर्युग्मतया तत्परः।

मवि.

(४) एवं वैश्यायां क्षत्रियायां च ब्राह्मणेनोढायां षष्ठे पञ्चमे च श्रेयसीं जातिं ब्राह्मणत्वं गच्छतीत्युक्तम्। एवं क्षत्रियवैश्ययोरप्यूह्यम्। + स्मृकौ. ३९

(५) 'तपोबीजप्रभावैः' (मस्मृ. १०।४२) इत्युक्तेर्न्यूनं पूरयति – शूद्रायामिति। श्रेयसीं (जातिं) ब्राह्मण्यं प्राप्नोतीत्यन्वयः। + मच.

(६) अथानुलोमजसंतानानां धर्मोत्कर्षवशेन प्रत्यपत्यं जात्युत्कर्षो भवतीत्याह – शूद्रायां ब्राह्मणादिति। शूद्रायां ब्राह्मणाज्जातः पारशवः श्रेयसा प्रजायते चेद्धर्मेण युक्तो भवति चेत् अश्रेयानपकृष्टजातिरपि श्रेयसीम् उत्कृष्टतरां जातिमा सप्तमात्संतानात् गच्छति। + नन्द.

(७) तद्यथा याज्ञवल्क्यः$ मूर्धावसिक्तादयः यथा ब्राह्मणेन शूद्रायामुत्पादिता निषादी, सा ब्राह्मणेनोढा दुहितरं कांचिज्जनयति, साऽपि ब्राह्मणेनोढाऽन्यामित्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति। अम्बष्ठी साऽप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति। मूर्धावसिक्ताऽप्यनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणमेव जनयति। उग्रा क्षत्रियोढा माहिष्या च (यथाक्रमं षष्ठं पञ्चमं) क्षत्रियं च जनयति। तथा करणी वैश्योढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयम्।

+ भाच.

---

* ममु. गोरावत्। दीक. गोरागतम्।

\+ शेषं गोरागतम्।

$ अत्रत्यः कश्चिद्ग्रन्थस्त्रुटित इति कल्प्यते।

**[१]शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।**
**क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च।।**

(१) शूद्रो ब्राह्मणतामेतीत्युक्तोऽर्थः। ब्राह्मणश्चैति शूद्रताम्। ब्राह्मणोऽत्र पारशवो ब्राह्मणजातो विज्ञेयः। स चोक्तलक्षणशूद्रां यदि परिणयते तदाऽपकर्षं जन्मनि प्राप्नोति। तृतीये इति व्याचक्षते। यथोक्ते युगपरिवर्ते उत्कर्षं प्राप्ता यथा संस्कारैः कर्मभिश्चाधिक्रियन्ते। मेधा.

(२) एवमुक्तनीत्या शूद्रो ब्राह्मणतां प्राप्नोति। यदि पुनर्ब्राह्मणाच्छूद्रायां पुमानुत्पद्यते, स केवलशूद्रोद्वाहेन ततः पुमांसमेव जनयति, सोऽपि केवलशूद्रोद्वाहेनान्यं पुमांसमेव, तदा स ब्राह्मणः सप्तमां संततिं प्राप्तः शनैः शनैः बीजनिष्क(? क)र्षात्केवलशूद्रतां प्राप्नोति। सप्तमो जातः शूद्रः संपद्यते। एवं क्षत्रियवैश्याभ्यां शूद्राज्जा(? जा)तस्योत्कर्षापकर्षौ जानीयात्। किंतु जातितारतम्यात् क्षत्रियस्य पञ्चमे जन्मनि उत्कर्षापकर्षौ च, वैश्यस्य तृतीय इति व्याचक्षते। एवमनेनैव न्यायेन ब्राह्मणः(? णात्) वैश्याज्जा(? जा)तस्य तृतीयेन(? ये, न) वैश्याज्जा(? जा)तस्य च तृतीय एव। « गोरा.

(३) शूद्रतामेति यथा तदग्रे वक्ष्यति। क्षत्रियाद्वैश्याद्वा शूद्रायां जातोऽप्येवं सप्तमे युगे तूत्कर्षं लभते। तथा मूर्धावसिक्तादीनां तत्तत्सदृशविवाहपरंपरया पञ्चमपुरुषे प्रकृतिजातिलाभसिद्धिः। × मवि.

(४) एवं पूर्वश्लोकोक्तरीत्या शूद्रो ब्राह्मणतां याति ब्राह्मणश्च शूद्रतामेति। ब्राह्मणोऽत्र ब्राह्मणाच्छूद्रायामुत्पन्नः पारशवो ज्ञेयः। स यदि पुमान्केवलशूद्रोद्वाहेन तस्यां पुमांसमेव जनयति, सोऽपि केवलशूद्रोद्वाहेनापरं पुमांसमेव जनयति, सोऽप्येवम्, तदा स ब्राह्मणः सप्तमं जन्म प्राप्तः केवलशूद्रतां बीजनिकर्षात्क्रमेण प्राप्नोति। एवं क्षत्रियाद्वैश्याच्च शूद्रायां जातस्योत्कर्षापकर्षौ जानीयात्। किंतु

---

« मच. गोरागतम्।

× शेषं गोरागतम्।

(१) **मस्मृ.** १०।६५; **मेधा.** १०।६४ प्रथमचरणमात्रम्; **मभा.** ४।२२ तु (च); **स्मृकौ.** ३९; **दीक.** १।९६ श्चैति (श्चैव) उत्तरार्धं (क्षत्रियाद्ब्राह्मणत्वं च वैश्याज्जातस्तथैव च।।); **वीमि.** १।९६ पृ. १७३ (शूद्रायां ब्राह्मणाज्जातो ब्राह्मणोऽप्येति शूद्रताम्। क्षत्रियाज्जात एवं हि वैश्याज्जातस्तथैव च।।).

जातेरपकर्षात् 'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा' इति याज्ञवल्क्यदर्शनात् क्षत्रियाज्जातस्य पञ्चमे जन्मन्युत्कर्षापकर्षौ बोद्धव्यौ। वैश्याज्जातस्य ततोऽप्युत्कर्षात् याज्ञवल्क्येनापि वाशब्देन पक्षान्तरस्य संगृहीतत्वाद्वृद्धव्याख्यानुरोधाच्च तृतीयजन्मन्युत्कर्षापकर्षौ ज्ञेयौ। अनेनैव न्यायेन ब्राह्मणेन वैश्यायां जातस्य पञ्चमे जन्मन्युत्कर्षापकर्षौ, क्षत्रियायां जातस्य तृतीये, क्षत्रियेण वैश्यायां जातस्य तृतीय एव बोद्धव्यौ। * ममु.

(५) न केवलमनुलोमजानामेवायं न्यायः किंतु प्रतिलोमजानामपीत्याह — शूद्रो ब्राह्मणतामिति। 'श्रेयसा चेत्प्रजायते' इत्यनुकर्षः। ब्राह्मणश्चैति शूद्रतामश्रेयसा चेत्प्रजायत इत्यभिप्रायः। क्षत्रियाज्जातम् उग्रनामानम्। नन्द.

वर्णोत्पत्त्यनुषङ्गेण बीजक्षेत्रयोः
प्राशस्त्याप्राशस्त्यविचारः

**[१]बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः।
बीजक्षेत्रे तथैवान्ये तत्रेयं तु व्यवस्थितिः।।**

(१) यथा त्रय एते पक्षाः। तेषां कश्चित्पक्षः केनचित्परिगृहीतः। केचिदाहुः बीजमेव ज्यायः। तथा च ब्राह्मणाज्जातः क्षत्रियादिस्त्रीषु मातृजातित उत्कृष्टः। अन्ये पुनराहुः – क्षेत्रं श्रेष्ठम्, यतः क्षेत्रियो यत्र क्षेत्रे जातः तज्जातीयो भवति, तस्यैव च तदपत्यम्। अपरे मन्यन्ते – उभये बीजक्षेत्रे ज्यायसी। तदुक्तं 'सुबीजं चैव सुक्षेत्रे' (मस्मृ. १०।६९) इति। तदेतत्सर्वमा(? म)रोचयमान आह — तत्रेयं तु व्यवस्थितिः। इयम् अत्र निरूप्यावस्थितम्। मेधा.

(२) दर्शनान्तराण्य(पा ?)स्यैवार्थस्योपोद्बह(? दूबल) नार्थमाह – बीजमिति। केचित् बीजं स्तुवन्ति, यक्षा (? ऋष्या) द्युत्पन्नानामृष्यशृङ्गादीनामृषित्वदर्शनात्। अपरे पुनः सूरयः क्षेत्रं स्तुवन्ति, §समृद्धिदर्शनात्। तदेतस्यां पुनर्विप्रतिपन्नत्वात् इयं वक्ष्यमाणा व्यवस्था विज्ञेया। गोरा.

(३) बीजमेक इति विप्रतिपत्तेः संशयहेतोरभिधानम्। मवि.

(४) दर्शनान्तराण्युक्तस्यैवार्थस्य स्थैर्यार्थमाह – बीजमिति। केचित् पण्डिता बीजं स्तुवन्ति, हरिण्याद्युत्पन्नऋष्यशृङ्गादेर्ब्रह्ममुनित्वदर्शनात्। अपरे पुनः क्षेत्रं स्तुवन्ति, क्षेत्रस्वामिपुत्रत्वदर्शनात्। अन्ये पुनर्बीजक्षेत्रे उभे अपि स्तुवन्ति, सुबीजस्य सुक्षेत्रे समृद्धिदर्शनात्। एतस्मिन्मतभेदे वक्ष्यमाणेयं व्यवस्था ज्ञेया। # ममु.

(५) तत्र उभयप्रशंसावर्ण(न)विषये, उभयप्राशस्त्ये एव ब्राह्मणत्वाद्यङ्गीकारात्। क्षेत्रप्रशंसा मूर्धावसिक्तादिविषये, बीजप्रशंसा प्रतिलोमविषये। ते हि बीजदोषवशादधमा एवेत्युक्त्वा स(? त)द्विषयेऽपि बीजप्राधान्यप्रतिपादनाय तेनेदमुक्तम्। तथा च मनुरेव – 'जातो नार्याम्' (मस्मृ. १०।६७) इति। बाल. १।९१ पृ. २८२

**[२]अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति।
अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत्।।**

(१) अक्षेत्रे ऊषरे उत्सृष्टम् उप्तमपि बीजम् अन्तरैव अदत्त्वैव फलं नश्यति। अबीजकम् अयोग्यबीजकं वा क्षेत्रं स्थण्डिलमेव भवेत् खिलमेव। ततो न फलं लभ्यत इत्यर्थः। † मेधा.

(२) तस्मादुभयं प्रधानमिति न्याय्यम्। ‡ गोरा.

(३) अनिश्चये हेतुमाह – अक्षेत्र इति। अन्तरैव अङ्कुरोत्पादात्प्रागेव। मवि.

(४) अक्षेत्रे ऊषरादौ अन्तरा अङ्कुरमजनयित्वैव स्थण्डिलं सस्यानुत्पत्तिस्थलम्। मनुजपक्षे अन्तरालजातिर्भूत्वा विनश्यति संस्कारानर्हः। स्थण्डिलं योग्यपुत्राजनकम्। मच.

**[३]यस्माद्बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन्।
पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते।।**

(१) पूजिताः सर्वेण केनचित्( ?)प्रणम्यन्ते। प्रशस्ताः

---

* भाच. ममुगतम्।

§ हेतोरस्य संगत्यबोधात् तृतीयपक्षव्याख्यानाभावात् प्रायो गोरानुसारिममुव्याख्यानस्योपोद्बलकत्वाच्च अत्रत्यो ग्रन्थ उच्छिन्न इति निर्णीयते।

(१) **मस्मृ.** १०।७०; **मेधा.** १०।७२ चतुर्थचरणमात्रम्; **बाल.** १।९१ पृ. २८२ थैवा (था चा).

# मच., नन्द., भाच. ममुगतम्।

† भाच. मेधागतम्।

‡ शेषं मेधावत्। ममु. गोरावत्। नन्द. गोरागतम्।

(१) **मस्मृ.** १०।७१; **बाल.** १।९१ पृ. २८२.

(२) **मस्मृ.** १०।७२; **बाल.** १।९१ पृ. २८१.

स्तुतिवचनैः स्तूयन्ते तस्माद्बीजं विशिष्यते इति बीजप्राधान्यवादिनः। तदेतदयुक्तमित्युक्तम् – 'तत्रेयं तु व्यवस्थितिः' इति। अथवा बीजप्रभावेणेति न बीजप्राधान्यं दर्शितम्, अपि तु दूषणमेव। यदाशङ्क्यते – बीजप्राधान्यान्मन्दपालादीनां तिर्यग्जा ऋषय इति बीजप्राधान्यम्, तद्द(? दद)र्शनात्। न तत्र बीजप्राधान्येन तदपत्यानामृषित्वम्, अपि तु तपःश्रुतादिजेन प्रभावेण धर्मविशेषेण।

मेधा.

(२) बीजप्राधान्ये दृष्टान्तमाह – त(? य)स्मादिति। यस्मात् बीजमाहात्म्येन तिर्यग्जातिमातृजा अपि ऋष्यशृङ्गादयः संपन्नाः पूजिताश्च पादवन्दनादिभिः पूजाभिः प्रशस्ताश्च बालाः(? वाचा) संस्तुताः, तस्मात् बीजं कैश्चित् स्तूयत इति बीजप्राधान्यं पुनर्गमयत्वेन(? यित्वेदं) ज्ञापयति – तद्बीजयोन्योर्मध्यात् बीजोत्कृष्टजातिः प्रशस्यत इति। * गोरा.

(३) यद्येवं तथापि बीजस्यातिप्राधान्यात् बीजशुद्धिरेव ग्राह्येति स्वमतमुपसंहरति – यस्मादिति। तिर्यग्जा ऋष्यशृङ्गादयः पूजिता अभवन् प्रशस्ताश्च। ऋषय ब्रह्मर्षयः।

+ मवि.

(४) हरिण्यादिजाता ऋष्यशृङ्गादयस्तिर्यग्जाः प्रशस्ताः। अन्येषु सत्सु ऋषिषु दशरथयज्ञे ऋष्यशृङ्गः प्राशस्त्यं गतः। तिर्यग्जोऽपि संस्क्रियते, तज्जातेरपर्युदस्तत्वात्। 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति' इति शूद्रजातेः पर्युदस्तत्वान्न पारशवादेः संस्कार इति भावः।

मच.

जातिकर्मणी उभे
श्रेष्ठत्वहेतुः

**[१]अनार्यमार्यकर्माणमार्यं चानार्यकर्मिणम्।**
**संप्रधार्याब्रवीद्धाता न समौ नासमाविति।।**

(१) अनार्यः शूद्रः। सः आर्यकर्मा द्विजातिशुश्रूषादिरतः पाकयज्ञयाजी च देवद्विजनमस्कारपरः। आर्यः ब्राह्मणादिः, सः अनार्यकर्मा प्रतिषिद्धाचरणो विहितकर्मत्यागी। तावुभौ संप्रधार्य तद्गुणत्वेनावगम्य। तयोः किं कस्यचित्सातिशयो गुणः कस्याश्चित् वा अन्ते निरूपणबुद्धिः (?)। संप्रधार्य धाता प्रजापतिः मनुः बुद्ध्या निरूप्याब्रवीत्। न समौ जातेर्गरीयस्याः(? यस्त्वात्) उत्कृष्टगुणोऽपि शूद्रः तुल्यो न स्यात्। पुनराह – नासमौ। किं जात्या तूत्कृष्टयाऽपि बहुदोषावगृहीतस्य? एतदुक्तं भवति – न जातिबलमाश्रित्य नरो माननीयः, किंतु गुणा माननीयाः। न गुणहीनं जातिः परित्रातुमलम्, प्रायश्चित्तोपदेशवैयर्थ्यप्रसङ्गात्। 'अनार्यायां समुत्पन्नः' (मस्मृ. १०।६६) इत्यत आरभ्य यावदयं श्लोको वर्णसंकरनिन्दा कर्मप्रशंसार्थः(? र्था)। नात्र किंचिद्विधीयते प्रतिषिध्यते वा, नापूर्वार्थो ज्ञाप्यतेऽभिलक्षणवत्। तस्मात्प्रशंसार्था एवैते। मेधा.

२) शूद्रं द्विजातिकर्मकारिणं द्विजातिं च शूद्रकर्मकारिणं प्रजापतिर्विचार्य न समौ तौ नाप्यसमावित्याह। यतः शूद्रो द्विजातिकर्मापि न द्विजातिसमः, तस्य द्विजातिकर्मानधिकारे सति तत उत्कर्षाभावात्, निषिद्धाचरणेन च प्रत्यवायात्। द्विजातिरपि शूद्रकर्माणि आचरन् न शूद्रसमः, निषिद्धसेवने जातेऽपि महाभाग्यात् नाप्यसमोऽपि निषिद्धाचरणेनोभयोः पातित्यात्। तस्मात् यस्य (यत्) विहितं तत्तेन कर्तव्यमिति संकरपर्यन्तवर्णोपदेशः। « गोरा.

३) न समौ, जातितः एकस्योत्कृष्टत्वात्। नासमौ, उत्कृष्टजातेरपि ब्राह्मणादेः नीचकर्मकारित्वात्। तेन तस्येतरेण शुश्रूषादिकं न कर्तव्यमिति तात्पर्यार्थः।

× गृक. २७२

४) यथा क्षेत्रविशेषोत्पन्नत्वेऽपि बीजदोषान्न श्रेष्ठत्वं तथा दुष्टकर्मकरणादपि न श्रैष्ठ्यमित्याह – अनार्यमिति। अनार्यं व्रात्याद्युत्पन्नम् आर्यकर्माणं ब्राह्मणकर्मकर्तारम्। तथा आर्यम् व्रात्योत्पन्नमपि निन्दितकृष्यादिकरम्। न समौ ब्राह्मणैः सदृशौ, दोषसद्भावात्। नासमौ नात्यन्तमपकृष्टौ, ब्राह्मण्यभावात्। एवं च वृत्त्युत्कर्षे तेषामपि क्रमादुत्कर्ष इत्युक्तम्। अत एवाऽऽपस्तम्बो येषामप (? षां प) तितसावित्रीकाः पूर्वपुरुषाः केऽपि ज्ञायन्ते तेषामपि प्रायश्चित्त-

---

* ममु. गोरावत्।

\+ नन्द. मविगतम्।

(१) **मस्मृ.** १०।७३; **गृक.** २७२ कर्मिणम् (कर्मिणः); **गृर.** ४८१ चाना (वाऽना).

« ममु. गोरागतम्।

× गृर. गृकवत्।

पूर्वकं संस्कारं विहितवान्। एतदर्थमेव च 'आर्यं चानार्य-कर्माणम्' इत्यप्रकृतमप्युक्तम्। * मवि.

(५)अनधिकारिणा क्रियमाणं कर्म न फलायेति ज्ञापनार्थं चातुर्वर्ण्येषु प्रथमाध्यायाद्युक्ताः स्वधर्मवृत्तीः संस्मारयन्ना-पद्धर्ममाह – अनार्येत्याऽध्यायसमाप्तेः। अनार्यं क्षत्रियादि-भार्यकम् आर्यकर्माणं याजनादिकर्तारम्। आर्यं युद्धसेवा-दिकारिणम्। न समौ, कर्मणा जात्यन्तरानुत्पत्तेः। नासमौ, उभयोर्निषिद्धाचरणस्य तुल्यत्वात्, 'परधर्मो भयावहः' इत्युक्तेः। मच.

(६) अनार्यम् (अद्वि ?)जातितोऽपकृष्टम्। आर्यकर्माणं गुणतोऽविशिष्टम्। न समौ नातिविषमौ, अल्पान्तरा-वित्यर्थः। नन्द.

ब्राह्मणक्षत्रियविशां मुख्या वृत्तयः

**[1]ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः।**
**ते सम्यगुपजीवेयुः षट्कर्माणि यथाक्रमम्॥**

(१) आपद्धर्माणामुपोद्घातः। योनिः कारणम्। ब्राह्मणा ब्रह्मयोनिस्थास्ते षट्कर्माणि उपजीवेयुः अनुतिष्ठेयुः। अनेकार्था धातवः। यथाक्रमं यथाधिकारम्। यस्मिन्कर्मणि योऽधिकारी। कानिचिद्विध्यर्थानि कानिचित् दृष्टार्थानि। मेधा.

(२) इदानीमापद्धर्मविवक्षयेदमाह – ब्राह्मणा इति। §ये ब्राह्मणा ब्रह्मप्राप्तिकारणे आत्मज्ञानाभ्यासे व्यवस्थिताः ते षट् कर्माणि सम्यगनुतिष्ठेयुः। तानि च स्वकर्मानुष्ठान-निरताश्च ते षट् कर्माणि वक्ष्यमाण आत्मज्ञानाभ्यासे व्यवस्थिताः सम्यगनुतिष्ठेयुः। # गोरा.

(३) ब्रह्मयोनिस्थाः ब्राह्मणमातापितृजन्याः सम्यक् कृत्स्नानि षट् कर्माणि उपजीवेयुः अनुतिष्ठेयुः न तु व्रात्यादयः, तेषामध्ययनादावनधिकारात्। यथाक्रमं यथा-योगम्। मवि.

(४) विप्रस्य वृत्तीराह – ब्राह्मणा इति चतुर्भिः। ब्राह्मणाः ब्रह्म बुभूषवः। ब्रह्मयोनिस्था ब्रह्मयोनिजाः। मच.

(५) आपद्धर्मान्वक्तुमनापद्धर्मं पूर्वोक्तं संक्षिप्य सप्तभिः श्लोकैरनुभाषते – ब्राह्मणा ब्रह्मयोनिस्था इति। ब्रह्मयोनिः धर्म इति यावत्, तत्रस्थाः। अथवा वेदस्य योनित्वेन प्रवक्तृत्वेन स्थिताः। यथाक्रममित्यस्यायमर्थः – स्वयं नित्यं स्वाध्यायशीलः स्यादध्यापयेच्च, स्वयं यजेद्याजयेच्च, स्वयं दद्यात्प्रतिगृह्णीयाच्चेति। षट् कर्माणि वक्ष्यमाणानि। सम्यक् आपत्कल्पेन उपजीवेयुः अनुतिष्ठेयुः। नन्द.

(६) ते यथाक्रमं द्विजाः षट् कर्माणि षट्कर्मणा उपजीवेयुः। भाच.

**[1]अध्यापनमध्ययनं यजनं याजनं तथा।**
**दानं प्रतिग्रहश्चैव षट् कर्माण्यग्रजन्मनः॥**

(१) प्रथमेऽध्याये शास्त्रस्तुत्यर्थ एषां पाठः, इह तु विध्यर्थम्। यद्यपि तेषां केवलानां विधिरुक्तस्तथाऽपीह समस्य निर्दिश्यते सौहार्देन। विध्यन्तरसापेक्ष्य( ? क्ष)मेवेदं रूपम्, वचनाच्चैतेषां कर्मणाम्। अतो यथाविहितमनूद्य वक्ष्यमाणोऽर्थो विधीयते। + मेधा.

(२) अध्यापनादीनि षट् कर्माणि ब्राह्मणस्यानुष्ठेयानि। अध्ययनाध्यापने साङ्गस्य वेदस्य पाठशिष्यप्रवचने। यजन-याजने यागार्त्विज्ये*ते षट् कर्माणि। गोरा.

(३) अग्रजन्मा ब्राह्मणः। तत्र त्रीणि वृत्त्यर्थानि, त्रीणि धर्मार्थानि। स्मृच. २।४४९

(४) तानि कर्माण्याह – अध्यापनमिति। अध्यापना-ध्ययने साङ्गस्य वेदस्य, तथा यजनयाजने, दानप्रतिग्रहौ चेत्येतानि षट् कर्माणि ब्राह्मणस्य वेदितव्यानि। ममु.

---

* भाच. मविगतम्।

§ यथाश्रुतोऽयं ग्रन्थो लेखकादिभिः प्रमादेन व्याकुलीकृतः प्रतीयते। यथास्थितस्तु 'ये ब्राह्मणाः ब्रह्मप्राप्तिकारणे आत्मज्ञानाभ्यासे व्यवस्थिताः स्वकर्मानुष्ठाननिरताश्च ते षट् कर्माणि वक्ष्यमाणानि सम्यगनुतिष्ठेयुः।' इति कल्प्यते।

# ममु. गोरावत्।

(१) **मस्मृ.** १०।७४; **मर.** ९ कर्मण्य (धर्मेष्व); **शूशि.** १२ ब्रह्म (ये स्व) कर्मण्य (कर्मस्व) क्रमम् (क्रमात्); **बाल.** १।११८ पृ. ३६४.

\+ मवि. मेधागतम्।

* अत्रत्यो ग्रन्थस्त्रुटित इति प्रतीयते।

(१) **मस्मृ.** १०।७५; **गृक.** १६७; **स्मृच.** २।४४९ नमध्य (नं चाध्य); **गृर.** ४१४; **पमा.** १।१३५ श्चैव (श्चापि) शेषं स्मृचवत्; **मर.** ९; **निप्र.** २।२४० (=), २।२५२; **आत.** ३४९ स्मृचवत्, मनुव्यासबृहस्पतयः; **गप.** २१७ (=); **मुक्ता.** १८ श्चैव (श्चैति) शेषं स्मृचवत्; **विपा.** ३।२।२४६ (=); **बाल.** १।११८ पृ. ३६४.

(५) किंच – अध्यापनमिति। दानं स्वस्वत्वध्वंसपुरः-सरं पर(? रपर)स्वत्वापत्तिफलकम्। अग्रजन्मनः विप्रस्य। मच.

**'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।**
**याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः।।**

(१) कर्मत्रिकविभागः स्पष्टप्रयोजनः। एकं त्रिकं दृष्टार्थ-मुपात्तम्, सामर्थ्यात्। अन्यस्यादृष्टार्थता। विशुद्धः अपाप-कर्मा। एवं शूद्रोऽपि विशुद्धः प्राप्नोति। को भवतो मत्सरः? स्मृत्यन्तरविरोधः प्राप्नोति 'प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्च' (गौध. १७।१-२) इति। एवं तर्हि यथाऽविरोधो भवति तथा व्याख्येयम्। न ह्यविरोधे संभवति विरोधो न्याय्यः। अपि वाऽनुवाद एवायम्, 'राजतो धनमन्विच्छेत्' (४।३३) इत्येवमादावस्यार्थस्य विहितत्वात्। मेधा.

(२) एषामध्यापनादीनां षण्णां कर्मणां मध्याद्याजन-मध्यापनं 'प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्च' (गौध. १७।१-२) इति गौतमदर्शना-द्धार्मिकात् द्विजातेः प्रतिग्रह इत्येतानि त्रीणि कर्माणि जीवनार्थानि। † गोरा.

(३) विशुद्धः यदीयप्रतिग्रहे विशेषतो न प्रायाश्चित्तं समाम्नातम्। गृक. १६८

(४) जीविका जीवनोपायः। याजनाध्यापने शुद्धे अदुष्टे। विशुद्धः परिग्रहदोषरहितः। ‡ मवि.

(५) अनेनाध्ययनादीनि त्रीण्येव अवश्यकर्तव्यानि, न याजनादीनीत्युक्तं भवति। ¤ स्मृच. २।४४९

(६) एतच्च शालीनगृहस्थविषयम्। मर. १६८

(७) अत्र यद्यपि 'अध्यापन... प्रतिग्रहः।।' इत्यध्या-पनस्य जीविकात्वमुक्तम्, तेनास्य धर्मजनकत्वे मानाभावः, तथा शुश्रूषाविद्यान्तरप्राप्तिप्रत्युपकारादिकामनया क्रिय-माणस्य धर्मजनकत्वे मानाभावः, तथापि सर्वथा दृष्ट-फलाभिसंधानमन्तरेण परोपकारबुद्ध्या क्रियमाणस्या-ध्यापनस्य ब्रह्मलोकादि(स ?)फलार्थत्वं बोध्यम्। २।२४०-२४१

विशुद्धोऽत्र यदीयप्रतिग्रहे न विशेषतः प्रायश्चित्त-माम्नातम्। चशब्दाद्देशकालद्रव्यस्वरूपनिबन्धनदोषाभाव-रूपविशुद्धत्वं प्रतिग्रहविशेषणम्। § निप्र. २।२५३

(८) अतस्त्रिभिरेतैरेव कर्मभिर्द्रव्यार्जनं कर्तव्यम्। * आन. ५५३

**'त्रयो धर्मा निवर्तन्ते ब्राह्मणात्क्षत्रियं प्रति।**
**अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः।।**

(१) जीविकाकर्माण्येतानि क्षत्रियस्य न भवन्ति। यानि त्वदृष्टार्थानीष्ट्यध्ययनदानानि न निवर्तन्ते। वेदस्य च प्रकृतत्वादेतदध्यापनं निषिध्यते, न तु धनुर्वेदशिल्पकला-विद्यानाम्। मेधा.

(२)‡ब्राह्मणानपेक्ष्य क्षत्रियस्याध्यापनयाजनप्रतिग्रहा-ख्यानि त्रीणि वृत्त्यर्थानि कर्माणि निवर्तन्ते। एवं च सत्य-ध्ययनयागदानानि भवन्ति। † गोरा.

(३) ब्राह्मणस्य इमे ब्राह्मणाः। + गृक. २५१

(४) (ब्राह्मणानां?) ब्राह्मणसंबन्धिनां धर्माणां मध्ये याजनाध्यापनप्रतिग्रहाः। याजनाध्यापनप्रतिग्रहाणां रक्षायुद्धा-

---

† ममु., मच., नन्द. गोरागतम्।

‡ गृर. मविगतम्।

(१) **मस्मृ.** १०।७६; **मेधा.** १०।८२ उत्त.; **मिता.** १।११८; **मभा.** ७।१; **गृक.** १६८ शुद्धाच्च (शुद्धश्च) व्याख्यानात्तु 'विशुद्धाच्च' इत्येव पाठः; **मवि.** चैव (शुद्धे); **स्मृच.** २।४४९ चतुर्थचरणे (विशिष्टाच्च परिग्रहः); **गृर.** ४१४ ने चैव (नं चैव); **पमा.** १।१४०; **मपा.** २१५; **आपा.** ११० णामस्य (णां मध्ये) द्धाच्च प्र (द्धान्यप्र); **मर.** १६७-१६८ तृतीयचरणे (यजनाध्ययने चैव); **निप्र.** २।२४० (=), २।२५३; **आत.** ३४९ णामस्य (णां मध्ये) मनुव्यासबृहस्पतयः; **गप.** २१७ (=); **चमव्याआ.** ३७; **मुक्ता.** १८; **संम.** ७७; **विपा.** ३।२।२४६:४।११ णामस्य (णां यस्य); **आन.** ५५३ णामस्य (णां मध्ये) पू. मन्वादयः; **इन्दु.** १९८.

---

¤ मुक्ता. स्मृचवत्।

§ गप. निप्रगतम्।

* शेषं गोरागतम्।

‡ मूले 'ब्राह्मणात्' इति ल्यब्लोपे पञ्चमीत्यर्थः।

† ममु. गोरावत्। भाच. गोरागतम्।

+ मवि., गृर., बाल. गृकवत्।

(१) **मस्मृ.** १०।७७; **गृक.** २५१ णात्क्ष (णाः क्ष); **मवि.** गृकवत्; **स्मृच.** २।४४९; **गृर.** ४६९ गृकवत्; **पमा.** १।३०८ वर्तन्ते (वर्तेरन्); **मर.** ९; **मुक्ता.** ६४; **आन.** ६३७; **बाल.** १।११९ पृ. ३६६ गृकवत्.

नामिव तेषां जीविकात्वेऽपि धर्मत्वनिवृत्त्यभावख्यापनार्थं धर्मा इत्युक्तम्। नन्द.

**[१]वैश्यं प्रति तथैवैते निवर्तेरन्निति स्थितिः।**
**न तौ प्रति हि तान्धर्मान्मनुराह प्रजापतिः।।**

(१) पूर्वेणैतद्व्याख्यातम्। तौ क्षत्रियवैश्यौ प्रत्येतेऽध्यापनादयो धर्मा मनुना प्रजापतिना नोक्ताः, न स्मृता इत्यर्थः। मेधा.

(२) यथैव क्षत्रियस्याध्यापनयाजनप्रतिग्रहा निवर्तन्ते एवं वैश्यस्यापीति शास्त्रव्यवस्था। यस्मान्मनुः प्रजापतिः क्षत्रियवैश्ययोरेतानि वृत्त्यर्थानि कर्माणि कर्तव्यत्वेन (न) स्मृतवान्। एवं च वैश्यस्याप्यध्ययनयागदानानि भवन्ति। † गोरा.

**[२]शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः।**
**आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः।।**

(१) इदं तयोर्जीविकाकर्म। शस्त्रं खड्गादि। अस्त्रम्, तन्मन्त्राः धनुर्वेदप्रसिद्धाः। अयमप्युक्तानुवाद एव। वणिक्पशुशब्दौ कर्मान्तर्भावेन प्रयुक्तौ, वणिज्या पशुपालनं च। यद्यप्यध्ययनादिधर्माः सर्वेषां सन्ति तथापि प्राधान्यमेतेषाम्। ‡ मेधा.

(२) वृत्त्यर्थत्वेन रक्षणार्थं खड्गाद्यायुधप्रहरणमन्त्रधारणं क्षत्रियस्य, वाणिज्यपशुपालनकर्षणानि वैश्यस्य जीवनार्थानि। अदृष्टार्थाः पुनरनयोर्दानाध्ययनयागा भवन्ति। * गोरा.

(३) शस्त्रं खड्गादिक(म)मुक्तम्। अस्त्रं शरादि मुक्तम्। तद्धारणं न (? च)तत्साध्यं द्रव्यादिकं लक्षयति। तदाजीवनार्थं क्षत्रस्येत्यर्थः। वणिक् वाणिज्यं पशुः पाशुपाल्यम्। वणिक्पशुकृषीरिति प्रथमाबहुवचने पूर्वसवर्णेन छान्दसं रूपम्। एतच्च सर्वत्र(? सर्वं) (यागो ?) जीवनार्थम्। धर्मः धर्मसाधनम्। यजिः यागः। मवि.

(४) शस्त्रास्त्रभृत्त्वं प्रजापालनद्वारेण जीवनार्थम्। * स्मृच. २।४४९

**[१]वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम्।**
**वार्ताकर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु।।**

(१) वेदाभ्यासः वृत्तिप्रकरणादध्यापनम्। एवं विशिष्टानि स्वकर्मसु। शास्त्रीयवृत्तिकर्मसु अन्येभ्यो जीवनकर्मभ्य इमानि श्रेयस्करतराणि। मेधा.

(२) वेदाभ्यास इति। वृत्त्यर्थाभ्यां सहोपदेशात् अध्ययनस्य समानत्वात् वेदाभ्यासः अध्यापनं ब्राह्मणस्य, लोकसंरक्षणं क्षत्रियस्य, कृषिवाणिज्यपाशुपाल्यं वैश्यस्य इत्येतानि एषां वृत्त्यर्थत्वेऽपि सति अदृष्टजनकत्वात् स्वकर्ममध्ये प्रशस्तानि। + गोरा.

(३) वेदाभ्यासः सदा जप्यपरता। वार्ताकर्म वार्तया कृष्या अर्जितेन धनेन कर्म दानयागकर्म, न तु वार्तारूपं तस्य कर्म, जीविकात्वात् स्वाध्यायसमभिव्याहार(? रा)योगात्। मवि.

ब्राह्मणस्याऽऽपदि क्षत्रवृत्तिस्तदभावे वैश्यवृत्तयः,
क्षत्रियस्याऽऽपदि वैश्यवृत्तयः, तत्र
कृषिविषये मूले व्याख्यानेषु
च मतभेदाः

**[२]अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।**
**जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः।।**

(१) यदाऽस्य शरीरकुटुम्बनित्यकर्मावसादो भवति, न तेभ्यः पर्याप्तं धनं भवति, तदाऽयम् अजीवन् इत्युच्यते।

---

† ममु. गोरावत्। मवि., मच., नन्द., भाच. गोरागतम्।
‡ पमा. मेधागतम्।
* ममु. गोरावत्। मच., नन्द., भाच. गोरागतम्।

(१) **मस्मृ.** १०।७८; **गृक.** २५१ वैते (वेते); **स्मृच.** २।४४९ वैते (वेति) पू.; **गृर.** ४६९; **पमा.** १।३०८ गृकवत्, पू.; **मर.** १० थैवैते (थैतानि) प्रति हि (प्रति ह); **मुक्ता.** ६४ वैते (वेते) पू.; **आन.** ६३७ मुक्तावत्; **बाल.** १।११९ पृ. ३६६.

(२) **मस्मृ.** १०।७९; **मेधा.** १०।८२ कृषिर्वि (कृषीर्वि); **गृक.** २५१; **मवि.** मेधावत्; **स्मृच.** २।४४९; **गृर.** ४६९; **पमा.** १।३०८ पू.; **मर.** १० (शस्त्रार्थभृत्त्वं क्षत्रस्य) एतावदेव; **मच.** कृषिर्वि (कृषी वि).

* शेषं गोरागतम्।
+ गृक; ममु., गृर., मच., नन्द., भाच. गोरागतम्।

(१) **मस्मृ.** १०।८०; **गृक.** २५१ च (तु); **गृर.** ४६९ द्वितीयपादे (रक्षणं क्षत्रियस्य च) वार्ता (वार्ताः); **बाल.** १।११९ पृ. ३६६ गृकवत्.

(२) **मस्मृ.** १०।८१; **स्मृच.** २।४६९; **गृर.** ४२४; **मपा.** २३१ न्तरः (न्तरम्); **मर.** १८० **मुक्ता.** ६०; **संम.** ७७ यथोक्तेन (स्वधर्मेण); **वीमि.** १।९६; **आन.** ६३३; **बाल.** ३।३५ ह्यस्य (त्वस्य).

यथोक्तेन अध्यापनादिना। तदा क्षत्रियवत् ग्रामनगररक्षादिना शस्त्रास्त्रधारणेन, सति संभवे सर्वाधिपत्येन जीवेत्। जीवतिर्व्याख्यातार्थः शरीरमात्रसंधारणे न वर्तते। किं तर्हि? कुटुम्बस्वक( ? स्य क)र्माणि नित्यकर्मावस्थिता( ? ति)मपि लक्षयति। स ह्यस्य प्रत्यनन्तरः। अनन्तर एव प्रत्यनन्तरः। हेतुवचनात् व्यवहितवृत्तिः पापकारी। * मेधा.

(२) एवं नैसर्गिकं स्वधर्ममेषामुक्त्वाऽधुनाऽऽपद्धर्ममाह – अजीवन्निति। उक्तरूपेण पुनरध्यापनादिना स्वकर्मणा ब्राह्मणः कुटुम्बस्थितिनित्यकर्मानुष्ठानपूर्वकमजीवन् क्षत्रियकर्मणा ग्रामरक्षणनगरादिना जीवेत्, यस्मात् सोऽस्य संनिकृष्टवर्णनोदितत्वात् संनिकृष्टा वृत्तिः। # गोरा.

(३) अनापद्वृत्तिरुक्ता। आपद्वृत्तीः प्रस्तौति – अजीवन्निति। प्रत्यनन्तरः अनन्तरतः प्र( ? रः तत्प्र)तिनिधिः। मवि.

(४) यथोक्तेन याजनाध्यापनप्रतिग्रहेण। पूर्वस्य पूर्वस्य प्राशस्त्यार्थम्। प्रत्यनन्तरः प्रातिलोम्यवृत्तावप्यव्यवहितः, संनिधेरपि मानत्वात्। मच.

(५) पुनः स्वकर्मग्रहणं विगुणकर्मसंग्रहार्थम्। एतदुक्तं भवति – यथोक्तैः प्रतिग्रहादिभिरजीवन् दुष्प्रतिग्रहादिकमपि कुर्यात्, न त्वन्यवृत्तिम्। यथोक्तं भगवता – 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।।' (भगी. ३।३५, १८।४७) इति। मनुरपि – 'वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्माश्रयाद्विप्रः सद्यः पतति जातितः।।' (मस्मृ. १०।९७) इति। तेनाप्यजीवन्क्षत्रवृत्त्या, तथा( ? या)ऽप्यजीवन् वैश्यवृत्त्या। संम. ७७-७८

**'उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्। कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्।।**

(१) स्ववृत्तिपरित्यागेऽपि नैवं मन्तव्यम् – शास्त्रातिक्रमः कृतः, तत्र न विशेषो वैश्यशूद्रेष्वपीति। तथा चाऽऽह – उभाभ्यामप्यजीवंस्तु इति। क्रमोऽनेन प्रदर्श्यते। प्रथममनन्तरा वृत्तिः, तदभावे व्यवहितेति। कृषिगोरक्षा( ? क्ष)ग्रहणं वैश्यवृत्तिमात्रप्रदर्शनार्थम्। तथाच वणिज्यायामविक्रेयप्रतिषेधं वक्ष्यति। जीवेद्वैश्यस्य जीविकामिति। सामान्यविशेषभावेन क्रियायाः साध्यसाधनभावः प्रागुपपादितः। तत्र "कृषिवाणिज्यकुशीदान्यनापद्येवोक्तान्यध्यापनादिवत् 'प्रमृतं कर्षणं स्मृतम्'। 'सत्यानृतं तु वाणिज्यम्' इति (तु ?)§(इति) केचिदाहुः। 'कृषिवाणिज्ये चास्वयंकृते। कुसीदं च' (गौध. १०।५-६) इत्युक्तम्। स्वयंकरणमत्राभ्यनुज्ञायते"। यत्त्वध्यापनादिवदिति साम्यमाशङ्कितम्, अत्रैव परिहृतम्। यदि सर्वेषां कृष्यादयः समत्वेन स्युः, कथमिदमुच्यते – 'वणिक्पशुकृषीर्विशः। आजीवनार्थम्' (मस्मृ. १०।७९)? ब्राह्मणक्षत्रिययोरपि नाऽऽ( ? आ)जीवनार्थस्तदा( ? र्थं तदा)। किंच 'याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः' (मस्मृ. १।७६) इत्यत्र तान्यपि समाख्यास्यत्। तस्मादध्यापनादिनियमैर्जीवतः कृष्यादयः प्रतिषिद्धा एव। यस्तु प्रकरणादन्यत्रैषामुपदेशः स तत्रैव प्रदर्शितप्रयोजनः। मेधा.

(२) ब्राह्मणक्षत्रियवृत्तिभ्यामपि अजीवन् ब्राह्मणः केन प्रकारेण वर्तेत? इति यदि संशयः स्यात्तदा कृषिगोरक्षणे आश्रित्य वैश्यवृत्तिमनुतिष्ठेत्। कृषिगोरक्षग्रहणं वाणिज्याया अपि प्रदर्शनार्थम्। तथा च विक्रेयाविक्रेयाणि वक्ष्यति। स्वयंकृतं चेदं ब्राह्मणस्याऽऽपदि कृष्याद्युच्यते, अस्वयंकृतस्यानापदि 'ऋतामृताभ्यां जीवेत' (मस्मृ. ४।४) इत्यादिनाऽभ्यनुज्ञानात्। $ गोरा.

(३) उभाभ्यां स्वस्वानन्तरवृत्तिभ्याम्। जिज्ञासा‡। गोरक्षं कृष्यर्थगोरक्षणम्। *कृषिरत्रास्वयंकृता। मवि.

---

* गृर. मेधागतम्।

\# स्मृच., ममु. गोरावत्। नन्द., भाच. गोरागतम्।

(१) **मस्मृ.** १०।८२; **मिता.** ३।३५; स्मृच. २।४७० रक्ष (रक्ष्य); **गृर.** ४२४ मास्था (मादा); **पमा.** १।४२६; **मपा.** २३२; **मर.** १७६-१७७, १८०; **मुक्ता.** ६० स्मृचवत्; **वीमि.** १।९६ गृरवत्; **आन.** ६३३; **नन्द.** गोरक्ष (गौरक्ष्य).

§ अत्र 'कृषिवाणिज्यकुशीदा' इत्यादिः 'भ्यनुज्ञायते' इत्यन्तो ग्रन्थः केषांचिन्मतस्यानुवादः। अतस्ततः परमेव 'इति केचिदाहुः' इति पदैर्भाव्यम्। अनुवादमध्येऽत्र तेषामवस्थितिः प्रामादिक्येव।

$ ममु. गोरावत्। भाच. गोरागतम्।

‡ अत्र ग्रन्थस्त्रुटित इति भाति।

* पूर्वं सर्वज्ञनारायणेन 'प्रमृतं कर्षणं स्मृतम्' (मस्मृ. ४।५) इतिश्लोकांशव्याख्याने कृषिवाणिज्ययोरनापत्कालीनमुख्यवृत्तित्वमुक्त्वा, 'कृषिवाणिज्ये वा स्वयंकृते कुसीदं वा' इतिगौतमवचनानुरोधेन पूर्वश्लोकगतापिशब्दात् तत्र कुसीदमपि ग्राह्यमिति केषांचिन्मतमुक्तं तत्र निराकृतं च। तत्र गौतमवचने 'वा स्वयंकृते' इत्यकारप्रश्लेषचिह्नरहिते विच्छिन्ने पदे द्वयोरप्यस्मदीयादर्शपुस्तकयो-

(४) उभाभ्यां ब्राह्मणक्षत्रियवृत्तिभ्यामपि अजीवन्वैश्य-वृत्तिकामास्थाय जीवेत्, न शूद्रस्येत्यर्थः।

स्मृच. २।४७०

(५) जीविकामिति 'अग्निहोत्रं जुहोति' इतिवत् प्रत्य-वाय(? प्रत्ययार्थ)कृत्यपेक्षया कर्मत्वम्। † गृर. ४२५

(६) यत्तु मनुना कृषेरापद्धर्मत्वमुक्तम् 'उभाभ्याम.... जीविकाम्।' इति तद्युगान्तरविषयम्, 'अतः परं गृहस्थस्य कर्माचारं कलौ युगे। धर्मं साधारणं शक्त्या चातुर्वर्ण्या-श्रमागतम्। तं प्रवक्ष्याम्यहं श्रोतुं (? पूर्वं) पा(? प)राशरवचो यथा।।' (पस्मृ. २।१-२) इत्युपक्रम्य मध्ये कृषिमभिधायान्ते 'चतुर्णामपि वर्णानामेष धर्मः सनातनः' (पस्मृ. ५।२०) इत्युपसंहरता पराशरेण कलौ ब्राह्मणादीनां कृषेर्मुख्यवृत्ति-त्वस्याभिधानात्। १७६-१७७

अत्र कृषिः स्वयंकृता बोद्धव्या, 'स्वयं वा कर्षणं कुर्याद्वा-णिज्यं वा कुशीदकम्' इत्यापद्वृत्तिप्रकरणे कूर्मपुराणेऽभि-धानात्। मर. १८०

(७) उभाभ्यां (स्व)धर्मक्षत्रधर्माभ्याम्। इति भवेच्चेत् इति वः प्रश्नो भवेच्चेत् शृणुतेत्यर्थः। कृषिगोरक्ष (? गौरक्ष्य) शब्दो वाणिज्यस्याप्युपलक्षणार्थः, गां रक्षतीति गोरक्षः तस्य कर्म गौरक्ष्यम्। नन्द.

---

मुंद्रिते स्तः। तत्र विकल्पः – सोऽयं सर्वव्याख्यातृविप्रतिपन्नः 'स्वयंकृते' इति पाठ एव सर्वज्ञस्याभिमतः, उत सर्वसंप्रतिपन्नः 'अस्वयंकृते' इति। प्रथमकल्पे कृषेः स्वयंकरणास्वयंकरणविषये सर्वज्ञस्य व्याख्यानेषु आपाततः संगतिः फलतो विरोधश्च प्रतीयते। तथाहि – आपद्वृत्तिरूपायाः कृषेरस्वयंकृतत्वमत्र व्याख्यातं तेन व्याख्यानेन संगच्छते। तथा 'स्वयंकृतायां दोषमाह' इत्यग्रिम-श्लोकावतरणिकारूपं व्याख्यानमप्यनेन संगच्छते। एवमापाततः परस्परसंगतमपि व्याख्यानत्रयमिदम् 'स्वयंकृता कृषिरनापद्वृत्तिश्च आपद्यपि दुष्टा च' इति विरोधं फलति। यदि तु पूर्वव्याख्याने गौतमवचने मुद्रणं प्रामादिकं मत्वा द्वितीयकल्पः स्वीक्रियते, तदेदं व्याख्यानं न युज्यते, एकरूपायां कृषौ आपद्वृत्तित्वाना-पद्वृत्तित्वयोर्विरोधात्। तदनुरोधेनात्र 'स्वयंकृता' इति शुद्धकल्पने उत्तरश्लोकावतरणिकाविरोधः। तत्रापि 'अस्वयंकृतायाम्' इति शुद्धिकल्पने पूर्वकल्पोक्तवद्विरोधः। किंच, अनापद्वृत्तौ 'प्रमृतम्' इत्यन्वर्थसंज्ञया कृषेर्हिंसाप्रायत्वस्याङ्गीकृतस्यैवोत्तरश्लोके आपद्यपि कृषिवर्जने हेतुत्वं नोपपद्यते।

† शेषं गोरागतम्।

'*वैश्यवृत्त्याऽपि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा।**
**हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत्।।**

(१) कृषिनिन्दा इतरवैश्यवृत्तिस्तुत्यर्था, न पुनस्तस्याः प्रतिषेधार्था। तथा च सति उपदेशो व्यर्थोऽस्या आपद्यते। मेधा.

(२) बलाबलमधुना कृष्यादेः प्राह – वैश्यवृत्त्येति। ब्राह्मणः क्षत्रियो वा वैश्यवृत्त्याऽपि जीवेत्(? जीवन्) 'भूमिं भूमिशयांश्च हन्ति' इति वक्ष्यमाणया नीत्या हिंसाबहुलां बलीवर्दाद्यायत्तां कृषिं परिहरेत्। अतः गोरक्षाभावे इयं कार्या इत्यपि गम्यते। 'क्षत्रियोऽपि वा' इत्युपादानात् क्षत्रियस्यापि स्ववृत्त्यभावे वैश्यवृत्तिरस्तीति गम्यते। + गोरा.

(३) स्वयंकृतकृषिविषयश्चायं निषेधः। यत आहाऽऽ-पद्धर्मेषु गौतमः – 'कृषिवाणिज्ये अस्वयंकृते, कुसीदं च' इति। # अप. ३।४१ पृ. ९३७

(४) स्वयंकृतायां दोषमाह – वैश्यवृत्त्येति। पराधीनाम् अनेकोपकरणसीतादिसंपाद्याम्। § मवि.

(५) $'वैश्यस्य जीविकामास्थाय' इत्युक्तेः कृष्यादेः चतुष्टयस्य प्राप्तत्वेन कृषिमनूद्य निषेधति – वैश्येति। हिंसाप्रायां हिंसा प्रायेण बाहुल्येन यत्र ताम्। पराधीनां हलवृष्टिकर्षकाद्यधीनाम्। मच.

(६) कलौ कृषिः कर्तव्यैव, 'षट्कर्मनिरतो विप्रः कृषिकर्म च कारयेत्' इति पराशरस्मरणात्। यत्तु मनुवचनम् – 'हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत्।' इति, तद्युगान्तरविषयम्। यतो बृहस्पतिः – 'कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम्। आपत्काले स्वयं कुर्वान्नैनसा युज्यते

---

* अस्य अग्रिमस्य च श्लोकस्य पमाव्याख्यानं 'षट्कर्म' (पस्मृ. २।२) इति वचने द्रष्टव्यम्।

+ ममु. गोरवत्। गृर. गोरागतम्।

# मर. अपवत्।

§ भाच. मविगतम्।

$ नेदं व्याख्यानं मनोहरम्। अनेन हि पूर्ववचनप्रकृतवचन-योरुत्सर्गापवादभावः प्रतीयते। न स युज्यते, पूर्ववचने 'कृषिगोरक्षम्' इति कृषेः स्वशब्देनैव विधानात्। तस्मात् पूर्वोत्तरवचनयोर्विरोधस्य भासमानत्वेन व्यवस्थैव वाच्या।

(१) **मस्मृ.** १०।८३; **अप.** ३।४१; **गृक.** १९१; **स्मृच.** २।४७०; **गृर.** ४२९ वृत्त्याऽपि (वृत्त्या तु); **पमा.** १।४२६ प्रायां (भयात्) शेषं गृरवत्; **मर.** १७६ उत्त; **मुक्ता.** ६२ उत्त.; **आन.** ६३४ उत्त.

द्विजः।।' इति। तस्मादनापदि कारयितृत्वम्, आपदि कर्तृत्वं चाभ्युपगतम्। आन. ६३४

(७) पराधीनां स्वयमेकेन कर्तुमशक्याम्। नन्द.

**'कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता।**
**भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्।।**

(१) कृषिं लोकाः साध्वेव कर्मेति मन्यन्ते। यदुक्तम् 'कर्षतः पुरुषस्य बहु धान्यं भवति, ततोऽतिथ्यादिभ्योऽन्नदानेनोपकरोति'। अतः साध्वी। तथा चोक्तम् – 'नाकृष्यतोऽतिथि( ? थिः) प्रियः' 'कृषिं यत्नेन कुर्वीत मौर्व्या सर्वत्र यत्नतः।' तथा 'लाङ्गलं पवीरवं सुशेवं सुमतित्सरु। उदित्कृषति गामविं प्रफर्व्यं च पीवरीम्' (तैसं. ४।२।५।६) इत्यादि। ते न सम्यक् मन्यन्ते। सा हि वृत्तिः सद्भिर्निन्द्यते। कस्य हेतोः? भूमिं हन्ति काष्ठमयोमुखं लाङ्गलम्। भूमिशयांश्च भूमौ शेरते ये प्राणिनस्तृणजलूकादयः तांश्च हन्ति। ननु च भूमेः कीदृशं हननम्? न हि सा प्राणिवत्काष्ठहत्यापीडामनुभवति। अनुभूतं तु सर्वैर्विदारणं भूमेर्दोषवदिति ज्ञापयति। मेधा.

(२) कृषिः साध्वि( ? ध्वी)तीति। कृषिर्युक्तरूपेति केचिन्मन्यन्ते। सा पुनर्जीविका साधुभिर्निन्दिता। यस्माद्धलकुद्दालाद्ययःप्रान्तं काष्ठं भूमिं बिलनिवासिनश्च प्राणिनो हन्ति। † गोरा.

(३) इयं च कृषिर्विगर्हिता इतरवैश्यवृत्त्यसंभवे द्रष्टव्या। गृक. १९१

(४) भूमिं भूमिदेवताम्। मवि.

(५) भूमिशयान् भूम्याधारशायिकीटादीन्। अयोमुखं फालवत्। गृर. ४२९

(६) तद्दोषसहिष्णुं प्रत्याह – कृषिमिति। भूमिशयान् प्राणिनः। अयोमुखं फलाकारादि अयो मुखे यस्य तत् लाङ्गलमित्यर्थः। अत एव कुद्दालाद्यपि गृहीतम्। मच.

(७) हिंसाप्रायतां प्रपञ्चयति – कृषिं साध्विति मन्यन्त इति। काष्ठं काष्ठमयं हलादिकम्। तेन वाणिज्याद्यभावे कृषिः कर्तव्येति सूचितम्। नन्द.

† ममु. गोरावत्। भाच. गोरागतम्।

(१) **मस्मृ.** १०।८४; **मेधा.** ४।९ द्वितीयचरणमात्रम्; **गोरा.** कृषिं (कृषिः); **अप.** ३।४१; **गृक.** १९१; **स्मृच.** २।४७०; **गृर.** ४२९; **पमा.** १।४२६; **मर.** १७६ पू.; **मुक्ता.** ६२ उत्त.

**'इदं तु वृत्तिवैकल्यात्त्यजतो धर्मनैपुणम्।**
**विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्धनम्।।**

(१) इदमिति वक्ष्यमाणस्य प्रतिनिर्देशः। विशः पण्यं विट्पण्यं वैश्यानां यद्विक्रेयं तदपि वृत्ति( ? वित्त)वैकल्यात् धनाभावात् ब्राह्मणेन विक्रेयम्। उद्धार्याणि द्रव्याण्युद्धारशब्देनोच्यन्ते। उद्धृत उद्धारो यस्मिन् तदेवमुच्यते। वक्ष्यमाणानि द्रव्याणि अत उद्धृत्यान्यानि विक्रेयाणि। वित्तवर्धनमिति स्वभावानुवादः। वाणिज्यायां हि धनवृद्धिः प्रसिद्धा। त्यजतो धर्मनैपुणं धर्मे या निष्ठा। अतस्तेन पण्यविक्रयो न कर्तव्य इति ज्ञापयति। अतश्चेदमवगम्यते – सर्वासां वैश्यवृत्तीनां गर्हिततरा कृषिः, ततो न्यूना वाणिज्या, ततो गोरक्षा। मेधा.

(२) इदमिति। ब्राह्मणस्य क्षत्रियस्य वा स्ववृत्त्या अजीवतो धनाभावाद्धर्मं प्रति निष्णातत्वं त्यजतो वैश्येन यद्विक्रेतव्यं तत् (वर्जित?) वक्ष्यमाणवर्जनीयं( ? नीयवर्जितं) धनवृद्धिकरं विक्रेतव्यम्। ‡ गोरा.

(३) विट्पण्यं विशां पण्यम्। उद्धृतोद्धारम् उद्ध्रियत इति उद्धारः मांसादि तदुद्धृतम् (यस्मात्)। गृक. २००

(४) इदं वक्ष्यमाणं वित्तवैकल्याद्वित्ताभावात् धर्मनैपुणं धर्मवृत्तिं स्वजीविकां त्यजतो विप्रस्य क्षत्रियस्य च विट्पण्यं वैश्यविक्रेतव्यं तत् गतो( ? उद्धृतो)द्धारं त्यक्तत्याज्यं त्यक्तपातित्यहेतुरसादि विक्रेयमित्यर्थः। ¶ मवि.

(५) धर्मनैपुणं स्वधर्मरक्षणकौशलम्। §गृर.४३४

(६) यज्वनः कुटुम्बिनो विप्रस्य वित्तवर्धनोपायमाह– इदमिति। वृत्तिवैकल्यात् वृत्त्यभावात् धर्मनैपुणं स्वधर्मनिष्ठां त्यजतो विप्रस्य त्रयमिदं विट्पण्यं वैश्येन यद्विक्रीयते। तेन चर्मपादुकादिव्यावृत्तिः। उद्धृतोद्धारं विक्रेयं विनिमेयम्। राजदण्डविशिष्टं कुसीदं च। मच.

‡ ममु. गोरावत्। नन्द., भाच. गोरागतम्।

¶ बाल. मविवत् गृरवच्च।

§ शेषं गोरागतम्।

(१) **मस्मृ.** १०।८५; **मेधा.** वृत्ति (वित्त); **गोरा.** मेधावत्; **गृक.** १९९ वृत्ति (धर्म) वित्त (वृत्ति); **मवि.** मेधावत्; **गृर.** ४३३ वित्त (वृत्ति); **भाच.** वृत्तिवैकल्या (वित्तवैकल्या); **बाल.** १।११९ पृ. ३७१ तु (च).

ब्राह्मणस्याविक्रेयाः पदार्थाः, कृषीवलस्य तिलविक्रयानुज्ञा, अविक्रेयविक्रय-दुष्फलानि, विनिमेयाः पदार्थाः

**'सर्वान् रसानपोहेत कृतान्नं च तिलैः सह।**
**अश्मनो लवणं चैव पशवो ये च मानुषाः।।**

(१) मधुरादयः षड्रसाः। तत्प्रधानानि द्रव्याणि गुडदाडिमकिराततिक्तकादीनि प्रतिषिध्यन्ते। न हि केवलानां रसानां संभवः। यद्यपि रसशब्दो न स्वयं द्रव्ये शुक्लादिशब्दवद्वर्तते सामानाधिकरण्येन, तथाऽपि लक्षयति द्रव्यम् 'गङ्गायां घोषः' इति यथा। अपोहेत त्यजेत्। न विक्रीणीयादिति यावत्। कृतान्नं सिद्धमन्नमोदनादि, तण्डुलादि च (? न)। तिलैः सह तिला अपि न विक्रेयाः। न तु पुनस्तिलकृतान्नयोः सहप्रयुक्तयोः प्रतिषेधः, केवलयोरभ्यनुज्ञानम्। अश्मानः सर्वपाषाणाः। लवणम् अपाषाणरूपमपि। सैन्धवस्य पाषाणशब्देन ग्रहणम्। रसपक्षे लवणस्य नित्यार्थ आरम्भः। तेन मधुरादीनां पाक्षिको विक्रयः। पशवो ग्राम्या आरण्याः। मानुषाः मनुष्याः। * मेधा.

(२) तानि वर्जनीयान्याह – सर्वानिति। सर्वान् खण्डादीन् रसान् तथा सिद्धान्नतिलपाषाणपशुलवणमनुष्यान् न विक्रीणीत। लवणस्य रसशब्देनैव ग्रहणसिद्धौ पृथग्वचनं दोषविशेषज्ञापनार्थम्। एतेनान्यस्यापि पृथगाम्नानं व्याख्यातम्। + गोरा.

(३) तदेवाऽऽह – सर्वानिति। रसान् पत्रकाष्ठादिनिर्यासान् अपोहेत विक्रये त्यजेत्। न विक्रीणीतेत्यर्थः। अश्मनः उपलान्। पशवः छागाः ये च मानुषाः, तानिति पूरणीयम्। मवि.

(४) तानि वर्जनीयान्याह – सर्वानिति। सर्वानचोद्यमानानधर्मान्(?) यथा सिद्धार्थ(? तथा सिद्धान्न)-तिलपाषाणलवणपशुमनुष्यान्न विक्रीणीत। रसत्वेनैव लवणस्य निषेधसिद्धौ विशेषेण निषेधो दोषगौरवज्ञापनार्थः। तच्च प्रायश्चित्तगौरवार्थम्। एवमन्यस्यापि पृथङ्निषेधो व्याख्येयः। ममु.

(५) रसान् पत्रकाष्ठादिनिर्यासान्। निर्यासादिपाकप्रधानानि(?) द्रव्याणि रसास्तानिति तु कल्पतरौ। केचित्तु रसान् लवणादीन्। पुनर्लवणोपादानं दोषाधिक्यप्रतिपादनार्थमित्याहुः। अपोहेत वर्जयेत् विक्रये त्यजेत्। अस्य सर्वत्रानुषङ्गः। कृतान्नं पक्वान्नम्। अश्मनः पाषाणान् पद्मरागादीन्। 'पशवो ये च मानुषाः' इत्यत्र तानिति शेषः। बाल. १।११९ पृ. ३७२

**'सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च।**
**अपि चेत्स्युररक्तानि फलमूले तथौषधीः।।**

(१) तान्तवं तन्तुनिर्मितं वस्त्रपटबृहतिकादि। रक्तं लोहितम्। लोहिते वर्णे रक्तशब्दः प्रसिद्धतरः। तथाहि रक्तो गौर्लोहित उच्यते। यद्यपि शुक्लस्य वर्णान्तरापादनमपि रञ्जेरर्थः। शाणक्षौमाविकान्यरक्तान्यपि। यत आह – अपि चेत्स्युररक्तानि। शिष्टं प्रसिद्धम्। « मेधा.

(२) सर्वं तन्तुनिर्मितं रक्तं पट्टबृहतिकादि वर्जयेत्। शणक्षौमोर्णातन्तुमयान्यलोहितान्यपि यदि भवेयुस्तथाऽपि वर्जयेत्। तथा फलमूलद्रव्याद्यौषधीर्वर्जयेत्। × गोरा.

(३) तन्तुकृतं पटादि कुसुम्भादिरक्तम्। शाणं शणसूत्रकृतम्। §आविकम् अविरोमकृतम्।अरक्तमप्येतत्त्रयम्। फल(मूल)पदं क्रीतपण्यफल(मूल)परम्, अन्यस्याऽऽपस्तम्बेन 'अक्रीतपण्यमेव (? ण्यैर्व्यव) हरेत्। मुञ्जवल्कलैर्मूलफलैः'(आध. १।२०।१६, १।२१।१)इति विक्रेतव्यतया विधानात्। औषधीस्त्रिवृदाद्याः। मवि.

(४) सर्वं तन्तुनिर्मितं वस्त्रं कुसुम्भादिरक्तं वर्जयेत्।

---

* गृक., गृर. मेधागतं गोरागतं च।

\+ मपा., मर., निप्र., मच., भाच. गोरागतम्।

(१) **मस्मृ.** १०।८६; **गृक.** १९९ न्नं च (न्नं तु) मानुषाः (मानवाः); **उ.** १।२०।१२; **गृर.** ४३३-४३४ मानुषाः (मानवाः); **मपा.** २३२ रसान (रसा न् व्य); **मर.** १८२ : १८५ तृतीयचरणमात्रम्; **निप्र.** २।३१३ गृरवत्; **मुक्ता.** ६१; **संम.** ७८ उत्त.; **बाल.** १।११९ पृ. ३७१.

« भाच. मेधागतम्।

× गृर. गोरागतम्।

§ अत्रत्यं क्षौमपदार्थविवरणं त्रुटितमिति भाति।

(१) **मस्मृ.** १०।८७; **मिता.** ३।३६-३९; **गृक.** १९९; **उ.** १।२०।१२; **स्मृच.** २।४७८ (रक्तं शाणक्षौमाविकानि च) एतावदेव; **गृर.** ४३४ चेत् (वै); **मपा.** २३२; **मर.** १८२ विकानि च (विकानि वै); **निप्र.** २।३१४ सर्वं च (सर्वं तु); **मुक्ता.** ६१; **संम.** ७८; **वीमि.** ३।३५-४१; **बाल.** १।११९ पृ. ३७१.

शणक्षुमातन्तुमयान्याविकलोमभवानि च यद्यलोहितान्यपि भवेयुस्तथाऽपि न विक्रीणीत। तथा फलमूलगुडूच्यादीनि वर्जयेत्। ¶ ममु.

(५) फलमूले। फलं ताम्बूलादि, मूलं लशुनादि, औषधीः अपक्वाः। मच.

(६) क्षौमम् अतसीसूत्रकृतं दुकूलम्।$ अत्र शाणक्षौमयोर्विकारयोः प्रतिषेधात्प्रकृतेरनिषेधः इति विज्ञानेश्वरः। † बाल. १।११९ पृ. ३७२

**[1]अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः।**
**क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान्।।**

(१) शस्त्रं खड्गपाशादि। गन्धाः तगरोशीरचन्दनादयो द्रव्यविशेषाः। रसशब्दवदेतद्व्याख्येयम्। क्षीरं (रं ?) सविकारं स्मृत्यन्तरप्रसिद्धम्। अतो मस्तुकिलाटोदश्विदादीन्यपि न विक्रेयाणि। दधिघृतग्रहणं प्राधान्यादुपात्तम्। मधु मधूच्छिष्टम्, एकदेशलोपात्, देवदत्तो दत्त इतिवत्। स्मृत्यन्तरे हि तत्प्रतिषिद्धम्। इह च क्षौद्रशब्देन सारघस्य निषिद्धत्वात्, माध्वीकस्य च मद्यग्रहणेनोत्तरत्र प्रतिषेधात्। अन्ये तु माध्वीकस्यैवाप्राप्तमद्यावस्थस्य प्रतिषेधार्थं मधुशब्दं वर्णयन्ति, तदयुक्तम्। नायं निष्पीडितमृद्वीकारसवचनः। किं तर्हि ? मद्यरूपतयैव वर्तते, 'उभौ मध्वासवक्षीबौ' (भा. ५।५८।५) इति प्रयोगदर्शनात्। क्षीबता मद्यकृतैव। गुडस्य रसत्वप्रतिषेधनिवृत्त्यर्थं ग्रहणम्। अन्ये तु खण्डमत्स्यण्डिकादीनामनुज्ञानार्थं व्याचक्षते। § मेधा.

(२) अपः जलम्। शस्त्रं लोहम्। गन्धान् चन्दनादीन्। क्षारं यवक्षारादि। क्वचित्क्षीरमित्यपि पाठः। क्षौद्रं मधु। मधूच्छिष्टं दधीति क्वचित्पाठः। मज्जा जन्तूनामस्थिपीतसार आकृष्टः। गुडस्य तदाकारत्वेऽपि दृढतयाऽफलत्वशङ्कां निरसितुं पुनरुक्तिः (?)। « मवि.

(३) मधु पुष्परसः। × गृर. ४३४

(४) शस्त्रं शृङ्गादिनिर्मितम्, लोहनिर्मितस्य लोहनिषेधेन निषिद्धत्वात्। विषं शैलजादि। सोमं सोमलताम्। गन्धान् गुग्गुलादीन्। क्षौद्रं माक्षिकम्। मधु मधूच्छिष्टं सिक्थम्। अत्र ये पुनरुक्ताः पदार्थास्तेषु प्रायश्चित्ताधिक्यं ज्ञेयम्। मच.

**[1]आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च।**
**मद्यं नीलीं च लाक्षां च सर्वांश्चैकशफांस्तथा।।**

(१) आरण्यपशुशब्दौ गुडलवणेनैव व्याख्यातौ। ग्राम्यपश्वनुज्ञानार्थम्। ग्राम्या अपि पशवः 'हिंसायां(? याः) संयोगे' (गौध. ७।१३) इति निषिद्धार्थः। वयांसि पक्षिणः। एकशफाः अश्वाश्वतरगर्दभादयः। दंष्ट्रिणः श्वशूकरादयः। 'बहून्' इति तथाशब्दस्थाने पठन्ति। एकस्य विक्रये तथा न दोषः। मेधा.

(२) आरण्यान् पशून् हस्त्यादीन्, सर्वान् दंष्ट्रिणः सिंहादीन्, एकशफान् अश्वादीन्, तथा पक्षिमद्यनीलीलाक्षा न विक्रीणीत। * गोरा.

---

¶ नन्द. ममुगतम्।

$ इदं न विज्ञानेश्वरेण स्वशब्देनोक्तम्, नापीदं मनुवचनव्याख्यानम्, अपि तु आर्थिकोऽयमर्थः। तथाहि 'फलोपलक्षौम०'(यास्मृ. ३।३६) इति याज्ञवल्क्यवचने 'क्षौमम् अतसीसूत्रमयं वस्त्रम्' इति विज्ञानेश्वरव्याख्यानम्। तत्र बालंभट्टेन 'वस्त्रमिति' इति प्रतीकमादाय 'तथा च विकृतेः प्रतिषेधात्प्रकृतेरप्रतिषेधः' इति स्वयमेव व्याख्यातम्।

† शेषं मविवत्, अंशतः मन्वर्थविवृतेरनुवादः।

(१) **मस्मृ.** १०।८८; **मिता.** ३।३६-३९; **गृक.** १९९; **उ.** १।२०।१२; **मवि.** क्षीरं (क्षारं) क्षीरमित्यपि पाठः, क्षीरं क्षौद्रं (मधूच्छिष्टं) इत्यपि पाठः, 'तैलं' इत्यत्र 'मधु' इत्यत्र वा 'मज्जा' इति पाठः; **स्मृच.** २।४७९ उत्त.; **गृर.** ४३४ अपः (आपः); **मपा.** २३२; **मर.** १८२ अपः (अपि) (दधि); **निप्र.** २।३१४; **मुक्ता.** ६१ अपः (आपः) क्षौद्रं (क्षारं); **संम.** ७८ अपः श (अयः श); **वीमि.** ३।३५-४१; **बाल.** १।११९ पृ. ३७१ क्षीरं (क्षारं) आदर्शपाठोऽपि 'क्वचित्' इति : ३।३६-३९ (गन्धाश्च सर्वशः) एतावदेव.

§ गोरा., स्मृच., ममु., मपा., भाच. मेधागतम्।

« बाल. मविगतम्।

× शेषं गोरागतम्।

* ममु. गोरावत्। मच., नन्द., भाच. गोरगतम्।

(१) **मस्मृ.** १०।८९; **मेधा.** तथा (बहून्) इत्यपि पाठः; **मिता.** ३।३६-३९ पू.; **अप.** ३।३५-३८ पू.; **गृक.** १९९-२००; **उ.** १।२०।१२ फांस्तथा (फान्पशून्); **गृर.** ४३४ नीलीं (नीलिं); **मपा.** २३२ लीं च लाक्षां च सर्वांश्चै (लं बलाकां च द्विशफै); **मर.** १८२ नीलीं (नीलं); **निप्र.** २।३१४ नीलीं (नीलिं) श्चैक (नेक); **मुक्ता.** ६१ उत्तरार्धे (मद्यं नीलं च लाक्षांश्च सर्वांश्चैकशफान्पशून्।); **संम.** ७८; **बाल.** १।११९ पृ. ३७१ उत्तरार्धे (मद्यं लाक्षां च नीलिं च द्विशफैकशफांस्तथा।).

(३) दंष्ट्रिणः कुक्कुराद्यान् ग्राम्यानपि। वयांसि पक्षिणः। नीलीं नीलीरागः। मवि.

(४) दंष्ट्रिणः शूकरादीन्। एकशफान् अश्वादीन्। पशुपदादेव सर्वपशुनिषेधे लब्धे पुनर्दंष्ट्र्येकशफग्रहणं तद्वाणिज्यदोषोत्कर्षद्योतनार्थम्। गृर. ४३४

**[1]† त्रपु सीसं तथा लोहं तैजसानि च सर्वशः।**
**बालांश्चर्म तथाऽस्थीनि सस्नायूनि च वर्जयेत्।।**

(१) स्नावानि स्नायूनि। + गृक. २००

(२) तैजसानि कांस्यादीनि। अस्थीनि गजदन्तादीनि। अत्र सामान्यतोऽपि निषेधो विशेषतश्च निषेधो दोषातिशयप्रकाशनार्थः। नन्द.

**[2]काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः।**
**विक्रीणीत तिलाञ्छुद्धान्धर्मार्थमचिरस्थितान्।।**

(१) 'कृतान्नं च तिलैः सह' इति प्रतिषिद्धानां तिलानां स्वरूपप्रयोजनविशेषाश्रयः प्रतिप्रसवः। शुद्धानचिरस्थितानिति च स्वरूपविशेषः। धर्मार्थमिति प्रयोजनविशेषः। शुद्धा व्रीह्यादिभिरमिश्राः। कृशराद्यर्थं मिश्राणां विक्रया–(? य)संभवः। अचिरस्थिताः। अर्थादिकं लाभम(न ?)-पेक्ष्य 'स्वल्पं मूल्यमद्य, कालान्तरे चाऽऽगामिनि बहु मूल्यं लभेय' इत्येवं न प्रतीक्षितव्यम्। अथवा शुद्धाः अकृष्णाः। कृष्णतिलानां प्रतिषेधः। अचिरस्थितानिति वेय(? वाऽय)मर्थः – चिरस्थितं हि कृष्णं भवति। कृष्णा उत्पाद्य क्रीत्वा (वा) न विक्रेयाः। स्वयं कृष्यां कृषीवलः इति प्रायिकोऽनुवादः, न विवक्षितानि पदानि। प्रतिग्रहाद्यर्जितानामप्यप्रतिषेधः धर्मप्रयोजने यत्र तिलान् विक्रीणीते। इह च रूपकैर्गावो दक्षिणाद्यर्थं स्वाध्यायाग्निहोत्राद्यर्थं क्रीयन्ते, व्रीह्यादयो वा दर्शपूर्णमासाद्यर्थम्, स धर्मार्थो विक्रयः। यस्य वा तिला एव दानादिधर्मायोपयुज्यन्ते भेषजतैलोपयोगे वा क्रेतुः, सोऽप्येवमेव। ‡ मेधा.

(२) कर्षकः स्वयमेव कर्षणेन तिलानुत्पाद्य द्रव्यान्तरेणामिश्रानुत्पत्तिकाले एव धर्मनिमित्तमिच्छ(? च्छा)तो विक्रीणीतेति 'कृतान्नं च तिलैः सह' इति प्रतिषिद्धानामयं प्रतिप्रसवः। + गोरा.

(३) तिलान् विक्रीणीत, हिरण्येनापि। शुद्धान् बुसशून्यान्। धर्मार्थं क्रेता यदि दानाद्यर्थं क्रीणीते। अचिरस्थितान् लवनानन्तरमेव, न तु लाभार्थं चिरं स्थापयित्वा। एवं च कृष्युत्पत्तिशुद्धत्वधर्मार्थत्वाचिरस्थत्वविशिष्टतिलविक्रयो ब्राह्मणस्याप्यापद्वृत्तिरिति दर्शितम्। # मवि.

(४) यत्तु तेनैवोक्तम् – 'काम..... तान्' इति, .... तद्विनियमलक्षणविक्रयाभिप्रायम्। स्मृच. २।४८०

(५) ननु तिलविक्रयोऽभ्युपगतो मनुना – 'काममुत्पाद्य .... धर्मार्थमचिरस्थितान्' इति। अत्र केचिदाहुः – 'तदेतद्विनिमयाभिप्रायम्' इति। अपरे तु मन्यन्ते ऋणापाकरणाद्यापद्धर्मार्थे तिलविक्रयो न विरुद्धः। अयमेव पक्षो युक्तः, *वसिष्ठवचनसंवादनात् 'कामं वा स्वयं कृष्योत्पाद्य तिलान् विक्रीणीरन्' (वाध. २।३१) इति। विनिमयाभिप्राये तु वचनान्तरेण सह पौनरुक्त्यमपरिहार्यं स्यात्, यतो मनुनैव वचनान्तरेण 'तिला धान्येन तत्समाः' (मस्मृ. १०।९४) इति विनिमयो दर्शितः। यत्त्वन्यस्मिन्वचने अर्थात्तिलविक्रयनिषेधः प्रतिभाति, तथा हि मनुयमाभ्यामुपदर्शितम् – 'भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः। कृमिर्भूत्वा स विष्ठायां पितृभिः सह मज्जति।।' (मस्मृ. १०।९१)

---

† 'अपः शस्त्रम्०' इतिश्लोकव्याख्यानात् राघवानन्दोऽपि श्लोकमिमं मानवं मन्यते इति निर्णीयते। तदीयं व्याख्यानं तु आदर्शपुस्तके नास्ति।

+ गृर. गृकवत्।

(१) **मस्मृ.** १०।८९ इत्यस्यानन्तरं प्रक्षिप्तः; **गृक.** २०० लोहं (लौहं) बालां (वालां) चतुर्थचरणे (वसाः स्नावानि रोचनाम्); **गृर.** ४३४ (त्रपुशीशे तथा लौहं तैजसानि तु सर्वशः। बालांश्चर्मांस्तथाऽस्थीनि वसाः स्नावानि रोचनाम्।।); **बाल.** १।११९ पृ. ३७१ सस्नायूनि च (वसा स्नायूनि) चतुर्थचरणे (वसा स्नायूनि रोचनाम्) इत्यपि पाठान्तरम्.

(२) **मस्मृ.** १०।९०; **मिता.** ३।३९ कृष्यां तु (कृष्यात्तु); **अप.** ३।३८; **गृक.** २०८; **द.** १।२०।१२; **स्मृच.** २।४८०; **गृर.** ४४० र्थम (र्थान); **पमा.** १।४३१; **मर.** १८७; **निप्र.** २।३१५ णीत (णीते); **मुक्ता.** ६१; **बाल.** १।११९ पृ. ३७३ निप्रवत्.

‡ मिता., अप., गृक., गृर., नन्द. मेधागतम्।

+ ममु., मच. गोरागतम्।

# भाच. मविगतम्।

* हेतुरयं चिन्त्यः।

इति, नायं दोषः, आवश्यकधर्मव्यतिरिक्तविषयत्वात्। ‡ पमा. १।४३१-४३२

(६) कृष्यामुत्पाद्य विक्रीणीतेत्यनेन क्रीतविक्रयो निषिद्ध इति गम्यते। # मर. १८७

(७) तिलवाणिज्यं निषिद्धम्, कृष्युत्पन्नतिलान् प्रत्याह – काममिति। मच.

(८) कृषीवलः कृषिकरो विप्रः। बाल. ३।३९

**'$ भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः।**
**कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति।।**

(१) प्रकृततिलविशेषव्यतिरेकेण तिलविक्रयप्रतिषेधे विशेषोऽयमर्थवादः। ननु चोक्तं प्रतिषेधानां दोषसूचनं फलतयैव संबध्यते। तत्किं 'भोजनाभ्यञ्जनाद्दानाद्यन्यत्कुरुते तिलैः। कृमिभूतः' इत्ययमर्थवाद इति? उच्यते असंभविनः फलस्य शास्त्रान्तरेण विरुद्धस्य च श्रवणादेवमुच्यते। तथा(हि –)पितृभिः सहेत्युच्यते। न च तैः किंचिदपराद्धम्। सुकृतदुष्कृतयोः फलं हि कर्तृगामि। न च पितॄणां कथंचिदपि कर्तृत्वमित्येत्प्रागुक्तमेव। किंच 'सद्यः पतति मांसेन' इति पतितत्ववचनं परेषां न पातित्यमिति नियमात्(? मार्थम्)। तस्मादस्ति किंचिदनिष्टमित्येतावन्मात्रं प्रतिषेधेन संबध्यते। यथाश्रुतमेव न युक्तम्। भोजनादिक्रिया यत्र तद्व्यतिरेकेण यदन्यद्विक्रयस्नानादि तत्र तिलैर्यः कुरुते स कृमित्वं प्राप्नोति यथोक्तेन दोषेण संयुज्यते। मेधा.

(२) भोजनाभ्यञ्जनादिति। भोजनाभ्यञ्जनदानव्यतिरिक्तम् अन्यदन्न(? अन्यन्निषिद्धं)विक्रयादि यदि तिलानां कुरुते तदा पितृभिः सह कृमित्वं प्राप्तः श्वपुरीषे निमज्जतीति पूर्वव्यतिक्रमफलकथनम्। गोरा.

(३) यदन्यत्कुरुते विक्रयादि अनापत्तौ। मवि.

(४) भोजनाभ्यङ्गदानव्यतिरिक्तं यदन्यन्निषिद्धं विक्रयादि तिलानां कुरुते तेन पितृभिः सह कृमित्वं प्राप्तः कुक्कुरपुरीषे मज्जति। * ममु.

(५) अत आह–भोजनेति। अभ्यञ्जनं तैलादिना। दानपदं धर्मार्थ(तदर्थ ?)विक्रयोपलक्षकम्। अन्यत् क्रयविक्रयादि न कर्तव्यमित्यत्र तात्पर्यम्। पितृभिः सहेति विरुद्धफलश्रवणात् सुकृतदुष्कृतयोः फलं तु कर्तर्येवेति नात्र पितॄणामपराधः कश्चिदिति मैव (?)। मच.

(६) कुरुते। विप्र इति शेषः। नन्द.

**'सद्यः पतति मांसेन लाक्षया लवणेन च।**
**त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्।।**

(१) उक्तार्थः। मेधा.

(२) एतच्च वाक्यद्वयमकृतप्रायश्चित्तब्राह्मणविषयम्। ब्राह्मणग्रहणात्क्षत्रियस्य लवणादिविक्रीणानस्य नायं दोषः। + अप. ३।३९ पृ. ९३४

(३) सद्य इति मांसलाक्षालवणविक्रयी ब्राह्मणः तत्क्षणादेव पतितो भवतीति दोषगौरवख्यापनार्थमेतत्, पञ्चानामेव महापातकानां पातित्यनियमात्, एतद्विक्रये वा(? च) 'अपण्यानां च विक्रयः' (मस्मृ. ११।६२) इति उपपातकप्रायश्चित्तस्य लघुतादर्शनात्। एतेन त्र्यहक्षीरविक्रयात् शूद्रतां प्राप्नोति इत्येतदपि व्याख्यातम्, तथा वैश्यभावगमनं च वक्ष्यमाणम्। # गोरा.

---

‡ मुक्ता. पमागतम्।

# निप्र. मरवत् मेधागतं च।

$ पमाव्याख्यानं पूर्वश्लोकव्याख्याने द्रष्टव्यम्।

(१) **मस्मृ.** १०।९१; **विश्व.** ३।३९ द्यदन्यत् (द्योऽन्यत्र) कृमि (कृमी) श्वविष्ठा (स विष्ठा)(=); **मिता.** ३।३९ कृमिभूतः (कृमिर्भूत्वा); **अप.** ३।३८ कृमि (क्रिमी); **गृक.** २०४ नाद्दाना (नादाना) भूतः श्ववि (र्भूत्वा स वि) वसिष्ठमनुपैठीनसिबौधायनाः; **स्मृच.** २।४८० कृमिभूतः श्ववि (क्रिमिर्भूत्वा स वि); **गृर.** ४३७ भूतः श्ववि (र्भूत्वा स वि) वशिष्ठादयः; **पमा.** १।४३१-४३२ गृरवत्, मनुयमौ; **आपा.** १४६ नाद्यदन्यत् (नादन्यच्च) मिभूतः श्ववि (मिर्भवति वि); **निप्र.** २।३१५ भूतः श्ववि (र्भूतः स वि); **मुक्ता.** ६१ (दानाभ्यञ्जनहोमेभ्यो यदन्यत्कुरुते तिलैः। क्रिमिभूतश्च विष्ठायां कर्मणा तेन पापकृत्।।); **संम.** ७८; **बाल.** १।११९ पृ. ३७३ द्दाना (द्धोमा) श्वविष्ठा (स विष्ठा): ३।३९ (कृमिभूतः स्वविष्ठायाम्) एतावदेव पाठान्तरत्वेन निर्दिष्टम्.

* भाच. ममुगतम्।

+ वीमि. अपगतम्।

# ममु. गोरावत्। गृर. गोरागतम्।

(१) **मस्मृ.** १०।९२; **मेधा.** १०।९१ प्रथमचरणमात्रम्; **मिता.** ३।४०; **अप.** ३।३९; **गृक.** २०७ पू. हारीतमनुवसिष्ठशातातपाः; **स्मृच.** २।४८०; **गृर.** ४३९ मनुहारीतौ; **पमा.** १।४२२; **मपा.** २३२; **मर.** १८३; **निप्र.** २।३१३ पूर्वोत्तरार्धे व्यत्यासेन पठिते, हारीतमनुवशिष्ठशातातपाः; **आत.** ३५३ मांसेन (लौहेन) शूद्रो भवति (शूद्रीभवति); **मुक्ता.** ६१; **शूक.** २६० त्र्यहेण (मासेन) (=); **वीमि.** ३।३५-४१; **बाल.** १।११९ पृ. ३७३ त्र्यहेण (अह्ना च).

(४) पतति द्विजातिकर्मभ्यो हीयते। एतदेव स्पष्टीकृतं शूद्रो भवतीति। त्र्यहेणेति त्रिर्विक्रयणमुपलक्ष्यते। मवि.

(५) उक्तद्रव्येषु कानिचिदनुवदन् तद्विक्रये दोषमाह - सद्य इति द्वाभ्याम्। त्र्यहेणाव्यवहितेन। मच.

(६) अत्र धर्मनिन्दामात्रमिति वार्तिके भट्टाचार्याः। द्विजातिकर्महानिपराणीति विज्ञानेश्वरः। अतस्ते शूद्रसमाः। शूक. २६०

(७) मांसेन विक्रीतेन। नन्द.

**¹इतरेषां तु पण्यानां विक्रयादिह कामतः।**
**ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति।।**

(१) कामत इति वचनात् *अनापदीत्यनुमीयते। गुरुलघुत्वदर्शनं मांसादीनां प्रायश्चित्तविशेषार्थम्। 'गुरुणि गुरूणि लघूनि लघूनि' इति वक्ष्यामः। मेधा.

(२) उक्तदोषेभ्यो मांसादिभ्योऽन्येषां प्रतिषिद्धानां पण्यानामिच्छातः, न तु प्रमादात् अन्यद्रव्यसंपृक्तानाम्, सप्तरात्रविक्रयेण ब्राह्मणो वैश्यत्वं प्राप्नोति। § गोरा.

(३) इतरेषां लाक्षालवणमांसक्षीरेभ्योऽन्येषाम्। नियच्छति प्राप्नोति। गृक. २०७

(४) इतरेषाम् अपण्यानां कृतान्नादीनां निषिद्धानाम्। कामतः। अकामतस्तु पापमात्रम्। मवि.

(५) इतरेषां वर्ज्यत्वेनोक्तानां रसादीनाम्। मर. १८४

(६) इतरेषां पूर्वोक्तानां क्षीर(? रादि)व्यतिरिक्तानाम्। इदमनापदि। संम. ७८

(७) अपण्यानाम् अविक्रेयाणाम्। कामतः अनापदि। नन्द.

---

* विक्रयानुमतेरापद्विषयत्वेन तदुपजीवकरसादिविक्रयनिषेधस्याप्यापद्विषयकत्वसिद्धेरयमनापच्छब्दोऽनत्यन्तापत्परो ग्राह्य इति भाति।

§ ममु. गोरावत्। गृर., मच., भाच. गोरागतम्।

(१) **मस्मृ.** १०।९३; **मिता.** ३।४० षां तु प (षामप) निय (च ग); **अप.** ३।३९ षां तु प (षामप) निय (प्रय); **गृक.** २०७ षां तु प (षामप); **मवि.** गृकवत्; **स्मृच.** २।४८० निय (निग); **गृर.** ४३९ मनुहारीतौ; **मपा.** २३२-२३३; **मर.** १८३-१८४ तु (च); **निप्र.** २।३१३ ब्राह्मणः (ब्राह्मणं) शेषं गृकवत्; **मुक्ता.** ६१ तु प (त्वप) निय (निग); **संम.** ७८; **वीमि.** ३।३५-४१ षां तु प (षामप) निय (निग); **बाल.** १।११९ पृ. ३७३.

**¹रसा रसैर्निमातव्या न त्वेव लवणं रसैः।**
**कृतान्नं चाकृतान्नेन तिला धान्येन तत्समाः।।**

(१) रसाः पूर्वोक्ताः। ते रसैर्निमातव्याः। मधुररसं गुडादि दत्त्वाऽऽम्लादिरसमामलक्यादि ग्रहीतव्यम्। न केवलं लवणं दत्त्वा रसान्तरमादेयम्। पाठान्तरं 'लवणं तिलैः' इति। अस्मिन्पाठे तिलैरेव लवणस्य प्रतिषेधः न रसान्तरैः। कृतान्नं सक्त्वोदनादि §अन्नेन पायसापूपादिना निमातव्यम्। तिलास्तु धान्येन व्रीह्यादिना तत्समाः। प्रस्थं दत्त्वा प्रस्थ एव ग्रहीतव्यः, नार्था(? र्घा)पेक्षयाऽधिकं वाऽऽदेयम्। विनिमयो नाम विक्रय एव। क्रीणातिस्तु द्रव्यविनिमये पठ्यते। न हि तद्युक्तम्, विक्रये प्रकृते 'विनिमयस्तु' (गौध. ७।१६) इति गौतमो भेदं दर्शयति। *एवं तर्हि प्रसिद्धेन रूपकादिना द्रव्यार्पणं विक्रयः, तदन्यद्रव्यपरिवृत्तौ विनिमयः। मेधा.

---

§ पायसापूपादेरपि कृतान्नत्वेन 'अन्येन' इति शुद्धिः कल्प्यते। तथा च 'कृतान्नं च कृतान्नेन' इति पाठः मेधातिथेरभिमतः इति प्रतीयते।

*वस्तुतस्तु विनिमयस्याविक्रयत्वे पूर्वं विक्रयस्यैव निषिद्धत्वेन विनिमयानुमतेरयत्नसिद्धत्वाद्विनिमयानुमतियत्नोऽयं व्यर्थः स्यात्। विनिमयस्य विक्रयरूपत्वे तु विक्रयत्वेन विनिमयस्यापि निषिद्धत्वेन प्रतिप्रसवार्थोऽयं यत्नः सफलः। तस्मात् 'विक्रयो द्विविधः – रूपकादिना धनेन, द्रव्यान्तरेण चेति। तत्र द्वितीयः प्रकारो विनिमयशब्देन व्यवह्रियते' इति व्यवस्थोपगन्तुं युज्यते। अस्मिन्नर्थे 'नियमस्तु रसादीनां विक्रयो नैव दुष्यति', 'धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः', 'यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः' इति हारीतयाज्ञवल्क्यनारदादिवचनान्यनुकूलानि। यदि तु व्यवहारानुरोधात् 'विनिमयत्वं सामान्यम्, उक्तौ प्रकारौ तद्विशेषौ। तत्र प्रथमः प्रकारो विक्रयशब्देन व्यवह्रियते' इति, 'परिवर्तनत्वं सामान्यम्, उक्तौ प्रकारौ तद्विशेषौ। तत्र प्रथमो विक्रयशब्देन, द्वितीयो विनिमयशब्देन व्यवह्रियते' इति वा व्यवस्थाऽपि संभवति, संभवतु नाम, उक्तगुणदोषानुरोधेनात्र प्रथमैव व्यवस्था मनोरभिप्रेतेति प्रतीयते।

(१) **मस्मृ.** १०।९४; **मेधा.** चाकृता (च कृता) रसैः (तिलैः) इत्यपि पाठः; **मिता.** ३।३९ चाकृता (च कृता) मूलपाठमपि पाठान्तरत्वेन निर्दिशति; **अप.** ३।३८ पृ. ९३३ र्निमा (र्निपा); **गृक.** २०९ त्वेव (त्वेवं); **मभा.** ७।२० चतुर्थचरणमात्रम्; **गौमि.** ७।२१ मभावत्; **उ.** १।२०।१५; **स्मृच.** २।४८१; **गृर.** ४४० गृकवत्; **पमा.** १।४३१; **मपा.** २३३ चाकृ (वाऽकृ); **मर.** १८६ सैर्निमा (सैर्निर्मा) तिला धा (तिलधा); **बाल.** १।११९ पृ. ३७३; **इन्दु.** २०० चाकृता (च कृता).

(२) कृतान्नं सिद्धान्नं तच्च कृतान्नेन परिवर्तनीयम्। 'कृतान्नं चाकृतान्नेन' इति पाठे तु सिद्धमन्नमकृतान्नेन तण्डुलादिना परिवर्तनीयमिति। मिता. ३।३९

(३) रसाः गुडादयः रसैः घृतादिभिः परिवर्तनीयाः। लवणं पुनः रसान्तरेण न परिवर्तनीयम्। सिद्धान्नमसिद्धान्नेन परिवर्तनीयम्। तिला धान्येन प्रस्थः प्रस्थेनेत्येवं विनिमातव्याः। * गोरा.

(४) कृतान्नम् ओदनं सक्त्वादि। अकृतान्नं व्रीह्यादि। निमातव्याः परिवर्तयितव्याः। गृक. २०९

(५) रसा गुडादयः रसैर्निमातव्याः परिवर्तनेन ग्राह्याः (+? देयाः)। लाभप्रेप्सया इयत्तानवधारणेन ग्रहणं (? दानं) विनिमयः, विक्रयस्त्वियत्तावधारणेन लाभेच्छयेति विशेषः। तत्र रसानां रसैर्विनिमयः कार्यः, न तु विक्रयः। लवणं तु मृन्निर्यासतया रसभूतं विनिमेयमपि न रसैः। कृतान्नं सक्त्वादि अकृतान्नेन यवादिना विनिमेयम्। न तु नेत्यत्रान्वितम्, अप्राप्तार्थनिषेधायोगात्। तिला धान्येनेति स्वयं कृष्याद्युत्पादितत्वाद्यभावेऽपि धान्यैर्विनिमये नास्ति दोष इत्यर्थः। किंतु तत्समाः न न्यूनाधिकाः। मवि.

(६) [×विप्रक्षत्रिययोरुक्तरसादिपरिवर्तने न दोष इति] वदन् वाचनिकप्रतिनिधीनाह – रसा इति। अकृतान्नेन आमेन। मच.

ब्राह्मणाविक्रेयाणां विक्रयो राजन्यस्यानुमतः, ज्यायोवर्णवृत्तेरधमवर्णं प्रति निषेधः, आपदि वैश्यस्य शूद्रवृत्त्यनुमतिः, द्विजशुश्रूषोपयोगिशिल्पकर्माणि शूद्रस्याऽऽपद्वृत्तिः

**'जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः।**
**न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित्।।**

(१) एतेन सर्वेणापि। प्रतिषिद्धपण्यप्रतिप्रसवोऽयं राजन्यस्य, न किंचित्तस्याविक्रेयं वैश्यवत्। किंतु सत्यपि स्ववृत्तित्यागे न ज्यायसीं ब्राह्मणवृत्तिं कदाचिदप्यभिमन्येत 'इमां करोमि' इति चेतसि न कुर्यात्। प्रतिकूलं दैवम् अनयः। एतदापदुपलक्षणार्थम्। गतः प्राप्तः। आपद्गत इति यावत्। « मेधा.

(२) अनयम् अवृत्तिम्। ‡ मवि.

(३) एतेन वैश्यवर्तनेन। ‡ स्मृच. २।४७३

(४) एतेन स्वयंकृतकृष्यादिना। अनयम् आपदम्। मर. १९१

(५) आपद्गतक्षत्रियस्य तु वैश्यवृत्तिमनुवदन् (विप्र)-वृत्तिं निषेधति – जीवेदिति। सर्वेण निषिद्धविक्रयेणापि। अत एवास्य मांसादिविक्रयो न पातित्यहेतुः। अतस्तत्प्रकरणे ब्राह्मणपदम्। अनयम् आपदम्। ज्यायसीम् अध्यापनयाजनादिकाम्। अत्र प्रतिलोमपरिणयनवत्प्रतिलोमवृत्तिरपि निषिद्धा। यत्त्वापत्काले क्षत्रियादप्यध्ययनम् 'अब्राह्मणादध्ययनमापत्काले विधीयते।' (मस्मृ. २।२४१) इति विप्रस्य, तद्विप्राकाङ्क्षाप्रयुक्तत्वान्न तस्य जीविकाद्यर्थतेति भावः। मच.

**'यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः।**
**तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्।।**

(१) यो जात्या अधमः निकृष्टः क्षत्रियादिः। सत्यपि प्रकृतत्वे राजन्यस्य सर्वेषामयं ब्राह्मणवृत्तिप्रतिषेधः। एवमेवायं श्लोकः। उत्कृष्टो निरपेक्षो ब्राह्मण एव। कर्मभिः अध्ययना(? अध्यापना)दिभिः जीवति। दण्ड्योऽयं सर्वस्वग्रहणप्रवासनैः। § मेधा.

(२) य इति। यो निकृष्टजातिः संल्लोभादुत्कृष्टजातिनोदित (म ?)कर्मभिर्जीवेत्तं राजा सर्वस्वमपहृत्य तदानीमेव देशान्निर्वासयेत्। + गोरा.

(३) एवं वैश्यादेरपि क्षत्रधर्मग्रहो निषिद्ध इत्याह –

---

* ममु., बाल., नन्द. गोरावत्। स्मृच., गृर., मपा., भाच. गोरागतम्।

+ पूर्वत्र निषेधविषया ये विक्रेयपदार्थास्तेऽत्र प्रथमान्तशब्दबोध्याः। विक्रेयाश्च न गृह्यन्ते, अपि तु दीयन्ते। तस्मात् विपरीतमिदं व्याख्यानम्।

× आदर्शपुस्तके ग्रन्थोऽयमेवंकंसमध्ये मुद्रितः।

(१) **मस्मृ.** १०।९५; **अप.** ३।३९; **मभा.** ७।२६ पू.; **गृक.** २५६-२५७; **स्मृच.** २।४७३; **मर.** १९१; **मुक्ता.** ६४ पू.; **बाल.** १।१२१ पृ. ३८३.

« गोरा., अप., गृक., ममु., मुक्ता., नन्द., भाच., बाल. मेधागतम्।

‡ शेषं मेधागतम्।

§ गृक. मेधागतम्।

+ ममु. गोरावत् मविवत् च। मच., भाच. गोरागतम्।

(१) **मस्मृ.** १०।९६; **गृक.** २५७.

य इति। मवि.

[1]*वरं स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
परधर्मेण जीवन्हि सद्यः पतति जातितः ।।
[2]वैश्योऽजीवन्स्वधर्मेण शूद्रवृत्त्याऽपि वर्तयेत्।
अनाचरन्नकार्याणि निवर्तेत च शक्तिमान् ।।

(१) स्वधर्मेणाजीवतो वैश्यस्य शूद्रवृत्तिरनुज्ञायते। पादधावनादिशुश्रूषया। अनाचरन्नकार्याणि। उच्छिष्टापामार्जनाद्यकार्यम्, तत्परिहर्तव्यम्। शक्तिमान्निवर्तेतेति सर्वशेषः। अत्र केनचिदुक्तम् – # सामर्थ्यात् ब्राह्मणक्षत्रिययोरप्येतदतिदिश्यते। तत्रापरेण संदिह्यते – कथं शूद्रवृत्तिं ब्राह्मणः कुर्यात्? एवं हि श्रूयते – 'उत्कृष्टं चापकृष्टं च विद्येते कर्मणी तयोः। मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते।।' इति। तदयुक्तम्। न त्वस्यायमर्थो ब्राह्मणस्य शूद्रवृत्तिरनुज्ञायते सामर्थ्यादिति। किं तर्हि? निवर्तेत च शक्तिमानिति यदस्माभिरुक्तं सर्वशेष इति। + मेधा.

(२) वैश्यः स्ववृत्त्याऽजीवन् शूद्रवृत्त्याऽपि द्विजशुश्रूषया उच्छिष्टभोजनादीनि अकार्याण्यकुर्वन् जीवेत्, निस्तीर्णापत्कालः शूद्रवृत्तितो निवर्तेत। « गोरा.

(३) निवर्तेत शक्तिमान्। यदि जीवन् शक्तः (? जीवनशक्तः) प्रकारान्तरेण, तदा न कुर्यादित्यर्थः। × मवि.

(४) विप्रराजन्ययोरापद्धर्ममुक्त्वा वैश्यशूद्रयोरप्याह - वैश्य इति त्रिभिः। अजीवन्निति च्छेदः। अकार्याणि उच्छिष्टभक्षणादीनि। निवर्तेत शूद्रवृत्तेः। शक्तिमान् लब्धस्ववृत्तिश्चेत्। लब्धवृत्त्योर्विप्रक्षत्रिययोरपि निवृत्तिः प्रायश्चित्तपूर्विका शक्तिमानित्यनेन सूचिता। ‡ मच.

[1]*अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम्।
पुत्रदारात्ययं प्राप्तो जीवेत्कारुककर्मभिः ।।

(१) कारुकाः शिल्पिनः सूदतन्तुवायादयः। तेषां कर्माणि पाकवयनादीनि प्रसिद्धानि। तैर्जीवेत्। पुत्रदारात्ययः तद्भरणासमर्थता। एतेन धनतन्त्रभङ्गेन तस्याऽऽपदि विवाहादि-(? विधानात्)कर्मणामेषां (विधानात्?) निकृष्टताऽनुमीयते। § मेधा.

(२) शूद्रो द्विजातिशुश्रूषया अजीवन् क्षुदवसन्नात्मकलत्रः सूपकारकर्मभिर्जीवेत्। † गोरा.

---

* अस्य व्याख्यानानि धर्मतत्त्वविचारप्रकरणे (व.का.पृ. ६२९) द्रष्टव्यानि।

# ग्रन्थस्यास्य दुर्बोधत्वादेवमत्राभिप्रायः कल्प्यते – वैयर्थ्यापत्तिरूपसामर्थ्येन सार्थकत्वापादकोऽर्थः कल्प्यते इति शास्त्रमर्यादा। 'निवर्तेत च शक्तिमान्' इति वाक्यशेषस्य श्लोकात्मकावान्तरवाक्यशेषत्वे प्रकरणरूपमहावाक्यशेषत्वे वा न वैयर्थ्यमापद्यते, येन ब्राह्मणक्षत्रिययोरपि शूद्रवृत्त्यतिदेशः कल्प्येत। अतोऽयं पूर्वपक्षिणोऽभिप्रायः कल्प्यते – वाक्यशेषोऽयं निवृत्तिकर्त्रंशे प्रकरणशेषः, निवृत्त्यपादानांशे श्लोकशेष इति। तथा च 'ब्राह्मणः क्षत्रियो वैश्यो वा शूद्रवृत्तेर्निवर्तेत' इति वाक्यशेषार्थः संपन्नः। तत्र निवृत्तेः प्रसक्तिपूर्वकत्वात् प्रसक्त्यभावे निवृत्त्युक्तिवैयर्थ्यात् ब्राह्मणक्षत्रिययोरपि शूद्रवृत्त्यतिदेशो वाक्यशेषाल्लभ्यत इति। समाधानग्रन्थस्यायमभिप्रायः – एकस्यैव वाक्यशेषस्यांशतः श्लोकशेषत्वमंशतः प्रकरणशेषत्वं चेत्यर्धजरतीयं नोपपद्यते। तस्मात् सर्वशेषत्वं मन्तव्यमिति। तत्र सर्वशेषपदार्थो द्विधा संभवति सर्वस्य श्लोकस्य शेषः, सर्वस्य प्रकरणस्य शेष इति वा। सर्वशब्दात् कर्त्रपादानरूपयोरुभयोरप्यंशयोः श्लोकशेषत्वं प्रकरणशेषत्वं वा लभ्यते। तथा च प्रथमार्थे 'शक्तिमान् वैश्यः शूद्रवृत्तेः निवर्तेत' इति वाक्यार्थः, द्वितीयार्थे 'शक्तिमान् ब्राह्मणः क्षत्रियो वैश्यो वा स्वस्वापद्वृत्तेः निवर्तेत' इति वाक्यार्थः। उभयथाऽपि ब्राह्मणक्षत्रिययोः शूद्रवृत्त्यतिदेशो न संभवति। एवमपि सर्वेष्वपि वर्णेषु शक्तिमत आपद्वृत्तितो निवृत्तेरापद्वृत्तित्वान्यथानुपपत्त्यैव सिद्धत्वेन वाक्यशेषेण तदनुवादस्यैव युक्तत्वात् द्वितीय एवार्थो मेधातिथेरभिप्रेतः स्यादिति संभवतितराम्।

(१) **मस्मृ.** १०।९७ अस्य शेषाः स्थलादिनिर्देशा धर्मतत्त्वप्रकरणे (व.का. पृ. ६२९) द्रष्टव्याः।

(२) **मस्मृ.** १०।९८; **अप.** ३।३९; **गृक.** २५७; **स्मृच.** २।४७३; **मपा.** २३३ पू.; **मर.** १९५ अशुद्धः पाठः; **बाल.** १।१२१ पृ. ३८४.

\+ गृक., मर. मेधागतम्।

« ममु. गोरावत्। स्मृच. गोरागतम्।

× शेषं मेधागतम्।

‡ नन्द. भाच. मचगतम्।

* मभाव्याख्यानं गौध. १०।५९ (व.का. पृ. १०३६-१०३७) इत्यत्र द्रष्टव्यम्।

§ स्मृकौ., भाच. मेधागतम्।

† मवि., ममु. गोरावत्।

(१) **मस्मृ.** १०।९९; **अप.** १।१२० यं प्राप्तो (ये प्राप्ते) स्मरणम्; **मभा.** १०।५९; **गृक.** २७०; **गौमि.** १०।६२ त्ययं (द्वयं); **गृर.** ४७९ शूद्रः कर्तुं (कर्तुं शूद्रो); **पमा.** १।४२३; **मपा.** २२३ यं प्राप्तो (यप्राप्तौ); **स्मृकौ.** ९३-९४ अपवत्; **शूशि.** ३९ कर्तुं (कर्म); **मुक्ता.** ६७; **शूक.** ७१ अपवत्; **आन.** ६३९; **बाल.** १।१२१ पृ. ३७८ शक्नुवंस्तु (शक्तो यस्तु) इत्यपि पाठान्तरम्.

(३) अत्ययः कृच्छ्रम्। # गृक. २७०

(४) पुत्राद्यत्ययं (तेषां) नाशम्। $ मच.

(५) शूद्रस्याऽऽपद्वृत्तिमाह – अशक्नुवंस्तु शुश्रूषामिति। अशक्नुवन्, वृत्तिहान्येति शेषः। नन्द.

**[1]यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः।**
**तानि कारुककर्माणि शिल्पानि विविधानि च॥**

(१) प्रचरितैः अनुष्ठितैः। शुश्रूष्यन्ते सेव्यन्ते। तदुपयोगीनि यानि कर्माणि शिल्पानि। यद्यपि शिल्पमपि कारुकर्मैव, तथापीह भेदेनोपादानात्तक्षकिवर्धकिप्रभृतयः कारवः, तेषां कर्माणि तक्षणवर्धनादीनि। शिल्पानि पत्रच्छेदरूपकर्माण्यालेख्यानि। § मेधा.

(२) यैः कर्मभिरनुष्ठितैः द्विजातयः परिचर्यन्ते तानि कारुककर्माणि तक्षणादीनि, शिल्पानि च लाक्षादीनि नानाप्रकाराणि कुर्यात्। गोरा.

(३) शिल्पानि पटनिर्माणादीनि। मवि.

(४) पूर्वोक्तकारुकर्मविशेषाभिधानार्थमिदम्। यैः कर्मभिः कृतैर्द्विजातयः परिचर्यन्ते तानि च कर्माणि तक्षणादीनि, शिल्पानि च चित्रलिखितादीनि नानाप्रकाराणि कुर्यात्। ममु.

(५) यैः कटघटनिर्माणैः सुरचितैः सुष्ठुकृतैः शुश्रूष्यन्ते शुश्रूषामाप्नुवन्ति। द्विजात्यपेक्षितकारुककर्माणि कुर्यादिति भावः। मच.

(६) शिल्पानि सुवर्णलोहच्छत्रादिकरणानि। + नन्द.

(७) सामान्यतः सर्वकारुकर्मप्राप्तौ विशेषमाह – यैरिति। तथा च यैः कारुककर्मभिर्ब्राह्मणादीनां सेवा भवति तानि तक्षणादीन्येव कुर्यात्, नान्यानीत्यर्थः। भाच.

अत्यन्तापदि ब्राह्मणस्य सर्वविषयकयाजनाध्यापनप्रतिग्रहाणां सर्वतोऽन्नग्रहणस्य चानुमतिः

**[1]वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः।**
**अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत्॥**

(१) अनातिष्ठन् इच्छया। एतदुक्तं भवति – क्षत्रवृत्त्यसंभवे यदि वा वैश्यवृत्तिमाचरेत् असत्प्रतिग्रहं वा। तुल्ये एते वृत्ती। असत्प्रतिग्रहात्क्षत्रवृत्तिः श्रेयसी। अथ वा अनातिष्ठन् वैश्यवृत्तिम्, असंभवे। ततश्चासत्प्रतिग्रहो वैश्यवृत्तेर्हीनतरः। स्वे पथि स्थित इति ब्रुवन्नापद्वृत्तीनां समुच्चयोऽस्तीति ज्ञापयति। अवृत्त्या कर्षितः सीदन् अवसादं प्राप्नुवन्। मेधा.

(२) ब्राह्मणः वृत्त्यभावपीडितोऽवसादं गच्छन् क्षत्रियवैश्यवृत्तिमनु(? ना)तिष्ठन् स्ववृत्तौ वर्तमान इदं वक्ष्यमाणं वृत्तिकर्मानुतिष्ठेत्। अतश्च परवृत्तितोऽसत्प्रतिग्रहो ब्राह्मणस्य श्रेयान्। तदुक्तम् – 'वरं स्वधर्मो विगुणः' (मस्मृ. १०।९७) इति। ‡ गोरा.

(४) यस्य पुनः उक्तप्रशस्तप्रतिग्रहाद्यसंभवः विशुद्धत्वेन वैश्यादिवृत्त्यनाश्रयणं च तस्य गर्हितप्रतिग्रहाद्यपि न दोषायेत्याह मनुः – वैश्यवृत्तिमिति। अवृत्तिकर्शितः वृत्त्यभावपीडितः। इमं वक्ष्यमाणमित्यर्थः। स्मृच. २।४६४

(५) किंचान्यत्, वैश्यवृत्त्याऽपरितुष्यतो ब्राह्मणस्य स्ववृत्तौ स्वाच्छन्द्यमाह – वैश्येति द्वाभ्याम्। स्वे पथि वेदाभ्यासादौ। इमम् असत्प्रतिग्रहाख्यम्। मच.

**[2]सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः।**
**पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते॥**

---

# गृर., बाल. गृकवत्।

$ शूशि. मचवत्।

§ स्मृकौ., बाल. मेधागतम्।

+ शेषं ममुगतम्।

(१) **मस्मृ.** १०।१००; **मिता.** ३।३५; **गृक.** २७०; **स्मृच.** २।४५६, ४७४; **गृर.** ४७९; **पमा.** १।४२३ प्रच (सुच); **मपा.** २३३; **स्मृकौ.** ९४; **शूशि.** ४०; **मुक्ता.** ६७ पमावत्; **शूक.** ७१; **आन.** ६४० यैः कर्मभिः प्र (कर्मभिः स्वैः सु); **बाल.** १।१२१; पृ. ३७८.

‡ मवि., ममु., नन्द. गोरावत्। भाच. गोरागतम्।

(१) **मस्मृ.** १०।१०१; **गोरा.** न्निमं धर्मं (न्निदं कर्म); **अप.** ३।४० स्वे पथि (स्वपथि) अवृत्ति (स्ववृत्ति); **स्मृच.** २।४३४ कर्षि (कर्शि); **ममु.** न्निमं धर्मं (न्निमां वृत्तिं); **मपा.** २३३; **बाल.** ३।४१ स्वे पथि (स्वपथि) कर्षि (कर्शि).

(२) **मस्मृ.** १०।१०२; **गोरा.** ४।३३ प्रथमचरणमात्रम्; **अप.** ३।४० प्रति (संप्र); **मभा.** ७।४ पू.; **स्मृच.** २।४५७; पू.: ४६४-४६५ श्लोकार्धे जीवितेत्यग्रिमार्धव्यवधानेन व्यत्यासेन च पठिते; **ममु.** ४।३३ गोरावत्; **पमा.** २।३२६; **मपा.**२३३ पू.; **आपा.** ११२; **मर.**१८९ पू.; **आत.**३५३ पू.; **मुक्ता.**५६; **आन.**६२६; **बाल.**३।४१.

(१) सर्वत इति प्रतिग्राह्यजातिगुणानामपेक्षा न कर्तव्या। अत्रापि हीनहीनतरहीनतमेषु क्रमेण पूर्वपूर्वाभावे उत्तरोत्तर-प्राप्तिरस्त्येव। यथा क्षत्रवृत्त्यभावे वैश्यवृत्तिः। पवित्रं गङ्गास्रोतः। तत् अमेध्यसंसर्गे न दुष्यति। 'नदी वेगेन शुध्यति' (मस्मृ. ५।१०८) इत्युक्तम्। एवं ब्राह्मणोऽपीति। † मेधा.

(२) पवित्रं वह्न्यादि। धर्मतो धर्मबलात्। मवि.

(३) अत्रार्थान्तरन्यासो नामालंकारः। * ममु.

(४) अनयं मरणम्। पवित्रं वेदाभ्यासेन सर्वदा पूतो विप्रः प्रकरणात्, पवित्रं वह्न्यादिर्दृष्टान्तो वा धर्मतः धर्मशास्त्रात् स्वधर्माद्वा यत्पवित्रं तन्न दुष्यति न दुष्टमिति प्रमितम्। + मच.

(५) सर्वतः अप्रतिग्राह्यादपि। प्रतिगृह्णीयादिति याजनाध्यापनयोरप्युपलक्षणम्। नन्द.

(६) अनयं गतः आपद्गतः। धर्मतः पवित्रं द्विजं-(? जः) न दुष्यति एतदुपपद्यते युक्तमेव। भाच.

**'नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्।**
**दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते।।**

(१) पूर्वेणासत्प्रतिग्रह उक्तः। अनेन याजनाध्यापने अनुज्ञायेते। गर्हितादिति सिंहावलोकितवत्पूर्वाभ्यामप्यभि-संबध्यते। यथाऽग्निरापश्च सर्वदा शुद्धा एवं ब्राह्मणा अपीति प्रशंसा। केचिदाहुः – (न) असत्प्रतिग्रहवदसद्याजनाध्यापने अप्यनुज्ञायेते। यद्यभविष्यतां तदा पूर्वश्लोक एव प्रतिग्रह-वदपठिष्यताम्। इह तु विधिप्रत्ययाभावात् 'दोषो भवति विप्राणाम्' इति वर्तमानप्रत्ययेन सिद्धव्यपदेशादर्थवादता-प्रतीतिः। किंच प्रति(ग्रह)वचनं तावदर्थवादः, पूर्वेण सिद्धत्वात्, तदेकवाक्यत्वापत्तेर्या(? त्वाद्या)जनाध्यापने अप्येवं भवितुमर्हतः। वयं तु ब्रूमः – असंभवेऽसत्प्रतिग्रहस्य तत्रापि वृ(? प्रवृ)त्तिर्युक्ता। यतः प्रवृत्तिः स्मर्यते – 'यथा-कथंचित्स आत्मानमुद्धरेदन्यत्र प्रत्यवायेभ्यः'। कर्मार्थस्त्वाप-द्धर्मपाठः। × मेधा.

(२) गर्हितादिति त्रिष्वन्वितम्। विप्राणां वेदविद्यावताम्। यथा ज्वलनोऽशुचीन् (अपि ?) दहन्नपूर(? न्नपि पूर)नद्या-दिर्मलक्षालनं कुर्वन्नपि न दुष्यति। मवि.

(३) अत एवाऽऽह – नेति। यथा याजनाध्यापने दोषानापादके, दृष्टान्तः, ज्वलनेन ग्रीष्मातपेन युक्तोऽर्क इव वेदाभ्यासेन युक्तो विप्रः, प्रतिग्रहोऽपि तथा। 'विशुद्धाच्च प्रतिग्रहः' (मस्मृ. १०।७६) इत्यत्र विशुद्धपदं तदर्जितधनस्य फलसिद्धत्वार्थम् (?)। मच.

(४) एतदेव स्थिरीकरोति – नाध्यापनाद्याजनाच्चेति। नन्द.

(५) ज्वलनार्कसमाहितः (? समा हि ते) (समीपे ?) आपद्गतस्य दोषो न। भाच.

**'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।**
**आकाशमिव पङ्केन न स पापेन लिप्यते।।**

(१) पूर्वेणासत्प्रतिग्रह उक्तः, अनेन परिग्रहदुष्टमन्न-मप्यनुज्ञायते। ततस्तत इति जातिकर्मानपेक्षमन्नस्वामिनमाह। शेषोऽर्थवादः। मेधा.

(२) यः प्राणात्ययं प्राप्तः प्रतिलोमादपि अन्नमश्नाति सोऽन्तरिक्षमिव कर्दमेन, पापेन न संबध्यते। ‡ गोरा.

(३) किं पुनः प्रतिग्रहादि कुर्वन्? मवि.

(४) सः ब्राह्मणः। आत. ३५३

---

† गोरा. मेधावत्। आपा. मेधागतम्।

* शेषं मेधावत्।

+ आन. मचगतम्।

(१) **मस्मृ.** १०।१०३; **अप.** ३।४०; **मभा.** ७।४; **गौमि.** ७।४ मा हि ते (मो हि सः); **स्मृच.** २।४६४; **पमा.** १।१८३ द्वा ग (द्वाऽग) नाम्बु (नार्क): २।३२६ नाम्बु (नार्क); **मपा.** २३३; **आपा.** ११४ नाम्बु (नार्क); **मर.** १८९; **आत.** ३५३; **मुक्ता.** ५४ णां ज्वलनाम्बु (णामनलार्क); **आन.** ३७५ (ज्वलनार्कसमो हि सः) एतावदेव; **नन्द.** नाद्वा (नाच्च); **बाल.** ३।४१.

× गोरा., ममु. मेधागतम्।

‡ ममु. गोरावत्। भाच. गोरागतम्।

(१) **मस्मृ.** १०।१०४; **मेधा.** यत (तत); **अप.** ३।४० वितात्य (वतान्य) न स पापेन (न पापेन स); **ड.** १।२१।३ पापेन (दोषेण); **स्मृच.** २।४६४-४६५ पङ्के (पापे) मध्ये सर्वत इति पूर्व-श्लोकार्धपाठः; **पमा.** १।१८६:२।३२६ उवत्; **मपा.** २३३-२३४; **मर.** १८९ योऽन्नमत्ति (योऽन्तमेति); **आत.** ३५३; **मुक्ता.** ५६ उवत्: ४४६ उत्तरार्धे (लिप्यते न स पापेन पद्मपत्रमिवाम्भसा); **यसं.** ७५ यत (इत) शेषं मुक्ता. ४४६ वत्; **यप्र.** ५५ मुक्ता. ४४६ वत्, स्मृत्यन्तरे; **आन.** ३८५ मुक्ता. ४४६ वत् : ६२६-६२७ शमिव (श इव) पापेन (दोषेण); **बाल.** ३।४१.

(५) किंच-जीवितेति। य इति सामान्यशब्दोऽपि ब्राह्मणविषय एव, प्रकरणात्, अन्येषां प्रतिग्रहनिषेधाच्च। अत्र अनदनीयौ(? या)दनम्, अवृत्तिकर्शितत्वम्, जीवितात्ययमिति लिङ्गत्रयं पवित्रमित्यादिदृष्टान्तद्वयं च लौकिकालौकिकसर्वथाऽदोषतात्पर्यकम्। मच.

(६) सर्वत्र भोजनमप्यस्याह(? स्यादु)ष्टमित्याह – जीवितात्ययमापन्न इति। नन्द.

[1]**अजीगर्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः।**
**न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन्।।**

(१) अजीगर्तो नाम ऋषिः। स क्षुत्परिपीडितः पुत्रं सुतं शुनःशेपनामानं हन्तुम् उपासर्पत् प्रचक्रमे। न चासौ क्रव्याद इति युज्यते। शौनःशेपमाख्यानं बह्वृचि सुप्रसिद्धम्। नात्र विस्तर आगमस्योपयुज्यते। परमार्थस्तु परकृतिरूपोऽर्थवादः। एवं सर्व एते द्रष्टव्याः। † मेधा.

(२) अत्र परकृतिरूपार्थवादमाह – अजीगर्त इति। ऋषिः अजीगर्ताख्यो बुभुक्षितः सन्पुत्रं शुनःशेपनामानं स्वयं विक्रीतवान् यज्ञे गोशतलाभाय, यज्ञयूपे बद्ध्वा विशसिता भूत्वा हन्तुं प्रचक्रमे। न च क्षुत्प्रतीकारार्थं तथा कुर्वन्पापेन लिप्तः। एतच्च बह्वृचब्राह्मणे शुनःशेपाख्यानेषु व्यक्तमुक्तम्। ममु.

(३) अत्रार्थे ऐतिह्यं प्रमाणयति – अजीगर्त इति चतुर्भिः। सुतं शुनःशेपम्। हन्तुं वरुणार्थं पुरुषमेधे। उपासर्पत् विक्रीतस्य सुतस्य पुनर्हननार्थं गतवान्। मच.

(४) अत्र शिष्टाचारान्दर्शयति – अजीगर्तः सुतं हन्तुमिति। आचरन्निति हेत्वर्थे शतृप्रत्ययः। नन्द.

[2]**श्वमांसमिच्छन्नार्तोऽत्तुं धर्माधर्मविचक्षणः।**
**प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान्।।**

(१) एवं वामदेवो नाम ऋषिः, स आर्तः क्षुधा श्वमांसमत्तुं भक्षयितुमैच्छत्। मेधा.

(२) वामदेवाख्य ऋषिः कार्याकार्यवित् क्षुधार्तः प्राणपरित्राणार्थं श्वमांसं भक्षयितुमिच्छन् पापेन न लिप्तवान्। ¶ गोरा.

(३) श्वमांसमिच्छन्नार्तोऽत्तुमितीच्छामात्रेणापि पापोत्पत्तिं दर्शयति। मवि.

[1]**भरद्वाजः क्षुधार्तस्तु सपुत्रो विजने वने।**
**बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः।।**

(१) वृधो नाम तक्षा अप्रतिग्राह्यः। ततो बह्वीर्गा भरद्वाजो नाम ऋषिः प्रतिजग्राह। मेधा.

(२) भारद्वाज इति। भारद्वाजाख्यो मुनिः मनस्वी सपुत्रो निर्जने वने क्षुत्पीडितो वृधुनाम्नस्तक्ष्णोः(? क्ष्णो) बह्वीर्गाः प्रतिगृहीतवान्। * गोरा.

(३) बह्वीर्गा इति सतात्पर्यं विशेषणम्, 'एकैव गौः प्रतिग्राह्या' इति वचनात्। बृहत्तक्ष्णः रथकारात्। मवि.

(४) वृधोः वृधुनामकस्य तक्ष्णः आयोगवजातेः। विजने निह्नुत्य प्रतिजग्राहेत्यन्वयः। अत्र हेतुः – महातपा इति। तेन संभवत्प्रकारान्तरे न कार्यं तदिति भावः। मच.

(५) बृहत्तक्ष्णः राज्ञः प्रतिग्रहः। भाच.

[2]**क्षुधार्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम्।**
**चण्डालहस्तादादाय धर्माधर्मविचक्षणः।।**

(१) श्वजाघनीं श्वपुच्छम्। $ समु. ४९

(२) विश्वामित्रो नाम महामुनिः प्रसिद्धः। स कस्मिंश्चिदवसरे क्षुधादुःखेन श्वजाघनीं चण्डालहस्तादादायात्तुमभ्यागत(? गात्) आभिमुख्येनाध्यवसितः। न केवलं परिदुष्टेऽन्ने दोषोऽस्ति, यावत्स्वभावदुष्टेऽपीति श्वजाघनी-

---

† गोरा., मवि., भाच. मेधागतम्।

(१) **मस्मृ.** १०।१०५; **समु.** ४९ पापेन (दोषेण) कार (घात); **अप.** ३।४० पापेन (दोषेण); **स्मृच.** २।४६५; **पमा.** २।३२६ अपवत्; **मुक्ता.** ५६ अपवत्.; **आन.** ६२७ अजी (आजी) पापेन (दोषेण).

(२) **मस्मृ.** १०।१०६; **अप.** ३।४०; **स्मृच.** २।४६५; **पमा.** २।३२६ परिरक्षार्थं (रक्षणार्थाय); **मुक्ता.** ५६ पमावत्.

¶ ममु. गोरावत्। मच., नन्द., भाच. गोरागतम्।

* ममु. गोरावत्।

$ स्मृच. समुवत्।

(१) **मस्मृ.** १०।१०७; **मेधा.** वृधोस्त (वृधात्त); **अप.** ३।४० (भारद्वाजः क्षुधं हन्तुं सपुत्रो विजने वने। बह्वीर्गाः प्रतिजग्राह शिशुतीक्ष्णो महात्मनः।।); **मवि.** वृधोस्त (बृहत्त); **स्मृच.** २।४६५ वृधोस्त (पृथोस्त); **पमा.** २।३२६ विजने (निर्जने) वृधोस्तक्ष्णो (बृहत्प्रज्ञो); **मुक्ता.** ५६ विजने (निर्जने); **भाच.** मविवत्.

(२) **मस्मृ.** १०।१०८; **समु.** ४९ अशुद्धो ग्रन्थः; **मेधा.** ५।१५७ (विश्वामित्रजाघनीम्) एतावदेव; **अप.** ३।४०; **स्मृच.** २।४६५; **पमा.** २।३२६; **मपा.** २३४; **मुक्ता.** ५६ मित्रः श्वजा (मित्रश्च जा); **आन.** ६२७; **बाल.** ३।४१.

ग्रहणम्। सर्वदोषदुष्टमप्यापदि भक्षयितव्यमिति श्लोकतात्पर्यार्थः। मेधा.

(३) विश्वामित्रः कार्याकार्यवित् क्षुत्पीडितः चण्डालहस्तात् श्वश्रोणीं प्रतिगृह्य भक्षयितुमध्यसितवान्। # गोरा.

(४) श्वजाघनीं शुनः पुच्छमूलमांसम्। + मवि.

अत्यन्तापद्वृत्तिषु याजनादिषु प्रतिग्रहस्य जघन्यत्वं सहेतुकम्

***[१]प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि।**
**प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः।।**

(१) आपदीषद्गर्हितयोर्याजनाध्यापनयोः संभवे न गर्हितप्रतिग्रहे वर्तितव्यमिति श्लोकार्थः। मेधा.

(२) आपत्प्रकरणात् 'जपहोमैरपैत्येनः' इति वक्ष्यमाणदर्शनात् गर्हितयाजनाध्यापनप्रतिग्रहाणां मध्यात् असत्प्रतिग्रहो निकृष्टः ब्राह्मणस्य परलोके नरकहेतुः। अतः आपदि प्रथममसद्याजनाध्यापनयोः प्रवर्तितव्यम्, तदभावेऽसत्प्रतिग्रह इत्येवंपरमेतत्। § गोरा.

(३) अत्र पुनर्विशेषमाह – प्रतिग्रहादिति। मवि.

(४) याजनाध्यापने प्रतिग्रहात्प्राशस्त्ये( ? प्रशस्ते) इत्यनुवदति – प्रतिग्रहादिति। प्रत्यवरः प्रति पूर्वमपेक्ष्य अवरः निकृष्टः, प्रेत्य स्थितस्यापि नरकहेतुत्वात्। मच.

(५) या तु 'प्रतिग्रहः प्रत्यवरः' इति मनौ प्रतिग्रहनिन्दा सा विशिष्टयाजनापेक्षया। निषिद्धप्रतिग्रहविषयेति केचित्। बाल. १।१२१ पृ. ३८२

---

# ममु. गोरावत्। मपा., मच., नन्द. गोरागतम्।

+ भाच. मविवत्।

* अस्य गृक-निप्रव्याख्याने 'पूर्वः पूर्वो०' इति गौतमवचनव्याख्याने द्रष्टव्ये।

§ ममु. गोरावत्। स्मृच., भाच. गोरागतम्।

(१) **मस्मृ.** १०।१०९; **मेधा.** ४।५, ९ तृतीयचरणमात्रम्; **अप.** ३।४० तथैवाध्या (तथा वाऽध्या); **गृक.** १८६ तृतीयचरणमात्रम्; **स्मृच.** २।४७६ प्रेत्य (स तु); **पमा.** १।१८२ प्रेत्य (स तु) उत्त.; **निप्र.** २।२५७ उत्त.: २।२५८, ३०५ तृतीयचरणमात्रम्; **नन्द.** जनाद्वा (जनाच्च): ४।९, १०।१११ तृतीयचरणमात्रम्; **बाल.** १।१२१ पृ. ३८२.

**[१]याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम्।**
**प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः।।**

(१) अत्रैव हेतुरूपोऽर्थवादः। प्रवृत्तिरेवेदृशी लोकस्य यदनुपनीता नाधीयते न च यजन्ते। अतः सुष्ठु आर्तोऽपि न शूद्रं याजयिष्यत्यध्यापयिष्यति वा। दानं तु सार्ववर्णिकं प्रसिद्धम्। शूद्रादपि प्रतिग्रहः कर्तुं प्राप्नोति। अतः स प्रत्यवरः। मेधा.

(२) अत्र हेतुमाह – याजनाध्यापने इति। याजनाध्यापने आपद्यनापदि च द्विजातीनामेव क्रियेते। प्रतिग्रहः पुनर्निकृष्टजातेः शूद्रादपि क्रियते, अतोऽसौ गर्हितः। + गोरा.

(३) न केवलं शूद्रात् किंतु अप्यन्त्यजन्मतः चण्डालात्। ¶ मवि.

***[२]जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्।**
**प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च।।**

(१) जपेन होमेन च एनः पापम् अपैति विनश्यति। तेन न क्षतिः। प्रतिग्रहाद्यदेनः तत्त्यागेन तस्य प्रतिग्रहस्य, तपसा वक्ष्यमाणेन 'मासं गोष्ठे पयः पीत्वा' (मस्मृ. ११।१९४) इत्यादि (ना)। मेधा.

(२) किंच, जपहोमैरिति। $एनोग्रहणादसद्याजनाध्यापनैः यदुत्पन्नं पापं तत् प्रायश्चित्तप्रकरणवक्ष्यमाणरूपेण जपहोमैर्निवर्तते। असत्प्रतिग्रहजनितं पुनस्तद्द्रव्यत्यागेन 'मासंगोष्ठे पयः पीत्वा' इत्येवमादिवक्ष्यमाणतपसा चोपशाम्यति। § गोरा.

---

+ ममु. गोरावत्। मच., भाच. गोरागतम्।

¶ शेषं गोरागतम्। नन्द. मविवत्।

* अस्य अपव्याख्यानं 'पूर्वः पूर्वो गुरुः' इति गौतमवचने द्रष्टव्यम्।

$ 'एति गच्छति प्रायश्चित्तेन' इति एनःशब्दव्युत्पत्तिमभिध्यायेदमुक्तम्।

§ ममु. गोरावत्। भाच. गोरागतम्।

(१) **मस्मृ.** १०।११०; **अप.** ३।४०; **स्मृच.** २।४७६; **पमा.** १।१८३ हस्तु क्रियते (हो गर्हितः स्यात्) उत्त.; **निप्र.** २।२५७.

(२) **मस्मृ.** १०।१११; **मिता.** ३।३५ च (तु); **अप.** ३।४० ध्यापनैः (ध्यापनात्); **मवि.** तपसैव (तपसाऽपि) इति पाठोऽर्थापत्त्या कल्प्यते; **स्मृच.** २।४७६; **पमा.** १।१८३-१८४; **मर.** १६९ च (हि); **निप्र.** २।२५७; **मुक्ता.** ५९.

(३) जपहोमैः, न तु† तदुपात्तवित्तत्यागैरेव(? रपि) अतः सुशकप्रायश्चित्तताऽपि। त्यागेन प्रतिग्रहोपात्तवित्तस्य। तपसा चान्द्रायणादिना। तपसैवेति क्वचित्पाठः। तद्वित्तस्य त्यागासंभवे तपसाऽपि(? सैव) भूयसाऽपैतीत्यर्थः। मवि.

(४) प्रायश्चित्तगौरवादपि ताभ्यां प्रतिग्रहोऽवर इत्याह – जपेति। # मच.

सर्वतः सकाशात् शिलोञ्छमप्यापद्वृत्तिः, तस्य तारतम्येन प्रतिग्रहात् प्राशस्त्यम्

**¹शिलोञ्छमप्याददीत विप्रोऽजीवन्यतस्ततः।**
**प्रतिग्रहाच्छिलः श्रेयांस्ततोऽप्युञ्छः प्रशस्यते।।**

(१) अस्याप्यनुवादोऽर्थवादमेवाऽऽह। महदेतदन्याय्यं यत्परद्रव्यग्रहणम्। तत्र कदाचिदश्रूयमाणस्य ग्रहणेऽपीदं भवद्दुष्यतोऽप्येतावता प्रशस्यत्वम्। अत्र शिलः प्रतिग्रहसमानजातीयः। स एवायं प्रकर्षप्रत्ययहेतुर्भवति। प्रतिग्रहाच्छिलः श्रेयानिति। यतो निकृष्टमपेक्ष्योत्कृष्टत्वनिमित्तं प्रकर्षमनुभवति। न हि भवति चण्डालाद् ब्राह्मणः श्रेयान्। अतः शिलोञ्छयोरपि ग्रहणेऽनस्वग्रहणम्। तथापि शिलोञ्छं श्रेयः। यद्यपि शिलोञ्छवृत्तिरत्यन्तोत्कृष्टोक्ता तथाप्यस्ति प्रतिग्रहेण किंचित्साम्यम्। यतस्तत्राधिष्ठितदेवतानिष्ठितभृत्यागतं क्रियावैकल्यम्। असत्प्रतिग्रहेऽपि आत्मनि ग्रह उपपन्नो न कुप्यतीत्ययमिति। तत्रेतरसंनिहितद्रव्यस्याऽऽत्मनि ग्रहः। अतः शिलोञ्छवृत्तिरपि न निरवद्या। ततो युक्तं प्रतिग्रहाच्छिलः श्रेयानित्यादि। मेधा.

(२) ब्राह्मणः स्ववृत्त्या अजीवन्नुपपातकिभ्योऽपि शिलोञ्छं गृह्णीयात्, न तु तत्संभवे असत्प्रतिग्रहेण वर्तते-(? र्तेत)। यस्मादसत्प्रतिग्रहात् शिलोच्चयनं प्रशस्तम्, ततोऽप्येकैकधान्यकणोच्चयनमिति। × गोरा.

(३) जीवनासंभवे यतस्ततोऽपि चाण्डालादिक्षेत्रजादि-(? त्रादपि)। यतस्ततोऽपीत्यन्वयः। 'लूनशीर्णमनुज्ञातं शिलम्' इति देवलः। तदेव स्वामिना त्यक्तं तदनुमतिं विनैव गृह्यमाणमुञ्छः। एकैककणादानमुञ्छः, कणिशादानं तु शिलमित्यन्ये। तद्वृत्तिद्वयजीवनसंभवे सत्प्रतिग्रहोऽपि न कार्यः। तत्राप्युञ्छेन जीवनसंभवे शिलं न ग्राह्यम्, तत्रोपरोधसंभवात्। मवि.

(४) प्रशस्तस्थानात् शिलोञ्छवृत्त्यभावे यतस्ततोऽपि कृष्टादपि शिलोञ्छवृत्तिः, न तु प्रतिग्रहः। यदाह मनुः – शिलोञ्छमिति। यतस्ततोऽपीत्यपिशब्दः (भिन्न)क्रमः। शिलः श्रेयान् श्रेष्ठप्रतिग्रहादपकृष्टोऽपि शिलः श्रेयान्। निप्र. २।२६७

(५) याजनादिभ्योऽपि शिलोञ्छे प्रशस्ते इत्यनुवदंस्तयोरपि शिलादुञ्छं प्रशस्ततरमित्याह – शिलेति। उञ्छेन जीवञ्छिलं न कुर्यात्। शिलेन जीवन्नध्यापनं न कुर्यात्। अध्यापनेन जीवन्याजनं न कुर्यात्। याजनेन जीवन्प्रतिग्रहं न कुर्यात्। तत्रापि विशुद्धेन जीवन्नविशुद्धं न कुर्यादिति भावः। मच.

(६) कल्पान्तरमाह – शिलोञ्छमप्याददीतेति। अजीवन्निति पदम्। यतस्ततः विशिष्टाविशिष्टधनेभ्यः क्षेत्रखलादिषु शिलमुञ्छं वाऽऽददीत। उत्तरार्धेन यतस्ततः प्रतिग्रहशिलोञ्छानां विशेष उक्तः, यतस्ततः प्रतिग्रहात् अन्यतः (? अन्त्यतः) प्रतिग्रहात् शिलः श्रेयान्। ततोऽपि तस्मादपि। एतौ शिलोञ्छौ अदत्तादानविषयौ चतुर्थाध्यायोक्तौ आपद्धर्मवृत्त्यर्थौ। उञ्छो धान्यश आदानम्, कणिशाद्यर्जनं शिलमिति। नन्द.

(७) पूर्वं शिलोञ्छं शिलं वा उञ्छं वा यदाऽपर्याप्तं तदा यतस्ततः महापातकिनोऽपि उपपातकादिभ्योऽपि गृह्णीयात्। ततः शिलात् उञ्छः प्रशस्यते। भाच.

आपदि राज्ञः सकाशात् प्रतिग्रहः

**¹सीददभिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः।**
**याच्यः स्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति।।**

---

† तच्छब्देन याजनाध्यापने ग्राह्ये।

# शेषं गोरागतम्। नन्द. मचवत्।

× ममु. गोरावत्। गृक., गृर. गोरागतम्।

(१) **मस्मृ.** १०।११२; **गृक.** १८४; **गृर.** ४२३ शस्य (वर्त); **निप्र.** २।२६७ दीत (दाति) प्युञ्छः (प्युञ्छं); **मुक्ता.** ५४ शिलो (सिलो) प्रोऽजी (प्रो जी) च्छिलः श्रेयांस्ततोऽप्यु (त्सिलं श्रेयस्ततो ह्यु).

(१) **मस्मृ.** १०।११३; **मेधा.** ४।३३ (स्नातके... स्थितिः); **गृक.** २३२; **ममु.** ४।३३ मेधावत्; **गृर.** ४५६; **निप्र.** २।२७२ कुप्य (कूप्य) याच्यः स्यात (याचितः).

(१) अत्र त्रीणि निमित्तानि राजप्रतिग्रहे उच्यन्ते। सीदद्भिः कुटुम्बावसादं प्राप्तैः आपदीत्यर्थः, कुप्यमिच्छद्भिः कुण्डलकटकाद्यु( ?काद्यन्यदु)ष्णीषासनादि, काञ्चनादि अन्यद्वा धनं गोहिरण्यादि यज्ञोपयोग्यन्यद्वा विप्रैः पृथिवीपतिर्याच्यो देशेश्वरोऽभ्यर्थयितव्यः। अत्र यदुक्तं 'न राज्ञः प्रतिगृह्णीयात्' (मस्मृ. ४।८४) इति, स दुष्टराजविषयः प्रतिषेधो द्रष्टव्यः। तथा चोक्तं 'लुब्धस्योच्छास्त्रवर्तिनः' (मस्मृ. ४।८७) इति। अदित्सन् याचितः सन् दातुं यो नेच्छति स त्यागमर्हति। तस्य विषये न वस्तव्यम्। अथवा त्यागः हानिः। अन्यस्य चानिर्देशाद्धर्महानिं प्राप्नोति। मेधा.

(२) सीदद्भिरिति। स्नातकैर्ब्राह्मणैर्धनाभावात् धर्मात्मकुटुम्बावसादं गच्छद्भिरसारद्रव्यं गृहोपयोगि शयनाशनासनादि वा धनं धान्यं हिरण्यादि वेच्छद्भिः पार्थिवः अक्षत्रियः क्षत्रियोऽपि वोच्छास्त्रवर्ती याचितव्यः स्यात्। अददतस्तस्य देशे न वस्तव्यमिति। इदं 'न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः' 'यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः' (४।८४, ८७) इत्यक्षत्रियोच्छास्त्रवर्तिनो राज्ञोरनापदि निषिद्धयोरापद्यभ्यनुज्ञानार्थम्। गोरा.

(३) कुप्यं हेमरजताभ्यामन्यत्कांस्यादि धनम्। स्नातकैः विप्रैः (अन्यत् कांस्यादि ?) धनं कुप्यादन्यत्सुवर्णादि। § गृक. २३२

(४) सीदद्भिः अन्नाभावेन उञ्छस्याप्यलाभात्। तथा कुप्यं कांस्यताम्रादि इच्छद्भिः तदर्थिभिः। तथा धनं बहुसुवर्णादिकोशम् इच्छद्भिः। अजीवनदशायामतिरागौत्कट्ये वा नृपतिर्याच्यः, नान्यथेत्यर्थः। स च नृपोऽदित्सन् ब्राह्मणैः अन्यैरपि त्याज्यः। + मवि.

(५) स्नातकैर्ब्राह्मणैर्धनाभावाद्धर्मार्थं कुटुम्बावसादं गच्छद्भिः सुवर्णरजतव्यतिरिक्तं धान्यवस्त्रादि कुप्यम्, धनं यागाद्युपयुक्तं हिरण्याद्यपि आपत्प्रकरणात्क्षत्रियोऽप्युच्छास्त्रवर्ती याचितव्यः स्यात्। यश्च दातुं न इच्छति कृपणत्वेनावधारितः स त्याज्यः, न याचनीय इत्यर्थः। मेधातिथिगोविन्दराजौ तु 'त्यागमर्हतीति तस्य देशे न वस्तव्यम्' इति व्याचक्षाते। ममु.

(६) सीदद्भिरिति। बहुवचनलिङ्गाद्बहुतरकुटुम्बैः। त्यागं तस्य राज्ञः देशस्य वा। # मच.

(७) त्यागं याजनादिषु नाऽऽदेयत्वम्। $ नन्द.

दोषतारतम्यवन्ति प्रतिग्राह्यवस्तूनि

**'अकृतं च कृतात्क्षेत्राद्गौरजाविकमेव च।**
**हिरण्यं धान्यमन्नं च पूर्वं पूर्वमदोषवत्॥**

(१) अकृतम् अकृष्टं क्षेत्रं प्रशस्यम्। अजाविकं च। भवति परस्परविशेषः। उक्तार्थः श्लोको गम्यते। मेधा.

(२) कृष्टात् क्षेत्रात् प्रतिग्रहेऽकृष्टमनुप्तम्, तथा गोच्छागैडकहिरण्यधान्या(न्ना)नां मध्यात् पूर्वं पूर्वमदुष्टतमम्। (तथा) चैषां पूर्वस्यासंभवे परः परः प्रतिग्राह्यः। गोरा.

(३) अकृतम् अकृष्टम्। अन्नं पक्वम्। + गृक. २३३

(४) अकृतं खिलम्। कृतं परिकर्मितम्। अन्नं पक्वम्। कृतादकृतम्। ततः क्रमेणाजादौ( ? दि)। तत्रापि पूर्वं पूर्वं न दोषवत् परिग्रहेऽल्पदोषम्। मवि.

(५) अकृतम् अनुप्तसस्यं क्षेत्रम्। तत् कृतात् उप्तसस्यात् प्रतिग्रहे दोषरहितम्। तथा गोच्छागमेषहिरण्यधान्यसिद्धान्नानां मध्यात्पूर्वं पूर्वमदुष्टम्। ततश्चैषां पूर्वपूर्वासंभवे परः परो ज्ञेयः। * ममु.

(६) ग्राह्येष्वेतेषु पूर्वपूर्वप्रशस्तिमाह – अकृतेति। नात्र तर्कापेक्षा, 'किमिव वचनं न करोति' इति न्यायात्। ‡ मच.

---

§ गृर., निप्र. गृकगतम्।
+ भाच. मविगतम्।

# शेषं गोरावत्।
$ शेषं ममुगतम्।
+ गृर. गृकवत्।
* नन्द., भाच. ममुगतम्।
‡ शेषं ममुगतम्।

(१) **मस्मृ.** १०।११४; **गृक.** २३३ वत् (कृत्); **मवि.** पूर्वमदो (पूर्वं न दो); **स्मृच.** २।४७७ द्गौरजा (द्गोरजा); **गृर.** ४५६ गृकवत्; **निप्र.** २।२७२ तात्क्षेत्राद्गौ (तं क्षेत्रं गौ) : २।२७४ प्रथमचरणमात्रम् : २।२७७ (अकृतं क्षेत्रं) एतावदेवः २।२९५ तात्क्षेत्राद्गौ (तं क्षेत्रं गौ) (अ); **नन्द.** कृतात् (गृहं) दोषवत् (दोषकम्); **भाच.** वत् (भाक्).

सप्त धर्म्या धनागम-
मार्गाः

**'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च।।**

(१) दायः अन्वयागतं धनम्। लाभः निध्यादेः। पित्राद्यर्जिताद्वा बन्धात्संविभागः। यद्यपि तत्पित्रादिक्रमायातं तथापि न तद्दायशब्देन शक्यमभिधातुम्, बहुसाधारण्यात्। तथा च 'निबन्धो द्रव्यम्' (यास्मृ. २।१२१) इति स्मृत्यन्तरे पठितम्। अथवा मित्राच्छ्वशुरगृहाद्वा यल्लब्धं प्रीत्या स लाभः। क्रयः प्रसिद्धः। जयः संग्रामे। प्रयोगकर्मयोगौ कुसीदकृषिवाणिज्यानि। अतश्च वर्णभेदेनैतेषां धर्म्यत्वम्। तत्राऽऽद्यास्त्रयः सर्वसाधारणाः। जयः क्षत्रियस्य। प्रयोगकर्मयोगौ वैश्यस्य। सत्प्रतिग्रहो ब्राह्मणस्य विशेषः। सर्ववर्णेऽपि प्राग्दर्शनन्यायो विभागः। केचित्क्रये विवदन्ते। तन्न युक्तम्, सर्वव्यवहारोच्छेदप्रसङ्गात्। जयं यान(?-पण)बन्धेनापि केचिदिच्छन्ति सर्वविषयम्। तदयुक्तम्, द्यूतधनस्य स्मृत्यन्तरेष्वशुद्धित्ववचनात् 'पाशुकद्यूत' इत्यत्र। तथा परे प्रयोगमव्यापारमाहुः। तथाहि प्रयोगो दृश्यते – 'ज्ञानपूर्वप्रयोगः' इति। तत्र शब्दस्य प्रयोग इति गम्यते। तथा कर्मयोगः कर्मप्रचारः। मेधा.

(२) इत्येवं च सति एषु धर्म्य (त्व)वचनादेतद्भावेनै-(?देतदभावेऽन्ये)ष्वनापच्चोदितेषु वृत्तिकर्मसु प्रवर्तितव्यम्, तदभावे (भावे च?) वा(? चा)ऽऽपद्युदितेषु प्रकृतेष्वित्येवमर्थमिहोच्यते। † गोरा.

(३) धर्म्याः धर्मानपेताः। दायः पित्रादिधनस्य विभागादिना लभ्यस्य प्राप्तिः। लाभः निध्यादेरकस्माल्लाभः। क्रयः धनेन प्राक्स्थितेन भूम्यादेः परिग्रहः। जयः युद्धोद्योगात्प्राप्तिः। प्रयोगः कलावाणिज्यादिना वर्धनम्। कर्मयोगः शिल्पादिकर्म कृत्वा भृतिग्रहः। सत्प्रतिग्रहः शुद्धाच्छुद्धस्य द्रव्यस्य तिलादिव्यतिरिक्तस्य प्रतिग्रहः। अत्राऽऽद्यास्त्रयः सर्वेषां वर्णानाम्, ततः परे त्रयः क्षत्रविट्छूद्राणामेवं क्रमात्। अन्त्यो विप्रस्यैवेति। ‡ मवि.

(४) जयः क्षत्रियस्य। ब्राह्मणस्याऽऽपदि युद्धाद्विना। कर्मयोगः कृषिवाणिज्यादि वैश्यस्य। ब्राह्मणस्याऽऽपदि। * निप्र. २।२५१

(५) प्रतिग्रहप्रसङ्गेन धनोपायान्तरमनुवदन्नुपसंहरति – सप्तेति। क्रयः स्वधनेन विनिमयेन वा। जयः द्यूतयुद्धाद्यैः। आपदि प्रतिग्रहशङ्कानिरासाय विवरणम्। * मच.

(६) लाभः अशीतिवृद्ध्यादिना। क्रयः गृहक्षेत्रादेः। जयः व्यवहारे। प्रयोगः प्रकृष्टो योगः। उपासनादिः कर्मयोगः। याजनादिः सत्प्रतिग्रहः। * आन. ६२१

(७) अथ ब्राह्मणस्यानापद्विषयांस्तावदाह – सप्त वित्तागमा इति। धर्म्याः धर्मयुक्ताः, अनापद्विषया इत्यर्थः। दायः प्रसिद्धः। लाभः निध्यागमादिः। क्रयः क्षेत्रादिक्रयः। जयः वादिषु प्रतिवादिनिग्रहः। प्रयोगः अध्यापनम्। कर्मयोगः याजनम्। सत्प्रतिग्रहः विशुद्धद्विजातिप्रतिग्रहः। नन्द.

आपद्विषया दश
वृत्तयः

**'विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
धृतिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः।।**

(१) सर्वपुरुषाणामापदि वृत्तिरियमनुज्ञायते। तत्र विद्या वेदविद्याव्यतिरेकेण वैद्यकतर्कभूत§विषासनविद्या सर्वेषां जीवनार्था न दुष्यति। शिल्पं व्याख्यातम्। भृतिः प्रेष्यकत्वम्। सेवा परवृत्तानुवृत्तित्वम्। धृतिः संतोषः। दृष्टान्तार्थं चैतत्। अतो यथाविहितवृत्त्यभावेनैते जीवनोपायाः संकीर्यन्ते, पुरुषमात्रविषयत्वात्। « मेधा.

---

† शेषं मेधागतम्। गृक., स्मृच., गृर., पमा., आपा., विपा. गोरागतम्। ममु. गोरावत्।

(१) **मस्मृ.** १०।११५; **मेधा.** ४।२२६ प्रथमचरणमात्रम् (=); **गृक.** २५९; **स्मृच.** २।४५०; **गृर.** ४७१; **पमा.** १।३०९; **आपा.** ११० च (वा); **निप्र.** २।२५१; **मुक्ता.** ५४; **विपा.** ३।२।२४५; **आन.** ६२१ धर्म्या (धन्या); **सस्मृ.** १५८.

‡ भाच. मविगतम्।

* शेषं गोरागतम्।

§ विषस्य असनं शरीराद्बहिः क्षेपणम्, विषापनयनमित्यर्थः।

« गृक. मेधागतम्।

(१) **मस्मृ.** १०।११६; **मेधा.** ४।२२६ प्रथमचरणमात्रम् : १०।६३ निर्देशमात्रम्; **मिता.** ३।४२ रक्ष्यं (रक्षा) धृति (गिरि); **गोरा.** रक्ष्यं (रक्षा); **अप.** ३।४१ पृ. ९३६ गो (गौ) धृतिर्भैक्ष्यं (गिरिर्भैक्षं); **गृक.** २२२ रक्ष्यं (रक्षं) भैक्ष्यं (भैक्षं); **स्मृच.** २।४७५ भैक्ष्यं (भैक्षं) ; **गृर.** ४४९ कुसी (कुशी); **निप्र.** २।३२८ गो (गौ).

(२) आपत्प्रकरणाज्जीवनहेतव इति च निर्देशात् तेषां मध्याद्येन यस्यानापदि जीवनं निषिद्धं तेन तस्याऽऽपद्यभ्यनुज्ञायते। यथा ब्राह्मणस्य भृतकाध्यापकत्वेन, तदनेनाऽऽपद्यभ्यनुज्ञायते। एवं शिल्पादिष्वपि विज्ञेयम्। शिल्पं गन्धयुक्त्यादिकर्मकरणम्। भृतिः प्रेष्यत्वम्। सेवा चित्तानुवर्तनम्। गोरक्षा पाशुपाल्यम्। विपणिः वणिज्या। कृषिः स्वयं कृताऽपि। धृतिः संतोषः। तस्मिन् हि सति स्वल्पकेनापि जीव्यते। भैक्ष्यं स्नातकस्यापि। कुसीदं वृद्ध्या धनप्रयोगः स्वयंकृतोऽपि। इत्येभिर्दशभिरापदि जीवनम्। × गोरा.

(३) विद्यादयो दश जीवनहेतवः प्राणधारणहेतवः धर्माधर्मसाधारणाः। विद्या विद्यातिशयः। तेन प्रसादादिना धनलाभः। शिल्पं चित्रादिकौशलम्। भृतिः परप्रेषणं कृत्वा मासादिनियतभृतिः। सेवा चाटुकारेण नियतं धनप्राप्तिः। गोरक्षं पशुपालनं कृत्वा यथोक्तपशुभागग्रहणम्। (विपणिः) वाणिज्यम्। कृषिः कर्षणम्। धृतिः प्राप्तेनाल्पेनापि संतोषः। भैक्ष्यं याच्ञया लब्धम्। कुसीदं वृद्ध्या धान्यादिदानम्। सर्वमेतदापदि यथायोगं वर्णानाम्। तत्र विप्रस्य 'सेवा श्ववृत्तिः' (मस्मृ. ४।६) इत्यादिना सेवा निन्दिता। मवि.

(४) गोरक्ष्यकुशीदवाणिज्यानां श्लोकनिबद्धत्वमात्रेणोपन्यासः। वृत्तेश्चानापद्वृत्तिता ज्ञेया। ‡ गृर. ४४९

(५) गर्हितकृषिवाणिज्यकुसीदानामत्र निर्देशः। * निप्र. २।३२८

(६) अनापद्धर्मान् संक्षिप्योक्त्वा आपद्धर्मान्संक्षिपति – विद्येति। विद्या तर्कनयादि, वेदस्यानापद्धर्मत्वात्। शिल्पं चित्रादिकृतिः। भृतिः वेतनम्। सेवा परचित्ताराधनम्। विपणिः वाणिज्यम्। धृतिः संतोषः। धनार्य(?र्थं)व्याजेनापि धृतिमते साधुरिति कृत्वा धनं प्रयच्छन्तो दृश्यन्ते, 'अर्थस्य मूलं निकृतिः क्षमा च' इत्युक्तेः। जीवनहेतवः जीवनप्रयोज्याः। अतः 'सर्वपुरुषाणामापदि वृत्तिरियमनुज्ञायते' इति मेधातिथिः। मच.

× स्मृच. गोरागतम्। ममु. विद्यापदार्थः मेधावत्। शेषं गोरावत्।
‡ शेषं गोरागतम्।
* शेषं मेधागतम्।

(७) अथाऽऽपद्विषयानर्थलाभानाह – विद्या शिल्पं भृतिः सेवेति। विद्या नृत्यवादित्रादि। शिल्पं छत्रादिनिर्माणम्। भृतिः भारोद्वहनं द्विजातिविषये। विपणिः वाणिज्यं गिरिपर्वतप्ररूढफलमूलविक्रयः। कुसीदं वृद्धिप्रयोगः। जीवनहेतवः आपदि जीवनमात्रहेतवः, न त्वर्थार्जनहेतवः। नन्द.

(८) भृतिः भृतकाध्यापनम्। विपणिः कृषिः* धृतिः प्राप्तेनाल्पेन संतोषः। भाच.

### ब्राह्मणक्षत्रियकर्तृकधनप्रयोगनिषेधः, धर्मार्थं पापिष्ठविषयकाल्पधनप्रयोगानुमतिः

**¹ब्राह्मणः क्षत्रियो वाऽपि वृद्धिं नैव प्रयोजयेत्।**
**कामं तु खलु धर्मार्थं दद्यात्पापीयसेऽल्पिकाम्।।**

(१) धर्मार्थमिति। पूर्वोक्तैवाऽऽपत्तिवृत्तिर्वेदितव्या। पापीयस इति वचनाद्धार्मिकादल्पाऽपि न ग्रहीतव्या। यदुक्तम् – 'अध्यापनतुल्यानि कृषिवाणिज्यकुसीदानि', तदापद्गतेन। मेधा.

(२) ब्राह्मण इति। ब्राह्मणः क्षत्रियो वा वृद्ध्यर्थं धनमापद्यपि न प्रयुञ्जीत। धर्मं तत्र प्रसङ्गे पुनरिच्छन् निकृष्टकर्मणोऽल्पिकया वृद्ध्या प्रयुञ्जीत। † गोरा.

(३) वृद्धिं निन्दिताम्। धर्मार्थम् अवश्यकृत्यार्थम्। पापीयसे हीनजातीयाय। अल्पकं यावत्या धनवृद्ध्या आवश्यकं कर्म सिध्यति तावत्या। ‡ गृक. २१७

(४) कुसीदमिदानीं ब्राह्मणक्षत्रिययोरकर्तव्यतया दर्शयति – ब्राह्मण इति। अत्यन्तापदि वृद्धिदानमपि पापिष्ठेषु सूतादिष्वत्यन्तापकृष्टेषु कर्तव्यम्। तदाऽपि नातिबहु, किं त्वल्पमेव, तच्च धर्मार्थं पञ्चमहायज्ञादिधर्मोद्देशेनेत्यर्थः। मवि.

* ग्रन्थस्त्रुटितः इति प्रतीयते।
† ममु. गोरावत्। स्मृच., बाल. गोरागतम्।
‡ गृर. गृकवत्।

(१) **मस्मृ.** १०।११७; **गृक.** २१६-२१७ खलु (सुख) ल्पिकाम् (ल्पकम्); **स्मृच.** २।४७२; **गृर.** ४४६ दद्यात् (दत्त्वा) शेषं गृकवत्; **निप्र.** २।३२० ल्पिकाम् (ल्पकम्); **नन्द.** पीयसे (पीयसो); **बाल.** १।११९ पृ. ३६८ निप्रवत्.

(५) धर्मार्थं कृषिवाणिज्यासंभवेऽवश्यकर्तव्यधर्मार्थमित्यर्थः। पापीयसे हीनवर्णाय। अल्पकम् अवश्यकार्यार्थम्, न तु भोगार्थमित्यभिप्रायः। निप्र. २।३२०

(६) विप्रक्षत्रिययोरनापदि कुसीदाभावमनुवदन्नापदि तत्र लभ्याल्पतामाह – ब्राह्मण इति। धर्माद्यर्थं पापीयसे पापकर्मणे स्वस्मादधमवर्णाय वा। अल्पिकाम् अल्पपरिमाणाम् अशीतिभागां वृद्धिम्। मच.

(७) कुसीदस्यात्राऽऽपदि जीवनमात्रत्वमुक्तम्, वित्तार्थस्तु कुसीदो न ब्राह्मणक्षत्रिययोरापद्युक्त इत्याह – ब्राह्मणः क्षत्रियो वाऽपीति। पापीयसः शूद्रादेः अल्पिकाम् अल्पवृद्धियुक्ताम्। नन्द.

(८) वृद्धिं वृद्धिजीविकां न प्रयोजयेत्। धर्मार्थं पापीयसे निकृष्टकर्मणे कामं भैक्षिकं(? ऐच्छिकं) खलु दद्यात् अल्पकं स्वल्पकलया। भाच.

द्विजसेवा शूद्रवृत्तिः, सेवकभरणं सेव्यकर्तव्यम्, शूद्रभरणेतिकर्तव्यता, शूद्रस्य धनसंचयानधिकारः, यथाशास्त्रमापद्वृत्त्यनुष्ठाने परमा गतिः

फलम्

**'शूद्रस्तु वृत्तिमाकाङ्क्षेत्क्षत्रमाराधयेत्तदा।**
**धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो जिजीविषेत्।।**

(१) शूद्रस्तु वृत्तिमाकाङ्क्षेत्तदा क्षत्रमाराधयेत्। वृत्तिग्रहणाज्जीविकार्थमेव क्षत्राराधनम्, न धर्मार्थम्। ब्राह्मणाराधनं तूभयार्थमपीत्युक्तं भवति। एवं धनिनं वैश्यमाराध्य जीवेत्। § मेधा.

(२) शूद्रो ब्राह्मणशुश्रूषया अजीवन्यदि वृत्त्याकाङ्क्षी स्यात् तदा क्षत्रियं परिचरेत्, तदभावे धनवन्तं वैश्यं परिचर्य जीवितुमिच्छेत्। तदभावेऽत्यन्तापद्युक्तानि कारुकर्माणि कुर्यात्। एवं च क्षत्रियवैश्याराधनं शूद्रस्य वृत्त्यर्थमेव, धर्मार्थं च (? न)। † गोरा.

(३) आराधयेत् धारयेत्। गृक. २६७

(४) ब्राह्मणशुश्रूषोः शूद्रस्य धनाकाङ्क्षायां तदुपायमाह – शूद्रस्त्विति। यदि वा धनिनं वैश्यमित्यन्वयः। मच.

**'स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः।**
**जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता।।**

(१) आराधयेदित्युक्तं भवति। तदाह – जातब्राह्मणशब्दस्य 'ब्राह्मणोऽयम्' इति यदाऽस्य एष शब्दो भवति तदाऽसौ कृतकृत्यः कृतार्थो वेदितव्यः। अथवा जातब्राह्मणव्यपदेशस्येति व्याख्येयम्। ब्राह्मणाश्रितोऽयमिति यदाऽस्य व्यपदेशो जायते। मेधा.

(२) वृत्ति(? स्वर्ग)प्राप्त्यर्थम् अथवा स्वर्गवृत्तिलिप्सयेत्येवमुभयार्थं ब्राह्मणानेव शूद्रः परिचरेत्। यस्मात् 'ब्राह्मणाश्रितोऽयम्' इत्येवमुत्पन्नव्यपदेशस्य जात्यु(? या जातब्राह्मणव्य)पदेशता तयाऽसौ कृतकृत्यो भवति। गोरा.

(३) जातब्राह्मणशब्दः प्राप्तः 'ब्राह्मणस्यायं शुश्रूषकः' इति व्यपदेशो येन स तथा। + गृक. २६७

(४) उभयार्थं वृत्त्यर्थं स्वर्गार्थं च। विप्रानेवाभिवाचयेदिति क्वचित्पाठः। अभिवाचनं सेवा। जातब्राह्मण-

§ पमा., स्मृकौ. मेधागतम्।

(१) **मस्मृ.** १०।१२१; **अप.** १।१२० क्षेत् (क्षन्) त्तदा (द्यदि) वाऽप्यु (चाप्यु) जिजीविषेत् (जिजीविषुः); **गृक.** २६६ क्षेत् (क्षन्) त्तदा (द्यदि); **मवि.** क्षेत (क्षन्); **गृर.** ४७६ गृकवत्; **पमा.** १।४२१ गृकवत्; **मच.** त्तदा (द्यदि); **स्मृकौ.** ८७ जिजीविषेत् (जिजीविषुः) शेषं गृकवत्; **मर.** १९६ गृकवत्; **शूशि.** ३९ गृकवत्; **मुक्ता.** ६७ क्षेत् (क्षन्) त्तदा (दिति); **शूक.** ६९-७० गृकवत्, मनुपराशरौ; **नन्द.** त्तदा (दपि); **भाच.** मविवत्; **बाल.** १।१२१ पृ. ३७८ अपवत्; **सस्मृ.** ११८ अशुद्धो ग्रन्थः.

† मवि., ममु., नन्द., भाच. गोरागतम्।
+ गृर. गृकगतम्।

(१) **मस्मृ.** १०।१२२; **अप.** १।१२० पृ. १६३ द्वितीयचरणे (ब्राह्मणं न विरोधयेत्) जातब्रा (या तु ब्रा); **गृक.** २६६ वा (च) द्वितीयचरणे (ब्राह्मणानेव धारयेत्) शब्दस्य (शब्दो हि); **मवि.** द्वितीयचरणे (विप्रानेवाभिवाचयेत्) इत्यपि पाठः; **गृर.** ४७६ विप्राना (विप्रमा) जात (यात) ब्दस्य सा (ब्दो हि स); **पमा.** १।४२१ वा (वै) शब्दस्य (शब्दः स्यात्); **स्मृकौ.** ८७ व्याख्यानात् 'स्वर्गार्थ' इत्यत्र 'धर्मार्थ' इति पाठः प्रतीयते, वा (च) द्वितीयचरणे (ब्राह्मणानेव राधयेत्) शब्दस्य (शब्दो हि); **मर.** १९६ वा (च) द्वितीयचरणे (ब्राह्मणानेवाऽऽराधयेत्) शब्दस्य (शब्दो हि); **मच.** ४।९ चतुर्थचरणमात्रम्; **शूशि.** ३९ सा ह्यस्य (साऽप्यस्य) शेषं मरवत्; **मुक्ता.** ६७; **शूक.** ७० द्वितीयचरणे (ब्राह्मणानेव राधयेत्) पृ. मनुपराशरौ; **बाल.** १।१२१ पृ. ३७८ स्मृकौवत्; **सस्मृ.** ११८ अशुद्धो ग्रन्थः.

शब्दस्य 'ब्राह्मणदासोऽयम्' इतिजातप्रसिद्धेः। सा ब्राह्मणदासत्वेन प्रसिद्धिः। मवि.

(५) स्वर्गप्राप्त्यर्थं स्वर्गस्ववृत्तिलिप्सार्थं वा ब्राह्मणानेव शूद्रः परिचरेत्। तस्माज्जातः 'ब्राह्मणाश्रितोऽयम्' इति शब्दो यस्य। शाकपार्थिवादित्वात्समासः। साऽस्य शूद्रस्य कृतकृत्यता तद्व्यपदेशतयाऽसौ कृतकृत्यो भवति। ममु.

(६) उभयार्थं धर्मार्थं वृत्त्यर्थं च। राधयेत् आराधयेत्। हि यस्मात् आराधनेन जातब्राह्मणशब्दो भवति। 'अयं ब्राह्मणशुश्रूषको जातः' इति व्यपदेशो यस्य शूद्रस्य स जातब्राह्मणशब्दः। स्मृकौ. ८७

(७) तस्य यद्यनापदि चेद्द्विजशुश्रूषणमेवोभयत्र सुखदमित्याह – स्वर्गार्थमिति। स शूद्रः। उभयार्थं (दृष्टा) – दृष्टार्थम्। जातब्राह्मणशब्दस्य जातो 'ब्राह्मणाश्रितोऽयम्' इति शब्दो यस्य स तथा, तस्य। शाकपार्थिवादित्वात्समासः। अतः सा शुश्रूषा तादृशी शब्दप्रवृत्तिर्वा कृतकृत्यता कर्तव्यपर्यन्तता, 'दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य' (मस्मृ. ८।४१३) इत्युक्तेः। मच.

(८) स्वर्गार्थं स्वर्गप्राप्त्यर्थम्, उभयार्थं स्वर्गवृत्तिलिप्सया राधयेत् आराधयेत्। जातब्राह्मणशब्दः *ब्राह्मणशुश्रूषा परमो धर्मः। तत्रापि विप्राज्जीवनोपादाने स्वर्गार्थत्वं जीवनार्थत्वं चेति विप्रशुश्रूषाया उभयार्थत्वम्, तदनुपादाने स्वर्गार्थत्वमेव। शूशि. ३९

(९) उभयार्थम् ऐहिकपारत्रिकार्थम् आराधयेत्। जातब्राह्मणशब्दस्य, दास्यादिति शेषः। ब्राह्मणाराधनेन ब्राह्मणवद्भवतीत्यर्थः। नन्द.

(१०) उभयार्थं स्वर्गार्थं भूमौ सुखार्थं च। (सः) शूद्रः। जातब्राह्मणशब्दस्य जातब्राह्मणव्यपदेशस्येत्यर्थः। 'ब्राह्मणाश्रितोऽयम्' इति यदस्य व्यपदेशो जायते 'ब्राह्मणस्य दासोऽयम्' (इति वा)। सा सेवा अस्य शूद्रस्य कृतकृत्यता। भाच.

(११) स्वर्गार्थं स्वर्गप्राप्त्यर्थम्। उभयार्थं स्वर्गवृत्तिलिप्सया। राधयेत् आराधयेत्। जातब्राह्मणशब्दः 'ब्राह्मणशुश्रूषकोऽयम्' इति जातप्रसिद्धिः। सा ब्राह्मणशुश्रूषकत्वेन प्रसिद्धिः। *तथा च शूद्रस्य द्विजशुश्रूषा धर्मः। विप्रशुश्रूषा परमो धर्मः। तत्र विप्राज्जीवनोपादाने स्वर्गार्थत्वं जीवनार्थत्वं चेति विप्रशुश्रूषाया उभयार्थत्वम्, तदनुपादाने तु स्वर्गार्थत्वमेव। क्षत्रियवैश्यशुश्रूषा तु धर्मजीवनार्थैव, न तु स्वर्गार्था। बाल. १।१२१ पृ. ३७८

* ग्रन्थस्त्रुटित इति भाति।

**[1]प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः।**
**शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम्॥**

(१) द्विजातीनामयं धर्मः। तस्य वृत्तिः कल्पनीया शुश्रूषमाणस्य। स्वकुटुम्बादिति पुत्रवदसौ पालनीयः। आत्मीयां शक्तिमवेक्ष्य, दाक्ष्यं च तस्य कार्येषु योगम्, भृत्यानां च पुत्रदाराणां तदीयानां परिग्रहं कियन्तोऽस्य भर्तव्या इत्येतदपेक्ष्य सर्वेषां भरणं कर्तव्यम्। + मेधा.

(२) तस्य शुश्रूषोः शूद्रस्य शुश्रूषासामर्थ्यमुत्साहं पुत्रदारादिभर्तव्यपरिमाणतामपेक्ष्य तैः ब्राह्मणैः स्वगृहादनुरूपा जीविका कल्पनीया। § गोरा.

(३) तैः द्विजातिभिः। स्वकुटुम्बात् स्वकुटुम्बार्थाद्धनात्। शक्तिं सामर्थ्यम्। दाक्ष्यं कार्येषु कौशलम्। भृत्यस्य परिग्रहं पुत्रदारादि। ¶ गृक. २६७

*अत्र क्षत्रियवैश्यशुश्रूषयोर्धर्मरूपत्वेऽप्यस्वर्गार्थत्वोक्तेरयं ग्रन्थाभिप्रायः कल्प्यते – धर्मशब्दोऽत्र यदकरणे प्रत्यवायस्तादृशनित्यधर्मपरः। तादृशनित्यधर्मरूपता विप्रक्षत्रियवैश्यशुश्रूषासु समाना। जीवनार्थत्वमपि सर्वद्विजशुश्रूषासु समानम्। कामतोऽकामतो वा स्वर्गार्थत्वं तु केवलविप्रशुश्रूषायामेव, न क्षत्रियवैश्यशुश्रूषयोः। इदं नित्यरूपत्वातिरेकेण स्वर्गार्थत्वमेव विप्रशुश्रूषायाः परमधर्मरूपत्वमिति।

+ शूक. अंशतो मेधानुवादः। स्मृकौ. मेधागृकयोः अंशतोऽनुवादः।

§ ममु. गोरावत्। नन्द., भाच. गोरागतम्।

¶ गृर., मर. गृकवत्।

(१) **मस्मृ.** १०।१२४; **अप.** १।१२० कल्प्या तस्य (कल्प्यतेऽस्य); **गृक.** २६७ कल्प्या तस्य (कल्पिताऽस्य) भृत्यानां (भृत्यस्य) इति पाठः व्याख्याने; **गृर.** ४७६ प्रकल्प्या (कल्प्यते) वेक्ष्य (पेक्ष्य); **पमा.** १।४२० तैर्वृ (वै वृ); **स्मृकौ.** ८८ वेक्ष्य (पेक्ष्य); **मर.** १३, १९६ अपवत्; **शूशि.** ३५ कल्प्या तस्य (कल्पतेऽस्य) वेक्ष्य (पेक्ष्य); **शूक.** ७० वेक्ष्य (पेक्ष्य) च परिग्रहम् (परिसंग्रहे) मनुपराशरौ; **सस्मृ.** ११८ प्रथमचरणे (प्रकल्प्य तस्मात्तैर्वृत्तिः) दाक्ष्यं (भक्तिं).

(४) तैः द्रव्यैः ( ? द्विजैः) स्वकुटुम्बार्थधनात्। शक्तिं कर्मसु सामर्थ्यम्। दाक्ष्यम् उत्साहम्। भृत्यानां भरणीयानां पुत्रादीनां परिग्रहम् इयताऽस्येतिविशिष्टसंख्याभरणीयत्वम्। मवि.

(५) न केवलं विप्रशुश्रूषा निःश्रेयसार्था, अपि तु वृत्त्यर्थाऽपि। अत एव प्रकल्प्यमाना वृत्तिर्मनुना दर्शिता – प्रकल्प्येति। पमा. १।४२०

(६) तादृशस्य शूद्रस्य विप्रदत्तदेहभरणमनुजानंस्तं नियमयति – प्रकल्प्येति द्वाभ्याम्। तैः विप्रैः। वृत्तिः वस्त्राच्छादनादिका। स्वकुटुम्बात् स्वगृहात्। यथार्हतः यद्यदर्हति, न तदतिक्रमतः। शक्तिं परिचर्यासामर्थ्यम्। दाक्ष्यं कर्मसामर्थ्यम्। परिग्रहं पुत्रादिसंख्याम्। मच.

(७) स्वकुटुम्बादिति पुत्रवदसौ पालनीय इत्यर्थः इति मेधातिथिः। भृत्यानामिति किं यतो( ? कियन्तो)ऽस्य भर्तव्या इति विचारः कार्य इत्यर्थः। शूशि. ३५

**¹उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च।**
**पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः।।**

(१) उच्छिष्टशब्दो व्याख्यातार्थः। अतिथ्यादिभुक्तशिष्टमाश्रिताय शूद्राय दातव्यम्। एवं वासांसि जीर्णानि धौतानि शुक्लानि। पुलाका असारधान्यानि। एवं परिच्छदाः शय्यासनादयः। † मेधा.

(२) किंच – उच्छिष्टमिति। अस्य च प्रकृतस्याऽऽश्रितस्य शूद्रस्य पात्रस्थं भुक्तावशिष्टं ब्राह्मणेन देयम्। एवं च 'न शूद्राय मतिं दद्यान्नोच्छिष्टम्' (मस्मृ. ४।८०) इत्यनाश्रितशूद्रविषयमिति व्याख्यातम्। तथा जीर्णवस्त्रासारधान्यजीर्णशय्यादीन्यस्य देयानि। ‡ गोरा.

(३) अपुष्टतण्डुलानि धान्यानि पुलाकाः। परिच्छदः उपकरणम्। अप. १।१२०

(४) उच्छिष्टम् अतिथ्यादिभुक्तशेषम्। एतच्चोच्छिष्टाशनमकृतदारपरिग्रहस्य, इतरस्य पाकयज्ञाधिकारात्। पुलका असारधान्यानि। परिच्छदाः छत्रोपानत्प्रभृतयः। ¤ गृक. २६७

(५) उच्छिष्टं पाकभाण्डावशिष्टम्, न तु भुक्तोच्छिष्टम्, निषिद्धत्वात्। पुलाकाः तुच्छधान्या(नि अ)सारभूतानि धान्यानि विक्रीय जीवितुम् । जीर्णाः परिच्छदाः। मवि.

(६) असम्यक्कृष्टाः पुलकाः। परिच्छदाः उपानत्प्रभृतयः। स्मृच. २।४५६

(७) पुलाकाः शूर्पाद्यपनेयासारतुच्छधान्यानि। * मर. १९७

(८) जीर्णानि स्वभोगेन। + मच.

(९) उच्छिष्टं भोजनपात्रे भुक्तशिष्टम्। एतद्दासविषयम्। 'नाब्राह्मणायोच्छिष्टं प्रयच्छेत्' इत्येतत्तु अदासविषयम्। गृहस्थशूद्रविषयमित्यन्ये। तथा च व्याघ्रः – 'उच्छिष्टमन्नं दातव्यं शूद्रायागृहमेधिने। गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिने।।' इति। मुक्ता. ६७

(१०) पुलाकाः धान्यकणाः। $ शूक. ७०

(११) 'न शूद्राय मतिं दद्यान्नोच्छिष्टम्' इति यदुक्तं तस्याऽऽपद्विषये प्रतिप्रसवो यदुच्छिष्टमन्नं दातव्यमिति। पुलाकास्तुच्छधान्यानि। परिच्छदा आसनादयः। नन्द.

(१२) धान्यानां पुलाकाः असारधान्यानि चूर्णानि। भाच.

**¹शक्तेनापि हि शूद्रेण न कार्यो धनसंचयः।**
**शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते।।**

(१) शक्तेनापि कृष्यादिकर्मणा धनसंचयः शूद्रेण न कर्तव्यः। तत्र हेतुस्वरूपमर्थवादमाह – शूद्रः धनं बहु आसाद्य स्वीकृत्य ब्राह्मणानेव बाधते। का पुनर्ब्राह्मणानां बाधा? महाधनत्वादत्यर्थं ब्राह्मणान्प्रतिग्राहयेत्। शूद्रप्रति-

---

† स्मृकौ., शूशि. मेधावत्।
‡ ममु. गोरावत्।

(१) **मस्मृ.** १०।१२५; **मेधा.** ४।८० प्रथमचरणमात्रम्; **अप.** १।१२०; **मभा.** १०।५८;, **गृक.** २६७ पुलाका (पुलका): ३८० पू.; **स्मृच.** २।४५६ पुलाका (पुलका); **ममु.** ४।८० प्रथमचरणमात्रम्; **गृर.** ४७६ : ५६३ पू.; **पमा.** १।४२०; **स्मृकौ.** ८८; **दीक.** १।१२१ प्रथमचरणमात्रम्; **मर.** १३, १९६; **निप्र.** २।४८६ च (वा) पू.; **मच.** २।५६ पू.; **शूशि.** ३५; **मुक्ता.** ६७; **शूक.** ७०; **सस्मृ.** ११८.

¤ गृर. गृकवत्।
* शेषं गृकवत्।
+ शेषं गोरावत्।
$ शेषं मुक्तावत्।

(१) **मस्मृ.** १०।१२९; **गृक.** २७१; **गृर.** ४८१; **शूशि.** ६४ संचयः (संग्रहः); **मुक्ता.** ६७; **सस्मृ.** ११९ धन (धर्म?) पू.

ग्रहश्च तेषां प्रतिषिद्धः। तत्र निमित्तभावमापद्यमानो दुष्येत्। एतच्च (न,) न विहितं कुर्वतः कर्मदोषाशङ्का। तस्माद्ब्राह्मणान्न परिचरेदित्येषैव बाधा। मेधा.

(२) धनार्जनशक्तेनापि हि शूद्रेण न धनसंचयः कर्तव्यः। अपि तु आश्रितब्राह्मणाय (यदि ?) नियमतो धनं देयमित्येवंपरमेतत्। तथा च गौतमः – 'यं चाऽऽर्यमाश्रि(? श्र)येत भर्तव्यस्तेन क्षीणोऽपि तेन चोत्तरस्तदर्थोऽस्य निचयः स्यात्' (गौध. १०।६०-६२) इति। अत्रार्थवादः – शूद्रोऽर्हति (? शूद्रो हीति)। *तस्माच्छूद्रो धनं प्राप्य शास्त्रानभिज्ञत्वेन धनोत्सेका शुश्रूषा। × गोरा.

(३) धनार्जनसमर्थेनापि शूद्रेण पोष्यवर्गसंवर्धनपञ्चयज्ञाद्युचितादधिकबहुधनसंचयो न कर्तव्यः। यस्माच्छूद्रो धनं प्राप्य शास्त्रानभिज्ञत्वेन धनमदाच्छुश्रूषायाश्चाकरणात् ब्राह्मणानेव पीडयतीत्युक्तस्यानुवादः। ममु.

(४) शक्तेनापि तेन धनोद्यमो न कार्यः। तत्र हेतुः – शूद्रो हीति। बाधते धनगर्वितः। मच.

**[१]एते चतुर्णां वर्णानामापद्धर्माः प्रकीर्तिताः।**
**यान्सम्यगनुतिष्ठन्तो व्रजन्ति परमां गतिम्।।**

(१) सम्यगापद्धर्मानुष्ठानात्परमा गतिः प्राप्यते। शरीररक्षणाद्विहितातिक्रमो न भवतीति युक्ता शुभफलप्राप्तिः। नाऽऽपद्गतेनासत्प्रतिग्रहादौ विचिकित्सितव्यमिति शास्त्रन्यायानुवादः। मेधा.

(२) चतुर्णां वर्णानामापद्यनुष्ठेया धर्माः त एते कथिताः। यान्सम्यगाचरन्तो आत्मसंरक्षणे सत्यात्मज्ञानाद्यवाप्त्या ब्रह्मप्राप्तिं भजन्ते। गोरा.

(३) आपद्धर्माः प्रसङ्गायाताः। सम्यक् आपत्काल एव। मवि.

(४) विहितानुष्ठनान्निषिद्धानाचरणाच्च निष्पापतया ब्रह्मज्ञानलाभेन परमां गतिं मोक्षलक्षणां लभन्ते। $ ममु.

(५) उपसंहरति – एत इति। यान् आपद्धर्मान् सम्यक् तत्कालानुरूपेण। परमां मोक्षाख्याम्। लब्धविप्रजन्मान इति शेषः। मच.

(६) प्रकरणार्थं फलोपपादनेनोपसंहरति – एते चतुर्णां वर्णानामिति। नन्द.

(७) चतुर्णां वर्णानाम् उक्तः चातुर्वर्ण्यः धर्मविधिः। भाच.

स्तेयापवादः

**[१]तथैव सप्तमे भक्ते भक्तानि षडनश्नता।**
**अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः।।**

(१) आत्मकुटुम्बावसादेऽपि पूर्ववत्परादानं कर्तव्यम्। अश्वस्तनग्रहणादेकदिनवृत्त्यर्थमेवानुजानाति, नाधिकम्। हीनकर्मण इति क्रमार्थम्। स्मृत्यन्तरे – 'हीनादादेयमादौ स्यात्तदलाभे समादपि। असंभवे त्वाददीत विशिष्यदपि धार्मिकात्।।'। सप्तमे भक्ते। त्र्यहं येन न भुक्तम्, चतुर्थेऽहनि प्रातर्भोजनार्थं परादाने प्रवर्तेत। 'सायंप्रातर्भुञ्जीत' इत्यहन्यहनि भक्तद्वयं विहितम्। † मेधा.

(२) यथैव यज्ञाप्रतिरोधस्तथैव हर्तव्यम्। ‡ गोरा.

(३) हीनवर्णात् हीनकर्मणश्चापहरेत्।
‡ अप. ३।४२ पृ. ९३८

(४) अश्वस्तनविधानेन एकदिनोपयोगेन।
# गृक. २२६

(५) हीनकर्मणः पतितादेरपि। ‡ मवि.

(६) हीनकर्मणः अब्राह्मणादित्यर्थः।
$ स्मृच. २।४६७

---

* ग्रन्थोऽयमशुद्धः कतिपये शब्दा उच्छिन्नाश्च।

× मवि., भाच. गोरागतम्।

$ शेषं गोरावत्

(१) मस्मृ. १०।१३०.

† ममु. मेधागतम्।

‡ शेषं मेधागतम्।

# गृर. गृकवत्।

$ शेषं मेधागतम्। निप्र. स्मृचवत्।

(१) **मस्मृ.** ११।१६; **मेधा.** ११।१०,११ चतुर्थचरणमात्रम्; **मिता.** ३।४३; **अप.** ३।४२ मे भक्ते (मं भक्तं); **मभा.** १८।३२; **गृक.** २२५ हर्तव्यं (कर्तव्यं); **गौमि.** १८।२८; **स्मृच.** २।४६६; **गृर.** ४५०-४५१ भक्तानि + (च) हर्तव्यं (कर्तव्यं); **मपा.** २३४; **मर.** १८८ कर्मणः (कर्मणाम्); **निप्र.** २।३२९ अपवत्; **चमव्या.**५४ भक्ते (काले) विधानेन (निधानाय); **मुक्ता.** ५६ न हर्त (नाऽऽहर्त); **संभ.** ७८; **वीमि.** ३।४३; **स्मृतिकौ.** ४७७ (=); **आन.** ६२५; **नन्द.** विधानेन (निधानाय); **कृभ.** १३०८ भक्ते (काले).

(७) ब्राह्मणव्यतिरिक्तः अश्रोत्रियो हीनकर्मेत्यभिधीयते।
मपा. २३४

(८) धर्मार्थस्येव प्राणात्ययप्रायेऽपि ग्राह्यमित्याह – तथैवेति द्वाभ्याम्। सप्तमे चतुर्थेऽहनि प्रातर्भक्ष्ये। एतत्स्पष्टयति – भक्तानि षडिति। अनश्नता चातुर्वर्ण्येन। अश्वस्तनविधानेन परदिनासंचयित्वेन हर्तव्यं चौर्यादिना। हीनकर्मणः कदर्यादपि।　　　　मच.

(९) त्र्यहमुपोष्यान्यत्रा(? प्यन्ना)लाभे चतुर्थदिने तद्दिनमात्रपर्याप्तं शूद्रतो गृह्णीयादित्यर्थः।
§ मुक्ता. ५६

(१०) 'तथैव सप्तमे .....' इति विहितं शूद्रान्नचौर्यम्।
स्मृतिकौ. ४७७

(११) एवं यज्ञापदि राज्ञः कर्तव्यमुक्तम्, अधुना क्षुत्पीडापदि पुरुषेण कर्तव्यमाह – तथैव सप्तमे भक्त इति । (सप्तमे ?) भक्तानि षडनश्नता त्र्यहमभुञ्जानेन सप्तमे भक्ते (सप्तम्यां भक्तं तु ?) चतुर्थेऽहनि हीनकर्मणः स्वस्माद्धीनकर्मणः पुरुषात् अश्वस्तननिधानाय, श्वोभवं श्वस्तनं निधानं न्यासः, श्वस्तनं च तन्निधानं चेति श्वस्तननिधानम्, तदभावायाश्वस्तननिधानाय। एवमापद्विषये परस्वहरणं यथोक्तं कुर्वन्राज्ञा न दण्ड्यः।　　　　नन्द.

(१२) हीनकर्मणः शूद्रात्।　　　　‡ भाच.

**[1]खलात्क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते।**
**आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति।।**

(१) यतो वाऽपीति आरामादेरपि। आख्यातव्यं पृच्छत इत्येव। यदि पृच्छतीति वचनं न हठात्पुनः प्रेषणादिना प्रश्नमसौ कारयितव्यः। अथवा पृच्छते धनस्वामिने, यदि पृच्छति राजेति। राजपुरं नीत्वैव विषयभेदो दर्शयितव्यः। तथा च गौतमः – 'आचक्षीत राज्ञा पृष्टः' (गौध. १८।३४) इति। भक्तच्छेदे यज्ञप्रतिबन्धतः प्रकरणविशेषादुभयत्रायं विधिर्ज्ञेयः।　　　　मेधा.

(२) खलादिति। धान्यादिक्षोदनात्क्षेत्राद्वा यतो वाऽन्यस्माद्देशाद्धीनकर्मसंबन्धेन लभ्यते ततो हर्तव्यम्। यदि वाऽसौ धनस्वामी पृच्छति तदा तस्य पृच्छतः तच्चौर्यं सनिमित्तकम् (आख्यातव्यम्)।　　　　* गोरा.

(३) खलादेरपि रक्षितात्स्वयमेवाऽऽहर्तव्यं प्रार्थनेन वा ग्राह्यम्। न तेनास्य पतितग्रहणदोषः। दिने वारद्वयभोजननियमाद्भोजनद्वयं भवतीति व्यवस्थया सप्तमे भक्त इत्युक्तम्। आख्यातव्यमिति तस्मै तथाऽन्यस्मा अपि अरक्षितादाने। 'कुतः प्राप्तमिदम्?' इति पृष्टेन नाऽऽक्षेप्तव्यं तथा(? तदा) पत्युरित्यर्थः।　　　　मवि.

(४) खलात् प्राङ्गणात्।　　　　‡ मच.

**[1]ब्राह्मणस्वं न हर्तव्यं क्षत्रियेण कदाचन।**
**दस्युनिष्क्रिययोस्तु स्वमजीवन् हर्तुमर्हति।।**

(१) क्षत्रियग्रहणं वैश्यशूद्रयोरपि प्रदर्शनार्थम्। कदाचनेति महत्यामापदीत्यर्थः। दस्युनिष्क्रिययोर्ब्राह्मणयोरेव। दस्युः तस्करः। निष्क्रियस्तु अकर्माऽनाश्रमी।　　　　मेधा.

(२) उक्तेष्वपि निमित्तेषु ब्राह्मणधनं क्षत्रियेण न हर्तव्यम्। अर्थाच्च वैश्यशूद्राभ्यामपि न हर्तव्यम्। प्रतिषिद्धकृद्विहिताननुष्ठानयोः (? यिनोः) पुनर्ब्राह्मणयोरत्यन्तापदि क्षत्रियो हर्तुमर्हति।　　　　गोरा.

(३) दस्युः शूद्रः, निष्क्रियौ क्षत्रियविशौ, तेषां वित्तमजीवन्क्षत्रियो राजा गृह्णीयात्।　　　　मवि.

(४) ततोऽपकृष्टत्वात् न हर्तव्यम्। समानन्यायतया तु वैश्यशूद्राभ्यामुत्कृष्टजातितो न हर्तव्यम्।
§ ममु.

(५) तत्र प्रतिप्रसवमाह – ब्राह्मणेति। क्षत्रियेणेत्युपलक्षणं वैश्यशूद्रयोः। दस्युनिष्क्रिययोः। +निष्क्रियः धर्महीनः। अजीवन् वृत्त्यन्तराभावात्।　　　　मच.

---

§ आन. मुक्तावत्।
‡ शेषं मेधागतम्।
(१) **मस्मृ.** ११।१७; **मेधा.** ११।१०-११ प्रथमचरणमात्रम्; **गोरा.** त्तस्मै पृच्छते (त्तस्य पृच्छतो); **मिता.** ३।४३; **अप.** ३।४२ पृ. ९३८; **गृक.** २२५; **स्मृच.** २।४६७; **गृर.** ४५१; **मर.** १८८ लभ्यते (लक्ष्यते); **निप्र.** २।३२९ तृतीयचरणे (ख्यातव्यं तु तदा तस्मै).

* ममु. गोरावत्। नन्द., भाच. गोरागतम्।
‡ शेषं गोरागतम्।
§ शेषं गोरावत्।
+ अत्रत्यं दस्युपदार्थव्याख्यानं त्रुटितमिति भाति। तथाऽग्रिमवाक्ययोरादर्शपुस्तकस्थः क्रमोऽस्माभिरौचित्याद्विपरीतः कृतः।
(१) **मस्मृ.** ११।१८; **अप.** ३।४२ योस्तु (योश्च); **स्मृच.** २।४६७.

(६) तद्द्रव्यं तस्मै स्वामिने जात्या स्वस्मादपकृष्टाद्धर्तव्यम्, नोत्कृष्टादित्याह – ब्राह्मणस्वं न हर्तव्यमिति। ब्राह्मणक्षत्रियग्रहणमुत्कृष्टापकृष्टजात्युपलक्षणार्थम्। अस्यापवादेनोत्तरार्धेनोक्तम्। दस्युः सहिंसः। निष्क्रियः त्यक्तनिजधर्मक्रियः। दस्युनिष्क्रिययोः, ब्राह्मणयोरिति विपरिणामः। अजीवन् वृत्तिहीनः। नन्द.

(७) दस्यति यः सः दस्युः, निष्क्रियः तस्करानाश्रमिणौ, तयोः स्वं द्रव्यं क्षत्रियः अजीवन् हर्तुं स्वीकर्तुम् अर्हति। भाच.

निषिद्धाः प्रतिग्रहाः,
जातेष्टौ प्रति-
ग्रहानुज्ञा

**[1]तिलधेनुर्गजो वाजी प्रेतान्नमजिनं मणिः।**
**सुरभिः सूयमाना च घोराः सप्त प्रतिग्रहाः।।**

द्रव्यतो वर्ज्यप्रतिग्रहमाह मनुः – तिलधेनुरिति। इन्दु. १९९

**[2]एका गौर्न(? एकैव गौः) प्रतिग्राह्या द्वितीया न कथंचन।**
**सा चेद्विक्रयमापन्ना दहत्या सप्तमं कुलम्।।**
**[3]गवां विक्रयकारी तु गवि रोमाणि यानि तु।**
**तावद्वर्षसहस्राणि पङ्केष्वेवावसीदति।।**
**क्रीताः प्रतिगृहीताश्च न विक्रेयास्तिलाः स्मृताः।।**
**[4]अपि पापकृतो राज्ञः प्रतिगृह्णन्ति साधवः।**
**पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम्।।**
**[5]गृह्णन्गोभूहिरण्यादि तथा नैव विचारयेत्।**
**कृतान्नं तु गृहीतं तु (? ग्रहीतव्यं) बहुशः सुपरीक्षितात्।।**

(१) मपा. २२० तिलधे (तिलो धे) सुरभिः (सुरभी) क्रमेण मनुः; निप्र. २।२८२ सूयमाना च (श्रूयमाणाश्च) उदीच्याः; इन्दु. १९९.
(२) मवि. १०।१०७ (एकैव गौः प्रतिग्राह्या) एतावदेव, (=); मुक्ता. ६१.
(३) मुक्ता. ६१.
(४) मुक्ता. ५५.
(५) मुक्ता. ५६.

**[1]विद्यमानधनो यस्तु प्रतिग्रहरुचिर्द्विजः।**
**नरकं रौरवं प्राप्य तत्रैव परिपच्यते।।**
**[2]सर्ववेदाधिगमनात् सर्वतीर्थावगाहनात्।**
**गवां कोटिप्रदानाच्च श्रेयान् हस्तस्य निग्रहः।।**

इदं तु सर्ववेदाध्ययनसर्वतीर्थस्नानकोटिगोप्रदानाधिकफलप्राप्तिफलकं यावज्जीवप्रतिग्रहनिवृत्तिसंकल्परूपं कर्मान्तरम्। तेन गृहीतद्रव्यत्यागनिषेधो विहितैतत्संकल्पव्यतिरिक्तविषय एव। एवमयाचितप्रतिग्रहालाभे प्रशस्तेभ्यो द्विजातिभ्यो निषिद्धद्रव्यनिषिद्धदेशनिषिद्धकालपरिहारे याचित्वाऽपि प्रतिगृह्णीयात्। प्रीतिदायेन च प्रतिगृह्णीयात्। अध्यापनयाजनयोर्याचितप्रतिग्रहापेक्षयाऽपि गुरुत्वात् तदसंभवे निर्गुणेभ्योऽपि निन्द्यवर्जितेभ्यः, तदसंभवे धार्मिकक्षत्रियनृपात्। निप्र. २।२९५

**[3]जाते कुमारे यज्ञः स्यात् कामं कुर्यात्प्रतिग्रहम्।**
**हिरण्यधान्यगोवासस्तिलाज्यगुडसर्पिषाम्।।**

## याज्ञवल्क्यः

चत्वारो वर्णास्तत्र च त्रयो द्विजाः,
सवर्णेभ्यः सवर्णासु
सवर्णोत्पत्तिः

**[4]ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।।**

(१) उक्तं धर्मादीनां स्वरूपं प्रमाणं च। इदानीं तत्साधनानि वाच्यानि। तत्र च क्रियामात्रसाधारण्यात् कर्तुः पूर्वमभिधानं युक्तमित्यत आह – ब्रह्मेति। ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा इति व्यवहारार्था परिभाषेयम्। तुशब्दोऽपकृष्यावधारणार्थो व्याख्येयः। आद्यास्त्रयो द्विजा इतीयमपि संज्ञा पूर्ववत्। ननु चाऽऽद्या द्विजा इत्येतावद्वाच्यम्, बहुवचनात् त्रित्वावगतेः। सत्यमेवम्। रथकारव्या-

(१) आपा. ११२.
(२) निप्र. २।२९५.
(३) पमा. १।५८३ यज्ञः स्यात् (तदहः) लाज्यगु (लानां गु); निप्र. २।२८९.
(४) यास्मृ. १।१०; ब्रक. ७३; स्मृच. १।३५ ब्रह्म (विप्र); स्मृसा. १; पमा. १।४३७; प्रपा. ४ स्मृचवत्; दीक. स्मृचवत्; शूशि. ३, ६७; प्रर. १; गप. ६; चमव्या. ३; मुक्ता. ७२; संम. ८; वीमि. ब्रह्म (विप्र) इत्यपि पाठः; संप्र. १३३; संर. ५; सस्मृ. ११३; संदी. २।३ प्रथमचरणे (ब्रह्मक्षत्रविशः शूद्रा).

वृत्त्यर्थस्त्रिशब्दः। यत्तु स्मृत्यन्तरे रथकारस्योपनयनस्मरणम्, तदाधानाधिकृतत्वात् भ्रान्तेरित्यवसेयम्। विकल्पो वाऽस्तु। नेत्याचार्यः। विश्व.

(२) वर्णादीनां धर्मान्वक्तुं प्रथमं तावद्वर्णानाह – ब्रह्मेति। ब्राह्मणक्षत्रियवैश्या द्विजाः। द्विर्जायन्त इति द्विजाः।

§ मिता.

[द्विजपदं योगरूढमित्याह – द्विरिति। उपनयनतो द्वितीयं जन्मेति स्पष्टमन्यत्र। बाल.]

(३) धर्मान्वक्तुं तदधिकारिणो वर्णान्द्विजांश्चाऽऽह – ब्राह्मणक्षत्रियवैश्यशूद्राः प्रत्येकं वर्णसंज्ञा भवन्ति। ब्राह्मणक्षत्रियवैश्यास्तु प्रत्येकं द्विजसंज्ञा ज्ञेयाः। अप.

(४) ब्राह्मणादयश्चत्वारो मुख्या वर्णाः। यदाह याज्ञवल्क्यः – ब्रह्मेति। शूशि. २-३

(५) 'ब्रह्म ..... द्विजाः' इति यद्यपि याज्ञवल्क्यादिभिः चत्वारो वर्णा विभक्ताः, तथापि 'नन्दान्ताः क्षत्रिया गताः' इत्यादिवचनाद्यथाकथंचित्समाधानेऽपि क्षत्रियाणां वैश्यानां च बहुपुरुषीयशूद्रसंबन्धेनैव शूद्रत्वादेव ब्राह्मणशूद्रावेव वर्णौ कलौ। गप. ६

(६) अथ वर्णधर्मेषु वक्तव्येषु वर्णानाह – ब्रह्मेति। ब्रह्म ब्राह्मणः। क्वचिद्विप्रेति पाठः। कर्माधिकारिविभागाय द्विजान् विविनक्ति – त्वाद्यास्त्रयो द्विजाः। अत्र तुशब्दस्य वर्णा इत्युत्तरं पाठात् स्वरूपस्य आद्या इत्यनन्तरं योजनादर्थस्य संगतिः। तेषामाद्यास्तु त्रयो द्विजाः, द्विर्जायन्त इति व्युत्पत्तेः। तथा च वक्ष्यति – 'मातुर्यदग्रे' (यास्मृ. १।३९) इत्यादि। अत्र वृत्तीनामनभिव्यक्तलिङ्गसंख्यत्वात् ब्राह्मणाश्च (? ब्रह्माणश्च) क्षत्रियाश्चेत्यादिविग्रहेऽपि प्रकृतसमासोपपत्तेराद्या इत्यनेन ब्राह्मणा एवोक्ता इति भ्रमनिरासाय त्रय इत्युक्तम्, वर्णा इत्यनुषङ्गेऽपि तन्नि- (? तदनि)रासात्। तत्र च ब्रह्मव्यक्तिषु तिसृषु अन- (व ?)ध्यवसायादव्याप्त्यानन्त्याच्च ब्राह्मणत्वक्षत्रियत्ववैश्यत्वाद्येवाऽऽदाय त्रित्वपर्यवसानमिति। अत्रैव मनुः– 'चतुर्थ एकजातिस्तु वर्णो नास्ति तु पञ्चमः' (मस्मृ. १०।४)। चतुर्थः शूद्रः। वर्णः शुद्धः। वर्णसंकरस्त्ववस्त्येव। वर्णसंकरो न वर्णान्तर्गत इत्यप्याहुः। वीमि.

§ ब्रक. मितागतम्।

***¹सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।**
**अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः।।**

(१) पुत्रार्थं 'स्त्रियः सेव्या भर्तव्याश्च सुरक्षिताः' (यास्मृ. १।७८) इत्युक्तम्, सवर्णायाश्चोत्कृष्टत्वं विवाहनियमश्च। अस्यैव दाढर्यार्थं जातिनिरूपणायाऽऽह – सवर्णेभ्य इति। यस्मात् सवर्णास्वेव सवर्णेभ्यः सजातयः पुत्रा जायन्ते, यस्माच्चानिन्द्यब्राह्मादिविवाहोढास्वेवैते उत्पन्नाः पुत्राः संतानवृद्ध्या पितृभ्य आनृण्यं कुर्वन्ति, यस्माच्चान्यथा जातिनाशाद्विपर्ययः, तस्मात्पूर्वोक्तं सर्वं विवाहादि प्रयत्नतोऽनुष्ठेयमिति श्लोकार्थः प्रकरणार्थश्च समासतः। विश्व.

(२) ब्राह्मणस्य चतस्रो भार्या भवन्ति, क्षत्रियस्य तिस्रः, वैश्यस्य द्वे, शूद्रस्यैकेत्युक्त्वा, तासु च पुत्रा उत्पादयितव्या इत्युक्तम्। इदानीं कस्यां कस्मात् कः पुत्रो भवतीति विवेक्तुमाह – सवर्णेभ्य इति। सवर्णेभ्यः ब्राह्मणादिभ्यः सवर्णासु ब्राह्मण्यादिषु सजातयः मातापितृसमानजातीयाः पुत्रा भवन्ति। 'विन्नास्वेष विधिः स्मृतः' (यास्मृ. १।९२) इति सर्वशेषत्वेनोपसंहाराद्विन्नासु सवर्णास्विति संबध्यते। विन्नाशब्दस्य संबन्धिशब्दत्वात् वेत्तृभ्यः सवर्णेभ्य इति लभ्यते। एकः सवर्णशब्दः स्पष्टार्थः। अतश्चायमर्थः संवृत्तः – उक्तेन विधिनोढायां सवर्णायां वोढुः सवर्णादुत्पन्नास्तत्समानजातीया भवन्ति। अतश्च कुण्डगोलककानीनसहोढजादीनामसवर्णत्वमुक्तं भवति। ते च सवर्णेभ्योऽनुलोमप्रतिलोमेभ्यश्च भिद्यमानाः साधारणधर्मैरहिंसादिभिरधिक्रियन्ते, 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' (मस्मृ. १०।४१) इति स्मरणात्। अपध्वंसजा व्यभिचारजाताः शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियन्ते। ननु कुण्डगोलकयोरब्राह्मणत्वात् श्राद्धे प्रतिषेधोऽनुपपन्नः, न्यायविरोधश्च। यो यज्जातीयाद्यज्जातीयायामुत्पन्नः स तज्जातीय एव भवति – यथा गोर्गवि गौः, अश्वाद्वडवायामश्वः। तस्मादब्राह्मणादब्राह्मण्यामुत्पन्नो ब्राह्मण इति

* मेधाव्याख्यानं मस्मृ.१०।५(व.का. पृ. १२०९)इत्यत्र द्रष्टव्यम्।

(१) **यास्मृ.** १।९०; **विश्व.** १।८९; **मेधा.** १०।५ स्मृत्यन्तरे; **मिता.** १।९६ (हि सजातयः०) पू.; **अप.** १।९२ प्रथमचरणमात्रम्; **ममु.** १०।५ पू.; **पमा.** १।५११; **स्मृकौ.** ६ पू., ८; **शूशि.** ३; **मुक्ता.** १८:८५ पू.; **संम.** ७६; **वीमि.** १।९२ अपवत्; **कृभ.** ९४५ (=) **सस्मृ.** ११३ त्रुटितोऽशुद्धश्च ग्रन्थः, १९८ अशुद्धो ग्रन्थः.

न विरुद्धम्। तथा कानीनपौनर्भवादीननुक्रम्य 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' (यास्मृ. २।१३३) इति वक्ष्यमाण-वचनविरोधश्च। नैतत्सारम्। ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मण इति भ्रमनिवृत्त्यर्थः श्राद्धे प्रतिषेधः। यथाऽत्यन्तम-प्राप्तस्य पतितस्य श्राद्धे प्रतिषेधः। न च न्यायविरोधः, यत्र प्रत्यक्षगम्या जातिर्भवति तत्र तथा। ब्राह्मणादिजातिस्तु स्मृतिलक्षणा यथास्मरणं भवति। यथा समानेऽपि ब्राह्मण्ये कुण्डिनो वसिष्ठोऽत्रिर्गौतम इति स्मरणलक्षणं गोत्रम्, तथा मनुष्यत्वे समानेऽपि ब्राह्मण्यादिजातिः स्मरणलक्षणा। मातापित्रोश्चैतदेव जातिलक्षणम्। न चानवस्था, अनादित्वा-त्संसारस्य, शब्दार्थव्यवहारवत्। 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति तूक्तानुवादत्वाद्यथासंभवं व्याख्यास्यते। क्षेत्रजस्तु मातृसमानजातीयः, नियोगस्मरणात् शिष्टसमा-चाराच्च। यथा धृतराष्ट्रपाण्डुविदुराः क्षेत्रजाः सन्तो मातृ-समानजातीयाः। इत्यलमतिप्रसङ्गेन। किंच, अनिन्द्येषु ब्राह्मादिविवाहेषु पुत्राः संतानवर्धनाः अरोगिणो दीर्घायुषो धर्मप्रजासंपन्नाः भवन्ति। मिता.

(३) उक्तविवाहासु पतिसवर्णासु तदसवर्णासु चोत्पन्नानां तथा स्वैरिणीषु प्रतिलोमोत्पन्नानां संव्यवहारोपयोगिसंज्ञा-परिज्ञानाय प्रकरणमारभ्यते – सवर्णेभ्य इति। सवर्णाभ्यां दम्पतिभ्यां जनिताः पुत्रास्ताभ्यां समानजातयो भवन्ति। पुत्रग्रहणमपत्यमात्रपरम्। अनिन्द्येषु विवाहेषूढायामुत्पन्नाः पुत्राः संतानस्य ब्रह्मवर्चसादिगुणवृद्धिहेतवो भवन्ति। अप.

(४) सवर्णा शूद्रेतर(? सवर्णास्विति)पत्नी ग्राह्या, विवाहेष्वित्यभिधानात्। अथ वर्णविवेकः। सवर्णेभ्य इति सिद्धे यत्सवर्णास्वित्यभिधानं तदव्यभिचारार्थम्। अत एव मनुः – 'सवर्णेषु च तल्पासु (? सर्ववर्णेषु तुल्यासु) पत्नीष्वक्षतयोनिषु। आनुलोम्येन संभूता जात्या ज्ञेयास्तथैव ते।।' (मस्मृ. १०।५)। अनेक(? जनक)जातीया भवन्ती-त्यर्थः। अक्षतयोनिष्वित्यव्यभिचारार्थम्। आनुलोम्यग्रहणं संस्कारानुगमार्थम्। ते पुत्राः। (विवाहाः) यदि प्रशस्तास्तदा (पुत्राः) वंशस्य वर्धकाः स्युः। तथा च मनुः – 'चतुरो ब्राह्मणस्याऽऽद्यान् प्रशस्तान्कवयो विदुः। राक्षसं क्षत्रिय-स्यैकमासुरं वैश्यशूद्रयोः।।'(मस्मृ. ३।२४)। दीक.

(५) पुत्र इत्यपत्योपलक्षणम्। सवर्णासु 'विन्नास्वेष विधिः स्मृतः' इत्युपसंहाराद्विधिवदूढासु स्त्रीषु जाताः सजातयः मातापितृसमानजातीया ब्राह्मणत्वादिजातियोगिनो भवन्तीत्यर्थः। वर्णशब्दश्चायं ब्राह्मणत्वादिजातिचतुष्के रूढः। सवर्णग्रहणादसवर्णोत्पन्नानां मूर्धावसिक्तादीनां न वर्णत्वम्। सवर्णोत्पन्नानामपि कुण्डगोलकादीनां वर्णत्वं मा भूदिति विन्नास्वित्युक्तम्। तेनानूढोत्पन्नानां कुण्डगोलक-कानीनसहोढपौनर्भवक्षेत्रजानां न वर्णत्वम्। अत्र सजातय इत्यनेन मातापित्रुभयसाजात्यमेव लक्षितं तदेवैषां व्यावर्त्यते। तेन मातृमात्रसजातीयत्वाभिधानमेषां न व्याहन्यते, तथात्वेऽ-प्युभयसाजात्यस्य लक्ष्यस्य तत्राभावात्। अत एव देवलः – 'ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत्। एवं क्षत्रियविट्शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजाः।।' इति। सवर्णेभ्यः सवर्णासूत्पन्ना इत्यर्थे(? र्थः)। संस्कृत इति संस्कारार्हो मुख्यो ब्राह्मण इत्यर्थः। कथं तर्हि नारदवसिष्ठ-विश्वामित्रादीनामयोनिजानां ब्राह्मणत्वम्? तेषां सवर्णा-विन्नानुत्पन्नत्वात्। मैवम्, न ह्यत्र साक्षात् ब्राह्मणत्वादि लक्ष्यते, वाक्यभेदप्रसङ्गात्, अव्याप्तेश्च; किंतु मातापितृ-साजात्यमेव। तच्च ब्राह्मणादिजन्ये ब्राह्मणत्वाद्यादाय पर्यवस्यतीत्येतावता तत्र च प्रयोजकीभूतं सवर्णोत्पन्नत्वं वसिष्ठादेर्व्यावृत्तं मातापितृसमानजातीयतामेव व्यावर्तयति। न चैतद्विरुद्धम्, न ह्ययोनिजेषु मातापितृजातीयताऽ-न्येनाप्याश्रीयते। ब्राह्मणत्वं तु तेषु स्मरणलक्षणमीश्वरानुग्रह-प्रयोज्यत्वादाधुनिकविलक्षणमेव सुवर्णकलशे घटत्वमिव। सर्वसंग्राहकं तु षट्कर्मप्रयोजकीभूतादृष्टविशेषोपगृहीतत्वम्। न तु तत्प्रवृत्त्यङ्गम्, अदृष्टादेरतीन्द्रियत्वात्। अत एव 'विन्नास्वेष विधिः' स्मृतः इत्युपसंहारोऽपि समञ्जसः। एवं विशिष्टसावर्ण्यात्मा मूर्धावसिक्तत्वादिरूपश्च विधिर्विन्ना-स्वेवेत्यर्थः। तेनाविन्नायां मातृजातीयेऽपि क्षेत्रजे कुण्डादौ च विशिष्टात्मा साजात्यविधिर्नेत्यर्थः। वस्तुतस्तु क्षेत्रजेऽपि मातृजातीयत्वे प्रमाणाभावः। नियोगस्मरणं हि पुत्रत्वं प्रापयति, न तु जातिमपि। पुत्रत्वमपि न तदाक्षेपकमिति वक्ष्यते। यदपि नियोगे क्षेत्रप्राधान्यमुच्यते, तदपि न हृद्यम्, 'ओघवाताहतं बीजमन्यक्षेत्रे प्ररोहति' (मस्मृ. ९।५४) इत्यादि मानवन्यायात् 'क्षेत्रिणः सुतः' इत्यादिवचनात्

स्वतन्त्रत्वाच्च क्षेत्रिण एव प्राधान्यसंभवान्न जात्यापत्तिः (? वात्तज्जात्यापत्तेः)। न चैवं धृतराष्ट्रपाण्डवादीनां क्षत्रियत्वाभावे तद्धर्मानापत्तिः, शङ्खविष्णुवचनैस्तेषामपि क्षेत्रजातीयधर्मातिदेशात् विन्नत्वादेर्विशेषस्य तत्र श्र(?-अश्र)वणात्। व्यभिचारोत्पन्नाः(च ?) तु 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।' (मस्मृ. १०।४१) इति तद्बाधनेन शूद्रधर्माण एव भवन्ति। क्षत्रियत्वप्रसिद्धिस्तु तद्धर्मानुष्ठातृत्वादप्युपपन्ना मूर्धावसिक्तादिष्विवेति युक्तं प्रतीमः। न च पुत्रत्वे पितृधर्माधिकारे वा सवर्णत्वम्, तच्च पौनर्भवे क्वचिदसवर्णसुतस्य वा सवर्णत्वेऽपि तद्दर्शनात्। शूशि. ३-५

(६) इह वर्णाश्रमधर्मेतरधर्मेषु वक्तव्येषु प्रथमं ब्रह्मचर्यमुक्त्वा ब्राह्मणादीनां क्रमेण चतुर्षु वर्णेषु त्रिषु द्वयोरेकस्मिन् विवाहः पुत्रोत्पादनं चोक्तम्, तत्र किंजातीयात् किंजातीयायां किंजातीयो जायत इति शिष्याकाङ्क्षां पूरयन्नेव वर्णानामितरशब्दोपात्तानां संकीर्णानां च सवर्णासवर्णस्त्रीषूत्पत्तिमूलकत्वेन तत्प्रसङ्गात् तद्धर्माणां सुबोधाय शुद्धान् वर्णान् संकीर्णांश्च विविनक्ति सार्धैः पञ्चभिः श्लोकैः – सवर्णेभ्य इति। वर्णस्तावत् द्विविधः – शुद्धः संकीर्णश्च। तत्र शुद्धो ब्राह्मणादिश्चतुर्विधः पूर्वं विभज्योद्दिष्टः। संकीर्णश्च द्विविधः – मुख्यगौणभेदात्। भिन्नवर्णाभ्यां मातापितृभ्यां साक्षात्परंपरया चोत्पादितो मुख्यः। परंपरासाधारण्योत्पादनोपादानान्न संकरजसंकराव्याप्तिः। सोऽपि द्विविधः – अनुलोमजप्रतिलोमजभेदात्। उत्कृष्टवर्णादपकृष्टवर्णायां जातोऽनुलोमजः। वैपरीत्ये प्रतिलोमजः। गौणस्तु व्रात्यादिः शुद्धवर्णमुख्यसंकीर्णभिन्नः सर्वोऽपि। यदाह मनुः – 'व्यभिचारेण वर्णानामवेद्यावेदनेन च। स्वकर्मणां च त्यागेन जायते वर्णसंकरः।।' (मस्मृ. १०।२४)। वर्णानां व्यभिचारः असवर्णमैथुनम्। अवेद्या अविवाह्याः सपिण्डादिः। स्वकर्मणाम् उपनयनादीनाम्। चकारेण शुद्धवर्णताविरोधिनिमित्तान्तरपरिग्रहः। तेन सवर्णयोरपि दाम्पत्यानापन्नयोर्मैथुनसंभवाः कुण्डगोलककानीनसहोढपौनर्भवादयः संकीर्णेष्वेव प्रविशन्ति। अत एव श्रीमहाभारते 'स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः' (भा. ६।२३।४१) इति दुष्टास्विति सामान्येनैवोक्तम्। तत्र प्रथमतः शुद्धवर्णान् कारणप्रदर्शनमुखेन परिवाचयति। सवर्णेभ्यः अर्थात् भार्यायाः, सवर्णासु अर्थात् पत्युः, ये जायन्ते ते सजातयः जनकजातीयाः। एवमग्रेऽपि यत्तद्भ्यामध्याहृताभ्यामुद्देश्यविधेयभावेनान्वयो बोद्धव्यः। जायन्त इति सामान्योक्तेरपत्यमात्रं विवक्षितम्। एवमग्रेऽपि। एवं च ब्राह्मणात् ब्राह्मण्यां जातो ब्राह्मणः। एवं क्षत्रियादिष्वपि द्रष्टव्यम्। अत्रैकेनैव सवर्णपदेन विवक्षितार्थलाभे द्वितीयसवर्णपदं स्पष्टार्थम्। अव्यभिचारबोधनार्थं तदित्यन्ये। अत्र मनुः – 'ब्राह्मणादिषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते।।' (मस्मृ. १०।५)। तुल्यासु परिणेतृसवर्णासु। पत्नीषु यथाविधि परिणीतासु। अक्षतयोनिषु परेणासंभुक्तासु। अत्र संभोगः संभूतानां संभवहेतुर्द्रष्टव्यः। तेन व्यभिचारितास्वपि पत्युर्जातो जनकसवर्ण एव। अन्यथा व्यभिचारिण्यां कृतप्रायश्चित्तायामुत्पन्नस्य जनकजातीयत्वं सर्वशिष्टानुमतं विरुध्येत। अत एव – 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।' (मस्मृ. १०।४१) इति मनावपध्वंसजत्वमेव संकरधर्मनिमित्तत्वेनोक्तम्, अपध्वंसशब्दस्य व्यभिचारार्थत्वात्। सर्वथैव त्याज्यताप्रयोजकदोषविशिष्टायां जातस्य तु न तथात्वम्, शिष्टविगानादित्येषा दिक्। एवं च मूर्धाभिषिक्तादिभ्योऽपि मूर्धाभिषिक्तादिस्त्रीषु जाता मूर्धाभिषिक्तादय एव, सूतादिभ्यः सूत्यादिषु सूता एव, व्रात्यादिभ्यो व्रात्या व्रात्यादिषु एव भवन्ति, 'यो यादृशाज्जातः स तादृश एव भवति' इति न्यायात्। अयं तु विशेषः – शास्त्रानु (? ननु)-मतेषु सजातीयेषु नेत्यपि सूचितमिति मन्तव्यम्। आनुलोम्येन वयसः। तेन वरापेक्षयाऽल्पवयसि स्त्रियामुत्पन्ना इत्यर्थः, 'गृहस्थोऽवरवयसं भार्यां विन्देत्' इत्यादिवचनबलेन वयोधिकाया अवेद्यत्वात् तस्यामुत्पादितस्य संकीर्णप्रवेशात्, 'अवेद्यावेदनेन च' इति लिखितवचनादित्याशयः। अन्ये त्वानुलोम्यग्रहणं व्युत्क्रमविवाहितासूत्पन्नानां व्यवच्छेदादाहुः-(? च्छेदायेत्याहुः)। अत्र पत्नीष्वित्यादिदर्शनात्प्रकृतेऽपि 'विन्नास्वेष विधिः स्मृतः' इति सर्वशेषत्वेनाभिधानात् पत्नीविन्नाशब्दयोः ससंबन्धिशब्दत्वेन वेत्तुर्जनकत्वपर्यवसानात् कुण्डगोलकादीनां जनकजातीयत्वाभावः स्पष्टमेव प्रतीयते। दर्शितश्चै( ? ता चै)षामनुपदमेव संकीर्णातिरिक्तस्य तृतीयस्य प्रकारस्य प्रसक्तिः। अत एव देवलः – 'द्वितीयेन तु यः

पित्रा सवर्णासु प्रजायते। आयवेट इति ख्यातः शूद्रधर्मा स जातितः।।' एवमादीनि वचनान्तराण्यपि तत्र द्रष्टव्यानि। क्षेत्रजस्तु मातृसमानजातीयः, नियोगस्मरणात् शिष्टाचाराच्च। तथा धृतराष्ट्रपाण्डुविदुराः क्षेत्रजाः सन्तो मातृसमानजातीया इत्याहुः। इदं पुनरत्रावधेयम्। सर्वमिदं यथायथं ब्रह्मत्वादिपरिचायकमात्रम्, न तु तत्स्वरूपम्, ब्राह्मणत्वादिघटितत्वपर्यवसानेनाऽऽत्माश्रयापत्तेः। न च जनकयोरपि ब्राह्मण्यादि उक्तेनैव परिचेयमिति अनवस्था, अनादित्वात् परिचायकान्तरसंभवात्, व्यञ्जकाननुगमस्यादोषत्वादित्यादि तत्तद्दर्शनचतुरैश्चिन्तनीयम्। जनकसवर्णानामपि स्वमध्ये किंचिद्वैलक्षण्यं प्रसङ्गादाह – 'अनिन्द्येषु' इति। अनिन्द्येषु ब्राह्मादिषु चतुर्षु। सप्तमी अभिमतसंबन्धमात्रे। तेनानिन्द्यविवाहेनोढासु ये पुत्रा जायन्ते ते संतानवर्धनाः संततिवृद्धिहेतवो भवन्ति। उपलक्षणमेतत्। तथा च मनुः – 'ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः।। कामसत्त्वगुणोपेता धनवन्तो यशस्विनः। पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः।। इतरेषु तु शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः।।' (मस्मृ. ३।३९-४१)। ब्राह्मणविषयमेतदित्युक्तप्रायम्। तथा – 'अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा। निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत्।।' (मस्मृ. ३।४२)। अत्रावे(? त्र वे)द्यायामपि विवाहस्य निन्दितस्य संभवात्तज्जानामवेद्यावेदनामूलकत्वाज्जनकासवर्णत्वं सामान्यत एव नाऽऽशङ्कनीयमिति। केचित्तु "अनिन्द्येषु' इत्यादि पूर्वैकवाक्यतापन्नमेव। अनिन्द्येषु अनिषिद्धेष्वित्यर्थः। पुत्रपदं पुत्रमात्रपरम्। संतानेत्यादि स्तुतिः" इत्याहुः। वीमि.

जात्युत्कर्षरूपेण

सवर्णोत्पत्तिः

**'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।**
**व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्।।**

---

(१) **यास्मृ.** १।९६; **विश्व.** १।९५ सप्तमे पञ्चमे (पञ्चमे सप्तमे); **अप.** १।९६ च्चाधरोत्तरम् (च्चोत्तराधरम्); **ममु.** १०।६५ पू.; **पमा.** १।५१४-५१५ पूर्वोत्तरार्धे व्यवहिते; **मच.** १०।६५; **शूशि.** २९; **मुक्ता.** ७२; **शूक.** २६२; **संम.** ७७; **सस्मृ.** ११६.

(१) जात्युत्कर्षः वर्णोत्कर्षः क्षत्रियस्यापि ब्राह्मणप्राप्तिः। कोऽयं कूश्माण्डपातः? मैवम्, उक्तवर्णान्तरविहितधर्मव्यवच्छेदेन ब्राह्मणादिशब्दप्रवृत्तिरित्यर्थः। पञ्चमे सप्तमे वा परिवर्ते। क्षत्रियस्य पञ्चमे वैश्यस्य सप्तमे ब्राह्मण्यम्। क्षत्रियजत्वे तु तस्यापि पञ्चम एव। पूर्वजातिविहितकर्मव्यवच्छेदात् जात्यन्तरोक्तकर्मप्राप्तिश्च तच्छब्दलाभादनवद्यम्। कुतः प्राप्तिव्यवच्छेदौ? इति चेत्, अस्मादेवोत्कर्षवचनात्, अमीमांस्यत्वाच्च शास्त्रस्य। तदेव द्रढयन्नाह – व्यत्यये कर्मणां साम्यम्। उक्तोत्कर्षव्यत्यये युगपरिवर्ताभावे प्रकृतिविहितान्येव कर्माणि भवन्तीत्यर्थः। यदि मूर्धावसिक्तां ब्राह्मणः परिणयेत्, तत्सुतां तत्सुतां च ततः पञ्चमे परिवर्ते ब्राह्मणकर्माधिकारः। यदि मूर्धावसिक्त एव तां तत्सुतां तत्सुतां च, ततः क्षत्रियकर्मैव भवति। किंच तेषामप्यन्तरप्रभवानां पूर्वेणैव न्यायेनाऽऽनुलोम्यप्रातिलोम्येनौत्तराधर्यम्, योज्यमिति शेषः। ग्रन्थगौरवभयात्तु तत्संज्ञानभिधानम्। सर्वथोत्कृष्टवर्णसंकरे स्त्रीणामुत्कर्षः, अन्यथा तु विपर्ययः। पुरुषाणां तु द्विधाऽप्यपकर्ष इति प्रपञ्चनीयं व्याख्यातृभिः। अयं च मार्गः – 'आनुलोम्यप्रातिलोम्ये मूर्धावसिक्तादीनां वर्णचतुष्टये चतुर्विंशतिरेव वर्णाभासा जायन्ते। स्वयं च षट्। एवं त्रिंशत्। प्रातिलोम्येऽप्येवमेव सूतादीनामित्येवं षष्टिर्वर्णाभासाः। तथा च स्मरन्ति- 'प्रातिलोम्यानुलोम्येन वर्णैस्तज्जैश्च वर्णतः। षष्ट्येवान्ये प्रजायन्ते तत्प्रसूतेस्त्वनन्तता।।' इति। विश्व.

(२) 'सवर्णेभ्यः सवर्णासु जायन्ते' इत्यादिना वर्णप्राप्तौ कारणमुक्तम्। इदानीं कारणान्तरमाह – जात्युत्कर्ष इति। जातयः मूर्धावसिक्ताद्याः, तासामुत्कर्षः ब्राह्मणत्वादिजातिप्राप्तिः जात्युत्कर्षः युगे जन्मनि सप्तमे पञ्चमे अपिशब्दात्षष्ठे वा बोद्धव्यः। व्यवस्थितश्चायं विकल्पः। व्यवस्था च–ब्राह्मणेन शूद्रायामुत्पादिता निषादी, सा ब्राह्मणेनोढा दुहितरं कांचिज्जनयति, साऽपि ब्राह्मणेनोढाऽन्यां जनयतीत्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति। ब्राह्मणेन वैश्यायामुत्पादिता अम्बष्ठा। साऽप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति। मूर्धावसिक्ताऽप्यनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणमेव जनयति। एवमुग्रा क्षत्रियेणोढा माहिष्या च यथाक्रमं षष्ठं पञ्चमं च क्षत्रियं जनयति।

तथा करणी वैश्योढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयम्। किंच, कर्मणां व्यत्यये वृत्त्यर्थानां कर्मणां विपर्यासे यथा ब्राह्मणो मुख्यया वृत्त्या अजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः। तेनाप्यजीवन् वैश्यवृत्त्या, तयाऽप्यजीवन् शूद्रवृत्त्या। क्षत्रियोऽपि स्वकर्मणा जीवनार्थेनाजीवन् वैश्यवृत्त्या शूद्रवृत्त्या वा। वैश्योऽपि स्ववृत्त्या अजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः। तस्मिन् व्यत्यये सति यद्यापद्विमोक्षेऽपि तां वृत्तिं न परित्यजति तदा सप्तमे षष्ठे पञ्चमे वा जन्मनि साम्यं यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातित्वं भवति। तद्यथा – ब्राह्मणः शूद्रवृत्त्या जीवंस्तामपरित्यजन् यदि पुत्रमुत्पादयति, सोऽपि तयैव वृत्त्या जीवन्पुत्रान्तरमित्येवं परम्परया सप्तमे जन्मनि शूद्रमेव जनयति। वैश्यवृत्त्या जीवन् षष्ठे वैश्यम्। क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियम्। क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रम्। वैश्यवृत्त्या जीवन् पञ्चमे वैश्यम्। वैश्योऽपि शूद्रवृत्त्या जीवंस्तामपरित्यजन्पुत्रपरम्परया पञ्चमे जन्मनि शूद्रं जनयतीति। पूर्ववच्चाधरोत्तरम्। अस्यार्थः – वर्णसंकरे अनुलोमजाः प्रतिलोमजाश्च दर्शिताः। संकीर्णसंकरजाताश्च रथकारनिदर्शनेन दर्शिताः। इदानीं वर्णसंकीर्णसंकरजाताः प्रदर्श्यन्ते। अधरे च उत्तरे च अधरोत्तरम्। यथा मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादितस्तथाऽम्बष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादिता *अधराः प्रतिलोमजाः, तथा मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणेनोत्पादिताः, माहिष्योग्रयोर्ब्राह्मणेन क्षत्रियेण चोत्पादिताः, करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिता उत्तरे अनुलोमजाः। एवमन्यत्राप्यूहनीयम्। एतदधरोत्तरं पूर्ववत् असत्सदिति बोद्धव्यम्। § मिता.

[व्यवहितसंगतिमाह – सवर्णेभ्य इति। कारणान्तरमिति। अर्धपद्येनेति शेषः। एवं च केषांचित्संकराणामप्युत्तमजातिप्राप्तिरिति भावः। इदमुपलक्षणम्, उत्तमानामधमजातिप्राप्तिरपि बोध्या। जातिपदं धर्मिपरमित्याह – मूर्धेति। रूढ्यर्थस्यासंभवेन त्यागाल्लक्ष्यार्थमाह – जन्मनीति। उत्पादयितुः सर्वत्र तुल्यत्वेऽपि योन्यपकर्षतारतम्येन सप्तमत्वादिपरिग्रहः। अत एव व्युत्क्रमेण व्याख्यानम्। सप्तम इत्यादिपद्योक्तक्रमेण तथा व्याख्येति तत्त्वम्। सप्तमत्वस्यात्रासंभवादाह – षष्ठमिति। एवमग्रेऽपि बोध्यम्। अन्यत्रापि संकीर्णसंकरादिस्थलेऽपि। किं चेति। वर्णस्य वर्णान्तरप्राप्तिमप्याह पादेनेत्यर्थः। अन्यनिरासायाऽऽह - वृत्त्यर्थानामिति। साम्यमित्येतद्विशदयति – यस्येति। एतत्प्रकारस्य कन्यायामसंभवादाह – पुत्रमिति। तुर्यचरणस्य प्रकृतासंगत्याऽसंबद्धत्वम्(असत्संमतमस्त्विति ?) अस्य व्याख्यातत्वेन(? ख्यानेन) परिहरति – अस्यार्थ इति। अयं भावः – त्रिविधः संकरः – वर्णसंकरः संकीर्णसंकरः वर्णसंकीर्णसंकरश्चेति। तत्र मुख्यवर्णयोरेव दाम्पत्यं वर्णसंकरः। स चानुलोमप्रतिलोमभेदात् द्वादशविध उक्तः। उभयोः संकीर्णयोरेव दाम्पत्यं संकीर्णसंकरः। यत्र तु पुनरेको वर्णः, अपरः संकीर्णः, तयोर्दाम्पत्यं स वर्णसंकीर्णसंकरः। सोऽप्यनुलोमप्रतिलोमभेदात् द्विधेति। तदेतदाह – वर्णेत्यादि। अदिग्वृत्तित्वादाह – अधरे चेति। एवमन्यत्रापीति पूर्ववत्। अन्ये तु तुर्यचरणमन्यथा व्याचक्षते – आद्ये (?) पूर्वोक्तधारान्तःपातिनीनां च कन्यानां पूर्वपूर्वाभ्यो यथोत्तरं श्रेष्ठत्वमिति। कर्मणां व्यत्ययोऽपि जन्मवत् द्विविधः – अनुलोमः प्रतिलोमश्च, नीचानामुच्चकर्मानुष्ठानमुच्चानां नीचकर्मानुष्ठानमिति। तत्राधरोत्तरम्। भावप्रधानो निर्देशः। अधरत्वमुत्तरत्वं च पूर्ववत् जन्मवद्वेदितव्यम्। यथा – ब्राह्मणः शूद्रवृत्तिः श्रेयान्, शूद्रस्तु द्विजवृत्तिरधम इति। तदाह वसिष्ठः – 'अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्न तु कदाचित् ज्यायसीम् (इति ?)' (वाध. २।२२, २३) इति। बाल. पृ. ३१४-३१५]

(३) युगं जायापत्योर्युग्मम्। तत्र सप्तमे पञ्चमेऽपि वा पितृसमानवर्णभावो ज्ञेयः। एतच्चानुलोमजस्त्रीविषयम्, तस्यां भार्यात्वसंभवात्, न तु प्रतिलोमजाविषयम्, तस्या वर्णबाह्यत्वेनाजायात्वात्। गुणापेक्षो विकल्प उदाहरणम्। उत्तमवर्णेन हीनवर्णायामुत्पन्ना सा(? या) स्त्री सोत्तमवर्णादनिषिद्धमार्गेण स्त्रियं जनयति। साऽप्येवम्, साऽप्येवमिति सप्तमे स्त्रीपुंसयुगले जातमपत्यं समानवर्णं पित्रा भवति। व्यत्यय इति। ब्राह्मणक्षत्रियादीनां यानि वृत्तिरूपाणि कर्माणि तेषां व्यत्यये व्यतिक्रमे यथा ब्राह्मणस्य क्षत्रियवृत्तिं वैश्यवृत्तिं वोपजीवतो जाताः पुत्रपौत्रादयो यदि तामेव

---

* पूर्वप्रयोगानुरोधात् 'अधरे' इति प्रयोक्तुमुचितम्।

§ मुक्ता. मितावत्। शूक. मितागतम्।

वृत्तिमुपजीवन्ति तदा सप्तमे पञ्चमे वा जातमपत्यमुपजीव्यमानसंबन्धिवर्णात्मकं भवति। पूर्ववदित्यादि। पूर्ववद्वर्णसंकरवद्वृत्तिसंकरस्याप्युत्तराधरं वेदितव्यम्। भावप्रधानोऽयं निर्देशः। ततश्चोत्तरत्वमधरत्वं वा वेदितव्यमित्यर्थः। आनुलोम्येन वृत्तिसंकरस्योत्तरत्वम्। यथाऽऽह वसिष्ठः – 'आ(? अ)जीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्' इति। वृत्तिसंकरे प्रातिलोम्यमधरम्। यथा वैश्यस्य क्षत्रवृत्त्युपजीवनम्। अत एव 'वृत्तिमातिष्ठेरन्' इत्यनुवृत्तौ वसिष्ठः – 'न तु कदाचिज्ज्यायसीम्' इति। † अप.

(४) युगे जन्मनीति विश्वः (? विज्ञानेश्वरः)। स्त्रीपुरुषयुग इति केचित्। (यदि ?) शूद्रायामूढायां जाता कन्या यद्यपरस्मै ब्राह्मणाय विवाहेन दीयते, तज्जाता कन्या पुनरपरस्मै ब्राह्मणाय, इत्येवं क्रमेण सप्तकन्यापरिवर्तने, सप्तमे जन्मनि, स्त्रीपुरुषयुग्मे वा उत्तरोत्तरविलक्षणमातृजत्वेन जात्युत्कर्षः ब्राह्मणजातीयः भवति। ब्राह्मणा(? णकर्मा)दिष्वधिक्रियत इत्यर्थः। पञ्चमे वेति क्षत्रियविषयम्। यथा क्षत्रियपरिणीतशूद्राजातकन्यासंतानस्य पूर्वोक्तरीत्या पञ्चमे क्षत्रियत्वम्। अर्थाद्वैश्यपरिणीतस्य शूद्रसंतानस्य युगत्रये वैश्यत्वम्। तथा कर्मव्यत्यये क्रियावैपरीत्ये साम्यम्। व्यत्यये केन सह साम्यम्? तत्राऽऽह – उत्तराधरम् उत्तरस्याधरजातिसाम्यम्। तदपि पूर्ववत् विवाहपरंपरया सप्तमे पञ्चमे वेत्यर्थः। यथा ब्राह्मणजातिजा कन्या शूद्रवृत्तिना ब्राह्मणेन परिणीता कन्यान्तरं प्रसूते साऽपि हीनब्राह्मणपरिणीता इत्येवं क्रमेण सप्तमे युगे शूद्रकर्मभागी भवतीत्यर्थः। एवं क्षत्रियकन्या हीनक्षत्रियविवाहे पञ्चमे शूद्रत्वम्। अर्थाद्वैश्यकन्यासंततेर्युगत्रये शूद्रत्वम्। तथा च मनुः – 'शूद्रायां ब्राह्मणाज्जाता श्रेयसा चेत्प्रजायते। अश्रेयान् श्रेयसीं जातिं गच्छत्या सप्तमाद्युगात्।। शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैव शूद्रताम्। क्षत्रियाद्ब्राह्मणत्वं च वैश्याज्जातस्तथैव च।।' (मस्मृ. १०।६४-६५)। दीक.

(५) + इयं च दिक्। तद्यथा – मूर्धावसिक्तेन क्षत्रियोढा तत्पुत्रेणापि क्षत्रिया इत्येवं क्रमेण पञ्चमं क्षत्रियं जनयति। एवमम्बष्ठेनोढा वैश्या, तत्पुत्रेणापि सा, इत्येवं क्रमेण षष्ठं वैश्यं जनयति। एवं निषादेन शूद्रोढा तत्पुत्रेणापि शूद्रा, इत्येवं क्रमेण सप्तमे शूद्रं जनयति। एवं मूर्धावसिक्तादिष्वपि योज्यम्। + संम. ७७

(६) ननु प्रतिलोमजापेक्षयाऽनुलोमजानां सामान्यत एवोत्कृष्टत्वमुक्तम्, तच्चायुक्तम्, निषादजातीयानां सूतादिजातीयेभ्यस्तदसंभावादुभयेषामपि शूद्रधर्माधिकारात् इत्याशङ्कायां ब्राह्मणत्वादेः प्रयोजकरूपं परिचायकान्तरं दर्शयन्नेवानुलोमजानां मूर्धाभिषिक्तादीनां सर्वेषामेव ब्राह्मण्यादिजातिप्राप्तियो(? यो)ग्यतारूप(? पं)प्रतिलोमजादुत्कर्षान्तरं दर्शयति – जातीति। "सवर्णेभ्यः सवर्णासु' इत्यादिना जातिप्राप्तौ कारणमुक्तम्, इदानीं कारणान्तरमप्याह – जात्युत्कर्ष इत्यादि" इति केचिदवतारयन्ति। जातयः मूर्धाभिषिक्तादयः, तासामुत्कर्षः ब्राह्मणत्वादिप्राप्तिरूपः, स सप्तमे, पञ्चमे, अपिशब्दात्षष्ठे वा युगे बोद्धव्यः। 'युगे जन्मनि' इति विश्वरूपः (? विज्ञानेश्वरः)। 'स्त्रीपुंसयुग्मम्' इति केचित्। वाशब्दो व्यवस्थिते विकल्पे। व्यवस्था च – निषादी ब्राह्मणेनोढा दुहितरं कांचिज्जनयति, साऽपि ब्राह्मणेनान्यामित्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणम्। अम्बष्ठाऽप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणम्। मूर्धाभिषिक्ताऽप्यनेन प्रकारेण चतुर्थी तादृशी पञ्चमं ब्राह्मणं जनयति। एवमुग्राऽपि पञ्चमी क्षत्रियोढा षष्ठं क्षत्रियम्। म(? मा)हिष्याऽपि चतुर्थी तादृशी पञ्चमं क्षत्रियं जनयति। एवं करण्यपि चतुर्थी वैश्योढा पञ्चमं वैश्यं जनयति। इत्येवमन्यत्राप्यूह्यमिति मिताक्षरा। मनुटीकायां तु अपिशब्देन तृतीय इति पक्षान्तरं गृह्यत इत्युक्तम्। उदाहृतं च – क्षत्रियाज्जातस्य शूद्रस्य पञ्चमे जन्मन्युत्कर्षापकर्षौ, वैश्याज्जातस्य तृतीये ताविति, तुल्यन्याय्य(? य)त्वात्। ब्राह्मणाद्वैश्यायां जातस्य पञ्चमे, क्षत्रियायां जातस्य तृतीये जन्मनि ताविति। एवमन्यत्रापि न्यायतौल्येनोहनीयमिति संक्षेपः। क्षत्रियत्वादेः प्रयोजकं परिचायकान्तरं दर्शयन्नेव 'असत्सन्तस्तु' इति चार्थतुशब्देन समुच्चितानां मध्ये उक्तप्रायान् व्रात्यादीनुपेक्ष्य सर्वथैवानुजान् विवृणोति। कर्मणां व्य(?-

---

† पमा. अपवत् विकल्पेन मितावच्चतुर्थचरणव्याख्या च। शूशि. अपवत् चतुर्थचरणमिताव्याख्यानस्य व्याख्यातृनिर्देशपुरःसरमनुवादश्च।

+ जात्युत्कर्षोदाहृतिः।

+ शेषं मितानुवादः।

वृ)त्त्यर्थानां याजनादीनां व्यत्यये विपर्ययेऽन्यजातीयेनान्यजातीयवृत्त्युपजीवने साम्यं यज्जातीयवृत्तिमत्त(? मत)ज्जातीयो य उपजीवति तज्जातीयत्वं तस्य भवति। एतच्चोत्कृष्टेनापकृष्टवृत्त्युपजीवने। वैपरीत्ये तु वर्णबाह्यत्वमेव। तत् चशब्देन समुच्चिनोति। अत एव 'वृत्तिमातिष्ठेरन्' इत्यनुवृत्तौ वसिष्ठः – 'न च कदाचिज्जायसीम्' इति। अत एवाऽऽह – पूर्ववदित्यादि। पूर्ववद्वर्णसंकीर्णेष्विति प्रवृत्ति(? ष्विव वृत्ति)संकीर्णष्वपि। अधरत्वम् अपकृष्टत्वम्, उत्तरत्वम् उत्कृष्टत्वं ज्ञेयम्। एकवद्भावी भावप्रधानो द्वन्द्वः। भवितृप्रधान एव वा 'स नपुंसकम्' (पा. २।४।१७) इति लिङ्गसङ्गतः। यथा प्रातिलोम्येन वर्णसंकीर्णोऽपकृष्टः आनुलोम्येन तूत्कृष्टस्तथा वृत्तिसंकीर्णे(? र्णो)ऽपि। यथा च पूर्वत्र सप्तमादौ जन्मनि ब्राह्मणत्वादिप्राप्तिस्तथोत्तरत्रापीत्यर्थः। तेन ब्राह्मणजाता कन्या शूद्रवृत्तिना ब्राह्मणेन कन्यां प्रसूयते साऽपि शूद्रवृत्तिना ब्राह्मणेन कन्यान्तरमित्येवंप्रकारेण सप्तमस्य शूद्रत्वम्। एवं च क्षत्रियपरम्परायां षष्ठस्य, वैश्यपरम्परायां पञ्चमस्येत्यादि स्वयमूह्यम्।

अन्ये तु शूद्रवृत्तिना ब्राह्मणेन जनितो ब्राह्मणस्तेनापि तादृशेनैव जनितो ब्राह्मण इत्येवंप्रकारेण सप्तमः शूद्रः। एवं क्षत्रियवैश्यपरम्परायां षष्ठः पञ्चम इत्येवमूह्यमित्याहुः। एतच्चानापदि, 'अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा। जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः।। उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्। कृषिगोरक्षमादाय जीवेद्वैश्यस्य जीविकाम्।।' (मस्मृ. १०।८१-८२) इति मन्वादिभिरापदि हीनवृत्त्यभ्यनुज्ञानादिति। अन्ये तु – 'पूर्ववच्चेति। यथा वर्णसंकीर्णा अनुलोमजाः प्रतिलोमजाश्च तथा संकीर्णजाता ये दर्शितास्तेषामप्युक्तन्यायेनोत्कर्षापकर्षौ द्रष्टव्यावित्यर्थः।' इति व्याचक्षते। 'व्यत्यये कर्मणामित्यादि। कर्मव्यत्यये क्रियावैपरीत्ये साम्यम्। कस्य कर्मव्यत्यये केन सह साम्यम्? तत्राऽऽह – अधरोत्तरमिति। उत्तरस्याधरजातिसाम्यं तदपि पूर्ववद्विवाहपरम्परया सप्तमे पञ्चमे तृतीये वा जन्मनीत्यर्थः।' इत्यपरे। अत्र मनुः – 'शूद्रायां ब्राह्मणाज्जातो ब्राह्मणोऽप्येति शूद्रताम्। क्षत्रियाज्जात एवं हि वैश्याज्जातस्तथैव च।।' (मस्मृ. १०।६४)। अत्र शङ्कते – ब्राह्मणत्वादिप्रयोजकत्वेनोक्तानां कारणविशेषाणामननुगमात्कथं तथात्वम्? इति। तत्रोच्यते – तृणारणिमणीनां वह्नित्वावान्तरतत्तज्जात्यवच्छिन्ने वह्नाविव ब्राह्मणादीनामपि ब्राह्मणादिकारणानां ब्राह्मणत्वाद्यवान्तरतत्तज्जात्यवच्छिन्ने ब्राह्मणादौ हेतुता। यदाहुर्न्यायकुसुमाञ्जलावुदयनाचार्याः – 'उद्भिद्वृश्चिकवद्वर्णाः' इति। उद्भिदस्तण्डुलीयकशाकादयः ते यथाऽऽद्यास्तण्डुलकरणात् उत्तरे तण्डुलीयकात्, वृश्चिकाश्चाऽऽद्या गोमयात्, उत्तरे वृश्चिकादेव; वर्णा अपि ब्राह्मणादय आद्याः समयविशेषसचिवादृष्टविशेषात्, उत्तरे ब्राह्मणादिभ्यो जायन्त इत्यर्थः। इदं च प्रलयाङ्गीकर्तॄणाम्। अन्यथा तु विश्वामित्रादय उदाहर्तव्याः। न चैवं ब्राह्मणादिसामान्येष्वनुगतानि कारणान्यसमर्थितान्येवेति शङ्काऽस्त्येव, तेष्वपि तत्तददृष्टविशेषत्वादीनां साधारणानां जनकतावच्छेदकत्वात्। नन्वेवमवान्तरकार्यतायां मानाभाव इति चेत्, मैवम्, वह्नौ प्रत्यक्षादिना तृणादीनामिव ब्राह्मणादिष्वपि स्मृत्यादिना ब्राह्मणादीनामननुगतानां कारणताबोधनादिति गौतमीयादयः। अननुगतेषु कारणेष्वेकजातीयशक्त्यभ्युपगमान्नाननुगमशङ्काऽपीति जैमिनीया इति कृतमतिप्रसक्तानुप्रसक्त्या।

वीमि.

वर्णानां मुख्या वृत्तयः शूद्रस्याऽऽपद्वृत्तयश्च

**[१]इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।**
**प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा।।**

(१) कस्मात्पुनर्ब्राह्मण एव स्नातकः परिगृह्यते*? क्षत्रियवैश्ययोर्यागादयोऽपि सन्त्येव। सत्यम् – इज्याध्ययनेति। वृत्त्यर्थान्यप्येतानि मानकारणं भवन्त्येव। यद्वा, उक्तं शक्तितो धर्माद्यहापनम्। तत्रेज्यादयः सर्वेषां धर्मसाधनम्। प्रतिग्रहादयश्च यथाधिकारमर्थसाधनम्। कामस्य तूक्तमेवेत्येवं योजना।

विश्व.

---

* पूर्वोक्तमाननीयेष्विति शेषः।

(१) **यास्मृ.** १।११८; **विश्व.** १।११७ **मिता.** १।१२८ तृतीयचरणमात्रम् : ३।३५ उत्त.; **मपा.** २१५ ध्यापने (ध्ययने); **मर.** ९; **निप्र.** २।२५३ : २।२६१ तृतीयचरणमात्रम्; **मुक्ता.** १८; **वीमि.** १।१२७ तृतीयचरणमात्रम्; **सस्मृ.** १७०-१७१ अशुद्धः पाठः.

(२) वैश्यस्य क्षत्रियस्य च चकाराद्ब्राह्मणस्य द्विजानुलोमानां च यागाध्ययनदानानि साधारणानि कर्माणि। ब्राह्मणस्याधिकानि प्रतिग्रहयाजनाध्यापनानि। तथेति स्मृत्यन्तरोक्तवृत्त्युपसंग्रहः। यथाऽऽह गौतमः – 'कृषिवाणिज्ये वाऽस्वयंकृते कुसीदं च' (गौध. १०।५-६) इति। अध्यापनं तु क्षत्रियवैश्ययोर्ब्राह्मणप्रेरितयोर्भवति, न स्वेच्छया, 'आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगः, अनुगमनं शुश्रूषा, समाप्ते ब्राह्मणो गुरुः'(गौध. ७।१-३) इति गौतमस्मरणात्। एतान्यनापदि ब्राह्मणस्य षट् कर्माणि। तत्र त्रीणीज्यादीनि धर्मार्थानि, त्रीणि प्रतिग्रहादीनि वृत्त्यर्थानि, 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः।।' (मस्मृ. १०।७६) इति मनुस्मरणात्। अत इज्यादीन्यवश्यं कर्तव्यानि, न प्रतिग्रहादीनि। 'द्विजातीनामध्ययनमिज्या दानम्। ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः। पूर्वेषु नियमः' (गौध. १०।१-३) इति गौतमस्मरणात्। ‡ मिता.

(३) इज्यादिकर्माणि वैश्यक्षत्रिययोः, चकाराद्विप्रस्यापि, धर्मसाधनानि। प्रतिग्रहादीनि तु विप्रस्यैव वृत्तिसाधनानि। अधिकत्वं प्रतिग्रहादेरप्यसाधारण्यम्। ब्राह्मणस्यैव प्रतिग्रहादिरित्यर्थः। अत एव विप्र इति विषयसप्तमी। ◘अनन्यत्रभावश्च विषयः। अतो ब्राह्मणस्यैव प्रतिग्रहादिवृत्तित्रयम्। यत्पुनः – 'अब्राह्मणादध्ययनमापत्काले विधीयते' (मस्मृ. २।२४१) इति, तदध्यापनमात्रकर्तृत्वमब्राह्मणस्याभ्यनुजानाति, न तु वृत्तित्वमपि। अत एवानन्तरमाह मनुः – 'अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः' इति। अनुव्रज्यैव शुश्रूषेत्यर्थः। अब्राह्मणो ब्राह्मणस्य यावदध्ययनं तावदेव गुरुः। पश्चाद्ब्राह्मण एवाध्यापितो गुरुः। यदाह गौतमः - 'आपत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगः, तदनुगमनं शुश्रूषा, समाप्ते ब्राह्मणो गुरुः' इति। एवं च – 'अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्न तु कदाचिज्ज्यायसीम्' इति वसिष्ठवचनम(? नं ना)समञ्जसं भवति। इज्याध्ययनमित्यत्रेज्याग्रहणेन दानाध्ययनव्यतिरिक्ता द्विजातिधर्मा लक्ष्यन्ते। + अप.

**'प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।**
**कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम्।।**

(१) पूर्वत्र तथाशब्दस्यार्थान्तरापेक्षत्वात् क्षत्रियकर्माणि च प्राधान्यवचनात् कुसीदकृषिवाणिज्यमिति च समासकरणात् पाशुपाल्यं विशः स्मृतमिति च स्मृत्यन्तरार्थोपक्षेपात् कुसीदादीनामनुकल्पतया साधारणत्वम्। वैश्यस्य तु स्वयंकर्तृकाण्यप्येतानि स्वकल्प एव, स्मृत्यन्तरात्। विश्व.

(२) क्षत्रियस्य प्रजापालनं प्रधानं कर्म धर्मार्थं वृत्त्यर्थं च। वैश्यस्य कुसीदकृषिवाणिज्यपशुपालनानि वृत्त्यर्थानि कर्माणि। कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः। लाभार्थं क्रयविक्रयौ वाणिज्यम्। शेषं प्रसिद्धम्। 'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषी विशः। आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः।।' (मस्मृ. १०।७९) इति मनुस्मरणात्। * मिता.

(३) प्रधानं मुख्यं क्षत्रिये प्रजानां परिपालनम्। प्रधानं प्रजापरिपालनाख्यं कर्म, धर्महेतुत्वाच्च। वक्ष्यति हि – 'पुण्यात्षड्भागमादत्ते' (यास्मृ. १।३३५) इत्यादिना प्रसङ्गतः पुण्यषड्भागस्यार्थषड्भागस्य चोपादानमिति।

---

‡ दीक., वीमि. मितागतम्।

◘ न अन्यत्र भावः अनन्यत्रभावः, अन्यत्राभाव इत्यर्थः। अत्र भावाभावौ विधेयस्य प्रतिग्रहादेर्बोध्यौ। अन्यत्वमत्र विषयत्वाभिमतविप्रप्रतियोगिकं ग्राह्यम्। तथा च 'विप्रादन्यत्र प्रतिग्रहादेरभावो विषयः' इति यथाश्रुतवाक्यार्थः संपन्नः स तथैव नोपपद्यते इत्युपपद्यमानेऽर्थे तात्पर्यं कल्पनीयम्। तद्यथा – अभावविषययोर्धर्मधर्मिरूपयोरभेदासंभवात् तत्पदयोः सामानाधिकरण्यं नोपपद्यत इति विषयशब्दो भावप्रधानो ग्राह्यः। उक्ताभावो विषयत्वमित्यर्थः। तथा अन्यत्राभावस्य विप्रतिष्ठविषयत्वानुपपत्तेरेवमप्यत्र कल्पनीयम् – न अन्यत्रविधेयाभावमात्रं विषयत्वम्, अपि तु तद्विशिष्टो विषयत्वाभिमते विधेयभावो विषयत्वम्। अत्र वैशिष्ट्यावच्छेदकः संबन्धो यथासंभवं कल्प्यः। तत्र प्रकृतानुपयोगित्वाद्विशेष्यांशोऽत्र नोक्तः, प्रकृतोपयोगी विशेषणांश एवोक्त इति।

+ मपा. अपगतम्।

* स्मृच. मितागतम्।

(१) **यास्मृ.** १।११९; **विश्व.** १।११८ वाणिज्यपा (वाणिज्यं पा); **अप.** दकृषिवाणिज्यपा (दं कृषिवाणिज्ये पा); **स्मृच.** २।४५०; **पमा.** १।३०९ विश्ववत् : १।३९५ प्रथमचरणे (प्रधानः क्षत्रिये धर्मः) पू. : १।४१६ विश्ववत्, उत्त.; **मर.** ९ पू. : **मुक्ता.** ६४ दकृषि (दं कृषि) स्मृतम् (स्मृतेः); **संम.** ७९ विश्ववत्, उत्त.; **विपा.** ३।२।२४६ (=); **आन.** ६३७ पू.; **सस्मृ.** १७१ ये कर्म (यस्यैकं) शेषं विश्ववत्.

कुसीदं स्वर्णादेर्वृद्ध्युपजीवनम्। कृषिः प्रसिद्धा। वाणिज्यं वणिक्कर्म। ततश्च धान्यादि समर्घं गृहीत्वा महार्घं दीयत इति वाणिज्यम्। पाशुपाल्यं पशुरक्षणम्। तत्सर्वं वैश्यस्य मुख्यं वृत्तिकर्म। अप.

(४) पालनं चौरादिभ्यो रक्षणम्। कुसीदं वृद्धिजीविका। वाणिज्यं समर्घं क्रीत्वा लाभोपार्जनम्। दीक.

(५) क्षत्रियस्य चौरादिभ्यः प्रजानां रक्षणं दरिद्रादीनां वृत्तिकल्पनं च मुख्यं कर्म। कुसीदं वृद्ध्या धनप्रयोगः। कृषिः भूकर्षणम्। वाणिज्यं समर्घं क्रीत्वा लाभोपजीवनम्। पाशुपाल्यं पशुपालनम्। एतानि विशः प्रधानकर्माणि स्मृतानि स्मृत्युक्तानि। वीमि.

**'शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत्।**
**शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्।।**

(१) एवं तावत् द्विजातीनामुक्तम्। एकजातेः पुनः – शूद्रस्येति। शूद्रस्य द्विजशुश्रूषैव धर्मसाधनम्, न यागादयः, अध्ययनविध्यभावात्। अर्थसाधनमपि सैव। किंतु तया यदा न जीवेत् तदा वाणिज्यं क्रीतविक्रीतं कुर्यात्। नानाप्रकारैर्वा शिल्पैर्जीवेत्। सर्वथा तु द्विजातिहितमाचरेत्, तदेव हि तस्य धर्मसाधनं यतः। विश्व.

(२) शूद्रस्य द्विजशुश्रूषा प्रधानं कर्म धर्मार्थं वृत्त्यर्थं च। तत्र ब्राह्मणशुश्रूषा परमो धर्मः, 'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते' (मस्मृ. १०।१२३) इति मनुस्मरणात्। यदा पुनर्द्विजशुश्रूषया जीवितुं न शक्नोति तदा वणिग्वृत्त्या जीवेत्। नानाविधैर्वा शिल्पैर्द्विजातीनां हितं कुर्वन्। यादृशैः कर्मभिर्द्विजातिशुश्रूषायामयोग्यो न भवति तादृशानि कर्माणि कुर्वन्नित्यर्थः। तानि च देवलोक्तानि – 'शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि'। $ मिता.

(३) शूद्रस्य द्विजशुश्रूषा मुख्या वृत्तिः। ब्राह्मणशुश्रूषा तु धर्मोऽपि। तया द्विजशुश्रूषया न जीवंस्तदा वणिग्भवेत्। वणिज्यया जीवेदित्यर्थः। शिल्पैर्वा विविधैश्चित्रकर्मादिभिर्जीवेत्। तत्रापि द्विजातिहितमाचरणीयम्। ‡ अप.

(४) अत्र वणिग्ग्रहणम् उपलक्षणं कर्षादीनाम्। मर. १९७

(५) वणिग्भवेदित्यनेन वैश्यवृत्त्यभिधानात् शिल्पैरिति कृष्यादिजीवनोपायैरिति बोध्यम्। आत. ३५२

कुशूलधान्यत्वादीनां धान्यसंचयासंचयरूपाणां
श्रेयस्त्वतारतम्यम्, स्वाध्यायविरोधादीनि
वृत्तिप्रतिबन्धकानि

**'कुशूलकुम्भीधान्यो वा त्र्यहिकोऽश्वस्तनोऽपि वा।**
**जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परः परः।।**

(१) आद्योऽपिशब्दोऽयाचितार्थः। द्वितीयस्तु शिलोञ्छयोर्भेदकथनार्थः। कुसूलं कोष्ठकः विंशतिद्रोणमानम्, तदर्धं कुम्भी, 'दश द्रोणाः स्मृता कुम्भी कुसूलो द्विगुणस्ततः' इत्यभियुक्तोपदेशात्। त्रैहिको दिनत्रयोपयोगिधान्यः। अश्वस्तनः सद्यःप्रक्षालकः। सि( ? शि)लः सशूकोच्चयनम्। कणोच्चयनम् उञ्छः। ननु च सोमाद्यनुष्ठानविरोधाच्छ्रुतिविरुद्धेयं स्मृतिः। न च वृत्त्यपेक्षोऽधिकारः, अद्रव्यत्वस्याधिकाराप्रतिबन्धकत्वात्। उच्यते – जीवेदिति वचनाज्जीवनार्थो वृत्तिसंकोचः। क्रत्वर्थं प्रतिग्रहादिभिरप्य-

---

(१) **यास्मृ.** १।१२०; **विश्व.** १।११९; **मिता.** ३।३५; **अप.** चरन् (चरेत्); **गृक.** २६९ याज्ञवल्क्यविश्वामित्रौ; **स्मृच.** २।४५६, ४७४ अपवत्; **गृर.** ४७८; **पमा.** १।३१०, ४२२; **स्मृकौ.** ९४; **मर.** १९७ अशुद्धः पाठः; **शूत.** ६३५ द्वितीयचरणे (तया जीवनवान्भवेत्) (=); **आत.** ३५२; **शूशि.** ३९; **चमव्या.** ८२; **मुक्ता.** ६७; **शूक.** ७१; **संम.** ८० शिल्पैर्वा (शिल्पैश्च); **विपा.** ३।२।२४६ चरन् (वहन्) (=); **आन.** ६४०; **बाल.** १।१६६ पृ. ४३० निर्देशमात्रम्; **सस्मृ.** १२७ र्वा विवि (र्बहुवि) चरन् (चरेत्).

$ स्मृच., पमा., दीक. मितागतम्।

‡ वीमि. अपगतम्।

(१) **यास्मृ.** १।१२८; **विश्व.** १।१२७ कुशूल (कुसूल) त्र्यहि (त्रैहि); **मिता.** त्र्यहि (त्र्याहि); **अप.** कुशूल (कुसूल) त्र्यहि (त्र्याहि); **गृक.** १७३ कुशूल (कुसूल) त्र्यहि (त्र्यैहि), याज्ञवल्क्यविश्वामित्रौ; **स्मृच.** २।४५१ कुशूलकुम्भी (कुसूलकुम्भि) शेषं मितावत्; **गृर.** ४१८ याज्ञवल्क्यविश्वामित्रौ; **पमा.** १।३१० मितावत्; **आपा.** ११० अपवत्; **दीक.** गृकवत्; **निप्र.** २।२६० कुशूल (कुसूल); **मुक्ता.** ६० शिलो (सिलो) शेषम् अपवत्; **संम.** ८२ मितावत् चतुर्थचरणवर्जम्; **सम.** १०९ त्र्यहि (त्र्याहि) द्वितीयचरणमात्रम् (=); **आम.** ४९ अपवत्; **विपा.** ३।२।२४७ निप्रवत्; **वीमि.** मितावत्; **स्मृतिकौ.** ४७८ द्वितीयचरणमात्रम् (=).

निषिद्धमेवार्जनमित्यविरोधः। यद्वा एतन्नैष्ठिकादिवदेव द्रष्टव्यम्। न हि रागितयैव प्रवृत्तद्रव्यार्जनानुत्सृज्य वृत्तिसंकोचस्मृतिबाधेनाग्निहोत्रादिविधयः प्रवर्तन्ते। यतः प्रवृत्तौ वा क्रत्वर्थतैव द्रव्यार्जनस्य स्यात्। तथाच सर्वतन्त्रपरिलोपः। तस्मात् प्रतिग्रहादिवृत्तिविषया एवाग्निहोत्रादिविधय इत्यविरोधः। निपुणतस्त्वेतद्वनस्थाश्रमनिरूपणे वक्ष्यामः। प्रवृत्ताश्रमान्तरस्य चैता वृत्तयः। तथाच शङ्खः 'अत ऊर्ध्वं पुत्रानुत्पाद्य'इत्युपक्रम्य 'क्रतुप्रस्थानलिङ्गो वृत्तिविशेषानुक्रमः श्रेयान् यायावराणां वार्तामुपास्य वनमाश्रयेत्' इत्याह। अतोऽप्यविरोधः। विश्व.

(२) कुशूलं कोष्ठकम्। कुम्भी उष्ट्रिका। कुशूलं च कुम्भी च कुशूलकुम्भ्यौ। ताभ्यां परिमितं धान्यं यस्य स तथोक्तः। कुशूलधान्यः स्यात् कुम्भीधान्यो वा। तत्र स्वकुटुम्बपोषणे द्वादशाहमात्रपर्याप्तं धान्यं यस्यास्ति स कुशूलधान्यः। कुम्भीधान्यस्तु स्वकुटुम्बपोषणे षडहमात्रपर्याप्तधान्यः। त्र्यहपर्याप्तं धान्यमस्यास्तीति त्र्यहिकः। श्वोभवं धान्यमस्यास्तीति श्वस्तनः। न विद्यते श्वस्तनं यस्य सोऽश्वस्तनः। कुशूलधान्यादिसंचयोपायमाह– जीवेद्वाऽपीति। शाल्यादिनिपतितपरित्यक्तवल्लरीग्रहणं शिलम्। एकैकस्य परित्यक्तस्य कणस्योपादानमुञ्छः। शिलं चोञ्छश्च शिलोञ्छम्। तेन शिलेनोञ्छेन वा। कुशूलधान्यादिश्चतुर्विधो गृहस्थो जीवेत्। एषां कुशूलधान्यादीनां ब्राह्मणानां गृहस्थानां चतुर्णां परः परः पश्चात्पश्चात्पठितः श्रेयान् प्रशस्यतरः। एतच्च यद्यपि द्विजः प्रकृतस्तथापि ब्राह्मणस्यैव भवितुमर्हति, विद्योपशमादियोगात्, तथाच मनुना 'अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः। या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि।।' (मस्मृ. ४।२) इति विप्रमेव प्रस्तुत्य 'कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव वा' (मस्मृ. ४।७) इत्याद्यभिहितत्वात्। एतच्चानतिसंपन्नं संयतं यायावरं प्रत्युच्यते, न विप्रमात्राभिप्रायेण। तथा सति 'त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः।' (यास्मृ. १।१२४) इत्यनेन न विरोधः। तथा च गृहस्थानां द्वैविध्यं तत्र तत्रोक्तम्। यथाऽऽह देवलः – 'द्विविधो गृहस्थो यायावरः शालीनश्च। तयोर्यायावरः प्रवरो याजनाध्यापनप्रतिग्रहरिक्थसंचयवर्जनात्। षट्कर्माधिष्ठितः प्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्ती शालीनः' इति। शालीनोऽपि चतुर्विधः – याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवत्येकः। याजनादिभिस्त्रिभिरन्यः। याजनाध्यापनाभ्यामपरः। चतुर्थस्त्वध्यापनेनैव। तथाऽऽह मनुः – 'षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते। द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति।।' (मस्मृ. ४।९) इति। अत्र च 'प्रतिग्रहोऽधिको विप्रे' (यास्मृ. १।११८) इत्यादिना शालीनस्य वृत्तयो दर्शिताः, यायावरस्य 'जीवेद्वाऽपि शिलोञ्छेन' इति। * मिता.

(३) कुसूलं कोष्ठिका। तत्परिमितमेव धान्यं यस्य स कुसूलधान्यः। कुसुलादूनपरिमाणं धान्यावपनं कुम्भी। तत्परिमाणधान्यो वा गृहस्थो भवेत्। श्रेयान् अतिशयेन प्रशस्तः। स्वर्गादिलोकजयकारणम्, धर्मातिशयत्वात्। + अप.

(४) कुसूलेत्यादि। द्वादशदिनोचितधान्याधारा कोषी कुसूलः। षड्दिनोचितधान्याधारः कुम्भी। ते धान्यं यस्य सः। ईहा चेष्टा। तस्यां भवमैहिकम्। त्रिदिनोचितमैहिकं यस्य सः त्र्यैहिकः। सद्यः अश्वस्तनः। मञ्जर्यात्मकोऽनेकधान्योच्चयः शिलः। एकैकधान्यादिगुडकोच्चयनमुञ्छः। दीक.

**[1]न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः।**
**न विरुद्धप्रसङ्गेन संतोषी च भवेत्सदा।।**

(१) एवं तावदुत्तरोत्तरज्यायस्त्वेन वृत्तिसंयमोऽभिहितो ज्ञानातिशयेनोच्छिन्नरागाणाम्। ये तु रागिणो बहुतरद्रव्यकामाः पूर्वोक्तप्रतिग्रहादिभिरनियतं द्रव्यमार्जयितुं प्रवृत्ताः तान् प्रत्याहनेति। नार्थकृतं स्वाध्यायमुत्सृज्यार्थार्थमीश्वरमुपेयात्। न च यतस्ततः शूद्रादप्रशस्ताद्वाऽर्थमीहेत। न च धर्मार्थयोर्युगपत्प्रसङ्गे धर्मविरोधिनमर्थं परिगृह्णीयात्। तथा

---

* स्मृच., पमा., आपा., मुक्ता., संम., आम., विपा., वीमि. मितागतम्। निप्र. अर्थत आंशिको मितानुवादः।

\+ शेषं मितागतम्।

(१) **यास्मृ.** १।१२९; **विश्व.** १।१२८:१।१३९ द्वितीयचरणमात्रम्; **गृक.** २२९; **मर.** ५१; **चमव्या.** ६६; **वीमि.** १।२१४-२१६ पू.; **संकौ.** १७१ (न स्वाध्यायविरोध्यर्थमीहेत) एतावदेव; **सस्मृ.** २०७ भवेत्सदा (तदा भवेत्).

चाऽऽपस्तम्बेन ब्रह्महत्याप्रायश्चित्तं विरुद्धप्रसङ्गेऽभ्यधायि – 'धर्मार्थसंनिपातेऽर्थग्राहिण एतदेव' (आध. १।२४।२३) इति। सर्वथा संतोष्येव सदा भवेत्, न लुब्धः स्यादित्युपसंहारः कामात्मतानिषेधार्थः। विश्व.

(२) एवं श्रौतस्मार्तानि कर्माण्यभिधायेदानीं गृहस्थस्य स्नानादारभ्य ब्राह्मणस्यावश्यकर्तव्यानि विधिप्रतिषेधात्मकानि मानससंकल्परूपाणि स्नातकव्रतान्याह – नेति। ब्राह्मणस्य प्रतिग्रहादयोऽर्थप्राप्त्युपाया दर्शिताः, तत्र विशेष उच्यते – स्वाध्यायविरोधिनमर्थमप्रतिषिद्धमपि नेहेत नान्विच्छेत्। न यतस्ततः न यतः कुतश्चिदविदिताचारात्। न विरुद्धप्रसङ्गेन। विरुद्धम् अयाज्ययाजनादि, प्रसङ्गः नृत्यगीतादिः। विरुद्धं च प्रसङ्गश्च विरुद्धप्रसङ्गम्, तेन। नार्थमीहेतेति संबध्यते। नञ आवृत्तिः प्रत्येकं पर्युदासार्था। सर्वत्राप्यस्मिन्स्नातकप्रकरणे नञ्शब्दः प्रत्येकं पर्युदासार्थ एव। किंच, अर्थालाभेऽपि संतोषी परितृप्तः भवेत्। चकारात्संयतश्च, 'संतोषं परमास्थाय सुखार्थी संयतो भवेत्' (मस्मृ. ४।१२) इति मनुस्मरणात्। † मिता.

[नन्वेवं नञपि सकृदेवोपादेयः, अत आह – नञ इति। अन्यथा यतस्ततो विरुद्धप्रसङ्गेन स्वाध्यायविरोधिनमर्थं नेहेतेत्येक एवार्थः स्यात्, '§संभवति' इति न्यायात्। नन्वसमस्तत्वेन नञः प्रसज्यप्रतिषेधार्थकत्वमुचितम्, अत आह – सर्वत्राप्येति। न केवलमत्रैवेत्यपिसूचितोऽर्थः। पर्युदासे चाभावस्याननुष्ठेयत्वात्तद्वाचिव्रतशब्दोपक्रमात् तेन *नञिवयुक्तन्यायेन च तद्भिन्नसदृशक्रियायाः सामान्यतः प्राप्तत्वाच्चानीक्षणसंकल्पे लक्षणा। अन्यथा 'व्रतानीमानि धारयेत्' इति मानवः(? वोक्तेः), 'तस्यैतस्य व्रतानि भवन्ति' इत्याश्वलायनोक्तो(? क्तेः), 'अथ स्नातकव्रतानि' (आध. १।३०।६)इत्यापस्तम्बोक्तेश्च तथोपक्रमविरोधः स्पष्ट एवेति भावः। वस्तुतस्तु ईक्षणभिन्नसंकल्पे तात्पर्याभावात् तथा शिष्टाचाराभावात् 'नेक्षिष्यामि' इतीक्षणाभावसंकल्पस्यैव सर्वैराचरणात् स्वयमप्यग्रे मांसभक्षणविध्यादौ मन्वाद्येकवाक्यतया तथैव संकल्पस्वरूपस्य प्रदर्शितत्वाच्चेदं प्राचामनुरोधेन, तस्मात्प्रसज्यप्रतिषेधार्थक एव। तत्र चानुष्ठेयवाचिव्रतशब्दोपक्रमात् अभावस्य चाननुष्ठेयत्वात् ईक्षतेर्नञ्समभिव्यवहारादीक्षणाभावसंकल्पबोधकता। अत एव 'उद्यन्तमस्तं यन्तमादित्यं दर्शने वर्जयेत्' (आध. १।३१।२०) इति स्नातकप्रकरणे आपस्तम्बः संगच्छते। एवं सर्वत्रेति बोध्यम्। बाल. पृ. ३८८-३८९]

(३) स्वाध्यायाधिगमविरोधिनमर्थं नेच्छेत्। तदविरोधिनमपि यतस्ततो नेहेत। यतस्ततः निषिद्धाद्दातुरित्यर्थः। न च विरुद्धेन कर्मणा द्यूतादिना, प्रसङ्गेन च गीतादिना। प्रसङ्गः आसक्तिः। तद्धेतुत्वाद्गीतादिः प्रसङ्गः। अथवा प्रसङ्गः अनिष्टापत्तिः 'यद्यस्मै नैतद्ददामि, इदं मेऽनिष्टमेष करिष्यति' इत्येवं भयजननरूपः। यथोत्पन्नेन च संतोषी संतुष्टो भवेत्। अत्र च मनुः – 'संतोषं परमास्थाय सुखार्थं संयतो भवेत्। संतोषमूलं हि सुखं दुःखमूलं विपर्ययः।।' (मस्मृ. ४।१२)। अत्र च प्रकरणे प्रतिवाक्यम् 'इदं कार्यम्, इदं वर्जनीयम्' इति प्रतिपादनद्वारेण तद्विषयः संकल्पः 'इदं करिष्ये, नेदं करिष्ये' इति मनोव्यापाररूपो व्रतशब्दवाच्यो विधीयते, 'तस्य व्रतम्' इत्युपक्रम्य श्रुतावेषां विधानात्। अत एव वसिष्ठः 'अथातः स्नातकस्य व्रतानि' इत्यारभ्यैतानि विहितवान्। एते च संकल्पाः समावर्तनानन्तरमेव कार्याः, स्नातकं प्रति विहितत्वात्। अप.

(४) वेदाभ्यासविरोधिनमर्थमत्यन्तेश्वरोपसर्पणसाध्यं न चेष्टेत। यतस्ततः पतितादेः। न शास्त्रविरुद्धप्रतिग्रहेण। + दीक.

(५) स्वाध्यायः वेदः तद्विरुद्धं तन्नाशकारकमित्यर्थः। विरुद्धप्रसङ्गः द्यूतादिः। संम. ४४

(६) अत्र स्वाध्यायादि ब्राह्मणविषयम्, अन्यत्साधारणम्। सस्मृ. २०७

---

† मर., चमव्या. मितागतम्। वीमि. मितागतम् अपगतं च।

§ 'संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते' इति न्यायादित्यर्थः।

* 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इति न्यायेनेत्यर्थः।

+ शेषं मितागतम्।

प्रतिग्रहविषये दातृ-
नियमः

**$'राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा।
दम्भिहैतुकपाखण्डिबकवृत्तींश्च वर्जयेत्।।**

(१) निसर्गजननानुसारिणो याजनाद्याः सिलोञ्छान्ताः प्रथमे कल्पे त्वेते, नैतेऽनुकल्पाः। अयं तु सर्वेषामापत्कल्पः। सीदन्निति वचनादापत्कल्पत्वम्। राजा क्षत्रियः शास्त्रवर्ती च राज्यकर्ता। अन्तेवासी शिष्यः। ऋज्वन्यत्। चशब्दो विकर्मस्थाद्यर्थः। यथाऽऽह मनुः – 'पाषण्डिनो विकर्मस्थान्' (मस्मृ. ४।३०) इति। एतांश्च सर्वथा नार्चयेत्। तथा च मनुः – 'वाङ्मात्रेणापि नार्चयेत्' (मस्मृ. ४।३०) इति। डम्भी धर्मव्याजजीवी। हैतुकाः कुतार्किकाः। पाषण्डिनः क्षपणकादयः। बकवृत्तिः अतिसंधायकः स्वार्थनिष्ठश्च। यथाऽऽह मनुः – 'अधोदृष्टिर्नैकृतिकः' (मस्मृ. ४।१९६) इत्यादि। † विश्व.

(२) कुतस्तर्हि धनमन्विच्छेदित्याह – राजान्तेवासियाज्येभ्य इति। क्षुधा सीदन् पीड्यमानः स्नातकः राज्ञः विदितवृत्तान्तात्, अन्तेवासिनः वक्ष्यमाणलक्षणात्, याज्यात् याजनार्हाच्च धनमाददीत। क्षुधा सीदन्नित्यनेन विभागादिप्राप्तकुटुम्बपोषणपर्याप्तधनो न कुतश्चिदर्थमन्विच्छेदिति गम्यते। किंच, दम्भिहैतुकादीन्सर्वकार्येषु लौकिकवैदिकशास्त्रीयेषु वर्जयेत्। चकाराद्विकर्मस्थबैडालव्रतिकाञ्छठान् वर्जयेत्। यथाऽऽह मनुः – 'पाखण्डिनो विकर्मस्थान्बैडालव्रतिकाञ्शठान्। हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्।।' (मस्मृ. ४।३०) इति। लोकरञ्जनार्थमेव कर्मानुष्ठायी दम्भी। युक्तिबलेन सर्वत्र संशयकारी हैतुकः। त्रैविद्यविरुद्धपरिगृहीताश्रमिणः पाखण्डिनः। बकवदस्य वर्तनमिति बकवृत्तिः। यथाऽऽह मनुः – 'अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः।।' (मस्मृ. ४।१९६) इति। प्रतिषिद्धसेविनो विकर्मस्थाः। बिडालो मार्जारः तस्य व्रतं स्वभावो यस्यासौ बैडालव्रतिकः। तस्य लक्षणमाह मनुः – 'धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः। बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधकः।।' (मस्मृ. ४।१९५) इति। शठः सर्वत्र वक्रः। एतैः संसर्गनिषेधादेव स्वयमेवंभूतो न भवेदिति गम्यते। ‡ मिता.

(३) यतोऽर्थ ईहितव्यस्तमाह – राजेति। क्षुधाऽवसीदन्राजादीनामन्यतमाद्धनम् इच्छेत् प्रतिग्रहादिना लिप्सेत। राजग्रहणं विशुद्धस्य दातुरुपलक्षणार्थम्। लोकवशीकरणार्थं धर्मकारी दम्भी। हेत्वाश्रयणेन श्रुतिस्मृत्युक्तधर्मदूषयिता युक्तिबलेन सर्वत्र संशयकारी च हैतुकः। वेदबाह्यागमविहितकारी पाषण्डी, उक्ताश्रमव्यतिरिक्तश्च। बकस्य वृत्तिरिव वृत्तिर्यस्य स बकवृत्तिः। एतान्वर्जयेत्। एभिर्न संव्यवहरेयुरित्यर्थः। अप.

(४) हैतुकाः हेतुवादरताः त्रयीबाह्याः। गृक. २३१

(५) क्षुधा सीदन् पीड्यमानः राजप्रतिग्रहादिष्वधिक्रियत इत्यर्थः। # स्मृच. २।४५६

(६) राजा न्यायपरः। शिष्यः यथोक्तलक्षणः। याज्यः याजनार्हस्त्रैवर्णिकः। मपा. २१७

(७) पाषण्डिनः बौद्धादिमतानुसारिणः। * मर. ५२

(८) आपदि गृह्णीयादित्यर्थः। दम्भी द्रव्यार्थं धर्मलिङ्गधारी, न श्रद्धया। हैतुकः सर्वत्र हेतुभिः संशयोत्पादकः। पाखण्डी अस्थिमालादिविरुद्धवेषधारी। बकवृत्तिः अधोदृष्टिः। संम. ४४

(९) युक्तिबलेन सर्वत्र संशयकारी हैतुकः। राजाऽत्र न्यायपरः, न तु राजमात्रम्, 'यो राज्ञः प्रतिगृह्णाति

---

$ निप्रव्याख्यानं 'राजतो धनमन्विच्छेत्' (४।३३) इति मनुवचने (व.का. पृ. ११७१) द्रष्टव्यम्।

† गृर. विश्वगतं मितागतं च।

(१) **यास्मृ.** १।१३०; **विश्व.** १।१२९ दम्भि (डम्भि) पाख (पाष) वर्ज (नार्च); **अप.** पाख (पाष); **गृक.** २३१ अपवत्; **स्मृच.** २।४५६ पू.; **मपा.** २१७ याज्ये (शिष्ये) हैतुकपाख (हेतुकपाष); **गृर.** ४५५ अपवत्, अशुद्धः पाठः; **आपा.** ११२ पू.; **मर.** ५१ हेतुकपाख (हेतुकपाष) उत्त.; **निप्र.** २।२५६, २७० पू.: २७७ याज्ये (शिष्ये) पू.; **चमव्या.** ६६; **मुक्ता.** ५५ तृतीयचरणे (डम्भहेतुकपाषण्डी); **संम.** ४४; **विपा.** ३।२।२४८ अपवत्; **आन.** ६२४ पू.; **बाल.** १।१२० पृ. ३८३ निर्देशमात्रम्; **सस्मृ.** २०७ अशुद्धः पाठः.

‡ दीक., चमव्या. मितागतम्।

# आपा. स्मृचवत्।

* शेषं मितागतम्।

लुब्धस्योच्छास्त्रवर्तिनः। स पर्यायेण यातीमान्नरकानेकविंशतिम्।।' (मस्मृ. ४।८७) इत्यन्यायपरराजप्रतिग्रहे निन्दाश्रवणात्। विपा. ३।२।२४८

(१०) दम्भी लोकवञ्चनार्थं कर्मानुष्ठानशीलः। हैतुकः कुयुक्तिबलेन सर्वत्र वैदिकादौ कर्मणि परेषां संशयोत्पादनशीलः। पाखण्डी त्रैविद्यवृद्धापरिगृहीतव्रतकारी। * वीमि.

**[1]न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः।।**

(१) 'ईहेत न यतस्ततः' इति पूर्वनिषिद्धस्यापि राज्ञः पुनरुपन्यासस्तत्प्रपञ्चार्थः अतिशयनिन्दाप्रदर्शनोपोद्घातार्थश्च। विश्व.

(२) न च कृपणस्य शास्त्रातिक्रमकारिणो राज्ञः सकाशात्प्रतिगृह्णीयात्। मिता.

(३) लुब्धस्य सति धने व्ययमकुर्वाणस्य उच्छास्त्रवर्तिनः अतिक्रान्तशास्त्रस्य च राज्ञो धनं न प्रतिगृह्णीयात्। « अप.

(४) अनापदि राजप्रतिग्रहं निन्दति याज्ञवल्क्यः – 'न.... वर्तिनः' इति। १।१८६

याज्ञवल्क्यवचनेऽपि राजप्रतिग्रहनिन्दायाम् 'लुब्धस्योच्छास्त्रवर्तिनः' इति विशेषणात् अदुष्टराजप्रतिग्रहो न निन्दित इति गम्यते। × पमा. १।१८८

(५) क्षत्रियप्रतिग्रहं न कुर्यात्। 'राजान्तेवासि' इत्यस्य निषेधः। + दीक.

**[2]प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः।**
**दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमम्।।**

(१) इदानीं तमेव निन्दातिशयमाह – प्रतिग्रह इति। सूना प्राणिवधार्थं काष्ठम्, तद्वान् सूनी। चक्रं वागुरा। ध्वजः शौण्डिकचिह्नम्, 'ध्वजं च कुर्याच्चिह्नार्थं समया ग्रामं च संवसेत्। न चैवान्तावसायिभ्यः सुरां दद्यादनापदि।।' इति स्मृत्यन्तरात्। वेशः रूपं मैथुनं वा, तेन जीवन्ती वेश्या। तथा च मनुः – 'वेशेनैव च जीवताम्' (मस्मृ. ४।८४) इति। तात्पर्यं तूक्तमेव। विश्व.

(२) प्रतिग्रहे साध्ये सून्यादयः पञ्च पूर्वस्मात्पूर्वस्मात्परः परो दशगुणं दुष्टः। सूना प्राणिहिंसा, साऽस्यास्तीति सूनी प्राणिहिंसापरः। चक्री तैलिकः। ध्वजी सुराविक्रयी। वेश्या पण्यस्त्री। नराधिपः अनन्तरोक्तः। मिता.

[*'एते यथाक्रमं दशगुणं दुष्टाः' इति मूले भिन्नं वाक्यम्। विप्रतः सून्यपि दुष्ट इति तात्पर्यम्। तस्यैव विवरणं 'पूर्वात्पूर्वात्' इति स्पष्टार्थं भिन्नं वाक्यम्। तदर्थमाह – पूर्वस्मादिति। शेषपूरणमन्यत्।

बाल. पृ. ४००-४०१]

(३) प्रतिग्रहविषये सूनिप्रभृतीनां यो य उत्तरः स पूर्वस्माद्दशगुणदोषो भवति। अतस्तत्प्रतिग्रहो दशगुणदोषो भवति। अतस्तत्प्रतिग्रहं वर्जयेत्। सूना प्राणिवधस्थानम्,

---

* शेषं मितागतम्।

« मर. अपगतम्। वीमि. अपवत्।

× मुक्ता., इन्दु. पमागतम्।

\+ शेषं मितागतम्।

(१) **यास्मृ.** १।१४०; **विश्व.** १।१३९; **स्मृच.** २।४६१; **पमा.** १।१८६:१।१८८ द्वितीयचरणमात्रम; **आपा.** ११३; **मर.** १७१; **निप्र.** २।२७५; **चमव्याआ.** ३७; **चमव्या.** ६७; **मुक्ता.** ५६; **संम.** ४५ (=); **आम.** ५०; **सस्मृ.** २११; **इन्दु.** १९८.

(२) **यास्मृ.** १।१४१; **विश्व.** १।१४० थाक्रमम् (थोत्तरम्); **स्मृच.** २।४६१; **पमा.** १।१८६-१८७ विश्ववत्; **मपा.** २१९ वेश्या (वैश्य) गुणं (गुणाः) शेषं विश्ववत्; **आपा.** ११३; **मर.** १७१ निचक्रिध्वजिवेश्यान (नी चक्री ध्वजी वेश्या न) पूर्वात्पू (प्रोक्तात्पू); **निप्र.** २।२७५ निचक्रध्वजिवेश्यान (नी चक्री ध्वजी वेश्या न); **चमव्या.** ६७; **मुक्ता.** ५५; **संम.** ४५; **विपा.** ३।२।२४९; **सस्मृ.** २११ अशुद्धिबहुलो ग्रन्थः.

*अयमर्थः – मूले 'सून्यादयः एते यथाक्रमं दशगुणं दुष्टाः' इत्येतद्वाक्यं 'पूर्वात्पूर्वात्' इति वाक्यतो भिन्नम्, 'पूर्वात्पूर्वात्' इति चापरं वाक्यम्। तत्र प्रथमवाक्ये दशगुणदुष्टत्वरूपविधेयनिरूपितमुद्देश्यत्वं सूनिन्यपि प्रतीयते इति सूनिनोऽपि दशगुणदुष्टत्वसिद्धिः। तत्र दशगुणत्वस्यावधिसापेक्षत्वात् प्रत्यासत्त्या प्रतिग्रहीता विप्रोऽवधिर्गृह्यते। एकवाक्यत्वे तु 'पूर्वात्पूर्वात्' इत्यस्य विधेयकोटिप्रविष्टत्वेन श्लोकोक्तेष्वेव पूर्वपूर्वापेक्षया परपरस्य दशगुणदुष्टत्वं प्रतीयेत, सून्यपेक्षया पूर्वस्यानुक्तत्वेन सूनिनः परत्वाभावात् तस्य दुष्टत्वं न प्रतीयेत। 'पूर्वात् पूर्वात्' इति साकाङ्क्षं द्वितीयवाक्यं प्रथमवाक्यगताशेषपदैः शेषपूरणेन निराकाङ्क्षं सत् स्वार्थबोधकम्। तदिदं द्वितीयवाक्यं यद्यपि प्रथमवाक्येनैव दशगुणत्वान्यथानुपपत्त्यैव पूर्वपूर्वस्यावधित्वसिद्धेर्गतार्थम्, तथापि प्रथमवाक्यार्थस्यैव स्पष्टीकरणार्थं तदिति बोध्यम्। मिताक्षरायां तु पूरितशेषं द्वितीयवाक्यमेव व्याख्यातमिति।

तद्वान् सूनी प्राणिघातकः। चक्री तैलिकः। ध्वजी सुराविक्रयी। परहृदयं विवशयतीति वेश्या। यद्वा वेशेन जीवतीति वेश्या। वेशः शृङ्गारः। नराधिपः राजा। स च पूर्वोक्तविशेषण एव दुष्टः, तदीयस्य प्रतिग्रहस्य निषिद्धत्वात्। ‡ अप.

(४) सूनी मांसविक्रयी। व्याध इति यावत्। + दीक.

(५) सूना प्राणिवधस्थानं यस्य जीविकात्वेन धर्मः स सूनी। # निप्र. २।२७५

(६) नराधिपः समनन्तरोक्तः लुब्धः शास्त्रातिक्रमकारी च। + चमव्या. ७१

(७) एते प्रतिग्रहेऽपादानतामापन्नाः पूर्वात्पूर्वाद्दशगुणं यथोत्तरं दुष्टाः प्रतिग्रहीतुः पापसंपादकाः। # वीमि.

ब्राह्मणप्रशंसा

**[1]तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये।**
**तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च।।**

(१) एवं च वेदगुप्तिर्धर्मसंरक्षणं च भवति, यदि सर्वथा स वेदार्थमधिगच्छेत्। सृष्ट्यादिवचनं च कारणानुसारात् कार्यस्य सामर्थ्यातिरेकप्राप्त्यर्थम्। विश्व.

(२) ब्रह्मा हिरण्यगर्भः कल्पादौ तपस्तप्त्वा ध्यानं कृत्वा 'कान्सृजामि?' इति, पूर्वं ब्राह्मणान्सृष्टवान्। किमर्थम्? वेदगुप्तये वेदरक्षणार्थम्, पितॄणां देवतानां च तृप्त्यर्थम्, अनुष्ठानोपदेशद्वारेण धर्मसंरक्षणार्थं च। अतस्तेभ्यो दत्तमक्षय्यफलं भवतीत्यभिप्रायः। मिता.

(३) ब्रह्मा तपस्तप्त्वा वेदसंरक्षणाय देवानां पितॄणां च तृप्त्यर्थं धर्मपालनाय च ब्राह्मणान्ससर्ज। अतस्ते विशिष्टकारणोद्भवत्वादनन्यसाध्यवेदगुप्त्यादिप्रयोजनवत्त्वाच्च प्रशस्ताः। तपः सर्वेन्द्रियजयः। अप.

(४) अध्यापनद्वारेण गुप्तये रक्षणाय। एतेनाध्यापने श्राद्धदानपात्रतायां धर्मोपदेशे च विप्रस्यैवाधिकारो दर्शितः। दीक.

(५) ब्रह्मा तपः तप्त्वा विधाय तपसैव प्रधानसहकारिणा तदव्यवधानेनैव ब्राह्मणानसृजत्। किमर्थम्? वेदस्य मन्त्रब्राह्मणात्मकस्य गुप्तये अध्यापनादिना संप्रदायरक्षणार्थम्, पितॄणां श्राद्धादौ पात्रादिभावेन देवानां यज्ञादौ ऋत्विगादिभावेन च तृप्त्यर्थं प्रीतिनिष्पत्त्यर्थम्, धर्मस्य कर्तृत्वेन उपदेष्टृत्वेन(च)रक्षणार्थम्। चकारेणादैवपित्र्यकर्मण्युपनयनादावाचार्यादिभावार्थं च। वीमि.

**[1]सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः।**
**तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः।।**

(१) सर्वस्यैव जगतः स्वामिनो विप्राः। ते च धर्मोपदेशद्वारेणैव स्वामिनः, नान्यथा। तथा चाऽऽह मनुः – 'सर्वेषां ब्राह्मणो विद्याद्वृत्त्युपायान् यथाविधि। प्रब्रूयादितरेभ्यश्च स्वयं चैव तथा भवेत्।।'(मस्मृ. १०।२) इति। किं जातेरेवैतन्माहात्म्यम्? नेत्युच्यते – श्रुताध्ययनशीलिन एवेति, अन्येषामनुपदेष्टृत्वात्। तेभ्यः क्रियापरा इत्यादि मान्यश्लोके व्याख्यातमेव। विश्व.

(२) सर्वस्य क्षत्रियादेः विप्राः प्रभवः श्रेष्ठाः जात्या कर्मणा च। ब्राह्मणेष्वपि श्रुताध्ययनशीलिनः श्रुताध्ययनसंपन्ना उत्कृष्टाः। तेभ्योऽपि क्रियापरा विहितानुष्ठानशीलाः। तेभ्योऽप्यध्यात्मवित्तमाः वक्ष्यमाणमार्गेण शमदमादियोगेनाऽऽत्मतत्त्वज्ञाननिरताः श्रेष्ठा इत्यनुषज्यते। मिता.

(३) सर्वस्य पृथ्वीगतस्य वस्तुनः श्रुताध्ययनशीलिनो ब्राह्मणाः प्रभवः स्वामिनः। तथा च मनुः – 'ब्राह्मणो जायमानो वै पृथिव्यामधिजायते। ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये।। सर्वं स्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम्। श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति।।' (मस्मृ. १।९९-१००) इति। श्रुतं गुरुतः साङ्गोपाङ्गश्रुतिस्मृतिवाक्यार्थावधारणम्। अध्ययनं श्रुत्यादिपाठः। श्रुताध्ययने शीलयन्ति सम्यगाचरन्तीत्येवंस्वभावाः श्रुताध्ययनशीलिनः। शालिनः इति पाठे ताभ्यां श्लाघ्यमानाः। तेभ्यः श्रुताध्ययनमात्रोपक्षीणव्यापारेभ्यः क्रियापराः धर्मा-

---

‡ स्मृच., आपा., मर., संम., विपा., अपगतम्।

+ शेषं मितागतम्।

# शेषम् अपगतम्।

(१) **यास्मृ.** १।१९८; **विश्व.** १।१९६; **मुक्ता.** ६९.

(१) **यास्मृ.** १।१९९; **विश्व.** १।१९७ चतुर्थचरणे (तेभ्यो ह्यध्यात्मचिन्तकाः); **अप.** शीलि (शालि) इत्यपि पाठः; **दीक.** शीलि (शालि); **वीमि.** दीकवत्.

नुष्ठानप्रधानाः। क्रियाशब्दोऽत्राधर्मवर्जनार्थोऽपि। अर्थादेषां श्रुताध्ययनसिद्धिः, न हि तद्रहिताः क्रियापरा भवन्ति। तेभ्यः केवलधर्मिभ्यो ब्रह्मविदः प्रशस्ततमाः। अप.

(४) यद्यपि क्षत्रियादीनां पात्रतामाह यमः – 'शूद्रे समगुणं दानं वैश्ये त्रिगुणमुच्यते। क्षत्रिये षड्गुणं प्राहुर्विप्रे दशगुणं पुनः।।', तथापि प्रतिग्रहविधिना नैतदिति श्रेष्ठत्वादेव ब्राह्मणस्य पात्रतामाह – सर्वस्येत्यादि। श्रुतम् अर्थावबोधः। धर्मस्य(? सर्वस्य) लोकस्य श्रुताध्ययनशालिनः वा (? प्रभवः) दानादिधर्मसंपादकत्वेन स्वामिनः। तेभ्योऽग्निहोत्रादिक्रियानुष्ठातारः श्रेष्ठाः। तेभ्यो ब्रह्मज्ञानिनः। तेन श्रुतादीनां पात्रताहेतुत्वम्। दीक.

(५) विप्राः सर्वस्य क्षत्रियादेः प्रभवः ईश्वराः, श्रेष्ठा इति यावत्। तेष्वपि श्रुतं वेदार्थानां गुरुद्वाराऽवधारणम्, अध्ययनं तत्प्रयोजको वेदपाठः तद्युक्ताः। श्रेष्ठा इत्यग्रतनं सर्वत्रान्वेति। तेभ्यः केवलं श्रुताध्यनशालिविप्रेभ्यः क्रियापरा विहितकर्मानुष्ठा(यिनः) विप्राः श्रेष्ठाः। तेभ्योऽपि केवलं श्रुताध्ययनशालिक्रियापरेभ्योऽपि अध्यात्मम् आत्मतत्त्वं तद्विदामुत्कृष्टाः 'तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च। युगपत्त्रितयाभ्यासाज्जीवन्मुक्तिः स्थिरा भवेत्।।' इत्युक्तमनोवशादिविशिष्टाः। वीमि.

प्रतिग्रहीतृयोग्यता, प्रतिग्रहनिवृत्तेः प्रशंसा,
वस्तुस्वरूपतो निमित्ततश्च प्रतिग्रह-
निवृत्तं प्रति प्रतिप्रसवः

**'विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः।**
**गृह्णन्प्रदातारमधो नयत्यात्मानमेव च।।**

(१) यस्मात् – गृह्णन्निति। तुशब्दोऽवधारणार्थः। स्पष्टमन्यत्। विश्व.

(२) विद्यातपोभ्यां हीनेन प्रतिग्रहः सुवर्णादिर्न ग्राह्यः। यस्मात् विद्यादिहीनः प्रतिगृह्णन् दातारमात्मानं च अधः नरकं नयति प्रापयतीति। मिता.

(३) विद्यातपोभ्यां हीनेन पात्रलक्षणरहितेन।

* अप.

(४) एवं च विद्यावतोऽधनस्यैव प्रतिग्रहाधिकारः, नान्यस्येति सिद्धम्। स्मृच. २।४६९

(५) विदुषस्तु न कोऽपि प्रतिग्रहो दोषावह इति वाजसनेयिब्राह्मणे गायत्रीविद्यायां श्रूयते – 'यदि ह वा अप्येवं विद्वान् द्विजः प्रतिगृह्णाति हैत(? न हैव त)द्गायत्र्या एकं पदं प्रतिसंधाये(? प्रति। स य इ)मांस्त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयाद्यो(? त्सो)ऽस्या एतत्प्रथमं पदमाप्नुयात्। अथ यावतीयं त्रयी विद्याऽथ(? द्या यः) तावत्प्रतिगृह्णीयाद्यो(? त्सो)ऽस्या एतद्द्वितीयं पदमाप्नुयात्। अथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयाद्यो (? त्सो)ऽस्या एतत्तृतीयं पदमाप्नुयात्। अथास्या एतदेव तुरीयं दर्शितं(? र्शतं) पदं परोरजो(? जा)य एष, तपति नैव केन जाप्यं(? चनाऽऽप्यम्।) कुत एतावत् प्र(ति)गृह्णीयात्' (बृउ. ५।१४।५-६) इति।

पमा. १।१९०-१९१

(६) प्रतिग्राहकः किंगुणविशिष्टोऽधिकारी? को वा न? इत्याकाङ्क्षायां निषेधमुखेनानधिकारिणम्, अर्थादधिकारिणं चाऽऽह याज्ञवल्क्यः – विद्येति।

मपा. २२०-२२१

(७) अधः नरकम्। दीक.

(८) एतेन विद्यातपोहीनेन प्रीतिदायादिरूपमेव प्रतिग्रहीतव्यम्, न समन्त्रकप्रतिग्रहरूपमिति।

निप्र. २।२९४

(९) न केवलमपात्रप्रतिग्र(? ग्रा)हणाच्छ्रेयोनुत्पत्तिमात्रम्, अपि तु दातुर्नरकोऽपि इति दर्शयन् प्रतिग्रहीतुरपि तादृशस्य दोषमाह – विद्येति। विद्यातपोभ्यामिति वृत्तस्याप्युपलक्षकम्। तुशब्देन प्रतिग्रहातिरिक्तस्य ग्रहणस्य निषेधो व्यवच्छिन्नः। प्रतिग्रहः प्रतिगृह्यमाणद्रव्यम्, कर्मव्युत्पत्तेः। अत्र हेतुमाह – गृह्णन् प्रतिगृह्णन् प्रदातारं प्रकर्षेण दातारम्, प्रतिग्राहयितारमिति यावत्, अधो नयति नरकं प्रापयति। एवकारोऽध इत्यत्रान्वितः। तेनेष्टं फलं व्यवच्छिनत्ति। चो हेतौ। वीमि.

---

(१) **यास्मृ.** १।२०२; **विश्व.** १।२००; **समु.** ३९ नेन न तु ग्रा (नेनानुग्रा); **अप.** न तु (नैव); **गृक.** २४७; **स्मृच.** २।४६८ न तु (नैव); **गृर.** ४६६ न तु (न च); **पमा.** १।१९०; **मपा.** २२१; **निप्र.** २।२९४; **मुक्ता.** ५८; **विपा.** ३।२।२४० स्मृतेः; **आन.** ६२९.

* शेषं मितागतम्।

**¹प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम्।**
**ये लोका दानशीलानां स तानाप्नोति पुष्कलान्।।**

(१) तस्मान्न 'दास्यामि' इति प्रतिगृह्णीयात्। तथा च लौकिकाः – 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति। अतश्च प्रतिग्रहनिवृत्तिरेव ज्यायसीत्यवसेयम्। विश्व.

(२) दातुः फलमुक्तम्। इदानीं दानव्यतिरेकेणापि दानफलावाप्तेर्हेतुमाह – यः पात्रभूतोऽपि प्राप्तं प्रतिग्रहं सुवर्णादिकं नाऽऽदत्ते न स्वीकरोति असौ यद्यत्प्राप्तं नोपादत्ते तत्तद्दानशीलानां ये लोकास्तान्समग्रानाप्नोति। + मिता.

(३) प्रतिग्रहसमर्थोऽपि विद्यातपोवृत्तैः प्रतिग्रहाधिकार्यपि। पुष्कलान् बहून्। दीक.

(४) अत्रायाचितप्रतिग्रहोपस्थितौ त्यागे यद्दानसंबन्ध-(? न्धि)प्रतिग्रहस्तद्दानफलं प्राप्नोति। यत्तु गृहागतस्य त्यागे दोषश्रवणं 'नाश्नन्ति पितरस्तस्य' इत्यादि तद्विहितविषयत्वासंभवात् दानफलकामिनश्च प्रतिग्रहत्यागस्य विहितत्वात् अन्यपुरुषं प्रति दोषः। निप्र. २।२९४

(५) अगर्हितप्रतिग्रहादप्यप्रतिग्रहः श्रेयानित्याह याज्ञवल्क्यः – प्रतिग्रहेति। मुक्ता. ५४

(६) विद्यावृत्ततपोभिः प्रतिग्रहे समर्थोऽपि अधिकृतोऽपि। एतेनासामर्थ्यनिबन्धनं प्रतिग्रहाभावं व्यवच्छिनत्ति। प्रतिग्रहमिति कर्मव्युत्पन्नम्। नाऽऽदत्ते स्वामिना दीयमानं न प्रतिगृह्णाति, यद्यद्द्रव्यदातृणां ये ये लोकाः तत्तद्द्रव्यप्रतिग्रहनिवृत्तः स तान् तान् लोकान् पुष्कलान् समग्रान् आप्नोति। वीमि.

**²कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।**
**मांसं शय्याऽऽसनं धानाः प्रत्याख्येयं न वारि च।।**

(१) निवृत्तेनापि च – कुशा इति। विश्व.

(२) इदानीं सर्वप्रतिग्रहनिवृत्तिप्रसङ्गेऽपवादमाह – कुशा इति। धानाः भ्र(? भृ)ष्टयवाः। क्षितिः मृत्तिका। शेषं प्रसिद्धम्। एतच्च कुशादिकं स्वयमुपानीतं न प्रत्याख्येयम्। चकारात् गृहादि, 'शय्यां गृहान्कुशान्गन्धानपः पुष्पं मणीन्दधि। धाना मत्स्यान्पयो मांसं शाकं चैव न निर्णुदेत्।।' (मस्मृ. ४।२५०) तथा – 'एधोदकं मूलफलमन्नमभ्युद्यतं च यत्। सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम्।।' (मस्मृ. ४।२४७) इति मनुस्मरणात्। † मिता.

(३) शीलंभा (? करम्भो) धानाः। आपा. ११४

(४) कुशादिकं दुष्कृतकर्मणो(ऽ पि) न त्याज्यम्। दीक.

**¹अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः।**
**अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः।।**

(१) एवं तावत् शाकादि अप्रणोद्यमिति स्थितम्। हिरण्याद्यपि – अयाचितेति। कुलान्यटतीति कुलटा दुश्चारिणी। तथाशब्दात् द्वेष्यश्च(? ष्याच्च)। अप्रतिग्राह्यप्रकारार्थो वा। तथाऽन्येऽपि षण्डसदृशा अनधिकृताः शूद्रादयः। यत्तु गौतमीयम् – 'तेन चोत्तरस्तदर्थोऽस्य निचयः' (गौध. १०।६१-६२) इति, तदाश्रितशूद्रविषयं द्रष्टव्यम्। दानायैवैषां स्थित्यतिरिक्तवित्तसंग्रहाधिकारोऽपि। 'तदर्थोऽस्य निचयः' इत्यनेनाप्येतदेवोक्तमित्यवसेयम्। विश्व.

---

+ अप. मितागतम्।

(१) **यास्मृ.** १।२१३; **विश्व.** १।२१०; **समु.** ४०; **अप.** स ताना (तान्स प्रा); **गृक.** २४९; **स्मृच.** २।४६९ अपवत्; **गृर.** ४६७; **पमा.** १।१८३; **आपा.** ११२; **मर.** १७६ स ताना (सत्यमा); **निप्र.** २।२९४; **मुक्ता.** ५५.

(२) **यास्मृ.** १।२१४; **विश्व.** १।२११ धाना (धान्यं); **गृक.** २४५ शाकं (काशं); **स्मृच.** २।४६३ य्याऽऽसनं (य्यासना); **गृर.** ४६५ गन्धाः (गन्धः); **पमा.** १।१९०; **आपा.** ११४ मत्स्या (मत्स्यो); **मर.** १७३; **निप्र.** १।३०० शाकं प (शाकाः प) धानाः (धान्यं); **चमव्याआ.** ३८ त्स्या गन्धाः पुष्पं (त्स्याः पुष्पं गन्धा); **आम.** ५० चमव्याआवत्; **विपा.** ३।२।२५०; **इन्दु.** १९९.

† अप., विपा., वीमि., मितागतम्।

(१) **यास्मृ.** १।२१५; **विश्व.** १।२१२ षण्ढ (षण्ड); **समु.** ४९ हृतंग्रा (हृतग्रा) कर्मणः कारिणः; **अप.** षण्ढ (शण्ठ); **गृक.** २४५ ताहृतं (तं हृतं); **स्मृच.** २।४६३-४६४ विश्ववत्; **ममु.** ४।२४७ उत्त.; **गृर.** ४६५ विश्ववत्; **पमा.** १।१९० विश्ववत्; **आपा.** ११४; **दीक.** आदर्शपुस्तके अस्मदुद्धृतपूर्वश्लोकीयव्याख्यानात्परम् 'शय्यादिकमभिधाय मनुः-' इत्युक्त्वाऽयं श्लोकः प्रतीकमात्रग्रहणरीतिमुल्लङ्घ्य संपूर्णः पठितः। तेन ज्ञायते प्रमादात् ग्रन्थो व्याकुलः संवृत्त इति; **मर.** १७३ विश्ववत्; **निप्र.** २।२५५, २।२६८ विश्ववत्; **मच.** ४।२४७ विश्ववत्, उत्त.; **मुक्ता.** ५७ कर्मणः (कारिणः); **आम.** ५०; **विपा.** ३।२।२५० विश्ववत्; **आन.** ६२७ कर्मणः (कारिणः) षण्ढ (षण्ड); **इन्दु.** १९९.

(२) किमिति न प्रत्याख्येयम्? इत्याह – अयाचितेति। यस्मादयाचिताहृतमेतत्कुशादि दुष्कृतकारिणोऽपि संबन्धि ग्राह्यम्, किमुत यथोक्तकारिणः? तस्मान्न प्रत्याख्येयम्, अन्यत्र कुलटाषण्ढपतितेभ्यः शत्रोश्च। कुलात्कुलमटतीति कुलटा स्वैरिण्यादिकाः। षण्ढः तृतीयप्रकृतिः।

¶ मिता.

(३) अयाचितम् अप्रार्थितम् आहृतम् आत्मानं प्रति दातुमानीतं कुलटादिवर्जितस्य दुष्कृतकारिणोऽपि ग्राह्यम्। कुलटा स्वैरिणी स्त्री। अप.

(४) कुलटादिवर्जं सर्वतः शूद्रादिभ्योऽपि प्रतिगृह्णीयात्। ममु. ४।२४७

(५) अयाचिताहृतमिति यथास्वं लिङ्गव्यत्ययेन वचनव्यत्ययेन च कुशादिना संबध्यते। मर. १७३

(६) अपि दुष्कृतकर्मणः, किमुत विशुद्धादित्यर्थः। २।२५५

एतेन शूद्रादपि अयाचिताहृतं ग्राह्यमुक्तम्। जातिमात्रद्विजादयाचितासंभवे चैतत्, 'न तु शूद्रात्' इति पर्युदासात्। निप्र. २।२६८

(७) कुलटा स्वैरिणी। षण्ढः क्लीबः। पतितो ब्रह्महादिः। द्विट् शत्रुः। तथाशब्देन चण्डालादिसमुच्चयः। एभ्योऽन्यत्र विना। एतेषां कुशादिकमपि न ग्राह्यमित्यर्थः। वीमि.

**'देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव वा।**
**सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च।।**

(१) एवं तावदयाचिताहृतग्रहणमुक्तम्। याचित्वाऽपि तु – सुरेति। सर्वशब्दः पूर्वश्लोकानुसारादेवायमकुलटादिषु द्रष्टव्यः। यत्पुनर्वासिष्ठम् – 'गुर्वर्थे दारमुज्जिहीर्षन्नर्चिष्यन्देवतातिथीन्। सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः।।' (वाध. १४।१३) इति, तत्कुलटादिषु प्रतिप्रसवार्थम्। तथा च तत्रैव – 'उदकाद्येषामपि प्रतिगृह्णीयात्' (वाध. १४।१२) इति। अनेन सर्वनाम्नैत एव परामृश्यन्ते। प्राणसंरक्षणार्थं चैतत्, न पुनर्भोगार्थमित्यादिविवेकः प्रपञ्चनीयः। विश्व.

(२) प्रतिग्रहनिवृत्तेरपवादान्तरमाह – देवेति। देवतातिथ्यर्चनादेरावश्यकत्वात्तदर्थमनात्मकारणात् (अनापदि) पतिताद्यत्यन्तकुत्सितवर्जं सर्वतः प्रतिगृह्णीयात्। गुरवो मातापित्रादयः। भृत्याः भरणीयाः भार्यापुत्रादयः।

मिता.

[सर्वत इत्यस्य संकोचमाह-अनापदीति। एतेनाऽऽपदि तेभ्योऽपि ग्राह्यम्, एवं प्रागपीति सूचितम्।

बाल. पृ. ४६९]

(३) देवार्चनाद्यर्थं सर्वतः क्षत्रियादितोऽपि गृह्णीयात्। सकलावश्यककर्मोपलक्षणं चैतत्। आत्मवृत्तिः शरीरधारणमात्रम्, न तु तृप्तिः। + अप.

(४) अवश्यकर्तव्यार्थं क्षेत्रादिगतमन्नमग्राह्यादपि ग्राह्यम्। दीक.

(५) देवेति। देवस्यातिथेर्वाऽर्चनार्थम्, गुरवः मातापित्रादयः भृत्याः भार्याद्याः, तदर्थं च, आत्मनो वृत्तिः वर्तनोपायः भोजनाच्छादनादिः, तदर्थं च सर्वतः दुष्कृतकर्मादेरपि प्रतिगृह्णीयादित्यर्थः। प्रथमचकारादवश्यकर्तव्यमृणापाकरणाद्यर्थमिति, द्वितीयचकारादात्मरोगनिवृत्त्याद्यर्थमिति समुच्चीयते। प्रथम एवकारो विशेषविहितातिरिक्ते सर्वतः प्रतिग्रहव्यवच्छेदार्थः। द्वितीयस्तु प्रतिगृह्णीयादित्यत्रान्वितः, तेनैतेषु निमित्तेषु पापान्तरासंभवे दुष्कृतकर्मणोऽपि प्रतिग्रह आवश्यक इत्येतत्प्रदर्शनार्थः। 'अ (न्य) त्र कुलटा' इत्यादिकमत्राप्यन्वेति। वीमि.

### कुसीदे वर्णभेदेन ऋणिकोपाधिभेदेन च वृद्धिपरिमाणम्

**'अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके।**
**वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा।।**

(१) एवं तावत् सामान्येन न्यायस्वरूपमभिधायेदानीमृणादानादिव्यवहारस्थानक्रमेण विशेषतः प्रस्तौति। तत्राऽऽद्यता मन्वादिभिर्ऋणादानस्योक्ता। अतस्तदेव तावदुच्यते

---

¶ स्मृच., आपा. मितागतम्। इन्दु. मितानुवादः।

(१) **यास्मृ.** १।२१६; **विश्व.** १।२१३ देवा (सुरा); **गृक.** २३९ र्थमेव वा (दिवृत्तये); **मुक्ता.** ५६ मेव वा (मेव च); **वीमि.** मुक्तावत्.

+ गृक. अपगतम्।

(१) **यास्मृ.** २।३७; **विश्व.** २।३९; **गृक.** २२०; **गृर.** ४४८; **मपा.** २२९; **मर.** १९४; **निप्र.** २।३२० द्वित्रिच (द्वित्रिश्च); **मुक्ता.** ६४ निप्रवत्; **विपा.** ३।२।२५१; **आन.** ६३६ माच्छतं द्वि (माच्च तद्द्वि) अग्रिमग्रन्थोऽशुद्धः; **इन्दु.** १९८.

– अशीतिभाग इति। यद्यप्यविशेषेणाशीतिभागोऽभिहितः, तथापि ब्राह्मणस्यैवायम्। अन्येषां तु पादवृद्ध्या वृद्धि-कल्पनम्। तथा च बृहस्पतिः – 'पादोपचयात् क्रमेणेतरेषाम्' इति। अन्यथा तु बन्धकरहिते द्विकत्रिकत्वं(? त्वादि) वृद्धेरित्यभिप्रायः। यच्चैतद्वृद्धिपरिमाणमुक्तम्, अत ऊर्ध्वं न गृह्णीयात्। न त्वर्वाग्ग्रहणे विरोधः। विश्व.

(२) साधारणासाधारणरूपां व्यवहारमातृकामभिधायाधुनाऽष्टादशानां व्यवहारपदानामाद्यमृणादानपदं दर्शयति – 'अशीतिभागो वृद्धिः स्यात्' इत्यादिना 'मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने' (यास्मृ. २।६४) इत्येवमन्तेन। तच्च ऋणादानं सप्तविधम् – ईदृशमृणं §देयम्, अनेनाधिकारिणा देयम्, अस्मिन् समये देयम्, अनेन प्रकारेण देयमित्यधमर्णे पञ्चविधम्; उत्तमर्णे दानविधिः, आदानविधिश्चेति द्विविधमिति। एतच्च नारदेन स्पष्टीकृतम् – 'ऋणं देयमदेयं च येन यत्र यथा च यत्। दानग्रहणधर्माश्च ऋणादानमिति स्मृतम्।।' (नासं. २।१) इति। तत्र प्रथममुत्तमर्णस्य दानविधिमाह, तत्पूर्वकत्वादितरेषाम् – अशीतिभाग इति। मासि मासि प्रतिमासम्। बन्धकं विश्वासार्थं यदाधीयते, आधिरिति यावत्। बन्धकेन सह वर्तत इति सबन्धकः प्रयोगः, तस्मिन्सबन्धके प्रयोगे प्रयुक्तस्य द्रव्यस्य अशीतितमो भागो वृद्धिर्धर्म्या भवति। अन्यथा बन्धकरहिते प्रयोगे वर्णानां ब्राह्मणादीनां क्रमेण द्वित्रिचतुःपञ्चकं शतं धर्म्यं भवति। ब्राह्मणेऽधमर्णे द्विकं शतम्, क्षत्रिये त्रिकम्, वैश्ये चतुष्कम्, शूद्रे पञ्चकम्। मासि मासीत्येव। द्वौ वा त्रयो वा चत्वारो वा पञ्च वा द्वित्रिचतुःपञ्चाः अस्मिन् शते वृद्धिर्दीयते इति द्वित्रिचतुःपञ्चकं शतम्। 'संख्याया अतिशदन्तायाः कन्' (पासू. ५।१।२२) इत्यनुवृत्तौ 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते' (पासू. ५।१।४७) इति कन्। इयं च वृद्धिर्मासि मासि गृह्यत इति कालिका। इयमेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा कायिका भवति। तथा च नारदेन – 'कायिका कालिका चैव कारिता च तथा परा। चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा।।' इत्युक्त्वोक्तम् – 'कायाविरोधिनी शश्वत्पणवादादि कायिका।। प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता।। वृद्धिः सा कारिता नामाधमर्णेन स्वयं कृता। वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता।।' (नासं. २। ८७-८९) इति। * मिता.

[कायेति। तदविरोधिनी तदनुकूला यथा तस्य प्रतिदिनं वृद्धिः तथा दीयमानेत्यर्थः। यद्वा । यया खेदेन शरीरनाशो न भवति तादृशी स्वल्पेत्यर्थः। अधिकदाने खेदेन देहस्यारक्षणेन नाशसंभवात्। शश्वत्। मुहुर्मुहुः प्रतिदिनमिति यावत्। पणेति। पणस्य पादश्चतुर्थांश इत्यर्थः। तथा च पणपादादिरूपा तदविरोधिनी प्रतिदिनं स्रवन्ती कायिकेत्यर्थः। स्रवन्ती आगच्छन्ती। बाल. पृ. ५४]

(३) धर्म्यां वृद्धिमाह – अशीत्यादि। बन्धकं गृहीत्वा (ऋणेन ?) पणशते प्रयुक्ते प्रतिमासमशीतिभागः सपादः पणः एकः वृद्धिर्भवति। अन्यथा बन्धकरहिते प्रयुक्ते पणस्य देयं(? द्वयं) त्रयं चतुष्प(? ष्कं प)ञ्चकं ब्राह्मणादिक्रमेण वृद्धिः स्यात्। दीक.

(४) पञ्च(? बन्ध)काभावे ब्राह्मणस्य द्व्यधिकं शतम्। एवं क्षत्रियादीनां ह्यधिकानि शतानि। मर. १९५

(५) एवं च सबन्धकेऽपि अशीतितमभागरूपवृद्धिस्थाने माषद्वयोनसुवर्णद्वयादि सुवर्णशतादौ क्षत्रियादिना वृद्धिर्देयेत्यूहनीयम्, न्यायसाम्यात्। † वीमि.

**'कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्।**
**दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु।।**

(१) चातुर्वर्ण्यातिरेकेण तु – कान्तारगास्तु इति। कान्तारगाः अरण्यवासिनः तद्गामिनो वा। सामुद्राः समुद्रव्यवहारिणः। ते प्रतिमासं दशकं विंशकं च शतं दद्युः। यद्वा कान्तारं वर्णापशदत्वं ये गच्छन्ति ते कान्तारगाः, वर्णापशदा इत्यर्थः। सह मुद्रया नियमेन वर्तत इति समुद्रः वर्णाश्रमविषयः। तमतिलङ्घयन्ति ये ते, विपरीतलक्षणया वा सामुद्राः, विकर्मस्था इत्यर्थः। दद्युर्वा स्वपरिभाषितां

§ गृहीतमृणमुत्तमर्णाय प्रत्यर्पणीयमित्यर्थः। एवमुत्तरत्रापि।

* अप., गृक., गृर., मपा., निप्र., मुक्ता., विपा., आन. मितागतम्।

† शेषं मितागतम्।

(१) **यास्मृ.** २।३८; **विश्व.** २।४१; **मेधा.** ८।१५३ (=); **मर.** १९५ पू.; **निप्र.** २।३२० पूर्वार्धं (कान्तारगातुर्दशकं सामुद्राद्विंशकं स्मृतम्।) पू.; **विपा.** ३।२।२५१.

वृद्धिं सर्वे ब्राह्मणादयोऽपि सर्वासु अपशदजातिष्वित्यर्थः। आपत्कल्पश्चायं ब्राह्मणादीनामित्येतत् वाशब्देन द्योतयति। विश्व.

(२) कान्तारगादीनामेव स्वकृता सर्वजातिविषया साधारणी वृद्धिः, न त्वन्येषाम्। मेधा. ८।१५३ पृ. १४६

(३) ग्रहीतृविशेषेण प्रकारान्तरमाह – कान्तारगास्तु इति। ये वृद्ध्या धनं गृहित्वाऽधिकलाभार्थमतिगहनं प्राणधनविनाशशङ्कास्थानं प्रविशन्ति ते दशकं शतं दद्युः। ये च समुद्रगास्ते विंशकं शतम्। मासि मासीत्येव। एतदुक्तं भवति – कान्तारगेभ्यो दशकं शतं सामुद्रेभ्यश्च विंशकं शतम्। उत्तमर्ण आदद्यात्, मूलविनाशस्यापि शङ्कितत्वादिति। इदानीं कारितां वृद्धिमाह – दद्युर्वा इति। सर्वे वा ब्राह्मणादयोऽधमर्णाः अबन्धके सबन्धके वा स्वकृतां स्वाभ्युपगतां वृद्धिं सर्वासु जातिषु दद्युः। क्वचिदकृताऽपि वृद्धिर्भवति। तथाऽऽह नारदः – 'न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित्। अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते।।' (नासं. २।९३) इति। यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं प्रति कात्यायनेनोक्तम् – 'यो याचितकमादाय तमदत्त्वा दिशं व्रजेत्। ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात्।।' इति। यश्च याचितकमादाय याचितोऽप्यदत्त्वा देशान्तरं व्रजति तं प्रति तेनैवोक्तम् - 'कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत्। ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात्।।' इति। यः पुनः स्वदेशे स्थित एव याचितो याचितकं न ददाति तं याचनकालादारभ्याऽऽकारितां वृद्धिं दापयेद्राजा। यथाऽऽह – 'स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित्। तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत्।।' इति। अनाकारितवृद्धेरपवादो नारदेनोक्तः – 'पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः। वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः।।' इति। अविवक्षिता अनाकारिता इति। # मिता.

[एतदिति। आदावेवेति भावः। इदं चाऽऽनन्तर्यादबन्धकप्रयोगविषयम्। अत एवाऽऽह – मूलेति।.... 'न वृद्धिः' इति। वृद्धिं कुर्वन्तमधमर्णमुत्तमर्णः प्रयुङ्क्ते इति णिचि निष्ठायामापि आङा कारिताशब्दस्य समासे ततो नञा तस्य समास इति कश्चित्। प्रकृते तु स्वारस्यात् ‡प्रार्थयन्तीतिवत् णिच् इति तु तत्त्वम्। अत एव स्वकृतामित्युक्तं मूले। एवं रीतिः कारितेत्यत्रापि बोध्या। अत एव स्वयंकृतेत्येव तत्रोक्तम्। बाल. पृ. ५५]

(४) अथवोत्तमर्णसंमतां स्वकृतां सर्वे वर्णा ब्राह्मणादयो वर्णजातिषूत्तमर्णेषु वृद्धिं दद्युः। एतच्च बन्धकाभावेऽधमर्णानां कान्तारसमुद्रगमनौत्सुक्ये च वेदितव्यम्। $ अप.

(५) दुर्गवर्त्मना समुद्रेण च ये वाणिज्यार्थं गच्छन्ति ते §बन्धकरहिते पणशते दशपणान् विंशतिपणान् यथाक्रमं दद्युः। समूलनाशसंभवादधिकवृद्धिदानम्। वर्णक्रमाच्छतं द्वित्रिरित्याद्युक्तस्य पक्षस्य पक्षान्तरमाह – दद्युर्वेति। # दीक.

सलक्षणं वृद्धेश्चातुर्विध्यम्, पश्वादिरूपवृद्धिपरिमाणम्, निमित्तविशेषे वृद्धिनिषेधः

* **वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु कालिका। इच्छाकृता कारिता स्यात् कायिका कायकर्मणा।।**

निगदव्याख्यातम्। क्वचित्पुस्तके श्लोकोऽयं न पठ्यते। दीक. २।३८

# शेषं विश्वगतम्। वीमि. मितागतम्।

‡ यथा चुरादिपठितादर्थधातोः स्वार्थे णिच्, तथा तनादिपठितात् कृधातोः चुरादिपाठाभावेऽपि कृधातोः स्वार्थे णिचि 'बहुलमेतन्निदर्शनम्' इति धातुपाठविषयकं गणसूत्रं प्राचीनमतमाश्रित्य प्रमाणम्। एतच्च गणसूत्रं कैश्चित् प्राचीनैः 'नवगणीपाठो बहुलम्' इति व्याख्यातम्। नवगणीपठितेभ्योऽपि क्वचित् स्वार्थे णिच्, यथा 'रामो राज्यमकारयत्' (वारां. ६।१२८।१०४) इत्यत्रेति तदर्थः।

$ शेषं मितागतम्।

§ इदं स्वशब्दोक्तत्वादत्र गृहीतम्। मिताक्षरायामप्येतदर्थसिद्धमिति बालंभट्टी स्पष्टम्। उत्तरार्धावतरणिकार्थोऽपि मिताक्षरायामर्थसिद्धः।

# निप्र. दीकगतम्।

* अस्य मेधाव्याख्यानं मनोः 'नातिसंवत्सरीं' (मस्मृ. ८।१५३) इति श्लोके द्रष्टव्यम्।

(१) **दीक.** २।३८ इत्यस्यानन्तरमधिकोऽयं श्लोकः; **मेधा.** ८।१५३ द्वितीयचरणमात्रम् (=); **गृक.** २२१ कालिका (मासिका) कर्मणा (कर्मणि); **मपा.** २२९ इच्छा (ईहा) कर्मणा (कर्मणि); **आत.** ३५४ कालिका (कारिका) कारिता स्यात् (कामयिता); **भाच.** ८।१५३ वृद्धेर्वृ (वृद्धिवृ) कर्मणा (कर्मणि) योगीश्वरः.

[1]संततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा।
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा।।

(१) अनयैव वृद्ध्या संततिस्त्विति। पशुस्त्रीणां वृद्धिः फलभोग्यत्वेनार्पितानां या प्रसूतिः सा धनिकस्य स्यात्। तुशब्दात् संततिरेव, नापरा वृद्धिरित्यर्थः। पशुस्त्रीणामिति पुंस्पशुसंतानव्यवच्छेदार्थम्। अथवा पशूनां स्त्रीणां च दासीनामिति योज्यम्। इक्ष्वादिरसस्याष्टगुणा परा वृद्धिः। वस्त्राणां चतुर्गुणा, धान्यानां त्रिगुणा, हिरण्यादीनां द्विगुणा। तच्चाशीतिभागाद्यनुसारेण यावता कालेन हिरण्यं द्विगुणं तावतैव धान्यादेः स्वपरिमाणयोगः। विश्व.

(२) अधुना द्रव्यविशेषे वृद्धिविशेषमाह – संततिस्तु इति। पशुस्त्रीणां संततिरेव वृद्धिः। पशूनां स्त्रीणां पोषणासमर्थस्य तत्पुष्टिसंततिकामस्य प्रयोगः संभवति। ग्रहणं च क्षीरपरिचर्यार्थिनः। अधुना प्रयुक्तस्य द्रव्यस्य वृद्धिग्रहणमन्तरेणापि चिरकालावस्थितस्य कस्य द्रव्यस्य कियती परा वृद्धिरित्यपेक्षित आह – रसेति। रसस्य तैलघृतादेः वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य स्वकृतया वृद्ध्या वर्धमानस्याष्टगुणा वृद्धिः परा। नातः परं वर्धते। तथा वस्त्रधान्यहिरण्यानां यथासंख्यं चतुर्गुणा त्रिगुणा द्विगुणा वृद्धिः परा। वसिष्ठेन तु रसस्य त्रैगुण्यमुक्तम् – 'द्विगुणं हिरण्यं त्रिगुणं धान्यम्। धान्येनैव रसा व्याख्याताः। पुष्पमूलफलानि च। तुलाधृतमष्टगुणम्' (वाध. २।४४-४७) इति। मनुना तु धान्यस्य पुष्पमूलफलादीनां च पञ्चगुणत्वमुक्तम् – 'धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम्' (मस्मृ. ८।१५१) इति। शदः क्षेत्रफलं पुष्पमूलफलादि। लवः मेषोर्णाचमरीकेशादिः। वाह्यः बलीवर्दतुरगादिः। धान्यशदलववाह्यविषया वृद्धिः पञ्चगुणत्वं नातिक्रामतीति। तत्राधमर्णयोग्यतावशेन दुर्भिक्षादिकालवशेन च व्यवस्था द्रष्टव्या। एतच्च सकृत्प्रयोगे सकृदाहरणे च वेदितव्यम्। पुरुषान्तरसंक्रमणेन प्रयोगान्तरकरणे तस्मिन्नेव वा पुरुषे रेकसेकाभ्याम् अनेकशः प्रयोगान्तरकरणे सुवर्णादिकं द्वैगुण्याद्यतिक्रम्य पूर्ववद्वर्धते। सकृत्प्रयोगेऽपि प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्ध्याहरणेऽधमर्णदेयस्य द्वैगुण्यासंभवात्पूर्वाहृतवृद्ध्या सह द्वैगुण्यमतिक्रम्य वर्धत एव। यथाऽऽह मनुः – 'कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता।' (मस्मृ. ८।१५१) इति। सकृदाहितेत्यपि पाठोऽस्ति। उपचयार्थं प्रयुक्तं द्रव्यं कुसीदम्, तस्य वृद्धिः कुसीदवृद्धिः। सा द्वैगुण्यं नात्येति नातिक्रामति। यदि सकृदाहिता सकृत्प्रयुक्ता। पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणे द्वैगुण्यमत्येति। सकृदाहृतेति पाठे तु शनैः शनैः प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वाऽधमर्णादाहृता द्वैगुण्यमत्येतीति व्याख्येयम्। तथा गौतमेनाप्युक्तम् – 'चिरस्थाने द्वैगुण्यं प्रयोगस्य' (गौध. १२।२८) इति। प्रयोगस्येत्येकवचननिर्देशात्प्रयोगान्तरकरणे द्वैगुण्यातिक्रमोऽभिप्रेतः। चिरस्थान इति निर्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो दर्शितः।

मिता.

[एतच्चेति। एकस्मिन्नेव ऋणादानप्रयोगे एकदैव च सवृद्धिकमूलग्रहणे चेत्यर्थः। एकस्मिन् ऋणदानप्रयोगे दशरूपकेषु दत्तेषु प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्धेरग्रहणे कालविलम्बवशात् वृद्धेर्द्वैगुण्याद्यतिक्रमेणातिवृद्धिः प्राप्ता तत्र सवृद्धिकमूलमेकदैव गृह्णन्नुत्तमर्णो मूलद्विगुणं तेन सह विंशतिरूपकपरिमितं द्रव्यं गृह्णीयात् इत्यभिप्रायः। आद्यस्य प्रत्युदाहरणमाह – पुरुषान्तरेति। अन्यस्मै पुरुषाय दानेनेत्यर्थः। प्रयोगान्तरकरणं द्वेधा। तत्रैकमुक्त्वा द्वितीयमाह – तस्मिन्नेवेति। अनेकशः पुनः पुनः। अनेकशः इत्यत्र रेकसेकाभ्यामिति पाठे प्रयुक्तद्रव्यैकदेशग्रहणे ऊनीकरणं रेकः। तत्रैव प्रक्षेपेणाधिकीकरणं सेकः। 'रिच वियोजनसंपर्चनयोः'। 'षिच क्षरणे'। तत्रानेन सर्वग्रहणादाह – सुवर्णेति। पूर्ववत् अशीतिभाग इत्याद्युक्तप्रकारेण। अयं भावः – यदि तदेव विंशतिसंख्याकं द्विगुणं द्रव्यमन्यस्मै दीयते, पूर्वं यस्मै दत्तं तस्मा एव वा दीयते प्रयोगान्तरेण तथा वा क्रियते तदा पूर्वप्रयोगे द्विगुणीभूतमिति कृत्वा पुनः क्रियमाणे प्रयोगान्तरे न वर्धत इति न, तदा दीयमानस्य तस्यैव मूलत्वेन वृद्धेरिष्टत्वात्। अत एव प्रथमप्रयोगे एव द्वैगुण्याद्यतिक्रमेण वृद्धिर्न, द्वितीयादिप्रयोगे तु द्वैगुण्याद्य(ती ?)त्येतीति। सकृदाहरण इत्यस्य प्रत्युदाहरणमाह – सकृदिति। देयस्य मूलस्य। असंभवस्त्वेवम् – प्रतिदिनादिक्रमेण तद्दाने यस्मिन् दिने या वृद्धिर्दीयते

---

[1] **यास्मृ.** २।३९; **विश्व.** २।४०; **निप्र.** २।३२१ णा परा (णापहा).

तद्दिनात्पूर्वमभिवृद्धस्य धनस्य विच्छेदः, पुनरपि नूतनत्वे वृद्धिः। एवं च वस्तुतः प्रयोगान्तरमिव भवतीति यावत् द्वैगुण्यं प्राप्नोति तावदविच्छेदेन वृद्धस्य द्रव्यस्य स्थित्यभाव इति। बाल. पृ. ५६-५७]

(३) पशुस्त्रीणां महिषीप्रभृतीनाम्। परा परमा। एतच्च स्वकृतवृद्धौ चिरकालमदत्तायां वेदितव्यम्।

* अप.

(४) छागीप्रभृतीनां दास्यादीनां च बन्धकत्वेन स्थापितानां वृद्ध्यन्तरासंभवे तत्संततिरेव वृद्धिः।

* दीक.

(५) पशुस्त्री यदि व्याधेह्री( ? ह्रि)यते तदा तस्य सन्तति( ? तिः)वृद्धिः। रसस्य वृद्ध्यर्थं दत्तस्य मासि मासि वृद्धिं चेन्न गृह्णाति तदा बहुकालातिक्रमेऽपि अशीतिभागद्वि-(क)शतादिक्रमेणाष्टगुणपर्यन्तमेव, अतोऽधिकत्वेऽपि न ग्राह्यम्। * निप्र. २।३२१

(६) अत्र पोषणासमर्थस्य प्रयोक्तुर्गोदास्यादेः पुष्टिस्तत्संततिश्चापेक्षिता, ग्रहीतुः क्षीरं परिचर्या च ग्रहणनिमित्तमिति ध्येयमिति रत्नाकरः। परे तु बन्धकत्वेन स्थापितस्य गोदास्यादेर्वृद्धिं तदभावे संततिमेव वृद्धिं गवादिस्वामिनोऽधमर्णा दद्युरिति व्याचक्षते। परेत्यनेन च गुणादिवृद्धेर्गणनया संभवेऽपि व्युदासः। * वीमि.

**'दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।**
**मध्यस्थस्थापितं चेत्स्याद्वर्धते न ततः परम्।।**

(१) यथोत्पत्त्या च ददतः – दीयमानमिति। स्वकं धनमिति वचनादात्मनेपदयोगाच्च संनिहितधनिकविषयमेतत्। अन्यथा तु वर्धत एवेत्यभिप्रायः। विश्व.

(२) किंच, उपचयार्थं प्रयुक्तं धनम् अधमर्णेन दीयमानमुत्तमर्णो वृद्धिलोभाद्यदि न गृहणाति, तदाऽधमर्णेन मध्यमहस्ते स्थापितं यदि स्यात्तदा ततः स्थापनादूर्ध्वं न वर्धते। अथ स्थापितमपि याच्यमानो न ददाति ततः पूर्ववद्वर्धत एव। ◘ मिता.

* शेषं मितागतम्।

◘ अप., दीक., वीमि. मितागतम्।

(१) **यास्मृ.** २।४४; **विश्व.** २।४६ गृह्णाति (गृह्णीत) चेत्स्या (तत्स्या).

साधिधनप्रयोगविषयकाणि
विधानानि

**'आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते।**
**काले कालकृतो नश्येत्फलभोग्यो न नश्यति।।**

(१) विस्रम्भहेतू द्वावाधिप्रतिभुवौ। तथा चोक्तम् – 'विस्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च' (नासं. २।१००) इति। तयोः प्रतिभूर्व्याख्यातः। इदानीं क्रमप्राप्तत्वादाधिरुच्यते-आधिरिति। विश्वासार्थं हिरण्यादि यदाधीयते स आधिः। स द्विविधः – गोप्यश्चागोप्यश्च। तत्र गोप्यः कदाचित् कालव्यवस्थया क्रियते – 'इयता कालेनामोक्षयतो ममायं प्रणङ्क्ष्यति' इति। कदाचित्तु संमुग्धः स प्रणश्येत् द्विगुणे धने यदि न दीयते। इतरोऽपि कालव्यवस्थया कृतस्तत एव प्रणश्यतीत्यत आह – 'फलभोग्यो न नश्यति' इति। फलं भुज्येत यस्य स फलभोग्यः आधिः। फलं वृद्धिः। स्पष्टमन्यत्। विश्व.

(२) आधिर्नाम गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णेऽधिक्रियते आधीयत इत्याधिः। स च द्विविधः – कृतकालोऽकृतकालश्च। पुनश्चैकैकशो द्विविधः – गोप्यो भोग्यश्च। यथाऽऽह नारदः – 'अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः। कृतकालेऽपनेयश्च यावद्देयोद्यतस्तथा।। स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च।।" (नासं. २।१०५-१०६) इति। कृतकाले आधानकाल एव 'अमुष्मिन्काले दीपोत्सवादौ मयाऽयमाधिर्मोक्तव्यः, अन्यथा तवैवाऽऽधिर्भविष्यति' इत्येवं निश्चिते काले उपनेयः आत्मसमीपं नेतव्यः। मोचनीय इत्यर्थः। देयं दानम्। देयमनतिक्रम्य यावद्देयम्। उद्यतः नियतः, स्थापित इत्यर्थः। यावद्देयमुद्यतः यावद्देयोद्यतः। गृहीतधनप्रत्यर्पणावधिरनिरूपितकाल इत्यर्थः। गोप्यः रक्षणीयः। एवं चतुर्विधस्याऽऽधेः विशेषमाह – आधिरिति। प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्विगुणीभूते यद्याधिरधमर्णेन द्रव्यदानेन न मोक्ष्यते तदा नश्यति अधमर्णस्य धनं प्रयोक्तुः स्वं भवति। कालकृतः कृतकालः। आहिताग्न्यादिषु पाठात्कालशब्दस्य पूर्वनिपातः। स तु काले निरूपिते प्राप्ते नश्येत् द्वैगुण्यात्प्रागूर्ध्वं वा। फलभोग्यः फलं भोग्यं यस्यासौ

(१) **यास्मृ.** २।५८; **विश्व.** २।६०.

फलभोग्यः क्षेत्रारामादिः, स कदाचिदपि न नश्यति। कृतकालस्य गोप्यस्य भोग्यस्य च तत्कालातिक्रमे नाश उक्तः – काले कालकृतो नश्येत् इति। पारिशेष्यादाधिः प्रणश्येदित्येतदकृतकालगोप्याधिविषयमवतिष्ठते। द्वैगुण्यातिक्रमेण निरूपितकालातिक्रमेण च विनाशे चतुर्दशदिवसप्रतीक्षणं कर्तव्यम्, बृहस्पतिवचनात् – 'हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधेः। बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च। तदन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात्।।' इति। नन्वाधिः प्रणश्येदित्यनुपपन्नम्, अधमर्णस्य स्वत्वनिवृत्तिहेतोर्दानविक्रयादेरभावात्, धनिनश्च स्वत्वहेतोः प्रतिग्रहक्रयादेरभावात्, मनुवचनविरोधाच्च – 'न चाऽऽधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः' (मस्मृ. ८।१४३) इति। कालेन संरोधः कालसंरोधः चिरकालमवस्थानम्। तस्मात्कालसंरोधात् चिरकालावस्थानात् आधेर्न निसर्गोऽस्ति नान्यत्राऽऽधीकरणमस्ति, न च विक्रयः। एवमाधीकरणविक्रयप्रतिषेधात् धनिनः स्वत्वाभावोऽवगम्यते इति। उच्यते – आधीकरणमेव लोके सोपाधिकस्वत्वनिवृत्तिहेतुः, आधिस्वीकारश्च सोपाधिकस्वत्वापत्तिहेतुः प्रसिद्धः। तत्र धनद्वैगुण्ये निरूपितकालप्राप्तौ च द्रव्यदानस्यात्यन्तनिवृत्तेरनेन वचनेनाधमर्णस्याऽऽत्यन्तिकी स्वत्वनिवृत्तिः उत्तमर्णस्य चाऽऽत्यन्तिकं स्वत्वं भवति। न च मनुवचनविरोधः। यतः – 'नत्वेवाऽऽधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्' (मस्मृ. ८।१४३) इति भोग्याधिं प्रस्तुत्येदमुच्यते – 'न चाऽऽधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः' इति भोग्यस्याऽऽधेश्चिरकालावस्थानेऽप्याधीकरणविक्रयनिषेधेन धनिनः स्वत्वं नास्तीति। इहाप्युक्तं 'फलभोग्यो न नश्यति' इति। गोप्याधौ तु पृथगारब्धं मनुना – 'न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्' (मस्मृ. ८।१४४) इति। इहापि वक्ष्यते – 'गोप्याधिभोगे नो वृद्धिः' (यास्मृ. २।५९) इति। 'आधिः प्रणश्येद्द्विगुणे' इति तु गोप्याधिं प्रत्युच्यत इति सर्वमविरुद्धम्। § मिता.

(३) मासि मासि सबन्धके विशेषमाह प्रकरणसमाप्तिपर्यन्तेन – आधिरिति। तत्राऽऽधिश्चतुर्विधः स्वरूपप्रकारकालप्रमाणरूपोपाधिभेदात्। तथा च बृहस्पतिः – 'आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः। जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च। यादृच्छिकः सावधिश्च लेख्यारूढोऽथ साक्षिमान्।।'। जङ्गमस्थावरत्वादिचतुष्टयेन यथाक्रमं स्वरूपादिचतुष्टयनिरूपकेण चतुरब्दम् (? चतुर्विधत्वम्)। लेख्यारूढ इति। साक्ष्यतिरिक्तप्रमाणवान् इत्यर्थः। वचनान्तराणि त्वेतदविरोधेनैव नेयानीति संक्षेपः। "द्विगुणे धने जाते यदि गोप्याधिरधमर्णेन न मोक्ष्यते तदाऽधमर्णस्य नश्यति। कालकृतः कृतकालः, 'यदि अमुककाले मया नाऽऽधिर्मोक्ष्यते तदा तवैव स्वं भवति' इति व्यवस्थापितकाल इति यावत्। एतादृशो भोग्यो गोप्यो वा आधिः काले तादृशव्यवस्थाविषयकालेऽधमर्णेन ऋणाप्रतिदाने नश्येत् अधमर्णस्य स्वत्वानाश्रयो भवतीत्यर्थः" इति मिताक्षरादयः। रत्नाकरकृतस्तु – 'कांस्यादावपरिभाष्याऽऽधीकृते आधातुरनुमतिं विना धनिकस्वत्वोचितव्यवहारस्य विश्वेषामदर्शनादन्यथैतद्वचनं व्याख्येयम्' इत्याहुः। सा च व्याख्या – यत्राधमर्ण एव परिभाषते 'द्विगुणे धने यदि न मया मोक्ष्यते आधिस्तदा तवैवायम्' इति, तदा द्विगुणे धने जातेऽमोक्षणेऽधमर्णस्य प्रणश्येत्। अत्र हेतुः – कालकृतः (स्व)स्वत्वध्वंसे उत्तमर्णसत्त्वेव (? स्वत्वे च) व्यवस्थास्थापितः कालो यत्र स आधिर्व्यवस्थापितकालेन नश्येत्, फलभोग्यस्तु भोग्याधिरकृतकालः समासहस्रेणापि न नश्यतीति। 'द्विगुणे सति मया मोचनीयः' इत्येतावन्मात्रमपि सुदृढं व्यवस्थाप्य स्वामिना आहितः आधिः, अर्थाद्गोप्यः, स द्विगुणे मूलधने सति यदि नोन्मुच्यते तदा नश्यति। द्विगुण इति परमवृद्धिपरम्। भोग्याधिस्तु एवं परिभाषितोऽपि पतितव्यूहादिद्वारा द्विगुणे धने सत्यमोचितोऽपि न नश्यति। कालकृतः कृतकालः 'अस्मिन् काले यदि न मोच्यते तदा तवैव' इति स्वीकृत्याऽऽदितः तस्मिन् अमोचितः सर्वोऽप्याधिर्नश्यति। एवं च द्विगुणे धन इति यथाश्रुतमेव ग्राह्यम्। शिष्टव्यवहारादिविरोधे तु कालविशेषोपलक्षणपरमिति। (इयं) व्याख्या तु साधीयसीति प्रतिभाति। प्रणश्येदित्यत्र विशेषमाह बृहस्पतिः – 'पूर्णावधौ शान्तलाभे बन्धे स्वामी धने भवेत्। अनिर्गते दशाहे तु ऋणी प्रोञ्छितुमर्हति।।'। व्यासश्च – 'बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च।' इति। अत्र सुस्थितासुस्थितावधमर्णावादाय व्यवस्था। वीमि.

---

§ शेषं प्रस्तावनांशो विश्ववत्। अप., दीक. मितागतम्।

**[1]गोप्याधिभोगे नो वृद्धिः सोपकारे च हापिते।**
**नष्टो देयो विनष्टश्च दैवराजकृतादृते।।**

(१) गोप्याधिभोगिनो वृद्धिः, प्रणश्येदिति शेषः। सोपकारेऽथेत्यपिशब्दार्थोऽथशब्दः। सोपकारेऽप्याधौ वृद्धिर्न स्यादित्यर्थः। वाहदोहादियुक्तो गवादिः सोपकारः। अविकारशङ्कया पृथग्वचनम्। भावित इति भोक्त्राऽभ्युपगते साक्षिभिर्वा 'भुक्तोऽनेनायम्' इत्येवं भाविते। नष्ट आधिर्विनष्टो वा दैविकात् अग्न्याद्युपद्रवात् राजकीयाद्वा विना अधमर्णिकाय देयः। स्वरूपहानं विनाशः। अपहारस्तु नाशः। स्पष्टमन्यत्। विश्व.

(२) किंच, गोप्याधेस्ताम्रकटाहादेरुपभोगे न वृद्धिर्भवति। अल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या, समयातिक्रमात्। तथा सोपकारे उपकारकारिणि बलीवर्दताम्रकटाहादौ भोग्याधौ सवृद्धिके हापिते हानिं व्यवहाराक्षमत्वं गमिते, नो वृद्धिरिति संबन्धः। नष्टः विकृतिं गतः ताम्रकटाहादिश्छिद्रभेदनादिना पूर्ववत्कृत्वा देयः। तत्र गोप्याधिर्नष्टश्चेत्पूर्ववत्कृत्वा देयः। उपभुक्तोऽपि चेद्वृद्धिरपि हातव्या। भोग्याधिर्यदि नष्टस्तदा पूर्ववत्कृत्वा देयः। वृद्धिसद्भावे वृद्धिरपि हातव्या। विनष्टः आत्यन्तिकं नाशं प्राप्तः, सोऽपि देयो मूल्यादिद्वारेण। तद्दाने सवृद्धिकं मूल्यं लभते। यदा न ददाति तदा मूलनाशः, 'विनष्टे मूलनाशः स्याद्दैवराजकृतादृते' (नासं. २।१०७) इति नारदवचनात्। दैवराजकृतादृते। दैवम् अग्न्युदकदेशोपप्लवादि। दैवकृताद्विनाशाद्विना। तथा स्वापराधरहिताद्राजकृतात्। दैवराजकृते तु विनाशे सवृद्धिकं मूल्यं दातव्यमधमर्णेनाऽऽध्यन्तरं वा। यथाऽऽह – 'स्रोतसाऽपहृते क्षेत्रे राज्ञा चैवापहारिते। आधिरन्योऽथ कर्तव्यो देयं वा धनिने धनम्।।' इति। तत्र स्रोतसाऽपहृत इति दैवकृतोपलक्षणम्। ‡ मिता.

(३) नो वृद्धिर्भवति प्रयुक्तं धनं न वर्धत इत्यर्थः। यत्राधमर्ण आधेरुपभोगं वृद्धिदानं वाऽभ्युपगच्छति तद्विषयमेतत्। + अप.

(४) तथा हापिते सम्यक् व्यवहाराक्षमत्वं नीते आधौ न वृद्धिः।.... चकाराच्चोरहृतः। दैवराजकृताद्दोषादृत इति हापितादौ सर्वत्रान्वेति। धनिकदोषेणेति तदर्थः। अथशब्देन हापितात्पूर्वोक्ते न उभयस्मिन् दैवराजकृतादृत इत्यस्यान्वयव्यवच्छेदः।.... यत्र तु ऋणापेक्षया बहुमूल्यं रत्नाद्याधीकृतं नष्टं विनष्टं वा तत्र स्वद्रव्याधिकं यदाधीकृतमूल्यं तदधमर्णाय सर्वं दद्यात्, 'भुक्ते चासारतां प्राप्ते फलहानिः प्रजायते। बहुमूल्यं यत्र नष्टमृणिकं तत्र तोषयेत्।।' इति बृहस्पतिवचनात्।..... 'यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्ते विचक्षणः। तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः।।' (मस्मृ. ८।१५०) इति मनुवचनं तु अभोग्याधेर्दासादेरपेक्षिते-(?) भोगे योजनीयम्, ता(? अता)दृशे तु सर्ववृद्धिहानिर्ग्रन्थकृतोक्तेति न विरोधः। + वीमि.

**[1]आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम्।**
**यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत्।।**

(१) ऋणिकार्पितस्य – आधेरिति। समर्पितस्यापि स्वीकरणेनोपभोग्यत्वसिद्धिः स्यात्। यत्नेनापि तु रक्ष्यमाणोऽप्यसारतां यातश्चेत् यदि पाल्यमानोऽप्यसारीभूतः, ततोऽन्य आधेयः स्यात्। यद्वा अस्मिन्नवसरे धनभाग्वा धनी भवेत्। धनिने वा धनं सोदयं देयम् आध्यन्तरं वा कार्यमित्यभिप्रायः। विश्व.

(२) अपि च, आधेर्भोग्यस्य गोप्यस्य च स्वीकरणादुपभोगादधिग्रहणसिद्धिर्भवति, न साक्षिलेख्यमात्रेण, नाप्युद्देशमात्रेण। यथाऽऽह नारदः – 'आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा। सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा।।' (नासं. २।११६) इति। अस्य च फलम् – 'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति। या स्वीकारान्ता क्रिया सा पूर्वा बलवती, स्वीकाररहिता तु पूर्वाऽपि न बलवतीति। स चाऽऽधिः प्रयत्नेन रक्ष्यमाणोऽपि कालवशेन यद्यसारताम् अविकृत एव सवृद्धिकमूल्यद्रव्यापर्याप्ततां गतस्तदाऽऽधिरन्यः कर्तव्यो धनिने धनं वा देयम्। 'रक्ष्यमाणोऽप्यसारताम्' इति वदता आधिः

‡ दीक. मितागतम्।

+ शेषं मितागतम्।

(१) **यास्मृ.** २।५९; **विश्व.** २।६१ भोगे नो (भोगिनो) रे च हापिते (रेऽथ भाविते) नष्टश्च (नष्टो वा); **वीमि.** रे च (रेऽथ).

+ शेषं मितागतम्।

(१) **यास्मृ.** २।६०; **विश्व.** २।६२ चतुर्थचरणे (धनं वा धनिने वहेत्).

प्रयत्नेन रक्षणीयो धनिनेति ज्ञापितम्। * मिता.

[संकोचे मानाभावादुभयसाधारण्येन व्याचष्टे – आधेरिति। अत एव गोप्यस्य स्वीकरणमात्रत्वेन(? त्रेण) निर्वाहेऽपि भोग्येऽनिर्वाहात्तत्तदुपलक्षणमित्याह – उपेति। तथा च (न) यथासंख्यमन्वयः।..... उद्देशः वस्तुसंकीर्तनम्। उपदेशेति पाठान्तरम्। भोग्यस्य भोगेनैव सिद्धिरित्यत्र मानमाह – यथाऽऽहेति। यद्वा, स्वीकरणादित्यस्य व्याख्या– उपभोगादिति। 'भुज पालनाभ्यवहारयोः' इत्युक्तेर्गोप्याधौ उपभोगः परिपालनम्, भोग्यास्य(? ग्याधौ) अभ्यवहरणं फलाद्युपभोगः इति यावत्।.... अत्र पक्षे उभयत्र मानमाह- यथाऽऽहेति। भोग इति। उक्तद्व्यर्थकमिदम्।.... फलत्वमेव विशदयति – येति। स्वीकारपदमुक्तार्थकम्।

बाल. पृ. ७६-७७]

(३) आधिसाधनमाह – आधेरिति। आधेः स्वीकरणात् परिग्रहात् आधित्वसिद्धिः। स्वीकरणं च भोग्यादौ भोगपर्यन्तम्, गोप्याधौ तु भाण्डागारप्रवेशपर्यन्तम्। ..... यद्यसावाधिर्धनिना रक्ष्यमाणोऽप्यसारताम् अवलम्बते याति, एकया संवत्सरवृद्ध्या सहितं मूलधनमपाकर्तव्यम्। न शक्नोति चेत्तदाऽधमर्णेनान्य आधिराधेयः, धनं वा स्वप्रयुक्तं धनी लभते। अप.

(४) आधेः सिद्धिः स्वीकरणेन, न भोगेन, न वोद्देशमात्रेण। तथा व्यासः – 'आधिश्च द्विविधः प्रोक्तः स्थावरो जङ्गमस्तथा। सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा।।'। दीक.

**'उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत्।**
**प्रयोजकेऽसति धनं कुले न्यस्याऽऽधिमाप्नुयात्।।**

(१) यदा त्वृणिकः सोदयं द्रव्यमादायोपस्थितः तदा– उपस्थितस्येति। सोदयं द्रव्यमादायोपस्थितस्याऽऽधिमनुत्सृजन् प्रयोक्ता दण्ड्यः स्यात्। यदा त्वसंनिहितो धनप्रयोक्ता तदा तस्मिन् प्रयोजकेऽसति तत्कुटुम्बे समर्प्य द्रव्यमाधिमाप्नुयात् निःसंशयं गृह्णीयादित्यर्थः। एवं धनिककुले द्रव्यं समर्पयित्वाऽऽधिर्ग्राह्यः। + विश्व.

(२) प्रयोजक उत्तमर्णः। तस्मिन्नसति मृते प्रोषिते वा। * अप.

(३) एतच्चाविमोचनविरोधि व्यवस्थाप्यं बलवत्त्वादिति ध्येयम्। राजदैवकृतादृत इति सर्वत्रान्वययोग्येऽन्वेति। प्रयोजके धनप्रयोक्तरि असति मृते प्रोषिते प्रव्रजिते वा कुले प्रयोक्तृदायभागिनि क्रमेण पुत्रादौ। * वीमि.

**'तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः।**
**विना धारणकाद्वाऽपि विक्रीणीत ससाक्षिकम्।।**

(१) तत्काले कृतं मूल्यं यस्य स तत्कालकृतमूल्यः। 'यदि मूल्याद्ध्रासः स्यात् तदा तत्कालकृतं यन्मूल्यं तत् धनिकेन देयम्' इत्येतया परिभाषया वृद्धिशून्यो धनिकहस्ते तिष्ठेत्। यदा तु धनं द्विगुणीभूतम्, ऋणिकश्चासंनिहितः, तदा तत्काले श्रावयित्वाऽऽधिं निर्विकल्पं गृह्णीयात्, विनैव धारणकात् ससाक्षिकं विक्रीणीतेत्यर्थः।

विश्व.

(२) अथ प्रयोक्ताऽप्यसंनिहितस्तदाप्ताश्च धनस्य ग्रहीतारो न सन्ति, यदि वा असंनिहिते प्रयोक्तर्याधिविक्रयेण धनदित्साऽधमर्णस्य, तत्र किं कर्तव्यमित्यपेक्षित आह– तत्कालकृतेति। तस्मिन्काले यत्तस्याऽऽधेर्मूल्यं तत्परिकल्प्य तत्रैव धनिनि तमाधिं वृद्धिरहितं स्थापयेत्, न तत ऊर्ध्वं विवर्धते यावद्धनी धनं गृहीत्वा तमाधिं मुञ्चति, यावद्वा तन्मूल्यद्रव्यमृणे प्रवेशयति। यदा तु 'द्विगुणीभूतेऽपि धने द्विगुणं धनमेव ग्रहीतव्यम्, न त्वाधिनाशः' इति विचारितमृणग्रहणकाल एव, तदा द्विगुणीभूते द्रव्ये असंनिहिते वाऽधमर्णे धनिना किं कर्तव्यमित्यत आह – विनेति। धारणकात् अधमर्णात् विना अधमर्णेऽसंनिहिते साक्षिभिस्तदाप्तैश्च सह तमाधिं विक्रीय तद्धनं गृह्णीयाद्धनी। वाशब्दो व्यवस्थितविकल्पार्थः। यदर्णग्रहणकाले 'द्विगुणीभूतेऽपि धने धनमेव ग्रहीतव्यम्, न त्वाधिनाशः' इति न विचारितं तदा 'आधिः प्रणश्येद्द्विगुणे' इत्याधिनाशः, विचारिते त्वयं पक्ष इति। मिता.

(३) प्रकारान्तरमाह – तत्कालकृतेति। तस्मिन्नृणापाकरणकाले कृतमूल्योऽवधारितमूल्यो वृद्धिरहित एवाऽऽ-

---

* वीमि. मितागतम्।

\+ मिता. विश्ववत्। दीक. विश्वगतम्।

(१) **यास्मृ.** २।६२; **विश्व.** २।६४ आधिः स्तेनो (आधिर्दण्ड्यो).

* शेषं विश्ववत्।

(१) **यास्मृ.** २।६३; **विश्व.** २।६५.

धिः प्रयोक्तृकुले तिष्ठेत्, यावत्प्रयोक्तुरागमनम्। आगते च तस्मिन्नाधिं तन्मूल्यं वाऽधमर्णो गृह्णीयात्। प्रोषितप्रयोक्तृविषयं चैतत्। उत्तमर्णेन मूलधनं द्विगुणं फलभोग्याधेरुपजीव्याधमर्णाय स आधिः प्रत्यर्पणीय इत्यनन्तरं वक्ष्यति।

तत्र विषये यद्यधमर्णस्तदीयो वा स्वजनः कोऽप्यसंनिहितो विद्यते तदोत्तमर्णेन साक्षिसमक्षं स आधिर्विक्रेतव्य इतीदानीमाह – विनेति। धारणकात् अधमर्णात् विना, तदसंनिधानादिति यावत्। वाशब्दस्तत्स्वजनासंनिधिसमुच्चयार्थः। अप.

(४) यदा तु आधिः कथंचिदधमर्णस्य न दत्तः, तदा तत्कालमूल्य एवाऽऽधिर्ग्राहकस्य गृहे वृद्धिरहितस्तिष्ठेत्। यदा तु पुनः धारणकः बन्धकदाता नास्ति तदा विक्रीय धनं गृहीत्वा राज्ञे दद्यात्। दीक.

(५) धनिकदोषेण धनग्रहणाभावे तदूर्ध्वं वृद्धिर्न भवतीत्यर्थः।..... विक्रीणीत, तत्र स्वकीयं धनं गृहीत्वाऽवशिष्टं राज्ञे दद्यादिति विवेकः। अपिकारेणाधमर्णदायादसंग्रहः। # वीमि.

**[1]यदा तु द्विगुणीभूतमृणमाधौ तदा खलु।**
**मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने।।**

(१) वृद्ध्यर्थं प्रथमदिवसादारभ्य प्रयोक्त्रा भुज्यमानेऽपि – यदेति। धने प्रविष्टे सत्याधिर्मोच्यः, न त्वर्वागेव द्विगुणद्रव्याप्रदानलक्षणोऽस्य प्रणाशः स्यादित्यभिप्रायः। विश्व.

(२) भोग्याधौ विशेषमाह – यदेति। यदा प्रयुक्तं धनं स्वकृतया वृद्ध्या द्विगुणीभूतं तदाऽऽधौ कृते तदुत्पन्ने आध्युत्पन्ने द्रव्ये द्विगुणे धनिनः प्रविष्टे धनिनाऽऽधिर्मोक्तव्यः। यदि वा आदावेवाऽऽधौ दत्ते 'द्विगुणीभूते द्रव्ये त्वयाऽऽधिर्मोक्तव्यः' इति परिभाषया कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणं तदा आधौ भोगार्थं धनिनि प्रविष्टे तदुत्पन्ने द्रव्ये द्विगुणे सत्याधिर्मोक्तव्यः। अधिकोपभोगे तदपि देयम्। सर्वथा सवृद्धिकमूलर्णापाकरणार्थाध्युपभोगविषयमिदं वचनम्। तमेनं क्षयाधिमाचक्षते लौकिकाः। यत्र तु 'वृद्ध्यर्थमेवाऽऽध्युपभोगः' इति परिभाषा तत्र द्वैगुण्यातिक्रमेऽपि यावन्मूलदानं तावदुपभुङ्क्त एवाऽऽधिम्। एतदेव स्पष्टीकृतं बृहस्पतिना – 'ऋणी बन्धमवाप्नुयात्। फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं तु सामकम्।। यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी। ऋणी च न लभेद्बन्धं परस्परमतं विना।।' इति। अस्यार्थः – फलं भोग्यं यस्यासौ फलभोग्यः बन्धः आधिः। स च द्विविधः – सवृद्धिकमूलापाकरणार्थो वृद्धिमात्रापाकरणार्थश्च। तत्र च सवृद्धिमूलापाकरणार्थं बन्धं पूर्णकालं पूर्णः कालो यस्यासौ पूर्णकालः तमाप्नुयादृणी। यदा सवृद्धिकं मूलं फलद्वारेण धनिनः प्रविष्टं तदा बन्धमाप्नुयादित्यर्थः। वृद्धिमात्रापाकरणार्थं तु बन्धकं सामकं दत्त्वाऽऽप्नुयादृणी। समं मूलम्, सममेव सामकम्। अस्यापवादमाह – यदि प्रकर्षितं तत्स्यात्। तत् बन्धकं प्रकर्षितमतिशयितं वृद्धेरप्यधिकफलं यदि स्यात्तदा न धनभाग्धनी सामकं न लभते धनी। मूलमदत्त्वैव ऋणी बन्धमवाप्नुयादिति यावत्। अथ त्वप्रकर्षितं तद्बन्धकं वृद्धयेऽप्यपर्याप्तं तदा सामकं दत्त्वाऽपि बन्धं न लभेताधमर्णः। वृद्धिशेषमपि दत्त्वैव लभेतेत्यर्थः। पुनरुभयत्रापवादमाह – परस्परमतं विना। उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे 'यदि प्रकर्षितम्' इत्याद्युक्तम्। परस्परानुमतौ तूत्कृष्टमपि बन्धकं यावन्मूलदानं तावदुपभुङ्क्ते धनी, निकृष्टमपि मूलमात्रदानेनैवाधमर्णो लभत इति। × मिता.

[भोगाभावे परिभाषारूपं हेतुमाह – द्विगुणीति। 'भोक्तव्यः' इति पाठः। न इति आरभ्येति भावः। ऋणग्रहणकाले एवाऽऽधिं दददधमर्णः एवं ब्रवीति – 'यदा द्रव्यं वृद्ध्या द्विगुणीभूतं तदा आधिर्भोक्तव्यः' इति। उत्तमर्णोऽपि तथैवानुजानीते।.... कारणान्तरेण वेति। उत्तमर्णस्य स्वच्छाशयत्वेनालुब्धत्वे च 'धने द्विगुणेऽहमाधिं भोक्ष्ये, न इत आरभ्य' इति प्रतिज्ञायाम् अधमर्णेन 'तथा कुरु' इत्यङ्गीकृते उत्तमर्णस्य सत्यवचनत्वरूपकारणान्तरेण बाधेन पूर्वभोगाभावे वेत्याद्यर्थः(? त्यर्थः)। बाल. पृ. ७९]

(३) धने द्विगुणे प्रविष्टे स आधिर्मोक्तव्यो न तु भोक्तव्यः। + दीक.

---

# शेषम् अपगतम्।

(१) **यास्मृ.** २।६४; **विश्व.** २।६६; **मेधा.** ८।१५१ उत्त. स्मृत्यन्तरम्.

× अप. मितागतम्। अशुद्धो ग्रन्थः। एवं दीक. अपि।

+ शेषं मितागतम्।

(४) भोग्याधौ विशेषमाह – यदेति। ऋणमाधौ भोगद्वारा द्विगुणीभूतं यदि तदा तस्मिन् द्विगुणधने स्वसंक्रान्ते सत्युत्तमर्णेनाऽऽधिर्मोक्तव्य इत्यर्थः। अयमेव क्षयाधिरित्युच्यते। इदं च धनिकस्य तथाऽभ्युपगमपरम्, 'अन्त्यवृद्धौ प्रविष्टायामपि। न स्थावरमृते वचनात्' (विस्मृ. ६।७,८) इति विष्णुवाक्यैकमूलकत्वादिति मिश्राः। अधर्मभीरुणा तदा स आधिर्मोच्यः, 'भोगाय द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते। मूलं च सोदयं पश्चाद्वार्धुषं तत्तु गर्हितम्।।' इति बृहस्पतिवचनात्, न तु विशेषव्यवस्थामन्तरेण न( ? स) वर्धतेऽपीत्यप्याहुः। वीमि.

ग्राम्यजनेच्छाद्यनुरोधेन चरणार्थं गोप्रचारः,
द्विजे तृणादिविषयकः
स्तेयापवादः

**'ग्राम्येच्छया गोप्रचारो भूमी राजवशेन वा।**
**द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत्।।**

(१) स्पष्टार्थः श्लोकः। विश्व.

(२) गोप्रसङ्गात् गोप्रचारमाह – ग्राम्येच्छया इति। ग्राम्येच्छया ग्राम्यजनेच्छया भूम्यल्पत्वमहत्त्वापेक्षया राजेच्छया वा गोप्रचारः कर्तव्यः। गवादीनां चरणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः। द्विजस्तृणेन्धनाद्यभावे गवाग्निदेवतार्थं तृणकाष्ठकुसुमानि सर्वतः स्ववत् अनिवारितः आहरेत्। फलानि त्वपरिवृतादेव, 'गोग्न्यर्थं तृणमेधांसि वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम्' (गौध. १२।२५) इति गौतमस्मरणात्। एतच्च परिगृहीतविषयम्, अपरिगृहीते तु द्विजव्यतिरिक्तस्यापि परिग्रहादेव स्वत्वसिद्धेः। यथा तेनैवोक्तम् – 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु' (गौध. १०।३८) इति। यत्पुनरुक्तम् – 'तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्। अनापृच्छन्हि गृह्णानो हस्तच्छेदनमर्हति।।' इति, तत् द्विजव्यतिरिक्तविषयमनापद्विषयं वा गवादिव्यतिरिक्तविषयं वा इति। † मिता.

(३) सर्वतः रक्षितादपि। गृक. ३२२

(४) स्ववत् अविशङ्कमित्यर्थः। स्मृच. २।४६८

(५) सर्वतः रक्षितादरक्षितादपि। गृर. ५२०

(६) ग्रामस्य जनपदे( ? पदस्ये)च्छया गवादिप्रचारदेशः कार्यः, राजेच्छया वा भूमिः( ?)। द्विजस्तृणोदकादीनि सर्वतः अटव्यादिदेशासंभवेऽन्यपरिगृहीतादपि।आत्मीयवदाहरेत्। * दीक.

(७) ननु क्षेत्रादिव्याप्ते देशे कथं गवां वृत्तिः संचारणं वा स्यात्, सर्वत्र दण्डसंभवादत आह – ग्रामेच्छया इति। ‡ वीमि.

आपदि ब्राह्मणस्य क्षत्रवृत्तिर्वैश्यवृत्तिर्वा, आपदन्ते
प्रायश्चित्तपूर्वकस्ववृत्तिस्वीकारः, ब्राह्मणस्याविक्रेयाः पदार्थाः, धान्येन तिलविक्रयो
धर्मार्थमनुमतः, अविक्रेयविक्रयस्य
दुष्फलानि

**'क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः।**
**निस्तीर्य तामथाऽऽत्मानं पावयित्वा न्यसेत्पथि।।**

(१) अकार्यकारिणां दानाच्छुद्धिरित्यस्य विवेकार्थमाह – क्षात्रेणेति। क्षात्रेण प्रजापालनादिकर्मणा ब्राह्मणवैश्ययोः वैश्यकर्मणा वा पूर्वयोः अकार्यभूतेनापि स्ववृत्त्यसंभवलक्षणायामापदि जीवनं धर्म्यमेव। द्विजवचनाच्च क्षत्रियवैश्यधर्मान्वाचयत्वेन वर्णत्रयसाधारण्यं व्याख्यातम्। तथा

---

(१) **यास्मृ.** २।१६६; **विश्व.** २।१७० ग्राम्ये (ग्रामे) रो भूमी (रभूमी) णैधःपु (णैधपु); **अप.** ग्राम्ये (ग्रामे) भूमी रा (भूमिरा) स्ववदा (समुपा); **गृक.** ३२२ स्ववदा (समुपा), उत्त.; **स्मृच.** २।४६८ उत्त.; **गृर.** ५२० सर्वं गृकवत्; **दीक.** ग्राम्ये (ग्रामे) णैधःपुष्पाणि (णोदकादीनि); **मच.** ८।३३९; **विपा.** ३।२।२८६ ग्राम्ये (ग्रासे) णैधःपु (णैधपु); **वीमि.** ग्राम्ये (ग्रामे); **इन्दु.** १६० उत्त.

† अप. मितागतम्।
* मच. मितागतं दीकगतं च।
‡ शेषं मितागतम्।

(१) **यास्मृ.** ३।३५; **विश्व.** उत्तरार्धे (निस्तीर्यार्थं तमुत्सृज्य पाव्याऽऽत्मानं न्यसेत्पथि); **अप.** ३।३४:।३।४१ पू.; **गृक.** १८८ (क्षात्रेण धर्मणाऽऽजीवेद्विशां वाऽप्यापदि द्विजः। निस्तीर्यार्थे समुत्सृज्य पाव्याऽऽत्मानं भवेत्पथि।।); **स्मृच.** २।४८२; **गृर.** ४२६ गृकवत्, यार्थे (यार्थं) इति तु विशेषः; **पमा.** २।१५० पथि (सुधीः); **मपा.** २३५ न्यसेत्पथि (पथि न्यसेत्) उत्त.; **दीक.** उत्तरार्धे क्वचित् (निस्तीर्यार्थं समुत्सृज्य पाव्याऽऽत्मानं भवेत्पथि) इति पाठः; **मर.** १८० पू.: १८९ उत्त.; **मुक्ता.** ६०; **संम.** ७८ द्वितीयचरणमात्रम्: ७९ उत्त.; **सम.** १०९ पू.(=); **स्मृतिकौ.** ४७८ वाऽप्या (वा त्वा) पू. (=); **आन.** ६३३; **कृभ.** १३०९ पू. (=).

च नारदः – 'उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते। मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते।।' इति। अकार्यत्वाच्चाऽऽपत्कल्पत्वम्। तेन तामापदं निस्तीर्य उत्सृज्य चावशिष्टं द्रव्यं दानेन, विधिवत् पावयित्वा आत्मानं स्ववृत्तिलक्षण एव पथि स्थापयेत्, न तस्यामेव क्षत्रियादिवृत्तौ रतिं कुर्यादित्यभिप्रायः। विश्व.

(२) 'आपद्यपि च कष्टायां सद्यःशौचं विधीयते' (यास्मृ. ३।२९) इत्यापदि मुख्याशौचकल्पानामनुष्ठानासंभवेन सद्यःशौचाद्यनुकल्पमुक्त्वेदानीं तत्प्रसङ्गादापदि 'प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा' (यास्मृ. १।११८) इत्याद्युक्तयाजनादिमुख्यवृत्त्यसंभवेन वृत्त्यन्तरमाह – क्षात्रेणेति। द्विजः विप्रः बहुकुटुम्बतया स्ववृत्त्या जीवितुमसमर्थः क्षत्रसंबन्धिना कर्मणा शस्त्रग्रहणादिना आपदि जीवेत्। तेनापि जीवितुमशक्नुवन् वैश्यसंबन्धिना कर्मणा वाणिज्यादिना जीवेत्, न शूद्रवृत्त्या। तथा च मनुः – 'उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्। कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्।।' (मस्मृ. १०।८२) इति। तथा आपद्यपि न हीनवर्णेन ब्राह्मी वृत्तिराश्रयणीया; किंतु ब्राह्मणेन क्षात्री, क्षत्रियेण वैश्यसंबन्धिनी, वैश्येन च शौद्रीत्येवं स्वानन्तरहीनवर्णवृत्तिरेव, 'अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्न तु कदाचिज्ज्यायसीम्' इति वसिष्ठस्मरणात्। ज्यायसी च ब्राह्मी वृत्तिः। तथा च स्मृत्यन्तरम् – 'उत्कृष्टं वाऽपकृष्टं वा तयोः कर्म न विद्यते। मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते।।' इति। शूद्रस्योत्कृष्टं ब्राह्मं कर्म न विद्यते, तथा ब्राह्मणस्यापकृष्टं शौद्रं कर्म। मध्यमे क्षत्रवैश्यकर्मणी पुनरापद्गतसर्ववर्णसाधारणे इति। शूद्रश्चाऽऽपद्गतो वैश्यवृत्त्या शिल्पैर्वा जीवेत्, 'शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत्। शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्।।' (यास्मृ. १।१२०) इति प्रागुक्तत्वात्। मनुना चात्र विशेषो दर्शितः – 'यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः। तानि कारुककर्माणि शिल्पानि विविधानि च।।'(मस्मृ. १०।१००) इति। अनेनैव न्यायेनानुलोमोत्पन्नानामपि स्वानन्तरा वृत्तिरूहनीया। एवं स्वानन्तरहीनवर्णवृत्त्या आपदं निस्तीर्य प्रायश्चित्ताचरणेनाऽऽत्मानं पावयित्वा पथि न्यसेत् स्ववृत्तावात्मानं स्थापयेदित्यर्थः। यद्वाऽयमर्थः – गर्हितवृत्त्याऽर्जितं धनं पथि न्यसेत् उत्सृजेदिति। तथा च मनुः – 'जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्। प्रतिग्रहनिमित्तं तु त्यागेन तपसैव तु।।' (मस्मृ. १०।१११) इति। § मिता.

(३) एवं यथाकथंचिदप्यापदं हित्वा प्रायश्चित्तं कुर्यात्। यथोक्तं याज्ञवल्क्येन – 'निस्तीर्य.... पथि।'। पराशरोऽपि – 'अशक्तो निन्दितं कुर्यात्प्रायश्चित्तं पुनश्चरेत्।' इति। अतो ज्ञायते – अनुज्ञानेऽपीषद्दोषोऽस्त्येव। यत्तु 'आपद्गतः ... हि सः।।' (यास्मृ. ३।४१) इति, तन्न सर्वथादोषाभावप्रतिपादनपरम्, किं तु 'सर्वत एवाऽऽत्मानं गोपायेत्' इति गोपनस्य पापाभावार्थवादेनाऽऽवश्यकत्वार्थम्, अग्रे प्रायश्चित्ताम्नानात्। एतावान् परं विशेषः – यदनापदि कृतानां निन्दितानां कर्मणां बहु प्रायश्चित्तम्, आपदि त्वल्पमिति। संम. ७९

**'फलोपलक्षौमसोममनुष्यापूपवीरुधः।**
**तिलौदनरसक्षारान् दधि क्षीरं घृतं जलम्।।**

(१) आपद्गतोऽपि च – फलेति। वैश्यवृत्त्याऽपि हि ब्राह्मणक्षत्रिययोरापदि जीवतोः फलादीनि श्लोकत्रयपठितान्यविक्रेयाणि। तत्प्रतिषेधात् वैश्यस्यैतान्यनिषिद्धानीति गम्यते। फलानि आम्रादीनि। उपलाः पाषाणशिलादयः पद्मरागादयश्च। क्षौमम् अतसीमयं गोण्यादि। सोमादीनि प्रसिद्धानि। वीरुध आरण्या ओषधयः। अपूपा मण्डकाः। तिलादीनि स्पष्टानि। जलम् आधारस्थमुद्धृतं वा। मूल्येन तु यदुदकाहरणं सस्यप्रसेचनाय वप्रमापाद्यार्पणं तदुदकविक्रयत्वेन क्रियान्तरार्थत्वान्नाऽऽशङ्कनीयम्। विश्व.

(२) वैश्यवृत्त्याऽपि जीवतो ब्राह्मणस्य यदपणनीयं तदाह – फलेति। नो विक्रीणीतेति प्रत्येकमभिसंबध्यते।

---

§ अप., गृक., गृर., मपा., दीक., मर., वीमि., आन. मितागतम्।

(१) **यास्मृ.** ३।३६; **अप.** ३।३५ रान्दधि क्षीरं घृ (रान्दधिक्षीरघृ); **गृक.** २०० क्षारान्द (क्षारद) रं घृतं (रघृतं); **स्मृच.** २।४७७ क्षारान्दधि क्षीरं घृ (क्षौद्रदधिक्षीरघृ); **गृर.** ४३५; **पमा.** १।४२१; **मर.** १८१ घृतं जलम् (जलं घृतम्); **निप्र.** २।३१४ फलोपल (फलौषध) पू.; **मुक्ता.** ६३ वीरुधः (वीरुधाम्); **संम.** ७८ फलो (पलो) सोम (सौम) दधि क्षी (दधिक्षी); **आन.** ६३४ क्षारान्द (क्षारद); **इन्दु.** २००.

फलानि कदलीफलादीनि बदरेङ्गुदव्यतिरिक्तानि। यथाऽऽह नारदः – 'स्वयंशीर्णानि पर्णानि फलानां बदरेङ्गुदे। रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतं भवेत्।।' इति। उपलं मणिमाणिक्याद्यश्ममात्रम्। क्षौमम् अतसीसूत्रमयं वस्त्रम्। क्षौमग्रहणं तान्तवादेरुपलक्षणम्। यथाऽऽह मनुः – 'सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च। अपि चेत्स्युररक्तानि फलमूले तथौषधीः।।' (मस्मृ. १०।८७) इति। सोमः लताविशेषः। मनुष्यपदेन अविशेषात्स्त्रीपुंनपुंसकानां ग्रहणम्। अपूपं मण्डकादि भक्ष्यमात्रम्। वीरुधः वेत्रामृतादिलताः। तिलाः प्रसिद्धाः। ओदनग्रहणं भोज्यमात्रोपलक्षणम्। रसाः गुडेक्षुरसशर्करादयः। तथा च मनुः – 'क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान्।' (मस्मृ. १०।८८) इति। क्षाराः यवक्षारादयः। दधिक्षीरयोर्ग्रहणं मस्तुपिण्डकिलाटकूर्चिकादीनां तद्विकाराणामुपलक्षणम्, 'क्षीरं सविकारम्' (गौध. ७।११) इति गौतमस्मरणात्। घृतग्रहणं तैलादिस्नेहमात्रोपलक्षणम्, जलं प्रसिद्धम्। † मिता.

(३) अपूपा उण्डेरकाः। वीरुधः गुल्मेभ्यो ह्रसीयांसः स्थावरविशेषाः। ‡अप.

(४) उपलः अत्र मणिः। अश्मशब्दश्चाग्रे तदन्यपरः। ‡ गृर. ४३५

**'शस्त्रासवमधूच्छिष्टं मधु लाक्षा च बर्हिषः।**
**मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितीः।।**

(१) शस्त्राणि खड्गादीनि। आसवः खर्जूरादिरसः। रसत्वेन च निषिद्धस्य पुनर्वचनं शब्दान्तराभिधेयत्वात्। प्रायश्चित्तविशेषार्थं वेति। एतदेव च युक्ततरम्, अर्थानुसारित्वात् प्रतिषेधस्य। मधु मद्यम्। उच्छिष्टं प्रसिद्धम्। मधु माक्षिकं मादनं वा। मधूच्छिष्टमुच्यते(?)। अथशब्दोऽभिधेयान्यत्वप्रतिपत्त्यर्थः। बर्हिष इति तु षष्ठ्यन्तनिर्देशो व्यत्ययप्रतिपत्त्यर्थः। ततश्च तृणमात्रवचनोऽपि बर्हिःशब्दः संस्कृतत्वानुसारेणाशेषस्रुगादियज्ञसाधनप्रतिषेधार्थः। मृदादीनि प्रसिद्धानि। जलव्याख्यानवच्च योजना। अर्थान्तरत्वाच्च भूमेर्न दोषः। प्रकृतिविकारयोश्चात्र यावदुक्तोपादानमेव, क्षीरतक्रयोः पृथग्वचनात्। विषैरका विषमुदकं तत्प्रभवा मत्स्यादयः। विश्व.

(२) शस्त्रं खड्गादि। आसवग्रहणं मद्यमात्रोपलक्षणम्। मधूच्छिष्टं सिक्थकम्। मधु क्षौद्रम्। लाक्षा जतु। बर्हिषः कुशाः। मृत् प्रसिद्धा। चर्म अजिनम्। पुष्पं प्रसिद्धम्। अजलोमकृतः कम्बलः कुतपः। केशाः चमर्यादिसंबद्धाः। तक्रम् उदश्वित्। विषं शृङ्ग्यादि। क्षितिः भूमिः, 'नित्यं भूमिव्रीहियवाजाव्यश्वर्षभधेन्वनुडुहश्चैके' इति सुमन्तुस्मरणात्। $ मिता.

(३) कुतपः नेपालकम्बलः। * गृर. ४३५

**'कौशेयनीललवणमांसैकशफसीसकान्।**
**शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च।।**

(१) कौशेयं त्रसरीमयम्। नीली गुलिका वस्त्राद्यनुप्रविष्टा केवला वा। लवणमांसादीनि प्रसिद्धानि। एकशफाः एकखुरा अश्वादयः। हेतवः वधसाधनानि विषादीनि। शाकानामन्यत्र विक्रयोपदेशादिह नालिकादीन्यभक्ष्याणि प्रत्येतव्यानि। आर्द्रौषधयस्त्वलूनाः क्षितिस्थाः। परशस्त्राद्युपहतास्तु न

---

† गृक., स्मृच., दीक., मर., वीमि. मितागतम्।

‡ शेषं मितागतम्।

(१) **यास्मृ.** ३।३७; **विश्व.** लाक्षा च (लाक्षाऽथ) षक्षितीः (षैरकान्); **अप.** ३।३६ ष्टं मधु लाक्षा च ब (ष्टमधुलाक्षाः सब); **गृक.** २०० पूर्वार्धे (शस्त्रासवं मधूच्छिष्टं मधुलाक्षाश्मबर्हिषः); **स्मृच.** २।४७७; **ममु.** १०।८८ (सघ्रामरमधूच्छिष्टम्) एतावदेव; **गृर.** ४३५ वम (वं म) लाक्षा च (लाक्षाऽश्म) च्चर्मपु (च्चर्म पु); **पमा.** १।४२२ पूर्वार्धे (वसारसमधूच्छिष्टमधुलाक्षाः सबर्हिषः); **दीक.** अपवत्; **मर.** १८१ पूर्वार्धे (शस्त्रासवमधूच्छिष्टमधुलाक्षाप्य (?श्म) बर्हिषः); **निप्र.** २।३१४ उत्तरार्धे (तथा मृच्चर्मशुष्काणि केशतक्रविषक्षितीः) उत्त.; **मुक्ता.** ६३; **संम.** ७८ शस्त्रा (रसा) शेषम् अपवत्; **आन.** ६३४-६३५ वम (वं म) षक्षितीः (षं क्षितिः); **इन्दु.** २०० अपवत्.

$ वीमि. मितावत्। अप., स्मृच., मर., आन. मितागतम्।

* दीक. गृरवत् मितागतं च।

(१) **यास्मृ.** ३।३८; **विश्व.** नील (नीली) सीसकान् (हेतवः) पशु (तूल); **अप.** ३।३७ नील (नीली); **गृक.** २०१ वणमां (वणं मां) सकान् (सकम्) शाकार्द्रौ (शाकान्यौ); **स्मृच.** २।४७७ अपवत्; **गृर.** ४३५ सीसकान् (शशिकान्) शाकार्द्रौ (शाकान्यौ); **पमा.** १।४२२; **मर.** १८१ सीसकान् (सीसकाः) गन्धांस्त (गन्धास्त); **निप्र.** २।३१४ पशुगन्धां (पशून्पक्षी) उत्त.; **मुक्ता.** ६३ यनील (यं तैल); **संम.** ७८ अपवत्; **आन.** ६३५ यनील (यतैल) द्रौषधि (द्यौषध); **इन्दु.** २०० अपवत्.

प्रतिषिध्यन्ते। पिण्याकः खलिः। तूलं शल्मल्यादिप्रभवम्। गन्धाः कर्पूरादयः। तथाशब्दः स्मृत्यन्तरोक्तशाणाद्यर्थः। विश्व.

(२) कौशेयं कोशप्रभवं वसनम्। नीलं नीलीरसम्। लवणग्रहणेनैव बिडसौवर्चलसैन्धवसामुद्रसोमककृत्रिमाण्यविशेषेण गृह्यन्ते। मांसं प्रसिद्धम्। एकशफाः हयादयः। सीसग्रहणं लोहमात्रोपलक्षणम्। शाकं सर्वमविशेषात्। ओषधयः फलपाकान्ताः। आर्द्रौषधय इति विशेषोपादानाच्छुष्केषु न दोषः। पिण्याकः प्रसिद्धः। पशवः आरण्याः, 'आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च।' (मस्मृ. १०।८९) इति मनुस्मरणात्। गन्धाः चन्दनागुरुप्रभृतयः। मिता.

(३) कौशेयं त्रसरीमयम्। नीली रञ्जनद्रव्यविशेषः। सीसकं नागम्। आर्द्रं शृङ्गवेरम्। ओषधयः व्रीहियवाद्याः। पिण्याकम् उद्धृतस्नेहतिलपिण्डः। ¶ अप.

(४) पशवः आरण्या ग्राम्याश्च। ¶ स्मृच. २।४७८

(५) रसत्वेन निषेधे सिद्धे पुनः लवणनिषेधो दोषातिशयज्ञापनार्थः। + दीक.

(६) आर्द्रा ओषधयः धान्यस्तम्बादयः। ...तथाशब्दचकाराभ्यां रक्तवस्त्रतैलादीनां समुच्चयः। तदाह मनुः- 'सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च। अपि चेत्स्युररक्तानि फलमूले तथौषधीः।।' (मस्मृ. १०।८७), तथा 'अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः। क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान्।।' (मस्मृ. १०।८८) इत्यादि। एवकारो धर्मार्थमित्यत्रान्वितः। # वीमि.

**'वैश्यवृत्त्याऽपि जीवन्नो विक्रीणीत कदाचन।**
**धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः।।**

¶ शेषं मितागतम्।
+ शेषं विश्व-मिता-अपगतम्।
# शेषं मिता-अपगतम्।

(१) **यास्मृ.** ३।३९; **विश्व.** जीवन्नो (संजीवन्) कदाचन (न कर्हिचित्);**अप.** ३।३८; **गृक.** २०१ जीवन्नो (जीवंस्तु) कदाचन (न जातुचित्) पू.; **स्मृच.** २।४७७ पू. : २।४८१ उत्त.; **गृर.** ४३५ सर्वं गृकवत्; **पमा.** १।४२२ पू. : १।४३१ उत्त.; **आपा.** १४५ उत्त.; **मर.** १८१ पू.; **निप्र.** २।३१४ सर्वं गृकवत्; **मुक्ता.** ६३;

(१) तिलास्त्ववैश्यवृत्तिस्थेनापि धर्मार्थं स्वकृष्याद्युत्पन्ना विक्रेयाः धान्यान्तरपरिवर्तनेन वा वैश्यस्यापि च। अन्यथा तिलविक्रये प्रत्यवायः। तथा चोक्तम् – 'भोजनाभ्यञ्जनाद्दानाद्योऽन्यत्र कुरुते तिलैः। कृमीभूतः स विष्ठायां पितृभिः सह मज्जति।।' (मस्मृ. १०।९१) इति, 'कामं वा स्वयं कृष्योत्पाद्य तिला विक्रीणीयात्' इति वैश्यस्य। विश्व.

(२) सर्वानेतान्वैश्यवृत्त्या जीवन्ब्राह्मणः कदाचिदपि न विक्रीणीत। क्षत्रियादेस्तु न दोषः। अत एव नारदेन 'वैश्यवृत्तावविक्रेयं ब्राह्मणस्य पयो दधि' इति ब्राह्मणग्रहणं कृतम्। प्रतिप्रसवमाह – धर्मार्थमिति। यद्यावश्यकाः पाकयज्ञादिधर्माः स्वसाधनव्रीह्यादिधान्याभावे न निष्पद्यन्ते तर्हि धान्येन तिला विक्रयं नेयाः। तत्समाः द्रोणपरिमिता द्रोणपरिमितेनेत्येवं तेन धान्येन समाः। तथा च मनुः – 'काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः। विक्रीणीत तिलाञ्शुद्धान्धर्मार्थमचिरस्थितान्।।' (मस्मृ. १०।९०) इति। धर्मग्रहणमावश्यकभेषजाद्युपलक्षणम्। अत एव नारदः– 'अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च। यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः।।' इति। यद्यन्यथा विक्रीणीते तर्हि दोषः, 'भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः। कृमिर्भूत्वा श्वविष्ठायां पितृभिः सह मज्जति।।' (मस्मृ. १०।९१) इति मनुस्मरणात्। सजातीयैः पुनर्विनिमयो भवत्येव। 'रसा रसैर्निमातव्या न त्वेव लवणं रसैः। कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः।।' (मस्मृ. १०।९४) इति। कृतान्नं सिद्धान्नम्, तच्च कृतान्नेन परिवर्तनीयम्। 'कृतान्नं चाकृतान्नेन' इति पाठे तु सिद्धमन्नम् अकृतान्नेन तण्डुलादिना परिवर्तनीयमिति। § मिता.

(३) तिलन्यायो रसेऽपि योजनीयः। आपा. १४५

(४) धर्मार्थं धान्यसाध्य(वैश्य ?)कर्मसिद्ध्यर्थं भेषजाद्यर्थं च तिला धान्यसमा विक्रेयाः। दीक.

§ अप. मितागतम्।

**संम.** ७८ पू.; **वीमि.** यं नेयास्ति (यस्तेषां ति); **आन.** ६३५ र्थं विक्रयं (र्थविक्रये); **इन्दु.** २०० उत्तरार्धं किंचिद्व्यवधानेन.

(५) वैश्यवृत्त्या जीवन्नपि ब्राह्मणः फलादीनि न विक्रीणीतेत्युत्सर्गः। यतो लाक्षादीनि विक्रये कृते तस्य पातकराणि पयःप्रभृतीनि च शूद्रत्वकराणि विक्रये सति भवन्ति। अत्रापवादः – फलादीनां धर्मसाधनीभूतद्रव्य-संपादनार्थं विक्रयः अपापः। तत्रैव तिला धान्येनैव विक्रेयाः, न तु रजतादिना। तत्समाः धान्यपरिमाणाः, न तु न्यूनाधिक-परिमाणाः। वीमि.

**'लाक्षालवणमांसानि पतनीयानि विक्रये।**
**पयो दधि च मद्यं च हीनवर्णकराणि तु।।**

(१) अपि च–लवणमिति। कथं तर्हि शुनःशेपादिविक्रयः श्रुतेः(? यश्रुतिः)? प्रतिषिद्धत्वादेव पित्रादिनिन्दाद्वारेण शुनःशेपस्य प्रशंसार्थम्। यद्वा सर्वथाऽप्यापदि स्वप्राणपरि-रक्षणार्थमित्यर्थः। विश्व.

(२) पूर्वोक्तनिषिद्धातिक्रमे दोषमाह – लाक्षेति। लाक्षा-लवणमांसानि विक्रीयमाणानि सद्यःपतनीयानि द्विजाति-कर्महानिकराणि, पयःप्रभृतीनि तु हीनवर्णकराणि शूद्र-तुल्यत्वापादकानि। एतद्व्यतिरिक्तापण्यविक्रये वैश्य-तुल्यता। यथाऽऽह मनुः – 'सद्यः पतति मांसेन लाक्षया लवणेन च। त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्।। इतरेषामपण्यानां विक्रयादिह कामतः। ब्राह्मणः सप्तरात्रेण वैश्यभावं च गच्छति।।' (मस्मृ. १०।९२-९३) इति।

‡ मिता.

(३) पयःप्रभृतीनि तु हीनवर्णकराणि भवन्ति। शूद्रत्वं वैश्यत्वं वाऽऽपादयन्तीत्यर्थः। † अप.

(४) मद्यं चेति चकारेण कथितषट्कातिरिक्तफलादि-ग्रहणम्। तद्विक्रये वैश्यत्वापादनं ब्राह्मणस्येति चरमचकारेण समुच्चीयते। वीमि.

‡ स्मृच., पमा., दीक., निप्र. मितागतम्।

† शेषं मितागतम्।

(१) **यास्मृ.** ३।४०; **विश्व.** प्रथमचरणे (लवणं तनया लाक्षा) **अप.** ३।३९; **स्मृच.** २।४७९; **पमा.** १।४२२ पत (वर्ज्य) णि तु (णि च); **मर.** १८३; **निप्र.** २।३१३ णि तु (णि च); **मुक्ता.** ६३ पयो (यवो); **वीमि.** निप्रवत्; **आन.** ६३५ मुक्तावत्.

अत्यन्तापदि ब्राह्मणस्य सर्वतः
प्रतिग्रहभोजनयोरनुज्ञा

*** '(१)आपद्गतः संप्रगृह्णन् भुञ्जानो वा यतस्ततः।**
**न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः।।**

(१) तदेव स्पष्टयति – आपद्गतेति। यथैव ज्वलनः चण्डालादिगृहेष्वपि वर्तमानः, अर्को वा सर्वत्र साम्येन वर्तमानो निर्दोषः, एवं ब्राह्मणोऽपि जपादिभिरापद्गतः प्रतिलभ्य शरीरमा(? म)र्जितदुरितक्षपणसमर्थ इत्यादि-त्यवदेव यदृच्छाप्रचारित्वमविरुद्धम्। विश्व.

(२) किंच, यस्त्वधनोऽवसन्नकुटुम्बतया आपद्गतोऽपि क्षत्रवृत्तिं वैश्यवृत्तिं वा न प्रविविक्षति स यतस्ततः हीनहीन-तरहीनतमेभ्यः प्रतिगृह्णन् तदन्नं भुञ्जानोऽपि वा एनसा पापेन न लिप्यते। यतस्तस्यामापदवस्थायामसत्प्रतिग्रहा-दावधिकारित्वेन ज्वलनार्कसमः। यथा ज्वलनः अर्कश्च हीनसंस्कारेऽपि न दुष्यति तथाऽयमापद्गतोऽपि न दुष्यती-त्येतावता तत्साम्यम्। एवं च वदता आपद्गतस्य परधर्मा-श्रयणाद्विगुणमपि स्वधर्मानुष्ठानमेव मुख्यमिति दर्शितं भवति। तथा च मनुः – 'वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्माश्रयाद्विप्रः सद्यः पतति जातितः।।' (मस्मृ. १०।९७) इति। मिता.

(३) अत्र च संप्रेत्युपसर्गद्वयप्रयोगो याजनाध्यापनप्रति-ग्रहाणां स्वीकारार्थः। तेन क्षत्रियवैश्यावपि याज्यावध्याप्यौ च। प्रतिग्रहस्तु शूद्रादप्यनुज्ञातः। † अप.

(४) आपदं प्राप्तो यतस्ततः पतितेतरस्मात्प्रतिगृह्णन् अन्नाभावात् प्राणसंशयं प्राप्तो निन्दितस्याप्यन्नं भुञ्जानो न पापेन लिप्येत। यस्मात्पापेन्धनदाहकत्वाज्ज्वलनार्कसमः स इति। दीक.

* संमव्याख्यानं 'क्षात्रेण' इति वचने द्रष्टव्यम्।

† शेषं मितागतम्।

(१) **यास्मृ.** ३।४१; **समु.** ४९ नो वा (नोऽपि) लिप्येतैनसा (लिप्यते स पापेन) अत्र ग्रन्थः शोधितः, तत् शोधनमसमीचीनमिति भाति; **अप.** ३।४० नो वा (नोऽपि); **स्मृच.** २।४६५; **पमा.** १।१८५ मो हि सः (मप्रभः) : २।३२५-३२६ नो वा (नोऽपि) न लिप्येतै (लिप्यते नै); **मर.** १८९ अपवत्; **निप्र.** २।३३० अपवत्; **संम.** ७९ (=); **वीमि.** अपवत्.

(५) यदि तु क्षत्रियवृत्त्या वैश्यवृत्त्या वा जीवनं न संभवति। तदा विप्र आपद्गतः सन् यतस्ततः हीनहीनतरेभ्यः पतितभिन्नेभ्यः सम्यक् वृत्त्युपयोग्यधिकधनवैमुख्ये( ? ख्येन) प्रगृह्णन् धनान्नादिकं भुञ्जानो वाऽन्नं न एनसा पापेन लिप्यते। हि यतः स विप्रः अग्निसूर्यवद्धीनसंकरोऽप्यदुष्ट एव तिष्ठति। वीमि.

आपदि जीवनोपायाः

**[१]कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः।**
**सेवाऽनूपं नृपो भैक्षमापत्तौ जीवनानि तु।।**

(१) यतश्चैतदेवमतः – कृषिरिति। कृष्यादीनि यथासंभवमापदो निस्तरणहेतुत्वेन एकादश जीवनानि। एतानि चोदाहरणार्थत्वेन, सर्वथा तु न तदस्ति यदापद्यकर्तव्यमित्यभिप्रायः। कृषिः प्रसिद्धा। शिल्पं चित्रकर्मादि। भृतिः मासादिवृत्त्या परकीयकर्मकरणम्। विद्या मूल्येनाध्यापनम्। कुसीदं प्रायोग्यम्। शकटं मूल्येन शकटवाहनम्। गिरिः पर्वतः। तदीयतृणकाष्ठादिविक्रयः तदुपजीवनम्। सेवा प्रसिद्धा। अनूपः नद्यादिकच्छः। तदुत्पन्नशाकादिविक्रयः तदुपजीवनम्। नृपः राजा। तत्प्रतिग्रहानुजीवनम्। भैक्षं कृताकृतान्नादिभेदेन द्विप्रकारम्। विश्व.

(२) किंच, आपत्तौ जीवनानीति विशेषणात्कृष्यादीनां मध्ये अनापदवस्थायां यस्य या वृत्तिः प्रतिषिद्धा तस्य सा वृत्तिरनेनाभ्यनुज्ञायते। यथाऽऽपदि वैश्यवृत्तिः स्वयंकृता कृषिर्विप्रक्षत्रिययोरभ्यनुज्ञायते। एवं शिल्पादीन्यप्यस्याभ्यनुज्ञायन्ते। शिल्पं सूपकरणादि। भृतिः प्रेष्यत्वम्। विद्या भृतकाध्यापकत्वाद्या। कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः। तत् स्वयंकृतमभ्यनुज्ञायते। शकटं भाटकेन धान्यादिवहनद्वारेण जीवनहेतुः। गिरिः तद्गततृणेन्धनद्वारेण जीवनम्। सेवा परचित्तानुर्वतनम्। अनूपं प्रचुरतृणवृक्षजलप्रायः प्रदेशः। तथा नृपः नृपयाचनम्। भैक्षं स्नातकस्यापि। एतान्यापत्तौ जीवनानि। तथा च मनुः – 'विद्याः शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः। गिरिर्भैक्षं कुसीदं च दश जीवनहेतवः।।' (मस्मृ. १०।११६) इति। § मिता.

(३) अपरामप्यापद्वृत्तिमाह – कृषिरिति। कृष्यादीन्यापद्विषवे जीवनानि भवन्ति। जीव्यत एभिरिति जीवनानि। कृषिः प्रसिद्धा। शिल्पं वस्त्रालंकारसूपगानगृहनिर्माणादिकौशलम्। शकटं प्रसिद्धम्, तेन च तन्निमित्तं भाण्डादिप्रापणं लक्ष्यते। गिरिः पर्वतः, तेनापि तत्समुत्थकाष्ठादिविक्रिया। सेवा प्रसिद्धा। बहुवृक्षजलो देशोऽनूपः। तेन च तत्रत्यकन्दमूलफलान्युपजीवनं लक्ष्यते। नृपः प्रसिद्धः तेन च तदुपकारकत्वनिमित्ता वृत्तिरुपलक्ष्यते। भैक्षं प्रसिद्धम्। अत्र कृषिग्रहणं प्रदर्शनार्थम्। तेन पाशुपाल्यवाणिज्ययोरपि परिग्रहः। तथा च मनुः – 'विद्या शिल्पं भृतिः सेवा गौरक्ष्यं विपणिः कृषिः। गिरिर्भैक्षं कुसीदं च दश जीवनहेतवः।।' (मस्मृ. १०।११६)। यद्यपि 'क्षात्रेण कर्मणा जीवेद्विशां वाऽऽऽप्यापदि द्विजः।' (यास्मृ. ३।३५) इत्यनेनैव कृष्याद्यनुग्रहः सिद्धः तथाऽपि स्वयंकृषिः प्रतिषिद्धा, फलादीनां च विक्रयः, इति तयोरप्यत्यन्तापदि प्रतिप्रसवार्थमेतद्वचनम्। अप.

(४) शिल्पं चित्रादिकर्म। विद्या वेदव्यतिरिक्ता गारुडादिविद्या। शकटं धान्यादिवहनद्वारेण। गिरिः गैरिकाद्याहरणेन। अनूपं शालूकमूलाद्याहरणेन। भिक्षा व्याध्याद्युपहतस्य एकार्थव्यतिरेकेण( ?)। दीक.

(५) कृष्यादीनां मध्ये अनापदि यस्य या वृत्तिः प्रतिषिद्धा तस्याऽऽपत्तौ विपत्काले मासं जीवनोपाय इत्यर्थः। पूर्वं वैश्यवृत्तिशब्देन वाणिज्यमात्रमभिहितमतः कृषिरिहाभिहिता। भृतिः व्यवस्थापितवेतनेन परप्रैष्यत्वम्। गिरिः विक्रयार्थाहरणीयतृणादेराधारः, सेवा वेतनव्यवस्थां विना परचित्तानुवर्तनम्, अनूपं प्रचुरतृणजलवृक्षमयो गवादिपालनोपयोगी देशः, नृपः निन्दितप्रतिग्रहदानदाता, भैक्षं भिक्षासमूहः क्षत्रियादेरपि। चकारेण शाकिन्यादिसमुच्चयः। तदाह छागलेयः – 'शकटः शाकिनी भावो जालमस्यन्दनं वनम्। अनूपं पर्वतो राजा दुर्भिक्षे नव वृत्तयः।।'। शाकिनी शाकाद्युत्पत्तिहेतुर्वाटिका। अस्यन्दनं स्वस्थानापरित्यागः।

« वीमि.

---

(१) **यास्मृ.** ३।४२; **विश्व.** नूपं (नूपो); **अप.** ३।४१ विश्ववत्; **गृक.** २२२ भृति (धृति) भैक्ष (भैक्ष्य); **मवि.** ४।९ पो भैक्ष (पे भैक्ष्य) उत्त.; **स्मृच.** २।४७५ विश्ववत्; **गृर.** ४४९ कुसी (कुशी) शेषं गृकवत्; **मर.** १८० कुसी (कुशी); **मुक्ता.** ६३ तृतीयचरणे (सेवाऽनूपो भैक्षचर्य); **वीमि.** तु (च); **आन.** ६३५ तृतीयचरणे (सेवाऽनूपो भैक्षचर्या); **इन्दु.** १९९.

§ स्मृच., मर., मुक्ता., इन्दु. मितागतम्।

« शेषं मितागतम्।

ब्राह्मणस्य धान्य-
स्तेयापवादः

[1]बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्।
प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः।।

(१) दुस्तरत्वादेव चाऽऽपदाम् – बुभुक्षित इति। स्वरूप-परिमाणाद्यविप्रतिपत्त्येत्यर्थः। विश्व.

(२) यदा कृष्यादीनामपि जीवनहेतूनामसंभवस्तदा कथं जीवनम्? इत्यत आह – बुभुक्षित इति। धान्याभावेन त्रिरात्रं बुभुक्षितोऽनश्नन् स्थित्वा अब्राह्मणात् शूद्रात्, तदभावे वैश्यात्, तदभावे क्षत्रियाद्वा हीनकर्मण एकाहपर्याप्तं धान्य-माहरेत्। यथाऽऽह मनुः – 'तथैव सप्तमे भक्ते भक्तानि षडनश्नता। अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः।।' (मस्मृ. ११।१६) इति। तथा च प्रतिग्रहोत्तरकालं यदपहृतं तत् धर्मतः यथावृत्तम् आख्येयम्, यदि नाष्टिकेन स्वामिना 'त्वयेदं किं नामापहृतम्?' इत्यभियुज्यते। यथाऽऽह मनुः – 'खलात्क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते। आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति।।' (मस्मृ. ११।१७)। मिता.

(३) हरेत् चोरयेत्। तच्च धान्यं प्रतिगृह्य उपादाय 'किमिति त्वयैतदस्मदीयं धान्यं गृहीतम्?' इत्याक्षिप्तेन धर्मतः तथ्यमेव तस्य कथनीयम् – 'मया त्रिरात्रमभुञ्जानेन स्थितवता प्राणधारणार्थं भवदीयं धान्यमपहृतम्' इति। ‡ अप.

(४) अब्राह्मणादिति शूद्रात् हरेत् तदलाभे क्षत्रियात् इति निबन्धकृतः। संम. ७८

(५) धर्मतः सत्यानुसारेणाऽऽख्येयम् 'क्षुधा पीडितेन मयाऽमुकस्य धान्यं गृहीतम्' इति, यदि राजादिनाऽभियोगः क्रियते। ‡ वीमि.

‡ शेषं मितागतम्।

(१) **यास्मृ.** ३।४३; **विश्व.** धान्य (धन); **अप.** ३।४२ तदाख्ये (तथाऽऽख्ये); **गृक.** २२६; **स्मृच.** २।४६७ पू.; **गृर.** ४५१ स्थित्वा (हित्वा); **मर.** १८८ अशुद्धः पाठः; **निप्र.** २।३२९ (अब्राह्मणात्) एतावदेव; **चमव्या.** ५४ पू. स्मृतिः; **सिन्धु.** १३०९ बुभुक्षित (उपोषित) (=) पू.; **संम.** ७८; **सम.** १०९ पू. (=); **पुम.** ४६९ पू. (=).

स्तेयनिषेधः

[1]आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु।
नश्येयुः पात्रदौर्बल्यात्ते रसास्तच्च भाजनम्।।
एवं हिरण्यं गामश्वं वस्त्रं छत्रं तिलादिकम्।
अपृष्ट्वा प्रतिगृह्णानो भस्मीभवति काष्ठवत्।।

## वृद्धयाज्ञवल्क्यः

जातकर्मणि प्रतिग्रहानुज्ञा
पक्वान्नवर्जम्

[2]कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः।
हिरण्यभूगवाश्वादिधान्यशय्यासनादिषु।।
तत्र सर्वं प्रतिग्राह्यं पक्वान्नं तु विसर्जयेत्।।

## नारदः

धनस्य शुक्लशबलकृष्णरूपास्त्रयो भेदाः
प्रत्येकं सप्तभेदाः, फलानां
धनानुरूपता

[3]धनमूलाः क्रियाः सर्वा यत्नस्तत्साधने मतः।
वर्धनं रक्षणं भोग इति तस्य विधिः क्रमात्।।

धनाश्रयत्वात् विवादस्य धनार्जनविधिमेव तावत् प्रस्तौति, धनगुणं धनगतिं च – धनमूला इति। धनमूलाः धनाश्रयाः सर्वाः क्रियाः दृष्टादृष्टसुखदुःखोपभोगादिक्रियाः। तस्मात् पुरुषस्य यत्नः सर्वा प्रवृत्तिः तस्य धनस्य साधने। निमित्त-सप्तमी। तत्सिद्धिनिमित्ता। 'केशेषु चमरीं हन्ति' इति यथा। तस्य च त्रिविधा गतिः – वर्धनम् उपचयः, रक्षणं पालनम्, भोगः उपभोगः। इतिशब्दः परिच्छेदार्थः। विधिः विधीयत इति त्रिप्रकारं कर्तव्यं क्रमात् पूर्वं वर्धनम्, वृद्धस्य नाशो मा भूदिति रक्षणम्, रक्षितस्य फलमुपभोग इति। नाभा.

(१) **स्मृच.** २।४६९.

(२) **आन.** ४२२ दिधान्यशय्या (जवासशय्या) पक्वा (कृता) विसर्ज (विवर्ज); **संग.** ४४५.

(३) **नासं.** २।३९; **गृक.** २६० त्साधने (त्स्यार्जने) वर्धनं रक्षणं भोग इति त (रक्षणं वर्धनं भोगस्त्रयस्त); **गृर.** ४७१ त्साधने (त्स्यार्जने) वर्धनं रक्षणं (रक्षणं वर्धनं); **निप्र.** २।२४५ गृरवत्; **मुक्ता.** ५५ द्वितीयचरणे (अतस्तस्यार्जनं मतम्); **आन.** ६२१ भोग इ (दानमि) शेषं मुक्तावत्.

**[1]तत् पुनस्त्रिविधं ज्ञेयं शुक्लं शबलमेव च।**
**कृष्णं च तस्य विज्ञेयः प्रभेदः सप्तधा पुनः।।**

तत् पुनर्धनं त्रिविधं शुक्लं शबलं कृष्णमिति। तस्य त्रिविधस्यैकैकस्य प्रभेदः सप्तधा। नाभा.

**[2]श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम्।**
**धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः।।**

(१) श्रुतेनोपात्तम् अध्ययनादिना लब्धम्। शौर्येण जयादिना। तपसा जपहोमदेवताराधनादिना। कन्यागतं कन्यया सह श्वशुरादेर्लब्धम्। शिष्यागतं गुरुदक्षिणादि। याज्यागतम् आर्त्विज्यलब्धम्। अन्वयागतं दायलब्धम्। उदयः फलम्। तद्विधः शुद्धः। † गृक. २६१

(२) कन्या शुल्कनिमित्तम्। यस्य यद् विहितं तस्य तथा प्राप्तमेव तच्छुक्लमित्युक्तं सप्तप्रकारम्। उदयः फलं तस्य धनस्य तथाविधं शुक्लमेव। शुद्धं धर्मत एवेत्यर्थः। ‡ नाभा.

**[3]कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः।**
**कृतोपकारादाप्तं च शबलं समुदाहृतम्।।**

(१) अनुवृत्तिः सेवा। + गृक. २६१

(२) शुल्कम् आकरादिभ्यो द्रव्यागमः। अनुवृत्तिः सेवा। मुक्ता. ५२

(३) संप्रति शबलं तद्भेदाश्चोच्यन्ते। कुसीदम् अन्यायोद्धृतमर्थप्रयोगः। अल्पं दत्त्वा भूयसो ग्रहणादधर्मानुषक्तम्। कृषिरपि 'भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्' इत्यधर्मानुषक्तत्वात् 'ऋतामृताभ्यां जीवेत' इत्यादिना विहितत्वाच्च शबलम्। वाणिज्यमप्यतिसंधानपरत्वात् 'सत्यानृताभ्याम्' इति विधानाच्च शबलम्। शुल्कमारभटगुल्मादिषु भूताभूतग्रहणाच्छबलम्। शिल्पं कारुकवृत्तिः स्वश्रमफलत्वात् अतिसंधानसंबन्धपरत्वाच्च शबलम्। अनुवृत्तिः सेवा, साऽपि शिल्पवत्। कृतः उपकारः यस्य तत एव चोपकारकरणात् तस्य च विक्रयत्वाच्छबलम्। नाभा.

**[1]पार्श्वकद्यूतदूतार्तप्रतिरूपकसाहसैः।**
**व्याजेनोपार्जितं यच्च तत् कृष्णं समुदाहृतम्।।**

(१) पार्श्विकम् उत्कोचादिलब्धम्। आर्तिः पीडा। प्रतिरूपकं द्रव्याभासाः। साहसं पोतयात्रादि। व्याजोऽत्र द्रव्यान्तरमिश्रीकरणम्। § गृक. २६१

(२) पार्श्वकोपार्जितमुत्कोचादिलब्धम्। तद्ध्युपार्जितम् (?)। परपीडालब्धम्। प्रतिरूपकर्मणि प्रतिरूपादैः प्रतिरूपकरणम् (?)। साहसं स्वप्रमाणयथाङ्गीकारेण(?) पश्यतोहरत्वादिकम्। व्याजः डम्भतपःप्रभृति। मुक्ता. ५२

(३) संप्रत्यशुद्धमुच्यते – पार्श्वकेति। पार्श्वकम् उत्कोचादिनोपात्तम्। द्यूतेनोपात्तं सत्यानृताभ्याम्। दूतं दौत्येनोपात्तम्। आर्तादागतम्। प्रतिरूपकं कूटादिनोपात्तम्। साहसोपात्तं चौर्यादिना। व्याजेन चानृतेन सत्याभासेन। अत्र सर्वत्र प्रतिषिद्धत्वादसत्यातिसंधानसंबन्धाच्च कृष्णमेव। नाभा.

**[2]तेन क्रयो विक्रयश्च दानं ग्रहणमेव च।**
**विविधाश्च प्रयुज्यन्ते क्रियाः संभोग एव च।।**

---

† गृर., निप्र. गृकवत्। मुक्ता., आन. गृकगतम्।

‡ शेषं गृकगतम्।

\+ गृर., निप्र. गृकवत्।

(१) **नासं.** २।४०; **गृक.** २६० शुक्लं (शुद्धं) यः प्रभेदः (यो विभागः); **गृर.** ४७१ गृकवत्; **निप्र.** २।२४५ तत् पुनस्त्रि (यथैतत्त्रि) शेषं गृकवत्; **मुक्ता.** ५२ कृष्णं च (कृष्णं तु) यः प्रभेदः (यो विभागः) (=); **आन.** ६२१-६२२.

(२) **नासं.** २।४१; **गृक.** १६० न्वया (नुपा) उत्तरार्धे (धनं सप्तविधं शुद्धं ज्ञेयमित्यादि सात्त्विकम्।।): २६० शुक्लमुदयोऽप्यस्य (शुद्धमुदयो यस्य); **गृर.** १२६ मुदयोऽप्यस्य (मुद्योगस्तस्य): ४७१ शुक्लमुदयोऽप्यस्य (शुद्धमुदयस्तस्य); **निप्र.** २।२४५ शुक्ल (शुद्ध); **मुक्ता.** ५२ द्वितीयचरणे (याज्यशिष्यान्यथागतम्) योऽप्यस्य (यो यस्य) (=); **आन.** ६२२ कन्या (कृत्य).

(३) **नासं.** २।४२; **गृक.** १५९ शबलं (राजसं), २६०; **गृर.** १२६ गृक. १५९ वत्, ४७२; **निप्र.** २।२४५; **मुक्ता.** ५२ वृत्तिभिः (वृत्तितः) (=); **आन.** ६२२ शुल्क (शिक्य).

§ गृर., निप्र. गृकवत्।

(१) **नासं.** २।४३; **गृक.** १५९ प्रथमचरणे (पार्श्विकद्यूतचौर्यादि): २६० प्रथमचरणे (पार्श्विकद्यूतचौर्यार्ति); **गृर.** १२६ प्रथमचरणे (उत्कोचद्यूतदौत्यार्त): ४७२ गृक. २६० वत्; **निप्र.** २।२४५ प्रथमचरणे (पार्श्विकद्यूतचौरार्ति); **मुक्ता.** ५२ द्यूतदूतार्त (द्यौतचौर्यार्ति) उत्तरार्धे (व्याजेनोपार्जितं यत्तत्सर्वेषां कृष्णमुच्यते।।) (=); **आन.** ६२२ प्रथमचरणे (पार्श्वगद्यूतरोगार्त).

(२) **नासं.** २।४४; **गृक.** २६० युज्यन्ते (वर्तन्ते); **गृर.** ४७२ गृकवत्.

(१) तेन त्रिविधेन। गृक. २६१

(२) तेन त्रिविधेन शुक्लादिना। गृर. ४७२

(३) त्रिप्रकारेणैव धनेन क्रयविक्रयदानग्रहणोपभोगा धनानुरूपाः क्रियन्ते, विविधाश्च क्रियाः। नाभा.

**[१]यथाविधेन द्रव्येण यत्किंचित् कुरुते नरः।**
**तथाविधमवाप्नोति स फलं प्रेत्य चेह च।।**

यथाविधेन द्रव्येण शुक्लेन शबलेन कृष्णेन वा यत्किंचित् कुरुते यजनयाजनादि, तथाविधं तत्प्रकारं धनानुरूपमित्यर्थः। शुक्लेन शुद्धमेव दुःखरहितम्। शबलेन मिश्रम्। कृष्णेन दुःखोदयम्। इहापि तथैव। नाभा.

वर्णसाधारणासाधारणधर्म्यधन-
विवेकः, तद्भिन्नं
धनमधर्म्यम्

**[२]तत् पुनर्द्वादशविधं प्रतिवर्णाश्रयं स्मृतम्।**
**साधारणं स्यात् त्रिविधं शेषं नवविधं स्मृतम्।।**

(१) शेषम् असाधारणम्। # गृक. २६१

(२) एष धर्म्य इष्यते, वचनात् (नासं. २।५१)। तत् पुनर्धर्म्यं धनं द्वादशविधं वर्णं (वर्णं) प्रत्याश्रयात् सर्वेषामेव वर्णानां साधारणवैशेषिकभावेन स्मृतम्। तत्र साधारणं स्यात् त्रिविधं चतुर्णामपि वर्णानाम्। शेषं नवविधं प्रतिवर्णं विभज्यते। नाभा.

**[३]क्रमागतं प्रीतिदायं प्राप्तं च सह भार्यया।**
**अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम्।।**

तत्र साधारणं विशेष्यते – क्रमागतमिति। क्रमागतं पितृपितामहप्राप्तं ग्रामक्षेत्रगृहादि, प्रीतिदायं प्रीतिपूर्वकमागतम्, भार्यया च सह लब्धम् अविशेषेण साधारणं सर्वेषां वर्णानां त्रिविधमित्युक्तम्। नाभा.

**[१]वैशेषिकं धनं ज्ञेयं ब्राह्मणस्य त्रिलक्षणम्।**
**प्रतिग्रहेण लब्धं च याज्यतः शिष्यतस्तथा।।**

यत् प्रतिवर्णं त्रिधा त्रिधा विभक्तं नवविधं तदुच्यते क्रमेण – वैशेषिकमिति। ब्राह्मणस्य प्रतिग्रहाध्यापनयाजनलब्धं वैशेषिकं त्रिविधं प्रत्यात्मिकं धनं साधारणेन सह षड्विधम्। नाभा.

**[२]त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम्।**
**युद्धोपलब्धं कारश्च दण्डश्च व्यवहारतः।।**

(१) कारं करादानप्रभवम्। अप. ३।३४

(२) कारः करः। व्यवहारः न्यायः।
गृक. २६१

(३) करेण लब्धः(? ब्धम्) (कारः?)। कारशब्दः करपरः। व्यवहारतः न्यायात्, तेनार्हो दण्ड इत्यर्थः।
¤ गृर. ४७३

(४) कारः करः। मपा. २१४

(५) क्षत्रियस्यापि त्रिविधं वैशेषिकं धनं युद्धजितम्, जनपदनिबद्धः कारः, व्यवहारतो दण्डः। पूर्वेण सह तथैव षड्विधम्। नाभा.

---

# गृर. गृकवत्।

(१) **नासं.** २।४५; **गृक.** २६०; **गृर.** ४७२; **आन.** ६२२ द्वितीयचरणे (यत्किञ्चिन्न करोत्ययम्) स फलं (तत्फलं).

(२) **नासं.** २।४६; **अप.** ३।३४ पृ. ९२९ स्मृतम् (विदुः) उत्त.; **गृक.** २६०-२६१ यं स्मृ (मात्स्मृ) शेषम् अपवत्; **गृर.** ४७२-४७३ यं स्मृ (यात्स्मृ); **मपा.** २१४ श्रयं स्मृतम् (श्रयान्वितम्) चतुर्थचरणे (विदुस्तत्र क्रमागतम्) भारद्वाजः; **निप्र.** २।२४६ र्णाश्रयं स्मृतम् (र्णतया श्रुतम्) चतुर्थचरणे (विशेषं नवधा विदुः); **सस्मृ.** १५८ सर्वम् अपवत्.

(३) **नासं.** २।४७; **अप.** ३।३४ पृ. ९२९; **गृक.** २६१ दायं (दायः) सर्वेषां वर्णानां (वर्णानां सर्वथा); **गृर.** ४७३ सर्वेषां वर्णानां (वर्णानां सर्वथा); **मपा.** २१४ प्रथमचरणे (प्रतिदानं तथैवात्र) सर्वेषां वर्णानां (वर्णानां सर्वेषां) भारद्वाजः; **निप्र.** २।२४६ दायं (दायः) सर्वेषां वर्णानां (वर्णानां सर्वेषां): २।२४७ सर्वेषां (वर्णानां) चतुर्थचरणवर्जम्, विष्णुनारदौ; **सस्मृ.** १५८ सर्वेषां वर्णानां (वर्णानां सर्वेषां) अशुद्धिबहुलो ग्रन्थः.

¤ निप्र. गृरगतम्।

(१) **नासं.** २।४८; **अप.** ३।३४ पृ. ९२९ ज्ञेयं ब्रा (विद्याद्ब्रा) लब्धं च (यल्लब्धं); **गृक.** २६१ अपवत्; **गृर.** ४७३ अपवत्; **मपा.** २१४ ज्ञेयं ब्रा (विद्याद्ब्रा) लब्धं च (यल्लब्धं) भारद्वाज; **निप्र.** २।२४६ अपवत्; **सस्मृ.** १५८ अपवत्, अशुद्धिबहुलो ग्रन्थः.

(२) **नासं.** २।४९; **अप.** ३।३४ पृ. ९२९ कारश्च (कारं च); **गृक.** २६१ रश्च दण्डश्च (राच्च दण्डाच्च); **गृर.** ४७३ गृकवत्; **मपा.** २१४ गृकवत्, भारद्वाजः; **निप्र.** २।२४६ गृकवत्; **सस्मृ.** १५८ दण्डश्च (दण्डेन) शेषम् अपवत्.

**[1]वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम्।**
**कृषिगोरक्षवाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात्।।**

(१) अनुग्रहात् शुश्रूषानिबन्धनात्। * गृक. २६१

(२) अनुग्रहात् शुश्रूषाहेतुकात्। एतच्च नवविधत्वं द्विजातिरूपवर्णत्रयविषयम्। शूद्रे तु शुश्रूषाजनितानुग्रहादेव लब्धमसाधारणम्। गृर. ४७३

(३) इतरवर्णानुग्रहदानेन शूद्रस्यापि कृषिगोरक्षवाणिज्यैः वैशेषिकं धनं भवतीत्यर्थः। मपा. २१४

(४) वैश्यस्यापि तथैव कृषिगोरक्षवाणिज्यसमुत्थम्। एवमेतस्यापि साधारणेन सह षड्विधम्। शूद्रस्य एभ्यः त्रिभ्यः त्वनुग्रहात्। अनुग्रहलब्धं प्रीतिदाय एवेति नास्य वैशेषिकं धनमस्ति। तस्मात् द्वादशविधमित्युक्तम्। नाभा.

**[2]सर्वेषामेव वर्णानामेष धर्म्यो धनागमः।**
**विपर्ययादधर्म्यः स्यान्न चेदापद्गरीयसी।।**

सर्वग्रहणं शूद्रोपसंग्रहार्थम्। सर्ववर्णानां धर्मादनपेतो यथोक्तो धनागमः। विपर्ययात् अतोऽन्यः। एतेषां संकरेण, सेवाचौर्यबलादिना, अप्रतिग्राह्यायाज्याशिष्येभ्यश्च, कूटयुद्धानिबद्धकरदुर्दृष्टव्यवहारादिना, अयथोक्तकृषिसम्यग्ग्रहणानुचितभागहरणाविक्रेयविक्रयादिना, शूद्रस्यैषां व्याजपरिचरणाननुज्ञातग्रहणादिना अधर्म्यो धनागम इत्यपेक्ष्यते। यद्यापत् गरीयसी न स्यात्। आपदि तु यथाकथंचिज्जीवितव्यम्। आपदित्येव वक्तव्ये गरीयोग्रहणान्नाऽऽत्ममात्रे अजीवनावस्थायामिति। नाभा.

* निप्र. गृकवत्।

(१) **नासं.** २।५०; **अप.** ३।३४ पृ. ९२९ धनं (परं) उत्तरार्धे (कृषिगौरक्ष्यवाणिज्यैः शूद्रस्तेभ्यस्त्वनुग्रहात्।।); **गृक.** २६१ ज्यं शूद्रस्यैभ्यस्त्व (ज्यैः शूद्रस्यापि त्व); **गृर.** ४७३ ज्यं शूद्रस्यैभ्यस्त्व (ज्यैः शूद्रस्यैषाम); **मपा.** २१४ गृकवत्, भारद्वाजः; **निप्र.** २।२४६ गृकवत्; **सस्मृ.** १५८ गृरवत्.

(२) **नासं.** २।५१; **अप.** ३।३४ पृ. ९२९ धर्म्यः (धर्मः); **गृक.** २६१; **गृर.** ४७३; **मपा.** २१४ धर्म्यो (वर्णो) धर्म्यः (धर्मं) भारद्वाजः; **सस्मृ.** १५९ धर्म्यो (धर्मो) अशुद्धः पाठः.

आपदि ब्राह्मणस्य क्षत्रवृत्तिस्तदभावे वैश्यवृत्तिः, ब्राह्मणशूद्रयोः परस्परवृत्तिनिषेधः

**[1]आपत्स्वनन्तरा वृत्तिर्ब्राह्मणस्य विधीयते।**
**वैश्यवृत्तिस्ततश्चोक्ता न जघन्या कथंचन।।**

(१) जघन्या शूद्रवृत्तिः। ¶ अप. ३।३४

(२) अनन्तरा संनिहिता। जघन्या शूद्रवृत्तिः। + गृर. ४२७

(३) आपत्प्रदर्शनार्थमुच्यते – आपत्स्विति। बहुवचननिर्देशान्नैकस्यामापदीति गम्यते। अजीवनावस्थायामित्यर्थः। तथाऽन्यत्राप्युक्तम् – 'अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेयुः' (वाध. २।२२) इति। अनन्तरा ब्राह्मणस्य क्षत्रियवृत्तिः, सा विधीयते। क्षत्रवृत्तिः राजधर्मेषूक्ता। तत इति। तयाऽप्यजीवतो वैश्यवृत्तिरुक्ता। न जघन्या शूद्रवृत्तिः कस्यांचिदापदि। जघन्यशब्दो ब्राह्मणवृत्त्यपेक्षया सर्वासां जघन्यत्वेऽपि सति द्वयोरनुज्ञातत्वात् वैश्यवृत्त्यनन्तरवचनाच्च शूद्रवृत्तिविषयः। नाभा.

**[2]न कथंचन कुर्वीत ब्राह्मणः कर्म वार्षलम्।**
**वृषलः कर्म न ब्राह्मं पतनीयौ हि तौ तयोः।।**

(१) वृषलस्येदं वार्षलम्। पतनीये पतनकर्तृभूते। 'कृत्यल्युटो बहुलम्' (पासू. ३।३।११३) इत्यनेन कर्तरि अनीयप्रत्ययः। गृर. ४२७

(२) *ब्राह्मणस्य वृषलवृत्तिनिषेधार्थं 'न जघन्या' इति निषिद्धोऽर्थः पूर्वेणार्धेनानूद्यते। उत्कृष्टस्य निकृष्टकर्म-

¶ मर. अपवत्।
+ इन्दु. गृरवत्।
* प्रामादिकोऽयं ग्रन्थः, यथाश्रुतार्थस्यानुपपन्नत्वात्। न हि तन्निषेधार्थं तन्निषेधस्यैवानुवाद उपपद्यते, एकत्रापूर्वत्वानुवादत्वयोर्विरोधात्। 'ब्राह्मणस्य वृषलवृत्तिनिषेधार्थम्' इत्यनेन ब्राह्मणस्य वृषलवृत्तिनिषेधस्यापूर्वत्वमुक्त्वा तद्विरुद्धं तस्यैवानुवादत्वमत्रोक्तम्।

(१) **नासं.** २।५२; **अप.** ३।३४ तश्चो (था चो); **गृक.** १८८ पत्स्व (पद्य) कथं (कदा); **गृर.** ४२७; **दीक.** ३।३५ गृकवत्; **मर.** १८० पत्स्व (पद्य); **इन्दु.** १९९ मरवत्.

(२) **नासं.** २।५३; **अप.** ३।३४ कर्म न (कर्म वा) यौ हि तौ (ये हि ते); **गृक.** १८८ अपवत्; **गृर.** ४२७ न ब्राह्मं (ब्राह्मण्यं) यौ हि तौ त (ये हि चैत).

प्रतिषेधात् निकृष्टस्योत्कृष्टकर्म गुणवत् स्यादिति तन्निवृत्त्यर्थमाह – न केनचिदपि प्रकारेण शौद्रं कर्म ब्राह्मणः कुर्वीत शुश्रूषादि, शूद्रोऽपि तथैव ब्राह्मणकर्माध्यापनादि। यथा ब्राह्मणस्य शूद्रकर्म पतनीयम्, तथा शूद्रस्यापि ब्राह्मणकर्म। शूद्रस्य ब्राह्मणकर्मप्रतिषेधात् क्षत्रियवैश्ययोरापदि अध्यापनाद्यस्तीति गम्यते। तथा च श्रुतावप्युक्तम् – 'सह (? स ह) श्वो भूते समित्पाणिः केशिनी(?)राजानमाजगाम' इति। नाभा.

**'उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते।**
**मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते।।**

(१) मध्यमे क्षत्रियवैश्यकर्मणी। क्षत्रियोऽप्यापदि वैश्यवृत्त्याऽनन्तरया, वैश्यश्चानन्तरया शूद्रवृत्त्या।

अप. ३।३४

(२) शूद्रस्य तूपरितनवर्णविषयाऽपि† भवत्येव। तदाह नारदः – 'उत्कृष्टं.... हि ते।।' इति। तयोर्ब्राह्मणशूद्रयोर्मध्ये ब्राह्मणस्यापकृष्टं शौद्रं कर्म नास्ति। तथा शूद्रस्योत्कृष्टं ब्राह्मणकर्म नास्तीत्यर्थः।

‡ स्मृच. २।४७४

(३) उत्कृष्टनिकृष्टे ब्राह्मणशूद्रयोः कर्मणी न विद्येते। नोभे उभयोर्निषिध्येते। (किंतु) ब्राह्मणस्यापकृष्टं शूद्रस्योत्कृष्टम्। कुत एतत्? द्वयोरात्मीययोर्विहितत्वात्। पूर्वोक्त एवायमर्थः प्रयत्नेन वर्जनार्थः। मध्यमे कर्मणी हित्वा वर्जयित्वा, सर्वेषां त्रयाणां साधारणत्वात् तयोरापदि अनापदीति विशेषः। सर्वग्रहणात् ब्राह्मणकर्मणः शूद्रस्य पतनीय(त्व)वचनाच्च कृष्यादि पालनादि च शूद्रस्यापि कस्यांचिदवस्थायाम् अनुजानाति। नाभा.

(४) एवं क्षत्रियस्याऽऽपदि वैश्यवृत्तिः, शूद्रवृत्तिस्तदसंभवे। वैश्यस्याऽऽपदि शूद्रवृत्तिः क्षत्रवृत्तिर्वा, न तु ब्राह्मणवृत्तिः। शूद्रस्याऽऽपदि वैश्यवृत्तिस्तदसंभवे क्षत्रवृत्तिः, न तु विप्रवृत्तिः। यथोक्तम् – 'उत्कृष्टं..... हि ते'। ब्राह्मणस्यापकृष्टं सेवादि नास्ति। शूद्रस्योत्कृष्टमध्ययनादि नास्ति। एवं चात्यन्तापदि क्षत्रियवैश्ययोर्ब्राह्मणकर्मानुज्ञातं भवति।

संम. ७८-७९

आपदन्ते आपद्वृत्तिं त्यक्त्वा प्रायश्चित्तं कर्तव्यम्, अनापद्यापद्वृत्तेः फलम्

**'आपदं ब्राह्मणस्तीर्त्वा क्षत्रवृत्त्या भृते जने।**
**उत्सृजेत् क्षत्रवृत्तिं तां कृत्वा पावनमात्मनः।।**

आपत्सु ब्राह्मणः क्षत्रवृत्तिमाश्रयेदित्युक्तम्, तत् कियन्तं कालमिति न ज्ञायते, इत्यतो विशिनष्टि – आपदं तीर्त्वा अतिक्रम्य क्षत्रवृत्त्या। भृते जने। क्षत्रवृत्त्येत्येतत् भृते जन इत्यनेनापि संबध्यते। आपदां तरणं देवपितृकर्माद्यनुष्ठानं कृत्वा कलत्रं च भृत्वा जीवयित्वा अतिक्रान्तायामापद्युत्सृजेत् क्षत्रवृत्तिम्। यथा आरोग्यार्थमौषधपानं रोगनिवृत्तावुत्सृज्यते, तथा *उत्सृज्य। पावनं शुद्धिं प्रायश्चित्तम्, पूयते येन तत् पावनम्, यदत्रोक्तं तत् कुर्यात्। नाभा.

---

तस्मात् 'वृषलस्य ब्राह्मणवृत्तिनिषेधार्थम्' इति शुद्धिरत्र कल्पनीया। अनुवादश्च दृष्टान्ततत्वार्थ इत्युत्तरग्रन्थे स्पष्टम्। इदं चापरमवधेयम् – अवतरणिकारूपोत्तरग्रन्थस्य तदुत्तरवाक्यस्योत्तरार्धेन 'शूद्रोऽपि' इत्यादिना संबन्धः, न तु 'न केनचित्' इत्यादिना पूर्वार्धेन, विरोधात्। किंचात्रोत्कृष्टनिकृष्टशब्दौ अत्युत्कृष्टातिनिकृष्टरूपब्राह्मणशूद्रपरावित्यपि बोध्यम्।

† वृत्तिरिति शेषः।

‡ मपा. स्मृचवत्।

(१) **नासं.** २।५४; **विश्व.** ३।३५; **मिता.** ३।३५ चाप (वाऽप) च (वा) स्मृत्यन्तरम्; **अप.** ३।३४ चाप (चाव); **गृक.** १८९ अपवत्; **स्मृच.** २।४७४; **गृर.** ४२७ चापकृष्टं च तयोः (च निकृष्टं च द्वयोः); **मपा.** २३५ मितावत्; **संम.** ७८ मितावत्.

*अस्माद्व्याख्यानात् मूले 'उत्सृजेत्' 'कृत्वा' इत्यत्र 'उत्सृज्य' 'कुर्यात्' इति पाठो भाष्याभिमत इति प्रतीयते। पूर्ववाक्ये 'उत्सृजेत्' इत्याख्यातप्रयोगो न मूलपदानुवादः, किं तु स्वीयः, यथा 'भृत्वा' इति। नात्र वैपरीत्यं युज्यते, मूलोक्तक्रियापौर्वापर्यात् भाषितक्रियापौर्वापर्यस्य वैपरीत्यापातात्। सोऽयं भाष्यपाठ एव निमित्तनैमित्तिकयोः स्वाभाविकपौर्वापर्यानुरोधेन श्रेयानिति भाति। रत्नाकरे 'उत्सृज्य' इति पाठस्य प्रामाणिकत्वे 'कृत्वा' इति पाठस्य प्रामादिकत्वावश्यंभावात् सः 'कुर्यात्' इत्यंशेऽपि भाष्यपाठमुपोद्बलयति। तत्र 'कृत्वा' इति पाठो नोपपद्यते, तस्मिन् पाठे केवलोत्तरकालिकक्रियाभावापत्तेः करणे उत्सर्जने वा पूर्वकालिकत्वबोधासंभवात् क्त्वोऽनुत्पत्तिप्रसङ्गात्।

(१) **नासं.** २।५५; **मभा.** ७।६, ११।३१; **गृक.** १८९ त्या भृते जने (त्याऽर्जिते धने); **गौमि.** ७।६ जेत् क्षत्र (जेत्क्षात्र); **गृर.** ४२७ त्या भृते जने (त्यर्जितैर्धनैः) जेत्क्षत्र (ज्य क्षत्र).

**[१]तस्यामेव तु यो वृत्तौ रमते ब्राह्मणो रसात्।**
**काण्डपृष्ठश्च्युतो मार्गात् सोऽपाङ्क्तेयः प्रकीर्तितः।।**

(१) काण्डपृष्ठः ब्राह्मणाधमः।

$ गृक. १८९

(२) यो नोत्सृजत्यतिक्रान्तायामापदि, तस्यामेव क्षत्रवृत्तौ रमते रसात् तत्सुखास्वादात्। काण्डपृष्ठः आयुधजीवित्वमापन्नः क्षत्रियभूत इत्यर्थः। मार्गात् ब्राह्मणधर्मात् च्युतः। प्रतिषिद्धसेवनात् अपाङ्क्तेयः। काण्डपृष्ठ इति स उक्तः। एतेन वैश्यवृत्तिरपि व्याख्याता – अस्यामप्येषा गतिः, किं पुनर्वैश्यवृत्तिः(त्तौ)? इति। नाभा.

ब्राह्मणस्याविक्रेया विक्रेयाश्च
पदार्थाः

**[१]वैश्यवृत्तावविक्रेयं ब्राह्मणस्य पयो दधि।**
**घृतं मधु मधूच्छिष्टं लाक्षाक्षाररसासवाः।।**
**[२]मांसौदनतिलक्षौमसोमपुष्पफलोपलाः।**
**मनुष्यविषशस्त्राम्बुलवणापूपवीरुधः।।**
**नीलकौशेयचर्मास्थिकुतपैकशफा मृदः।**
**उदश्वित्केशपिण्याकशाकाद्यौषधयस्तथा।।**

वैश्यवृत्त्या यदा जीवति तदाऽपवाद उच्यते। पयआदीन्यविक्रेयाणि। एतस्मादेव गम्यते वैश्यस्य पयआदिविक्रये न दोष इति। मधूच्छिष्टं सिक्थम्। क्षाराः गुलादयः। रसाः तैलादयः। आसवः सुरा। क्षौमग्रहणात् कार्पासानामदोषः। सोमो यज्ञे न विक्रेयः। उपलाः रत्नादयो दृषदन्ताः। वीरुधः लतावल्ल्यः। नील्या रक्तं नीलं वस्त्रादि। कोशसंभूतं कौशेयम्। छागरोमभिः क्रियते प्रस्तरणं (तत्) कुतपः। एकशफाः अश्वादयः। मृद्ग्रहणादन्येषां पार्थिवानां हरित(? ता)लादीनामदोषः। केशाः चामरादयः। शाकाद्याः ओषधयः। 'ओषध्यः फलपाकान्ताः' (अमरकोशः २।४।६)। नाभा.

---

$ गृर. गृकवत्।

(१) **नासं.** २।५६; **गृक.** १८९; **गृर.** ४२७.

(२) **नासं.** २।५७; **मिता.** ३।३६-३८ पू.; **अप.** ३।३५-३८ पृ. ९३१ पू.; **स्मृच.** २।४७९ त्ताववि (त्याऽप्यवि) पू.; **इन्दु.** २०० पू.

(३) **नासं.** २।५८-५९.

**[१]ब्राह्मणस्य च विक्रेयं शुष्कं दारु तृणानि च।**
**गन्धद्रव्यैरकावेत्रमूलतूलकुशादृते।।**

(१) एरका तृणविशेषः। अप. ३।३८

(२) एरका तृणविशेषः। तूलं शाल्मल्यादिः।

$ गृक. २१२

(३) अविक्रेयवचनादेव शेषाणां विक्रेयत्वेऽवगतेऽपि विक्रेयवचनं विक्रेयप्रदर्शनार्थम्। *एवं च किलाटकूर्चिकादीनां प्रतिषेधः सिद्धो भवति। ब्राह्मणस्य तु विक्रेयमुच्यते – शुष्कदारु तृणानि च। अनेनोत्सर्गेण प्राप्तानां प्रतिषेध उच्यते – गन्धद्रव्याणि चन्दनागरुकालेयकादीनि, +एरका, तूलं शल्मलीतूलादि, मूलं कन्दादि, तुषम्। एतेभ्यो विना। नाभा.

**[२]स्वयं विशीर्णं विदलं फलानां बदरेङ्गुदे।**
**रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतं भवेत्।।**

---

$ गृर., मर., निप्र. गृकवत्।

* अत्र 'एवं तर्हि विक्रेयवचनमेवास्तु, तेनैवैकेन प्रयत्नेन पूर्वोक्तपयआदीनां किलाटादीनां चेत्युभयेषामविक्रेयत्वसिद्धेः प्राचीनश्लोकत्रयगौरवं व्यर्थम्' इत्युत्तिष्ठन्नाक्षेपो न समाहित इति न्यूनता प्रतिभाति। तत्र 'विक्रेयवचनमुदाहरणमात्रम्, किलाटादयस्तु पूर्वोक्तपयोदध्यादिभिरेव यथायोगमुपलक्ष्यन्ते' इति वा, 'प्रतिपदोक्तानामविक्रेयाणां पयआदीनां विक्रये परिशेषन्यायेनाविक्रेयाणां किलाटादीनां च विक्रये वक्ष्यमाणदण्डतारतम्यम्' इति वा, अन्यद्वा किंचिन्निर्दोषं समाधानं कल्पनीयम्।

\+ 'लव्हाळा' इति भाषायां प्रसिद्धा।

(१) **नासं.** २।६० स्य च (स्य तु) शुष्कं दा (शुष्कदा) वेत्रमूलतूलकुशा (लेयतूलमूलतुषा); **अप.** ३।३८ णस्य च (णेन तु) वेत्रमूलतूलकुशा (वेत्रं तूलस्तूलीकृता); **गृक.** २११-२१२ स्य च (स्य तु) शुष्कं (सूक्ष्मं) उत्तरार्धे (गन्धद्रव्यैरेरका च गुरुतूलकुशादृते।।); **स्मृच.** २।४८२ स्य च (स्य तु) पू.; **गृर.** ४४२; **पमा.** १।४३२ (ब्राह्मणस्य तु विक्रेयं शुष्कदारुतृणादिकम्।) पू.; **आपा.** १४६ (ब्राह्मणस्य तु विक्रेयं शुष्कदारुतृणानि वा।) पू.; **मर.** १८५ स्य च (स्य तु) उत्तरार्धे (गन्धमुच्चैरकावेत्रतूलमूलकुशादृते।।); **निप्र.** २।३१३ स्य च (स्य तु) वेत्रमूलतूलकुशा (वेत्रं तूलस्तूलीकृता); **आभू.** २०० स्य च (स्य तु) शुष्कं दा (शुष्कदा) उत्तरार्धे (गन्धमुच्चैरकावेत्रतूलं मूलं कुशादृते।।).

(२) **नासं.** २।६१; **मिता.** ३।३६-३९ प्रथमचरणे (स्वयंशीर्णानि पर्णानि); **अप.** ३।३८ पृ. ९३४ विशीर्णं (शीर्णं च); **गृक.** २१२ अपवत्; **स्मृच.** २।४७७ शीर्णं (जीर्णं) रज्जुः कार्पासि (रज्जु-

(१) विदलं वल्कलम्। # गृक. २१२

(२) विक्रेयमित्यनुवर्तते। स्वयं विशीर्णं वंशादि। ओषधीग्रहणेन प्रतिषिद्धस्य पुनः प्रतिप्रसवः। फलत्वात् प्रतिषिद्धयोर्बदरेङ्गुदयोरनुज्ञा। रज्जुः शुल्बादि। कार्पासिकं सूत्रम्। भेदेन वा कार्पासिकं वस्त्रादि। एवं च क्षौमप्रतिषेधोऽर्थवान् भवति। सूत्रमविशेषेण। तदुभयमविकृतं यदि भवति लाक्षाकुसम्भादिरक्तं यदि न भवति। नाभा.

**[१]अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च।**
**यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः।।**

(१) धान्येनैव तु तुल्यमानास्तिला विक्रेयाः, न रूपकादिनेत्यर्थः। स्मृच. २।४८१

(२) अशक्तौ व्याधितः औषधार्थे यज्ञसिद्ध्यर्थं च विक्रीयमाणेषु तिलेषु असंभवे अवश्यं विक्रेयत्वे तिला धान्येन समा विक्रेयाः। प्रतिषिद्धानां विशिष्टे विषये प्रतिप्रसवः। नाभा.

(३) धान्यसामान्यं तु धान्यान्यूना देया इत्यर्थः। निप्र. २।३१६

कुसीदलक्षणम्, सलक्षणं वृद्धेश्चातुर्विध्यम्, वृद्धिपरिमाणम्, वृद्ध्यपवादः

**[२]स्थानलाभनिमित्तं हि दानग्रहणमिष्यते।**
**तत् कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम्।।**

स्थानम् अविनाशः लाभः उदयः स्थानलाभौ निमित्तमस्येति स्थानलाभनिमित्तम्। मूलाविनाशेन वृद्धिनिमित्तमित्यर्थः। दत्तिः दानम्, गृह्यतेऽस्मादिति ग्रहणं वृद्धिः उभयार्थम्(?)इष्यते। प्रयोगमि(? ग इ)त्यर्थः। स प्रयोगः कुसीदमित्युच्यते। तेन कुसीदेन वृत्तिः प्रयोगजीविनाम्। नाभा.

**[१]कायिका कालिका चैव कारिका च तथा स्मृता।**
**चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा।।**
**कायाविरोधिनी शश्वत् पणपादादि कायिका।**
**प्रतिमासं स्रवन्ती या सा वृद्धिः कालिका स्मृता।।**

कायिकाद्याश्चतुर्विधाः क्रमेण विशेषयति – कायेति। कायिका तावत् कायस्याविरोधिनी। कायः शरीरं मूलम्, तस्य अविरोधः अक्षयः। मूलस्याबाधया तदनुरूपा शश्वत् प्रतिदिवसं पणपादार्धपणादिर्या उभाभ्यामादौ कृता सा कायिका नाम वृद्धिः। तथा या मासं स्रवन्ती 'सकृत् मासे मासे तु यद्दातव्यम्' इति कृता सा कालिका। (कायिका) दिवसे दिवसेऽन्यस्मै दत्त्वा वर्धते। कालिका तु (ते?) नैवम्। मासस्य सकृदेव गृहीता तत आरभ्यते, न प्रतिदिवसम्। नाभा.

**[२]वृद्धिः सा कारिका नाम यर्णिकेन स्वयं कृता।**
**वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता।।**

कारिका नामर्णिकेनोत्तमर्णेन (च) स्वयं कृता कटकवृद्ध्यादिपरस्यार्थितामवेक्ष्य (त?) कृता। चक्रवृद्धिः द्विगुणीभूताऽपि पुनर्वर्धते। 'द्वैगुण्यान्नातिवर्तते' इत्युक्तम्, तथाऽप्यर्थवशेन परिभाषिते 'द्विगुणीभूताऽपि यदि न ददासि पुनरपि वर्धते' इत्येवं कृता चक्रवृद्धिः। नाभा.

**[३]ऋणानां सार्वभौमोऽयं विधिर्वृद्धौ कृतः स्मृतः।**
**देशाचारविधिस्त्वन्यो यत्रर्णमधितिष्ठति।।**

ऋणानां सार्वभौमोऽयं विधिः वृद्धिकृतः(? द्धौ कृतः) स्मर्यमाणः। अतोऽन्यो देशाचारापेक्षया, यस्मिन् ऋणमेतस्मात् उपरि वर्तते(? र्धते)। नाभा.

**द्विगुणं त्रिगुणं चैव तथाऽन्यस्मिंश्चतुर्गुणम्।**
**तथाऽष्टगुणमन्यस्मिन् देशे देशेऽवतिष्ठते।।**

---

# गृर., मर. गृकवत्।

कार्पास); **गृर.** ४४२; **मर.** १८१ (फलानां बरुदेङ्गुदे) एतावदेव : १८५ रज्जुः का (रजः का) शेषम् अपवत्; **निप्र.** २।३१३ सिकं सूत्रं (ससूत्रं च) शेषम् अपवत्; **वीमि.** ३।३५-४१ पृ. ८१७ द्वितीयचरणमात्रम्; **बाल.** १।११९ पृ. ३७२ मितावत्.

(१) **नासं.** २।६२; **मिता.** ३।३९; **अप.** ३।३८ पृ. ९३३ शक्तौ (शक्तो); **गृक.** २०८-२०९ तु (च); **स्मृच.** २।४८१; **गृर.** ४४०; **पमा.** १।४३० क्तौ भेषज (क्तौ जीवन); **आपा.** १४५ यज्ञहेतोस्त (यज्ञे होमे त); **दिक.** ३।३९; **निप्र.** २।३१६ क्तौ (क्तो) तु (च) (=).

(२) **नासं.** २।८६; **बाल.** १।११९ पृ. ३६८ हि दानग्र (यद्दानं ग्र) ज्ञेयं (प्रोक्तं).

(१) **नासं.** २।८७-८८.

(२) **नासं.** २।८९; **बाल.** १।११९ पृ. ३६८ उत्त.

(३) **नासं.** २।९०-९१.

+[1]**हिरण्यधान्यवस्त्राणां वृद्धिर्द्वित्रिचतुर्गुणा।**
**घृतस्याष्टगुणा वृद्धिः स्त्रीपशूनां तु संततिः।।**

यत्र सकृत् कृत्वा पुनर्न मूलीकृतं द्विगुणादीन् नातिवर्तते, तत् क्रमेण विशेष्यते – हिरण्येति। हिरण्यस्य द्वैगुण्यात् परतो नास्ति वृद्धिः। धान्यस्य त्रैगुण्याद्, वस्त्राणां चतुर्गुणत्वात्, घृतस्याष्टगुणत्वात्। स्त्रीपशूनां तु संततिः प्रतिदिवसभुक्तिर्गवां दोहादिर्वा, स्त्रीणां प्रतिदिवसं कर्म। नाभा.

[2]**न वृद्धिः प्रतिदत्तानां स्यादनाकारिता क्वचित्।**
**अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते।।**

वृद्धिः प्रतिदत्तानां न स्यात्। अनाकारिता अपरिभाषिता। क्वचिदप्येवमदत्तषण्मासादूर्ध्वं वर्धते। वृद्धिर्देशाचारव्यवस्थया। नाभा.

कुसीदविशेषरूपं वार्धुष्यम्, आपदि
वैश्यस्य वार्धुष्यानुमतिः

[3]**एष वृद्धिविधिः प्रोक्तः प्रवृद्धस्येह धर्मतः।**
**वृद्धिस्तु योक्ता धान्यानां वार्धुष्यं तदुदाहृतम्।।**

एष वृद्धिविधिः प्रोक्तः 'कायिका कालिका' (नासं. २।८७) इत्यारभ्य। प्रवृद्धस्याष्टगुणत्वाद्धर्म्या धान्यानां वृद्धिर्योक्ता, त्रिगुणेति वा, वार्धुषमिति यदेतदुदाहृतं तदेतत्। केचिद् धान्यानां त्रिगुणे प्रयोगे वार्धुषिक इत्युच्यते। अन्ये धान्यविषया योक्ता तां य उपजीवति, सर्वविषयां त्रिगुणमुपजीवतीत्यर्थः, स वार्धुषिक इति। तथा च वसिष्ठेनोक्तम् – 'समर्घं धनमादाय महार्घं यः प्रयच्छति। स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः।।' (वाध. २।४१)। नाभा.

[4]**आपदं निस्तरेद्वैश्यः कामं वार्धुषकर्मणा।**
**आपत्स्वपि हि कष्टासु ब्राह्मणस्य न वार्धुषम्।।**

(१) एवं च कष्टतरासु आपत्स्वेव कुशीदस्य ब्राह्मणे अवसरः। गृर. ४४४

(२) अनन्यसाध्यावश्यकधर्म्यकर्मसिद्ध्यर्थं कुशीदेन जीवतो ब्राह्मणस्याग्राह्यां वृद्धिमाह नारदः – आपत्स्वपीति। १८७

धान्यवृद्ध्यादिग्रहणं च वार्धुषिकर्म। मर. १९५

(३) आपद्ग्रहणं त(?य)त्र काम्यनैमित्तिकाद्यप्रवृत्तिः। तामवस्थां वार्धुषकर्मणा निस्तरेत् वैश्यः। आपदं निस्तरेदिति वचनादुत्तरकालमुत्सृजेदिति गम्यते। ब्राह्मणप्रतिषेधादेव क्षत्रियवैश्ययोः सिद्धे वैश्यग्रहणात् क्षत्रियस्यापि नेष्यत इति गम्यते। ततश्च ब्राह्मणग्रहणं प्रदर्शनार्थम्। अन्य आह – ब्राह्मणप्रतिषेधात् क्षत्रियवैश्ययोरनुज्ञायते, वैश्यग्रहणं प्रदर्शनार्थमिति। वैश्यस्य स्ववृत्तित्वादितरयोः प्रतिषेधो युक्ततरः। आपत्स्वपि हि कष्टासु सर्वावस्थासु ब्राह्मणक्षत्रिययोः प्रतिषेधः, उभयोरस्ववृत्तित्वाविशेषात् महादोषवचनाच्च – 'ब्रह्महत्यां च वृद्धिं च तुलया समधारयत्। अतिष्ठद् भ्रूणहा कोट्यां वार्धुषिः समकम्पत।।' इति। वैश्यस्य वृत्तित्वेनानुज्ञातत्वात् स्ववृत्त्या निस्तरणमुपपद्यते। तथा च वैश्यग्रहणं कृतम्। नाभा.

(४) ब्राह्मणराजन्यानुवृत्तौ वसिष्ठोऽपि – 'कामं वा परिप्लुतकृत्याय पापीयसे दद्याताम्' (वाध. २।४३) इति। यत्तु 'आपदं.... वार्धुषम्।।' इत्याद्यन्यानि च नारदादिवचनानि, तानि समर्घधनाद्यादानपूर्वकमहार्घधनादिप्रदानरूपवृद्धिपराणि विहितवृद्ध्यतिरिक्तवृद्धिपराणि च ज्ञेयानि। बाल. १।११९ पृ. ३६८

धनप्रयोक्तुर्ब्राह्मणस्याभावे प्रतिदत्तमूल-
धनवृद्ध्यादिग्रहणे क्रमेणा-
धिकारिणः

[1]**ब्राह्मणस्य च यद् देयं सान्वयस्य न चास्ति सः।**
**सपिण्डेभ्योऽस्य निवपेत् तदभावेऽस्य बन्धुषु।।**

ब्राह्मणस्य तु यत् दातव्यं ब्राह्मणात् गृहीतमृणं सान्वयस्य, सहान्वयेन सान्वयः, (तस्य। अन्वयः) पुत्रपौत्रादिः। ब्राह्म-

---

+ अस्य मेधाव्याख्यानं मनोः 'कुसीदवृद्धिः०' (मस्मृ. ८।१५१) इति श्लोके द्रष्टव्यम्।

(१) **नासं.** २।९२; **मेधा.** ८।१५१ धान्यवस्त्राणां (वस्त्रधान्यानां) पू. स्मृत्यन्तरे.

(२) **नासं.** २।९३.

(३) **नासं.** २।९४; **नाभा.** वार्धुष्यं (वार्धुषं).

(४) **नासं.** २।९५; **गृक.** २१४ वार्धुष (वार्धुषि) णस्य (णानां); **स्मृच.** २।४७१ उत्त.; **गृर.** ४४४ वार्धुष (वार्धुषि) पि हि (पीह); **पमा.** १।४२७ हि (च) उत्त.; **मर.** १८७ उत्त. अशुद्धः पाठः : १९५ वार्धुष (वार्धुषि) पू.; **निप्र.** २।३१९ हि (च) णस्य न (णो न च) षम् (षी) उत्त.; **मुक्ता.** ६३ उत्त.; **बाल.** १।११९ पृ. ३६८ वार्धुष (वार्धुषी) हि (तु).

(१) **नासं.** २।९६-१०१, १०५-१०८.

 

(णग्रह ?) णात् गृहीतमृणं पुत्रपौत्रादिसहितस्य दातव्य-मित्यर्थः। न चायमाचारो लोके। तस्मात् ब्राह्मणात् यत् गृहीतमृणं तत् तस्यैव निवपेत्, तदभावेऽन्वयस्य। न चेदस्ति सोऽन्वयः, सपिण्डेभ्योऽस्य। अस्येति प्रकृतस्य ब्राह्मणस्य निर्देशः। निवपेत् दद्यादित्यर्थः, वपेरनेकार्थत्वात्, प्रकरणे दृष्टार्थस्य छेदार्थे 'केशान् वपति' इति दर्शनात्। सपिण्डाश्चेति विशेषिताः – 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' (मस्मृ. ५।६०) इति। तेषामभावस्तदभावः। सपिण्डाभावेऽस्य बन्धुषु। बान्धवाः पितृमातृसंबद्धाः, प्रत्यासत्तितोऽनुक्रान्तत्वात्। बन्धुष्वपीष्यते प्रत्यासत्तिः। नाभा.

**यदा च न सकुल्याः स्युर्न च संबन्धिबान्धवाः।**
**तदा दद्यात् स्वजातिभ्यस्तेष्वसत्स्वप्सु निक्षिपेत्।।**

यदा सपिण्डा बान्धवा न सन्ति तदा सकुल्येभ्यः, तदभावे तत्संबन्धिबान्धवेभ्यः। यदाऽस्य सकुल्या न स्युः, सकुल्याः निवृत्तपिण्डोदका एकपुरुषप्रभवाः, यदा च संबन्धिबान्धवाः संबन्धिनां पितृमातृसंबन्धिनां बान्धवाः संबन्धिनः, न स्युरित्येव, तदाऽस्य स्वजातिभ्यः ब्राह्मणेभ्यः दद्यादसंबद्धेभ्यः, सामर्थ्यात्। तेष्वप्यसत्सु, कदाचिदसांनिध्यं भवति, अनिच्छत्सु वा, अप्सु निक्षिपेत्, 'आपो वै सर्वा देवताः', 'ब्राह्मणो वै सर्वा देवताः' इति च श्रुतेः स्वजातीयत्वं तासामस्तीति। क्षत्रियस्य यथोक्ताभावे राजा स्वजातीय इति तस्मै दद्यात्। वैश्यस्याप्येवमेव। राज्ञोऽवकीर्णिकस्य चोपदेशः। नाभा.

वृद्धिप्राप्तौ ऋणापाकरणे च
धनिना प्राप्तिपत्रं देयम्

**गृहीत्वोपगतं दद्यादृणिकायोदयं धनी।**
**अददद्याच्यमानस्तु शेषहानिमवाप्नुयात्।।**

संप्रति धनिन उपदेशः। गृहीत्वोदयमुत्तमर्णः उपगतं गृहीतस्योदयस्याविस्मरणार्थं लेख्यं दद्यात् ऋणिकाय अधमर्णिकाय। गृहीत्वोदयमुपगतमददतः 'देहि' इति याच्यमानस्यादानदोषात् शेषहानिं मूलहानिम् अवाप्नुयात् मूलमपि विनष्टं भवति। एष दण्डः। नाभा.

**लेख्यं दद्यादृणे शुद्धे तदभावे प्रतिश्रवम्।**
**धनिकर्णिकयोरेवं विशुद्धिः स्यात् परस्परम्।।**

ऋणे शुद्धे गृहीते ग्रहणपत्रं तस्मै दद्यात् शुद्धर्णिकाय। तदभावे लेख्यस्यानुपलब्धौ प्रतिश्रवं प्रतिपत्रं 'गृहीतं मया' इति पत्रं दद्यात्। इत्येवं धनिकर्णिकयोः कालान्तरशुद्धिर्भवतीति। नाभा.

आधिप्रतिभुवोर्लेख्यसाक्षिणोश्च प्रयोजन-
विवेकः, प्रतिभुव आधेश्च
भेदाः, साधिधनप्रयोगे
विधानानि

**विस्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च।**
**लिखितं साक्षिणश्च द्वे प्रमाणे व्यक्तिकारणे।।**

विस्रम्भः विश्वासः। द्रव्यं परस्मै ददतः पुनरादानार्थं वृद्ध्यर्थं वा विश्वासकारणं प्रत्यायितः प्रतिभूः। आधिग्रहणं गोभूहिरण्यादि दित्सतः समातिरिक्तमूल्यम्। लिखितं साक्षिणश्च संदिग्धापह्नवविषये स्फुटीकरणे प्रमाणे। नाभा.

**उपस्थानाय दानाय प्रत्ययाय तथैव च।**
**त्रिविधः प्रतिभूर्दृष्टस्त्रिष्वेवार्थेषु सूरिभिः।।**

विस्रम्भहेतुः प्रतिभूराधिश्चेत्युक्तम्। तत्र प्रतिभूर्विशेष्यते। त्रिप्रकारः प्रतिभूः। प्रतिभवति तस्य ग्रहीतुः स्थाने भवतीति प्रतिभूः त्रिष्वेवार्थेषु मेधाविभिर्दृष्टः। संप्रत्यर्थत्रयविशेषणद्वारेण त्रिप्रकाराः(? रान्) प्रतिभुवो विशिनष्टि – उपस्थानाय प्रयोजनकाले डौ(? ढौ)कनाय समीपे स्थापनाय, प्रयोजनकाले 'अहं दर्शयिता, अदर्शने दाता' इति दानाय (अहं दातेति ?)। प्रत्ययाय अशीलवि(?)प्रतिपत्तये। नाभा.

**अधिक्रियत इत्याधिः स तु ज्ञेयो द्विलक्षणः।**
**कृतकालोपनेयश्च यावद्देयोद्यतस्तथा।।**

यद् गृहीतं द्रव्यं तस्योपरि क्रियत इत्याधिः। गृहीतद्रव्यार्थं वा अधिक्रियते दाननियमार्थं स्थाप्यत इत्याधिः। स द्विविधो ज्ञेयः – कृतकालोऽकृतकालश्च। 'अमुष्मिन् काले ददामि' इति कृतकालः। कृते काले उपनेयः कृतकालोपनेयः। तस्मिन् काले द्रव्यं दत्त्वा ग्रहीतव्यः। अग्रहणे यथाभाषितं वा। यावद्देय(म्) उद्यतः गृहीतः अस्य संबन्धेन स यावद्देयोद्यतः अनियतकालः, 'यावत् गृहीतोऽर्थो दीयते तावत् तिष्ठतु' इति। नाभा.

**स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च।**
**प्रतिदानं तथैवास्य लाभहानिर्विपर्यये।।**

पूर्वं द्विविध इत्युक्तम्। पुनरपि स द्विविध इति पुनः-शब्दादेकैको द्विविधः – गोप्यो भोग्यश्च। गोप्यः रक्षणीयः आ द्रव्यग्रहणात्। द्रव्यग्रहणोत्तरकालं प्रतिदानं गोप्यस्य यथा निहितं तथैव, भोग्यस्य यथा भुज्यमानं तथैव। भोगेन यत् क्षीणं तत् क्षीणमेव। लाभहानिर्विपर्यय इति। गोप्यस्य भोगे वृद्धिहानिः, भोग्यस्य च(? चा) भोगे। भोगस्तत्र लाभः, तच्च द्रव्यमभुक्तम्, भोगस्य लाभत्वात् तदभावे लाभहानिः। नाभा.

**प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते।**
**विनष्टे मूलनाशः स्याद्दैवराजकृतादृते।।**

धनिनः उत्तमर्णस्य प्रमादादाधौ विकृतिमागते अन्यथाभूते तद्वदेव स्यात् यथा 'लाभहानिर्विपर्यये' इति वृद्धिहानिः, तथाऽत्रापि। गोप्यविषय एतत्, भोग्ये वृद्ध्यभावात्। भोग्ये तु मूलच्छेदः। विनष्टे द्वयोरपि मूलनाशः। किमविशेषेण? न, दैवराजकृतादृते। तोयाग्निदेशोपप्लवादिर्दैवः। अनपराधिनो यत् राज्ञाऽपह्रियते (स राजकृतः)। नाभा.

**रक्ष्यमाणोऽपि यत्राऽऽधिः कालेनेयादसारताम्।**
**आधिरन्योऽधिकर्तव्यो देयं वा धनिने धनम्।।**

रक्ष्यमाणोऽपीत्यप्रमादार्थम्। यथाऽऽहितस्तथा रक्ष्यमाणः कालेन, नान्येनापराधेन, असारतामियात् क्षीयते, आधिरन्यो योग्योऽधिकर्तव्यः, देयं वाऽऽधिं गृहीत्वा धनिने धनम्। नाभा.

पण्यपदार्थः, वाणिज्ये लाभानुसारिमूल्य-
कल्पनम्, वाणिज्येऽतिसंधान-
निषेधः, वाणिज्य-
कौशलम्

[१]**लोकेऽस्मिन् द्विविधं द्रव्यं स्थावरं जङ्गमं तथा।**
**क्रयविक्रयधर्मेषु सर्वं तत् पण्यमुच्यते।।**

लोके यत् द्रव्यं जङ्गमं हस्त्यश्वमनुष्यादि, स्थावरं क्षेत्रहिरण्यगृहादि, सर्वं तत् पण्यमुच्यते। यत्र पण्यसंशब्दनं करोति, तत्रैतस्य स्थावरजङ्गमाख्यस्य ग्रहणं द्रष्टव्यम्। नाभा.

(१) **नासं.** ९।२, ११.

**लाभार्थो वणिजां सर्वः पण्येषु क्रयविक्रयः।**
**स च लाभोऽर्घमासाद्य महान् भवति वा न वा।।**

वणिजां क्रयविक्रयः सर्वोऽतिरिक्तलाभार्थः। स च लाभोऽर्घवशान्महान् भवति कदाचित् कदाचिदल्पः, कदाचिन्नैव। नाभा.

[१]**तस्माद्देशे च काले च वणिगर्घं प्रकल्पयेत्।**
**न जिह्मेन प्रवर्तेत श्रेयानेष वणिक्पथः।।**

यस्मादर्घाधीनो लाभः तस्मात् देशकालानुरूपमर्घं प्रकल्पयेत् यथाऽऽत्मनो हानिर्न भवति परस्य च। न जिह्मेन प्रवर्तेत न परोऽतिसंधानीयः। इत्येवं वणिक्पथादन्यो न प्रशस्यतरः, अतिसंधाने च दोषः। तस्मात् देशकालरूपानुरूपमर्घं प्रकल्पयेत्। 'श्रेयानेवं वणिक्पथः' इत्यन्यः पाठः। एवं श्रेयान् वणिक्पथः, तस्मादजिह्मेन प्रवर्तेत, अन्यथा प्रत्यवेयादिति। नाभा.

[२]**क्रीत्वा नानुशयं कुर्याद्वणिक् पण्ये विचक्षणः।**
**क्षयवृद्धी च जानीयात् पण्यानामागमं तथा।।**

उपसंहारोऽयम्। क्रीत्वा विरूपकं क्रीतमिति नानुशयं कुर्यात्। वणिक् विचक्षणः तथा परीक्ष्य क्रीणीयात् यथा पश्चात्तापो न भवति। दानग्रहणयोश्च पण्यानां क्षयं वृद्धिं च जानीयात्। तथा तत्र न वञ्च्यते। पण्यानामागमं च। अदृश्यमानविशेषस्यापि जन्मभूम्या विशेषपरिच्छेदो भवति। नाभा.

क्षेत्रवृतिप्रकारः, खिलभूमिं प्रथमं
क्षेत्रीकुर्वन् तत्स्वामी

[३]**पथिक्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत्।**
**न लङ्घयेत् पशुर्नाश्वो न भिन्द्याद्यां च सूकरः।।**

वृतेरकरणे नास्ति पालदोष इत्युक्तम्। सा वृतिर्विशेष्यते। पथिक्षेत्रे ईदृशी वृतिः कार्या, उच्चैस्त्वेन यामुष्ट्रो नावलोकयेत् अतीत्य, पशुर्वाऽश्वो वा न भङ्क्त्वा लङ्घयेत्। पशुः मृगादिः। दृढत्वाच्च सूकरो यां न भिन्द्यात्। अतोऽन्यादृशी वृतिः स्याच्चेत् तां भङ्क्त्वा लङ्घयित्वा वा सस्यभक्षणे

(१) **नासं.** ९।१२; **नाभा.** श्रेयानेष (श्रेयान्नान्यो) 'श्रेयानेष' इत्यत्र 'श्रेयानेवं' इत्यपि पाठभेदं निर्दिशति.

(२) **नासं.** १०।१६.

(३) **नासं.** १२।३६-३७.

न पालगोमिनौ दण्ड्यौ। नाभा.

**खातखातस्य केदारमाहुः शल्यवतो मृगम्।**
**इषवस्तस्य नश्यन्ति यो विद्धमनुविध्यति।।**

क्षेत्रिकेण वृतिः कार्येत्युक्तम्। स क्षेत्रिको विशेष्यते। खिलभङ्गस्य भूमिं प्रसाधितवतः केदारमाहुः। योऽन्यस्तत्र कर्षति स तत्फलं न लभते। क्षयव्ययाभ्यां च युज्यते। यथा शल्यवतः प्रथमं व्यद्धुर्मृगमाहुः, पश्चाद् विध्यत इषुनाशः श्रमयोगश्च तथेति। नाभा.

ब्राह्मणस्य स्तेयापवाद-
तदपवादौ

[1]**वर्तमानोऽध्वनि श्रान्तो गृह्णन्नेकाशनः स्वयम्।**
**ब्राह्मणो नापराध्नोति द्वाविक्षू पञ्च मूलिकान्।।**

अध्वनि श्रान्तः अननुज्ञाप्य स्वामिनं स्वयमेव आत्मांशं-(?) गृह्णन् निःस्वो ब्राह्मणः नापराध्यति इक्षुद्वयं पञ्च मूलिकानिति। नाभा.

[2]**नाभिशस्तान्न पतितान्न द्विषो न च नास्तिकात्।**
**न सोपधान्नानिमित्तं न दातारं प्रपीड्य च।।**

ब्राह्मणेन ग्राह्यमित्युक्तं तदपवादः। अभिशस्तात् न ग्राह्यम्, न पतितात्, न द्विषः वैरिणः, नास्तिकाच्च। भिन्नमर्यादो हि स भवति। सोपधाच्च। व्याजेन यो जीवति सः (सोपधः)। अनिमित्तं च। यज्ञादिनिमित्तमु(? मनु)द्दिश्य। यो ददाति तस्यापीडया ग्राह्यम्, न ददातीत्येव सर्वम्। नाभा.

अब्राह्मणात्प्रतिग्रहात् राज्ञः प्रतिग्रहः श्रेयान्,
राजब्राह्मणयोस्तुल्यत्वम्, ब्राह्मणस्य
मुख्या वृत्तयः

[3]**अर्थानां भूरिभावाच्च देयत्वाच्च महात्मनाम्।**
**श्रेयान् प्रतिग्रहो राज्ञामन्येभ्यो ब्राह्मणादृते।।**

(१) देवत्वम् अष्टलोकपालांशत्वात् मन्वादिभिः संस्तुतत्वाच्च। गृर. ४६५

(२) देवत्वं च राज्ञो मन्वादिभिरष्टलोकपालांशत्वेन स्तवनात्।

निप्र. २।२७२

(३) राज्ञामर्थानां प्रभूतत्वादवश्यं देयत्वाच्च। महात्मानः (न) स्वार्थं द्रव्यमर्जयन्ति। तस्मात् पीडाभावाद्राज्ञः (? ज्ञां) सकाशाच्छ्रेयान् प्रतिग्रहो ब्राह्मणादन्येभ्यः। ब्राह्मणात्तु ततोऽपि श्रेयान्। नाभा.

[1]**ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ।**
**नैतयोरन्तरं किंचित् प्रजाधर्माभिरक्षणात्।।**

ब्राह्मणाच्च राज्ञश्च प्रतिग्रहः प्रशस्यतर इत्युक्तः-(? क्तम्)। तत्र कारणमुच्यते – द्वावप्येतौ धृतव्रतौ। नानयोर्विशेषोऽस्ति प्रजारक्षणात्। एकः पालनेन, इतरो धर्मोपदेशेन। नाभा.

[2]**धर्मज्ञस्य कृतज्ञस्य रक्षार्थं शासतोऽशुचीन्।**
**मेध्यमेव धनं प्राहुस्तीक्ष्णस्यापि महीपतेः।।**

(१) अशुचीन् कृतापराधान्।

+ गृक. २३२

(२) तीक्ष्णस्यापीति दण्डप्रधानत्वात् पीडापरस्यापि। बहुधनिकत्वेन तदन्वयस्य च ग्राह्यत्वम्, भारते अगस्त्येन समानान्वयराज्ञो धनस्वीकारात्।

निप्र. २।२७२

(३) सदसदुपादानतो मेध्यमेव धनं प्राहुः। तीक्ष्णस्याप्यय(? स्यासत्त्वा)त्वादशुद्धं राज्ञो धनम्। तस्मान्नातः प्रतिग्रहः श्रेयानित्याशङ्कानिवृत्त्यर्थमाह – धर्मज्ञस्येत्यादि।

---

(१) **नासं.** १९।३७.

(२) **नासं.** १९।३८.

(३) **नासं.** १९।३९; **गृक.** २३१ देय (देव) ज्ञामन्येभ्यो (ज्ञां नान्येषां); **स्मृच.** २।४५७ ज्ञामन्येभ्यो (ज्ञां नान्येषां) उत्त.; **गृर.** ४५५ गृकवत्; **पमा.** १।१८९ सर्वं स्मृचवत्.; **आपा.** ११२ सर्वं स्मृचवत्; **निप्र.** २।२७१ वाच्च (वाद्धि) द्वितीयचरणे (देवतात्वान्महीभृताम्) ज्ञामन्येभ्यो (ज्ञां नान्येषां); **बाल.** १।१२१ पृ. ३८३ गृकवत्.

+ गृर., मपा., बाल. गृकवत्।

(१) **नासं.** १९।४०; **गृक.** २३१-२३२ वप्येतौ (वेवैतौ); **स्मृच.** २।४५७; **गृर.** ४५६; **पमा.** १।१८९ रक्षणात् (रक्षणे); **मपा.** २१८; **आपा.** ११२ भिरक्ष (दिरक्ष); **निप्र.** २।२७१ तव्रतौ (तिं श्रितौ); **बाल.** १।१२१ पृ. ३८३ उत्तरार्धे (न ताभ्यामुत्तरौ किंचिन्मतौ धर्माधिरक्षणात्).

(२) **नासं.** १९।४१; **गृक.** २३२; **गृर.** ४५६; **मपा.** २१८ ज्ञस्य कृतज्ञस्य रक्षार्थं (स्य कृतकृत्यस्य धर्मार्थं); **निप्र.** २।२७१ प्राहुस्ती (ग्राह्यं ती); **बाल.** १।१२१ पृ. ३८३ प्रथमचरणे (धर्मकृत्यकृतस्तस्य) पतेः (यते).

*साधूनां रक्षणार्थमशुचीन् दण्डयतो यथोक्तकारिणोऽपि, किं पुनर्धर्मज्ञस्येति। धर्मज्ञस्य शुद्धमित्येवंपरमेतत्, न तीक्ष्णस्य शुद्धताप्रतिपादनार्थम्। तस्य प्रतिषिद्धत्वात् 'यो राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः। स पर्यायेण यातीमान् नरकानेकविंशतिम्।।' इति।

नाभा.

**[1]शुचीनामशुचीनां च संनिपातो यथाऽम्भसाम्।**
**समुद्रे समतां याति तद्वद्राज्ञां धनागमः।।**

अर्णसाम् अम्भसाम्।

बाल. १।१२१ पृ. ३८३

* कैमुतिकन्यायाकारोऽयं न मनोहरः। तथाहि – किमुतघटितवाक्ये अपिशब्दगर्भः प्रथमांशः किमुतादिर्द्वितीयांशश्चेति अंशद्वयमस्ति। तत्र प्रमाणान्तरविरोधाभावे पूर्वांशगतापिशब्दयोगिपदार्थस्य उत्तरांशगतकिमुतशब्दयोगिपदार्थस्य चेत्युभयोरपि विधेयार्थे संबन्धो वास्तवोऽस्ति। यथा – 'पितृकल्पमपि नमस्कुर्यात्, किमुत पितरम्?' इत्यत्र पितृपितृकल्पयोरुभयोरपि विधेयनमस्कारसंबन्धो वास्तवोऽस्ति। प्रमाणान्तरविरोधे तु किमुतशब्दयोगिपदार्थस्यैव वास्तवविधेयसंबन्धोऽस्ति, अपिशब्दयोगिपदार्थस्य तु न वास्तवविधेयसंबन्धः, अपि तु विधेयार्थप्रशंसार्थमारोपितः, तेन पूर्वांशस्यार्थवादत्वम्। यथा मेधातिथिमते 'गुर्वादीनप्याततायिनो हन्यात्, किमुत तदन्यान्?' (मस्मृ. ८।३५०) इत्यत्र गुर्वादीनां विधेयेन हननेन वास्तवसंबन्धे 'आचार्यं च....न हिंस्यात्....' (मस्मृ. ४।१६२) इति प्रमाणान्तरविरोधात् गुर्वादीनां हननसंबन्ध आरोपितः, तेन पूर्वांशे मूलगतापिशब्दयोगिनस्तीक्ष्णपदस्य ग्रहणं युक्तम्, 'साधूनाम्' इत्यादिपदानां तु उत्तरांशे एव ग्रहणं युक्तम्। किंच, पूर्वांशार्थो जघन्यः, उत्तरांशार्थोऽभ्यर्हित इति कैमुतिकन्यायस्वभावः। न हि धर्मज्ञानपूर्वकात् साधुरक्षाफलकासाधुदण्डनरूपधर्माचारात् केवलधर्मज्ञानस्याभ्यर्हितत्वं युज्यते। किंच उक्तजघन्याभ्यर्हितभावद्योतकोऽपिर्मूले तीक्ष्णशब्दयोगी, न शासच्छब्दयोगी। प्रमाणान्तरविरोधेन तात्पर्याभावोऽपि तीक्ष्णधनग्रहणविषय एव स्वेन व्याख्यास्यते, नासाधुदण्डयद्धनग्रहणविषय इति स्वोक्तिविरोधोऽपि प्रतीयते। अवतरणिकाऽपि यथाश्रुते न संगच्छते।

(१) **नासं.** १९।४२ समुद्रे (स तत्र); **गृक.** २३२ च (तु) ज्ञां धना (ज्ञो धना); **गृर.** ४५६; **पमा.** १।१८९ संनिपातो (संनिवेशो) याति (यान्ति); **मपा.** २१८ च (तु); **निप्र.** २।२७१; **चमव्याआ.** ३७ याति (यान्ति) धना (समा); **आम.** ५० तद्वद् (तथा) शेषं मपावत्; **बाल.** १।१२१ पृ. ३८३ थाऽम्भसाम् (थाऽर्णसाम्) शेषं मपावत्, १।१३० पृ. ३९०; **इन्दु.** १९८ म्भसाम् (म्भसि).

**[1]यथा चाग्नौ स्थितं दीप्ते शुद्धिमाप्नोति काञ्चनम्।**
**एवमेवाऽऽगमाः सर्वे शुद्धिमायान्ति राजसु।।**

(१) एतद्धार्मिकराजप्रतिग्रहविषयम्। आम. ५०

(२) द्वितीयो दृष्टान्तः – अग्नौ स्थितं दीप्ते अशुद्धमपि काञ्चनं निर्मलं शुद्धं भवति यथा, एवमेवाऽऽगमा असदुपादाना अपि राजसु स्थिता राजपरिगृहीताः शुद्धा भवन्ति।

नाभा.

(३) इदं चानापदि। आपदि तु लुब्धादेरपि राज्ञः प्रतिग्रहे न दोषः। इन्दु. १९९

**[2]दानमध्ययनं यज्ञः कर्मास्योक्तं त्रिलक्षणम्।**
**याजनाध्यापने वृत्तिस्तृतीयस्तु प्रतिग्रहः।।**

त्रीण्यदृष्टार्थानि कर्तव्यानि। त्रीणीच्छातो जीवनानि।

नाभा.

**[3]स्वधर्मे ब्राह्मणस्तिष्ठन् वृत्तिमाहारयेन्नृपात्।**
**नासद्भ्यः प्रतिगृह्णीयाद्ब्राह्मणो विभवे सति।।**

स्वधर्मे ब्राह्मणस्तिष्ठन्, न क्षत्रधर्मादौ, कृतां विप्रः कामेनोक्तां वृत्तिं गृह्णीयात्। न वृत्तिसंकरं कुर्यात्। असद्भ्यो वर्णेभ्यो न प्रतिगृह्णीयात्। प्रशस्तेभ्य एव गृह्णीयादित्यर्थः। नियमे(? विभवे)सति अनापदीत्यर्थः। नाभा.

(१) **नासं.** १९।४३; **गृक.** २३२ (यथाऽग्नौ संस्थितं दीप्तं शुद्धिमायाति काञ्चनम्। एवं धनागमाः सर्वे शुद्धिमायान्ति राजनि।।); **स्मृच.** २।४५७ (यथाऽग्नौ संस्थितं चैव शुद्धिमेति हि काञ्चनम्। एवं धनागमाः सर्वे शुद्धिमायान्ति राजनि।।); **गृर.** ४५६ गृकवत्, दीप्तं (दीप्ते) इति विशेषः; **पमा.** १।१८९ गृकवत्, दीप्तं (चैव) इति विशेषः; **मपा.** २१८ गृकवत्, तं दीप्तं (ते दीप्ते) इति विशेषः; **आपा.** ११२ प्रथमचरणे (यथाऽग्नौ संस्थितं चैव) माप्नोति (मायाति) वमेवाऽऽगमाः (वं प्रतिग्रहाः); **निप्र.** २।२७२ गृकवत्, दीप्तं (दीप्ते) इति विशेषः; **चमव्याआ.** ३७ (यथाऽग्नौ संस्थितं सर्वं शुद्धिमायाति काञ्चनम्। एवं प्रतिग्रहाः सर्वे शुचितां यान्ति राजनि); **आम.** ५० चमव्याआवत्; **बाल.**१।१२१ पृ. ३८३ (यथाऽग्नौ संस्थितं दीप्ते शुद्धिमायाति सत्वरम्) एतावदेव : १।१३० पृ. ३९० चमव्याआवत्; **इन्दु.** १९९ चमव्याआवत्.

(२) **नासं.** १९।४७.

(३) **नासं.** १९।४८ (स्वकर्मणि द्विजस्तिष्ठन् वृत्तिमाहारयेत्कृताम्। नासद्भ्यः प्रतिगृह्णीयाद्वर्णेभ्यो नियमे सति।।); **गृक.** २३२; **गृर.** ४५६ हारयेन्नृ (हरते नृ); **निप्र.** २।२७२; **बाल.** १।१२१ पृ. ३८३ सद्भ्यः (राज्ञः).

**[१]अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः।**
**शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम्।।**

(१) अशुचिर्वचनाच्छुचिः। जननाद्यशौचे राजा यस्य शुद्धिमिच्छेत् स शुद्धो भवतीति स्मृतिः। शुचेरशुचित्वं दण्डादिना। निप्र. २।२७२

(२) लोकपालाष्टकांशरूपत्वेन देवत्वं मानवेऽपि स्पष्टमुक्तम्।

बाल. १।१२१ पृ. ३८३

**[२]विदुर्यस्यैव देवत्वं राज्ञो ह्यमिततेजसः।**
**तस्य हि प्रतिगृह्णन्तो न लिप्यन्ते कदाचन।।**

देवत्वम् अष्टलोकपालरूपत्वेन मन्वादिभिः संस्कृतत्वात्। § गृक. २३२

कृषिवाणिज्यादिनानाविधवृत्तिकर्मसु
तिथिवारनक्षत्रलग्नरूप-
मुहूर्तविधानानि

**[३]चित्रलेख्यासवक्षेत्रतैलशय्यासनादि यत्।**
**वृक्षच्छेदो गृहाश्माऽथ कर्म प्रतिपदीरितम्।।**
**पशुवास्तुमहीसेवापण्याम्बुक्रयविक्रये(? याः)।**
**भूषणं व्यवहारादि कर्म षष्ठ्यां विधीयते।।**
**कृषिवाणिज्यधान्याश्मलोहसंग्रामभूषणम्।**
**शिवस्थापनखाताम्बुकर्माष्टम्यां विधीयते।।**
**व्रतोपवासवैवाहकृषिवाणिज्यभूषणम्।**
**शिल्पनृत्यं गृहं कर्म एकादश्यां विचित्रकम्।।**
**[४]नृपाभिषेकमाङ्गल्यसेवायानास्त्रकर्म यत्।**
**औषधाहवधान्यादि विधेयं रविवासरे।।**
**शङ्खमुक्ताम्बुरजतवृक्षेक्षुस्त्रीविभूषणम्।**
**पुष्पगीतक्रतुक्षीरकृषिकर्मेन्दुवासरे।।**
**नृत्यशिल्पकलागीतलिपिभूरससंग्रहम्।**
**विवाहधातुसंग्रामकर्म सौम्यस्य वासरे।।**
**नृत्यगीतादिवादित्रस्वर्णस्त्रीरत्नभूषणम्।**
**भूपण्योत्सवगोधान्यकर्म भार्गववासरे।।**
**[१]स्थापनाश्वादियानं च कृषिविद्यादयोऽश्विभे।।**
**प्रतिष्ठायानसीमन्तवस्त्रवास्तूपनायनम्।**
**क्षौरास्त्रकर्मादितिभे विधेयं धान्यभूषणम्।।**
**अनृतव्यसनद्यूतक्रोधाग्निविषदाहकम्।**
**विवादरसवाणिज्यं कर्म कद्रुजभे शुभम्।।**
**कृषिवाणिज्यगोधान्यरणोपकरणादिकम्।**
**विवाहनृत्यगीताद्यं निखिलं कर्म पैत्रभे।।**
**विवादविषशस्त्राग्निदारुणोग्राहवादिकम्।**
**पूर्वात्रयेऽखिलं कर्म कर्तव्यं मांसविक्रयम्।।**
**प्रतिष्ठोपनयोद्वाहवस्त्रसीमन्तभूषणम्।**
**प्रवेशाश्वेभकृष्यादिक्षौरकर्म समीरभे।।**
**वस्त्रभूषणवाणिज्यवस्तुधान्यादिसंग्रहः।**
**इन्द्राग्निभे नृत्यगीतशिल्पलोहाश्मलेखनम्।।**
**क्षौरास्त्रशस्त्रवाणिज्यगोमहिष्यम्बुकर्म यत्।**
**इन्द्रभे गीतवादित्रशिल्पलोहाश्मलेखनम्।।**
**विवाहकृषिवाणिज्यदारुणाहवभेषजम्।**
**नैर्ऋते नृत्यशिल्पास्त्रशस्त्रलोहाश्मलेखनम्।।**
**मित्रेन्दुत्वाष्ट्रहस्तार्द्रादितिभान्त्योश्व (? न्त्याश्वि)-वायुभम्।**
**तिर्यङ्मुरवाख्यं नवकं भानां तत्र विधीयते।।**
**हलप्रवाहगमनं गन्त्री यन्त्रगजोष्ट्रकम्।**
**अजादिग्रहणं चैव हयकर्म यतस्ततः।।**
**खरगोरथनौयानं लुलायहयकर्म च।**
**शकटग्रहणं चैव तथा पश्वादिकर्म च।।**
**[२]मृदुध्रुवक्षिप्रचरविशाखापितृभेषु च।**
**हलप्रवाहं प्रथमं विदध्यान्मूलभे वृषैः।।**

---

§ मपा. गृकगतम्।

(१) **नासं.** १९।४९; **गृक.** २३२; **गृर.** ४५६; **मपा.** २१८; **निप्र.** २।२७२; **बाल.** १।१२१ पृ. ३८३.

(२) **नासं.** १९।५०; **गृक.** २३२ यस्यैव (यं एनं) हि प्रतिगृह्णन्तो (ते प्रतिगृह्णन्ति) कदा (कथं); **गृर.** ४५६ प्रथमचरणे (विदुर्य एवं दैवत्यं) हि (ते) कदा (कथं); **मपा.** २१८ ज्ञो ह्यमि (ज्ञोऽस्तमि) शेषं गृरवत्; **निप्र.** २।२७२ यस्यैव (यं एवं) हि प्रतिगृह्णन्तो (ये प्रतिगृह्णन्ति) लिप्यन्ते कदा (दुष्येयुः कथं); **बाल.** १।१२१ पृ. ३८३ यस्यैव (यं एवं) तस्य हि (तस्येति) कदा (कथं).

(३) **ज्योना.** ४।५, १०,१२,१४.

(४) **ज्योना.** ५।१-२,४,६.

(१) **ज्योना.** ६।४,९,११-१३, १७-१८, २०-२१, २८-३०.

(२) **ज्योना.** ६।३९.

[1]हलादौ वृषनाशाय भत्रयं सूर्यभुक्तभात्।
अग्रे त्रयं च वै लक्ष्म्यै सौम्यं पार्श्वे च पञ्चकम्।।
[2]शूलत्रयेऽपि नवकं मरणायान्यपञ्चकम्।
श्रियै पुच्छे त्रयं श्रेष्ठं स्याच्चक्रे लाङ्गले शुभम्।।
[3]मृदुध्रुवक्षिप्रभेषु पितृवायुवसूडुषु।
समूलभेषु बीजोप्तिरत्युत्कृष्टफलप्रदा।।
[4]भवेद्भत्रितयं मूर्ध्नि धान्यनाशाय राहुभात्।
गले त्रयं कज्जलाय वृद्ध्यै च द्वादशोदरे।।
[5]निस्तण्डुलत्वं लाङ्गूले भचतुष्टयमीरितम्।
नाभौ वह्निः पञ्चकं यद्बीजोप्ताविति चिन्तयेत्।।
[6]मङ्गलानि स्थिराण्येव वेश्यकर्मप्रवर्तनम्।
कृषिवाणिज्यपश्वादि वृषलग्ने प्रसिध्यति।।
इक्षुधान्यवणिक्पण्यकृषिसेवादि यत्स्थिरम्।
साहसावहभूपाढ्यं सिंहलग्ने प्रसिध्यति।।
कृषिवाणिज्ययानाश्वपशूद्वाहव्रतादिकम्।
तुलायामखिलं कर्म तुलाभाण्डाश्रितं च यत्।।
तोयबन्धनमोक्षास्त्रकृष्यं चोष्ट्रादिकर्म यत्।
प्रस्थानं पशुदासादि कर्तव्यं मकरोदये।।
कृषिवाणिज्यपश्वम्बुशिल्पकर्म कलादिकम्।
जलयात्रास्त्रशस्त्रादि कर्तव्यं कलशोदये।।

बीजवापे नक्षत्रयोगादिरूपो मुहूर्तः,
कर्षकाणां वृषाणां च गुणाः,
भूमिप्रार्थना

[7]कुर्वीत रेखात्रयमूर्ध्वगामि
पश्चात् त्रिभिस्तत्सहितं त्रिशूलैः।
षट्तिर्यगन्यद्वितयं विदिक्स्थं
बीजोप्तिचक्रं स्मृतमेतदार्यैः।।
मूर्ध्न्यर्कयुक्तं सगतागतं भं
न शोभनं कोणगतानि सन्ति।
तिर्यक्स्थितं मध्यफलं भषट्कं
फलं न यच्छन्ति नवापराणि।।
न व्यतिपाते विष्ट्यां
वैधृतिशूलादिदुष्टयोगेषु।
दर्शं रिक्तां हित्वा
बीजोप्तिः सस्यवृद्धये भवति।।
स्नातैर्विगतक्रोधै –
र्वृद्धैः शुभवाग्भिरव्यग्रैः।
शकुननिमित्तबले सति
वृषैरकृष्णैर्वपेद्बीजम्।।
बीजोप्तिर्लग्नगे चन्द्रे तद्दिने च विशेषतः।
गुरौ केन्द्रे शुभैर्युक्ते दृष्टयोः कर्मलग्नयोः।।
त्वं वै वसुंधरे देवि सितपुष्पफलप्रदे।
नमस्ते मे शुभं कृत्वा कृषिवृद्धिकरी शुभे।।
रोहन्तु सर्वसस्यानि काले देवः प्रवर्षतु।
कर्षकस्तु वदेदेवं धनधान्येन युज्यते।।

स्तेयापवादः, प्रतिग्राह्याण्युत्तम-
मध्यमद्रव्याणि

*[1]शालिव्रीहितिलानां तु मुष्टिर्ग्राह्या विधीयते।
यवगोधूमयोर्वाऽपि यदि वा मुद्गमाषयोः।।
[2]एतेषां मानवैर्मुष्टिर्ग्रहीतव्याऽऽपदि स्थितैः।
शाकं शाकप्रमाणेन गृह्यमाणं न दुष्यति।।

(१) **ज्योना.** ६।४०; **आपा.** १३७ त्रयं च वै (वृद्ध्यै त्रयं) फलप्रदीपे; **ज्योनि.** २२५ हलादौ वृ (हलभृद्द) उत्तरार्धे (अग्नेर्वृद्ध्यै त्रयं लक्ष्म्यै सोमपार्श्वे च पञ्चकम्।।).

(२) **ज्योना.** ६।४१; **आपा.** १३७ णायान्य (णं याम्य) पुच्छे त्र (पुच्छद्व) शुभम् (शुभे) फलप्रदीपे; **ज्योनि.** २२५ पुच्छे त्र (पुच्छद्व).

(३) **ज्योना.** ६।४२.

(४) **ज्योना.** ६।४३; **ज्योनि.** २२६.

(५) **ज्योना.** ६।४४; **ज्योनि.** २२६ वह्निः (बहिः) यद्बी (च बी).

(६) **ज्योना.** १४।२, ५,७,१०-११.

(७) **ज्योनि.** २२६.

* स्तेयापवादोऽयम्।

(१) **समु.** ५० मुष्टिर्ग्राह्या (मुष्टिर्ग्राह्यो); **गृक.** ३२३-३२४ तिलानां तु (प्रसूनानां) ह्या वि (ह्यो वि); **स्मृच.** २।४६७; **गृर.** ५२१ तिलानां तु (मसूराणां) यदि वा (यद्वाऽथो) शेषं समुवत्; **निप्र.** २।४२३ तिलानां तु (प्रसूनानां) मुद्गमाष (माषमुद्ग) शेषं समुवत्.

(२) **समु.** २६ माणं (माणो) उत्त. (=): ५० (एतेषां मानवैर्मु) एतावदेव; **गृक.** ३२४ पूर्वार्धे (अनिषिद्धैर्गृहीतव्यो मुष्टिरेकः पथि स्थितैः); **स्मृच.** २।४६७; **गृर.** ५२१ व्याऽऽपदि स्थि (व्या पथिस्थि).

शाकप्रमाणं हारीतोक्तं मुष्टिद्वयम्।

+ गृक. ३२४

**[१]हिरण्यरत्नकौषेयाः स्त्रीपुंसौ गजवाजिनः।**
**देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमम्।।**
**[२]वासः कौषेयवर्जं च गोवर्जं पशवस्तथा।**
**हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि।।**

वार्धुष्यनिन्दा, वार्धुष्य-
कुसीदलक्षणे

**[३]भ्रूणहत्यां च तुलया वार्धुष्यं समतोलयत्।**
**अतिष्ठद्भ्रूणहा कोट्यां वार्धुषिः समकम्पत।।**
**[४]वृद्धिस्तु योक्ता धान्यानां वार्धुष्यं तदुदाहृतम्।**
**[५]स्थानलाभनिमित्तं यद्दानं ग्रहणमिष्यते।**
**तत्कुसीदमिति प्रोक्तं तेन वृत्तिः कुसीदिनाम्।।**

स्थानम् अवस्थानं मूलधनस्य। तेन मूलावस्थान एव लाभनिमित्तं धनादिप्रयोगरूपमृणदानं कुसीदमित्यर्थः। कलाहीने तु तस्मिंस्तत्तुल्यत्वाद्गौणः प्रयोगः।

बाल. १।११९ पृ. ३६८

याचनानिन्दा, अदानशीलकर्तृक-
प्रतिग्रहनिन्दा, अविक्रेयाः
पदार्थाः, बीजवापो
दिवैव

**[६]यस्तु याचनको मर्त्यो न स स्वर्गस्य भाजनम्।**
**उद्वेजयति भूतानि यथा चोरस्तथैव सः।।**
**सक्ताः प्रतिग्रहे ये तु न तु दाने कदाचन।**
**तेषां वैवस्वतः प्राह न तूर्ध्वं गमनं क्वचित्।।**
**[७]कुसुम्भं नारिकेलं च वृन्ताकं पूतिकं तथा।**
**सोमश्लेष्मातको यज्ञस्तोयं सर्पिश्च सर्वथा।।**

+ गृर. गृकवत्।

(१) **निप्र.** २।२८२.

(२) **निप्र.** २।२८३.

(३) **मुक्ता.** ६३.

(४) **गृक.** २१६; **गृर.** ४४५; **मर.** १८७ वार्धुष्यं (वार्धुषं); **निप्र.** २।३१९ स्तु यो (स्तयो).

(५) **बाल.** १।११९ पृ. ३६८.

(६) **आपा.** ११२.

(७) **स्मृच.** २।४७८.

अविक्रेयमित्यनुवृत्तौ नारदोऽपि – कुसुम्भमिति।

स्मृच. २।४७८

**[१]बीजनिर्वापणं क्षौरं विद्यारम्भोपनायनम्।**
**राजाभिषेकं स्नानादि दिवैवोक्तं स्वयंभुवा।।**

## बृहस्पतिः

भूमिप्रतिग्रहप्रशंसा, ब्राह्मण-
प्रशंसा

**[२]भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति।**
**उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ।।**
**ब्रह्मस्वे मा रतिं कुर्यात्प्राणैः कण्ठगतैरपि।**
**अनौषधमभैषज्यं विषमेतद्धलाहलम्।।**
**न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।**
**विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्।।**
**लोहचूर्णाश्मचूर्णं च विषं च जरयेन्नरः।**
**ब्रह्मस्वं त्रिषु लोकेषु कः पुमाञ्जरयिष्यति।।**
**मन्युप्रहरणा विप्रा राजानः शस्त्रपाणयः।**
**शस्त्रमेकाकिनं हन्ति विप्रमन्युः कुलत्रयम्।।**
**मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः।**
**चक्रात्तीव्रतरो मन्युस्तस्माद्विप्रं न कोपयेत्।।**
**अग्निदग्धाः प्ररोहन्ति सूर्यदग्धास्तथैव च।**
**मन्युदग्धस्य विप्राणामङ्कुरो न प्ररोहति।।**
**अग्निर्दहति तेजसा सूर्यो दहति रश्मिभिः।**
**राजा दहति दण्डेन विप्रो दहति मन्युना।।**
**ब्रह्मस्वेन तु यत्सौख्यं देवस्वेन तु या रतिः।**
**तद्धनं कुलनाशाय भवत्यात्मविनाशनम्।।**
**ब्रह्मस्वं ब्रह्महत्या च दरिद्रस्य च यद्धनम्।**
**गुरुमित्रहिरण्यं च स्वर्गस्थमपि पीडयेत्।।**
**ब्रह्मस्वेन तु यच्छिद्रं तच्छिद्रं न प्ररोहति।**
**प्रच्छादयति तच्छिद्रमन्यत्र तु विसर्पति।।**
**ब्रह्मस्वेन तु पुष्टानि साधनानि बलानि च।**
**संग्रामे तानि लीयन्ते सिकतासु यथोदकम्।।**

(१) **आपा.** १४१.

(२) **बृस्मृ.** ३२, ४५-५५, ५८, ५९.

अविद्वदप्रतिग्राह्याः पदार्थाः, चातुर्वर्ण्यस्य मुख्या वृत्तयः, क्षेत्रगुणदोषौ, कृषिकुसीददोषशमनानि, ब्राह्मणस्याऽऽपद्वृत्तयः शूद्रवृत्तिनिषेधश्च,

कुसीदप्रशंसा

**आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु।**
**विनश्येत्पात्रदौर्बल्यात्तच्च पात्रं विनश्यति।।**
**एवं गां च हिरण्यं च वस्त्रमन्नं महीं तिलान्।**
**अविद्वान्प्रतिगृह्णाति भस्मीभवति काष्ठवत्।।**
**[1]स्वाध्यायोऽध्यापनं चापि यजनं याजनं तथा।**
**दानं प्रतिग्रहश्चापि षट् कर्माण्यग्रजन्मनः।।**
**इज्याऽध्ययनदाने च प्रजानां परिपालनम्।**
**शस्त्रास्त्रधारणं सेवा कर्माणि क्षत्रियस्य तु।।**
**स्वाध्यायो यजनं दानं पशूनां पालनं तथा।**
**कुसीदकृषिवाणिज्यं वैश्यकर्माणि सप्त वै।।**
**[2]शौचं ब्राह्मणशुश्रूषा सत्यमक्रोध एव च।**
**शूद्रकर्म तथा मन्त्रो नमस्कारोऽस्य चोदितः।।**
**[3]विदधीत गवाभ्यासे(? शे)तथा राजपथस्य च।**
**ऊषरं मूषिकाव्याप्तं क्षेत्रं यत्नेन वर्जयेत्।।**
**गर्तानूपं सुसेकं च समन्तात्क्षेत्रसंयुतम्।**
**सुकृष्टं च तथा काले वापयन् फलमश्नुते।।**
**[4]राज्ञे दत्त्वा तु षड्भागं देवतानां च विंशकम्।**
**त्रिंशद्भागं च विप्राणां कृषिं कृत्वा न दोषभाक्।।**
**[5]अजीवन्कर्मणा स्वेन विप्रः क्षत्रं समाश्रयेत्।**
**वैश्यकर्माथवा कुर्याद्वार्षलं परिवर्जयेत्।।**

(१) **पमा.** १।७७.

(२) **गृक.** २६५ सत्य (नित्य) स्य चोदितः (त्र वेदितः); **गृर.** ४७५ स्य चोदितः (त्र देशितः); **पमा.** १।७७; **मपा.** २३०; **मर.** १२; **शूक.** ६५.

(३) **गृर.** ४२९-४३०.

(४) **अप.** ३।४१ पृ. ९३७ च (तु); **गृक.** १९५ दत्त्वा तु (दत्त्वा च) गं च (गं तु); **स्मृच.** २।४५४ ज्ञे दत्त्वा तु (ज्ञो दद्यात्तु) गं च (गं तु) कृत्वा न दोषभाक् (कुर्वन्न दुष्यति); **गृर.** ४३१ दत्त्वा तु (दद्याच्च); **मर.** १७८ देवतानां च (देवानां चैक) गं च (गं तु) कृत्वा न (कुर्वन्न); **निप्र.** २।३१२ त्रिंशद्भा (विंशभा); **आत.** ३४९; **बाल.** १।११९ पृ. ३७१ दत्त्वा तु (दत्त्वाऽथ) पू.

(५) **स्मृच.** २।४७०; **विपा.** ३।२।२५१ क्षत्रं (क्षात्रं) द्वार्षलं परिव (द्धीनकर्म विव).

वृषलः शूद्रः। स्मृच. २।४७०

**[1]कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम्।**
**आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः।।**

(१) परकृतकृष्याद्यसंभवे तु स्वयंकृतमपि कृष्यादि भवत्येव। यथोक्तं बृहस्पतिना – 'कुसीद ... द्विजः।।' इति। स्मृच. २।४७०-४७१

(२) वैश्यवृत्तावपि कृषिः कारणीया, स्वयं न कार्या। यथोक्तं बृहस्पतिना – कुसीदेति। संम. ७८

(३) तस्मादनापदि कारयितृत्वम्, आपदि कर्तृत्वं चाभ्युपगतम्। आन. ६३४

**[2]लब्धलाभः पितॄन्देवान् ब्राह्मणांश्चापि पूजयेत्।**
**ते हृष्टास्तस्य तं दोषं शमयन्ति न संशयः।।**

तद्दोषं कुसीदादिवृत्तिकृताधर्मम्। गृर. ४२८

**[3]वणिक्कुसीदी दद्यात्तु वस्त्रगोकाञ्चनादिकम्।**
**कृषीवलोऽन्नपानानि यानशय्यासनानि च।।**
**[4]पण्येभ्यो विंशकं दत्त्वा पशुस्वर्णादिकं शतम्।**
**वणिक्कुसीद्यदोषः स्याद्ब्राह्मणानां च पूजने।।**
**[5]बहवो वर्तनोपाया ऋषिभिः परिकीर्तिताः।**
**सर्वेषामपि चैतेषां कुसीदमधिकं विदुः।।**

(१) **गृक.** १८९ तास्वयं (त स्वयं) त्काले स्वयं (त्कल्पेऽन्यथा) न्नैन (न्नेन) बौधायनः; **स्मृच.** २।४७१ तास्वयं (त स्वयं) कुर्व (कुर्या); **गृर.** ४१७, ४२८; **पमा.** १।४२७; **मर.** १७९-१८० कुर्व (कुर्या); **आत.** ३४९; **मुक्ता.** ६२ दकृषि (दं कृषि) तास्वयं (त स्वयं) कुर्व (कुर्या); **संम.** ७८ मरवत्; **आन.** ६३४ मरवत्; **बाल.** १।११८ पृ. ३६५ तास्वयं (त स्वयं) ले स्वयं (लेऽन्यथा) न्नैन (न्नेन).

(२) **गृक.** १८९ लाभः (कामः) हृष्टा (तुष्टा) बौधायनः; **गृर.** ४२८ तं दोषं (तद्दोषं); **आत.** ३४९ श्चापि पू (श्चैव भो) हृष्टा (तृप्ता).

(३) **गृक.** १९० बौधायनः; **गृर.** ४२८ सीदी (सीदन्); **आत.** ३४९.

(४) **गृक.** १९० पण्ये (पणे) पूज (भोज) बौधायनः; **गृर.** ४२८ स्वर्णा (वर्णा); **आत.** ३४९ पूजने (पूजनात्).

(५) **गृक.** २२१; **स्मृच.** २।४७३; वर्त (वर्ध); **गृर.** ४४८; **मपा.** २३० मधिकं (मपि तं); **निप्र.** २।३१९ वर्तनोपाया (वृत्तिदोषाये) स्मृत्यन्तरम्; **आत.** ३५४; **बाल.** १।११९ पृ. ३६८ नोपाया (नीयाया).

एवं वाणिज्येन जीवनासंभवे कुसीदवृत्त्या जीवेत्। एतस्य( ? च्च) स्वयं कृतमपि काम्यम्, स्मृत्यन्तरे च 'बहवो वृत्तिदोषा ये....।।' इति प्रशंसादर्शनाच्च।

निप्र. २।३१९

**[1]अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः।**
**कृष्यादिके भवेद्धानिः सा कुसीदे न विद्यते।।**
**[2]शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेऽपि वा।**
**उष्णे वर्षति शीते वा वर्धते न निवर्तते।।**
**[3]देशं गतानां या वृद्धिर्नानापण्योपजीविनाम्।**
**कुसीदं कुर्वतः सम्यक् सा स्थितस्यैव जायते।।**
**[4]असतोऽपि समादाय साधुभ्यः संप्रयच्छति।**
**धनस्वामिनमात्मानं संतारयति दुस्तरात्।।**

राज्ञः सकाशात् भूमिमात्रप्रतिग्रहः साधुमान्यः, विपत्तौ जीवनहेतवः, वार्धुषनिन्दा, वृद्धेश्चातुर्विध्यम्, वृद्धि-परिमाणम्

**[5]अतिपापकृतां राज्ञां प्रतिगृह्णन्ति साधवः।**
**पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम्।।**
**[6]सेवा गोशकटारामयाच्ञावृत्तिर्वणिक् कृषिः।**
**अनूपं पर्वतो राजा विपत्तौ जीवनानि तु।।**

(१) गृक. २२१; स्मृच. २।४७३ न्मूषि (न्मूष) द्रवैः (प्लवैः); गृर. ४४८ सा कुसीदे (कुशीदे सा); मपा. २३० राज (गज) कृष्या (वृष्ट्या) दे न विद्यते (देन घातयेत्); आत. ३५४ भयान्मू (भयैर्मू) द्रवैः (प्लवैः); बाल. १।११९ पृ. ३६९ मूषि (न्मूष).

(२) गृक. २२१ वर्षति शीते (वर्षे निशीथे) वर्धते (वर्धनं); स्मृच. २।४७३; गृर. ४४८ वर्षति शीते (शीतेऽतिवर्षे) ते न नि (नं विनि); बाल. १।११९ पृ. ३६९ सेऽपि वा (से तथा) र्षति शीते (र्षेऽथ वाते).

(३) गृक. २२१ देशं (दिशं) सा स्थित (साऽस्मिंस्त); स्मृच. २।४७३; गृर. ४४८ गृकवत्; बाल. १।११९ पृ. ३६९ देशं (दिशं) पण्यो (पत्यो) तस्यै. (तेश्चै).

(४) गृक. २३८-२३९; गृर. ४६० पि स (पीद) दुस्तरा (दुष्कृता); मपा. २२० समा (स्वमा); निप्र. २।३०२ तोऽपि (तो यः) दुस्तरा (दुष्कृता).

(५) बाल. १।१४१ पृ. ४०२.

(६) गृक. २२३ पूर्वार्धमशुद्धिबहुलम्; निप्र. २।३२८.

(१) वणिक् वाणिज्यम्। गृक. २२३

(२) अनूपं जलप्रायो देशः शालूकाद्याहरणेन। राजा सर्वप्रकारवृत्त्यसंभवे अशास्त्रवृत्त्यराजन्यप्रसूतोऽपि प्रतिग्रहेण जीवनहेतुः। निप्र. २।३२८

**[1]भोगो यद्द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते।**
**मूलं च सोदयं पश्चाद्वार्धुषं तद्विगर्हितम्।।**

(१) भोगः द्विगुणीभूतधनादधिकवृद्धिग्रहणम्। चक्रवृद्धिः कलायामेव या कला। सोदयं यावत् मूल्यं ग्राह्यत्वेन व्यवस्थापितं तावतोऽधिकम्। * गृक. २१५

(२) पूर्णे ऋणतुल्ये सति सोदयं ततोऽधिकलभ्यं गृह्यते यत्तद्विगर्हितमित्यन्वयः। मच. ८।१५३

**[2]कायिका कायसंयुक्ता मासग्राह्या च कालिका।**
**वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता।।**
**[3]अशीतिभागो वर्धेत लाभो द्विगुणतामियात्।**
**प्रयुक्तं सप्तभिर्वर्षैस्त्रिभागोनैर्न संशयः।।**
**[4]हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके।**
**धान्ये चतुर्गुणा प्रोक्ता शदवाहलवेषु च।।**
**तृणकाष्ठेष्टकासूत्रकिण्वचर्मास्थिवर्मणाम्।**
**हेतिपुष्पफलानां तु वृद्धिस्तु न निवर्तते।।**

एतद्द्विगुणाधिकं मासि मास्यनर्पणे। मासि मासि ग्रहणे तु §द्विगुणाधिकमपि बहुकालेन वर्धते। तथा पुरुषान्तरसंचारा-

* गृर., मर., बाल. गृकवत्।

§ पूर्वोक्तिविरोधादशुद्धोऽयं ग्रन्थः। सिद्धस्य गतिस्तु एवं चिन्तनीया – अपिर्भिन्नक्रमः। 'काले न' इति छेदः। द्विगुणाधिकमिति न द्रव्यविशेषणम्, अपि तु क्रियाविशेषणम्। बहुकाले गतेऽपि न द्विगुणादधिकं यथा भवति तथा वर्धते इत्यर्थः।

(१) गृक. २१५; ममु. ८।१५३ भोगो (भागो) मूलं (पूर्णे) षं त (ष्यं त); गृर. ४४५ भोगो यद्वि (भागाय द्वि) पश्चाद्वार्धुषं (दद्याद्वार्धुष्यं); मर. १८७ भोगो य (भोगाद्य) र्धुषं (र्धुष्यं); मच. ८।१५३ ममुवत्; बाल. १।११९ पृ. ३६८ भोगो यद्द्वि (भोगाद्या द्वि).

(२) मेधा. ८।१५३ तृतीयचरणमात्रम्, स्मृत्यन्तरे; ममु. ८।१५३; मच. ८।१५३; नन्द. ८।१५३ कायसंयुक्ता (कर्मसंशोध्या) कारिता (कारिका).

(३) गृक. २१८; गृर. ४४६-४४७.

(४) निप्र. २।३२२.

द्विनाऽधि(? राद्द्विगुणाधि)कवृद्धौ न दोषः, 'सकृदाहिता' (मस्मृ. ८।१५१) इति मनुवचनात्। निप्र. २।३२२

हलवाहसंख्याविधिः, हलवाहदोषाः, कृषितदङ्गकर्ममुहूर्ताः, स्तेयापवादः

**[1]अष्टवाहं हलं धर्म्यं षड्गवं मध्यमं स्मृतम्।**
**चतुर्गवं जघन्यं च शास्त्रविद्भिरुदाहृतम्।।**
**[2]कृशातिवृद्धं क्षुद्रं च रोगिणं प्रपलायिनम्।**
**काणं खञ्जं च नाऽऽदद्याद्वाह्यं प्राज्ञः कृषीवलः।।**
**[3]वारेषु कौजः श्रेष्ठोऽ+त्र मध्यमौ बुधजीवयोः।**
**शेषा वारा विवर्ज्याः स्युः सोमवारः कदाचन।।**
**आर्यर्क्षे तस्य लग्ने च कर्तव्यं लाङ्गलादिकम्।**
**रोहिण्यां शोभनांशे तु वृषे लग्ने कृषिः शुभा।।**

आर्यर्क्षे पुष्यर्क्षे। आपा. १३६

**चित्रायां चोदिते चन्द्रे कृषिं कुर्याद्विचक्षणः।**
**याम्यर्क्षेषूदये कुर्यात्कृषिमारण्यकं तथा।।**
**[4]यस्य बीजस्य यः कालो भूमेरार्तवसंभवः।**
**तस्मिन्काले च तद्बीजं शुभं निर्वापयेद्बुधः।।**
**[5]याम्ये वैष्णववैशाखे त्वभ्यां शेषानि संकटे (?)।**
**प्रथमं लवनं कुर्यात्.......।।**
**रिक्ताविष्टिविवर्ज्यासु(?) तिथिषूक्तासु चैव हि।**
**शुभवारे शुभे लग्ने प्रथमं लवनं शुभम्।**
**[6]त्रपुषोर्वारुके द्वे तु पञ्चाऽऽम्रं पञ्चदाडिमम्।**
**खर्जूरबदरादीनां मुष्टिं गृह्णन्न दोषभाक्।।**

उर्वारुकं कर्कटी। * गृक. ३२३

+ अत्र भूमिप्रवेशे।

* गृर., निप्र. गृकवत्।

(१) **अप.** ३।४१ पृ. ९३८.

(२) **गृर.** ४३३.

(३) **आपा.** १३६.

(४) **आपा.** १४१.

(५) **आपा.** १४२.

(६) **गृक.** ३२३ त्रपुषो (त्रपुणे) बृहस्पतिकात्यायनौ; **गृर.** ५२०-५२१ बदरा (दाडीमा) दोषभाक् (दूष्यति) बृहस्पतिकात्यायनौ; **निप्र.** २।४२३ रुके (रुकं) मुष्टिं (षष्टिं) बृहस्पतिकात्यायनौ.

## कात्यायनः

कृष्यारम्भयज्ञे निर्वापाहुतिसंख्या – चरुपरिमाणविधानम्

**....... [1]कृष्यारम्भे तथैव च।**
**कथमेतेषु निर्वापाः कथं चैव जुहोतयः।।**
**देवतासंख्यया ग्राह्या निर्वापास्तु पृथक्पृथक्।**
**तूर्ष्णी द्विरेव गृह्णीयाद्धोमश्चापि पृथक्पृथक्।।**
**यावता होमनिर्वृत्तिर्भवेद्या यत्र कीर्तिता।**
**शेषं चैव भवेत्किंचित्तावन्तं निर्वपेच्चरुम्।।**

कारिता – मणिमुक्तादि – प्रीति-दत्तानां वृद्धिपरिमाणानि, स्तेयापवादः

**[2]ऋणिकेन कृता वृद्धिरधिका संप्रकल्पिता।**
**आपत्कालकृता नित्यं दातव्या कारिता तथा।**
**अन्यथा कारिता वृद्धिर्न दातव्या कथंचन।।**

अधिकामं स्वेच्छया। अन्यथा अनापत्काले। मच. ८।१५३

**[3]मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।**
**तिष्ठति द्विगुणा वृद्धिः फलकैट्याविकस्य च।।**

कैट्यं कीटप्रभवम्। आविकं कम्बलादि। निप्र. २।३२२

**[4]प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम्।**
**याच्यमानं न दत्तं चेद्वर्धते पञ्चकं शतम्।।**

प्रीतिदत्तं परितोषाद्यर्थे दत्तं न वर्धते (लभ्यं?) न यावदपि याचितम्। (याचितं) न दत्तं चेच्छतं प्रति पञ्चकं वर्धत इति कात्यायनवचनार्थः। मच. ८।१५२

**+ त्रपुषोर्वारुके द्वे तु पञ्चाऽऽम्रं पञ्च दाडिमम्।**
**खर्जूरबदरादीनां मुष्टिं गृह्णन्न दोषभाक्।।**

+ अस्य व्याख्यानं स्थलादिनिर्देशश्च अस्मिन्नेव प्रकरणे अस्मिन्नेव वचने बृहस्पतौ द्रष्टव्यः।

(१) **कास्मृ.** ३।९६-९८.

(२) **ममु.** ८।१५३; **मच.** ८।१५३ प्रथमार्धं (धनिकेन तु या वृद्धिरधिकामं प्रकल्पिता।) लकृता(ले कृता)ता तथा (ता तु सा).

(३) **निप्र.** २।३२१.

(४) **ममु.** ८।१५२; **मच.** ८।१५२.

धर्मजीवनसाधनधनार्जनोपायाः, दातृविशेषेभ्यो धनग्रहणनिषेधः, आपदि पुत्रदारादि-दानविक्रययोरनुमतिः

**[1]उपन्यस्तेन यल्लब्धं विद्यया पणपूर्वकम्।**
**शिष्यादार्त्विज्यतः प्रश्नात्संदिग्धप्रश्ननिर्णयात्।।**
**[2]विज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत्।**
**धनमेवंविधं सर्वं विज्ञेयं धर्मसाधनम्।।**
**[3]अयाचितशिलोञ्छैश्च शिष्यदत्तैः क्रमागतैः।**
**जीवेत्कर्मविशुद्धेभ्यः प्रतिगृह्यापि वा धनम्।।**

निवृत्तस्य जीवनोपायमाह – अयाचितेति। इदमपि सीदन्निवृत्तविषयम्। आन. ६२४-६२५

**[4]याचितेनापि वार्तेन दैन्यं हित्वा शमस्थितः।**
**स्तोकादानेन वा नित्यं प्रतिगेहमतन्द्रितः।।**
**[5]दधिक्षीरघृतादीनां लवणस्य पशोस्तथा।**
**विक्रयिभ्योऽपि नाऽऽदद्यादश्वविक्रयिणस्तथा।।**
**[6]कौसीदकात्तथा भोक्तुः श्राद्धस्य सततं तथा।**
**न ग्रामयाजकेभ्यश्च नागम्यागामिनस्तथा।**
**वणिग्भ्यश्च तथा शूद्राद्विसृष्टाग्नेर्न चाऽऽहरेत्।।**

कौसीदकः वार्धुषिकः। मुक्ता. ५५

**[7]आपत्काले तु कर्तव्यं दानं विक्रय एव वा।**
**अन्यथा न प्रवर्तेत इति शास्त्रविनिश्चयः।।**

प्रक्रमात्पुत्रदाराणां दानानि निषिध्यन्ते। संग. ५५१

## व्यासः

त्रयो वर्णा द्विजातयो वेदाधिकारिणश्च, ब्राह्मणप्रशंसा, षड्विधो वेदविक्रयः

**[8]ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।**
**श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु ते नराः।।**
**शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति।**
**वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना।।**
**[1]ब्राह्मणो येन जायेत नान्यो वर्णः कथंचन।**
**ईदृशं रथमास्थाय कोऽन्यस्तं त्यक्तुमुत्सहेत्।।**
**ब्राह्मणः स भवेच्चैव देवानामपि दैवतम्।**
**प्रत्यक्षं चैव लोकस्य ब्रह्मतेजो हि कारणम्।।**
**ब्राह्मणस्य मुखं क्षेत्रं निरूषरमकण्टकम्।**
**वापयेत्तत्र बीजानि सा कृषिः सार्वकामिकी।।**
**यस्य देहे सदाऽश्नन्ति हव्यानि त्रिदिवौकसः।**
**कव्यानि चैव पितरः किं भूतमधिकं ततः।।**
**[2]प्रख्यापनं प्राध्ययनं प्रश्नपूर्वः प्रतिग्रहः।**
**याजनाध्यापने वादः षड्विधो वेदविक्रयः।।**

याजनाध्यापने चात्र भृतिपूर्वके। वादः अत्र पणपूर्वकः। गृक. २०६

शूद्रदातृकप्रतिग्रहे विधिनिषेधौ, लोभ-मूलकातिरिक्तधनसंचयनिषेधः, प्रतिग्रहदोषशमनम्

**[3]कुटुम्बार्थे तु सच्छूद्रात्प्रतिग्राह्यमयाचितम्।**
**क्रत्वर्थमात्मने चैव न हि याचेत कर्हिचित्।।**

आत्मने स्वजीवितायेत्यर्थः। अयाचितमिति 'अमृतं स्यादयाचितम्' इति विधानात्। आन. ५६०

**[4]द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजोत्तमः।**
**अपि वा जातिमात्रेभ्यो न तु शूद्रात्कथंचन।।**

---

(१) **मुक्ता.** ५५ प्रश्नात्सं (प्रश्नासं); **आन.** ६२४.
(२) **मुक्ता.** ५५; **आन.** ६२४ शंसना (साधना).
(३) **मुक्ता.** ५५ शिलो (सिलो); **आन.** ६२४.
(४) **मुक्ता.** ५५.
(५) **मुक्ता.** ५५; **आन.** ६२५.
(६) **मुक्ता.** ५५-५६; **आन.** ६२५.
(७) **संग.** ५५१.
(८) **व्यास्मृ.** १।५-६.

---

(१) **व्यास्मृ.** ४।४८-५०, ५६.
(२) **गृक.** २०५-२०६ व्यासच्छागलेयौ.
(३) **पमा.** १।१८५; **मर.** १७२ सच्छू (वै शू) ह्यमया (ह्यं तु या) याचेत (याचितं); **मुक्ता.** २२, ५६; **आन.** ५६० च्छूद्रात्प्र (च्छूद्राप्र) : ६२५-६२६ ने चैव (नश्चैव).
(४) **समु.** ४९ तिभ्यो (दिभ्यो) त्तमः (त्तमम्) अशुद्धिबहुलो ग्रन्थः; **गृक.** २३१ त्तमः (त्तम) वा जाति (द्विजाति); **स्मृच.** २।४६६; **गृर.** ४५५ तृतीयचरणे (अथ राजादिपात्रेभ्यो); **पमा.** १।१८४; **मपा.** २१७ तु प्रशस्तेभ्यो द्विजो (च्छिष्टेभ्यो द्विजस) जातिमात्रेभ्यो न तु शूद्रांत्क (द्विजमात्रेभ्यो न शूद्रात्तु क); **दीक.** १।१३० कथं (कदा); **मर.** १७० उत्तरार्धे (अपि वा द्विजमात्रेभ्यो न शूद्रात्तु कदाचन); **निप्र.** २।२६८ दीकवत्; **मुक्ता.** ५५; **आन.** ६१९; **बाल.** १।१२१ पृ. ३८२.

(१) यदा तु गर्हितद्विजातिप्रतिग्रहाद्यपि न संभवति तदा शूद्रादपि प्रतिगृह्णीयादित्युक्तं भवति।

स्मृच. २।४६६

(२) द्विजमात्रेभ्यः इति निर्गुणधर्मरहितेभ्योऽपि।

मपा. २७०

(३) द्विजमात्रेभ्यः गुणमात्ररहितेभ्यः। मर. १७१

**[१]प्रतिग्रहरुचिर्न स्याद्यात्रार्थं तु समाहरेत्।**
**स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम्।।**
**[२]वृत्तिसंकोचमन्विच्छेन्नेहेत धनसंचयम्।**
**धनलाभे प्रवृत्तस्तु ब्राह्मण्यादेव हीयते।।**

वृत्तिः वर्तनम्। † स्मृच. २।४५९

**[३]अभ्युष्णात्सघृतादन्नादच्छिद्राच्चैव वाससः।**
**अपरप्रेष्यभावाच्च भूय इच्छन् पतत्यधः।।**
**[४]प्रतिगृह्य द्विजो नित्यं दुग्धा गौरिव गच्छति।**
**पुनराप्यायते धेनुस्तृणैरमृतसंभवैः।**
**एवं जपैश्च होमैश्च पुनराप्यायते द्विजः।।**

साधकासाधकगृहस्थभेदेन वृत्तिभेदाः, अतिरिक्तधनार्जननिषेधः, ब्राह्मण-तदितरलब्धधनानां विनियोगभेदः

**[५]द्विविधस्तु गृही ज्ञेयः साधकश्चाप्यसाधकः।**
**अध्यापनं याजनं च पूर्वस्याऽऽहुः प्रतिग्रहम्।।**
**कुसीदं कृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम्।**
**आपत्कल्पस्त्वयं ज्ञेयः पूर्वोक्तो मुख्य इष्यते।।**

† आपा. स्मृचवत्।

(१) **गृक.** २४९ द्यात्रार्थं (द्यानार्थं); **स्मृच.** २।४५९ द्यात्रार्थं (द्वत्यर्थं) हरेत् (चरेत्) स्थित्यर्था (वृत्त्यर्था); **गृर.** ४६८; **पमा.** १।१८६ हरेत् (चरेत्); **आपा.** ११२-११३ द्यात्रार्थं (त्स्थित्यर्थं) हरेत् (चरेत्); **निप्र.** २।२४८ द्यात्रार्थं (द्वत्यर्थं) तु (तं) शेषं पमावत्; **मुक्ता.** ५५; **आन.** ६२१ स्थित्यर्था (वृत्त्यर्था).

(२) **स्मृच.** २।४५९; **पमा.** १।१८६ संचयम् (विस्तरम्); **आपा.** ११३ द्वितीयचरणे (न लभेद्धनविस्तरम्); **मुक्ता.** ५६ संचयम् (विस्तरे) लाभे प्रवृत्त (लोभप्रवृत्ति).

(३) **मुक्ता.** ५५; **आन.** ६२१ अपर (अप).

(४) **मुक्ता.** ५९; **आन.** ६२९.

(५) **मुक्ता.** ६०.

**असाधकस्तु यः प्रोक्तो गृहस्थाश्रमसंस्थितः।**
**शिलोञ्छे तस्य कथिते द्वे वृत्ती परमर्षिभिः।।**
**अमृतेनाथवा जीवेन्मृतेनाप्यथवाऽऽपदि।**
**अयाचितं स्यादमृतं मृतं भैक्षं तु याचितम्।।**
**[१]विद्यमाने धने यस्तु प्रतिग्रहरुचिर्द्विजः।**
**रौरवं नरकं प्राप्य तत्रैव परिपच्यते।।**
**[२]हिरण्यमामश्राद्धीयं लब्धं यत्क्षत्रियादितः।**
**यथेष्टं विनियोज्यं स्याद्भुञ्जीयाद्ब्राह्मणात्स्वयम्।।**

विप्राल्लब्धं भुञ्जीयात्, क्षत्रियादिलब्धे तु यथेष्टं विनियोगः। शूक. ५९

स्तेयापवादः, ब्राह्मणस्याऽऽपद्वृत्तयः, कृषि-वाणिज्ये वैश्यवृत्ती, वर्णत्रय-शुश्रूषा शूद्रवृत्तिः

**[३]आपत्सु विहितं स्तैन्यं विशिष्टसमहीनतः।**
**हीनादादेयमादौ स्यात्समाद्वा तदनन्तरम्।**
**असंभवे त्याददीत विशिष्टादपि धार्मिकात्।।**

यदा तु शूद्रादपि प्रतिग्रहासंभवः क्षत्रियादिवृत्त्यसंभवश्च तदा स्तैन्यं विहितमित्याह व्यासः – आपत्स्विति।

स्मृच. २।४६६

**[४]क्षत्रवृत्तिं परमाहुर्न स्वयं कर्षणं द्विजैः।**
**तस्मात्क्षत्रेण वर्तेत वर्तनेनाऽऽपदि द्विजः।**
**तेन चैवाप्यजीवंस्तु वैश्यवृत्तिं कृषिं य( ? भ)जेत्।।**
**[५]कृषिक्रिया च वाणिज्यं वैश्यकर्म यथाविधि।**
**वर्णत्रयाणां शुश्रूषा वृत्तिः शूद्रस्य कीर्तिता।।**

वर्णोत्पत्तिः, स्तेयापवादपत्रपुष्पादिप्रचयरीतिः, जातकर्मणि प्रतिग्रहानुज्ञा, ब्राह्मणप्रशंसा

**[६]सिसृक्षोर्ब्रह्मणस्तस्य वक्त्रबाहूरुपादतः।**
**विप्रक्षत्रियविट्शूद्रा उदहु( ? भु)स्तत्क्रमेण (च)।।**

(१) **विपा.** ३।२।२४८.

(२) **शूक.** ५९.

(३) **स्मृच.** २।४६६.

(४) **मुक्ता.** ६०.

(५) **सस्मृ.** ११९.

(६) **सस्मृ.** ११२.

**[1]पत्रं पुष्पं प्रचिन्वानो मूलच्छेदं तु वर्जयेत्।**
**मालाकार इवाऽऽरामे न यथाऽङ्गारकारकः।।**
**[2]जाते कुमारे तदहः कामं कुर्यात्प्रतिग्रहम्।**
**हिरण्यधान्यगोवासस्तिलांश्च मधुसर्पिषी।।**
**[3]न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।**
**देवस्वं चापि यत्नेन सदा नापहरेत्ततः।।**

कुसीदे वृद्धिपरिमाणम्, ब्राह्मणस्य तिलेक्षुपीडननिषेधः

**[4]सबन्धे भाग आशीतः साष्टभागः सलग्नके।**
**निराधाने द्विकशतं मासलाभ उदाहृतः।।**

(१) आशीतिः अशीतितमः। अयमेव च सलग्नके स्वकीयाष्टमभागसहितः साष्टभागः। निराधाने बन्धकरहिते। † गृक. २१८

(२) मासलाभः मासवृद्धिः। ‡ मर. १९५

(३) सबन्धके ऋणप्रयोगे आशीतो भागः। अशीतिकार्षापणे कार्षापणं मासेन वर्धते। सलग्नके यत्र दर्शनप्रत्ययवानेकत्र प्रतिभूस्तिष्ठति तत्र धनप्रयोगे पणद्वयाधिककार्षापणो वर्धते, अशीतितमभागस्याष्टमांशप्रवेशात्। निराधाने बन्धकप्रतिभूरहिते द्विकशतं द्विसहितं शतं गृह्णीयात्। शतपणस्य मासे पणद्वयवृद्धिरित्यर्थः। एतच्च ब्राह्मणात्। निप्र. २।३२०

**[5]तिलान्पीडयते विप्रो यत्र चक्रे स्वयं क्वचित्।**
**पीडयेद्धि द्विजो मोहान्नरकं याति रौरवम्।।**
**[6]इक्षुवंशोद्भवः सोमः सोमवंशोद्भवो द्विजः।**
**इक्षुं न पीडयेत्तस्मादिक्षुघात्यात्मघातकः।।**

† गृर. गृकवत्।
‡ शेषं गृकवत्।
(१) **स्मृच.** २।४६८.
(२) **संग.** ४४५.
(३) **मुक्ता.** ६५.
(४) **गृक.** २१८ आशीतः (आशीतिः); **गृर.** ४४७; **मर.** १९५; **निप्र.** २।३२०.
(५) **आपा.** १४६.
(६) **आपा.** १४६; **निप्र.** २।३०९ (इक्षुं न पीडयेत्, इक्षुघ्नो ह्यात्मघातकः) एतावदेव (=).

(१) इक्षुविषये विशेषमाह – इक्ष्विति। आपा. १४६

(२) 'इक्षुं न पीडयेत्' इति पीडननिषेधादिक्षुकृषिरपि न कार्या। निप्र. २।३०९

## देवलः

ब्राह्मणप्रशंसा, चातुर्वर्ण्यवृत्तयः, वर्ज्या वृत्तयः, शूद्रस्याऽऽपद्वृत्तिः

**[1]दुर्लभं भारते वर्षे जन्म तस्मिन् मनुष्यता।**
**मानुष्ये ब्राह्मणत्वं च दुर्लभं सुतरां मतम्।।**
**[2]द्विविधो गृहस्थो यायावरः शालीनश्च। तयोर्यायावरः प्रवरो याजनाध्यापनप्रतिग्रहरिक्थसंचयवर्जनात्। षट्कर्माधिष्ठितः प्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्ती शालीनः।।**

(१) शालीनोऽपि चतुर्विधः याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवत्येकः। याजनादिभिस्त्रिभिरन्यः। याजनाध्यापनाभ्यामपरः। चतुर्थस्त्वध्यापनेनैव। × मिता. १।१२८

(२) चयः संचय इत्यर्थः। आन. ६३२

**[3]क्षत्रधर्मः .... बलिकरशुल्कषड्भागोपजीवनम्।।**

बलिः उपायनम्। करः कारुकृषीवलेभ्यो नियतधनादानम्। शुल्कः तरादिपण्यम्। षड्भागोपजीवनम्, धान्यादीनामिति शेषः। « गृक. २५५

× निप्र. मितावत्।
« बाल. गृकगतम्।
(१) **विपा.** ४।६.
(२) **मिता.** १।१२८; **मपा.** २१६ रः प्रवरो... शालीनः (रो याजनाध्ययनप्रतिग्रहरिक्थस्य च वर्जनात्। शालीनस्तु प्रेष्यचतुष्पादधनधान्ययुक्तशालायां लोकानुवर्ती स चतुर्विधः); **मर.** १६८ ध्यापन (ध्ययन) रिक्थसंचयवर्जनात् (विवचये वर्जयेत्); **निप्र.** २।२६१ संचयव (चयविव); **मुक्ता.** ६० संचय (चय) धनधान्य (धनादि) वर्ती (वृत्तिः); **संम.** ८३ (द्विविधो....वर्जनात्०); **वीमि.** १।१२७ (संचय०) प्रेष्यचतुष्प (प्रैष्यचतुःप); **आन.** ६३२-६३३ संचय (चय).
(३) **गृक.** २५४-२५५. शेषस्थलादिनिर्देशाः 'वर्णसामान्यधर्माः' इत्यस्मिन् प्रकरणे द्रष्टव्याः.

[1]**वैश्यधर्मः...कर्षणं पशुपालनं भारोद्वहनपण्यव्यवहारनर्तनगायनतालावतरणरङ्गोपजीवनं चेति।।**

गायनमत्र गीतम्। तालावतरणम् अत्र वादनम्। रङ्गः मल्लयुद्धभूमिः। इह तु मल्लविद्योपलक्ष्यते।

« गृक. २५५

[2]**लूनशीर्णमनुज्ञातं शिलम्।।**

[3]**यागाध्ययनदानास्त्रप्रजारक्षाभयादि च।**
**दण्डनीतिर्धनुर्वेदः क्षत्रियस्यानुवृत्तये।।**
**स्वाध्यायादीनि कर्माणि कुसीदं पशुपालनम्।**
**कृषिक्रिया च वाणिज्यं वैश्यकर्माण्यमूनि च।।**

[4]**चिकित्सां ज्योतिषं रूपं शकटं तिलपीडनम्।**
**सुरां तुलां च नाऽऽजीवेत्पुत्राचार्यत्वमेव च।।**

(१) रूपं वेश्यादीनामिव जीवनोपायः। पुत्राचार्यता आचार्यतया पुत्राद्धनादानम्। गृक. २२८

(२) शकटनिषेधः दुर्भिक्षं विना। † गृर. ४५२

(३) शकटं वाहनान्मूल्यदानेन। सुरां विक्रयेण। परस्य द्रव्यस्य क्रयादिकालोत्तोलनया जीवनं तुला।

† निप्र. २।३२७

[5]**लाक्षामाञ्जिष्ठमांसानि मधुलोहविषाणि च।**
**अजीवन्वृषलोऽप्यार्यः कर्मणा तेन वर्जितः।।**

अयं च विधिनिषेधः सच्छूद्रस्य। पूर्वं लवणमधुमद्यमित्यनुज्ञानमसच्छूद्रविषयमिति पारिजातः। ‡ इदमपि मधुमात्र एवेति प्रमाणविदः। गृर. ४८०

---

« बाल. गृकगतम्।

† शेषं गृकवत्।

‡ पूर्वं 'लवणं मधु तक्रं वा' इति पराशरवचनेन यान्यनुज्ञातानि तत्रत्यमेकं मध्वेव प्रकृतवचनेऽस्तीत्यत्रानुसंधेयम्।

(१) **गृक.** २५५ शेषस्थलादिनिर्देशाः 'वर्णसामान्यधर्माः' इत्यस्मिन् प्रकरणे द्रष्टव्याः.

(२) **मवि.** १०।११२.

(३) **मुक्ता.** ६०.

(४) **गृक.** २२८; **गृर.** ४६२ सुरां तु (सुरास्तु); **निप्र.** २।३२७ पीड (पात) रां तु (रातु).

(५) **गृक.** २२८; **गृर.** ४५२ माञ्जिष्ठ (मञ्जिष्ठ) अजी (आजी) : ४७९-४८० अजी (आजी) प्यार्यः (प्यार्यैः) वर्जितः (वर्जिम्).

[1]**शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि।।**

हलवाहने वर्ज्या वृषभाः,
कर्षणबीजवापादौ
कर्तव्यं पूजनम्

[2]**पुंस्त्वोपघातं नस्यां वा वाहनानां न कारयेत्।**
**वृद्धं युग्मं( ? ग्यं) न युञ्जीत जीर्णं व्याधितमेव च।।**

[3]**न षण्डं वाहयेद्धेनुं न गां भारेण पीडयेत्।**
**न वाहनीयाः शिशिरे वृषभा यत्रकुत्रचित्।।**

[4]**ब्रह्मा विष्णुश्च रुद्रश्च कश्यपः सुरभिस्तथा।**
**इन्द्रः प्रचेताः पर्जन्यः शेषचन्द्रार्कवह्नयः।।**

[5]**बलदेवो हलं भूमिर्वृषभौ रामलक्ष्मणौ।**
**रक्षोघ्नौ जानकी सीता युगं गगनमेव च।।**

[6]**एते द्वाविंशतिः प्रोक्ताः प्रजानां पतयः शुभाः।**
**गोमङ्गलेषु संपूज्याः कृष्यारम्भे महोत्सवे।।**

[7]**अर्घ्यैः पुष्पैस्तथा धूपैर्माल्यै रत्नैः पृथक् पृथक्।**
**सदक्षिणैर्विधानेन होमैर्ब्राह्मणतर्पणैः।।**

---

(१) **स्मृच.** २।४५६ शेषस्थलादिनिर्देशाः 'वर्णधर्माः' इत्यस्मिन् प्रकरणे द्रष्टव्याः.

(२) **गृक.** १९६ नस्यां (नास्ये) युग्मं (युग्मे); **गृर.** ४३२ मेव च (मेव वा); **मर.** १७७ अशुद्धिबहुलो ग्रन्थः; **निप्र.** २।३१० नस्यां (नस्यं) युग्मं (युगे).

(३) **गृक.** १९७ ब्रह्मपुराणे; **गृर.** ४३३ ब्रह्मपुराणे; **निप्र.** २।३१० न गां (न च) शिशिरे (शिखरे).

(४) **गृक.** १९६ भिस्तथा (भी तथा) ब्रह्मपुराणे; **गृर.** ४३२ कश्य (काश्य) शेषच (शेषश्च) शेषं सर्वं गृकवत्; **निप्र.** २।३१० क्रमेण देवलः.

(५) **गृक.** १९६ भूमिर्वृ (भूमिर्ऋ) गगन (गमन) ब्रह्मपुराणे; **गृर.** ४३२ गगन (गमन) ब्रह्मपुराणे; **निप्र.** २।३१० भूमिर्वृ (भूमिवृ) क्रमेण देवलः.

(६) **गृक.** १९६ ब्रह्मपुराणे; **गृर.** ४३२ ब्रह्मपुराणे; **निप्र.** २।३११ (एते द्वाविंशतिः प्रोक्ताः कृष्यारम्भमहोत्सवे। यो लाङ्गले तु संपूज्य कृष्यारम्भमहोत्सवे।।) क्रमेण देवलः.

(७) **गृक.** १९७ ब्रह्मपुराणे; **गृर.** ४३२ अर्घ्यैः (अर्घैः) ब्रह्मपुराणे; **निप्र.** २।३११ अर्घ्यैः (गन्धैः) णैर्विधा (णैर्दधा).

**[1]ततः शाकुनसूक्तेन वाद्यशब्देन भूरिणा।**
**हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलंकृतः।।**
**[2]पूर्वोत्तरां दिशं गच्छेत्क्रमात् पौरंदरीं शुभाम्।।**
**[3]कृत्वा प्रदक्षिणावृत्तिमैशान्यभिमुखस्ततः।**
**विमुच्य वृषभौ बीजं पुरुषो लक्षणान्वितः।।**
**[4]तुष्टः सुवासाः स्रग्वी च सुवर्णजलसेचितम्।**
**सुवर्णपात्रसंयुक्तं प्राङ्मुखो निवपेद्भुवि।।**
**[5]उप्त्वा बीजं च तत्रैव भोक्तव्यं सह बन्धुभिः।**
**उत्सवश्चैव कर्तव्यो गीतवाद्यसमाकुलः।।**

स्तेयापवादः, अविक्रेयम्,
अकर्षणीया
भूमिः

**[6]अस्तेयमग्नये काष्ठमस्तेयं पशवे तृणम्।**
**अस्तेयं फलमारण्यमस्तेयं पार्थिवं जलम्।।**
पार्थिवं भूमिष्ठं परकूपादिस्थितमनुत्सृष्टम्।
* गृक. ३२२

**[7]अपण्यं कूटपण्यं वा विक्रये न प्रयोजयेत्।।**
**[8]पुण्यस्थानोदकस्थाने सीमान्तं वा कृषेन्न च।।**

* गृर. गृकवत्।

(१) **गृक.** १९७ शाकुनसूक्तेन (शकुनिभुक्तेन) ब्रह्मपुराणे; **गृर.** ४३२ ब्रह्मपुराणे; **निप्र.** २।३११ पूर्वार्धे (ततः शक्तिविमुक्तेन ब्रह्मवादेन भूरिणा।) हलेन (हलयेद्).

(२) **गृक.** १९७ ब्रह्मपुराणे; **गृर.** ४३२ ब्रह्मपुराणे; **निप्र.** २।३११.

(३) **गृक.** १९७ वृत्तिमैशान्यभि (वर्तमैशान्याभि) ब्रह्मपुराणे; **गृर.** ४३२ वृत्ति (वर्त) खस्ततः (खोद्यतः) ब्रह्मपुराणे; **निप्र.** २।३११ मैशान्य (मीशाना) वृषभौ (वृषभं).

(४) **गृक.** १९७ तुष्टः (हृष्टः) निव (निर्व) ब्रह्मपुराणे; **गृर.** ४३२ तुष्टः (तृप्तः) त्रसंयुक्तं (त्रे कृत्वा तु) निव (निर्व) ब्रह्मपुराणे; **निप्र.** २।३११ द्वितीयचरणे (सुवर्णे जलसेचकः).

(५) **गृक.** १९७ सह बन्धुभिः (बन्धुभिः सह) ब्रह्मपुराणे; **गृर.** ४३२ सर्वं गृकवत्; **निप्र.** २।३११.

(६) **गृक.** ३२२; **गृर.** ५१९.

(७) **गृक.** ४०८ कूट (कूष्ट); **गृर.** ५८३.

(८) **गृक.** ४०९; **गृर.** ५८४ द्वितीयचरणे (सीमानं कर्षयेन्न च).

## उशना

अविदुषा अप्रतिग्राह्याणि, सच्छूद्रासच्छूद्रविवेकः,
ब्राह्मणस्याविक्रेयाणि, शूद्रवृत्तिः

**[1]अपूपं च हिरण्यं च गामश्वं पृथिवीं तिलान्।**
**अविद्वान्प्रतिगृह्णानो भस्मीभवति काष्ठवत्।।**
**[2]शूद्रादेव तु शूद्रायां जातः शूद्र इति स्मृतः।**
**द्विजशुश्रूषणपरः पाकयज्ञपरान्वितः।**
**सच्छूद्रं तं विजानीयादसच्छूद्रस्ततोऽन्यथा।।**
**[3]अविक्रेयाणि ब्राह्मणेन।।**
**शुक्तिविषतुषकुतपसलिलसोमगन्धक्षौमरक्तवस्त्र-कौशेयचर्मकम्बलप्रभृतीनि।।**

कुतपः नेपालकम्बलः। गृक. २०४

**[4]उष्ट्रर्षभहया न विक्रेयाः।।**
**[5]शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि वाऽप्यथ।**
**विक्रयः सर्वपण्यानां शूद्रधर्म उदाहृतः।।**

(१) शिल्पानि विचित्रकर्माणि। विप्रशुश्रूषा धर्मार्था, 'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते' (मस्मृ. १०।१२३) इति मनुस्मरणात्। सर्वशिल्पानीत्यापद्विषयम्।
स्मृच. २।४५५

(२) उशनसाऽपि क्रमो निबद्धः – 'शूद्रस्य.... हृतः।।' इति। शूशि. ४१

## प्रजापतिः

चातुर्वर्ण्यवृत्तयः, आपद्वृत्तयो दुर्वृत्तयश्च,
वार्धुषिकत्वनिन्दा

**[6]भैक्ष्यं(? क्षं) द्रव्यं हि विप्राणां क्षत्रियाणां प्रजार्पितम्।**
**वैश्यानां कृषिवाणिज्यं शूद्राणां सेवयाऽऽगतम्।।**

(१) **औसं.** ३।११८.

(२) **औस्मृ.** ४९-५०.

(३) **गृक.** २०३; **गृर.** ४३६.

(४) **मभा.** ७।१५.

(५) **स्मृच.** २।४५५ धर्म उदाहृतः (कर्म उदाहृतम्); **पमा.** १।३१० प्यथ (पि च) पण्या (वस्तू) धर्म उदाहृतः (कर्मेत्युदाहृतम्); **स्मृकौ.** ९४; **शूशि.** ४१; **शूक.** ७१ वाऽप्य (चाप्य).

(६) **प्रस्मृ.** ४३-५२, ८८.

**धनं पवित्रं विप्राणामस्ति तीर्थसमर्पितम्।**
**तर्पयेत्तेन वै देवान्मृतान्पितृगणातिथीन्।।**
**स्वति वाच्य द्विजैर्नीतं धनं दुष्टप्रतिग्रहम्।**
**अग्नितीर्थेषु पतितं सद्यो याति पवित्रताम्।।**
**अयाचितं धनं पूतं शुक्लवृत्त्या समागतम्।**
**विवाहलब्धं वेजिनं( ? विजितं) पैत्रं (पित्र्यं) शिष्यनिवेदितम्।।**
**ब्राह्मणः क्षत्रियविशां जीव्यवृत्तिं समाश्रयेत्।**
**स्ववृत्तेरुपहानित्वान्न श्ववृत्त्या( ? त्तिं) कदाचन।।**
**वर्णानां तु त्रिधा वृत्तिरुत्तमा मध्यमाऽधमा।**
**हास( ? सः) पुण्यफलांशस्य क्रमात्तद्धनदानलः - ( ? तः)।।**
**धनं चिकित्सासंबन्धि ग्रामयाच( ? ज) कगायिनी- ( ? नाम्)।**
**कथयत्व( ? या च) समानीतमग्राह्यं पितृकर्मणि।।**
**चित्रकृन्नटवेश्यानां धारकार( ? रे)क्षुमर्दिनाम्।**
**स्वस्त्या अपि न तद्ग्राह्यं धनं कथककूटयोः।**
**मूल्यैश्चिकित्सां कुरुते कथां चित्रां तनोति यः।**
**गीतं गायति भृत्यर्थं विप्रः सन्प्लवगो मतः।।**
**युगधर्मेण वर्णानां धनं ग्राह्यं द्विजातिभिः।**
**प्रकृतिना परिस्वस्त्या न्यायागतमथो यदि।।**
**समर्घं योऽन्नमादाय महार्घं तु प्रयच्छति।**
**स वै वार्धुषिको नाम अनर्हः सर्वकर्मसु।।**

## यमः

श्रेष्ठा ब्राह्मणवृत्तयः, अभोज्यान्नाः, वार्धुषिक-
लक्षणम्, ब्राह्मणस्य निषिद्धा वृत्तयः
तद्दोषशमनं कर्म च

[१]**आद्याश्चतस्रः श्रेष्ठाः स्युर्ब्राह्मणानां च वृत्तयः।।**
उञ्छशिलायाचितयाचितरूपाश्चतस्रः इत्यर्थः। निप्र. २।२५४

[२]**कर्मणा गर्हितेनेह यद्वित्तं समुपार्जितम्।**
**तस्य त्यागेन शुध्यन्ति.... न्वेषणेन च।।**

(१) **गृक.** १७०; **गृर.** ४१७; **निप्र.** २।२५४ प्रथमचरणमात्रम्, गौतमः; **बाल.** १।११८ पृ. ३६५.
(२) **निप्र.** २।२५८.

[१]**नटनर्तकवैतालचर्मकारसुवर्णकृत्।**
**स्थाणुकाषण्डगणिका अभोज्यान्नाः प्रकिर्तिताः।।**
तत्र निषिद्धदातृविषये यमः - 'नटनर्तक... पापान्न संशयः।।' स्थाणुका अभ्रातृमती। निप्र. २।२९६

**गन्धर्वो लोहकारश्च शुचिकस्तन्तुवायकः।**
**चक्रोपजीवी रजकः कितवस्तस्करस्तथा।।**
गन्धर्वः गायनवृत्तिः। निप्र. २।२९६

**ध्वजी मीनोपजीवी च शूद्राध्यापकयाजकौ।**
**कुलालश्चित्रकर्ता च वार्धुषी चर्मविक्रयी।।**
कुलालोऽत्रास्वकीयः, देवलेन कुलालस्य भोज्यान्नताभि-धानात्। तस्य स्वकीयविषयत्वम्। निप्र. २।२९६

[२]**समर्घं यः समादाय महार्घं यः प्रयच्छति।**
**स वै वार्धुषिको नाम ये तु वृद्ध्या प्रयुञ्जते।।**
(१) समर्घम् अत्रानुज्ञातं यथाप्रचरन्मूल्यम्। महार्घं चात्र शास्त्रानुज्ञातमूल्यातिरिक्तं मू( ? क्रमू)ल्यम्, वाणिज्यमात्र-स्याऽऽपदि ब्राह्मणस्यानुज्ञानात्। वृद्ध्या प्रयुञ्जते, अन्न( ?-अर्थ)मिति शेषः। गृक. २१५
(२) समर्घमिह यथाप्रचरन्मूल्यम्। महार्घं चेह प्रचर-न्मूल्याधिकमूल्यम्। वृद्ध्या शास्त्रा(न)नुज्ञातवृद्ध्या। अर्थमिति शेषः। वाणिज्याकुशीदयोरापद्यपि अनुज्ञाने एवंविधयोर्निषेधः। गृर. ४४४

[३]**वृथाश्रमी वृथा दाता आश्रमाणां च दूषकः।**
**पुण्यस्य विक्रयी यश्च योनिसंकरजश्च यः।।**
वृथा दाता दुष्टादुष्टप्रयोजनमनुद्दिश्य दाता। आश्रम ( ? माणां)भेदकः दूषकः। निप्र. २।२९६

**रङ्गोपजीवी कुण्डाशी वीरहा गुरुगुप्तिकः।**
**भिषक् च गरदश्चैव रूपाजीवी च सूचकः।**

(१) **निप्र.** २।२९५-२९६
(२) **गृक.** २१५; **गृर.** ४४४ यः समादाय (पण्यमाहृत्य) नाम ये तु (ज्ञेयो ये च); **दीक.** १।१३२ र्घं यः समादाय महार्घं (र्घ्यं परमादाय महार्घ्यं) नाम (ज्ञेयो) चतुर्थचरणे (यश्च वृद्ध्या प्रयोजयेत्); **निप्र.** २।२९६ (समार्घ्यं पण्यमादाय महार्घ्यं यः प्रयच्छति। स वै वार्धुषिको नाम यश्च वृद्धिं प्रयोजयेत्।।); **बाल.** १।१६१ पृ. ४२७ यः समादाय (पण्यमुद्धृत्य) चतुर्थचरणे (यश्च वृद्ध्या प्रयोजयेत्).
(३) **निप्र.** २।२९६.

**शौण्डिकः पार्णिकश्चैव निषादेन समाः स्मृताः।।**

गुरुगुप्तिकः गुरुं गोपायति। रूपाजीवी वेशकरणेन यो जीवति। पार्णिकः पत्रोपजीवी। निप्र. २९६

**कर्मस्वेतेषु यो मोहाद् ब्राह्मणो वर्तते सदा।**
**प्रायश्चित्तेऽपि चरिते परिहार्यो भवेत् स हि।।**
**एते ब्राह्मणचण्डालाः सर्वे ब्रह्महताः किल।**
**तस्माद्दैवे च पित्र्ये च वर्जयेत् तत्त्वदर्शिभिः।।**
**एतेषामेव सर्वेषां प्रत्यावृत्तिं तु मार्गताम्।**
**भिक्षान्नमुपयुञ्जानो द्विजश्चान्द्रायणं चरेत्।।**
**एतेषां ब्राह्मणो भुक्त्वा दत्त्वा कृत्वा प्रतिग्रहम्।**
**प्राजापत्येन शुद्ध्येत तस्मात् पापान्न संशयः।।**

ब्राह्मणस्याविक्रेयाणि,
याचनानिन्दा

**[1]कुसुम्भं नारिकेलं च वृन्ताकं पूतिकं तथा।**
**सोमः श्लेष्मातको यज्ञस्तोयं धर्मश्च सर्वशः।।**

(१) अविक्रय्य( ? य्या)इत्यधिकारे यमः – कुसुम्भमिति। शङ्खलिखितवाक्ये चातोऽधिके पानकृष्णाजिने निषिद्धे लिखिते। गृर. ४३५

(२) 'न विक्रीणीत' इत्यनुवृत्तौ यमः – कुसुम्भेति। निप्र. २।३१४

**[2]यस्तु याचनिको मर्त्यो न स स्वर्गस्य भाजनम्।**
**उद्वेजयति भूतानि यथा चोरस्तथैव सः।।**

दुष्प्रतिग्रहदोषशमनं दानम्, राजराजसंबन्धि-
दातृकप्रतिग्रहनिषेधः, याजना-
ध्यापनापेक्षया प्रतिग्रहः
श्रेष्ठः

**[3]यस्तु द्रव्यं पुनर्दद्यात्प्रतिगृह्य यतस्ततः।**
**यमः पृच्छति राजानं कैषा भवति दक्षिणा।।**

(१) **गृक.** २०१ नारिकेलं (नालिकेरं), क्रमेण याज्ञवल्क्यः; **गृर.** ४३५ पूतिकं (पौतिकं); **निप्र.** २।३१४ म्भं ना (म्भना) वृन्ताकं (छत्राकं) यज्ञस्तोयं धर्मश्च (धर्मस्तोमं यज्ञश्च).

(२) **गृक.** २४९ प्रथमचरणे (यश्च याचनको नित्यं) चोर (चौर); **स्मृच.** २।४५८; **गृर.** ४६८ गृकवत्.

(३) **गृक.** २३९ द्रव्यं (लब्धं) यमः (यः स) कैषा (केषां); **गृर.** ४६१ द्रव्यं (लब्धं) यमः (यः स) कैषा (का वा); **निप्र.** २।३०२.

**[1]जानताऽजानता वाऽपि यत्किंचिद्दुष्कृतं भवेत्।**
**सर्वं तरति धर्मात्मा प्रतिगृह्य पुनर्ददत्।।**
**[2]सक्ताः प्रतिग्रहे ये तु न तु दाने कदाचन।**
**तेषां वैवस्वतः प्राह न तूर्ध्वगमनं क्वचित्।।**
**[3]अराजन्यप्रसूतस्य राज्ञः स्वच्छन्दवर्तिनः।**
**घोरः प्रतिग्रहस्तस्य मध्वास्वादो विषोपमः।।**

अराजन्यप्रसूतः अक्षत्रियप्रसूतः। * स्मृच. २।४६१

**[4]राजकिल्बिषदग्धानां विप्राणामकृतात्मनाम्।**
**स्विन्नानामिव बीजानां पुनर्जन्म न विद्यते।।**

अकृतात्मानः निन्दितराजप्रतिग्रहानुष्ठानेन। † गृक. २३५

**[5]तस्मात्प्रतिग्रहं राज्ञो वर्जयन्ति मनीषिणः।**
**देवताग्नैर्द्विजाग्र्यैश्च पुनराप्याययन्ति ते।।**

देवब्रह्मस्वाभ्यामपि वरमात्मानमाप्याययन्ति, न तु राजप्रतिग्रहं कुर्वन्तीति तात्पर्यार्थः। ‡ गृक. २३६

**[6]तथैव राजमहिषी राजामात्यपुरोहिताः।**
**पापेनार्थेन संयुक्ताः सर्वे ते राजधर्मिणः।।**

* आपा. स्मृचवत्।
† गृर. गृकवत्।
‡ गृर., निप्र. गृकवत्।

(१) **गृक.** २३९; **गृर.** ४६१; **निप्र.** २।३०२ भवेत् (कृतम्).

(२) **गृक.** २३९ तूर्ध्वग (तूर्ध्वं ग); **स्मृच.** २।४५८; **गृर.** ४६१ ये तु (ये च) कदा (कथं) शेषं गृकवत्.

(३) **गृक.** २३५; **स्मृच.** २।४६१; **गृर.** ४५८; **मपा.** २१९ घोरः प्र (घोरप्र) हस्तस्य मध्वा (हस्यापि लब्धा); **आपा.** ११३; **मर.** १७१ घोरः प्र (घोरप्र) चतुर्थचरणोऽशुद्धः; **निप्र.** २।२७४ प्रथमचरणमात्रम् (=): २।२७५; **विपा.** ३।२।२४९; **बाल.** १।१४१ पृ. ४०१.

(४) **गृक.** २३५; **स्मृच.** २।४६०; **गृर.** ४५८-४५९; **आपा.** ११३; **मर.** १७१; **निप्र.** २।२७६.

(५) **गृक.** २३५; **गृर.** ४५९ देव (दैव) राप्याय (रप्याश); **निप्र.** २।२७६ ते (ये); **बाल.** १।१४१ पृ. ४०१ पू.

(६) **गृक.** २३५; **स्मृच.** २।४६१ त्यपु (त्याः पु) र्थेन (र्थेन); **गृर.** ४५९; **मपा.** २१९ र्थेन (र्थेन); **आपा.** ११३ त्यपु (त्याः पु); **मर.** १७१; **निप्र.** २।२६९ धर्मिणः (धर्मतः) : २।२७६ तृतीयचरणे (तत्पापेनार्थसंयुक्ताः), २।३०८; **विपा.** ३।२।२४९ त्यपु (त्याः पु) र्थेन (र्थेन); **बाल.** १।१४१ पृ. ४०१.

**[1]प्रतिग्रहाध्यापनयाजनानां**
**प्रतिग्रहं श्रेष्ठतमं वदन्ति।**
**प्रतिग्रहाच्छुध्यति जप्यहोमै-**
**र्याज्यं तु पापैर्न पुनन्ति वेदाः।।**

(१) याज्यं याजकमित्यर्थः। एतत् द्विजातिप्रतिग्रहाभिप्रायम्, शूद्रविषयस्यैव मनुना याजनाध्यापनाभ्यां निकृष्टत्वाभिधानात्।

स्मृच. २।४७६

(२) अत्र विशिष्टप्रतिग्रह एव विषयः। तस्यापि 'शुध्यति जप्यहोमैः' इति प्रायश्चित्तं विहितम्, किमु वक्तव्यं याजने प्रायश्चित्तं कर्तव्यमिति?।

आन. ५७६

भिक्षान्नप्रत्याख्याननिषेधः
तदपवादश्च

**[2]उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम्।**
**भोज्यां प्रजापतिर्मेने अपि दुष्कृतकर्मणः।।**
**[3]रक्षसां गच्छते योनिं यस्तामभ्यवमन्यते।।**
**[4]श्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः।**
**न त्वेव बहुयाज्यस्य यश्चोपनयते बहून्।।**
**[5]चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य च।**
**षण्ढसूतिकयोश्चैव उद्यतामपि वर्जयेत्।।**

मृगयुः व्याधः। कितवः द्यूतकृत्। सूनिकः हिंस्रः।

* स्मृच. २।४६४

* आपा. स्मृचवत्।

(१) **स्मृच.** २।४७६; **पमा.** १।१८३ पापैर्न (पापं न): १।१८४ (प्रतिग्रहाच्छुध्यति) एतावदेव (=); **मुक्ता.** २८ ग्रहाच्छु (ग्रही शु); **आन.** ५७५-५७६ ग्रहाच्छु (ग्रहः शु) पापैर्न (पापं न); **बाल.** १।१२१ पृ. ३८२ ष्ठतमं वदन्ति (ष्ठं प्रवदेत्) पू.

(२) **गृक.** २४६.

(३) **स्मृच.** २।४६३.

(४) **गृक.** २४६.

(५) **समु.** ४९ उत्तरार्धे (षण्डस्य कुलटायाश्च उद्यतं च विवर्जयेत्।।); **गृक.** २४६; **स्मृच.** २।४६४ उत्तरार्धे (षण्डसूनिकयोरेव उद्यतां परिवर्जयेत्।।); **गृर.** ४६६ षण्ढ (षण्ड); **आपा.** ११४ तिकयोश्चै (नकयोरे) तामपि व (तां परिव); **निप्र.** २।२६९ गृरवत् : २।२७३ पू.; **मुक्ता.** ५७ सूति (सूत) हारीतः.

मरणाशौचिदातृकप्रतिग्रहनिषेधः,
स्तेयापवादः, प्रतिग्रह-
निवृत्तिप्रशंसा

**[1]अनिर्दशाहे प्रेतस्य प्रतिगृह्णन्ति ये द्विजाः।**
**समाः शतसहस्रं ते नरकं पर्युपासते।।**

अनिर्दशाहे प्रेतस्य मृतकाशौचमध्ये इत्यर्थः।

गृक. २३७

**[2]तृणं काष्ठं फलं मूलं प्रकाशं वै हरेद्द्विजः।**
**गोब्राह्मणार्थे गृह्णन्वै न स पापेन लिप्यते।।**
**[3]प्रतिग्रहसमर्थस्य निवृत्तस्य प्रतिग्रहात्।**
**य एव ददतो धर्मः स एवाप्रतिगृह्णतः।।**
**[4]सर्ववेदाधिगमनात्सर्वदेवनिषेवणात्।**
**गवां कोटिप्रदानाच्च श्रेयांस्तस्यापरिग्रहः।।**

अविक्रेयाः पदार्थाः

**[5]रसगन्धतिलानां च लाक्षालवणसर्पिषाम्।**
**भूगोग्निक्षीरमेषाणां तैलाश्वजलवाससाम्।**
**मांसकृष्णाजिनानां च विक्रेता सर्वविक्रयी।।**
**[6]स्नेहद्रव्यरसानां च सत्त्वानां जीवतामपि।**
**विक्रेता दानपुण्यानां प्रोच्यते भ्रूणहा बुधैः।।**
**[7]वक्ता च दानपुण्यानां शपथे सोऽपि विक्रयी।**
**त्रपुसीसायसानां च धातूनामपि सर्वशः।।**

(१) **गृक.** २३७; **गृर.** ४६० ये (वै) ते (तु); **निप्र.** २।२७९ तृतीयचरणे (समागतं समग्रं ते); **बाल.** १।२१६ पृ. ४६९.

(२) **गृक.** ३२१ मूलं (पुष्पं); **स्मृच.** २।४६७; **गृर.** ५१९ तृणं का (तृणका) रेद्द्विजः (रन् वरः) न स (स न) शेषं गृकवत्; **निप्र.** २।४२२ गृकवत्.

(३) **स्मृच.** २।४६९; **आपा.** ११२.

(४) **गृक.** २४९ वेदाधि (देवाभि) देव (यज्ञ) परि (प्रति); **स्मृच.** २।४६९; **गृर.** ४६८ श्रेयांस्तस्यापरि (श्रेयस्तस्य विनि) शेषं गृकवत्; **आपा.** ११२ देव (यज्ञ) यांस्तस्यापरि (यान्हस्तविनि).

(५) **गृक.** २०४; **गृर.** ४३७ (=); **मर.** १८४.

(६) **गृक.** २०४-२०५; **स्मृच.** २।४८० पुण्या (पण्या) भ्रूण (ब्रह्म); **गृर.** ४३७ (=); **मर.** १८४ नां च (दीनां) जीव (जीवि) पुण्यानां (पुरुषाणां); **बाल.** १।११९ पृ. ३७२ पुण्यानां (पुण्यादौ).

(७) **गृक.** २०५; **गृर.** ४३७ सोऽपि वि (पुण्यवि) (=); **मर.** १८४ सोऽपि वि (सोमवि) सायसा (सरसा); **बाल.** १।११९ पृ. ३७२ सोऽपि वि (सोमवि) पू.

(१) स्नेहद्रव्यं तिलादि। सत्त्वानां प्राणिनाम्। शपथे शपथकरणे। दानपुण्यानां वक्तेत्यन्वयः।

¶ गृक. २०५

(२) 'मया दत्तं गोभूहिरण्यादि अन्यद्वा सुकृतं कृतं नश्यतु' इत्यर्थः। § गृर. ४३७

**[१]वज्रशुक्तिप्रवालानां मणीनां माक्षिकस्य च।**
**प्रतिरूपककर्ता च भ्रूणहा सोऽपि कथ्यते।।**
**[२]न तिलास्तैलतां यान्ति न गावो यान्ति क्षीरताम्।**
**रसस्तेषामविक्रेयो यथा गावस्तथा तिलाः।।**
**[३]गवां विक्रयकारी तु गवि रोमाणि यानि तु।**
**तावद्वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेत्।।**
**[४]दानाभ्यञ्जनभोगेभ्यो यदन्यत्कुरुते तिलैः।**
**क्रिमिर्भवति विष्ठायां कर्मणा तेन पापकृत्।।**

स्तेयापवादः

**[५]अस्तेयमग्नये काष्ठमस्तेयं च तृणं गवे।**
**कन्याहरणमस्तेयं यो हरत्यनलंकृताम्।।**

यो हरति, वरः गुणवानिति शेषः। अनलंकृताम् अन्यस्मै विवाहयितुमलंकृता या तदन्याम्। गृर. ५१९

**[६]पुष्पे( ? ष्पं) शाकोदके काष्ठे( ? ष्ठं) तथा मूलफले तृणे( ? णम्)।**
**अदत्तादानमेतेषामस्तेयं तु यमोऽब्रवीत्।।**

---

¶ मर., बाल. गृकवत्।

§ शेषं गृकवत्।

(१) **गृक.** २०५; **गृर.** ४३७; **मर.** १८४.

(२) **गृक.** २०९ (=); **गृर.** ४४०-४४१ तृतीयचरणे (रसास्तेषां न विक्रेया).

(३) **अप.** ३।३५-३८ पृ. ९३२ गवां गो (गव्यगो); **गृक.** २०६; **स्मृच.** २।४८० कृमि (क्रिमि); **गृर.** ४३८; **बाल.** १।११९ पृ. ३७३ कारी तु (कारी च).

(४) **स्मृच.** २।४८०; **पमा.** १।४३१-४३२ (भोजनाभ्यञ्जनाद्दा-नाद्यदन्यत्कुरुते तिलैः। कृमिर्भूत्वा स विष्ठायां पितृभिः सह मज्जति।।) मनुयमौ; **आपा.** १४६ क्रिमि (कृमि).

(५) **गृक.** ३२१; **गृर.** ५१९ तृणं गवे (गवे तृणम्); **निप्र.** २।४२२ गृरवत्.

(६) **गृक.** ३२१; **गृर.** ५१९ प्रथमचरणे (पुष्पकाष्ठोदके शाके) तु (च); **निप्र.** २।४२२ त्तादानमेतेषा (त्तदानमस्त्वेषा) तु (च).

**[१]पथिकः क्षीणवृत्तिस्तु द्वाविक्षू द्वे च मूलके।**
**आददानः परक्षेत्रे न दोषं ब्राह्मणोऽर्हति।।**

## बृहद्यमः

वार्धुषिकस्य लक्षणं निन्दा च, दातृविशेषेभ्यः प्रतिग्रहस्य निषेधः

**[२]समर्घं धनमुत्सृज्य मह( ? हा)र्घं यः प्रयच्छति।**
**स वै वार्धुषिको ज्ञेयो ब्रह्मवादिषु गर्हितः।।**
**रक्तवस्त्रस्य विक्रेता लाक्षारजकमे( ? ए)व च।**
**वेणुजीवनकैवर्ततक्षचर्मोपजीविनः।।**
**एतेषां स्पर्शनात्पापं तथा चैव तु मोहितः।**
**प्रतिग्रहाच्च विप्रो वै नरकं प्रति गच्छति।।**

राजदातृकप्रतिग्रहनिषेधः, असद्वृत्तिकब्राह्मण-निन्दा

**[३]राजप्रतिग्रहात्सर्वं ब्रह्मवर्चसमेव च।**
**नश्यतीति न संदेह इत्याह भगवान्यमः।।**
**राज्ञां प्रतिग्रहस्त्याज्यो लोकत्रयजिगीषुभिः।**
**राज्ञः प्रतिग्रहाच्चैव ब्राह्मण्यं हि विलुप्यते।।**
**गावो दूरप्रचारेण हिरण्यं लोभलिप्सया।**
**स्त्री विनश्यति गर्वे( ? र्भे)ण ब्राह्मणो राजसेवया।।**
**असेव्या( ? व्य)सेविनो विप्रा अयाज्यानां च याजकाः।**
**अपाङ्क्ता( ? ङ्क्त्या)स्ते च विज्ञेयाः सर्वधर्म — बहिष्कृताः।।**

## मरीचिः

अयाज्ययाजकनिन्दा

**[४]ब्राह्मणो हीनवर्णस्य यः कुर्यात्कर्म किंचन।**
**स तां जातिमवाप्नोति इह लोके परत्र च।।**

---

(१) **गृक.** ३२४; **गृर.** ५२१ वृत्तिस्तु (वृत्तिश्च); **निप्र.** २।४२२ द्वे च मूलके (देवमूलकौ) त्रे न (त्रान्न) ब्राह्मणोऽर्हति (मनुरब्रवीत्) मनुयमौ.

(२) **बृयस्मृ.** ३।२३, ५२-५३.

(३) **बृयस्मृ.** ४।५८-६०, ६२.

(४) **सिन्धु.** १४६; **कृभ.** १४७ (=).

## दक्षः

सद्वृत्तस्य प्रतिग्रह-
दोषाभावः

[1]**यस्तु जापी सदा होमी परपाकविवर्जितः।**
**सर्वरत्नामिमां पृथ्वीं प्रतिगृह्णन्न लिप्यते।।**

## भरद्वाजः

अयाचितप्राप्तप्रतिग्रहे दोषाभावः,
प्रतिग्रहे हस्ततीर्थविधिः

[2]**अयाचितोपपन्ने हि नास्ति दोषः प्रतिग्रहे।**
**अमृतं तद्विदुर्देवास्तस्मात्तन्नैव निर्णुदेत्।।**
**+[3]प्रतिग्रहस्त्वाग्नेयेन।।**

## संवर्तः

राजदातृकप्रतिग्रहनिषेधः, सद्वृत्तस्य
प्रतिग्रहदोषाभावः

[4]**राजप्रतिग्रहो घोरो मध्वास्वादो विषोपमः।**
**पुत्रमांसं वरं भोक्तुं न तु राजप्रतिग्रहम्।।**
[5]**यस्तु जापी सदा होमी परपाकविवर्जितः।**
**सर्वरत्नामिमां पृथ्वीं प्रतिगृह्णन्न लिप्यते।।**

## शातातपः

ब्राह्मणप्रशंसा

[6]**जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि।**
**सर्वं भवति निश्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः।।**
**ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः।**
**सर्वदेवमया विप्रा न तद्वचनमन्यथा।।**
**उपवासो व्रतं चैव स्नानं तीर्थफलं तपः।**
**विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम्।।**

+ तीर्थेनेति शेषः।

(१) **मुक्ता.** ५९ संवर्तदक्षौ.

(२) **समु.** ४९ तं तद्विदुर्देवास्त (तत्वं विजानीयात्त); **स्मृच.** २।४६३; **पमा.** १।१९० पन्ने हि (पन्नेषु); **आपा.** ११४.

(३) **आन.** ४३.

(४) **पमा.** १।१८७.

(५) **मुक्ता.** ५९ दक्षसंवर्तौ.

(६) **शास्मृ.** १।३०-३४.

**संपन्नमिति तद्वाक्यं वदन्ति ऋषिदेवताः।**
**प्रणम्य शिरसा सार्धमग्निष्टोमफलं लभेत्।।**
**ब्राह्मणा जङ्गमं तीर्थं निर्मलं सार्वकामिकम्।**
**तेषां वाक्योदकेनैव शुध्यन्ति मलिनो जनाः।।**
[1]**जन्मनैव महाभागो ब्राह्मणो नाम जायते।**
**नमस्यः सर्वभूतानां वर्णश्रेष्ठः पिता गुरुः।।**
[2]**नास्त्येषां पूजनीयोऽन्यस्त्रिषु लोकेषु कश्चन।**
**तपोविद्याविशेषेण पूजयन्ति परस्परम्।।**
[3]**अन्योन्यं गुरवो विप्रा अन्योन्यातिथयः स्मृताः।**
**अन्योन्यमुपकुर्वन्ति तारयन्ति तरन्ति च।।**
[4]**यो हि यां देवतामिष्टामाराधयितुमीहते।**
**सर्वोपायप्रयत्नेन स तोषयतु ब्राह्मणान्।।**
[5]**देवता द्रव्यभूतेषु क्वचित्काश्चित्प्रतिष्ठिताः।**
**ब्राह्मणो देवताः सर्वा अतस्तान् पूजयेत्सदा।।**

द्रव्यभूतेष्विति। ताम्रादिद्रव्यप्रभवेषु। क्वचित् केषुचित्स्थानेषु काश्चिद्देवताः प्रतिष्ठिता इति संबन्धः।

आप्र. ४५३

प्रश्नपूर्वकप्रतिग्रहनिषेधः, ब्राह्मणस्या-
विक्रेयाः पदार्थाः तद्विक्रय-
दुष्फलानि च

[6]**प्रश्नपूर्वं तु यो दद्याद्ब्राह्मणाय प्रतिग्रहम्।**
**स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम्।।**

(१) **निक.** १९३ वर्ण (जन्म); **गृर.** २९५; **मुक्ता.** ६९ नमस्यः (माताऽसौ); **आप्र.** ४५२.

(२) **निक.** १९३; **गृर.** २९५ नास्त्येषां (नान्येषां); **मुक्ता.** ६९ तपो (वेद) यन्ति (यन्तः); **आप्र.** ४५२.

(३) **निक.** १९३ कुर्वन्ति ता (कुर्वन्तस्ता); **गृर.** २९५ यः स्मृताः (यस्तथा); **मुक्ता.** ७० अन्योन्यं गु (अन्योन्यगु) कुर्वन्ति ता (कुर्वाणास्ता); **आप्र.** ४५२.

(४) **निक.** १९३ ष्टामा (च्छेदा) तुमीहते (तुं कश्चन) स तोषयतु (संतोषयति); **मुक्ता.** ७० चतुर्थचरणे (संतोषयतु स द्विजान्); **आप्र.** ४५२ ष्टामा (च्छेदा) तुमीहते (तुं कथंचन).

(५) **निक.** १९३; **मुक्ता.** ७० ता द्रव्य (तादिव्य) श्चित्प्रतिष्ठिताः (चित्प्रतिष्ठिता) र्वा अतस्तान् (र्वास्तस्मात्सं); **आप्र.** ४५३ स्तान् पूजयेत्सदा (स्तं परिपूजयेत्).

(६) **स्मृच.** २।४५८; **निप्र.** २।३०६ पूर्वार्धे (अर्थलोभेन यो दद्याद्गृह्णीयाच्च प्रतिग्रहम्।); **मुक्ता.** ३१; **आन.** ५८४.

**[1]सद्यः पतति मांसेन लाक्षया लवणेन च।**
**त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयी।।**
**[2]इतरेषामपण्यानां विक्रयादिह कामतः।**
**ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति।।**
**[3]आममांससुरासोमलाक्षालवणसर्पिषाम्।**
**विक्रये चाप्यपण्यानां द्विजश्चान्द्रायणं चरेत्।।**

## लघुशातातपः

षड्विधो वेदविक्रयः, अभोज्यादपि
प्रतिग्राह्याणि वस्तूनि

**[4]प्रख्यापनं प्र( ? प्रा)ध्ययनं प्रश्नपूर्वं प्रतिग्रहम्।**
**दानाध्ययनवादार्थं षड्विधो वेदविक्रयः।।**
**खलक्षेत्रगतं धान्यं वापीकूपगतं जलम्।**
**अभोज्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः।।**

## पराशरः

क्षत्रियवैश्यशूद्राणां वृत्तयः, शूद्रस्याऽऽ-
पद्वृत्तौ वाणिज्ये विक्रेया-
विक्रेयाणि

**[5]क्षत्रियो हि प्रजां रक्षन् शस्त्रपाणिः प्रदण्डवान्।**
**निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत्।।**

(१) इदानीं प्रकृतानेव क्रमप्राप्तान् अभिषिक्तस्य क्षत्रियस्य साधारणधर्मानाह – अव्रताः, क्षत्रियो हि, पुष्पमात्रमिति।.... रक्षणीयाश्च प्रजा भयमापन्नाः। भयं तासां द्वेधा संपद्यते – चोरव्याघ्रादिभ्यः परसैन्येभ्यो वा। अतस्तदुभयनिवारणाय प्रदण्डवानिति परसैन्यानि निर्जित्येति चोक्तम्। एतच्च निवारणं क्षत्रियस्यैव। पमा.

(२) इदानीं शिष्टपरिपालनमाह – क्षत्रिय इति। क्षत्रियः परेषां क्षतत्राणयोग्यः धर्मेण धर्मोऽयमिति मत्वा, नार्थादिलोभेन, क्षितिं पृथिवीं पालयेद्वृत्त्यर्थं धर्मार्थं च। तथा च याज्ञवल्क्यः – 'प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्' (यास्मृ. १।११९) इति। पालनं नाम व्याघ्रचौरशत्रुभ्यो भयापनयनम्। तत्र व्याघ्रादिभयापनयनोपायं शस्त्रपाणिपदेनाऽऽह। तेन शस्त्रधारणस्य दृष्टार्थत्वाद्व्याघ्रादीन् निहन्यादेवेति तस्यार्थः। चौरादिभयापनयनोपायमाह – प्रदण्डवानिति। ततश्च देशकालानुबन्धापराधपरीक्षणरूपेण प्रकर्षेण चौराद्यष्टादशव्यवहारपदपराजितेषु धिग्वाग्धनवधान्यतमं दण्डं कुर्यादित्यर्थः। शत्रुभयापनयनोपायमाह – निर्जित्येति। पार्ष्णिग्राहादिभिर्निजप्रजा रक्षित्वा परेषाम् अरितन्मित्रादीनां सैन्यानि हस्त्यश्वरथपदातिसहितानि सामादिप्रयोगासंभवे सेनाप्रयोगेण नितरां तद्राष्ट्रापपीडनादिभिर्जित्वा स्ववशमानयेदित्यर्थः। एतैश्चतुर्भिर्विशेषणैः सकलव्यवहाराध्यायप्रतिपाद्योऽर्थ उपलक्षितः, तस्य सर्वयुगसाधारणत्वात्, अन्यथाऽऽचारप्रायश्चित्तवत्सोऽप्युच्छिद्येतेति। विम.

**पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत्।**
**मालाकार इवाऽऽरामे न यथाऽङ्गारकारकः।।**

(१) उक्तप्रकारेण परसैन्यानि निर्जित्य जितामेतां पूर्वां च स्वकीयां भुवं राजधर्मेण पालयेत्। तदेव धर्मेण पालनं 'पुष्पमात्रम्' इति तृतीयश्लोकेन विशदीक्रियते। यथा मालाकार आरामे यदा यदा यत् यत्पुष्पं विकसति तदा तदा तद्विचिनोति, न तु पुष्पलतामुन्मूलयति, तथा प्रजाभ्यः करमाददानो राजा यथोदयं षष्ठं भागं गृह्णीयात्; अङ्गारकारकस्तु वृक्षमुन्मूल्य सर्वात्मना दहति, न तु तथा प्रजाः पीडयेत्। पमा.

(२) वृत्त्यर्थं क्षितिं पालयेदित्युक्तम्, तत्र वृत्त्युपायमाह – पुष्पमिति। अत्र शक्तिलक्षणाभ्यां दृष्टान्तदार्ष्टान्तिके उभे अपि प्रतिपाद्येते। यथा राजा पुष्पं पुष्पोत्पन्नं फलं व्रीहियवादि, वीप्सया तत्तत्कालोपपन्नम्, यथा स्वांशं विचिनुयात् गृह्णीयात्, न तु मूलस्य तज्जनकबीजवृक्षादेः उच्छेदम् अत्यन्तापहारं कुर्यात्। अत्र चान्वयदृष्टान्तः – मालाकारो यथाऽऽरामे यदा यदा यद्यत्पुष्पं विकसति तत्तद्विचिनोति तद्वदिति। व्यतिरेके तु–अङ्गारकारो यथा वृक्षं समूलमुन्मूल्य दहति तथा न स्यादिति। तथाऽऽह मनुः – 'यथाऽल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः।

---

(१) **गृक.** २०७ पू. हारीतमनुवसिष्ठशातातपाः; **निप्र.** २।३१३ क्रयी (क्रयात्) अर्धे व्यत्यासेन पठिते, हारीतमनुवशिष्ठशातातपाः; **मुक्ता.** ६२.
(२) **निप्र.** २।३१३ हारीतमनुवशिष्ठशातातपाः.
(३) **मुक्ता.** ६२.
(४) **लशास्मृ.** ४६, १२८.
(५) **पस्मृ.** १।६१-६२.

तथाऽल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाऽऽब्दिकः करः।।' (मस्मृ. ७।१२९) इति। विम.

**'लाभकर्म तथा रत्नं गवां च परिपालनम्।**
**कृषिकर्म च वाणिज्यं वैश्यवृत्तिरुदाहृता।।**

(१) क्रमप्राप्तान् वैश्यस्यासाधारणधर्मानाह – लाभकर्मेति। लाभार्थं कर्म लाभकर्म, कुसीदाद्युपजीवनमित्यर्थः। रत्नं मणिमुक्तादि। तेन च तत्परीक्षणक्रयविक्रया उपलक्ष्यन्ते। गवां पालनं तृणोदकप्रदानबन्धनमोचनदोहनादि। कृषिकर्म भूमिकर्षणबीजवापनादि। वाणिज्यं क्रयिकधान्यादिक्रयविक्रयौ। ... अर्घविज्ञानादयो वैश्यधर्मत्वेन द्रष्टव्याः। ....मूलवचने लाभकर्म इत्यत्र लौहकर्म इति केचित् पठन्ति। लौहस्य सुवर्णरजतादेः अर्घपरिज्ञानक्रयादिकं तत्क( ? कं क)र्मेति व्याख्येयम्, 'लौहानां च' इति मनुपठितत्वात्। यथोक्तधर्मानुष्ठाने फलमाश्वमेधिके वर्णितम् – 'वणिग्धर्मं च ( ? र्मान्त्र) मुञ्चन् वै देवब्राह्मणपूजकः। स वणिक् स्वर्गमाप्नोति पूज्यमानोऽप्सरोगणैः।।' इति। वैपरीत्ये दोषः शान्तिपर्वणि दर्शितः – 'यः करोति जनान् साधून् बलिकर्मणि वञ्चनम्। स याति नरकं घोरं धनं तस्यापि हीयते।।' इति। पमा.

(२) अथ वैश्यासाधारणधर्मानाह – लाभकर्मेति। लाभः द्रव्यवृद्धिः, तदर्थं कर्म लाभकर्म, वृद्ध्यर्थं धनप्रयोग इत्यर्थः। लोहकर्मेतिपाठे लोहानां सुवर्णरजतादीनां कर्म अर्घादिपरिज्ञानमित्यर्थः, 'लोहानां तान्तवस्य च' इति मानवात्। रत्नं मणिमुक्तादि तस्य परीक्षणक्रयविक्रयाः कर्मशब्दानुवृत्त्या गृह्यन्ते। तथाशब्देन गन्धरसादीनामप्यर्घादिपरिज्ञानं गृह्यते। तथा च मनुः – 'मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च। गन्धानां च रसानां च विद्यादर्घबलाबलम्।।' (मस्मृ. ९।३२९) इति। गवां परितः शीतवर्षातपेभ्यः पालनं तृणजलदानं बन्धमोक्षदोहादि (च), चकारादन्येषामपि पशूनाम्। तथा च वाराहे – 'स्वाध्यायं यजनं दानं कुसीदं पशुपालनम्। गोरक्षाकृषिवाणिज्यं कुर्याद्वैश्यो यथाविधि।।' इति। कृषिकर्म द्वितीयाध्याये वक्ष्यमाणलक्षणम्। चकाराद्भृतिभाषादिविज्ञानं च। तथा च मनुः – 'भृत्यानां च भृतिं विद्याद्भाषाश्च विविधा नृणाम्।।' (मस्मृ. ९।३३२) इति। वाणिज्यं विक्रेयद्रव्याणां क्रयविक्रयौ। एषा सर्वा वैश्यस्य वृत्तिः जीवनोपायः उदाहृत इति। विम.

**'यजनाध्ययने दानं पाशुपाल्यं तथा विशि।**
**वाणिज्यं च कुसीदं च कर्मषट्कं प्रकीर्तितम्।।**
**'शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते।**
**अन्यथा कुरुते किंचित्तद्भवेत्तस्य निष्फलम्।।**

(१) क्रमप्राप्ताञ्छूद्रस्यासाधारणधर्मानाह – शूद्रस्य इति। अत्र द्विजशब्दो ब्राह्मणपरः। तच्छुश्रूषायाः परमत्वं निःश्रेयसहेतुत्वात्। .... न केवलं विप्रशुश्रूषा निःश्रेयसार्था, अपि तु वृत्त्यर्थाऽपि। अत एव प्रकल्प्यमाना वृत्तिर्मनुना दर्शिता – 'प्रकल्प्या तस्य वै वृत्तिः स्वकुटुम्बाद्यथार्हतः। शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम्।। उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च। पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः।।' (मस्मृ. १०।१२४-१२५) इति। .... अन्यथा द्विजशुश्रूषामन्तरेण यदि किंचित् पाकयज्ञादिकं कुर्यात्, तत्सर्वं निष्फलं भवेत्। तदुक्तं मनुना – 'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कल्प्यते। यदतोऽन्यद्धि कुरुते तद्भवेत्तस्य निष्फलम्।।' (मस्मृ. १०।१२३) इति। तस्मात् द्विजशुश्रूषैव तस्य परमो धर्मः, क्षत्रियवैश्यशुश्रूषा तु केवलवृत्त्यर्थत्वादपरमो धर्मः। अत एव मनुना विप्रशुश्रूषाया उभयार्थत्वम्, इतरशुश्रूषायाः केवलवृत्त्यर्थत्वं च दर्शितम् – 'शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि। धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो जिजीविषेत्।। स्वर्गार्थमुभयार्थं वै

---

(१) **पस्मृ.** १।६३; **गृक.** २५२ लाभ (लौह) त्नं गवां च (त्नपशूनां) तृतीयचरणे (वाणिज्यं कृषिकर्मान्तं); **गृर.** ४६९ तृतीयचरणे (वाणिज्यकृषिधर्मान्तं) शेषं गृकवत्; **पमा.** लाभ (लौह) इत्यपि पाठः; **मुक्ता.** ६६; **विम.** लाभ (लोह); **बाल.** १।११९ पृ. ३६७ प्रथमचरणे (लोककर्मरथानां च) पू.; **सस्मृ.** ९९ अशुद्धः पाठः.

(१) **बाल.** १।११९ पृ. ३६७.

(२) **पस्मृ.** १।६४; **गृक.** २६६ द्वितीयचरणे (प्रथमं धर्मलक्षणम्) अन्यथा (यदन्यत्); **मपा.** २३० किंचित् (कर्म) शेषं गृकवत्; **स्मृकौ.** ८९-९०; **मर.** १२ कुरुते (क्रियते) शेषं गृकवत्; **शूशि.** ३३ मपावत्; **मुक्ता.** ६६; **आन.** ६३९; **बाल.** १।१२० पृ. ३७५ अन्यथा (यदन्यत्) किंचित् (कर्म); **सस्मृ.** ९९ पूर्वार्धे (शूद्राणां द्विजशुश्रूषा परो धर्मः प्रकीर्तितः।) तद्भवेत्तस्य (विभवस्तस्य).

विप्रानाराधयेत्तु सः। जातब्राह्मणशब्दः स्यात्सा ह्यस्य कृतकृत्यता।।' (मस्मृ. १०।१२१-१२२) इति।

× पमा.

(२) द्विजशुश्रूषा त्रिवर्णशुश्रूषा। तस्य निष्फलमिति द्विजसेवाया विरोधि यदन्यत्कुरुते तन्निरर्थकमित्यर्थः।

मपा. २३०

(३) द्विजपदं विप्रपरं परमपरं प्रधानपदं चेति न विरोधः। तत्र परमत्वोक्त्या क्षत्रियवैश्ययोरपि शुश्रूषा शूद्रधर्म एवेति तेनापि सूचितम्। बाल. १।१२० पृ. ३७५

**'लवणं मधु तैलं च दधि तक्रं घृतं पयः।**
**न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयम्।।**

(१) यदा द्विजशुश्रूषया जीवितुं न शक्नोति तदा किं कुर्यादित्यत आह–लवणमिति। शुश्रूषया जीवितुमशक्तो जीवनाय लवणादिषु सर्वेषु विक्रयं कुर्यात्। ननु लवणादीनि विक्रीयमाणानि विक्रेतुर्दोषमावहन्ति। तदाह याज्ञवल्क्यः – 'फलोपलक्षौमसोममनुष्यापूपवीरुधः। तिलौदनरसक्षारान् दधि क्षीरं घृतं जलम्।। वसारसमधूच्छिष्टमधुलाक्षाः सबर्हिषः। मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितीः।। कौशेयनीललवणमांसैकशफसीसकान्। शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च।। वैश्यवृत्त्याऽपि जीवन्नो विक्रीणीत कदाचन। लाक्षालवणमांसानि वर्जनीयानि विक्रये।। पयो दधि च मद्यं च हीनवर्णकराणि च।।' (यास्मृ. ३।३६-४०) इति। हीनवर्णः शूद्रः। मैवम्, अस्य ब्राह्मणविषयत्वात्। अत एव मनुः — 'सद्यः पतति मांसेन लाक्षया लवणेन च। त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्।।' (मस्मृ. १०।९२) इति। शूद्रस्तु लवणादीनि विक्रीणन्नपि न दुष्येत्। विक्रीणन् इति पदं वक्ष्यमाणश्लोकादनुषज्य योजनीयम्। याज्ञवल्क्योऽपि शुश्रूषया जीवितुमशक्तस्य शूद्रस्य वाणिज्यादिकमाह – 'शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग्भवेत्। शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्।।' (यास्मृ. १।१२०) इति। यैः कर्मभिर्द्विजातयः शुश्रूष्यन्ते तैरित्यर्थः। मनुरपि – 'अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम्। पुत्रदारात्ययं प्राप्तो जीवेत्कारुककर्मभिः।। यैः कर्मभिः सुचरितैः शुश्रूष्यन्ते द्विजातयः। तानि कारुककर्माणि शिल्पानि विविधानि च।।' (मस्मृ. १०।९९-१००) इति। पमा.

(२) अत्र मद्यविक्रयस्याभ्यनुज्ञानमत्यन्तापदि। एतच्च चर्मादीनामुपलक्षणार्थम्। अयमभिप्रायः – द्विजशुश्रूषादिना जीवनं मुख्यवृत्तिः। अत्राशक्तौ कृषिवाणिज्यादिना जीवेत्। वाणिज्यायामपि मधुमद्यचर्मलाक्षामांसानि वर्जयेत्। यदैतद्व्यतिरिक्तलवणादिक्रयेण शिल्पादिना वा जीवितुमसमर्थः साऽत्यन्तापदित्युच्यते। तस्यामापदि मध्वादिविक्रयाभ्यनुज्ञानार्थं 'लवणं मधु मद्यं च' इति पराशरवचनं बोद्धव्यम्। यच्च वचनान्तरं पराशरस्यैव – 'विक्रीणन्मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम्। कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात्।।' इति तदनापद्विषयम्।

* स्मृकौ. ९४-९५

(३) यदा द्विजशुश्रूषया न जीवति तदा किं कार्यमित्यत आह – लवणमिति। लवणं शम्भलादि, मधु क्षौद्रम्, तैलादिस्नेहम्, दधि प्रसिद्धम्, तक्रम् उदश्वित्, घृतं सर्पिः, पयः क्षीरम्, चकारादन्यदपि फलपुष्पादि विक्रीयमाणं शूद्रजातीनां न दुष्येत् न दोषमावहेत्। तस्माच्छूद्रः सर्वेषु लवणादिषु विक्रयं कुर्यात्। शूद्रपदेनार्थसिद्धौ जातिपदोपादानं सूतादिप्रतिलोमजातीनामपि प्राप्त्यर्थम्, 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।' इति स्मरणात्। लवणादिपरिगणनेऽपि सर्वपदोपादानमप्रतिषिद्धानां सर्वेषामपि विक्रयप्राप्त्यर्थम्। तथा च कालिकापुराणे – 'विक्रयं सर्ववस्तूनां कुर्वञ्छूद्रो न दोषभाक्। मधु चर्म सुरां लाक्षां मुक्त्वा मांसं च पञ्चमम्।।' इति। मध्वत्र मद्यम्, तस्यैवात्र प्रतिषेधात्। विम.

---

× विम. पमागतम्।

(१) **पस्मृ.** १।६५; **गृक.** २७० तैलं च दधि तक्रं (मद्यं वा तक्रं दधि); **गृर.** ४७९ तैलं च दधि तक्रं (तक्रं वा दधि मद्यं) कुर्यात् (क्वचित्); **स्मृकौ.** ९४ तैलं (मद्यं); **मर.** १९८ च दधि तक्रं (वा तक्रं दधि); **शूशि.** ४० तैलं च दधि तक्रं (मद्यं च तक्रं दधि); **मुक्ता.** ६७; **शूक.** ६१ स्मृकौवत्, लघुपराशरः; **संम.** ८० तैलं च दधि तक्रं (तक्रं च तैलं दधि) बृहत्पराशरः; **आन.** ६३९; **बाल.** १।१२१ पृ. ३७८ शूशिवत्; **सस्मृ.** ९९ दधि तक्रं घृ (दधितक्रघृ) दुष्येच्छू (दूष्यं शू).

* शूशि. स्मृकौवत्।

[1]**विक्रीणन्मद्यमांसानि....शूद्रः पतति तत्क्षणात्।।**

(१) शूद्रस्यापि वर्ज्यानाह – विक्रीणन्निति। मद्यं च बहुविधं तालपानसद्राक्षमाधूकखार्जूरादिकम्। पमा.

(२) अत्र शूद्रशब्देन शूद्रसमानधर्माः पारशवादयः पूर्वनिर्दिष्टा अप्युपलक्ष्यन्ते। मद्यं गौड्यादि। (गोघ्रादि?) सर्वं मांसं भक्ष्यमभक्ष्यं च। अभक्ष्यं गोमांसादि, कलौ गोपशुनिषेधात्। मद्यमांसनिषेधश्चानापदि। आपदि चाभ्यनुज्ञानमस्ति। एतच्चाग्रे दर्शयिष्यति। + स्मृकौ. ४५

(३) इदानीं शूद्रस्य वर्ज्यानाह – विक्रीणन्निति। मद्यं पानसादि द्वादशविधम्। तथा च पुलस्त्यः – 'पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्। मधूत्थं सैरमारिष्ठं मैरेयं नारिकेलजम्। समानानि विजानीयान्मद्यान्येकादशैव तु। द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम्।।' इति। मांसं भक्ष्यमभक्ष्यं च। बहुवचनाच्चर्मलाक्षयोर्ग्रहणम्। तदुक्तं कालिकापुराणे – 'विक्रयं सर्ववस्तूनां कुर्वञ्शूद्रो न दोषभाक्। मधु चर्म सुरां लाक्षां मुक्त्वा मांसं च पञ्चमम्।।' इति। एतानि विक्रीणन्.... शूद्रः तत्क्षणात् सद्यः.... पतति द्विजातिपरिचर्यानर्हो भवति। विम.

[2]**शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि।**
**धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो जिजीविषेत्।**
**स्वर्गार्थमुभयार्थं वा ब्राह्मणानेव राधयेत्।।**

अस्वयंकृता कृषि-
ब्राह्मणवृत्तिः

[3]**षट्कर्मसहितो विप्रः कृषिकर्म च कारयेत्।।**

(१) पराशरस्तु कलावविशेषेण चतुर्णामपि कृष्यनुग्रहमाह –...... षट्कर्मेति। स्मृच. २।४५३

(२) प्रतिज्ञातं धर्मं दर्शयति – षट्कर्मेति। षट्कर्माणि पूर्वोक्तानि यजनादीनि संध्यादीनि च। तैः सहितो विप्रः शुश्रूषकैः शूद्रैः कृषिं कारयेत्। न च याजनादीनां जीवनहेतुत्वात् किमनया कृष्येति वाच्यम्, कलौ जीवनपर्याप्ततया याजनादीनां दुर्लभत्वात्। यत्तु मनुनोक्तम् – 'वैश्यवृत्त्या तु जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा। हिंसाभयात् पराधीनां कृषिं यत्नेन वर्जयेत्।। कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्भिर्गर्हिता। भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्।।' (मस्मृ. १०।८३-८४) इति, तत् स्वयंकृताभिप्रायम्, अन्यथा मनोः स्ववचनविरोधात्। स्वेनैव कृषिरभ्युपगता – 'उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्। कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्।।' (मस्मृ. १०।८२) इति। ननु कूर्मपुराणे स्वयंकृता कृषिरभ्युपगता – 'स्वयं वा कर्षणं कुर्याद्वाणिज्यं वा कुसीदकम्। कष्टा पापीयसी वृत्तिः कुसीदं तां विवर्जयेत्।।' इति, तन्न, अस्य वचनस्य कुसीदनिन्दापरत्वात्। अत एव नारदः – 'आपत्स्वपि च कष्टासु ब्राह्मणस्य न वार्धुषम्' इति। ननु बृहस्पतिः स्वयंकर्तृकां कृषिमङ्गीचकार – 'कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम्। आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः।।' इति। बाढम्, कारयितुमप्यशक्तस्य तत्कर्तृत्वम्, आपत्काल इति विशेषितत्वात्। ननु कारयितृत्वमप्यापद्विषयमेव, कृषेर्वैश्यधर्मत्वात्, विप्रस्य याजनादीनामेव मुख्यजीवनहेतुत्वात्। एवं तर्ह्यापत्तारतम्येन व्यवस्थाऽस्तु – अल्पापदि कारयितृत्वम्, अत्यन्तापदि कर्तृत्वम् इति। अथवा युगभेदेन व्यवस्थाप्यताम् – युगान्तरेषु कारयितृत्वमापद्धर्मः, कलौ मुख्यधर्मः, प्राधान्येनोपक्रम्य प्रतिपादनात्। तत्र कृषौ हालिकस्य बलीवर्दसंख्यानियममाह हारीतः – 'अष्टागवं धर्म्यहलं षड्गवं जीवितार्थिनाम्। चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्।।' इति। तत्रान्तौ पक्षौ हेयौ, इतरावपि क्रमेण मुख्यानुकल्पौ द्रष्टव्यौ। * पमा.

---

+ शूशि. स्मृकौवत्।

(१) **पस्मृ.** १।६६; **स्मृकौ.** ४४, ४५; **मर.** १९८; **आत.** ३५३ स्मृतिः; **शूशि.** ४० लघुपराशरः, ५५; **मुक्ता.** ६७; **शूक.** ६१ मांसानि (मांसादि) लघुपराशरः; **संम.** ८० बृहत्पराशरः; **आन.** ६३९; **बाल.** १।९५ पृ. ३१४ : १।२१ पृ. ३७९ लघुपराशरः; **सस्मृ.** ९९ त्रुटितो ग्रन्थः.

(२) **शूक.** ६९-७० मनुपराशरौ.

(३) **पस्मृ.** २।२; **स्मृच.** २।४५३; **आपा.** १३५ च कारयेत् (समाचरेत्) चन्द्रिकायां पुराणम्; **मर.** १७६ अशुद्धः पाठः; **मुक्ता.** ६२ सहि (निर) शेषम् आपावत्; **आन.** ६३४ सहि (निर); **बाल.** १।११८ पृ. ३६५ आपावत्; **सस्मृ.** ९७ आपावत्; **आभू.** १४७.

* मर., विम., आन. पमागतम्।

हालिकबलीवर्दगुणदोषाः, हलवाहनावधिः, कर्षणजन्यहिंसादोषशमनम्

**[1]क्षुधितं तृषितं श्रान्तं बलीवर्दं न योजयेत्।**
**हीनाङ्गं व्याधितं क्लीबं वृषं विप्रो न वाहयेत्।।**

(१) कृषौ वर्ज्यान् बलीवर्दानाह – क्षुधितमिति। क्षुधादयस्तत्तल्लिङ्गैरवगन्तव्याः। हीनाङ्गः पादविकलः। क्लीबः पुंस्त्वरहितः। $ पमा.

(२) विप्र इत्युपलक्षणम्। संम. ७९

(३) क्षुधितः बुभुक्षितः, तृषितः पिपासितः, श्रान्तः श्रमातुरः, तं बलीवर्दं हलोद्वहनादौ न योजयेत्। व्याधितः अतिसारादिग्रस्तः, क्लीबः पुंस्त्वरहितः, तमपि न हलादिकं वाहयेत्। तदुक्तमाश्वमेधिके – 'न क्षुत्तृष्णाश्रमश्रान्तं वाहयेद्विकलेन्द्रियम्।' इति। एकेनैव सिद्धौ निषेधद्वयोपादानमत्यन्तादरार्थम्। † विम.

**[2]स्थिराङ्गं नीरुजं दृप्तं सुनर्दं षण्ढवर्जितम्।**
**वाहयेद्दिवसस्यार्धं पश्चात्स्नानं समाचरेत्।।**

(१) स्नानमत्र बलीवर्दानाम्। अत एव हारीतः – 'स्नापयित्वाऽनडुहोऽलंकृत्य ब्राह्मणान्भोजयेत्।' इति। ¤ स्मृच. २।४५४

(२) स्थिराङ्गः पादादिवैकल्यरहितः। नीरुजः व्याधिरहितः। तृप्तः क्षुत्तृष्णाभ्यामपीडितः। सुनर्दः अहिंसकः अदृप्तः, श्रमरहितः इति यावत्। षण्डेति भावप्रधानः निर्देशः। षण्डत्ववर्जितः पुंस्त्वोपेतः, शक्तः इति यावत्। दिवसस्यार्धं यामद्वयम्। वाहने विशेष आश्वमेधिके दर्शितः – ¶ 'वाहयेद्दंकृतेनैव.. पाण्डुनन्दन।।' इति। § पमा.

(३) सुनर्दः अश्रान्तः। स्नानं वृषाणाम्। संम. ७९

(४) कीदृशस्तर्हि योज्य इत्यत आह – स्थिराङ्गमिति। स्थिराङ्गम्। 'द्वौ मासौ पाययेद्वत्सं द्वौ मासौ द्वौ स्तनौ दुहेत्। द्वौ मासावेकवेलायां शेषकालं यथारुचि।।' इत्यापस्तम्बोक्तरीत्या दृढाङ्गम्, न तु कोमलाङ्गं वत्सम्, 'अक्षय्यं सबलप्राणमनड्वाहं तु वाहयेत्।' इति बृहत्पराशरस्मरणात्। नीरुजं निर्गता रुजा यस्य (तम्)। सुनर्दं शुभनर्दनं नादिनम्। षण्ढवर्णितं षण्ढैर्वृषभैस्तद्दर्पासहनेन दूरतः परिहृतम्, न तु षण्ढत्ववर्जितम्, †क्लीबनिषेधेनैव तदर्थसिद्धेः। तं दिवसस्यार्धम् आमध्याह्नं वाहयेत्। तदुक्तमाश्वमेधिके– 'अह्नः पूर्वं द्वियामे वा धुर्याणां वाहनं स्मृतम्। विश्राम्य-मध्यमे भागे भागे चान्ते यथासुखम्।।' इति। पूर्वप्रहरे प्रहरद्वयं वा वाहयित्वा मध्यमे प्रहरे विश्राम्य चतुर्थे प्रहरे इच्छयेत्यर्थः। बलीवर्दमित्यादावेकत्वमविवक्षितम्, 'अष्टगवं धर्महलं षड्गवं जीवनार्थिनाम्। चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्।।' इति हारीतेन संख्यान्तरविधानात्। दिवसार्धमित्युत्सर्गेण, क्वचिदासायमपि वाहयेत्। तदुक्तमाश्वमेधिके – 'यत्र वा त्वरया कृत्यं संशयो यत्र वाऽध्वनि। वाहयेत्तत्र धुर्यांस्तु न स पापेन लिप्यते।।' इति। इदमप्यष्टगवाभिप्रायेण, 'द्विगवं वाहयेत्पादं मध्याह्ने तु चतुर्गवम्। षड्गवं तु त्रिपादोक्तं पूर्णमष्टगवं स्मृतम्।।' (अत्रिसं. २२३)

---

$ आपा. पमावत्।

† शेषं पदार्थमात्रं पमावत्।

¤ मर., मुक्ता. स्मृचगतम्।

(१) **पस्मृ.** २।३; **समु.** ४४ श्रान्तं (शान्तं) पू.; **स्मृच.** २।४५३ व्याधितं (व्यथितं); **आपा.** १३९ तृषितं (रुषितं) बलीव (बलिव) ङ्गं व्याधितं (ङ्गव्याधिकं); **मर.** १७७ सर्वं समुवत्; **मुक्ता.** ६३ समुवत्; **संम.** ७९; **सस्मृ.** ९७ श्रान्तं बली (शान्तं बलि).

(२) **पस्मृ.** २।४; **समु.** ४४ उत्त.; **स्मृच.** २।४५३ उत्त.; **पमा.** दृप्तं (तृप्तं) षण्ढ (षण्ड); **आपा.** १३९ पमावत्; **मर.** १७७-१७८ पूर्वार्धे (स्थिराङ्गं विरुजं तृप्तं सुतर्दं षण्डवर्जितम्।); **मुक्ता.** ६३; **संम.** ७९ दृप्तं (तृप्तं); **बाल.** १।११९ पृ. ३६९ दृप्तं सुनर्दं (तृप्तं सुरदं); **सस्मृ.** ९७ सुनर्दं षण्ढ (सनर्दं षण्ड).

¶ एतानि वचनान्यस्मिन्नेव प्रकरणे महाभारते द्रष्टव्यानि।

§ शेषं स्मृचवत्। आपा. पमावत्।

† इदमत्र विचार्यम् – निर्गता रुजा यस्मात् स नीरुजः, तस्यैवाव्याधितत्वात् नीरुजत्वमपि व्याधितनिषेधेनैव सिद्धम्। शोभननर्दनस्य स्वरूपतो विधेयत्वे तस्य लाङ्गलवाहने दृष्टोपयोगाभावाददृष्टकल्पनापत्तिः। यदि तु शोभननर्दनस्य श्रान्तत्वेन विरोधात् सुनर्दशब्देनाश्रान्तो लक्ष्यते तदा तस्यापि श्रान्तनिषेधेनैव सिद्धिः। दृप्ततृप्तान्यतरः स्वाभिमतः पाठो न व्याख्यात इति न्यूनता वा, तद्व्याख्यानमुच्छिन्नमिति कल्पनीयं वा। तत्र दृप्तपाठे षण्ढवर्जितशब्दस्य दृप्तपरत्वेन स्वयं व्याख्यानात् पौनरुक्त्यम्। तृप्तपाठे तृप्तत्वस्य क्षुधातृषाविपरीतार्थरूपत्वेन तस्यापि पूर्वनिषेधेनैव सिद्धिः। एवं च षण्ढवर्जितशब्दस्य षण्ढत्ववर्जितपरत्वाभावेऽस्य हेतुत्वं चिन्त्यम्। माधवेन पूर्वत्रनिषिद्धदोषविपरीतार्था एवात्र गुणत्वेन वर्णिता इति तद्व्याख्यानादृगम्यते। अतस्तन्मते पूर्वत्रार्थसिद्धानामेव गुणानामत्रानुवाद इति मन्तव्यमिति।

इति अत्रिस्मरणात्। पश्चात् बलीवर्दस्नापनानन्तरं स्वयं माध्याह्निकं स्नानं कुर्यात्। तथा च हारीतः – 'स्नापयित्वाऽनडुहोऽलंकृत्य ब्राह्मणान् भोजयेत्' इति। 'संध्या स्नानम्' (पस्मृ. १।३९) इत्यत्र प्रातःस्नानमुक्तम्, अत्र तु माध्याह्निकमिति न पुनरुक्तिः, 'प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः। यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः।।' इति दक्षेण वानप्रस्थगृहस्थयोः स्नानद्वयाभिधानात्। तच्च प्रातःस्नानवदेव नित्यम्, $'यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः।' (कास्मृ. १।१३७) इति कात्यायनस्मरणात्। तद्विधिमाह संक्षेपेण योगियाज्ञवल्क्यः– 'स्नानमन्तर्जले चैव मार्जनाचमने तथा। जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम्।। अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः। स्नानाव( ? च)रणमित्येतदुपदिष्टं महात्मभिः।।' (बृयास्मृ. ७।१६९, १७०,१७१) इति। मन्त्रास्तु प्रातःस्नानविधित एवावगन्तव्याः। विम.

(५) सुरदं दृढम्। + बाल. १।११९ पृ. ३६९

**'जप्यं देवार्चनं होमं स्वाध्यायं चैवमभ्यसेत्।**
**एकद्वित्रिचतुर्विप्रान् भोजयेत् स्नातकान् द्विजः।।**

(१) बलीवर्दस्नापनानन्तरं कर्तव्यमाह – जप्यमिति। यथा बलीवर्दश्रान्तिकृतदोषापनयनाय स्नापनम्, एवं प्राण्युपघातदोषापनयनाय यथाशक्ति जप्यादीनामन्यतममनुतिष्ठेत्। एकं द्वौ त्रींश्चतुरो विप्रान् स्नातकान् यथाशक्ति भोजयेत्। स्नातका नवविधभिक्षुकाः। तदाह मनुः – 'सांतानिकं यक्ष्यमाणमध्वगं सर्ववेदसम्। गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनम्।।' (मस्मृ. ११।१) इति। सांतानिकं संतानाय विवाहोपयुक्तद्रव्यार्थिनम्। सर्ववेदसः सर्वस्वदक्षिणं यागं कृत्वा निःस्वत्वमापन्नो द्रव्यार्थी, तमित्यर्थः। पितृमात्रर्थं पितृमातृशुश्रूषार्थिनम्। स्वाध्यायार्थी स्वाध्यायप्रवचननिर्वाहाय द्रव्यार्थी, उपतापी रोगी, स्वाध्यायार्थिसहितः उपतापी स्वाध्यायार्थ्युपतापी, तमिति मध्यमपदलोपी समासः। तावुभावित्यर्थः। † पमा.

(२) ‡ एको वा द्वौ वा त्रयो वा चत्वारो वा इत्येकद्वित्रिचतुराः, ते च ते विप्राश्चेत्येकद्वित्रिचतुर्विप्राः। छान्दसः स्वरलोपः। तान् स्नातकानन्यान्वा यथाशक्ति भोजयेत्। एतच्च विप्रभोजनं कर्षणोत्थप्राण्युपघातदोषापनयनायापूर्वं विधीयते। अत एव हारीतः – 'स्नापयित्वाऽनडुहोऽलंकृत्य ब्राह्मणान्भोजयेत्' इति। विम.

ब्राह्मणस्य विक्रेयाविक्रेयाणि, ब्राह्मणस्य कृषिः पापजनिका, लाङ्गलवृषभसंख्याः सफलाः

**'तिला रसा न विक्रेया विक्रेया धान्यतः समाः।**
**विप्रस्यैवंविधा वृत्तिस्तृणकाष्ठादिविक्रयः।।**

(१) कृषीवलस्य तिलादिधान्यसंपन्नस्य धनलोभेन प्रसक्तस्तिलादिविक्रयः, तं निवारयति – तिला रसा नेति। रसाः दधिमधुघृतादयः। यदि धान्यान्तररहितस्य तिलविक्रयमन्तरेण जीवनं वा धर्मो वा न सिध्येत् तदा तिला धान्यान्तरैर्विनि-

---

$ अयमेव पाठः सर्वादर्शपुस्तकेषु दृश्यते हरिहरादिसंमतश्च। अत्र अहःशब्देन मध्याह्नो गृह्यते। अत्रैवमनुपपत्तिरापाततः प्रतिभासते – कात्यायनप्रणीतपरिशिष्टरूपस्नानविधिसूत्रे स्नानविशेषस्यानिर्देशात् प्रातःस्नानेऽपि तत्सूत्रोक्तधर्माणां प्राप्तत्वेन न तेऽत्रातिदेष्टव्याः, तत्र स्नानविशेषविवक्षाकल्पनायामपि प्रातःस्नानस्य प्राक्तनत्वात् मध्याह्नपूर्वकृत्यैः स्वाधिकारार्थमपेक्षितत्वाच्च प्रातःस्नानविवक्षाकल्पनैवोचितेति प्रातःस्नानेऽत्र कृतोऽतिदेशो न युज्यत इति। तन्निराकरणं स्नानसूत्रहरिहरभाष्यादुन्नीयते। तद्यथा – कात्यायनेन स्वयमेव 'अल्पत्वाद्धोमकालस्य महत्त्वात्स्नानकर्मणः। प्रातर्न तनुयात्स्नानं होमलोपो विगर्हितः।।' (कास्मृ. २।२४) इति स्मृतौ स्नानसूत्रोक्तधर्माणां प्रातःस्नानाङ्गतानिषेधात् स्नानसूत्रेऽङ्गित्वेन माध्याह्निकस्नानमेव तस्य विवक्षितमिति तद्धर्मातिदेशः प्रातःस्नाने उपपद्यते। अत एव वचनादतिदेशवाक्ये न सर्वधर्मातिदेशो विवक्षितः, अपि तु 'अथातो नित्यस्नानम्' इति स्नानसूत्रे अतिदेशवाक्ये च नित्यशब्दप्रयोगात् नित्यत्वमात्रमतिदिश्यत इति।

+ शेषं पमागतम्।

(१) **पस्मृ.** २।५; **समु.** ४४ (एकं द्वे त्रीणि चत्वारि ब्राह्मणान्भोजयेत्ततः।।) उत्त.; **आपा.** १३९ एकद्वि (एकं द्वि) द्विजः (द्विजान्); **मुक्ता.** ६३ भोजयेत्स्नातकान्द्वि (स्नातकान्भोजयेद्द्वि); **सस्मृ.** ९७ जप्यं (जाप्यं) तुर्विप्रान् (तुःसंख्यान्) द्विजः (द्विजान्).

† आपा. पमावत्। मुक्ता. पमागतम्।

‡ जप्यदेवार्चनहोमानां पूर्वोक्तानां नित्यानामेवात्रानुवादः क्रमार्थः, स्वाध्यायाभ्यासशब्दबोध्यब्रह्मयज्ञस्यापूर्वत्वेन यद्यपि विधिस्तथापि सोऽपि नित्यस्यैव क्रमविशिष्टस्य चेति ब्रुवाणो नन्दपण्डितो जप्यादीनां कृषिदोषनिवारणार्थत्वं नाभिप्रेतीति पूर्वार्धस्य तद्व्याख्यानमत्र न संगृहीतम्।

(१) **पस्मृ.** २।७; **आपा.** १४५ अशुद्धः पाठः; **मुक्ता.** ६२; **सस्मृ.** ९७ दिविक्रयः (नि विक्रयेत्) अशुद्धिबहुलो ग्रन्थः.

मातव्याः इत्यभिप्रेत्य 'विक्रेया धान्यतः समाः' इत्युक्तम्। यावद्भिः प्रस्थैस्तिला दत्तास्तावद्भिरेव धान्यान्तरमुपादेयम्, नाधिकमित्यर्थः। तदुक्तं नारदेन – 'अशक्तौ जीवनस्यार्थे यज्ञहेतोस्तथैव च। यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः।।' इति। याज्ञवल्क्योऽपि – 'धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः।' (यास्मृ. ३।३९) इति। तिलन्यायो रसेऽपि योजनीयः। अत एव मनुः – 'रसा रसैर्निमातव्या न त्वेव लवणं रसैः। कृतान्नं चाकृतान्नेन तिला धान्येन तत्समाः।।' (मस्मृ. १०।९४) इति। आपस्तम्बोऽपि – 'अन्नेन चान्नस्य मनुष्याणां च मनुष्यै रसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानाम्' (आध. १।२०।१५) इति। रसविनिमये विशेषमाह वशिष्ठः – 'रसा रसैः समतो हीनतो वा निमातव्याः' (वाध. २।३७) इति। अन्नविनिमये विशेषमाह गौतमः – 'समेनासमेन (? नाऽऽसमेन) तु पक्वस्य' (गौध. ७।२१) इति। ननु तिलविक्रयोऽभ्युपगतो मनुना – 'काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः। विक्रीणीत तिलाञ्छुद्धान् धर्मार्थमचिरस्थितान्।।' (मस्मृ. १०।९०) इति। अत्र केचिदाहुः – तदेतद्विनियमा(? मया)भिप्रायमिति। अपरे तु मन्यन्ते – ऋणापाकरणाद्यापद्धर्मार्थे तिलविक्रयो न विरुद्धः। अयमेव पक्षो युक्तः, वसिष्ठवचनसंवादनात् 'कामं वा स्वयं कृष्योत्पाद्य तिलान् विक्रीणीरन्' (वाध. २।३१) इति। विनिमयाभिप्राये तु वचनान्तरेण सह पौनरुक्त्यमपरिहार्यं स्यात्। यतो मनुनैव वचनान्तरेण 'तिला धान्येन तत्समाः' इति विनिमयो दर्शितः। यत्त्वन्यस्मिन् वचने अर्थात्तिलविक्रयनिषेधः प्रतिभाति, तथाहि मनुयमाभ्यामुपदर्शितम् – 'भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः। कृमिर्भूत्वा स विष्ठायां पितृभिः सह मज्जति।।' (मस्मृ. १०।९१) इति। नायं दोषः, आवश्यकधर्मव्यतिरिक्तविषयत्वात्। योऽयं तिलानां धान्यसमत्वेन विनिमयः, यश्च तृणादिविक्रयः सेयमेवंविधा विप्रस्य जीवनार्था वृत्तिः। तथा च नारदः - 'ब्राह्मणस्य तु विक्रेयं शुष्कदारुतृणादिकम्।' इति।

× पमा.

× आपा. पमावत्। विम. पमागतम्।

**[१]ब्राह्मणश्चेत्कृषिं कुर्यात्तन्महादोषमाप्नुयात्।।**

(१) पाप्मानं दर्शयति – ब्राह्मणश्चेदिति। कृषौ हिंसाया अवर्जनीयत्वात् सावधानस्यापि कृषीवलस्य दोषोऽनुषज्यते इति। अत्र, हिंसायां पापमिति मनुवचनं पूर्वमेवोदाहृतम्।

§ पमा.

(२) इदानीं कर्षकस्य नैमित्तिकं खलयज्ञं विधास्यन्नादौ निमित्तमुपन्यस्यति – ब्राह्मणश्चेदिति। भूमिकर्षणे तदाश्रितप्राणिहिंसाया अपरिहार्यत्वात्सावधानस्यापि कर्षकस्य ब्राह्मणस्य महान्दोषो भवत्येव। ब्राह्मणग्रहणं कृषिवृत्तेर्वैश्यस्य तद्दोषाभावबोधनार्थम्। अत एव मनुः – 'वैश्यवृत्त्या तु जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा। हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत्।।' (मस्मृ. १०।८३) इत्युभयोरेव तन्निषेधमुक्तवान्।

विम.

**[२]अष्टागवं धर्महलं षड्गवं वृत्तिलक्षणम्।**
**चतुर्गवं नृशंसानां द्विगवं गोजिघांसुवत्।।**
**द्विगवं वाहयेत्पादं मध्याह्ने तु चतुर्गवम्।**
**षड्गवं तु त्रियामाहेऽष्टभिः पूर्णं तु वाहयेत्।।**
**न याति नरकेष्वेवं वर्तमानस्तु वै द्विजः।**
**दानं दद्याच्च वै तेषां प्रशस्तं स्वर्गसाधनम्।।**
**[३]संवत्सरेण यत्पापं मत्स्यघाती समाप्नुयात्।**
**अयोमुखेन काष्ठेन तदेकाहेन लाङ्गली।।**

(१) उक्तस्य दोषस्य महत्त्वं विशदयति – संवत्सरेणेति। लोहसहितेन लाङ्गलमुखेन प्राणिनां चित्रवधो भवतीति मत्स्यवधात् पापाधिक्यमुक्तम्।

† पमा.

(२) उक्तदोषस्य महत्त्वं विशदयति – संवत्सरेण इति। मत्स्यघातेन जीवन् कैवर्तादिः संवत्सरेण यत्पापं प्राप्नोति तदयोमुखेन काष्ठेन हलेन भूमिं भिन्दन्नेकाहेन लाङ्गली

§ आपा. पमाअनुवादः।

† आपा. पमावत्।

(१) **पस्मृ.** २।८; **आपा.** १४३; **मुक्ता.** ६३; **सस्मृ.** ९७ (ब्राह्मणे कुर्वति कृषिं महादोषः प्रशस्यते).

(२) **पस्मृ.** २।८ इति श्लोकस्य पूर्वोत्तरार्धयोर्मध्ये द्वितीयादर्शे इमे त्रयः श्लोकाः सन्ति.

(३) **पस्मृ.** २।८-९; **समु.** ४४ अशुद्धो ग्रन्थः; **आपा.** १४३; **मुक्ता.** ६३; **आन.** ६३५-६३६ (=); **सस्मृ.** ९७ पूर्वार्धे (संवत्सरं तु यः कुर्यात्कैवर्तिः प्राणिनां वधः।) अयो (अधो).

कर्षकः प्राप्नोति। अत एव मनुः – 'कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता। भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्।।' (मस्मृ. १०।८४) इति। विम.

**[1]पाशको मत्स्यघाती च व्याधः शाकुनिकस्तथा।**
**अदाता कर्षकश्चैव सर्वे ते समभागिनः।।**

(१) उक्तरीत्या कर्षकमात्रस्य पापप्रसक्तौ तद्वारयितुं विशिनष्टि – पाशक इति। वागुरां प्रसार्य मृगादिग्राही पाशकः। व्याधः मृगवधाजीवः। शाकुनिकः पक्षिघाती। अदाता खले राशिमूलमुपागतेभ्योऽप्रदाता। तेषां सर्वेषां प्रत्यवायः समानः। ततश्च दृष्टान्तत्वेन पाशकादय इह वर्ण्यन्ते। यथा पाशकादीनां पापं महत्, एवमेवादातुः कर्षकस्येत्यर्थः। † पमा.

(२) मत्स्यघातिनः पुनरुपादानं पाशकादीनां तत्साम्यबोधनाय। * विम.

कृषिजन्यदोषशमनं कर्म

**[2]वृक्षं छित्त्वा महीं भित्वा हत्वा च कृमिकीटकान्।**
**कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते।।**

(१) यदर्थं कृषीवलस्य पाप्मा दर्शितः तमिदानीं पापपरिहारप्रकारमाह – वृक्षांश्छित्त्वेति। छेदनभेदनहननैर्यावन्ति पापानि निष्पद्यन्ते तेषां सर्वेषां खले धान्यदानं प्रतीकारः। तथा च हारीतः, – 'भूमिं भित्वौषधीश्छित्त्वा हत्वा कीटपिपीलिकाः। पुनन्ति खलयज्ञेन कर्षका नात्र संशयः।। यूपोऽयं निहितो मध्ये $मेधिर्नाम हि कर्षकैः। तस्मादतन्द्रितो दद्यात्तत्र धान्यार्थदक्षिणाम्।।' इति। + पमा.

(२) खलयज्ञः खलस्थधान्यदानम्। संम. ७९

**[1]यो न दद्याद्द्विजातिभ्यो राशिमूलमुपागतः।**
**स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत्।।**

(१) खलयज्ञाकरणे प्रत्यवायमाह – य इति। कर्षकस्यायं खलयज्ञो नित्यः काम्यश्च इति वचनद्वयबलादवगम्यते। अकरणे प्रत्यवायात् नित्यत्वम्, छेदनादिपापनिवर्तकत्वात् काम्यत्वं च। खलयज्ञस्य नित्यत्वं शैवपुराणे दर्शितम्– 'अदत्त्वा कर्षको देवि यस्तु धान्यं प्रवेशयेत्। तस्य तृष्णाभिभूतस्य देवि पापं ब्रवीम्यहम्।। दिव्यं वर्षसहस्रं तु दुरात्मा कृषिकारकः। मरुदेशे भवेद्वृक्षः स पुष्पफलवर्जितः।। तस्यान्ते मानुषो भूत्वा कदाचित्कालपर्ययात्। दरिद्रो व्याधितो मूर्खः कुलहीनश्च जायते।।' इति। * पमा.

(२) खलयज्ञाकरणे प्रत्यवाय(विनाश ?)मुपसंहरति – य इति। यः कर्षको धान्यराशौ कृते समागतेभ्यो विप्रेभ्यो वक्ष्यमाणं त्र्यंशं भागं न ददाति स चौरः, ब्रह्मभागहरणात्; पापिष्ठः, खलयज्ञाकरणात्; ब्रह्मघ्नः, कृषिव्यासङ्गेन वेदाध्ययनपरित्यागात्। तदुक्तं शिवपुराणे – 'अदत्त्वा कर्षको देवि..... कुलहीनश्च जायते।।' इति। विम.

**[2]राज्ञे दत्त्वा तु षड्भागं देवानां चैव विंशकम्।**
**विप्राणां त्रिंशकं भागं सर्वपापैः प्रमुच्यते।।**

(१) दातव्यस्य धान्यस्य परिमाणमाह – राज्ञ इति। षट्सु भागेष्वेको भागः षड्भागः, एकविंशतिसंख्यकेषु भागेष्वन्यतमो भाग एकविंशकः, तद्वत् त्रिंशकेषु ( ? त्रिंशति) – भागेष्वन्यतमो भागस्त्रिंश इति ज्ञेयम्। देववत् पितृभ्योऽपि

---

† आपा. पमावत्।

* शेषं पमागतम्।

$ 'मेढिर्नाम' इति विमपाठः।

\+ आपा., विम. पमावत्।

(१) **पस्मृ.** २।९-१०; **आपा.** १४३ कर्ष (घात) सर्वे ते (पञ्चैते); **सस्मृ.** ९८ पूर्वार्धे (पाशका मत्स्यबन्धाश्च व्याधसौकलिकास्तथा।).

(२) **पस्मृ.** २।१०-११; **पमा.** वृक्षं छि (वृक्षांश्छि); **आपा.** १४३ पमावत्; **संम.** ७९ कृमि (कृषि); **आन.** ६३६ कृमि (क्रिमि) (=); **बाल.** १।११९ पृ. ३७१ च (तु) टकान् (टकम्) खलय (खलु य); **सस्मृ.** ९८.

* आपा. पमावत्।

(१) **पस्मृ.** २।११-१२; **स्मृच.** २।४५४ गतः (गते) चौरः (चोरः); **आपा.** १४३ चौरः (चोरः) च (ह); **मर.** १७९; **मुक्ता.** ६३ चौरः (चोरः); **विम.** गतः (गते); **आन.** ६३६ मुक्तावत्, (=); **बाल.** १।११९ पृ. ३७१; **सस्मृ.** ९८ चौरः (चोरः) चतुर्थचरणे (ब्रह्महत्यां स विन्दति).

(२) **पस्मृ.** २।१२-१३; **समु.** ४४ दत्त्वा तु षड्भागं (षड्भागमादाय) चैव विं (चैकविं) तृतीयचरणे (त्रिंशच्च ब्राह्मणान्दद्यात्); **पमा.** चैव विं (चैकविं); **आपा.** १४३ पमावत्; **मुक्ता.** ६३ उत्त.; **आन.** ६३६ दत्त्वा तु (दद्याच्च) त्रिंशकं (त्रिंशतं) (=); **सस्मृ.** ९८ (राज्ञे दद्यात्तु षड्भागान्वेदानां चैकविंशतिम्। विप्राणां विंशतिं भागं ततः पापैः प्रमुच्यते।।).

देयः। †तदुक्तं कूर्मपुराणे – 'देवेभ्यश्च पितृभ्यश्च दद्याद्भागं तु विंशकम्। त्रिंशद्भागं तु विप्राणां कृषिं कुर्वन्न दोषभाक्।।' इति। * पमा.

(२) देवेभ्यश्च विंशतितमम्। ¤ विम.

**[1]पापशुद्ध्यर्थं विंशांशं दद्याच्छान्त्यै दिवौकसाम्।**
**पितृभ्यस्तत्समं भागं खण्डक्षेत्रे कृषीवलः।।**
**[2]क्षत्रियोऽपि कृषिं कृत्वा देवान्विप्रांश्च पूजयेत्।**
**वैश्यः शूद्रस्तथा कुर्यात्कृषिवाणिज्यशिल्पकम्।।**

(१) विप्रस्य सेतिकर्तव्यकृषिमुक्त्वा वर्णान्तराणामपि तामाह – क्षत्रिय इति। वाणिज्यशिल्पयोरपि कलौ वर्णचतुष्टयसाधारण्यं दर्शयितुं 'वाणिज्यशिल्पकम्' इत्युक्तम्। यद्यपि वैश्यस्य कृषिः पूर्वाध्याये विहिता, तथाऽप्यत्रेतिकर्तव्यताविधानाय पुनरुपन्यासः, तथा कुर्यात् इत्यतिदेशेन ब्राह्मणस्य कृषौ विहितेतिकर्तव्यता सर्वाऽप्यत्र विहिता भवति इति। $ पमा.

(२) कृत्वा कारयित्वा, स्वयं कृषिकरणस्याऽऽपद्वृत्तित्वेनाभिधास्यमानत्वात्। मर. १९१

(३) विप्रस्य सेतिकर्तव्यतां कृषिमुक्त्वा वर्णान्तराणामपि तामाह – क्षत्रिय इति। क्षत्रियवैश्यशूद्रा अपि पूर्वोक्तेतिकर्तव्यतया कृषिं कृत्वा देवान् विप्रान्, चकारात् राजानं विषाणिनश्च, तथा यथोक्तभागकल्पनया पूजयेयुः। यद्यपि वैश्यस्य कृषिः पूर्वाध्याये विहिता तथाप्यत्रेतिकर्तव्यताविधानाय पुनरुपन्यासः। कृषिवद्वाणिज्यशिल्पकमपि तथैव देवतादिभ्यो भागं दत्त्वा जीवनाय चत्वारोऽपि वर्णाः कुर्युः। वाणिज्यं क्रयविक्रयौ। शिल्पं चित्रलेखनादि। भागकल्पना चोक्ता बृहत्पराशरेण – 'प्रतिग्रहचतुर्थांशं वणिग्लाभतृतीयकम्। कृषितो विंशतिं चैव ददतो नास्ति पातकम्।।' इति। विम.

शूद्रस्य द्विजशुश्रूषात्यागे दुष्फलम्

**[1]विकर्म कुर्वते शूद्रा द्विजशुश्रूषयोज्झिताः।**
**भवन्त्यल्पायुषस्ते वै निरयं यान्त्यसंशयम्।।**

(१) यदि शूद्रस्यापि कृष्यादिकमभ्युपगम्यते, तर्हि तेनैव जीवनसिद्धेः कलौ द्विजशुश्रूषा परित्याज्येत्याशङ्क्याऽऽह-विकर्मेति। लाभाधिक्येन विशिष्टजीवनहेतुत्वात् कृष्यादिकं विकर्मेत्युच्यते। द्विजशुश्रूषया तु जीर्णवस्त्रादिकमेव लभ्यते इति न लाभाधिक्यम्। अतोऽधिकलिप्सया कृष्यादिकमेव कुर्वन्तो यदि द्विजशुश्रूषां परित्यजेयुस्तदा तेषामैहिकमामुष्मिकं च हीयते। पमा.

(२) ननु शूद्रस्यापि कृष्यादिजीवनहेतुसद्भावे किं पराधीनया द्विजशुश्रूषयेत्यत आह – विकर्मेति। द्विजशुश्रूषावर्जिताः शूद्रा विकर्म रागद्वेषादि कुर्वते, ततश्चाल्पायुषो भवन्ति, अनन्तरं नरकं गच्छन्ति तेन कृष्यादिदर्पेणैहिकामुष्मिकश्रेयःप्रतिबन्धकं द्विजशश्रूषाराहित्यं नाभ्युपगन्तव्यमित्यर्थः। अत एवाऽऽनुशासि(? सनि)के – 'रागो द्वेषश्च मोहश्च पारुष्यं च नृशंसता। शाठ्यं च दीर्घवैरत्वमतिमानमनार्जवम्।। अनृतं चातिवादं च पैशू(? शु)न्यमतिलोभता। निकृतिश्चाप्यवज्ञानं जनने शूद्रमाविशत्।। दत्त्वा (? दृष्ट्वा) पितामहः शूद्रमभिभूतं तु तामसैः। द्विजशुश्रूषणं धर्मं शूद्राणां तु प्रयुक्तवान्।। नश्यन्ति तामसा भावाः शूद्रस्य द्विजभक्तितः। द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति।। श्वहिंसकः शुभाचारो देवताद्विजपूजकः। शूद्रो कर्मफलैरिष्टैः स्वधर्मेणैव पूज्यते।।' इति द्विजशुश्रूषायाः शूद्रदोषाभिभावकत्वमभिहितम्। विम.

**[2]चतुर्णामपि वर्णानामेष धर्मः सनातनः।।**

---

† 'तदुक्तम्' इत्यनेन प्रकृतवचनसंवादित्वं कूर्मवचनस्योक्तम्। पमाभिमतपाठे तु देवदेयभागांशे विसंवादः स्पष्ट एव।

* आपा. पमावत्।

¤ शेषं पमावत्।

$ आपा. पमागतम्।

(१) **समु.** ४५.

(२) **पस्मृ.** २।१३-१४; **स्मृच.** २।४५३; **आपा.** १३५ कृत्वा देवान्विप्रांश्च (कुर्याद्द्विजान्देवांश्च) चतुर्थचरणे (कृषिं वाणिज्यमेव च) चन्द्रिकायां पुराणम् : १४३; **मर.** १९१ कृषि (पशु); **बाल.** १।११९ पृ. ३७१ कृत्वा देवान्विप्रांश्च (कुर्याद्द्विजदेवांश्च) तृतीयचरणे (वैश्यशूद्रौ च कुर्यातां); **सस्मृ.** ९८ शिल्पकम् (मेव च) : १५९ देवा (वेदा) शेषं सस्मृ. ९८ वत्.

(१) **पस्मृ.** २।१४-१५; **मुक्ता.** ६७ शुश्रूषयोज्झि (सेवाविवर्जि) निरयं (निरर्थं) शयम् (शयः); **सस्मृ.** ९८ योज्झिताः (या विना) न्त्यसंशयम् (न्ति संशयः).

(२) **पस्मृ.** २।१५; **स्मृच.** २।४५३; **मर.** १७७, १९१; **बाल.** १।११९ पृ. ३७१; **सस्मृ.** ९८.

इत्थं वर्णचतुष्टयसाधारणं जीवनहेतुं धर्मं प्रतिपाद्य निगमयति – चतुर्णामिति। अतीतेष्वपि कलियुगेषु विप्रादीनां कृष्यादिकमस्तीति सूचयितुं सनातन इत्युक्तम्।

+ पमा.

ब्राह्मणप्रशंसा

**(१)ब्राह्मणा जङ्गमं तीर्थं तीर्थभूता हि साधवः।**
**तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः।।**

(१) विप्रवाक्यस्य प्रायश्चित्तप्रयोजकत्वं प्रतिपादयति – ब्राह्मणा इति। साधूनां तीर्थरूपत्वं शुद्धस्वरूपत्वात्। तथा च श्रूयते – 'अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः' (ऋसं. ८।४४।२१) इति।

पमा.

(२) विप्रवाक्यस्य शोधकत्वे हेतुमाह – ब्राह्मणा इति। विशिष्टमातापितृजन्या ब्राह्मणा जङ्गमम् अभीष्टदेशे यानायानाभ्यामिष्टसंपादकतया स्थावरप्रयागादिविलक्षणतीर्थ-(? णं तीर्थं) शोधकम्। न केवलं ब्राह्मण एव, किं तु साधवः अन्येऽपि क्षत्रियादयस्तीर्थभूता एव। यतस्तेषां ब्राह्मणसाधूनां च वाक्यमेवोदकं तेनैव मलिनाः पापिष्ठाः शुध्यन्ति। विम.

**(२)ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः।**
**सर्वदेवमया विप्रा न तद्वचनमन्यथा।।**

(१) विशिष्टमातापितृजन्यत्वं ब्राह्मणत्वम्। न केवलं तावतैव ब्राह्मणवाक्यस्य प्रशस्तत्वम्, किंत्वनेकदेवताप्रतिपादकानां वैदिकमन्त्राणां धारणया सर्वदेवतात्मकत्वेनापि तद्वाक्यं प्रशस्तमित्याह – ब्राह्मणा इति। ब्रह्म वेदः। निरन्तरं तन्निष्ठाः सन्तस्तदर्थं यथावत् ब्रुवाणा ब्राह्मणाः। अतो वेदविद्वचनं देवता अनुमन्यन्ते। तस्य च सर्वदेवमयत्वं श्रूयते – 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' (तैआ. २।१५) इति। अङ्गिरा अपि – 'ब्राह्मणो देवताः सर्वाः स च सर्वस्य दैवतम्।।' इति।

पमा.

(२) ननु ब्राह्मणस्य तीर्थत्वेऽपि मनुष्यत्वाविशेषात्कथं वचनसिद्धिरित्यत आह – ब्राह्मणा इति। वेदविदो ब्राह्मणा यान्यसाध्यान्यपि पशुपुत्रादीनि शुभानि शोकभयादीन्यशुभानि वा यस्मै भाषन्ते आशासते तानि देवतास्तथैवानुमन्यन्ते। तेषां वचनवशवर्तिदेवता( ? त)त्वेन सर्वदेवमयानां विप्राणां वचनम् अन्यथा विसंवादि न भवतीति प्रायोवादः अनृतवादिनो( ? नी) वागितिवत्। तथा च श्रूयते – 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' (तैआ. २।१५) इति। स्मृत्यन्तरेऽप्यङ्गिरसा – 'ब्राह्मणा देवताः सर्वाः स च सर्वस्य दैवतम्।' इति। विम.

**(१)उपवासो व्रतं चैव स्नानं तीर्थं जपस्तपः।**
**विप्रैः संपादितं यस्य संपूर्णं तस्य तत्फलम्।।**

(१) 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' इति श्रुतौ विद्यासंयुक्तं कर्म केवलात् कर्मणः प्रशस्तमिति श्रुतम्। तेनैव न्यायेन विद्यासंयुक्तं व्रतं केवलात् व्रतात् प्रशस्तमित्याह – उपवास इति। विप्रसंपादितं विप्रैरनुज्ञातम् उपवासादिकम्। फलसंपूर्तिः निःशेषेणाशुद्धिनिवृत्तिः।

पमा.

(२) ननु प्रतिनिधिनाऽनुष्ठापयितुर्न्यूनफलतायां तद्विधानमनादरणीयं स्यादित्यत आह – उपवास इति। द्रव्यदानादिना संतोषितैर्विप्रैः यस्य असमर्थस्य यजमानस्य कर्तव्यमुपवासादिकं संपाद्यते तस्य तेषामुपवासादीनां फलं संपूर्णमेव भवति, नान्यनिष्पादितत्वेन न्यूनमिति। अत एवाऽऽह जैमिनिः – 'तस्मिंश्च फलदर्शनात्' (जैसू. ६।३।२५) इत्यनेन प्रतिनिधातुरेव फलम्, न प्रतिनिधेरिति।

विम.

**(२)संप्रणीतः श्मशानेषु दीप्तोऽग्निः सर्वभक्षकः।**
**तथा च वेदविद्विप्रः सर्वभक्षोऽपि दैवतम्।।**

ननु एवमपि पञ्चयज्ञादिभिः परिशुद्धेषु गृहिषु परकीयं पापमनुप्रविशति, परान्नभोजनादेस्तत्प्रापकत्वात्। 'दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति,' 'अन्नादे भ्रूणहा मार्ष्टि' इत्यादिस्मरणात्। इत्यत आह – संप्रणीत इति। न ह्यग्निः श्मशाने नीतः शवादिभक्षणे प्रयुक्त इत्येतावता देवत्वं

---

+ विम. पमावत्।

(१) **पस्मृ.** ६।६१; **समु.** ६६ द्वितीयचरणे (त्रिषु लोकेषु विश्रुतम्) तेषां वाक्यो (एषां पादो); **मुक्ता.** ४६७.

(२) **पस्मृ.** ६।६२.

(१) **पस्मृ.** ६।६३; **पमा.** विप्रैः सं (विप्रसं).

(२) **पस्मृ.** ८।२२; **पमा.** २।४३७ प्रथमचरणमात्रम्.

परित्यज्यति। एवं वेदविदो भूदेवस्य अभक्ष्याभोज्यादिदोषमात्रेण भूदेवत्वं नापैति, एकैकस्य मन्त्रस्याभक्ष्यभक्षणाद्यशेषदोषनिवर्तकत्वात्। तथा च मन्त्रलिङ्गम् – 'यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वा करिष्यन्। यद्देवानां चक्षुष्यागो अस्ति यदेव किंच प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु। यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविम्' (तैआ. २।६) इत्यादि। अनृतेन परकीयादौ स्वकीयत्वादिवचनेन। दास्यन् अनर्हेभ्यो नष्टशौचाचारादिभ्यः स्नेहानुबन्धेन हव्यकव्ययोः प्रयच्छन्, अदास्यन् अतिथ्यादिभ्यो योग्येभ्योऽप्रयच्छन्, करिष्यन् अन्नभक्षणव्यतिरिक्तमविहितं प्रतिषिद्धं वा कुर्वन्, चक्षुष्यागः नग्नपरयोषिदवलोकनादि, तथा देवानामागः विष्ण्वाद्यं देवं दृष्ट्वाऽप्यनमस्कारादि, यदेव किंच अश्वमहिषकालपुरुषाद्यप्रतिग्राह्यं यत् किंचित् प्रतिजग्राहं प्रतिगृहीतवानस्मि, बहुधा विरूपं गणान्नगणिकान्नादिरूपेणानेकदोषयुक्तं यदन्नमद्मि भक्षितवानस्मि, यथोक्तात् सर्वस्माद्दोषजातात् माम् अनृणं पूतम् अग्निः करोत्विति मन्त्रार्थः। तथा पवमानसूक्तादिमहिमानमधीयते – 'क्रयविक्रयाद्योनिदोषाद्भक्षाद्भोज्यात् प्रतिग्रहम्(? हात्)। असंभोजनाच्चापि नृशंसं तत् पावमानीभिरहं पुनामि।।' (ऋसं. खिल. ३।१०-(२)३) इति। तथा सामविधाने सामगाः पठन्ति – *'अभोज्यभोजने एते पन्था अधो दिवः' (सामब्रा. १।५।-१२)। इति साम गायेदिति शेषः। मनुरपि – 'प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा वाऽन्नं विगर्हितम्। जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात्।। हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः। ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किंचन।।' (मस्मृ. ११।२५३, २६१) इति।

\# पमा.

**'दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः।**
**कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम्।।**

(१) कः परित्यज्येत्यादिर्दृष्टान्तः। जातिशीलयोर्मध्ये जात्युत्कर्ष एव प्राधान्येनोपादेयः। शीलं तु यथासंभवम्। अत एव चतुर्विंशतिमते शूद्रोपदेशस्यानुपादेयत्वं प्रपञ्चयति – 'श्वचर्मणि यथा क्षीरमपेयं ब्राह्मणादिभिः। तद्वत् शूद्रमुखाद्वाक्यं न श्रोतव्यं कथंचन।। पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च। वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा।। शूद्रो ज्ञानावलेपेन ब्राह्मणान् भाषते यदि। स याति नरकं घोरं यावदाभूतसंप्लवम्।। कृष्णसर्पं द्विजं नष्टं शूद्रं च प्रतिपादकम्। गर्दभं जारजातं च दूरतः परिवर्जयेत्।।' (चम. २२८-२३०, २३३) इति।

पमा.

(२) शीलात् वृत्तात् संध्यास्नानादेः दुर्गतः दुःशीलः, न तु निषिद्धकारी, द्विजः द्वितीयजन्मवान् गायत्रीसंस्कृत इति यावत्, स एव पूज्यः पूजार्हः, न तु जितेन्द्रियोऽपि यथोक्ताचरणशीलोऽपि शूद्रः। विम.

गवां व्रणास्थिभङ्गचिकित्सा,
योग्यायोग्यगोबन्धन-
रज्जवः

**'व्रणभङ्गे च कर्तव्यः स्नेहाभ्यङ्गस्तु पाणिना।**
**यवसश्चोपहर्तव्यो यावद्दृढबलो भवेत्।।**

(१) व्रणभङ्गादौ न केवलं प्रायश्चित्ताचरणम्, किंतु तच्चिकित्साऽपि कर्तव्येत्याह – व्रणभङ्ग इति। व्रणश्च भङ्गश्च व्रणभङ्गौ। त्वक्छेदः व्रणः, शृङ्गाद्यस्थिच्छेदः भङ्गः। स्नेहाभ्यङ्गः इत्यप्यौ(? इत्यौ)षधप्रक्षेपस्याप्युपलक्षणम्। यवसः तृणविशेषः। तेन भक्ष्यं सर्वमुपलक्ष्यते। चिकित्सां शङ्खोऽप्याह – 'यवसश्चोपहर्तव्यो ‡ यावद्रोहिततद्व्रणा। संपूर्णे दक्षिणां दद्यात्ततः पापात् प्रमुच्यते।।' इति। पमा.

---

* सामविधानब्राह्मणे 'अभोज्यभोजने' इत्यस्य स्थाने 'अमेध्यदर्शने' इति पाठः तादृक्पाठानुसार्येव सायणभाष्यं च।

\# विम. पमागतम्।

(१) **पस्मृ.** ८।२५.

‡ अत्रेयमादर्शपुस्तके टिप्पणी – 'रोहितेति णिच्प्रयोगात् व्रणरोहणानुकूलः कश्चन व्यापारः प्रतीयते। स च व्यापारश्चिकित्सैव, तस्या एव व्रणरोहणानुकूलत्वसंभवात्। अत एव सुतरामिदं वचनं चिकित्सायां प्रमाणमिति भावः।' इति। '..... व्रणा' इति स्त्रीलिङ्गमविवक्षितं मत्वाऽनडुच्चिकित्सायां प्रमाणीकृतम्।

(१) **पस्मृ.** ९।२०, ३३, ३४.

(२) यवसः अभिनवं तृणमन्यदपि हितं भक्ष्यमुपहरेत् यावद्यथापूर्वबलस्ताडितो गौर्भवति। तस्मिन्निर्व्रणे व्रतोत्त-राङ्गं समाप्यमिति। § विम.

**न नारिकेलैर्न च शाणपाशै-**
**र्न चापि मौञ्जैर्न च वल्कशृङ्खलैः।**
**एतैस्तु गावो न निबन्धनीया**
**बद्ध्वाऽपि तिष्ठेत् परशुं गृहीत्वा।।**

(१) तत्र तावद्वर्ज्यान् रज्जुविशेषान् दर्शयति – नेति। वल्कानि वंशादिजनितानि। शृङ्खलान्ययस्ताम्रादि-निर्मितानि। नारिकेलादिभिर्गावो न बन्धनीयाः। यदि दामान्तरासंभवादेतैर्दामभिर्बध्येरन्, तदा तन्निमित्तोपद्रव-प्रसङ्गो भवति, अतस्तच्छेत्तुं हस्तेन परशुं गृहीत्वा सावधानस्तिष्ठेत्। नारिकेलादिभिः, कार्पासतन्त्वादिजन्या दृढा रज्जवः सर्वा उपलक्ष्यन्ते। अत एवाङ्गिराः – 'न नारिकेलैर्न च फालकेन न मौञ्जिना नापि च वल्कलेन। एतैरनड्वान् न हि बन्धनीयो बद्ध्वाऽपि तिष्ठेत् परशुं गृहीत्वा।।' (उत्तराङ्गिस्मृ. १०।५) इति। फालकं कार्पास-जन्यम्। पमा.

(२) नारिकेलं नारिकेलवृक्ष(? फल)त्वङ्निर्मितम्, शाणं शणनिर्मितम्, बाणं बाणवृक्षत्वङ्निर्मितम्, मौञ्जं मुञ्जनिर्मितम्, वर्ध्रा चर्मरज्जुः, वल्केति पाठे पलाशादि-वल्कलनिर्मितं दाम।

§ विम.

**कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम्।।**

(१) उपादेयान् रज्जुविशेषानाह – कुशैरिति। यथा पाशा अनुपद्रवकारिणो विवक्षिताः, तथा स्थानमपि निम्नोन्नता(? तत्वा)दिदोषरहितं विवक्षितम्। तथा च व्यासः, – 'कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्जिते।' इति। पमा.

(२) कुशकाशादिभिराशुच्छेदिभिर्दक्षिणाभिमुखं गोजातीयं पशुं बध्नीयात्। § विम.

§ शेषं पमावत्।

ब्राह्मणकर्तृककृषिवाणिज्यादि-
निन्दा

[1]**कृषिं नैव प्रकुर्वीत यदीच्छेद्धर्ममात्मनः।**
**कृषेर्नश्यन्ति वेदास्तु वेदनाशादधमर्हति।।**
**कृषिवाणिज्यसेवाश्च आकरश्चापि निन्दिताः।**
**तस्मात्सर्वप्रयत्नेन ब्राह्मणानां विगर्हिताः।।**

कुसीदे वृद्धिपरिमाणम्, आपद्धर्मकृषौ
हलवृषभसंख्या, अविक्रेयाणि,
खले दानस्य प्रशंसा

[2]**अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकस्तदा।**
**जीवेदेतैश्च राजन्यः सर्वे चाप्यनयं गताः।।**
[3]**अलाभे सर्ववृत्तीनां कृषिं कुर्वीत वा यदि।**
**चतुर्भिः षड्भिरित्येतैर्बाह्या लाङ्गलधूरपि।।**
[4]**वेदविद्यानि मानानि न विक्रीणीत कर्हिचित्।**
**नापत्यानि न सत्त्वानि भूवृत्तिं चान्वये तथा।।**
[5]**पुत्रे जाते व्यतीपाते संक्रान्तौ ग्रहणेषु च।**
**विवाहेषु खले यज्ञे दत्तं भवति चाक्षयम्।।**

## बृहत्पराशरः

चातुर्वर्ण्यस्य वृत्तयः, शूद्रस्य
विक्रेयाविक्रेयाणि

[6]**यजनं याजनं विप्रे तथा दानप्रतिग्रहौ।**
**अध्यापनमध्ययनं कर्माण्येतानि षट् तथा।।**
**प्रजानां रक्षणं दानमरीणां निग्रहस्तथा।**
**यजनाध्ययने राज्ञि विषयासक्तिवर्जनम्।।**
**यजनाध्ययने दानं पाशुपाल्यं तथा विशि।**
**वाणिज्यं च कुसीदं च कर्मषट्कं प्रकीर्तितम्।।**
**शुश्रूषा ब्राह्मणादीनां तदाज्ञापालनं तथा।**
**एष धर्मः स्मृतः शूद्रे वाणिज्येन च जीवनम्।।**

(१) **समु.** ४४, ४५.
(२) **आन.** ६३६.
(३) **समु.** ४४.
(४) **बाल.** १।११९ पृ. ३७२.
(५) **आपा.** १४३.
(६) **बृपसं.** ४।२१७-२२८.

सर्वेषां जीवनं प्रोक्तं धर्मेणैव च कर्षणम्।
भिन्नवृत्तिर्यथा न स्यात्कुर्याद्विप्रस्तथा च तत्।।
कुर्वन्नुक्तानि कर्माणि वृत्त्या वा क्षत्रियस्य च।
वृत्त्यभावे द्विजो जीवेद्भिन्नवृत्तिं विवर्जयेत्।।
प्रजानां पालनं दानं शस्त्रभृत्त्वं प्रचण्डता।
निर्जयः परसैन्यानामेष धर्मः स्मृतो नृपे।।
पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत्।
मालाकार इवाऽऽरामे प्रजासु स्यात्तथा नृपः।।
लोहकर्म रथानां च गवां च प्रतिपालनम्।
गोरक्षा कृषिवाणिज्यं वैश्यवृत्तिरुदाहृता।।
शूद्रस्य द्विजशुश्रूषा परो धर्मः प्रकीर्तितः।
अन्यथा कुरुते यत्तु तद्भवेत्तस्य निष्फलम्।।
लवणं मधु तैलं च दधि तक्रं घृतं पयः।
न दुष्येच्छूद्रजातीनां कुर्यात्सर्वस्य विक्रयम्।।
विक्रयं मद्यमांसानामभक्ष्यस्य च भक्षणम्।
अगम्यागामिता चौर्यं शूद्रे स्युः पातहेतवः।।
[1]षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत्।।

ग्राह्याग्राह्यत्वप्रयोजकाः हलवृषभ-
गुणदोषाः, हलवाहनकालः,
गोरक्षणेतिकर्तव्यता

[2]हीनाङ्गं व्याधिसंयुक्तं प्राणहीनं च दुर्बलम्।
क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत्।।
दुर्बलम् अल्पबलम्, बालिशमिति यावत्।
बाल. १।११९ पृ. ३६९

[3]स्थिराङ्गं नीरुजं तृप्तं साण्डं षण्ढविवर्जितम्।
अधृष्यं सबलप्राणमनड्वाहं तु वाहयेत्।।
वाहयेद्दिवसस्यार्धं ततः स्नानं समाचरेत्।
कुगवैर्न कृषिं कुर्यात् सर्वथा धेनुसंग्रहम्।।
[4]बन्धनं पालनं रक्षां द्विजः कुर्याद्गृही गवाम्।
वत्साश्च यत्नतो रक्ष्या वर्धन्ते ते यथा क्रमात्।।

(१) **बृपसं.** ५।२.

(२) **बृपसं.** ५।३; **बाल.** १।११९ पृ. ३६९ तृषितं (दुर्बलं) वृद्धपराशरः.

(३) **बृपसं.** ५।४-५.

(४) **बृपसं.** ५।६; **बाल.** १।११९ पृ. ३७४ ही ग (हादृग) चतुर्थचरणे (वर्धनीया यथाक्रमम्) वृद्धपराशरः.

[1]न दूरे तास्तु नेतव्याश्चारणाय कदाचन।
दूरे गावश्चरन्त्यो हि न भवन्ति शुभावहाः।।

गोदोहननियमाः, बन्धने गोमुखदिङ्नियमः,
गोष्ठे लोहदात्रस्थापनम्,
गोब्राह्मणप्रशंसा

[2]प्रातरेव हि दोग्धव्या दुह्यात् सायं न ता गृही।
दोग्धुर्वृद्धिः पयसो नैव वर्धन्ते ताः कदाचन।।
[3]गौरवत्सा न दोग्धव्या न चैवं गर्भसंधिनी।
प्रसूता च दशाहार्वाग्दोग्धि चेन्नरकं व्रजेत्।।
[4]दुर्बला व्याधिसंयुक्ता पुष्पिता या द्विवत्सका।
साधुभिर्न च दोग्धव्या धार्मिकैर्धनमीप्सुभिः।।
[5]कुलान्ते पुष्पिता गावः कुलान्ते बहवस्तिलाः।
कुलान्ते चलचित्ता स्त्री कुलान्ते बन्धुविग्रहः।।
[6]दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि।
बन्धनीयास्तथैताः स्युर्न प्राक्पश्चिमतोमुखाः।।
[7]वाजिगोवृषशालायां सुतीक्ष्णं लोहदात्रकम्।
स्थाप्यं तु सर्वदा तत् स्यादवलुप्तविमोक्षकृत्।।
[8]ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्।
तिष्ठन्त्येकत्र मन्त्रास्तु हविरेकत्र तिष्ठति।।

वृषभनासावेधनियमाः

[9]तृतीयेऽब्दे चतुर्थे वा यदा वत्सो दृढो भवेत्।
तदा नासाऽस्य भेत्तव्या नैव प्राग्दुर्बलस्य च।।

(१) **बृपसं.** ५।७; **बाल.** १।११९ पृ. ३७४ दूरे ता (दूरत) श्चार (श्चर) वश्चरन्त्यो हि (वै विचरन्त्यो) वृद्धपराशरः.

(२) **बृपसं.** ५।८; **बाल.** १।११९ पृ. ३७४ सायं न ता (सर्वं तु नो) र्वृद्धिः पय (र्विपय) वृद्धपराशरः.

(३) **बृपसं.** ५।१६; **बाल.** १।११९ पृ. ३७४ चैवं ग (वेहद्ग) ता च द (ताया द) क्रमेण वृद्धपराशरः.

(४) **बृपसं.** ५।१७; **बाल.** १।११९ पृ. ३७४ ता या द्वि (का या वि) धार्मिकैर्धन (वर्णिभिर्धर्म) क्रमेण वृद्धपराशरः.

(५) **बृपसं.** ५।१८.

(६) **बृपसं.** ५।२१; **बाल.** १।११९ पृ. ३७४.

(७) **बृपसं.** ५।२२; **बाल.** १।११९ पृ. ३७५ वाजिगोवृष (गोवृषाश्चाऽऽदि) दात्र (वात्र) तत् स्यादवलुप्त (न स्यादवरुद्ध).

(८) **बृपसं.** ५।३०-३१.

(९) **बृपसं.** ५।५५; **बाल.** १।११९ पृ. ३७५ (नासाऽस्य) (नासा तु).

वयोविशेषेण वृषनासावेधनादिप्रकारमाह स एव – तृतीयेऽब्दे इति। बाल. १।११९ पृ. ३७५

**[१]नासावेधनकीलं तु खादिरं वाऽथ शैंशपम्।**
**द्वादशाङ्गुलकं कार्यं तज्ज्ञैस्तैश्च समं च (? स्तैनिशमेव) वा।।**

पशुबन्धने शालास्वरूपं मुखदिङ्नियमश्च, शालाप्रवेशे धर्मकृत्यम्

**[२]शालां द्विजेन्द्रा वृषगोहयानां**
**तां याम्यदिग्द्वारवर्ती विदध्यात्।**
**सौम्याककुब्द्वारवर्ती सुशोभां**
**तेषां शमिच्छन् ध्रुवमात्मनश्च।।**
**गावो वृषा वा हयहस्तिनो वा**
**अन्येऽपि सर्वे पशवो द्विजेन्द्राः।**
**याम्यामुखा वोत्तरदिङ्मुखा वा**
**नान्याशकास्ते खलु बन्धनीयाः।।**
**शालाप्रवेशे वृषगोपशूनां**
**राजाऽपि यत्नाद्धयकुञ्जराणाम्।**
**होमं च सप्तार्चिषि शास्त्रयुक्तं**
**कुर्याद्विधिज्ञो द्विजपूजनं च।।**

लाङ्गलस्य तदवयवानां च प्रकृतिकाष्ठानि प्रमाणानि च

**लाङ्गलं संप्रवक्ष्यामि यत्काष्ठं यत्प्रमाणतः।**
**हलेषायास्तथोन्मानं प्रतोदस्य युगस्य च।।**
**चत्वारिंशत्तथा चाष्टावङ्गुलानि कुथः स्मृतः।**
**अर्धार्धमङ्गुलैर्भाज्यो हलीषावेधतश्च यः।।**
**षोडशैव तु तस्याधः षड्विंशति तथोपरि।**
**वेधस्तस्याश्च कर्तव्यः प्रमाणेन षडङ्गुलः।।**
**अङ्गुलैश्चाष्टभिस्तस्माद्वेधः स्यात् प्रातिहारिकः।**
**तस्याधस्ताच्च चत्वारि वेधश्च चतुरङ्गुलः।।**
**अष्टाङ्गुलमुरस्तस्य वेधादूर्ध्वं प्रकल्पयेत्।**
**ग्रीवा दशाङ्गुला चोर्ध्वं हस्तग्राही ततः स्मृता।।**
**साऽपि तज्ज्ञैः शुभा कार्या तद्वेधस्त्र्यङ्गुलो भवेत्।**
**पञ्चाङ्गुलं पुरस्तस्य शिरसोऽपि विभावनम्।।**
**पृथुत्वं शिरसो धार्यं हस्ततलप्रमाणकम्।**
**अङ्गुलानि तथा चाष्टौ उरसः पृथुता भवेत्।।**
**वेधाद्बहिः प्रतीकारी षट्त्रिंशदङ्गुला भवेत्।**
**सुतीक्ष्णलोहफलका मृत्काष्ठादिविदारकृत्।।**
**न सीरं क्षीरवृक्षस्य न बिल्वपिचुमन्दयोः।**
**इत्यादीनां हि कुर्वाणो न नन्दति चिरं गृही।।**
**प्लक्षाक्षयोर्न तत् कुर्यात् कीर्तिघ्नौ तौ प्रकीर्तितौ।**
**तयोः काष्ठस्य तत् कुर्वन्ससस्यो नश्यति ध्रुवम्।।**
**प्राञ्जला सप्तहस्ता च चतुरस्राऽग्रवर्तुला।**
**सालादिशुभकाष्ठानां हलीषा विदुषां मता।।**
**अस्या वेधः सकर्णायाः कार्यो नववितस्तिभिः।**
**नीचोच्चवृषमानेन तज्ज्ञा एवं वदन्ति हि।।**
**चतुर्हस्तं युगं कार्यं स्कन्धस्थानेऽर्धचन्द्रवत्।**
**मेषशृङ्ग्याः कदम्बस्य सालाद्यन्यतमस्य वा।।**
**शम्या वेधाद्बहिः कार्या दशाङ्गुलप्रमाणिका।**
**तन्मानेन प्रणाली च तदन्तरदशाङ्गुलम्।।**
**प्रतोदश्च समग्रन्थिर्वेणवश्च चतुष्करः।**
**तदग्रे चापि कर्तव्यो यवाकारस्तु लोहजः।।**
**हीनातिरिक्तं कर्तव्यं नैव किंचित् प्रमाणतः।**
**कुर्यादनड्डुहोऽदैन्याद्वै(? न्दै)न्यात्तु नरकं व्रजेत्।।**
**यथादृढं यथाशोभं वाहकस्य प्रमाणतः।**
**भूमेश्च कर्षणायालं तज्ज्ञाः सीरं वदन्ति हि।।**

हलयोजने मुहूर्तः धर्मकृत्यं च, तिलयवहीनं कर्षणं न प्रशस्तम्

**[१]योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा।**
**ज्येष्ठानक्षत्रसंयुक्ते पुण्येऽह्नि तद्विधीयते।।**
**[२]अन्यत्र वा शुभे भे च तत्र कार्यं विपश्चिता।**
**यत्तु कृत्यं हितं वाऽपि पुण्यं वा मनसि स्फुरेत्।।**

---

(१) **बृपसं.** ५।५६; **बाल.** १।११९ पृ. ३७५ वेधन (बन्धन) चतुर्थचरणे (ततः सूक्ष्ममुखं समम्).

(२) **बृपसं.** ५।५७-७६.

(१) **बृपसं.** ५।७७; **बाल.** १।११९ पृ. ३७० क्रमेण बृहत्पराशरः.

(२) **बृपसं.** ५।७८; **बाल.** १।११९ पृ. ३७० भे च तत्र (चैव तच्च) पू. क्रमेण बृहत्पराशरः.

[1]मातृश्राद्धं द्विजः कुर्याद्यथोक्तविधिना गृही।
द्रव्यकालानुसारेण कुर्वाणो धर्मतः कृषिम्।।
[2]प्रोल्लिख्य मण्डलं पुष्पधूपदीपैः समर्च्य तत्।
इन्द्राय च तथाऽश्विभ्यां मरुद्भ्यश्च तथा द्विजः।
कुर्याद्बलिहर्तिं विद्वान् उदग्वै कश्यपाय च।।
भद्रः बलभद्रः।

बाल. १।११९ पृ. ३७०

[3]तथा कुमार्यै सीतायै अनुमत्यै तथा बलिः।
नमःस्वाहेति मन्त्रेण स चेच्छन्नात्मनो हितम्।।
[4]दधिगन्धाक्षतैः पुष्पैः शमीपत्रैस्तिलैस्तथा।
दद्याद्बलिं वृषाणां च मध्वाज्यप्राशनं तथा।।
[5]संघृष्य सीरफालाग्रं हेम्ना वा रजतेन वा।
प्रलिप्य मधुसर्पिर्भ्यां कुर्याच्च तत्प्रदक्षिणम्।।
§ [6]अग्न्युक्ष्णोर्मण्डलं कृत्वा कुर्यात्सीरप्रवाहणम्।।
पुण्य लाङ्गल कल्याण कल्याणाय नमोऽस्त्विति।।
[7]सीतायाः स्थापनं कृत्वा पराशरमृषिं स्मरन्।
सीरा युञ्जन्ति इत्याद्यैर्मन्त्रैः सीरं प्रवाहयेत्।।

[1]दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुण्यदैः।
सीतां पूज्य वृषौ भक्त्या रक्तवस्त्रविषाणकौ।।
[2]सप्तधान्यानि चाऽऽदाय प्रोक्ष्य पूर्वामुखो हली।
तानि दत्त्वोक्ष्णोः क्षेत्रे च किरन् भूमिं कृषेद्द्विजः।।
[3]न तिलैर्न यवैर्हीनं द्विजः कुर्वीत कर्षणम्।
तद्विहीनं तु कुर्वाणं न प्रशंसन्ति देवताः।।
तिलपात्रच्युतं तोयं दक्षिणस्यां पतेद्दिशि।
तेन तृप्यन्ति पितरो यावन्न तिलविक्रयः।।
विक्रीणीते तिलान्यस्तु मुक्त्वाऽन्यद्धान्यसामकान्।
विमुच्य पितरस्तं तु प्रयान्ति हि तिलैः सह।।
तुषाज्जलं यवस्थं च पत्रेभ्यो भूतले पतत्।
पयोदधिघृताद्यैस्तु तर्पयेत्सर्वदेवताः।।
दैवपर्जन्यभूसीरयोगात् कृषिः प्रजायते।
व्यापारात् पुरुषस्यापि तस्मात्तत्रोद्यतो भवेत्।।
शालीक्षुशणकार्पासवार्ताकप्रभृतीनि च।
वापयेत् सस्यबीजानि सर्वं वाऽपि न सीदति।।
चन्द्रक्षयेऽमतिर्विप्रो यो युनक्ति वृषं क्वचित्।
तं पञ्चदशवर्षाणि त्यजन्ति पितरो हि(?ऽहि)तम्।।

### वापनोत्तरा वृषभसेवा, वृषभप्रशंसा, अवाह्यत्व-प्रयोजकवृषभदोषाः, अन्नजलस्तुतिद्वारा कर्षणप्रशंसा

तत्राभ्यज्य विषाणानि गावश्चैव तथा वृषाः।
चरणाय विसृज्यन्ते आगतान् निशि भोजयेत्।।
य उत्पाद्येह सस्यानि सर्वाणि तृणचारिणः†।
जगत् सर्वं धृतं यैस्तु पूज्यन्ते किं न ते वृषाः।।
‡ चरणाय विसृष्टं(? ष्टे) तु यस्य गोदशकं भवेत्।

§ आदर्शपुस्तकेऽत्र 'उक्ष्णोश्च मण्डनम्', 'उक्ष्णोश्च मङ्गलम्' इति च पाठभेदो निर्दिष्टः।

(१) **बृपसं.** ५।७९; **बाल.** १।११९ पृ. ३७० उत्तरार्धे (द्रव्यकारणसंपत्त्यै कुर्वतो धर्मतः कृषीन्।।) क्रमेण बृहत्पराशरः.

(२) **बृपसं.** ५।८०-८१; **बाल.** १।११९ पृ. ३७० र्च्य तत् (र्चयेत्) इन्द्राय (भद्राय) उदग्वै (तदगाः) क्रमेण बृहत्पराशरः.

(३) **बृपसं.** ५।८१-८२; **बाल.** १।११९ पृ. ३७० बलिः। नमःस्वा (बलभद्रः स्वा) स चे (स त्वि) क्रमेण बृहत्पराशरः.

(४) **बृपसं.** ५।८२-८३; **बाल.** १।११९ पृ. ३७० पत्रै (पुष्पै) क्रमेण बृहत्पराशरः.

(५) **बृपसं.** ५।८३-८४; **बाल.** १।११९ पृ. ३७० प्रथमचरणे (संबध्य सीरकाग्रेण) रज (राज) र्याच्च तत्प्र (र्यात्तत्र प्र) क्रमेण बृहत्पराशरः.

(६) **बृपसं.** ५।८४-८५; **बाल.** १।११९ पृ. ३७० अग्न्युक्ष्णो-र्मण्डलं (अग्न्योक्ष्णोर्मण्डनं) उत्तरार्धे (पुण्यलाङ्गूलकल्याण-कल्याणाय नमोऽस्त्विति।।) क्रमेण बृहत्पराशरः.

(७) **बृपसं.** ५।८५-८६; **बाल.** १।११९ पृ. ३७० सीरा युञ्जन्ति (सीता संयुजे) क्रमेण बृहत्पराशरः.

† भवन्तीति शेषः।

‡ चरणकाले मिथुनधर्मसंभवात् चरणार्थे विसृष्टे सति यस्य गोदशकम् उत्पाद्यं भवेत्, यस्मादेकस्मात् गोदशकं लभ्यते इत्यर्थः प्रतीयते।

(१) **बृपसं.** ५।८६-८७; **बाल.** १।११९ पृ. ३७० तां पूज्य व (तापुण्यवृ) णकौ (णकैः) क्रमेण बृहत्पराशरः.

(२) **बृपसं.** ५।८७; **बाल.** १।११९ पृ. ३७० दत्त्वोक्ष्णोः क्षेत्रे च (दत्त्वा क्षयौ क्षेत्रे) क्रमेण बृहत्पराशरः.

(३) **बृपसं.** ५।८८-९४, १०३-११६.

यद्रूपेण स्थितो धर्मः पूज्यन्ते किं न ते वृषाः।।
स्युः पाल्या यत्नतस्ते वै वाहनीया यथाविधि।
स याति नरकं घोरं यो वाहयत्यपालयन्।।
नाधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः।
वाहनीयो हि शूद्रेण वाहयन्क्षयमश्नुते।।
वर्जयेद्द्रष्टदोषांश्च वाहने दोहने नरः।
पाल्या वै यत्नतः सर्वे पालयञ्छुभमाप्नुयात्।।
अन्नार्थमेतानुक्षाणः(? नुक्षणो वै)ससर्ज परमेश्वरः।
अन्नेनाऽऽप्यायते सर्वं त्रैलोक्यं सचराचरम्।।
अग्निर्ज्वलति चान्नार्थं वाति चान्नाय मारुतः।
गृह्णाति चाम्भसां सूर्यो रसानन्नाय रश्मिभिः।।
अन्नं प्राणो बलं चान्नमन्नाज्जीवितमुच्यते।
अन्नं च जगदाधारं (? रः) सर्वमन्ने प्रतिष्ठितम्।।
सर्वेषां देवतादीनामन्नं जीवः प्रकीर्तितः।
तस्मादन्नात्परं तत्त्वं न भूतं न भविष्यति।।
द्यौः पुमान्धरणी नारी अम्भो बीजं दिवश्च्युतम्।
द्युधात्रीतोयसंयोगादन्नादीनां हि संभवः।।
आपो मूलं हि सर्वस्य सर्वमप्सु प्रतिष्ठितम्।
आपोऽमृतरसो ह्याप आपः शुक्रं बलं महः।।
सर्वस्य बीजमापो हि सर्वमद्भिः समावृतम्।
सद्य आप्यायना ह्याप आपो ज्येष्ठतरा ह्यतः।।
किंचित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः।
न जीवन्ति विना ताभिस्तस्मादापोऽमृतं स्मृताः।।
[1]दत्ताभिरद्भिरेतस्यां किं न दत्तं कलौ युगे।
§ यथान्नेन प्रदत्तेन सर्वं दत्तं भवेदिह।।
[2]अतोऽप्यन्नार्थभावेन कर्तव्यं कर्षणं द्विजैः।
यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम्।।

§ यथावर्णितमन्नं यथान्नम्, तेन।

(१) **बृपसं.** ५।११७; **बाल.** १।११९ पृ. ३६९ यथा (तथा) उत्त. पराशरः.

(२) **बृपसं.** ५।११८; **बाल.** १।११९ पृ. ३६९ भावेन (मप्येतत्) पू. पराशरः : १।११९ पृ. ३७० ङ्गलादिप्र (ङ्गूलादिप्र) उत्त. क्रमेण बृहत्पराशरः.

सीताप्रार्थना, कृषौ पराशरस्मरणादिविधानम्, लवनादौ उक्तविध्यतिदेशः, अकृष्या भूमयः

[1]सीते सौम्ये कुमारि त्वं देवि देवार्चिते श्रिये।
शक्तिसूनोर्यथा सिद्धा तथा मे सिद्धिदा भव।।
[2]शक्तिसूनोर्विना नाम्ना सीतायाः स्थापनं विना।
विनाऽभ्युक्षणरक्षार्थं सर्वं हरति राक्षसः।।
[3]वापने लवने क्षेत्रे खले गन्त्रीप्रवाहणे।
एष एव विधिर्ज्ञेयो धान्यानां च प्रवेशने।।
[4]देवतायतनोद्याननिपातस्थानगोव्रजान्।
सीमास्मशानभूमिं च वृक्षच्छायां क्षि(? याक्षि)-
तिं तथा।।
[5]भूमिं (?) निखातं यूपांश्च अयनस्थानमेव च।
अन्यामपि हि चावाह्यां न कृषेत्कृषिकृद्धराम्।।
[6]नोषरां वाहयेद्भूमीं न चाऽश्मशर्करावृताम्।
न गोचरां न प्रदत्तां न नदीपुलिनां तथा।।
[7]यद्यसौ वाहयेल्लोभाद्द्वेषाद्वाऽपि हि मानवः।
क्षीयतेऽसौ चिरात्पापात् सपुत्रपशुबान्धवः।
नरकं घोरतामिस्रं पापीयान् याति निश्चितम्।।

(१) **बृपसं.** ५।११९; **बाल.** १।११९ पृ. ३७० श्रिये (प्रिये) क्रमेण बृहत्पराशरः.

(२) **बृपसं.** ५।१२०; **बाल.** १।११९ पृ. ३७० विना (विप्रा) रक्षार्थं (रक्षाभ्यां) क्रमेण बृहत्पराशरः.

(३) **बृपसं.** ५।१२१; **बाल.** १।११९ पृ. ३७० वाहणे (वाहने) क्रमेण बृहत्पराशरः.

(४) **बृपसं.** ५।१२२; **बाल.** १।११९ पृ. ३६९ पात (पान) सीमास्म (श्रीमान् श्म) यां क्षितिं त (याक्षितीस्त) क्रमेण बृहत्पराशरः.

(५) **बृपसं.** ५।१२३; **बाल.** १।११९ पृ. ३७० तं यूपांश्च अयनस्था (तपूर्वां च रणस्य स्था) कृद्धराम् (कृद्बलात्) क्रमेण बृहत्पराशरः.

(६) **बृपसं.** ५।१२४; **बाला.** १।११९ पृ. ३७० (नोखेत्संवाहयेद्भूमिं तथाऽश्मशर्करैर्युताम्। वाहयेन्नाप्रदक्षां च न नदीपुलिनं तथा।।) क्रमेण बृहत्पराशरः.

(७) **बृपसं.** ५।१२५-१२६; **बाल.** १।११९ पृ. ३७० तेऽसौ चिरात्पापात् (ते सोऽचिरात्पापः) निश्चितम् (चैनसा) क्रमेण बृहत्पराशरः.

[1]योऽपहृत्य परकीयां कृषिकृद्वाहयेद्धराम्।
स भूमिस्तेयपापेन सुचिरं नरके वसेत्।।
[2]एकसंख्यमपि स्वर्णं भूमिमङ्गुलमात्रिकाम्।
तथैकामपि गां हृत्वा सृष्ट्यन्तं नरकं वसेत्।।
न दूरे वाहयेत् क्षेत्रं न चैवात्यन्तिके तथा।
वाहयेन्न पथि क्षेत्रं वाहयन्दुःखभाग्भवेत्।।
क्षेत्रेष्वेवं वृतिं कुर्याद्यामुष्ट्रो नावलोकयेत्।

मृगादिप्रतिबन्धनम्, क्षेत्रवृतिमानम्, क्षेत्ररक्षणं राजकर्तव्यम्, कर्षणयोग्या भूमयः

न लङ्घयेत्पशुर्नाश्वो न भिन्द्याद्यां च शूकरः।
बन्धाश्च यत्नतः कार्या मृगादित्रासनाय च।।
अत्राप्युपद्रवं राजा तस्करादिसमुद्भवम्।
संरक्षेत्सर्वतो यत्नाद्यस्माद्गृहणात्यसौ करान्।।
कृषिकृन्मानवस्त्वेवं मत्वा धर्मं कृषेद्धराम्।
अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम्।।
निम्नां हि वाहयेद्भूमिं यत्र विश्रमते जलम्।
वाहयेत्तु जलाभ्यर्णमवृष्टौ सेकसंभवः।।

आनुगुण्यानुरोधेन विशिष्टभूमीनां वाप्यधान्यानां च संकलनम्

शारद्यमुच्चकैर्भूमौ कङ्ग्वाद्यं वापयेद्धली।
अधित्यकासु कार्पासं वदन्त्यन्यत्र हैमकम्।।
वासन्तं ग्रीष्मकालीयं वाप्यं स्निग्धेषु तद्विदा।
केदारेषु तथा शालीञ्जलोपान्तेषु चेक्षवः।।
वृन्ताकशाकमूलानि कन्दानि च जलान्तिके।
वृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान्।।
गोधूमाश्च मसूराश्च खल्याः खलकुशास्तथा।
समस्निग्धेषु वाप्याश्च भूमिजीवान्विजानता।।
तिला बहुविधाश्चोप्या अतसीशणमेव च।
समस्निग्धेषु वाप्यानि धान्यान्यन्यानि योगतः।।
कुलत्था मुद्गमाषाश्च राजमाषादिकास्तथा।
वाप्या भूमिविशेषे तु भूमिजीवं विजानता।।

(१) बृपसं. ५।१२६-१२७.
(२) बृपसं. ५।१२७-१४२.

स्वयमेव गोवृषचरणादिनिरीक्षणं गृहिणः कर्तव्यम्, कृषिवाणिज्यादिवृत्तीनां पौर्वापर्यम्, कृषिजन्यपापनिवृत्त्यर्थं खले धान्यदानम्, राजादिभ्यस्तत्तद्भागदानम्

मृदम्बुयोगजं सर्वं वापयेत्कृषिकृन्नरः।।
संपश्येच्चरतः सर्वान् गोवृषादीन् स्वयं गृही।
चिन्तयेत्सर्वमात्मीयं स्वयमेव कृषिं व्रजेत्।।
प्रथमं कृषिवाणिज्यं द्वितीयं पशुपोषणम्।
तृतीयं क्रीतविक्रीतं चतुर्थं राजसेवनम्।।
[1]नखैर्विलिखने यस्याः पापमाहुर्मनीषिणः।
तस्याः सीरविदारेण किं न पापं क्षितेर्भवेत्।।
[2]तृणैकच्छेदमात्रेण प्रोच्यते क्षय आयुषः।
असंख्यकन्दनिर्नाशादसंख्यातं भवेदघम्।।
यद्वर्षे मत्सबन्धानां तथा संकरिणामपि।
अंहः कुक्कुटिकानां च तद्दिने कृषिकारिणाम्।।
वधकानां च यत् पापं यत् पापं मृगयोरपि।
कदर्याणां च यत् पापं तद्दिने कृषिकारिणाम्।।
[3]वर्णानां च गृहस्थानां कृषिवृत्त्युपजीविनाम्।
तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः।।
[4]द्वादशो नवमो वाऽपि सप्तमः पञ्चमोऽपि वा।
धान्यभागः प्रदातव्यो सीरिणा खलके ध्रुवम्।।
क्षेत्रिणः क्षेत्रस्वामिनः। बाल. १।११९ पृ. ३७१
[5]अश्मर्यव्यूढभूमौ च विंशांशी क्षेत्रभुग्भवेत्।
एकैकांशाय कर्षः स्याद्यावद्दशमसप्तमौ।।
[6]ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः।
सस्यभागः प्रदातव्यो यतस्तौ बलिभागिनौ।।

(१) बृपसं. ५।१४२-१४३; बाल. १।११९ पृ. ३७० लिखने (लेखने) पापमाहुर्म (कुर्युर्दोषं म) न (तु) क्रमेण बृहत्पराशरः.
(२) बृपसं. ५।१४३-१४५.
(३) बृपसं. ५।१४६; बाल. १।११९ पृ. ३७० द्वितीयचरणे (तत्पापं कृषिजीविनाम्) क्रमेण बृहत्पराशरः.
(४) बृपसं. ५।१४७; बाल. १।११९ पृ. ३७०-३७१ खलके (क्षेत्रिणो) क्रमेण बृहत्पराशरः.
(५) बृपसं. ५।१४८.
(६) बृपसं. ५।१४९-१५०.

ब्राह्मणस्य कृषौ न दानादिनियमः,
चातुर्वर्ण्योत्पत्तिः, कृषियज्ञप्रशंसा
कृषिदोषनिवारकत्वेन

[1]ब्राह्मणस्तु कृषिं कुर्वन्वाहयेदिच्छया धराम्।
न किंचित् कस्यचिद्दद्यात्स सर्वस्य प्रभुर्यतः।।
[2]ब्रह्मा वै ब्राह्मणं चाऽऽस्यात्प्रभुस्त्वसृजदादितः।
तद्रक्षणाय बाहुभ्यामसृजत्क्षत्रियानपि।।
पशुपाल्याशनोत्पत्त्या ऊरुभ्यां च तथा विशः।
द्विजदास्याय पण्याय पद्भ्यां शूद्रमकल्पयत्।।
यत्किंचिज्जगतीहात्र भूगेहाश्च( ?श्वग)जादिकम्।
स्वभावेन हि विप्राणां ब्रह्मा स्वयमकल्पयत्।।
[3]ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ।
न तयोरन्तरं किंचित्प्रजाधर्माभिरक्षणे।।
[4]तस्मान्न ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम्।
ग्रामेशस्य नृपस्यापि कियन्तमप्यसौ बलिम्।।
[5]अथान्यत् संप्रवक्ष्यामि कृषिकृच्छुद्धिकारणम्।
संशुद्धः कर्षको येन स्वर्गलोकमवाप्नुयात्।।
सर्वसत्त्वोपकाराय सर्वयज्ञोपसिद्धये।
नृपस्य कोशवृद्ध्यर्थं जायते कृषिकृन्नरः।।
कुर्यात्कृषिं प्रयत्नेन सर्वसत्त्वोपजीविनीम्।
पितृदेवमनुष्याणां पुष्टये स्यात् कृषीवलः।।
वयांसि चान्यसत्त्वानि क्षुत्तृष्णापीडिताः प्रजाः।
उपयुञ्जन्ति सस्यानि क्षेत्रजातानि नित्यशः।
पुष्ट्यर्थं मुष्टिमेकां वा ददत्पापं व्यपोहति।।
यस्य क्षेत्रस्य यावन्ति सस्यान्यदन्ति प्राणिनः।
तावन्तो( ? तो)ऽपि विमुच्यन्ते पातकात् कृषि-
कारकाः।।

कृताग्निकार्यदेहोऽपि ब्राह्मणोऽन्यतमोऽपि वा।
आददानः परक्षेत्रात् पथि गच्छन्न लिप्यते।।
क्षेत्री विमुच्यते दोषात् नियतं कृषिसंभवात्।
गृहीतं क्षेत्रिणो धान्यं निवेदयति वाऽण्वपि।।
अनिवेदिते तदर्धं स्यात् पातकं कर्षुकस्य च।
भावशुद्धावतो धर्मो ह्यनेन तद्विशोधयेत्।
मुष्टिं तु कल्पयन्धान्यं सर्वपापं व्यपोहति।।
यत्किंचिदर्थिने दद्याद्भिक्षामात्रं च भिक्षवे।
अन्नं सुसंस्कृतं वाऽपि तेन सीरी विशुद्ध्यति।।
सीतायज्ञं च यः कुर्यात् सिद्धसस्ये खलागते।
अनन्तकृतपापोऽपि मुक्तो भवति कर्षुकः।।

द्विजातिकर्तृकः खलयज्ञः, खलरक्षणम्,
अर्थिभ्यो दानम्, खलयज्ञान्ते
गृहेऽभ्युदयश्राद्धम्

खलयज्ञं प्रवक्ष्यामि तत्कुर्वाणा द्विजातयः।
विमुक्ताः सर्वपापेभ्यः स्वर्गौकस्त्वमवाप्नुयुः।।
चतुर्दिक्षु खले कुर्यात्प्राच्यामतिघनावृतिम्।
सेकद्वारं पिधानं च विदध्याच्चैव सर्वतः।।
खरोष्ट्राजोरणांस्तत्र विशतस्तु निवारयेत्।
श्वशूकरशृगालादिकाकोलूककपोतकान्।।
त्रिसंध्यं प्रोक्षणं कुर्यादानीताभ्युक्षणाम्बुभिः।
रक्षां च भस्मना कुर्याज्जलधाराभिरक्षणम्।।
त्रिसंध्यमर्चयेत्सीतां पाराशरमृषिं स्मरन्।
प्रेतभूतादिनामानि न वदेच्च तदग्रतः।।
सूतिकागृहवत्तत्र कर्तव्यं परिरक्षणम्।
हरन्त्यरक्षितं यस्माद्रक्षांसि सर्वमेव हि।।
प्रशस्तदिनपूर्वाह्णे नापराह्णे न संध्ययोः।
धान्योन्मानं सदा कुर्यात् सीतापूजनपूर्वकम्।।
यजेत खलभिक्षाभिः काले रोहिण एव हि।
भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम्।।
खलयज्ञे दक्षिणैषा ब्रह्मणा निर्मिता पुरा।
भागधेयमयीं कृत्वा तां गृह्णन्त्वी( ? न्त्वि)ह
मामिकाम्।।
शतक्रत्वादयो देवाः पितरः सोमपादयः।
सनकादिमनुष्याश्च ये चान्ये दक्षिणाशनाः।
एतानुद्दिश्य विप्रेभ्यो प्रदद्यात् प्रथमं हली।।

---

(१) **बृपसं.** ५।१५०-१५१; **बाल.** १।११९ पृ. ३७१ क्रमेण बृहत्पराशरः.

(२) **बृपसं.** ५।१५१-१५४.

(३) **बृपसं.** ५।१५४-१५५; **बाल.** १।११९ पृ. ३७१ न तयो (नैतयो) क्षणे (क्षणात्).

(४) **बृपसं.** ५।१५५-१५६; **बाल.** १।११९ पृ. ३७१ कियन्त (क्रियता) क्रमेण बृहत्पराशरः.

(५) **बृपसं.** ५।१५६-१९५.

**विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च।**
**पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्॥**
**अन्येषामर्थिनां पश्चात्कारुकाणां ततः परम्।**
**दीनानामप्यनाथानां कुष्ठिनां कुशरीरिणाम्।**
**क्लीबान्धबधिरादीनां सर्वेषामपि दीयते।**
**वर्णानां पतितानां च ददद्भुक्ता( ? ता)नि तर्पयेत्॥**
**चाण्डालांश्च श्वपाकांश्च प्रीणात्युच्चावचांस्तथा।**
**ये केचिदागतास्तत्र पूज्यास्तेऽतिथिवद्द्विजाः॥**
**स्तोकशः सीरिभिः सर्वैर्वर्णिभिर्गृहमेधिभिः।**
**दत्त्वा सूनृतया वाचा क्रमेणाथ विसर्जयेत्॥**
**तत्कृत्वा स्वगृहं गत्वा श्राद्धमाभ्युदयं चरेत्।**
**शरद्धेमन्तवासन्तनवान्नैः श्राद्धमाचरेत्।**
**नोऽदत्त्वाऽन्नं तदश्नीयादश्नंश्चेदघमश्नुते॥**
**कृषावुत्पाद्य धान्यानि खलयज्ञं समाप्य च।**
**सर्वसत्त्वहिते युक्त इहामुत्र सुखी भवेत्॥**

कृषिप्रशंसा, कृष्यादिदोषहरं
दानं तत्प्रमाणं च

**कृषेरन्यत्र नो धर्मो न लाभः कृषितोऽन्यतः।**
**सुखं न कृषितोऽन्यत्र यदि धर्मेण वर्तते॥**
**अवस्त्रत्वं निरन्नत्वं कृषितो नैव जायते।**
**अनातिथ्यं च दुःखित्वं गोमतो न कदाचन॥**
**निर्धनत्वमसत्यत्वं विद्यायुक्तस्य कर्हिचित्।**
**अस्थानित्वमभाग्यत्वं न सुशीलस्य कर्हिचित्॥**
**वदन्ति मुनयः केचित् कृष्यादीनां विशुद्धये।**
**लाभस्यांशप्रदानं च सर्वेषां शुद्धिकृद्भवेत्॥**
**प्रतिग्रहात् चतुर्थांशं वणिग्लाभात् तृतीयकम्।**
**कृषितो विंशतिं चैव ददतो नास्ति पातकम्॥**
**राज्ञो दत्त्वा च षड्भागं देवतानां च विंशकम्।**
**त्रयस्त्रिंशं च विप्राणां कृषिकर्मा न लिप्यते॥**
**कृष्या यथोत्पाद्य यवादिकानि**
**धान्यानि भूयांसि मखान्विधाय।**
**मुक्तो गृहस्थोऽपि पराशरः प्राक्**
**तस्या मया कश्चिदवादि शेषः॥**
**देवा मनुष्याः पितरश्च सर्वे**
**साध्याश्च यक्षाश्च सकिन्नराश्च।**
**गावो द्विजेन्द्राः सह सर्वसत्त्वैः**
**कृष्यन्नतृप्तानि मनाक् करोति (?)॥**
**यश्चैतदालोच्य कृषिं विदध्या-**
**ल्लिप्येन्न पापेन स भूभवेन।**
**सीरेण तस्यातिविदारिताऽपि**
**स्याद्भूतधात्री वरदानदात्री॥**
**षट्कर्माणि कृषिं ये तु कुर्युर्ज्ञात्वा विधिं द्विजाः।**
**तेऽमरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः।**
**षट्कर्मभिः कृषिः प्रोक्ता द्विजानां गृहमेधिनाम्॥**

अत्यन्तापदि सर्वतः प्रतिग्रहानुमतिः, अप्रत्या-
ख्येयानि वस्तूनि, दातृप्रतिग्रहीतृ-
गुणदोषाः

**[1]प्रोक्तप्रतिग्रहाभावे प्राप्तायां बृहदापदि।**
**विप्रोऽश्नन्प्रतिगृह्णन्वा यतस्ततोऽपि नाघभाक्॥**
**गुर्वादिपोष्यवर्गार्थं देवाद्यर्थं च सर्वतः।**
**प्रत्याददद्याद्द्विजाग्र्यस्तु भृत्यर्थमात्मनोऽपि च॥**
**दधिक्षीराज्यमांसानि गन्धपुष्पाम्बुमत्स्यकान्।**
**शय्यासनाशनं शाकं प्रत्याख्येयं न कर्हिचित्॥**
**अपि दुष्कृतकर्मभ्यः समादद्यादयाचितम्।**
**पतितादिस्तदन्येभ्यः प्रतिग्राह्यमसंशयम्( ?)॥**
**शक्तः प्रतिग्रहीतुं यो वेदवृत्तस्तु संवृतम्।**
**दीयमानं न गृह्णाति स्वर्गस्तस्याल्पकं फलम्॥**
**प्रतिग्रहमृणं वाऽपि याचितं यो न यच्छति।**
**तत्कोटिगुणग्रस्तोऽसौ मृतो दासत्वमृच्छति॥**
**दाता च न स्मरेद्दानं प्रतिग्राही न याचते।**
**उभौ तौ नरकं यातौ दाता चापि प्रतिग्रही॥**
**अपात्रस्य हि यद्दत्तं दानं स्वल्पमपि द्विजाः।**
**ग्रहीता तत्क्षणाद्याति भस्मत्वं चाप्यवारितः॥**
**वदन्ति मुनयः केचिद्दानप्रतिग्रहौ प्रति।**
**प्रत्यक्षलिङ्गमेवेह दातृयाचकयोरतः॥**
**दातृहस्तो भवेदूर्ध्वं ग्रहीतुश्च भवेदधः।**
**दातृयाचकयोर्भेदो हस्ताभ्यामेव सूचितः॥**
**सून्यादीनां चतुर्णां च तथा निन्दितभूपतेः।**
**न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन्व्रजत्यधः॥**

---

(१) **बृपसं.** ६।२३६-२४७, २५५-२५७, २५९.

**दुष्टा दशगुणं पूर्वात् सूनिचक्र्यथ मद्यकृत्।**
**वेश्या निषिद्धनृपतिः प्रतिग्रहे परः क्रमात्॥**

विनिमयसंबन्धिविधानानि, द्विजातीनां तिलपीडननिषेधः, गर्हित-विक्रयनिषेधः

**रसा रसैः समा ग्राह्या देया अपि च नान्यथा।**
**न रसैर्लवणं ग्राह्यं समतो हीनतोऽपि वा॥**
**तिला अपि समा देया धान्यैरन्यैर्द्विजातिभिः।**
**प्रपीड्या नैव यन्त्रेषु ब्रूयुरेतन्मनीषिणः॥**
**तिलवत्सर्ववस्तूनि सस्नेहानि द्विजातिभिः।**
**अप्रपीड्यानि यन्त्रेषु ब्रूयुरेतन्मनीषिणः॥**
**न विक्रीणीत गर्हितान्॥**

भूम्यादिप्रतिग्राह्यवस्तुभेदप्रयुक्ताः प्रतिग्रहीतुः स्वस्वत्वापादकक्रियाभेदाः, प्रतिग्रहधर्मः तदनभिज्ञस्य प्रतिग्रहानधिकारश्च

**[१]भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणाम्।**
**करे गृह्य तथा कन्यां दासदास्यौ तथा द्विजः।**
**करं तु हृदि विन्यस्य धर्म्यो ज्ञेयः प्रतिग्रहः॥**
**[२]आरुह्य च गजस्योक्तः कर्णेऽश्वस्य सटासु च॥**
**तथा चैकशफानां च सर्वेषामविशेषतः॥**
**[३]प्रतिगृह्णीत गां शृङ्गे पुच्छे कृष्णाजिनं तथा।**
**कर्णेऽजां पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः॥**
**[४]प्रतिग्रहं तथोष्ट्रस्य आरुह्यैव तु पादुके।**
**ईषायां तु रथोऽक्षे वा छत्रं दण्डे विधारयेत्॥**
**[५]द्रुमाणामथ सर्वेषां मूले न्यस्तकरो भवेत्।**
**आयुधानि समादाय तथाऽऽमुच्य विभूषणम्॥**

(१) **बृपसं.** १०।३२६-३२७; **निप्र.** २।२९१ णाम् (णम्) चतुर्थचरणे (दासीदासौ तथैव च) धर्म्यो ज्ञेयः (धर्मो ह्येष) एतदाद्यष्टश्लोकानां वृद्धपराशर इति ऋषिनिर्देशः.

(२) **बृपसं.** १०।३२७-३२८; **निप्र.** २।२९१ च गज (तु गज) द्वितीयचरणे (कर्णे चाश्वस्य कीर्तितः).

(३) **बृपसं.** १०।३२८-३२९ कर्णेऽजां (कर्णजाः); **निप्र.** २।२९१ शृङ्गे पुच्छे (पुच्छे शृङ्गे) ग्राह्याः पुच्छे वि (गृह्याः सर्ववि).

(४) **बृपसं.** १०।३२९-३३०; **निप्र.** २।२९१ व तु (कं तु) उत्तरार्धे (ईक्षायां तु रथो ग्राह्यश्छत्रदण्डे च धारयेत्॥).

(५) **बृपसं.** १०।३३०-३३१; **निप्र.** २।२९१ दाय (धाय).

आमुच्य अङ्गे धृत्वा।　　निप्र. २।२९२

**[१]वर्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम्।**
**अवतीर्य तु सर्वाणि जलस्थानानि यानि तु॥**
**[२]उपविश्य च शय्यायामुपस्पृश्य करेण वा।**
**द्रव्याण्यन्यानि चाऽऽदाय स्पृष्ट्वा वा ब्राह्मणः पठेत्॥**
**[३]कन्यादाने तु न पठेद्द्रव्याणि तु पृथक् पृथक्।**
**प्रतिग्रहाद्द्विजश्रेष्ठ तथैवान्तर्भवन्ति ते॥**
**[४]द्रव्याणामथ सर्वेषां द्रव्यसंश्रयणान्नरः।**
**वाचयेज्जलमादाय ॐकारेण प्रतिग्रहम्॥**
**प्रतिग्रहस्य यो धर्म्यं न जानाति द्विजो विधिम्।**
**स द्रव्यस्तेयसंयुक्तो नरकं प्रतिपद्यते॥**

अश्वदानप्रतिग्रहयोर्विशेषविधिः

**अथापि वक्ष्यामि विधेर्विशेषान्**
**वाजिप्रदाने च प्रतिग्रहे च।**
**दातृग्रहीत्रोरपि येन पुण्यं**
**स्वर्गाय जायेत शृणुध्वमेतत्॥**
**गृह्णीत योऽश्वं विधिवद्द्विजेन्द्राः**
**कुर्यादसौ पञ्चदिनानि पूर्वम्।**
**पञ्चोपचारैरुत विष्णुपूजां**
**कूष्माण्डमन्त्रैर्घृतदुग्धहोमम्॥**
**यद्ग्राम इत्यादि मरुत्वतीयं**
**सोङ्कारभूरादिभिरन्वितं च।**
**प्रत्येकमष्टौ जुहुयाद्द्विजाग्र्यः**
**सौर्येण मन्त्रेण च तद्वदष्टौ॥**
**षष्ठ्या प्रयुक्तं त्रिशतं जुहोति**
**कुर्याच्च गायत्रिजपं सहस्रम्।**
**पश्चात्स गृह्णन् तुरगं द्विजाग्र्य-**
**स्तथा स्वमात्मानमजं नयेत॥**

(१) **बृपसं.** १०।३३१-३३२ वर्मध्वजौ त (धर्मध्वजस्त); **निप्र.** २।२९१ तु स (च स) यानि तु (चैव हि).

(२) **बृपसं.** १०।३३२-३३३ यामुपस्पृश्य (यां स्पर्शयित्वा); **निप्र.** २।२९१ च (तु) नि चा (न्यथा).

(३) **बृपसं.** १०।३३३-३३४; **निप्र.** २।२९१ पू.

(४) **बृपसं.** १०।३३४-३४१.

दाताऽपि चैतद्व्रतमाविदध्या-
दृद्विजाग्र्यवत्प्राक्तनपापशुद्ध्यै।
द्वावप्यमू सूर्यजनं लभेते
सर्वत्र पूज्यौ द्विजवृन्दमध्ये।।
अश्वप्रतिग्रहविधिं च प्रतिग्रहं च
जानाति योऽश्वस्य पुराणगाथाः।
स एव धन्यः स च पूजनीयः
इहैव लोके द्विजदेवमान्यः।।

## अत्रिः

चातुर्वर्ण्यवृत्तयः, परवृत्तिनिषेधः, ब्राह्मणस्याविक्रेयाणि, ब्राह्मणस्य भिक्षाधिकारनिमित्तम्

[1]कर्म विप्रस्य यजनं दानमध्ययनं तपः।
प्रतिग्रहोऽध्यापनं च याजनं चेति वृत्तयः।।
क्षत्रियस्यापि यजनं दानमध्ययनं तपः।
शस्त्रोपजीवनं भूतरक्षणं चेति वृत्तयः।।
दानमध्ययनं वार्ता यजनं चेति वै विशः।
शूद्रस्य वार्ता शुश्रूषा द्विजानां कारुकर्म च।।
मयैष धर्मोऽभिहितः संस्थिता यत्र वर्णिनः।
बहुमानमिह प्राप्य प्रयान्ति परमां गतिम्।।
आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते।
परधर्मो भवेत्त्याज्यः सुरूपपरदारवत्।।
प्रतिग्रहोऽध्यापनं च तथाऽविक्रेयविक्रयः।
याज्यं चतुर्भिरप्येतैः क्षत्रविट्पतनं स्मृतम्।।
सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्।।
अव्रताश्चानधीयाना यत्र भैक्षचरा द्विजाः।
तं ग्रामं दण्डयेद्राजा चौरभक्षप्रदो हि सः।।

ब्राह्मणप्रशंसा, प्रतिग्रहनिन्दा तद्दोषशमनं च, अनापदि सिद्धान्नभिक्षणे प्रायश्चित्तम्

ब्राह्मणान्वेदविदुषः सर्वशास्त्रविशारदान्।
तत्र वर्षति पर्जन्यो यत्रैतान्पूजयेन्नृपः।।
त्रयो लोकास्त्रयो वेदा आश्रमाश्च त्रयोऽग्नयः।
एतेषां रक्षणार्थाय संसृष्टा ब्राह्मणाः पुरा।।
पावका इव दीप्यन्ते जपहोमैर्द्विजोत्तमाः।
प्रतिग्रहेण नश्यन्ति वारिणा इव पावकाः।।
तान्प्रतिग्रहजान्दोषान्प्राणायामैर्द्विजोत्तमाः।
उत्सादयन्ति विद्वांसो वायुर्मेघानिवाम्बरे।।
अनापदि चरेद्यस्तु सिद्धं भैक्षं गृहे वसन्।
दशरात्रं पिबेद्ब्रह्मपस्तु त्र्यहमेव च।।
गोमूत्रेण तु संमिश्रं यावकं घृतपाचितम्।
एतद्ब्रह्ममिति प्रोक्तं भगवानत्रिरब्रवीत्।।

हलवाहकवृषभसंख्याः फलकालसहिताः

अष्टागवं धर्महलं षड्गवं व्यावहारिकम्।
चतुर्गवं नृशंसानां द्विगवं वध्यते सह।।
द्विगवं वाहयेत्पादं मध्याह्ने तु चतुर्गवम्।
षड्गवं तु त्रिपादोक्तं पूर्णाहस्त्वष्टभिः स्मृतः।।

विप्राणां दश भेदाः सलक्षणाः, ब्राह्मणप्रशंसा

देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः।
पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः।।
संध्यां स्नानं जपं होमं देवतानित्यपूजनम्।
अतिथिं वैश्वदेवं च देवब्राह्मण उच्यते।।
शाके पत्रे फले मूले वनवासे सदा रतः।
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते।।
वेदान्तं पठते नित्यं सर्वसङ्गं परित्यजेत्।
सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते।।
अस्त्राहताश्च धन्वानः सङ्ग्रामे सर्वसंमुखे।
आरम्भे निर्जिता येन स विप्रः क्षत्र उच्यते।।
कृषिकर्मरतो यश्च गवां च प्रतिपालकः।
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते।।
लाक्षालवणसंमिश्रं कुसुम्भं क्षीरसर्पिषः।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते।।

---

(१) अत्रिसं. १३-१६, १८, २०-२२, २४-२५, १४४-१४६, १६३-१६४, २२२-२२३, ३७३-३८३.

**चौरश्च तस्करश्चैव सूचको दंशकस्तथा।**
**मत्स्यमांसे सदा लुब्धो विप्रो निषाद उच्यते।।**
**ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः( ? वर्जितः)।**
**तेनैव स च पापेन विप्रः पशुरुदाहृतः।।**
**वापीकूपतडागानामारामस्य सरःसु च।**
**निःशङ्कं रोधकश्चैव स विप्रो म्लेच्छ उच्यते।।**
**क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः।**
**निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते।।**
[१]**याजनाध्यापनाद्यौनात्तथैवासत्प्रतिग्रहात्।**
**विप्रेषु न भवेद्दोषो ज्वलनार्कसमो द्विजः।।**

## सुमन्तुः

अभोज्यान्नेभ्योऽपि प्रतिग्राह्याणि वस्तूनि,
शूद्रयाजनदोषोपशमनम्,
अविक्रेयाणि

[२]**अभोज्यान्नानामपि पुष्पफलमूलशाकतृणकाष्ठधान्यानि क्षेत्रस्थान्यम्बु तडागे गोष्ठस्थं पयश्चाऽऽददतामदोषः।।**

क्षेत्रम् अत्रोत्पत्तिस्थानम्। § गृक. २४१

[३]**शूद्रयाजकः सर्वद्रव्यपरित्यागात्पूतो भवति।।**
+[४]**नित्यं भूमिव्रीहियवाजाव्यश्वर्षभधेन्वनडुहश्चैके।।**

## जाबालिः

यतिहस्तगतद्रव्यप्रतिग्रह-
निषेधः

[५]**यतिहस्तगतं द्रव्यं गृह्णीयाज्ज्ञानतो यदि।**
**अधः स नयते मूढः कुलानामेकविंशतिम्।।**

§ निप्र. गृकवत्।
+ प्रकरणात् एतान्यविक्रेयाणि।
(१) **अत्रिस्मृ.** ३।६.
(२) **गृक.** २४१; **गृर.** ४६२ गोष्ठस्थं पयश्चा (गोष्ठं च पय आ); **निप्र.** २।२९८ फलमूल (मूलफल) (अम्बु तडागे०).
(३) **स्मृच.** २।४६२; **पमा.** १।१६३ सर्व (शूद्र); **आपा.** १११.
(४) **मिता.** ३।३६-३८.
(५) **मुक्ता.** ५८; **यसं.** १२८ जाबालः; **आन.** ६२९.

## पैठीनसिः

धर्माविरुद्धवृत्त्या जीवनम्,
अविक्रेयाणि

[१]**अथ गृहस्थधर्मांश्चरिष्यन्नलोपेन धर्मस्य वृत्तिमुपाददीत।।**
[२]**भोजनाभ्यञ्जनादानाद्यदन्यत्कुरुते तिलैः।**
**कृमिर्भूत्वा स विष्ठायां पितृभिः सह मज्जति।।**
[३]**विद्यापूर्तमिष्टं गावः शङ्खश्चोर्णा चेत्यविक्रेयाणि।।**

ब्राह्मणक्षत्रियविषये वार्धुष्यनिन्दा, वार्धुष्यलक्षणम्,
पापीयसे वार्धुष्यदानस्यानुमतिः,
क्षेत्रकर्षणविधानम्

[४]**वार्धुष्यं परिहरेत्। अथाप्युदाहरन्ति –**
**वार्धुषिर्भ्रूणहा चैव तुलायामवरोपितौ।**
**अतिष्ठद्भ्रूणहा कोट्यां वार्धुषिः समकम्पत।।**
**इति।।**
[५]**समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति।**
**स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः।।**

(१) समर्घम् अल्पफलम्। उद्धृत्य उद्धारं कृत्वा। महार्घं बहुफलम्। गृर. ४४४
(२) अर्थमिति शेषः। समर्घमत्र यथाप्रचरत् मूल्यम्, महार्घं शास्त्रानुमतलाभातिरिक्तमूल्यम्। बाल. १।११९ पृ. ३६८

[६]**लोके ब्राह्मणराजन्यौ वार्धुष्यं न दद्याताम्।।**

(१) **गृक.** १७१; **गृर.** ४१७; **निप्र.** २।२५४ (गृहस्थधर्मांश्चरिष्यन्न लोभेत येन धर्मस्य वृत्तिमुपाददीत).
(२) **गृक.** २०४ वसिष्ठमनुपैठीनसिबौधायनाः; **गृर.** ४३७ नादा (नाद्या) वशिष्ठादयः.
(३) **गृक.** २०३; **गृर.** ४३६ र्णा चेत्यवि (र्णाश्चेति वि); **मर.** १८२; **निप्र.** २।३१५ विद्यापूर्तमिष्टं (जिह्वापूर्तिमपुं).
(४) **गृक.** २१६ अतिष्ठ (आतिष्ठ); **गृर.** ४४५.
(५) **गृक.** २१४ वसिष्ठपैठीनसी; **गृर.** ४४४ नाम (ज्ञेयो), शेषस्थलादिनिर्देशा वसिष्ठवचने द्रष्टव्याः.
(६) **गृर.** ४४४ वार्धुष्यं(वार्धुषिकं); **बाल.** १।११९ पृ. ३६८ (लोके०) वसिष्ठः पैठीनसिश्च.

**अथाप्युदाहरन्ति –**

**[1]कामं तु पापीयसे दद्याद्दश इत्येके। न ज्यायसीं वृद्धिमुपाददीत। न त्वेव कनीयसीम्।।**

(१) दशपणसंख्यया एकैकस्मै पापीयसे दद्यादित्यर्थः। शास्त्रविहितकलापेक्षया वृद्धेर्न्यूनत्वमधिकत्वं च ज्ञेयम्। गृक. २१७

(२) कनीयस्या वृद्धेर्निषिद्धत्वेनोपादानमावश्यककर्माननुकूलायाः। † गृर. ४४६

‡ **[2]क्षेत्रं साण्डाभ्यामनडुद्भ्यां कृषीत निदाघे च यः। प्रयच्छंस्तिलान्वपेदित्यरिवल्लरी लाङ्गलमिति विज्ञायते। परीरो अस्येन्दु। सुशेवं कल्याणनासिकं सोमो बाह्यस्य प्राप्नोतीति मोमेपित्सतु?। तदुत्कृषति गां वा (? जाविवांश्वज) प्राप्नोति। तस्मात् कृषति तिलान्वपेदिति अन्नार्थं वचनम्।।**

परीरवल्लाङ्गलमित्यादिकमर्थवादः। कर्षणः सैव अयाज्ययाजनप्रतिषिद्धप्रतिग्रहाभ्यां कृषिस्तूत्पन्नम्। गृक. १९२

## अङ्गिराः

शूद्रान्नप्रतिग्रहनिषेधः तद्दोषशमनं च, अन्नावघ्राणादेरन्नभोगसमत्वम्, मृतकसूतकयोरामधान्यग्रहणानुमतिः, त्रैवर्णिकेभ्यो ग्राह्यस्य धान्यस्य विवेकः

**[3]आहिताग्निस्तु यो विप्रः शूद्रान्नं प्रतिगृह्य तु।**
**भोगात्तत्समतां याति तिर्यग्योनिं च गच्छति।।**
**[1]यस्तु वेदमधीयानो भुङ्क्ते शूद्रान्नमेव च।**
**शूद्रे वेदफलं याति शूद्रत्वं च स गच्छति।।**
**[2]घ्रात्वा पीत्वा निरीक्ष्याथ स्पृष्ट्वा च प्रतिगृह्य च।**
**प्रशस्य स्वस्ति चेत्युक्त्वा भोक्ता एव न संशयः।।**
**[3]एते दोषा भवन्तीह शूद्रान्नस्य परिग्रहे।**
**अनुग्रहं तु वक्ष्यामि मनुना चोदितं पुरा।।**

अनुग्रहप्रवृत्तस्य वक्ष्यमाणगुर्वाद्यनुग्रहप्रवृत्तस्य। ‡ गृक. २३७

**[4]आमं वा यदि वा पक्वं शूद्रान्नमुपसेवते।**
**किल्बिषं भुञ्जते भोक्ता यश्च विप्रः पुरोहितः।।**
**[5]गुरुवह्न्यतिथीनां तु भृत्यानां तु विशेषतः।**
**प्रतिगृह्य प्रदातव्यं न भुञ्जीत स्वयं ततः।।**
**[6]शूद्रान्नरसपुष्टस्य चाधीयानस्य नित्यशः।**
**जपतो जुह्वतो वाऽपि गतिरूर्ध्वं न विद्यते।।**

---

† शेषं गृकवत्।

‡ इदं वचनं व्याख्यानं चाऽऽदर्शपुस्तके यथा मुद्रितं तथैवात्र संगृहीतम्। अस्मदादर्शपुस्तकसंपादकैस्तदीयटिप्पण्यां नागपूरकोशसंज्ञिततदीयान्यतमादर्शस्थितम् 'परवल्लाङ्लमिति विज्ञायते। परीरो मत्स्येन्द्रः। स्वमेव कल्याणनासिकं सोमो राज्यस्य प्राप्तौ प्रतीतसोमेऽपि सैव तत्त्वकृषिमिति गां च अजाव्यं च प्राप्नोति। तस्मात्कृषति तिलान्वपेदिति यत्नार्थं वचनम्।' इति पाठमुद्धृत्य 'इदं पैठीनसिवचनं तद्व्याख्यानं च सर्वथाऽशुद्धप्रायमेव मातृकासूपलभ्यते। अतो यथोपलम्भमेव मुद्रितम्।' इत्युक्तम्।

(१) **गृक.** २१७; **स्मृच.** २।४७२ (कामं तु पापीयसे दद्यान्न ज्यायसीं वृद्धिमुपाददीत) एतावदेव; **गृर.** ४४६.

(२) **गृक.** १९२.

(३) **उत्तराङ्गिरस्मृ.** ८।१ द्वितीयचरणे (प्रतिगृह्णति शूद्रतः) भोगात्तत्स (भोक्तॄणां स); **पमा.** २।३०२

‡ गृर., निप्र., बाल. गृकवत्।

(१) **उत्तराङ्गिरस्मृ.** ८।२; **पमा.** २।३०२ द्वितीयचरणे (शूद्रान्नमुपभुञ्जति) च स (चापि).

(२) **उत्तराङ्गिरस्मृ.** ८।३; **पमा.** २।३०३ प्रथमचरणे (आघ्रात्वा चोष्मणा चैव) क्ता एव (क्तैव तु).

(३) **उत्तराङ्गिरस्मृ.** ८।४; **गृक.** २३६-२३७ न्तीह (न्त्यत्र) न्नस्य (देव) ग्रहे (ग्रहैः) उत्तरार्धे (अनुग्रहप्रवृत्तस्य न दोषोऽङ्गिरसो मतम्।।) श्लोकार्धे 'गुरु' इति श्लोकव्यवधानेन; **गृर.** ४५९ न्तीह (न्त्यत्र) न्नस्य (देव) उत्तरार्धं गृकवत्; **पमा.** २।३०३; **मर.** १७२ न्तीह (न्त्यत्र) न्नस्य (देव) उत्तरार्धे (अनुग्रहप्रवृत्तस्य न दोषोऽङ्गिरसोस्मृतः); **निप्र.** २।२९९ न्तीह (न्त्यत्र) न्नस्य (देव) उत्तरार्धे (अनुगृह्य प्रवृत्तस्य न दोषोऽङ्गिरसो मतम्) पूर्वोत्तरार्धे बहुग्रन्थन्यवधानेन; **बाल.** १।१६० पृ. ४२५ न्तीह (न्त्यत्र) न्नस्य (स्यैव) उत्तरार्धं गृकवत्.

(४) **उत्तराङ्गिरस्मृ.** ८।५; **पमा.** २।३०३ सेवते (साधयेत्) भुञ्ज (भज).

(५) **उत्तराङ्गिरस्मृ.** ८।६; **गृक.** २३६ (गुर्वर्थमतिथीनां च भृत्यानां च विशेषतः। शूद्रान्नं प्रतिगृह्णीयान्न तु भुङ्क्ते स्वयं ततः।।); **पमा.** २।३०३ गुरवह्न्य (गुर्वर्थं ह्य) भुञ्जीत (तु तृप्येत्); **निप्र.** २।२९९ गृकवत्, 'वर्थ' इत्यस्य स्थाने 'र्वीय' इति विशेषः; **बाल.** १।१६० पृ. ४२५.

(६) **उत्तराङ्गिरस्मृ.** ८।७; **पमा.** २।३०३ चाधी (ह्यध्वी) रूर्ध्वं (रूर्ध्वा).

**[१]षण्मासानथ यो भुङ्क्ते शूद्रस्यान्नं निरन्तरम्।**
**जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते।।**
**[२]अकृत्वैव निवृत्तिं यः शूद्रान्नान्म्रियते द्विजः।**
**आहिताग्निर्विशेषेण स शूद्रगतिभाग्भवेत्।।**
**[३]संस्कारैः शुध्यति ह्यामं धान्यं तेन शुचि स्मृतम्।**
**तस्मादामं ग्रहीतव्यं मृतसूतान्तरेष्वपि।।**
**[४]पक्वान्नवर्जं विप्रेभ्यो गोधान्यं क्षत्रियादपि।**
**वैश्यात्तु सर्वधान्यानि शूद्राद्धान्यं न किंचन।।**

(१) संस्कारैः खण्डदलनादिभिः। पणः, 'ताम्रकः कार्षिकः पणः'। एतच्च सर्वमापद्गतस्य बोद्धव्यम्, शूद्रस्य सर्वथाऽप्रतिग्राह्यधनस्य (आ) शौचे पणग्रहणाभ्यनुज्ञानात्।
\+ गृक. २३७

(२) एतेन एते द्रव्यविशेषा ग्राह्या मृतकेऽपि। यत्तु कल्पतरौ 'एतत्सर्वमापद्गतस्य बोद्धव्यम्, शूद्रस्य सर्वथा अप्रतिग्राह्यधनस्याऽऽशौचे पणग्रहणाभ्यनुज्ञानात्' इति, तत्र शूद्रस्याप्रतिग्राह्यधनत्वेन तद्विषयमात्रमापद्विषयम्। ब्राह्मणादीनां तु तथात्वाभावेन तद्विषये अनापद्यपि मृतककाले द्रव्यविशेषप्रतिग्रहे अनुज्ञायाः किं बाधकम्?। २।२७९

(३) संस्कारैः त(? प्रो)क्षणादिभिः। निप्र. २।३००

धान्यपयोदध्यादीनां सर्वतः स्थानविशेषेषु च ग्राह्यत्वे विधानानि

**[१]अनूदकं तु तत्सर्वं गन्धमाल्यविवर्जितम्।**
**यथा वर्णेषु यद्दत्तं प्रतिगृह्णीत वै द्विजः।।**
**[२]यत्तु क्षेत्रगतं धान्यं खले वाऽथ गृहाद्बहिः।**
**सार्वकालं ग्रहीतव्यं शूद्रादप्यङ्गिरोमतम्।।**

सर्वकालम् अनापत्तावपि। निप्र. २।३००

**[३]यत्तु राशीकृतं धान्यं खले क्षेत्रेऽथ वा भवेत्।**
**शूद्रादपि ग्रहीतव्यमित्याङ्गिरसभाषितम्।।**

सर्वकालं सूतकादावपि सर्ववर्णानां चेत्यर्थः।
गृक. २४४

**[४]खलक्षेत्रगतं धान्यं वापीकूपगतं जलम्।**
**अभोज्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः।।**

---

\+ गृर. कल्पतरोरनुवादः। बाल. गृकवत्।

(१) **उत्तराङ्गिस्मृ.** ८।८; **गृक.** २३६ पूर्वार्धे (षण्मासान्यो द्विजो भुङ्क्ते शूद्रान्नं च विगर्हितम्।) वन्नेव (वेत्स तु); **गृर.** ४५९ पूर्वार्धे (षण्मासान्यो द्विजो भुङ्क्ते शूद्रान्नं ज्ञानदुर्बलः।) वन्नेव (वन् स तु); **पमा.** २।३०३; **मर.** १७२ पूर्वार्धे (षण्मासान्यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम्।) वन्नेव (वन् स तु); **निप्र.** २।२९८-२९९ पूर्वार्धे (षण्मासान्यो द्विजो भुङ्क्ते शूद्रस्यान्नं जुगुप्सितम्।) वन्नेव (वन् स च); **बाल.** १।१६० पृ. ४२५ जीवन्नेव (स तु जीवन्) शेषं गृकवत्.

(२) **उत्तराङ्गिस्मृ.** ८।९; **पमा.** २।३०३.

(३) **गृक.** २३७; **गृर.** ४५९; **निप्र.** २।२७९ सूता (सूत्य) : २।३०० दामं (धान्यं); **बाल.** १।२१६ पृ. ४६९ ग्रहीतव्यं ( न हातव्यं).

(४) **उत्तराङ्गिस्मृ.** ८।१०; **गृक.** २३७ (पक्वान्नं वर्जयेद्विप्रो गोधान्यं क्षत्रिये तथा। वैश्येभ्यः सर्वधान्यानि शूद्राद्ग्राह्याः पणास्तथा।।) : २४३ वर्जं (वर्ज्यं) द्धान्यं (द्ग्राह्यं); **गृर.** ४६०. (पक्वान्नवर्जं विप्रेभ्यो गौर्धान्यं क्षत्रियात्तथा। वैश्येभ्यः सर्वधान्यानि शूद्राद्ग्राह्यास्तथा पणाः।) : ४६४ गोधान्यं (हविर्वा) धान्यं (ग्राह्यं) अङ्गिरोबौधायनौ; **निप्र.** २।२७९ (पक्वान्नवर्जं विप्रेभ्यो गौर्धान्यं क्षत्रियात्तथा। वैश्येभ्यः सर्वधान्यानि शूद्राद्ग्राह्याः पणा-स्तथा।।) : २।३०१ (पक्वान्नवर्जं विप्रेभ्यो गोधान्यं क्षत्रियात्तथा। वैश्येभ्यः सर्वधान्यानि श्राद्धाद्ग्राह्याः पणास्तथा।।); **बाल.** १।२१६ पृ. ४६९ (पक्वान्नं वर्जयेद्विप्रो गोधनं क्षत्रिये तथा।।) वैश्येभ्यः सर्वधान्यानि शूद्राद्ग्राह्याः पणास्तथा।। ४७० (पक्वान्नवर्जं विप्रेभ्यो गौर्धनं क्षत्रियादपि। वैश्यात्तु सर्वधान्यानि शूद्राद्ग्राह्यं न किंचन।।).

(१) **उत्तराङ्गिस्मृ.** ८।११.

(२) **उत्तराङ्गिस्मृ.** ८।१२; वाऽथ गृहाद्बहिः (वा कण एव वा) मतम् (ऽब्रवीत्); **गृक.** २४३ वाऽथ (वास) सार्व (सर्व) शूद्राद (शूद्रेभ्योऽ); **गृर.** ४६४ यत्तु (यच्च) सार्व (सर्व) शूद्राद (शूद्रेभ्योऽ), अङ्गिरोबौधायनौ; **निप्र.** २।३०० सार्व (सर्व) चतुर्थचरणे (सर्वेभ्योऽङ्गिरसो मतम्); **बाल.** १।२१६ पृ. ४७० यत्तु (यत्र) सार्व (सर्व) ग्रही (गृही) चतुर्थचरणे (शूद्रेभ्योऽप्यङ्गिरोमतम्), अङ्गिरा बौधायनश्च.

(३) **गृक.** २४४ खले क्षे (खलक्षे) उत्तरार्धे (सर्वकालं ग्रहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम्); **स्मृच.** २।४६६ गृह्णी (ग्रही); **गृर.** ४६४ यत्तु (तथा) शेषं गृकवत्, अङ्गिरोबौधायनौ; **पमा.** १।१८५ त्रेऽथ (त्रे तथा) भाषितम् (भाषणम्) शेषं स्मृचवत्; **मर.** १७२ अशुद्धः पाठः; **मुक्ता.** ५६ भाषितम् (भाषणम्); **आन.** ६२५ यत्तु (यच्च) शेषं मुक्तावत्.

(४) **गृक.** १६५ : २४३ अङ्गिरोबौधायनौ; **गृर.** १३० : ४६३ अङ्गिरोबौधायनौ; **निप्र.** २।३४१ जलम् (पयः); **बाल.** १।२१६ पृ. ४७० गतं धा (कृतं धा) यच्च गो (यद्यगो) अङ्गिरा बौधायनश्च.

अभोज्यात् शूद्रादेः। एतच्च धान्यादि यज्ञविच्छेदशङ्कायां तत्परिमाणपूरणायैव ग्राह्यम्। $ गृक. १६५

**[1]सत्पात्रे समनुज्ञातं दुग्धं यच्छुचिना भवेत्।**
**यथा चौषधिकृत्यं स्याद्दध्ना वा पयसाऽपि वा।**
**पात्रेभ्योऽपि तथा ग्राह्यं शूद्रेभ्यः प्राकृतादपि।।**
**[2]शूद्रवेश्मनि विप्राणां क्षीरं वा यदि वा दधि।**
**निवृत्तेन न पातव्यं शूद्रान्नसदृशं हि तत्।।**

निवृत्तेन प्रतिग्रहान्निवृत्तेन।

बाल. १।२१६ पृ. ४७०

**[3]अग्न्यगारे गवां गोष्ठे नदीविप्रगृहेषु च।**
**कूपस्थाने तथाऽरण्ये पेयं चैव पयो दधि।।**
**[4]आमं मांसं दधि घृतं धान्यं क्षीरमथौषधम्।**
**गुडो रसस्तथोदश्विद्भोज्यान्येतानि नित्यशः।।**

रसा लवणादयः। ‡ गृक. २४४

$ गृर. गृकवत्।

‡ बाल. गृकवत्।

(१) **उत्तराङ्गिरस्मृ.** ८।१३-१४; **गृक.** २४४ (सुपात्रे यत्तु विन्यस्तं दुग्धं तच्छुचि नित्यशः। पात्रान्तरगतं ग्राह्यं शूद्रात्स्वगृहमागतम्।।); **गृर.** ४६४ गृकवत् 'दुग्धं' इत्यस्य स्थाने 'सुखं' इति विशेषः; **निप्र.** २।३०० (स्वपात्रे यच्च निक्षिप्तं दुग्धं तच्छुचिरिष्यते। पात्रान्तरगतं ग्राह्यं शूद्रात्स्वगृहमागतम्।।); **बाल.** १।२१६ पृ. ४७० गृकवत्, 'सुपात्रे यत्तु' इत्यस्य स्थाने 'स्वपात्रे यच्च' इति विशेषः.

(२) **उत्तराङ्गिरस्मृ.** ८।१४-१५; **गृक.** २४४ विप्राणां (विप्रेण) उत्तरार्धे (निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्।।); **गृर.** ४६४ गृकवत्; **निप्र.** २।३०० विप्राणां (विप्रेण) उत्तरार्धे (निमित्तेनैव भोक्तव्यं शूद्रान्नं तदपि स्मृतम्।।); **बाल.** १।२१६ पृ. ४७० गृकवत्.

(३) **उत्तराङ्गिरस्मृ.** ८।१५-१६.

(४) **उत्तराङ्गिरस्मृ.** ८।१६-१७; **गृक.** २४४ (आमं मांसं मधु घृतं धानाः क्षीरमथौषधम्। गुडतक्ररसा ग्राह्या निवृत्तेनापि शूद्रतः।।); **गृर.** ४६४ गृकवत्; **मर.** १७४ (आमं मांसं मधु घृतं धाना क्षारमथौषधम्। गुडं तक्रं रसो ग्राह्यः निवृत्तेनापि शूद्रतः।।); **निप्र.** २।३०० (आमं मांसं दधि घृतं धाना क्षीरमथौषधम्। शुक्तक्रेयरसा ग्राह्या निवृत्तेनापि शूद्रतः।।); **बाल.** १।२१६ पृ. ४७० (आमं मांसं मधु घृतं धाना क्षीरमथौषधम्। गुडतक्ररसादीनि द्विजैर्ग्राह्याणि सर्वतः।।).

**[1]अशृतं चाऽऽरनालं च ताम्बूलं सक्तवस्तिलाः।**
**फलानि पिण्याकमथो ग्राह्यमौषधमेव च।**
**अप्रणोद्यानि मेध्यानि प्रतिग्राह्याणि नित्यशः।।**

(१) कम्बूकाः तण्डुलानां कणाः।

* गृक. २४४

(२) सर्वतः सर्ववर्णेभ्यः। कटुकाः तण्डुलानां कणाः।

गृर. ४६४

(३) सर्वतः सूतकादावपि सवर्णेभ्यश्च।

निप्र. २।३००

भिक्षाधिकारिणः

**[2]अनापदि चरेद्यस्तु सिद्धां भिक्षां गृहे वसन्।**
**दशरात्रं पिबेद्वज्रमापत्काले त्र्यहं द्विजः।।**

वज्रं घृतम्। गृर. ४१६

**[3]ब्रह्मचारी यतिश्चापि विद्यार्थी गुरुपोषकः।**
**अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः।।**
**[4]व्याधितस्य दरिद्रस्य कुटुम्बात्प्रच्युतस्य च।**
**अध्वानं वा प्रयातस्य भैक्ष्यचर्या विधीयते।।**

इदं व्याधितत्वादि सर्वप्रकारपाकासंभवोपलक्षणपरम्।

‡ गृक. २२४

* मर. गृकवत्।

‡ गृर. गृकवत्।

(१) **उत्तराङ्गिरस्मृ.** ८।१७-१८; **गृक.** २४४ (शाकमत्स्यमृणालानि कम्बूकाः सक्तवस्तिलाः। इक्षुः फलानि पिण्याकं प्रतिग्राह्याणि सर्वतः।।); **गृर.** ४६४ (शाकं च मत्स्यमूलानि कटुकाः शक्तवस्तिलाः। इक्षुः फलानि पिण्याकं प्रतिग्राह्याणि सर्वतः।।); **मर.** १७४ गृकवत्, 'कम्बूकाः' इत्यस्य स्थाने 'कणकाः' इति विशेषः; **निप्र.** २।३०० गृकवत्, 'कम्बूकाः' इत्यस्य स्थाने 'कन्दुकाः' इति विशेषः.

(२) **उत्तराङ्गिरस्मृ.** ९।६-७ (अनापत्सु चरेद्भैक्ष्यं सिद्धं वस्तु गृहे वसन्। दशरात्रं चरेद्वज्रमापत्सु च त्र्यहं चरेत्।।); **गृर.** ४१६.

(३) **उत्तराङ्गिरस्मृ.** ९।९.

(४) **उत्तराङ्गिरस्मृ.** ९।१०; **गृक.** २२४ यातस्य भैक्ष्य (पन्नस्य भिक्षा); **स्मृच.** २।४७५ यातस्य भैक्ष्यचर्या (वृत्तस्य भिक्षाचर्यं) : २।५८७ स्य दरिद्र (स्यार्थहीन) शेषं गृकवत्, पुराणे; **गृर.** ४५०; **निप.** ४५१ टुम्बात्प्र (टुम्बप्र) शेषं गृकवत्, (=); **निप्र.** २।३२९ दरिद्र (कदर्य) च्युतस्य च (च्यावितस्य) तृतीयपादे (अथानङ्गप्रचालस्य); **विपा.** ३।२।२५२ स्मृचवत्.

गोबन्धनरज्जौ हेयादेयविवेकः, औषध-
दानादिना गोरक्षणम्

[1]न नारिकेलेन न फालकेन
न मौञ्जिना नापि च वल्कलेन।
एतैश्च गावो न हि बन्धनीया
बद्ध्वा तु तिष्ठेत्परशुं प्रगृह्य।।
कुशकाशैस्तु बध्नीयादूर्ध्वं दक्षिणतोमुखम्।।
औषधं स्नेहमाहारं दद्याद्गोब्राह्मणे हितम्।।

ब्राह्मणप्रशंसा

[2]ब्राह्मणा एव च क्षेत्रं ब्राह्मणा एव दैवतम्।
ब्राह्मणानां प्रसादेन सूर्यो दिवि विराजते।।
न ब्राह्मणसमं क्षेत्रं न ब्राह्मणसमोऽनलः।
विधिर्न ब्राह्मणादूर्ध्वं न दैवं ब्राह्मणात्परम्।।
जपतां जुह्वतां चैव यच्छतां च सतामपि।
क्षेत्राग्नेस्तु सुसंभूताद्ब्राह्मणोऽद्य विशिष्यते।।
न स्कन्दते न व्यथते न विनश्यति कर्हिचित्।
वरिष्ठमग्निहोत्रेभ्यो ब्राह्मणस्य मुखे हुतम्।।
[3]देवतापितृभूतानां काचिद्भवति कस्यचित्।
ब्राह्मणे देवताः सर्वाः स च सर्वस्य देवता।।
[4]यो हि यां देवतामिच्छेदाराधयितुमव्ययम्।
सर्वोपायप्रयत्नेन तोषयेद्ब्राह्मणान् सदा।।
समस्तसंपत्समवाप्तिहेतवः
समुत्थितापत्कुलधूमकेतवः।
अपारसंसारसमुद्रसेतवः
पुनन्तु मां ब्राह्मणपादपांसवः।।

गुरुधर्माद्यर्थं शूद्रादपि धान्यादि-
प्रतिग्रहोऽनुमतः

[5]शूद्रान्नं प्रतिगृह्णीयान्न तु भुङ्क्ते स्वयं ततः।
अनुग्रहप्रवृत्तस्य न दोषोऽङ्गिरसो मतम्।।

(१) उत्तराङ्गिरस्मृ. १०।५-६, १४.

(२) उत्तराङ्गिरस्मृ. १२।१०-१३.

(३) उत्तराङ्गिरस्मृ. १२।१४; पमा. २।१०३ ब्राह्मणे (ब्राह्मणो) देवता (दैवतम्) उत्त.

(४) उत्तराङ्गिरस्मृ. १२।१५-१६.

(५) गृक. २३६-२३७.

अनुग्रहप्रवृत्तस्य वक्ष्यमाणगुर्वाद्यनुग्रहप्रवृत्तस्य।
गृक. २३७

+[1]विच्छिन्नेषु च पक्षेषु हविःष्वाग्रयणेषु च।
इष्टिं त्वविकृतां कुर्यात्सुकृतं च न लोपयेत्।।

(१) अविकृतामिति। बह्वन्नत्वादिविकाररहिताम्।
१६५

विच्छिन्नेषु च पक्षादिकरणकालेषु। तथा आग्रयणेष्विति। संपूर्णेष्टिसंपत्तिर्यावता भवति तावत्संपत्त्यर्थमभोज्यान्नादपि यथोक्तं धान्यादि प्रतिग्राह्यमित्यर्थः।
गृक. २४३-२४४

(२) विच्छिन्नेषु पक्षेषु पक्षान्तराश्रयणम्। शाकमेधादि-चतुष्टये अविकृतां पक्षादिविकारशून्याम्।
गृर. १३१

[2]प्रतिवर्णमिदं दृष्टं प्रतिग्राह्यं द्विजोत्तमैः।
तथापि च पयः पेयं द्विजेभ्योऽप्यङ्गिरोमतम्।।

पयः पानीयमत्र। गृक. २४४

## प्रचेताः

आग्नेयतीर्थेन प्रतिग्रहः, अत्यन्ता-
पद्यपि क्षत्रसेवैव ब्राह्मण-
स्यानुमता

[3]दक्षिणहस्तमध्ये ब्राह्मणस्याऽऽग्नेयं तीर्थम्। आग्नेयेन प्रतिगृह्णीयात्।।
[4]महदापद्गतो विप्रः क्षत्रसेवां समाश्रयेत्।
शूद्रसेवा न कर्तव्या प्राणैः कण्ठगतैरपि।।

सर्वासंभवे सेवामप्यनुजानाति प्रचेताः – 'महदा .... तैरपि।।'। शूद्रसेवायां प्रायश्चित्ताम्नानादत्यन्तापदि साऽपि कार्येत्येवं गम्यते। संम. ७८

+ अस्य शेषं व्याख्यानं बौधायनवचने द्रष्टव्यम्।

(१) गृक. १६५ पूर्वार्धे (विच्छिन्नेषु तु पक्षेषु हविषां श्रपणेषु च।) च न (तु न), २४३ शेषः स्थलादिनिर्देशः अस्मिन्नेव प्रकरणे अस्मिन्नेव बौधायनवचने द्रष्टव्यः।

(२) गृक. २४३ शेषः स्थलादिनिर्देशः अस्मिन्नेव प्रकरणे अस्मिन्नेव बौधायनवचने द्रष्टव्यः।

(३) आर्क. ७ यं ती (यती); पद्मी. ५.

(४) संम. ७८.

## व्याघ्रः

शूद्रेभ्यो व्यवस्थया उच्छिष्टा-
नुच्छिष्टान्नदानम्

**[१]उच्छिष्टमन्नं दातव्यं शूद्रायागृहमेधिने।**
**गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिने।।**

## गर्गः

कृषिकर्मणि बीजावापे
मुहूर्ताः

**[२]मूलादित्र्युत्तराश्चैव रोहिणी च तथैव च।**
**रेवतीपुष्यहस्ताश्च कृषिकर्मणि पूजिताः।।**
**[३]नवमी सस्यनाशाय चतुर्थी कीटसंभवा।**
**पापग्रहोदये मृत्युः सर्वं हन्ति चतुर्दशी।।**
**यदा चोत्पद्यते दोषो घृतं क्षीरं च दापयेत्।**
**तदा दोषा विनश्यन्ति शुभं चैव प्रयच्छति।।**

अत्र पादार्थकर्षण( ?) काले भूमेः सकाशात् दोष उत्पन्नः तदा कर्तव्यमाह गर्गः। आपा. १३७

**मेषलग्ने यशोहानिः कर्कटे सुफलं भवेत्।**
**सिंहे चापि विनाशाय तुलायां सस्यसंपदः।।**
**बुधक्षेत्रे फलं विन्द्यात् वृषभे सुफलं भवेत्।**
**वृश्चिके चाग्निदाहश्च धान्यवृद्धिर्धनुर्धरे।।**
**मृगे सर्वं शुभं विद्यात् कुम्भे चोरभयं भवेत्।**
**मीने सुभिक्षमाप्नोति कृष्यां लग्नफलं भवेत्।।**
**ततो घटोदकैः पूर्णैः शोधितैः पल्लवाङ्कुरैः।**
**प्राङ्मुखो जलं संग्राह्य इमं मन्त्रमुदीरयेत्।।**
**वसुंधरेति सीतेति पुष्पदेवी प्रसीदति ( ? देवि प्रसीद मे)।**
**नमोऽस्तु सुभगे नित्यं कृषिकर्म प्रसिध्यताम्।।**
**[४]पौर्णमासीत्रयोदश्यौ सप्तम्येकादशी तथा।**
**पञ्चमी च तृतीया च बीजकर्मसु पूजिताः।।**

(१) **मभा.** १०।५९; **गौमि.** १०।६१; **चमव्या.** ८०; **मुक्ता.** ६७ यागृ. (य गृ); **शूक.** ७० मनुच्छिष्टं (मन्नमेव).
(२) **आपा.** १३६.
(३) **आपा.** १३७.
(४) **आपा.** १४१.

**कौभ( ? ल)वे तैतिले चैव बालवे वणिजे तथा।**
**गरजे च बवे चैव बीजं तत्( ? तत्र) प्रयोजयेत्।।**
**चन्द्रो बृहस्पतिश्चैव बुधश्च भृगुरेव च।**
**एतेषां वासरे लग्ने बीजकर्म सुपूजितम्।।**
**त्रिषडायगताः पापाः शुभाः शेषेषु गर्हिताः।**
**सौम्या बन्ध्वर्थपुत्रस्त्रीभ्रातृधर्मायगाः शुभाः।।**
**अष्टमस्था ग्रहाः सर्वे शुक्रो नष्टोऽस्तभं गतः।**
**शुभाः षष्ठाष्टमे वर्ज्या बीजनिर्वपणे सदा।।**
**तिथिर्मुहूर्तं नक्षत्रं करणं शकुनं तथा।**
**पञ्चकल्याणसंह्येत (?) बीजकर्मणि पूजितम्।।**
**मधुराः सुखदाः स्निग्धाः शीताः क्षेमार्थवादिनः।**
**वामतः शकुनाः श्रेष्ठा बीजनिर्वापणे कृते।।**

## आश्वलायनः

वर्णविभागस्तस्य धर्मकारणत्वं च,
याजनाध्यापनप्रतिग्रहा ब्राह्मण-
वृत्तयः, प्रतिग्रहस्याधि-
कारिणोऽनधि-
कारिणश्च

**[१]धर्मस्य करणान्यष्टौ वर्णाश्चत्वार आश्रमाः।**
**वर्णानां प्रथमो विप्रो द्वितीयं( ? यः) क्षत्रियः स्मृतः।**
**वैश्यस्तृतीयः शूद्रश्च चतुर्थोऽन्येऽन्त्यजाः स्मृताः।।**
**[२]अध्यापयेच्च वृत्त्यर्थं शिष्यानाद्यान्सुसंयतान्।।**
**[३]सर्वार्थान् साधयिष्यन्ति यथाढ्या अप्यसाधवः।**
**अध्यापयेद्याजयेच्च तस्मात्साधून् द्विजाञ्छुचीन्।**
**साधुभ्यः प्रतिगृह्णीयाद्वृत्त्यर्थं ब्राह्मणो वसन्।।**
**[४]एवमध्यापयित्वैभ्यः शिष्येभ्यो दत्तमाहरेत्।**
**याजयित्वा स्वयाज्येभ्यो धनं प्रीतिसमन्वितम्।**
**शिष्येभ्यः प्रतिगृह्णीयाद्विप्रः शिष्येभ्य एव च।।( ?)**
**[५]अनृशंसात्ततः सम्यक् प्रायश्चित्तं समाचरेत्।**
**असंयतेभ्यस्त्वन्येभ्यो भक्त्या संप्राप्य अर्थितः।।**

(१) **आश्वस्मृ.** ३.
(२) **आश्वस्मृ.** २०.
(३) **आश्वस्मृ.** २०.
(४) **आश्वस्मृ.** २१-२२.
(५) **आश्वस्मृ.** २२ असं. (ससं); **आपा.** ११४.

**[१]समाददीत तद्दत्तमपि विप्रः सुमन्त्रितः।**
**विप्रस्य नाप्रतिग्राह्यः कश्चिदस्तीह मानवः।**
**इतराणामनर्हत्वाद्द्रव्यं चाग्राह्यमेव नः(? तु)।।**

अस्यार्थः – सुमन्त्रितः शोभनाः मन्त्राः गर्भाधानादिसंस्कारमन्त्राः अस्य संजाताः स सुमन्त्रितः। गर्भाधानादिसंस्कारविशिष्ट इत्यर्थः। विप्रो विद्याधिकः। तदुक्तं महाभारते – 'जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते।।' इति। एवंविधो ब्राह्मणः ततः प्रातःकालानुष्ठानानन्तरम् अनृशंसात् अघातुकात् प्रतिगृह्य सम्यक्प्रायश्चित्तं प्रतिपदोक्तप्रायश्चित्तं समाचरेत्। अन्येभ्यः असंयतेभ्य आचाररहितेभ्यो भक्त्या संप्राप्य अर्थितः प्रार्थितः सन् तद्दत्तं धनादिकं समाददीत गृहीत्वा च पूर्ववत्प्रायश्चित्तं समाचरेदिति। मानवे मनुस्मृतौ। इतरेषां पूर्वोक्तविप्रव्यतिरिक्तानाम्। आपा. ११४

**[२]सर्वस्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम्।**
**आनृशंस्यात्तु विप्राणां गृह्णन्त्येवेतरे जनाः।।**
**[३]स्वमेव ब्राह्मणो भुङ्क्ते स्वयम्(? स्वं वस्ते) स्वं ददाति च।**
**यस्मात्कस्माद्गृहीत्वाऽपि यदि स्यात्तपसां निधिः।।**
**[४]वेदाक्षरविनिर्मुक्तः सदाचारविवर्जितः।**
**यो विप्रस्तपसा हीनः सोऽनर्हः स्यात्प्रतिग्रहे।।**
**[५]स मोहात्प्रतिगृह्याऽऽशु दातारं ब्राह्मणब्रुवः।**
**निमज्जयति चाऽऽत्मानमम्भस्यश्मप्लवो यथा।।**
**[६]हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्।**
**अविद्वान्प्रतिगृह्णानो भस्मीभवति दारुवत्।।**
**[७]वेदवित्कर्मनिष्ठश्च सदाचाररतः शुचिः।**
**दान्तः शान्तस्तपोनिष्ठो यः सोऽर्हः स्यात्प्रतिग्रहे।।**

(१) **आश्वस्मृ.** २२; **आपा.** ११४ समा (स आ) विप्रः (विप्रे) ग्राह्यः (ग्राह्यं) चतुर्थचरणे (किंचिदस्ति हि मानवे) राणा (रेषा) षष्ठचरणे (प्रतिग्रहणमेव तु).
(२) **आश्वस्मृ.** २२; **आपा.** ११४ पू.
(३) **आश्वस्मृ.** २२; **आपा.** ११४ यस्मात्कस्मा (यस्मात्तस्मा) उत्त.
(४) **आश्वस्मृ.** २२; **आपा.** ११४.
(५) **आश्वस्मृ.** २२; **आपा.** ११४ अशुद्धः पाठः.
(६) **आपा.** ११४
(७) **आश्वस्मृ.** २२; आपा. ११४.

**[१]आत्मानं चापि दातारं §सोत्तारयति नौरिव।**
**प्रतिगृह्यापि सर्वेभ्यो ब्रह्मचर्यपरो यदि।।**
**[२]लुब्धस्तपसि यो विप्रः स नेच्छेत प्रतिग्रहम्।**
**तपः क्षरति विप्रस्य कृच्छ्राल्लब्धप्रतिग्रहात्।।**
**[३]सीदमानकुटुम्बस्य ब्राह्मणस्य तपस्विनः।**
**प्रतिगृह्य पुनः कृत्वा श्रद्धालोर्वर्धते तपः।।**
**[४]धनलुब्धस्य विप्रस्य लोभो न स्यात्तपस्युत।**
**तपोलुब्धस्य लोभश्च नेह स्याद्द्रविणादिषु।।**
**[५]लुब्धास्तपसि केचित्तु परोपकृतये द्विजाः।**
**प्रतिगृह्णन्ति ये विप्राः पालनायाऽऽत्मनश्च वा।।**
**[६]धनलुब्धास्तथा केचित्प्रतिगृह्य द्विजास्ततः।**
**तपः कुर्वन्ति तच्छुद्ध्यै निर्विण्णा वीतमत्सराः।।**
**[७]सीदन्नपि न गृह्णाति यः परैरपि याचितः।**
**स एव देवमर्त्यानां चामर्त्यानां प्रियो भवेत्।।**

देवमर्त्या ब्राह्मणाः। आपा. ११५

**[८]श्रवणात्सीदमाना ये केचित्तपसि निश्चलाः।**
**अप्यन्येभ्यः प्रतीच्छन्ति कार्यस्यात्संप्रयाचिताः (?)।।**
**[९]नायाचित्वैव लभते यो वित्तेच्छुरितस्ततः।**
**उद्वेजनीयः सर्वेषां स भवेच्छ्रवणो(? णा) दपि।।**

राज्ञः शूद्राच्चाप्रतिग्राह्याणि,
शूद्रात्प्रतिग्रहानुमतिः

**[१०]सीदन्नपि महीमन्नं गां जलं दधिसर्पिषी।**
**नाऽऽददीत नृपाच्छूद्रादन्त्यादपि कदाचन।।**

§ 'सोऽचि कोपे चेत्पादपूरणम्' (पा.सू. ६।१।१३४) इत्यनेन स इत्यस्य सोर्लोपः।

(१) **आश्वस्मृ.** २२; **आपा.** ११४ सोत्तार (स तार).
(२) **आश्वस्मृ.** २२; **आपा.** ११४-११५.
(३) **आश्वस्मृ.** २२; **आपा.** ११५ नः कृत्वा (नश्चैव).
(४) **आश्वस्मृ.** २२; **आपा.** ११५ स्युत (स्यपि) पू.
(५) **आश्वस्मृ.** २२; **आपा.** ११५.
(६) **आश्वस्मृ.** २२; **आपा.** ११५ जास्ततः (जा स्मृताः).
(७) **आश्वास्मृ.** २२; स एव (सश्रवा); **आपा.** ११५.
(८) **आश्वस्मृ.** २२.
(९) **आपा.** ११५.
(१०) **आश्वस्मृ.** २२; **आपा.** ११५ कदा (कथं).

[1]राजप्रतिग्रहः क्षिप्रं तेजो हरति दुर्धियः।
आयुरन्त्यस्य शूद्रस्य ब्रह्मवर्चसमात्मनः।।
[2]शूद्राद्द्रव्यपराद्विप्रा नेच्छन्तीह प्रतिग्रहम्।
शूद्रेभ्योऽपि समादद्याच्छुद्धेभ्य इति मे मतिः।।

चतुर्णां वर्णानामापद्वृत्तयः तल्लब्धधनांशानां विप्राय दानं च, विप्रस्य कारुकर्षकम्लेच्छादिवृत्तिनिषेधः कारुकर्षकयोः पञ्चविधत्वं च

[3]विप्रस्य विहिताभावे जीवेद्वा क्षत्रकर्मणा।
वैश्यस्य तदभावे वा न शूद्रस्य कदाचन।।
क्षत्रियो वैश्यवृत्त्या वा न तु शूद्रस्य चाऽऽपदि।
वैश्यस्तु शूद्रवृत्त्या च शूद्रः कारोर्महापदि।।
क्षत्रवृत्त्यार्जितादंशं द्वादशं कर्मतत्परः।
दत्त्वा विप्रस्य शेषेण जीवेद्विप्र इति स्थितिः।।
वैश्यवृत्त्यार्जितादंशमष्टमं क्षत्रियस्तथा।
चतुर्थं च तथा वैश्यो द्वितीयमर(? ध)मस्य च।।
सर्वावस्थितयो(?)विप्रो जीवेत्कारुककर्मणा।
कृष्या च विप्रो जीवन्नप्यसकृच्छूद्रसंस्थितः।।
स्वर्णकाराश्चर्मकारा रजका लोहकारिणः।
वृषकाराश्च पञ्चैते कारवः परिकीर्तिताः।।
सूचीकारास्तुन्नवायाः कैवर्तकमिहारवः।
हलाग्रधारिणश्चैते पञ्चैते कर्षका मताः।।
दासकर्मकरा येऽन्ये चक्रिणो ध्वजिनस्तथा।
विद्यान्म्लेच्छादयश्चापि तेषां वृत्तिस्तु गर्हिता।।
तस्मात्सीदन्नपि प्राज्ञो न जीवेत्कारुकर्मभिः।
विप्रः कर्षकवृत्त्या च सर्वदाऽप्यात्मसंशये।।

प्रतिग्रहधनाद्दानक्रययोर्विधिनिषेधौ, विप्रस्याविक्रेयाणि

[4]प्रतिग्रहधनाद्यस्तु ददाति ब्राह्मणः शुचिः।
स्वशक्त्याऽभ्यधिकं प्राप्य तस्य तच्चाक्षयं भवेत्।।

(१) **आश्वस्मृ.** २२; **आपा.** ११५ राजप्र (राज्ञः प्र) दुर्धियः (दुर्धरः).

(२) **आश्वस्मृ.** २२; **आपा.** ११५; **मुक्ता.** ५७ उत्त. द्विवारम्.

(३) **आश्वस्मृ.** २२-२३.

(४) **आश्वस्मृ.** २३ प्राप्य (प्रीति); **आपा.** ११५ द्यस्तु (द्यं तु).

[1]न क्रीणीयादनापन्नः प्रतिग्रहधनाद्द्विजः।
न किंचिदपि चाऽऽपन्नोऽप्यन्नादींस्तु प्रयत्नतः।।
[2]तिलतण्डुलगोवस्त्रं पक्वान्नाज्यमहीरसान्।
आपन्नोऽपि द्विजो मांसं न क्रीणाति(? णीत) मधून(? न्य)पि।।
[3]सुरालवणमांसादीन् क्रीत्वा विप्रः पतत्यधः।
वैश्यवृत्त्याऽपि जीवन्वा किं पुनः स्वस्थलक्षणः।।

यथाकथमपि कुटुम्बपोषणमवश्यकर्तव्यम्

[4]यया कयाऽपि वा वृत्त्या निजकर्मात्यजन्सदा।
पितरौ बिभृयात्सम्यक् साध्वीं भार्यां शिशूनपि।।
[5]मोहाद्वा वृत्तिहेतोर्वा धर्मलोभाच्छठाच्च वा।
पितरौ त्यजतो वृद्धौ गतिरूर्ध्वा न विद्यते।।
[6]अनाथौ पितरौ वृद्धौ साध्वीं भार्यां तथाऽऽत्मजान्।
शक्तस्य त्यजतो मोहाद्गतिरूर्ध्वा न विद्यते।।

गुर्वाद्यर्थं शूद्रान्नप्रतिग्रहः, शिलोञ्छप्रशंसा

[7]गुर्वर्थमतिथीनां च भृत्यानां च विशेषतः।
शूद्रान्नं प्रतिगृह्णीयान्न च भुङ्क्ते स्वयं ततः।।
[8]शिलोञ्छवृत्तिर्विप्राणां धर्म्या शस्ता गृहे सताम्।
सर्वासामेव वृत्तीनां वनस्थानां विशेषतः।।

गृहे सतां गृहस्थानां विप्राणां सर्वासां कुसूलादीनां वृत्तीनां मध्ये शिलोञ्छवृत्तिः धर्मशास्त्रात् प्रादेशति। विशेषः (? प्राप्नोतीति शेषः)। वनस्थानां तु एषैव वृत्तिर्विशेषतः प्राप्ता, गृहस्थानां तु वृत्त्यन्तरस्यापि विद्यमानत्वादित्यर्थः। आपा. १०९

(१) **आश्वस्मृ.** २३; **आपा.** ११५ न क्रीणीया (विक्रीणीया) नाद्द्वि (नं द्वि).

(२) **आश्वस्मृ.** २३; **आपा.** ११५.

(३) **आश्वस्मृ.** २३.

(४) **आश्वस्मृ.** २३; शिशू (पशू); **मुक्ता.** ५७.

(५) **आश्वस्मृ.** २३; **मुक्ता.** ५७.

(६) **आश्वस्मृ.** २३ वृद्धौ (पित्रो) तथा (च वा) चतुर्थचरणे (नोभयोर्विद्यते गतिः); **मुक्ता.** ५७.

(७) **मुक्ता.** ५७.

(८) **आश्वस्मृ.** २३; **आपा.** १०८ र्म्या शस्ता गृ (र्मशास्त्राद्गृ).

**[1]लुब्धास्तपसि ये विप्रा गृहिणो निष्प्रतिग्रहाः।**
**जीवन्त्युञ्छशिलाभ्यां वा कुसूलाद्यैश्च केचन।।**

किं तद्वृत्त्यन्तरं गृहस्थानामित्यत आह – लुब्धा इत्यादिना। तपसि लुब्धा तपो इत्यर्थः (?)।

आपा. १०९

धान्यसंग्रहासंग्रहरूपाः कुसूलधान्यत्वादिप्रकाराः सलक्षणाः

**[2]कुसूलधान्यः प्रथमः कुम्भीधान्यस्त्वनन्तरम्।**
**अश्वस्तनस्तृतीयः स्यात्कपोताख्यश्चतुर्थकः।।**
**[3]यदेकाब्दस्य पर्याप्तं षण्मासस्याथवा धनम्।**
**तन्मासेनार्जयित्वाऽऽदौ जीवेद्यस्तेन वत्सरम्।।**
**[4]स वै कुसूलजीवी स्याच्चतुर्मासस्य वा द्विजः।**
**अब्दान्नं किंचिदादद्यादन्यत्प्रागर्जिताद्धनात्।।**

कुसूलधान्यलक्षणमाह – यदेकाब्दस्य पर्याप्तमित्यादिना चतुर्मासस्य वा द्विज इत्यन्तेन। अब्दस्य षण्मासस्य चतुर्मासस्य वा पर्याप्तं यद्धनं तत्तु आदौ मासेऽर्जयित्वा तेन द्रव्येण जीवेत् स कुसूलधान्य इत्यन्वयः।

आदौ मासेऽर्जयित्वेत्युक्तम्, तत्प्रकारमाह – अब्दान्नमिति। प्रागर्जिताद्धनादन्यदेव किंचिद्धनमत्र अब्दपर्याप्तमन्नम्। अब्दपदमुपलक्षणमुक्तषण्मासचतुर्मासकालयोः। तत्पर्यादामं न माद्यात् (? तत्पर्याप्तमन्नमादद्यात्)। पूर्वार्जितं तु नावशेषयेदित्यर्थः, तथोत्तरत्र वक्ष्यमाणत्वात्।

आपा. १०८-१०९

**[5]मासस्यैकस्य यो द्रव्यं पर्याप्तं परिकल्पयेत्।**
**समार्ज्यैतेन जीवेयमेतन्मासमिति द्विजः।।**
**[6]स कुम्भीधान्यजीवी स्यात्पूर्वाच्छस्तो गृही मुनिः।**
**स नरस्तत्तथा कुर्यान्मासादावेव संयतः।।**

कुम्भीधान्यलक्षणमाह – मासस्यैकस्येति। एकस्य मासस्य पर्याप्तं द्रव्यं मासाद्येन कालेन परिकल्पयेत् अर्जयेत्। अर्जयित्वा तु तन्मासं तेन द्रव्येण यो जीवेत् स कुम्भीधान्यः। स मुनिः पूर्वोक्तात् कुसूलधान्यात् शस्त इति नृभिः, उच्यत इति शेषः। स नरः कुम्भीधान्यः संयतः सन्मासादौ तथैव (न ?) कुर्यात्। प्रागर्जितान्यदेव संपादयेत्। पूर्वार्जितं यद्यस्ति तन्नावशेषयेत्, व्ययं कुर्यादित्यर्थः।

आपा. १०९

**[1]धनेनाऽऽवापधर्मेण वाऽर्जयेताततावुभौ (?)।**
**याचयित्वाऽपि वा विप्रौ निजकर्मपरौ सदा।**
**तौ तु गर्हितया वृत्त्या नाऽऽचरेतां कथंचन।।**

एतौ कुसूलधान्यकुम्भीधान्यौ स्वस्वसंकल्पानुसारेण संवत्सरादिपर्याप्तं धनं स्वकर्मापरित्यागेनैव विहितया वृत्त्या संपादयेताम्, न तु गर्हितयेत्याह – याचयित्वाऽपि वेत्यादिना। तौ विप्रौ कुसूलधान्यकुम्भीधान्यौ सदा स्वकर्मनिरतौ सन्तौ याचयित्वाऽपि जीवेतामिति विशेषः। अपिशब्देन पूर्वमयाचित वृत्तिः सूचिता, 'कृष्यादिश्च विगर्हिता' इत्युत्तरत्र निराकरिष्यमाणत्वात्।

आपा. १०९

**[2]मासिकीं वार्षिकीं वृत्तिं धर्मेच्छुर्धर्मविच्छुचिः।**
**संकल्पितेन संजीवेद्द्रव्येणैव यथाविधि।**
**तावत्कालं तु पूर्णं स्यादन्यथाऽव्रतवान्द्विजः।।**

मासिकीं वार्षिकीं वृत्तिमुद्दिश्य संकल्पितेन द्रव्येण तावत्कालं यथाविधि जीवेत् तदा तद्व्रतं पूर्णं स्यात्, अन्यथा अव्रतवान् व्रतलोपवान् भवेदित्यर्थः। वार्षिकी कुसूलवृत्तेरुपलक्षणम्।

आपा. १०९

**[3]अयाचितेन यो जीवेन्नित्यं विप्रान्प्रयाच्य वा।**
**लब्धमस्तमयात्प्राग्यः सर्वमह्नि समापयेत्।।**
**[4]सोऽश्वस्तनव्रती विप्रः पूर्वाभ्यां प्रवरः शुभः।**
**द्रव्यं न शेषयेदल्पं बहु वाऽश्वस्तनो द्विजः।।**

---

(१) **आश्वस्मृ.** २३; लुब्धा (लब्धा); **आपा.** १०८द्यैश्च (द्यैस्तु).

(२) **आश्वस्मृ.** २३; **आपा.** १०८ स्त्वनन्तरम् (स्तदन्तरः).

(३) **आश्वस्मृ.** २३; **आपा.** १०८ तन्मासेना (तत्तु मासेऽ).

(४) **आश्वस्मृ.** २३; **आपा.** १०८.

(५) **आश्वस्मृ.** २३; **आपा.** १०८ द्वितीयार्धे (स मासाद्येन जीवेत चैतन्मासमपि द्विजः।).

(६) **आश्वस्मृ.** २३ स नर (स गण); **आपा.** १०८ गृही मु (नृभिर्मु).

(१) **आश्वस्मृ.** २३; **आपा.** १०८ प्रथमार्धं नास्ति.

(२) **आश्वस्मृ.** २३ कीं वार्षिकीं(कां वार्षिकां); **आपा.** १०८ र्मेच्छुर्ध (र्मविद्ध).

(३) **आश्वस्मृ.** २३; **आपा.** १०८ अशुद्धिबहुलो ग्रन्थः.

(४) **आश्वस्मृ.** २३; चतुर्थचरणे (बहु वा श्वस्तनाय यः); **आपा.** १०८.

अश्वस्तनलक्षणमाह – अयाचितेन यो जीवेदिति। अयाचितेन विप्रान्प्रयाच्य वा नित्यमस्तमयात्प्राक् लब्धं सर्वं द्रव्यमहन्येव यः समापयेत् सः अश्वस्तनः। स च कुसूलधान्यकुम्भीधान्याभ्यां प्रवरः शुभश्च। अश्वस्तनो द्विजः अल्पं वा बहु वा द्रव्यं लोभादिना नावशेषयेत्।

आपा. १०९-११०

**[1]अपर्याप्तं यदि भवेदेतेषां प्राक्प्रकल्पितम्।**
**नष्टं वाऽन्यत्र चाऽऽदद्यात्कंचित्तावदिति स्थितः**
**(? स्थितिः)।।**

**[2]शिष्टं यदि भवेत्कालात्तत्प्रागेव समापयेत्।**
**अपर्याप्ते तु पर्णेन जीवेद्वा वायुनाऽम्बुना।।**

त्रयाणामपि नियममाह – न पर्याप्तं यदि भवेदित्यादिना। एषां कुसूलधान्यकुम्भीधान्याश्वस्तनानां प्राक् प्रकल्पितं प्रागर्जितं द्रव्यं यथाक्रमं वत्सरादिकालस्य यदि पर्याप्तं न भवेत्, यद्यवशिष्टं वा भवेत्, एतद् द्रव्यं संकल्पितकालत्रये समापयेत्। ननु अल्पत्वे कथं वा परिसमापनमित्यत्राऽऽह – अपर्याप्त इति। निमित्तसप्तमी। अपर्याप्तत्वादपूर्णे सति वायुनाऽम्बुना वा आहारेण जीवेत्।

आपा. १०९-११०

**[3]क्षेत्रेभ्यो नीतसस्येभ्यो व्रीह्यादींश्चाऽऽहरेद्द्विजः।**
**अपविद्धान्समाहृत्य जीवेद्यः स शिलव्रती।।**

शिलवृत्त्यादीनां लक्षणमाह – क्षेत्रेभ्यो नीतसस्येभ्य इत्यादिग्रन्थजातेन। तच्च स्पष्टम्। आपा. ११०

**[4]ग्रामाद्राष्ट्रात्पुरात्क्षेत्रान्मार्गाद्वाऽथ जलात्खलात्।**
**व्रीह्यादिधान्यमाहृत्य फलमूलानीतस्ततः।।**

स्वयंकृतकृषेर्ब्राह्मणं प्रति निषेधः अत्यापद्यनुमतिश्च, स्वयंकृतकृषौ हलाग्रस्पर्शनिषेधः, धर्म्याधर्म्यवृत्तिविवेकः

**[5]स्वामिभिर्वर्जिताञ्छाकानथवा पतितान्क्षितौ।**
**समाहृत्य ततो जीवेदुञ्छवृत्तिस्तु सा मता।।**

**[1]दासैर्वा कारयित्वैव क्षेत्रादिषु कृषिं क्वचित्।**
**जीवेदापदि विप्रस्तु वैश्यवृत्तिर्हि सा स्मृता।।**

**[2]क्षत्रवृत्त्या वैश्यवृत्तिः प्रशस्ता स्यात्कलौ युगे।**
**विप्राणां दासवृत्तिस्तु वर्ज्या यत्नेन सर्वदा।**
**तस्मात्सर्वप्रयत्नेन गर्ह्यां वृत्तिं विस(? व)र्जयेत्।।**

**[3]जीवन् विप्रो विशेषेण स्वयं न कृषिको भवेत्।**

**[4]अत्यापदि स्वपित्रोस्तु पालनाय स्वयं यदि।**
**यः करोति कृषिं सोऽपि हलाग्रं न स्पृशेद्द्विजः।।**

**[5]शावं निर्वापि चेद्यश्च यश्च स्याद्धलकृद्द्विजः।**
**घोरे तमसि मज्जन्ति ते विप्रा नामधारकाः।।**
**मृता गर्ह्या जीवमाना वर्ज्याः स्युः सर्वकर्मसु।।**

**[6]तस्माज्जीवन् यथाशक्त्या यत्नादिव विवर्जयेत्।**
**विप्रो विगर्हितां वृत्तिं शस्तां सेवेदिति स्थितिः।।**

**[7]विप्राणां विहिता वृत्तिरपवृत्तिश्च कीर्तिता।**
**धर्म्या वृत्तिः कुसूलादिः कृष्यादिश्चातिगर्हिता।।**

यायावरा वृत्तिस्तस्या अधिकारिणोऽनधिकारिणश्च, वृत्तिसंकरनिषेधः

**[8]शस्ता यायावरा वृत्तिः सा तु धर्म्या गृहे सताम्।**
**सा विप्रस्यैव विहिता न चान्येषां नृपादिनाम्।।**

**[9]गृहं गृहं समागत्य गृहिणी यां वरां वराम्।**
**ज्ञात्वाऽन्यामवरां त्यक्त्वा भिक्षां वरयतीति यत्।।**
**सा स्याद्यायावरा वृत्तिरथ जायावरेति वा।**
**यत्र जाया वरा जाया साध्वी भर्तृव्रते स्थिता।।**
**ज्ञात्वा संत्यज्य दुःशीलां जायां वरयतीति यत्।**

---

(१) **आश्वस्मृ.** २३; **आपा.** १०८ अपर्या (न पर्या) पू.

(२) **आश्वस्मृ.** २३; **आपा.** १०८ तु पर्णेन (त्वपूर्णे च).

(३) **आश्वस्मृ.** २३ अशुद्धः पाठः; **आपा.** १०८.

(४) **आश्वस्मृ.** २३ धान्यमा (धान्याना) लमू (लान्मू); **आपा.** १०८.

(५) **आश्वस्मृ.** २३-२४ कानथ (खानथ) ततो जी (तयोर्जी) स्तु सा मता (र्हिता स्मृता); **आपा.** १०८.

(१) **आश्वस्मृ.** २४.

(२) **आश्वस्मृ.** २४; **मुक्ता.** ६० पू. : ६४ द्वितीयार्धमात्रम्.

(३) **आश्वस्मृ.** २४; **मुक्ता.** ६२ द्वितीयतृतीयार्धमात्रम् आश्वलायनयाज्ञवल्क्यौ.

(४) **आश्वस्मृ.** २४; **मुक्ता.** ६२.

(५) **आश्वस्मृ.** २४ प्रथमार्धं नास्ति; **मुक्ता.** ६२ तृतीयार्धं नास्ति.

(६) **आश्वस्मृ.** २४.

(७) **आश्वस्मृ.** २४; **आपा.** १०८ उत्त.

(८) **आश्वस्मृ.** २४; चतुर्थचरणे (नान्येषां सा नृपादिनाम्); **आपा.** १०८ तु (च).

(९) **आश्वस्मृ.** २४.

तां तां जायां वरेत्युक्त्वा सा वृत्तिस्त्वग्निहोत्रिणाम्।।
निःस्वाः सुशुचयो विप्रास्तेनाग्निभरणोद्यताः।
जीवन्ति यायावरिणो वरानेवाभिवाच्य ह।।
मोहाल्लोभाच्च वा तस्य वृत्तिर्गर्ह्याऽग्निहोत्रिणः।
[1]त्रेताग्निहोत्रिणामेव प्रोक्ता यायावराह्वया।
वृत्तिमन्यां तु तत्कृत्वा ब्राह्मणो राजदण्डभाक्।।
[2]ये जीवन्ति कुसूलाद्यैः शिलाद्यैर्वा द्विजोत्तमाः।
तथा यायावराद्यैर्वा तपोलुब्धाः सुचेतसः।।
[3]तेषां सा सा भवेद्वृत्तिर्नान्या काचिद्विधीयते।
देहान्तं वाऽथ कल्पान्तं यथा संकल्पितं तथा।।
[4]अन्याभिमिश्रितां धर्म्यां वृत्तिमास्थाय जीवति।
यो विप्रः स भवेत्पाप्मा त्याज्योऽधर्मव्रती बुधैः।।
[5]अशकं(? क्तो) जीवितुं विप्रः षट्कर्मस्वपि वर्तयन्।
यः संपवंछुभान् (?) प्राप्य जीवे सं(? त्सं)याच्य कर्मकृत्।।
[6]ये विप्रास्त्यक्तकर्माणः सदा याचनतत्पराः।
याप्य(? अप्य)ग्निहोत्रिणस्ते स्युर्वर्ज्या दुष्कृतिनो यथा।।
[7]यायावरादिव्रतिनो वर्जयेयुश्च याचनाम्।
परान्नमपि चाऽऽपन्नाः सदा सर्वप्रतिग्रहान्।
एवं धर्म्यां समास्थाय वृत्तिं जीवेद्विचक्षणः।।

वैश्यवृत्तेर्विक्रयस्य पशुपालनस्य च नीतिः, वैश्यस्य गोदशकमात्रभोगाधिकारः, वैश्यकृत-ब्राह्मणादिकृषिफलविभागः

[8]दापयेन्मानविद्वैश्यस्तुलया तुलयेत्सदा।
विक्रीणन्नित्यशो द्वेषमानस्तम्भविवर्जितः।।
वृद्धौ सर्वान्समादद्यात्क्षीणे क्रीणीत सत्यवाक्।
लाभालाभे च नोद्विग्नो भवेदेव सुयन्त्रितः।।
नाविक्रयाणि वस्तूनि विशां सन्तीह कानिचित्।
सत्येनैव च विक्रीणन्नुभयोर्विन्दते गतिम्।।
गाश्चापि रक्षयेन्नित्यं व्याघ्रचोरामयादिभिः।
यवसं च जलं तासामापर्याप्तं ददत्सदा।।
वृषभान्वाहयेत्काले हलं सात्वं च शास्त्रवित्।
तैः कुर्याद्यन्तु(? द्यन्त्र)चक्रेण तैलादीनैक्षवान्रसान्।।
कार्यादिवाहयेद्वैश्यः प्राहतान्तमृषिभिः क्षमैः(?)।
हलान् धान्यानि भारांश्च सुपुष्टैर्यवसादिभिः।।
असमाभ्यां युगं प्राज्ञो वाहयेन्न च दुर्बलैः।
न चातिबालैर्जरठैर्न च रोगार्दितैर्बुधः।।
ये च सन्त्यतिभारार्ता दुर्बलाः पशवस्त्विह।
ते दहिष्यन्ति कर्तारं सान्वयं तत्क्षणादिह।।
अतिभारैरकाले च बालवृद्धातुरांश्च यः।
पीडयित्वा पशून्याति मृतो निरयमक्षयम्।।
एवमादिप्रकारेण पशवो येन पीडिताः।
तं च दण्डत्यद्य(? तं दण्डयन्त्यद्य) नृपाः प्रेत्यापि यमकिङ्कराः।।
तस्मान्न पीडयेद्गावः पोषयेच्च प्रयत्नतः।
वाहयेन्न्यायतश्चैतान्सर्वदा परिपालयेत्।।
पाययेदेकभागं तद्वत्सं स्तन्यस्य वै गवाम्।
द्विभागमाहरेत्स्वामी भागं तद्रक्षकस्य तु।।
ब्राह्मणस्य गवामेवं वैश्यः कुर्यात्प्रपालयन् - (? लनम्)।
क्षत्रियस्याऽऽहरेदर्धं त्रिभागं चाऽऽत्मनो गवाम्।।
ये क्रुद्धास्ताडयन्त्यद्य गां नरा दोहवाहयोः।
पदा दम्भा(? ण्डा)दिभिर्मोहात्ते मृता यान्ति रौरवम्।।
मोहेन व्रणकृद्यस्तु गवां गात्रेषु दुर्मतिः।
स चाऽऽप्रलयमश्नाति निरयं कृमिकूपगः।।
गवां हन्तुस्तु नोत्तारं नरकान्नै(? च्चै)व विद्यते।
न वां नरक्षयद्यस्ति (?) क्रिमित्वं चापि विन्दति।।
तथाऽजान्महिषान्वैश्यो रासभानाविकानपि।
पोषयित्वा यथान्यायं नित्यं कर्मसु निष्ठयेत्।।

---

(१) **आश्वस्मृ.** २४; **आपा.** १०९ अशुद्धिबहुलो ग्रन्थः.
(२) **आश्वस्मृ.** २४; **आपा.** १०९ तपोलु (ततो लु) सुचे (सचे).
(३) **आश्वस्मृ.** २४; **आपा.** १०९ सा साभ (सा संभ).
(४) **आश्वस्मृ.** २४; **आपा.** १०९ पाप्मा त्या (सर्वैस्त्या).
(५) **आश्वस्मृ.** २४.
(६) **आश्वस्मृ.** २४; **आपा.** १०९ याप्य (अथा).
(७) **आश्वस्मृ.** २४; **आपा.** १०९ श्च याचनाम् (स्तु याचनम्) परान्नमपि (परेषामपि) ग्रहान् (ग्रहात्).
(८) **आश्वस्मृ.** ५३-५४.

वैश्यो दशगवीमेक(? का)मात्मनो भोक्तुमर्हति।
नातो न्यूनाधिकं कुर्यात्कृत्वा स्याद्राजदण्डभाक्।।
अतिशक्त्योपभोगेन दण्डमर्हति राजतः।
असन्मार्गाच्च विक्रीणन्वैश्यो मोहवशं गतः।।
दाननित्यो भवेद्वैश्यः कुसीदाद्वृद्धिमागतः।
दीनानुकम्पी बिभृयाद्विप्रान्बन्धूंश्च दुर्लभान्।।
षष्ठ्यदे(? षष्ठमे)कांशमादद्याद्विप्रक्षेत्रात्तु वार्षिके।
त्रिभागाच्छैशिरे चैकमर्धं वासन्तिकं फलम्।।
यथावत्कारयित्वैव शेषं विप्रगृहं नयेत्।
क्षेत्रलब्धं फलं वैश्यो राज्ञश्चापि तथैव च।।

## लघ्वाश्वलायनः

ब्राह्मणस्य याजनादयो वृत्तयः,
वार्षलेयादिविषयक-
याजनादिनिषेधः

[1]यजनं याजनं चैव वेदस्याध्ययनं च हि।
अध्यापनं तथा दानं प्रतिग्रहमि(? इ)होच्यते।
एतानि ब्राह्मणः कुर्यात्षट्कर्माणि दिने दिने।।
[2]वार्षलेयश्च वै कुण्डो गोलकः शूद्रयोनिजः।
तज्जश्चापि हि निन्द्यः स्युर्माहिषेयश्च विप्रजः।।
एभिः सह वसेदेषां याजनं कुरुतेऽथ वा।
वित्तमेषां द्विजो यस्तु भुङ्क्ते सोऽपि हि तत्समः।।
एतेषां याजनं यस्तु ब्राह्मणः कुरुते यदि।
स याति नरकं घोरं यावदिन्द्राश्चतुर्दश।।
अद्विजानां चाध्ययनं याजनं च प्रतिग्रहम्।
ब्राह्मणो नैव गृह्णीयादिति प्राहुर्मुनीश्वराः।।

ब्राह्मणप्रशंसा, शूद्रस्य द्विजसेवा
द्विजकृषिश्च वृत्तिः

[3]सर्वेषां चैव वर्णानामुत्तमो ब्राह्मणो यतः।
क्षेत्रस्य(? क्षत्रस्तु)पालयेद्विप्रं विप्राज्ञाप्रतिपालकः।।
सेवां चैव तु विप्रस्य शूद्रः कुर्याद्यथोदितम्।
सर्वेषां चापि वै मान्यो वेदविद्द्विज एव हि।।

(१) लघ्वाश्वस्मृ. १।६-७.
(२) लघ्वाश्वस्मृ. २१।१६-१९.
(३) लघ्वाश्वस्मृ. २२।१-२, ५.

शूद्रः कुर्याद्द्विजस्यैव सेवामेव कृषिं तथा।
सुखं तेन लभेन्नूनं प्रवदन्ति महर्षयः।।

## बुधः

ब्राह्मणस्य मुख्या आपत्कालीनाश्च
वृत्तयः, वृत्तिसंकरनिषेधः,
वैश्यशूद्रयोर्वृत्तयः

[1]अध्यापनं याजनं प्रतिग्रहः सर्वक्रयविक्रयसंविभाग-परिग्रहाधिगमशिलोञ्छनसमयोचितकर्षणवाणिज्यादि-वृत्तयः कार्याः।।
[2]तदसंभवे क्षत्रियवृत्त्या वैश्यवृत्त्या वा।।
[3]आपत्कालेऽसाधुभ्यः प्रतिगृह्णीयात्।।

आपत्कल्पे वैश्यवृत्त्यसंभवे। असाधुरत्र यदीयप्रति-ग्रहस्य कृष्याद्यपेक्षयाऽपकर्षः। 'श्रेयान्स्वधर्मो विगुणः' (भगी. ३।३५) इति प्रतिग्रहादेः श्रेष्ठत्वाभिधानं शूद्रादि-प्रतिग्रहविषयम्। गृक. १८७

[4]वृत्तिसंकरं न कुर्यात्।।
[5]कर्मवृत्तिसंकरौ रक्षेत् कुलशुद्ध्यर्थम्।।
[6]कृषिः पाशुपाल्यं वाणिज्यं वैश्यकर्म।।
§ शूद्रस्य विहितं कर्म ब्राह्मणादीनां त्रयाणां भर्तृ-शुश्रूषा नाभिचारस्तस्य गुरुभक्तिः। प्रणामश्चेति धर्मः।।

## विश्वामित्रः

कुसूलधान्यत्वादीनामुत्तरोत्तरश्रेयस्त्वम्,
शूद्रस्य मुख्यापत्कालीना वृत्तयः

[7]कुसूलकुम्भीधान्यो वा त्र्यैहिकोऽश्वस्तनोऽपि वा।
जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परः परः।।

§ औचित्यादादर्शान्तरानुरोधेन सूत्रैकत्वमङ्गीकृतम्।
(१) बुस्मृ. २५; गृक. २६२ (अध्ययनयाजनप्रतिग्रहरिक्थ-क्रयसंविभागप्रतिग्रहाधिगमाः).
(२) बुस्मृ. २६ (वैश्यवृत्त्या वा०); गृक. १८७ क्षत्रिय (क्षत्र).
(३) बुस्मृ. २७; गृक. १८७ त्काले (त्कल्पे).
(४) बुस्मृ. २८; गृक. १८७.
(५) बुस्मृ. २९; गृक. १८७ (कर्म वर्णसंकरं कुलशुद्ध्यर्थम्).
(६) बुस्मृ. ३०-३३.
(७) गृक. १७३ याज्ञवल्क्यविश्वामित्रौ; गृर. ४१८ कुसूल (कुशूल) त्र्यैहि (त्र्यहि) याज्ञवल्क्यविश्वामित्रौ.

[1]शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग्भवेत्।
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्।।

## शौनकः

क्षेत्रकर्षणे मुहूर्तः
धर्मकृत्यं च

[2]स्वक्षेत्रमुत्तरप्रोष्ठपदसंज्ञे तु तारके।
कर्षयेदथ रोहिण्यां फाल्गुनीषूत्तरासु वा।।
तिसृषूक्तासु जन्मर्क्षानुगुण्येऽन्यतमे शुभे।
मुहूर्ते प्रयतो भूत्वा क्षेत्रं प्राप्य तदन्ततः।।
द्विजैः पुण्याहवा(? व)चनं कारयित्वा समर्चितैः।
यत्र होमे कृते धूमो वातधूतोऽखिलं च तत्।।
स्वक्षेत्रं प्राप्नुयात्तत्र भूप्रदेशे समीकृते।
कृत्वोपलेपनं रेखाः षट्कृत्वा चाथ पावकम्।।
क्षयायनं(? ने) निधायास्मिन्नन्वाधानादिकं क्रमात्।
आज्यभागावसानं च पुरस्तन्त्रं विधाय च।।
ततः क्षेत्रस्य पतिना वयमित्येवमादिना।
सूक्तेन प्रत्यृचं सर्वं जुहुयाच्च यथाविधि।।
[3]अत्रापि प्रत्यृचं होमं कुर्यादिति विधानतः।
ऋचमुक्त्वा हविः क्षिप्त्वा ततः स्वाहेत्युदीरयेत्।।
[4]क्षेत्रस्य कर्षणारम्भं कर्षकैः कारयेत्ततः।
ततः स्विष्टकृतादूर्ध्वं तन्त्रं परिसमापयेत्।
यद्वा सूक्तं जपित्वेदं ततः क्षेत्रं प्रकर्षयेत्।।

## जातूकर्ण्यः

दुःस्थितब्राह्मणभरणं
सुस्थितशूद्रस्य
कर्तव्यम्

[5]यो नीचमाश्रयेदार्य आत्मानं दर्शयेत्सदा।
आत्मानं दासवन्मत्वा चरेन्नीचोऽपि तं प्रति।।
[6]दरिद्रो ब्राह्मणो दान्तो वेदानां चैव पारगः।
शूद्रेणापि सदा ह्येष भर्तव्योऽनाश्रितोऽपि सन्।।
[2]बिभृयाद्ब्राह्मणं नित्यं सर्वयत्नेन बुद्धिमान्।
अन्यं चाप्यानृशंस्यार्थं शूद्रोऽपि द्रव्यवान् सदा।।

## कश्यपः

मृतके सूतके च प्रतिग्रहनिषेधः

+ [3]न प्रतिगृह्णीयात्।।

## शाण्डिल्यः

अयाचितप्राप्तप्रतिग्रहे दोषाभावः

[4]अयाचितोपपन्नेषु नास्ति दोषः प्रतिग्रहे।
अमृतं तद्विदुर्देवास्तस्मात्तन्नैव निर्णुदेत्।।

## पुलस्त्यः

चातुर्वर्ण्यवृत्तयः

$ [5]याजनाध्यापने राज्ञो भूतानां चाभिरक्षणम्।
पाशुपाल्यं कृषिश्चैव वैश्यस्याऽऽजीवनं स्मृतम्।।
शूद्रस्य द्विजशुश्रूषा द्विजानामनुपूर्वशः।
शुद्धा च वृत्तिस्तत्सेवा कारुतारणकर्म च।।

## छागलेयः

वेदाग्निविक्रयनिषेधः, षड्विधो वेदविक्रयः, ब्राह्मणं
प्रति कुसीदनिषेधः, दक्षिणहस्तमध्येन
दक्षिणाप्रतिग्रहयोर्ग्रहणम्, दुर्भिक्ष-
कालीना नव वृत्तयः

[6]न वेदविक्रयं कुर्यादग्निविक्रयमेव च।
यो धर्मविक्रये पुंसां नरकः सोऽत्र जायते।
तस्मान्न विक्रयो वेदे अग्निहोत्रे तथैव च।।

---

(१) **गृक.** २६९ याज्ञवल्क्यविश्वामित्रौ.
(२) **शौका.** ३५।३२-३८; **आपा.** १३८.
(३) **शौका.** ३५।३८ पू.; **आपा.** १३८.
(४) **शौका.** ३६।३९-४०; **आपा.** १३८.
(५) **मभा.** १०।६१ जातूकर्णिः; **गौमि.** १०।६४ वन्मत्वा (वत्कृत्वा); **शूशि.** ३६ येत्स (यन् स); **बाल.** १।१२१ पृ. ३७७.

+ 'जातमृतकसूतके' इति 'सुब्राह्मणः' इति च प्रकृतम्।
$ अत्र ब्राह्मणस्येत्यध्याहार्यम्।
(१) **मभा.** १०।६१ जातूकर्णि; **गौमि.** १०।६४ दा ह्येष (दाऽप्येष); **शूशि.** ३६ दान्तो (दक्षो) शेषं गौमिवत्; **बाल.** १।१२१ पृ. ३७७ शूशिवत् गौमिवत् च.
(२) **मभा.** १०।६१ जातूकर्णिः; **गौमि.** १०।६४ सदा (भवेत्).
(३) **कस्मृ.** ३।१०.
(४) **मुक्ता.** ६०; **आन.** ६३३.
(५) **पुलस्मृ.** १०-११.
(६) **अप.** ३।३५-३८ पृ. ९३२ च (वा); **गृक.** २०५ सोऽत्र

अग्निहोत्रशब्दः अत्र त्रेताग्निपरः। गृक. २०६

[१]**प्रख्यापनं प्राध्ययनं प्रश्नपूर्वः प्रतिग्रहः।**
**याजनाध्यापने वादः षड्विधो वेदविक्रयः।।**

(१) याजनाध्यापने चाऽत्र भृतिपूर्वके। वादः अत्र पणपूर्वकः। गृक. २०६

(२) प्रख्यापनं सुविद्याया अतिशयेन कथनम्। प्राध्ययनम् अनध्यायेऽप्यध्ययनम्। प्रश्नपूर्वः प्रतिग्रहः 'कियदनेन पठितम्? किं कुलमस्य?' इति पृष्ट्वा यद्दीयते। 'यदार्थं (?) वेदराशिमस्खलितं पठसि तदेदं दास्यामि' इत्यन्ये।

§ गृर. ४३८

(३) अग्निविक्रयश्च अनाहिताग्नित्वम्।

निप्र. २।३१६

[२]**न कुर्याद्ब्राह्मणो वृद्धिं भ्रूणघाताद्विशिष्यते।**
**भ्रूणहत्यां च वृद्धिं च तुलायां समतोलयत्।।**

[३]**न पापं भ्रूणहन्तॄणां न पापं वृषलीपतेः।**
**न पापमग्निदातॄणां न पापं गुरुहिंसके।**
**सर्वपापाधिकां वृद्धिं भ्रूणघ्ना समतोलयत्।।**

[४]**दक्षिणहस्तमध्ये ब्राह्मणस्याऽऽग्नेयं तीर्थम्। तेन प्रतिगृह्णीयात्।।**

[५]**शकटं शाकिनी गावो जालमस्पन्दनं वनम्।**
**अनूपं पर्वतो राजा दुर्भिक्षे नव वृत्तयः।।**

शकटं धान्यादिवहनभाटकद्वारेणोपजीव्यम्। शाकिनी शाकवाटिका। जालं मत्स्याहरणेन। अस्पन्दनम् एकत्रावस्थानम्, व्ययाधिक्यविरहात् तृणादिलाभाच्च। वनं फलमूलाद्याहरणेन। अनूपं बहूदको देशः बिसशालूकाद्याहरणेन। पर्वतः गैरिकाद्याहरणेन। ‡ गृक. २२३

[१]**हस्तमध्ये ब्रह्मतीर्थं दक्षिणाग्रहणे तु तत्।।**

## देवरातः (देवत्रातः)

रात्रौ बीजनिर्वापणनिषेधः

[२]**देवप्रतिष्ठां क्षौरं च (बीज)निर्वापणं तथा।**
**राजाभिषेकं सर्ववर्ज्या(? शर्वर्या)मुपनीतिं न कारयेत्।।**

## मार्कण्डेयः

धर्मात्मभरणकुसीदेषु धनविभागपरिमाणम्,
धनस्य प्रशस्ताप्रशस्तरूपास्त्रयः प्रकाराः
प्रत्येकं सप्तविधास्तदनुरूपाः
फलभेदाश्च

[३]**पादेन तस्य पारक्यं कुर्यात्संचयमात्मवान्।**
**अर्धेन चाऽऽत्मभरणं नित्यनैमित्तिकान्वितम्।**
**पादं चार्थोऽय(? चार्थार्थ)मर्थस्य मूलभूतं विवर्धयेत्।।**

**तत्पुनस्त्रिविधं ज्ञेयं शुद्धं शबलमेव च।**
**कृष्णं §तस्य तु विज्ञेयो विभागः सप्तधा पुनः।।**
**श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम्।**
**धनं सप्तविधं शुद्धमुदयोऽप्यस्य तद्विधः।।**

---

§ शेषं गृकगतम्।

जा (स प्रजा); **गृर.** ४३८ वेदे (धर्म्यः); **निप्र.** २।३१६ च (वा) प्रथमार्धमात्रम्.

(१) **अप.** ३।३५-३८ पृ. ९३२ प्रख्या (प्राध्या); **गृक.** २०५-२०६ छागलेयः व्यासश्च; **गृर.** ४३८; **निप्र.** २।३१६.

(२) **गृक.** २१६; **निप्र.** २।३१९ द्वितीयचरणे (ब्रह्महत्याविशेषतः) भ्रूणह (ब्रह्मह) तुलायां (तुलया).

(३) **गृक.** २१६; **गृर.** ४४५-४४६ हन्तॄणां (हर्तॄणां) वृषलीपतेः (गुरुहिंसके) गुरुहिंसके (वृषलीपतेः) मनुः.

(४) **निप्र.** २।२९० पारस्करे छागलेयः.

(५) **गृक.** २२३; **गृर.** ४४९; **निप्र.** २।३२८ किनी (कटी) स्पन्द (स्यन्द) नव (नृप); **आत.** ३५४; **वीमि.** ३।४२ शकटं (शकटः) गावो (भावो) मस्प (मस्य).

‡ गृर., आत. गृकवत्। निप्र., वीमि. गृकगतम्।

§ अत्राऽऽदर्शपुस्तकटिप्पण्यां तच्छब्देन शुद्धधनमात्रस्य परामर्श उक्तः, स न मनोहरः, शुद्धस्य शबलकृष्णाभ्यां व्यवहितत्वात्, प्रत्येकं सप्तविधत्वस्य वक्ष्यमाणस्य प्रतीयमानत्वाच्च। अत एकैकशस्त्रयाणामपि परामर्शो युक्तः। अत एव कृष्णधनविधायकश्लोके यथाश्रुतपाठमशुद्धं मत्वा शुद्धपाठः सूच्यते। तत्र 'पार्ष्णिकं चैव' इति पाठः श्रूयते। पार्ष्णिशब्दस्य द्यूतमित्यर्थ आदर्शपुस्तकटिप्पण्यामुक्तः। पुंल्लिङ्गस्य पार्ष्णिशब्दस्य जिगीषार्थकत्वं कोशे उक्तम्। स्वार्थे कन्। मूले नपुंसकत्वमार्षम्। जिगीषासंबन्धात् पार्ष्णिकशब्देन द्यूतं लक्ष्यते। अस्मिन् पाठे जिगीषासंबन्धादेव पार्ष्णिकशब्देन समाह्वयस्यापि संग्रहेऽपि अवच्छेदकभेदाभावात्

(१) **चव्र.** ३४.

(२) **आपा.** १४१.

(३) **मपा.** २१३.

श्रुतेन अध्ययनेन। शौर्येण याज( ? योध)नादिना। तपसा जपहोमेन देवतार्चनादिना। कन्यागतं कन्यया सहाऽऽगतं श्वशुरादेर्लब्धम्। शिष्यागतं गुरुदक्षिणादि।

मपा. २१४

**कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः।**
**कृतोपकाराद्यनं ( ? दायातं) शबलं समुदाहृतम्।।**
**पार्ष्णिकं चैव चौरा( ? पार्ष्णिक्यजैवचौर्या)र्तिप्रति-रूपकसाहसैः।**
**व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम्।।**

व्याजेन दूत( ? घृतादि)व्याजेन तैलादिकं दत्त्वा यदुपार्जितम्। मपा. २१४

**यथाविधेन द्रव्येण यत्किंचित्कुरुते नरः।**
**तथाविधमवाप्नोति स फलं प्रेत्य चेह च।।**

## अग्निः

कुसूलधान्यत्वादयो वृत्तिप्रकाराः,
अवेदविदोऽपि विप्रा आपद्वृत्त्य-
धिकारिणः, याचना-
धिकारिणः

**[1]कुसूलकुम्भ्येकदिनअद्य ( ? त्र्यह) यायावराह्वयाः।**
**वृत्तयः पञ्च निर्दिष्टाः कृच्छ्राद्धर्मो गृहे सताम्।।**
**ये त्ववेदविदो विप्रा निर्धनास्तेऽप्यशक्तितः।**
**आपद्वृत्त्याऽपि जीवेयुस्तेषामालब्धिसंज्ञिता।।**
**येऽल्पवेदविदश्चापि विद्वांसश्च कुटुम्बिनः।**
**ते जीवेयुर्द्विजा निःस्वाः शुद्धयाचनयाऽथवा।।**
**व्रतिना स्नातकेनापि कार्या शुद्धेषु याचना।**
**गुरोरर्थप्रदानाय कन्यालाभाय चाऽऽत्मनः।।**
**यात्रामात्रादृते नित्यं यतिना नैव शस्यते।**
**याचनां तां च नेच्छन्ति जीवन्मुक्ताः सुचेतसः।।**

सप्तत्वं दुर्बोधम्। किंच, पार्ष्णिकशब्देन धनसाधनं द्यूतं बोध्यते, न धनम्। तेन धनपरकृष्णपदसामानाधिकरण्यं नोपपद्यते। अतोऽत्र 'पार्ष्णिक्यजैव' इति शुद्धः पाठः कल्प्यते। पार्ष्णिक्यं द्यूतम्, जैवं समाह्वयः। पार्ष्णिकशब्दात् द्यूतपरात् स्वार्थे ष्यञ्। अप्राणिभिरक्षादिभिर्यत् क्रीड्यते तत् द्यूतमित्युच्यते, मेषकुक्कुटादिभिः प्राणिभिर्यत् क्रीड्यते तत् समाह्वय इत्युच्यते।

(१) **आपा. १११.**

## वत्सः

कृषिकर्ममुहूर्तः

**[1]शुभग्रहोदये श्रेष्ठं निन्द्यं पापग्रहोदये।**
**निरीक्षणं तथैवोक्तं ग्रा( ?ग्र)हाणां कृषिकर्मसु।।**

अथ लग्नगोचरविधिमाह वत्सः – शुभेति।

आपा. १३७

## चतुर्विंशतिमतम्

पोष्यवर्गपोषणं धर्मकृत्यं च धनार्जनफलम्,
कुसूलधान्यत्वादयो वृत्तिप्रकाराः,
दुष्कृतकर्मदातृकप्रति-
ग्रहानुमतिस्तदप-
वादश्च

**[2]पोष्यवर्गार्थसिद्ध्यर्थं धनमिच्छेच्च बुद्धिमान्।**
**न्यायोपार्जितवित्तेन कर्तव्यं तु सदा द्विजैः।।**

आत्मनेपदमार्षम्। तत्किं चौर्यादिनाऽप्यर्जनीयम्? नेत्याहुर्मूले – न्यायोपार्जितेति। यत्कर्तव्यं तन्न्यायोपार्जितवित्तेनेति गुणविधिः। यद्यपि लिप्सासूत्रे (जैसू. ४।१।२) अर्जननियमाः पुरुषार्थाः, न तु क्रत्वर्था इति न्यायेन स्थापितं तथाप्यनेन वचनेन तद्बाधो बोध्यः। एवं च यज्ञोपवीतादिवदुभयार्थता बोध्या।

चमव्याआ. ३७

**[3]कुसूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा।**
**जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परः परः।।**

(१) (यद्यपि) कुसूलादयोऽप्यनवस्थितप्रमाणास्तथाऽपि स्वकुटुम्बपोषणे द्वादशाहपर्याप्तधान्यः कुसूलधान्यः, षडहपर्याप्तधान्यः कुम्भीधान्यः, वल्लरीग्रहणं शिलम्। कणश उपादानमुञ्छमिति पारिजातादौ स्थितम्।

चमव्याआ. ३७

(१) **आपा.** १३७.
(२) **चम.** ५४; **चमव्याआ.** ३७ मिच्छेच्च (मिच्छेत्).
(३) **चम.** ५५ त्र्याहिकोऽश्वस्त (त्र्यहिकोऽश्वदि) परः परः (परं परः); **चमव्याआ.** ३७; **इन्दु.** १९८.

(२) अश्वस्तनिकवृत्तिः कलौ वर्ज्या, 'अश्वस्तनिकता तथा' इति माधवीयकलिवर्ज्यपाठात्।

× इन्दु. पृ. १९८

[1]**अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः।**
**अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः।।**

अयाचिताहृतं ग्राह्यम्, न तु प्रत्याख्येयमिति तात्पर्यम्।

चमव्याआ. ३८

भिक्षाधिकारिणो भिक्षाप्रशंसा च, अत्यन्तापदि सर्वतः प्रतिग्रहानुमतिः, राजतः प्रतिग्रहस्य निषेधः

[2]**ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः।**
**अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः।।**

विद्यार्थी ब्रह्मचारिभिन्नोऽपि व्रतस्नातकादिः। अध्वग इति यस्य पाकसामग्रीवैकल्यं तादृशो ग्राह्यः। क्षीणवृत्तिः अनध्वगोऽपि सामग्रीविकलः। एते भिक्षाधिकारिणः।

चमव्याआ. ३८

**भिक्षाहारो निराहारो भिक्षा नैव प्रतिग्रहः।**
**अवधूता च पूता च सोमपानं दिने दिने।।**

सोमपानमिति वाक्यशेषः प्रशंसापर इत्यादि बोध्यम्।

चमव्याआ. ३८

[3]**सीदंश्चेत्प्रतिगृह्णीयाद्ब्राह्मणेभ्यस्ततो नृपात्।**
**ततस्तु वैश्यशूद्रेभ्यः शङ्खस्य वचनं यथा।।**

अत्र ब्राह्मणादिभ्यो न्यूनाचारेभ्योऽप्यापदि गृह्णीयादिति तात्पर्यम्। चमव्याआ. ३८

[4]**दशसूनसमश्चक्री दशचक्रिसमो ध्वजः।**
**दशध्वजसमा वेश्या दशवेश्यासमो नृपः।।**

[1]**राजप्रतिग्रहो घोरो मध्वास्वादो वि( ? दवि)षोपमः।**
**पुत्रमांसं वरं भोक्तुं न तु राजप्रतिग्रहः।।**

(ए)तदुच्छास्त्रवर्तिराजविषयम्।

† समु. ४८

कृषिवाणिज्यसेवानां ब्राह्मणं प्रति निषेधः, धर्मस्वाध्यायाविरोधेन धनार्जनम्, कुटुम्बभरणमवश्यकर्तव्यम्, आपदि सप्त धनार्जनोपायाः

[2]**न कुर्यात्कृषिवाणिज्यं सेवावृत्तिं तथैव च।**
**ब्राह्मण्याद्धीयते तेन तस्मात्तानि विवर्जयेत्।।**

(१) 'नपुंसकमनपुंसकेन०' (पासू. १।२।६९) इति 'तेन, तानि' इति साधु। चमव्याआ. ३७

(२) विप्रक्षत्रियावुद्दिश्य कृषिनिषेधकं मनुवचनं तु स्वकृताभिप्रायमित्यविरोधः। एवम् 'न कुर्यात्....।।' इति चतुर्विंशतिमतस्यापि गतिर्बोध्या।

$ बाल. १।११८ पृ. ३६५

[3]**कुर्याद्धर्माविरोधेन धनधान्यस्य संग्रहम्।**
**सर्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः।।**

[4]**वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः।**
**अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्।।**

अकार्यशतम् अयाज्ययाजनम्( ? नादि)। तदभिप्रायेणैवाऽऽहुर्मूले – 'सीदंश्चेत्प्रतिगृह्णीयात्....।।' इति।

चमव्याआ. ३७

[5]**शिल्पं वणिक्कृषिर्गावस्तथाऽर्णवगिरिर्नृपः।**
**आपद्येतानि कुर्वीत शङ्खस्य वचनं यथा।।**

---

× शेषं चमव्याआगतम्।

(१) **चम.** ५६; **चमव्याआ.** ३८ (अयाचिताहृतं ग्राह्यम्) एतावदेव.

(२) **चम.** ५७-५८; **चमव्याआ.** ३८.

(३) **चम.** ५९ ततस्तु वैश्यशू (ततोऽपि वैश्याच्छू); **समु.** ५० यथा (तथा); **स्मृच.** २।४६६; **पमा.** १।१८४-१८५; **मर.** १७२; **चमव्याआ.** ३७-३८ स्ततो (स्तथा); **मुक्ता.** ५६ समुवत्; **विपा.** ३।२।२४८; **इन्दु.** १९९.

(४) **चम.** ६२.

† स्मृच., आपा., चमव्याआ., इन्दु. समुवत्।

$ शेषं चमव्याआवत्।

(१) **चम.** ६३ राजप्र (राज्ञः प्र) मध्वा (मधु) भोक्तुं (भुक्तं); **समु.** ४८ वरं (परं); **स्मृच.** २।४६०; **आपा.** ११३ न तु (न च); **चमव्याआ.** ३७; **इन्दु.** १९८.

(२) **चम.** ६४; **चमव्याआ.** ३७; **बाल.** १।११८ पृ. ३६५.

(३) **चम.** ६५; **चमव्याआ.** ३७ पू.; **बाल.** १।११८पृ.३६५ पू.

(४) **चम.** ६६; **चमव्याआ.** ३७.

(५) **चम.** ६७.

वैश्यवृत्ती कृषिवाणिज्ये,
शूद्रात् प्रतिग्रहार्हाणि

**[1]वैश्यस्य कृषिवाणिज्ये वेदाध्ययनपूर्वकम्।**
**शूद्रस्य द्विजशुश्रूषा पञ्चयज्ञक्रियास्तथा।।**
**[2]आरनालं तथा क्षीरं कन्दुकं दधि सक्तवः।**
**स्नेहपक्वं च तक्रं च शूद्रस्यापि न दुष्यति।।**

ब्राह्मणं प्रति कृषेर्निषेध आपद्यनुमतिश्च,
हालिकवृषभसंख्यानियमः, कृष्यादि-
जन्यपापशमनदानानि तत्र हल-
वाहनकालतारतम्यप्रयुक्तं
देयधान्यांशतारतम्यं
च

**[3]कृषिं नैव प्रकुर्वीत यदीच्छेद्धर्ममात्मनः।**
**कृषेर्नश्यन्ति वेदास्तु वेदनाशादघं महत्।।**
**संवत्सरेण यत्पापं कुरुते मत्स्यघातकः।**
**दिनेनैकेन चाऽऽप्नोति सकृद्युक्त्वा (तु) लाङ्गली।।**
**अलाभे सर्ववृत्तीनां कृषिं कुर्वन्ति चाऽऽपदि।**
**गोभिः षड्भिरथाष्टाभिश्चतुर्भिर्वा द्विजोत्तमाः।।**
**प्रहरद्वयस्य योक्ता च भागं दद्याच्चतुर्दि( ? र्द)शम्।**
**दिने योक्ता तथाऽष्टांशं दद्यात्पापविशुद्धये।।**
**शुद्धपाप्मोनर्विंशांशं दद्याच्छान्त्यै दिवौकसाम्।**
**पितृभ्यो विंशमं भागं खलक्षेत्रगृहादिषु।।**
**कृषिवाणिज्यसेवासु दद्याद्विप्रस्य वै धनम्।**
**प्रायश्चित्तनिमित्तं हि ब्रह्मणा( ? ब्राह्मणो)मुनयोऽ-**
**ब्रुवन्।।**

भिक्षादिप्रतिग्रहदोषशमनानि, अप्रतिग्राह्याणि
आपदि तत्प्रतिग्रहानुमतिश्च,
शूद्रतो ग्राह्याणि

**भिक्षामात्रे गृहीते तु पुण्यं मन्त्रमुदीरयेत्।।**
**प्रतिग्रहेषु सर्वेषु षष्ठांशं परिकल्पयेत्।**
**प्रतिग्रहेषु सर्वेषु जपहोमादिकं भवेत्।।**

(१) **चम.** ८७.
(२) **चम.** २२२.
(३) **चम.** २७४-२७९, २८३-२८४, २८७, २९१-२९२.

**कृष्णाजिनं च शय्यां च गजमश्वतरं तथा।**
**लवणं द्विमुखीं धेनुं गृहीत्वा न पुमान् भवेत्।।**
**आपद्गतः संप्रगृह्णन् भुञ्जानोऽपि यतस्ततः।**
**न लिप्यते असौ विप्रो ज्वलनार्कसमो हि सः।।**
**यस्तु जापी सदा होमी परपाके निवृत्तकः।**
**सर्वे रत्नैर्महीं पूर्णां प्रतिगृह्णन्न लिप्यते।।**
**[1]आमं मांसं मधु घृतं धान्यं क्षीरं तथौषधम्।**
**गुडतक्ररसा ग्राह्या निवृत्तेनापि शूद्रतः।।**

## षट्त्रिंशन्मतम्

श्राद्धे भोजनमात्रपर्याप्तमामं
शूद्रतो ग्राह्यम्

**[2]आमं शूद्रस्य यत्किंचिच्छ्राद्धिकं प्रतिगृह्यते।**
**तत्सर्वं भोजनायाऽलं नित्यनैमित्तिके न तु।।**

## वायुपुराणम्

ईश्वरावयवेभ्यो वर्णोत्पत्तिः, वर्णानां
वृत्तयः, ब्राह्मणं प्रति
वाणिज्यनिषेधः

**[3]वक्त्राद्यस्य ब्राह्मणाः संप्रसूताः-**
**स्तद्वक्षस्तः क्षत्रियाः पूर्वभागे।**
**वैश्याश्चोर्वोर्यस्य पद्भ्यां च शूद्राः**
**सर्वे वर्णा गात्रतः संप्रसूताः।।**
**[4]ब्रह्मा तमर्थं बुद्ध्वा तु याथातथ्येन वै प्रभुः।**
**क्षत्रियाणां बलं दण्डं युद्धमाजीवमादिशत्।।**
**याजनाध्यापनं चैव तृतीयं च परिग्रहम्।**
**ब्राह्मणानां विभुस्तेषां कर्माण्येतान्यथाऽऽदिशत्।।**
**पाशुपाल्यं च वाणिज्यं कृषिं चैव विशां ददौ।**
**शिल्पाजीवं भृतिं चैव शूद्राणां व्यदधात्प्रभुः।।**
**[5]क्रयविक्रयिणौ चैव जीवितार्थं विगर्हितौ।**
**वृत्तिरेषा तु वैश्यस्य ब्राह्मणस्य तु पातकम्।।**

(१) **मुक्ता.** ५६.
(२) **आर.** ९७ चतुर्थचरणे (नित्ये नैमित्तिके न च); **शूक.** ५९; **संर.** ९४२ गृह्यते (गृह्य च) शेषम् आरवत्.
(३) **वायु.** १।६।७१.
(४) **वायु.** १।८।१६१-१६३.
(५) **वायु.** २।१७।७७.

## ब्रह्माण्डपुराणम्

ईश्वरावयवेभ्यो वर्णोत्पत्तिः, वर्णवृत्तयः,
ब्राह्मणादेव प्रतिग्रहः, प्रतिग्रहेति-
कर्तव्यता

**[1]वक्त्राद्यस्य ब्राह्मणाः संप्रसूता**
**वक्षसश्चैव क्षत्रियाः पूर्वभागे।**
**वैश्या ऊरुभ्यां यस्य पद्भ्यां च शूद्राः**
**सर्वे वर्णा गात्रतः संप्रसूताः।।**
**[2]वर्णधर्मैश्च जीवन्त्यो व्यरुध्यन्त परस्परम्।**
**ब्रह्मा बुद्ध्वा तु तत्सर्वं याथातथ्येन स प्रभुः।।**
**क्षत्रियाणां बलं दण्डं युद्धमाजीव्यमादिशत्।**
**याजनाध्यापने ब्रह्मा तथा दानप्रतिग्रहम्।।**
**ब्राह्मणानां विभुस्तेषां कर्माण्येतान्यथाऽऽदिशत्।**
**पाशुपाल्यं च वाणिज्यं कृषिं चैव विशां ददौ।**
**शिल्पाजीवभृतां( ? वं भृतिं) चैव शूद्राणां**
**व्यदधात्पुनः।।**
**[3]अनापद्यपि धर्मेण याज्यतः शिष्यतस्तथा।**
**गृह्णन् प्रतिग्रहं विप्रो न धर्मात्परिहीयते।।**
**[4]गृह्णीयाद्ब्राह्मणादेव नित्यमाचारवर्तिनः।**
**श्रद्धया विमलं दत्तं तथा धर्मान्न हीयते।।**
**[5]समाः षण्मासमासैकषड्हत्रिदिनक्षपम्।**
**एकाहिकं च धर्माय गृह्णीयादुत्तरोत्तरम्।।**
**[6]शुचिः पवित्रपाणिश्च गृह्णीयादुत्तरामुखः।**
**अभीष्टदेवतां ध्यायन्मनसा विजितेन्द्रियः।।**
**कृतोत्तरीयको नित्यमन्तर्जानुकरस्तथा।**
**दातुरिष्टमभिध्यायन् गृह्णीयात्प्रयतः शुचिः।।**

(१) **ब्रह्माण्ड.** १।५।१०८.
(२) **ब्रह्माण्ड.** १।७।१६०-१६३.
(३) **पमा.** १।१८९; **निप्र.** २।२५६ तस्तथा (तोऽपि वा); **मुक्ता.** ५६ ग्रहं (ग्रहे); **आन.** ६२६ ग्रहं (ग्रहो).
(४) **पमा.** १।१८९.
(५) **निप्र.** २।२८३.
(६) **पदी.** ५.

## मार्कण्डेयपुराणम्

वर्णानां वृत्तयः

**[1]दानमध्ययनं यज्ञो ब्राह्मणस्य त्रिधोदितः।**
**धर्मो नान्यश्चतुर्थोऽस्ति धर्मस्तस्याऽऽपदं विना।।**
**[2]याजनाध्यापने शुद्धस्तथा पुत्र प्रतिग्रहः।**
**एतत्सम्यक् समाख्यातं त्रितयं चास्य जीविका।।**
**[3]दानमध्ययनं यज्ञः क्षत्रियस्याप्ययं त्रिधा।**
**धर्मः प्रोक्तः क्षिते रक्षा शस्त्राजीवश्च जीविका।।**
**[4]दानमध्ययनं यज्ञो वैश्यस्यापि त्रिधैव सः।**
**वाणिज्यं पाशुपाल्यं च कृषिश्चैवास्य जीविका।।**
**[5]दानं यज्ञोऽथ शुश्रूषा द्विजातीनां त्रिधा मया।**
**व्याख्यातः शूद्रधर्मोऽपि जीविका कारुकर्मजा।।**
**तद्वद्द्विजातिशुश्रूषा पोषणं क्रयविक्रयैः।**
**वर्णधर्मास्त्विमे प्रोक्ताः.................. ।।**

मृत्युपुत्रदुःसहस्य पुत्रात् सस्यहनामकात्
पुत्र्याश्च स्वयंहारिकानाम्न्याः सकाशात्
सस्यादिरक्षणोपायाः क्षेत्रादौ
जीर्णोपानद्धारणादयः

**[6]तथैव सस्यहा चान्यः सस्यर्द्धिमुपहन्ति यः।**
**तस्यापि रक्षां कुर्वीत जीर्णोपानद्विधारणात्।।**
सस्यहेति अलक्ष्मीमृत्योः पुत्रः।

आपा. १४२

**[7]तथाऽपसव्यगमनाच्चण्डालस्य प्रवेशनात्।**
**बहिर्बलिप्रदानाच्च सोमाम्बुपरिकीर्तनात्।।**

(१) **मार्क.** २५।३.
(२) **मार्क.** २५।४; **पमा.** १।१५९ शुद्धस्तथा पुत्र (शुद्धे तथा शुद्धः) एतत् (एषा) ख्यातं (ख्याता) चास्य (तस्य); **मर.** १५९ शुद्धस्त (शुद्धे त) एतत् (एषा) ख्यातं (ख्याता) चास्य (तस्य).
(३) **मार्क.** २५।५.
(४) **मार्क.** २५।६; **पमा.** १।४१७.
(५) **मार्क.** २५।७-८.
(६) **मार्क.** ४८।२३-२४; **आपा.** १४२ पूर्वार्धे (तथैव चान्यः सस्यहार्थमपि हन्ति च।) द्विधारणात् (द्विधानतः).
(७) **मार्क.** ४८।२४-२५; **आपा.** १४२ तथाऽपसव्यगमना (वृषापसव्यनयना) चतुर्थचरणे (सोमाग्न्यंबु प्रकीर्तनात्).

**[1]धान्यं खलाद्गृहाद्गोष्ठात्पयः सर्पिस्तथा परा।**
**समृद्धिमृद्धिमद्द्रव्यादपहन्ति च कन्यका।**
**सा स्वयंहारिकेत्युक्ता सदाऽन्तर्धानतत्परा।।**
स्वयंहारिकेति दुःसहस्य पुत्री। आपा. १४४
**[2]महानसादर्धसिद्धमन्नागारस्थितं तथा।**
**परिविष्यमाणं च सदा सार्धं भुङ्क्ते च भुञ्जता।।**
**उच्छेषणं मनुष्याणां हरत्यन्नं च दुर्हरा।**
**कर्मान्तागारशालाभ्यः सिद्धर्द्धिं हरति द्विज।।**
**गोस्त्रीस्तनेभ्यश्च पयःक्षीरहारी सदैव सा।**
**दध्नो घृतं तिलात्तैलं सुरागारात्तथा सुराम्।।**
**रागं कुसुम्भकादीनां कार्पासात्सूत्रमेव च।**
**सा स्वयंहारिका नाम हरत्यविरतं द्विज।।**
**[3]कुर्याच्छिखण्डिनोर्द्वन्द्वं रक्षार्थं कृत्रिमां स्त्रियम्।**
**रक्षाश्चैव गृहे लेख्या वर्ज्या चोच्छिष्टता तथा।।**
**[4]होमाग्निदेवताधूपभस्मना च परिष्क्रिया।**
**कार्या क्षीरादिभाण्डानामेवं तद्रक्षणं स्मृतम्।।**

वर्णानां जम्बूद्वीपमध्यदेशे स्थितिः,
तेषां धर्मवृत्तिरूपाणि कर्माणि
अन्तःकरणशोधकानि
संव्यवहारसाधनानि
च

**[5]ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्तःस्थिता § द्विज।**
**इज्याध्यायवणिज्याद्यैः कर्मभिः कृतपावनाः।**
**तेषां संव्यवहारश्च एभिः कर्मभिरिष्यते।।**

§ जम्बूद्वीपस्य मध्यभागे स्थिता इत्यर्थः।

(१) **मार्क.** ४८।३१-३२; **आपा.** १४४ (धान्यं गृहाद्वनं कोशात्पयसः सर्पिरेव च। सा स्वसंहारिका नाम हरत्यविहरं द्विज।।) द्वितीयार्धं नास्ति.

(२) **मार्क.** ४८।३३-३६.

(३) **मार्क.** ४८।३७; **आपा.** १४४ नोर्द्वन्द्वं (काबन्धं) मां स्त्रियम् (मस्त्रियम्) उत्तरार्धे (रक्षा चैव गृहे लेख्या सदा चाऽऽयुष्मतां तथा।।).

(४) **मार्क.** ४८।३८; **आपा.** १४४ ष्क्रिया (क्रिया) नामेवं तद्रक्षणं स्मृतम् (नां रक्षा चैवंविधा सदा).

(५) **मार्क.** ५४।८-९.

## मत्स्यपुराणम्

वामदेवावयवेभ्यो वर्णोत्पत्तिः, कृष्णाजिन-
प्रतिग्रहनिन्दा, तीर्थेषु क्षेत्रेषु
च प्रतिग्रहनिषेधः

**[1]वामदेवस्तु भगवानसृजन्मुखतो द्विजान्।**
**राजन्यानसृजद्बाह्वोर्विट्च्छूद्रानूरुपादयोः।।**
**[2]एकदेहोद्भवा वर्णाश्चत्वारोऽपि वरानने।**
**पृथग्धर्माः पृथक्छौचास्तेषां वै ब्राह्मणो वरः।।**
**[3]अस्पृश्यः स द्विजो राजन् चितियूपसमो हि सः।**
**दाने च श्राद्धकाले च दूरतः परिवर्जयेत्।।**
† कृष्णाजिनाधिकारे मत्स्यपुराणे अस्पृश्य इति। निप्र. २।२८१
**[4]न तस्य फलदं तीर्थं यावत्तद्धनमश्नुते।**
**तस्मात्तीर्थे न गृह्णीयात्पुण्येष्वायतनेषु च।**
**निमित्तेषु च सर्वेषु अप्रमत्तो भवेद्द्विजः।।**

(१) प्रयागप्रतिग्रहे तीर्थस्य निष्फलत्वमभिधाय मत्स्यपुराणे तस्मादिति। ‡ गृक. २५०

(२) अत्र तीर्थशब्देन पुण्यप्रदजलाशयस्थानमुच्यते। समुद्रगङ्गापुष्करसरस्वतीप्रभृतीनि। पुण्यायतनशब्देन क्षेत्रमुच्यते। पुरुषोत्तमकुरुक्षेत्रवाराणसीप्रभृतीनि। तत्र तीर्थप्रतिग्रहनिषेधातिक्रमेऽनिष्टफलापेक्षया 'न तस्य फलदं तीर्थम्' इति वाक्यशेषोपात्ततीर्थफलानुत्पत्तिरेवानिष्टफलत्वेन कल्प्यते, नाधिकं नरकपातादि। तीर्थफलानुत्पत्तिरपि प्रतिग्रहधनसत्त्वे तदुपभोगकाले च द्रव्यक्रयविक्रयलभ्यद्रव्यान्तरसत्त्वेऽपि तद्धनाविशेषात्। तद्धनसमाप्तौ न तीर्थफलप्रतिबन्धः। याजनादौ तु तीर्थे कृते तद्धनसत्त्वेऽपि न तीर्थफलप्रतिबन्धः, प्रतिग्रहनिषेधवाक्य एव तीर्थफलप्रतिबन्धश्रवणात्, याजनादौ दक्षिणास्वीकारे प्रतिग्रह-

† कृष्णाजिनप्रतिग्रहविषय इत्यर्थः, प्रकरणात्।

‡ गृर. गृकवत्।

(१) **मत्स्य.** ४।२८.

(२) **मत्स्य.** ३०।२०.

(३) **निप्र.** २।२८१.

(४) **गृक.** २५० प्रथमपङ्क्तिर्नास्ति; **गृर.** ४६८ सर्वं गृकवत्; **निप्र.** २।२८५-२८६.

स्वरूपाविशेषेऽपि क्रय इव प्रतिग्रहदोषाभावात्। अत एव वाजपेयादौ हस्त्यश्वानां बहुशः प्रतिग्रहेऽपि न प्रतिग्रहदोषः।

निप्र. २।२८६

## विष्णुपुराणम्

ब्रह्मणोऽवयवेभ्यो वर्णोत्पत्तिः, चातुर्वर्ण्यवृत्तयः, ब्राह्मणक्षत्रिययोरापद्वृत्तयः, आपन्निवृत्तौ आपद्वृत्तित्यागः, वृत्तिसंकरनिषेधः, भृत्यादिभरणं धर्मानुष्ठानं च धनार्जनफलम्

**[1]ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम।**
**पादोरुवक्षःस्थलतो मुखतश्च समुद्गताः।।**

अत्र पादोरुवक्षःस्थलतः शूद्रादयः समुद्गता इति क्रमो विवक्षितः। * स्मृकौ. ३

**[2]वृत्त्यर्थं याजयेच्चान्यानन्यानध्यापयेत्तथा।**
**कुर्यात्प्रतिग्रहादानं गुर्वर्थं न्यायतो द्विजः।।**

धर्मोपार्जननियमानाह – वृत्त्यर्थमिति। प्रतिग्रहादानं प्रतिग्राह्यस्य गवादेरादानं ग्रहणं गुर्वर्थं गुरुरर्थो यस्मिंस्तत्। शुक्लार्थादिति पाठे शुक्लः शुद्धार्थः( ? शुद्धः अर्थः) यस्य तस्माद्विप्रादेः, 'क्रमागतं प्रीतिदायं प्राप्तं च सह भार्यया। अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम्।।' (विस्मृ. ५८।९) इति विष्णुवचनात्। शुक्लार्थमिति पाठे शुक्लधनोपार्जननिमित्तमित्यर्थः। तत्रापि न्यायतः कालपुरुषादिप्रतिग्रहं विना। द्विजः ब्राह्मणः। वैच.

**[3]शस्त्राजीवो महीरक्षा प्रवरा तस्य जीविका।।**

शस्त्राजीवः युद्धजीविका। तस्य क्षत्रियस्य।

वैच.

**[4]पाशुपाल्यं वणिज्यं च कृषिं च मनुजेश्वर।**
**वैश्याय जीविकां ब्रह्मा ददौ लोकपितामहः।।**

**द्विजातिसंश्रयं कर्म तादर्थ्यं तेन पोषणम्।**
**क्रयविक्रयजैर्वाऽपि धनैः कारूद्भवेन च।।**

शूद्राणामप्याह – द्विजातीति। द्विजातिसंश्रयं त्रैवर्णिकशुश्रूषालक्षणं कर्म तादर्थ्यं तत्पारतन्त्र्यं च स्वधर्मः। तेन द्विजशुश्रूषालब्धेन आत्मपोषणं मुख्यम्। आपदि तु क्रयविक्रयजैः वाणिज्यलब्धैः, तदसंभवे तक्षादिकारुकर्मोद्भवेन द्रव्येण पोषणम्, 'शूद्रस्य द्विजशुश्रूषा तया जीवन्न हीयते' (यास्मृ. १।१२०) इति मनू( ? याज्ञवल्क्यो)क्तेः।

वैच.

**भृत्यादिभरणार्थाय सर्वेषां च परिग्रहः।।**

परिग्रहः अर्थसंपादनम्। वैच.

**[1]क्षात्रं कर्म द्विजस्योक्तं वैश्यं कर्म तथाऽऽपदि।**
**राजन्यस्य च वैश्योक्तं शूद्रकर्म न चैतयोः।।**

उक्तरीत्या वैश्यस्य शूद्रकर्मप्राप्तौ तन्निषेधमाह – शूद्रकर्मेति। एतयोः क्षत्रियवैश्ययोः। ब्राह्मणस्याप्युपलक्षणम्।

वैच.

**सामर्थ्ये सति तत्त्याज्यमुभाभ्यामपि पार्थिव।**
**तदेवाऽऽपदि कर्तव्यं न कुर्यात्कर्मसंकरम्।।**

उभाभ्यां क्षत्रियवैश्याभ्याम्, ब्राह्मणेनापि। शक्तस्य मुख्यकल्पनिर्बन्धः, अशक्तस्य त्वनुकल्पाश्रय एव। कर्मसंकरं वृत्त्योर्व्यतिकरम्। वैच.

**[2]सोमसंस्था हविःसंस्थाः पाकसंस्थाश्च संस्थिताः।**
**धने यतो मनुष्याणां यतेतातो धनार्जने।।**

सोमसंस्थाः अग्निष्टोमादयः सप्त, हविःसंस्थाः अग्न्याधेयाद्याः, पाकसंस्थाः अष्टकाद्याः। यथाऽऽह गौतमः – 'अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकसंस्थाः। अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणी च इति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोम अत्यग्निष्टोम उक्थः ( ? क्थ्यः) षोडशी वाजपेयोऽतिरात्रमाप्तोर्याम इति सप्त सोमसंस्थाः' इति। वैच.

---

* वैच. स्मृकौवत्।

(१) **विष्णु.** १।६।६; **स्मृकौ.** ३.

(२) **विष्णु.** ३।८।२३.

(३) **विष्णु.** ३।८।२७; **बाल.** १।११९ पृ. ३६६ जीवो मही (जीवी महा).

(४) **विष्णु.** ३।८।३०, ३२, ३४.

(१) **विष्णु.** ३।८।३८-३९.

(२) **विष्णु.** ३।११।२३; **निप्र.** २।२४४ सोम (यज्ञ) पाक (सोम) यतो म (यस्मान्म).

## विष्णुधर्मोत्तरपुराणम्

मेरुपर्वतापेक्षया वर्णदिग्विभागः, स्रष्टुर-
वयवेभ्यो वर्णोत्पत्तिः, वर्णेषु
ब्राह्मणो विष्णुविभूतिः

$ [1]अन्तरेण(? उत्तरेण) स्मृतो विप्रः पूर्वतः क्षत्रियः स्मृतः।
दक्षिणेन तथा वैश्यः शूद्रः पश्चिमतः स्मृतः।।
तस्मादुदीची विप्राणां प्राची स्यात्क्षत्रजन्मनाम्।
दक्षिणा वैश्यजातीनां शूद्राणां पश्चिमा स्मृता।।
[2]ब्राह्मणास्ते मुखाज्जाता बाहुभ्यां क्षत्रियास्तथा।
ऊरुद्वयात्तथा वैश्याः पद्भ्यां शूद्रास्तथैव च।।
[3]वक्त्राद्यस्य ब्राह्मणाः संप्रसूता
यद्वक्षसः क्षत्रियाः संप्रसूताः।
यस्योरुयुग्माच्च तथैव वैश्याः
पद्भ्यां तथा यस्य शूद्राः प्रसूताः।।
† [4]वर्णानां ब्राह्मणस्तथा।।
[5]लोकानां तु विशुद्ध्यर्थं मुखबाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत्।।
आस्याद्वै ब्राह्मणा जाता बाहुभ्यां क्षत्रियाः शुभाः।
ऊरुभ्यां च विशः सृष्टाः शूद्रः पद्भ्यामजायत।।

धार्यत्वाधार्यत्वप्रयोजका वृषभाणां
गुणदोषास्तत्फलानि च

[6]धर्मवृद्धिकरं वच्मि वृषभस्य तु लक्षणम्।
ऋषभः स समुद्राख्यः सततं कुलवर्धनः।।
मल्लिकापुष्पचित्रश्च धन्यो भवति पुंगवः।
कामलैर्माण्डलैश्चापि चित्रो भवति भोगदः।।
अतसीपुष्पवर्णश्च तथा धन्यतरः स्मृतः।
एते धन्यास्तथाऽधन्यान्कीर्तयिष्यामि ते नृप।।
कृष्णताल्वोष्ठदशना रूक्षशृङ्गशफाश्च ये।
अव्यक्तवर्णा ह्रस्वाश्च व्याघ्रभस्मनिभाश्च ये।।
ध्वाङ्क्षगृध्रसवर्णाश्च तथा मूषकसंनिभाः।
कुब्जाः काणास्तथा खञ्जाः केकराक्षास्तथैव च।।
विषमश्वेतपादाश्च उद्भ्रान्तनयनास्तथा।
न ते वृषाः § प्रयो(? मो)क्तव्या न च धार्यास्तथा गृहे।।
मोक्तव्यानां च धार्याणां भूयो वक्ष्यामि लक्षणम्।
स्वस्तिकाकारशृङ्गाश्च मेघौघसदृशस्वनाः।
महाप्रमाणाश्च तथा मत्तमातङ्गगामिनः।।
महोरस्का महोच्छ्वासा महाबलपराक्रमाः।
शिरः कर्णौ ललाटं च वालधिश्चरणानि च।।
नेत्रपार्श्वे च कृष्णानि शस्यन्ते चन्द्रमस्त्विषः।
चिह्नान्येतानि शस्यन्ते कृष्णस्य तु विशेषतः।।
भूमिं कर्षति लाङ्गूलात्प्रशस्तः स्थूलवालधिः।
पुरस्तान्न तथा नीचो वृषभश्च प्रशस्यते।।
शक्तिध्वजपताकाभा येषां राजिर्विराजते।
अनड्वाहस्तु ते धन्या ऋद्धिसिद्धिजयावहाः।।
प्रदक्षिणं निवर्तन्ते स्वयं ये विनिवर्तिताः।
समुन्नतशिरोग्रीवा धन्यास्ते कोशवर्धनाः।।
रक्तशृङ्गाग्रनयनाः श्वेतवर्णा भवन्त्यपि।
शफैः प्रवालसदृशै‡र्नास्ति धन्यतरस्ततः।।
एते धन्याः प्रयत्नेन मोक्तव्या यदि वा वृषाः।
धारिताश्च तथा मुक्ता धनधान्यविवर्धनाः।।
चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः।
लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत्।।
वृष एव स मोक्तव्यो न संधार्यो गृहे भवेत्।
यदर्थमेषा चरति गाथा लोके पुरातनी।।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्।।

---

$ अयं दिङ्निर्देशः मेरुमपेक्ष्य, प्रकरणात्।
† विष्णोरात्मविभूतयः प्रक्रान्ताः।
(१) **विध.** १।७।१०-१२.
(२) **विध.** १।२७।१७.
(३) **विध.** १।५२।३८.
(४) **विध.** १।५६।३२.
(५) **विध.** १।१०७।५५-५७.
(६) **विध.** १।१४६।४१-५८.

§ यद्यपि 'हलादौ न योज्याः' इत्यर्थोऽत्र संगच्छते, तथापि 'एवं वृषं.... मुक्त्वा न शोचेन्मरणं.... मोक्षे विधिं.... विधास्ये' इति प्रकृताध्यायोपसंहारात् अग्रिमाध्याये वृषोत्सर्गविधानाच्च, अनेकवारं मुक्तमोक्तव्यशब्दप्रयोगाच्च 'प्रमोक्तव्याः' इत्येव शुद्धः पाठः कल्प्यः। अस्माभिस्तु धारणाभिप्रायेणैते श्लोकाः संगृहीताः।
‡ 'र्नान्ये धन्यतरास्' इति शुद्धपाठसंभवः।

### विस्तरेण ब्राह्मणप्रशंसा, ब्राह्मण-प्रतिनिधित्वेन राज्ञां भूस्वामित्वम्

**पुष्कर उवाच –**

[1]ब्राह्मणान् पूजयेद्राजा ब्राह्मणान् पालयेत्सदा।
ब्राह्मणा हि महाभाग देवानामपि दैवतम्।।
ब्राह्मणानां क्षितिं दद्याद्भोगानन्यांश्च पार्थिवः।
ब्राह्मणेषु तु यद्दत्तं निधिस्तत्पारलौकिकम्।।
वेदलाङ्गलकृष्टेषु द्विजक्षेत्रेषु भारत।
उप्तस्य दानबीजस्य फलस्यान्तो न विद्यते।।
ब्रह्मस्वं चैव नाऽऽदद्याद्ब्रह्मस्वं पालयेत्तथा।
ब्रह्मस्वहरणाद्राम नरकं पश्यते नरः।।
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं सप्तपूरुषम्।।
ब्रह्मस्वं प्रणयाद्भुक्तं हिनस्त्यासप्तमं कुलम्।
द्रोहाद्भुक्तं तदेवेह कुलानां पातयेच्छतम्।।
सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम्।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम्।।
दृष्ट्वा विटं दुराचारं ब्राह्मणं न द्विषेत्क्वचित्।
ब्राह्मणानां परीवादान्नाशमाप्नोति मानवः।।
न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम्।
नैवास्ति ब्राह्मणवधात्पापं गुरुतरं क्वचित्।।
ब्रह्महा नरकं याति यावदाभूतसंप्लवम्।
वर्षाणामयुतं राम पच्यते स्नायुपूरिते।।
शोणितं यावतः पांशून्गृह्णातीह द्विजन्मनाम्।
कर्ता तावन्ति वर्षाणि कृतकृन्नरके वसेत्।।
उपद्रुतो द्विजो येन त्यजेज्जीवितमात्मनः।
ब्रह्महत्या भवेत्तस्य नात्र कार्या विचारणा।।
देहत्यागाच्च नरकं ब्राह्मणोऽपि प्रपद्यते।
तेन चाधिकमाप्नोति राम पापं नराधमः।।
अदैवं दैवतं कुर्युः कुर्युर्दैवमदैवतम्।
ब्राह्मणाश्च महाभागा नमस्यास्ते सदैव हि।।
ब्राह्मणानां तथा कार्यं यत्नात्कुर्वीत पार्थिवः।
कालातिपातं च तथा विप्रकार्ये न कारयेत्।।
निष्पीडितस्तूपवसेद्येन विद्वान्निशां जनः।
स राम नरकं याति वर्षाणां तु दशायुतम्।।
ब्राह्मणी रुदती हन्ति कुलं रोदायते( ? दयतो)ध्रुवम्।
तदश्रुवह्निर्दहति कुलं त्रिपुरुषं ध्रुवम्।।
विद्वानप्यथवाऽविद्वान्ब्राह्मणो मानमर्हति।
प्रणीतश्चाप्रणीतश्च यथाऽग्निर्द्विजपुंगव।।
प्रतिष्ठां प्राप्नुवन्तीह सुरा विप्रप्रतिष्ठिताः।
तन्मुखे तु तथाऽश्नन्ति देवाश्च पितृभिः सह।।
वह्नौ हुताच्छ्रेष्ठतमं हुतं विप्रमुखाग्निषु।
अस्कन्दमविरुद्धं च प्रायश्चित्तैर्विवर्जितम्।।
यावतो ग्रसते ग्रासान्विद्वान्विप्रः सुसंस्कृतः।
अन्नप्रदस्य तावन्तः क्रतवः परिकीर्तिताः।।
ब्राह्मणानां करान्मुक्तं तोयं शिरसि धारयेत्।
ब्राह्मणस्य करे यस्मात्सर्वतीर्थसमागमः।।
ब्राह्मणेभ्यः समुत्पन्नं त्रैलोक्यं सचराचरम्।
अमोघशापा धर्मज्ञ कथितास्ते जगत्त्रये।।
आशीर्वादममोघं च ब्राह्मणानां प्रकीर्तितम्।
आशीर्वादपराः कार्यास्तस्माद्राज्ञा द्विजोत्तमाः।।
यैः कृतः सर्वभक्ष्योऽग्निरपेयश्च महोदधिः।
क्षयी सोमोऽजवृषणस्तथैव च शतक्रतुः।।
येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति।
विपुलश्च तथा येषां प्रसादो भृगुनन्दन।।
येषां प्रसादात्क्षीणोऽपि वृद्धिमिच्छति चन्द्रमाः।
येषां प्रसादाद्रक्षोभिर्नाभिभूयेत भास्करः।।
येषां प्रसादाद्विपुलां कार्तवीर्यः श्रियं गतः।
येषां प्रसादाद्धनदो धनाध्यक्षत्वमागतः।।
अस्नातः स्नानमाप्नोति व्रतमाप्नोत्यथाव्रती।
येषां वचनमात्रेण किंभूतमधिकं ततः।।
भोगं राज्यं तथा स्वर्गं येषां वाक्येन लभ्यते।
अपावनकरः क्रोधो येषां राम सदा स्थितः।।
ते पूज्यास्ते च सत्कार्यास्तेषां दाराणि दापयेत्।
धारयन्ति जगत्सर्वं ब्राह्मणा वेदपारगाः।।
देवानाप्याययन्तीह ब्राह्मणा भृगुनन्दन।
ते तृप्तास्तर्पयन्तीह भुवनं सकलं सुराः।।
ब्राह्मणेनाऽऽहुतिर्दत्ता वह्नौ भृगुकुलोद्वह।
आदित्यमाप्नोत्यादित्याद्वृष्टिर्भवति भूतले।।

---

(१) विध. २।३२।१-३८, ४५.

अन्नस्य च तथो( ? यो)त्पत्तिरन्नाद्भूतोद्भवः स्मृतः।
तस्मात्त्रिभुवनं सर्वं ब्राह्मणैरेव धार्यते।।
ब्राह्मणप्रभवा भूमिर्ब्राह्मणप्रभवो दिवः।
ब्राह्मणानामिमे लोकाः परलोकास्तथैव च।।
इज्यास्वाध्यायतपसामुपरोधाद्यदा द्विजाः।
स्वाम्यं भुवि न विन्दन्ति क्षत्रियास्तु तदा कृताः।।
ब्राह्मणानां वचः कार्यं राजभिः सततोत्थितैः।
धर्ममर्थं च कामं च तेषां वाचि प्रतिष्ठितम्।
ब्राह्मणानां तु वाक्येन निग्रहानुग्रहावुभौ।।
यद्ब्राह्मणास्तुष्टतमा वदन्ति
तद्देवताः प्रत्यभिनन्दयन्ति।
तुष्टेषु तुष्टाः सततं भवन्ति
प्रत्यक्षदेवेषु परोक्षदेवाः।।

वर्णानां वृत्तयः, विशिष्टदंपतिपरंपरा-
जनितस्य वर्णोत्कर्षः

[1]यजनं याजनं दानं तथैवाध्यापनक्रिया।
प्रतिग्रहं चाध्ययनं विप्रकर्माणि निर्दिशेत्।।
दानमध्ययनं चैव यजनं च यथाविधि।
क्षत्रियस्य च वैश्यस्य कर्मेदं परिकीर्तितम्।।
क्षत्रियस्य विशेषस्तु प्रजानां परिपालनम्।
कृषिगोरक्षवाणिज्यं वैश्यस्य परिकीर्तितम्।
शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि चाप्यथ।।
[2]शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते।
अश्रेयाञ्श्रेयसीं जातिं गच्छत्या सप्तमाद्युगात्।।

ब्राह्मणादीनामापद्वृत्तयः आपद्यपि निषिद्धा
वृत्तयश्च, आपत्कालीनवैश्यवृत्तौ
अविक्रेयाणि विनिमेया-
विनिमेयानि च

पुष्कर उवाच –
[3]अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
जीवेत्क्षत्रियधर्मेण सा ह्यस्य ¶ वृत्त्यनन्तरा।।
उभाभ्यामप्यजीवन्वै वैश्यवृत्तिं समाचरेत्।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रवृत्तिं विवर्जयेत्।।
शूद्रो ब्राह्मणवृत्तिं च विशेषेण विवर्जयेत्।
आजीवत्सु स वृत्त्या( ? अजीवंस्तु स्ववृत्त्या) च
मध्यवृत्तिं समाचरेत्।।
ब्राह्मणः क्षत्रियो वाऽपि वैश्यवृत्त्या तु वर्तयन्।
अयः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः।।
क्षीरं क्षौद्रं दधि घृतं तैलं मज्जां गुडं कुशम्।
मद्यं नीलं च लाक्षां च लवणं प्राणिनोऽपि च।
विक्रीणीत तिलान्नैव पक्वान्नं गोरसांस्तथा।।
रसा रसैर्निहन्त( ? र्निमात)व्या गन्धेन ( ? न त्वेव)
लवणं रसैः।
कृतान्नं च कृतान्नेन तिलधा( ? ला धा)न्येन
तत्समम् ( ? त्समाः)।
वैश्यो वा क्षत्रियो वाऽपि वर्जयेद्द्विजजी -
विकाम्।।
सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहाच्च शूद्रो भवति ब्राह्मणः क्षीरविक्रयी।।
इतरेषां हि पण्यानां विक्रयान्मनुजोत्तम।
ब्राह्मणः सप्तरात्रेण वैश्यभावं हि गच्छति।।

वाणिज्यमुहूर्तः, कुसीदे वृद्धिपरिमाणम्,
कुसीदमुहूर्तः

क्षिप्राणि यानि रूक्षाणि चराणि च मृदूनि च।
वाणिज्ये तानि शस्यन्ते तिथिं रिक्तां विवर्जयेत्।।
द्विकं शतं तु गृह्णीयात्कुसीदेनापि वर्धयन्।
ततोऽधिकं तु गृह्णानश्चौरस्याऽऽप्नोति
किल्बिषम्।।
प्रतिपद्द्वादशी षष्ठी नक्षत्राणि ध्रुवाणि च।
कुसीदे वर्जनीयानि नित्यं सूर्यसुतस्य च।।

कर्षणबीजावापयोर्मुहूर्तः
धर्मकृत्यं च

कृषि( ? षिं)भूमिपतेर्भागं दत्त्वा कुर्याद्यथोदितम्।
ध्रुवाणि सौम्यं मैत्रं च वायव्यं पौष्णमाश्विनम्।।
वासवं श्रवणं चित्रा विशाखा मूलमेव च।
कृष्यारम्भे प्रशस्यन्ते तथा पुष्यपुनर्वसू।।

---

¶ आर्षः सुलुक्, 'साऽस्य वृत्तिरनन्तरा' इति वा मूलपाठः।
(१) **विध.** २।८०।५-८.
(२) **विध.** २।८१।१३.
(३) **विध.** २।८२।१-१६.

कृष्यारम्भे प्रयत्नेन तिथिं रिक्तां विवर्जयेत्।
अङ्गारकदिनं वर्ज्यं दिवसं सूर्यजस्य च।।
नक्षत्राणां यथोक्तानां मुहूर्तेषु च कारयेत्।
मुहूर्ते यदि वा ब्राह्मे सर्वकर्मसु पूजिते।।
[२]वराहं पूजयेद्देवं शेषं पृथ्वीं तथैव च।
पर्जन्यं भास्करं वायुं देवेशं शशिनं तथा।।
[३]ब्रह्माणं शंकरं देवं सुरतिं बभ्रुणं तथा।।
[४]फालं च गोयुगं चैव गन्धमाल्यान्नसंपदा।
ततोऽग्निहवनं कुर्यात्सुसमिद्धे हुताशने।।
[४]देवतानां यथोक्तानां जुहुयाच्च घृताहुतीः।
गावो भग इति द्वाभ्यां सीरां(? रा)
युञ्जन्त्यतस्त्रिभिः।।
[५]फालं शुनां सुफालेति लाङ्गलं च तथेति वै।
हुत्वा विप्रान् समभ्यर्च्य दक्षिणाभिर्यथाविधि।।

लाङ्गलेति। 'लाङ्गलं पवीरवत्सुशेव"सोमपित्सरु। तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहनम्।।' (शुसं. १२।७१) इति। आपा. १३९

[६]पूर्वोदक्प्रवणां भूमिं वाहयेत् प्राग्घलेन तु।
सीरा युञ्जन्त(? न्ति) इत्येतदृक्त्रयं कीर्तयेद्बुधः।।
[७]या ओषधय इत्येवं बीजं तदनु मन्त्रयेत्।
कृत्वा सुवर्णतोयाक्तं लक्षण्यो वापयेत् पुमान्।।
प्राङ्मुखैर्वाहयेद्गोभिः प्राङ्मुखैश्चैव वापयेत्।
शंखपुण्याहघोषेण बीजवापः प्रशस्यते।।
बीजवापे तथा मन्त्रं निबोध गदतो मम।
प्रजापते कश्यपाय देवलाय नमः सदा।
सदा मे ऋद्ध्यतां देवी बीजेषु च धनेषु च।।
भोजयेद्ब्राह्मणांश्चात्र तथैव च कृषीवलान्।।

धान्यसंग्रहे मुहूर्तः धर्मकृत्यं च,
खलयज्ञः तत्फलं च

कालश्च सर्वः पूर्वोक्तः संग्रहेऽपि प्रशस्यते।
देवतानां पितॄणां च कृत्वा तत्रापि पूजनम्।।
नववस्त्रपरीधानः श्वेतमाल्यानुलेपनः।
प्राङ्मुखः प्राशनं कुर्यात् पात्रे सौवर्णराजते।।
तत्रापि भोजयेद्विप्रांस्तथैव च कृषीवलान्।
कृष्ये विशेषतः कार्यं फल(? खल)यज्ञं भृगूद्वह।।
यूपोऽयं निहितो मध्ये पेषीवासैषकार्षकैः (?)।
तस्मादतन्द्रितो दद्यादन्नं धान्यार्थदक्षिणा (? णाम्)।।
भूमिं भित्त्वौषधीश्छित्त्वा हत्वा कीटपिपीलिकम्।
पुनन्ति खलु(? खल-)यज्ञेन कर्षिका नात्र संशयः।।

हालिकवृषभसंख्यास्तत्फलानि च, आपन्निवृत्तौ
आपद्वृत्तित्यागपूर्वकं प्रायश्चित्ताचरणम्

अष्टागवं धर्महलं षड्गवं जीवितार्थिनाम्।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्।।
आपदं च समुत्तीर्य त्यक्त्वा वित्तं च कर्मणा।
यदर्जितं ततः कुर्यात्प्रायश्चित्तं विचक्षणः।।

श्ववृत्त्या जीवनस्य निषेधः

ऋतेन जीवेदनृतेन जीवे-
न्मितेन जीवेत्प्रमितेन जीवेत्।
सत्यानृताभ्यामथवाऽपि जीवेत्
श्ववृत्तिमेकां परिवर्जयेत्तु।।

वाणिज्यसिद्ध्यर्थं काम्यं कर्म

राम उवाच —
[१]काम्यं कर्म समाचक्ष्व वाणिज्यं येन शु(? सि)ध्यति।
कृषिं च बहुलां चैव कर्मणा केन चाश्नुते।।
पुष्कर उवाच —
मूलेनोपोषितः कुर्यादिदं कर्म पुरोहितः।
उपोषितस्य धर्मज्ञ यजमानस्य नित्यशः।।

---

(१) **विध.** २।८२।१७; **आपा.** १३८ पद्मपुराणे विष्णुधर्मोत्तरखण्डे.

(२) **आपा.** १३९ पद्मपुराणे विष्णुधर्मोत्तरखण्डे.

(३) **विध.** २।८२।१८; **आपा.** १३९ (केशवं चैव गन्धमाल्यार्घसंपदा। ततो ग्रहावनं कुर्यात्सुसमिद्धे हुताशने।।) पद्मपुराणे विष्णुधर्मोत्तरखण्डे.

(४) **विध.** २।८२।१९; **आपा.** १३९ चतुर्थचरणे (सारायुज्यं ततस्त्रिभिः) पद्मपुराणे विष्णुधर्मोत्तरखण्डे.

(५) **विध.** २।८२।२०; **आपा.** १३९ पूर्वार्धे (ततः शुभं नः फालेति लाङ्गलेति तथेति च।) पद्मपुराणे विष्णुधर्मोत्तरखण्डे.

(६) **विध.** २।८२।२१; **आपा.** १३९ येत्प्राग्घलेन (येल्लाङ्लेन) न्त इत्येतदृ (न्तीत्यादि ऋ) येद्बुधः (येत्पुनः) पद्मपुराणे विष्णुधर्मोत्तरखण्डे.

(७) **विध.** २।८२।२२-३२, ३४.

(१) **विध.** २।८३।१-१३.

प्राप्तासूत्तरषाढासु प्राङ्मुखं स्नापयेन्नरम्।
युक्तैर्वेतसमूलेन शङ्खमुक्ताफलैस्तथा।।
मणिभिश्च यथालाभं कनकेन तथैव च।
अकालमूलैः कलशैश्चतुर्भिर्भृगुनन्दन।।
नवैस्तु पूजयेद्देवं शङ्खचक्रगदाधरम्।
पूर्वाषाढां तथैवापो वरुणं च निशाकरम्।।
गन्धमाल्यनमस्कारधूपदीपान्नसंपदा।
एतेषामेव जुहुयात्तथा नाम्ना घृतं द्विज।।
नीलवासावृतो भूत्वा क्षिपेदप्सु समाहितः।
नीलानि राम वासांसि पयांसि विविधानि च।।
तदा मन्थं सुरां चैव मैरेयं विविधं तथा।
शुक्लानि चैव माल्यानि धूपं दद्यात्तु कम्बुना।।
तिम्यस्थि मकरादस्थि शङ्खमुक्ताफले तथा।
सुवर्णान्तरितं कृत्वा धारयेच्च तथा मणिम्।।
कृत्वैतत्सिद्धिमाप्नोति वाणिज्ये नात्र संशयः।
समुद्रयाने च तथा कान्तारे न विषीदति।।
नीलानि राम वासांसि दक्षिणा चात्र शस्यते।
शङ्खं सुवर्णं रूप्यं च तथा मुक्ताफलानि च।।
होत्रे कर्त्रे द्विजेभ्यश्च सर्वमेतद्विधीयते।
ब्राह्मणान्भोजयेच्चात्र परमान्नं तु संस्कृतम्।।
अलङ्घयन्नित्यमथाऽऽप्यमृक्षं
करोति कर्मैतदतन्द्रितात्मा।
न जातु लाभाद्विनिवर्ततेऽसौ
समुद्रमार्गादिव निम्नगा वै।।

कृषिसिद्ध्यर्थं काम्यं
कर्म

पुष्कर उवाच –

[१]स्वयं सूपोषितो विद्वान्यजमानमुपोषितम्।
मूलेन स्नापयेन्नित्यं तथाप्या( ? तत्स्वाम्या)-
शामुखस्थितम्।।
दूर्वाकुशशमीपत्रपूर्णेन सुदृढेन च।
कुम्भद्वयेन स्नातस्तु पूजयेन्मधुसूदनम्।।
विरूपाक्षं सवरुणं चन्द्रं मूलं तथैव च।
गन्धमाल्यनमस्कारधूपदीपान्नसंपदा।।

(१) **विध.** २।८४।१-९.

एतेषामेव जुहुयात्तथा नाम्ना घृतं द्विज।
पीतवासास्ततो भूत्वा मत्स्यकुल्माषसूकरैः।।
सुराकृसरसंयुक्तैः स्नानोक्ताशामुखस्थितः।
बलिं निर्ऋतये दद्याज्जानु कृत्वा ततः क्षितौ।।
ततोऽष्टादशभिः पुष्पैर्मूलैः पञ्चभिरेव च।
सुवर्णगर्भं च मणिं विद्वाञ्शिरसि धारयेत्।।
कृत्वैतत्सकलं कर्म कृषिं बहुफलां लभेत्।
दक्षिणा चात्र दातव्या मूलानि च फलानि च।।
पीतानि चैव वस्त्राणि कनकं रजतं तथा।
भोजनं चात्र दातव्यं ब्राह्मणानामभीप्सितम्।।
अलङ्घयन्मूलमिदं हि कुर्वन्
स्नानं सदा भार्गववंशमुख्य।
कृषिं समाप्नोति सदैव विद्वान्
यथेप्सितं नात्र विचारमस्ति।।

अयाज्ययाजनफलम्, आपदि राजयाज्यान्तेवासिभ्यः प्रतिग्रहानुज्ञा, लोभादिदोषदुष्टाद्राजतः प्रतिग्रहनिषेधः

[१]अयाज्ययाजनाच्चैव नास्तिक्येन च कर्मणा।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः।।
राजतो धनमन्विच्छेत्संसीदन् स्नातकः क्षुधा।
याज्यान्तेवासिनो वाऽपि न त्वन्यत इति स्थितिः।।
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः।
नरकाणि च सर्वाणि दद्याद्राजप्रतिग्रहः।।
[२]दशसूनासमश्चक्री दशचक्रसमो ध्वजी।
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः।
[३]एतद्विज्ञाय वै राज्ञां न प्रगृह्णन्ति साधवः।।

प्रतिग्रहनिवृत्तिप्रशंसा, प्रतिग्रहानधिकारिणः, सर्वतःप्रतिग्रहाधिकारिणः सर्वतः- प्रतिग्राह्याणि च

प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्।
प्रतिग्रहेण विप्राणां ब्राह्मं तेजो विनश्यति।।

(१) **विध.** ३।२३३।११०-१११, १५२, १६७-१६८.
(२) **विध.** ३।२३३।१६८-१६९ दशध्वजि (दशध्वज); **पमा.** १।१८७ सूना (सूनि).
(३) **विध.** ३।२३३।१६९, १८७-१९३, २०८-२१०.

**न च द्रव्यमविज्ञाय विधिं धर्म्यं प्रतिग्रहे।**
**प्राज्ञः प्रतिग्रहं कुर्यादवसीदन्नपि क्षुधा।।**
**अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः।**
**अम्भस्यसं(? स्यश्म)प्लवेनै(? ने)व सह तेनैव मज्जति।।**
**तस्मान्न विद्वान्गृह्णीयाद्यस्मात्तस्मात्प्रतिग्रहम्।**
**अल्पकेनाप्यविद्वांस्तु पङ्के गौरिव सीदति।।**
**प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम्।**
**ये लोका दानशीलानां स तानाप्नोति शाश्वतान्।।**
**गुरून्भृत्यानुज्जिहीर्षुरर्चिष्यन्देवतातिथीन्।**
**सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः।।**
**गुरुष्वभ्यव(? गुरुषु त्वभ्य)तीतेषु विना वा तैर्गृहे वसन्।**
**आत्मनो वृत्तिमन्विच्छन्गृह्णीयात्साधुतः सदा।।**
**एधोदकं मूलफलमन्नमभ्युद्धृतं च यत्।**
**सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम्।।**
**आहृत्याभ्युद्यतां भिक्षां गृह्णीयादप्रचोदिताम्।**
**अन्यत्र कुलटाषण्ढपतितस्तेनविद्विषः।।**
**शय्या गृहान्कुशान्गन्धानपः पुष्पं मणीन्दधि।**
**धाना मत्स्यान् पयो मांसं शाकं चैव न निर्णुदेत्।।**

असदुपायेन धनार्जने प्रायश्चित्तम्

[1]**यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्।**
**तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च।।**
**जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः।**
**मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात्।।**

अनापदि उत्कृष्टनिकृष्टवर्णवृत्तिनिषेधः

[2]**वर्णाधिकस्य(? श्च) जीवित्वा वर्णहीनेन कर्मणा।**
**तस्यैव योनिमाप्नोति नात्र कार्या विचारणा।।**
**तथैवाधिकवर्णस्य यदि जीवति कर्मणा।**
**हीनवर्णस्तथा लोके भवत्यन्धः स दुर्मतिः।।**
**यस्यान्नेनोदरस्थेन मृत्युमेति द्विजः क्वचित्।**
**तस्यैव योनिमाप्नोति स्वकृतेनापि कर्मणा।।**

(१) **विध.** ३।२३४।१४१-१४२.
(२) **विध.** ३।२५३।२४-२६.

शूद्रादीनां स्वानन्तरोत्तमवर्णो दैवतम्

**हंस उवाच –**

[1]**शूद्राणां दैवतं वैश्या वैश्यानां क्षत्रियास्तथा।**
**ब्राह्मणाः क्षत्रियाणां च तेषामपि हुताशनः।।**

ब्राह्मणप्रशंसा

**हंस उवाच –**

[2]**ब्राह्मणा दैवतं भूमौ ब्राह्मणा दिवि दैवतम्।**
**ब्राह्मणेभ्यः परं नास्ति भूतं किंचिज्जगत्त्रये।।**
**अदेवं दैवतं कुर्युः कुर्युर्दैवमदैवतम्।**
**ब्राह्मणा हि महाभागाः पूज्यन्ते सततं द्विजाः।।**
**ब्राह्मणेभ्यः समुत्पन्ना देवाः पूर्वमिति श्रुतिः।**
**ब्राह्मणेभ्यो जगत्सर्वं तस्मात्पूज्यतमाः सदा।।**
**एषामश्नन्ति वक्त्रेण देवताः पितरस्तथा।**
**ऋषयश्च महाभागाः किं भूतमधिकं ततः।।**
**यदेव मनुजो भक्त्या ब्राह्मणेभ्यः प्रयच्छति।**
**तदेवाऽऽप्नोति धर्मज्ञा बहु जन्मनि जन्मनि।।**
**तालवृन्तानिलेनैवं श्रान्तसंवाहनेन च।**
**उन्मार्जनेन गात्राणां तथाऽप्यञ्जनकर्मणा।**
**पादशौचप्रदानेन पादयोः शौ(? शो)चनेन च।**
**परिचर्यया यथाकाममेकेनैव द्विजोत्तमाः।।**
**अग्निष्टोममवाप्नोति स्वर्गं लोकं च गच्छति।**
**ब्राह्मणाज्ञां शुभां कृत्वा नाकलोके महीयते।।**
**यद्ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः प्रत्यभिनन्दयन्ति।**
**तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः।।**

त्रिविधानि धनानि शुक्लशबलकृष्णरूपाणि तेषां लक्षणानि फलानि च

[3]**कर्मणां धनसाध्यानां धनं च त्रिविधं स्मृतम्।**
**कृष्णं च शबलं चैव शुक्लं च द्विजसत्तमाः।।**
**त्रिविधस्य फलं तस्य त्रिविधं परिकीर्तितम्।**
**कृष्णेन यत्कृतं किंचित्तिर्यक्त्वे तद्धि भुज्यते।।**

(१) **विध.** ३।२८९।१.
(२) **विध.** ३।२९०।१-९.
(३) **विध.** ३।२९१।७-२०.

वर्णानां हि धनं शुक्लमर्जितं यत्स्वकर्मणा।
शबलं तु समुद्दिष्टं तथाऽनन्तरकर्मणा।।
वर्णोत्तमस्य हीनस्य कर्मणा कृष्णमुच्यते।
तथाऽपि शुक्लं वक्ष्यामि वर्णानां तु द्विजोत्तमाः।।
प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा।
गुणान्वितेभ्यो विप्रस्य शुक्लं तत्त्रिविधं धनम्।।
युद्धोपलब्धं कारं च दण्डाच्च व्यवहारतः।
क्षत्रियस्य धनं शुक्लं त्रिविधं परिकीर्तितम्।।
कृषिवाणिज्यगोरक्षाः कृत्वा शुक्लं तथा विशः।
द्विजशुश्रूषया लब्धं शुक्लं शूद्रस्य कीर्तितम्।।
न कथंचन कुर्वीत ब्राह्मणः कर्म वार्षलम्।
वृषलः कर्म वा ब्राह्मं पतनीयेतरेतरम्।।
उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते।।
सर्वेषामेव वर्णानां वक्ष्यामि विविधं धनम्।
पार्श्विकद्यूतचौर्यात्तु प्रतिरूपकसाहसैः।
व्याजेनोपार्जितं यत्तत्सर्वेषां कृष्णमुच्यते।।
शिल्पानुवृत्त्या यत्प्राप्तं कुसीदेन तथा धनम्।
कृतोपकारादाप्तं च शबलं समुदाहृतम्।।
क्रमागतं प्रीतिदायं प्राप्तं च सह भार्यया।
अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम्।
शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत्।।
न्यायागतेनाथ धनेन विद्वान्
पुण्यानि कृत्वा दिवि देवभोगान्।
चिरं समाश्नाति महानुभावो
न्यायेन तस्माद्धनमर्जनीयम्।।

प्रतिग्रहाधिकारिविशेषणानि
प्रतिग्रहविधिः प्रतिग्राह्य-
वस्तुदेवताश्च

[1]शुचिनाऽशुचिना वाऽपि ग्राह्या त्वभयदक्षिणा।
कालः स एव ग्रहणे यदा भयमुपस्थितम्।।
§ प्रतिग्रहाण्यथान्यानि ग्राह्याणि शुचिना सदा।
मृतके सूतके चैव न ग्राह्याणि द्विजोत्तमाः।।

§ प्रतिगृह्यन्ते इति प्रतिग्रहाणि। नपुंसकत्वमार्षम्।
(१) विध. ३।३०१।७-९.

अभ्यक्तेन च धर्मज्ञास्तथा मुक्तशिखेन च।
स्नातः सम्यगुपस्पृश्य गृह्णीयात्प्रयतः शुचिः।।
[2]तोयं दद्यात्तथा दाता दाने विधिरयं स्मृतः।
प्रतिग्रहीता सावित्रं सर्वत्रैव तु कीर्तयेत्।।
[3]ततस्तु कीर्तयेत्सार्धं द्रव्येण द्रव्यदेवताम्।
समापयेत्ततः पश्चात्कामस्तुत्या प्रतिग्रहम्।।

सावित्रं सवितृदैवतं यजुः 'देवस्य त्वा' इत्यादि 'प्रतिगृह्णामि' (शुसं. २।११) इत्यन्तं द्वितीयाध्याये पठितम्। कामस्तुतिः 'कोऽदात्' (शुसं. ७।४८) इत्यादिका तत्रैव सप्तमाध्याये। पदी. ५

[3]तदन्ते कीर्तयेत्स्वस्ति प्रतिग्रहविधिस्त्वयम्।।
[4]प्रतिग्रहं पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात्।
मन्दं पठेत्तु राजन्यादुपांशु च तथा विशः।।

प्रतिग्रहं प्रतिग्रहमन्त्रम्। मन्द्रं मध्यमस्वरम्।
पदी. ६

[5]मनसा तु तथा शूद्रात्स्वस्तिवाचनिकं तथा।
सोंकारं ब्राह्मणे कुर्यान्निरोंकारं महीपतौ।
उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्तितम्।।
[6]अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता।
कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्तिताः।।
[7]प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः।
तथा चैकशफं सर्वं कथितं यमदैवतम्।।

(१) विध. ३।३०१।१०; निप्र. २।२९० उत्तरार्धे(प्रतिग्रहीता सावित्रीं सर्वत्रैवानुकीर्तयेत्) उत्त.; पदी.५ त्रैव तु की (त्रैवानुकी)उत्त.
(२) विध. ३।३०१।११; निप्र. २।२९० द्रव्येण द्र (द्रव्ये तद्द्र); पदी. ५.
(३) निप्र. २।२९०; पदी. ५.
(४) विध. ३।३०१।१२ त्तमात् (त्तमः); निप्र. २।२९० ग्रहं (ग्रहे); पदी. ६ मन्दं (मन्द्रं) न्यादु (न्ये उ) विशः (विशि) आदित्यपुराणे.
(५) विध. ३।३०१।१३-१४; निप्र. २।२९१ निकं तथा (नकं भवेत्) कीर्तितम् (कीर्तयेत्) : २।२९२ द्वितीयार्धमात्रम्; पदी. ६ शूद्रात (शूद्रे) निकं तथा (नमेव च) षष्ठचरणे (मनसा स्वस्ति शूद्रजे) आदित्यपुराणे.
(६) विध. ३।३०१।१४-१५ कन्या दासस्त (कन्यादानं त); निप्र. २।२९१-२९२; पदी. ६.
(७) विध. ३।३०१।१५ उत्त.; निप्र. २।२९२; पदी. ६.

[1]माहिषं च तथा याम्यं चोष्ट्रं वै नैर्ऋतं भवेत्।।
रौद्री धेनुर्विनिर्दिष्टा छागमाग्नेयमुच्यते।।
[2]मेषं तु वारुणं विद्याद्वराहो वैष्णवः स्मृतः।
आरण्याः पशवः सर्वे कथिता वायुदैवताः।।
[3]जलाशयानि सर्वाणि वारिधानी कमण्डलुः।
कुम्भं च करकं चैव वारुणानि द्विजोत्तमाः।
[4]समुद्रजानि रत्नानि वारुणानि द्विजोत्तमाः।
आग्नेयं कनकं प्रोक्तं सर्वलोहानि चाप्यथ।।
[5]प्राजापत्यानि सस्यानि पक्वान्नमपि च द्विजाः।
ज्ञेयानि सर्वगन्धानि गान्धर्वाणि विचक्षणैः।।
[6]बार्हस्पत्यं स्मृतं वासः सौम्यान्यथ रसानि च।
पक्षिणश्च तथा सर्वे वायव्याः परिकीर्तिताः।।
[7]विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च।
सारस्वतानि ज्ञेयानि पुस्तकाद्यानि पण्डितैः।।
[8]सर्वेषां शिल्पभाण्डानां विश्वकर्मा तु देवता।
द्रुमाणामथ पुष्पाणां शाककहारितकैः सह।।

(१) विध. ३।३०१।१६; निप्र. २।२९२ (महिषश्च तथा याम्य उष्ट्रो वै नैर्ऋतो भवेत्। रौद्री धेनुर्विनिर्दिष्टा छाग आग्नेय ईरितः।।); पदी. ६ षं च (षश्च) म्यं चोष्ट्रं (म्य उष्ट्रो) तं भ (तो भ) मुच्यते (मादिशेत्).

(२) विध. ३।३०१।१७; निप्र. २।२९२ मेषं (शेषं); पदी. ६ हो वैष्णवः स्मृतः (हं वैष्णवं तथा) दैव (देव).

(३) विध. ३।३०१।१८; निप्र. २।२९३ च क (सक) द्विजोत्तमाः (विनिर्दिशेत्); पदी. ६-७ धानी (धार्नी) लुः (लुम्) द्विजोत्तमाः (निबोधत).

(४) विध. ३।३०१।१९; निप्र. २।२९३ द्वितीयचरणे (सामुद्राणि तथैव च) चतुर्थचरणे (सर्वं लोहं तथैव च); पदी. ७.

(५) विध. ३।३०१।२०; निप्र. २।२९३ सस्यानि पक्वान्न (बीजानि यज्ञीय) गन्धानि (बीजानि); पदी. ७ उत्तरार्धे (ज्ञेयाश्च सर्वगन्धास्तु गान्धर्वा वै विचक्षणैः।।);

(६) विध. ३।३०१।२१; निप्र. २।२९३ च (तु); पदी. ७ द्वितीयचरणे (सौम्या ज्ञेया रसास्तथा) णश्च (णस्तु).

(७) विध.३।३०१।२२; निप्र.२।२९३ विनिर्दि (समुद्दि) ज्ञेयानि (सर्वाणि) द्यानि (दीनि); पदी. ७ द्यानि (दीनि).

(८) विध. ३।३०१।२३; निप्र. २।२९३ र्मा तु देवता (र्मैव दैवतम्) उत्तरार्धे (द्रुमाणामथ सर्वेषां लताहरितकैः सह।।); पदी. ७ देवता (दैवतः) शाकहा (शाकैर्ह).

[1]फलानामपि सर्वेषां तथा ज्ञेयो वनस्पतिः।
मत्स्यमांसं विनिर्दिष्टं प्राजापत्यं तथैव च।।
[2]छत्रं कृष्णाजिनं शय्या रथमासनमेव च।
उपानहौ तथा यानं यच्चान्यत् प्राणिवर्जितम्।।
[3]उत्तानाङ्गिरसे त्वेतत्प्रतिगृह्णीत मानवः।
पर्जन्याय तथा सीरं शस्त्रवर्मध्वजादिकम्।।
[4]रणोपकरणं सर्वं कथितं शक्रदैवतम्।
गृहं च शक्रदैवत्यं यदनुक्तं द्विजोत्तमाः।
तज्ज्ञेयं विष्णुदेवत्यं सर्वं वा द्विजसत्तमाः।।

प्रतिग्राह्यवस्तुभेदेन स्वस्वत्वोत्पादकाः प्रदक्षिणारोहणादयः क्रियाभेदाः

[5]भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणम्।
करे गृह्य तथा कन्यां दासीदासौ द्विजोत्तमाः।
करं तु हृदि विन्यस्य धर्म्यो ज्ञेयः प्रतिग्रहः।।
[6]आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्तितः।
तथा चैकशफानां च सर्वेषामविशेषतः।।
[7]प्रतिगृह्णीत गां पुच्छे ह्यन्ते कृष्णाजिनं तथा।
कर्णेऽजाः पशवश्चान्ये ग्राह्याः पुच्छे विचक्षणैः।।

(१) विध. ३।३०१।२४; निप्र. २।२९३ मांसं (मांसे) र्दिष्टं (र्दिष्टे) पत्यं (पत्ये); पदी. ७ (फलानामपि सर्वेषां ज्ञेयो देवो वनस्पतिः। मत्स्यमांसे विनिर्दिष्टे प्राजापत्ये गजस्तथा।।).

(२) विध. ३।३०१।२५; निप्र. २।२९३ यानं (यामं); पदी. ७.

(३) विध. ३।३०१।२६; निप्र. २।२९३ से त्वेतत् (सं चैव) पू.; पदी. ७ (सर्वमाङ्गिरसत्वेन प्रतिगृह्णीत मानवः। शूरोपयोगि यत्सर्वं शस्त्रवर्मध्वजादिकम्।।).

(४) विध. ३।३०१।२७-२८ शक्र (चक्र) द्वितीयार्धे (ग्रहं तु सर्वदैवत्यं यद्यदुक्तं द्विजोत्तमाः।); निप्र. २।२९३ रणो (जपो) सर्वं (द्रव्यं) द्विजसत्तमाः (विष्णुदेवतम्); पदी. ७ कथितं शक्र (विज्ञेयं सर्वं).

(५) विध. ३।३०१।२८-२९; पदी. ८ कृत्वा (कुर्वन्) द्वितीयार्धे (करे गृहीत्वा कन्यां तु दासदास्यौ द्विजोत्तमः।).

(६) विध. ३।३०१।३०; पदी. ८ नां च (नां तु) षामवि (षां वा वि).

(७) विध. ३।३०१।३१; पदी. ८ गां पुच्छे ह्यन्ते (ताञ्शृङ्गे पुच्छे) पू.

शृङ्गिणामेकशफानां प्रतिग्रहः शृङ्गं स्पृष्ट्वा कार्यः, अन्येषामेकशफानां तु कर्णं स्पृष्ट्वेति व्यवस्था।

पदी. ८

[1]गृह्णीयान्महिषं पृष्ठे खरं वै पृष्ठदेशतः।।
[2]प्रतिग्रहस्त्वथोष्ट्रस्य आरुह्यैव तथा भवेत्।
बीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः।।
[3]वस्त्रं दशान्तादादद्यात्परिधायाथ वा पुनः।
आरुह्योपानहौ मञ्चमारुह्यैव च पादुके।।
[4]ईषायां तु रथो ग्राह्यश्छत्रं दण्डे तथैव च।
द्रुमाणामथ सर्वेषां मूले न्यस्तकरो द्विजाः।।
[5]आयुधानि समादाय तथाऽऽमुच्य विभूषणम्।
वर्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम्।।

ईषायां रथाग्रदण्डे। आमुच्य धारयित्वा। पदी. ९

[6]अवतीर्य तु सर्वाणि जलस्थानानि वै द्विजाः।
द्रव्याण्यन्यान्यथाऽऽदाय स्पृष्ट्वा तु ब्राह्मणः पठेत्।।
[7]कन्यादाने तु न पठेद्द्रव्याणां तु पृथक्पृथक्।
प्रतिग्रहे द्विजश्रेष्ठास्तत्रैवान्तर्भवन्ति ते।।
[8]द्रव्याणामथ सर्वेषां देवसंश्रवणान्नराः।
वाचयेज्जलमादाय करेणाथ प्रतिग्रहम्।।
[9]दातुर्मन्त्रप्रयोगान्ते ह्यमुकस्मै सुराय वै।
इदमांप्रतिगृह्णामि तदन्ते स्वस्ति कीर्तयेत्।।

(१) निप्र. २।२९२; पदी. ८ पृष्ठे (शृङ्गे).
(२) विध. ३।३०१।३२; निप्र. २।२९२ पूर्वार्धे (प्रतिग्रहमथोष्ट्रस्य यानानां चाधिरोहणात्।); पदी. ८ निप्रवत्.
(३) विध. ३।३०१।३३ वस्त्रं (वसुं) मञ्च (मन्त्र); निप्र. २।२९२ मञ्च (चैव) च (तु); पदी. ८.
(४) विध. ३।३०१।३४ पूर्वार्धे (ईषाधस्तु रथं ग्राह्यं छत्रं दण्डे तु वाचयेत्।) पदी. ९ उत्तरार्धे (द्रुमांश्च प्रतिगृह्णीयान्मूले न्यस्तकरो द्विजः।।).
(५) विध. ३।३०१।३५; थाऽऽमुच्य (थोन्मुच्य); पदी. ८-९ तथा स्पृष्ट्वा (तु संस्पृश्य) पूर्वोत्तरार्धे व्यत्यासेन पठिते व्यवहिते च.
(६) विध. ३।३०१।३६; पदी. ८ तु स (च स) तु ब्रा (तान्ब्रा) पूर्वोत्तरार्धे व्यत्यासेन पठिते व्यवहिते च.
(७) विध. ३।३०१।३७ न (च); पदी. ८.
(८) विध. ३।३०१।३८; देव (द्रव्य); पदी. ७ श्रवणान्नराः (श्रयणान्नरः).
(९) पदी. ७.

प्रतिग्रहधर्मज्ञस्यैव प्रतिग्रहाधिकारः

[1]प्रतिग्रहस्य यो धर्म्यं न जानाति द्विजो विधिम्।
द्रव्यस्तैन्यसमायुक्तो नरकं प्रतिपद्यते।
निष्क्रीणाति तु तद्द्रव्यं ब्राह्मणस्तु प्रतिग्रहात्।।
विधिं तु धर्म्यं विज्ञाय ब्राह्मणस्तु प्रतिग्रहे।
आत्मनः श्रेयसा योगं कुर्याद्दाता तथैव च।।
विधिं धर्म्यमविज्ञाय यस्तु कुर्यात्प्रतिग्रहम्।
दात्रा सह तरत्येव नैव दुर्गाण्यसौ द्विजाः।
तस्मात्सर्वप्रयत्नेन विधिर्ज्ञेयः प्रतिग्रहे।।
प्रतिग्रहो यो विधिना गृहीतो
द्वयोस्तु योगं परमेण कुर्यात्।
परत्र संमृत्य तथेह लोके
स श्रेयसे नात्र विचारमस्ति।।

ऋणापाकरणमावश्यकम्, वर्णक्रमेण वृद्धिपरिमाणम्, प्रीतिदाने साधिव्यवहारे च वृद्धिविवेचनम्

हंस उवाच —

[2]उत्तमर्णाय दातव्यमधमर्णेन याचितम्।
ब्राह्मणेन्द्रा धनं सर्वं निह्नवे तच्च भावितम्।।
सर्वोपायैर्धनी वित्तमृणिकादाप्नुयात्स्वकम्।
न स राज्ञाऽभियोक्तव्यः स्वकं संसाधयन्धनम्।।
अर्थनिह्नव( ? अर्थं निह्नूय)मानं तु भावनाभिविभावितम्।
दापयेद्धनिकस्यार्थं राज्ञो( ? जा) दण्डं च तत्समम्।
मिथ्याभियोगे द्विगुणमिति योगाद्धनं हरेत्।।
भागं विंशतिमं दद्यात्प्राप्तार्थो धनिको नृपे।
यदि राजबलेनासौ तद्धि तस्मादवाप्नुयात्।।
द्विकं त्रिकं चतुष्कं च पञ्चकं च तथा शतम्।
वर्णानुक्रमतो वृद्धिः प्रतिमासं प्रकीर्तिता।।
स्वयं कृतां तथा वृद्धिं सर्वे सर्वासु योनिषु।
दातुमर्हन्ति विप्रेन्द्रा इति मे निश्चिता मतिः।।

(१) विध. ३।३०१।३९-४१; ४३-४५.
(२) विध. ३।३३१।१-३१.

न क्वचित्प्रीतिदत्तानां वृद्धिः संवत्सरं भवेत्।
तेषामपि भवेद्वृद्धिर्गते संवत्सरे तथा।।
सा च वृद्धिर्यथोक्ता वै वर्णानामनुपूर्वशः।
तथाविधा ग्रहीतव्या नान्यथेति हि निश्चयः।।
आधिभुग्दीयते वृद्धिं नष्टामाधिं च दापयेत्।
दैवराजकृतं दोषं विना ब्राह्मणसत्तमाः।।
अन्त्यवृद्धौ प्रविष्टायां चाऽऽर्तौ त्यागो विधीयते।
भोज्यस्याऽऽधेः परित्यागः प्रविष्टे तु धने भवेत्।।
भोगस्य गणना कार्या न तत्र वचनादृते।
धनिनोऽर्थं न हीयेत आधौ प्राणयुते मृते।।
हेतुभूतस्तु मरणे न चेत्स्यादुत्तमर्णिकः।
आधौ विवदमानानां भुक्ता जीवन्ति चापराः।।
अन्यस्याऽऽधीकृतां भूमिं यश्चान्यस्य प्रयच्छति।
स्वयमेव नरेन्द्रस्तं घातयेदविचारयन्।
द्रव्येष्वेवमथान्येषु दण्डः स्याद्द्विगुणं भवेत्।।
आधौ समुद्रे नष्टे तु मुद्रा यत्र न दृश्यते।
न तत्र हीयते वित्तं धनिकस्य कथंचन।।
अन्यथा तु तथा नष्टे धनिकस्यैव हीयते।।

हिरण्यवस्त्रधान्यपश्वादीनां
वृद्ध्यवसानमर्यादाः

अन्त्या वृद्धिर्हिरण्यस्य द्विगुणा परिकीर्तिता।
वस्त्रस्य त्रिगुणा प्रोक्ता धान्यस्य तु चतुर्गुणा।
रसस्याष्टगुणा वृद्धिः स्त्रीपशूनां च संततिः।।
स्त्रीपशूनामृते वृद्धिः पशूनां चैव विद्यते।
उरभ्राणां भवेद्वृद्धिः सति पुंस्त्वे हि वै द्विजाः।।
ऊर्णावृद्धिर्भवेत्तेषां वर्षाणि द्वादशैव तु।
द्रव्याणामप्यनुक्तानां वृद्धिर्ज्ञेया चतुर्गुणा।।

अपाक्रियमाणर्णाग्रहणे वृद्धिनिरोधः

दीयमान( ? नं) प्रयुक्तं तु पुरुषस्याप्रगृह्णतः।
ततः परं न वृद्धिः स्यात्कथंचिद्द्विजसत्तमाः।।
स्वमर्थं यो न गृह्णाति दीयमानं पुनःपुनः।
तस्मात्स हीयते विप्रा दाता तत्रानृणो भवेत्।।

ऋणापाकरणाधिकारिणः

पिता प्रवसितो यस्य ब्राह्मणा द्विदशाः समाः।
ऋणं तस्य सुतैर्देयं मृतस्य यदि वा पुनः।।
पैतृकं तु ऋणं पुत्रः पौत्रो वा दातुमर्हति।
न का( ? नाका)मस्तच्चतुर्थं तु( ? र्थस्तु)दातुमर्हति कर्हिचित्।।
रिक्थग्राही तथा पुत्रः स्त्रीग्राही धनदासिकः।
पुत्रे स्थितेऽपि दातव्यमृणं वै धनहारिणाम्।
रिक्थग्राही सुताभावे स्त्रीग्राही दातुमर्हति।।

पुनर्व्यवहारविधिः

स्वयं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम्।
स दत्त्वा निर्जितां वृद्धिं कारयेत्परिवर्तयेत्।।
अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयन्।
यावती संभवेद्वृद्धिस्तावतीं दातुमर्हति।।

प्रतिभूत्रैविध्यं तत्र ऋणापाक्रियान-
पाक्रियाविवेकश्च

प्रातिभाव्ये वृथा दानं द्यूतमध्ययनं च यत्।
दण्डशुल्कावशेषं तु न पुत्रो दातुमर्हति।।
दर्शने प्रत्यये दाने प्रातिभाव्यं त्रिधा स्मृतम्।
आद्यौ तु वितथे दद्यादितरस्य सुतावपि।।
दर्शने प्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय ये स्थिताः।।
प्रकाशं प्रतिभूर्यत्र दापितो धनिनां धनम्।
सोऽयं तस्य तु तद्द्रव्यमृणिको दातुमर्हति।।
वर्णत्रयं विप्रवरा ऋणार्थं
क्षीणे विशुद्धाविह कर्म कार्यम्।
क्षीणोऽग्रजं सा तु यथोदयं त-
द्दाप्यौ न कर्माहरणे तदर्थम्।।

अस्वामिकपण्यविक्रयदुष्क्रीतपण्यविक्रय-
विषयकाणि विधानानि

हंस उवाच –

[1]द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात्।
प्रकाशक्रयतः शुद्धिः क्रीतः स्तेयो रहः क्रमात्।।
हीनमूल्यं बलात्क्रीतं ततस्तद्दोषभाग्भवेत्।
न गूहेताऽऽगमं क्रीताच्छुद्धिस्तस्य तदागमात्।।
स्वामी तु प्राप्नुयाद्वित्तं प्रकाशं रह एव वा।
विक्रीय पण्यं मूल्येन यः क्रीतं न नियच्छति।।

(१) विध. ३।३३५।१-१३.

स्थावरस्य फलं दाप्यो जङ्गमस्य क्रियाफलम्।
अर्घं चेन्न प्रहीयेत सोदयं पण्यमावहेत्।।
स्थानिनामेष नियमो दिग्लाभश्च दिशागते।
उपहन्येत वा पण्यं दह्येतापह्रियेत वा।
विक्रेतुरेव सोऽनर्थो विक्रेता संप्रयच्छति।।
दीयमानं न गृह्णाति क्रीतं पण्यं तु यः क्रयी।
विक्रीणानं(? णीत) तदन्यत्र विक्रेता
नापराध्नुयात्।।
निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति।
मूल्यं तद्द्विगुणं दाप्या(? प्यो) विनेयश्च
तथा भवेत्।।
दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः।।
क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी।
विक्रीतं प्रतिदेयं तु यथा विप्रास्तथा शृणु।।
द्व्यहादेव भवेद्देयं पञ्चाहाद्बाह्यमेव तु।
सप्ताहेन तथा रत्नं लोहस्तस्मिंस्तथाऽहनि।।
द्विपदं चार्धमासेन बीजानि दशभिर्दिनैः।
तृतीयेऽहनि वस्त्रं च शरं चैवापरेऽहनि।।
परिभुक्तं तु यद्वासः क्लिष्टरूपं महीसमम्।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः।।
द्रव्यं तु विक्रीतमपि स्वकं हि
विना(? विक्रा)यको वा तदवाप्नुयाद्वै।
क्रेता न (? तु) कुर्याद्यदि वञ्चनां वा
विक्रेतुरेवेह पुनस्तदिष्टम्।।

ब्राह्मणप्रशंसा

[1]नावमानं त्वया कार्यं ब्राह्मणानां कथंचन।
ब्राह्मणो हि महद्भूतं विज्ञेयं दैवतं परम्।।

दुष्टा राजानस्तेभ्यः प्रतिग्रहस्य
निषेधश्च

[2]दशसूनासहस्राणि यो वाहयति सौनिकः।
तेन तुल्यः स्मृतो राजा घोरस्तस्मात्प्रतिग्रहः।।
अधार्मिकराजविषयेयं निन्दा। पमा. १।१८७

(१) विध. ३।३४८।७.
(२) पमा. १।१८७-१८८.

येषां न विषये विप्रा यज्ञैर्यज्ञपतिं हरिम्।
यजन्ते भूभुजां तेषामेतत्सूनोदितं फलम्।।
येषां पाषण्डसंकीर्णं राष्ट्रं न ब्राह्मणोत्कटम्।
एते सूनासहस्राणां दशानां भागिनो नृपाः।।
येषां न यज्ञपुरुषः कारणं पुरुषोत्तमः।
ते तु पापसमाचाराः सूनापापोपभागिनः।।

अत्यन्तापदि सर्वतः प्रतिग्रहानुमतिः,
राजतः प्रतिग्रहस्य
निषेधः

[1]ग्राह्यं प्राणप्रदानं तु चण्डालात्पुल्कसादपि।
जीवन्सर्वमवाप्नोति जीवन्कर्म करोति च।।
[2]शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः।।
[3]लोभात्मानो न जानीयुर्ब्राह्मणा राजकिल्बिषम्।
वरं चर्मादि मन्तव्यं न तु राजप्रतिग्रहः।।
[4]राजकिल्बिषदग्धानां ब्राह्मणानां युधिष्ठिर।
खिन्नानामपि जीवानां पुनर्जन्म न विद्यते।।
प्रशस्तमिति शेषः। बाल. १।१४१ पृ. ४०२
पाषाणखण्डसंकीर्णं न राजब्राह्मणोत्तरी।
एनसां तु सहस्राणां दशानां भागिनो नृपाः।।

## श्रीमद्भागवतपुराणम्

भगवदवयवेभ्यः सवृत्तिक-
वर्णोत्पत्तिः

[5]पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः।
ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत।।

वर्णानां तत उत्पत्तिं दर्शयति – पुरुषस्येति। ब्रह्म ब्राह्मणः मुखमिति कार्यकारणयोरभेदविवक्षयोक्तं बाहव इति च। क्षत्रं क्षत्रियः। श्रीटी.

[6]मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह।
यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद्ब्राह्मणो गुरुः।।

(१) मुक्ता. ५९; बाल. १।२१६ पृ. ४६९ चण्डा (चाण्डा).
(२) मुक्ता. ५९.
(३) बाल. १।१२१ पृ. ३८३ पू., १।१४१ पृ. ४०२.
(४) बाल. १।१४१ पृ. ४०२.
(५) भाग. २।५।३७.
(६) भाग. ३।६।३०-३४.

अवर्तत प्रवृत्तम्। ब्रह्म वेदः। यस्तु उन्मुखत्वात् मुखोद्भवत्वात् वर्णानां मुख्यः मुख्य इव प्रथमः गुरुश्चाभूत्, सोऽपि मुखतोऽवर्ततेत्यनुषङ्गः। अध्यापनादिना ब्राह्मणस्य वेदो वृत्तिः, तया वृत्त्या सह ब्राह्मणो मुखतो जात इत्यर्थः। एवमुत्तरत्र वर्णत्रयेऽपि ज्ञातव्यम्। श्रीटी.

**बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः।**
**यो जातस्त्रायते वर्णान्पौरुषः कण्टकक्षतात्।।**

क्षत्रं पालनरूपा वृत्तिः, तत्क्षत्रम् अनुव्रतः अनुसृतः क्षत्रियोऽपि बाहुभ्योऽवर्तत इत्यर्थः। तदनुव्रतत्वमेवाऽऽह – य इति। पौरुषः पुरुषस्य विष्णोः अंशः कण्टकाः चोरादयः, तेभ्यो यत् क्षतम् उपद्रवः, तस्मात् त्रायते रक्षति। श्रीटी.

**विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः।**
**वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत्।।**

विशः कृष्यादिव्यवसायाः लोकस्य वृत्तिकरीः जीविकाहेतवः तस्य विभोः ऊर्वोः प्रवृत्ताः। तदुद्भवः ऊरुजः वार्तां जीविकां यः स्ववृत्त्या संपादितवान्। श्रीटी.

**पद्भ्यां भगवतो जज्ञे शुश्रूषाधर्मसिद्धये।**
**तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः।।**

तस्यां निमित्तभूतायाम्। यस्य वृत्त्या हरिः स्वयमेव तुष्यते। श्रीटी.

**एते वर्णाः स्वधर्मेण यजन्ति स्वगुरुं हरिम्।**
**श्रद्धयाऽऽत्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः।।**

यत् यस्मात् जाताः। गुरुत्वाज्जनकत्वाद्वृत्तिप्रदत्वाच्च हरेराराधनं तेषां परो धर्म इत्यर्थः। श्रीटी.

ब्राह्मणानां वर्णश्रेष्ठत्वं श्रेष्ठता-
तारतम्यं सर्वस्वाम्यं
च

[१]**ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः।**
**ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः।।**

ततः तेषु $ वर्णाः। श्रीटी.

$ पूर्वोक्तायामुत्तरोत्तरश्रेष्ठजीवपरंपरायामनन्तरपूर्वोक्तेषु द्विपात्सु इत्यर्थः।

(१) **भाग.** ३।२९।३१-३२.

**अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान्स्वकर्मकृत्।**
**मुक्तसङ्गस्ततो भूयानदोग्धा धर्ममात्मनः।।**

संशयच्छेत्ता मीमांसकः। ततोऽपि केवलात्स्वकर्मकृत्। मुक्तसङ्गस्य लक्षणम् – आत्मनो धर्ममदोग्धा। निष्काम इत्यर्थः। श्रीटी.

[१]**स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च।**
**तस्यैवानुग्रहेणान्नं भुञ्जते क्षत्रियादयः।।**

वस्ते परिधत्ते। अन्नमात्रं केवलं भुञ्जते, न तु दाने स्वतन्त्राः। श्रीटी.

वर्णानां मुख्या आपत्कालीनाश्च
वृत्तयः

[२]**विप्रस्याध्ययनादीनि षडन्यस्याप्रतिग्रहः।**
**राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः।।**

ब्राह्मणादीनां चतुर्णामपि वृत्तिरूपान्धर्मानाह – विप्रस्येति सार्धैः सप्तभिः। विप्रस्य षट्कर्माणि विहितानीत्यनुषङ्गः। तत्र त्वध्यापनं याजनं प्रतिग्रहश्च जीविका। यथाऽऽह मनुः – 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः।।' (मस्मृ.१०।७६) इति। अन्यस्य क्षत्रियस्य अप्रतिग्रह इति प्रतिग्रहातिरिक्तं याजनमध्यापनं चाऽऽपद्यनुजानाति। वक्ष्यति चानन्तरमेव – 'ऋते राजन्यम्' इति। श्रूयते चाश्वपतिकैकयप्रभृतीनां क्षत्रियाणामुपदेष्टृत्वादि। प्रजापालनेऽधिकृतस्य क्षत्रियस्य वृत्त्यन्तरमाह – राज्ञ इति। आदिशब्देन दण्डशुल्कादि। श्रीटी.

**वैश्यस्तु वार्तावृत्तिश्च नित्यं ब्रह्मकुलानुगः।**
**शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत्।।**

वार्ता कृषिवाणिज्यादिलक्षणा वृत्तिर्यस्य। शूद्रस्य द्विजानां शुश्रूषा विहिता। स्वामिनः द्विजस्य तु शुश्रूषा वृत्तिश्च भवेत्। श्रीटी.

[३]**वार्ता विचित्रा शालीनयायावरशिलोञ्छनम्।**
**विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा।।**

(१) **भाग.** ४।२२।४६.

(२) **भाग.** ७।११।१४-१५.

(३) **भाग.** ७।११।१६; **इन्दु.** १९८ त्रा शालीनया (त्राः शालीनं या).

विप्रस्य मुख्यानुकल्पभेदेन वृत्त्यन्तराण्याह – वार्तेति। वार्ता विचित्रा कृष्यादिरूपा। शालीनं धाष्ट्र्यं विनैव प्राप्तमयाचितम्। यायावरं प्रत्यहं धान्ययाच्ञा। शिलं शालिक्षेत्रादौ स्वामित्यक्तकणिशोपादानम्। उञ्छनम् आपणादिपतितकणोपादानम्। शिलोञ्छनद्वयमेकीकृत्य चतुर्थेत्युक्तम्। श्रेयसी उत्तमा। * श्रीटी.

**[1]जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः।**
**ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः॥**

वृत्तिष्वेव व्यवस्थां दर्शयन्नापद्वृत्तीराह – जघन्य इति। जघन्यः नीचः। उत्तमाम् अध्यापनादिरूपाम्। ऋते राजन्यम्, क्षत्रियस्तु प्रतिग्रहादन्यां भजेत। श्रीटी.

**ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा।**
**सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथंचन॥**

चतुर्विधां पूर्वोक्तां विप्रवृत्तिमितरेषामपि दर्शयन्नाह – ऋतामृताभ्यामिति। श्रीटी.

**ऋतमुञ्छशिलं प्रोक्तममृतं यदयाचितम्।**
**मृतं तु नित्ययाच्ञा स्यात्प्रमृतं कर्षणं स्मृतम्॥**

श्लोकं व्याचष्टे – ऋतमिति। श्रीटी.

**सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम्।**
**वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सिताम्।**
**सर्ववेदमयो विप्रः सर्वदेवमयो नृपः॥**

तयोस्तद्वर्जने हेतुमाह – सर्ववेदमय इति। श्रीटी.

**[2]वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः।**
**वैश्यस्तु वार्तया जीवेच्छूद्रस्तु द्विजसेवया॥**

स्ववृत्तिं वक्तुं दृष्टान्तत्वेन वर्णानां वृत्तिभेदमाह – वर्तेतेति। ब्रह्मणा वेदाध्यापनादिना। श्रीटी.

**[3]कृषिवाणिज्यगोरक्षा कुसीदं तुर्यमुच्यते।**
**वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम्॥**

वैश्यवृत्तेश्चातुर्विध्यमाह – कृषीति। कृषिवाणिज्यसहिता गोरक्षा एवं त्रयम्, कुसीदं वृद्धिजीवनं चतुर्थम्। श्रीटी.

* इन्दु. श्रीटीवत्।

(१) **भाग.** ७।११।१७-२०.

(२) **भाग.** १०।२४।२०; **भाच.** ५।१४ चतुर्थचरणमात्रम् (=).

(३) **भाग.** १०।२४।२१.

## वर्णानां गुणविभागशोऽवयवेभ्य उत्पत्तिः, वर्णानां मुख्या आपत्कालीनाश्च वृत्तयः

**चमस उवाच –**

**[1]मुखबाहूरुपादेभ्यः पुरुषस्याऽऽश्रमैः सह।**
**चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्॥**

स्वजनकस्य गुरोर्भगवतोऽनादराद्गुरुद्रोहेण दुर्गतिं यान्तीति वक्तुं भगवतः सकाशाद्वर्णाश्रमाणामुत्पत्तिमाह – मुखेति। गुणैः सत्त्वेन विप्रः, सत्त्वरजोभ्यां क्षत्रियः, रजस्तमोभ्यां वैश्यः, तमसा शूद्र इति। श्रीटी.

**[2]विप्रक्षत्रियविट्छूद्रा मुखबाहूरुपादजाः।**
**वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः॥**

वर्णानामाश्रमाणां च धर्मान्वक्तुं तेषामुत्पत्तिमाह – विप्रेति द्वाभ्याम्। आत्माचारः स्वधर्म एव लक्षणं ज्ञापकः येषां ते। श्रीटी.

**[3]इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम्।**
**प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम्॥**

इज्यादयस्त्रैवर्णिकानामावश्यका धर्माः। प्रतिग्रहादित्रयं तु वृत्तिः, सा च ब्राह्मणस्यैव। श्रीटी.

**[4]प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम्।**
**अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक्तयोः॥**

तत्रापि मुख्यां मुख्यतमां चान्यां वृत्तिमाह – प्रतिग्रहमिति। तयोः याजनाध्यापनयोरपि कार्पण्यादिदोषं पश्यन् शिलैः स्वामित्यक्तैः क्षेत्रपतितैः कणिशैः। श्रीटी.

**[5]सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवाऽऽपदं तरेत्।**
**खड्गेन वाऽऽपदाक्रान्तो न श्ववृत्त्या कथंचन॥**

सर्वेषामापद्वृत्तीराह – सीदन्निति त्रिभिः। पण्यैः विक्रयार्हैः, न तु सुरालवणाद्यैः। तत्राप्यापदाक्रान्तश्चेत् खड्गेन क्षत्रियवृत्त्या वा। यद्यपि गौतमः (? वसिष्ठः) 'अनन्तरां पापीयसीं वृत्तिमातिष्ठेत्' (वाध. २।२२) इति स्मरन् खड्गधारणं

(१) **भाग.** ११।५।२; **सस्मृ.** ११३.

(२) **भाग.** ११।१७।१३.

(३) **भाग.** ११।१७।४०.

(४) **भाग.** ११।१७।४१; **इन्दु.** १९८.

(५) **भाग.** ११।१७।४७-४९.

पण्यविक्रयाच्छ्रेष्ठं मन्यते तथापि हिंसातो वणिग्वृत्तिरेव श्रेष्ठेति भगवतो मतम्। न तु श्ववृत्त्या नीचसेवया। श्रीटी.

**वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययाऽऽपदि।**
**चरेद्वा विप्ररूपेण न श्ववृत्त्या कथंचन।।**

तत्राप्यापदि मृगयया। विप्ररूपेण वा अध्यापनादिना। श्रीटी.

**शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुकटक्रियाम्।**
**कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा।।**

कारवः प्रतिलोमजविशेषा बुरुडादयः, तेषां वृत्तिं कटादिक्रियाम्। आपदुत्तीर्णस्तु नानुकल्पेन वर्तेतेत्याह – कृच्छ्रादिति। श्रीटी.

## लिङ्गपुराणम्

द्वापरे कृषेः प्राधान्यम्, लोकरक्षणार्थं क्षत्रोत्पत्तिः, द्वापरीयबीजभूतवर्णेभ्यः कलौ वर्णप्रवृत्तिः

**(१)वार्ता कृषिं समायाता वर्तुकामाः प्रयत्नतः।**
**वार्तावृत्तिः समाख्याता कृषिकामप्रयत्नतः।।**

वर्तुं जीवितुं कामो यासां ता वर्तुकामाः प्रजा इत्यर्थः, कृषिं वार्तां कृषिरूपां जीविकां समायाताः प्राप्ताः। कृषिकामप्रयत्नतः कृषिकामप्रयत्नः, सार्वविभक्तिकस्तसिः, वार्ता वृत्तिः समाख्याता कथितेत्यर्थः। शितो.

**अन्यथा जीवितं तासां नास्ति त्रेतायुगात्यये।**
**हस्तोद्भवा ह्यपश्चैव भवन्ति बहुशस्तदा।**

अन्यथा कृषिं विना। तासां प्रजानामित्यर्थः। हस्तादेव उद्भवः प्रादुर्भावः यासां ता हस्तोद्भवाः। खनित्रानपेक्षा इत्यर्थः। अप इत्यत्र दीर्घाभावश्छान्दसः। शितो.

**मर्यादायाः प्रतिष्ठार्थं ज्ञात्वा तदखिलं विभुः।**
**ससर्ज क्षत्रियांस्त्रातुं क्षतात्कमलसंभवः।।**

क्षतात् दुःखात् त्रातुं रक्षितुं क्षत्रियान् ससर्जेत्यन्वयः। शितो.

**वर्णाश्रमप्रतिष्ठां च चकार स्वेन तेजसा।**
**वृत्तेन वृत्तिना वृत्तं विश्वात्मा निर्ममे स्वयम्।।**

(१) लिङ्ग. १।३९।४६-४७, ४९-५०.

वृत्तेन स्वस्वधर्मेण वृत्तिना जीवनोपायेन वृत्तं जीवनं विश्वात्मा स्वयं निर्ममे इत्यन्वयः। शितो.

**(१)ब्रह्मक्षत्रविशः शूद्रा बीजार्थं ये स्मृता इह।**
**कलिजैः सह ते सर्वे निर्विशेषास्तदाऽभवन्।।**

राजतः प्रतिग्रहस्य निषेधः

**(२)राजप्रतिग्रहैर्दग्धान् ब्राह्मणान् ब्रह्मवादिनः।**
**स्विन्नानामपि बीजानां पुनर्जन्म न विद्यते।।**
**राजप्रतिग्रहो घोरो बुद्ध्वा चाऽऽदौ विषोपमः।**
**बुधेन परिहर्तव्यः.......................... ।।**

## स्कन्दपुराणम्

अष्टविधा ब्राह्मणास्तेषां लक्षणानि च

**(३)अथ ब्राह्मणभेदांस्त्वमष्टौ विप्रावधारय।**
**मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम्।**
**अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः।।**
**एते ह्यष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ।**
**तेषां परः परः श्रेष्ठो विद्यावृत्तविशेषतः।।**
**ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत्।**
**अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते।।**
**† एकोद्देश्य( ? श)मतिक्रम्य वेदस्याऽऽचारवानृजुः।**
**स ब्राह्मण इति प्रोक्तो निभृतः सत्यवाग्घृणी।।**
**एकां शाखां सकल्पां च षड्भिरङ्गैरधीत्य च।**
**षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्।।**
**वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः।**
**श्रेष्ठः *श्रोत्रियवान्प्राज्ञः सोऽनूचान इति स्मृतः।।**
**अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः।**
**भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः।।**

† उद्देशः प्रदेशः भाग इत्यर्थः। तम् अतिक्रम्य तदध्ययनं समाप्येत्ययमर्थोऽत्र युज्यते।

* उक्तश्रोत्रियलक्षणसंपन्नशिष्यवानित्यर्थः। अथवा श्रोत्रियशब्दो भावप्रधानः श्रोत्रियलक्षणोपेत इत्यर्थः।

(१) लिङ्ग. १।४०।७७-७८.
(२) लिङ्ग. १।८५।४१-४२.
(३) स्कन्द. १।२।५।१०९-१२१.

वैदिकं लौकिकं चैव सर्वज्ञानमवाप्य यः।
आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः।।
ऊर्ध्वरेता भवत्यग्र्यो नियताशी न संशयी।
शापानुग्रहयोः शक्तः सत्यसंधो भवेदृषिः।।
निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः।
ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः।।
एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रिताः।
त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु।।
इत्येवंविधविप्रत्वमुक्तम्..................।।

प्रतिग्रहनिन्दा

[1]इति चिन्तयतश्चित्ते हा दुःखोऽयं प्रतिग्रहः।
प्रतिग्रहेण विप्राणां ब्राह्म्यं तेजो हि शाम्यति।।
महादानं हि गृह्णानो ब्राह्मणः स्वं शुभं हि यत्।
ददाति दातुर्दाता च अशुभं यच्छति स्वकम्।।
दाता प्रतिग्रहीता च वचनं हि परस्परम्।
मन्यतेऽधः करो यस्य सोऽल्पबुद्धिः प्रहीयते।।

ईश्वरावयवेभ्यो वर्णोत्पत्तिः

[2]मुखेन ब्राह्मणान्दोर्भ्यां क्षत्रियानूरुतो विशः।
शूद्रांश्च पद्भ्यां निरमात्स्वयं च कमलासनः।।

अपादानविशेषेभ्यः प्रतिग्रहनिषेधः

[3]सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः।
तस्मै दानानि देयानि स तारयति पण्डितः।
ब्राह्मणः प्रतिगृह्णीयाद्वर्जयित्वा त्ववर्णकम्।।
ये केचित्पापनिरता निन्दिताः सुकृतैस्तथा।
न तेभ्यः प्रतिगृह्णीयान्न देयं वाऽपि किंचन।।

स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः

[4]मुखबाहूरुपादेभ्यो जनयामास स क्रमात्।
ब्राह्मणान्क्षत्रियान्वैश्याञ्छूद्रान्द्रीश्च कुरूद्वह।।
[5]ब्राह्मणा मुखतो जाता बाहुजाः क्षत्रियास्तव।
विशस्तवोरुजा पद्भ्यां तथा शूद्राः समागताः।।

(१) स्कन्द. १।२।६।७२-७४.
(२) स्कन्द. १।३।२।८।१३-१४.
(३) स्कन्द. २।१।२२।३-४, १०-११.
(४) स्कन्द. २।१।३५।५६.
(५) स्कन्द. २।२।२४।१०.

ब्राह्मणप्रशंसा

[1]यथातथा वर्तमानो वर्णानां ब्राह्मणो गुरुः।
भगवानपि देवेशः स साक्षाद्ब्राह्मणप्रियः।।
सदाऽवतारं कुरुते ब्राह्मणार्थं जनार्दनः।
तत्पालनार्थं दुष्टान्वै निगृह्णाति युगे युगे।।

ब्राह्मणवंशेषु सर्ववर्णोत्पत्तिः

ससर्ज ब्राह्मणानग्रे सृष्ट्यादौ स चतुर्मुखः।
सर्वे वर्णाः पृथक्पश्चात्तेषां वंशेषु जज्ञिरे।।

वर्णानां मुख्या आपत्कालीनाश्च वृत्तयः,
आपन्निवृत्तौ आपद्वृत्तित्यागः
प्रायश्चित्तं च

[2]ब्रह्मक्षत्रविशः शूद्रा वर्णाश्चत्वार ईरिताः।
तेषां पृथक्पृथग्धर्मान्विशेषान्वच्मि ते मुने।।
अध्यापनं याजनं च विशुद्धाच्च प्रतिग्रहः।
विप्रस्य जीविका प्रोक्ता तत्रान्त्या त्वापदि स्मृता।।
याजनेऽध्यापने वाऽपि दोषदर्शी द्विजोत्तमः।
यस्तस्यान्याऽपि विहिता वृत्तिरस्ति चतुर्विधा।।
शिलोञ्छं नित्ययाच्ञा च शालीनं चोचिता कृषिः।
श्रेयसी पूर्वपूर्वाऽत्र ज्ञातव्या द्विजसत्तमैः।।
विप्रो जीवेद्वैश्यवृत्त्या सत्यामापदि नारद।
अथवा क्षत्रवृत्त्याऽपि श्ववृत्त्या न तु कर्हिचित्।।
शस्त्रेण जीवेत्क्षत्रं तु सर्वतो धर्मरक्षया।
आपन्नो वैश्यवृत्त्यैव विप्ररूपेण वा चरेत्।।
करादानादि नृपतेरविप्राद्वृत्तिरीरिता।
देशकालानुसारेण रञ्जयित्वाऽखिलाः प्रजाः।।
आपत्कालेऽपि क्षत्रस्य ब्राह्मणस्येव सर्वथा।
विगर्हिता नीचसेवा स्वतेजःक्षयकारिणी।।
कृषिवाणिज्यगोरक्षा तुरीया वृद्धिजीवनम्।
वैश्यस्य जीविका प्रोक्ता शूद्रवृत्तिस्तथाऽऽपदि।।
शूद्रो जीवेद्द्विजातीनां सेवालब्धधनेन च।
आपत्काले तु कार्वादेर्जीविकावृत्तिमाश्रयेत्।।
आपन्मुक्तस्तु सर्वोऽपि प्रायश्चित्तं यथोचितम्।
विधाय स्वस्ववृत्त्यैव पुनर्वर्तेत मुख्यया।।

(१) स्कन्द. २।२।३८।४०-४२.
(२) स्कन्द. २।९।२०।२२, २८-३७.

स्रष्टुरवयवेभ्यः सवृत्तिक-
वर्णोत्पत्तिः

[1]इतिहासपुराणानि यज्ञान्विप्रशतं तथा।
वस्वादित्यमरुद्विश्वान्साध्यांश्च मुखतोऽसृजत्।।
बाहुभ्यः क्षत्रियशतमूरुभ्यां च विशां शतम्।
पद्भ्यां शूद्रशतं चैतान्ससर्ज सह वृत्तिभिः।।

ब्राह्मणप्रशंसा प्राशस्त्य-
तारतम्यं च

[2]मतिमद्भ्यो नराः श्रेष्ठास्तेभ्यः श्रेष्ठास्तु वाडवाः।
विप्रेभ्योऽपि च विद्वांसो विद्वद्भ्यः कृतबुद्धयः।।
कृतधीभ्योऽपि कर्तारः कर्तृभ्यो ब्रह्मतत्पराः।
न तेभ्योऽभ्यधिकः कश्चित्त्रिषु लोकेषु भारत।
अन्योन्यपूजकास्ते वै तपोविद्याविशेषतः।।
ब्राह्मणो ब्रह्मणा सृष्टः सर्वभूतेश्वरो यतः।
अतो जगत्स्थितं सर्वं ब्राह्मणोऽर्हति नापरः।।
सदाचारो हि सर्वार्हो नाऽऽचाराद्विच्युतः पुनः।
तस्माद्विप्रेण सततं भाव्यमाचारशीलिना।
विद्वेषरागरहिता अनुतिष्ठन्ति यं मुने।।
[3]श्रुतिस्मृतिपुराणज्ञा ब्राह्मणाः परिकीर्तिताः।
तदुक्ताचारचरणा इतरे नामधारकाः।।

वर्णत्रयस्य द्विजत्वम्, स्वस्ववर्णे
ज्यैष्ठ्यनिमित्तानि

[4]ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजाः स्मृताः।
प्रथमं मातृतो जाता द्वितीयं चोपनायनात्।।
विप्राणां ज्ञानतो ज्यैष्ठ्यं बाहुजानां तु वीर्यतः।
वैश्यानां धान्यधनतः पज्जातानां तु जन्मतः।।
[5]अशास्त्रवर्तिनो भूपाल्लुब्धात्कृत्वा प्रतिग्रहम्।
ब्राह्मणः सान्वयो याति नरकानेकविंशतिम्।।
सान्वयः वंशसहितः। रामा.

(१) स्कन्द. २।९।२४।४१-४२.
(२) स्कन्द. ३।२।५।८-१२.
(३) स्कन्द. ४।२।९५.
(४) स्कन्द. ४।३६।२, ५८.
(५) स्कन्द. ४।३८।७४.

सर्वतः प्रतिग्राह्याणि

[1]खलक्षेत्रगतं धान्यं कूपवापीषु यज्जलम्।
अग्राह्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः।।

ब्राह्मणप्रशंसा

[2]प्रजानां ब्राह्मणा मूलं वेदमूला हि ब्राह्मणाः।।
[3]ब्राह्मणा हि महद्भूतं न चैषां विप्रियं चरेत्।
मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः।
चक्रात्क्रूरतरो मन्युस्तस्माद्विप्रं न कोपयेत्।।
न ते देवा न ते लोका न ते नागा न चासुराः।
दृश्यन्ते त्रिषु लोकेषु ये तैर्दृष्टा न नाशिताः।।
तेषां मोक्षस्तथा स्वर्गो भूमिर्मर्त्ये फलानि च।
येषां तुष्टा महाभागा ब्राह्मणाः क्षितिदेवताः।।

स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः

[4]द्विजातयो मुखाज्जाताः क्षत्रिया बाहुयन्त्रतः।
ऊरुप्रदेशाद्वैश्यास्तु शूद्राः पादेष्वथाभवन्।।

राजतः प्रतिग्रहस्य निषेधः

वृषादर्भिरुवाच —
[5]प्रतिग्रहो द्विजातीनां प्रोक्ता वृत्तिरनिन्दिता।
ग्राह्यो मत्तस्ततः सर्वैर्नात्र कार्या विचारणा।।

ऋषय ऊचुः —
राजप्रतिग्रहो घोरो मध्वास्वादो विषोपमः।
स दूराद्ब्राह्मणैस्त्याज्यो विशेषात्कृतिभिर्नृप।।
दशसूनासमश्चक्री दशचक्रिसमो ध्वजी।
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः।।
दशसूनासहस्रेण तुल्यो राजप्रतिग्रहः।
कस्तस्य प्रतिगृह्णाति लोभाढ्यो ब्राह्मणो यथा।।
रौरवादिषु सर्वेषु नरकेषु स पच्यते।

ब्राह्मणस्य गोविक्रयनिषेधः

[6]गवां विक्रयजं वित्तं यो गृह्णाति द्विजोत्तमः।
अन्त्यजः स परिज्ञेयो मातृविक्रयकारकः।।

(१) स्कन्द. ४।४०।१३२.
(२) स्कन्द. ५।१।४३।१७.
(३) स्कन्द. ५।३।३८।१८-२१.
(४) स्कन्द. ५।३।१२२।५.
(५) स्कन्द. ६।३२।२३-२७.
(६) स्कन्द. ६।१६७।४३-४४.

ब्राह्मणप्रशंसा

[१]धिग्बलं क्षत्रियाणां च धिग्वीर्यं धिक्प्रजीवितम्।
श्लाघ्यं ब्रह्मबलं चैकं ब्राह्म्यं तेजश्च केवलम्।।
[२]ब्राह्म्यं तेजो न क्षात्रेण तेजसा संप्रणश्यति।।
[३]मनसाऽपि वधं यस्तु ब्राह्मणस्य विचिन्तयेत्।
तप्तकृच्छ्रेण मुच्येत मनुः स्वायंभुवोऽब्रवीत्।।
वाचया प्रवदेद्यस्तु ब्राह्मणस्य वधं नरः।
चान्द्रायणेन शुद्धिः स्यात्तस्य देवोऽब्रवीदिदम्।।
[४]जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि।
सर्वं भवति निश्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः।।
[५]शापानुग्रहसामर्थ्यं तथाऽक्रोधः प्रसन्नता।
त्रैलोक्यप्रवरत्वं च ब्राह्मणादेव जायते।।
न ब्राह्मणसमो बन्धुर्न ब्राह्मणसमा गतिः।
न ब्राह्मणसमः कश्चित्त्रैलोक्ये सचराचरे।।

दशदोषीरहितधर्मोढशूद्रापतेः शूद्रत्वं सच्छूद्रत्वम्, तदनुषङ्गेण राहित्यप्रतियोगित्वेन दोषदशककथनम्

**स्कन्द उवाच –**

[६]सच्छूद्राः के समाख्यातास्तांश्च विस्तरतो वद।
के सन्तः के च शूद्राश्च सच्छूद्रा नामतश्च के।।

**ईश्वर उवाच –**

धर्मोढा यस्य पत्नी स्यात्स सच्छूद्र उदाहृतः।
समानकुलरूपा च दशदोषविवर्जिता।।
उद्वोढा( ? उदूढा) वेदविधिना स सच्छूद्रः प्रकीर्तितः।।
अक्लीबाऽव्यङ्गिनी शस्ता महारोगाद्यदूषिता।
अनिन्दिता शुभकला चक्षूरोगविवर्जिता।।
बाधिर्यहीना चपला कन्या मधुरभाषिणी।
दूषणैर्दशभिर्हीना वेदोक्तविधिना नरैः।।

(१) स्कन्द. ६।१६७।७१-७२.
(२) स्कन्द. ६।१७१।२५.
(३) स्कन्द. ६।१७२।९-१०.
(४) स्कन्द. ६।१९७।६३.
(५) स्कन्द. ६।२३९।३२-३३.
(६) स्कन्द. ६।२४१।६-११, ४४-४५.

विवाहिता च सा पत्नी गृहिणी यस्य सर्वदा।
सच्छूद्रः स तु विज्ञेयो देवादीनां विभागकृत्।।

वैश्यवृत्ती वाणिज्यकुसीदे, कुसीदे वृद्धिपरिमाणम्

वृत्तिश्च सत्यानृतजा वाणिज्यव्यवहारजा।
अशीतिभागमादद्याद्व्याजाद्वार्धुषिकः शते।।
सपादभागवृद्धिस्तु क्षत्रियादिषु गृह्यते।
एवं न बन्धो भवति पातकस्य कदाचन।।

स्रष्टुरवयवेभ्यो वर्णोत्पत्तिः, वर्णानां वृत्तयः, प्रतिग्रहनिवृत्तेः प्राशस्त्यम्

[१]मुखाच्च ब्राह्मणा जाता बाहुभ्यः क्षत्रिया मम।
वैश्या ऊरुसमुद्भूताः पद्भ्यां शूद्रा बभूविरे।।
ब्राह्मणः क्षत्रियो वैश्यस्त्रय एव द्विजातयः।
वेदास्तपोऽध्ययनं च यजनं दानमेव च।
वृत्तिरध्यापनाच्चैव तथा स्वल्पप्रतिग्रहात्।।
विप्रः समर्थस्तपसा यद्यपि स्यात्प्रतिग्रहे।
तथापि नैव गृह्णीयात्तपोरक्षा यतः सदा।।
................ *एषां शस्त्रेण जीवनम्।।
धनवृद्धिकरो वैश्यः पशुपालः कृषीवलः।
रसादीनां च विक्रेता देवब्राह्मणपूजकः।।
अर्थवृद्धिकरो व्याजाद्यज्ञकर्मादिकारकः।
दानमध्ययनं चेति वैश्यवृत्तिरुदाहृता।।

विस्तरेण ब्राह्मणप्रशंसा

[२]प्रत्यक्षं ब्राह्मणा देवाः परोक्षं दिवि देवताः।
न विना ब्राह्मणा देवैर्न देवा ब्राह्मणैर्विना।।
एकत्र मन्त्रास्तिष्ठन्ति तेज एकत्र तिष्ठति।
ब्राह्मणा देवता लोके ब्राह्मणा दिवि देवताः।
त्रैलोक्ये ब्राह्मणाः श्रेष्ठा ब्राह्मणा एव कारणम्।।
पितुर्नियुक्ताः पितरो भवन्ति
क्रियासु दैवीषु भवन्ति देवाः।

* क्षत्रियाणामित्यर्थः प्रकरणात्।
(१) स्कन्द. ६।२४२।१६, १९-२१, २४, २६-२७.
(२) स्कन्द. ७।१।२२।६६-१०२.

द्विजोत्तमा हस्तनिषक्ततोया-
स्तेनैव देहेन भवन्ति देवाः।।
षट्कर्मतत्त्वाभिरतेषु नित्यं
विप्रेषु वेदार्थकुतूहलेषु।
न तेषु भक्त्या प्रविशन्ति घोरं
महाभयं प्रेतभयं कदाचित्।।
यद्ब्राह्मणाः स्तुत्यतमा वदन्ति
तद्देवताः कर्मभिराचरन्ति।
तुष्टेषु तुष्टाः सततं भवन्ति
प्रत्यक्षदेवेषु परोक्षदेवाः।।
यथा रुद्रा यथा देवा मरुतो वसवोऽश्विनौ।
ब्रह्मा च सोमसूर्यौ च तथा लोके द्विजोत्तमाः।।
देवाधीनाः प्रजाः सर्वा यज्ञाधीनाश्च देवताः।
ते यज्ञा ब्राह्मणाधीनास्तस्माद्देवा द्विजोत्तमाः।।
ब्राह्मणानर्चयेन्नित्यं ब्राह्मणांस्तर्पयेत्सदा।
ब्राह्मणास्तारका लोके ब्राह्मणात्स्वर्गमश्नुते।।
अभेद्यमच्छेद्यमनादिमक्षयं
विधिं पुराणं परिपालयन्ति।
महामतिस्तानभिपूज्य वै द्विजान्
भवेदजेयो दिवि देवराडिव।।
शक्यं हि कवचं भेत्तुं नाराचेन शरेण वा।
अपि वज्रसहस्रेण ब्राह्मणाशीः सुदुर्भिदा।।
हुतेन शाम्यते पापं हुतमन्नेन शाम्यति।
अन्नं हिरण्यदानेन हिरण्यं ब्राह्मणाशिषा।।
य इच्छेन्नरकं गन्तुं सपुत्रपशुबान्धवः।
देवेष्वधि( ?ष्वधः)कृतं कुर्याद्ब्राह्मणेषु च गोषु च।।
ब्राह्मणान्द्वेष्टि यो मोहाद्देवान्गाश्च मखान्यदि।
नैव तस्य परो लोको नायं लोको दुरात्मनः।।
अनिन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः।
पृथिवी तु षडेतानि यो निन्दति स पातकी।।
अग्रं धर्मस्य राजानो मूलं धर्मस्य ब्राह्मणाः।
तस्मान्मूलं न हिंसीत मूले ह्यग्रं प्रतिष्ठितम्।।
फलं धर्मस्य राजानः पुष्पं धर्मस्य ब्राह्मणाः।
तस्मात्पुष्पं न हिंसीत पुष्पात्संजायते फलम्।।

राजा वृक्षो ब्राह्मणास्तस्य मूलं
पौराः पर्णं मन्त्रिणस्तस्य शाखाः।
तस्माद्राज्ञा ब्राह्मणा रक्षणीया
मूले गुप्ते नास्ति वृक्षस्य नाशः।।
आसन्नो हि दहत्यग्निर्दूराद्दहति ब्राह्मणः।
प्ररोहत्यग्निना दग्धं ब्रह्मदग्धं न रोहति।।
ब्राह्मणानां च शापेन सर्वभक्षो हुताशनः।
समुद्रश्चाप्यपेयस्तु विफलश्च पुरंदरः।।
त्वं चन्द्र राजयक्ष्मी च पृथिव्यामूषराणि च।
सूर्याचन्द्रमसोः पातः पुनरुद्धरणं तयोः।।
वनस्पतीनां निर्यासो दानवानां पराजयः।
नागानां च वशीकारः क्षत्रस्योत्सादनं तथा।
देवोत्पत्तिविपर्यासो लोकानां च विपर्ययः।।
एवमादीनि तेजांसि ब्राह्मणानां महात्मनाम्।
तस्माद्विप्रेषु नृपतिः प्रणमेन्नित्यमेव च।।
परामप्यापदं प्राप्तो ब्राह्मणान्न प्रकोपयेत्।
ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम्।।
प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत्।
एवं विद्वानविद्वान्वा ब्राह्मणो दैवतं महत्।।
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति।
हूयमानश्च यज्ञेषु भूय एवाभिवर्धते।।
एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु।
सर्वेषां ब्राह्मणः पूज्यो दैवतं परमं महत्।।
क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणानां प्रभावतः।
ब्राह्मं हि परमं पूज्यं क्षत्रं हि ब्रह्मसंभवम्।।
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति।।
यान्समाश्रित्य तिष्ठन्ति देवलोकाश्च सर्वदा।
ब्रह्मैव वचनं येषां को हिंस्यात्ताञ्जिजीविषुः।।
म्रियमाणोऽप्याददीत न राजा ब्राह्मणात्करम्।
न च क्षुधाऽस्य संसीदेद्ब्राह्मणो विषये वसन्।।
यस्य राज्ञश्च विषये ब्राह्मणः सीदति क्षुधा।
तस्य तच्छतधा राष्ट्रमचिरादेव सीदति।।
यद्राजा कुरुते पापं प्रमादाद्यच्च विभ्रमात्।
वसन्तो ब्राह्मणा राष्ट्रे श्रोत्रियाः शमयन्ति तत्।।

* पूर्वरात्रान्तरात्रेषु द्विजैर्यस्य विधीयते।
स राजा सह राष्ट्रेण वर्धते ब्रह्मतेजसा।।
ब्राह्मणान्पूजयेन्नित्यं प्रातरुत्थाय भूमिपः।
ब्राह्मणानां प्रसादेन दीव्यन्ति दिवि देवताः।।
अथ किं बहुनोक्तेन ब्राह्मणा मामकी तनुः।
ये केचित् सागरान्तायां पृथिव्यां कीर्तिता द्विजाः।
तद्रूपं देवदेवस्य शिवस्य परमात्मनः।।
एतान्द्विषन्ति ये मूढा ब्राह्मणान्संशितव्रतान्।
ते मां द्विषन्ति वै नूनं पूजनात्पूजयन्ति माम्।।
न प्रद्वेषस्ततः कार्यो ब्राह्मणेषु विजानता।
प्रद्वेषेणाऽऽशु नश्यन्ति ब्रह्मशापहता नराः।।

विस्तरेण ब्राह्मणप्रशंसा

ईश्वर उवाच --

[1]साधु साधु महादेवि सम्यक्प्रश्नविशारदे।
शृणुष्वैकमना भूत्वा माहात्म्यं विप्रदैवतम्।
यच्छ्रुत्वा मानवो देवि मुच्यते सर्वपातकैः।।
ये केचित्सागरान्तायां पृथिव्यां कीर्तिता द्विजाः।
तद्रूपं मम देवेशि प्रत्यक्षं धरणीतले।।
प्रत्यक्षं ब्राह्मणा देवाः परोक्षं दिवि देवताः।
ब्राह्मणा मत्प्रिया नित्यं ब्राह्मणा मामकी तनुः।।
यस्तानर्चयते भक्त्या स मामर्चयते सदा।
यस्तांस्तोषयते भक्त्या स च मां परितोषयेत्।।
ये ब्राह्मणाः सोऽहमसंशयं प्रिये
तेष्वर्चितेष्वर्चितोऽहं भवेयम्।
तेष्वेव तुष्टेष्वहमेव तुष्टो
वैरं च तैर्यस्य ममापि वैरम्।।
यश्चन्दनैः सागरुगन्धमाल्यै -
रभ्यर्चयेच्छैलमयीं ममार्चाम्।
असौ न मामर्चयतेऽर्चयन् वै
विप्रार्चनादर्चित एव चाहम्।।
यावन्तः पृथिवीमध्ये चीर्णवेदव्रता द्विजाः।
अचीर्णव्रतवेदा वा तेऽपि पूज्या द्विजाः प्रिये।।
न ब्राह्मणान्परीक्षेत श्राद्धे क्षेत्रनिवासिनः।
सुमहान्परिवादोऽस्य ब्राह्मणानां परीक्षणे।।
काणाः खञ्जाश्च कुब्जाश्च दरिद्रा व्याधितास्तथा।
सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः।।
ब्राह्मणा जातितः पूज्या वेदाभ्यासात्ततः परम्।
ततोऽर्थं हव्यकव्येषु न निन्द्या ब्राह्मणाः क्वचित्।।
काणान्कुण्टांश्च कुब्जांश्च दरिद्रान् व्याधितानपि।
नावमन्येद्द्विजान् प्राज्ञो मम रूपं यतः स्मृतम्।।
बहवो हि न जानन्ति नरा ज्ञानबहिष्कृताः।
यथाऽहं द्विजरूपेण चरामि पृथिवीमिमाम्।।
मद्रूपान्घ्नन्ति ये विप्रान्विकर्म कारयन्ति च।
अप्रेषणे प्रेषयन्ति दासत्वं कारयन्ति च।।
मृतांस्तान्करपत्रेण यमदूता महाबलाः।
निकृन्तन्ति यथा काष्ठं सूत्रमार्गेण शिल्पिनः।।
ये चैवाश्लक्ष्णया वाचा तर्जयन्ति नराधमाः।
वदन्ति परुषं क्रोधात्पादेन † निहनन्ति च।।
मृतांस्तान्यमलोका हि निहत्य धरणीतले।
क्रूरपादेन चाऽऽक्रम्य क्रोधसंरक्तलोचनाः ‡।
अग्निवर्णैश्च संदंशैर्जिह्वामुद्धरते यमः।।

---

* 'रात्रीणां पूर्वे पूर्वरात्राः, रात्रीणामन्ताः अन्तरात्राः' इत्येकदेशिसमासौ। ततस्तयोर्द्वन्द्वः। यद्यपि 'पूर्वापराधरोत्तर०' (पासू. २।२।१) इत्येकदेशिसमासविधायकसूत्रेऽन्तशब्दो नास्ति, तथापि 'संख्याविसायपूर्वस्याह्नस्य०' (पासू. ६।३।११०) इति सूत्रे एकदेशिसमाससाध्यसायपूर्वाह्णशब्दनिर्देशरूपेण सामान्यापेक्षज्ञापकेन 'सर्व एकदेशः कालेन समस्यते' इति विधेर्ज्ञापितत्वादन्तशब्दस्यैकदेशिसमासः साधुरेव। न च एकत्वविशिष्टवाचिनैवैकदेशिवाचकशब्देन समासविधानात् 'रात्रीणां पूर्वे पूर्वरात्राः' इति बहुत्वविशिष्टवाचिरात्रिशब्देन समासः तन्मूलकं समासस्य बहुवचनान्तत्वं च कथमिति वाच्यम्, अलौकिकविग्रहवाक्ये एकत्वविशिष्टवाचिरात्रिशब्देनैव समासं कृत्वा पश्चात् 'पूर्वरात्रश्च पूर्वरात्रश्च पूर्वरात्रश्च पूर्वरात्राः' इत्येकशेषरूपवृत्त्यन्तरेण समासस्य बहुवचनान्तत्वोपपत्तेः, लौकिकविग्रहवाक्ये तु एकशेषानुरोधैनैकत्वविशिष्टयैकैकया रात्र्या एकैकपूर्वस्य संबन्धविवक्षया 'रात्रीणां पूर्वे' इति बहुवचनोपपत्तेश्च। 'विधीयते' इत्यतः परं 'स्वस्तिवाचनादि' इति शेषोऽध्याहार्यः।

(१) स्कन्द. ७।१।१०६।६-४८.

† नितरां हन्तीति निहनः। अर्शआदित्वादच्। निहन इव आचरन्तीति निहनन्ति। आचारक्विबन्तस्य रूपम्।

‡ तिष्ठन्तीति शेषः। तेन निहत्य, आक्रम्य इत्यत्र समानकर्तृकत्वं संपद्यते।

ये नु विप्रान्निरीक्षन्ते पापाः पापेन चक्षुषा।
अब्रह्मण्यास्तु ते बाह्या नित्यं ब्रह्मद्विषो नराः।।
तेषां घोरा महाकाया वज्रतुण्डा भयानकाः।
उद्धरन्ति मुहूर्तेन चक्षुः काका यमाज्ञया।।
यस्ताडयति विप्रं वै क्षते कुर्याद्धि शोणितम्।
अस्थिभङ्गं च वा कुर्यात्प्राणैर्वाऽपि वियोजयेत्।।
ब्रह्मघ्नः स तु विज्ञेयो न तस्मै निष्कृतिः स्मृता।
पञ्चाशत्कोटिसंख्येषु नरकेष्वनुपूर्वशः।।
स बहूनि सहस्राणि वर्षाणि पच्यते भृशम्।
तस्माद्विप्रो वरारोहे नमस्कार्यो नृभिः सदा।
अन्नपानप्रदानैस्तु पूज्या हि सततं द्विजाः।।
सर्वेषां चैव दानानां विप्राः सर्वेऽधिकारिणः।
नान्यः समर्थो देवेशि गृह्णन्यात्यधमां गतिम्।।
तपसा पावितो देवि ब्राह्मणो धूतकिल्बिषः।
न सीदेत्प्रतिगृह्णानः पृथिवीमनुसागराम्।
नास्ति किंचिन्महादेवि दुष्कृतं ब्राह्मणस्य तु।।
यस्तु स्थितः सदाऽध्यात्मे नित्यं सद्भावभावितः।
ब्राह्मणो हि महद्भूतं जन्मना सह जायते।।
लोके लोकेश्वराश्चापि सर्वे ब्राह्मणपूजकाः।
ततस्तान्नावमन्येत यदीच्छेज्जीवितं चिरम्।।
ब्राह्मणाः कुपिता हन्युर्भस्मीकुर्युः स्वतेजसा।
लोकानन्यान्सृजेयुश्च लोकपालांस्तथाऽपरान्।।
अपेयः सागरो यैश्च कृतः कोपान्महात्मभिः।
एष कोपाग्निरद्यापि दण्डके नोपशाम्यति।।
एते स्वर्गस्य नेतारो देवदेवाः सनातनाः।
एभिश्चापि कृतः पन्था देवयानः स उच्यते।।
ते पूज्यास्ते नमस्कार्यास्तेषु सर्वं प्रतिष्ठितम्।
ते वै लोकानिमान्सर्वान्पारयन्ति परस्परम्।।
गूढस्वाध्यायतपसो ब्राह्मणाः शंसितव्रताः।
विद्यास्नाता व्रतस्नाता अनपाश्रित्य जीविनः।।
आशीविषा इव क्रुद्धा उपचर्या हि ब्राह्मणाः।
तपसा दीप्यमानास्ते दहेयुः सागरानपि।।
ब्राह्मणेषु च तुष्टेषु तुष्यन्ते सर्वदेवताः।
ते गतिः सर्वभूतानामध्यात्मगतिचिन्तकाः।।
आदिमध्यावसानानां ज्ञानानां छिन्नसंशयाः।
परापरविशेषज्ञा नेतारः परमां गतिम्।
अवध्या ब्राह्मणास्तस्मात्पापेष्वपि रताः सदा।।
यश्च सर्वमिदं हन्याद्ब्राह्मणं चापि तत्समम्।
सोऽग्निः सोऽर्को महातेजा विषं भवति कोपितः।।
भूतानामग्रभुग्विप्रो वर्णश्रेष्ठः पिता गुरुः।
न स्कन्दते न व्यथते न विनश्यति कर्हिचित्।।
वरिष्ठमग्निहोत्राद्धि ब्राह्मणस्य मुखे हुतम्।
विप्राणां वपुराश्रित्य सर्वास्तिष्ठन्ति देवताः।
अतः पूज्यास्तु ते विप्रा अलाभे प्रतिमादयः।।
अविद्यो वा सविद्यो वा ब्राह्मणो मम दैवतम्।
प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत्।।
स्मशानेष्वपि तेजस्वी पावको नैव दुष्यति।
हव्यकव्यव्यपेतोऽपि ब्राह्मणो नैव दुष्यति।
महापातकवर्ज्यं हि पूज्यो विप्रो वरानने।।
सर्वथा ब्राह्मणाः पूज्याः सर्वथा दैवतं महत्।
तस्मात्सर्वप्रयत्नेन रक्षेदापद्गतं द्विजम्।।
एवं विप्रा महादेवि पूज्याः सर्वत्र मानवैः।
किं पुनः संजितात्मानो विशेषात्क्षेत्रवासिनः।।
[1]चतुर्णामपि वर्णानां पूज्यो ब्राह्मण उच्यते।।

अर्जनोपायभेदप्रयुक्ता द्रव्यस्य शुक्लशबलकृष्ण-भेदाः

[2]सप्तधा द्रव्यशुद्धिस्तु सोत्तमा मध्यमाऽधमा।।
श्रुतं शौर्यं तपः कन्या शिष्याद्यं चान्वयागतम्।
$ (? श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम्।)
धनं सप्तविधं शुक्लमुपायोऽप्यस्य तादृशः।।
कुत्सितं कृषिवाणिज्यं शुक्लं शिल्पानुवृत्तिभिः।
(? कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः।)
कृतोपकारादाप्तं च शबलं समुदाहृतम्।।

---

$ मार्कण्डेयर्षिवचनं द्रष्टव्यम्। एवमुत्तरत्रापि।
(१) स्कन्द. ७।१।१३०।७५.
(२) स्कन्द. ७।१।२०५।१८-२१.

† उत्कोचतश्च यत्प्राप्तं यत्प्राप्तं चैव साहसात्।
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम्।।

वेदविक्रयनिषेधः, षड्विधो वेदविक्रयः

[1]स्थितो वै नृपतिद्वारि यः कुर्याद्वेदविक्रयम्।
ब्रह्महत्यासमं पापं न भूतं न भविष्यति।।
वरं कुर्वन् ध्रुवं देवि न कुर्याद्वेदविक्रयम्।।
हत्वा गाश्च वरं मांसं भक्षयीत द्विजाधमः।
वरं जीवेत्समं म्लेच्छैर्न कुर्याद्वेदविक्रयम्।।
प्रत्यक्षोक्तिः प्रत्ययश्च प्रश्नपूर्वः प्रतिग्रहः।
याजनाध्यापने वादः षड्विधो वेदविक्रयः।।
वेदाक्षराणि यावन्ति नियुङ्क्ते स्वार्थकारणात्।
तावतीर्भ्रूणहत्या वै प्राप्नुयाद्वेदविक्रयी।।

ब्राह्मणस्य मांसादिविक्रयनिषेधः अपूपादि-प्रतिग्रहनिषेधश्च फलोक्तिसहितः, विनिमेयाविनिमेयानि

गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी।।
सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्।।
रसा रसैर्नियन्त(? र्निमात)व्या न त्वेव लवणं रसैः।
कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः।।
भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः।
कृमिभूतः स विष्ठायां पितृभिः सह मज्जति।।
अपूपं च हिरण्यं च गामश्वं पृथिवीं तिलान्।
अविद्वान्प्रतिगृह्णाति भस्मीभवति काष्ठवत्।।
हिरण्यमायू रत्नं च भूर्गौश्चाकर्षतस्तनुम्।
अश्वश्चक्षुस्त्वचं वासो घृतं तेजस्तिलाः प्रजाः।।
अग्निहोत्री तपस्वी च क्षणवान् क्रियते यदि।
अग्निहोत्रं तपश्चैव सर्वं तद्धनिनो धनम्।।
सोमविक्रयणे विष्ठा भेषजे पूयशोणितम्।।

ब्राह्मणस्य मुख्या आपत्कालीनाश्च वृत्तयः, सेवा-वृत्तिनिषेधः, प्रतिग्रहाधिकारी, राजप्रतिग्रह-निषेधः, असत्प्रतिग्रहाभावफलम्, तीर्थप्रतिग्रहदोषशमनं दानम्

ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा।
सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथंचन।।
भक्ष्यं नित्यमृतं ज्ञेयममृतं स्यादयाचितम्।
मृतं तु वृद्ध्या जीवित्वं प्रमृतं कर्षणं स्मृतम्।।
सत्यानृतं च वाणिज्यं तेन चैवोपजीव्यते।
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्।।
[2]अजीवन्कर्मणा स्वेन विप्रः क्षात्रं समाश्रयेत्।
वैश्यकर्माथवा कुर्याद्वार्षलं परिवर्जयेत्।।
कुसीदं कृषिवाणिज्यं प्रकुर्वीत स्वयं कृतम्।
आपत्काले स्वयं कुर्वन्स्नानेन स्पृश्यते द्विजः।।
जलगोशकटारामयाच्यावृद्धिवणिक्क्रियाः।
अनूपं पर्वतो राजा दुर्भिक्षे जीविकाः स्मृताः।।
विद्यातपोभ्यां हीनेन नैव ग्राह्यः प्रतिग्रहः।
गृह्णन्प्रदातारमधो नयत्यात्मानमेव च।।
तस्माच्छ्रोत्रिय एवार्हो गुणवाञ्छीलवाञ्छुचिः।
अव्यङ्गस्तत्र निर्दोषः पात्राणां परमं स्मृतम्।।
दत्तं पात्रमतिक्रम्य यदपात्रे प्रतिग्रहः।
तद्दत्तं गामतिक्रम्य गर्दभस्य गवाह्निकम्।।
[3]प्रतिग्रहो ब्राह्मणानां दृष्टा वृत्तिरनिन्दिता।।
दशसूनासमश्चक्री दशचक्रिसमो ध्वजी।
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः।।
यो राज्ञां प्रतिगृह्णाति ब्राह्मणो लोभमोहितः।
तामिस्रादिषु घोरेषु नरकेषु स पच्यते।।
यथा यथा न गृह्णाति ब्राह्मणोऽसत्प्रतिग्रहम्।
तथा तथाऽनिशं चास्य ब्रह्मतेजस्तु वर्धते।।
[3]तीर्थे चेत्प्रतिगृह्णाति ब्राह्मणो वृत्तिदुर्लभः।
दशांशमर्जितं दद्यादेवं कुर्वन्न हीयते।।

---

† उपक्रमवाक्यात् कृष्णस्यापि सप्तविधत्वं प्रतीयते, ग्रन्थान्तरेषु च तद्वर्णितमपि। अत एतच्छ्लोकात् प्राचीनः विधाचतुष्टयस्य प्रतिपादकः श्लोकोऽर्धश्लोको वा उच्छिन्न इति भाति।

(१) **स्कन्द.** ७।१।२०७।२२-२६, ४०-४७, ५३-५५.

(१) **स्कन्द.** ७।१।२०७।५८-५९, ६१, ६५-६६, ६८.
(२) **स्कन्द.** ७।१।२५५।१२, १५-१६, २३.
(३) **सिन्धु.** १७९१, कृत्यरत्ने प्रभासखण्डे.

अश्वप्रतिग्रहनिषेधः, प्रतिग्रह-
निवृत्तिप्रशंसा

[1]**ब्रह्मर्षिर्गालवश्चाहं कुरुक्षेत्रे पुरा स्थितः।**
**अश्वप्रतिग्रहान्नूनमश्वयोर्नि समासितः।।**
**प्रतिग्रहसमर्थानां निवृत्तानां प्रतिग्रहात्।**
**य एव ददतां लोकः स एव प्रति (? वाप्रति)-**
**गृह्णताम्।।**

देवार्चनवृत्तिनिषेधः

[2]**देवार्चनरतो विप्रो वित्तार्थी वत्सरत्रयम्।**
**स वै देवलको नाम हव्यकव्येषु गर्हितः।।**

## सह्याद्रिखण्डः

ब्रह्मणोऽवयवेभ्यो वर्णोत्पत्तिः

[3]**ब्रह्मा बुद्ध्या प्रकुरुते सृष्टिं नैमित्तिकीं द्विज।**
**ततः स्वयंभुवो ब्रह्मा ब्राह्मणानामकल्पयत्।।**
**बाहुजातान्क्षत्रियांश्च तदधीनांश्च वैश्यकान्।**
**चतुर्थान्वेदहीनांश्च आचारैश्च बहिष्कृतान्।।**
[4]**विष्णोर्वचः समाकर्ण्य सृष्टिं कर्तुं प्रचक्रमे।**
**मुखाद्ब्राह्मणवर्णोऽभूत्क्षत्रियः किल बाहुतः।।**
**ऊर्वोः सकाशाद्वैश्योऽभूच्छूद्रश्चरणतः किल।**
**एवं वर्णाः समुद्भूता ब्राह्मणादय एव च।।**

ब्राह्मणप्रशंसा प्राशस्त्यतारतम्यं च

[5]**देवेभ्योऽपि गरीयांसो ब्राह्मणा इति मे मतिः।**
**किं तस्य श्रोतुमिच्छामि द्विजमाहात्म्यमुत्तमम्।।**
**देवदेव उवाच –**
[6]**एवमेतज्जगद्धात्रि सुरासुरनमस्कृते।।**
**श्रेष्ठास्तपस्विनो विप्रा देवेभ्योऽपि नगात्मजे।**
**मदीयायां पुरा सृष्टौ प्रथमप्रभवो ह्यसौ।।**
**रुद्राद्द्विजातयः पूर्वं मया सृष्टा महौजसा।**
**मदीयां सृष्टिमालोक्य ब्रह्मणोऽपि सिसृक्षया।।**
**ब्रह्मणा मूर्धतः सृष्टाः पूर्वमेव महाव्रताः।**
**अग्निभूतोऽप्यहं तेषां द्विजाः श्रेष्ठा यतोऽभवन्।।**
**ततस्ते मनसा सर्वे बभूवुर्द्विजसत्तमाः।**
**धर्मार्थकामश्चतुर्वर्गः सर्वे तेषु प्रतिष्ठिताः।।**
**यज्ञं कुर्वन्ति ते विप्रास्तेन तृप्यन्ति देवताः।**
**जगत्प्रतिष्ठितं सर्वं ब्रह्मणाऽमिततेजसा।।**
**लक्षणं संप्रवक्ष्यामि द्विजातीनामिदं कलौ।**
**शौचं जपविधानं च प्रभवत्येव कस्य तत्।।**
**ब्राह्मणस्तु भवेज्जात्या संस्काराद्द्विज उच्यते।**
**विद्यया विप्रतां याता ब्राह्मणास्त्रिविधाः स्मृताः।।**
**+ पश्वजात्या भवेद्विशे पश्वस्य द्विजपारगाः।**
**तयोः प्राणवधे पुण्यं पापं च समतां भवेत् (?)।।**
**जात्या च यो भवेद्विप्रः सर्वागमविशारदः।**
**तपःशौचसमायुक्त अवदातः स उच्यते।।**
**तादृशो(? शं) भोजयेच्छ्राद्धे दैवे पित्र्ये च योजितः**
**(? यो द्विजः)।**
**अक्षयं तद्भवेत्तस्य ह्यवदातस्य तत्क्षणात्।।**
**वेदविद्यायुतो विप्रो वह्निहोमपरायणः।**
**सोऽपि श्रेष्ठः स्मृतो देवि पूजितस्ताप तत्समम्(?)।।**
**सर्वजातिषु मात्रेण योऽपि स्याद्ब्राह्मणः क्वचित्।**
**सोऽपि लोकगुरुर्देवि पूजितः सुलभो भवेत्।।**
**ब्राह्मणश्च तपस्वी च न जन्म पुनरायते।**

---

(१) **बाल.** १।२१६ पृ. ४७१.
(२) **पमा.** १।१७५.
(३) **पमा.** १।१७५.
(४) **सखं.** १।१।१३-१४.
(५) **सखं.** १।२६।११-१२.
(६) **सखं.** १।६४।६-१९, २१-३१.

+ 'पश्वजात्या, पश्वस्य' इत्यत्र यथासंभवं 'पशु' इति नाम वा, सम्यगर्थे अव्ययं वा, पश्वशब्दो वेति न निर्णीयते। सर्वथा श्लोकार्थो न बुध्यते। ऋक्संहितायां (४।१।१४) 'पश्वयन्त्रासः' इति शब्द उपलभ्यते। तत्र 'पशुनिर्गमनार्थानि यन्त्राणि उपायाः येषां तेऽङ्गिरसः' इति सायणभाष्यम्। वाचस्पत्यकोशे पश्वयन्त्रशब्दं गृहीत्वा ततः परं 'त्रि. पशोरिदम्, वा० ड्वं, कर्म०' इति पश्वशब्दस्य यन्त्रशब्देन तत्संबन्धस्य च विवरणं कृतम्। तस्य 'पश्वशब्दः त्रिलिङ्गो विशेषणशब्दः, 'तस्येदम्' इत्यर्थे पशुशब्दात् ड्वप्रयत्नेन सिद्धः, तस्य यन्त्रशब्देन कर्मधारयश्च' इत्यर्थः स्पष्ट एव। 'वा०' इत्यस्य वार्तिकार्थत्वं चेत्, न तादृशं वार्तिकमुपलभ्यते। अग्रे उक्तसायणभाष्यानुवादात् तत्रत्यं संदर्भापेक्षं बहुव्रीहित्वं विहायेदं व्युत्पादनं कल्पितमिति प्रतीयते।

विद्या ब्राह्मणतां लब्ध्वा किन्नरत्वं च देहिनाम्।।
मूर्तयो हि स्मृता ह्यष्टावर्कसोमादयो मम।
सर्वास्ता निवसन्ति स्म ब्राह्मणेषु प्रवर्तते।।
प्रस्रवन्ति महादेवि विप्राः श्रेष्ठत्वमागताः।
न साध्यं विद्यते तेषां द्विजानां परमौजसाम्।।
हृषितास्ते प्रसन्ना वा प्रयच्छन्ति शुभाशुभम्।।
द्विजास्तपस्विनो ये तु वेदविद्याविशारदाः।।
ऋत्विजश्च भवेयुस्ते देवानामपि देवताः।
अहं पितामहश्चैव तेषां यावद्वयं स्मृतम्।।
मत्तः प्रवृत्तमानश्च तदा देवि पितामहः।
प्रकृतिस्त्वं समाख्याता पुरुषः परमो ह्यहम्।।
रजस्तं व्यापकं विद्धि गुणा भूतेषु कर्मसु।
महात्मानौ स्मृतौ देवौ तमोरागं तथैव च।।
नारायणः स्वयं सत्त्वं सच्चान्यौ संप्रवर्तते।
बहिस्तेजः स्मृता ह्येते महात्मानो द्विजातयः।।
सर्वतः प्रभवस्तेन नास्ति तेषां विचारणा।
आर्जवं समता चैव विद्धि तेजो द्विजातिषु।।
तपोदानसमायुक्ता आर्जवं तु विशिष्यते।
असाध्यं हन्ति पापानि शठता मोहबन्धनम्।।
उभे ह्येते निहन्ति स्म त्वार्जवं सेवितं द्विजैः।।

गौडद्राविडब्राह्मणविभागः

स्कन्द उवाच –

[1]ब्राह्मणा दशधा प्रोक्ताः पञ्च गौडाश्च द्राविडाः।
तेषां सर्वेषां चोत्पत्तिं कथयस्व सुविस्तरम्।।

महादेव उवाच –

द्राविडाश्चैव तैलंगाः कर्नाटा मध्यदेशगाः।
गुर्जराश्चैव पञ्चैते द्राविडाः पञ्च कथ्यते।।
सारस्वताः कान्यकुब्जा उत्कला मैथिलाश्च ये।
गौडाश्च पञ्चधा चैव दश विप्राः प्रकीर्तिताः।।
त्रि(? त्रै)होत्रा ह्यग्निवै(ह्याग्निवे)शाश्च कान्यकुब्जाः कनोजयाः (? जजाः)।
मैत्रायणाश्च पञ्चैते पञ्च गौडाः प्रकीर्तिताः।।
ब्राह्मणा दशधा चैव ऋषिह्युत्पत्तिसंभवाः(?)।
देशे देशविधाचारा एवं विस्तारिता मही।।

(१) सखं. २।१।१-७.

सर्वेषां ब्रह्म गायत्री वेदकर्म यथाविधि।
षट्कर्मविधियुक्ता न तत्र कार्या विचारणा।।
भुञ्ज्याश्च भोजनीयाश्च सर्वदेशेषु ब्राह्मणाः।
योनिसंबन्धकृत्यं च स्वशाखासूत्रसंज्ञया।।

भार्गवस्थापितानि ब्राह्मणकुलानि

[2]दश गोत्रकरा विप्रास्त्रिहोत्रस्थलवासिनः।
आनीता भार्गवेणैव स्वकथार्थस्य हेतवे।
उत्पत्तिं वद हे शंभो तेषां चैव समासतः।।

ईश्वर उवाच –

शृणु पुत्र प्रवक्ष्यामि किं योगं च कथं स्थितिः।
ब्राह्मणा दशगोत्राश्च कुलं षट्षष्टिकं स्मृतम्।।
कुशस्थल्यां च कर्दल्यां त्रिगोत्रं स्थापितं खलु।
कौत्सं वत्सं च कौण्डिन्यं गोत्रं दशकुलान्वितम्।।
एते त्रिगोत्रजा विप्रा उत्तमा राजपूजिताः।
सुदर्शनाः सदाचाराश्चतुराः सर्वकर्मसु।।
लोटल्यां च कुशस्थल्यां वरेण्ये मठग्रामके।
षट्षडेतेषु ग्रामेषु कुलानि स्थापितानि वै।
चूडामणिमहाक्षेत्रे कुलानि दश एव हि।
स्थापितास्तत्र ये देवा भार्गवेण तु यत्नतः।।
दीपवत्यामष्टकुलं स्थापितं च यथाविधि।
गोमाञ्चले मध्यभागे किर्वन्तस्यैव जातिकाः।।
स्थापिता द्वादशा विप्राः पञ्चक्रोशेषु मध्यतः।
एवं षट्षष्टिका विप्राः स्थापिताश्च परस्परम्।।
कुलं द्वादशकं पुत्र स्थापितं द्वादशे पुरे।।

ब्राह्मणप्रशंसा

[3]ब्राह्मणो नावमन्तव्यः कदाचित्केनचित्क्वचित्।
यस्मिन्देवाश्च ऋषयः पितरश्च प्रतिष्ठिताः।।
[3]ब्राह्मणाश्च सदा रक्ष्याः सापराधाश्च राजभिः।।
ब्राह्मणा हि विषं घोरं संतानक्षयकारकम्।
ब्राह्मणा हि विषं घोरं सहस्रार्जुन मा पिब।।
शृणुष्व नृपशार्दूल द्विजसामर्थ्यमुत्तमम्।
येषां सचिह्नमद्यापि चरित्रमनुमीयते।।

(२) सखं. २।४।३-११.
(२) सखं. ३।१३।५५.
(३) सखं. ३।३१।१४-१५, ४९-५०, ५२.

**लक्ष्मीपीनपयोधरस्थललुठन्-**
**मुक्तालतामालिका-**
**लीलालंकृतचारुवक्षसि यदा**
**निद्राजुषि श्रीपतौ।**
**एकः कश्चिदुपागमद्द्विजवरो**
**दौवारिकैर्वारितः**
**श्रीवत्सः स्वपदा जघान हृदि तद्**
**देवस्य लक्ष्माभवत्।।**
**आतापिर्यः सवातापिश्च सुरमुनि-**
**द्वेषिणो बिल्वलश्च**
**त्रीनेतान्यश्चखाद प्रसरितवदनः**
**स्तूयमानः सुराद्यैः।**
**कुम्भादुद्भूतमूर्तिश्चुलकविलुलितं**
**वारिधेर्वारि पीत्वा**
**चक्रेऽपेयं पयोधेः शृणु नृपतिवर**
**प्रागगस्त्यो मुनीन्द्रः।।**
[१]**ब्राह्मणा मत्तनुर्विप्राः प्रिया मे हृदयं गताः।**
**गावो मे निलयं शश्वत्तस्माच्छ्रेष्ठो न विद्यते।।**
**विद्यया तपसा योगबलेन नियमेन च।**
**ममापि पूज्यवत्पूज्यास्तेभ्यः किं विद्यते परम्।।**
**यैरिदं तपसा सृष्टं यद्बलेन बिभर्म्यहम्।**
**यत्कोपाद्दह्यते सर्वं तेभ्यः के बलवत्तराः।।**
**विनाऽपि तपसा तेषां संतुष्टोऽहं सनातनः।**
**किं पुनस्तपसा भक्त्या यमेन नियमेन च।।**

राजप्रतिग्रहनिषेधः

[२]**मरुदेशे निरुदके ब्रह्मरक्षस्त्वमागतः।**
**राजप्रतिग्रहात्पुष्टः पुनर्जन्म न विन्दति।।**
[३]**ब्राह्मण्यं यः परित्यज्य द्रव्यलोभेन मोहितः।**
**विषयामिषलुब्धस्तु कुर्याद्राजप्रतिग्रहम्।**
**रौरवे नरके घोरे तस्यैव पतनं ध्रुवम्।।**
**वृक्षा दवाग्निना दग्धाः प्ररोहन्ति घनागमे।**
**राजप्रतिग्रहादग्धा न प्ररोहन्ति कर्हिचित्।।**

(१) **सखं.** ८।११।५१-५४.
(२) **पमा.** १।१८७; **मुक्ता.** ५६ पुष्टः (पुष्टिः); **आन.** ६२६.
(३) **पमा.** १।१८७.

अजिनादिप्रतिग्रहनिषेधः

[१]**अजिनं मृतशय्यां च मेषीं चोभयतोमुखीम्।**
**कुरुक्षेत्रे च गृह्णानो न भूयः पुरुषो भवेत्।।**

विदुषः प्रतिग्रहदोषाभावः

[२]**षडङ्गवेदविद्विप्रो यदि कुर्यात्प्रतिग्रहम्।**
**न स पापेन लिप्येत पद्मपत्रमिवाम्भसा।।**

दुर्भिक्षे सर्वतः प्रतिग्रहः

[३]**दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा।**
**असतः प्रतिगृह्णीयात्प्रतिग्रहमतन्द्रितः।।**

आत्मवृत्त्यर्थम् आत्मप्राणरक्षणार्थम्, न तु भोगार्थमित्यर्थः। मर. १७३

## सूतसंहिता

ब्रह्मणोऽवयवेभ्यो वर्णोत्पत्तिः,

सवर्णोत्पत्तिः

[४]**तस्य वेदविदां श्रेष्ठा ब्रह्मणः परमेष्ठिनः।**
**महादेवाज्ञया पूर्ववासनासहितान्मुखात्।।**

सर्गावसरे ब्रह्मणो मुखात्, ब्राह्मणा जाता इत्यनेनान्वयः। मुखाद्ब्राह्मणा इति श्रूयते हि – 'ब्राह्मणोऽस्य मुखमासीद्-बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत।।' (ऋसं. १०।९०।१२) इति। तादी.

**ब्राह्मणा ब्राह्मणस्त्रीभिः सह जातास्तपोधनाः।**
[५]**तस्य हस्तात्सह स्त्रीभिर्जज्ञिरे पृथिवीभुजः।।**
[६]**ऊरुभ्यां सहिताः स्त्रीभिर्जाता वैश्याः शिवाज्ञया।**
**पद्भ्यां शूद्राः सह स्त्रीभिर्जज्ञिरे वेदवित्तमाः।।**

(१) **निप्र.** २।२८१ : २।२८९ उत्त.; **बाल.** १।२१६ पृ. ४७१.
(२) **पमा.** १।१८४.
(३) **पमा.** १।१८५; **मर.** १७३ चतुर्थचरणे (आत्मवृत्त्यर्थमेव वा); **बाल.** १।२१६ पृ. ४६९; **इन्दु.** १९९ चतुर्थचरणे (आत्मवृत्त्यर्थमेव च).
(४) **सूसं.** १।१२।७; **बाल.** १।९० पृ. २७८ पूर्ववा (पूर्वं वा) हितान्मु (हजा मु); **सस्मृ.** ११२ श्रेष्ठा (श्रेष्ठ) पूर्ववा (पूर्वं वा) तान्मु (ता मु).
(५) **सूसं.** १।१२।८; **बाल.** १।९० पृ. २७८; **सस्मृ.** ११२ चतुर्थचरणे (जाता वै क्षत्रियास्तथा).
(६) **सूसं.** १।१२।९; **बाल.** १।९० पृ. २७८; **सस्मृ.** ११२-११३ ऊरुभ्यां सहिताः (ऊर्वोस्तस्य सह).

ब्राह्मणा इत्यादि जात्यभिप्रायम्, अत उक्तं सह स्त्रीभिरिति। तादी.

[1]**स्वस्त्रीषु स्वस्य वैधेन मार्गेणोत्थः स्वयं भवेत्।।**

असंकीर्णस्य जातिचतुष्टयस्य लक्षणमाह – स्वस्त्रीष्विति। ब्राह्मण्यां ब्राह्मणस्य, क्षत्रियायां क्षत्रियस्येत्यादि। स्मर्यते हि – 'सवर्णेभ्यः सवर्णासु जायन्ते हि स्वजातयः।' (यास्मृ. १।९०) इति। वैधेनेति। विवाहादिविध्युक्तेन। अन्यथाजातानां कुण्डगोलकादीनां सत्यपि सवर्णत्वे शूद्रधर्मत्वं स्मर्यते – 'शूद्राणां तु सधर्माणः सर्वेऽपध्वस्तजाः स्मृताः।' (मस्मृ. १०।४१) इति। तादी.

## सौरसंहिता

द्विजानां सात्त्विकत्वं शूद्राणां राजसत्वम्

[2]**सत्त्वात्त्रैवर्णिकत्वं स्याद्रजसा शूद्रता भवेत्।**
**तमसा संकरत्वं स्यान्मुनियोगीन्द्रवन्दित।।**

## गरुडपुराणम्

वर्णोत्पत्तिः, वर्णानां क्रमेण ब्राह्मशाक्रमारुतगान्धर्वलोकाः, वर्णत्रयस्य द्विजत्वम्

[3]**आस्याद्वै ब्राह्मणा जाता बाहुभ्यां क्षत्रियाः स्मृताः।**
**ऊरुभ्यां तु विशः सृष्टाः शूद्रः पद्भ्यामजायत।।**
**ब्रह्मलोको ब्राह्मणानां शाक्रः क्षत्रियजन्मनाम्।**
**मारुतं च विशां स्थानं गान्धर्वं शूद्रजन्मनाम्।।**
[4]**अध्यापनं याजनं च वृत्तमाहुः प्रतिग्रहम्।**
**कुसीदं कृषिवाणिज्यं क्षत्रवृत्तोऽथ वर्जयेत्।।**

वाप्यादिनिर्माणे पशुदमने बीजावापे रथादिगमनागमने नावादिप्रवाहणे च नक्षत्राणि

[5]**कृत्तिका भरण्यश्लेषा मघा मूलविशाखयोः – (? खके)।**
**त्रीणि पूर्वा तथा चैव अधोवक्त्राः प्रकीर्तिताः।**
**एषु वापीतडागादिकूपभूमितृणानि च।।**
**कुर्यादधोगतान्येव अन्यानि च वृषध्वज।**
**रेवती चाश्विनी चित्रा स्वाती हस्ता पुनर्वसू।।**
**अनुराधा मृगो ज्येष्ठा एते पार्श्वमुखाः स्मृताः।**
**गजोष्ट्राश्वबलीवर्ददमनं महिषस्य च।।**
**बीजानां वपनं कुर्याद्गमनागमनादिकम्।**
**चक्रयन्त्ररथानां च नावादीनां प्रवाहणम्।।**
**पार्श्वेषु यानि कर्माणि कुर्यादेतेषु तान्यपि।।**
[1]**ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।**
**निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः।।**

वर्णानां वृत्तयः

[2]**इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।**
**प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा।।**
**प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।**
**कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम्।**
**शूद्रस्य द्विजशुश्रूषा द्विजो यज्ञान्न हापयेत्।।**

यज्ञार्थलब्धस्य न पोषणे विनियोगः, कुसूलधान्यत्वादीनां श्रेयस्त्वतारतम्यम्, स्वाध्यायाविरोधेनार्थार्जनम्, आपदि राजादिभ्यः प्रतिग्रहः, राजप्रतिग्रहापवादः

**यज्ञार्थलब्धं नाऽऽदद्याद्भासः काकोऽपि वा भवेत्।।**
**कुसूलकुम्भीधान्यो वा त्र्याहिकः श्वस्तनोऽपि वा।**
**जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परःपरः।**
**न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः।।**
**राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा।**
**दम्भहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत्।।**
**न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः।।**

---

(१) **सूसं.** १।१२।१०; **बाल.** १।९१ पृ. २८०.
(२) **सस्मृ.** ११३.
(३) **गरुड.** १।४।३५-३६.
(४) **गरुड.** १।५१।३.
(५) **गरुड.** १।५९।१७-१८, २०-२३.

(१) **गरुड.** १।९३।१०.
(२) **गरुड.** १।९६।२६-२८, ३४-३६, ४४.

प्रतिग्रहनिवृत्तिप्रशंसा, अप्रत्याख्येयानि, देवाद्यर्थं सर्वतः प्रतिग्रहानुमतिः

**[१]समर्थो यो न गृह्णीयाद्दातृलोकानवाप्नुयात्।**
**कुशाः शाकं पयो गन्धाः प्रत्याख्येया न वारि च।।**
**अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः।**
**अन्यत्र कुलटाषण्ढपतितेभ्यो द्विषस्तथा।।**
**देवातिथ्यर्चनकृते पितृतृप्त्यर्थमेव च।**
**सर्वतः प्रतिगृह्णीयादात्मतृप्त्यर्थमेव च।।**

ब्राह्मणस्याऽऽपद्वृत्तयः अविक्रेयाणि च

**[२]क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः।**
**फलसोमक्षौमवीरुद्दधि क्षीरं घृतं जलम्।**
**तिलौदनरसक्षारमधु लाक्षा शृतं हविः।।**
**वस्त्रोपलासवं पुष्पं शाकमृच्चर्मपादुकम्।**
**एणत्वचं च कौशेयं लवणं मांसमेव च।।**
**पिण्याकमूलगन्धांश्च वैश्यवृत्तो न विक्रयेत्।**
**धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः।।**
**लवणादि न विक्रीयात्तथा चाऽऽपद्गतो द्विजः।**
**हीनाद्विप्रो विगृह्णंश्च लिप्यते नार्कवद्द्विजः।।**
**कुर्यात्कृष्यादिकं तद्वदविक्रेया हयास्तथा।।**

द्रोहवर्जितवृत्त्या ब्राह्मणेन जीवितव्यम्

**[३]अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।**
**या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि।।**

धनस्य शुक्लशबलकृष्णरूपं त्रैविध्यम्, सर्ववर्णानां त्रिविधमविशिष्टं धनम्, स्वस्वविशिष्टधनोपाया वर्णानां वृत्तयः, ब्राह्मणस्याऽऽपद्वृत्तयः

**धनं तु त्रिविधं ज्ञेयं शुक्लं शबलमेव च।**
**कृष्णं च तस्य विज्ञेयो विभागः सप्तधा पृथक्।।**
**क्रमायत्तं प्रीतिदत्तं प्राप्तं च सह भार्यया।**
**अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम्।।**
**वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम्।**
**याजनाध्यापने नित्यं विशुद्धश्च( ? द्धाच्च) प्रतिग्रहः।।**
**त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम्।**
**शुद्धार्थं लब्धकरजं दण्डाप्तं जयजं तथा।।**
**वैशेषिकं धनं दृष्टं वैश्यस्यापि त्रिलक्षणम्।**
**कृषिगोरक्षवाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात्।।**
**कुसीदकृषिवाणिज्यं प्रकुर्वीत स्वयं कृतम्।**
**आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः।।**

वृत्त्यन्तरापेक्षया कुसीदप्रशंसा, पित्रादिपूजया कुसीददोषशमनम्

**बहवो वर्तनोपाया ऋषिभिः परिकीर्तिताः।**
**सर्वेषामपि चैवैषां कुसीदमधिकं विदुः।।**
**अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः।**
**कृष्यादिके भवेद्बाधा सा कुसीदे न विद्यते।।**
**शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेऽपि वा।**
**उष्णे वर्षति शीते वा वर्धनं न निवर्तते।।**
**देशं गतानां या वृद्धिर्नानापण्योपजीविनाम्।**
**कुसीदं कुर्वतः सम्यक् संस्थितस्यैव जायते।।**
**लब्धलाभः पितृन्देवान्ब्राह्मणांश्चैव पूजयेत्।**
**ते तृप्तास्तस्य तद्दोषं शमयन्ति न संशयः।।**

कुसीदकृषिलब्धधनस्य विभागेन विनियोगः

**वणिक्कुसीदं दद्याद्यो वस्त्रं गां काञ्चनादिकम्।**
**कृषीवलोऽन्नपानादि यानशय्यासनानि च।।**
**राजभ्यो विंशतिं दत्त्वा पशुस्वर्णादिकं शतम्।**
**पादेनास्य च यावक्यं कुर्यात्संचयमात्मवान्।।**
**अर्धेन चाऽऽत्मभरणं नित्यनैमित्तिकान्वितम्।**
**पादं चेत्यर्धयामस्य मूलभूतं विवर्धयेत्।।**

दश जीवनहेतवः, वर्णवृत्तयः

**विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः।**
**वृत्तिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः।।**

---

(१) **गरुड.** १।९८।१८-२०.
(२) **गरुड.** १।१०६।२२-२७.
(३) **गरुड.** १।२१३।८५-१०६.

**प्रतिग्रहार्जिता विप्रे क्षत्रिये शस्त्रनिर्जिताः।**
**वैश्ये न्यायार्जिताः स्वार्थाः शूद्रे शुश्रूषयाऽर्जिताः।।**

ब्राह्मणस्योत्तमं धनम्

**नदी बहूदका शाकमृत्पर्णानि समित्कुशाः।**
**आग्नेयो ब्रह्मघोषश्च विप्राणां धनमुत्तमम्।।**

अयाचितप्रतिग्रहे दोषाभावः

**अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे।**
**अमृतं तद्विदुर्देवास्तस्मात्तन्नैव वर्जयेत्।।**

गुर्वाद्यर्थं गुणवतश्च सर्वतःप्रतिग्रहानुमतिः, आपद्वृत्त्यन्ते प्रायश्चित्तम्

**गुरुद्रव्यांश्चोज्जिहीर्षुरर्चिष्यन्देवतातिथीन्।**
**सर्वतः प्रतिगृह्णीयान्न तुष्येत्तु स्वयं ततः।।**
**साधुतः प्रतिगृह्णीयादथवाऽसाधुतो द्विजः।**
**गुणवानल्पदोषश्च निर्गुणो हि निमज्जति।।**
**एवं त्वक्षरवृत्त्या वा कृत्वा भरणमात्मनः।**
**कुर्याद्विशुद्धिं परतः प्रायश्चित्तं द्विजोत्तमः।।**

नित्यकर्मकुटुम्बपोषणार्थातिरिक्तधनार्जननिषेधः

**[१]यावता पञ्चयज्ञानां कर्तुर्निर्वहणं भवेत्।**
**तावदेव हि गृह्णीयात्कुटुम्बस्याऽऽत्मनस्तथा।।**

निन्द्यदातृकप्रतिग्रहनिषेधः

**[२]द्रव्यराशिरपि श्रेयान्न (? न) निन्द्यात्प्रतिगृह्णताम्।**
**निन्द्यस्य द्रव्यलेशोऽपि निरयायैव कल्पते।।**

## पद्मपुराणम्

परतृणशाकाद्यपहरणनिषेधः

**[३]तृणं वा यदि वा शाकं मृदं वा जलमेव वा।**
**परस्यापहरञ्जन्तुर्नरकं प्रतिपद्यते।।**

राजादिदातृकप्रतिग्रहनिषेधः

**न राज्ञः प्रतिगृह्णीयान्न शूद्रात्पतितादपि।**
**न चान्यस्मादशक्तश्चेन्निन्दितान्वर्जयेद्बुधः।।**

(१) पमा. १।२८०; मर. १७३ द्वितीयचरणे (कर्तुं निर्वाहमाव्रजेत्).

(२) निप्र. २।२८०.

(३) पद्म. १।५५।२-१०, १३.

एकदातृकानेकवारयाचननिषेधः

**नित्यं याचनको न स्यात्पुनस्तं नैव याचयेत्।**
**प्राणानपहरत्येवं याचकस्तस्य दुर्मतेः।।**

देवस्वब्राह्मणस्वहरणनिषेधः

**न देवद्रव्यहारी स्याद्विशेषेण द्विजोत्तमः।**
**ब्रह्मस्वं वा नापहरेदापत्स्वपि कदाचन।।**
**न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।**
**देवस्वं चापि यत्नेन सदा परिहरेत्ततः।।**

पुष्पादिविषये स्तेयापवादः

**पुष्पं शाकोदकं काष्ठं तथा मूलं फलं तृणम्।**
**अदत्तानि च न स्तेयं मनुः प्राह प्रजापतिः।।**
**ग्रहीतव्यानि पुष्पाणि देवार्चनविधौ द्विजाः।**
**नैकस्मादेव नियतमननुज्ञाय केवलम्।।**
**तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्बुधः।**
**धर्मार्थं केवलं प्राहुरन्यथा पतितो भवेत्।।**
**तिलमुद्गयवादीनां मुष्टिर्ग्राह्या पथि स्थितैः।**
**क्षुधितैर्नान्यथा विप्रा धर्मादिभिरिति स्थितिः।।**

कपटवेषेण परवृत्त्याश्रयणनिषेधः

**अलिङ्गी लिङ्गिवेशेन यो वृत्तिमुपतिष्ठति।**
**स लिङ्गिनो हरेदेनस्तिर्यग्योनौ च जायते।।**

अयाज्ययाजननिषेधः

**[१]नायाज्यं याजयेद्बुधः।।**

अनर्चितद्रव्यस्य प्रतिग्रहनिषेधः

**[२]योऽर्चितं प्रति गृह्णीयाद्दद्यादर्चितमेव च।**
**तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये।।**

अविद्वत्कर्तृकप्रतिग्रहनिषेधः

**रूप्यं चैव हिरण्यं च गामश्वं पृथिवीं तिलान्।**
**अविद्वान्प्रतिगृह्णीयाद्भस्मीभवति काष्ठवत्।।**

द्विजातिभ्यः प्रतिग्रहस्य विधिः शूद्रात्तन्निषेधश्च

**द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजोत्तमः।**
**अपि राजन्यवैश्याभ्यां न तु शूद्रात्कथंचन।।**

(१) पद्म. १।५५।८६.

(२) पद्म. १।५७।६६, ६८-७४.

ब्राह्मणो धनविस्तारं परिहरेत्

वृत्तिसंकोचमन्विच्छेन्नेहेत धनविस्तरम्।
धनलोभे प्रसक्तस्तु ब्राह्मण्यादेव हीयते।।
वेदानधीत्य सकलान्यज्ञांश्चावाप्य सर्वशः।
न तां गतिमवाप्नोति संतोषाद्यामवाप्नुयात्।।
प्रतिग्रहरुचिर्न स्याच्छूद्रान्न तु समाहरेत्।
स्थित्यर्थादधिकं गृह्णन्ब्राह्मणो यात्यधोगतिम्।।
यस्तु याति न संतोषं न स स्वर्गस्य भाजनम्।
उद्वेजयति भूतानि यथा चौरस्तथैव सः।।

गुर्वाद्यर्थं सर्वतः प्रतिग्रहानुमतिः

गुरून्भृत्यांश्चोज्जिहीर्षुस्तर्पयन्देवतातिथीन्।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः।।

ब्राह्मणप्रशंसा, त्रयो वर्णा द्विजातयः

[1]ब्राह्मणान्हि विशेषेण प्रत्यक्षं हरिरूपिणः।
पूजयेयुर्यथायोगं हरिस्तेषां प्रसीदति।।
[2]ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः।
सर्वेषामेव वर्णानां श्रुतिरेषा सनातनी।।
[3]ब्राह्मणः सर्ववर्णानां गुरुरेव द्विजोत्तम।
सर्वामराश्रयो ज्ञेयः साक्षान्नारायणः प्रभुः।।
कुर्यात्प्रणामं यो विप्रं हरिबुद्ध्या तु भूसुर।
भक्त्या तस्य द्विजश्रेष्ठ वर्धते संपदादिकम्।।

ब्राह्मणस्याध्यापनादिवृत्तिविधिः नीचसेवानिषेधश्च

[4]ब्राह्मणेन सदा कार्यं यजनाध्यापनादिकम्।
वेदान्पठित्वा विरजेन्नो वा गार्हस्थ्यमाविशेत्।।
ब्राह्मणेन सदा त्याज्यं नीचसेवानुजीवनम्।
आपद्गतोऽपि जीवेत न श्ववृत्त्या कदाचन।।
[5]प्रतिग्रहो ब्राह्मणानां शस्यते नेतरेषु वै।
प्रतिग्रहपरो राजा नरकायैव कल्पते।।

(१) पद्म. १।६१।४७.
(२) पद्म. २।३७।१९.
(३) पद्म. ३।१४।२-३.
(४) पद्म. ४।९।४०-४१.
(५) पद्म. ४।६६।१३६.

ब्राह्मणप्रशंसा

[1]सर्वं शुभं जगति धर्मत एव लभ्यं
धर्मो गतिर्निगमतो नृप धर्मशास्त्रात्।
नूनं तयोरपि गतिर्भुवि भूमिदेवा -
स्तैरर्चितैरिह जगत्पतिरर्चितः स्यात्।।
न यज्ञदानैर्न तपोभिरुग्रैर्न योगयुक्त्या न समर्चनेन।
तथा हरिस्तुष्यति देवदेवो यथा महीदैवततोषणेन।।
ब्रह्मण्यो ब्रह्मविद्ब्रह्मा ब्रह्मदेवप्रवर्तकः।
ब्राह्मणैरेव तुष्येत तोषितैर्ब्रह्मदैवतम्।।

ब्राह्मणस्याऽऽपदि क्षत्रियवृत्तिविधिः कृषिनिषेधश्च

[2]आसीत्तु गौतमो नाम ब्राह्मणो वेदवर्जितः।
तस्य पुष्टिः पशुश्चाऽऽस्तां भ्रातरौ वेदवर्जितौ।।
ताभ्यां सह कृषिं चक्रे तत्र वृद्धिमवाप च।
धनधान्यादिकं किंचिद्राजानं दत्तवानथ।।
उवाच वचनं किंचिदधिकारं निरूपय।
अर्थं न गमयिष्यामि तौ शक्तौ भ्रातरौ मम।।

राजोवाच –

ब्राह्मणस्याधिकारो हि वैदिके धर्मकर्मणि।
तदन्यत्र नियुक्तस्य ब्राह्मण्यं विप्रणश्यति।।

गौतम उवाच –

युगेष्वन्येषु धर्मोऽयं कलिधर्मो न तादृशः।
भूपतित्वं हि भूपाल नृपाणां धर्म उच्यते।।
ब्राह्मणश्च परिक्षीणस्तं कुर्वन्नैव दुष्यति।
शूद्राणां च कृषिर्धर्मो नाऽऽपद्यप्यग्रजन्मनः।।
तस्मात्क्षत्रेण वर्तिष्ये ग्रामान्मम समादिश।
अन्यत्र चात्र क्षत्रेण वर्तनं मम रोचते।।
अन्यत्र तु तथेत्युक्तो ददौ ग्रामान्द्विजस्य तु।।

चातुर्वर्ण्यसृष्टिः

[3]सत्त्वाभिध्यायिनस्तस्य सिसृक्षोर्ब्रह्मणः प्रजाः।
अजायन्त कुरुश्रेष्ठ सत्त्वोद्रिक्ता मुखाद्द्विजाः।।

(१) पद्म. ४।८४।६९-७१.
(२) पद्म. ४।११०।४०३-४१०.
(३) पद्म. ५।३।११९-१२३, १४६-१४८.

**वक्षसो रजसोद्रिक्तास्तथाऽन्या ब्रह्मणोऽभवन्।**
**राजन्यास्तमसा वैश्यास्तमोद्रिक्तास्तथोरुतः।।**
**पद्भ्यां समसृजद्ब्रह्मा शूद्रान्नृपवरोत्तम।**
**ततः( ? तमः)प्रधानास्ते सर्वे चातुर्वर्ण्यमिदं ततः।।**
**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च नृपसत्तम।**
**पादोरुवक्षस्थलजा मुखतश्च समुद्भवाः।।**
**यज्ञनिष्पत्तये सर्वमेतद्ब्रह्मा चकार ह।**
**चातुर्वर्ण्यं महाभाग यज्ञसाधनमुत्तमम्।।**

स्वधर्मस्थितानां वर्णानां क्रमेण प्राजापत्यादयो लोकाः

**वर्णानामाश्रमाणां च धर्माधर्मभृतां वर।**
**लोकांश्च सर्ववर्णानां सम्यग्धर्मानुपालिनाम्।।**
**प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं तु पार्थिव।**
**स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वनिवर्तिनाम्।।**

न्यूनाधिकप्राशस्त्याः कुशूलधान्यत्वादयो वृत्तयः, वृत्तिसंख्याप्रयुक्तं प्राशस्त्यतारतम्यम्

**[1]गृहस्थवृत्तयः पूर्वं चतस्रो मुनिभिः कृताः।**
**कुशूलधान्या प्रथमा कुम्भीधान्या द्वितीयका।।**
**अश्वस्तनी तृतीयोक्ता कापोत्यथ चतुर्थिका।**
**आसां परा परा श्रेष्ठा धर्मतो लोकपूजिता।।**
**षट्कर्मवर्तकस्त्वेकस्त्रिभिरन्यः प्रवर्तते।**
**द्वाभ्यां चैव चतुर्थस्तु द्विजः स ब्रह्मणि स्थितः।।**
**वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तिनाम्।**
**गान्धर्वं सर्वशूद्राणां परिचर्यानुवर्तिनाम्।।**

चातुर्वर्ण्यसृष्टिः

**[2]त्वन्मुखाद्ब्राह्मणा जातास्त्वत्तः ( ? ता वक्षः) क्षत्रमजायत।**
**वैश्यास्तवोरुजाः शूद्रास्ते च पद्भ्यां समुद्गताः।।**

राजप्रतिग्रहनिन्दा

**[3]प्रतिग्रहो ब्राह्मणानां सृष्टा वृत्तिरनिन्दिता।**
**तस्मात्प्रतिग्रहान्मत्तो गृह्णीध्वं मुनिसत्तमाः।।**

**वरान्ग्रामान्व्रीहियवान्रसान्रत्नानि काञ्चनम्।**
**गाश्च धेनुं ततः सर्वं मा मांसं पचत द्विजाः।।**
**राजन्प्र( ? जप्र)तिग्रहो घोरो मध्वास्वादो विषोपमः।**
**§ तज्ज्ञायमानः कस्मात्त्वं कुरुषेऽस्मत्प्रलोभनम्।।**
**दशसूनासमश्चक्री दशचक्री( ? क्रि)समो ध्वजः।**
**दशध्वजसमा वेश्या दशवेश्यासमो नृपः।।**
**दशसूनासहस्राणि यो वाहयति शौण्डिकः।**
**तेन तुल्यस्ततो राजा घोरस्तस्य प्रतिग्रहः।।**
**यो राज्ञः प्रतिगृह्णाति ब्राह्मणो लोभमोहितः।**
**तामिस्रादिषु घोरेषु नरकेषु स पच्यते।।**

ब्राह्मणस्य धर्मार्थमपि द्रव्यसंचयस्य निषेधः

**धर्मार्थं संचयो यस्य द्रव्याणां च न शस्यते।**
**तपःसंचय एवेह विशिष्टो धनसंचयात्।।**
**त्यजतः संचयान्सर्वान्यान्ति नाशमुपद्रवाः।**
**न हि संचयवान्कश्चित्सुखी भवति मानद।।**
**यथा यथा न गृह्णाति ब्राह्मणः संप्रतिग्रहम्।**
**तथा तथा हि संतोषाद्ब्रह्मतेजो विवर्धते।।**
**अकिंचनत्वं राज्यं च तुलया समतोलयन्।**
**अकिंचनत्वमधिकं राज्यादपि जितात्मनः।।**

**कश्यप उवाच –**

**अनर्थो ब्राह्मणस्यैष यदर्थनिचयो महान्।**
**अर्थैश्वर्यविमूढो हि श्रेयसो भ्रश्यते द्विजः।।**
**अर्थसंपद्विमोहाय विमोहो नरकाय च।**
**तस्मादर्थमनर्थाय श्रेयोर्थी दूरतस्त्यजेत्।।**
**यस्य धर्मार्थमर्थेहा तस्यानीहा गरीयसी।**
**प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्।।**
**योऽर्थेन साध्यते धर्मः क्षयिष्णुः स प्रकीर्तितः।**
**यः परार्थे परित्यागः सोऽक्षयो मुक्तिलक्षणम्।।**

प्रतिग्रहनिवृत्तिप्रशंसा

**प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम्।**
**ये लोका दानशीलानां स तानाप्नोति शाश्वतान्।।**
**योऽर्थान्प्राप्य नृपाद्विप्रः शोचितव्यो महर्षिभिः।**
**न स पश्यति मूढात्मा नरके यातनाभयम्।।**

---

(१) **पद्म.** ५।१५।३०१-३०४.
(२) **पद्म.** ५।४।१२०.
(३) **पद्म.** ५।१९।२३३-२३८, २४६-२५३, २६६-२६९.

§ ज्ञायमान इत्यत्र श्नः प्राप्तौ यगिति छान्दसो विकरणव्यत्ययः।

प्रतिग्रहसमर्थोऽपि न प्रसज्येत्प्रतिग्रहे।
प्रतिग्रहेण विप्राणां ब्रह्मतेजश्च हीयते।।
प्रतिग्रहसमर्थानां निवृत्तानां प्रतिग्रहात्।
य एव ददतां लोकः स एवाप्रतिगृह्णताम्।।

अत्यन्तापदि क्षत्रियस्य
प्रतिग्रहानुमतिः

[1]कष्टां चैव दशां प्राप्य क्षत्रियोऽपि प्रतिग्रहम्।
कुर्वन्न दोषमाप्नोति मनुरेवात्र कारणम्।।
[2]वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्।।

ब्राह्मणप्रशंसा

**भीष्म उवाच –**

[3]मनुष्यस्यापि देवत्वं सुखं राज्यं धनं यशः।
जयं भोग्यं तथाऽऽरोग्यमायुर्विद्यां श्रियं सुतम्।
बन्धुवर्गशिवं सर्वं ब्रूहि मे विप्रसत्तम।।

**पुलस्त्य उवाच –**

एभिर्गुणैर्युतः श्रीमान् सदैव ब्राह्मणो भुवि।
त्रैलोक्ये तु सदा मेध्यो विप्रदेवो युगे युगे।।
पूजयित्वा द्विजान् देवाः स्वर्गं भुञ्जन्ति चाक्षयम्।
धरामवन्ति राजानो लोका वित्तं सुखं शिवम्।।
लोके विप्रसमो नास्ति देवानामपि दैवतम्।
स च धर्ममयः साक्षाद्भुवि मुक्तिप्रदो भृशम्।।
लोकानां स गुरुः पूज्यस्तीर्थभूतोऽनघो जनः।
सर्वदेवालयः सत्त्वो( ? त्त्वात्) निर्मितो ब्रह्मणा पुरा।।
इममर्थं पुरा पृष्टो नारदेन पितामहः।
कस्मिंस्तु पूजिते ब्रह्मन् प्रसन्नो माधवो भवेत्।।

**ब्रह्मोवाच –**

यस्य विप्राः प्रसीदन्ति तस्य विष्णुः प्रसीदति।
तस्माद्ब्राह्मणशुश्रूषुः परं ब्रह्माधिगच्छति।।
विष्णुर्ब्राह्मणदेहेषु सदा वसति नान्यथा।
तस्माद्ब्राह्मणपूजायां विष्णुस्तुष्यति तत्क्षणात्।।
विप्रान् यः पूजयेन्नित्यं दानमानार्चनादिभिः।
कृतं क्रतुशतं तेन विध्युक्तं प्रियदक्षिणम्।।
ब्राह्मणस्य मुखं क्षेत्रमनूषरमकण्टकम्।
वापयेत्सर्वबीजानि सा कृषिः सार्वकालिकी।।
अभिगम्य तु यद्दानं यच्च दानं मनोरमम्।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते।।
मनसाऽपि न हिंसन्ति भूदेवमाततायिनम्।
मनोनुकूलतां यान्ति देवैरपि च दुर्लभाम्।।
गृहे यस्याऽऽगतो विद्वान्नैराश्यं नोपगच्छति।
सर्वपापक्षयस्तस्य चाक्षयं स्वर्गमश्नुते।।
काले देशे च पात्रे च विप्रे यच्चार्पयेद्वसु।
तद्धनं चाक्षयं विद्धि जन्मजन्मसु तिष्ठति।।
न च दारिद्र्यतामेति नाऽऽतुरो न च कातरः।
मनोनुकूलां प्रमदामर्चयित्वा द्विजाँल्लभेत्।।
कृत्वा साहसकर्माणि दद्याद्विप्राय पर्वसु।
शोधनैकगुणं प्रोक्तमभयं लाभ एव च।।
विप्रपादतलोद्घृष्टिक्षती भवति यः करः।
स करः श्रीकरो नाम अन्यः कर्मकरः करः।।
विप्रपादरजःपूतास्तथैव जलबिन्दुभिः।
विपद्भिश्च सदा पापैर्मुक्ता यान्ति त्रिविष्टपम्।।
विप्रपादरजःपूताः शुचयो गृहचत्वराः।
पुण्यक्षेत्रसमास्ते स्युः प्रशस्ता यज्ञकर्मसु।।
आदौ ब्रह्ममुखाद्विप्रः समुद्भूतः पुराऽनघ।
वेदास्तत्रैव संजाताः सृष्टिसंस्थितिहेतवः।।
तस्माद्विप्रमुखे वेदाश्चार्पिताः पुरुषेण हि।
पूजार्थं सर्वलोकानां सर्वयज्ञार्थतो ध्रुवम्।।
पितृयज्ञे विवाहे च वह्निकार्येषु शान्तिषु।
प्रशस्ता ब्राह्मणा नित्यं सर्वस्वस्त्ययनेषु च।।
देवा भुञ्जन्ति हव्यानि बलिं प्रेतादयोऽसुराः।
पितरो हव्यकव्यानि विप्रस्यैव मुखाद्ध्रुवम्।।
देवेभ्यश्च पितृभ्यश्च यो दद्याद्यज्ञकर्मसु।
दानं होमं बलिं चैव विना विप्रेण निष्फलम्।।
भुञ्जन्ति चासुरास्तत्र प्रेता दैत्याश्च राक्षसाः।
तस्माद्ब्राह्मणमाहूय तेषु कर्माणि कारयेत्।
काले देशे च पात्रे च लक्षकोटिगुणं भवेत्।।

---

(१) पद्म. ५।३३।३३-३४; बाल. १।१२१ पृ. ३८३ चैव दशां प्राप्य (तु सदृशामाप्य) चतुर्थचरणे (न तु वै पात्रकारणात्) पाद्मे भूमिखण्डे.

(२) पद्म. ५।३३।३४-३५.

(३) पद्म. ५।४३।९९-१२७.

श्रद्धया च द्विजं दृष्ट्वा प्रकुर्यादभिवादनम्।
दीर्घायुस्तस्य वाक्येन चिरजीवी भवेन्नरः।।
अनभिवादनाद्विप्रद्वेषादश्रद्धयाऽपि च।
आयुः क्षीणं भवेत्पुंसां भूतिनाशश्च दुर्गतिः।।
आयुर्वृद्धिर्यशोवृद्धिर्वृद्धिर्विद्याधनस्य च।
पूजयित्वा द्विजाञ्श्रेष्ठो भवेन्नास्त्यत्र संशयः।।
न विप्रपादोदककर्दमानि न वेदशास्त्रप्रतिघोषितानि।
स्वाहास्वधास्वस्तिविवर्जितानि श्मशानतुल्यानि गृहाणि तानि।।
[1]यस्य (? श्च) तस्य कुले जातो गुणवानेव तैर्गुणैः।
साक्षाद्ब्रह्ममयो विप्रः पूजनीयः प्रयत्नतः।।
दानं दद्याच्च विधिवत्सदा पर्वणि पर्वणि।
अक्षयं लभते दाता जन्मकोटिशतान्प्र(? तं प्र)ति।।
कदाचित्क्रियते पापं विप्रः पापैर्न लिप्यते।
चाण्डालस्य गृहे तिष्ठन्भास्करज्वलनौ यथा।।
याजनाध्यापनाद्यौनात्तथैवासत्प्रतिग्रहात्।
विप्राणां न भवेद्दोषो ज्वलनार्कसमा द्विजाः।।
तान्प्रतिग्रहजान्दोषान्प्राणायामव्यवस्थिताः।
नाशयन्तीह पापानि वायुर्मेघमिवाम्बरे।।
एवं विप्रगुणान्वक्तुं न शक्नोमि द्विजोत्तम।
विश्वरूपश्च को देही स मूर्तो हरिरेव च।।
यस्य शापाद्विनाशः स्यादायुर्विद्या यशो धनम्।
वरदानात्समायान्ति सर्वाः संपत्तयस्तथा।
विष्णुर्ब्रह्मण्यतामेति सदा विप्रप्रसादतः।।
[2]न्यायेनोपार्जितां वृत्तिं ब्रह्मस्वं हरते तु यः।
अक्षयं नरकं प्राप्य पुनर्जन्म न विद्यते।।
पिशुनो यस्तु विप्राणां रन्ध्रान्वेषणतत्परः।
तं दृष्ट्वाऽप्यथ वा स्पृष्ट्वा सचैलो जलमाविशेत्।।
ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम्।
विक्रमेण तु भुञ्जानो दश पूर्वान् दशापरान्।।
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्।।

(१) पद्म. ५।४३।१५२-१५३, १५७-१६०, २००-२०२.
(२) पद्म. ५।४५।३३-३६.

[1]देववत्पूजनीयोऽसौ देवासुरगणैर्नरैः।
ब्राह्मणस्य समो नास्ति त्रिषु लोकेषु निश्चितम्।।

### ब्राह्मणानां वृत्तयः, कृषिदोषशमनं धान्यदानम्

नारद उवाच —
कां वृत्तिं समुपाश्रित्य जीवितव्यं द्विजेन हि।
अपापेन सुरश्रेष्ठ तत्त्वतो वक्तुमर्हसि।।
ब्रह्मोवाच —
अयाचिता च या भिक्षा प्रशस्ता सा प्रकीर्तिता।
उञ्छवृत्तिस्ततो भद्रा सुभद्रा सर्ववृत्तिषु।।
यामाश्रित्य मुनिश्रेष्ठा गच्छन्ति ब्रह्मणः पदम्।
दक्षिणा यज्ञशेषाणां ग्राह्या यज्ञगतेन हि।।
पठनं याजनं कृत्वा ग्रहीतव्यं समा(? मं) द्विजैः।
पाठयित्वा पठित्वा च कृत्वा स्वस्त्ययनं शुभम्।
ब्राह्मणानामिदं जीव्यं शिष्टा वृत्तिः प्रतिग्रहः।।
शास्त्रोपजीविनो धन्या धन्या वृक्षोपजीविनः।
धन्या वृक्षलताजीव्या वारिसस्योपजीविनः।।
अन्नजन्तुवधे पापं तस्य दोषोपशान्तये।
नव धान्यानि शस्तानि विप्रेभ्यः संप्रदापयेत्।।
न चेत्प्राणिवधे ह्यत्र क्षीयन्ते चाऽऽयुषो (?) ध्रुवम्।।
तस्माद्दद्यात्सुबहूनि पितृदेवद्विजातिषु।।

### आपदि सर्वजातीनां क्षत्रियवृत्तेर्युद्धस्यानुमतिः, ब्राह्मणस्य क्षत्रियवृत्त्यभावे वैश्यवृत्तिः, वैश्यवृत्तिदोषशमनं दानादि, वैश्यवृत्तौ परिहर्तव्या दोषाः

अभावात्क्षत्रिया वृत्तिर्ब्राह्मणैरुपजीव्यते।
न्याय(? य्य)युद्धेषु योद्धव्यं चरेद्वीरव्रतं शुभम्।।
स तया च द्विजो वृत्त्या यद्धनं लभते नृपात्।
पितृयज्ञादिदानेषु मेध्यं तद्धनमुच्यते।।
एवं च क्षत्रिया वृत्तिर्ब्राह्मणैरुपजीव्यते।
वैश्यैः शूद्रैस्तथाऽन्यैश्च अन्त्यजैर्म्लेच्छजातिभिः।।
ये च योधाः प्रयुध्यन्ते न्याय(? य्य)युद्धेन सर्वदा।
तेऽपि यान्ति परं स्थानं सर्वे वर्णा द्विजातयः।।

(१) पद्म. ५।४५।६०-७०, ८७-९५, ९८-११७, १२०-१२७.

न शूरो यो द्विजो भीरुरस्त्रशस्त्रविवर्जितः।
विपत्तौ वैश्यवृत्तिं च कारयेद्द्विजसत्तमः।।
वैश्यवृत्तिं वणिग्भावं कृषिं चैव तथाऽपरैः।
कारयेत्कृषिवाणिज्यं विप्रकर्म न च त्यजेत्।।
वणिग्भावान्मृषात्युक्तौ दुर्गतिं प्राप्नुयाद्द्विजः।
आर्द्रद्रव्यं परित्यज्य ब्राह्मणो लभते शिवम्।।
समुत्पाद्य ततो वृत्तिं दद्याद्विप्राय सर्वशः।
पितृयज्ञे तथा चाग्नौ जुहुयाद्विधिवद्द्विजः।।
तुलेऽसत्यं न कर्तव्यं तुला धर्मप्रतिष्ठिता।
छलभावं तुले कृत्वा नरकं प्रतिपद्यते।।
अतुलं चापि यद्द्रव्यं तत्र मिथ्या परित्यजेत्।
एवं मिथ्या न कर्तव्या मृषा पापप्रसूतिका।।
वाणिज्यं कारयेद्विप्रो मिथ्याऽवश्यं परित्यजेत्।
वृद्धिं च निक्षिपेत्तीर्थे स्वयं शेषं तु भोजयेत्।
देहक्लेशात्तत्सहस्रगुणं भवति सर्वदा।।
अर्थार्जनविधौ मर्त्या विशन्ति विषमे जले।
कान्तारमटवीं चैव श्वापदैः सेवितां तथा।।
गिरिं गिरिगुहां दुर्गान्म्लेच्छानां शस्त्रपातिनाम्।
गृहं प्रतिभयं स्थानं धनलोभात्समन्ततः।।
सुतदारान्परित्यज्य दूरं गच्छन्ति लोभिनः।
स्कन्धे भारं वहन्त्यन्ये तर्यां च केनिपातनैः
(? कैः)।।
क्षेपणीभिर्महादुःखैः सदा प्राणव्ययेन च।
अर्थस्य संचयः पुत्र प्राणात्प्रियतरो महान्।।
एभिर्न्यायार्जितं वित्तं वणिग्भावेन यत्नतः।
पितृदेवद्विजातिभ्यो दत्तं चाक्षयमश्नुते।।
एतौ दोषौ महान्तौ च वाणिज्ये लाभकर्मणि।
लोभानामपरित्यागो मृषाग्राह्यश्च विक्रयः।।
एतौ दोषौ परित्यज्य कुर्यादर्थार्जनं बुधः।
अक्षयं लभते दानाद्वणिग्दोषैर्न लिप्यते।।

ब्राह्मणस्य कृषिकर्मणि हालिकवृषभ-
संख्या गोपालनविषयक-
विधिनिषेधाश्च

पुण्यकर्मरतो विप्रः कृषिं हि परिकारयेत्।
वाहयेद्दिवसस्यार्धं बलीवर्दचतुष्टयम्।।
अभावात्त्रितयं चैव अविश्वासं न कारयेत्।
चारयेच्च तृणेऽच्छिन्ने चौरव्याघ्रविवर्जिते।।
दद्याद्घासं यथेष्टं च नित्यमातिष्ठयेत्† स्वयम्।
गोष्ठं च कारयेत्तत्र किंचिद्विघ्नविवर्जितम्।।
सदा गोमयमूत्राभ्यां विध्वंसैश्च विवर्जितम्।
न मलं निक्षिपेद्गोष्ठे सर्वदेवनिकेतने।।
आत्मनः शयनीयस्य सदृशं कारयेद्बुधः।
समं निर्वापयेद्यत्नाच्छीतवातरजस्तथा।।
प्राणस्य सदृशं पश्येद्गां च सामान्यविग्रहम्।
अस्य देहे सुखं दुःखं तथा तस्यैव कल्पते।।
अनेन विधिना यस्तु कृषिकर्माणि कारयेत्।
स च गोवाहनैर्दोषैर्न लिप्येत धनी भवेत्।।
दुर्बलं पीडयेद्यस्तु तथैव गदसंयुतम्।
अतिबालातिवृद्धं च स गोहत्यां समालभेत्।।
विषमं वाहयेद्यस्तु दुर्बलेन बलेन च।
स गोहत्यासमं पापं प्राप्नोतीह न संशयः।।
यो वाहयेद्विना सस्यं खादन्तं गां निवारयेत्।
मोहात्तृणं जलं वाऽपि स गोहत्यां समालभेत्।।
अमावास्यां च संक्रान्त्यां पौर्णमास्यां तथैव च।
हलस्य वाहनात्पापं गवामयुतहत्यया।।

गोब्राह्मणयोर्जगद्यात्रानिर्वाहकत्वेन
प्रशंसा

यथा विप्रस्तथा गौश्च द्वयोः पूजाफलं समम्।
विचारे ब्राह्मणो मुख्यो नृणां गावः पशौ तथा।।

नारद उवाच –
विप्रो ब्रह्ममुखे जातः कथितो मे त्वयाऽनघ।
कथं गोभिः समो नाथ विस्मयो मे विधे ध्रुवम्।।

ब्रह्मोवाच –
शृणु चात्र यथातथ्यं ब्राह्मणानां गवां यथा।
एकपिण्ड( ? ऐकपिण्ड्यं) क्रियैक्यं तु पुरुषे -
निर्मितं पुरा।।

---

† 'आतिष्ठयेत्' इत्येवं व्युत्पादनीयम् – अतिक्रम्य तिष्ठतीत्यतिष्ठः उत्कृष्टः। अतिष्ठ एव आतिष्ठः। स्वार्थे अण्। ततः 'तत्करोति०' इति णिच्। आतिष्ठं कुर्यात् पालनपोषणादिना उत्कृष्टं कुर्यादित्यर्थः। 'आतिष्ठाय' (ऐब्रा. ३७।२) इति ब्राह्मणप्रयोगे तु भावे अण्।

पुरा ब्रह्ममुखोद्भूतं कूटं तेजोमयं महत्।
चतुर्भागप्रजातं तद्वेदाग्निद्विजगौस्तथा
(? वेदोऽग्निर्गौर्द्विजस्तथा)।।
प्राक्तेजःसंभवो वेदो वह्निरेव तथैव च।
परतो गौस्तथा विप्रो जाताश्चैव पृथक्पृथक्।।
तत्र सृष्टा मया चाऽऽदौ वेदाश्चत्वार एकशः।
स्थित्यर्थं सर्वलोकानां भुवनानां समन्ततः।।
अग्निर्हव्यानि भुञ्जीत देवहेतोस्तथा द्विजः।
आज्यं गोप्रभवं विद्धि तस्मादेते प्रसूतकाः।।
न सन्ति यदि लोकेषु चत्वारोऽमी महत्तराः।
तदाऽखिलं च भुवनं नष्टं स्थावरजङ्गमम्।।

प्रतिग्रहनिवृत्तिप्रशंसा

[1]प्रतिग्रहनिवृत्तो यः प्रतिग्रहक्षमोऽपि सन्।
स द्विजो द्योतते वैश्य कामरूपश्चरन् दिवि।।

चातुर्वर्ण्यसृष्टिः

[2]मुखतो ब्राह्मणः सृष्टो बाहुभ्यां क्षत्रियस्तथा।
ऊर्वोर्वैश्यस्तथा पद्भ्यां शूद्रश्चैवमजायत।।

ब्राह्मणप्रशंसा

[3]महाभागवतश्रेष्ठो ब्राह्मणो वै गुरुर्नृणाम्।
सर्वेषामेव लोकानामसौ पूज्यो यथा हरिः।।

बीजवापविषयकं धर्मकृत्यम्

[4]या ओषधीरित्येवं बीजं तदनुमन्त्रयेत्।
कृत्वा सुवर्णतोयाक्तं लक्षण्यो वापयेत्पुमान्।।
प्राङ्मुखैर्वाहयेद्गोभिः प्राङ्मुखश्चैव वापयेत्।
शङ्खपुण्याहघोषेण बीजवापः प्रशस्यते।।
बीजवापे तथा मन्त्रं निबोधाग्रे ततो मम।
प्रजापतये कश्यपाय देवलाय नमः सदा।।
सदासस्यावृते देवी बीजं पुत्रे धनेषु च (?)।
कालश्च सर्वः पूर्वोक्तः संग्रहेऽपि प्रशस्यते।।
देवतानां पितॄणां च कृत्वा तत्रापि पूजनम्।
नववस्त्रपरिधानः श्वेतमाल्यानुलेपनः।।

(१) पद्म. ६।२४५।५.
(२) पद्म. ६।२५७।२९.
(३) पद्म. ६।२८०।२६.
(४) आपा. १४२.

प्राङ्मुखः प्राशनं कुर्यात्पात्रे सौवर्णराजते।
तत्रापि भोजयेद्विप्रान् तथैव च कृषीवलान्।।

तीर्थे प्रतिग्रहादिनिषेधः, व्रत-मूलकजीवननिषेधः

[1]जीवनार्थं हतं तीर्थं जीवनार्थं हतं व्रतम्।
असत्या च हता वाणी तथा पैशुन्यवादिनी।।
न तीर्थे प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि।
तीर्थे प्रतिग्रहो यस्तु तीर्थविक्रय एव सः।।
विक्रीतायां तु गङ्गायां विक्रीतः स्याज्जनार्दनः।
जनार्दने तु विक्रीते विक्रीतं स्याज्जगत्त्रयम्।।
यस्तु लोभाद्द्विजस्तीर्थे प्रतिग्रहरुचिर्भवेत्।
नैव तस्य परो लोको नायं लोको दुरात्मनः।।
गङ्गागयाकुरुक्षेत्रे तीर्थे चामरकण्टके।
ददद्दाति दारिद्र्यं गृह्णन् गृह्णाति भारत।।
महादानानि ये विप्रा गृह्णन्ति ज्ञानदुर्बलाः।
वृक्षास्ते द्विजरूपेण जायन्ते ब्रह्मराक्षसाः।।

प्रतिग्रहाधिकारानधिकारौ

न वेदबलमाश्रित्य प्रतिग्रहरुचिर्भवेत्।
अज्ञानाद्वा प्रमादाद्वा जायन्ते( ? ते) नरकालयः।।
[2]गृही चेद्धर्मनिरतो बहिरर्जितवित्तभुक्।
व्यवहारी च योग्योऽत्र गृह्णीयाद्विमलं वसु।।

सप्त धनार्जनोपायाः

[3]सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च।।
प्रयोगः शास्त्रीयमार्गेण कुसीदम्। कर्मयोगः आर्त्विज्यम्।
विपा. ४।१६

भूमिब्रह्माण्डप्रतिग्रह-निषेधः

[4]ब्रह्माण्डं भूमिदानं च ग्राह्यं नैव च तद्भवेत्।
गृह्णन् दोषमवाप्नोति ब्रह्महत्यां न संशयः।।

(१) विपा. ३।२।८४०.
(२) विपा. ३।२।८४१.
(३) विपा. ४।१६.
(४) निप्र. २।२८१ पू.; बाल. १।२१६ पृ. ४७१ नैव च (नैकेन).

भूमिदानमत्र ब्रह्माण्डसाहचर्यात् षोडशमहादानान्तर्गत-काञ्चनमेदिनीदानमिति हेमाद्रिः। २।२८१

अत्र महादानानां ब्रह्माण्डमेदिनीव्यतिरिक्तानां विशेषेण निषेधाभावेऽपि कर्मविपाके महादानग्रहणस्य रोगहेतुत्वब्रह्म-राक्षसादिहेतुत्वस्मरणादग्राह्यत्वम्।

* निप्र. २।२८३

प्रेतशय्याप्रतिग्रहनिषेधः

[१]**तेन दुष्टा तु सा शय्या न ग्राह्या द्विजसत्तमैः।**
**गृहीतायां तु तस्यां हि पुनःसंस्कारमर्हति।।**

मृतशय्याधिकारे पद्मपुराणे – तेनेति।

* निप्र. २।२८१

[२]**वेदेषु च पुराणेषु शय्या सर्वत्र गर्हिता।**
**गृहीतायां तु जायन्ते सर्वे नरकगामिनः।।**

भिक्षाधिकारी

[३]**व्याधितस्यार्थहीनस्य कुटुम्बात्प्रस्थितस्य च।**
**अध्वानं वा प्रपन्नस्य भिक्षाचर्या विधीयते।।**

शिवस्वग्रहणनिषेधः

[४]**मक्षिकापादमात्रं यः शिवस्वमुपजीवति।**
**लोभान्मोहात्स पच्येत कल्पान्तं नरके नरः।।**

## ब्रह्मपुराणम्

वर्णसृष्टिः

[५]**ब्रह्म क्षत्रं तथा वैश्यं शूद्रं चैव चतुष्टयम्।**
**अन्त्यजातांश्च म्लेच्छांश्च ससर्ज विविधान्पृथक्।।**

वार्तापदार्थः

[६]**कृषिर्वणिज्या तद्वच्च तृतीयं पशुपालनम्।**
**विद्या ह्येता( ? षा) महाभागा वार्ता वृत्तित्रयाश्रया।।**
**कर्षकाणां कृषिर्वृत्तिः पण्यं तु पणजीविनाम्।**
**अस्माकं गाः परा वृत्तिर्वार्ता भेदैरियं त्रिभिः।।**

* बाल. निप्रगतम्।
(१) **निप्र.** २।२८१ हि (स); **बाल.** १।२१६ पृ. ४७१.
(२) **बाल.** १।२१६ पृ. ४७१.
(३) **मर.** २६८; **आत.** ४२८ स्थित (च्युत) विष्णुपुराणम्.
(४) **विपा.** ३।२।८३९.
(५) **ब्रह्म.** ४५।३५.
(६) **ब्रह्म.** १८७।४४-४५.

चातुर्वर्ण्यवृत्तयः

[१]**वृत्त्यर्थं याजयेत्त्वन्यान्द्विजानध्यापयेत्तथा।**
**कुर्यात्प्रतिग्रहादानं यज्ञार्थं ज्ञानतो द्विजाः।।**
**शस्त्राजीवो महीरक्षा प्रवरा ‡तस्य जीविका।**
**तस्यापि प्रथमे कल्पे पृथिवीपरिपालनम्।।**
**धरित्रीपालनेनैव कृतकृत्या नराधिपाः।**
**भवन्ति नृपते रक्षा यतो यज्ञादिकर्मणाम्।।**
**पाशुपाल्यं वणिज्यां च कृषिं च मुनिसत्तमाः।**
**वैश्याय जीविकां ब्रह्मा ददौ लोकपितामहः।।**
**†द्विजातिसंश्रयं कर्म तदर्थं तेन पोषणम्।**
**क्रयविक्रयजैर्वाऽपि धनैः कारुभवैस्तु वा।।**

वर्णानामापद्वृत्तयः

**भृत्यादिभरणार्थाय सर्वेषां च परिग्रहाः।।**
**क्षात्रं कर्म द्विजस्योक्तं वैश्यकर्म तथाऽऽपदि।**
**राजन्यस्य च वैश्योक्तं शूद्रकर्माणि चैतयोः।।**
**ससामर्थ्ये सति त्याज्यमुभाभ्यामपि च द्विजाः।**
**तदेवाऽऽपदि कर्तव्यं न कुर्यात्कर्मसंकरम्।।**

कर्मविपाकेन जघन्यवर्णवृत्त्या
वर्णापकर्षः, स्वस्ववृत्त्या
वर्णोत्कर्षः, वर्णभेदो
नैसर्गिकः

[२]**चातुर्वर्ण्यं भगवता पूर्वं सृष्टं स्वयंभुवा।**
**केन कर्मविपाकेन वैश्यो गच्छति शूद्रताम्।।**
**वैश्यो वा क्षत्रियः केन द्विजो वा क्षत्रियो भवेत्।**
**प्रतिलोमे कथं देव शक्यो धर्मो( ? वर्णो) निवर्तितुम्।।**
**केन वा कर्मणा विप्रः शूद्रयोनौ प्रजायते।**
**क्षत्रियः शूद्रतामेति केन वा कर्मणा विभो।।**
**एतं मे संशयं देव वद भूतपतेऽनघ।**
**त्रयो वर्णाः प्रकृत्येह कथं ब्राह्मण्यमाप्नुयुः।।**

‡ तस्य प्रकरणात् क्षत्रियस्य।
† शूद्रविषयमेतत्।
(१) **ब्रह्म.** २२२।४, ८-९, ११, १३, १५, १९-२०.
(२) **ब्रह्म.** २२३।८-२०, ३२.

**ब्राह्मण्यं देवि दुष्प्रापं निसर्गाद्ब्राह्मणः शुभे।**
**क्षत्रियो वैश्यशूद्रौ वा निसर्गादिति मे मतिः।।**
**कर्मणा दुष्कृतेनेह स्थानाद्भ्रश्यति स द्विजः।**
**श्रेष्ठं वर्णमनुप्राप्य तस्मादाक्षिप्यते पुनः।।**
**स्थितो ब्राह्मणधर्मेण ब्राह्मण्यमुपजीवति।**
**क्षत्रियो वाऽथ वैश्यो वा ब्रह्मभूयं स गच्छति।।**
**यश्च विप्रत्वमुत्सृज्य क्षत्रधर्मान्निषेवते।**
**ब्राह्मण्यात्स परिभ्रष्टः क्षत्रयोनौ प्रजायते।।**
**वैश्यकर्म च यो विप्रो लोभमोहव्यपाश्रयः।**
**ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा।।**
**स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात्।**
**स्वधर्मात्प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुयात्।।**
**तत्रासौ निरयं प्राप्तो वर्णभ्रष्टो बहिष्कृतः।**
**ब्रह्मलोकात्परिभ्रष्टः शूद्रयोनौ प्रजायते।।**
**क्षत्रियो वा महाभागे वैश्यो वा धर्मचारिणि।**
**स्वानि कर्माण्यपाकृत्य शूद्रकर्म निषेवते।।**
**स्वस्थानात्स परिभ्रष्टो वर्णसंकरतां गतः।**
**ब्राह्मणः क्षत्रियो वैश्यः शूद्रत्वं याति तादृशः।।**
**एभिस्तु कर्मभिर्देवि शुभैराचरितैस्तथा।**
**शूद्रो ब्राह्मणतां गच्छेद्वैश्यः क्षत्रियतां व्रजेत्।।**

तीर्थे जलावधिकहस्तचतुष्टयदेशे
प्रतिग्रहनिषेधः

[१]**प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम्।**
**तत्र नारायणः स्वामी नान्यः स्वामी कदाचन।**
**न तत्र प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि।।**

अत्र प्रवाहशब्दो जलावध्युपलक्षकः। तेन पुष्करादौ तडागवाप्यादिरूपे तीर्थे प्रवाहाभावेऽपि जलमवधीकृत्य हस्तचतुष्टयाभ्यन्तरे निषेधो ज्ञेयः।

विपा. ३।२।८४३-८४४

ब्राह्मणदंपतिभ्यां
ब्राह्मणोत्पत्तिः

[२]**ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः।।**

(१) **विपा.** ३।२।८४३.
(२) **सिन्धु.** ९४४; **शूक.** २५७; **संग.** ६४०.

कृष्यारम्भे पृथ्वीपूजनं द्वाविंशति-
प्रजापतिपूजनं च, हलवाहने
दिङ्नियमः बीजावापे
कृत्यं च

[१]**चैत्रे तु कृष्णपञ्चम्यां कश्मीरा तु रजस्वला।**
**नित्यं भवति तस्मात्तां कृत्वा शैलमयीं स्त्रियः।।**

कश्मीरा धरित्री। कृर. ५३२

**अभ्यङ्गवस्त्रनैवेद्यैः पूजयन्ति दिनत्रयम्।**
**पुष्पालंकारधूपैश्च गोरसं वर्जयन्ति च।।**
[२]**अष्टम्यां तु ततः स्नाप्य ताभिरेव गृहे गृहे।**
**सुस्नाताभिः प्रहृष्टाभिर्जीवपत्नीभिरेव हि।।**
[३]**भूषिताभिः शुभैर्वस्त्रैर्माल्यैर्गन्धैर्विशेषतः।**
**अनन्तरं द्विजैः स्नाप्य सर्वौषधिजलैर्जनैः।।**
[४]**गन्धैर्बीजैस्तथा रत्नैः फलैः सिद्धार्थकैस्तथा।**
**स्नपयित्वा च तां देवीं गन्धैर्माल्यैश्च पूजयेत्।।**
[५]**वस्त्रालंकारपुष्पैश्च तथा पुण्यैश्च गोरसैः।**
**मुद्गपिष्टैस्त्रिकोणैश्च तथा भक्ष्यैश्च शालिजैः।।**
[६]**पयसा पायसैर्हृद्यैर्होमैर्ब्राह्मणतर्पणैः।**
**तन्निवेदितशिष्टं तु प्राशितव्यं गृहे गृहे।।**
[७]**तन्त्रीवाद्यं सुमधुरं ततः श्रोतव्यमादरात्।**
**अतः परमृतुस्नाता गर्भं गृह्णाति मेदिनी।।**
[८]**आदित्यमहिषी राज्ञी पौराणी देवपूजिता।**
**राज्ञीस्नपनमेतस्मात्कारणात्तत्र विश्रुतम्।।**

(१) **निक.** ४४३; **कृर.** ५३२.
(२) **निक.** ४४३ तु (च) स्नाप्य ता (स्नाप्यास्ता) प्रहृ (प्रकृ) हि (च); **कृर.** ५३२.
(३) **निक.** ४४३ स्नाप्य (स्नाप्याः) जलैर्जनैः (युतैर्जलैः); **कृर.** ५३२.
(४) **निक.** ४४३; **कृर.** ५३२-५३३.
(५) **निक.** ४४३-४४४; **कृर.** ५३३ तथा भक्ष्यैश्च (भक्ष्यैश्चैव हि).
(६) **निक.** ४४४ प्राशि (प्रार्थि); **कृर.** ५३३ **द्यैर्होमैर्ब्रा** (द्यैस्तथा ब्रा).
(७) **निक.** ४४४ वाद्यं सुमधुरं (मनोहरं वाद्यं); **कृर.** ५३३.
(८) **निक.** ४४४; **कृर.** ५३३.

[१]ब्रह्मा विष्णुश्च रुद्रश्च कश्यपः सुरभी तथा।
इन्द्रः प्रचेताः पर्जन्यः शेषश्चन्द्रार्कवह्नयः।।
[२]बलदेवो हलं भूमिर्वृषभौ रामलक्ष्मणौ।
रक्षोघ्नौ जानकी सीता युगं गगनमेव च।।
सीता लाङ्गलपद्धतिः। युगं युगकाष्ठम्।

कृर. ५३३

[३]एते द्वाविंशतिः प्रोक्ताः प्रजानां पतयः शुभाः।
गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे।।
[४]अर्घैः पुष्पैस्तु धूपैश्च माल्यै रत्नैः पृथक् पृथक्।
प्रदक्षिणैर्विधानेन होमैर्ब्राह्मणतर्पणैः।।
[५]ततः शकुनिसूक्तेन वाद्यशब्देन भूरिणा।
हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलंकृतः।
पूर्वोत्तरां दिशं गच्छेत् क्रमात् पौरन्दरीं शुभाम्।।
[६]कृत्वा प्रदक्षिणावर्तमैशान्यभिमुखौ ततः।
विमुच्य वृषभौ बीजं पुरुषो लक्षणान्वितः।।
[७]तृप्तः सुवासाः स्रग्वी च सुवर्णजलसेचितम्।
सुवर्णपात्रसंयुक्तं प्राङ्मुखो निर्वपेद्भुवि।।
[८]उप्त्वा बीजं तु तत्रैव भोक्तव्यं बन्धुभिः सह।
उत्सवश्चैव कर्तव्यो गीतनृत्यसमाकुलः।।

(१) **गृक.** १९६ शेषश्च (शेषच); **निक.** ४४४; **कृर.** ५३३; **गृर.** ४३२ कश्यपः (काश्यपः).

(२) **गृक.** १९६ भूमिर्वृ (भूमिः ॠ) गगन (गमन); **निक.** ४४४; **कृर.** ५३३; **गृर.** ४३२ गगन (गमन).

(३) **गृक.** १९६ गोमङ्गले तु (गा मङ्गलेषु); **निक.** ४४४; **गृर.** ४३२.

(४) **गृक.** १९७ अर्घैः पुष्पैस्तु धूपैश्च मा (अर्घ्यैः पुष्पैस्तथा धूपैर्मा) प्रद (सद); **निक.** ४४४; **कृर.** ५३३; **गृर.** ४३२ पुष्पैस्तु धूपैश्च मा (पुष्पैस्तथा धूपैर्मा) प्रद (सद).

(५) **गृक.** १९७ सूक्तेन (भुक्तेन); **निक.** ४४४; **कृर.** ५३३; **गृर.** ४३२ शकुनि (शाकुन).

(६) **गृक.** १९७ न्यभिमुखौ त (न्याभिमुखस्त); **निक.** ४४४; **कृर.** ५३३-५३४; **गृर.** ४३२ द्वितीयचरणे (मैशान्यभिमुखोद्यतः).

(७) **गृक.** १९७ तृप्तः (हृष्टः); **निक.** ४४४ सेचि (सेवि) निर्वपे (निपते); **कृर.** ५३४ सेचि (सेवि); **गृर.** ४३२ त्रसंयुक्तं (त्रे कृत्वा तु).

(८) **गृक.** १९७ तु (च) नृत्य (वाद्य); **निक.** ४४४-४४५; **कृर.** ५३४; **गृर.** ४३२ गृकवत्.

हालिकवृषभविषये कर्तव्यानि

[१]न षण्ढं वाहयेद्धेनुं न गां भारेण पीडयेत्।
न वाहनीयाः शिशिरे वृषभा यत्रकुत्रचित्।।

## ब्रह्मवैवर्तपुराणम्

ब्रह्मावयवेभ्यश्चातुर्वर्ण्योत्पत्तिः

[२]बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः।
ताः स्थिता देशभेदेषु गोत्रशून्याश्च शौनक।।
चन्द्रादित्यमनूनां च प्रवराः क्षत्रियाः स्मृताः।
ब्रह्मणो बाहुदेशाच्चैवान्याः क्षत्रियजातयः।।
ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः।।

ब्राह्मणप्रशंसा

[३]ब्रह्मविष्णुमहेशाद्याः सुराः सर्वे च संततम्।
भुञ्जते विप्रदत्तं तु फलपुष्पजलादिकम्।।
ब्राह्मणावाहिता देवाः शश्वद्विश्वेषु पूजिताः।
न च विप्रात्परो देवो विप्ररूपी स्वयं हरिः।।
ब्राह्मणे परितुष्टे च तुष्टो नारायणः स्वयम्।
नारायणे च संतुष्टे संतुष्टाः सर्वदेवताः।।
सर्ववर्णात्परो विप्रो नास्ति विप्रसमो गुरुः।
वेदवेदाङ्गतत्त्वज्ञ इत्याह कमलोद्भवः।।
पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे।
सागरे यानि तीर्थानि विप्रपादेषु तानि च।।
विप्रपादोदकं पीत्वा यावत्तिष्ठति मेदिनी।
तावत्पुष्करपा(? प)त्रेषु पिबन्ति पितरो जलम्।।
विप्रपादोदकं पुण्यं भक्तियुक्तश्च यः पिबेत्।
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः।।
महारोगी यदि पिबेद्विप्रपादोदकं द्विज।
मुच्यते सर्वरोगाच्च मासमेकं तु भक्तितः।।
अविद्यो वा सविद्यो वा संध्यापूतो हि यो द्विजः।
स एव विष्णुसदृशो न हरौ विमुखो यदि।।
घ्नन्तं विप्रं शपन्तं वा न हन्यान्न च तं शपेत्।
गोभ्यः शतगुणं पूज्यो हरिभक्तश्च स स्मृतः।।

(१) **गृक.** १९७; **निक.** ४६० षण्ढं (षण्डं) पू.; **गृर.** ४३३ निकवत्; **निप्र.** २।५६९ सर्वं निकवत्.

(२) **ब्रह्मवै.** १।१०।१४-१६.

(३) **ब्रह्मवै.** १।११।१३-१५, २०, २६-३२.

पादोदकं च नैवेद्यं भुङ्क्ते विप्रस्य यो द्विजः।
नित्यं नैवेद्यभोजी च राजसूयफलं लभेत्।।
[1]दुर्लभा मानवी जातिः सर्वजातिषु भारते।
सर्वाभ्यो ब्राह्मणः श्रेष्ठः प्रशस्तः सर्वकर्मसु।।
[2]सर्वेषामाश्रमाणां च द्विजातेर्जातिरुत्तमा।
स्वधर्मनिरतश्चैव तेषु श्रेष्ठश्च भारते।।
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी।
तावत्पुष्करपत्रेषु पिबन्ति पितरो जलम्।।
पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे।
सागरे यानि तीर्थानि विप्रपादेषु तानि च।।
विप्रपादोदकं चैव पापव्याधिविनाशनम्।
सर्वतीर्थोदकसमं भुक्तिमुक्तिप्रदं शुभम्।।
विप्रो मानवरूपी च देवदेवो जनार्दनः।
विप्रेण दत्तं द्रव्यं च भुञ्जते सर्वदेवताः।।
[3]कर्मणा ब्राह्मणो जातः करोति ब्रह्मभावनाम्।
स्वधर्मनिरतः शुद्धस्तस्माद्‌ब्राह्मण उच्यते।।
[4]पृथिव्यां ब्राह्मणा देवा इति वेदे निरूपितम्।
सर्वेषां पूजनात्तात सुप्रशस्तं द्विजार्चनम्।।
साक्षात्खादति नैवेद्यं विप्ररूपी जनार्दनः।
ब्राह्मणे परितुष्टे च संतुष्टाः सर्वदेवताः।।
किं तस्य देवपूजायां यो नियुक्तो द्विजार्चने।
पूजिता ब्राह्मणा येन पूजिताः सर्वदेवताः।।
देवाय दत्त्वा नैवेद्यं द्विजाय न प्रयच्छति।
भस्मीभूतं च नैवेद्यं पूजनं निष्फलं भवेत्।।
विप्राय देवनैवेद्यदानाद्ध्रुवमनन्तकम्।
तुष्टो देवो वरं दत्त्वा प्रयाति च स्वमन्दिरम्।।
[5]न दत्त्वा वस्तु देवाय दत्तं विप्राय चेत्सुधीः।
भुक्त्वा विप्रमुखे देवास्तुष्टाः स्वर्गं प्रयान्ति च।।
तस्मात्सर्वप्रयत्नेन विप्राणामर्चनं कुरु।
प्रशस्तफलदातॄणामिह लोके परत्र च।।

(१) ब्रह्मवै. २।२६।२४.
(२) ब्रह्मवै. २।५४।१२२, १३३-१३६.
(३) ब्रह्मवै. ३।३५।७०.
(४) ब्रह्मवै. ४।२१।५४-५८.
(५) ब्रह्मवै. ४।२१।६१-६९.

जपस्तपश्च पूजा वा यज्ञो दानं महोत्सवः।
सर्वेषां कर्मणां सारा विप्रतुष्टिश्च दक्षिणा।।
ब्राह्मणानां शरीरेषु तिष्ठन्ति सर्वदेवताः।
पादेषु सर्वतीर्थानि पुण्यानि पादधूलिषु।।
पादोदके च विप्राणां तीर्थतोयानि सन्ति च।
तत्स्पर्शात्सर्वतीर्थेषु स्नानजन्यफलं लभेत्।।
नश्यन्ति भक्षणाद्रोगा भक्तिभावेन बल्लव।
सप्तजन्मकृतात्पापान्मुच्यन्ते नात्र संशयः।।
पापं पञ्चविधं कृत्वा यो विप्रं प्रणमेद्‌बुधः।
स स्नातः सर्वतीर्थेषु सर्वपापात्प्रमुच्यते।।
ब्राह्मणस्पर्शमात्रेण मुक्तो भवति पातकी।
दर्शनान्मुच्यते पापादिति वेदे निरूपितम्।।
अप्राज्ञो वाऽथ प्राज्ञो वा ब्राह्मणो विष्णुविग्रहः।।
[1]विप्रपादोदकं पीत्वा तीर्थस्थानी भवेन्नरः।
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी।
तावत्पुष्करपात्रेषु पिबन्ति पितरो जलम्।।
[2]श्रेष्ठो जातिषु ब्राह्मणः।।

प्रतिग्रहलब्धानां देवप्रतिमानां
तिलधेन्वादीनां चाऽऽत्मो-
पयोगे विक्रये वा
न दोषः

**सुबाहुरुवाच –**

[3]देवानां प्रतिमां विप्र गृहीत्वा ब्राह्मणः स्वयम्।
आत्मोपयोगं कुरुते विक्रीत्वा वा विभज्य वा।
तिलधेन्वादयश्चैव कथं भक्त्या विजानता।
धेनुत्वाद्‌भक्षणं शस्तं न शस्तं वेति संशयः।।

**विश्वामित्र उवाच –**

धर्मस्य मूलं प्रथमं श्रुतिं वेदविदो जगुः।
श्रुतिर्मूलं स्मृतीनां च पुराणं सेतिहासकम्।।
श्रुतिमूलं समाख्यातं तदुक्तं नैव चालयेत्।
दानकाले तु देवत्वं प्रतिमानां प्रकीर्तितम्।।

(१) ब्रह्मवै. ४।८३।२८-२९.
(२) ब्रह्मवै. ४।८६।८३.
(३) बाल. १।२१६ पृ. ४८७.

**धेनूनामपि धेनुत्वं श्रुत्युक्तं दानयोगतः।**
**दांतुर्वै दानकाले तु धेनवः परिकीर्तिताः।।**
**विप्रस्य व्ययकाले तु द्रव्यं तदिति निश्चयः।।**
**दानसंबन्धि विप्रेण द्रव्यमादाय गच्छता।**
**तत्सर्वं विदुषा तेन विक्रेयं स्वेच्छया विभो।।**
**कुटुम्बभरणं कार्यं धर्मकार्यं च सर्वशः।**
**अन्यथा नरकं यातीत्येवमाह पितामहः।।**

वैश्यादीनां तुलामाने
वञ्चनं पापम्

**[१]वञ्चनं तु तुलामाने वैश्यानां पापमुच्यते।**
**मांसविक्रयिणां चैव सुराविक्रयिणां तथा।।**

## वराहपुराणम्

विराडवयवेभ्यश्चातुर्वर्ण्य-
सृष्टिः

**[२]ससर्ज यो वक्त्रत एव विप्रान्**
**भुजान्तरे क्षत्रमथोरुयुग्मे।**
**विशः पदाग्रेषु तथैव शूद्रा-**
**न्नमामि तं विश्वतनुं पुराणम्।।**
**[३]य एवाग्निः स वै तेजो ब्राह्मं परमकारणम्।**
**बाहुभ्यामप्यसौ तेजः क्षात्रं तेजः ससर्ज ह।**
**ऊरुभ्यामपि वैश्यांश्च पद्भ्यां शूद्रांस्तथा विभुः।।**

शूद्रात्प्रतिग्रहस्य
निषेधः

**[४]गृहीत्वा कपिलां शूद्रात्कामतः सदृशः पिबेत्।**
**पतितैः स हि विज्ञेयश्चाण्डालसदृशोऽधमः।**
**तस्मान्न प्रतिगृह्णीयाच्छूद्राद्विप्रः प्रतिग्रहम्।।**

प्रेतयोनिनिमित्तानि शूद्रान्न-
भक्षणादीनि

**[५]शूद्रान्नेन तु भुक्तेन ब्राह्मणो म्रियते यदि।**
**तेनैव चोदरस्थेन स प्रेतो जायते ध्रुवम्।।**

(१) **सस्मृ.** ९९.
(२) **वराह.** ३।१९.
(३) **वराह.** ९।१५-१६.
(४) **वराह.** ११२।१६-१७.
(५) **वराह.** १७४।४२-४३, ४८, ५१.

**अयाज्ययाजनाच्चैव याज्यानां परिवर्जनात्।**
**रतो वा शूद्रसेवायां स प्रेतो जायते नरः।।**
**असद्भ्यः प्रतिगृह्णाति नास्तिकेभ्यो विशेषतः।**
**स पापो जायते प्रेत आहारादिविवर्जितः।।**

वैश्यवृत्तयः

**[१]स्वाध्यायं यजनं दानं कुसीदपशुपालनम्।**
**गोरक्षां कृषिवाणिज्यं कुर्याद्वैश्यो यथाविधि।।**

पशुपालनम् अजाश्वादिपालनम्, गोशब्दस्य पृथगुपात्तत्वात्। पमा. १।४१६

## वामनपुराणम्

चातुर्वर्ण्यस्य सृष्टिः वृत्तयश्च

**[२]चातुर्वर्णस्य सृष्ट्यर्थमात्मज्ञानपरोऽभवत्।**
**तस्याभिध्यायतः सृष्टिं ब्रह्मणोऽव्यक्तजन्मनः।।**
**मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्रियास्तथा।**
**ऊरुभ्यां वैश्यजातीयाः पद्भ्यां शूद्रास्ततोऽभवन्।।**
**[३]भूम्यां सदा ब्राह्मणभूषितायां**
**क्षत्रान्वितायां दृढवापितायाम्।**
**शुश्रूषणासक्तिसमुद्भवाया -**
**मृद्धिं प्रयान्तीह नराधिपेन्द्राः।।**
**तस्माद्द्विजाग्र्याः श्रुतिशास्त्रयुक्ता**
**नराधिपांस्ते प्रति याजयन्तु।**
**यजन्तु दिव्यैः क्रतुर्भिर्द्विजेन्द्रा**
**यज्ञाग्निधूमेन नृपस्य शान्तिः।।**
**तपोध्ययनसंपन्ना यजनेऽध्यापने रताः।**
**सन्तु विप्राः क्षत्रपूज्यास्त्वत्तोऽनुज्ञामवाप्य हि।।**
**स्वाध्याययज्ञनिरता दातारः शस्त्रजीविनः।**
**क्षत्रियाः सन्तु दैत्येन्द्र प्रजापालनधर्मिणः।।**
**यज्ञाध्ययनसंपन्ना दातारः कृषिकारिणः।**
**पाशुपाल्यं प्रकुर्वाणा वैश्या विपणिजीविनः।।**
**ब्राह्मणक्षत्रियविशां सदा शुश्रूषणे रताः।**
**शूद्राः सन्तु सुरश्रेष्ठ तवाऽऽज्ञाकारिणः सदा।।**

(१) **पमा.** १।४१६.
(२) **वामन.** ३९।२१-२२.
(३) **वामन.** ७४।४२-४७.

## कूर्मपुराणम्

अवयवेभ्यो वर्णसृष्टिः
वर्णवृत्तयश्च

**[1]मरीचिभृग्वङ्गिरसं पुलस्त्यं पुलहं क्रतुम्।**
**दक्षमत्रिं वसिष्ठं च सोऽसृजद्योगविद्यया।।**
**नवैते ब्रह्मणः पुत्रा ब्राह्मणा ब्राह्मणोत्तमाः।**
**ब्रह्मवादिन एवैते मरीच्याद्यास्तु साधकाः।।**
**[2]ससर्ज ब्राह्मणान् वक्त्रात् क्षत्रियांश्च भुजाद्विभुः।**
**वैश्यानूरुद्वयाद्देवः पद्भ्यां शूद्रान् पितामहः।**
**यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्जं ससर्ज ह।।**
**[3]यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः।**
**अध्यापनं चाध्ययनं षट् कर्माणि द्विजोत्तमाः।।**
**दानमध्ययनं यज्ञो धर्मः क्षत्रियवैश्ययोः।**
**दण्डो युद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते।।**
**शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम्।**
**कारुकर्म तथाऽऽजीवः पाकयज्ञादि धर्मतः।।**

स्वस्वधर्मनिष्ठानां वर्णानां
लोकाः

**[4]प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम्।**
**स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम्।।**
**[5]वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तताम्।**
**गान्धर्वं शूद्रजातीनां परिचारेण वर्तताम्।।**

स्वस्वधर्माभिरतानां फलमुक्तं कूर्मपुराणे – प्राजापत्यमिति। + शूशि. ५१

स्तेयनिषेधः

**[1]तृणं वा यदि वा शाकं मृदं वा जलमेव वा।**
**परस्यापहरञ्जन्तुर्नरकं प्रतिपद्यते।।**

राजप्रतिग्रहनिषेधः, याचनातिरेकनिषेधः,
देवब्रह्मस्वहरणनिषेधः,
स्तेयापवादः

**न राज्ञः प्रतिगृह्णीयान्न शूद्रात्पतितादपि।**
**नान्यस्माद्याचकत्वं च निन्दिताद्वर्जयेद्बुधः।।**
**नित्यं याचनको न स्यात्पुनस्तत्रैव याचयेत्।**
**प्राणानपहरत्येष याचकस्तस्य दुर्मतिः।।**
**न देवद्रव्यहारी स्याद्विशेषेण द्विजोत्तमः।**
**ब्रह्मस्वं वा नापहरेदापद्यपि कदाचन।।**
**न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।**
**देवस्वं चापि यत्नेन सदा परिहरेत्ततः।।**
**पुष्पे शाकोदके काष्ठे तथा मूले तृणे फले।**
**अदत्तादानमस्तेयं मनुः प्राह प्रजापतिः।।**
**ग्रहीतव्यानि पुष्पाणि देवार्चनविधौ द्विजाः।**
**नैकस्मादेव नियतमननुज्ञाय केवलम्।।**
**तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्बुधः।**
**धर्मार्थं केवलं ग्राह्यं ह्यन्यथा पतितो भवेत्।।**
**तिलमुद्गयवादीनां मुष्टिर्ग्राह्या पथि स्थितैः।**
**क्षुधार्तैर्नान्यथा विप्रा धर्मविद्भिरिति स्थितिः।।**

कपटेन धनार्जनस्य
निषेधः

**अलिङ्गी लिङ्गिवेशेन यो वृत्तिमुपजीवति।**
**स लिङ्गिनां हरेदेनस्तिर्यग्योनौ च जायते।।**

ब्राह्मणस्य मुख्या आपत्कालीनाश्च
वृत्तयः

**व्यास उवाच –**

**[2]एष वोऽभिहितः कृत्स्नो गृहस्थाश्रमवासिनः।**
**द्विजातेः परमो धर्मो वर्तनानि निबोधत।।**

---

+ बाल. शूशिवत्।

(१) **कूर्म.** १।२।२३-२५.

(२) **कूर्म.** १।२।२५-२६; **स्मृकौ.** ७ देवः (द्वै स); **शूशि.** ९६-९७ देवः (च्चैव) ब्रह्मा (ब्रह्म).

(३) **कूर्म.** १।२।३८-४१.

(४) **कूर्म.** १।२।६८-६९; **स्मृकौ.** ९६; **शूशि.** ५१; **प्रकाश.** १।१७४ पू. ब्रह्मपुराणे; **बाल.** १।१२१ पृ. ३८२ क्रिया (कृपा); **प्रभा.** १।१७४ पू. स्मरन्ति.

(५) **कूर्म.** १।२।६९-७०; **स्मृकौ.** ९६ धर्म (कर्म) रेण व (रणव); **शूशि.** ५१ वर्तताम् (वर्तिनाम्); चतुर्थचरणे (परिचर्यानुवर्तिनाम्); **बाल.** १।१२१ पृ. ३८२ मनुवर्तताम् (परिवर्तिनाम्) चतुर्थचरणे (परिचर्यानुवर्तिनाम्).

(१) **कूर्म.** २।१६।२-१०, १३.

(२) **कूर्म.** २।२५।१.

[1]द्विविधस्तु गृही ज्ञेयः साधकश्चाप्यसाधकः।
अध्यापनं याजनं च पूर्वास्याऽऽहुः प्रतिग्रहम्।।
[2]कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम्।
कृषेरभावे वाणिज्यं तदभावे कुसीदकम्।।

कुसीदः वृद्धिजीवनम्। विपा. ३।२।२५१

[3]आपत्कल्पस्त्वयं ज्ञेयः पूर्वोक्तो मुख्य इष्यते।।
+ [4]स्वयं वा कर्षणं कुर्याद्वाणिज्यं वा कुसीदकम्।
कष्टा पापीयसी वृत्तिः कुसीदं तद्विवर्जयेत्।।

'स्वयं वा०' इत्यादीनि कूर्मपुराणादिवचनान्यपि निन्दित-वृद्धिर्न ग्राह्या इत्येवंपराणि। मर. १८८

[5]क्षात्रवृत्तिं परां प्राहुर्न स्वयं कर्षणं द्विजैः।
तस्मात्क्षात्रेण वर्तेत वर्ततेऽनापदि द्विजः।।
तेन चैवाप्यजीवंस्तु वैश्यवृत्तिः कृषिं व्रजेत्।
न कथंचन कुर्वीत ब्राह्मणः कर्म कर्षणम्।।

कृषिवाणिज्यकुसीदेषु दोषशमनार्थं
पित्रादिभ्यो दानम्

[6]लब्धलाभः पितृन्देवान् ब्राह्मणांश्चापि पूजयेत्।
ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः।।
[7]देवेभ्यश्च पितृभ्यश्च दद्याद्भागं तु विंशकम्।
त्रिंशद्भागं ब्राह्मणानां कृषिं कुर्वन्न दुष्यति।।

कृषिप्रकारो वृद्धपाराशरे द्रष्टव्यः।
विपा. ३।२।२४८

[1]वाणिज्ये द्विगुणं दद्यात्कुसीदी त्रिगुणं पुनः।
कृषिपालान्न दोषेण युज्यते नात्र संशयः।।

शिलोञ्छकुशूलधान्यत्वादयो वृत्तयः
तासां स्वरूपतः संख्यातश्च
प्राशस्त्यतारतम्यं च

[2]शिलोञ्छं वाऽप्याददीत गृहस्थः साधकः पुनः।
विद्याशिल्पादयस्त्वन्ये बहवो वृत्तिहेतवः।।
[3]असाधकस्तु यः प्रोक्तो गृहस्थाश्रमसंस्थितः।
शिलोञ्छे तस्य कथिते द्वे वृत्ती परमर्षिभिः।।

शाल्यादिक्षेत्रपतितस्वामित्यक्तमञ्जरीग्रहणं शिलम्। क्षेत्रादिपतितस्यैकैकस्य कणस्य ग्रहणमुञ्छम्।
मर. १६८

[4]अमृतेनाथवा जीवेन्मृतेनाप्यथवा यदि।
अयाचितं स्यादमृतं मृतं भैक्षं तु याचितम्।।
[5]कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव च।
त्र्यहणिको वाऽपि च भवेदश्वस्तनिक एव च।।
चतुर्णामपि वै तेषां द्विजानां गृहमेधिनाम्।
श्रेयान्परः परो ज्ञेयो धर्मतो लोकजित्तमः।।
षट्कर्मको भवेत्तेषां त्रिभिरन्यः प्रवर्तते।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति।।
वर्तयंस्तु शिलोञ्छाभ्यामग्निहोत्रपरायणः।
इष्टीः पार्वायणान्ता याः केवला निर्वपेत्सदा।।
न लोकवृत्तं वर्तेत वार्तान्ते वृत्तिहेतवे।
अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम्।।

---

+ अस्य पमाव्याख्यानं 'षट्कर्म०' इति पराशरस्य वचने द्रष्टव्यम्।

(१) **कूर्म.** २।२५।२; **स्मृच.** २।४५५; **पमा.** १।३०९; **आपा.** ११० स्तु (श्च) ग्रहम् (ग्रहे).

(२) **कूर्म.** २।२५।२-३; **स्मृच.** २।४७०; **विपा.** ३।२।२५१ प्रथमचरणे (कुसीदं कृषिवाणिज्ये) तास्वयं (त स्वयं); **बाल.** १।११८ पृ. ३६५.

(३) **कूर्म.** २।२५।३.

(४) **कूर्म.** २।२५।४; **स्मृच.** २।४७१ तद्वि (तां वि); **पमा.** १।४२७ स्मृचवत्; **मर.** १८० कुसी (कुशी) पू.: १८८ स्मृचवत्, उत्तः. (५) **कूर्म.** २।२५।५-६.

(६) **कूर्म.** २।२५।७; **स्मृच.** २।४५४ तं दोषं (तद्दोषं); **पमा.** १।४३० स्मृचवत्; **आपा.** १४३ तं दोषं (तान्दोषान्).

(७) **कूर्म.** २।२५।८; **स्मृच.** २।४५४; **पमा.** १।४३४ ब्राह्मणानां (तु विप्राणां) दुष्यति (दोषभाक्); **आपा.** १४३; **विपा.** ३।२।२४८ कुर्वन् (कृत्वा) शेषम् आपावत्.

(१) **कूर्म.** २।२५।९.

(२) **कूर्म.** २।२५।१०; **स्मृच.** २।४५५ (शिलोञ्छेनाप्युपादद्याद्गृहस्थः साधकः पुनः।) पू.; **पमा.** १।३०९ (शिलोञ्छेनाप्युपादद्याद्गृहस्थः साधकः स्मृतः।) पू.; **आपा.** ११० सर्वं पमावत्.

(३) **कूर्म.** २।२५।११; **स्मृच.** २।४५५; **पमा.** १।३०९; **आपा.** ११०; **मर.** १६८.

(४) **कूर्म.** २।२५।१२; **स्मृच.** २।४५५; **पमा.** १।३०९ पूर्वार्धे (अमृतेनापि जीवेत मृतेन प्रमृतेन वा।); **आपा.** ११० पमावत्.

(५) **कूर्म.** २।२५।१३-१९, २१.

अर्जितधनेन देवादितर्पणं
दुर्भिक्षे बुभुक्षुतर्पणं
चाऽऽवश्यकम्

**याचित्वा चार्थस(? व)द्भ्योऽन्नं पितॄन्देवांस्तु तोषयेत्।**
**याचयेद्वा शुचीन्दान्तांस्तेन तृप्येत्स्वयं ततः।।**
**यस्तु द्रव्यार्जनं कृत्वा गृहस्थस्तोषयेन्न तु।**
**देवान्पितॄंस्तु विधिना शुनां योनिं व्रजत्यधः।।**
**योऽर्थो धर्माय नाऽऽत्मार्थं सोऽर्थो नार्थस्तथेतरः।**
**तस्मादर्थं समासाद्य दद्याद्वै जुहुयाद्द्विजः।।**
**[1]यस्तु दुर्भिक्षवेलायामन्नाद्यं न प्रयच्छति।**
**म्रियमाणेषु सत्त्वेषु ब्राह्मणः स तु गर्हितः।।**
**तस्मान्न प्रतिगृह्णीयान्न वै देयं च तस्य हि।**
**अङ्कयित्वा स्वकाद्राष्ट्रात्तं राजा विप्रवासयेत्।।**

अर्चितद्रव्यस्यैव दानप्रतिग्रहौ

**योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव वा।**
**तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये।।**

अपूपादिप्रतिग्रहे विदुष
एवाधिकारः

**अपूपं च हिरण्यं च गामश्वं पृथिवीं तिलान्।**
**अविद्वान्प्रतिगृह्णानो भस्मीभवति काष्ठवत्।।**

शूद्रात् प्रतिग्रहस्य
निषेधः

**द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजोत्तमः।**
**अपि वा जातिमात्रेभ्यो न तु शूद्रात्कथंचन।।**

लोभेनातिरिक्तधनार्जनस्य
निषेधः

**वृत्तिसंकोचमन्विच्छेन्नेहेत धनविस्तरम्।**
**धनलोभे प्रसक्तस्तु ब्राह्मण्यादेव हीयते।।**
**वेदानधीत्य सकलान्यज्ञांश्चावाप्य सर्वशः।**
**न तां गतिमवाप्नोति संकोचाद्यामवाप्नुयात्।।**
**प्रतिग्रहरुचिर्न स्याद्यात्रार्थं तु धनं हरेत्।**
**स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम्।।**

(१) **कूर्म.** २।२६।५९-६०, ६६, ६८-७४.

**यस्तु स्याद्याचको नित्यं न स स्वर्गस्य भाजनम्।**
**उद्वेजयति भूतानि यथा चौरस्तथैव सः।।**

गुर्वाद्यर्थं सर्वतः
प्रतिग्रहः

**गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन्।**
**सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः।।**

अर्जितधनेन देवाद्यर्चन-
मावश्यकम्

**[1]यस्तु द्रव्यार्जनं कृत्वा नार्चयेद्ब्राह्मणान्सुरान्।**
**सर्वस्वमपहृत्यैनं राजा राष्ट्रात्प्रवासयेत्।।**

## भविष्यपुराणम्

स्वयंभुवोऽवयवेभ्यो
वर्णसृष्टिः

**[2]सर्वस्य राजन्सर्गस्य गुप्त्यर्थं च महाद्युते।**
**मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयत्।।**
**अध्यापनमध्ययनं यजनं याजनं तथा।**
**दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्।।**
**प्रजानां पालनं राजन्दानमध्ययनं तथा।**
**विषयेषु प्रसक्तिं च तथेज्यां क्षत्रियस्य तु।।**
**पशूनां रक्षणं दानमिज्याऽध्ययनमेव च।**
**वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च।।**
**एकमेव तु शूद्रस्य कर्म लोके प्रकीर्तितम्।**
**एतेषामेव वर्णानां शुश्रूषाम(? षा अ)नुपूर्वशः।।**

ब्राह्मणप्रशंसा, सर्वचराचरस्वामिनो
ब्राह्मणस्य कृपयाऽन्येषां
भोक्तृत्वम्

**पुरुषस्य सदा श्रेष्ठं नाभेरूर्ध्वं नृपोत्तम।**
**तस्मादपि शुचितरं मुखं तात स्वयंभुवः।।**
**तस्मान्मुखाद्द्विजो जात इतीयं वैदिकी श्रुतिः।**
**सर्वस्यैवास्य धर्मस्य धर्मतो ब्राह्मणः प्रभुः।।**
**स सृष्टो ब्रह्मणा पूर्वं तपस्तप्त्वा कुरूद्वह।**
**हव्यानामिव कव्यानां सर्वस्यापि च गुप्तये।।**

(१) **विपा.** ४।७.
(२) **भविष्य.** १।२।१२०-१३६.

अश्नन्ति च मुखेनास्य हव्यानि त्रिदिवौकसः।
कव्यानि चैव पितरः किं भूतमधिकं ततः।।
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः।।
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः।।
जन्म विप्रस्य राजेन्द्र धर्मार्थमिह कथ्यते।
उत्पन्नः सर्वसिद्ध्यर्थं याति ब्रह्मसदो नृप।।
स चापि जायमानस्तु पृथिव्यामिह जायते।
भूतानां प्रभवायैव धर्मकोशस्य गुप्तये।।
सर्वं हि ब्राह्मणस्येदं यत्किंचित्पृथिवीगतम्।
जन्मना चोत्तमेनेदं सर्वं वै ब्राह्मणोऽर्हति।।
स्वकीयं ब्राह्मणो भुङ्क्ते विदधाति च सुव्रत।
करुणां कुर्वतस्तस्य भुञ्जन्तीहेतरे जनाः।।
त्रयाणामिह वर्णानां भावाभावाय वै द्विजः।
भवेद्राजन्न संदेहस्तुष्टो भावाय वै द्विजः।।
अभावाय भवेत्क्रुद्धस्तस्मात्पूज्यतमो हि सः।
ब्राह्मणे सति नान्यस्य प्रभुत्वं विद्यते नृप।।

गोदोहादिविषयाणि पशुपालनविषयाणि
च विधानानि

..... [1]दुहेद्वत्सान्न पीडयेत्।
वर्षाशरद्वसन्तेषु द्वौ कालावन्यदा सकृत्।।
तक्रं वाऽप्युपयुञ्जीत श्ववराहादिपोषणे।
पिण्याकक्लेदनार्थं वा विक्रे( ? क्र)यं वा तदर्हयेत्।।
वृत्तिं धान्यहिरण्येन गोपादीनां प्रकल्पयेत्।
ते हि क्षीरव्रता लोभादुपहन्युस्तदन्वयान्।।
दोहकालं गवां दोग्धा नातिवर्तेत वै द्विजाः।
प्रसरोदकयोर्गोपा मन्थकस्य च मन्थकाः।।
मासमेकं यथा स्तन्यं मासमेकं स्तनद्वयम्।
सततं पाययेदूर्ध्वं स्तनमेकं स्तनद्वयम्।।
तिलपिष्टाभिः पिण्डाभिस्तृणेन लवणेन च।
वारिणा च यथाकालं पुष्णीयादिति वत्सकान्।।
जरद्गुर्गर्भिणी धेनुर्वत्सा वत्सतरी तथा।
पञ्चानां समभागेन घासं यूथे प्रकल्पयेत्।।

(१) भविष्य. १।१२।३५-५२.

एको गोपालकस्तत्र त्रयाणामथवा द्वयम्।
पञ्चानां वत्सकश्चैकः प्रवरास्तु पृथक्पृथक्।।
गोचरस्था ( ? स्था) नयानार्थं व्यालानां त्रासनाय च।
घण्टाः कर्णेषु बध्नीयुः शोभारक्षार्थमेव च।।
पशव्ये व्यालनिर्मुक्ते देशे भूरितृणोदके।
अभूतदृष्टे वाऽरण्ये सदा कुर्वीत गोकुलम्।।
स गुप्त( ? सुगुप्त)मटवीवासं नित्यं कुर्यादजाविकम्।
ऊर्णां वर्षे द्विरादद्याच्चैत्राश्वयुजमासयोः।।
यूथे वृषा दशैतासां चत्वारः पञ्च वा गवाम्।
अश्वोष्ट्रमहिषाणां च यथा स्युः सुखसेविताः।।

कृषौ भृत्यवेतनबीजावापादि-
विषयकाणि विधानानि

विद्यात्कृषीवलादीनां योगं कृषिककर्मसु।
भक्तवेतनलाभं च कर्मकालानुरूपतः।।
क्षेत्रकेदारवाटेषु भृत्यानां कर्म कुर्वताम्।
खलेषु च विजानीयात्क्रियायोगं प्रतिक्षणम्।।
योग्यतातिशयं मत्वा कर्मयोगेषु कस्यचित्।
ग्रासाच्छादशिरोभ्यङ्गैर्विशेषं तस्य कारयेत्।।
पत्रशाकादिवापानां कन्दबीजादिजन्मनाम्।
संग्रहः सर्वबीजानां काले वापः सुभूमिषु।।
जातानां रक्षणं सम्यग्रक्षितानां च संग्रहः।
तेषां च संगृहीतानां यथावन्निवपक्रियाः।।

ब्राह्मण्यादिजातयो जन्मतः कर्मतो वा अनुपपद्यमानाः
सत्यः सांकेतिका इति तर्काश्रयेण महान् पूर्वपक्षः,
अल्पीयस्युत्तरपक्षे सिद्धेर्जातिकर्मोभयसाध्य-
त्वोक्त्या सांकेतिकजातेः सिद्धिसाधक-
त्वानुपपन्नत्वेन सिद्धिसाधकत्वान्यथा-
नुपपत्तिरूपयाऽर्थापत्त्या जातीनां
जन्मसिद्धत्वसूचनम्

शतानीक उवाच —
[1]अहो व्रतं ( ? बत) महत्कष्टं संशयो हृदि वर्तते।
कार्तिकेयस्य माहात्म्यं श्रुत्वा जन्म तथा द्विज।।
अनेकजनितस्येह कार्तिकेयस्य सुव्रत।
माहात्म्यं सुमहद्विप्र कथमेतद्विभाव्यते।।

(१) भविष्य. १।४०।१-४८.

जातिः श्रेष्ठा भवेद्विप्र उत कर्म भवेद्वरम्।
संशयस्तु महानत्र दृष्ट्वा मे कृत्तिकासुतम्।।
एतद्विप्र विनिश्चित्य न यथा संशयो भवेत्।
जन्मतः कर्मणश्चैव यज्ज्यायस्तद्ब्रवीहि मे।।

सुमन्तुरुवाच –

इममर्थं पुरा पृष्टो ब्रह्मा शिष्यैर्मनीषिभिः।
यदुक्तं तेन तेषां च तत्ते वच्मि निबोध मे।।
सुरश्रेष्ठं सुखासीनमभिगम्य महर्षयः।
प्रणम्य च महाबाहो विश्वामित्रस्य विप्रताम्।।
दृष्ट्वा विस्मयमागत्य कौतूहलसमन्विताः।
भक्तिं श्रद्धां पुरोधाय प्रणम्याऽऽनतकन्धराः।।

ऋषय ऊचुः –

भो ब्रह्मन्नादिकल्पे हि ब्राह्मण्यं ब्रूहि किं भवेत्।
जात्यध्ययनदेहात्मसंस्काराचारकर्मणाम्।।
बाह्याभ्यन्तरसामान्यविशेषा यदि कृत्रिमाः।
मनोवाक्कर्मशारीरजातिद्रव्यगुणात्मकाः।।
सन्त्यव्यक्ताः प्रसिद्धा ये जातिभेदविधायिनः।
वस्तुभूताः परोक्षैर्वा प्रमाणैर्न विनिश्चिताः।।
अव्यक्तागमसिद्धश्चेज्जातिभेदविधिर्नृणाम्।
विकल्पोऽयं न पुष्णाति भवतः शेमुषीबलम्।।

ब्रह्मोवाच –

एवमेतन्न संदेहो यथा यूयं वदन्ति ह।
शृणुध्वं योगिनो वाक्यं सतर्कं शिष्यश्रेयसे।।

योगीश्वर उवाच –

प्रमाणे हि प्रसिद्धे तु भिन्नार्थविषये यतः।
स्पष्टयोग्यार्थविषयं प्रत्यक्षं तावदीक्षते।।
सामान्यातीन्द्रियग्राही सिद्धान्तोऽभ्युपगम्यते।
स एव भगवानेकं प्रमाणमिति चेन्न तत्।।
यस्माद्विविधमेतत्ते संकटं भद्र वर्तते।
वेदस्य पौरुषेयत्वं नित्यजातिसमर्थकम्।।
कार्या विशेषा वेदोक्ता न युक्तमकृतं वचः।
ताल्वादिकरणानां च व्यापारानन्तरं श्रुतेः।।
व्यापारात्पूर्य(? र्व)तस्तस्य प्रागभावावशेषतः।
तद्भावानुविधायित्वमन्वयव्यतिरेकतः।।

तस्माद्धूमाग्निवद्वा+ऽर्थफलभावोऽवतिष्ठते।
न च व्यापारवचसोरन्यथानुपपत्तितः।।
पुरुषानुगता जातिर्ब्राह्मणत्वादिकाऽस्ति चेत्।
द्विवर्णजातिभेदो न प्रत्यक्षार्थोपलक्षणात्।।
गोवर्गमध्यं च गतो यथाऽश्वो
निर्धार्यतेऽज्ञैः सुविलक्षणत्वात्।
मनुष्यभावादविशिष्यमाण -
स्तद्वद्द्विजः शूद्रगणान्न भिन्नः।।
मनुष्यजातेर्न परो विशेषो
यः कल्प्यते सर्वनरानुयायी।
संस्कारयुक्ता हि क्रिया विशिष्टा
द्विजन्मनां शूद्रविवेकहेतुः।।
जीवोऽपि ब्राह्मणः प्रोक्तो यैरतत्त्वज्ञमानवैः।
प्रभ्रष्टब्राह्मणत्वास्ते जायन्ते विप्रसङ्गतः।।
जराजन्मान्तरक्लेशदुष्टग्राहकुलाकुलम्।
नरतिर्यगसच्छूद्रयोनिदुःखोर्मिसंकटम्।।
दौःस्थित्यरोगशोकार्तिजनावर्तसमन्वितम्।
श्वानसूकरचाण्डालकृमिकूर्मादिकायतम्।।
संसारसागरं घोरं मग्नः परिपरिप्लवन्।
भूरिपापभराक्रान्तः स जीवो ब्राह्मणः कथम्।।

ब्रह्मोवाच –

सप्तव्याधकथा विप्रा मनुना परिकीर्तिता।
तां निशम्य द्विजश्रेष्ठ नित्यं जाति(? त्यजाति)-
ग्रहं त्यजेत्।।
सप्तव्याधा दशार्णायां मृगाः कालञ्जिरे गिरौ।
चक्रवाकाः सरिद्द्वीपे हंसाः सरसि मानसे।।
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः।
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ।।
तस्मान्न जीवे ब्राह्मण्यं यास्यामो हि कथंचन।।
शस्त्रादिमद्भार्गवजातियुक्तो
गजाश्वगोजोष्ट्रखरादिकानाम्।
शक्त्या कृतो ह्यङ्गजवर्णधर्मे -
भेदः स्फुटं लक्षणतोऽत्र यद्वत्।।

---

+ अर्थ्यते येन कार्योत्पत्तिः सः अर्थः कारणमिति कारणपरोऽयमर्थशब्दो ग्राह्यः।

तदुत्तराङ्गेन विकर्तनीया
ब्राह्मण्यजातिर्नृषु नास्ति काचित्।
नित्याकृतिर्नानृतभेदरूपा
यथा हि भेदः परमोऽत्र सिध्येत्।।
सिताद्यसाधारणतुल्यरूपः
सनातनोऽङ्गेषु न वर्णभेदः।
ब्राह्मण्यमध्रुवमिदं किल कृत्रिमत्वा-
दकृत्रिमं भवति सामयिकत्वयोगात्।।
सांकेतिकं सुकृतलेशविशेषलब्धं
वाणिज्यभेषजकृतामिव जातिभेदाः।
किं ब्राह्मणा ये सुकृतं त्यजन्ति
किं क्षत्रिया लोकमपालयन्तः।।
स्वधर्महीना हि तथैव वैश्याः
शूद्राः स्वमुख्यक्रियया विहीनाः।
तस्मान्न गोश्ववत्कश्चिज्जातिभेदोऽस्ति देहिनाम्।
कार्यशक्तिनिमित्तस्तु संकेतः कृत्रिमो भवेत्।।
एवं प्रमाणैः प्रतिषिध्यमानां
सांकेतिकीं याति नरो व्यवस्थाम्।
स्वकीयसिद्धां स्वमतैर्निषिद्धां
न बुध्यते मूढमना वराकः।।
गोमहिष्यजवाज्युष्ट्रवानेयाविगजाधिपाः।
प्रेष्यवार्धुषिका( ? काः) कालकरणोद्यत-
मानसाः।।
वणिक्कारुक्रियाविष्टा दिव्यास्तेऽपि च ये
द्विजाः।
विनष्टास्ते तु विज्ञेयाः क्रव्यादाश्च कुशीलवाः।।
पलाण्डुलशुनादाश्च अजोष्ट्रीक्षीरपायिनः।
मांससर्वरसक्षीरक्रयविक्रयकारिणः।।
पुनर्भूवृषलीवेश्याचाण्डालस्त्रीनिषेविणः।
शूद्रान्नरसपुष्टाङ्गाः प्रेतवस्त्रान्नभोजिनः।।
मृतसूतकलब्धान्नपानाद्यव्यवहारिणः।
ब्रह्मदेवपितृभूतमनुष्येषु बहिष्कृताः।।
मात्सर्यमदविद्वेषतृष्णाकामतमोमयाः।
हीनाचारा हि ये केचिदपरे पशुतो द्विजाः।
प्रकारैर्बहुभिः सर्वे ते प्रणश्यन्ति नान्यथा।।

एवं शास्त्रोदितन्यायमार्गभ्रष्टास्तु ये नराः।
विशिष्टगोत्रसंस्कारकलापसकलात्मकाः।।
वेदानध्यापयन्तोऽपि तेऽधीयानाः श्रुतिं क्रमात्।
ब्राह्मणत्वाद्विहीयन्ते दुराचारविधायिनः।।
तस्मान्न जातिरेकत्र भूतात्माऽस्त्यनपायिनी।
नाशित्वादत्र च श्लोकान्मानवाः समधीयते।।
सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयी।।
गोरक्षकान्वाणिजिकांस्तथा कारुकुशीलवान्।
प्रेष्यान्वार्धुषिकांश्चैव शूद्रांस्तान्मनुरब्रवीत्।।
शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
क्षत्रियो याति विप्रत्वं विद्याद्वैश्यं तथैव च।।

ब्रह्मोवाच –
[1]वेदाध्ययनमप्येवं ब्राह्मणः प्रतिपद्यते।
विप्रवद्वैश्यराजन्यौ राक्षसा रावणादयः।।
श्वादचाण्डालदासाश्च लुब्धकाभीरधीवराः।
येऽन्येऽपि वृषलाः केचित्तेऽपि वेदानधीयते।।
शूद्रा देशान्तरं गत्वा ब्राह्मण्यं क्षत्रियं श्रिताः।
व्यापाराकारभाषाद्यैर्विप्रतुल्यैः प्रकल्पितैः।।
वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्।
प्रोद्वहन्ति शुभां कन्यां शुद्धब्राह्मणजां नराः।।
अथवाऽधीत्य वेदांस्तु क्षत्रवैश्यैस्तु वा नराः।
गौडपूर्वां कृतामेयुर्जातिं वा दाक्षिणात्यजाम्।।
अपरिज्ञातशूद्रत्वाद्ब्राह्मण्यं याति कामतः।
तस्मान्न ज्ञायते भेदो वेदाध्यायक्रियाकृतः।।
शास्त्रकारैस्तथा चोक्तं न्यायमार्गानुसारिभिः।
ते साधुमतमाकर्ण्य सन्तः सन्ति विमत्सराः।।
आचारहीनान्न पुनन्ति वेदा
यद्यप्यधीताः सह षड्भिरङ्गैः।
शिल्पं हि वेदाध्ययनं द्विजानां
वृत्तं स्मृतं ब्राह्मणलक्षणं तु।।
अधीत्य चतुरो वेदान्यदि वृत्ते न तिष्ठति।
न तेन क्रियते कार्यं स्त्रीरत्नेनेव षण्डकैः।।

(१) भविष्य. १।४१।१-५७.

शिखाप्रणवसंस्कारसंध्योपासनमेखलाः।
दण्डाजिनपवित्राद्याः शूद्रेष्वपि निरंकुशाः।।
प्रसङ्गोऽपि हि शूद्राणां न शक्यो विनिवारितुम्।
देवोत्तमत्रयेणापि निवर्तन्ते नराः कथम्।।
तस्मान्नैतेऽपि लक्ष्यन्ते विलक्षणतया नृणाम्।
यज्ञोपवीतसंस्कारमेखलाचूलिकादिषु।।
अभिचारकमन्त्राद्ये दुर्लभत्वादिभाषणे।
ब्राह्मणस्यैव शक्तिश्चेत्केनास्य विनिहन्यते।।
तपःसत्यादिमाहात्म्याद्देवतासमयस्मृतिः।
मन्त्रशक्तिर्नृणामेषां सर्वेषामपि विद्यते।।
वञ्च(? वच)नं दुर्वचस्यापि क्रियते सर्वमानवैः।
शूद्रब्राह्मणयोस्तस्मान्नास्ति भेदः कथंचन।।
शापानुग्रहकारित्वशक्तिभेदो न विद्यते।
चौरचाटादिराजन्यदुर्जनाभिहते नृणाम्।।
आत्मदुःखोदयापायं स्वेषु जन्तुषु रक्षणम्।
कर्तुं न प्रभवः शूद्रा ब्राह्मणास्तद्वदेव हि।।
मा भूद्युगे कलावेतद्देशे चाकार्यकृद्द्विजे।
स्यादन्यदेशकालादौ द्विजानामतिशायिनाम्।।
शापानुग्रहसामर्थ्यमन्यद्वाऽध्यात्मगोचरम्।
ब्रह्मसाधनमेतद्धि लिङ्गं केचित्प्रचक्षते।।
संसारासक्तचेतस्का मोहान्धतमसावृताः।
पतन्त्युन्मार्गगर्तेषु प्रत्यग्नि शलभा यथा।।
जातिधर्मः स्वयं किंचिद्विशेषः श्रुतिसंगमात्।
असिद्धः शूद्रजातीनां प्रसिद्धो विप्रजातिषु।।
संस्कारो योनिसाध्यो वा सामग्रीप्रभवोऽथवा।
शूद्रेभ्योऽतिशयं धत्ते यः साधारणतागुणः।।
विप्राणां पञ्चधा भिन्नः कल्पनीयः स पण्डितैः।
न जातिजस्त्रयीजो वा विशेषो युक्तिबाधकात्।
क्रमाक्रमक्रियाः सन्ति न सनातनवस्तुनः।।
नित्यो न हेतुर्विगतक्रियत्वा-
द्धेतुर्भवेद्वेदविशेषतः सः।
न तत्समस्तत्प्रतिसंनिधाना-
त्कालात्ययेक्षित्वमयुक्तमेव।।
स्वान्तःशरीरवृत्तिस्थः श्रुतियोगादुदेति यः।
सोऽनन्यवेदविज्ञातस्वभावोऽन्यैर्न गम्यते।।
विशिष्टाधीतिधर्मत्वे कृत्रिमा ब्रह्मसंगतिः।
यस्यास्त्यतिशयस्तस्य नान्यो नाऽऽश्रयते यदि।।
दृश्यस्वभावं किमभीष्टमेत-
द्ब्राह्मण्यमाहोस्विददृष्टरूपम्।
सर्वैः प्रतीयेत हि दृश्यरूपं
ततोऽन्यथावद्गतिरेव न स्यात्।।
सामग्र्यभावात्परमं विशेषं
भूदेवगात्रस्थमभूमिदेवाः।
स्मरन्ति ते नाऽऽत्मनि पुण्यपापं
यथातथेत्येतदयुक्तमुक्तम्।।
सामग्र्यनुष्ठानगुणैः समग्राः
शूद्रा यतः सन्ति समा द्विजानाम्।
तस्माद्विशेषो द्विजशूद्रनाम्नो-
र्नाऽऽध्यात्मिको बाह्यनिमित्तको वा।।
संसारतः सोऽतिशयो यदि स्या-
त्सर्वस्य पुंसोऽस्त्यतिसंस्कृतस्य।
यः संस्कृतो विप्रगणप्रधानो
व्यासादिकस्तेन न तस्य साम्यम्।।
हेतुत्वं घटते नैषां जात्यादीनामसंभवात्।
जातेरकृतकत्वाच्च अधीतेन विशेषतः।।
संस्कारातिशयाभावादन्तरस्यागतेः परैः।
भौतिकत्वाच्छरीरस्य समस्तानामसंहतेः।।
किं चान्यनास्तिकम्लेच्छयवनादिजनेष्वलम्।
वेदोदितबहिर्दुष्टचरितेषु दुरात्मसु।।
धर्मादतिशयोऽदृष्टः क्रूरसाहसिकादिषु।
तस्माद्विप्रेषु जात्यादिसामग्रीप्रभवो न सः।।
तस्मान्न च विभेदोऽस्ति न बहिर्नान्तरात्मनि।
न सुखादौ न चैश्वर्ये नाऽऽज्ञायां नाभयेष्वपि।।
न वीर्ये नाकृतौ नाक्षे न व्यापारे न चाऽऽयुषि।
नाङ्गे पुष्टे न दौर्बल्ये न स्थैर्ये नापि चापले।।
न प्रज्ञायां न वैराग्ये न धर्मे न पराक्रमे।
न त्रिवर्गे न नैपुण्ये न रूपादौ न भैषजे।।
न स्त्रीगर्भे न गमने न देहमलसंप्लवे।
नास्थिरन्ध्रे न च प्रेम्णि न प्रमाणे न लोमसु।।

शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः।
नेक्ष्यते सर्वधर्मेषु संहितैस्त्रिदशैरपि।।
उक्तमात्राविसंभूतिर्विचारक्रमकारिभिः।
वृद्धवृन्दारकाधीशैरप्रधृष्यमिदं वचः।।
न ब्राह्मणाश्चन्द्रमरीचिशुभ्रा
न क्षत्रियाः किंशुकपुष्पवर्णाः।
न चेह वैश्या हरितालतुल्याः
शूद्रा न चाङ्गारसमानवर्णाः।।
पादप्रचारैस्तनुवर्णकेशैः
सुखेन दुःखेन च शोणितेन।
त्वङ्मांसमेदोस्थिरसैः समाना-
श्चतुःप्रभेदा हि कथं भवन्ति।।
वर्णप्रमाणाकृतिगर्भवास-
वाग्बुद्धिकर्मेन्द्रियजीवितेषु।
बलत्रिवर्गामयभेषजेषु
न विद्यते जातिकृतो विशेषः।।
स एक एवात्र पतिः प्रजानां
कथं पुनर्जातिकृतः प्रभेदः।
प्रमाणदृष्टान्तनयप्रवादैः
परीक्षमाणो विघटत्वमेति।।
चत्वार एकस्य पितुः सुताश्च
तेषां सुतानां खलु जातिरेका।
एवं प्रजानां हि पितैक एव
पित्रैकभावान्न च जातिभेदः।।
फलान्यथोदुम्बरवृक्षजाते-
र्यथाऽग्रमध्यान्तभवानि यानि।
वर्णाकृतिस्पर्शरसैः समानि
तथैकतो जातिरतिप्रचिन्त्या।।
ये कौशिकाः काश्यपगौतमाश्च
कौण्डिन्यमाण्डव्यवसिष्ठगोत्राः।
आत्रेयकौत्साङ्गिरसाः सगर्गा
मौद्गल्यकात्यायनभार्गवाश्च।।
गोत्राणि नानाविधजातयश्च
भ्रातृस्नुषामैथुनपुत्रभावाः।
वैवाहिकं कर्म न वर्णभेदा-
त्सर्वाणि शिल्पानि भवन्ति तेषाम्।।

ये चान्ये पण्डिताः प्राहुर्देहब्राह्मणतां नराः।
तेषां दुर्दृष्टितिमिरमपनीयानुकम्प्य च।।
न्यायाञ्जनौषधैर्दिव्यैः परिणामसुखावहैः।
उपनीतैः प्रयत्नेन स्वदृष्टिं संविदध्महे।।
मूर्तिमत्त्वाच्च नाशित्वं नाशित्वाच्छेषभूतवत्।
देहाधारनिविष्टानां ब्राह्मण्यं न प्रकल्प्यते।।
एकैकोऽवयवस्तेषां न ब्राह्मण्यं समश्नुते।
न चानेकसमूहेऽपि सर्वथाऽतिप्रसङ्गतः।।
पृथिव्युदकवाय्वग्निपरिणामाविशेषतः।
देहतः सर्वभूतानां ब्राह्मणत्वप्रसङ्गतः।।
देहस्य ब्राह्मणत्वं यैरतत्त्वज्ञैः प्रकल्प्यते।
संस्कर्तॄणां शरीरस्य तेषां न ब्रह्मता भवेत्।।
मृग्यमाणे प्रयत्नेन देहे तन्नोपलभ्यते।
तस्मान्न देहे ब्राह्मण्यं नापि देहात्मकं भवेत्।।
वर्णापसदचाण्डालश्वादादीनां प्रसज्यते।
यदि देहस्य विप्रत्वं भवद्भिरुपगम्यते।।
देहशक्तिगुणैः क्षीणैः कायभस्मादिरूपवत्।
तस्माद्देहात्मकं नैतद्ब्राह्मण्यं नापि कर्मजम्।।
ब्रह्मोवाच –
[1]अपरैश्च सदाचारयोगयुक्तैर्मनीषिभिः।
यदकारि महासत्त्वैः सुभाषितमिदं शृणु।।
बहुवनस्पतिशङ्खपिपीलिका-
भ्रमरवारणजातिमुदाहरन्।
गतिषु कर्ममितो नटवत्सदा
भ्रमति जन्तुरलब्धसुदर्शनः।।
रूपैश्वर्यज्ञानकुलैर्विभवै-
र्वर्मितो भूत्वा धर्मपथं चेद्विजहासि।
न वक्ष्ये व्रजेर्भुवनानि त्वमटिष्यं-
स्तस्मादभिभस्मीभूते मद आत्मनः।।
जातिकुलरूपवयोवर्णानेकश्रुतमदान्धाः क्लीबाः।
परत्र चेह च हितमप्यर्थं न पश्यन्ति।।
ज्ञात्वा भवपरिवर्ते जातीनां कोटिशतसहस्रेषु।
हीनोत्तममध्यत्वं को जातिमदं बुधः कुर्यात्।।

(१) भविष्य. १।४२।१-३२.

अनेकाञ्जातिविशेषानिन्द्रियनिवृत्तिपूर्वकान्सर्वान्।
कर्मवशाद्गच्छत्यत्र कस्यैका शाश्वती जातिः।।
विद्वत्सदसि योऽप्याह संस्काराद्ब्राह्मणोऽभवत्।
न्यायज्ञैः स निराकार्यो वाक्यैर्न्यायानुसारिभिः।।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा।
जातकर्म नामकर्म तथाऽन्नप्राशनं च वै।।
चूडोपनयनं चास्य व्रतादेशस्तथैव च।
समावर्तनमप्यन्यत्पाणिग्रहणमेव च।।
इत्येवमादिसंस्कारविधानैर्येऽतिसंस्कृताः।
त एव ब्राह्मणा येषां नेह ते हतकाधमाः।।
यस्माद्वै ब्राह्मणा जाता ब्राह्मणैः कृतसंस्कृतैः।
नाऽऽयुः शक्तिर्हि कान्त्यादिविशेषो विद्यते स्फुटः।।
तौ वा ब्राह्मणगात्रोत्थौ संस्कृतासंस्कृतौ नरौ।
इष्टानिष्टाप्त्यनाप्तिभ्यां न भिद्येते परस्परम्।।
ज्ञानाध्ययनमीमांसानियमेन्द्रियनिग्रहैः।
विना संस्कारयोगेऽपि पुंसः शूद्रान्न भिन्नता।।
संस्कारः क्रियमाणश्च न शूद्रे च प्रवर्तते।
संस्कृताङ्गश्च पापेभ्यो न पश्यति निवर्तते।।
विलासिनीभुजङ्गादिजनवन्मदविह्वलाः।
व्यामुह्यन्ति सदाचाराद्ब्राह्मणत्वात्पतन्ति च।।
संस्कृतोऽपि दुराचारो नरकं याति मानवः।
निःसंस्कारः सदाचारो भवेद्विप्रोत्तमः सदा।।
मन्त्रपूतात्मसंस्कारयुक्तोऽपि प्लवते न तु।
ब्राह्मण्यादिविकल्पं स पश्चाद्दुश्चरितो नरः।
सामर्थ्यात्पतनं तस्माद्ब्राह्मण्यान्मुच्यते ध्रुवम्।।
दुरनुष्ठानसक्तानां पुंसां पुरुषपुंगवैः।
किं क्वचिद्दृष्टमेवैतत्किं वा स्पर्धावदित्यमुम्।
तुल्यमुत्सहसे कर्तुमप्यदृष्टं तदा वद।।
आचारमनुतिष्ठन्तो व्यासादिमुनिसत्तमाः।
गर्भाधानदिसंस्कारकलापरहिताः स्फुटम्।।
विप्रोत्तमाः श्रियं प्राप्ताः सर्वलोकनमस्कृताः।
बहवः कथ्यमाना ये कतिचित्तान्निबोधत।।
जातो व्यासस्तु कैवर्त्याः श्वपाक्याश्च पराशरः।
शुक्याः शुकः कणादाख्यस्तथोलूक्याः सुतोऽभवत्।।
मृगीजोऽथर्ष्यशृङ्गोऽपि वसिष्ठो गणिकात्मजः।
मन्दपालो मुनिश्रेष्ठो लाविकापत्यमुच्यते।।
माण्डव्यो मुनिराजस्तु मण्डूकीगर्भसंभवः।
बहवोऽन्येऽपि विप्रत्वं प्राप्ता ये पूर्ववद्द्विजाः।।
यच्चैतच्चारुचरितैरर्च्यमुच्चरितं वचः।
तद्विचार्याऽऽचरन्नुच्चैराचारोपचितद्युतिः।।
हरिणीगर्भसंभूत ऋष्यशृङ्गो महामुनिः।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम्।।
श्वपाकीगर्भसंभूतः पिता व्यासस्य पार्थिव।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम्।।
उलूकीगर्भसंभूतः कणादाख्यो महामुनिः।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम्।।
गणिकागर्भसंभूतो वसिष्ठश्च महामुनिः।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम्।।
लाविकागर्भसंभूतो मन्दपालो महामुनिः।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम्।।
वेदतन्त्रजसंस्कारकलापनिपुणैरपि।
विद्यातपोधनबलादुत्कृष्टं लभ्यते फलम्।।
लब्धसंस्कारदेहाच्च महापातकिनो नरात्।
यस्मान्निवर्तते ब्रह्म तस्मात्सांकेतिकं विदुः।।

ब्रह्मोवाच —

[1]किं चान्यदपरं यूयं वेदमन्त्रविदो जनाः।
प्रष्टव्याः कस्य संस्कारैर्विशेषमुपगच्छत।।
किं देहस्योत येनासौ निसर्गमलिनः स्थितः।
शुक्रशोणितसंभूतः शमलोद्भवकीटवत्।।
निषेकादिश्मशानान्तैर्विविधैर्विधिविस्तरैः।
देहिनोऽतिशयं केचिदुपगच्छन्ति मानवाः।।
तेषां गूढमनःकायवाग्विदुष्टैः सुचेष्टितैः।
असंयतमनुष्याणां पक्षोऽयं दूष्यते मया।।
वैदिकाखिलसंस्कारसारभूता द्विजातयः।
सर्वकार्यकरान्सर्वान्वृषलानतिशेरते।।
चण्डकर्मा विकर्मस्थो ब्रह्महा गुरुतल्पगः।
स्तेनो गोघ्नः सुरापानः परस्त्रीरमणप्रियः।।

(१) भविष्य. १।४३।१-५३.

मिथ्यावादी मदोन्मत्तो नास्तिको वेदनिन्दकः।
ग्रामयाजकनिर्ग्रन्थौ बहुदोषो दुरासदः।।
निषिद्धाचारसंसेवी चोरश्चाटो मदोद्धतः।
धूर्तो नटः शठः पापी सर्वाशी सर्वविक्रयी।।
वाङ्मनःकायजैर्दुष्टैर्हता ये ब्राह्मणाधमाः।
ते न शुद्धिं व्रजन्तीह अपि यज्ञशतैरपि।।
शूद्राणां यान्यनिष्टानि संपद्यन्ते स्वभावतः।
विप्राणामपि तान्येव निर्विघ्नानि भवन्ति न।।
तस्मान्मन्त्रोऽग्निहोत्रं वा वेद्यां पशुवधोऽपि वा।
हेतवो न हि विप्रत्वे शूद्रैः शक्या क्रिया यतः।।
ये चापि कर्मबन्धेन बद्धाः सीदन्ति जन्तवः।
संसारानलसंतापविक्लवीकृतमानसाः।।
ते जन्ममरणाटव्यां सुखामृतपिपासवः।
कृपणस्याऽऽश्रयेऽटन्तो लभन्ते नैव निर्वृतिम्।।
चतुर्वर्णा नरा ये तु तत्तद्वीर्यैर्नराधमाः।
तेषां सर्वात्मना सर्वैर्धर्मैः सांका(? क)र्य-
मीक्ष्यते।।
शूद्रविप्रादयो योनौ न भिद्यन्ते परस्परम्।
सर्वधर्मसमानत्वात्संस्कारादि निरर्थकम्।।
तदनुष्ठानवैधव्यवियोगमरणादिभिः।
असेव्यसेवनैरन्यैः शूद्रविप्रादयः समाः।।
बुद्ध्या शक्त्या स्वभावेन धर्मैर्जात्यादिभिः श्रिया।
कर्तव्यैः पुण्यपापाभ्यां शनैः सर्वशरीरगैः।।
बन्धनै रोधनैर्नानायातनोपायपीडनैः।
दण्डैरदण्डकरणैर्विषादपरिवेदनैः।।
सात्त्विकैः प्रीतिधर्माद्यै राजसैश्चित्रचेष्टितैः।
तामसैस्तापमोहाद्यैर्दूयमानाः पुनःपुनः।।
श्लेष्ममारुतपित्ताद्यैर्महाबीभत्सदर्शनैः।
क्वचिद्वृत्तिनिवृत्तिभ्यामृतानृतहिताहितैः।।
अलङ्कारोपयोगेन मन्मथाद्यैर्विचेष्टितैः।
धनलाभाशयाऽनेकजन्तुसंघातपातनैः।।
अधिसिद्धिगतिं याति नानाविधमनोरथैः।
आत्मस्नेहपरद्वेषस्वीकृतद्रव्यरक्षणैः।।
अतिक्षीबत्वसंक्षोभक्षुत्क्षामत्वाक्षमामयैः।
यातनोपायपैशुन्यशून्यत्वोपशमैस्तथा।
अप्रशस्तैरनुष्ठानैः समीपस्थापदः समाः।।

हिंसकाः प्राणिनः पापवितथालापभाषिणः।
साधूनां भाषकाः स्तेना निर्दयाः पारदारिकाः।
नीचकर्मसमाचाराः सर्वभक्षाः पिशाचवत्।।
दुष्कुलीनदुराचारा नृपाणामुपजीविनः।
विप्रकार्या विकर्मस्था धनिनो दुष्टचेतसः।।
लुब्धका हरिणान्हत्वा वासं कृत्वा यथा वने।
तथा खादन्ति पिशुना बहवश्च क्रियावशात्।।
वेदवादमधीयानाः प्राणिघाताभिशंसिनः।
पुष्णन्ति कपटैरर्थान्वेदविक्रयिणोऽधमाः।।
मायिनो मत्सरग्रस्ता लुब्धा मुग्धा मदोद्धताः।
चाटाः कार्पटिकाः क्रूराः कदर्याः कलहप्रियाः।।
वाचाटदुष्टकुलटा अटन्तो भाटकैः सह।
भण्डमान्या भटाटोपैः संक्रुद्धाः सुविलुण्ठकाः।।
पर्यटा भाटकाजीवाः कण्ठकश्लोकभाषिणः।
विक्रीयन्ते ह्यविक्रेयमभक्ष्यद्रव्यभक्षिणः।।
शूद्रकर्मानुतिष्ठन्तो निस्तपास्ते नराधमाः।
सेवाध्यापनवाणिज्यकृष्याद्यारम्भलम्भिताः।।
गृह्णन्तः संपदो बाह्याद्द्रव्यधान्यधनादिकाः।
क्रोधाद्याभ्यन्तरान्दोषांस्तथा दुष्टमनोरथान्।।
अत्यजन्तो विशिष्टानां श्रेष्ठास्ते कुचमर्दिनः।
नोपादेयानि वस्त्राणि नित्यमाददते द्विजाः।।
हापयन्ति न हेयानि कथं ते गुरवः क्षितौ।
दण्डिका दिण्डिका भण्डाश्चण्डाश्चण्डाल-
चेष्टिताः।।
वैतण्डकास्ते निघ्नन्ति यथा सिंहो मृगान्पशून्।
निर्ग्रन्थं मुनिमालोक्य मन्यमानाः समुन्नदम्।।
परिभूयावतिष्ठन्ते धिक्तान्रिक्तान्स्ववैरिणः।
तस्मात्संसारिकान्सत्त्वांश्चित्तक्लेशकलङ्कितान्।
दौःशील्यदौर्मनस्याद्यैस्तुल्यजातीयबन्धनान्।।
शूद्रां प्ररोचते विप्रो रागिणीं मैथुनं प्रति।
सा कामदुःखविगमे गर्भं धत्ते समागमे।।
कामं कामातुराभ्यस्तु रोचन्ते शूद्रमानवाः।
मैथुनं प्रति ब्राह्मण्ये तेऽपि तस्याः सुखावहाः।।

ये तु जात्यादिभिर्भिन्ना गवाश्वोष्ट्रमतङ्गजाः।
ते विजातिषु नो गर्भं कुर्वतेऽपि सुखार्थिनः।।
अनड्वानेव गोरेव कामं पुष्णाति संगमे।
घोटकाश्च रतिं सम्यक्कुर्वते वडवासु च।।
पतिं करभमेवाऽऽप्य करभी रमते मुदा।।
गजमेव पतिं लब्ध्वा सुखं तिष्ठति हस्तिनी।।
तिर्यग्जातिस्त्रिया साकं कुर्वाणोऽपि हि मैथुनम्।
न तस्याः कुरुते गर्भं नरो नापि सुखासिकाम्।।
तिरश्चा सह कुर्वाणा मैथुनं मनुजाङ्गना।
नाऽऽधत्ते तत्कृतं गर्भं न युक्तं मैथुनं तयोः।
नैवं कश्चिद्विभागोऽस्ति मैथुने स्त्रीमनुष्ययोः।।
तेन संक्षीयते भेदः प्रस्फुटं द्विजशूद्रयोः।
वेदपाठच्छलेनायं न क्रियाभिः प्रपद्यते।।
बहुभिर्जडसंघातैरविशिष्टेऽपि देहिनः।
देहे देहिनि चामुष्मिन्नशुचावनवस्थिते।।
रागद्वेषादिभिर्दोषैरधिकं परिपीडिते।
कुलालचक्रवद्भ्रान्तमानसे विषयार्णवे।।
घोरदुःखभयाक्रान्ते समाजेऽनीश्वरात्मनि।
जन्ममृत्युजराशोकानिष्टयोगाग्निपीडिते।।
हीनसत्त्वशरीरादौ न विशेषो विभाव्यते।
तस्मान्मनुष्यभेदोऽयं संकेतबलनिर्मितः।।
ब्राह्मण्यं ब्राह्मणासंगाद्ब्राह्मणी चोपसेवते।
पतिं त्यक्त्वा मुखास्वादलालसैर्मदलालसैः।।
आसेव्यते विटं गत्वा बन्धकी चेटकैरपि।
ब्राह्मण्यात्प्रच्यवतेऽन्ये महापातकसेविताः।।
व्यलीककल्पनैवैषा तस्माज्जात्यादिकल्पना।।

ब्रह्मोवाच –

[1]हेयोपादेयतत्त्वज्ञास्त्यक्तान्यायपथागमाः।
जितेन्द्रियमनोवाचः सदाचारपरायणाः।।
नियमाचारवृत्तस्था हितान्वेषणतत्पराः।
संसाररक्षणोपायक्रियायुक्तमनोरथाः।।
सम्यग्दर्शनसंपन्नाः समाधिस्था हतक्रुधः।
स्वाध्यायभक्तहृदयास्त्यक्तसङ्गा विमत्सराः।।
विशोका विमदाः शान्ताः सर्वप्राणिहितैषिणः।
सुखदुःखसमा लोका विविक्तस्थानवासिनः।।
व्रतोपयुक्तसर्वाङ्गा धार्मिकाः पापभीरवः।
निर्ममा निरहंकारा दानशूरा दयापराः।
सत्यब्रह्मविदः शान्ताः सर्वशास्त्रेषु निष्ठिताः।।
सर्वलोकहितोपायप्रवृत्तेन स्वयंभुवा।
वागीश्वरेण देवेन नाभेयेन भवच्छिदा।
ब्रह्मणा कृतमर्यादास्त एव ब्राह्मणाः स्मृताः।।
महातपोधनैरार्यैः सर्वसत्त्वाभयप्रदैः।
सर्वलोकहितार्थाय निपुणं सुप्रतिष्ठितम्।।
बृहत्त्वाद्भगवान्ब्रह्मा नाभेयस्तस्य ये जनाः।
भक्त्या सक्ता प्रपन्नाश्च ब्राह्मणास्ते प्रकीर्तिताः।।
क्षत्रियास्तु क्षतत्राणाद्वैश्या वार्ताप्रवेशनात्।
ये तु श्रुतेर्द्रुतिं प्राप्ताः शूद्रास्तेनेह कीर्तिताः।।
ये चाऽऽचाररताः प्राहुर्ब्राह्मण्यं ब्रह्मवादिनः।
ते तु फलं प्रशंसन्ति यत्सदा मनसेप्सितम्।।
क्षमा दमो दया दानं सत्यं शौचं धृतिर्घृणा।
मार्दवार्जवसंतोषानहंकारास्तपः शमः।।
धर्मो ज्ञानमपैशुन्यं ब्रह्मचर्यममूढता।
ध्यानमास्तिक्यमद्वेषो वैराग्यं च शमात्मता।।
पापभीरुत्वमस्तेयममात्सर्यमतृष्णता।
नैःसङ्ग्यं गुरुशुश्रूषा मनोवाक्कायसंयमः।।
य एवंभूतमाचारमनुतिष्ठन्ति मानवाः।
ब्राह्मण्यं पुष्कलं तेषां नित्यमेव प्रवर्धते।।
ते स्वमतास्वादलब्धवर्णाचारा महौजसः।
सर्वशास्त्राविरोधेन पवित्रीकृतमानसाः।।
सज्जनाभिमताः प्राज्ञाः पुराणागमपण्डिताः।
गीतागीतागमाचाराः स्मृतिकाराः पठन्ति च।।
मन्वन्तरेषु सर्वेषु चतुर्युगविभागशः।
वर्णाश्रमाचारकृतं कर्म सिध्यत्यनुत्तमम्।।
संसिद्धायां तु वार्तायां ततस्तेषां स्वयंप्रभुः।
मर्यादां स्थापयामास यथारब्धां परस्परम्।।
ये वै परिग्रहीतारस्तेषां सत्त्वबलाधिकाः।
इतरेषां क्षतत्राणान्स्थापयामास क्षत्रियान्।।

(१) भविष्य. १।४४।१-३४.

उपतिष्ठन्ति ये तान्वै याचन्ते शर्मदाः सदा।
सत्यं ब्रह्म सदा भूतं वदन्तो ब्राह्मणास्तु ते।।
ये चान्येऽप्यबलास्तेषां वैश्यकर्मणि संस्थिताः।
कीलानि नाशयन्ति स्म पृथिव्यां प्रागतन्द्रिताः।
वैश्यानेव तु तानाह कीनाशान्वृत्तिमाश्रितान्।।
शोचन्तश्च द्रवन्तश्च परिचर्यासु ये नराः।
निस्तेजसोऽल्पवीर्याश्च शूद्रांस्तानब्रवीत्तु सः।।
ब्राह्मणक्षत्रियविशां शूद्राणां च परस्परम्।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः।।
शमस्तपो दमः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्।।
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्।।
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्।।
योगस्तपो दया दानं सत्यं धर्मश्रुतिर्घृणा।
ज्ञानं विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्।।
शिखा ज्ञानमयी यस्योपवीतं च तपोमयम्।
ब्राह्मण्यं निष्कलं तस्य मनुः स्वायंभुवोऽब्रवीत्।।
यत्र वा तत्र वा वर्णे उत्तमाधममध्यमे।।
निवृत्तः पापकर्मभ्यो ब्राह्मणः स विधीयते।।
शूद्रोऽपि शीलसंपन्नो ब्राह्मणादधिको भवेत्।
ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत्।।
न सुरां संधयेद्यस्तु आपणेषु गृहेषु च।
न विक्रीणाति च तथा सच्छूद्रो हि स उच्यते।।
यद्येका स्फुटमेव जातिरपरा कृत्यात्परं भेदिनी
यद्वा व्याहतिरेकतामधिगता यच्चान्यधर्मं ययौ।
एकैकाखिलभावभेदनिधनोत्पत्तिस्थितिव्यापिनी
किं नासौ प्रतिपत्तिगोचरपथं यायाद्विभक्त्या
नृणाम्।।

ब्रह्मोवाच –

[1]इदं शृणु मया ख्यातं तर्कपूर्वमिदं वचः।
युष्माकं संशये जाते कृते वै जातिकर्मणोः।।

(१) भविष्य. १।४५।१-६.

पुनर्वच्मि निबोधध्वं समासान्न तु विस्तरात्।
संसिद्धिं यान्ति मनुजा जातिकर्मसमुच्चयात्।।
सिद्धिं गच्छेद्यथा कार्यं दैवकर्मसमुच्चयात्।
एवं स सिद्धिमायाति पुरुषो जातिकर्मणोः।।
इत्येवमुक्तवान्पूर्वं शिष्याणां बोधने पुरा।
योगीश्वरो महातेजाः समासान्न तु विस्तरात्।।

सुमन्तुरुवाच –

इति पृष्टः पुरा ब्रह्मा ऋषीन्प्रोवाच भारत।
सवितर्कमिदं वाक्यं विप्रर्षे जातिकर्मणोः।।
तस्मात्त्वया महाबाहो न कार्यो विस्मयो नृप।
कार्तिकेयं प्रति सदा देवानां दुर्विदा गतिः।।

वेदविक्रयस्य निषेधः फलं च, षड्विधो वेदविक्रयः, वेदविक्रयाद्यर्जितधनस्य देवपितृकर्मानर्हत्वम्

सूर्य उवाच –

[1]प्रख्याते प्रत्यये चैव प्रश्नपूर्वं प्रतिग्रहे।
य(? या)जनेऽध्यापने वादे षड्विधो वेद –
विक्रयः।।
[2]वेदविक्रयनिर्दिष्टं स्त्रिया चाऽऽर्जितं धनम्।
न देयं पितृदेवेभ्यो यच्च क्लीबात्खगाधिप।।
[3]अनुयोगेन यो दद्याद्ब्राह्मणाय प्रतिग्रहम्।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम्।।
[4]वेदाक्षराणि यावन्ति नियुज्यन्तेऽर्थकारणात्।
तावतीर्भ्रूणहत्यास्तु वेदविक्रय्यवाप्नुयात्।।

(१) भविष्य. १।१८४।१.

(२) भविष्य. १।१८४।२; गृक. २०६ निर्दिष्टं (जं नेष्टं) चाऽऽर्जितं (यच्चार्जितं) क्लीबात् (क्षीबात्); गृर. ४३८ निर्दिष्टं (जं नेष्टं) चाऽऽर्जितं (यच्चार्जितं).

(३) भविष्य. १।१८४।३ ब्राह्मण (ब्राह्मणा); गृक. २०६; गृर. ४३८; निप्र. २।३१६.

(४) भविष्य. १।१८४।४ उत्तरार्धे (तावत्यो भ्रूणहत्या वै वेदविक्रयमाप्नुयात्।।); गृक. २०६; गृर. ४३८ युज्यन्तेऽर्थ (युञ्ज्यादर्थ) वतीर्भ्रू (वती भ्रू); निप्र. २।३१६; कृभ. १४३३ युज्यन्तेऽर्थ (युञ्ज्यादर्थ).

ब्राह्मणानाम् ऋतादिवृत्तयः तासां
श्रेयस्त्वतारतम्यं च

[१]अनन्तरं प्रवक्ष्यामि विप्राणां वृत्तयः शुभाः।
ऋतामृते च विप्राणां मृतं प्रमृतमेव च।
प्रतिग्रहो वणिज्यादिः श्रेयसी नोत्तरोत्तरा।
आजीविकावृत्तयस्तु इत्याद्याः संप्रवर्तिताः।
तासां कयाऽपि जीवेत अनुतिष्ठेद्यथाविधि।।

ब्राह्मणप्रशंसा

सूत उवाच –

[२]त्रयाणामेव वर्णानां जन्मतो ब्राह्मणः प्रभुः।
संसृष्टा ब्राह्मणाः पूर्वं तपस्तप्त्वा द्विजोत्तमाः।
हव्यानामिह कव्यानां सर्वस्यापि च गुप्तये।।
अश्नन्ति च मुखेनास्य हव्यानि त्रिदिवौकसः।
कव्यानि चैव पितरः किं भूतमधिकं ततः।।
जन्मना चोत्तमोऽयं च सर्वार्चां ब्राह्मणोऽर्हति।
स्वकीयं ब्राह्मणो भुङ्क्ते विदधाति द्विजोत्तमाः।।
त्रयाणामिह वर्णानां भावाभावाय वै द्विजः।
भवेद्विप्रा न संदेहस्तुष्टो भावाय वै भवेत्।
अभावाय भवेत्क्रुद्धस्तस्मात्पूज्यः सदा हि सः।।
पूतानां परमः पूतो गुरूणां परमो गुरुः।
सर्वसत्त्वान्वितो विप्रो निर्मितो ब्रह्मणा पुरा।।
पूजयित्वा द्विजान्देवाः स्वर्गं भुञ्जन्ति चाक्षयम्।
मनुष्याश्चापि देवत्वं स्वं स्वं राज्यं समञ्जसाः।।
यस्य विप्राः प्रसीदन्ति तस्य विष्णुः प्रसीदति।
तस्माद्ब्राह्मणपूजायां विष्णुस्तुष्यति तत्क्षणात्।।
तस्माद्विष्णुमुखाद्विप्रः समुद्भूतः पुरा द्विजाः।
वेदास्तत्रैव संजाताः सृष्टिसंहारहेतवे।।
तस्माद्विप्रमुखे वेदाश्चार्पिताः पुरुषेण हि।
पूजार्थं ब्रह्म लोकानां सर्वज्ञानार्थतो ध्रुवम्।।
पितृयज्ञविवाहेषु वह्निकार्येषु शान्तिषु।
प्रशस्ता ब्राह्मणा नित्यं सर्वस्वस्त्ययनेषु च।।
देवा भुञ्जन्ति हव्यानि बलिं प्रेतादयोऽसुराः।
पितरो हव्यकव्यानि विप्रस्यैव मुखाद्ध्रुवम्।।

(१) भविष्य. १।१८६।९-११.
(२) भविष्य. २।१।५।१-५, ९-२२.

देवेभ्यश्च पितृभ्यश्च यो दद्याद्यज्ञकर्मसु।
दानं होमं बलिं चैव विना विप्रेण निष्फलम्।।
विना विप्रं च यद्धर्मं प्रयासफलमात्रकम्।
भुञ्जते चासुरास्तत्र प्रेता भूताश्च राक्षसाः।।
तस्माद्ब्राह्मणमाहूय तेषु पूजां च कारयेत्।
काले देशे च पात्रे च लक्षकोटिगुणं भवेत्।।
श्रद्धया च द्विजं दृष्ट्वा प्रकुर्यादभिवादनम्।
दीर्घायुस्तस्य वाक्येन चिरजीवी भवेन्नरः।।
अनभिवादिनां विप्रे द्वेषादश्रद्धयाऽपि च।
आयुः क्षीणं भवेत्पुंसां भूमिनाशश्च दुर्गतिः।।
आयुर्वृद्धिर्यशोवृद्धिर्वृद्धिर्विद्याधनस्य च।
पूजयित्वा द्विजश्रेष्ठान्भवेन्नास्त्यत्र संशयः।।
न विप्रपादोदककर्दमानि
न वेदशास्त्रप्रतिघोषितानि।
स्वाहास्वधास्वस्तिविवर्जितानि
श्मशानतुल्यानि गृहाणि तानि।।

कृषिनिन्दा

[१]संवत्सरेण यत्पापं मत्स्यघाती समाचरेत्।
तदह्नैकेन कुरुते लाङ्गली नात्र संशयः।
अतोऽर्थं कृषिपाल्येन नरकं याति लाङ्गली।।

गोवंशपीडननिषेधः

[२]गवां तृषाभिभूतानां जलार्थमुपसर्पताम्।
यः समाचरते विघ्नं स चैव ब्रह्महा स्मृतः।।
गवां मार्गे वने चाग्निं पुरे ग्रामे च दीपयेत्।
इति पापानि घोराणि सुरापानसमानि तु।।
वृषाणां वृषणान्येव पापिष्ठा गालयन्ति ये।
वाहयन्ति च गां वध्यां( ? न्ध्यां)ते महानारका
स्मृताः।।

गोब्राह्मणप्रशंसा

[३]ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति।।

(१) भविष्य. ४।३।३३-३४.
(२) भविष्य. ४।५।१६, २१, ६१-६२.
(३) भविष्य. ४।६९।२५, ४।१५९।५-६.

[१]ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः।
पूजिताः पूजयन्त्येते निर्दहन्त्यपमानिताः।।

श्रीकृष्ण उवाच –

[२]ब्राह्मणा दैवतं भूमौ ब्राह्मणा दिवि दैवतम्।
ब्राह्मणेभ्यः परं नास्ति नास्ति भूतं जगत्त्रये।।
अदेवं दैवतं कुर्युः कुर्युर्देवमदैवतम्।
ब्राह्मणा हि महाभागाः पूज्यन्ते सततं द्विजाः।।
ब्राह्मणेभ्यः समुत्पन्ना देवाः पूर्वमिति स्मृतिः।
ब्राह्मणेभ्यो जगत्सर्वं तस्मात्पूज्यतमा द्विजाः।।
येषामश्नन्ति वक्त्रेण देवताः पितरस्तथा।
ऋषयश्च तथा नागाः किं भूतमधिकं ततः।।
यदै(? दे)व मनुजो भक्त्या ब्राह्मणेभ्यः प्रयच्छति।
तदै(? दे)वाऽऽप्नोति धर्मज्ञ बहु जन्मनि जन्मनि।।
तालवृन्तानिलेनैव श्रान्तसंवाहनेन च।
उत्सादनेन गात्राणां तथा व्यञ्जनकर्मणा।।
पादशौचप्रदानेन पादयोः सेचनेन च।
परिचर्य यथाकाममेकेनैव द्विजोत्तम।।
अनिष्ट्वाऽपि समाप्नोति स्वर्गलोकं च शाश्वतम्।
ब्राह्मणानां शुभं कृत्वा नाकलोके महीयते।।
यद्ब्राह्मणास्तुष्टिमन्तो वदन्ति
प्रत्यक्षदेवेषु परोक्षदेवाः।
तद्वै शुभं तस्य नरस्य नूनं
भवेदतस्तान्सततं निषेवेत्।।

हालिकवृषभगुणाः

[३]वोढा च चारुपुष्टाङ्गो ह्यरोगः पाण्डुनन्दन।
युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः।।
धुरंधरः स्थापयते एक एव कुलं महत्।
त्राता भवति संसारे नात्र कार्या विचारणा।।

(१) भविष्य. ४।१४१।८४-८५.
(२) भविष्य. ४।१४९।१-९.
(३) भविष्य. ४।१५०।६-७.

कपिलाप्रतिपालकशूद्रात्
प्रतिग्रहस्य निषेधः

[१]ब्राह्मणश्चैव यो देवि कुर्यात् †तेषां प्रतिग्रहम्।
ततः प्रभृत्यमेध्यायां पितरस्तस्य शेरते।।
तं विप्रं नानुभाषेत न चाप्येकासने विशेत्।
स नित्यं वर्जनीयो वै दूरात्तु ब्राह्मणाधमः।
यस्तेन सह भाषेत प्रायश्चित्ती भवेद्द्विज।।

गोविक्रयनिषेधः

[२]गवां विक्रयकारी तु गवि रोमाणि यानि तु।
तावद्वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेत्।।

## नारदपुराणम्

ब्राह्मणप्रशंसा, ब्राह्मणस्यैव
प्रतिग्रहाधिकारः

[३]सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः।
तस्मै दानानि देयानि दत्तस्याऽऽनन्त्यमिच्छता।।
ब्राह्मणः प्रतिगृह्णीयात्सर्वतो भयवर्जितः।
न कदाऽपि क्षत्रविशौ गृह्णीयातां प्रतिग्रहम्।।
गण्यन्ते पांसवो भूमेर्गण्यन्ते वृष्टिबिन्दवः।
न गण्यन्ते विधात्राऽपि ब्रह्मवृत्तिफलानि वै।।
समस्तदेवतारूपो ब्राह्मणः परिकीर्तितः।
जीवनं ददतस्तस्य कः पुण्यं गदितुं क्षमः।।
यो विप्रहितकृन्नित्यं स सर्वान्कृतवान्मखान्।
स स्नातः सर्वतीर्थेषु तप्तं तेनाखिलं तपः।।
यो ददस्वेति विप्राणां जीवनं प्रेरयेत्परम्।
सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषितैः।।

वर्णाश्चत्वारः, तत्र त्रयो द्विजाः,
वर्णानां वृत्तयः

[४]ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चत्वार एव ते।
वर्णा इति समाख्याता एतेषु ब्राह्मणोऽधिकः।।

† प्रकृतानां कपिलाप्रतिपालनेन पापिष्ठानां शूद्राणां तच्छब्देन परामर्शः। तेभ्य इत्यर्थः।

(१) भविष्य. ४।१६१।४४-४६.
(२) निप्र. २।३१६.
(३) नारद.१।१२।२-३, ५०-५३.
(४) नारद. १।२४।७-८.

ब्राह्मणाः क्षत्रिया वैश्या द्विजाः प्रोक्तास्त्रयस्तथा।
[१]वृत्त्यर्थं याचयेच्चैव अन्यानध्यापयेत्तथा।
याजयेद्यजने योग्यान्विप्रो नित्योदकी भवेत्।।
[२]शस्त्राजीवी ¤भवेच्चैव पालयेद्धर्मतो महीम्।
दुष्टानां शासनं कुर्याच्छिष्टानां पालनं तथा।।
पाशुपाल्यं च वाणिज्यं कृषिश्च द्विजसत्तम।
वेदस्याध्ययनं चैव वैश्यस्यापि प्रकीर्तितम्।।
कुर्याच्च दारग्रहणं धर्मांश्चैव समाचरेत्।
क्रयविक्रयजैर्वाऽपि धनैः कारुक्रियोद्भवैः।।
दद्याद्दानानि शूद्रोऽपि पाकयज्ञैर्यजेत्र( ? त) च।
ब्राह्मणक्षत्रियविशां शुश्रूषानिरतो भवेत्।।

ब्राह्मणक्षत्रिययोरापदि क्रमेण क्षत्रियवैश्यवृत्ती, द्विजस्य शूद्रवृत्तिनिषेधः

[३]ब्राह्मणः क्षत्रियाचारमाश्रयेदापदि द्विज।
क्षत्रियोऽपि च विड्वृत्तिमत्यापदि समाश्रयेत्।।
नाऽऽश्रयेच्छूद्रवृत्तिं तु अत्यापद्यपि वै द्विजः।
यद्याश्रयेद्द्विजो मूढस्तदा चाण्डालतां व्रजेत्।।

पूर्वं ब्राह्मणानामेव सृष्टिः, ब्राह्मणा एव कर्मभिर्वर्णान्तरतां गताः

[४]असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतिः।
आत्मतेजोभिर्निर्वृत्तान्भास्कराग्निसमप्रभान्।।

भारद्वाज उवाच –

चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते।
स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम्।
त्वन्तः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते।।
जङ्गमानामसंख्येयाः स्थावरणां च जातयः।
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः।।

भृगुरुवाच –

न विशेषोऽस्ति वर्णानां सर्वं ब्रह्ममयं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मणा वर्णतां गतम्।।
कामभोगाः प्रियातीक्ष्णाः क्रोधताप्रियसाहसाः।
त्यक्तस्वकर्मरक्ताङ्गास्ते द्विजाः क्षत्रतां गताः।।
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः।।
हिंसानृतपरा लुब्धाः सर्वकर्मोपजीविनः।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः।।
इत्येतैः कर्मभिर्व्यास्ता द्विजा वर्णान्तरं गताः।
ब्राह्मणा धर्मतन्त्रस्थास्तपस्तेषां न नश्यति।।

## अग्निपुराणम्

क्रयविक्रयकुसीदानां कृषिसंबन्धिकर्मणां च मुहूर्ताः

[१]याम्यसार्पधनिष्ठासु त्रिषु पूर्वासु वानने( ? वाऽनले)।
क्रीतं हानिकरं द्रव्यं विक्रीतं लाभकृद्भवेत्।।
अश्विनीस्वातिचित्रासु रेवत्यां वारुणे हरौ।
क्रीतं लाभकरं द्रव्यं विक्रीतं हानिकृद्भवेत्।।
भरणी त्रीणि पूर्वाणि आर्द्राश्लेषामघानिलाः।
वह्निज्येष्ठाविशाखासु स्वामिनो नोपतिष्ठते।
द्रव्यं दत्तं प्रयुक्तं वा यत्र निक्षिप्यते धनम्।।
अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ।
पुष्यश्रवणहस्तेषु कृषिकर्म समाचरेत्।।
† पुनर्वसूत्तरास्वातीभगमूलेन्द्रवारुणे।
गुरोः शुक्रस्य वारे वा वारे च सोमभास्वतोः।
वृषलग्ने च कर्तव्यं कन्यायां मिथुने तथा।
द्विपञ्चदशमी सप्ततृतीया च त्रयोदशी।
रेवती रोहिणीन्द्राग्निहस्तमैत्रोत्तरेषु च।
मन्दारवर्जं बीजानि वापयेत्संपदर्थ्यपि।।

---

¤ क्षत्रिय इति प्रकृतम्।

(१) नारद. १।२४।१९.

(२) नारद. १।२४।२३-२७.

(३) नारद. १।२४।३०-३२.

(४) नारद. १।४३।५०, ५३-६०.

† एतदाद्यर्धत्रयमुक्तकृषिकर्मविषयं चेत् कतिपयनक्षत्रपौनरुक्त्यम्। वक्ष्यमाणबीजावापविषयं चेत् उत्तरानक्षत्रेषु पौनरुक्त्यमस्त्येव, नक्षत्रमध्ये वारादिना व्यवधानेन परिहरणीयेनानौचित्यमपि। एवमेवाग्रो प्रवेशनेऽप्यनुचितं व्यवधानं दृश्यते। तेनात्र व्याकुलता ग्रन्थस्याऽऽशङ्क्यते।

(१) अग्नि. १२१।३३-३६, ४५-५४.

**रेवतीहस्तमूलेषु श्रवणे भगमैत्रयोः।**
**पितृदैवे तथा सौम्ये धान्यच्छेदं मृगोदये।।**
**हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये।**
**स्थिरे लग्ने गुरोर्वारेऽथ वा भार्गवसौम्ययोः।**
**याम्यादितिमघाज्येष्ठासूत्तरेषु प्रवेशयेत्।।**
**ॐ (नमो) धनदाय सर्वधनेशाय देहि मे धनं स्वाहा।**
**ॐ नवे वर्षे इलादेवि लोकसंवर्धिनि कामरूपिणि देहि मे धनं स्वाहा।**
**पत्रस्थं लिखितं धान्यराशिस्थं धान्यवर्धनम्।।**
**त्रिपूर्वासु विशाखायां धनिष्ठावारुणेऽपि च।**
**एतेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः।।**
**‡ [१]विजये कृषिवाणिज्यम्.... ।।**

वर्णानां मुख्या आपत्कालीनाश्च वृत्तयः, द्विजानामविक्रेयाणि, कृषिदोषशमनम्, हालिकवृषभसंख्याफलानि, श्ववृत्तिनिषेधः

**[२]यजनं याजनं दानं वेदाद्यध्यापनक्रिया।**
**प्रतिग्रहं चा( ? हश्चा)ध्ययनं विप्रकर्माणि निर्दिशेत्।।**
**क्षत्रियस्य विशेषेण पालनं दुष्टनिग्रहः।**
**कृषिगौरक्ष्यवाणिज्यं वैश्यस्य परिकीर्तितम्।**
**शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि वाऽप्यथ।।**
**[३]आजीवं तु ( ? अजीवंस्तु) यथोक्तेन ब्राह्मणः स्वेन कर्मणा।**
**क्षत्रविट्छूद्रधर्मेण जीवन्नेव तु ( ? जीवेन्नैव तु) शूद्रजात्।**
**कृषिवाणिज्यगौरक्ष्यं कुसीदं च द्विजश्चरेत्।**
**गोरसं गुडलवणलाक्षामांसानि वर्जयेत्।।**
**भूमिं भित्त्वौषधीश्छित्त्वा हत्वा कीटपिपीलि – ( ? ल)कान्।**
**पुनन्ति खलु यज्ञेन कर्षका देवपूजनात्।।**

‡ मुहूर्ते इति प्रकृतम्।
(१) **अग्नि.** १२३।१९.
(२) **अग्नि.** १५१।६-७, ८-९.
(३) **अग्नि.** १५२।१-५.

**हलमष्टगवं धर्म्यं षड्गवं जीवितार्थिनाम्।**
**चतुर्गवं नृशंसानां द्विगवं धर्मघातिनाम्।।**
**ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा।**
**सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन।।**

प्रतिग्रहानधिकारी, प्रतिग्रहेतिकर्तव्यता

**[१]अतपस्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः।**
**अम्भस्यश्मप्लवेनैव सह तेनैव मज्जति।।**
**स्नातः सम्यगुपस्पृश्य गृह्णीयात्प्रयतः शुचिः।**
**प्रतिग्रहीता सावित्रीं सर्वदैव प्रकीर्तयेत्।**
**ततस्तु कीर्तयेत्सार्धं द्रव्येण सह दैवतम्।।**
**प्रतिग्राही पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात्।**
**मन्दं पठेत्क्षत्रियात्तु उपांशु च तथा विशः।**
**मनसा च तथा शूद्रात्स्वस्तिवाचनकं तथा।।**

कुसीदे वस्तुभेदस्थलभेदप्रयुक्तानि वृद्धिपरिमाणानि

**[२]अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके।**
**वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा।।**
**संततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा।**
**वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा तथा।।**
**ग्रामान्तरात्तु दशकं सामुद्रादपि विंशतिम्।**
**दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु।।**

अपाक्रियमाणागृहीतस्य वृद्धिहीनं मध्यस्थे स्थापनम्

**[३]दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।**
**मध्यस्थस्थापितं तत्स्याद्वर्धते न ततः परम्।।**

सप्रतिभूसाधिव्यवहारेषु विशेषविधयः

**प्रतिभूर्दापितो यत्र प्रकाशं धनिनो धनम्।**
**द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत्।।**
**ससंततिस्त्रीपशव्यं धान्यं द्विगुणमेव च।**
**वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा।।**

(१) **अग्नि.** २०९।३६-४०.
(२) **अग्नि.** २५३।६३-६५.
(३) **अग्नि.** २५४।४, १६-२५.

आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते।
काले कालकृतो नश्येत्फलभोग्यो न नश्यति।।
गोप्याधिभोगिनो वृद्धिः सोपकारेऽथ भाविते।
नष्टो देयो विनष्टश्च दैवराजकृतादृते।।
आधेः स्वीकरणात्सिद्धी रक्षमाणोऽप्यसारताम्।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत्।।
चरित्रं बन्धककृतं सवृद्धं दापयेद्धनम्।
सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत्।।
उपस्थितस्य मोक्तव्य आधिर्दण्डोऽन्यथा भवेत्।
प्रयोजकेऽसति धनं कुले न्यस्याऽऽधिमाप्नुयात्।।
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः।
विना धारणकाद्वाऽपि विक्रीणीते ससाक्षिकम्।।
यदा तु द्विगुणीभूतमृणमाधौ तदा खलु।
मोच्यश्चाऽऽधिस्तदुत्पाद्यः प्रविष्टे द्विगुणे धने।।
व्यसनस्थमनाख्याय हस्तेऽन्यस्य तदर्पयेत्।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्।।

गोब्राह्मणप्रशंसा

[१]ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्।
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति।।
देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत्।
धार्यते वै सदा तस्मात्सर्वे पूज्यतमा मताः।।

अनापद्यपरिग्राह्याणि

[२]हस्त्यश्वरथयानानि मृतशय्यासनादि च।
कृष्णाजिनं न गृह्णाति यद्यनापद्गतो द्विजः।।

(१) निरयं यातीत्यर्थः। निप्र. २।२८१

(२) 'शय्यासनादि' इत्यत्राऽऽदिशब्दादन्येषामपि प्रेतसंबन्धिवाहनवसनभाजनादीनामुपग्रहः।
बाल. १।२१६ पृ. ४७१

[३]तथोभयमुखीं घोरां सशैलां मेदिनीं द्विजः।
कुरुक्षेत्रे च यद्दानं चण्डालपततां तथा।
मासिके च पितृश्राद्धे भुञ्जन्प्रेतत्वमाप्नुयात्।।

(१) **अग्नि.** २९२।२०-२१.

(२) **निप्र.** २।२८१ सनादि (सनानि) उत्तरार्धे (कृष्णाजिनं च गृह्णाति अनापत्सु गतो द्विजः।); **बाल.** १।२१६ पृ. ४७०.

(३) **बाल.** १।२१६ पृ. ४७०-४७१.

## देवीभागवतम्

ब्राह्मणप्रशंसा

[१]दुर्लभं मानुषं जन्म कर्मभूमाविहानघ।
तत्रापि ब्राह्मणत्वं वै दुर्लभं चोत्तमे कुले।।
[२]दुर्लभं मानुषं जन्म भुवि ब्राह्मणसत्तम।
तत्रापि दुर्लभं मन्ये ब्राह्मणत्वं विशेषतः।।

स्वधर्मनिष्ठस्य शूद्रस्य
जन्मान्तरे क्षत्रियत्वं
ब्राह्मणत्वं च

[३]शूद्रः स्वधर्मनिष्ठस्तु देहान्ते क्षत्रियस्तु सः।
शुभाचारो मृतो यो वै स शूद्रो ब्राह्मणो भवेत्।।

यद्यत्तपसा यद्यत्फलं भवति तदाह – शूद्र इति।
तिलक.

न कर्मणा ब्राह्मणत्वम्

[४]ब्राह्मं तेजो दुराराध्यं न त्वं वेद विमोहितः।
विप्रचर्चा न कर्तव्या प्राणिभिः सुखमीप्सुभिः।।

ब्राह्मणप्रशंसा

[५]ब्राह्मणा भूमिदेवाश्च माननीयाः प्रयत्नतः।
कारणं क्षत्रियाणां च द्विजा एव न संशयः।।
अद्भ्योऽग्निर्ब्रह्मणः क्षत्रमश्मनो लोहमुत्थितम्।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति।।
तस्माद्राज्ञा विशेषेण माननीया मुखोद्भवाः।
दानेन विनयेनैव सर्वथा भूतिमिच्छता।।
[६]दुर्लभं खलु मानुष्यं तत्राऽपि च द्विजन्मता।
द्विजत्वे ब्राह्मणत्वं च दुर्लभं वेत्सि किं न हि।।

द्विजत्वे ब्राह्मणत्वं चेति। द्विजत्वे सत्यपि ब्राह्मणत्वं दुर्लभमित्यर्थः। तिलक.

(१) **देवीभा.** १।१५।४४.

(२) **देवीभा.** २।२।१०.

(३) **देवीभा.** ४।१।१८.

(४) **देवीभा.** ४।९।१४.

(५) **देवीभा.** ७।११।५०-५२.

(६) **देवीभा.** ७।१३।१८.

याचना न क्षत्रियवृत्तिः

**राजोवाच –**

**[1]नाहं प्रतिग्रहं काङ्क्षे क्षत्रियोऽहं सुमध्यमे।**
**याचनं खलु विप्राणां क्षत्रियाणां न विद्यते।**
**गुरुर्हि विप्रो वर्णानां पूजनीयोऽस्ति सर्वदा।।**
**तस्माद्गुरुर्न याच्यः स्यात्क्षत्रियाणां विशेषतः।**
**यजनाध्ययनं दानं क्षत्रियस्य विधीयते।।**
**शरणागतानामभयं प्रजानां प्रतिपालनम्।**
**न चाऽप्येवं तु वक्तव्यं देहीति कृपणं वचः।।**

कन्याविद्याविक्रययोः शूद्रप्रतिग्रहयाजनयोर्वार्धुषिकत्वस्य च निषेधाः

**[2]य कन्यापालनं कृत्वा करोति यदि विक्रयम्।**
**विक्रेता धनलोभेन कुम्भीपाकं स गच्छति।।**
**[3]शूद्राणां च प्रतिग्राही शूद्रयाजी च यो द्विजः।**
**मसिजीवी असिजीवी विषहीनो यथोरगः।।**

विषहीनः उरगः सर्पः, अजगरः इत्यर्थः। तिलक.

**यः कन्याविक्रयी विप्रो यो हरेर्नामविक्रयी।**
**यो विप्रोऽवीरान्नभोजी ऋतुस्नातान्नभोजकः।।**

(विप्रस्य?) अवीरा पतिपुत्ररहिता ब्राह्मणीत्यर्थः। ऋतुस्नाता चतुर्थदिवसे इत्यर्थः। तिलक.

**भगजीवी वार्धुषिको विषहीनो यथोरगः।**
**यो विद्याविक्रयी विप्रो विषहीनो यथोरगः।।**

भगजीवी कुट्टनः। वार्धुषिकः वृद्ध्या जीवति। विद्याविक्रयी द्रव्यं गृहीत्वा विद्यां ददाति। तिलक.

ब्राह्मणप्रशंसा

**[4]दुर्लभा मानुषीजातिः सर्वजातिषु भारते।**
**सर्वेभ्यो ब्राह्मणः श्रेष्ठः प्रशस्तः सर्वकर्मसु।।**
**ब्रह्मनिष्ठो द्विजश्चैव गरीयान् भारते सति।**
**निष्कामश्च सकामश्च ब्राह्मणो द्विविधः सति।।**

(१) **देवीभा.** ७।२१।१४-१७.
(२) **देवीभा.** ९।१८।८६.
(३) **देवीभा.** ९।२६।३५-३७.
(४) **देवीभा.** ९।२९।२३-२४.

कन्याविक्रयस्य दण्डेन गोताडनस्य च निषेधः

**[1]स्वकन्यापालनं कृत्वा विक्रीणाति च यो नरः।**
**अर्थलोभान्महामूढो मांसकुण्डं प्रयाति सः।**
**कन्यालोमप्रमाणाब्दं तद्भोजी तत्र तिष्ठति।।**
**दण्डेन ताडयेद्गां हि वृषं च वृषवाहकः।**
**भृत्यद्वारा स्वतन्त्रो वा पुण्यक्षेत्रे च भारते।।**
**प्रतप्ते तैलकुण्डेऽग्नौ तिष्ठति स्म चतुर्युगम्।**
**गवां लोमप्रमाणाब्दं वृषो भवति तत्परम्।।**

प्रतप्ततैलकुण्डमाह – दण्डेनेति। स्वतन्त्रः स्वयमेव। पुण्यक्षेत्रे, चकारादन्यत्रापि। तिलक.

वृषलीपत्यन्नभोजनस्य तीर्थेषु प्रतिग्रहस्य च निषेधः

**[2]वृषलीपतिं याजयेद्यो भुङ्क्तेऽन्नं तस्य यो नरः।**
**गोहत्याशतकं सोऽपि लभते नाऽत्र संशयः।।**
**वाराणस्यां बदर्यां च गङ्गासागरसंगमे।**
**पुष्करे हरिहरक्षेत्रे प्रभासे कामरूस्थले (?)।**
**हरिद्वारे च केदारे तथा मातृपुरेऽपि च।।**
**सरस्वतीनदीतीरे पुण्ये वृन्दावने वने।**
**गोदावर्यां च कौशिक्यां त्रिवेण्यां च हिमाचले।।**
**एषु तीर्थेषु यो दानं प्रतिगृह्णाति कामतः।**
**स च तीर्थप्रतिग्राही कुम्भीपाके प्रयाति सः।।**

हरिहरक्षेत्रे त्र्यम्बके। मातृपुरं मातापुरसंज्ञकं श्रीरेणुकास्थानम्। कामतः इच्छातः, न त्वनुपपत्तितः। तिलक.

शूद्रसेवित्वशूद्रयाजित्वदेवोपजीवित्वदैवज्ञकर्मजीवित्ववैद्यकर्मजीवित्वानां लाक्षादिविक्रयस्य च निषेधाः

**शूद्रसेवी शूद्रयाजी ग्रामयाजीति कीर्तितः।**
**तथा देवोपजीवी च देवलः परिकीर्तितः।।**

ग्रामयाज्यादीनां लक्षणानि आह – शूद्रसेवीति। तिलक.

(१) **देवीभा.** ९।३३।३७-३८, ५८-६०.
(२) **देवीभा.** ९।३४।५५, ८५-८९.

**[1]विप्रो दैवज्ञजीवी च वैद्यजीवी चिकित्सकः।**
**लाक्षालोहादिव्यापारी रसादिविक्रयी च यः।।**
**स याति नागवेष्टं च नागैर्वेष्टितमेव च।**
**वसेत्स लोममानाब्दं तत्रैव नागपाशितः।।**
नागवेष्टनं कुण्डमाह – विप्रो दैवज्ञ इति।

तिलक.

## शिवपुराणम्

सप्तविधा ब्राह्मणास्तेषां लक्षणानि च, राजक्षत्रियवैश्यवणिक्शूद्रवृषल-दस्यूनां लक्षणानि

**सूत उवाच –**
**[2]सदाचारयुतो विद्वान्ब्राह्मणो नाम नामतः।**
**वेदाचारयुतो विप्रो ह्येतैरेकैकवान्द्विजः।।**
**अल्पाचारोऽल्पवेदश्च क्षत्रियो राजसेवकः।**
**किंचिदाचारवान्वैश्यः कृषिवाणिज्यकृत्तथा।।**
**शूद्रब्राह्मण इत्युक्तः स्वयमेव हि कर्षकः।**
**असूयालुः परद्रोही चण्डालद्विज उच्यते।।**
**पृथिवीपालको राजा इतरे क्षत्रिया मताः।**
**धान्यादिक्रयवान्वैश्य इतरो वणिगुच्यते।।**
**ब्रह्मक्षत्रियवैश्यानां शुश्रूषुः शूद्र उच्यते।**
**कर्षको वृषलो ज्ञेय इतरे चैव दस्यवः।।**

वर्णानां वृत्तयः

**अर्थार्जनमथो वक्ष्ये न्यायतः सुसमाहितः।**
**कृतात्प्रतिग्रहाच्चैव याजनाच्च विशुद्धतः।**
**अदैन्यादनतिक्लेशाद्ब्राह्मणो धनमर्जयेत्।।**
**क्षत्रियो बाहुवीर्येण कृषिगोरक्षणाद्विशः।**
**न्यायार्जितस्य वित्तस्य दानात्सिद्धिं समश्नुते।।**

प्रतिग्रहदोषशमनं तपो दानं च

**ग्रहीता हि गृहीतस्य दानाद्वै तपसा तथा।**
**पापसंशोधनं कुर्यादन्यथा रौरवं व्रजेत्।।**

वित्तस्य धर्मवृद्धिभोगोद्देशेन त्रिधा विभागः

**आत्मवित्तं त्रिधा कुर्याद्धर्मवृद्ध्यात्मभोगतः।**
**नित्यं नैमित्तिकं काम्यं कर्म कुर्यात्तु धर्मतः।।**
**वित्तस्य वर्धनं कुर्याद्वृद्ध्यंशेन हि साधकः।**
**हितेन मितमेध्येन भोगं भोगांशतश्चरेत्।।**

कृष्यादिषु दोषशान्तये देया न्यूनाधिका वित्तांशाः

**कृष्यर्जिते दशांशं हि देयं पापस्य शुद्धये।**
**शेषेण कुर्याद्धर्मादि अन्यथा रौरवं व्रजेत्।।**
**अथवा पापबुद्धिः स्यात्क्षयं वा सस्यमेष्यति।**
**वृद्धिवाणिज्यके देयं षडंशं हि विचक्षणैः।।**
**शुद्धप्रतिग्रहे देयं चतुर्थांशं द्विजोत्तमैः।**
**अकस्मादुत्थितेऽर्थे हि देयमर्धं द्विजोत्तमैः।।**
**असत्प्रतिग्रहे सर्वं दुर्दानं सागरे क्षिपेत्।**
**आहूय दानं कर्तव्यमात्मभोगसमृद्धये।।**

वृत्तिभेदप्रयुक्तानि धनस्योत्तममध्य-माधमत्वानि

**[1]शिलवृत्त्योञ्छवृत्त्या च गुरुदक्षिणयाऽर्जितम्।**
**शुद्धद्रव्यमिति प्राहुस्तत्पूर्णफलदं विदुः।।**
**शुक्लप्रतिग्रहादत्तं( ? दत्तं) मध्यमं द्रव्यमुच्यते।**
**कृषिवाणिज्यकोपेतमधमं द्रव्यमुच्यते।।**
**क्षत्रियाणां विशां चैव शौर्यवाणिज्यकार्जितम्।**
**उत्तमं द्रव्यमित्याहुः शूद्राणां भृतकार्जितम्।**
**स्त्रीणां धर्मार्थिनां द्रव्यं पैतृकं भर्तृकं तथा।।**

ब्राह्मणप्रशंसा

**[2]मानुषं जन्म संप्राप्य दुर्लभं सर्वजन्तुषु।**
**तत्रापि सत्कुले देवा दुष्प्राप्यं च मुनीश्वराः।**
**अव्यङ्गं चैव विप्रेषु साचारेषु सुपुण्यतः।।**
**[3]यतः क्रतुभुजो देवाः क्रतवो वेदसंभवाः।**
**ते वेदा ब्राह्मणाधारास्ततो देवबलं द्विजाः।।**

---

(१) **देवीभा.** ८।३५।५५-५६.
(२) **शिव.** १।१३।२-६, ६३-६५, ७१-७७.

(१) **शिव.** १।१५।३९-४२.
(२) **शिव.** २।१।१२।४२-४३.
(३) **शिव.** २।५।५८।९-१०.

**निश्चितं ब्राह्मणाधाराःसर्वे वेदाः सवासवाः।**
**गीर्वाणा ब्राह्मणबला नात्र कार्या विचारणा।।**

देवलकत्ववृत्तिलक्षणम्

**[1]वृत्त्यर्थं पूजयेल्लिङ्गं लोकस्य हितकारकम्।**
**षण्मासं यो द्विजश्चैव स वै देवलकः स्मृतः।।**

देवद्विजगोसंबन्धिभूम्यादि-
हरणनिषेधः

**[2]देवद्विजगवां भूमिं प्रदत्तां हरते तु यः।**
**प्रनष्टामपि कालेन तमाहुर्ब्रह्मघातकम्।।**
**देवद्विजस्वहरणमन्यायेनार्जितं तु यत्।**
**ब्रह्महत्यासमं ज्ञेयं पातकं नात्र संशयः।।**

अनापदि द्विजानामविक्रेयाणि

**दीनसर्वस्वहरणं नरस्त्रीगजवाजिनाम्।**
**गोभूरजतवस्त्राणामौषधीनां रसस्य च।।**
**चन्दनागरुकर्पूरकस्तूरीपट्टवाससाम्।**
**विक्रयस्त्वविपत्तौ यः कृतो ज्ञानाद्द्विजातिभिः।**
**हस्तन्यासापहरणं रुक्मस्तेयसमं स्मृतम्।।**

नानाविधगोपीडननिषेधाः

**[3]ये ताडयन्ति गां क्रूरा दमयन्ते मुहुर्मुहुः।**
**दुर्बलान्ये न पुष्णन्ति सततं ये त्यजन्ति च।।**
**पीडयन्त्यतिभारेणासहं तं वाहयन्ति च।**
**योजयन्न( ? न्त्य)कृताहारान्न विमुञ्चन्ति संयतान्।।**
**ये भारक्षतरोगार्तान्गोवृषांश्च क्षुधातुरान्।**
**न पालयन्ति यत्नेन गोघ्नास्ते नारकाः स्मृताः।।**
**वृषाणां वृषणान्ये च पापिष्ठा गालयन्ति च।**
**वाहयन्ति च गां वन्ध्यां महानारकिनो नराः।।**

द्विजानां निषिद्धा वृत्तयः

**अजाविको माहिषिकः सामुद्रो वृषलीपतिः।**
**शूद्रवत्क्षत्र( ? विट्क्षत्र)वृत्तिश्च नारकी स्याद्द्वि-**
**जाधमः।।**
**शिल्पिनः कारवो वैद्या हेमकारा नृपध्वजाः।**
**भृतकाः कूटसंयुक्ताः सर्वे ते नारकाः स्मृताः।।**

(१) **शिव.** ४।१३।१७.
(२) **शिव.** ५।५।२९-३०, ३६-३८.
(३) **शिव.** ५।६।३१-३४, ३८-३९, ४२-४३.

न्यायातीतराजपरिग्रह-
निषेधः

**ये द्विजाः परिगृह्णन्ति नृपस्यान्यायवर्तिनः।**
**ते प्रयान्ति तु घोरेषु नरकेषु न संशयः।।**
**अन्यायात्समुपादाय द्विजेभ्यो यः प्रयच्छति।**
**प्रजाभ्यः पच्यते सोऽपि नरकेषु नृपो यथा।।**

महादानप्रतिग्रहप्रशंसा

**[1]कनकं च तिला नागाः कन्या दासी गृहं रथः।**
**मणयः कपिला गावो महादानानि वै दश।।**
**गृहीत्वैतानि सर्वाणि ब्राह्मणो ज्ञानवित्सदा।**
**वदान्यांस्तारयेत्सद्यो ह्यात्मानं च न संशयः।।**

स्रष्टुरवयवेभ्यश्चातुर्वर्ण्योत्पत्तिः,
सदाचारदुराचाराभ्यां
वर्णोत्कर्षापकर्षौ

**व्यास उवाच –**
**[2]ब्राह्मणत्वं हि दुष्प्राप्यं निसर्गाद्ब्रह्मणो भवेत्।**
**ईश्वरस्य मुखात्क्षत्रो बाहुभ्यामूरुतो विशः।।**
**पद्भ्यां शूद्रः समुत्पन्न इति तस्य मुखाच्छ्रुतिः।**
**किमु स्थितिमधःस्थानादाप्नुवन्ति ह्यतो वद।।**

**सनत्कुमार उवाच –**
**दुष्कृतेन तु कालेय स्थानाद्भ्रश्यन्ति मानवाः।**
**श्रेष्ठं स्थानं समासाद्य तस्माद्रक्षेत पण्डितः।।**
**यस्तु विप्रत्वमुत्सृज्य क्षत्रयोन्यां प्रसूयते।**
**ब्राह्मण्यात्स परिभ्रष्टः क्षत्रियत्वं निषेवते।।**
**अधर्मसेवनान्मूढस्तथैव परिवर्तते।**
**जन्मान्तरसहस्राणि तमस्याविशते यतः।।**
**तस्मात्प्राप्य परं स्थानं प्रमाद्यन्नं( ? न्न) तु नाशयेत्।**
**स्वस्थानं सर्वदा रक्षेत्प्राप्यापि विपदो नरः।।**
**ब्राह्मणत्वं शुभं प्राप्य ब्राह्मण्यं योऽवमन्यते।**
**भोज्याभोज्यं न जानाति स पुमान्क्षत्रियो भवेत्।।**
**कर्मणा येन मेधावी शूद्रो वैश्यो हि जायते।**
**तत्ते वक्ष्यामि निखिलं येन वर्णोत्तमो भवेत्।।**

(१) **शिव.** ५।१४।७-८.
(२) **शिव.** ५।२१।१-१८.

**शूद्रकर्म यथोद्दिष्टं शूद्रो भूत्वा समाचरेत्।**
**यथावत्परिचर्यां तु त्रिषु वर्णेषु नित्यदा।**
**कुरुते कामयानस्तु शूद्रोऽपि वैश्यतां व्रजेत्।।**
**यो योजयेद्धनैर्वैश्यो जुह्वानश्च यथाविधि।**
**अग्निहोत्रमुपादाय शेषान्नकृतभोजनः।**
**स वैश्यः क्षत्रियकुले जायते नात्र संशयः।।**
**क्षत्रियो जायते यज्ञैः संस्कृतैराप्तदक्षिणैः।**
**अधीते स्वर्गमन्विच्छंस्त्रेताग्निशरणं सदा।।**
**आर्द्रहस्तपदो नित्यं क्षितिं धर्मेण पालयेत्।**
**ऋतुकालाभिगामी च स्वभार्यां धर्मतत्परः।।**
**सर्वातिथ्यं त्रिवर्गस्य भूतेभ्यो दीयतामिति।**
**गोब्राह्मणात्मनोऽर्थं हि संग्रामाभिहतो भवेत्।।**
**तेनाग्निमन्त्रपूतात्मा क्षत्रियो ब्राह्मणो भवेत्।**
**विधितो ब्राह्मणो भूत्वा याजकस्तु प्रजायते।।**
**स्वकर्मनिरतो नित्यं सत्यवादी जितेन्द्रियः।**
**प्राप्यते विपुलः स्वर्गो देवानामपि वल्लभः।।**
**ब्राह्मणत्वं हि दुष्प्राप्यं कृच्छ्रेण साध्यते नरैः।**
**ब्राह्मण्या(त्) सकलं प्राप्यं मोक्षश्चापि मुनीश्वर।।**
**तस्मात्सर्वप्रयत्नेन ब्राह्मणो धर्मतत्परः।**
**साधनं सर्ववर्गस्य रक्षेद्ब्राह्मण्यमुत्तमम्।।**
[१]**वक्त्रात्तस्य ब्राह्मणाः संप्रसूता -**
**स्तद्वक्षसः क्षत्त्रियाः पूर्वभागात्।**
**वैश्या ऊरुभ्यां तस्य पद्भ्यां च शूद्राः**
**सर्वे वर्णा गात्रतः संप्रसूताः।।**

कृषिदोषस्य तच्छमनधान्यदानाभावे
दुर्विपाकः, दोषशमनार्थं
राजादिदेयांशाः

[२]**अदत्त्वा कर्षको देवि यस्तु धान्यं प्रवेशयेत्।**
**तस्य तृष्णाभिभूतस्य देवि पापं ब्रवीम्यहम्।।**

(१) **शिव.** ७।१।१२।७७.

(२) **स्मृच.** २।४५४-४५५ देवि पापं ब्र (यत्पापं तद्ब्र) पुराणे शंकरः; **पमा.** १।४३४; **आपा.** १४३; **मर.** १७९; **मुक्ता.** ६३ देवि य (गेहं य) देवि पा (क्रूरं पा) चन्द्रिकायाम्; **संम.** ७९ पू.

[१]**दिव्यं वर्षसहस्रं तु दुरात्मा कृषिकारकः।**
**मरुदेशे भवेद्वृक्षः स पुष्पफलवर्जितः।।**
[२]**तस्यान्ते मानुषो भूत्वा कदाचित्कालपर्ययात्।**
**दरिद्रो व्याधितो मूर्खः कुलहीनश्च जायते।।**
खलयज्ञस्य नित्यत्वं शैवपुराणे दर्शितम् – अदत्त्वेति।
+ पमा. १।४३४

[३]**राज्ञे दत्त्वा तु षड्भागं देवानां चैकविंशकम्।**
**विप्राणां त्रिंशकं भागं सर्वपापैः प्रमुच्यते।।**
देवग्रहणं पितॄणामुपलक्षणमिति धर्मप्रकाशे।
संम. ७९

## नरसिंहपुराणम्

वर्णसृष्टिरवयवतः, सवर्णब्राह्मणोत्पत्तिः,
वर्णानां वृत्तयः

[४]**यज्ञसिद्ध्यर्थमनघान् ब्राह्मणान् मुखतोऽसृजत्।**
**असृजत्क्षत्रियान् बाह्वोर्वैश्यांस्तु ऊरुतोऽसृजत्।।**
**शूद्रास्तु पादयोः सृष्टाः..................... ।।**
[५]**ब्राह्मण्यां ब्राह्मणेनैव चोत्पन्नो ब्राह्मणः स्मृतः।।**
[६]**षट्कर्माणि च यान्याहुर्ब्राह्मणस्य मनीषिणः।**
**तैरेव सततं यस्तु प्रवृत्तः सुखमेधते।।**
[७]**अध्ययनाध्यापनं च यजनं याजनं तथा।**
**दानं प्रतिग्रहश्चेति कर्मषट्कमिहोच्यते।।**

+ आपा. पमावत्।

(१) **स्मृच.** २।४५५ पुराणे शंकरः; **पमा.** १।४३४; **आपा.** १४३ कारकः (चोरकः); **मर.** १७९; **मुक्ता.** ६३ चन्द्रिकायाम्; **संम.** ७९ उत्त.

(२) **स्मृच.** २।४५५ पुराणे शंकरः; **पमा.** १।४३४; **आपा.** १४३ भूत्वा कदाचित्कालप (देवि किंचित्कालविप); **मर.** १७९; **मुक्ता.** ६३ पर्ययात् (पर्यये) चन्द्रिकायाम्.

(३) **संम.** ७९.

(४) **नरसिंह.** ५७।१६-१७.

(५) **नरसिंह.** ५७।१९; **मुक्ता.** १८ नैव चो (नैव उ) हारीतः : ८५ नैव चो (नैव ह्यु) हारीतः.

(६) **नरसिंह.** ५७।२१; **मुक्ता.** १८ च यान्याहु (वै निजान्याहु) मनीषिणः (महात्मनः) प्रवृत्तः (वर्तयन्) हारीतः.

(७) **नरसिंह.** ५७।२२; **मुक्ता.** १८ प्रथमचरणे (अध्यापनं चाध्ययनं) चतुर्थचरणे (षट्कर्माणीति चोच्यते) हारीतः.

[1]अध्यापनं च त्रिविधं धर्मस्यार्थं च( ? स्यार्थस्य) कारणम्।
शुश्रूषाकारणं चैव त्रिविधं परिकीर्तितम्।।
[2]योग्यानध्यापयेच्छिष्यान् याज्यानपि च याजयेत्।
विधिना प्रतिगृह्णंश्च गृहधर्मप्रसिद्धये।।
राज्यस्थः क्षत्रियश्चैव प्रजां धर्मेण पालयेत्।।
[3]गोरक्षां कृषिवाणिज्यं कुर्याद्वैश्यो यथाविधि।।
[4]वर्णत्रयस्य शुश्रूषां कुर्याच्छूद्रः प्रयत्नतः।
दासवद्ब्राह्मणानां तु विशेषेण समाचरेत्।।
[5]अयाचितं प्रदातव्यं कृषिं वृत्त्यर्थमाचरेत्।
धारणं जीर्णवस्त्रस्य विप्रस्योच्छिष्टभोजनम्।।
नरसिंहपुराणे शूद्राधिकारे अयाचित इति।

§ गृक. २७३

## कालिकापुराणम्

स्रष्टुरवयवतो
वर्णसृष्टिः

[6]अजायन्त मुखाद्विप्राः क्षत्रिया बाहुयुग्मतः।
ऊर्वोर्वैश्याः पदः शूद्राश्चतुर्वेदाश्चतुर्मुखात्।।

§ गृर., स्मृकौ., मर. गृकवत्।

(१) **नरसिंह.** ५७।२३.

(२) **नरसिंह.** ५७।२४; **मुक्ता.** ५६ तृतीयचरणे (विदितात् प्रतिगृह्णीयाद्) धर्म (कर्म) द्वितीयार्धमात्रम्, हारीतः.

(३) **नरसिंह.** ५८।६ क्षां कृषि (क्षाकृषि); **मुक्ता.** ६६ वाणिज्यं (वाणिज्ये) हारीतः.

(४) **नरसिंह.** ५८।१०-११.

(५) **नरसिंह.** ५८।११-१२; **अप.** १।१२० पूर्वार्धे (अयाचितः प्रदाता स्यात् कृषिं वृत्त्यर्थमाश्रयेत्।) पू.; **गृक.** २७३ सर्वम् अपवत्; **गृर.** ४८१ पूर्वार्धे (अयाचितः प्रदाता स्यात्कृषिवृत्तिं समाश्रयेत्।) पू.; **स्मृकौ.** ९५ सर्वम् अपवत्; **दीक.** १।१२० प्रथमचरणे (अयाचितप्रदाता स्यात्) पू.; **मर.** १५ पूर्वार्धे (अयाचित-प्रदाता स्यात्कृषिं वृत्त्यर्थमाश्रयेत्।) पू.; **शूशि.** ४१ सर्वं मरवत्; **शूक.** ३५, ७१ सर्वं मरवत्; **पप्र.** ४६ सर्वं मरवत्; **सस्मृ.** १२४ सर्वं मरवत्.

(६) **कालिका.** २७।१२-१३.

कृष्यादयो वैश्यवृत्तयः, तत्र हालिकवृषभसंख्या
हलवाहनकालश्च, वृषभादिपशुपालने
विधानानि, खले राजादिदेया
धान्यांशाः

[1]कृषिगोरक्षवाणिज्यं किल वैश्यस्य संमतम्।
तथाऽप्यनडुद्युग्माभ्यां कृषिं नैव समाचरेत्।।
[2]पुंगवाभ्यां द्विषट्काभ्यां प्रहरार्धप्रमाणतः।
द्वौ द्वौ योज्यान्तरेकैकैकं कारयेद्धर्मतो द्विजः।।
[3]पिण्याकं तृणतोये तु तेषां यत्नात्प्रकल्पयेत्।
धूमकण्डूयनं चैव कृत्वैवं कारयेत्ततः।।
[4]वैणवीमपि भूमिं तु अधोमूत्रगमाय च।
कुर्वन्नेवं न सीदेत कृषिं वैश्यो महामुने।।
[5]राज्ञः षड्भागमुत्सृज्य पञ्चमं कर्षकस्य च।
शिल्पिनः प्रकृतीश्चैव दीनान्धांस्तर्पयेत्ततः।
[6]शेषमात्मनि युञ्जीत खलक्षेत्रेष्वयं विधिः।।
[7]पशूनां पालनं कुर्यान्निवातं च निवेशनम्।
विविक्तं च समं शुभ्रं स्तम्भैर्युक्तमकर्कशैः।।
[8]अजाविकाश्वगौरीणां महिषीणां च संग्रहम्।
कुर्याद्यन्न विरोधि स्यादन्येषां वै कदाचन।।
[9]श्वशूकरखरोष्ट्राणां मार्जारनकुलादिषु।
स्वधर्ममाचरन्वैश्यो नैव कुर्यात्परिग्रहम्।।

(१) **गृक.** २५७ डुद्युग्माभ्यां (डुद्भ्यां); **मपा.** २२८ द्वितीयचरणे (एतद्वैश्यस्य संमितम्); **बाल.** १।११९ पृ. ३६७ पू.

(२) **गृक.** २५७ षट्का (षड्द्वा); **मपा.** २२८ पुंग (द्विग) रेकै (रे चै).

(३) **गृक.** २५७ कण्डूयनं (कं रूपनं); **मपा.** २२८ तोये (तोयं) प्रकल्प (स दाप).

(४) **गृक.** २५८ वं न (व न) देत (देत्तु); **मपा.** २२८.

(५) **गृक.** २५८ चतुर्थपादे (दायाद्यांस्तत्र तर्प्य च); **मपा.** २२८ ज्ञः (ज्ञां); **मर.** १७८ प्रकृतीश्चैव (प्रकृतिं चैव).

(६) **गृक.** २५८; **मपा.** २२८ खलक्षे (खलु) क्षे); **मर.** १७९.

(७) **गृक.** २५८.

(८) **गृक.** २५८; काश्वगौ (कांश्च गौ); **मर.** १९३.

(९) **गृक.** २५८; **मर.** १९३-१९४; **बाल.** १।११९ पृ. ३६७.

वैश्यस्याविक्रेयाणि, शूद्रस्य विक्रेयाविक्रेयाणि

**[1]लवणं मधु मद्यं च तिलं दधि घृतं पयः।**
**मधूच्छिष्टं तथा लाक्षां चर्म नीलीं तथा विषम्।।**
**[2]शस्त्रं मांसं तथा हिङ्गु त्रेधां वा वर्णिकां तथा।**
**गुडपिण्याकसिद्धान्नं वृन्ताकादिफलानि च।।**
**[3]शस्त्रास्त्रमुदकं देवाञ्शुक्तानि विविधानि च।**
**शैलेयान्कुतपान्वैश्यस्त्वेवमादि न विक्रयेत्।।**
**[4]विक्रयं सर्ववस्तूनां कुर्वञ्छूद्रो न दोषभाक्।**
**मधु चर्म सुरां लाक्षां मुक्त्वा मांसं च पञ्चमम्।।**

(१) अयं च मध्वादिविक्रयनिषेधः शूद्रस्य नात्यन्तापदि बोद्धव्यः।

+ गृक. २७०

(२) अयं च सर्वनिषेधः शूद्रस्यानापदि, नात्यन्तापदि बोद्धव्य इति कल्पतरुः। मद्ये विधिनिषेधयोर्दर्शनात्तादृशविषयपरमेवेदमुचितमिति तु प्रमाणविदः।

गृर. ४७९

(३) मध्वत्र मद्यम्, सुरायाः पृथग्ग्रहणं दोषाधिक्यप्रदर्शनार्थम्।

मर. १९८

(४) सुराशब्दोऽत्र मद्यमात्रोपलक्षणार्थः।

$ स्मृकौ. ९५

---

+ शूक. गृक-अनुवादः।

$ शेषं गृक-अनुवादः।

(१) **गृक.** २५८; **मर.** १९४ लाक्षां (लाक्षा) नीलीं (नीलां); **बाल.** १।११९ पृ. ३६७ मधु मद्यं (चात्रमद्यं).

(२) **गृक.** २५८; **मर.** १९४ त्रेधां वा वर्णिकां (सुधां च वार्तिकाम्) गुड (गुण) द्धान्नं वृ (द्धान्तवृ); **बाल.** १।११९ पृ. ३६८ द्वितीयचरणे (गन्धाद्यान्वर्गकांस्तथा) कादि (कानि).

(३) **गृक.** २५८; **मर.** १९४ क्तानि (क्राणि); **बाल.** १।११९ पृ. ३६८ शस्त्रास्त्रमुदकं देवाञ्शु (सशास्त्रमुदके देवान्मु).

(४) **गृक.** २७०; **गृर.** ४७९ वस्तूनां (पण्यानां) तृतीयचरणे (मधुचर्मसुरालाक्षां); **मर.** १९८; **स्मृकौ.** ९५; **आत.** ३५३ मुक्त्वा (त्यक्त्वा); **शूशि.** ४०; **शूक.** ६२; **बाल.** १।१२१ पृ. ३७९.

## साम्बपुराणम्

देवस्वप्रतिग्रहरूपदेवलकत्ववृत्तेर्निन्दा

**नारद उवाच –**

**[1]न द्विजाः परिगृह्णन्ति देवस्याऽऽत्मीकृतं धनम्।**
**विद्यते च धनं ह्यत्र गुरुश्चायं प्रतिग्रहः।।**
**देवचर्यागतैर्द्रव्यैः क्रिया ब्राह्मी न विद्यते।**
**अविज्ञाय च कुर्वन्ति ये क्रियालोभमोहिताः।**
**अपाङ्क्तेया भवन्तीह ते वै देवलका द्विजाः।।**
**अविज्ञातविधानं ये ब्राह्मणा लोभमोहिताः।**
**देवस्वमुपयोक्ष्यन्ति पतितास्ते भवन्ति हि।**
**गर्हितं मानवं शास्त्रं न प्रशंसन्ति ते द्विजाः।।**
**देवस्वं ब्राह्मणस्वं च यो लोभादुपजीवति।**
**स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति।।**

अविदुषः अप्रतिग्राह्याणि

**[2]गोहिरण्यभूम्यश्ववासोन्नतिलघृतान्यविद्वान्न प्रतिगृह्णीयात्।।**

## सौरपुराणम्

पौराणीवृत्तिप्रशंसा

**[3]पौराणीं वृत्तिमाश्रित्य ये जीवन्ति द्विजातयः।**
**तन्मण्डलं विनिर्भिद्य तत्सायुज्यं व्रजन्ति ते।।**

प्रतिग्रहे मन्त्रविधिः

**[4]मन्त्रेण प्रतिगृह्णीयाद्ब्राह्मणश्च द्विजोत्तम।।**
**वामनः प्रतिगृह्णाति वामनो वै ददाति च।**
**वामनस्तारको द्वाभ्यां वामनाय नमो नमः।।**
**इति प्रतिग्रहमन्त्रः।।**

चत्वार एव वर्णास्तत्र त्रयो द्विजाश्च

**[5]ब्राह्मणः क्षत्रियो वैश्यश्चतुर्थः शूद्र उच्यते।**
**वर्णाश्चत्वार एवैते त्रय आद्या द्विजाः स्मृताः।।**

---

(१) **साम्ब.** २६।२०-२४.

(२) **साम्ब.** ४४।११.

(३) **सौर.** १।१६.

(४) **सौर.** १५।३६, ३७.

(५) **सौर.** १७।५.

जलाद्यपहरणनिषेधः

[1]जलं तृणं वा शाकं वा मृदं वा काष्ठमेव वा।
परस्यापहरञ्जन्तुर्नरकं प्रतिपद्यते।।

एकस्मात् द्विर्याचनस्य
निषेधः

नित्ययाचनको न स्याद्याचितं नैव याचयेत्।
प्राणानपहरत्येष याचकस्तस्य दुर्मतिः।।

धर्मार्थपुष्पादिस्तेयानुमतिः

ग्रहीतव्यानि पुष्पाणि देवार्चनविधौ द्विजैः।
नैकस्मादेव नियतमननुज्ञाय केवलम्।।
तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्बुधः।
धर्मार्थं केवलं विप्रो ह्यन्यथा पतितो भवेत्।।

क्षुधाशान्त्यै तिलमुद्ग-
मुष्टिस्तेयानुमतिः

तिलमुद्गयवादीनां मुष्टिर्ग्राह्या यदि स्थितैः।
क्षुधार्तैर्नान्यदा विप्रैर्धर्मविद्भिरिति स्थितिः।।

अयाज्ययाजन-
निषेधः

नायाज्यं याजयेद्द्विजाः।।

स्रष्टुरवयवेभ्यो
वर्णोत्पत्तिः

[2]असृजन्मुखतो विप्रान्बाहुभ्यां क्षत्रियान्विभुः।
ऊरुद्वयात्तथा वैश्यान्पादाच्छूद्रान्ससर्ज हि।।

## पराशरपुराणम्

ब्राह्मणप्रशंसा

[3]मनुष्याणां च सर्वेषां जम्बूद्वीपनिवासिनः।
वरिष्ठास्तेषु सर्वेषु वरिष्ठा आन्तरालजाः।।
संकरप्रभवेभ्यश्च वरिष्ठा वर्णसंभवाः।
तेषु वैश्यो वरः शूद्राद्वैश्याद्राजा वरः स्मृतः।।
राज्ञो विप्रो वरो विप्राद्वरिष्ठो नास्ति कश्चन।
विप्रः समस्तमर्त्यानां देवता हि न संशयः।।

(१) सौर. १८।४-८, २९.
(२) सौर. २६।४-५.
(३) पराशर. ५।१२-१४.

ब्राह्मणत्रैविध्यम्, ब्राह्मणदंपतिभ्यां ब्राह्मणोत्पत्तिः,
तत्तद्देवताप्रसादात्तत्तद्वर्णताप्राप्तिः,
ब्राह्मणप्रशंसा

[1]ब्राह्मणस्त्रिविधः प्रोक्तो जन्मना वेदवर्त्मना।
ब्रह्मविद्याबलेनापि यो यः पश्चात्स उत्तमः।।
ब्राह्मण्यां ब्राह्मणेनैव वेदोक्तेनैव वर्त्मना।
जायते यः स विज्ञेयो ब्राह्मणः प्रथमोदितः।।
जन्मान्तरसहस्रेषु कृतपुण्यवशेन तु।
ब्राह्मणो जायते लोके वेदघोषसमन्विते।।
देवतानां प्रसादेन मानुष्यं लभते जनः।
इन्द्रस्यैव प्रसादेन वृषलो जायते भुवि।।
विरिञ्चस्य प्रसादेन कुले वैश्यस्य जायते।
विष्णोश्चैव प्रसादेन कुले राज्ञो विजायते।।
महादेवप्रसादेन ब्राह्मणो जायते भुवि।।
प्रसादेन हि रुद्रस्य ब्राह्मणो ब्राह्मणो भवेत्।।
यथा देवो महादेवो देवानामुत्तमोत्तमः।
तथा विप्रो मनुष्याणां सर्वेषामुत्तमोत्तमः।।
तपसा ब्राह्मणस्यैव जगदेतत् स्थितं भवेत्।
नेतरस्यैव विप्रेन्द्र मया सत्यमुदीरितम्।।
वेदसंबन्धतो यस्तु ब्राह्मणः परिकीर्तितः।
नावमानं सदा कुर्यात्तस्य भ्रान्त्याऽपि मानवः।।
यस्तु साक्षात्परं ब्रह्म विद्यया ब्राह्मणोत्तमः।
तस्यापि नावमानं तु प्रकुर्यान्मोहतोऽपि वा।।
ब्राह्मणस्य शरीरे तु वर्तन्ते सर्वदेवताः।
नावमानमतः कुर्यात्पूजयेत्तं विशेषतः।।
महादेवस्य तुल्यं तु विद्यते यदि दैवतम्।
ब्राह्मणस्यापि तुल्यस्तु विद्यते न हि संशयः।।
विप्रपादाम्बुजस्पर्शात् शुद्धा भूमिरियं भवेत्।
तस्य दृष्टिं गताः सर्वे मुच्यन्ते सर्वकिल्बिषात्।।
यथा मातरमाश्रित्य विवर्धन्ते प्रजा इमाः।
तथा ब्राह्मणमाश्रित्य जगदेतद्विवर्धते।।
बहुनोक्तेन किं साक्षाद्ब्राह्मणः परदेवता।
अवमानं सदा तस्य न कुर्यान्मोहितोऽपि वा।।

(१) पराशर. ७।२-७, ९-११, १९, २२, ३२-३६.

राजन्यादिभ्यः प्रतिग्रहस्य
निषेधः

[1]राजन्यवैश्यशूद्रेभ्यः पतितादन्त्यजादपि।
कृतघ्नाच्च न गृह्णीयाद्धनधान्यादिकं बुधः।।

## आदिपुराणम्

ब्राह्मणप्रशंसा

[2]प्राणिनां द्विपदः श्रेष्ठो जीवेषु ब्राह्मणस्तथा।
विप्राणां ज्ञानिनः श्रेष्ठा विज्ञानी च ततः परः।।
[3]पीडनं तु द्विजे यत्र तत्र स्यात्सर्वसंक्षयः।
किं पुनर्मारणे ............................।।

## मुद्गलपुराणम्

ब्राह्मणप्रशंसा, स्रष्टुरवयवेभ्यो
वर्णोत्पत्तिः

[4]साक्षाद्ब्रह्मस्वरूपा वै ब्राह्मणा ब्रह्मवित्तमाः।
येषां दर्शनमात्रेण कृतकृत्याश्च जन्तवः।।
[5]अहो ब्राह्मं बलं दीप्तं क्षात्रं तुच्छं विशेषतः।
ब्रह्मदण्डेन सर्वाणि ममास्त्राणि हतानि च।।

मुद्गल उवाच –

[6]ततो ब्रह्मा ससर्जासौ मुखतो ब्राह्मणान् स्वयम्।
बाहुभ्यः क्षत्रियान्सर्वानूरुभ्यो वैश्यकांस्तथा।
पद्भ्यः शूद्रान्महादेवः§ ससर्ज गुण( ? गण) - पेरितः।।
[7]अहं बिभेमि विप्रेन्द्र ब्राह्मणानां प्रधर्षणात्।
न ब्राह्मणसमं किंचिद्दैवतं सचराचरे।।
साक्षात् परेश्वरस्यापि तनवो ब्राह्मणा मताः।
कर्माधाराश्च ज्ञानानामाधारा ब्रह्मधारकाः।।
ब्राह्मणस्य मुखेनैव यद्भुक्तं तत्समागतम्।
देवस्थानेषु देवानामुदरे नात्र संशयः।।
ब्राह्मणेभ्यश्च यद्दत्तं तदक्षय्यपदप्रदम्।
उद्धाराय जनानां वै ब्राह्मणाः संमताः सदा।।
मन्त्राधीनाः सदा देवा विप्राधीना मताश्च ते।
देवानां जीवनं सर्वं द्विजाधीनमतः प्रभो।।
मन्त्रहीनं कृतं कर्म निष्फलं जायते च तत्।
कर्माधीनं जगत्सर्वमतो ब्राह्मणमूलकम्।।
कर्मनिष्ठास्तपोनिष्ठा ज्ञाननिष्ठा द्विजोत्तमाः।
योगिनश्च भवन्तीह तारका जगति स्थिताः।।
सर्वेषां गुरवो विप्रा ज्ञानदास्ते सुसंमताः।
साक्षाद्ब्रह्मस्वरूपत्वाद्ब्राह्मणा नात्र संशयः।।
तेषां हेलनमात्रेण पतन्ति शिवमुख्यकाः।
सेवनेन सदा तेषां सर्वं संलभते जनः।।
ब्राह्मणानां च शापेन विष्णुमुख्याः सुरेश्वराः।
पतिता अवतारेषु पुनः संस्थापिता द्विजैः।।
[1]ब्राह्मणानां गवां राजन् कुलमेकं द्विधा कृतम्।
कर्मसंसिद्धये धात्रा पूज्यं च द्विविधं समम्।।
हविष्यं गोभिरत्यन्तं धृतं वै यज्ञसिद्धये।
मन्त्राश्च ब्राह्मणैस्तत्र धृतास्तद्वन्न संशयः।।

ब्राह्मणादयश्चत्वारः पञ्च
वेति द्विधा वर्ण-
शब्दार्थः

[2]ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महामुने।
योगिभिर्वर्णहीनाश्च वर्णपञ्चकमुच्यते।।
[3]ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वर्णाः प्रकीर्तिताः।।

नरनारायणावूचतुः –

[4]वर्णाश्चत्वार एवं ते स्वस्वधर्मयुता मुने।
ब्राह्मणः क्षत्रियो वैश्यः शृणु शूद्रः प्रकथ्यते।।

अधुना वर्णधर्मानाह – वर्णा इति। तत्राऽऽदौ चत्वारो वर्णाः, वेदप्रतिपादितत्वात्, 'ब्राह्मणोऽस्य मुखमासीद्बाहू

§ महादेवशब्दोऽत्र योगेन ब्रह्मपरः, न तु रूढ्या शिवपरः।
(१) पराशर. १०।१८.
(२) आदि. २।१९.
(३) आदि. २०।७७.
(४) मुद्गल. १।१।२०.
(५) मुद्गल. १।४९।३७.
(६) मुद्गल. २।४।१-२.
(७) मुद्गल. २।२०।२३-३२.

(१) मुद्गल. २।४१।२०-२१.
(२) मुद्गल. २।६९।१९.
(३) मुद्गल. ३।१८।१.
(४) मुद्गल. ३।२०।१, ४-१३, १५, १९-२०, ३१-३३.

राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत।।' (ऋसं. १०।९०।१२) इति श्रुतेः। अन्ये वर्णा वेदैर्न कथ्यन्ते, तेषां व्यभिचारसंभवत्वादिति।

मुभा.

वर्णानां वृत्तयः, उञ्छादिवृत्तिलक्षणानि, ब्राह्मणक्षत्रिययोः सेवा-वृत्तिनिषेधः

**चतुर्धा ब्राह्मणानां वै वृत्तिः शास्त्रे प्रकीर्तिता।**
**उञ्छः शिलं तथा शुक्लं मृतं चामृतकं भवेत्।।**

ब्राह्मणवृत्त्यर्थमाह – चतुर्धेति। उञ्छः शिलं मृतममृतं चेति भेदात्। तत्र उञ्छशिले श्रेष्ठे, तपोधनसामर्थ्यदत्वात्। 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' (यादवकोशः) इति।

मुभा.

**अयाचितं च भूमेर्यत्कर्षणं वा वने स्थितिः।**
**तेषां मार्गं प्रवक्ष्यामि शृणुष्व सुसमाहितः।।**
**गृहीतं कृषिकैर्धान्यं तत्र शिष्टं तदग्रहम्।**
**कणादि तस्य योगेन देहपोषणमाचरेत्।।**
**अथवा वाणिजादीनां गृहेभ्यो मार्जितं भवेत्।**
**कणादि तस्य योगेन देहपोषणमाचरेत्।।**
**एका वृत्तिरियं प्रोक्ता द्वितीयां शृणु सांप्रतम्।**
**भूमेः कर्षणहीनेन वृष्ट्याऽन्नं तत्र जायते।**
**तेनैव देहनिर्वाहः कर्तव्यो ब्राह्मणैः सदा।।**
**शुक्लवृत्त्या चरेद्भैक्ष्यं रागलोभविवर्जितः।**
**तेन देहस्य निर्वाहं स कुर्यात्तन्मृतं स्मृतम्।**
**अयाचितेन वा कार्योऽमृतमेतत्प्रकीर्तितम्।।**
**कृषीवलैः स भूमेर्यत्कर्षणं वा समाचरेत्।**
**तत्र धान्योद्भवेनैव देहपोषणकं चरेत्।।**

चतुर्भिः हीनश्चेत्कृषीवलैर्भूमेः कर्षणं समाचरेदिति। अत्र मनुः – 'ऋतमुञ्छशिलं प्रोक्तममृतं स्यादयाचितम्। मृतं तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम्।। सत्यानृतं च वाणिज्यं तेन चैवापि जीव्यते। सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्।।' (मस्मृ. ४।५, ६) इति। तत्र यद्देवमुनिभिश्चरितं तत्राऽऽचरेत् ब्रह्मणः पुत्रीगमनादिवत्, अतुल-देवर्षिसामर्थ्यात्। देवर्षिभिः कथितं तदेवाऽऽचरेत्, स्वधर्मात्मकत्वात्। भविष्ये – 'अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम्। नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत्।।' इति।

मुभा.

**सेवादिवृत्तियोगेन तिष्ठेन्न ब्राह्मणः कदा।।**
**क्षत्रियाणां च शस्त्रादिधारणेन महामुने।**
**देहनिर्वाहकः प्रोक्तो न सेवाकारको भवेत्।।**
**वैश्योऽपि क्रयकारी वै विक्रयं च तथा चरेत्।**
**कृषिभिः कर्षणं भूमेर्गवां पालनमादरात्।।**
**शूद्रस्य तु त्रिवर्णानां सदा सेवा प्रकीर्तिता।**
**दासवन्नात्र संदेह आश्रमो गृहिसंज्ञितः।।**

स्ववृत्तिनिष्ठानां वर्णानां प्राप्याणि पदानि

**प्राजापत्यं ब्राह्मणानां क्षत्रियाणां तथैन्द्रकम्।**
**वायवं वैश्यजातीनां गान्धर्वं शूद्रजन्मिनाम्।।**
**स्वस्वकर्मरतानां वै पदं प्रोक्तं मनीषिभिः।**
**तत्र ते भोगभोक्तारो भवन्त्यत्र न संशयः।।**
**[1]चतुराकरजेष्वेव नरदेहः सुदुर्लभः।**
**ज्ञानकर्मादिसंयुक्तस्तत्र ब्राह्मण्यकं कुतः।।**
**[2]यो ब्रह्मणि रतः सर्वो ब्राह्मणस्तेन कथ्यते।।**

ब्राह्मणप्रशंसा प्राशस्त्य-तारतम्यं च

**गर्ग उवाच –**

**[3]लक्षचतुरशीतिषु योनिषु मानवात्मिका।**
**योनिः श्रेष्ठा महाभाग सुज्ञो यदुद्भवो भवेत्।।**

अधुना शिवदत्तमुपदिशन् गर्ग उवाच – लक्षेति। लक्षचतुरशीतियोनिषु मानवात्मिका योनिः श्रेष्ठा। तत्र विवेकमाह – यदुद्भवो मानवः सुज्ञो भवेत् वर्णाश्रमधर्मज्ञो भवेत्। अत्र सुज्ञो वर्णाश्रमधर्मज्ञो ज्ञातव्यः, हि अ-(? अन्य)योनिसंभवजन्तूनां वर्णाश्रमधर्मज्ञत्वाभावात्।

मुभा.

**धर्मार्थकाममोक्षाणां ब्रह्मभूयस्य सर्वदा।**
**पात्रता तस्य संभूता तस्माच्छ्रेष्ठं न विद्यते।।**

---

(१) **मुद्गल.** ४।२०।७५.
(२) **मुद्गल.** ६।२१।५०.
(३) **मुद्गल.** ८।२७।३६-४१.

तस्मात् मानवदेहात् परं श्रेष्ठत्वं(? ष्ठं) न विद्यते, धर्मार्थकाममोक्षब्रह्मीभूतत्वपात्रतादर्शनात्।

मुभा.

**तेषु ब्राह्मणवर्णस्थः श्रेष्ठः शास्त्रेषु संमतः।**
**सर्वकर्माधिकारित्वात्तेषु शास्त्रज्ञ एव च।।**

ननु मानवो वर्णाश्रमधर्मज्ञोऽपि नरकं गच्छति विकर्माचरणात्, तदर्थमाह – तेष्विति। तेषु मानवेषु ब्राह्मणवर्णस्थः श्रेष्ठः, सर्वकर्माधिकारित्वात्।

मुभा.

**तेषु स्वधर्मसंयुक्तोऽधिकस्तेषु तपोयुतः।**
**तेषु ज्ञानी महाश्रेष्ठः सर्वत्राऽऽत्मप्रदर्शनात्।।**

तेषु ब्राह्मणेषु स्वधर्मसंयुक्तः श्रेष्ठः, विकर्माचरणहीनत्वात्। तेषु स्वधर्मयुक्तब्राह्मणेषु तपोयुक्तः पञ्चाग्निसाधनवायुभक्षणपर्यन्ततपोयुतः अधिकः। तस्य संपूर्णस्वर्गप्राप्तिः, यदा तपो निष्कामं चेत्तदा शुक्लगत्या मोक्षप्राप्तिः। तेषु तपस्विषु यो ज्ञानी भवेत् ज्ञानकाण्डपरायणो ज्ञानी संप्रज्ञातसमाधिस्थो ज्ञातव्यः जडोन्मत्तपिशाचाद्यवस्थाधारकः, स एव श्रेष्ठः। तत्र हेतुमाह – सर्वत्राऽऽत्मप्रदर्शनात् सर्वत्रैकात्मदर्शनशीलात्।

मुभा.

**तेषु योगी विशेषेणाधिकस्तेषु महामते।**
**गाणपत्योऽधिको योगी परस्तस्मान्न विद्यते।।**

तेषु ज्ञानिषु योगी पूर्णयोगधारकः श्रेष्ठः। तेषु गाणपत्यो योगी श्रेष्ठः, तस्मात्परकृत्याभावादिति।

मुभा.

**यत्र तत्रापि वर्णस्थो गाणपत्योऽधिको मतः।**
**योगी वेदादिषु प्रोक्तं पश्य संशयनाशनम्।।**

ब्राह्मण्यादिप्रयोजकानि
वर्णकर्माणि

**विभाण्ड उवाच –**

**[1]ब्रह्मणि ब्रह्मभूतो यो ब्राह्मणः परिकीर्तितः।।**
**[2]सदा ब्रह्मपरो यस्माद्ब्राह्मणः स च संस्मृतः।।**

सदा ब्रह्मपरः ब्रह्मणि तत्परं चित्तं यस्य एतादृशः यः स एव ब्राह्मणः संस्मृतः, तत्र ब्रह्मणि रता ब्राह्मणा (इति) ब्राह्मणशब्दार्थ इति। मुभा.

**सुनीत्या पालनं पञ्चकर्मयुक्तः स बाहुजः।।**

सुनीत्या यथोक्तवर्णाश्रमधर्मनीत्या पालनं प्रजापालनम्। पञ्चकर्मयुक्तः, यजनादीनि षट् कर्माणि, तेषु याजनवर्जितः। ननु अध्यापनयाजनयाचकत्वानि क्षत्रियाणां न सन्ति, यजनादित्रिकर्मयुक्तत्वादिति चेत्, सत्यम्, तदपि कथ्यते। वेदाध्यापकत्वं क्षत्रियो न कुर्यात्, 'शस्त्रविद्याद्यध्यापको भवेत्' एवं प्रतिपादनात्। तत्र सात्यकये यादवाय पाण्डवेनार्जुनेन शस्त्रविद्याध्यापनं कृतं न दोषदम्, अधर्महीनत्वात्। तद्वद्याचकत्वम्। कृष्णभीमार्जुना ब्राह्मणवेषं धृत्वा जरासंधाय याच्ञां चक्रुः, तदेव(? वं) न दोषदम्, अधर्महीनत्वात्। एवं सहस्रार्जुनादिभिर्जमदग्न्यादिभ्यो लोभप्रयुक्तत्वात् 'अतिथिरूपिणे मह्यं धेनुं देहि' इति याचितम्। सः बाहुजः क्षत्रियः ज्ञातव्यः, स्वधर्मयुक्तत्वात्, 'बाहू राजन्यः कृतः' (ऋसं. १०।९०।१२) इति श्रुतेः।

मुभा.

**क्रयविक्रयकौ नित्यं वस्तूनां भूमिकर्षणम्।**
**गवां पालनकं त्रेधाकर्मयुक्तः स वैश्यकः।।**

अधुना वैश्यधर्मार्थमाह – क्रयविक्रयकाविति। नित्यं निरन्तरं वस्तूनां धान्यादिवस्तूनां क्रयविक्रयकौ कार्यौ। भूमिकर्षणं शूद्रहस्तेन कार्यम्, त्रिवर्णसेवकत्वात् हिंसादिकानां स्वहस्ताचरणाभावाच्च। गवां पालनकं रसादिविक्रयकारणार्थम्। त्रेधाकर्मयुक्तः, अध्ययनयजनदानाधिकारयुक्तत्वात्। स एव वैश्यको ज्ञातव्यः, स्वधर्मरतत्वात्। अन्ये स्वधर्महीना ब्राह्मणादयो नामधारका ज्ञातव्याः, ब्राह्मणादिवर्णोद्भवत्वादिति।

मुभा.

**त्रिवर्णसेवनं...... शौद्रं कर्म........ ।।**

अधुना शूद्रधर्मार्थमाह – त्रिवर्णसेवनमिति। त्रिवर्णसेवनं ब्राह्मणक्षत्रियवैश्यानां सेवा धर्मयुक्तेति। ..... शौद्रं शूद्राणामिदं कर्म स्वधर्माचरणं ज्ञातव्यमिति।

मुभा.

(१) **मुद्गल.** ८।४०।२०.
(२) **मुद्गल.** ९।१३।४७, ४९, ५०, ५१.

## गणेशपुराणम्

स्रष्टुरवयवतो वर्णसृष्टिः, ब्राह्मणप्रशंसा प्राशस्त्यतारतम्यं च

**[1]मुखतो ब्राह्मणानग्निमसृजत्कमलासनः।**
**बाहूरुपादतोऽन्यांस्त्रीन्वर्णांश्चन्द्रमसं हृदः।।**
**[2]चतुरशीतिलक्षासु योनिषु श्रेष्ठता सुर।**
**मनुष्याणां महाभाग वर्णास्तत्र महत्तराः।।**
**तत्रापि ब्राह्मणाः श्रेष्ठास्तत्रापि ज्ञानिनः पराः।**
**ज्ञानिष्वनुष्ठानपरास्तेषु च ब्रह्मवेदिनः।।**
**[3]न यशः प्राप्यते स्वामिन्गोब्राह्मणसुरद्विषा।**
**तद्द्वेषाच्चैव कल्याणं कस्यापि न हि जायते।।**
**सेवनान्नमनाद्भावात्स्मरणात्पूजनादपि।**
**देवैरिन्द्रादिस्थानानि संप्राप्तानि स्थिराणि च।।**

## देवीपुराणम्

चक्रोञ्छादिब्राह्मणवृत्ति-प्रशंसा

**[4]चक्रवृत्तिचरा विप्रा उञ्छकापोतवृत्तयः।**
**कुम्भकौशिलकाहारा वैदिकं प्राप्नुयुः फलम्।।**

सुदृढपृष्ठेन वृषेण स्कन्धेन भारवाहनस्य निषेधः

**[5]सुदृढं पृष्ठदेशे तु स्कन्धदेशे तु यो वृषम्।**
**वाहयेद्गुरुभारेण स तु भारशतं वहेत्।।**

गोष्ठे धूमकरणाभावे नरकप्राप्तिः

**[6]गवां स्वामी गवां गोष्ठे यस्तु धूपं न कारयेत्।**
**मक्षिकालीन(? नील)नरके मक्षिकाभिः स भक्ष्यते।।**

(१) **गणेश.** १।१६।८-९.

(२) **गणेश.** १।३७।२६-२७.

(३) **गणेश.** २।११८।१२-१४.

(४) **निप्र.** २।१८.

(५) **गृक.** १९७; **गृर.** ४३३ दृढं (कृशं) तु यो (च यो) वहेत् (हरेत्); **निप्र.** २।३१० दृढं (कृतान्).

(६) **निक.** ४६२ गवां स्वामी (गोरूपाणां) धूपं (धूमं); लीनन (णां च न); **निप्र.** २।५७०.

मृतवत्साया गोर्दमनेन दोहनस्य निषेधः

**[1]मृतवत्सां तु गां यस्तु दमित्वा पिबते नरः।**
**गर्भितास्ये चिरं तिष्ठेत् क्षुधार्तो वै नराधमः।।**

गर्भितास्ये नरके। निप्र. २।५७१

## आदित्यपुराणम्

पापकृद्राजदातृकः पृथिव्या एव प्रतिग्रहः

**[2]अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः।**
**पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम्।।**

यत्तु आदित्यपुराणेऽपि – 'अपि.... त्तमम्।।' इति राजकीयद्रव्येषु ग्राह्यत्वेन पृथिव्या एव नियमात् द्रव्यान्तरमयाचितमप्यग्राह्यमिति, तदपि पापकृतामिति विशेषणोपादानात् तदीयद्रव्यविषयमेव। अथवा याचितप्रतिग्रहविषयम्। तत्र दुष्कृतकर्मभ्यो ग्रहणं नानुज्ञातमिति राज्ञोऽया(? ज्ञो या)चितप्रतिग्रहे भूमिर्ग्राह्यत्वेन नियम्यते। निप्र. २।२७०

उभयतोमुखीप्रतिग्रह-निषेधः

**[3]किं करिष्यति विप्रोऽसौ गृह्णन्नुभयतोमुखीम्।**
**सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति।**
**सहस्रं वारुणाः पाशाः क्षुरधाराग्निसंनिभाः।।**
**[4]पूर्णे वर्षसहस्रे च पाश एकः प्रमुच्यते।**
**एतामवस्थामाप्नोति गृह्णन्नुभयतोमुखीम्।।**

(१) **निक.** ४६२ गर्भितास्ये चि (ताडिताभिश्चि); **निप्र.** २।५७१.

(२) **गृक.** २४२; **गृर.** ४६३; **निप्र.** २।२७०; **बाल.** १।१४१ पृ. ४०२ अपि पा (अतिपा).

(३) **गृक.** २४७ ति विप्रोऽसौ (त्यसौ विप्रो) क्षुर (क्रूर); द्वितीयार्धं नास्ति; **गृर.** ४६६ द्वितीयार्धं नास्ति; **निप्र.** २।२८०-२८१ प्रथमचरणे (तरिष्यन्नित्यसौ विप्रो).

(४) **गृक.** २४७ प्रथमचरणे (पूर्णवर्षसहस्रेण) स्थामा (स्थां प्रा); **गृर.** ४६६; **निप्र.** २।२८१ च (तु) कः प्र (को वि).

राजब्राह्मणयोः साम्येन
प्रशंसा, सर्वं राजधनं
शुचि

§ [१]अपि पापकृतां राज्ञां नान्येषां ब्राह्मणादृते।।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ।
नैतयोरन्तरं किंचित्प्रजाधर्माभिरक्षणात्।।
शुचीनामशुचीनां च संनिवेशो यथाऽम्भसाम्।
समुद्रे समतां यान्ति तद्वद्राज्ञां धनागमः।।
यथाऽग्नौ संस्थितं दीप्ते शुद्धिमायाति काञ्चनम्।
एवं धनागमाः सर्वे शुद्धिमायान्ति राजनि।।

प्रतिग्रहेतिकर्तव्यता

ओंकारमुच्चरन्प्राज्ञो द्रविणं सकुशोदकम्।
गृह्णीयाद्दक्षिणे हस्ते तदन्ते स्वस्ति कीर्तयेत्।।

## कल्किपुराणम्

ब्राह्मणप्रशंसा

कल्किरुवाच –

[२]को वेदः का च सावित्री केन सूत्रेण संस्कृताः।
ब्राह्मणा विदिता लोके तत्तत्त्वं वद तात माम्।।

पितोवाच –

वेदो हरेर्वाक् सावित्री वेदमाता प्रतिष्ठिता।
त्रिगुणं च त्रिवृत्सूत्रं तेन विप्राः प्रतिष्ठिताः।।
दशयज्ञैः संस्कृता ये ब्राह्मणा ब्रह्मवादिनः।
तत्र वेदाश्च लोकानां त्रयाणामिह पोषकाः।।
यज्ञाध्ययनदानादितपःस्वाध्यायसंयमैः।
प्रीणयन्ति हरिं भक्त्या वेदतन्त्रविधानतः।।
ब्राह्मण्यां ब्राह्मणाज्जातो गर्भाधानादिसंस्कृतः।
संध्यात्रयेण सावित्रीपूजाजपपरायणः।।
तपस्वी सत्यवाग्धीरो धर्मात्मा त्राति संसृतिम्।
विष्णवर्चनमिदं ज्ञात्वा सदानन्दमयो द्विजः।।

‡ [१]मामुद्धरन्ति भुवने यज्ञाध्ययनसत्क्रियाः।
मां प्रसेवन्ति शंसन्ति तपोदानक्रियास्विह।।
स्मरन्त्यामोदयन्त्येव नान्ये देवादयस्तथा।
ब्राह्मणा वेदवक्तारो वेदा मे मूर्तयः पराः।।
तस्मादिमे ब्राह्मणजास्तैः पुष्टास्त्रिजगज्जनाः।
जगन्ति मे शरीराणि तत्पोषे ब्रह्मणो वरः।।
तेनाहं तान्नमस्यामि शुद्धसत्त्वगुणाश्रयः।
ततो जगन्मयं पूर्वं मां सेवन्तेऽखिलाश्रयाः।।

विशाखयूप उवाच –

विप्रस्य लक्षणं ब्रूहि त्वद्भक्तिः का च तत्कृता।
यतस्तवानुग्रहेण वाग्बाणा ब्राह्मणाः कृताः।।

कल्किरुवाच –

वेदा मामीश्वरं प्राहुरव्यक्तं व्यक्तिमत्परम्।
ते वेदा ब्राह्मणमुखे नानाधर्मे प्रकाशिताः।।
यो धर्मो ब्राह्मणानां हि सा भक्तिर्मम पुष्कला।
तयाऽहं तोषितः श्रीशः संभवामि युगे युगे।।
ब्राह्मणानां करे स्वर्गा वाचो वेदाः करे हरिः।
गात्रे तीर्थानि रागाश्च नाडीषु प्रकृतिस्त्रिवृत्।।
सावित्री कण्ठकुहरा हृदयं ब्रह्मसंज्ञितम्।
तेषां स्तनान्तरे धर्मः पृष्ठेऽधर्मः प्रकीर्तितः।।
भूदेवा ब्राह्मणा राजन् पूज्या वन्द्याः सदुक्तिभिः।
च(? चा)तुराश्रम्यकुशला मम धर्मप्रवर्तकाः।।
बालाश्चापि ज्ञानवृद्धास्तपोवृद्धा मम प्रियाः।
तेषां वचः पालयितुमवताराः कृता मया।।
महाभाग्यं ब्राह्मणानां सर्वपापप्रणाशनम्।
कलिदोषहरं श्रुत्वा मुच्यते सर्वतो भयात्।।

## संग्रहः (स्मृतिसंग्रहः)

ब्राह्मणं प्रति वाणिज्य-
निषेधः

[२]अग्निहोत्रपरिभ्रष्टः प्रसक्तः क्रयविक्रये।
वर्णसंकरकर्ता च ब्राह्मणो वृषलैः समः।।

---

§ श्लोकार्धस्यास्य साकाङ्क्षत्वात् श्लोकार्धमेकं प्रभ्रष्टमिति भाति।

(१) मर. १७१-१७२.

(२) कल्कि. १।२।३६-३९, ४२-४३.

‡ कल्केरुक्तिरियम्।

(१) कल्कि. १।४।९-१५, २१-२५.

(२) मुक्ता. २१.

देवतार्चनवृत्तिनिषेधः

[1]संवत्सरत्रयं कुर्यात्परार्थं देवतार्चनम्।
संवत्सरं च गायत्रीं षण्मासं रुद्रमेव च।
प्रणवं वा दिनं चैकं स च पातित्यमाप्नुयात्।।

एतत्संवत्सरत्रयव्यवधानं विष्णुपूजाविषयम्, शिवसूर्य-चन्द्राद्यर्चने सद्यः पतनात्। तथा च स्मृतिरत्नावल्याम् - 'शिवं सूर्यं तथा चन्द्रं दुर्गादीनु(? रु)ग्रदेवताः। योऽर्चये-त्पणपूर्वं तु सद्यः पतति मानवः।।'। आपा. ४४

बीजावापस्य धान्यसंग्रहस्य च मुहूर्तः

[2]वृषभमिथुनचापे चन्द्रशुक्रौ समेतौ
निवपनमथ कुर्याद्गर्भिणीकन्यकास्ता (?)।
(श)शिनि गुरु(वि)लग्ने विष्टिहीने तिथौ वा
शशिनि शनिसमेते मस्त्वयं(?)धान्यराशिः।।

अत्र धान्यसंग्रहप्रकार उक्तः संग्रहे - वृषभेति।
आपा. १४४

वेदविक्रयेण राजतः प्रतिग्रहस्य निषेधः दोषशमनं च

[3]स्थितो वै नृपतेर्द्वारि न कुर्याद्वेदविक्रयम्।
हत्वा गावं परं मांसं भक्षयीत द्विजाधमः।।
अथ चेत्प्रतिगृह्णाति ब्राह्मणो वृत्तिकर्षितः।
दशांशमार्जितं दद्यादेवं तत्र प्रहीयते।।

आर्जितम् अर्जितसंबन्धिनम्।
विपा. ३।२।८४१

## स्मृत्यर्थसारः

चत्वारो वर्णाः, त्रयो द्विजाः, सवर्णेभ्यः सवर्णासु धर्म्यविवाहतः सवर्णोत्पत्तिः

[4]विप्रक्षत्रियविट्शूद्राश्चत्वारो वर्णाः।
तत्र विप्रक्षत्रियविशो द्विजाः।।
सवर्णेभ्यः सवर्णासु जायन्ते हि सुतादयः।
अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः।।

(१) आपा. ४४.
(२) आपा. १४४.
(३) विपा. ३।२।८४१.
(४) स्मृसार. ३, १३.

## कुमारिलकारिकाः

क्षेत्रकर्षणे मुहूर्तो धार्मिकविधिश्च

[1]द्रव्यार्थमुत्तरैः प्रोष्ठपदैः क्षेत्रं प्रकर्षयेत्।
रोहिण्यां वा तदिष्येत फल्गुनीषूत्तरासु वा।।
[2]स्वक्षेत्रस्यानुवातं तु देशं गच्छेत्ससाधनः।
कृत्वाऽऽज्यभागपर्यन्तमुपलेपादि पूर्ववत्।।
[3]तत एतेन सूक्तेन क्षेत्रस्य पतिना वयम्।
ऋगन्ततः पठन्स्वाहाकारमाज्याहुतीर्दिशेत्।।
[4]प्रारभेत ततः क्रष्टुं कुर्यात्स्विष्टकृदादिकम्।
एतत्सूक्तं जपित्वा वा ततः क्षेत्रं प्रकर्षयेत्।।

गोचरणे धार्मिको विधिः

[5]गच्छन्तीरटवीं गन्तु(? वीमत्तु)मनुमन्त्रयते स्वगाः।
अन्या वाऽनियमो द्वाभ्यां मयोभूर्वात इत्यथ।।
आगच्छन्तीरिमास्तृप्ता अनुमन्त्रयते पुनः।
यासामूध §ऋचा तद्वद्या देवेषु द्वयेन च।।
आ गावः सूक्तमेवान्ये आयान्तीनां तु मन्त्रणे।
अथोऽ(? था)गुरुगवां संघान्भूता स्थेत्यु - पतिष्ठते।।

§ नारायणवृत्तिपुस्तके मूले 'यासामूधः' इति मन्त्रात्परम् 'उप मैतु मयो भुवः' इत्यादिर्द्वितीयो मन्त्रः पठितः। वृत्तिकारेण 'यासामित्यृग्भ्याम्' इति द्विवचनप्रयोगात् स पाठः स्वीकृत इति गम्यते। वैदिकसंप्रदायेऽप्ययं पाठोऽस्ति। ब्लूमफील्डमहोदयेनापि मन्त्रस्यास्येदमेकमेव स्थलं स्वीयमन्त्रकोशे निर्दिष्टम्। कुमारिलोऽत्र 'ऋचा' इत्येकवचनप्रयोगात्, देवस्वामिहरदत्तौ च तद्व्याख्यानादेतन्मन्त्रपाठं नाभिमन्यन्ते इत्यवगम्यते।

(१) कुका. २।१९।१; आपा. १३८ मुत्तरैः प्रो (मुत्तमप्रो) उत्तरार्धे (उत्तराफाल्गुनीभिर्वा रोहिण्या यदि वा भवेत्।।).
(२) कुका. २।१९।२; आपा. १३८ अशुद्धिबहुलो ग्रथः.
(३) कुका. २।१९।३; आपा. १३८ तीर्दिशेत् (तीरथ).
(४) कुका. २।१९।४; आपा. १३८ प्रारभे (आरभे) तृतीयचरणे (बृहत्सूक्तं जपित्वा च).
(५) कुका. २।२०।१-५.

**वाच्यं शं मयि जानीध्वं मन्त्रान्ते सकृदेव तु।**
**कुर्यादहरहश्चेदं शुचौ देशे समाहितः।।**
**मध्येषु गुरुगव्यश्चेत्कर्म वै नैतदिष्यते।।**

## त्रिकाण्डमण्डनकारिकाः

धर्मार्थयाचितद्रव्यस्यान्यत्र-
विनियोगनिषेधः

**[1]यथार्थं भिक्षितं द्रव्यमन्यत्र विनियोजयेत्।**
**श्राद्धादौ स्यादपाङ्क्तेयो भासयोनिं च गच्छति।।**

अपाङ्क्तेयाधिकारोपजीविविषयमाह – यथार्थमिति। यथार्थं यथाप्रयोजनम्, यज्ञार्थमिति यावत्। अन्यत्र कुटुम्बभरणादौ। आदिपदादार्त्विज्यादौ। भासः शृगालः। काकयोनिमिति वा पाठः। एतेन याचितद्रव्येणापि नित्यं विधेयमित्युक्तं भवति। यच्च 'यज्ञार्थं याचितं द्रव्यम्' इत्यादि निदानवचनम्, तत् काम्यपरम्।　　पदप्र.

निर्धनस्य नित्यकर्मार्थं चौर्यातिरिक्त-
कुमार्गैर्धनार्जनानुमतिः

**निर्धनो धनसाध्येषु नित्येष्वधिकृतो यदि।**
**चौर्यादन्यैः कुमार्गैरपीष्ट्यर्थं धनमर्जयेत्।।**

अथ सत्यधिकारे नित्यकर्मणामकरणे दोषश्रवणादवश्यमनुष्ठेयत्वमाह – निर्धन इति चतुर्भिः श्लोकैः। कुमार्गैः प्रतिग्रहादिभिन्नैः। तदुक्तम् – 'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगो विप्रयोगश्च सत्प्रतिग्रह एव च।।' (मस्मृ. १०।११५) इति। चौर्यस्यापि प्रसक्तौ विशिनष्टि- चौर्यादिति। 'परस्वं नाऽऽददीत' इति श्रवणात्।

पदप्र.

सूर्यग्रहे कुरुक्षेत्रे च नित्ययागार्थं
सर्वतःप्रतिग्रहानुमतिः

**सूर्यग्रहे कुरुक्षेत्रे मेषीकृष्णाजिनादिकम्।**
**चाण्डालात् प्रतिगृह्यापि यजेताऽऽवश्यकैर्मखैः।।**

यज्ञार्थं कुरुक्षेत्रादिषु प्रतिग्रहोऽपि न दोषायेति भावः।

पदप्र.

**ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते।**
**इत्यादिनिन्दावाक्यानि काम्यहोमविवक्षया।।**

(१) त्रिका. १।१०७-११२.

'ये शूद्रात्' (मस्मृ. ११।४२) इति मन्वाद्युक्तं निन्दावचनं काम्यहोमविषयम्, न नित्यविषयम्, तेषां करणश्रवणस्य बलीयस्त्वात्, स्मृतेश्च तदपेक्षया दौर्बल्यात्।

पदप्र.

आपदि नित्ययागार्थं सुवर्णातिरिक्त-
द्रव्यस्तेयानुमतिः

**आवश्यके तु सोमादौ सर्वसंभारसंभृते।**
**सुवर्णव्यतिरिक्ताङ्गद्रव्यालाभे हि चोरयेत्।।**

सर्वसंभारसमृद्धौ सुवर्णभिन्नदेयदक्षिणालाभे तु चौर्यमपि कृत्वा नित्यं सदक्षिणं कार्यम्, 'नादक्षिणो यज्ञो भवति' इति श्रुतेः। यत्र सुवर्णमेव दक्षिणादेयं तत्र सुवर्णापेक्षायां यथासंभवं देयम्, न तु सुवर्णचौर्यम्। तस्य महापातकत्वेनाधिकार एव विहन्येत। 'अप्यन्यायशतं कृत्वा भर्तव्या मनुरब्रवीत्।' इति स्मृतेः पोष्यान्तर्गतत्वाच्चाग्नीनां नित्यमनुष्ठेयमेवेति भावः।　　पदप्र.

## रेणुकारिकाः

स्ववृत्तिनिर्वर्तितकर्मफलम्

**[1]स्वकीयां वृत्तिमाश्रित्य कुर्यात्कर्माणि यो द्विजः।**
**गृहे वसन् फलं त्यक्त्वा स गच्छेद्वैष्णवं पदम्।।**

द्विजानां वृत्तयः, कुसूलधान्यत्वादीनां
प्राशस्त्यतारतम्यं लक्षणानि
च

**विप्रस्य वृत्तयस्तिस्रो याजनाध्यापने तथा।**
**शुद्धः प्रतिग्रहो मुख्यस्तत्र ज्यायान्प्रतिग्रहः।।**
**प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।**
**शस्त्रास्त्रभृत्त्वं क्षत्रस्यानभिषिक्तस्य जीविका।।**
**कुसीदं कृषिवाणिज्यं विशः स्यात्पशुपालनम्।।**
**अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।**
**या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि।।**
**कुसूलकुम्भीधान्यो वा त्र्यहैकोऽश्वस्तनोऽपि वा।**
**जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परः परः।।**
**कुसूलः कोष्टकं कुम्भी सा भवेत्तद्वदुष्ट्रिका।।**

(१) रेका. ९३-१०१।१-१०३. अत्र पञ्चचत्वारिंशाङ्कस्थाने ४६ इत्यङ्कः, तथा अष्टचत्वारिंशाङ्कस्थाने ४९ इत्यङ्कः प्रमादेन लिखितः, स एवास्माभिरगत्याऽनुसृतः.

कुटुम्बपोषणायालं यद्द्वादशदिनान्ततः।
धनं कुसूलधान्यं स्यात्कुम्भीधान्यस्तदर्धतः।।
शाल्यादिपतितत्यक्तवल्लरीग्रहणं शिलम्।
एकैकस्य परित्यक्तकणस्याऽऽदानमुञ्छकम्।।

यायावरशालीनयोर्वृत्तिविभागः,
वृत्तिसंख्याप्रयुक्ताः
शालीनभेदाः

यायावरः शिलोञ्छेन विप्रो जीवेदनापदि।
क्रमात्कुसूलधान्याद्यैः शालीनस्तु चतुर्विधः।।
एषां कुसूलधान्यादिचतुर्णां यः परः परः।
प्रशस्ततर इत्येवमूचे योगीश्वरो मुनिः।।
यायावरश्च शालीनो गृहस्थो द्विविधो मतः।
तयोर्यायावरः श्रेष्ठः शालीनस्त्वितरस्ततः।।
यायावरो याजनादे रिक्तसंचयवर्जयेत्।
षट्कर्माधिष्ठितः शान्त इति देवलभाषितम्।।
प्रेष्यैश्चतुष्पदग्रामधनधान्यगृहैर्युतः।
लोकानुवर्तशालीनः पुनः स च चतुर्विधः।।
प्रतिग्रहाध्यापनयाजनैर्यो
वणिक्कृषिभ्यां पशुपालनेन।
एतैरुपायैः प्रथमः स जीवेत्
त्रिभिस्तथाऽऽद्यैः कथितो द्वितीयः।।
स याजनाध्यापनयुक् तृतीयः
सोऽध्यापनेनैव तुरीय उक्तः।
स आश्रयेदापदि वैश्यवृत्तिं
क्षात्रीं क्रमात्तत्र न निन्दितानाम्।।
शालीनः क्षत्रियो वैश्यः कृषिं कुर्यात्तदीदृशीम्।

लाङ्गलयोजने धार्मिको विधिः

प्रथमं मातृपूजादि श्राद्धं कृत्वा यथोदितम्।।
तिथ्यादिकल्पितं कालं स्मृत्वा संकल्पमुच्चरेत्।
करिष्ये धान्यसंपत्त्या अहं लाङ्गलयोजनम्।।
पुण्याहशब्दो व्याख्यातस्तत्रै¶(? तो यद्वै)तज्ज्येष्ठया भवेत्।
हेतौ तृतीया तद्धिष्ण्यमिन्द्रदेवत्यमित्यतः।
इन्द्राय कृषिरित्येतत्स्मरणं ह्यत्र विद्यते।।

गोमयाम्भोक्षताः शुक्लगन्धानि दधितण्डुलान्।
बलीवर्दान्मधुघृते युगं योक्त्रादिसंयुतम्।
सीरघर्घरमालादिमण्डनान्युपकल्पयेत्।।
उपलिप्यारत्निमात्रं स्थण्डिलं गोमयाम्बुना।
दध्यादिभिः स्मरेदिन्द्रं पर्जन्यं च ततोऽश्विनौ।
मरुत उदलाकाश्यपं ततः स्वातिकारीमेव च।
सीतामनुमतिं चाष्टावेता यक्षेऽत्र(? यजेत) देवताः।।
दध्यादिमिश्रितैर्द्रव्यैश्चतुर्भिः स्थण्डिले बलिम्।
दद्यात्प्राञ्चमुदञ्चं वा दैवेनोत्तानपाणिना।।
इन्द्राय नम इत्यादि(? दौ) पर्जन्याय नमस्ततः।।
अश्विभ्यां च मरुद्भ्यो वा(? द्भ्यश्चा)ऽप्युदला-
काश्यपाय च।
स्वातिकार्यै च सीताया अनुमत्यै नमः पृथक्।।
धुर्याननडुहः सर्वान् प्राशयेन्मधुसर्पिषी।।
सव्यं युनक्त्यनड्वाहं सीरा युञ्जति मन्त्रतः।
तेनैव दक्षिणं तद्वा श्रौते च पुनरन्यथा।।
शुनं सुफला विकृषेल्लिङ्गाद्वा फालमालभेत्।
न चैतौ विनियोक्तव्यौ मन्त्रावास्यु(? वग्न्यु) –
पदेशतः।।
उपदिष्टौ हि तावग्नौ तत्र पाठात्तयोरिह।
नोपदेशो नातिदेशो भवेद्वचनमन्तरा।।
किंच यद्यतिदेशोऽत्र प्राप्नोति वपने सति।
उक्तमन्त्रानुषङ्गो हि नेष्यते तदभावतः।।
द्वितीयो हेतुरुक्तोऽयं मुनिना न्यायसूत्रतः।
योजनं कर्षणं तूष्णीं तस्माद्धेतुद्वयादिह।।
अग्रियो वल्लभोऽनड्वांस्तस्यालंकरणं भवेत्।
शृङ्गघर्घरमालाद्यैरितरेषामथेच्छया।।

लाङ्गलवाहने मुहूर्तः

अनेनैव प्रकारेण प्रातः प्रत्यङ्मुखः स्थितः।
प्रथमं तु यदाऽकृष्टं तत्कृषेन्नियमो यदा।।
मृदुध्रुवचरक्षिप्रैर्विशाखापित्र्यमूलभैः।
विदध्यात्प्रथमं सीरप्रवाहं सौम्यवासरे।।
नाशायानडुहामनागतयुतं
भं भानुयुक्तं ततो
वृद्ध्यै त्रीणि नवाथ कर्षकपरि -

¶ 'पुण्याहे.... ज्येष्ठया वा' इति सूत्रम्।

**ध्वंसाय शूलत्रये।**
**युग्मं पञ्चकयोस्तदन्तरगतं**
**लक्ष्म्याः समुत्पत्तये**
**चक्रे लाङ्गलनाम्नि मन्त्रयमतः**
**सर्वार्थसिद्धिप्रदम्।।**

हालिकवृषभविषयक उपचारः

**श्रान्तं बुभुक्षितं विप्रस्तृषितं व्याधितं तथा।**
**क्लीबं वृद्धं तु हीनाङ्गमनड्वाहं न वाहयेत्।।**
**स्थिराङ्गं नीरुजं तृप्तमनड्वं षण्डवर्जितम्।**
**वाहयेद्दिवस्यार्धं स्नानादीनाचरेत्ततः।।**

हालिकवृषभसंख्याप्रयुक्तः फलभेदः

**धर्म्यमष्टगवं प्रोक्तं षड्गवं वृत्तिलक्षणम्।**
**चतुर्गवं नृशंसानां द्विगवं गोजिघांसिनाम्।।**

व्रीहियववापनयोर्धार्मिको विधिः

**व्रीहीणां वापने श्राद्धं मातॄणां तन्निमित्तकम्।**
**कृत्वाऽग्निपरेषांते(?)सदार एवमुच्चरेत्।।**
**व्रीहीणां वापनमहं करिष्येऽथ विकल्पिकाः।**
**ब्रह्मणो गमनाद्या ये देवताध्यानमित्यतः।।**
**आघारावाज्यभागान्ते सिद्धेन चरुणा स्मरेत्।**
**इन्द्रं पर्जन्यमित्यष्टौ शेषात्स्विष्टकृतं ततः।।**
**आज्येन नव भूराद्यास्ता यक्ष्ये यत्र देवताः।**
**ब्रह्मणो गमनाद्याज्यभागान्तं श्रपणं विना।।**
**विशेषस्तण्डुलस्थाने सिद्ध आसाद्यते चरुः।**
**प्रोक्ष्यते वा(? चा)ऽऽज्यभागान्ते सिद्धेन**
**चरुणाऽऽहुतीः।।**
**इन्द्रायेत्यष्टभिर्हुत्वा स्वाहान्तैर्देवतापदैः।**
**शेषात्स्विष्टकृतं तद्वद्भूराद्याश्च घृतेन ताः।।**
**प्राशनादि विमोकान्तं कृत्वा ब्राह्मणभोजनम्।**
**यवानां वापने चैव मातृपूजादिकं भवेत्।।**

बीजवापने मुहूर्तः

**पुष्योत्तराहस्तमृगानुराधा**
**प्रजेशचित्राश्विनपौष्णधिष्ण्यैः।**
**पैत्र्यश्रविष्ठानिलनाथ(? नाग)मूलै –**
**रुप्तं फलं भूरि ददाति बीजम्।।**
**कुर्वीत रेखात्रयमूर्ध्वगामि**
**पश्चात्त्रिभिस्तत्सहितं त्रिशूलैः।**
**षट्तिर्यगन्यद्द्वितयं विदिक्स्थं**
**बीजोप्तिचक्रं स्मृतमेतदाद्यैः।।**
**मूर्ध्न्यर्कयुक्तं सगतागतं भं**
**न शोभनं कोणगतानि सन्ति।**
**पार्श्वस्थितं मध्यफलं भषट्कं**
**फलं न यच्छन्ति नवापराणि।।**
**सायाह्ने प्राङ्मुखेनैव बीजोप्त्यारम्भणं हितम्।**
**एतत्कृषिप्रवृत्तस्य सम्यक्प्रथमतो भवेत्।**
**चरुर्व्रीहिमयः सिद्ध उभयत्राविशेषतः।।**

व्रीहियवलवनारम्भे कर्तव्यस्य
सीतायज्ञस्य प्रयोगः

**सीतायज्ञो भवेद्व्रीहिलवनारम्भकालतः।**
**सम्यक्कृषिप्रवृत्तस्य न गोधूमतिलादिषु।।**
**पुण्येऽह्नि मातृपूजादि श्राद्धं कृत्वोपकल्पयेत्।**
**दर्भाः पात्राणि समिध आज्यं च चरुतण्डुलाः।**
**सिद्धश्चरुर्दक्षिणा च ब्रह्मा गोमयमम्बु च।।**
**अग्निबलेः पटलकं गृहीत्वाऽपीन्धनानि च।**
**शूर्पादि वैणवं पात्रं बलिपटलकं स्मृतम्।।**
**सपत्नीक इयात्क्षेत्रं तत्प्राच्यामुत्तरेऽथ वा।**
**कृष्टे शुचौ प्रदेशे तु तत्फलानुपरोधतः।।**
**स्थापयेदनलं तत्र पञ्चसंस्कारसंस्कृते।**
**ग्रामे वोभयसंयोगात्कृष्टे देशे क्रिया भवेत्।।**
**फलानुरोधः कृष्टं चेत्युभयत्राविरोधतः।**
**तस्मात्तुल्यविकल्पोऽयं भाष्यकारेण दर्शितः।।**
**एष एव विधिः सूत्रात् प्राप्तत्वाद्भूमिसंस्कृते।**
**अपि कृष्टे यथा स्यादित्युपलिप्तादि सूत्रितम्।।**
**उपविश्यानलं पश्चात्सदार इदमुच्चरेत्।**
**सीतायज्ञेन यक्ष्येऽहं ततो वैकल्पिकान्स्मरेत्।।**
**क्षेत्रक्रियाऽऽब्रह्मगतेरा वरात्प्रागतो बलिः।**
**पृथिवी द्यौस्तु पञ्चानामृषिरेषां प्रजापतिः।।**
**इन्द्रवृत्रहणाविन्द्रस्तत्पत्नीन्द्रश्च देवताः।**
**अनुष्टुभौ प्रतिष्ठा च पङ्क्तिश्च जगती क्रमात्।।**
**विनियोगो भवेद्धोमे पुरस्ताद्ये त आसते।**
**इत्यादीनां चतुर्णां स्यात्परमेष्ठी मुनिर्भवेत्।।**

यजूंषि देवतेन्द्रोऽत्र यमो वरुण एव वा।
सोमः क्रमाद्बलिहृतौ स्मारकत्वाद्युजिर्भवेत्।।
भूरादीनां पुरोक्तं स्याद्देवताध्यानमित्यतः।
आघारावाज्यभागान्ते इन्द्रं वृत्रहणं स्मरेत्।।
इन्द्रं तथेन्द्रपत्नीं च सीतामिन्द्रं घृतेन ताः।
सीतां यजां शमां भूतिं चरुणैताश्च देवताः।।
इन्द्रं पर्जन्यमित्यष्टौ सिद्धेन चरुणा ततः।
शेषादग्निं स्विष्टकृतं भूराद्याश्च घृतेन ताः।।
इन्द्रं यमं च वरुणं सोमं च बलिदानतः।
इन्द्रं पर्जन्य इत्यष्टौ पूर्ववद्बलिदानतः।।
एता अङ्गप्रधानार्थमहं वक्ष्येऽत्र देवताः।
वरणाद्याज्यभागान्ते विशेषस्तमहं ब्रुवे।।
व्रीहिकाले व्रीहिसस्यमिश्रैर्दर्भैस्त्रिभिर्भवेत्।
यवकाले यवानां च सशेषस्तरणक्रिया।।
व्रीहीणां लवने कार्यो जीर्णव्रीहिमयश्चरुः।
यवानां लवने तद्वदकृतं यन्नवाशनम्।।
स्थालीपाकेषु सर्वत्र पक्षादिप्रभृतिष्वपि।
विकल्पेते व्रीहियवावन्यत्रापीति सूत्रणात्।।
व्रीहीन्यवान्वा हविषीत्येतत्पूर्वं हि चोदितम्।
अतो नैवात्र वक्तव्यं प्राप्तत्वान्न्यायसूत्रतः।
किं च यावस्य च चरोर्विनिवृत्तिरसंभवात्।।
पक्वे विशदसिद्धे तण्डुलपाकेऽन्तरुष्मणाम्।
अनवस्राविते तज्ज्ञैश्चरुशब्दः प्रयुज्यते।।
चरुरत्रैव यावः स्यादन्यत्रायाव इत्यतः।
अपि सिद्धे सत्यारम्भो नियमायेति सूत्रणात्।।
जुहुयादाज्यभागान्ते स्थाल्याज्येनाऽहुतीः क्रमात्।
पृथिवी द्यौरिमां( ? माः) पञ्च पञ्चभिः
प्रतिमन्त्रतः।।
स्थालीपाकेन जुहुयाच्चतस्रः क्रमशोऽपराः।
सीतायै च यजायै च शमायै तदनन्तरम्।।
भूत्या इति ततः सिद्धचरुणेन्द्रादिदेवताः।
अनुमत्यवसानास्ता यजेदष्टौ तथोभयोः।
शेषात्स्विष्टकृतं हुत्वा भूरित्याद्यपि पूर्ववत्।।
प्राशनादिविमोकान्ते चरुणा प्राकृतेन वै।
स्रुवेण सीतागोप्तृभ्यः स्तृतिशेषतृणेष्वपि।।

बलिं हरेत्स पूर्वादिदिक्षु क्षेत्रस्य मन्त्रतः।
पुरस्ताद्ये त इत्याद्यैश्चतुर्भिस्तैर्यथार्थतः।
मन्त्राणां विनियोगोऽत्र चतुर्णां लिङ्गको
( ? लैङ्गिको) भवेत्।।
स्थण्डिले पूर्ववत्तेभ्य इन्द्रादिभ्यो बलिं हरेत्।
सिद्धौदनादाज्यशेषात् पाणिनोत्तरतोऽनलात्।।
ततः स्त्रियो बलिं दद्युरिन्द्रादिभ्यस्तु तत्र वै।
कुल्माषौदनसंयुक्ताद्बलिं पटलकादिह।
आचरन्ति स्त्रियो यावद्वृद्धानां व्यवहारतः।।
योगिनीक्षेत्रपालेभ्यः सिद्धभूतगणा इव।
केचित्कर्तुरनेनैव वदन्ति बलिकर्मवत्।।
सीताया इति मन्त्रेषु प्रदानं मन्त्रवद्भवेत्।
न स्वाहाऽत्र प्रयोक्तव्यास्तत्प्रयोगः श्रुतौ भवेत्।।
वषट्कृते साहचर्याद्वषट्कारेण वा श्रुतेः।
याज्यादिवान्वषट्कारस्तत्प्राप्तिरिह दुर्लभा।।
‡ स्वाहाकारो विशेषो स्यान्मन्त्रवत्स्विति
सूत्रणात्।
अधस्तनं दूषयति विनिवृत्तिर्व( ? त्तिं व)दन्
मुनिः।।
सूत्रं मन्त्रवदित्येतत्प्राग्वा स्वाहाप्रदानतः।
ब्राह्मणान् भोजयेत् तस्मिन् समाप्ते कर्मणि द्विजः।।
एवं यवेषु कर्तव्यं ततः कार्यं नवाशनम्।

क्षत्रियवैश्यशूद्राणां कृष्यादयो वृत्तयः,
कृषिदोषशमनविधिः

क्षत्रियोऽपि कृषिं कुर्याद्विप्रान्देवांश्च पूजयेत्।
वैश्यः शूद्रोऽपि कुर्यात्तां वाणिज्यं शिल्पमेव च।।
स्वयंकृष्टैस्तथा क्षेत्रैर्धान्यैश्च स्वयमर्जितैः।
एकद्वित्रिचतुर्विप्रान्भोजयेत्स्नातकान्द्विजान्।।
निर्वपेत्पञ्चयज्ञांश्च क्रतुदीक्षां करोति सः।
न विक्रयेत्तिलादींश्च धर्मार्थं धान्यतत्स( ? तः स)-
मान्।।
राज्ञे दत्त्वाऽथ षड्भागं देवताभ्यश्च विंशतिम्।
पुनन्ति खलयज्ञेन कर्षका नात्र संशयः।।

---

‡ 'स्वाहाकारोऽपि शेषः स्यात्' इति पाठो युक्तः। 'मन्त्रवत्सु' (काश्रौ. ८।५।३२) इति कात्यायनश्रौतसूत्रनिर्देशः।

**संवत्सरेण यत्पापं मत्स्यहा समवाप्नुयात्।**
**त्रयस्त्रिंशच्च विप्रेभ्यः कृषिकर्ता न लिप्यते।।**
**भूमिं भित्त्वौषधीश्छित्वा हत्वा कीटपिपीलिकान्।**
**एकाह्ना तदवाप्नोति सकृद्भिन्नेन लाङ्गली।।**
**यो न दद्याद्द्विजातिभ्यो राशौ मूलमुपागते।**
**स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत्।।**

आपदि ब्राह्मणस्य क्षत्रिय-
वैश्यवृत्ती

**क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः।**
**निस्तीर्य तामथाऽऽत्मानं पावयित्वा पथि न्यसेत्।।**
**उभाभ्यामप्यजीवेत्स कथं स्यादिति चेद्भवेत्।**
**कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्।।**
**उत्कृष्टं चापकृष्टं वा तयोः कर्म न विद्यते।**
**मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते।।**

याजनाध्यापनप्रतिग्रहनिमित्तक-
दोषशमनानि

**जपहोमैरपेत्येनो याजनाध्यापनैः कृतम्।**
**प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च।।**

दश जीवनहेतवः

**विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः।**
**गिरिर्भैक्षं कुसीदं च दश जीवनहेतवः।।**

ब्राह्मणवृत्तिप्रकल्पनं
राजकर्तव्यम्

**तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तपः।**
**ज्ञात्वा राजा कुटुम्बं च धर्म्यां वृत्तिं प्रकल्पयेत्।।**
**यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा।**
**तस्य सीदति तद्राष्ट्रं दुर्भिक्षं व्याधिपीडितम्।।**

## अनिर्दिष्टकर्तृकवचनानि

ब्राह्मणेनासवर्णायां जनितस्यापि ब्राह्मण्यम्,
अवयवतो वर्णोत्पत्तिः, संस्कार-
विशेषप्रयुक्तं ब्राह्मणस्य
प्रभुत्वम्

**[१]येषामुभयतो वा ब्राह्मण्यं पितृत इत्येके।।**

(१) **संग.** ६३७.

**[१]मुखबाहूरुपज्जातास्तस्य वर्णा यथाक्रमम्।।**
**[२]संस्कारस्य विशेषात्तु वर्णानां ब्राह्मणः प्रभुः।।**

ब्राह्मणप्रशंसा, ब्राह्मणवृत्तयः, देवार्चनाद्यर्थं
सर्वतः प्रतिग्रहः, धर्म्यः प्रतिग्रहोऽ-
प्रतिग्रहसमः, धार्मिकात्
प्रतिग्रहः कार्यः

**[३]सर्वेषामेव वर्णानां गुरुर्विप्र उदाहृतः।**
**पतितोऽपि वरो विप्रो न हि शूद्रो जितेन्द्रियः।।**
**[४]याजनाध्यापने शुद्धे तथा पूतप्रतिग्रहः।**
**एष सम्यक्समाख्याता त्रितयी तस्य जीविका।।**
**[५]देवातिथ्यर्चनकृते गुरुभृत्यादिवृत्तये।**
**सर्वतः प्रतिगृह्णीयात्तत्र दोषो न विद्यते।।**
**[६]अयाचितोपपन्नानां द्रव्याणां यः प्रतिग्रहः।**
**विशिष्टलोकशास्त्राभ्यां तं विद्यादप्रतिग्रहम्।।**
**[७]धार्मिकेभ्यो द्विजातिभ्यः कर्तव्यस्तु परिग्रहः।।**

जपादि कुर्वतः प्रतिग्रहदोषाभावः, ब्राह्मण-
प्रशंसा, प्रतिग्रहे धर्मविधिः,
अप्रतिग्राह्याणि

**[८]यस्तु जापी सदा होमी परपाकविवर्जितः।**
**सर्वरत्नमहीपूर्णां प्रतिगृह्णन्न लिप्यते।।**
**परपाकनिवृत्तस्तु नित्यं स्वाध्यायवान् द्विजः।**
**समुद्रगानदीस्नानाद्विशुध्येत प्रतिग्रहात्।।**
**[९]विद्वानविद्वानशुचिं शुचिं वा**
**यो ब्राह्मणं न प्रणमेद्यथार्हम्।**
**स पापकृद्ब्रह्मदवाग्निदग्धो**
**दण्ड्यश्च वध्यश्च न चास्मदीयः।।**

(१) **शूक.** ३ स्मृतिः.
(२) **ममु.** १।९३.
(३) **आपा.** २३४ क्रियासारे.
(४) **मुक्ता.** ३० स्मृतिरत्ने.
(५) **विपा.** ३।२।२६७ चतुर्थचरणो नास्ति; **इन्दु.** २१८ कमलाकराह्निके.
(६) **मेधा.** ११।२३.
(७) **मेधा.** ४।२४७.
(८) **समु.** ४०.
(९) **विश्व.** १।१५२ भगवान् वासुदेवः.

**[५]यत्किंच प्रतिगृह्णीयात्तत्सर्वमुत्तानस्त्वाङ्गिरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात्।।**

**[१]ब्राह्मणः प्रतिगृह्णीयाद्वृत्त्यर्थं साधुतः सदा।**
**अव्यश्वमणिमातङ्गतिलहो(?हे)मांश्च वर्जयेत्।।**

अनिः प्राणी। अत्र तिलशब्दो निन्दिततिलधेन्वादिपरः, तिलानां सामान्यतोऽग्राह्यत्वाभिधानात्।

निप्र. २।२८२

प्रशस्तेभ्यो द्विजेभ्यः प्रतिग्रहः, शूद्राद-
पक्वप्रतिग्रहः, गुर्वाद्यर्थं
शूद्रादन्नग्रहणम्

**[३]आददीत प्रशस्तद्विजादिभ्यः शुश्रूषोश्च शूद्राद-पक्वान्नम्।।**

**[४]प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्च।।**

**[५]गुर्वर्थमतिथीनां वा भृत्यानां वा विशेषतः।**
**शूद्रान्नं प्रतिगृह्णीयान्न तु भुङ्क्ते स्वयं ततः।।**

प्रतिग्राह्यं परीक्ष्यम्

**प्रतिग्राह्यं परीक्षेत पुरस्ताद्धि प्रतिग्रहे।**
**अन्नस्य तु विशेषेण महान्नं न प्र(?नन्नप्र)तिग्रहः।**
**दुष्कृतं निखिलं नृणामना(?न्ना)धारव्यवस्थितम्।।**

प्रतिग्रहप्रशंसा

**[६]प्रतिग्रहाध्यापनयाजनानां**
**प्रतिग्रहं श्रेष्ठतमं वदन्ति।**
**प्रतिग्रहः शुध्यति जप्यहोमै –**
**र्याज्यं तु पापं न पुनन्ति वेदाः।।**

यानि तु 'प्रतिग्रहा.....' इत्यादीनि वचनानि तानि निषिद्धायाज्ययाजनविषयाणि।

मर. १६९

वृत्तिसंकरनिषेधः

**[१]न वृत्तिसंकरं कुर्यात्।।**

अथात्यन्तापद्वृत्तयः। तत्र 'न वृत्तिसंकरं कुर्यात्' इति वृत्तिसंकरनिषेधातिक्रमेणापि वर्तनम्। न च कृष्यादिपरवृत्ति-परस्य प्रतिग्रहा(दि)लाभे योगानौचित्यात् वृत्तिसंकरनिषेधः सद्वृत्तिकाले न्यायप्राप्तकुवृत्तिनिषेधानुवाद इति वाच्यम्, 'अतोऽन्यतमया वृत्त्या वर्तयन्' (मस्मृ. ४।१३) इत्यनुवादा-योगात्। किंतु विपत्तौ नियमान्तरवदयमपि नियमस्त्याज्य एव। तथा च गौतमः – 'सर्वथा वृत्तिरशक्तौ' (गौध.७।२२)। 'सर्वथा प्रतिषिद्धवृत्तिसंकरादिभिः' इति लक्ष्मीधरः।

निप्र. ३।३२६

असत्प्रतिग्रहस्य पञ्च-
विधत्वम्

**[२]असत्प्रतिग्रहः प्रोक्तः कालतो देशतस्तथा।**
**स्वरूपतो जातितश्च कर्मतश्चेति पञ्चधा।।**

(१) कालः ग्रहणादिः। देशः कुरुक्षेत्रादिः। स्वरूपं मेषीकृष्णाजिनादिकम्। जातिः शूद्रादिः। कर्म पतनीयवृत्तिः।

मुक्ता. ५८

(२) पञ्चदोषदुष्टस्य प्रतिग्रहे सर्वद्रव्यत्यागपुरःसरं प्रायश्चित्तस्यापि विधानात् प्रतिग्रहे प्रयोजनाभावाच्च ‡तदुपेक्ष्यमेव।

¤ आन. ६२८

अप्रतिग्राह्याणि

**[३]मेषीं च महिषीमाज्यं गामप्युभयतोमुखीम्।**
**करिणं कालपुरुषं पुरुषं च तिलाचलम्।।**
**[४]अजाविकं तथाऽश्वं च मरणे चाऽऽद्यमासिकम्।**
**दुर्दानान्याहुरेतानि प्रतिगृह्णन्ति ये द्विजाः।**
**न तेषां वदनं पश्येद् दृष्ट्वा चक्षुर्निमीलयेत्।।**

---

(१) **नन्द.** ४।१८७.

(२) **निप्र.** २।२८१ उत्तरार्धं (अन्यश्वतिलपात्रं च मणिहेमांश्च वर्जयेत्।।) विद्याकरपद्धतौ; **विपा.** ४।११ मदनरत्ने.

(३) **मेधा.** ४।३३ स्मृत्यन्तरे.

(४) **मेधा.** १०।७६ स्मृत्यन्तरम्.

(५) **मुक्ता.** ५७.

(६) **मर.** १६९.

‡ तत् दुष्टस्य प्रतिग्राह्यस्य ग्रहणमित्यर्थः।

¤ शेषं मुक्तावत्।

(१) **निप्र.** ३।३२६.

(२) **मुक्ता.** ५८ हेमाद्रौ; **आन.** ६२८ हेमाद्रौ.

(३) **मुक्ता.** ५८ करिणं (कारणं) हेमाद्रौ; **आन.** ६३० हेमाद्रौ.

(४) **मुक्ता.** ५८ हेमाद्रौ; **आन.** ६३० चाऽऽद्य (वाऽऽद्य) दुर्दा (दुर्दि) हेमाद्रौ.

[1]कृष्णाजिनं च महिषीं मेषीं चोभयतोमुखीम्।
दासीं च प्रतिगृह्णानो न भूयः पुरुषो भवेत्।।
[2]प्रेतान्नं प्रेतशय्यां च नग्नप्रच्छादनं गजम्।
उत्क्रान्तिं कालरूपं च न भूयः पुरुषो भवेत्।।
[3]बहुशो द्विजवित्तानामपि स्तेयं तरिष्यति।
सर्वालंकारवस्त्राणि प्रतिगृह्य मृतस्य तु।
नरकान्न निवृत्ते तं(? निवर्तेत)धानां तिलमयं तथा।।
[4]कालं च महिषीमाज्यमेकोद्दिष्टमृतुत्रये।
दाता प्रतिग्रहीतारं पश्येच्चेत्पुण्यनाशनम्।।
[5]अजिनं मृतशय्यां च धेनुं चोभयतोमुखीम्।
कृष्णाजिनद्वयग्राही न पुनर्मानवो भवेत्।।

जातकर्मणि प्रतिग्रहानुमतिः

[6]पुण्यत्वात् पुत्रजन्माहे देयं ग्राह्यं सदा परैः।।
परैर्ग्राह्यमिति विधानं सूतकशङ्कानिवारणार्थम्।
आन. ४२२

वर्णानां वृत्तयः

[7]वर्णत्रयस्य शुश्रूषां कुर्याच्छूद्रः प्रयत्नतः।
दासवद्ब्राह्मणानां तु विशेषेण समाचरेत्।।
अयाचितप्रदाता स्यात् कृषिं वृत्त्यर्थमाश्रयेत्।
पाकयज्ञविधानेन यजेद्देवानतन्द्रितः।।
[8]लौकिकाचारमार्गेण सर्वेषां वर्तनं शृणु।
अध्ययनं चाध्यापनं यजनं याजनं तथा।।
दानं प्रतिग्रहं चैव तेषां कर्माणि चोच्यते।
जायन्ते ब्रह्मबाहोश्च क्षत्रियास्तु महामते।।
नृपक्षत्रियराजानो रक्ता भूपाश्च भूपकाः।
§ षडेते निजनामानि तेषां पर्यायवाचकाः।।

§ 'शब्दाः' इत्यध्याहार्यम्।
(१) मुक्ता. ५८ महिषीं (महिषं) हेमाद्रौ; आन. ६३० हेमाद्रौ.
(२) मुक्ता. ५८ गजम् (भजन्) हेमाद्रौ; आन. ६३० हेमाद्रौ.
(३) मुक्ता. ५८ हेमाद्रौ.
(४) मुक्ता. ५८ हेमाद्रौ; आन. ६३१ हेमाद्रौ.
(५) निप्र. २।२८२ क्रमेण विद्याकरपद्धतौ.
(६) आन. ४२२ स्मृतिः.
(७) सस्मृ. १०१ धर्मसंहितायाम्.
(८) सस्मृ. ११६-११७ सुप्रभेदे.

गोपालकृषिवाणिज्या कर्मत्रयसमायुताः।
यादयोस्त्वदृशः(?) शूद्रा त्रिवर्णानामुपासकाः(?)।
शुश्रूषां तु द्विजानां च शूद्राणां वृत्तिरुच्यते।।
कृष्णाश्च कार्षिकाः शूद्राः पृ(? वृ)षलाः प्रेष्य-कारकाः।
एतानि पञ्चनामानि शूद्रपर्यायवाचकाः।।
कथितं चाथ शूद्रस्तु सच्छूद्रं वैश्यवच्चरेत्।
अमद्यपाः कुलीनास्तु शूद्रास्ते संप्रकीर्तिताः।।
[1]याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्।।
[2]कृषिं यत्नेन कुर्वीत मौर्व्या सर्वत्र यत्नतः।।
[3]यादृशेन कर्मणा क्रियमाणेन द्विजातिशुश्रूषानर्हो न भवति तानि कर्माणि प्रचरणीयानि। यैः प्रचरितैः शुश्रूष्यन्ते द्विजातयस्तानि शिल्पानि कारुकर्माणि च।।

अतिरिक्तधनार्जननिषेधः,
आशौचितोऽपि
ग्राह्याणि

[4]विद्यमाने धने यस्तु प्रतिग्रहरुचिर्द्विजः।
नरकं रौरवं प्राप्य तत्रैव परिपच्यते।।
[5]वृत्त्यर्थादधिकं गृह्णन् नरो भवति किल्बिषी।।
एवं 'वृत्त्यर्था... किल्बिषी' इति बहुतरधनस्वीकारदोषस्य दायादिष्वसंभवः, तस्य प्रतिग्रहादिविषयत्वात्।
निप्र. २।२४८

[6]लवणं सर्पिर्मांसं च पुष्पमूलफलानि च।
काष्ठं शाकं तृणं तोयं दधि क्षीरं घृतं तथा।।
औषधं तैलमजिनं शुष्कमन्नं च नित्यशः।
अशौचिनां गृहाद्ग्राह्यं स्वयं शस्यं च मूलकम्।।

मृतसंबन्धिधनग्रहणनिषेधः

[7]मर्तव्याद्यद्गृहीतं तु तत् कथं संतरिष्यति।।

(१) कृभ. २२.
(२) मेधा. १०।८४.
(३) अप. १।१२० पृ. १६२.
(४) स्मृच. २।४५८.
(५) निप्र. २।२४८, ३०५.
(६) निप्र. २।२७९.
(७) निप्र. २।२८२ 'मर्तव्याद्यद्' इत्यत्र 'मृतस्य च' इत्यपि पाठान्तरं निर्दिशति.

मर्तव्यात् मुमूर्षोः। मृतस्य चेति पठन्ति।

निप्र. २।२८२

[१]**शय्यालंकारवस्त्राणि मृतस्य प्रतिगृह्य च।**
**नरकान्न निवर्तन्ते धेनुं तिलमयीमपि।।**
**दुष्प्रतिग्रहदग्धस्य तस्य विप्रस्य नो मुखम्।।**
पश्येत् इति।

निप्र. २।२८३

भिक्षाप्रमाणम्, द्विजेन द्विजेभ्यो धनं ग्राह्यम्,
प्रतिग्रहनिवृत्तेनापि शूद्रतो ग्राह्याणि,
एकैव गौः प्रतिग्राह्या

[२]**ग्रासप्रमाणा भिक्षा स्यात्।।**
[३]**द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजः सदा।।**
[४]**आममांसं मधु घृतं धानाः क्षीरमथोदितम्।**
**गुडं तक्रं च संग्राह्यं निवृत्तेनापि शूद्रतः।।**
[५]**एकां गां प्रतिगृह्णीयान्न द्वितीयां कदाचन।।**

धर्मार्थद्रव्यसंचयस्य जितात्मनः
असंचयस्य च
प्रशंसा

[६]**धर्मार्थः संचयो यस्य द्रव्याणां स प्रशस्यते।**
**तपःसंचय एवासौ विशिष्टो द्रव्यसंचयात्।।**
[७]**यथा यथा न गृह्णाति ब्राह्मणोऽसत्प्रतिग्रहम्।**
**तथा तथाऽस्य संतोषाद्ब्रह्मतेजोऽभिवर्धते।।**
[८]**आकिंचन्यं च राज्यं च तुलायां समतोलयत्।**
**अकिंचनत्वमधिकं राज्यादपि जितात्मनः।।**

(१) **निप्र.** २।२८२.
(२) **गृर.** ४६५ स्मृतिः.
(३) **ममु.** १०।७६.
(४) **विपा.** ३।२।२५०.
(५) **निप्र.** २।२८३.
(६) **मुक्ता.** ५५ सप्तर्षिसंवादे; **आन.** ६२२ धर्मार्थः (धर्मार्थं) यस्य द्र (यः स्याद्द्र).
(७) **मुक्ता.** ५५ था न (थाऽनु) सप्तर्षिसंवादे; **आन.** ६२२ ब्रह्मते (ब्राह्मं ते) सप्तर्षिसंवादे.
(८) **मुक्ता.** ५५ सप्तर्षिसंवादे; **आन.** ६२२-६२३ तुलायां (तुलया) सप्तर्षिसंवादे.

जितात्मन इति विशेषणात् अजितात्मनः अजितमनस्कस्य द्रव्यार्जनं धर्मानुष्ठानं च विहितमेव। जितात्मनस्तु विक्षेपाभावादाकिंचन्यमेव संतोषहेतुरित्यर्थः।

आन. ६२३

राजदातृकप्रतिग्रहनिन्दा

[१]**यो राज्ञः प्रतिगृह्यैव शोचितव्ये प्रहृष्यति।**
**स वै संयाति मूढात्मा नरकानेकविंशतिम्।।**

एवं च क्षत्रियमात्रात्प्रतिग्रहो विहितः। तत्रापि यः अक्षत्रियकुले जातः सन् राज्यभारं वहति तस्मान्न प्रतिग्राह्यमित्युक्तं तत्रैव – 'यो राज्ञ....' इति।

आन. ६२३

स्तेयनिषेधः

[२]**परमापद्गतेनापि न कार्यं स्तेयकर्म हि।**
**स्तेयादप्यधिकः कश्चिन्नास्त्यधर्म इति स्मृतिः।।**

स्तेयापवादः

[३]**तिलमुद्गमाषयवगोधूमादीनां सस्यमुष्टिग्रहणेषु न दोषः पथिकानाम्।।**
[४]**चणकव्रीहिगोधूमयवानां मुद्गमाषयोः।**
**अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेकोऽध्वनि स्थितैः।।**
[५]**निर्धनो धनसाध्येषु नित्येष्वपि कृतेषु च।**
**चौर्यादन्यैः कुमार्गैर्वा इज्यार्थं धनमाहरेत्।।**

स्थलकालविशेषे सर्वतः
प्रतिग्रहः

**सूर्यग्रहे कुरुक्षेत्रे मषीकृष्णाजिनादिकम्।**
**चण्डालात्प्रतिगृह्यापि यजेदावश्यकैर्मखैः।।**

एतत् वचनं यत्किंचिद्धनसंपादनेनाप्यावश्यकानि कर्तव्यानीत्येवंपरम्। मुक्ता. २२

(१) **मुक्ता.** ५५ सप्तर्षिसंवादे; **आन.** ६२३ सप्तर्षिसंवादे.
(२) **यसं.** ३३.
(३) **स्मृच.** २।४६८ स्मरणम्.
(४) **उ.** १।२८।३ स्मृत्यन्तरम्; **मुक्ता.** ५८ द्धैर्ग्र (द्धो ग्र) नि स्थितैः (निर्जितैः).
(५) **मुक्ता.** २२.

जीवनपर्याप्तमेव
प्रतिग्राह्यम्

[१]**स्थित्यर्थादधिकं गृह्णन् नरो भवति किल्बिषी।।**

तीरे प्रतिग्रहस्य
निषेधः

[२]**सार्धहस्तशतं यावत् परितस्तीरमुच्यते।**
**तत्र नारायणः स्वामी नान्यः स्वामी कथंचन।**
**तत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि।।**

गङ्गादिविक्रयनिषेधः

**गङ्गाविक्रयणाद्राजन् विष्णोर्विक्रयणं भवेत्।**
**विक्रीते तु जगन्नाथे विक्रीतं भुवनत्रयम्।।**

'सार्धहस्त... त्रयम्' इति वचनात् तत्र प्रतिग्रहः अधर्मजनकोऽपि क्षेत्रप्रतिग्रहे तत्तत्तीर्थवद्वाक्यविशेषाभावान्न क्षेत्रफलप्रतिबन्धः फलम्, किन्तु पुरुषार्थोऽधर्मः।

निप्र. २।२८९

अमन्त्रकर्तृकसमन्त्रक-
प्रतिग्रहनिषेधः

[३]**मन्त्रपूर्वं तु यद्द्रव्यममन्त्राय प्रदीयते।**
**दातुर्निकृत्य हस्तं हि भोक्तुर्जिह्वां निकृन्तति।।**

एतेन विद्यातपोहीनेन प्रीतिदायादिरूपमेव प्रतिग्रहीतव्यम्, न समन्त्रकप्रतिग्रहरूपमिति।

निप्र. २।२९४

वर्णभेदेन ग्राह्यभेदः शूद्र-
दातृकप्रतिग्रह-
निषेधश्च

[४]**पक्वान्नवर्जं विप्रेभ्यो गोर्धान्यं क्षत्रियादपि।**
**वैश्यस्य सर्वधान्यानि शूद्राद्ग्राह्यं न किंचन।।**

तथापि निर्गुणद्विजातिभ्यः प्रतिग्रह( ? हा)लाभे प्रशस्ताध्यापनयाजनासंभवे अयाचितशूद्रप्रतिग्रहासंभवे (च) शूद्रादपि याचितप्रतिग्रहः।

निप्र. २।२९९

(१) निप्र. २।२८३.
(२) निप्र. २।२८८-२८९.
(३) निप्र. २।२९४.
(४) निप्र. २।२९९.

तीर्थे प्रतिग्रहस्य निषेधः

[१]**तीर्थे पापं न कुर्वीत विशेषाच्च प्रतिग्रहम्।**
**दुर्जरं पातकं तीर्थे दुर्जरश्च प्रतिग्रहः।।**

ब्राह्मणोत्पत्तिः, ब्राह्मण-
प्रशंसा

[२]**ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः।।**
[३]**विप्रौघदर्शनात्सद्यः क्षीयन्ते पापराशयः।**
**वन्दनान्मङ्गलावाप्तिरर्चनादच्युतं पदम्।।**

अत्यापद्यसत्प्रतिग्रहः

[४]**यथाकथंचित्स आत्मानमुद्धरेदन्यत्र प्रत्यवायेभ्यः।।**

पापशमनार्थमर्जित-
द्रव्यदानम्

[५]**षष्ठांशं कर्षको दद्यात्पञ्चमांशं तथा वणिक्।**
**प्रतिगृह्य चतुर्थांशं दत्त्वा पापैः प्रमुच्यते।।**

वार्धुषिकलक्षणम्,
स्तेयापवादः

[६]**द्विजो निषिद्धया वृद्ध्या जीवन्वार्धुषिकः स्मृतः।।**
[७]**उपोषितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्।।**

दशविधविप्रलक्षणानि

[८]**देवो मुनिर्द्विजो राजा वैश्यशूद्रबिडालकाः।**
**पशुर्म्लेच्छश्च चाण्डालो दश विप्राः प्रकीर्तिताः।।**
**अध्यापकः स्वधर्मी च संतुष्टो विजितेन्द्रियः।**
**वेदशास्त्रार्थतत्त्वज्ञो देवविप्रः प्रकीर्तितः।।**
**अकृष्टफलमूलादिवन्याव( ? द)नरतः सदा।**
**स्वकर्मनिरतश्चैव स विप्रो मुनिरुच्यते।।***

* अतः परौ द्विजराजलक्षणभूतौ श्लोकौ परिभ्रष्टौ स्याताम्।
(१) **मुक्ता.** ५५ दुर्जरं (दुर्जनं) तीर्थे (तीर्थं) रश्च (राच्च) स्मृत्यन्तरे; **आन.** ६२५ स्मृत्यन्तरे.
(२) **विपा.** २।४८२ प्रयोगपारिजाते; **बाल.** १।९० पृ. २७९ णः स इति श्रुतिः (णो वेदवित्तमाः).
(३) **आपा.** ८४.
(४) **मेधा.** १०।१०३ स्मृतिः.
(५) **मुक्ता.** ४७४.
(६) **आन.** ३८०.
(७) **सिन्धु.** १३०९.
(८) **बाल.** १।९५ पृ. ३०५.

**व्यापारकर्मनिरतः पशूनां परिपालकः।**
**कृषिवाणिज्यकर्मा च स विप्रो वैश्य उच्यते।।**
**शस्त्रजीवी मसीजीवी देवलो ग्रामयाचकः।**
**धावकः पाककर्ता च स विप्रः शूद्र उच्यते।।**
**परकार्यनिहन्ता च दम्भकः स्वार्थसाधकः।**
**सर्वदा भवति क्रूरो विप्रो मार्जार उच्यते।।**
**भक्ष्याभक्ष्यसमो यस्तु वाच्यावाच्यसमश्च यः।**
**अगम्यागमनं + कर्ता स विप्रः पशुरुच्यते।।**
**वापीकूपतडागानां खनने सुरवेश्मनि।**
**उच्छेदने निराशङ्कः स विप्रो म्लेच्छ उच्यते।।**
**त्रिसंध्या च वृथा यस्य वेदो यस्य पराङ्मुखः।**
**क्रियाहीनश्च यो विप्रः स तु चाण्डाल उच्यते।।**

द्विजत्वविप्रत्वब्राह्मणत्व-
निमित्तानि

**[1]जन्मना जायते शूद्रः संस्कारेण द्विजोत्तमः।**
**वेदाभ्यासी भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः।।**
**[2]तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारकम्।**
**तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः।।**

सर्वेषां शब्दानां गुणसमूहे वृत्तिः। तपःश्रुतादिसंग्रहायात्र गुणशब्देन पराश्रितं धर्ममात्रमुच्यते। तत्र स्मृतिशास्त्राश्रयेण ब्राह्मणगुणानाह – तप इति। तपः चान्द्रायणादिकर्म, श्रुतं वेदवेदाङ्गादीनामध्ययनम्, योनिः ब्राह्मणात् ब्राह्मण्यां जन्म। इदं च दिक्प्रदर्शनम्। तेन याजनादेरपि संग्रहः। एतत् तपःप्रभृति ब्राह्मणकारकम्। शेषषष्ठीसमासः। तेन $'कर्तरि च' (पासू. २।२।१६) इति समासनिषेधो न। एषां ब्राह्मणोत्पादकत्वाभावेऽपि तद्व्यवहारकारणत्वम्। गुणसमुदायाभावेऽपि तदेकदेशे प्रयोगदर्शनादाह – तपःश्रुताभ्यामिति। नासौ परिपूर्णो ब्राह्मणः। ननु तल्लक्षणस्य तत्राभावे कथं ब्राह्मणपदप्रयोग इति चेन्न, योनिप्रतिपाद्यजातिरूपैकदेशाश्रयेण तत्र तत्प्रयोगसंभवात्। अयमेव जातिब्राह्मणपदार्थः। अत एव तस्य न सर्वब्राह्मणक्रियास्वधिकारः। तत्र गौणः प्रयोग इत्यत्र जातिपदं तात्पर्यग्राहकमिति यावत्।

बाल. १।९० पृ. २७९

+ ताच्छील्यार्थे तृन्। तेन न कर्मणि षष्ठी।

$ इयं रभसोक्तिः लेखकप्रमादो वा। अनेन कर्तृषष्ठ्याः समासः प्रकृताभ्यां तृजकाभ्यां सह निषिद्धः। तत्र कर्तृवाचिनोस्तृजकयोर्योगे कर्तृषष्ठीप्रयोगस्यासंभवात् अकर्तृवाचिनौ तौ ग्राह्यौ। तत्र तृचोऽकर्तृवाचकस्याभावात् तादृशस्याकस्य सद्भावाच्च अकर्तृवाचकेनाकेन सह कर्तृषष्ठ्याः समासनिषेधेऽस्य सूत्रस्य तात्पर्यं पर्यवसितम्। प्रकृते 'ब्राह्मणस्य कारकम्' इत्यत्राकः कर्तृवाचकः, अत एव षष्ठी न कर्तृवाचिका। तेनानयोः समासनिषेधो न प्रकृतसूत्रविषयः, किंतु 'तृजकाभ्यां कर्तरि' (पासू. २।२।१५) इत्यस्य विषयः। प्रकृतसूत्रोदाहरणं तु 'भवतः शायिका' इत्यादि। अत्राको भावे। शयनमित्यर्थः। षष्ठी कर्तरि।

(१) **यसं.** २३ स्मृतिः.
(२) **बाल.** १।९० पृ. २७९ महाभाष्ये.

असत्प्रतिग्रहप्रायश्चित्तम्

**[1]अज्ञानाद्यदि वा ज्ञानादसद्द्रव्यं प्रगृह्य तु।**
**सर्वं द्रव्यं समुत्सृज्य चान्द्रायणमथाऽऽचरेत्।।**

धर्मविक्रयस्वरूपम्, दानपुण्यविक्रेता भ्रूणहसमः,
शपथपणीकृतदानधर्मा सोमविक्रयिसमः,
मण्यादीनां प्रतिरूपकर्ता
भ्रूणहसमः

**[2]इष्टमध्यापितं पूर्तं तप्तं वा ह्यात्मनस्तपः।**
**प्रयच्छत्यपरेभ्यश्च धनार्थं धर्मविक्रयी।।**

यत्तु – 'इष्टमध्या.... धर्मविक्रयी।।' इति वरणव्यतिरेकेण स्वयमेव यागं कृत्वा जपं कृत्वा तपः कृत्वा परस्माद्धनलाभेन तद्विक्रीणीते, न कर्मणा तस्य वृत्तिः, स्वकृतापूर्वं विनश्यति, धनदातरि चापूर्वमुत्पद्यत इति कल्प्यते स धर्मविक्रयः। 'देवतानां गुरूणां च मातापित्रोस्तथैव च। पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित्।।' इति पुण्यदानविधौ पुण्यस्य कृतस्य दानेन स्वगतापूर्वं नश्यति, संप्रदानेऽपूर्वान्तरमुत्पद्यते, तत्र धर्मविक्रयः। यथा – 'तस्माद्यत्सुकृतं किंचिन्ममास्ति त्रिदशाधिप। तेन पुण्येन मुच्यन्तां पितरो यातनागताः।।' इति पुण्यदानम्। तथाच ययातेः स्वर्गप्रच्युतस्य दौहित्रदत्तपुण्येन स्वर्गगमनम्। एवं धर्मविक्रयः कृतस्य धर्मस्य मूल्यग्रहणपूर्वकं परस्मै दानम्। स च निषिद्धः, पुण्यविक्रये तप्तकृच्छ्रं कुर्यादिति प्रायश्चित्तविधानात्। तथाच शङ्खलिखितौ – 'चैत्यदेवगृहोद्याना-

(१) **आन.** ६२८ स्मरणात्.
(२) **निप्र.** २।३०८, ३१६.

रामसभाप्रपापुण्यतडागसेतुविक्रयं कृत्वा तप्तकृच्छ्रमाचरेत्' इति। तेन परार्थजपाद्याचरणं न धर्मविक्रयः, न याजनम्। तद्धनग्रहणं प्रतिग्रह एव।

निप्र. २।३०८, ३०९

**विक्रेता दानपुण्यानां प्रोच्यते भ्रूणहा बुधैः।**
**वक्ता च दानधर्माणां शपथे सोमविक्रयी।।**

दानपुण्यानां शपथे वक्ता 'एतन्मिथ्या(चेत्)मम दानपुण्यं नश्यति' इत्येवंरूपेण।

निप्र. २।३१६

**रक्तशुक्तिप्रवालानां मणीनां माक्षिकस्य च।**
**प्रतिरूपककर्ता च भ्रूणहा प्रोच्यते बुधैः।।**
**[१]वैश्यवच्छूद्रवृत्तिः।।**

एका वृद्धिर्न देया,
कुसीदव्यवहारेषु
मुहूर्ताः

**[२]एकां वृद्धिमनादेयां न दद्यान्नापि दापयेत्।।**
**[३]साधारणोग्रतीक्ष्णेषु स्वात्यां द्रव्यं न लभ्यते।**
**दत्तं प्रयुक्तं निक्षिप्तं नष्टं चेत्याह नारदः।।**
**[४]मृदुपुष्याश्विनीपौष्णादित्यद्वीशश्रुतित्रयम्।**
**निधाने संग्रहे वृद्धौ भूयात्स्थापनमन्धभे।।**
**द्रव्यादिस्थापने लग्नं सुखं च स्वं शुभान्वितम्।**
**भव्यं पापग्रहैर्मुक्तं धिष्ण्यमन्धमधोमुखम्।।**
**स्थापने तु धनादीनां पातालं शुभसंयुतम्।**
**हितप्रदं विशेषेण पापयुक्तं हि हानिकृत्।।**
**धनकेन्द्रत्रिकोणस्थैः सौम्यैः पापोज्झिते व्यये।**
**मञ्जूषायां वसनादौ द्रव्यादेर्धारणं शुभम्।।**
**[५]चरैः क्षिप्रैश्चरे लग्ने बुधे धर्मसुताष्टमे।**
**व्यवहारादिना द्रव्यप्रयोगो मुनिभिः स्मृतः।।**
**भरण्यां संग्रहं कुर्यात्पञ्चके ज्ञे त्रिपुष्करे।**
**ऋणकर्म चरैः क्षिप्रैर्ऋणच्छेदः कुजे हितः।।**

(१) **मभा.** २।४३ स्मृत्यन्तरम्.

(२) **मेधा.** ८।१५३.

(३) **ज्योनि.** २२२, २२७.

(४) **ज्योनि.** २२२.

(५) **ज्योनि.** २२७.

**चम्पके पञ्चगुणितं त्रिगुणं च त्रिपुष्करे।**
**यमले द्विगुणं प्रोक्तं हानिवृद्ध्यादिकं बुधैः।।**
**ऋणं भौमे न कुर्वीत न देयं बुधवासरे।**
**ऋणच्छेदं कुजे कुर्यात्संचयं सोमनन्दने।।**
**हस्तेऽर्कवारे संक्रान्तौ यदृणं स्यात्कुलेषु तत्।**
**वृद्धियोगे तथा ज्ञेयमृणच्छेदं तु कारयेत्।।**
**धनादिस्थापने क्रूरास्त्र्यायारिस्थाः खगो रविः।**
**विरन्ध्रान्त्ये शुभाः सौम्याः कृष्णोऽब्जो धनगो न सन्।।**

क्रयविक्रयव्यवहारेषु मुहूर्ताः,
पशुपालनसंबन्धि-
विधानानि

**[१]विपणिः स्यात्तनौ खेन्दुसिते पापैर्व्ययोज्झितैः।**
**द्रव्यकर्मायमूर्तिस्थैः शुभैः कुम्भोदयं विना।।**
**[२]भाद्रद्वयत्रिदशमन्त्रिदिवाकरेषु**
**मूलानिलोत्तरतुरंगमरेवतीषु।**
**सारङ्गपाणिरजनीकरमैत्रभेषु**
**लाभः सदैव भवति क्रयविक्रयाभ्याम्।।**
**[३]दशमैकादशे लग्ने वित्तकेन्द्रत्रिकोणकैः(? गैः)।**
**शुभैः पण्यस्य कर्मोक्तं वर्जयित्वा घटोदयम्।।**
**[४]चित्रोत्तरावैष्णवरोहिणीषु**
**चतुर्दशीदर्शदिनाष्टमीषु।**
**स्थानप्रवेशं गमनं विदध्यात्**
**पुमान्पशूनां न कदाचिदेव।।**
**[५]हस्तमूलविशाखासु रेवत्यां श्रवणे तथा।**
**मैत्रे च वारुणे श्रेष्ठं पशुक्रयणमुच्यते।।**
**[६]पूर्वात्रयामृतमयूखहुताशनेषु**
**इन्द्राग्निवाजिवसुवारुणशंकरेषु।**

(१) **ज्योनि.** २२२.

(२) **सिन्धु.** १२७२; **ज्योनि.** २२३ यत्रिदशमन्त्रि (यं त्रिदशमंत्रि) मैत्र (मित्र).

(३) **ज्योनि.** २२३.

(४) **सिन्धु.** १२७२ श्रीपतिः.

(५) **सिन्धु.** १२७२ चण्डेश्वरः.

(६) **सिन्धु.** १२७२-१२७३ चण्डेश्वरः; **ज्योनि.** २२८ इन्द्रा (चेन्द्रा) वारुणशं (धारुणशां).

**एतेषु गोमहिषदन्तितुरङ्गमादि -**

**नानाप्रकारपशुजातिगतिः प्रशस्ता।।**

**[1]आदित्यद्विवसुद्व्यन्त्यार्केन्द्रद्वीशैः क्रयादि गोः।**

**दर्शभूताष्टमीचित्राध्रुवकर्णार्कभाद्यसत्।।**

**सोमार्किवैधृतौ पाते लग्ने पञ्चानने बुधे।**

**भद्रासंक्रान्तिरिक्तासु पशुकर्म विवर्जयेत्।।**

**शुभग्रहोदये शुद्धे नैधने स्वर्क्ष योनिषु।**

**रक्षा वृद्धिक्रिया शस्ता पशूनां मुनिभिः स्मृता।।**

**नेन्दौ मन्दे सिंहलग्ने पशोर्यानप्रवेशने।**

**सोमे लग्ने बुधे गावो न चाल्यास्तुरगाः शनौ।।**

**नासत्यपौष्णकरपुष्यशिवाजपाद-**

**मूलाप्यसौम्यबहुलावसुमित्रभेषु।**

**वृद्ध्यै गवां हि दधिमन्थनमेषु कुर्या-**

**द्रिक्ताद्विपञ्चमदिनार्किकुजेन्दु हित्वा।।**

**[2]गौरवत्सा न दोग्धव्या न वेहद्गर्भसंधिनी।**

**प्रसूताया दशाहार्वाग्दोग्धि चेन्नरकं व्रजेत्।।**

**दुर्बला व्याधिसंयुक्ता पुष्पिका या विवत्सका।**

**साधुभिर्न च दोग्धव्या वर्णिभिर्धर्ममीप्सुभिः।।**

कृषिप्रशंसा

**[3]नाकृष्यतोऽतिथिः प्रियः।।**

क्षेत्रप्रवेशादिकृषिकर्मसु

मुहूर्ताः

**[4]तिष्योत्तरापवनरौद्रमघानुराधा-**

**चित्रायमेषु वृश्चिककर्कटेषु।**

**भद्रां विहाय नवमीं कुजजीवचन्द्र-**

**सौम्योदयांशदिवसेषु विशेद्धरित्रीम्।।**

तिष्यः पुष्यः। उत्तरा त्र्युत्तराणि। पवनः स्वाती। रौद्रम् आर्द्रा। मघा, अनुराधा, चित्रा स्पष्टा। यमः भरणी। एषु नक्षत्रेषु। भूप्रवेशः कर्तव्यः। आपा. १३५

(१) **ज्योनि.** २२८.

(२) **बाल.** १।११९ पृ. ३७४.

(३) **मेधा.** १०।८४.

(४) **आपा.** १३५ श्रीधरीये.

**[1]मन्त्रार्यश्विरोहिण्यामाहिर्बुध्न्ये कुजान्विते।**

**स्वात्युत्तरासु पुष्ये च रौद्रयाम्ये च चैत्रभे।**

**कुर्यात्प्रवेशनं भेषु प्रथमस्वीकृतासु च।।**

**[2]ओजाश्च तिथयः श्रेष्ठा नवमीपर्ववर्जिताः।**

**द्वितीयादशमीवर्ज्या युग्माः सर्वाः शुभावहाः।।**

**कुजजीवचन्द्रसौम्यो –**

**दयांशदिवसेषु विशेद्धरित्रीम्।।**

एतेषामुदयांशवारेषु धरित्रीं विशेत्, नेतरेष्विति।

आपा. १३६

**कुजसौम्येन्दुवागीशवारेषु शुभदं भवेत्।**

**मन्दवारेऽशके चैव इच्छन्ति क्ष्माप्रवेशनम्।।**

**शुक्रार्कवारं वर्ज्यं स्यात् स्थिरेषु शुभदं भवेत्।**

**अष्टमे दशमे वर्ज्या ग्रहाः सर्वे विशेषतः।।**

**केन्द्रे शुभावहाः सौम्याः शुक्रस्तु पञ्चमेषु( ? मेऽपि) च।**

**शुक्रज्ञजीवा लग्नस्थाः शुभदा भूप्रवेशने।।**

**पौष्णादित्युत्तरार्कासुरगुरुविधिषु**

**ज्ञार्यशुक्रेन्दुवारे**

**रिक्तां छिद्रां च पर्वद्वयमपि विरह-**

**य्य प्रवृद्धे शशाङ्के।**

**कृष्यारम्भं विदध्याज्झषवृषमृगयु-**

**क्कर्कटेषु प्रसन्नः**

**स्नात्वा संपूज्य धात्रीं जलकुसुमफलै-**

**र्दोहलैर्मन्त्रपूतैः।।**

अथैकेन श्लोकेन कृष्यारम्भमाह – पौष्णेति। पौष्णः रेवती। अदितिः पुनर्वसू। उत्तराः त्र्युत्तराणि। अर्कः हस्तः। असुरः मूलम्। गुरुः पुष्यः। विधिः रोहिणी। एतेषु नवसु नक्षत्रेषु कृष्यारम्भं कुर्यात्।...... अथ वारा विधीयन्ते - ज्ञार्यशुक्रेन्दुवार इति। ज्ञः बुधः। आर्यः बुधः ( ? गुरुः)। शुक्रः प्रसिद्धः। इन्दुः चन्द्रः। एतेषां वारेषु कृषिं कुर्यात्। ..... अथ तिथयो विशिष्यन्ते – रिक्तां छिद्रां च पर्वद्वयमपि विरहय्येति। रिक्ताः चतुर्थीनवमीचतुर्दश्यः। छिद्राः द्वितीया-दशमीव्यतिरिक्ता युग्मास्तिथयः। पर्वद्वयं पौर्णमास्यमावास्ये।

(१) **आपा.** १३५ विधिरत्ने.

(२) **आपा.** १३६ नृसिंहः.

एताश्च हित्वा शेषास्तिथयो विहिताः। .... 'कृष्यारम्भं विदध्यात्' इत्यत्राऽऽरम्भशब्देन प्रथमदिवसे § ईक्षणमात्रं कर्तव्यम्, कर्षणं न कुर्यादित्युच्यते। तथाऽह वसिष्ठः– 'प्राङ्मुखोदङ्मुखो भूत्वा प्रारभेच्च कृषिं स्वयम्। एकां तिस्रोऽथवा पञ्च पक्षादृगधरेखाः (?) सुपूजिताः। अत ऊर्ध्वं न कुर्यात्तत्कृष्यारम्भणवासरे।।' इति। .... अथ राशयो विधीयन्ते – झषवृषमृगयुक्कर्कटेष्विति। झषः मीनः। वृषः प्रसिद्धः। मृगः मकरः। युक् मिथुनम्। कर्कटः प्रसिद्धः। एतेषु पञ्चसु राशिषु कृष्यारम्भं कुर्यात्। .... प्रसन्नः स्नात्वा इत्यत्र प्रसन्नशब्देनान्तःशुद्धिः, स्नात्वा इत्यनेन बाह्यशुद्धिः कर्मणि(? कर्मकर्तु)रुच्यते। 'संपूज्य धात्रीं जलकुसुमफलैर्दोहलैर्मन्त्रपूतैः' इति अत्र समन्त्रकैर्जलकुसुमफलैर्दोहलैः प्रसादनार्थं कुसुमपल्लवयुक्तं जलग्रहणमुच्यते। .... दोहलशब्देन करीष उच्यते, 'दोहलश्च करीषः स्यात्' इति वैजयन्तीदर्शनात्।

आपा. १३६-१३८

**त्रीण्युत्तराणि हस्ताजे मूलादित्ये च रेवती।**
**पुष्यस्तथाऽनुराधा च कृषिकर्मणि पूजिताः।।**
**[1]क्षिप्रचरस्थिरमृदुभि-**
**र्मूलविशाखामघाभिरपि कुर्यात्।**
**उडुभिः कर्षकवृद्ध्यै**
**हलप्रवाहं प्रथममेव च(? वाऽत्र)।।**

(अत्र ?) क्षिप्राः पुष्याश्विहस्ताः। चराः श्रवणादित्रिकपुनर्वसुस्वात्यः। स्थिराः उत्तरात्रयं रोहिणी च। मृदवः मैत्रमृगशीर्षचित्रारेवत्यः। मूलविशाखामघाः प्रसिद्धाः।

आपा. १३६

**[2]मृदुध्रुवक्षिप्रचरेषु मूलविद्याविशाखासहितेषु भेषु।**
**हलप्रवाहं प्रथमं विदध्यात्।।**
**अर्काक्रान्तगतागतान्यनडुहां**
**नाशाय भान्यग्रतो**
**वृद्ध्यै भत्रितयं ततस्तु कृषिकृद्-**
**घाताय शूलत्रये।**
**धिष्ण्यानां नवकं तदन्तरगते**
**स्यातां श्रियै पञ्चके**
**स्यात्पुच्छे द्वितयं तदत्र कथितं**
**चक्रे शुभे लाङ्गले।।**

अर्काक्रान्तं सूर्याधिष्ठितनक्षत्रम्। गतागते तदपेक्षया पूर्वोत्तरनक्षत्रे। एतेषु लाङ्गलचक्रस्याऽऽदौ स्थितेषु नक्षत्रेषु प्रारब्धा कृषिरनडुहां नाशाय भवति। अग्रतो वृद्ध्यै भत्रितयमिति। अर्कागतनक्षत्रापेक्षया चक्रस्याग्रस्थितनक्षत्रत्रये प्रारब्धा कृषिर्वृद्ध्यै भवति। ततस्तु कृषिकृद्घाताय शूलत्रये धिष्ण्यानां नवकमिति। चक्रस्याग्रस्थितनक्षत्रापेक्षया चक्रस्य शूलत्रयस्थितनक्षत्रनवके प्रारब्धा कृषिः कृषिकृन्नाशाय भवति। तदन्तरगते स्यातां श्रियै पञ्चके इति। चक्रस्य पार्श्वद्वयस्थितदंश(§? दष्ट)नक्षत्रनवकापेक्षया चक्रस्य पार्श्वद्वयस्थितपञ्चकद्वये दशसु नक्षत्रेषु प्रारब्धा कृषिः श्रियै भवति। स्यात्पुच्छे द्वितयं तदत्र कथितं चक्रे शुभे लाङ्गले इति। चक्रस्य पार्श्वद्वयस्थितदशनक्षत्रापेक्षया चक्रस्य पुच्छस्थितनक्षत्रद्वये प्रारब्धा कृषिः श्रियै भवति।

आपा. १३६-१३७.

**[1]शुक्रार्केन्दुजजीवानां वाराः शोभनदाः सदा।**
**मन्दारवारौ वर्ज्यौ च सोमवारस्तु मध्यमः।**
**शुभवारेषु सूर्ये(? सर्वे)षु कृषिकर्म शुभावहाः**
**(? हम्)।।**

कृषिकर्मादौ विनायक-
पूजादि

**[2]विनायकं च संपूज्य प्राङ्मुखो वाऽप्युदङ्मुखः।**
**आरभेत कृषिं पश्चात्................. ।।**
**[3]बलभद्रं समृद्ध्यार्थी सीरकर्मणि कीर्तयेत्।**
**जगत्पतिमपत्यार्थी रचु(? स तु)भक्त्या न सीदति।।**

---

§ वक्ष्यमाणवसिष्ठवचनानुरोधेन 'ईक्षणमत्र कर्तव्यम्, प्रतिकर्षणं न' इति शुद्धपाठः संभाव्यते। ईक्षणं पूर्वोक्तनक्षत्रादेः।

(१) **आपा.** १३६-१३७ लल्लः.

(२) **आपा.** १३६ श्रीपतिः.

§ पार्श्वद्वयस्थितनक्षत्रदष्टं तन्नक्षत्रमध्यपतितं नक्षत्रनवकमित्यर्थः।

(१) **आपा.** १३७ नृसिंहः.

(२) **आपा.** १३८ विधिरत्ने.

(३) **आपा.** १३९ चन्द्रिकायाम्.

बीजावापादिमुहूर्तः, धार्मिककृत्यम्,
प्रशस्ता हालिकवृषाः,
शुभाशुभनिमित्तानि

[1]मैत्राश्विनीगुरुकरादितिधातृमूल-
शाक्रोत्तरापितृशशाङ्कविशाखपौष्णम्।
शस्तं प्रवर्तनविधौ कथितं हलस्य
बीजप्रवापणविरोपणसंग्रहेषु।।
चन्द्रे शुभे शुभतिथौ शुभवारयोगे
वारे गुरौ शशिजशुक्रगभस्तिसोमे।
लग्ने वृषे मिथुनके झषकन्यकायां
शस्तं कृषिप्रकरणं प्रवपेच्च धान्यम्।।
दशम्येकादशी चैव तृतीया च त्रयोदशी।
सप्तमी पञ्चमी चैव प्रतिपच्च सुखावहा।।
हन्त्यष्टमी बलीवर्दान्नवमी सस्यघातिनी।
चतुर्थी कीटजननी पतिं हन्ति चतुर्दशी।।
रवौ बृहस्पतौ चन्द्रे शुक्रे चैव विशेषतः।
बुधार्क( ? किं)भूमिपुत्राश्च न भवन्ति फलप्रदाः।।
शस्तासु चन्द्रतारासु शुचिः शुक्लेन वाससा।
स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः।।
पृथिवीं ग्रहसंयुक्तां पूजयित्वा प्रजापतिम्।
अग्निं प्रदक्षिणीकृत्य दीयते च प्रदक्षिणम्।।
शुक्लौ वृषौ नियोक्तव्यौ नवीनैश्च युतेन वा।
हेमनिर्घृष्टफालाग्रं छिन्नरेखं न कारयेत्।।
उत्तराभिमुखो भूत्वा क्षीरेणार्घ्यं प्रदापयेत्।
विबलं छिन्नलाङ्गूलं कपिलं वृषभं त्यजेत्।।
हलप्रवाहणं कार्यं निरग्निर्वृषकर्षकैः।
हलादिभिर्दृढैः क्षेमं कुदृढैर्न शुभं वदेत्।।
वृषभा यदि युध्येरंस्तस्य विघ्नः सदा भवेत्।
तस्मात्सर्वप्रकारेण निर्विघ्नं कारयेत्सदा।।
एका जयकरी रेषा तृतीया चार्थवृद्धिदा।
पञ्चमी च भवेद्रेखा बहुसस्यफलप्रदा।
अत ऊर्ध्वं न कर्तव्या महादोषस्ततो भवेत्।।
स्मर्तव्या वसवः शुक्रः पृथू रामः सचन्द्रमाः।
पराशरो हली चैव सर्वविघ्नोपशान्तये।।

(१) ज्योनि. २२४-२२५.

हले प्रवाह्यमाणे तु कूर्म उत्पद्यते यदि।
गृहिणी म्रियते तस्य ततोऽग्नेश्च भयं वदेत्।
ईषाभङ्गो यदा क्रष्टुः संशयो जीवितस्य च।।
सुतनाशो युगे भग्ने समाने म्रियते शिशुः।
योक्त्रच्छेदे तु व्यासङ्गः सस्यहानिश्च जायते।।
हले प्रवाह्यमाणे तु गौरेकः प्रपतेद्यदि।
प्रपतेद्युक्तमात्रस्तु बन्धनं च प्रयच्छति।।
ज्वरातिसारयोगेण कृषिभङ्गं विनिर्दिशेत्।
प्रवहेद्युक्तमात्रस्तु ततो गौः खनते यदि।
न वेद युक्तमात्रस्तु तदा सस्यं चतुर्गुणम्।।
सबलेऽब्जे सिते पापैर्विबलैर्लग्नगे गुरौ।
सद्दिने जलभे चन्द्रे कृषिकर्म शुभावहम्।।
त्रित्रित्रिपञ्चरामेषु त्रित्रिभान्यर्कभुक्तभात्।
अशुभं च शुभं ज्ञेयं कृषिकर्मण्यनुक्रमात्।।
[1]बीजानां वापनं क्षौरं वास्तुकर्म कृषिं तथा।
रात्रौ विप्रो न कुर्वीत कुर्वन् क्षिप्रं विनश्यति।।
[2]हस्तस्वातीविरिञ्चासुरपितृमुरजि-
न्मित्रपौष्णार्थ( ? र्य)सूर्य-
यादोनाथोत्तरासु क्रिययुवतिधनु-
र्वृश्चिकान् भद्ररिक्ते।
हित्वा पर्वासुरेज्यामरगुरुशशिवि-
द्वारलग्नांशके स्या-
दुक्तर्तौ बीजवापं मदसितमपहा-
याष्टमे शुद्धियुक्ते।।

हस्तस्वात्यौ प्रसिद्धे। विरिञ्चः रोहिणी। असुरः मूलम्। पितृ ( ? ता) मघा। मुरजित् श्रवणम्। मित्रः अनुराधा।... क्रिय.... कानिति। क्रियः मेषः। एतान् राशीन् हित्वा शेषेषु राशिषु बीजवापनं कुर्यात्। ... अथ तिथिविधिमाह - भद्र ... पर्वेति। भद्राः द्वितीयासप्तमीद्वादश्यः, रिक्ताः चतुर्थीनवमीचतुर्दश्यः, पर्व अमावास्या पौर्णमासी चे - त्येतास्तिथीर्हित्वा शेषास्तिथयो विहिता इति। .... अथ वारांशादय उच्यन्ते - असु .... स्यादिति। असुरेज्यः

(१) मुक्ता. ४६६ सारसमुच्चये; आन. ६५४-६५५ सारस-मुच्चये.

(२) आपा. १४०.

शुक्रः। एतेषां वारलग्नांशकेषु बीजवापः स्यात्। ... अथ ऋतवो विधीयन्ते - उक्तर्तौ बीजवापमिति। .... अथ लग्नगोचरमाह - मद ... युक्त इति। मदः सप्तमः, तत्र स्थितं शुक्रमपहायाष्टमे लग्ने सर्वग्रहरहिते बीजवापलग्नं स्यादिति। आपा. १४०-१४१

**[१]विशाखाभरणीमूलकृत्तिकासु मघासु च।**
**त्रिपूर्वासु सदा सौख्यकरं बीजादिवापनम्।।**
**रोहिण्यार्द्रा .... पुष्यः श्रवणो वारुणो वसुः।**
**एतास्तारा विवर्ज्याः स्युस्त्वङ्ग बीजादिवापने।।**
**[२]मघां च फाल्गुनीं पूर्वामनुगच्छेद्यदा रविः।**
**तदा तिलान् कुलत्थादि मुद्गान्माषांश्च वापयेत्।।**
**हस्तं चित्रां तथा स्वाती(?ति)ऋक्षं गच्छेद्यदा रविः।**
**तदा मसूरनिष्पावान् गोधूमान्वापयेत्सदा।।**
**अनेन विधिना बीजं प्रकीर्णं तु महीतले।**
**प्रयच्छति फलं काले प्रभूतं निरुपद्रवम्।।**
**शशी बन्ध्वर्थपुत्रस्त्रीभ्रातृधर्मायगः शुभः।**
**शुभाः षष्ठाष्टमे वर्ज्याः शेषस्थाने शुभावहाः।**
**नेष्टाः सर्वेऽष्टमे स्थाने शुक्रो नष्टश्च कामगः।।‡**
**[३]रोहिणीरेवतीहस्तपुष्यमैत्रोत्तरासु च।**
**बीजं तु वापयेत्तस्माद्यदीच्छेत्सस्यसंपदः।।**
**मूषकाणां भयं भौमे मन्दे शलभकीटयोः।**
**न वपेच्च तिथौ रिक्ते हीने सोमे विशेषतः।।**
**वृषलग्नेऽथवा मीने कन्यायां मिथुनेऽथवा।**
**वापयेत्सर्वसस्यानि यदीच्छेत्सस्यसंपदः।।**
**[४]मूर्ध्नि त्रीणि गले त्रयं च जठरे**
**धिष्ण्यानि च द्वादश**
**स्यात्पुच्छे च चतुष्टयं बहिरतो**
**भानां स्थितं पञ्चकम्।**
**कीटः कज्जलमन्नवृद्धिरधिका**
**निस्तण्डुलत्वं क्रमात्**
**स्यादीतिप्रभवं भयं न फणितो**
**बीजोप्तिकालेऽर्कभात्।।**

धान्यलवनमुहूर्तः

**[१]ज्येष्ठायमाग्निभुजगानिलविश्वभानां**
**गुर्वर्यमावरुणशंकररेवतीनाम्।**
**विष्ण्वादिहीनसुतिथौ शुभवारयुक्ते**
**लग्ने शुभे च लवनं प्रथमं प्रशस्तम्।।**

लवनं छेदनम्। आपा. १४२

**[२]कर्माधानर्क्षयोः सौख्यं जन्मर्क्षं तु विनाशदम्।।**
**द्वादश्येकादशी रिक्ता वर्ज्या अशुभदाऽष्टमी।**
**शकुन्यादीनि विष्टिं च लवने च विवर्जयेत्।।**
**शुभानां राशयः श्रेष्ठा वर्गाश्चैव शुभावहाः।**
**मेषवृश्चिकयोः पर्णप्रसूनाद्याः शुभावहाः।।**
**कृषेः फलानां शस्तं स्याद्रात्रौ सर्वविनाशनम्।।**
**[३]कर्कटे वृश्चिके वाऽपि लवनं संप्रशस्यते।**
**सर्वराशिषु वा शस्तं यदि बन्धुगते गुरौ।।**

बन्धुगतः चतुर्थगतः। आपा. १४२

**चरवर्गांशकाद्यास्तु वर्ज्या भूमिजमन्दयोः।**
**शेषाः सुधिर(?) वर्गांशाः शुभदा लक्षण-**
**(? लवन)..।।**
**[४]त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः।**
**लवने शुभदा रन्ध्रे सर्वे सर्वविनाशदाः।।**
**लाभे गते भृगौ वा स्याद्यदि कामान्विते गुरौ।**
**भृगौ लग्नेऽथवा चन्द्रे लवनं प्रथमं शुभम्।।**

कामान्वितः सप्तमान्वितः।

आपा. १४२

**[५]धान्यानां लवनं कुर्याद्गुरौ शुक्रे च सर्वदा।**
**रिक्तावर्जं तु शेषाश्च तिथयः स्युः शुभावहाः।।**

---

‡ बीजनिर्वपणे इति प्रकृतम्।
(१) **आपा.** १४० अर्णवे.
(२) **आपा.** १४१ नृसिंहः.
(३) **ज्योनि.** २२५.
(४) **ज्योनि.** २२५-२२६ श्रीपतिः.

(१) **आपा.** १४२ श्रीधरीये.
(२) **आपा.** १४२ नृसिंहः.
(३) **आपा.** १४२ विधिरत्ने.
(४) **आपा.** १४२ नृसिंहः.
(५) **ज्योनि.** २२६-२२७.

रेवतीहस्तमूलेषु श्रवणे भाग्यमैत्रयोः।
पितृदैवे तथा सौम्ये धान्यच्छेदे भृगूदये।।
अनूराधा तथा ज्येष्ठा रेवती धान्यकर्तने।
केवले सिंहलग्ने च तथैव च गुरूदये।।
धान्यानां लवनं कुर्यात्तथा लग्नेन्दुसंगमे।
सर्वेषामपि वृक्षाणां प्राह श्रेष्ठतमं मुनिः।।
सपत्रौ माषमुद्गौ च यवधान्ये सकञ्चुके।
छिन्द्यात्तिलं च निष्पन्नमेतत्पाराशरं मतम्।।
रोहिणी रेवती मूलं स्वाती हस्तो मृगस्तथा।
आषाढोत्तरयुक्ता च तथा भाद्रपदा मता।।
वेधने सर्वबीजानां तथा शालप्रवेशने।
दुःखदा धनदा चैवानुराधोत्तरफल्गुनी।।

मेथीप्रकृतिवृक्षाः, राजादिदेया धान्यभागाः

वटश्च सप्तपर्णश्च गम्भारी शाल्मली तथा।
औदुम्बरी तथा धात्री या चान्या क्षीरवाहिनी।।
स्त्रीनाम्नी कर्षकैर्नित्यं मेथी कार्या फलप्रदा।।
[1]राज्ञो दत्त्वा तु षड्भागं देवानां चैकविंशकम्।
विंशद्भागं ब्राह्मणानां कृषिं कुर्वन्न दुष्यते।।

धान्यसंग्रहशोषणकोष्ठनिक्षेप-कोष्ठनिष्कासन-मुहूर्ताः

[2]धान्यसंग्रहणं वक्ष्ये सर्वधान्यसमृद्धये।
उत्तरायणगे सूर्ये दक्षिणायनगेऽपि वा।।
शरद्वसन्तहेमन्तग्रीष्माश्चैव शुभावहाः।
रिक्तादर्शाष्टमीछिद्रास्तिथयस्तु विगर्हिताः।।
शेषाः शुभावहा ज्ञेया धान्यसंग्रहणे सदा।
शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत्।।
नित्ययोगेषु सर्वेषु शुभेषु शुभदं भवेत्।।

शुभेषु नित्ययोगेषु व्यतीपातादिव्यतिरिक्तेषु शुभयोगेषु।

आपा. १४४

(१) आपा. १४३.
(२) आपा. १४४ नृसिंहः.

[1]स्थिरराशिषु वृद्धिः स्यादुभये उभयं भवेत्।
चरराशि(षु) वर्ज्यं स्याद्धान्यसंग्रहणं तथा।।
भौमारवारवर्गाद्याः वर्ज्याः स्युर्धान्यसंग्रहे।
बुधवारादिवर्गाश्च मध्यमा इति कीर्तिताः।।
जीवमन्देन्दुशुक्राणां वारवर्गादयः शुभाः।
सौम्याः केन्द्रत्रिकोणस्थाः शुभदा धान्यसंग्रहे।।
त्रिषडायगताः पापा विशेषेण विवृद्धिदाः।
मन्ददृष्टे स्थिरे राशौ कुर्याद्वा धान्यसंग्रहम्।
मन्दोदये च राहौ च तथैव कुलिकोदये।।
धान्यसंग्रहणं कुर्यान्न रिक्तासु न विष्टिषु।।
[2]रोहिण्यार्द्रामघाहस्तभरणीश्रवणेषु च।
मन्ददृष्टे स्थिरे लग्ने धान्यसंग्रह इष्यते।।
[3]नक्षत्रेषूर्ध्ववक्त्रेषु स्थिरांशेषु स्थिरेषु च।
जीवमन्दयुते दृष्टे कारयेद्धान्यसंग्रहम्।।

अत्र ऊर्ध्वनक्षत्राण्युक्तानि श्रीपतिना – 'पुष्यार्द्राश्रवणोत्तराशतभिषग्ब्राह्मश्रविष्ठाह्वयान्यूर्ध्वास्यानि भवोदितानि (मुनि)भिर्धिष्ण्यान्यथैतेषु तु।' इति।

आपा. १४४

[4]मन्दोदये गुरौ चास्ते सितेन्दौ वा गते रवौ।
धान्यपर्वतयोगोऽयं तद्वद्धान्यविवृद्धये।।
[5]रोहिण्युत्तरपुष्येषु भरणीशक्रनैर्ऋते।
पौष्णार्काश्विविशाखासु हरिमित्रपुनर्वसौ।।
चित्रासु च मघायां च जीवार्केन्दुभृगोर्दिने।
अरिक्तायां तिथौ चैव सस्यानां संग्रहो हितः।।
[6]माघे वा फाल्गुने वाऽपि सर्वबीजानि संग्रहेत्।
शोषयेत्तापयेद्रौद्रं रात्रावुपनिपातयेत्।।
दीपाग्निधूमसंस्पृष्टं वृष्ट्या चोपहतं च यत्।
वर्जनीयं सदा बीजं कुरुण्डेनान्वितं च यत्।।

(१) आपा. १४४.
(२) आपा. १४४; ज्योनि. २२६ भरणी (रेवती) दृष्टे स्थि (दृष्टिस्थि).
(३) आपा. १४४.
(४) आपा. १४४ नृसिंहः.
(५) ज्योनि. २२६.
(६) ज्योनि. २२७.

[1]हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये।
स्थिरलग्ने गुरोर्वारि बीजं धार्यं ज्ञशुक्रयोः।।
[2]ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा।
लेखयित्वा इमं मन्त्रं धान्यागारे निधापयेत्।।
सस्यवृद्धिं परां कुर्यात्पूजितं प्रतिपूजयेत्।।
[3]यमादितिमघाज्येष्ठात्र्युत्तरासु च कारयेत्।।
मीनलग्ने शुभे ऋक्षे निधने क्रूरवर्जिते।
निक्षेप्यं कोष्ठके धान्यं गर्गो वदति सर्वदा।।
त्रिषूत्तरेषु रोहिण्यां धनिष्ठावारुणेषु च।
एतेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः।।

धान्यव्ययमुहूर्तः

[4]व्ययमपि सस्यधनानां न बुधा बुधवासरे कुर्युः।
शनिवारे च नो कार्यो धनधान्यव्ययो बुधैः।।
[5]अश्विन्यां च पुनर्वस्वोर्मैत्रे च त्र्युत्तरासु च।
त्रिपूर्वासु धनिष्ठासु सौम्यश्रवणपौष्णभे।।
धान्यानां तु व्ययं कुर्याद्वृद्धिमिच्छन् गुरावपि।
कृत्तिकारोहिणीरौद्रचित्राज्येष्ठाख्य(?)नैर्ऋते।।
स्वातीशतभिषायाम्या निन्दितास्तद्द्वये तथा।
शेषाणि मध्यमान्याहुर्धान्यदानव्ययेषु च।।
दर्शाष्टमी तथा रिक्ता वर्ज्याः शेषाः शुभावहाः।
केचिद्रिक्तां प्रशंसन्ति धान्यादीनां व्ययेषु च।।
शकुन्यादीनि विष्टिं च वर्जयेत्सततं नरः।
नित्ययोगेषु सर्वेषु सर्वदा शुभदं भवेत्।।
आदित्यमन्दभौमानां वारवर्गास्तु निन्दिताः।
शेषाश्च शुभगाः.... केचित्सौख्यं प्रशस्यते।
स्थिरोभयचराः श्रेष्ठा मध्या निन्द्याः क्रमाद्द्वये।।
त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः।
शुभदाश्च ग्रहाः सर्वे नेष्टा रन्ध्रगताः सदा।।

सेवारम्भस्य भृत्यादि-
संग्रहस्य च
मुहूर्तः

[1]रोहिण्युत्तरपौष्णेषु वसुवारुणयोरपि।
सेवेत स्वामिनं भृत्यः शुभवारोदये तथा।।
[2]दासीदासादिभृत्यानां कुर्यात्संग्रहणं बुधे।
स्थिरलग्ने शुभैर्दृष्टे मन्दवारे विशेषतः।।

---

(१) सिन्धु. १२६९ चण्डेश्वरः; ज्योनि. २२६-२२७ द्वितीयचरणे (रेवतीश्रवणद्वये) स्थिरल (स्थिरे ल).
(२) सिन्धु. १२६९ चण्डेश्वरः.
(३) ज्योनि. २२७.
(४) सिन्धु. १२७०.
(५) आपा. १४४-१४५ क्रमेण श्रीपतिः.

(१) सिन्धु. १२७१ चण्डेश्वरः.
(२) सिन्धु. १२७१ ज्योतिर्निबन्धे.

# संकरजाः तद्धर्मवृत्तयश्च

## जातिविचारः

(१) अथ सवर्णासवर्णाविवाहप्रसङ्गेन बुद्ध्याऽऽरूढानामनुलोमप्रतिलोमजातानां व्यवहारोपयोगिसंज्ञाप्रतिपत्त्यर्थं जातिभेदो निरूप्यते। तत्र याज्ञवल्क्यः – 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः। अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः।।' (यास्मृ. १।९०) इति। सजातयः मातापितृसमानजातीयाः। मनुरपि – 'सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते।।' (मस्मृ. १०।५) इति। ब्राह्मणदंपतिभ्यामुत्पन्नो जात्या ब्राह्मणो भवेत्। एवं क्षत्रियादिष्वपि। देवलोऽपि – 'ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत्। एवं क्षत्रियविट्शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजाः।।' इति। असवर्णास्वनुलोमजानाह मनुः – 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्। सदृशानेव तानाहुर्मातृदोषविगर्हितान्।।' (मस्मृ. १०।६) इति। ऊढायां क्षत्रियायां ब्राह्मणादुत्पन्नो ब्राह्मणसदृशः, न तु मुख्यब्राह्मणः, हीनजातीयमातृसंबन्धात्। एवमन्यत्रापि। ते चानुलोमजा मूर्धावसिक्तादिजातिभेदेन षड्विधाः। ते च याज्ञवल्क्येन दर्शिताः – 'विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्। अम्बष्ठः §शूद्र्यां निषादो जातः पारशवोऽपि वा।। वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ। वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः।।' (यास्मृ. १।९१-९२) इति। तत्र ब्राह्मणाज्जातास्त्रयः, क्षत्रियात् द्वौ, वैश्यादेकः। तदुक्तं मनुना – 'विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः। वैश्यस्य वर्ण एकस्मिन् षडेतेऽपशदाः स्मृताः।।' (मस्मृ. १०।१०) इति। मुख्यपितृजात्यभावात् अपशदाः। ननु मूर्धावसिक्तत्वादीनि न जात्यन्तराणि, अनुलोमजानां मातृजातीयत्वात्। तदाह विष्णुः – 'समानवर्णासु पुत्राः समानवर्णा भवन्ति। अनुलोमजास्तु मातृसवर्णाः। प्रतिलोमजास्त्वार्यविगर्हिताः।'(विस्मृ. १६।१-३) इति। शङ्खोऽपि – क्षत्रियायां ब्राह्मणेनोत्पन्नः क्षत्रिय एव भवति। 'क्षत्रियाद्वैश्यायां वैश्य एव भवति। वैश्येन शूद्र्यां शूद्र एव भवति।' इति। नैष दोषः, अनयोर्वचनयोर्मातृजात्युदितधर्मप्राप्त्यर्थत्वात्, अन्यथा बीजोत्कर्षवैयर्थ्यापत्तेः। यथा क्षेत्रापकर्षः उत्कृष्टजातिनिवारकः एवं बीजोत्कर्षोऽपि निकृष्टजातिं कुतो न निवारयेत्? तस्मात् जात्यन्तराण्येव मूर्धावसिक्तत्वादीनि। ननु देवलेनानुलोमजातयोऽन्यथा वर्णिताः – 'ब्राह्मणात् क्षत्रियायां तु सवर्णो नाम जायते। क्षत्रियाच्चैव वैश्यायां जातोऽम्बष्ठ इति स्मृतः।।' इति। नायं दोषः, एकस्यामेव जातौ मूर्धावसिक्तसवर्णसंज्ञयोर्विकल्पेन प्रवृत्तत्वात्। एवमम्बष्ठादिष्वपि। न चैकत्र संज्ञाविकल्पे दृष्टान्ताभावः शङ्कनीयः, एकत्र निषादपारशवसंज्ञाविकल्पस्य मनुदेवलयाज्ञवल्क्यैरुदाहृतत्वात्। प्रतिलोमजास्तु मनुना दर्शिताः – 'क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः। वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ।। शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः।। आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम्। प्रातिलोम्येन जायन्ते शूद्रादपशदास्त्रयः।। वैश्यान्मागधवैदेहौ क्षत्रियात् सूत एव च। प्रतीपमेते जायन्ते परेऽप्यपशदास्त्रयः।।' (मस्मृ. १०।११-१२, १६-१७) इति। देवलोऽपि – 'शूद्रादायोगवः क्षत्ता चण्डालः प्रतिलोमजाः। वैश्यायां क्षत्रियायां च ब्राह्मण्यां च यथाक्रमम्।। तथैव मागधो वैश्याज्जातो वैदेहकस्तथा।

---

§ इदमत्रावधेयम् – प्रकरणस्यास्य जातिविषयत्वात् ब्राह्मणादयः शब्दाः पुंसि स्त्रियां च जातिवाचका एव प्रयुज्यन्ते। तत्र शूद्रशब्दः स्त्रियां 'शूद्रा, शूद्री' इति द्विधा प्रयुक्तो दृश्यते। तावुभावपि व्युत्पन्नौ। तत्र शूद्राशब्दो जातिङीषोऽपवादकेन 'शूद्रा चामहत्पूर्वा जातिः' इतिवार्तिकविहितेन जातौ टापा व्युत्पाद्यते। तत्र जातिबोधः शाब्दः। शूद्रीशब्दस्तु पुंयोगे ङीषा व्युत्पन्नः। पुंयोगश्च न दंपतिभाव एव, किंतु जन्यजनकभावोऽपि गृह्यते। अतः शूद्रीशब्देनास्मिन्प्रकरणे जारजस्थलेषु शूद्रपत्नी, तदतिरिक्तस्थलेषु शूद्रकन्या बोध्यते। उभयत्र शूद्रत्वजातिबोधस्तूत्सर्गतः पत्न्याः शूद्रात्वेन कन्यायाः शूद्राजातत्वेन चाऽऽर्थिक इति बोध्यम्।

ब्राह्मण्यां क्षत्रियाज्जातः सूतो जात्या न कर्मणा।।' इति। याज्ञवल्क्योऽपि – 'ब्राह्मण्यां क्षत्रियात् सूतो वैश्याद्वैदेहकस्तथा। शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः।। क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव च। शूद्रादायोगवं वैश्या जनयामास वै सुतम्।।' (यास्मृ. १।९३-९४) इति। वर्णानामनुलोमजानां प्रतिलोमजानां च परस्परसांकर्येणोत्पन्नाः श्वपाकपुल्कसकुक्कुटादयो जातिविशेषास्त्वनेकविधाः। ते च तद्वृत्तयश्च पुराणसारे प्रपञ्चिताः। तेषु च जातिविशेषेषूत्तमाधमभावं विविनक्ति देवलः – 'तेषां सवर्णजाः श्रेष्ठास्तेभ्योऽन्वगनुलोमजाः। अन्तराला बहिर्वर्णाः पतिताः प्रतिलोमजाः।।' इति। विजातीयान्मिथुनादुत्पन्ना अन्तरालाः। ते च द्विविधाः – अनुलोमजाः प्रतिलोमजाश्च। तत्रानुलोमजाः सवर्णजेभ्यो हीना अपि न वर्णबाह्याः, मातृसमानवर्णत्वात्। प्रतिलोमजास्तु वर्णबाह्यत्वात् पतिताः अधमाः। याज्ञवल्क्योऽपि – 'असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः।'(यास्मृ. १।९५) इति। क्वचिदधमजातेरप्युत्तमजातिप्राप्तिर्भवति। तदाह स एव – 'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।' (यास्मृ. १।९६) इति। कूटस्थस्त्रीपुंसयुगमारभ्य परिगणनायां पञ्चमे षष्ठे सप्तमे वाऽनुलोमेन युग्मे जातिरुत्कृष्यते। तद्यथा – पुमान् विप्रः वधूः शूद्रा, तयोर्युग्मं कूटस्थम्। तस्मादुत्पन्ना निषादी। साऽपि विप्रेणोढा। तयोर्युग्मं द्वितीयम्। एवं तदुत्पन्नायां वध्वां विप्रेणोढायां तृतीयादियुग्मपरंपरा भवति। तत्र सप्तमे युग्मे जातमपत्यं ब्राह्मण्योपेतं भवति। एवं वैश्याविप्रयुगुलं कूटस्थं युग्मम्। तस्मादुत्पन्नाऽम्बष्ठा। तस्याश्च विप्रस्य च युग्मं द्वितीयम्। एवं तदुत्पन्नायां विप्रेणोढायां षष्ठं यद् युग्मं तस्मादुत्पन्नस्य ब्राह्मण्यं भवति। तथा क्षत्रियाविप्रयोर्युग्मं कूटस्थम्। तदुत्पन्ना मूर्धावसिक्ता। तस्याश्च विप्रस्य च युग्मं द्वितीयम्। तत्परंपरायां पञ्चमाद्युग्मादुत्पन्नस्य ब्राह्मण्यं भवति। एतदुक्तं भवति – पञ्चमे षष्ठे सप्तमे वेति व्यवस्थितविकल्पः। कूटस्थयोर्दम्पत्योः समनन्तरैकान्तरद्व्यन्तरजातियोगे पञ्चमादयोऽवगन्तव्याः इति। तथा च सति शूद्रावैश्ययोर्वैश्याक्षत्रिययोश्च समनन्तरत्वात् पञ्चमे, शूद्राक्षत्रिययोस्तु षष्ठे जातिरुत्कृष्यते। क्वचिदुत्तमजातेरप्यधमजातिप्राप्तिर्भवति। तदाह स एव – 'व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्।' (यास्मृ. १।९६) इति। विप्रादीनां चतुर्णां वर्णानां मुख्यवृत्तितया विहितानि याजनपालनपाशुपाल्यद्विजशुश्रूषादीनि यानि कर्माणि तेषामापदि व्यत्यये विपर्यासे सति यदि निवृत्तायामप्यापदि तामधमवृत्तिं न परित्यजेत्, तथा पुत्रपौत्रादयोऽपि तां न परित्यजेयुः, तदानीं पूर्ववत् पञ्चमषष्ठसप्तमेषु युग्मेषु जातमपत्यं तद्वृत्त्युचितजातिसाम्यं प्रतिपद्यते इति। तद्यथा – ब्राह्मणः शूद्रवृत्त्या जीवन् यदि पुत्रमुत्पादयति, सोऽपि तथैव इत्येवंपरंपरायां सप्तमादुत्पन्नस्य शूद्रत्वं भवति, एवं क्षत्रियः शूद्रवृत्त्या जीवन् षष्ठे युग्मे शूद्रं जनयति, वैश्यस्तु पञ्चमे युग्मे इति द्रष्टव्यम्। पूर्ववदित्यादेरयमर्थः – अधरोत्तरमिति भावप्रधानो निर्देशः। यथा वर्णसांकर्ये प्रातिलोम्यमधमम्, आनुलोम्यमुत्तमम्, तथा वृत्तिसांकर्येऽपि। तद्यथा – क्षत्रियस्याऽऽपद्यपि याजनादिब्राह्मणवृत्त्युपजीवनमधमम्, 'न तु कदाचिज्ज्यायसीम्' (वाध. २।२३) इति वसिष्ठेन निषिद्धत्वात्। पाशुपाल्यादिवैश्यवृत्त्युपजीवनमुत्तमम्, 'अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्' (वाध. २।२२) इति वसिष्ठेनाऽऽपदि विधानादिति। पूर्ववच्चाधरोत्तरमित्यस्याऽपरा व्याख्या – त्रिविधो हि संकरः – वर्णसंकरः, संकीर्णसंकरः, वर्णसंकीर्णसंकरश्चेति। तद्यथा – उत्तमाधमवर्णयोर्दाम्पत्यं वर्णसंकरः, तज्जन्ययोर्माहिष्यकरण्योर्दाम्पत्यं संकीर्णसंकरः, वर्णसंकीर्णयोर्दाम्पत्यं वर्णसंकीर्णसंकरः। तत्र 'विप्रान्मूर्धावसिक्तः' इत्यानुलोम्येन वर्णसंकरजा दर्शिताः। 'ब्राह्मण्यां क्षत्रियात् सूतः' इति प्रातिलोम्येन वर्णसंकरजा दर्शिताः। 'माहिष्येण करण्यां तु रथकारः प्रजायते।' (यास्मृ. १।९५) इति संकीर्णसंकरजा दर्शिताः। इदानीमधरोत्तरमित्यनेन वर्णसंकीर्णसंकरजाः प्रदर्श्यन्ते। अधरे प्रतिलोमजाः। उत्तरे अनुलोमजाः। तद्यथा – मूर्धावसिक्तायां संकीर्णायामुत्तमायां क्षत्रियवैश्यशूद्रैरधमैरुत्पादिताः अधरे। निषाद्यां संकीर्णायामधमायां ब्राह्मणक्षत्रियवैश्यैरुत्तमैर्वर्णैरुत्पादिता उत्तरे। अधरे चोत्तरे च अधरोत्तरम्। पूर्ववदिति पदेन 'असत्सन्तस्तु विज्ञेयाः' (यास्मृ. १।९५) इति वचनार्थोऽतिदिश्यते। यथा पूर्ववर्णैरुत्पादिता वर्णसंकरजाः संकीर्णसंकरजाश्च प्रतिलोमजा असन्तः अनुलोमजाश्च सन्तः तथा वर्णसंकीर्णसंकरजा

अपि अनुलोमजाः सन्तः प्रतिलोमजास्त्वसन्तः इति द्रष्टव्यम्। उक्तत्रैविध्ये वर्णसंकरं वर्णसंकीर्णसंकरं वाऽऽश्रित्योत्पाद्यमानाः वर्णाभासाः षष्टिर्भवन्ति, संकीर्णसंकरमाश्रित्योत्पाद्यमानाः जात्याभासा अनन्ताः। तदुक्तं स्मृत्यन्तरे – 'प्रातिलोम्यानुलोम्येन वर्णैस्तज्जैश्च वर्णतः। षष्टिर्वाऽन्ये प्रजायन्ते तत्प्रसूतेस्त्वनन्तता।।' इति। प्र( ? प्रा)तिलोमा ( ? म्या)न्युलोमा ( ? म्या) भ्यां वर्णैरुत्पादिता द्वादश। षडनुलोमवर्णजाः, सूतवैदेहचण्डालमागधक्षत्रायोगवाः प्रतिलोमवर्णजाः। इत्थं द्वादशभिर्वर्णैः संबन्धादुत्पादिता अष्टचत्वारिंशत्। एवं षष्टिसंख्ययैवोपलक्षिता अन्ये वर्णाभासा जायन्ते। तद्यथा – मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणाः षडनुलोमवर्णजाः। सूतवैदेहचण्डालमागधक्षत्रायोगवाः प्रतिलोमवर्णजाः। इत्थं द्वादश। तत्र मूर्धावसिक्तेनानुलोमेन क्षत्रियावैश्याशूद्रासूत्पादितास्त्रयः। प्रातिलोम्येन ब्राह्मण्यामेकः, अम्बष्ठस्याऽऽनुलोम्येन द्वौ, प्रातिलोम्येन द्वौ। निषादस्याऽऽनुलोम्येनैकः, प्रातिलोम्येन त्रयः। माहिष्यस्याऽऽनुलोम्येन द्वौ प्रातिलोम्येन द्वौ। उग्रस्याऽऽनुलोम्येनैकः, प्रातिलोम्येन त्रयः। करणस्याऽऽनुलोम्येनैकः, प्रातिलोम्येन त्रयः – इति पूर्वषट्कोत्पादिताश्चतुर्विंशतिः। एवं सूतादीनां षण्णां वर्णानामेकैकस्य चतसृषु वर्णेष्वेकैकः – इति तेऽपि चतुर्विंशतिः। एवं मिलित्वा षष्टिः संपद्यते। तेभ्यः षष्टिसंख्याकेभ्य उत्पादितैरपत्यैराभासानां संख्याया आनन्त्यं भवतीति। समाप्ता प्रासङ्गिकी जातिभेदकथा।

पमा. १।५११-५१७

(२) अथ संकराणां दिक्प्रदर्शनं क्रियते – ब्राह्मणात् क्षत्रियायामुत्पन्नो मूर्धावसिक्तः, क्षत्रियात् वैश्यायां माहिष्यः, वैश्याच्छूद्रायां करणः। ब्राह्मणाद्वैश्यायामम्बष्ठः, ब्राह्मणाच्छूद्रायां निषादः स एव पारशव उच्यते, क्षत्रियाच्छूद्रायामुग्रः। एते षडनुलोमजाः संकराः। अथ प्रतिलोमाः – क्षत्रियात् ब्राह्मण्यां सूतः, वैश्यात्तस्यां वैदेहः, शूद्रात्तस्यां चण्डालः। वैश्यात् क्षत्रियायां मागधः, शूद्रात्तस्यां क्षत्ता। शूद्राद्वैश्यायामायोगवः। प्रतिलोमजेषु चण्डाल एवैकोऽस्पृश्यः। एषां मातृजातिसंस्कारोऽप्यस्ति चण्डालव्यतिरेकेण। तत्र आयोगवक्षत्तृचण्डालाः शूद्रादप्यधमाः पुत्रकार्यादपगताश्च। ब्राह्मणादुग्रकन्यायामावृतः, तत एवाम्बष्ठकन्यायामाभीरः, तत एव आयोगव्यां धिग्वणः। निषादात् शूद्रायामुत्पन्नः पुल्कसः। शूद्रान्निषाद्यामुत्पन्नः कुक्कुटकः। क्षत्तुरुग्रायां जातः श्वपाकः। वैदेहकेन अम्बष्ठ्यामुत्पन्नो वेणः। व्रात्याद्ब्राह्मणात् ब्राह्मण्यां जातो भृज्जकण्टकः आवन्त्यवाटधानपुष्पवच्छेखरशब्दैरुच्यते। व्रात्यात्क्षत्रियात् क्षत्रियायां जातः सल्लमल्लपिच्छविनटकरणखसद्रविडशब्दैरुच्यते। वैश्याद्व्रात्यात् वैश्यायामुत्पन्नः सुधन्वाचार्यकारूषविजन्ममैत्रसात्वतशब्दैरुच्यते। अव्रतः सावित्रीभ्रष्टो व्रात्यः।

दस्योः सकाशादायोगव्यां सैरन्ध्रनामा प्रसाधनाद्युपचारज्ञो भवति। वैदेहात्तस्यामेव मैत्रेयकनामानं मधुरभाषिणं घण्टामा-( ? द्या)तोद्यवादनेन अरुणोदये नृणां स्तावको भवति। निषादस्तस्यामेव दाशकैवर्तनामानं नौजीविनं जनयति। निषादाद्वैदेह्यां कारावराख्यः चर्मोपजीवी जायते। वैदेहकात्तस्यामेव मेदाख्यो बहिर्ग्रामवासी जायते। चण्डालाद्वैदेह्यां पाण्डुसोपाको नाम वेणुजीवी जायते। निषादाद्वैदेह्यामाहिण्डकः। चण्डालेन पुल्कस्यां सोपाकनामा वध्यघाती जायते( ? जन्यते)। चाण्डालान्निषाद्यां श्मशानवासी अन्त्यावसायी जायते। सूतादीनां प्रतिलोमजानामुपनयनसंस्कारो नास्ति। 'मुखबाहूरुपज्जानां या लोके जातयो बहिः। म्लेच्छवाचोऽप्यार्यवाचः सर्वे ते दस्यवः स्मृताः।।'। ब्राह्मणाद्वैदेहक्यां जातश्चूचुः। तत एव बन्दिस्त्रियां जातो मुदृगुः। क्षत्रियेण शूद्रायां जाता बन्दिस्त्रीत्यादि बोध्यम्।

बाल. १।९५ पृ. ३०७.

## वेदाः

रथपत्यादिकतिपयसंकरजनिर्देशाः

**[१]नमो रथेभ्यो रथपतिभ्यश्च वो नमः। नमः सेनाभ्यः सेनानिभ्यश्च वो नमः। नमः क्षत्तृभ्यः संगृहीतृभ्यश्च**

---

(१) **तैसं.** ४।५।४।१-३; **कासं.** १७।१३ (४९) (नमो रथेभ्यो रथपतिभ्यश्च वो नमः०) सेनानि (सेनानी) पुञ्जिष्टे (पुञ्जिष्ठे) नमो मृगयुभ्यः श्वनि (नमः श्वनिभ्यो मृगयु); **मैसं.** २।९।४-५ (३०-३१) (नमो रथेभ्यो रथपतिभ्यश्च वो नमः०) सेनानि (सेनानी) नमः पुञ्जिष्टेभ्यो निषादे (नमो निषादेभ्यः पुञ्जिष्टे) धन्वकृद्भ्य (धनुष्कृद्भ्य) नमो मृगयुभ्यः श्वनि (नमः श्वनीभ्यो मृगयु); **शुसं.** १६।२६-२८ (नमो रथेभ्यो रथपतिभ्यश्च वो नमः०)

**वो नमः। नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः। नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः। नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमः। नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमः। नमो मृगयुभ्यः श्वनिभ्यश्च वो नमः। नमः श्वभ्यः श्वपतिभ्यश्च वो नमः।।**

पक्षिपुञ्जानां घातकाः पुञ्जिष्टाः। मत्स्यघातिनः निषादाः। शुनां गलेषु बद्धानां पाशानां धारकाः श्वनयः। तैसा.

निषादस्थपतेर्याजनीयत्वम्

[1]**तया निषादस्थपतिं याजयेत्।।**

[2]**ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय वीरहणं पाप्मने क्लीबमाक्रयाया अयोगूं कामाय पुंश्चलूमतिक्रुष्टाय मागधम्।।**

(१) अतः परं पुरुषमेधकाः पशवः आ अध्याय-समाप्तेः।.... ब्रह्मणे ब्राह्मणम्। तत्र 'ब्रह्मणे जुष्टं नियुनज्मि' इति अग्निष्टे ब्राह्मणं प्रथमं नियुनक्ति। एवमग्रे सर्वेषां यूपे एव बन्धनम्। चतुर्थ्यन्तं देवतापदं द्वितीयान्तं पुरुषपदं बोद्धव्यम्। क्षत्राय राजन्यं क्षत्रियम्। मरुद्भ्यो वैश्यम्। तपसे शूद्रम्। तमसे तस्करं स्तेनम्। नारकाय वीरहणं नष्टाग्निं शूरं वा। पाप्मने क्लीबं नपुंसकम्। आक्रयायै अयोगूम् अयसो गन्तारम्। कामाय पुंश्चलूं व्यभिचारिणीम्। अतिक्रुष्टाय मागधं मगधदेशजं क्षत्रियायां वैश्यपुंसो जातं वा। शुम.

(२) ‡अयोगूम् अयोग्यस्य अशास्त्रीयस्य कर्तारम्। तैब्रासा.

[3]**नृत्ताय सूतं गीताय शैलूषं धर्माय सभाचरं नरिष्ठायै भीमलं नर्माय रेभꣳहसाय कारिमानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्याय तक्षाणम्।।**

(१) नृत्ताय सूतम्। ब्राह्मण्यां क्षत्रियाज्जातः सूतः। गीताय शैलूषं नटम्। धर्माय सभाचरं सभायां चरतीति तम्। नरिष्ठायै भीमलं भयंकरम्। नर्माय रेभं शब्दकर्तारं वाचाटम्। हसाय कारिं करणविशिष्टम्। आनन्दाय स्त्रीषखं स्त्रियाः सखायम्। प्रमदे कुमारीपुत्रं कानीयम् (? नीनम्)। मेधायै रथकारं माहिष्येण कारण्यां (? करण्यां) जातम्। धैर्याय तक्षाणं सूत्रधारम्। शुम.

(२) सूतं ब्राह्मण्यां क्षत्रियेणोत्पादितं गानजीविनम्।.... शैलूषम् अन्यस्मै स्वभार्यां प्रदाय तेन जीविनम्।... (सभाचरं) सभायां नित्यं चरन्तं धर्मस्य प्रवक्तारम्।... रेभं मेधाविनं चाटूक्तिकुशलम्।.... भीमलं भीरुं चपलाक्षम्। .... कारिं नृत्यन्निव यो गच्छति तादृशं विकटगमनकारिणम्। .... रथकारं रथस्य कर्तारं निपुणमतिम्।.... तक्षाणं वर्धकिम्। तैब्रासा.

[4]**तपसे कौलालं मायायै कर्मारꣳरूपाय मणिकारꣳशुभे वपꣳशरव्याया इषुकारꣳहेत्यै धनुष्कारं कर्मणे ज्याकारं दिष्टाय रज्जुसर्जं मृत्यवे मृगयुमन्तकाय श्वनिनम्।।**

(१) तपसे कौलालं कुलालापत्यम्। मायायै कर्मारं लोहकारम्। रूपाय मणिकारं रत्नकर्तारम्। शुभे शुभाय वपं बीजवप्तारम्। शरव्यायै इषुकारं बाणकर्तारम्। हेत्यै धनुष्कारं चापकारिणम्। कर्मणे ज्याकारं प्रत्यञ्चनकर्तारम्। दिष्टाय रज्जुसर्जं रज्जोः स्रष्टारं निर्मातारम्। मृत्यवे मृगयुं मृगग्राहम्। अन्तकाय श्वनिनं शुनो नेतारम्। शुम.

(२) मणिकारं मणिमुक्तादिसंस्कर्तारम्।..... (इषुकारं) बाणानां संस्कर्तारम्।.... धन्वकारं धनुषां संस्कर्तारम्।..... ज्याकारं ज्यानां संस्कर्तारम्।..... श्वनितं श्वभिः सह क्रीडाजीविनम्। तैब्रासा.

---

‡ अस्मिन् प्रघट्टके महीधरेण चतुर्थ्यन्तपदव्याख्यानं प्रायः नैव कृतम्, सायणाचार्येण कृतमप्यत्रानुपयुक्तत्वान्न संगृहीतम्। पुञ्जिष्टेभ्यो निषादे (निषादेभ्यः पुञ्जिष्ठे) (नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमः०) नमो मृगयुभ्यः श्वनि (नमः श्वनिभ्यो मृगयु) कासं., मैसं., शुसं. इत्येतेषु ग्रन्थेषु सतः वचनक्रम-भेदस्यात्राकिंचित्करत्वात् स न प्रदर्शितः.

[1] **मैसं.** २।२।४; **पमा.** १।४५ तया (एतया)(=); **मच.** १०।६५ (तया०) श्रुतिः; **शूक.** १९ (तया०) (=).

[2] **शुसं.** ३०।५; **तैब्रा.** ३।४।१।१ ब्राह्मणं + (आलभते।) या अयोगूं (यायोगूम्।).

[3] **शुसं.** ३०।६; **तैब्रा.** ३।४।२।१ नृत्ताय.... रेभं (गीताय सूतम्। नृत्ताय शैलूषम्। धर्माय सभाचरम्। नर्माय रेभम्। नरिष्ठायै भीमलम्।) प्रमदे (प्रमुदे).

[4] **शुसं.** ३०।७; **तैब्रा.** ३।४।३।१ तपसे (श्रमाय) कर्मारं (कार्मारं) धनुष्कारं (धन्वकारं) सर्जं (सर्गं) श्वनिनम् (श्वनितम्).

[1]**नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदं गन्धर्वाप्सरोभ्यो व्रात्यं प्रयुग्भ्य उन्मत्तꣳसर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्यताया अकितवं पिशाचेभ्यो विदलकारीं यातुधानेभ्यः कण्टकीकारीम्।।**

(१) नदीभ्यः पौञ्जिष्ठम्, पुञ्जिष्ठः अन्त्यजः पुल्कसः, तदपत्यम्। ऋक्षीकाभ्यः नैषादं निषादपुत्रम्। पुरुषव्याघ्राय दुर्मदम् उन्मत्तम्। गन्धर्वाप्सरोभ्यः व्रात्यं सावित्रीपतितम्। प्रयुग्भ्यः उन्मत्तम्। सर्पदेवजनेभ्यः अप्रतिपदम्, प्रतिपद्यते जानातीति प्रतिपत्, अतथाविधम्, विकलमित्यर्थः। अयेभ्यः कितवं द्यूतकारम्। ईर्यतायै अकितवं अद्यूतकृतम्। पिशाचेभ्यः विदलकारीं वंशविदारिणीं वंशपात्रकारिणीम्। यातुधानेभ्यः कण्टकीकारीम्, कण्टकी कर्म, तत्कारिणीम्। शुम.

(२) पौञ्जिष्टं कैवर्तम्।.... दुर्मदम् अत्यन्तमदान्धम्।... उन्मत्तम् उन्मादयुक्तम्।.. व्रात्यं शास्त्रीयसंस्कारहीनं पुरुषम्। ...अप्रतिपदम्, प्रतिपत्तिः संस्कारः, तदयोग्यम्।.... कण्टककारम् आरामादिषु कण्टकावृतिकर्तारम्। तैब्रासा.

[2]**संधये जारं गेहायोपपतिमार्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराध्या एदिधिषुःपतिं निष्कृत्यै पेशस्कारीꣳसंज्ञानाय स्मरकारीं प्रकामोद्यायोपसदं वर्णायानुरुधं बलायोपदाम्।।**

(१) संधये जारम् उपपतिम्। गेहाय उपपतिं व्यभिचारिणम्। आर्त्यै परिवित्तम् ऊढे कनिष्ठेऽनूढम्। निर्ऋत्यै परिविविदानम् अनूढे ज्येष्ठे ऊढवन्तम्। अराध्यै देव्यै एदिधिषुःपतिम्, ज्येष्ठायां पुत्र्यामनूढायामूढा एदिधिषुः, तत्पतिम्। निष्कृत्यै पेशस्कारीं रूपकर्त्रीम्। संज्ञानाय स्मरकारीं कामदीप्तिकरीम्। प्रकामोद्याय तत्संज्ञाय देवाय, उपसीदतीत्युपसत् समीपस्थितः, तम्। एतानग्निष्टे नियुनक्ति। अथ द्वितीये यूपे। वर्णाय अनुरुधम्, अनुरुध्यते अनुसरतीत्यनुरुत्, तम्। बलाय उपदाम्, उपददातीत्युपदाः, तम् उपायनदातारम्। शुम.

(२) जारं पारदारिकम्। .... उपपतिं प्रज्ञातजारम्। पूर्वो जारस्त्वविज्ञातः, अयं तु भर्त्रा विज्ञात इति विशेषः। .... परिवित्तं ज्येष्ठात्पूर्वमेवोढभार्यं कनिष्ठम्। .... परिविविदानं प्रथमतो विवाहशीलम्, कनिष्ठः सन् (? कनिष्ठं सन्तं) सूतदाग्रहयुक्तमित्यर्थः। ... दिधिषूपतिम्, द्विर्विवाहं कृतवती स्त्री दिधिषूः, तस्याः पतिम्। ...... भिषजं चिकित्सकम्। ..... नक्षत्रदर्शं ज्योतिःशास्त्रविदम्। .... पेशस्कारीं सुवर्णकारस्य भार्याम्। .... उपदाम्। अन्नमात्रप्रदानेन या कन्या गृह्यते सेयमुपदा। .... अनूरुधं स्वकीयप्रयोजनमन्तरेणैव परानुरोधेन यः प्रवर्तते तादृशम्। तैब्रासा.

[1]**उत्सादेभ्यः कुब्जं प्रमुदे वामनं द्वार्भ्यः स्रामꣳस्वप्नायान्धमधर्माय बधिरं पवित्राय भिषजं प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनं मर्यादायै प्रश्नविवाकम्।।**

(१) उत्सादेभ्यः कुब्जं वक्राङ्गम्। प्रमुदे वामनं ह्रस्वाङ्गम्। द्वार्भ्यः स्रामं सर्वदा जलक्लिन्ननेत्रम्। स्वप्नाय अन्धं नेत्रहीनम्। अधर्माय बधिरं कर्णेन्द्रियहीनम्। पवित्राय भिषजं वैद्यम्। प्रज्ञानाय नक्षत्रदर्शं नक्षत्राणि दर्शयति तं गणकम्। आशिक्षायै प्रश्निनं प्रश्नवन्तम्, शकुनादिप्रष्टारमित्यर्थः। उपशिक्षायै अभिप्रश्निनं अभिप्रश्नवन्तम्। अथ तृतीये यूपे। मर्यादायै प्रश्नविवाकम्, कृतान् प्रश्नान् यो विविनक्ति (ततः) ब्रूते स प्रश्नविवाकः, तम्। शुम.

(२) स्रामं रोगिणम्।.... स्मरकारीं मन्त्रौषधादिभिर्भर्तुः कामोत्पादिकाम्। ..... उपसदं प्रयोजनमन्तरेणैव बहुभाषिणं सभायामुपविष्टम्। .... प्रश्निनं शास्त्रार्थेषु संदेहेन प्रश्नकर्तारम्। .... अभिप्रश्निनम्, पृष्टस्योपरि पुनः प्रश्नोऽभिप्रश्नः, तद्युक्तम्, पूर्वप्रश्ननिराकर्तारमित्यर्थः। .... प्रश्नविवाकं परकीयप्रश्नं सम्यग्विविच्योत्तरस्य वक्तारम्। तैब्रासा.

---

(१) **शुसं.** ३०।८; **तैब्रा.** ३।४।५।१ पौञ्जिष्ठ (पौञ्जिष्ट) गन्धर्वा.... उन्मत्तं (प्रयुद्भ्य उन्मत्तम्। गन्धर्वाप्सरोभ्यो व्रात्यम्।) पदमयेभ्यः (पदम्। अवेभ्यः) कितवमी (कितवम्। इ) विदलकारीं (बिदलकारम्।) कीकारीम् (ककारम्।।).

(२) **शुसं.** ३०।९; **तैब्रा.** ३।४।४।१ (संधये जारम्। गेहायोपपतिम्। निर्ऋत्यै परिवित्तम्। आर्त्यै परिविविदानम्। अराध्यै दिधिषूपतिम्। पवित्राय भिषजम्। प्रज्ञानाय नक्षत्रदर्शम्। निष्कृत्यै पेशस्कारीम्। बलायोपदाम्। वर्णायानूरुधम्।।).

(१) **शुसं.** ३०।१०; **तैब्रा.** ३।४।६।१ पवित्राय ..... दर्श (संज्ञानाय स्मरकारीम्। प्रकामोद्यायोपसद).

**[1]अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालं वीर्यायाविपालं तेजसेऽजपालमिरायै कीनाशं कीलालाय सुराकारं भद्राय गृहपः श्रेयसे वित्तधमाध्यक्ष्यायानुक्षत्तारम्।।**

(१) अर्मेभ्यः हस्तिपं गजपालकम्। जवाय अश्वपं तुरगपालकम्। पुष्ट्यै गोपालं धेनुपालकम्। वीर्याय अविपालम्। तेजसे अजपालम्। इरायै कीनाशं कर्षुकम्। 'कीनाशः कर्षुके यमे'। कीलालाय सुराकारं मद्यकृतम्। भद्राय गृहपं गेहपालकम्। श्रेयसे वित्तधम्, वित्तं दधातीति वित्तधः, तं धनकर्तारम्। अध्यक्ष्याय अनुक्षत्तारं सारथ्यनुसारिणम्। शुम.

(२) वित्तपं धनस्य पालकम्। तैब्रासा.

**[2]भायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारः सर्वेभ्यो लोकेभ्य उपसेक्तारमवऋत्यै वधायोपमन्थितारं मेधाय वासःपल्पूलीं प्रकामाय रजयित्रीम्।।**

(१) अथ चतुर्थे यूपे। भायै दार्वाहारं काष्ठानामाहर्तारम्। प्रभायै अग्न्येधम् अग्निमेधयतीति तम् अग्नेर्वर्धकम्। ब्रध्नस्य विष्टपाय सूर्यलोकाय अभिषेक्तारम्। वर्षिष्ठाय नाकाय उत्कृष्टस्वर्गाय परिवेषणकर्तारम्। देवलोकाय पेशितारम्। पिश अवयवे। पिंशतीति पेशिता, तं प्रतिमाद्यवयवकर्तारम्। मनुष्यलोकाय प्रकरितारम्। कृ विक्षेपे। विक्षेप्तारम्। सर्वेभ्यो लोकेभ्यः उपसेक्तारम् उपसेचनकर्तारम्। अवऋत्यै वधाय उपमन्थितारम् उपमन्थनकर्तारम्। मेधाय वासःपल्पूलीं वाससां प्रक्षालनकर्तारम्। पल्पूल प्रक्षालनच्छेदनयोः। प्रकामाय रजयित्रीं वस्त्राणां रङ्गकारिणीं नारीम्। शुम.

(२) आग्नेन्धम् अग्नेः प्रज्वलनकर्तारम्। ... अभिषेक्तारं राजाभिषेकस्य कर्तारम्।.... पात्रनिर्णेगं कांस्यताम्रादिपात्राणां शोधकम्। .... पेशितारं प्रशान्तस्य वैरस्योत्पादयितारम्।.... प्रकरितारं स्निग्धानां वैरस्योत्पादनेन विश्लेषयितारम्।.... उपसेक्तारं वैरस्य शमयितारम्।.... उपमन्थितारं स्वयमुपेत्य वैरस्य जनयितारम्।.... भागदुघं प्रजाभ्यो राजभागस्य संपादकम्।.... परिवेष्टारं भोजनकाले परिवेषणस्य कर्तारम्। तैब्रासा.

**[1]ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दं प्रियाय प्रियवादिनमरिष्ट्या अश्वसादः स्वर्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम्।।**

(१) ऋतये स्तेनहृदयं स्तेनस्येव हृदयं यस्य तम्। अथ पञ्चमे यूपे। वैरहत्याय पिशुनं परवृत्तसूचकम्। विविक्त्यै क्षत्तारं प्रतीहारम्। औपद्रष्ट्र्याय अनुक्षत्तारं प्रतिहारसेवकम्। बलाय अनुचरं सेवकम्। भूम्ने परिष्कन्दम् परितः स्कन्दति रेतः सिञ्चति तम्। प्रियाय प्रियवादिनं मधुरभाषिणम्। अरिष्ट्यै अश्वसादम् अश्वारोहम्। स्वर्गाय लोकाय भागदुघम्, भागं दुग्धे भागदुघः, तं विभागप्रदम्। वर्षिष्ठाय नाकाय परिवेष्टारम्। शुम.

(२) पिशुनं प्रभोः कर्णे परदोषसूचकम्। ..... क्षत्तारं सारथिम्। .... संग्रहीतारं भाण्डागाराध्यक्षं करसंग्रहकारिणं वा। ..... परिष्कन्दं परिचारकम्। ..... वासःपल्पूलीं वाससः शोधयित्रीं रजकस्त्रियम्। .... रजयित्रीं वस्त्रेषु रञ्जनकारिणीम्। तैब्रासा.

**[2]मन्यवेऽयस्तापं क्रोधाय निसरं योगाय योक्तारः शोकायाभिसर्तारं क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनं वपुषे मानस्कृतः शीलायाञ्जनीकारीं निर्ऋत्यै कोशकारीं यमायासूम्।।**

(१) मन्यवे अयस्तापम् अयस्तपं लोहतापकम्। क्रोधाय

---

(१) **शुसं.** ३०।११; **तैब्रा.** ३।४।९।१ वीर्याया.... पालमि (तेजसेऽजपालम्। वीर्यायाविपालम्। इ) वित्तधमाध्यक्ष्याया (वित्तपम्। अध्यक्षाया).

(२) **शुसं.** ३०।१२; **तैब्रा.** ३।४।८।१ (भायै दार्वाहारम्। प्रभाया आग्नेन्धम्। नाकस्य पृष्ठायाभिषेक्तारम्। ब्रध्नस्य विष्टपाय पात्रनिर्णेगम्। देवलोकाय पेशितारम्। मनुष्यलोकाय प्रकरितारम्। सर्वेभ्यो लोकेभ्य उपसेक्तारम्। अवर्त्यै वधायोपमन्थितारम्। सुवर्गाय लोकाय भागदुघम्। वर्षिष्ठाय नाकाय परिवेष्टारम्।।).

(१) **शुसं.** ३०।१३; **तैब्रा.** ३।४।७।१ ऋतये (ऋत्यै) विविक्त्यै (विवित्यै) द्रष्ट्र्यायानुक्षत्तारं (द्रष्टाय संग्रहीतारम्।) स्वर्गाय..... वेष्टारम्।। (मेधाय वासःपल्पूलीम्। प्रकामाय रजयित्रीम्।।).

(२) **शुसं.** ३०।१४; **तैब्रा.** ३।४।१०।१ योगाय.... याञ्जनीकारीं (शोकायाभिसरम्। उत्कूलविकूलाभ्यां त्रिस्थिनम्। योगाय योक्तारम्। क्षेमाय विमोक्तारम्। वपुषे मानस्कृतम्। शीलायाञ्जनीकारम्।).

निसरं नितरां सर्तारम्। अथ षष्ठे यूपे। योगाय योक्तारं योगकर्तारम्। शोकाय अभिसर्तारं संमुखमागच्छन्तम्। क्षेमाय विमोक्तारं विमोचनकरम्। उत्कूलनिकूलेभ्यः त्रिष्ठिनम्, त्रिषु तिष्ठतीति त्रिष्ठी, तम्, विद्यादिषु स्थितम्, शीलवन्तमित्यर्थः। वपुषे मानस्कृतं पूजाया अभिमानस्य वा कर्तारम्। सक् छान्दसः। शीलाय आञ्जनीकारीम् अञ्जनविद्याकर्त्रीम्। निर्ऋत्यै कोशकारीम्, खड्गाद्यावरणं कोशः, तत्कारिणीं स्त्रियम्। यमाय असूम्, न सूते सा असूः, तां वन्ध्याम्। शुम.

(२) निसरं वध्यानां बहिर्निःसारयितारम्। ..... अभिसरं रथस्य पुरतो गन्तारम्।.. त्रिस्थिनम्, त्रिभिः पादाभ्यां दण्डेन च, तैरपि गन्तुमशक्तः एकत्रैवावस्थितः त्रिस्थिनः, तादृशम्। ... योक्तारं रथेऽश्वानां योजयितारम्। .... विमोक्तारं रथे योजितानामश्वानां विमोचयितारम्। .... मानस्कृतम्, मनसैव लावण्यं विषये योजयिता मनस्कृत्, तस्य पुत्रं मानस्कृतम्। ...अञ्जनीकारम् अक्ष्णोरञ्जनेनालंकर्तारम्। ... कोशकारीं ताम्रलोहाध्मानकुशलां स्त्रियं खड्गादीनां चर्ममयकोशकारीं वा। तैब्रासा.

**[१]यमाय यमसूमथर्वभ्योऽवतोकाꣳसंवत्सराय पर्यायिणीं परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीं वत्सराय विजर्जराꣳसंवत्सराय पलिक्नीमृभुभ्योऽजिनसंधꣳ साध्येभ्यश्चर्मम्नम्।।**

(१) यमाय यमसूं युग्मप्रसवित्रीम्। अथर्वभ्यः अवतोकां निरपत्याम्। संवत्सराय पर्यायिणीम्, पर्यायः अनुक्रमः, तद्वतीम् अनुक्रमप्रज्ञाम्। अथ सप्तमे यूपे। परिवत्सराय अविजाताम् अप्रसूताम्। इदावत्सराय अतीत्वरीम् अत्यन्तं कुलटाम्। 'पुंश्चली कुलटेत्वरी'। इद्वत्सराय अतिष्कद्वरीम्। अतिस्कन्दति स्रवति इति अतिस्कद्वरी। स्कन्देर्वन्नन्तात् ङीब्रेफौ। वत्सराय विजर्जरां शिथिलशरीराम्। संवत्सराय पलिक्नीं श्वेतकेशाम्। ऋभुभ्यः अजिनसंधं चर्मसंधातारम्। साध्येभ्यः चर्मम्नं चर्माभ्यासकरम्। शुम.

(२) अवतोकां गर्भस्राविणीं स्त्रियम्। ... पर्यारिणीम्, प्रसवकालातिक्रमेण या प्रसूते सा पर्यारिणी, ताम्। ... अविजाताम्, विशेषेण जाता विजाता द्वितीयप्रसवयुक्ता, तद्रहिताम्।... अपस्कद्वरीम्, गर्भपरिणामात्प्रागेव प्रसवप्रतिबन्धोऽपस्कत्, तस्मिन्कुशलाऽपस्कद्वरी, ताम्। .... अतीत्वरी प्रसवकालात्ययकरणकुशला (अतीत्वरी) ताम्। ... विजर्जराम् अप्रसूत्यैव जीर्णाम्।... पलिक्नीं प्रथमे वयस्येव पलिताङ्गीम्।... वनपं वनस्य पालकम्।... दावपम् आरण्याग्नेः पालकम्। तैब्रासा.

**[१]सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो वैन्दं नड्वलाभ्यः शौष्कलं पाराय मार्गारमवाराय कैवर्तं तीर्थेभ्य आन्दं विषमेभ्यो मैनालꣳस्वनेभ्यः पर्णकं गुहाभ्यः किरातꣳसानुभ्यो जम्भकं पर्वतेभ्यः किंपूरुषम्।।**

(१) सरोभ्यो धैवरं कैवर्तापत्यम्। उपस्थावराभ्यः दाशम्। दाशृ दाने। दातारम्। दाशः धीवरो वा। वैशन्ताभ्यो वैन्दम्। विन्दः निषादापत्यम्। नड्वलाभ्यः शौष्कलं मत्स्यजीविनम्, शुष्कलाः मत्स्याः, तैर्जीवति तम्। अथाष्टमे यूपे। पाराय मार्गारम्, मृगारेरपत्यं मार्गारः, तम्। आवाराय कैवर्तम्। तीर्थेभ्यः आन्दम्। अदि बन्धने। अदति आन्दः, तं बन्धनकर्तारम्। विषमेभ्यो मैनालम्। अल् वारणे। मीनान् अलति वारयति जालैरसौ मीनालः, तदपत्यम्। स्वनेभ्यः पर्णकं भिल्लम्। गुहाभ्यः किरातम्। सानुभ्यः जम्भकम्। जभि नाशने। जम्भयतीति तत् (? तं) हिंसकम्। पर्वतेभ्यः किंपूरुषं कुत्सितनरम्। शुम.

(२) धैवरम् उभयतो जलं बद्ध्वा तटानां मत्स्यग्राहिणम्। .... दाशं बडिशेन मत्स्यग्राहिणम्।..... बैन्दम्, बिन्दुः जालम्, तेन जीवतीति बैन्दः, तम्।.... शौष्कलम्, शुष्कलं बडिशम्, तेन जीवतीति शौष्कलः, तम्।... कैवर्तं कूले मत्स्यानां पुञ्जीकृत्य हन्तारम्।.... मार्गारम् अन्तर्जलं हस्ताभ्यां मत्स्यमार्गणशीलम्।.... आन्दं तीर्थे शङ्कुबन्धनेन मत्स्यग्राहिणम्।... मैनालं जालजीविनम्।.... पर्णकं सविषं पर्णं जलस्योपरि स्थापयित्वा मत्स्यग्राहिणम्।

---

(१) **शुसं.** ३०।१५; **तैब्रा.** ३।४।११।१ (यम्यै यमसूम्। अथर्वभ्योऽवतोकाम्। संवत्सराय पर्यारिणीम्। परिवत्सरायाविजाताम्। इदावत्सरायापस्कद्वरीम्। इद्वत्सरायातीत्वरीम्। वत्सराय विजर्जराम्। संवत्सराय पलिक्नीम्। वनाय वनपम्। अन्यतोऽरण्याय दावपम्।।).

(१) **शुसं.** ३०।१६; **तैब्रा.** ३।४।१२।१ धैवर.... कैवर्तं (धैवरम्। वेशन्ताभ्यो दाशम्। उपस्थावरीभ्यो बैन्दम्। नड्वलाभ्यः शौष्कलम्। पार्याय कैवर्तम्। अवार्याय मार्गारम्।).

.... किरातं मृगघातिनम्।.... जम्भकं गात्राणां जृम्भयितारम्। ..... किंपूरुषं वनवासिनं गायकम्।

तैब्रासा.

**[1]बीभत्सायै पौल्कसं वर्णाय हिरण्यकारं तुलायै वाणिजं पश्चादोषाय ग्लाविनं विश्वेभ्यो भूतेभ्यः सिध्मलं भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनं व्यृद्ध्या अपगल्भꣳ संꣳशराय प्रच्छिदम्।।**

(१) बीभत्सायै पौल्कसं पुल्कसापत्यम्। वर्णाय हिरण्यकारं स्वर्णनिष्पादकम्। तुलायै वाणिजं वणिगपत्यम्। अथ नवमे यूपे। पश्चादोषाय ग्लाविनम्, 'ग्लौ (? ग्लै) हर्षक्षये', अहृष्टम्। विश्वेभ्यो भूतेभ्यः सिध्मलं सिध्माख्यरोगवन्तम्। भूत्यै जागरणं जागरूकम्। अभूत्यै स्वपनं शयालुम्। आर्त्यै जनवादिनं जनान् वदति तम्। व्यृद्ध्यै अपगल्भम्। संशराय प्रच्छिदं प्रच्छेदनकर्तारम्।

शुम.

(२) पौल्कसम् अतिनिकृष्टजातियुक्तम्। ... जागरणं प्रबोधशीलम्, सर्वदा सावधानमित्यर्थः। .... स्वपनं निद्रालुम्, सर्वदा प्रमादभूयिष्ठमित्यर्थः। .... वाणिजं क्रयकारिणम्। .... सिध्मलं कुष्ठरोगिणम्। .... ग्लावं नित्यकृशवपुषम्।... जनवादिनं जनानां परिवादनशीलम्। .... अपगल्भं धाष्ट्र्यरहितम्। .... प्रच्छिदं प्रकर्षेण छेत्तारम्। तैब्रासा.

**[2]अक्षराजाय कितवं कृतायाऽऽदिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम्।।**

(१) अक्षराजाय कितवं धूर्तम्। कृताय आदिनवदर्शम्। आदी( ? आदि)नवः दोषः, तं पश्यति तथाभूतम्। त्रेतायै कल्पिनं कल्पकम्। द्वापराय अधिकल्पिनम् अधि-कल्पनाकर्तारम्। अथ दशमे यूपे। आस्कन्दाय सभास्थाणुं सभायां स्थिरम्। मृत्यवे गोव्यच्छं गाः प्रति गमनशीलम्। अन्तकाय गोघातं गवां हन्तारम्। क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति यः पुमान् गां विकृन्तन्तं छिन्दन्तं भिक्षमाणो याचमानः उपतिष्ठते तं याचितारं क्षुधे देव्यै आलभेत। दुष्कृताय चरकाचार्यं चरकाणां गुरुम्। पाप्मने सैलगम्, सीलगः दुष्टः, तदपत्यम्। शुम.

(२) कितवं द्यूतकुशलम्। ... सभाविनं द्यूतसभाया अधिष्ठातारम्। ... आदिनवदर्शं मर्यादायां देवनस्य द्रष्टारं परीक्षकम्।... बहिःसदं बहिःसदनशीलं स्वयमदीव्यन्तम्।.... सभास्थाणुम्, अदेवनकालेऽपि सभां यो न मुञ्चति सोऽयं स्तम्भसमानत्वात्सभास्थाणुः, तम्। .... चरकाचार्यं वंशाग्रवर्तनस्य शिक्षयितारम्।.... ब्रह्मचारिणम् उपनीतम्।.... शै( ? सै)लगं पथिकानां वस्त्रादिकमपहृत्य यः शैलं पर्वतं गच्छति तादृशम्। ... गोव्यच्छं गवां विवासयितारम्। ... गोघातं विषकण्टकादिभिर्गवां मारयितारम्।... गोविकर्तं गवां विशसितारम्।.... यो नीचजातिर्दरिद्रः पुमान्क्षुत्पीडितः सन् गां विशसति तं पुरुषं प्रति तदीयं मांसं भिक्षितुमागत्य सेवते तं नीचं पूर्वोक्तद्वयाय कुर्यात्। तैब्रासा.

**[1]प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳ शब्दायाऽऽडम्बराघातं महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्यतोऽरण्याय दावपम्।।**

(१) प्रतिश्रुत्कायै अर्तनं दुःखिनम्। घोषाय भषं जल्पकम्। अन्ताय बहुवादिनम्। अनन्ताय मूकं वाग्विकलम्। शब्दाय आडम्बराघातम् आडम्बरमाहन्ति तं कोलाहलकर्तारम्। अथैकादशे यूपे। महसे वीणावादं वीणावादनकर्तारम्। क्रोशाय तूणवध्मम्, वाद्यविशेषं धमति तथाभूतम्।

---

(१) **शुसं.** ३०।१७; **तैब्रा.** ३।४।१४।१ वर्णाय... स्वपनमार्त्यै (भूत्यै जागरणम्। अभूत्यै स्वपनम्। तुलायै वाणिजम्। वर्णाय हिरण्यकारम्। विश्वेभ्यो देवेभ्यः सिध्मलम्। पश्चाद्दोषाय ग्लावम्। ऋत्यै).

(२) **शुसं.** ३०।१८; **तैब्रा.** ३।४।१६।१ (अक्षराजाय कितवम्। कृताय सभाविनम्। त्रेताया आदिनवदर्शम्। द्वापराय बहिःसदम्। कलये सभास्थाणुम्। दुष्कृताय चरकाचार्यम्। अध्वने ब्रह्मचारिणम्। पिशाचेभ्यः सैलगम्। पिपासायै गोव्यच्छम्। निर्ऋत्यै गोघातम्। क्षुधे गोविकर्तम्। क्षुत्तृष्णाभ्यां तम्। यो गां विकृन्तन्तं मांसं भिक्षमाण उपतिष्ठते।।).

(१) **शुसं.** ३०।१९; **तैब्रा.** ३।४।१३।१ अर्तनं (ऋतुलं) शब्दाया.... दावपम्। (महसे वीणावादम्। क्रोशाय तूणवध्मम्। आक्रन्दाय दुन्दुभ्याघातम्। अवरस्पराय शङ्खध्मम्। ऋभुभ्योऽजिनसंधायम्। साध्येभ्यश्चर्मम्णम्।).

अवरस्पराय शङ्खध्मं शङ्खवादकम्। वनाय वनपं वनपालकम्। अन्यतोऽरण्याय दावपं वनवह्निपम्।

शुम.

(२) ऋतुलं देशराजवार्ताकथनशीलम्।... भषम् असंबद्धप्रलापिनम्। ... बहुवादिनम् अधिकभाषणकुशलम्। .... तूणवध्मं वेणुं वादयन्तम्।... दुन्दुभ्याघातं भेर्या वादयितारम्। ... अजिनसंधायं चर्मचीरसंधानजीविनम्।... चर्मम्णं वीणादिप्रहारनिवारकचर्मनिर्मातारम्।

तैब्रासा.

**[1]नर्माय पुंश्चलू॰हसाय कारिं यादसे शाबल्यां ग्रामण्यं गणकमभिक्रोशकं तान्महसे वीणावादं पाणिघ्नं तूणवध्मं तान्नृत्तायाऽऽनन्दाय तलवम्।।**

(१) नर्माय पुंश्चलूं दुष्टां नारीम्। हसाय कारिं करणशीलम्। यादसे शाबल्याम्, शबलः कर्बुरवर्णः, तदपत्यभूतां स्त्रियम्। ग्रामण्यं ग्रामनेतारम्, गणकं ज्योतिर्विदम्, अभिक्रोशकं निन्दकम्, तान् त्रीन् 'महसे जुष्टं नियुनज्मि' इति एकादशे यूपे आलभते। एवं प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टाः तान् समाप्तिपर्यन्तान् द्वितीयोच्छ्रिते यूपे नियुनक्ति। तांश्च 'वीणावादं पाणिघ्नम्' इत्यादीन्, 'रात्र्यै कृष्णं पिङ्गाक्षम्' इत्यन्तांश्चतुर्दश, ततः 'अथैतानष्टौ विरूपान्' इत्यष्टौ च, मागधादींश्चतुरः, एवं षड्विंशतिं द्वितीये यूपे पूर्वोक्ता एकादश, एवं सप्तत्रिंशत्। तानेवाऽऽह – वीणावादम्, पाणिघ्नं हस्ततालवादकम्, तूणवध्मम्, तान् त्रीन् नृत्ताय आलभते। आनन्दाय तलवम्। वा गतिगन्धनयोः। गन्धनं हिंसा। तलं हस्तादितलम्, (तेन) वाति वाद्यमुखं हन्ति स तलवः, तं वाद्यवादकम्।

शुम.

(२) पुंश्चलूं स्वेच्छाचारिणीम्। .... वीणावादम्, गणकम्। वीणां वादयितुं कुशलो वीणावादः, श्रुतिजातिस्वरमण्डलादिगणनकुशलो गणकः। तावुभौ गीताभिमानिने द्रष्टव्यौ। .... भद्रवर्ती भद्रलक्षणयुक्तशरीरोपेताम्। तूणवध्मं मुखवादिनं वेणुवादिनं वा, ग्रामण्यं ग्रामस्य नेतारम्, पाणिसंघातं पाणिद्वयसंयोगनिर्वर्तिततालकृत्यम्, एतांस्त्रीन्पुरुषान् नृत्ताय। .... अनुक्रोशकं नृत्तसभायां जनानामाह्वातारं नृत्यसमाप्तिद्योतकध्वनिकर्तारं वा। ... तलवं काहलवादिनं मुखवाद्यकारिणं वा।

तैब्रासा.

**[1]अग्नये पीवानं पृथिव्यै पीठसर्पिणं वायवे चाण्डालमन्तरिक्षाय वꣳशनर्तिनं दिवे खलति॰ सूर्याय हर्यक्षं नक्षत्रेभ्यः किर्मिरं चन्द्रमसे किलासमह्ने शुक्लं पिङ्गाक्ष॰रात्र्यै कृष्णं पिङ्गाक्षम्।।**

(१) अग्नये पीवानं स्थूलम्। पृथिव्यै पीठसर्पिणम्, पीठेन आसनेन सर्पति गच्छति पीठसर्पी, तं पङ्गुम्। वायवे चाण्डालं चण्डालकर्माणम्। अन्तरिक्षाय वंशनर्तिनं वंशेन नर्तनशीलम्। दिवे खलतिं अलोमशिरस्कम्, खल्वाटमित्यर्थः। सूर्याय हर्यक्षं हरितनेत्रम्। नक्षत्रेभ्यः किर्मिरं कर्बुरवर्णम्। चन्द्रमसे किलासं सिध्मरोगवन्तम्। अह्ने शुक्लवर्णं पिङ्गाक्षम्। रात्र्यै कृष्णवर्णं पिङ्गाक्षम्।

शुम.

(२) अंसलं बलवन्तम्। चाण्डालं चण्डालजातीयम्। वंशनर्तिनं वंशाग्रनृत्तजीविनम्। ... मिर्मिरं निमिषदृष्टिम्।.... किलासं कुष्ठबिन्दुयुक्तम्।

तैब्रासा.

रथकारो यजनाधिकारी

**[2]रथकारं याजयेत्।।**

## जैमिनिसूत्राणि

सौधन्वनस्य रथकारस्याऽऽधानेऽधिकारः

**+ [3]वचनाद्रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात्।।**

'वर्षासु रथकार आदधीत' इत्याधानं त्रैवर्णिकभिन्नस्येति

---

(१) **शुसं.** ३०।२०; **तैब्रा.** ३।४।१५।१ (हसाय पुꣳश्चलूमालभते। वीणावादं गणकं गीताय। यादसे शाबुल्याम्। नर्माय भद्रवतीम्। तूणवध्मं ग्रामण्यं पाणिसंघातं नृत्ताय। मोदायानुक्रोशकम्। आनन्दाय तलवम्।।).

+ अस्य बालव्याख्यानं वसिष्ठस्य 'क्षत्रियवैश्या०' इत्यस्मिन् वचने द्रष्टव्यम्।

(१) **शुसं.** ३०।२१; **तैब्रा.** ३।४।१७।१ (भूम्यै पीठसर्पिणमालभते। अग्नयेऽꣳसलम्। वायवे चाण्डालम्। अन्तरिक्षाय वꣳशनर्तिनम्। दिवे खलतिम्। सूर्याय हर्यक्षम्। चन्द्रमसे मिर्मिरम्। नक्षत्रेभ्यः किलासम्। अह्ने शुक्लं पिङ्गलम्। रात्रियै कृष्णं पिङ्गाक्षम्।।).

(२) **स्मृकौ.** ५८.

(३) **जैसू.** ६।१।४४; **बाल.** १।९५ पृ. २९३ नेऽस्य स (ने स).

सिद्धान्तेनोपक्रमते – वचनादिति। आधानस्य वसन्तादिवाक्यैर्विहिताधानस्य सर्वशेषत्वात्। त्रैवर्णिकाङ्गत्वात् वचनात् उदाहृतवचनात् रथकारस्य वक्ष्यमाणजातेः। सुबोधिनी.

[1]**न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात्।।**

पूर्वपक्षमाह – न्याय्य इति। कर्मसंयोगात् रथनिर्माणरूपक्रियासंबन्धात् 'रथं करोति' इति व्युत्पत्त्या त्रैवर्णिक एव रथकारवाच्यो न्याय्यः, शूद्रस्य शूद्रप्रभृतेः प्रतिषिद्धत्वात् कर्मानधिकारात्। सुबोधिनी.

**अकर्मत्वात्तु नैवं स्यात्।।**

इमं पक्षं दूषयति – अकर्मेति। अकर्मत्वात् त्रैवर्णिकानां शिल्पिकर्मनिषेधात् नैवम् त्रैवर्णिको न रथकारवाच्यः। सुबोधिनी.

**आनर्थक्यं च संयोगात्।।**

संयोगात् ब्राह्मणाद्याधानेषु वसन्तादिकालसंयोगात् पुनर्वर्षर्तुविधानानर्थक्यम्। सुबोधिनी.

+ [2]**गुणार्थेनेति चेत्।।**

गुणार्थमिति पूर्वपक्षिसूत्रम्। गुणार्थं निमित्तार्थम्। त्रैवार्णिकेष्वेव रथकरणक्रियानिमित्तः कालो विधीयत इति भावः। सुबोधिनी.

[3]**उक्तमनिमित्तत्वम्।।**

उक्तमनिमित्तत्वमिति सिद्धान्तसूत्रम्। अयं भावः – 'य एवं विद्वानग्निमाधत्ते' इत्यनेनाऽऽधानस्य प्राप्तौ वसन्तादिकालो निमित्तं विधेयः। स च न संभवति, कालस्यानुपादेयत्वात्, इति निमित्तत्वं न संभवतीत्युक्तं प्राक् अस्मिन्नेव पादे इति।

सुबोधिनी.

+ [4]**सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन्।।**

तर्हि अत्र कोऽधिकारीत्युच्यते – सौधन्वना इति। त्रैवर्णिकाद्धीनाः सौधन्वना जातिविशेषाः अत्राधिकारिणः, 'सौधन्वना ऋभवः सूरचक्षसः' (ऋसं. १।११०।४) इति मन्त्रलिङ्गात्, 'ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति रथकारस्य' (तैब्रा. १।१।४।८) इति लिङ्गात्। तत् अधिकृतत्वं प्रतीयेत ज्ञातव्यम्। सुबोधिनी.

निषादस्य स्थपतेः रौद्रेष्ट्यामधिकारः

[1]**स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्।।**

'एतया निषादस्थपतिं याजयेत्' (सश्रौ. १५।४।२०) इत्यत्र त्रैवर्णिकानामधिकार उत निषादस्यैवेति संशये निषादानां स्थपतिरिति व्युत्पत्त्या त्रैवर्णिकानामेवाधिकार इति पूर्वपक्षे सिद्धान्तमाह – स्थपतिरिति। यः स्थपतिः स एव निषादः स्यात्, शब्दसामर्थ्यात् शब्दनिष्ठमुख्यवृत्तिसामर्थ्यात्। अयं भावः – षष्ठीतत्पुरुषे लक्षणापत्त्या कर्मधारय एव युक्त इति। सुबोधिनी.

**लिङ्गदर्शनाच्च।।**

'कूटं दक्षिणा' (सश्रौ. १५।४।२१) इति। कूटं निषादानामेवोपकारकम्, नाऽऽर्याणाम्। सुबोधिनी.

निषादस्थपतीष्टिर्लौकिकाग्निसाध्या

[2]**स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत।।**

स्थपतीष्टौ कोऽग्निरिति विचारे पूर्वपक्षमाह – स्थपतीति। स्थपतीष्टिः प्रयाजवत् यथा प्रयाजादीन् चोदकाद्गृह्णाति तथा अग्न्याधेयं प्रयोजयेत् गृह्णीयात्। तादर्थ्यात् इष्टिमात्रार्थत्वात् तत्रत्याधानस्य अपवृज्येत अग्न्युत्सर्गं कुर्वीत। सुबोधिनी.

**अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात्।।**

सिद्धान्तमाह – अपि वेति। आधानस्य असर्वशेषत्वात् यावत्पुरुषकर्तृकयज्ञाङ्गत्वाभावात्। आधानोत्पत्तिवाक्ये त्रैवर्णिककर्तृकत्वश्रवणेन त्रैवर्णिकयज्ञाङ्गत्वादिति भावः। सुबोधिनी.

---

+ अस्य बालव्याख्यानं वसिष्ठस्य 'क्षत्रियवैश्या०' इत्यस्मिन् वचने द्रष्टव्यम्।

(१) **जैसू.** ६।१।४५-४७.

(२) **जैसू.** ६।१।४८; **बाल.** १।९५ पृ. २९३ (गुणार्थेन) एतावदेव.

(३) **जैसू.** ६।१।४९.

(४) **जैसू.** ६।१।५०; **बाल.** १।९५ पृ. २९३ येरन् (यन्ते).

(१) **जैसू.** ६।१।५१-५२.

(२) **जैसू.** ६।८।२०-२१.

## गौतमः

वर्णैर्वर्णस्त्रीषु जनिताः अनुलोमाः षट्

**[१]अनुलोमा अनन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः ।।**

(१) असवर्णभार्योत्पन्नाः अनुलोमजाः। ब्राह्मणस्यानन्तरा क्षत्रिया, तस्यां तेनोत्पन्नः सवर्णः। क्षत्रियादनन्तरायां वैश्यायामम्बष्ठः। वैश्यात्तदनन्तरायां शूद्रायामुग्रः। ब्राह्मणादेकान्तरायां वैश्यायां निषादः। क्षत्रियादेकान्तरायां शूद्रायां दौष्मन्तः। ब्राह्मणाद्व्यन्तरायां शूद्रायां पारशवः।

अप. १।९१ पृ. ११७

(२) इदानीं तासु जातानां पुत्राणां विशेषार्थमाह – अनुलोमा इति। अनुलोमाः वर्णानुपूर्व्येणोत्पन्नाः। ब्राह्मणस्यानन्तरा क्षत्रिया, एकान्तरा वैश्या, द्व्यन्तरा शूद्रा। क्षत्रियस्यानन्तरा वैश्या, एकान्तरा शूद्रा, तस्य द्व्यन्तरा नास्ति। वैश्यस्यानन्तरा शूद्रा, एकान्तरा तस्य नास्ति। ततश्च ब्राह्मणेनानन्तरायां जातः सवर्णः। क्षत्रियेणानन्तरायां जातः अम्बष्ठः। वैश्येनानन्तरायां जात उग्रः। ब्राह्मणेनैकान्तरायां जातः निषादः। क्षत्रियेणैकान्तरायां जातः दौष्यन्तः। ब्राह्मणेन द्व्यन्तरायां जातः पारशवः। † मभा.

वर्णैर्वर्णस्त्रीषु जनिताः प्रतिलोमाः षट्

**[२]प्रतिलोमाः सूतमागधायोगवक्षत्तृवैदेहकचण्डालाः ।।**

प्रातिलोम्येनोत्पन्नाः प्रतिलोमाः। तास्वनन्तरैकान्तरद्व्यन्तरास्वेव। क्षत्रियस्यानन्तरा ब्राह्मणी, वैश्यस्यानन्तरा क्षत्रिया, शूद्रस्यानन्तरा वैश्या। वैश्यस्यैकान्तरा ब्राह्मणी। शूद्रस्य क्षत्रिया। शूद्रस्य द्व्यन्तरा ब्राह्मणी। क्षत्रियस्यानन्तरायां जातः सूतः। वैश्यस्यानन्तरायां जातो मागधः। शूद्रस्यानन्तरायां जातः आयोगवः। वैश्यस्यैकान्तरायां जातः क्षत्ता। शूद्रस्यैकान्तरायां जातो वैदेहकः। शूद्रस्य द्व्यन्तरायां जातश्चण्डालः। एवं तावद्गौतममतम्। * मभा.

† गौमि., वीमि. मभागतम्।

* गौमि. मभागतम्।

(१) **गौध.** ४।१६; **अप.** १।९१ पृ. ११७ मा अन (मान) ष्यन्तपार (ष्मन्तपारा); **गौमि.** ४।१४ दौष्यन्त (दौष्मन्त); **वीमि.** १।९२ मा अन (मान).

(२) **गौध.** ४।१७; **गौमि.** ४।१५ लोमाः (लोमास्तु) क्षत्तृ (कृत).

केषांचिदनुलोमप्रतिलोमानां मतान्तरेण संज्ञाभेदाः

**[१]ब्राह्मण्यजीजनत्पुत्रान्वर्णेभ्य आनुपूर्व्याद्ब्राह्मणसूतमागधचण्डालान् ।।**

(१) इदानीमन्येषां मतेन संज्ञाभेदमाह – ब्राह्मण्यजीजनदिति। ब्राह्मणी जनितवती ब्राह्मणादिभ्यो वर्णेभ्यः आनुपूर्व्यात् ब्राह्मणाद्ब्राह्मणम्, क्षत्रियात्सूतम्, वैश्यान्मागधम्,शूद्राच्चण्डालम्। संसारस्यानादित्वप्रदर्शनार्थमजीजनदिति भूतनिर्देशः। मभा.

(२) स्पष्टोऽर्थः। अत्राऽऽनुपूर्व्यग्रहणं वर्णक्रमविवक्षापरम्, न त्वनुलोमपरम्। गौमि.

**[२]तेभ्य एव क्षत्रिया मूर्धावसिक्तक्षत्रियधीवरपुल्कसान् ।।**

अजीजनदानुपूर्व्येणेति च वर्तते। तेभ्य एव ब्राह्मणादिभ्यः आनुपूर्व्यात् क्षत्रिया अजीजनत् जनितवती। क्षत्रियायां ब्राह्मणाज्जातो मूर्धावसिक्तः। क्षत्रियायां क्षत्रियाज्जातः क्षत्रियः। वैश्यात् क्षत्रियायां जातः धीवरः। शूद्रात् क्षत्रियायां जातः पुल्कसः। मभा.

**[३]तेभ्य एव वैश्या भृज्यकण्ठमाहिष्यवैश्यवैदेहकान् ।।**

अजीजनदानुपूर्व्येणेति वर्तते। एवं वैश्यायां ब्राह्मणाज्जातो भृज्यकण्ठः। वैश्यायां क्षत्रियाज्जातो माहिष्यः। वैश्यायां वैश्याज्जातो वैश्यः। वैश्यायां शूद्राज्जातो वैदेहकः।

मभा.

**[४]पारशवयवनकरणशूद्राञ्छूद्रेत्येके ।।**

(१) एतेभ्य एवाऽऽनुपूर्व्याज्जनितवती। शूद्रायां ब्राह्मणाज्जातः पारशवः। क्षत्रियाच्छूद्रायां जातो यवनः। वैश्याच्छूद्रायां जातः करणः। शूद्राच्छूद्रायां जातः शूद्रः। इत्येवं संज्ञाभेदेन एके आचार्याः वर्णयन्ति। एकीयमतेन संज्ञाभेदकथनं च देशान्तरेष्वेतत्संज्ञोपलब्धावपि न जातिभेदो मन्तव्य इत्येवमर्थः। मभा.

(१) **गौध.** ४।१८; **गौमि.** ४।१६.

(२) **गौध.** ४।१९; **गौमि.** ४।१७ सिक्त (सिक्थ).

(३) **गौध.** ४।२०; **गौमि.** ४।१७ भृज्य (भृज्ज) वैदेहकान् (वैदेहान्).

(४) **गौध.** ४।२१; **गौमि.** ४।१७.

(२) एके स्मर्तारः। * गौमि.

विशिष्टदम्पतिपरंपरोत्पन्नेषु
जात्युत्कर्षापकर्षौ

[1]**वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन।।**

**पञ्चमेनाऽऽचार्याः।।**

(१) एषामपि च – वर्णान्तरेति। वर्णशब्देन उत्पादकबीजमुच्यते। यो वर्ण उत्पादकः तद्वर्णः संभवेदित्यर्थः। सप्तमेन युगपरिवर्तनेन। अन्तरशब्देन क्षेत्रमित्युच्यते। ततश्च क्रमो द्रष्टव्यः, उत्कर्षेणोत्पादकवर्णत्वमपकर्षेण क्षेत्रवर्णत्वमिति। ततः स्त्रीतः उत्कर्षो मन्तव्यः पुरुषादपकर्षश्च। तद्यथा – ब्राह्मणेन क्षत्रियायां मूर्धावसिक्ता जायते। साऽपि मूर्धावसिक्ता तत्रोत्कृष्टबीजगुणा ब्राह्मणेनैव दुहितरमुत्कृष्टबीजगुणां जनयति, साऽपि ब्राह्मणेनैवेत्येवं सप्तमे युगे ब्राह्मण्येव भवतीत्येवमुत्कर्षः। तथा ब्राह्मणेन क्षत्रियायां मूर्धावसिक्तो जायते। स क्षत्रियया संबध्यमानः पूर्ववत् क्षत्रिय एव भवतीत्यपकर्षः। एवं शूद्रापत्यादावपि सर्वत्र द्रष्टव्यम्। तथा च मनुः – 'शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते। अश्रेयाच्छ्रेयसीं जातिं प्राप्नोत्यासप्तमाद्युगात्।। शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्। क्षत्रियाज्जातमेवं च विद्याद्वैश्यात्तथैव च।।' (मस्मृ. १०।६४-६५) इति।

पञ्चमेनैव युगपरिवर्तनेन वर्णान्तरगमनं भवतीति केचिदाचार्या वर्णयन्ति। इदमपि वृत्तापेक्षया द्रष्टव्यम्। मभा.

(२) मन्यन्त इति वाक्यशेषः। तेषामेव सवर्णादीनामनुलोमजातानामुत्कर्षेण पितृद्वारा सप्तमपुरुषादुत्कृष्टवर्णान्तरप्राप्तिर्भवति। अपकर्षेण मातृद्वारा पञ्चमपुरुषादपकृष्टवर्णान्तरप्राप्तिर्भवति। तद्यथा – ब्राह्मणेनोढायां क्षत्रियायामुत्पादिता सवर्णा, साऽपि ब्राह्मणेनोढा, तस्यामुत्पादिता चेत्येवमा सप्तम्याः। सप्तमी तु ब्राह्मणेनोढा यदपत्यं सूते तद्ब्राह्मणजातीयमेव भवति। एवं ब्राह्मणेन क्षत्रियायामुत्पादितः पुत्रः सवर्णः, सोऽपि क्षत्रियामुद्वाह्य पुत्रमुत्पादयति, सोऽपि क्षत्रियामित्येवमा पञ्चमात्। पञ्चमस्तु क्षत्रियायां यदपत्यमुत्पादयति तत्क्षत्रियजातीयमेव भवति। विकल्पस्यैवं चार्थः – तत्रापि वर्णान्तरगमने वृत्तस्वाध्यायबाहुल्ये सति पञ्चमेनोत्कृष्टं भवति, हीनवृत्त्या पञ्चमेनापकृष्टं च भवतीति। एवं क्षत्रियस्य वैश्यायां वैश्यस्य शूद्रायामपि द्रष्टव्यम्। गौमि.

[1]**सृष्ट्यन्तरजानां च।।**

(१) सृष्टिः चत्वारो वर्णाः, तदन्तरं मूर्धावसिक्तादि, तेभ्यो जाताः सृष्ट्यन्तरजाः। 'वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन, पञ्चमेनाऽऽचार्याः' इत्यनुकर्षणार्थश्चकारः। ततश्च तत्राप्यनुलोमप्रतिलोमान् कल्पयित्वा उत्पादकक्षेत्रजात्यन्तरगमनं द्रष्टव्यम्। मभा.

(२) चातुर्वर्ण्यम(न?)न्तरेण चानुलोमजातानां सवर्णाम्बष्ठादीनामप्युत्कर्षापकर्षाभ्यामन्योन्यवर्णान्तरगमनं भवति। तद्यथा – सवर्णेनोढायामम्बष्ठ्यामुत्पादिता दुहिता पुनः सवर्णेनोह्यते, तस्यामप्युत्पादिता सवर्णेनेत्यासप्तमात्। सप्तमी तु सवर्णेनोढा यदपत्यं (उत्पादयति) स (सवर्ण) एव भवति। एवं सैवा(? सवर्णा)म्बष्ठेनोढा यां दुहितरं सूते साऽप्यम्बष्ठेनेति सप्तमी त्वम्बष्ठेनोढा यदपत्यमुत्पादयति सोऽम्बष्ठ एव भवति। एवमम्बष्ठयोरपि(? ष्ठोग्रादिष्वपि) द्रष्टव्यम्। गौमि.

प्रतिलोमजानां शूद्राजातानुलोमजानां
चोपनयनादिधर्मानधिकारः

[2]**प्रतिलोमात्तु धर्महीनः।।**

(१) तुशब्दो विशेषार्थः। सृष्टेरपि प्रतिलोमाज्जातः सूतादिः धर्महीनः तदन्तरे प्रतिलोमाज्जातो विशेषत एवेति। धर्मशब्देनोपनयनं द्रष्टव्यम्। एवं च अनुलोमानामुपनयनं सिद्धम्। वेदाध्ययने तु प्रतिषेधो द्रष्टव्यः। कुतः? 'अनुलोमानामुपनयनमेव न वेदाध्ययनं न पञ्चयज्ञं नौपासनं नाग्निहोत्रं न समित्कार्यं न संध्योपासनम्। उपनयनमपि तूष्णीमेव' इत्यादिस्मृत्यन्तरदर्शनात्।

---

* शेषं मभागतम्।

(१) **गौध.** ४।२२-२३; **गौमि.** ४।१८ सप्तमेन (सप्तमे) पञ्चमेनाऽऽ(पञ्चमे वाऽऽ); **बौवि.** १।१६।१३.

(१) **गौध.** ४।२४; **गौमि.** ४।१९ जानां (जातानां).

(२) **गौध.** ४।२५; **विश्व.** १।९४; **गौमि.** ४।२० (प्रतिलोमास्तु धर्महीनाः); उ. १।१।१४ गौमिवत्; **ममु.** १०।२८ मात्तु (मजास्तु) हीनः (हीनाः); **दीक.** १।१ लोमात्तु (लोमजा) हीनः (हीनाः); **मच.** १०।२७ (प्रतिलोमजास्तु कर्महीनाः); **बाल.** १।९४ पृ. २८६ लोमात्तु (लोमा) हीनः (हीनाः) स्मरणम्.

केचिच्चकारं न पठन्ति, तेषामुत्तरसूत्रात् 'शूद्रायां च' इत्यतश्चकारमध्याहृत्य योजनीयं 'सृष्ट्यन्तरजानाम्' इत्यस्मिन्सूत्रे। अपरे 'सृष्ट्यन्तरजानां प्रतिलोमात्तु धर्महीनः' इत्येकमेवेदं सूत्रमिति व्याचक्षते। सर्वत्र व्याख्यानं तुल्यमेव। मभा.

(२) प्रतिलोमाज्जाताः सूतादयः धर्महीनाः उपनयनादिधर्महीनाः। तत्र सूतस्यैकस्योपनयनमात्रं शास्त्रान्तरेऽङ्गीकृतम्। गौमि.

(३) प्रतिलोमजानामहिंसासत्यादिसामान्यधर्माधिकारोऽस्ति। 'प्रतिलोमजा धर्महीनाः' इति गोतमीयनिषेधो विशेषधर्मपरः। दीक. १।१

[1]**शूद्रायां च।।**

(१) अनुलोमानामपि शूद्रायां जात उपनयनादिरहितः। एवं च सवर्णाम्बष्ठनिषादानामेवोपनयनम्। तथा च स्मृत्यन्तरम् – 'सवर्णमुपनीय धनुर्वेदं शिक्षयेत्, अम्बष्ठमुपनीय वैद्यशास्त्रम्, निषादमुपनीय हस्तिशिक्षां शिक्षयेत्, अन्येषामुपनयनाभावः' इति। केचिदम्बष्ठायां सवर्णाज्जातमुपनीय नृत्तं शिक्षयेदिति वर्णयन्ति। उग्रादयो वृत्तिविशेषेण ज्ञातव्याः। उग्रो हन्ता व्यालमृगादीनाम्, दौष्यन्तो मत्स्यघातकः, पारशवो भद्रकालीपूजकः, सूतो हयशिक्षकः, मागधो वणिक्पथसेवी, पट्टकृदायोगवः, क्षत्ता चाक्रिकः, स एव लवणविक्रेता, वैदेहकोऽजपालः इत्यादि। मभा.

(२) आनुलोम्येनापि शूद्रायामुत्पन्नः पारशवादिर्धर्महीनः। एवं च सवर्णादीनामनुलोमानां सिद्धो धर्माङ्गीकारः। तथा च मनुः – स्वजातिजात्यन्तरज्ञाः(? जाः) षट् सुता द्विजधर्मिणः। शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।।' (मस्मृ. १०।४१) इति। गौमि.

शूद्रजातप्रतिलोमानां पातित्यं तत्रापि
चाण्डालस्य पापिष्ठत्वम्

[2]**असमानायां च शूद्रात्पतितवृत्तिः।।**

(१) उत्कृष्टजातायां शूद्राज्जातः पतितवत्स्पर्शनप्रतिग्रहादौ वर्जनीय इत्यर्थः। मभा.

(२) शूद्रादसमानायां वैश्यादिस्त्रियामुत्पादित आयोगवादिः पतितवृत्तिः पतितवद्दर्शनस्पर्शनप्रतिग्रहादौ वर्जनीयः। एवं च वैश्यात्क्षत्रियायां क्षत्रियात् ब्राह्मण्यां जातो न पतितवृत्तिः।। गौमि.

[1]**अन्त्यः पापिष्ठः।।**

(१) शूद्रेण ब्राह्मण्यां जातः पापतमः। अतः सोऽत्यन्तं परिहर्तव्यः। तथा च स्मृत्यन्तरम् – 'चण्डालमागोवालव्यजनाद्गच्छेत्' इत्यादि।

तत्रानुलोमानामुपनयनविधानात्, अन्यायेनोत्पन्नानां तदयोग्यत्वात् यद्यपि 'सदृशीं भार्यां विन्देत' (गौध. ४।१) इत्यत्र समानजातिष्वेव चोदितः, तथापि प्रथमनिविष्टस्य निकृष्टजातिष्वपि क्रमेण विवाहोऽस्तीति ज्ञापयति। तथा च वसिष्ठः – 'तिस्रो ब्राह्मणस्य भार्या वर्णानुपूर्व्येण, द्वे राजन्यस्य, एकैका वैश्यशूद्रयोः' (वाध. १।२४) इति। 'प्रतिलोमशूद्राभ्यां जातो धर्महीनः' इति वक्तव्ये 'शूद्रायां च' इति पृथक्सूत्रकरणात् शूद्राविवाहस्यापि कथंचिद्योग्यतां दर्शयति। ततश्च प्रथममुत्तमजातिषूत्पन्नस्य कामिनः शूद्राविवाहोऽपि मन्त्रवर्जो द्रष्टव्यः। तथा च वसिष्ठः – 'शूद्रामप्येके मन्त्रवर्जम्' (वाध. १।२५) इति। तत्र अपिशब्दस्य निन्दार्थत्वादुत्पन्नपुत्रस्येति तत्रार्थः। 'प्रतिलोमात्तु धर्महीनः' इत्यनेन निकृष्टस्योत्तमाविवाहाभावं दर्शयति। तथा च वसिष्ठः – 'छन्नोत्पन्नास्तु ये केचित्प्रातिलोम्यगुणाश्रिताः। गुणाचारपरिभ्रंशात्कर्मभिस्तान्विजानीयुः।।' (वाध. १८।७) इत्यादि। छन्नोत्पन्नत्वेन प्रातिलोम्येन विवाहाभाव उक्त इति तत्रार्थः। मभा.

(२) शूद्रादसमानाज्जनितेषु तेषु योऽन्त्यो ब्राह्मण्यां जातश्चण्डालः पापिष्ठोऽत्यन्तं वर्जनीयः। तथा च स्मृत्यन्तरम् – 'चण्डालमाजगोवालव्यजनान्प(? त्प)रिहरेत्' इति। गौमि.

प्रतिलोमानां द्विजशुश्रूषावृत्ता-
वप्यधिकारः

[2]**शूद्रापुत्रवत्प्रतिलोमासु।।**

(१) प्रतिलोमासु स्त्रीषु जातानामपि शुश्रूषूणां शूद्रापुत्रवत्

---

(१) **गौध.** ४।२६; **गौमि.** ४।२१.
(२) **गौध.** ४।२७; **गौमि.** ४।२२ च (तु).

(१) **गौध.** ४।२८; **गौमि.** ४।२३.
(२) **गौध.** २८।४६; **गौमि.** २८।४३ लोमासु (लोमास्तु).

वृत्तिमूलं दातव्यमित्यर्थः। तत्र चण्डालादीनां शुश्रूषासंभवात् हीनतरं देयमिति द्रष्टव्यम्। एवं प्रतिलोमानामप्ययमेव धर्मः।　　मभा.

(२) प्रातिलोम्येन जातानां सूतादीनामपि गुणोत्कृष्टानां शूद्रापुत्रवद्वृत्तिमूलं दातव्यमिति।　　गौमि.

## वृद्धगौतमः

कानीनादीनां षण्णां चण्डालत्वम्

**[1]कानीनश्च सहोढश्च तावुभौ कुण्डगोलकौ।**
**आरूढपतितो ज्ञातः पतितस्यापि यः सुतः।**
**षडेते विप्र चण्डाला निषिद्धाः श्वपचादपि।।**

## हारीतः

बन्दि-निषाद-पुल्कसोत्पत्तिः

**[2]क्षत्रियायां वैश्यशूद्रौ बन्दिनिषादौ जनयतः।।**
**[3]वैश्यायां शूद्रः पुल्कसान् जनयति।।**

## वृद्धहारीतः

षट् अनुलोमाः षट् प्रतिलोमाश्च, अनुलोमाः सन्तः प्रतिलोमा असन्तः

**[4]सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।**
**तेषां संकरयोगाच्च प्रतिलोमानुलोमजाः।।**
**विप्रान्मूर्धाभिषिक्तस्तु क्षत्रियायामजायत।**
**वैश्यायां तु तथाऽम्बष्ठो निषादः शूद्रया तथा।।**
**राजन्याद्वैश्याशूद्र्योस्तु माहिष्योग्रौ तु तौ स्मृतौ।**
**शूद्र्यां वैश्यात्तु करणस्थिरैर्वा तेऽनुलोमजाः।।**
**विप्रायां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा।**
**चण्डालस्तु ततः शूद्रात्सर्वकर्मसु गर्हितः।।**
**मागधः क्षत्रियायां वै वैश्यात्क्षत्ता तु शूद्रतः।**
**शूद्रादायोगवं वैश्या जनयामास वै सुतम्।।**
**रथकारः करण्यां तु माहिष्येण प्रजायते।**
**असत्सन्तस्ततो ज्ञेयाः प्रतिलोमानुलोमजाः।।**
**प्रातिलोमासु वै जाता गर्हिताः सर्वकर्मणाम्।।**

(१) **वृगौसं.** ७७७.
(२) **स्मृकौ.** ११; **शूक.** २६५.
(३) **स्मृकौ.** ११; **शूक.** २६५ (जनयति०).
(४) **वृहास्मृ.** ७।१५०-१५६.

**[1]पाषण्डाः पतिताः पापास्तथैव प्रतिलोमजाः।**
**कुलटाश्च विकर्मस्था असन्तः परिकीर्तिताः।।**

प्रतिलोमानुलोमानां क्रमेण हीनाहीन-शिल्पकर्माणि वृत्तयः

**[2]अपकृष्टनिकृष्टानां जीवितं शिल्पकर्मभिः।**
**हीनं तु प्रतिलोमानामहीनमनुलोमिनाम्।।**
**चर्मवैणववस्त्राणां हिंसाकर्म च नेजनम्।**
**गाणिक्यं यवनाद्यं च मद्यमांसक्रिया तथा।।**
**सारथ्यं वाहकानां च रथानां भूभृतामपि।**
**एवमादि निषिद्धं यत्प्रातिलोम्यं तदुच्यते।।**
**यत्सौम्य शिल्पं लोकेऽस्मिन् सौम्यं तदनुलोमकम्।**
**मृद्दारुशैललोहानां शिल्पं सौम्यमिहोच्यते।।**

## बौधायनः

सवर्णजातः सवर्णः, एकान्तराजातो जनकवर्णतुल्यः

**[3]तासु पुत्राः सवर्णानन्तरासु सवर्णाः।।**

संव्यवहारार्थं संज्ञाकरणम्। सवर्णास्वनन्तरासु चेति विग्रहः। सवर्णाः समानजातीयाः। अनन्तराः इतराः। ब्राह्मणस्य क्षत्रिया वाऽनन्तरेत्यादि योज्यम्। तत्र सवर्णायां जातः पुत्रः *स एव वर्णः (यस्य) इति व्युत्पत्त्या सवर्णः। अनन्तरायां तु सवर्णसदृश इति। आह च मनुः – 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्। सदृशानेव तानाहुर्मातृदोषविगर्हितान्।।' (मस्मृ. १०।६) इति।　　बौवि.

* 'समानो वर्णः यस्य' इत्यत्र बहुव्रीहौ समानशब्दस्य 'ज्योतिर्जनपद०' (पासू. ६।३।८५) इत्यनेन सादेशः। समानशब्दश्च अभिन्ने सदृशे चार्थे वर्तते। तत्राभिन्नार्थमादाय सवर्णाजातः सवर्णः, सदृशार्थमादाय अनन्तराजातः सवर्णः। अभेदस्य सादृश्यस्य च जनकवर्णः प्रतियोगी 'जनकवर्णेनाभिन्नः, जनकवर्णेन सदृशः' इति। सवर्णशब्दघटकवर्णशब्दबोध्योऽपत्यनिष्ठवर्ण उभयत्रानुयोगी। अत एव परस्तात् अनन्तराजातमुद्दिश्य 'सवर्णसदृशः' इत्युक्तिर्नौचित्यं भजते, फलाभेदेऽपि व्युत्पत्तिघटकजनकापत्यवर्णसादृश्यद्वारक-जनकापत्यसादृश्यस्यैव 'जनकसदृशः' इति वक्तव्यत्वात्, पूर्वोक्त-सवर्णेन सादृश्यस्योपक्रान्तशब्दव्युत्पादनानाकङ्क्षितत्वात्।

(१) **वृहास्मृ.** ७।१५८-१५९.
(२) **वृहास्मृ.** ७।१८४-१८७.
(३) **बौध.** १।१६।६.

एकान्तराद्व्यन्तराजाता

अनुलोमाः

[1]**एकान्तरद्व्यन्तरास्वम्बष्ठोग्रनिषादाः ।।**

ब्राह्मणस्य वैश्या एकान्तरा। स तस्यामम्बष्ठं जनयति। तस्यैव शूद्रा द्व्यन्तरा। तस्यां निषादम्। क्षत्रियस्य पुनः सैवैकान्तरा। सोऽपि तस्यामेवोग्रं नाम पुत्रं जनयति। एते त्रयः पूर्वैरनुलोमैः सह षडनुलोमा अनुक्रान्ताः। तत्र बीजोत्कर्षे क्षेत्रापकर्षे च सत्यानुलोम्यं भवति। विपर्यये तु प्रातिलोम्यं भवति। बौवि.

वर्णसंकरजा वर्णसंकीर्णसंकरजाश्च

प्रतिलोमाः

**प्रतिलोमास्त्वायोगवमागधवैणक्षत्तृपुल्कसकुक्कुट-वैदेहकचण्डालाः ।।**

**अम्बष्ठात्प्रथमायां श्वपाकः ।।**

**उग्राद्द्वितीयायां वैणः ।।**

**निषादात्तृतीयायां पुल्कसः ।।**

**विपर्यये कुक्कुटः ।।**

के पुनः प्रतिलोमाः? तानाह – प्रतिलोमा इति। पुल्कसा( ? वैश्या)न्निषाद्यां जातस्य कुक्कुटसंज्ञेत्यर्थः। अनेनैतद्विज्ञातं भवति – प्रतिलोमा(द)नुलोमेन स्त्रियां जातोऽपि प्रतिलोम एवेति। अन्यथा कथमेवमवक्ष्यत्। बौवि.

बीजोत्कर्षवशात् पञ्चमयुग्मजनिते

बीजिजात्युत्पत्तिः बीजि-

धर्माधिकारश्च

[2]**निषादेन निषाद्यामा पञ्चमाज्जातोऽपहन्ति शूद्र-ताम् ।।**

अथ बीजोत्कर्षवशात्पुनरपि वर्णान्तरप्राप्तिमाह – निषादेनेति। अत्र गौतमीयम् – 'वर्णान्तरगमनमुत्कर्षाप-कर्षाभ्यां सप्तमेन। पञ्चमेनाऽऽचार्याः' (गौध. ४।२२-२३)। आङ् तत्र अभिविधौ। निषादो वैश्याच्छूद्रायां जात इति कृत्वोच्यते। बौवि.

(१) **बौध.** १।१६।७-१२.

(२) **बौध.** १।१६।१३; **नन्द.** १०।६४ तोऽप (तेरप).

[1]**तमुपनयेत्षष्ठं याजयेत्सप्तमोऽविकृतो भवति ।।**

अविकृतः नैजमेव वर्णं प्रतिपद्यत इत्यर्थः। एवं तावच्छूद्रायां वैश्याज्जातस्याऽऽसप्तमाद्वैश्यत्वापत्तिरुक्ता, एवमेव वैश्यायां जातस्य क्षत्रियत्वापत्तिः, तथा क्षत्रियायां जातस्य ब्राह्मण्यापत्तिरुच्यते सवर्णत्यागादपि वर्णसंकरो जायते इतीदं प्रदर्शयितुम्। आह च मनुः – 'व्यभिचारेण वर्णानामवेद्यावेदनेन च। स्वकर्मणां च त्यागेन जायते वर्णसंकरः ।।' (मस्मृ. १०।२४) इति। स्वकर्मणां त्यागः उपनयनादिसंस्कारहानिरधिकृते। अतो वर्णसंकरप्रदर्श-नार्थत्वादुपपन्नमिहाभिधानम्। बौवि.

व्रात्यलक्षणम्

[2]**त्रिषु वर्णेषु सादृश्यादव्रती जनयेत्तु यान्।**
**तान् सावित्रीपरिभ्रष्टान्व्रात्यानाहुर्मनीषिणः ।।**

वर्णसंकरजा अनुलोमाः,

तत्र अनन्तराजाः

सवर्णाः

[3]**तत्र सवर्णासु सवर्णाः ।।**

अथानन्तरप्रभवानामेव किंचिद्वक्तव्यमित्यत आह – तत्रेति। अनुलोमविषयमिदम्। वर्णानन्तरजसवर्णासु सवर्णैरुत्पादिता अपि सवर्णा भवन्तीत्यर्थः। बौवि.

**ब्राह्मणात्क्षत्रियायां ब्राह्मणो वैश्यायामम्बष्ठः शूद्रायां निषादः ।।**

ब्राह्मणात्क्षत्रियायां जातायां तस्यां ब्राह्मणेनोत्पादितः। अत्र पूर्वसूत्रे आदिः सवर्णशब्दः सदृशवर्ण इत्यनया व्युत्पत्त्या वर्तते। सूत्रारम्भस्तु तेषामपि वर्णधर्मप्राप्त्यर्थः। बौवि.

**पारशव इत्येके ।।**

सोऽयं संज्ञाव्यतिरेकः। बौवि.

**क्षत्रियाद्वैश्यायां क्षत्रियः शूद्रायामुग्रः ।।**

अयमप्येकीयमतेन संज्ञाव्यतिरेकप्रकारः। बौवि.

(१) **बौध.** १।१६।१४; **नन्द.** १०।६४ त्वष्ठं (त्वष्ठे) (सप्त.... भवति०).

(२) **मुक्ता.** ७२.

(३) **बौध.** १।१७।१-४.

**[1]वैश्याच्छूद्रायां रथकारः।।**

(१) अत्र वैश्यो नाम क्षत्रियाद्वैश्यायामुत्पन्नो माहिष्यः, वैश्याच्छूद्रायामुत्पन्ना करणी शूद्रेति व्यपदिश्यते। अत एव याज्ञवल्क्यः – 'माहिष्येण करण्यां तु रथकारः प्रजायते।' (यास्मृ. १।९५) इति। स्मृकौ. ८

(२) अस्य त्वाधानेऽधिकारो 'वर्षासु रथकारः' इति। एते अनुक्रान्ता अनुलोमाः। बौवि.

वर्णसंकरजाः

प्रतिलोमाः

**[2]शूद्राद्वैश्यायां मागधः क्षत्रियायां क्षत्ता ब्राह्मण्यां चण्डालः।।**

अथ प्रतिलोमासु यच्छूद्रबीजं तदाह – शूद्रादिति। बौवि.

**वैश्यात्क्षत्रियायामायोगवो ब्राह्मण्यां वैदेहकः।।**

अथ वैश्यबीजमुच्यते – वैश्यादिति। बौवि.

**क्षत्रियाद्ब्राह्मण्यां सूतः।।**

क्षत्रियबीजं पुनः – क्षत्रियादिति। बौवि.

संकीर्णसंकरजा अनुलोम-

प्रतिलोमाः

**तत्राम्बष्ठोग्रसंयोगे भवत्यनुलोमः।।**

अथ वर्णसंकरजातानां परस्परसंकरजातानाह – तत्रेति। उत्कृष्टबीजप्रभवायामनुलोमायां जाता अप्यनुलोमा एव भवन्तीत्यभिप्रायः। बौवि.

**क्षत्तृवैदेहकयोः प्रतिलोमः।।**

शूद्रक्षत्रियापत्यभवात् प्रतिलोमाद्वैश्यब्राह्मणीप्रभवायां प्रतिलोमायामुत्पन्नोऽपि प्रतिलोमो भवतीत्यर्थः। एवमन्यत्रापि प्रयोजकानुसंधानेन वेदनीयम्। बौवि.

**उग्राज्जातः क्षत्तायां (? त्त्र्यां) श्वपाकः।।**

**वैदेहकादम्बष्ठायां वैणः।।**

**निषादाच्छूद्रायां पुल्कसः।।**

**शूद्रान्निषाद्यां कुक्कुटः।।**

अतः पुनरपि प्रतिलोमानेवाऽऽह – उग्रादिति। इदमपि प्रयोजकग्रहणार्थम्, नोदाहरणावधिकमेव कथ्यते। एवम् एकार्था अनेकशब्दाः अनेकार्थश्चैकशब्दः शब्दान्तरेषु तत्र तत्र संव्यवहारभेदप्रदर्शनार्थाः। एवं च तेन कर्मणा तरतमभावं विजानीयादित्युक्तं भवति। तथा च वसिष्ठः – 'छन्नोत्पन्नास्तु ये केचित्प्रातिलोम्यगुणाश्रिताः। गुणाचारपरिभ्रंशात्कर्मभिस्तान् विजानीयुः।।' (वाध. १८।७) इति। तद्विशेषावगतिश्च तत्परिहरणार्थम्। बौवि.

व्रात्यलक्षणम्

**वर्णसंकरादुत्पन्नान्व्रात्यानाहुर्मनीषिणः।।**

वर्णग्रहणात् संकरजा व्रात्या भवन्ति। यद्वा प्रतिलोमजाः वर्णसंकरादुत्पन्ना इति कल्पनीयम्। ततश्च व्रात्याः संस्कारहीना इति कृत्वा प्रतिलोमा धर्महीना इत्येतदेव ज्ञापितं भवति। बौवि.

धर्म्यविवाहपूर्वकोत्पादिताः

सजातीया भवन्ति

**[1]एतानष्ट विवाहानाहुः। एतैः संस्कृताभिरुत्पन्नास्तज्जातीया भवन्ति नान्ये।।**

## वैखानसधर्मसूत्रम्

अनुलोमप्रतिलोमान्तरालव्रात्यानां

लक्षणानि

**[2]चातुर्वर्ण्यसंकरेणोत्पन्नानामनुलोमप्रतिलोमान्तरालव्रात्यानामुत्पत्तिं नाम वृत्तिं च।।**

**ऊर्ध्वजातादधोजातायां जातोऽनुलोमः।।**

**अधरोत्पन्नादूर्ध्वजातायां जातः प्रतिलोमः।।**

**ततोऽनुलोमादनुलोम्यां जातोऽन्तरालः।।**

**प्रतिलोमात्प्रतिलोम्यां जातो व्रात्यो भवति।।**

***[3]इत्येते चातुर्वर्णिकाः।।**

**तेषामेव संकरेणोत्पन्नाः सर्वेऽनुलोमाद्याः।।**

सवर्णाद्यनुलोमानामुत्पत्तयो

वृत्तयश्च

**ब्राह्मणात् क्षत्रियकन्यायां जातः सवर्णोऽनुलोमेषु मुख्यः।।**

---

(१) **बौध.** १।१७।५; **स्मृकौ.** ८; **दीक.** १।९५ (वैश्याच्छूद्रकन्यायां जातो रथकारः); **वीमि.** १।९५ द्रायां + (जातो) पृ. १६७; **बाल.** १।९५ पृ. २९३.

(२) **बौध.** १।१७।६-१५.

* इत्येतेपदबोध्यविषयः 'वर्णाः तद्वृत्तयश्च' इति प्रकरणे संगृहीतः।

(१) **मवि.** १०।५ नष्ट (नर्थस्य); **शूशि.** ६.

(२) **वैध.** ३।११.

(३) **वैध.** ३।१२.

अस्य वृत्तिराथर्वणं कर्माश्वहस्तिरथसंवाहनमारोहणं राज्ञः सैनापत्यं चाऽऽयुर्वेदकृत्यम्।।

गूढोत्पन्नोऽभिषिक्ताख्यः।।

अभिषिक्तश्चेन्नृपो भूयादष्टाङ्गमायुर्वेदं भूततन्त्रं वा संपठेत्।।

तदुक्ताचारो दयायुक्तः सत्यवादी तद्विधानेन सर्वप्राणिहितं कुर्यात्।।

ज्योतिर्गणनादिकाधिकवृत्तिर्वा।।

विप्राद्वैश्यायामम्बष्ठः कक्ष्याजीव्याग्नेयनर्तको ध्वजविश्रावी शल्यचिकित्सी।।

जारात्कुम्भकारः कुलालवृत्तिर्नापितो नाभेरूर्ध्ववप्ता च।।

क्षत्रियाद्वैश्यायां मद्गुः श्रेष्ठित्वं प्राप्तो महानर्माख्यश्च वैश्यवृत्तिः क्षात्रं कर्म नाऽऽचरति।।

गूढादाश्विकोऽश्वक्रयविक्रयी स्यात्।।

[1]विप्राच्छूद्रायां पारशवो भद्रकालीपूजनचित्रकर्माङ्गविद्यातूर्यघोषणमर्दनवृत्तिः।।

जारोत्पन्नो निषादो व्याडादिमृगहिंसाकारी।।

राजन्यतः शूद्रायामुग्रः सुदण्ड्यदण्डनकृत्यः।।

जाराच्छूलिकः शूलारोहणादियातनाकृत्यः।।

वैश्यतः शूद्रायां चूचुकः क्रमुकताम्बूलशर्करादिक्रयविक्रयी।।

गूढात्कटकारः कटकारी चेति।।

अन्तरालानां पितुर्मातुर्वा
जातिर्वृत्तिश्च

ततोऽनुलोमादनुलोमायां जातश्चानुलोमः पितुर्मातुर्वा जातिं वृत्तिं भजेत।।

सूतादिप्रतिलोमानामुत्पत्तयो
वृत्तयश्च

क्षत्रियाद्विप्रकन्यायां मन्त्रवज्जातः सूतः प्रतिलोमेषु मुख्योऽयं मन्त्रहीनोपनीतो द्विजधर्महीनः।।

अस्य वृत्तिर्धर्मानुबोधनं राज्ञोऽन्नसंस्कारश्च।।

जारेण मन्त्रहीनजो रथकारो द्विजत्वविहीनः शूद्रकृत्योऽश्वानां पोषणदमनादिपरिचर्याजीवी।।

(१) वैध. ३।१३.

वैश्याद्ब्राह्मण्यां मागधः शूद्रैरप्यभोज्यान्नोऽस्पृश्यः सर्ववन्दी प्रशंसाकीर्तनगानप्रेषणवृत्तिः।।

गूढाच्चक्री लवणतैलविक्रेता स्यात्।।

[1]वैश्यान्नृपायामायोगवस्तन्तुवायः पटकर्ता वस्त्रकांस्योपजीवी।।

गूढाचारात्पुलिन्दोऽरण्यवृत्तिर्दुष्टमृगसत्त्वघाती।।

शूद्रात्क्षत्रियायां पुल्कसः कृतकां वार्क्षां वा सुरां हृत्वा पाचको विक्रीणीत।।

चोरवृत्ताद्वेलवो जम्भननर्तनगानकृत्यः।।

शूद्राद्वैश्यायां वैदेहकः शूद्रास्पृश्यस्तैरप्यभोज्यान्नो वन्यवृत्तिरजमहिषगोपालस्तद्रसान् विक्रयी।।

चौर्याच्चक्रिको लवणतैलपिण्याकजीवी।।

शूद्राद्ब्राह्मण्यां चण्डालः सीसकालायसाभरणो वर्ध्राबन्धकण्ठः कक्षे झल्लरीयुक्तो यतस्ततश्चरन्सर्वकर्मबहिष्कृतः पूर्वाह्णे ग्रामादौ वीथ्यामन्यत्रापि मलान्यपकृष्य बहिरपोहयति।।

ग्रामाद्बहिर्दूरे स्वजातीयैर्विवसेत्।।

मध्याह्नात्परं ग्रामे न विशत्ययम्।।

विशेच्चेद्राज्ञा वध्यः।।

अन्यथा भ्रूणहत्यामवाप्नोति।।

अन्तरालव्रात्याश्च।।

चूचुकाद्विप्रायां तक्षकोऽस्पृश्यो झल्लरीहस्तो दारुकारः सुवर्णकारोऽयस्कारः कांस्यकारो वा।।

क्षत्रियायां मत्स्यबन्धुर्मत्स्यबन्धी।।

वैश्यायां सामुद्रः समुद्रपण्यजीवी मत्स्यघाती च स्यात्।।

[2]अम्बष्ठाद्विप्रायां नाविकः समुद्रपण्यमत्स्यजीवी समुद्रलङ्घनान्नावं प्लावयति।।

क्षत्रियायामधोनापितो नाभेरधो रोमवप्ता।।

मद्गोर्विप्रायां वेणुको वेणुवीणावादी।।

क्षत्रियायां कर्मकरः कर्मकारी।।

वैदेहकाद्विप्रायां चर्मकारश्चर्मजीवी।।

नृपायां सूचिकः सूचीवेधनकृत्यवान्।।

(१) वैध. ३।१४.

(२) वैध. ३।१५.

आयोगवाद्विप्रायां ताम्रस्ताम्रजीवी।।

नृपायां खनकः खननजीवी।।

खनना( ? का)न्नृपायामुद्बन्धकः शूद्रास्पृश्यो वस्त्रनिर्णेजकः।।

पुल्कसाद्विप्रायां रजको वस्त्राणां रजोनिर्णेजकः।।

चण्डालाद्विप्रायां श्वपचः चण्डालवच्चिह्नयुक्तो नित्यनिन्द्यः सर्वकर्मबहिष्कार्यो नगर्यादौ मलापोहकः श्मशाने वसन्हेयपात्रग्राही प्रेतमबन्धुकं विसृजेत्।।

वध्यान्हत्वा तद्वस्त्रादिग्राही पराधीनाहारो भिन्नपात्रभोजी श्वमांसभक्षी चर्मवारवाणवाणिज्यकारी स्यात्।।

निकृष्टपुत्रनिन्दा सत्पुत्रप्रशंसा च

तस्मान्निकृष्टे सुते समुत्पन्ने पतितो नष्टो घोरान्नरकान् व्रजति।।

सत्पुत्रो नरकेभ्यस्त्रायकः पितॄन्पावयित्वा शुभाल्लँलोकान्नयति।।

तस्माद्ब्राह्मणाद्याः सवर्णायां विधिवत्पुत्रमुत्पादयेयुरिति विखनाः।।

## वसिष्ठः

वर्णसंकरजाः प्रतिलोमाः

[1]शूद्रेण ब्राह्मण्यामुत्पन्नश्चाण्डालो भवतीत्याहुः।।

राजन्यायां वैणः।।

वैश्यायामन्त्यावसायी।।

वैश्येन ब्राह्मण्यामुत्पन्नो रामको भवतीत्याहुः।।

राजन्यायां पुल्कसः।।

राजन्येन ब्राह्मण्यामुत्पन्नः सूतो भवतीत्याहुः।।

जारजप्रतिलोमाः कर्मभिरभिज्ञेयाः

[2]अथाप्युदाहरन्ति –

छन्नोत्पन्नाश्च ये केचित्प्रातिलोम्यगुणाश्रिताः।
गुणाचारपरिभ्रंशात्कर्मभिस्तान्विजानीयुः।। इति।।

(१) वाध. १८।१-६.

(२) वाध. १८।७; मभा. ४।२८ (अथाप्युदाहरन्ति०) न्नाश्च (न्नास्तु) युरिति (युः); बौवि. १।१७।११-१४ (अथाप्युदाहरन्ति०) न्नाश्च (न्नास्तु).

वर्णसंकरजा अनुलोमाः

§ [1]एकान्तराद्व्यन्तरात्र्यन्तरासु जाता ब्राह्मणक्षत्रियवैश्यैरम्बष्ठोग्रनिषादा भवन्ति।।

शूद्रायां पारशवः।।

पारयन्नेव जीवन्नेव शवो भवतीत्याहुः।।

[2]शव इति मृताख्या।।

संकरजानां वृत्तयः

[3]मूर्धावसिक्तानां हस्त्यश्वरथशस्त्रशिक्षाऽस्त्र धारणं च।।

मणिमन्त्रौषधैः प्राणिरक्षणमम्बष्ठानाम्।।

माहिष्याणां गीतनृत्यनक्षत्रैर्जीवनं सस्यरक्षा च।।

[4]पारशवोग्रकरणानां द्विजातिशुश्रूषा धनाध्यक्षताराजसेवा दुर्गान्तःपुररक्षा च।।

[5]रथकारस्य निधिज्ञानं प्रश्नज्ञानं चेति।।

[6]हस्तिसारथ्यवर्धनपोषणदमनानि सूतानाम्।।

मन्त्रिकायस्थत्वं क्षत्रस्त्रीभिर्जीवनं वस्त्रपूरणं च।।

मन्त्रिकायस्थत्वमिति। मन्त्रिणः कायस्थः मन्त्रिकायस्थः। कायस्थो नाम लेखको लोके प्रसिद्धः। अथवा मन्त्रित्वं कायस्थत्वं चेति मन्त्रिकायस्थत्वम्। स्त्रीभिर्जीवनं नाम राजादिस्त्रीपरिरक्षार्थं भृतिं गृहीत्वा स्वकुटुम्बनिर्वाहः। सिद्धेषु वस्त्रेषूर्णापट्टसूत्रादिभिः पूरणं वस्त्रपूरणम्।

स्मृकौ. ३३

§ सूत्रमिदं दुर्बोधार्थम्। तथाहि – त्र्यन्तरा न प्रसिद्धा। कथंचिदेकान्तरादिशब्दानामनन्तरैकान्तराद्व्यन्तरापरत्वेऽपि ब्राह्मणाद्यपेक्षया ताः षट् भवन्तीति तासु जाताः षट् पुत्रा वक्तव्याः, अत्र तु त्रय एवोक्ताः। किंच, उत्तरसूत्रे जनको न निर्णीयते, ब्राह्मणादीनां त्रयाणां प्रकृतत्वात्।

(१) वाध. १८।८-१०.

(२) 'पारयन्नेव' (१८।१०) इति सूत्रानन्तरमिदं सूत्रम् आनन्दाश्रममुद्रितवासिष्ठधर्मशास्त्रेऽधिकं समुपलभ्यते।

(३) स्मृकौ. ३२; शूक. २६२.

(४) स्मृकौ. ३२; शूक. २६२ पारशवो (पारसवो) द्विजाति (द्विज).

(५) स्मृकौ. ३२-३३; शूक. २६२ (प्रश्नज्ञानं चेति०).

(६) स्मृकौ. ३३; शूक. २६२ हस्तिसा (हस्त्यश्वसा) नानि (नादि) (सूतानाम्।। मन्त्रिकायस्थत्वं क्षत्रस्त्रीभिर्जीवनं वस्त्रपूरणं च०) : २६६ (हस्तिसारथ्यवर्धनपोषणदमनानि०) स्थत्वं.... पूरणं च (स्थत्वस्त्रीजीवनवस्त्रपूरणानि).

**[1]वैदेहकानां नटवृत्तिरङ्गावतरणे।।**

**[2]वैनानां दारुच्छेदनं भ्रमरोपणं मणिमुक्ताप्रवालवेधनं च।।**

(१) मण्यादीनां यन्त्रारोपणेन सज्जीकरणं भ्रमरोपणम्।
स्मृकौ. ३३

(२) भ्रमः शाणः। शूक. २६६

**[3]ताम्रायस्त्रपुसीसायुधकरणयोजननगरकरणपत्रच्छेदलेपविन्र(?)करत्वमायोगवानाम्।।**

**[4]सैरन्ध्राणां सुरामद्यसीधुकरणं तद्विक्रयः पुष्पफलशाकविक्रयश्चेति।।**

**[5]नौजीविका च निषादानाम्।।**

**कैवर्तानां मृगपशुपक्षिघातो मांसविक्रयश्च।।**

**आवृतानां हस्त्यश्वाधिकारः।।**

**आभीराणां गोजाविरक्षा।।**

**धिग्वणानां चर्मकरणं तद्विक्रयजीवनं च।।**

**[6]कारावराणां चर्मच्छेदनं दीपासनरक्षणं छत्रधारणं नराणां वहनं च।।**

अयं कहारः भोई इति प्रसिद्धः।
शूक. २९२

**[7]तन्तुवायत्ववृक्षच्छेदनरोपणानि कुक्कुटानाम्।।**

**[8]अन्त्यमेदानां गृहद्वाराशुचिस्थानस्यावस्करशोधनं गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनं चक्रवृत्तिता च।।**

(१) चक्रवृत्तिता च तैलिकत्वमिति स्मृतिमञ्जर्याम्।
स्मृकौ. ३४

(२) गुह्याङ्गस्पर्शः शौचम् अधोनापितत्वं वा। चक्रवृत्तिता तैलिकत्वमिति स्मृतिमञ्जरी। शूक. २९२

**[1]मधूकानां सायंप्रातर्नृपतिसंस्तवाख्यानवर्णनं निद्राप्रबोधनं चेति।।**

**[2]प्रव्रज्यावसितानां यावज्जीवं दासवृत्तित्वम्।।**

प्रव्रज्या संन्यासः।
स्मृकौ. ३४

**[3]आहिण्डकानां धनस्थानेषु बाह्यसंरक्षणम्।।**

बाह्यसंरक्षणं नाम भाण्डागारादिभ्यो बहिः स्थित्वा दस्युसंरक्षणम्, न तु तत्राधिपतित्वम्।
स्मृकौ. ३४

**अनुक्ताऽगर्हिता वृत्तिः क्षत्त्रुग्रमाधूकैः कार्या गर्हिता चान्त्यमेदैः।।**

**भृज्जकण्टकानामभिचारमूलकर्म द्विषतां मन्त्रौषधैश्चाभिमुखीकरणं नाशनं वा।।**

मूलकर्म वशीकरणमिति स्मृतिमञ्जरीकारः। 'मूलकर्म तु कार्मणम्' इत्यमरः (३।२।४)। वशीकरणोच्चाटनादिटोटकविद्या मूलकर्म, न केवलं वशीकरणमात्रमेव। अभिमुखीकरणं वशीकरणम्।
स्मृकौ. ३४

**अवन्तवाटधानैः स्वसैन्यानां चित्तचर्या।।**

**व्रात्योत्पन्नैः परराष्ट्राणां कोशमन्त्रवृत्तज्ञानं मित्रामित्रता च।।**

**आचार्यसात्त्वतैर्देवपूजनम्।।**

आचार्योऽत्र सुधन्वाचार्यनामा पूर्वोक्तः।
स्मृकौ. ३४

**खसद्रविडानामुदकाहरणं प्रपावेश्मदानं च।।**

प्रपादानं भृतिपूर्वकमुदकमात्रदानम्। वेश्मदानं च पथिकेभ्यो धनमादाय।
स्मृकौ. ३५

**नटचारणानां चारवृत्तिता।।**

---

(१) **स्मृकौ.** ३३; **शूक.** २६६.

(२) **स्मृकौ.** ३३; **शूक.** २६६ वैनानां (वेनानां).

(३) **स्मृकौ.** ३३; **शूक.** २६६ (आयोगवानां ताम्रायस्त्रपुसीसायुधकरणं योजनं नगरकरणं च).

(४) **स्मृकौ.** ३३; **शूक.** २६६ यश्चेति (यश्च).

(५) **स्मृकौ.** ३३; **शूक.** २९२.

(६) **स्मृकौ.** ३३; **शूक.** २९२ वहनं (वाहनं).

(७) **स्मृकौ.** ३३-३४; **शूक.** २९२.

(८) **स्मृकौ.** ३४; **शूक.** २९२ स्थानस्यावस्कर (स्थानावस्कार) त्रग्रहणोज्झनं (त्रोहनं).

(१) **स्मृकौ.** ३४; **शूक.** २९२ सायंप्रातर्नृ (प्रातर्नृ) प्रबोधनं चेति (बोधनम्).

(२) **स्मृकौ.** ३४; **शूक.** २९२.

(३) **स्मृकौ.** ३४-३५.

[1]**मार्गप्रपारक्षणमूलत्वक्सारवृत्तिता छत्रशूर्पकटादिकरणं च पुल्कसानाम्।।**

मूलवृत्तित्वं वृक्षादिमूलोत्पाटनविक्रयादिना विज्ञेयम्। स्मृकौ. ३५

[2]**चण्डालान्त्यावसायिनां वनश्मशानरक्षणं गराग्निविषप्रयोगश्च।।**

संकरजस्त्रीणां धर्मः

[3]**स्त्रीणां भर्तृशुश्रूषाऽन्नव्यञ्जनपानसंस्कारो नृत्तगीतकामसूत्राध्ययनं च।।**

पूर्वोक्तप्रतिलोमजस्त्रीणां भर्तृशुश्रूषा साधारणो धर्मः। यत्पुरुषाणां यो व्यापारोऽन्नव्यञ्जनादिसंस्कारात्मकः स एव व्यापारस्तासाम्, न तु सर्वासां प्रतिलोमजस्त्रीणाम्। चारणादिस्त्रीणां तु विशेषतो नृत्तगीतकामसूत्राध्ययनं च कर्तव्यमित्यर्थः। † स्मृकौ. ३५

वैश्यवृत्तिः

[4]**वैश्यानां च परदेशचर्या नित्यं द्विषतां च हृदयज्ञानमिति।।**

वर्णबाह्याः प्राणिरक्षणातिरिक्तधर्माद्बहिष्कृताः

[5]**सर्वे बाह्याः सद्धर्मबहिष्कृता अन्यत्र प्राणिसंरक्षणात्।।**

(१) अहिंसादिश्च धर्मः सर्वतुल्यः, 'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः। दानं दमो दया शान्तिः सर्वेषां धर्मसाधनम्।।' (यास्मृ. १।१२२) इति याज्ञवल्क्योक्तेः। पित्रोराब्दिके सजातिभोजनं वस्त्रहेमादिदानं कार्यमित्युक्तं प्राक्। शूक. २९२

(२) अत्र सद्धर्मोऽनुलोमेषु पितृधर्मः, प्रतिलोमेषु मातृधर्मः इति तद्व्याख्यातारः। बाल. १।९४ पृ. २८५

† शूक. स्मृकौगतम्।

(१) **स्मृकौ.** ३५; **शूक.** २९२ (मूलवृत्तित्वं शूर्पकरणं च पुल्कसानाम्).

(२) **स्मृकौ.** ३५; **शूक.** २९२ श्मशान (स्मशान).

(३) **स्मृकौ.** ३५; **शूक.** २९२ नृत्त (नृत्य).

(४) **स्मृकौ.** ३५.

(५) **स्मृकौ.** ३५; **शूक.** २९२ सद्धर्म (सर्वधर्म); **बाल.** १।९४ पृ. २८५ अशुद्धो ग्रन्थः.

रथकारोत्पत्तौ मतान्तरम्, तस्य धर्मो वृत्तिश्च

*[1]**क्षत्रियवैश्यानुलोमान्तरजातो रथकार इत्येके। तस्येज्याध्ययनाधानोपनयनसंस्काराश्चाप्रतिषिद्धाः। रथसूत्रवास्तुविद्याध्ययनवृत्तिता च।।**

अनेन शूद्रासदृशजस्य रथकारस्यैवोपनयनमुक्तम्। अन्ये तु 'नैवोपनयनं तस्य शूद्रधर्माद्बहिः क्वचित्। वर्तनं शिल्पवृत्त्याऽत्र लोके शिल्पस्य शास्त्रवित्।।' इत्याहुः। एतस्यैव रथकाराधानेऽधिकार इति कर्काचार्याः। वैश्याच्छूद्रायामुत्पन्नस्य करणस्यापि रथकारपदवाच्यता। 'वैश्याच्छूद्रायां रथकारः' इति बौधायनादिति मदनपारिजातकर्तृकायां शूद्रधर्मोत्पलद्योतिन्यां स्मृतिकौमुद्यां स्पष्टम्। वसिष्ठोऽपि तत्रैव स्पष्टः। तथा व्रात्यवैश्योत्पन्नसुधन्वाचार्योऽपि रथकारः इति जैमिनिः। तथाहि – 'वचनाद्रथकारस्याऽऽधाने सर्वशेषत्वात्' (जैसू. ६।१।४४)। $"वर्षासु रथकार आदधीत' इति वाक्येऽत्रैवर्णिकस्य रथकारस्याऽऽधानं वचनात् अस्मादेव वाक्यात्। अस्य रथकाराधानवाक्यस्य सर्वत्रैवर्णिकाधानविधायकवाक्यशेषे पठितत्वात्। त्रैवर्णिकानामुक्तस्य कालस्य बाधे मानाभावेनेदं वचनमत्रैवर्णिकपरमिति तदर्थः।" इति तद्भाष्यम्।

ते च के? तत्राऽऽह सूत्रकारः – 'सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयन्ते' (जैसू. ६।१।५०) इति। 'सौधन्वना ऋभवः' (ऋसं. ३।६०।४) इति रथकाराधानमन्त्रे ऋभुपदवाच्यानां रथकाराणां सौधन्वना इत्यनेन सामानाधिकरण्यात्ते रथकाराः। सुधन्वनामाचार्याः सौधन्वनाः।

ननु व्रात्यवैश्यादुत्पन्नस्य सुधन्वाचार्यस्य वैश्यत्वमेवेति चेत्तत्राऽऽह – हीनत्वात् वैश्येभ्योऽपकृष्टत्वादित्यर्थः। अत एव मनुना संकरेषूक्ताः। शूद्रेभ्यस्तूत्कृष्टास्ते इति शूद्रत्व-

* अत्र याज्ञवल्क्यानुरोधात् क्षत्रियानुलोमः अनन्तराजातो माहिष्यो ग्राह्यः। वैश्यानुलोमा करणी। तयोः अन्तरजातः संकरजः।

$ अर्थतो भाष्यानुवादोऽयम्। तत्र च रथकाराधानवाक्यस्य त्रैवर्णिकाधानवाक्येभ्यः शेषत्वमत्रानूदितम्, भाष्ये तु त्रैवर्णिकेभ्यो रथकारस्य शेषत्वमुक्तमित्यंशतस्तात्पर्यभेदः।

(१) **बाल.** १।९५ पृ. २९२. बालम्भट्ट्यां 'यथाऽऽह शङ्खः' इति मिताक्षरास्थं शङ्खवचनमुद्धृत्य तदनन्तरं पुनः 'वसिष्ठोऽपि' इत्युक्त्वा पुनः शङ्खसदृशवचनं समुद्धृतमतः वसिष्ठेऽपि संगृहीतमिदं वचनम्।

प्रयुक्तो निषेधो नास्मिन्निति शबरस्वामी। 'इदं चाऽऽधानं स्वतन्त्रं विश्वजिद्वत्कल्प्यस्वर्गरूपफलम्, न तु यज्ञादिफलकम्, उपनयनाभावेनाध्यनाभावात्' इति तन्त्ररत्नकृत्। वचनादाधानमिति वदता जैमिनिनाऽपीदं ध्वनितम्। एवं च व्रात्यवैश्योत्पन्नस्य नोपनयनसंस्कार इति जैमिनिसंमतम्। यद्यप्यस्य वृत्तिर्वसिष्ठेन ब्रह्मपुराणे व्यासेन च प्रतिमादिस्थाने पूजोक्ता, तथापि जैमिनिप्रामाण्याद्रथकरणवृत्तिरप्यस्य बोध्या। अत एव शबरस्वामिना 'सौधन्वना ऋभवः' इत्यत्र ऋभुपदस्य रथकारशक्तत्वे '†नेमिं नयन्ति ऋभवो यथा' इति मन्त्रः प्रमाणत्वेन दर्शितः। नेमिं नयन्तीत्यस्य काष्ठत्रययोजनेन नेमिं निष्पादयन्तीत्यर्थः। एवं च योगरूढस्तत्र रथकारशब्दः। अन्ये तु शुद्धरूढमेवेच्छन्ति। एवं च रूढेर्बलवत्त्वादस्यैव ग्रहणं न्याय्यमिति तदाशयः। एवं क्षत्रियव्रात्योत्पन्नोऽप्यसंस्कार्यः, मनुना 'शनकैस्तु क्रियालोपात्' (मस्मृ. १०।४३) इत्यादिवक्ष्यमाणे वृषलत्वेन गणितद्रमिडखससंज्ञया व्रात्यक्षत्रियजस्य व्यवहारात् क्रियालोपेन वृषलत्वकथनाच्च। आपस्तम्बेन तु 'वसन्तो ब्राह्मणस्य ग्रीष्मो राजन्यस्य हेमन्तो वा शरद्वैश्यस्य वर्षा रथकारस्य ये त्रयाणां वर्णानामेतत्कर्म कुर्युस्तेषामेष कालः' (आपश्रौ. ५।३।१८,१९) इत्याधानप्रकरणे उक्तम्। त्रयाणां वर्णानामन्तर्भूतगुणेच्छया कुर्वन्ति रथकरणं ते रथकारा इति तद्भाष्यकृतः। 'ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपक्रुष्टाः'(आश्रौ. २।१) इत्याश्वलायनसूत्रव्याख्यायाम् 'उपक्रुष्टो रथकारः', 'वैश्यस्तक्षककर्मोपजीवी उपक्रुष्ट इत्युच्यते' इति तद्व्याख्यातारः। न च त्रैवर्णिकस्य शिल्पोपजीवनप्रतिषेधात्तस्य रथकारत्वासंभव इति वाच्यम्, 'गुणार्थेन' (जैसू. ६।१।४८) इति सूत्रेण जैमिनिना समाहितत्वात्। न च तेषामेतद्विधिविषयत्वे रथकारत्वे निमित्ते वर्षाविधानं वाक्येन कार्यम्, मम तु यस्याप्राप्तं तस्याऽऽधानविधानं श्रुत्येति वसन्तादिवाक्यैकरूपमिति वाच्यम्, आपस्तम्बवचनेन तस्य नैमित्तिकत्वबोधनेनाक्षतेः। न हि सर्वेषामैकरूप्यनियमः सर्वत्रास्ति।

बौधायनः उपनयनमपि वर्षासु रथकारस्याऽऽह। अनेकऋषिप्रामाण्यात्सर्वत्र श्रुतेस्तात्पर्यमिति तत्त्वम्। एतेन माहिष्यात्करण्यामुत्पन्नस्य रथकारस्य नाऽऽधानाधिकार इति तन्त्ररत्नोक्तमपास्तम्। बाल. १।९५ पृ. २९२-२९४

वैश्याद्ब्राह्मणजातोऽम्बष्ठो

वैश्यादुत्कृष्टः

[1]**वैश्यस्त्रीद्विजसंभूतोऽम्बष्ठः स्यादनुलोमतः।**
**अन्याभ्यो वैश्यजातिभ्यः षट्कर्मस्वधिकः स्मृतः।।**

षडित्यस्य षट्कर्मान्तःपातिकर्मत्रय इत्यर्थः। द्विजोऽत्र ब्राह्मणः। अयमम्बष्ठो गौडप्रसिद्धाम्बष्ठाद्भिन्नः।

बाल. १।९४ पृ. २९२

## विष्णुः

अनुलोमानां मातृसवर्णत्वम्

[2]**अनुलोमासु मातृसवर्णाः।।**

सवर्णापदव्यावर्त्यमाह – अनुलोमास्विति। ब्राह्मणादीनामनुलोमाः क्षत्रियादयः। तासु तेभ्यो जाता मातृसवर्णाः पुत्रा भवन्ति। मातृसवर्णत्वं तत्तद्वर्णधर्मप्राप्त्यै, 'ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव। क्षत्रियेण वैश्यायां वैश्य एव। वैश्येन शूद्रायां शूद्र एव' इति शङ्खस्मरणात्, न तु तत्तद्वर्णप्राप्त्यै, जात्यन्तरस्मरणात्। यथाऽऽह योगीश्वरः – 'विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्। अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा।। वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ। वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः।।' (यास्मृ. १।९१-९२) इति। गौतमस्तु अन्यथाऽऽह – 'अनुलोमा अनन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः' (गौध. ४।१६) इत्यादि। अस्यार्थः – ब्राह्मणस्यानन्तरा क्षत्रिया, तस्यां तस्मात् सवर्णः। क्षत्रियस्य वैश्या, तस्यां तस्मादम्बष्ठः। वैश्यस्य शूद्रा, तस्यां तस्मादुग्रः। ब्राह्मणस्यैकान्तरा वैश्या, तस्यां तस्मान्निषादः। क्षत्रियस्य शूद्रा, तस्यां तस्मात् दौष्यन्तः। ब्राह्मणस्य द्व्यन्तरा शूद्रा, तस्यां पारशव इति। एताभ्यां योगिगौतमवाक्याभ्यां ब्राह्मणादिभ्यः क्षत्रियादिषु जातानां संज्ञाविकल्पोऽभिहितः। स यथा – मूर्धावसिक्तसवर्णौ, अम्बष्ठनिषादभृज्यकण्ठाः, निषाद-

† 'तं नेमिमृभवो यथाऽऽनमस्व' (ऋसं. ८।७५।५) इति मन्त्र उपलभ्यते, यथाश्रुतस्तु नोपलभ्यते।

(१) **शूशि.** १४-१५ उत्त., वासिष्ठायनः; **बाल.** १।९४ पृ. २८५ अन्याभ्यो (अन्येभ्यो) स्वधिकः (स्त्वधिकः).

(२) **विस्मृ.** १६।२; **अप.** १।९१ मासु (मास्तु); **पमा.** १।५१२ मासु (मजास्तु); **बाल.** १।९१ पृ. २८१ सवर्णाः (वर्णाः) शेषम् अपवत्.

पारशवौ, माहिष्याम्बष्ठौ, उग्रदौष्यन्तयवनाः, करणोग्रौ चेति। अस्मादेव च वैरूप्यात् मूले संज्ञानभिधानमिति न न्यूनता। अनुलोमानामपि पितृसवर्णत्वं क्वचिदाह योगीश्वरः – 'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा। व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्।।' (यास्मृ. १।९६) इति। जातयः मूर्धावसिक्ताद्याः, तासामुत्कर्षः ब्राह्मणत्वादि-वर्णप्राप्तिः, स सप्तमे, अपिशब्दात् षष्ठे पञ्चमे वा युगे स्त्रीपुंसयोर्द्वन्द्वे भवति। यथा – ब्राह्मणेनोढायां शूद्राया-मुत्पादिता निषादी। सा ब्राह्मणेनोढा कन्यां जनयति। साऽपि ब्राह्मणेनोढा कन्यान्तरम्। इत्येवं सप्तमी शुद्धमष्टमं ब्राह्मणं जनयति। एवमम्बष्ठी षष्ठी सप्तमम्। एवं मूर्धावसिक्ता पञ्चमी षष्ठम्। एवमन्यत्र ज्ञेयम्। तया शूद्रवृत्त्या जीवन् ब्राह्मणो यं जनयति, सोऽपि तया वृत्त्या जीवन्नन्यम्, इत्येवं सप्तमे द्वन्द्वे जातोऽष्टमः शूद्र एव भवति। एवं वैश्यवृत्त्या षष्ठे द्वन्द्वे सप्तमो वैश्यः। एवं क्षत्रियवृत्त्या पञ्चमे द्वन्द्वे षष्ठः क्षत्रिय इति। तथा मूर्धावसिक्तः क्षत्रियायां पुत्रं जनयति, सोऽपि क्षत्रियायां पुत्रान्तरम्, इत्येवं पञ्चमे द्वन्द्वे षष्ठः क्षत्रिय एव। एवम् अम्बष्ठो वैश्यामूढ्वा षष्ठे द्वन्द्वे सप्तमं वैश्यम्। एवं निषादः शूद्रामूढ्वा सप्तमे द्वन्द्वे अष्टमं शूद्रमेवेत्यपि ज्ञेयम्, 'वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन पञ्चमेनाऽऽचार्याः' इति गौतमस्मरणात् (गौध. ४।२२-२३)। वै.

प्रतिलोमा आर्यनिन्द्याः

**[1]प्रतिलोमास्त्वार्यविगर्हिताः।।**

तस्यैव व्यावर्त्यान्तरमाह। शूद्रादीनां प्रतिलोमा वैश्यादयः। तासु तेभ्यो जाताः आर्यविगर्हिताः त्रैवर्णिकबाह्याः शूद्रस-धर्माण इत्यर्थः। अनेनानुलोमजानां द्विजधर्मत्वमुक्तम्। यथाऽऽह मनुः – 'सजातिजानन्तरजाः षट् सुता द्विज-धर्मिणः। शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।।' (मस्मृ. १०।४१) इति। अपध्वंसः व्यभिचारः। तेन कानीनादीनां शूद्रसधर्मत्वमेव। गौतमस्तु शूद्रायामनुलोम-जस्याप्यधर्मत्वमाह – 'प्रतिलोमात्तु धर्महीनः शूद्रायां च' (गौध. ४।२५-२६) इति। प्रतिलोमजेष्वपि विशेषं स एवाऽऽह – 'असमानायां तु शूद्रात् पतितवृत्तिः' (गौध. ४।२७) इति। असमाना वैश्यादिः, तस्यां शूद्रोत्पन्नः आयोगवादिः पतितवत् भवति। एतेन वैश्यादुत्पन्नस्य प्रतिलोमजस्य न पतितवृत्तिः(? त्तित्वम्), अपि तु शूद्रस-धर्मत्वमिति। वै.

वर्णप्रतिलोमसंकरजाः

**[1]तत्र वैश्यापुत्रः शूद्रेणाऽऽयोगवः।।**

तानेव संज्ञापूर्वकं लक्षयति। तत्र षण्णां प्रतिलोमजानां मध्ये शूद्रेण वैश्यायामुत्पन्नः पुत्र आयोगवसंज्ञो भवति वैदेहक इति वा। वै.

**पुल्कसमागधौ क्षत्रियापुत्रौ वैश्यशूद्राभ्याम्।।**

क्षत्रियायां वैश्यादुत्पन्नः पुल्कसः मागध इति वा धीवर इति वा। शूद्रादुत्पन्नो मागधः वैदेहक इति वा पुल्कस इति (वा) क्षत्तेति वा। वै.

**चण्डालवैदेहकसूताश्च ब्राह्मणीपुत्राः शूद्रविट्-क्षत्रियैः।।**

ब्राह्मण्यां शूद्रादुत्पन्नश्चण्डालः, वैश्यादुत्पन्नो वैदेहकः क्षत्तेति वा मागध इति वा, क्षत्रियादुत्पन्नः सूत इति। यथाऽऽह गौतमः – 'प्रतिलोमाः सूतमागधायोगवक्षत्तृ-वैदेहकचण्डालाः' (गौध. ४।१७) इति। अस्यार्थः – अनन्तरैकान्तरद्व्यन्तरासु जाताः इत्यनुवर्तते। तेन क्षत्रिय-स्यानन्तरा ब्राह्मणी, तस्यां तस्मात् सूतः। वैश्यस्य क्षत्रिया, तस्यां तस्मान्मागधः। शूद्रस्य वैश्या, तस्यां तस्मादायोगवः। वैश्यस्यैकान्तरा ब्राह्मणी, तस्यां तस्मात् क्षत्ता। शूद्रस्य क्षत्रिया, तस्यां तस्मात् वैदेहकः। शूद्रस्य द्व्यन्तरा ब्राह्मणी, तस्यां तस्मात् चण्डाल इति। मतान्तरेण स एव सवर्णानु-लोमजप्रतिलोमजानां संज्ञान्तरमाह – 'ब्राह्मण्यजीजनत् पुत्रान् वर्णेभ्य आनुपूर्व्या ब्राह्मणसूतमागधचण्डालान्। तेभ्य एव क्षत्रिया मूर्धावसिक्तक्षत्रियधीवरपुल्कसान्। तेभ्य एव वैश्या भृज्यकण्ठमाहिष्यवैश्यवैदेहकान्। पारशवयवनकरण-शूद्रान् शूद्रेत्येके' (गौध. ४।१८-२१) इति। आनुपूर्वी वर्णक्रमः। न त्वानुलोम्यम्। योगीश्वरोऽपि – 'ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा। शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः।। क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव

(१) **विस्मृ.** १६।३; **पमा.** १।५१२ मास्त्वार्य (मजास्त्वार्य); **बाल.** १।९१ पृ. २८१ स्त्वार्यवि (स्तु वि).

(१) **विस्मृ.** १६।४-१८.

च। शूद्रादायोगवं वैश्या जनयामास वै सुतम्।।' (यास्मृ. १।९३-९४) इति। वै.

संकीर्णसंकरजा अनन्ताः

**संकरसंकराश्चासंख्येयाः।।**

वर्णसंकरवत् संकीर्णसंकरा अप्यभिधेयाः। तदनभिधाने निमित्तमाह – संकरेति। संकरेषु अनुलोमजेषु प्रतिलोमजेषु च वर्णेभ्यः पुनरानुलोम्येन प्रातिलोम्येन च जाताः, (*ते संकरसंकराः।) तथा संकराणामनुलोमजानां प्रतिलोमजानामानुलोम्येन प्रातिलोम्येन च परस्परं ये संकराः, ते असंख्येयाः, अनन्तत्वात्। यथाऽऽह मनुः – ब्राह्मणादुग्रकन्यायामावृतो नाम जायते। आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वणः।। जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः। शूद्राज्जातो निषाद्यां तु स वै कवटकः स्मृतः।। क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते। वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते।।' (मस्मृ. १०।१५, १८, १९) इत्यादि। तेषामप्यानुलोम्यप्रातिलोम्याभ्यामुत्पत्तौ उत्कर्षापकर्षौ ज्ञेयौ, 'पूर्ववच्चाधरोत्तरम्' इति योगिस्मरणात् (यास्मृ. १।९६)। वै.

वर्णजप्रतिलोमानां वृत्तयः

**रङ्गावतरणमायोगवानाम्।।**

प्रतिलोमजानां वृत्तीराह – रङ्गेति। रङ्गावतरणं मल्लविद्या, नृत्यशिक्षा च। सा आयोगवानां वृत्तिः। 'त्वष्टिस्त्वायोगवस्य च' (मस्मृ. १०।४८) इति मनुः। त्वष्टिः काष्ठादितक्षणम्। वै.

**व्याधता पुल्कसानाम्।।**

व्याधता आरण्यपशुहिंसनम्। पुल्कसानामिति तत्समानधर्माणामन्येषामप्युपलक्षणम्। यथाऽऽह मनुः – 'मेदान्ध्रचञ्चुमद्गूनामारण्यपशुहिंसनम्। क्षत्त्रुग्रपुल्कसानां च बिलौकोवधबन्धनम्।।' (मस्मृ. १०।४८-४९) इति। निषादाद्वैदेह्यां कारावरश्चर्मकारविशेषः। कारावरायां वैदेहान्मेदः, निषाद्यामन्ध्रः। ब्राह्मणात् वैदेह्यां जातः चञ्चुः, बन्दिस्त्रियां जातो मद्गुः। क्षत्रियेण शूद्रायां जातो बन्दीति बोधायनोक्तं वेदितव्यम्। वै.

**स्तुतिक्रिया मागधानाम्।।**

स्तुतिक्रिया सदसद्गुणकीर्तनं मागधानां वृत्तिः। 'मागधानां वणिक्पथः' इति मनुः (मस्मृ. १०।४७)। वणिक्पथः वाणिज्यम्। वै.

**वध्यघातित्वं चण्डालानाम्।।**

वध्यानां चौरादीनां घातनं चण्डालानां वृत्तिः। बहुवचनात् श्वपचानां च। यथाऽऽह मनुः – 'चण्डालश्वपचानां च' इत्युपक्रम्य 'अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः।। वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया। वध्यवासांसि गृह्णीयुः शय्यां चाऽऽभरणानि च।।' (मस्मृ. १०।५१, ५५-५६) इति। वै.

**स्त्रीरक्षा तज्जीवनं च वैदेहकानाम्।।**

स्त्रीणां नर्तक्यादीनां रक्षापोषणादि तज्जीवनं तदुपार्जितद्रव्यजीवनं च वैदेहकानां वृत्तिः। अन्तःपुररक्षेत्यन्ये। वै.

**अश्वसारथ्यं सूतानाम्।।**

अश्वानां दमनयोजनादिशालिहोत्रज्ञानं रथसारथ्यं च सूतानां वृत्तिः। वै.

चण्डालानां समाचारः

**चण्डालानां बहिर्ग्रामनिवसनं मृतचैलधारणमिति विशेषः।।**

चण्डालेषु विशेषमाह। बहुवचनात् श्वपचादीनां ग्रहणम्। तेषां ग्रामात् बहिर्निवासः। शववस्त्राणां धारणमिति प्रतिलोमजानां मध्ये चण्डालादीनां विशेषः। विशेषग्रहणात् भिन्नभाण्डभोजनादयोऽन्ये धर्मा अभ्यनुज्ञायन्ते। यथाऽऽह मनुः – 'चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः।। कारावरो निषादात्तु चर्मकारः प्रजायते। वैदेहकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ।। चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान्। आहिण्डको निषादेन वैदेह्यामेव जायते।। चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान्। पुल्कस्यां जायते पापः सदा सुजनवर्जितः।। निषादस्त्री च चण्डालात् पुत्रमन्त्यावसायिनम्। श्मशानगोचरं सूते बाह्यानामपि गर्हितम्।। अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम्।। वासांसि मृतचैलानि भिन्नभाण्डेषु भोजनम्। कार्ष्णायसमलंकारः परिव्रज्या च नित्यशः।। रात्रौ न विचरेयुश्च ग्रामेषु नगरेषु च। दिवा चरेयुः कार्यार्थं चिह्निता राजशासनैः।।' (मस्मृ. १०।५१, ३६, ३७, ३८, ३९, ५१, ५२, ५४, ५५) इति। अपपात्राः

* इदं वाक्यं 'परस्परं च ये संकराः' इत्यतः परं भवितुं युक्तम्।

संस्कृतमपि एषां पात्रमन्यैर्न प्रयोज्यम्। परिव्रज्या अटनं सर्वेषां प्रायो विशेषः। राजशासनं राजादिष्टं चिह्नं कर्णे कपर्दिकादिबन्धनम्। वै.

प्रतिलोमानां सजातीयाभिर्विवाहो दायादत्वं च

**सर्वेषां च समानजातिभिर्विवाहः।।**

तद्धर्मानाह। आयोगवादीनां षण्णामपि तत्समानधर्माणामन्येषां च स्वस्वसमानजातिधर्मैः सह विवाहादिव्यवहारः, नोत्तमैः। यथाऽऽह मनुः - 'नैतैः समयमन्विच्छेत्पुरुषो धर्ममाचरन्। व्यवहारो मिथस्तेषां विवाहः सदृशैः सह।।' (मस्मृ. १०।५३) इति। वै.

**स्वपितृवित्तानुहरणं च।।**

'प्रतिलोमासु स्त्रीषु चोत्पन्नाश्चाभागिनः' (विस्मृ. १५।३७) इत्यस्यापवादमाह। सर्वेषामपि प्रतिलोमजानां स्वस्वपितृद्रव्यांशभागित्वमस्ति। पितृपदेनैव सिद्धौ स्वपदं स्वसमानजातिधर्मं पितरमाह, न विजातिधर्मम्। तेन साक्षाद्वर्णजानां प्रतिलोमजानां न वर्णवित्तानुहरणमिति सिध्यति। वै.

संकीर्णजातीनामभिज्ञानं कर्मभिः

**संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः।**
**प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः।।**

यदुक्तं 'प्रतिलोमास्वार्यविगर्हिताः' (विस्मृ. १६।३) इति, तत्र विगर्हार्थं ज्ञानोपायमाह। या एता वर्णानां संकरे आयोगवादयो जातयः मातापितृभ्यां प्रदर्शिताः, ताः प्रच्छन्नाः गूढोत्पन्नाः, प्रकाशाः प्रकटोत्पन्ना वा स्वस्वकर्मभिरेव वेदितव्याः, शुक्रशोणितानुपातिनो जातिधर्मस्य बलवत्त्वात्। यथाऽऽह मनुः - 'वर्णापेतमविज्ञातं नरं कलुषयोनिजम्। पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा। न कथंचन दुर्योनिः प्रकृतिं स्वां विमुञ्चति।।' (मस्मृ. १०।५७, ५९) इति। वै.

प्रतिलोमानां स्वोद्धारहेतुः

**ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः।**
**स्त्रीबालाद्यवपत्तौ च बाह्यानां सिद्धिकारणम्।।**

तेषामदृष्टसाधनं धर्ममाह। गोब्राह्मणस्त्रीबालानामन्यतमस्यापि त्राणार्थम् अनुपस्कृतः दृष्टप्रयोजनानपेक्षः प्राणत्यागः बाह्यानां सिद्धिकारणं स्वर्गापवर्गहेतुः, न त्वन्यत् विना सामान्यधर्मात्। यथाऽऽह योगीश्वरः - 'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः। दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्।।' (यास्मृ. १।१२२) इति। वै.

## शङ्खः

वर्णानुलोमजानां मातृसवर्णत्वम्

[1]**ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति।।**
[2]**क्षत्रियेण वैश्यायामुत्पादितो वैश्य एव भवति।।**
[3]**वैश्येन शूद्रायामुत्पादितः शूद्र एव भवति।।**
[4]**मूर्धावसिक्तादीनां मातृजातीयत्वं वर्णत्वं च।।**

रथकारविशेषस्य सूतादीनां च वृत्तयः

[5]**क्षत्रियवैश्यानुलोमान्तरोत्पन्नो यो रथकारस्तस्येज्यादानोपनयनसंस्कारक्रियाः अश्वप्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता च।।**

रथसूत्रं रथविद्या। स्मृकौ. ३६

---

(१) **मिता.** १।९१; **अप.** १।९२ मुत्पादितः (मुत्पन्नः); **पमा.** १।५१२ (क्षत्रियायां ब्राह्मणेनोत्पन्नः क्षत्रिय एव भवति); **मुक्ता.** ७०; **वीमि.** १।९१.

(२) **मिता.** १।९१; **अप.** १।९२ (क्षत्रियेण वैश्यायां वैश्य एव); **पमा.** १।५१२ (क्षत्रियाद्वैश्यायां वैश्य एव भवति); **मुक्ता.** ७० अपवत्; **वीमि.** १।९१ अपवत्.

(३) **मिता.** १।९१; **अप.** १।९२ (वैश्येन शूद्रायां शूद्र एव); **पमा.** १।५१२ शूद्रायामुत्पादितः (शूद्रयां); **मुक्ता.** ७० (वैश्येन शूद्रायां शूद्रः); **वीमि.** १।९१ अपवत्.

(४) **बाल.** १।९१ पृ. २८२.

(५) **मिता.** १।९५; **अप.** १।९५ मान्तरोत्पन्नो यो (मानन्तरोत्पन्नजो); **स्मृकौ.** ३५-३६ (क्षत्रियवैश्यानुलोमजातो रथकार इत्येके। तस्याध्ययनेज्यादानोपनयनसंस्काराश्चाप्रतिषिद्धाः। रथसूत्रवास्तुविद्याध्ययनकर्मवृत्तिता चेति); **शूशि.** २२ क्षत्रिय (क्षत्रिया) मान्तरो (मानन्तरो); **मुक्ता.** ७१ (क्षत्रियवैश्यानुलोमान्तरोत्पन्नो यो०) दानो (धानो) क्रियाः अश्व (क्रियाश्च); **शूक.** २६२ मान्तरोत्पन्नो.... अश्वप्रतिष्ठारथ (मानन्तरोत्पन्नजो रथकारस्तस्याध्ययनेज्यादानोपनयनसंस्काराश्चाप्रतिषिद्धाः। रथ); **वीमि.** १।९५ पृ. १६७ मान्तरोत्पन्नो यो (मानन्तरजो) स्तस्येज्या (स्तस्य चेज्या).

[1]**सूतानामङ्गसंस्कारक्रियाकेशश्मश्रुरोमनखवापन-स्नानविलेपनालंकरणाश्वदमनयोग्याशनपोषणानि कर्माणि।।**

योग्याशनमिति। अश्वादीनां यवादिदानमिति स्मृति-मञ्जर्याम्। स्मृकौ. ३६

[2]**क्षत्तुः प्रतिहाररक्षादौत्ये।।**

[3]**मागधानां मृदङ्गवेणुवीणावादननृत्तगीतसिद्धि-कोपस्थानगाथाश्लोकप्रत्युषःप्रबोधनानि कर्माणि।।**

मङ्गलम्, जय, जीवेत्येवमाद्याभिधानैः राजाद्याराधनं सिद्धिरित्युच्यते। कोपस्थाने कोपसमये यथोचितं तदुद्बोधक-शामकगाथादिपाठः कार्य इत्यर्थः। * स्मृकौ. ३६

[4]**अम्बष्ठानां जातिविशेषात्कायविशेषात्कायशल्य-शलाकाविमोचनोन्मादक्लीबज्वरापस्मारकुमारचिकित्सा-पोषणानि कर्माणि।।**

जातिविशेषात् ब्राह्मणादिजातिविशेषात्। कायविशेषात् राजहस्त्यादिशरीरविशेषात्। शल्यं कण्टकादि। शलाका शरादि। जातिविशेषशरीरविशेषापेक्षया च यत्र यदुचितं भेषजं तत्र तत्कर्तव्यमिति तात्पर्यार्थः।

स्मृकौ. ३६

[5]**वैदेहकानां वस्त्रच्छेदनसीवनरञ्जनावनिर्णजनवापी-तडाकोदपानारामावकरशोधनानि कर्माणि।।**

[6]**उग्राणां कुञ्जरग्रहणराजच्छत्रधारणपुरप्रधारण-बन्धनागारसंयमनानि कर्माणि।।**

[7]**वेनानां लङ्घनप्लवनक्रीडानियुद्धमायाशम्बरेन्द्र-जालप्रस्थापनानि कर्माणि।।**

प्लवनम् उच्चरक्षाद्वाराद्यारोहणमिति स्मृतिमञ्जरीकारः। नियुद्धं बाहुयुद्धम्। मायाशम्बरं हस्तसंवरणलाघवादिना द्रव्यपरिवर्तनम्। इन्द्रजालम् असद्वस्तुदर्शनादि।

* स्मृकौ. ३७

[1]**कुक्कुटानां प्रहरणकरणचक्रतोमरभिण्डिपाल-प्रासासिपरशुलगुडलोहजालिकासंधानानि कर्माणि।।**

प्रहरणानि आयुधानि। लोहजालिकासंधानं नाम वर्म-करणम्।

* स्मृकौ. ३७

[2]**आयोगवानामयस्करणतक्षणकुम्भकरणानि सुवर्ण-रजतलोहासिचर्मवृत्तिता चेति।।**

अयः लोहविशेषः। लोहासिचर्म वृत्तिता चेति। लोहं ताम्रम्। असिसहचरितं चर्मासिचर्म। युद्धप्रहारवारण-चर्मेत्यर्थः। सुवर्णरजतताम्राणां विकारान् कृत्वा जीवनं तद्वृत्तिता। स्मृकौ. ३७

[3]**पुल्कसानां नगरवीथीसंरक्षणजागरणानाथमृत-निर्हरणालेख्यपत्रच्छेदनानि कर्माणि मधुपातनं माक्षि-कोद्धरणं बिलकर्तनं कूपादिखननं च।।**

[4]**चाण्डालानामेकान्तवासश्मशानसंरक्षणशूलपरि-वापनवध्यघातनानि कर्माणि।।**

[5]**श्वपचानां चैतत्।।**

## महाभारतम्

स्त्रीदोषो वर्णसंकरकारणम्

[6]**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः।।**

दुष्टासु पुत्रार्थं वर्णान्तरमुपासीनासु। नीटी.

---

* शूक. स्मृकौगतम्।

(१) **स्मृकौ.** ३६ मङ्ग (मन्त्र); **शूक.** २९८.

(२) **स्मृकौ.** ३६ प्रति (प्रती) (रक्षा०); **शूक.** २९८.

(३) **स्मृकौ.** ३६; **शूक.** २९८ वेणुवीणा (वीणावेणु) नृत्त (नृत्य).

(४) **स्मृकौ.** ३६; **शूक.** २९८ (जातिविशेषात्कायविशेषात्०) (कुमार०).

(५) **स्मृकौ.** ३६; **शूक.** २९८ तडाकोदपा (तडागोदकपा).

(६) **स्मृकौ.** ३६-३७; **शूक.** २९८(कर्माणि०).

(७) **स्मृकौ.** ३७; **शूक.** २९८ नक्रीडा (नाक्रीडा) जाल-प्रस्थापनानि (जालानि).

* शूक. स्मृकौगतम्।

(१) **स्मृकौ.** ३७; **शूक.** २९८ प्रहरणकरण (प्रहरण) (कर्माणि०).

(२) **स्मृकौ.** ३७; **शूक.** २९८.

(३) **स्मृकौ.** ३७ पुल्कसानां (पुक्कसानां) खननं च (खननम्); **शूक.** २९८ (कर्माणि०).

(४) **स्मृकौ.** ३७ चाण्डा (चण्डा) रक्षण (रक्षणं च); **शूक.** २९८ (एकान्तवास०) घातनानि (घातानि).

(५) **स्मृकौ.** ३७; **शूक.** २९८.

(६) **भा.** ६।२३।४१; **भामु.** ६।२५।४१.

सूतोत्पादकः संकरः

**[1]तमुवाच ततः कर्णः शापभीतः प्रसादयन्।**
**ब्रह्मक्षत्रान्तरे सूतं जातं मां विद्धि भार्गव।।**

यवनादयो दस्यवः तेषां धर्माश्च

**मान्धातोवाच –**

**[2]यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः।**
**शकास्तुषाराःकह्वाश्च पह्लवाश्चाऽऽन्ध्रमद्रकाः।।**
**[3]ओड्राः पुलिन्दा रमठाः काचा म्लेच्छाश्च सर्वशः।**
**ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः।।**
**[4]कथं धर्मं चरेयुस्ते सर्वे विषयवासिनः।**
**मद्विधैश्च कथं स्थाप्याः सर्वे ते दस्युजीविनः।।**

दस्युजीविनः दस्युवृत्तिजीविनः। नीटी.

**इन्द्र उवाच –**

**[5]मातापित्रोर्हि कर्तव्या शुश्रूषा सर्वदस्युभिः।**
**आचार्यगुरुशुश्रूषा तथैवाऽऽश्रमवासिनाम्।।**

तेषामपि मात्रादिशुश्रूषारूपे धर्मे स्थापनं कर्तव्यमित्याह – मातेति। नीटी.

**[6]भूमिपालानां च शुश्रूषा कर्तव्या सर्वदस्युभिः।**
**वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते।।**
**[7]पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च।**
**दानानि च यथाकालं द्विजेषु दद्युरेव ते।।**

**[1]अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम्।**
**भरणं पुत्रदाराणां शौचमद्रोह एव च।।**
**[2]दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता।**
**पाकयज्ञा महार्हाश्च कर्तव्याः सर्वदस्युभिः।।**

(१) यत्तु भारते राजधर्मेषु – 'यवनाः किराता... सर्वदस्युभिः' इति म्लेच्छादीनां श्राद्धविधानं तदपि सजातीय-भोजनद्रव्यदानादिपरम्। शूक. ५७

(२) महार्हा इति। पाकयज्ञमुद्दिश्य ब्राह्मणाय धनं देयम्। एवं श्राद्धमपि आमेन हिरण्येन चेति ज्ञेयम्। नीटी.

कापव्यस्य जनकः संकरः

क्षात्रधर्मपालनं च

**[3]निषाद्यां क्षत्रियाज्जातः क्षत्रधर्मानुपालकः।**
**कापव्यो नाम नैषादिर्दस्युत्वात्सिद्धिमाप्तवान्।।**

जनकयोः शुद्ध्यशुद्धी
अपत्यशुद्ध्यशुद्धि-
निमित्ते

**[4]सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति संभवः।**
**अतोऽन्यतरतो हीनादवरो नाम जायते।।**

सात्त्विकयोर्दम्पत्योः पुण्यः संभवः, तयोरन्यतरस्य हीनत्वे हीन इत्यर्थः। नीटी.

चातुर्वर्ण्यातिरिक्ताः सर्वे
संकरजाः

**[5]चतुर्णामेव वर्णानामागमः पुरुषर्षभ।**
**अतोऽन्ये त्वतिरिक्ता ये ते वै संकरजाः स्मृताः।।**

वर्णसंकरजा अनुलोमाः
प्रतिलोमाश्च

**[6]क्षत्रजातिरथाम्बष्ठा उग्रा वैदेहकास्तथा।**
**श्वपाकाः पुल्कसाः स्तेना निषादाः सूतमागधाः।।**

---

(१) **भा.** १२।३।२६; **भामु.** शापभी (शापाद्भी) सूतं जातं (जातं सूतं).

(२) **भा.** १२।६५।१३; **भामु.** १२।६५।१३ कह्वाश्च (कङ्काश्च); **शूक.** ५७ भामुवत्, भारते राजधर्मेषु.

(३) **भा.** १२।६५।१४; **भामु.** १२।६५।१४; ओड्राः (पौण्ड्राः) काचा म्लेच्छाश्च (काम्बोजाश्चैव); **शूक.** ५७ उत्त., भारते राजधर्मेषु.

(४) **भा.** १२।६५।१५; **भामु.** १२।६५।१५ प्रथमचरणे (कथं धर्मांश्चरिष्यन्ति) ते (वै); **शूक.** ५७ भामुवत्, पू., भारते राजधर्मेषु.

(५) **भा.** १२।६५।१७; **भामु.** १२।६५।१७ कर्तव्या शुश्रूषा (शुश्रूषा कर्तव्या).

(६) **भा.** १२।६५।१८; **भामु.** १२।६५।१८ पालानां (पानां); **शूक.** ५७ उत्त., भारते राजधर्मेषु.

(७) **भा.** १२।६५।१९; **भामु.** १२।६५।१९ चतुर्थचरणे (द्विजेभ्यो विसृजेत्सदा); **शूक.** ५७ शयनानि च (शयनानि वा) शेषं भामुवत्, भारते राजधर्मेषु.

(१) **भा.** १२।६५।२०; **भामु.**

(२) **भा.** १२।६५।२१; **भामु.**; **शूक.** ५७ भारते राजधर्मेषु.

(३) **भा.** १२।१३३।३; **भामु.** १२।१३५।३ कापव्यो (कायव्यो).

(४) **भा.** १२।२८५।४; **भामु.** १२।२९६।४.

(५) **भा.** १२।२८५।७; **भामु.** १२।२९६।७.

(६) **भा.** १२।२८५।८; **भामु.** १२।२९६।८ क्षत्रजाति (क्षत्रियाति).

**[1]आयोगाः करणा व्रात्याश्चण्डालाश्च नराधिप।**
**एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परम्।।**

अम्बष्ठादीनां स्वरूपं जातिविवेकाद्विवेक्तव्यम् – '‡सवर्णा ब्राह्मणान्सूते राज्ञी मूर्धावसिक्तकम्। वैश्याऽम्बष्ठं निषादं तु शूद्रा पारशवश्च सः।।' इत्यादिना।

नीटी.

संकरनिमित्तानि

**युधिष्ठिर उवाच –**

**[2]अर्थाश्रयाद्वा कामाद्वा वर्णानां वाऽप्यनिश्चयात्।**
**अज्ञानाद्वाऽपि वर्णानां जायते वर्णसंकरः।।**

लोभात्कामाद्वा उत्तमवर्णा स्त्री हीनवर्णानुगा भवतीति प्रसिद्धम्। तेन गूढोत्पत्तिसंभवात् वर्णानां निश्चयो न जायते। ननु 'कर्मणा ज्ञायते जातिः' इत्यभियुक्तैरुच्यते एव। न, निषेककाले दुर्मुहूर्तदुष्टवस्तुस्मरणादिनाऽपि निमित्तेन असदुत्पत्तिसंभवात्, प्रच्छन्नविलोमजेष्वपि क्वचित्सदाचार-दर्शनेन वर्णानामज्ञानाच्चावश्यं वर्णसंकरो भवत्येवेत्यर्थः।

नीटी.

वर्णसंकरजा अनुलोमाः प्रतिलोमाश्च
तेषां वृत्तयश्च

**[3]तेषामेतेन विधिना जातानां वर्णसंकरे।**
**को धर्मः कानि कर्माणि तन्मे ब्रूहि पितामह।।**

एतेन उक्तेन विधिना प्रकारेण। नीटी.

**भीष्म उवाच –**

**[4]चातुर्वर्ण्यस्य कर्माणि चातुर्वर्ण्यं च केवलम्।**
**असृजत्स ह यज्ञार्थे पूर्वमेव प्रजापतिः।।**

तत्र प्रथमं चत्वार एव वर्णा यज्ञार्थं सृष्टाः। तत्र शूद्राणां सेवाद्वारा यज्ञार्थत्वम्, न तु साक्षात्, 'तस्माच्छूद्रो यज्ञेऽन-वक्लृप्तः' (तैसं. ७।१।१।६) इति श्रुतेः। नीटी.

**[1]भार्याश्चतस्रो विप्रस्य द्वयोरात्माऽस्य जायते।**
**आनुपूर्व्याद्द्वयोर्हीनौ मातृजात्यौ प्रसूयतः।।**

आत्मा ब्राह्मण एव क्षत्रियायामपि जायत इत्यर्थः। स च किंचिन्नीचः। यदाह मनुः – 'स्त्रीष्वनन्तरजातासु द्विजैरु-त्पादितान्सुतान्। सदृशानेव तानाहुर्मातृदोषविगर्हितान्।।' (मस्मृ. १०।६) इति। मातृजात्यौ वैश्यायां वैश्योऽम्बष्ठो नाम शूद्रायां शूद्रो निषादो नाम पारशवाख्यो भवति। मनुः – 'ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते। निषादः शूद्रकन्यायां यः पारशव उच्यते।।' (मस्मृ. १।८) इति।

नीटी.

**[2]परं शवाद्ब्राह्मणस्यैष पुत्रः**
**शूद्रापुत्रं पारशवं तमाहुः।**
**शुश्रूषकः स्वस्य कुलस्य स स्या –**
**त्स्वं चारित्रं नित्यमथो न जह्यात्।।**

शवात् 'पद्यु वा एतच्छ्मशानं यच्छूद्रः' इति श्रुतेः शवस्थानतुल्यात् शूद्रात्परम् उत्कृष्टम्। पद्भ्यां युतं पद्यु पादयुक्तं जङ्गमं श्मशानं शूद्र इति श्रुत्यर्थः।

नीटी.

**[3]सर्वानुपायानपि संप्रधार्य**
**समुद्धरेत्स्वस्य कुलस्य तन्तुम्।**
**ज्येष्ठो यवीयानपि यो द्विजस्य**
**शुश्रूषवान्दानपरायणः स्यात्।।**

तन्त्रम् उपकरणम्। वयसा ज्येष्ठोऽपि पारशवो द्विजस्य त्रिवर्णजस्य यवीयान् कनीयानेवेति संबन्धः।

नीटी.

**[4]तिस्रः क्षत्रियसंबन्धाद्द्वयोरात्माऽस्य जायते।**
**हीनवर्णस्तृतीयायां शूद्र उग्र इति स्मृतः।।**

वैश्यायामपि क्षत्रियात्क्षत्रिय एव भवतीत्याह – द्वयोरिति। उग्राः शूद्रविशेषाः। नीटी.

---

‡ अत्र 'ब्राह्मणात्' इति पूर्वप्रकृतं वा अध्याहार्यं वा।

(१) **भा.** १२।२८५।९; **भामु.** १२।२९६।९ आयो (अयो) श्चण्डा (श्चाण्डा) स्परम् (स्परात्).

(२) **भा.** १३।४८।१; **भामु.** श्रयाद्वा (ल्लोभाद्वा) वाऽप्य (चाप्य).

(३) **भा.** १३।४८।२; **भामु.**

(४) **भा.** १३।४८।३; **भामु.** ह (हि).

(१) **भा.** १३।४८।४; **भामु.** त्माऽस्य जा (त्मा प्रजा).

(२) **भा.** १३।४८।५; **भामु.** स्यैष (स्यैव) त्स्वं चा (त्स्वचा).

(३) **भा.** १३।४८।६; **भामु.** नपि (नथ) तन्तुम् (तन्त्रम्) षवान्दा (षया दा).

(४) **भा.** १३।४८।७; **भामु.** वर्ण (वर्णा) चतुर्थचरणे (शूद्रा उग्रा इति स्मृतिः).

**[1]द्वे चापि भार्ये वैश्यस्य द्वयोरात्माऽस्य जायते।**
**शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते।।**

वैश्यात् शूद्रायामपि वैश्य एव भवतीत्याह – द्वे इति। नीटी.

**[2]अतो विशिष्टस्त्वधमो गुरुदारप्रधर्षकः।**
**बाह्यं वर्णं जनयति चातुर्वर्ण्यविगर्हितम्।।**

अतः स्वपितुः अविशिष्टः नाधिकः सन् अधमः शूद्रः गुरूणां ब्राह्मणादीनां दारप्रधर्षकश्चेत्। बाह्यं चाण्डालादिम्। नीटी.

**[3]अयाज्यं क्षत्रियो व्रात्यं सूतं स्तोमक्रियापरम्।**
**वैश्यो वैदेहकं चापि मौद्गल्यमपवर्जितम्।।**

सूतः सारथिः जातितः कर्मतश्च 'सूतानामश्वसारथ्यम्' (मस्मृ. १०।४७) इत्युक्तेः। स्तोमक्रिया स्तोत्रकरणं च राजादीनाम्। यथोक्तम् – 'सूताः पौराणिका मताः' इति। मौद्गल्यं स्त्रीकार्यमन्तःपुररक्षणादि तत्कारित्वम्, 'वैदेहकानां स्त्रीकार्यम्' (मस्मृ. १०।४७) इत्युक्तेः। अपवर्जितं संस्कारानर्हम्। नीटी.

**[4]शूद्रश्चण्डालमत्युग्रं वध्यघ्नं बाह्यवासिनम्।**
**ब्राह्मण्यां संप्रजायन्त इत्येते कुलपांसनाः।**
**एते मतिमतां श्रेष्ठ वर्णसंकरजाः प्रभो।।**

वध्यानां चोरादीनां शिरश्छेदादिकार्यकारिणं वध्यघ्नम्। नीटी.

**[5]बन्दी तु जायते वैश्यान्मागधो वाक्यजीवनः।**
**शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात्।।**

'मागधानां वणिक्पथः' (मस्मृ. १०।४७) इति मनुः। वाक्यं प्रस्तावसदृशी उक्तिः। निषादस्तथा क्षत्ता नाम। यदाह मनुः – 'शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः।।' (मस्मृ. १०।१२) इति। अस्य वृत्तिं मनुरन्यामाह – 'क्षत्तुग्रपुल्कसानां तु विलोको वधबन्धनम्' (मस्मृ. १०।४९) इति। अत्र मनुना निषादोऽनुलोमजेषु क्षत्ता च प्रतिलोमजेषूक्तः। व्यासेन तु विपरीतमुक्तं विदुरे क्षत्तृशब्दं तत्र तत्र प्रयुञ्जानेन। अत एव 'शूद्रयां निषादो जातः पारशवोऽपि वा', 'क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च' (यास्मृ. १।९१, ९४) इति याज्ञवल्क्य उभयत्र वाशब्दं पठन्ननयोर्निषादत्वक्षत्तृत्वे सूचयति। तेन विप्रात् शूद्रायां क्षत्ता शूद्रात्क्षत्रियायां निषाद इत्यपि साधु। नीटी.

**[1]शूद्रादायोगवश्चापि वैश्यायां ग्रामधर्मिणः।**
**ब्राह्मणैरप्रतिग्राह्यस्तक्षा स वनजीवनः।।**

ग्राम्यधर्मिणः ग्राम्यधर्मो मैथुनं तद्वतः। तक्षा वर्धकिः। नीटी.

संकरजेभ्यः स्वजातीयहीन-
जातीयोत्पत्तेर्विवेचनम्

**[2]एतेऽपि सदृशं वर्णं जनयन्ति स्वयोनिषु।**
**मातृजात्यां प्रसूयन्ते प्रवरा हीनयोनिषु।।**
**[3]यथा चतुर्षु वर्णेषु द्वयोरात्माऽस्य जायते।**
**आनन्तर्यात्तु जायन्ते तथा बाह्याः प्रधानतः।।**

एते नव अम्बष्ठपारशवोग्राः सूतवैदेहकचण्डालाः मागधनिषादायोगवाः, तेषां स्वयोनौ अनन्तरयोनौ च स्वात्मैव जायते पूर्ववत्। व्यवहितनीचयोनौ तु मातृजातीया इति श्लोकद्वयार्थः। नीटी.

**[4]ते चापि सदृशं वर्णं जनयन्ति स्वयोनिषु।**
**परस्परस्य वर्तन्तो जनयन्ति विगर्हितान्।।**

ते चापि संकरजा अपि विगर्हितान् अधमादुत्तमायां उत्तमादधमायां वा सूताम्बष्ठादिवद्विगर्हितानेव जनयन्तीत्यर्थः। नीटी.

---

(१) भा. १३।४८।८; भामु.
(२) भा. १३।४८।९; भामु. अतो विशि (अतोऽपि शि).
(३) भा. १३।४८।१०; भामु. प्रथमचरणे (विप्रायां क्षत्रियो बाह्यं).
(४) भा. १३।४८।११; भामु. श्चण्डाल (श्चाण्डाल).
(५) भा. १३।४८।१२; भामु.

(१) भा. १३।४८।१३; भामु. ग्राम (ग्राम्य) स वन (स्वधन).
(२) भा. १३।४८।१४; भामु. शं वर्णं (शान् वर्णान्) जात्यां (जात्याः) प्रवरा (ह्यवरा).
(३) भा. १३।४८।१५; भामु. त्तु जा (त्वजा).
(४) भा. १३।४८।१६; भामु. वर्तन्तो (दारेषु).

**[1]यथा च शूद्रो ब्राह्मण्यां जन्तुं बाह्यं प्रसूयते।**
**एवं बाह्यतराद्‌बाह्यश्चातुर्वर्ण्यात्प्रसूयते।।**
**[2]प्रतिलोमं तु वर्तन्तो बाह्याद्‌बाह्यतरं पुनः।**
**हीना हीनात्प्रसूयन्ते वर्णाः पञ्चदशैव ते।।**

संकीर्णसंकरजास्तेषां
वृत्तयश्च

**[3]अगम्यागमनाच्चैव वर्तते वर्णसंकरः।**
**व्रात्यानामत्र जायन्ते सैरन्ध्रा मागधेषु च।**
**प्रसाधनोपचारज्ञमदासं दासजीवनम्।।**

पञ्चदश बाह्या उक्तास्तान् व्याचष्टे – बाह्याना-मित्यादिना। मागधेषु सैरन्ध्यामित्यभेदेनान्वयः। सैरन्ध्रकर्म व्याचष्टे – प्रसाधनेति। प्रसाधनं राजादीनां पुंसाम् अलंकरणं पुरुषैः सैरन्ध्रैः, राजस्त्रीणां च सैरन्ध्रीभिः उपचारः, तेषां (? तासां) दिव्याङ्गरागाद्यर्पणेन स्तवादिना च संतोषणम्, तदभिज्ञम्। अदासमिति सामान्ये नपुंसकम्। नीटी.

**[4]अतश्चाऽऽयोगवं सूते वागुरावनजीवनम्।**
**मैरेयकं च वैदेहः संप्रसूतेऽथ माधुकम्।।**

अतः अत्र मागधविशेषे सैरन्ध्रयोनौ आयोगवम् आयोगवस्यापत्यं सैरन्ध्रं नाम सूतेऽर्थादायोगवम् 'सैरन्ध्रं वागुरावृत्तिम्' (मस्मृ. १०।३२) इति मनुः। तस्यामेव मागध्यां मैरेयकं नामतः माधुकं मद्यकरं कर्मतश्च पुत्रं वैदेहः सूते। नीटी.

**[5]निषादो मुद्‌गरं सूते दाशं नावोपजीविनम्।**
**मृतपं चापि चण्डालः श्वपाकमतिकुत्सितम्।।**

मद्‌गुरं मद्‌गून् मीनविशेषान् राति आदत्ते तं मद्‌गुरं दासं नामतः, मृतपं श्मशानाधिकारिणम्। नीटी.

**[1]चतुरो मागधी सूते क्रूरान्मायोपजीविनः।**
**मांसस्वादुकरं सूदं सौगन्धमिति संज्ञितम्।।**

एते मागध्यां आयोगवादिभ्यश्चतुर्भ्यः क्रमाज्जायन्ते इत्युपसंहरति – चतुर इति। एते (चत्वारः) वागुरादिना जीवन्तीति मायोपजीविनः अन्येऽपि चत्वारो मागध्यां विश्रुताः सजातीया उत्पद्यन्ते। तेषां नामानि – मांसमित्यादि। मांसं मांसविक्रेतारम्। स्वादुकरं मांसस्यैव संस्कारकम्। क्षौद्रं सूदं शूद्रमिति पाठत्रयेऽपि शाकाद्यन्नपाककरम्। सौगन्धम् उक्तलक्षणं सैरन्ध्रम्। एकस्यैव मागधस्यैतद्‌वृत्ति-चतुष्टयमुक्तमिति ज्ञेयम्। नीटी.

**[2]वैदेहकाच्च पापिष्ठं क्रूरं भार्योपजीविनम्।**
**निषादान्मद्रनाभं च खरयानप्रयायिनम्।।**

आयोगव्यां वैदेहकादिभ्यो जातांस्त्रीन् भेदानाह सार्धद्वयेन – वैदेहकादिति। नीटी.

**[3]चण्डालात्पुल्कसं चापि खराश्वगजभोजिनम्।**
**मृतचेलप्रतिच्छन्नं भिन्नभाजनभोजिनम्।।**
**[4]आयोगवीषु जायन्ते हीनवर्णासु ते त्रयः।**
**क्षुद्रो वैदेहकादन्ध्रो बहिर्ग्रामप्रतिश्रयः।।**
**[5]कारावरो निषाद्यां तु चर्मकारात्प्रजायते।**
**चण्डालात्पाण्डुसौपाकस्त्वक्सारव्यवहारवान्।।**

निषाद्यां वैदेहकात् क्षुद्रो मेदः अन्ध्रश्च आरण्यपशुहिंसकौ कारावराख्यश्चर्मकारश्चेति त्रयो भवन्तीत्यर्थः। चण्डालात् निषाद्यामेव। त्वक्सारः वेणुः। नीटी.

**[6]आहिण्डिको निषादेन वैदेह्यां संप्रजायते।**
**चण्डालेन तु सौपाको मोद्‌गल्यसमवृत्तिमान्।।**

---

(१) **भा.** १३।४८।१७; **भामु.** च शूद्रो (शूद्रोऽपि) त्प्रसू (त्प्रजा).

(२) **भा.** १३।४८।१८; **भामु.** वर्तन्तो (वर्धन्ते) तरं पुनः (तरात्पुनः) हीना हीनात्प्र (हीनाद्धीनाः प्र) ते (तु).

(३) **भा.** १३।४८।१९; **भामु.** वर्तते (जायते) द्वितीयार्धे (बाह्यानामनुजायन्ते सैरन्ध्र्यां मागधेषु च।).

(४) **भा.** १३।४८।२०; **भामु.** वन (बन्ध).

(५) **भा.** १३।४८।२१; **भामु.** मुद्‌गरं (मद्‌गुरं) दाशं (दासं) चण्डा (चाण्डा) मतिकुत्सितम् (मिति विश्रुतम्).

(१) **भा.** १३।४८।२२; **भामु.** मांसस्वा (मांसं स्वा) सूदं (क्षौद्रं) संज्ञितम् (विश्रुतम्).

(२) **भा.** १३।४८।२३; **भामु.** पिष्ठं (पिष्ठा) भार्योप (मायोप).

(३) **भा.** १३।४८।२४; **भामु.** चण्डा (चाण्डा) चेल (चैल).

(४) **भा.** १३।४८।२५; **भामु.** वर्णासु (वर्णास्तु).

(५) **भा.** १३।४८।२६; **भामु.** रात्प्रजा (रः प्रसू) चण्डा (चाण्डा).

(६) **भा.** १३।४८।२७; **भामु.** ण्डिको (ण्डको) संप्रजा (संप्रसू) को मोद्‌गल्य (कश्चण्डाल).

**[१]निषादी चापि चण्डालात्पुत्रमन्तावसायिनम्।**
**श्मशानगोचरं सूते बाह्यैरपि बहिष्कृतम्।।**
**[२]इत्येताः संकरे जात्यः पितृमातृव्यतिक्रमात्।**
**प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः।।**

अत्र मागध्यां आयोगववैदेहकनिषादचण्डालैश्चत्वारस्तैरेवाऽऽयोगव्यां स्वीयवर्जितैस्त्रयो निषाद्यां चण्डालवैदेहाभ्यां द्वौ वैदेह्यां चण्डालनिषादाभ्यां द्वौ निषाद्यां चण्डालाच्चैक इति द्वादश भेदा उक्ताः। 'शूद्राज्जातो निषाद्यां तु स वै कुक्कुटकः स्मृतः। वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेन उच्यते।।' (मस्मृ. १०।१८, १९) इति द्वौ, 'द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान्। तान्सावित्रीपरिभ्रष्टान् व्रात्यानित्यभिनिर्दिशेत्।।' (मस्मृ. १०।२०) इति व्रात्यजातीय एक इत्येवं मनूक्तैस्त्रिभिः सह पञ्चदश संकरजाताः। व्रात्यस्यापि धर्मसांकर्यादेतेष्वेव गणना। प्रच्छन्नाः अज्ञातयोनयोऽपि पूर्वोक्तैः कर्मभिस्तेऽमुकयोनय इति वेदितव्याः। नीटी.

संकरपरंपराजातानां जातिसंज्ञा न सन्ति, तेषां धर्मः समाचारश्च

**[३]चतुर्णामेव वर्णानां धर्मो नान्यस्य विद्यते।**
**वर्णानां धर्महीनेषु संज्ञा नास्तीह कस्यचित्।।**

चातुर्वर्ण्यस्यैव धर्माः शास्त्रे विहिताः, इतरेषां तु जातिभेदानां धर्मनियम इयत्ता च नास्ति। तथाहि – चतुर्भ्यो वर्णेभ्यः षडनुलोमजाः षड्विलोमजाश्चेति द्वादश, तेभ्योऽपि षट्षष्टिरनुलोमजाः षट्षष्टिर्विलोमजा इति द्वात्रिंशदधिकं शतम्, तेभ्य एवं प्रातिलोम्यानुलोम्यगणनायाम्, तेभ्यस्तेभ्यश्चैवमनन्ता भेदा भवन्ति। ते च सर्वे पञ्चदशस्वेवान्तर्भवन्तीति तावतामेव परिगणनं कृतमित्यर्थः। नीटी.

(१) भा. १३।४८।२८; भामु. चण्डा (चाण्डा) मन्ताव (मन्तेव).

(२) भा. १३।४८।२९; भामु. इत्येताः (इत्येते) जात्यः (जाताः).

(३) भा. १३।४८।३०; भामु. संज्ञा (संख्या).

**[१]यदृच्छयोपसंपन्नैर्यज्ञसाधुबहिष्कृतैः।**
**बाह्या बाह्यैस्तु जायन्ते यथावृत्ति यथाश्रयम्।।**

यदृच्छया जात्यनियमेन उपसंपन्नैः मिथुनीभावं गतैः यज्ञेभ्यः साधुभ्यश्च बहिष्कृतैः। यथावृत्ति यथाश्रयं जीविकां जातिविशेषं च यदृच्छया तत्तत्कर्मणा प्राप्ता इत्यर्थः। नीटी.

**[२]चतुष्पथश्मशानानि शैलांश्चान्यान्वनस्पतीन्।**
**कार्ष्णायसमलंकारं परिगृह्य च नित्यशः।।**
**[३]वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः।**
**युञ्जन्ते चाप्यलंकारांस्तथोपकरणानि च।।**
**[४]गोब्राह्मणार्थे साहाय्यं कुर्वाणा वै न संशयः।**
**आनृशंस्यमनुक्रोशः सत्यवाक्यमथ क्षमा।।**

तेषां साधारणान् धर्मानाह – गविति। नीटी.

**[५]स्वशरीरैः परित्राणं बाह्यानां सिद्धिकारकम्।**
**मनुजव्याघ्र भवति तत्र मे नास्ति संशयः।।**

जातिसंकरनिन्दा

**[६]यथोपदेशं परिकीर्तितासु**
**नरः प्रजायेत विचार्य बुद्धिमान्।**
**विहीनयोनिर्हि सुतोऽवसादये-**
**त्तितीर्षमाणं सलिले यथोपलम्।।**

निहीनासु रेतःसेकं न कुर्यादिति भावः। नीटी.

स्त्रियः संकरहेतवः

**[७]अविद्वांसमलं लोके विद्वांसमपि वा पुनः।**
**नयन्ते ह्युत्पथं नार्यः कामक्रोधवशानुगम्।।**

(१) भा. १३।४८।३१; भामु. बाह्यैस्तु (बाह्यैश्च).

(२) भा. १३।४८।३२ पू.; भामु.

(३) भा. १३।४८।३२ उत्त.; भामु. १३।४८।३३ न्ते चा (न्तो वाऽ).

(४) भा. १३।४८।३३; भामु. १३।४८।३४ णार्थे (णाय) क्यमथ (क्यं तथा).

(५) भा. १३।४८।३४; भामु. १३।४८।३५ रैः परित्रा (रैरपि त्रा) कारकम् (कारणम्) तृतीयचरणे (भवन्ति मनुजव्याघ्र).

(६) भा. १३।४८।३५; भामु. १३।४८।३६ विहीन (निहीन) सलिले यथोपलम् (हि यथोपलो जले).

(७) भा. १३।४८।३६; भामु. १३।४८।३७ न्ते ह्युत्पथं (न्ति ह्यपथं).

तदर्थमेव चौरेभ्य इव स्त्रीभ्य आत्मानं रक्षेदित्याह द्वाभ्याम् – अविद्वांसमिति। नीटी.

**[1]स्वभावश्चैव नारीणां नराणामिह दूषणम्।**
**इत्यर्थं न प्रसज्जन्ते प्रमदासु विपश्चितः।।**

संकरजात्यभिज्ञानं
गुणकर्मभिः

**युधिष्ठिर उवाच –**

**[2]वर्णापेतमविज्ञातं नरं कलुषयोनिजम्।**
**आर्यरूपमिवानार्यं कथं विद्यामहे नृप।।**

कलुषयोनिजं संकरयोनिजम् आर्यगृहे जातत्वादार्यरूपमिव भासमानमपि उत्पत्तितोऽनार्यम्। नीटी.

**भीष्म उवाच –**

**[3]योनिसंकलुषे जातं नानाचारसमाहितम्।**
**कर्मभिः सज्जनाचीर्णैर्विज्ञेया योनिशुद्धता।।**

नानाभावैः आर्येभ्यः पृथग्भूताभिश्चेष्टाभिः समन्वितं नरं संकरयोनिजं जानीयात्। नीटी.

**[4]अनार्यत्वमनाचारः क्रूरत्वं निष्क्रियात्मता।**
**पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम्।।**

अनार्यत्वादिष्वेकैकमपि कलुषयोनित्वव्यञ्जकम्, किमुत द्वे त्रीणि सर्वाणि च? इति भावः। नीटी.

**पित्र्यं वा भजते शीलं मातृजं वा तथोभयम्।**
**न कथंचन संकीर्णः प्रकृतिं स्वां नियच्छति।।**

प्रकृतिं योनिं नियच्छति गूहितुं शक्नोतीत्यर्थः।
नीटी.

**यथैव सदृशो रूपे मातापित्रोर्हि जायते।**
**व्याघ्रश्चित्रैस्तथा योनिं पुरुषः स्वां नियच्छति।।**

व्याघ्र इत्युपलक्षणं बीजादेरपि। यथा तिर्यक्स्थावरादिकं बीजगुणं न त्यजति, एवं मनुष्योऽपीत्यर्थः। नीटी.

(१) **भा.** १३।४८।३७; **भामु.** १३।४८।३८ इत्यर्थं (अत्यर्थं).

(२) **भा.** १३।४८।३८; **भामु.** १३।४८।३९ ज्ञातं (ज्ञाय) नृप (वयम्).

(३) **भा.** १३।४८।३९; **भामु.** १३।४८।४० चारसमाहि (भावसमन्वि).

(४) **भा.** १३।४८।४०-४२; **भामु.** १३।४८।४१-४३.

**[1]कुलस्रोतसि संछन्ने यस्य स्याद्योनिसंकरः।**
**संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु।।**

संच्छन्ने सुगुप्तेऽपि। यस्य, जन्मनीति शेषः। सः तच्छीलं संकरकर्तुः स्वभावम्। नीटी.

**[2]आर्यरूपसमाचारं चरन्तं कृतके पथि।**
**स्ववर्णमन्यवर्णं वा स्वशीलं शास्ति निश्चये।।**

स्वस्य शीलं स्वभावः निश्चये कार्यस्य निष्ठायां सुवर्णं शोभनवर्णम् अन्यवर्णं वा पुरुषं शास्ति कथयति। सुवर्णो बहिःक्रूरोऽपि कार्यकाले दयालुर्भवति, दुर्वर्णश्च नित्यं मृदुरपि फलकाले दारुणो भवतीति भावः। नीटी.

**[3]नानावृत्तेषु भूतेषु नानाकर्मरतेषु च।**
**जन्मवृत्तसमं लोके सुश्लिष्टं न विरज्यते।।**

सुश्लिष्टं शोभनवृत्तेन न विरज्यते उपचितं वृत्तं विहाय जन्मान्यथा तिष्ठतीत्यर्थः। नीटी.

**[4]शरीरमिह सत्त्वेन नरस्य परिकृष्यते।**
**ज्येष्ठमध्यावरं सत्त्वं तुल्यसत्त्वं प्रमोदते।।**

तस्य संकरजस्य शरीरं सत्त्वेन शास्त्रीयबुद्ध्या न परिकृष्यते न नीचमार्गादपकृष्यते, बीजगुणस्य प्राबल्यात्। सत्त्वस्य कालभेदेन ज्येष्ठत्वादिभावेऽपि यत्तुल्यसत्त्वं शरीरारम्भकं यत्सत्त्वं ज्येष्ठाद्यन्यतमं तदेव प्रमोदते, अन्यत्तु उत्पन्नमपि सत्त्वं शारदिकाभ्रवल्लीयत इति भावः।
नीटी.

**[5]ज्यायांसमपि शीलेन विहीनं नैव पूजयेत्।**
**अपि शूद्रं तु सद्वृत्तं धर्मज्ञमभिपूजयेत्।।**

**[6]आत्मानमाख्याति हि कर्मभिर्नरः**
**स्वशीलचारित्रकृतैः शुभाशुभैः।**

(१) **भा.** १३।४८।४३; **भामु.** १३।४८।४४ कुलस्रो (कुले स्रो) मपि वा (मथवा).

(२) **भा.** १३।४८।४४; **भामु.** १३।४८।४५ स्ववर्ण (सुवर्ण).

(३) **भा.** १३।४८।४५; **भामु.** १३।४८।४६.

(४) **भा.** १३।४८।४६; **भामु.** १३।४८।४७ नरस्य (न तस्य).

(५) **भा.** १३।४८।४७; **भामु.** १३।४८।४८ तु सद्वृत्तं धर्मज्ञ (च धर्मज्ञं सद्वृत्त).

(६) **भा.** १३।४८।४८; **भामु.** १३।४८।४९ स्वशील (सुशील) कृतैः (कुलैः) त्मकुलं (शु कुलं) स्वकर्मभिः (स्वकर्मतः).

**प्रनष्टमप्यात्मकुलं तथा नरः**
**पुनः प्रकाशं कुरुते स्वकर्मभिः।।**
**[1]योनिष्वेतासु सर्वासु संकीर्णास्वितरासु च।**
**यत्राऽऽत्मानं न जनयेद्बुधस्ताः परिवर्जयेत्।।**

## हरिवंशः

निषादधीवरतुमुरतुम्बुरवंशा
वेनकल्मषसंभूताः

**[2]यदा न शक्यते मानादवलेपाच्च पार्थिवः।**
**अनुनेतुं तदा §वेनं ततः क्रुद्धा महर्षयः।।**
पाठान्तरे अपनेतुम् अधर्मादपक्रष्टुम्। नीटी.
**[3]निगृह्य तं महात्मानो विस्फुरन्तं महाबलम्।**
**ततोऽस्य सव्यमूरुं ते ममन्थुर्जातमन्यवः।।**
निगृह्य जीवन्तमपि पातयित्वा। नीटी.
**[4]तस्मिंस्तु मथ्यमाने वै राज्ञ ऊरौ प्रजज्ञिवान्।**
**ह्रस्वोऽतिमात्रः पुरुषः कृष्णश्चापि बभूव ह।।**
**[5]स भीतः प्राञ्जलिर्भूत्वा स्थितवाञ्जनमेजय।**
**तमत्रिर्विह्वलं दृष्ट्वा निषीदेत्यब्रवीत्तदा।।**
**[6]निषादवंशकर्ता स बभूव वदतां वर।**
**धीवरानसृजच्चापि वेनकल्मषसंभवान्।।**
धीवरान् नाविकान्। नीटी.
**[7]ये चान्ये विन्ध्यनिलयास्तुमुरास्तुम्बुरास्तथा।**
**अधर्मरुचयस्तात विद्धि तान्वेनकल्मषान्।।**
तुषारास्तुम्बराश्च प्रान्तदेशीयाः म्लेच्छविशेषाः। विन्ध्यनिलयाः 'गोण्ड' इति 'कोल' इति च प्रसिद्धाः मध्यदेशीयाः। नीटी.

---

§अस्मिन्पाठेऽस्योत्तरत्र निगृह्येत्यत्रान्वयः।

(१) **भा.** १३।४८।४९; **भामु.** १३।४८।५० स्ताः (स्तां).

(२) **हरि.** ५।१४; **हरिमु.** १।५।१५ माना (मोहा) वेनं त (वेनस्त).

(३) **हरि.** ५।१५; **हरिमु.** १।५।१६.

(४) **हरि.** ५।१६; **हरिमु.** १।५।१७ श्चापि ब (श्चातिब).

(५) **हरि.** ५।१७; **हरिमु.** १।५।१८.

(६) **हरि.** ५।१८; **हरिमु.** १।५।१९ कर्ता स (कर्ताऽसौ) च्चापि (च्चाथ).

(७) **हरि.** ५।१९; **हरिमु.** १।५।२० मुरास्तुम्बु (षारास्तुम्ब) यस्तात (यो ये च) कल्मषान् (संभवान्).

पितामहयज्ञे राजस्तुतिकर्त्रोः
सूतमागधयोर्जन्म

**[1]एतस्मिन्नेव काले तु यज्ञे पैतामहे शुभे।**
**सूतः सुत्यां समुत्पन्नः सौत्येऽहनि महामतिः।।**
सू( ? सु)त्यां सोमाभिषवकाले। अभिषवः सोमवल्ल्याः कण्डनं रसनिष्कासनार्थम्। नीटी.
**[2]तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः।**
**पृथोः स्तवार्थं तौ तत्र समाहूतौ महर्षिभिः।।**
अन्यत्र तु वैन्यस्यैव यज्ञेऽग्निकुण्डात्सूतमागधौ जाताविंत्युक्तम्। तत्कल्पभेदात्समाधेयम्। नीटी.
**[3]तावूचुर्ऋषयः सर्वे स्तूयतामेष पार्थिवः।**
**कर्मैतदनुरूपं वां पात्रं चायं नराधिपः।।**
**[4]तावूचतुस्तदा सर्वांस्तानृषीन्सूतमागधौ।**
**आवां देवानृषींश्चैव प्रीणयावः स्वकर्मभिः।।**
**न चास्य विद्वो वै कर्म न तथा लक्षणं यशः।**
**स्तोत्रं येनास्य कुर्याव राज्ञस्तेजस्विनो द्विजाः।।**
विद्वः जानीवः इत्युत्तमस्य द्विवचनम्। नीटी.
**[5]ऋषिभिस्तौ नियुक्तौ तु भविष्यैः स्तूयतामिति।**
**यानि कर्माणि कृतवान्पृथुः पश्चान्महाबलः।।**
पश्चात् पूर्वस्मिन् कल्पे यानि कृतवान् तैरेव अस्मिन् कल्पे भविष्यैः कर्मभिः स्तूयतामिति योजना, प्रतिकल्पं समाननामरूपाया एव सृष्टेः 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (ऋसं. १०।१९०।३) इति श्रवणात्। नीटी.
**[6]तदाप्रभृति त्रैलोक्ये स्तवेषु जनमेजय।**
**आशीर्वादाः प्रयुज्यन्ते सूतमागधबन्दिभिः।।**

---

(१) **हरि.** ५।३२; **हरिमु.** १।५।३३ सुत्यां (सूत्यां).

(२) **हरि.** ५।३३; **हरिमु.** १।५।३४ वार्थं (वार्ये) मह (सुर).

(३) **हरि.** ५।३४; **हरिमु.** १।५।३५ कर्मैत (कर्मैस्त).

(४) **हरि.** ५।३५-३६; **हरिमु.** १।५।३६-३७.

(५) **हरि.** ५।३७; **हरिमु.** १।५।३८ तु (च).

(६) **हरि.** ५।३८; **हरिमु.** १।५।४१ तदा (ततः) त्रैलोक्ये (लोकेषु).

## मनुः

पारशवशब्दनिर्वचनम्

**¹यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम्।**
**स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः।।**

(१) कामादित्यनुवादः 'कामतस्तु प्रवृत्तानाम्' (मस्मृ. ३।१२) इत्यस्य। पारयन् पिण्डदानादिना उपकुर्वन्नपि शवतुल्यः अनुपकारकः, असंपूर्णोपकारकत्वात्। मेधा.

(२) कामादिति शूद्राभिगमस्य काममात्रपरत्वादुक्तम्। ब्राह्मण इति क्षत्रियस्याप्युपलक्षणम्। वैश्यस्य शूद्रापुत्रोऽपि ब्राह्मणस्येव क्षत्रियापुत्रः स्ववर्णसदृश एव। पारयन्नेव कर्मणे शक्त एव सन् शवः अनधिकारी। एतेन ज्ञात्यन्तरासत्त्वेऽपि तस्य न पित्र्यधनहारित्वम्, किंतु संबन्धिनोऽपि ब्राह्मणस्यैवेत्युक्तम्। मवि.

(३) 'विन्नास्वेष विधिः स्मृतः' (यास्मृ. १।९२) इति याज्ञवल्क्यदर्शनात्परिणीतायामेव शूद्रायां ब्राह्मणः कामार्थं पुत्रं जनयेत्स जीवन्नेव शवतुल्य इति पारशवः स्मृतः। † ममु.

(४) शौद्रं लक्षयति – यमिति। शूद्रापत्यस्य निन्दितत्वं सूचयति कामादिति। ‡ मच.

(५) पारयन् जीव(य ?)न् शवः मृतप्रायः पारशवो नाम। निर्वचनमेतत्। बीजगुणस्य श्रैष्ठ्येऽपि क्षेत्रदोषात्स जीवन् मृतकल्प इत्यर्थः, कर्मानधिकारात्। नन्द.

वर्णैरनन्तरवर्णस्त्रीषु जनिताः
पितृसदृशाः

**²स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान्सुतान्।**
**सदृशानेव तानाहुर्मातृदोषविगर्हितान्।।**

(१) अनन्तरासु अव्यवहितासु आनुलोम्येन ये उत्पन्नाः पुत्रास्ते सदृशा ज्ञेयाः, न तु तज्जातीयाः। यथा ब्राह्मणात्क्षत्रियायाम्, क्षत्रियाद्वैश्यायाम्। तेन (? तैः) सदृशाः, न तु त एव। अत्र हेतुः – मातृदोषविगर्हितान्। तत्सदृशग्रहणान्मातृत उत्कृष्टान्पितृतो निकृष्टान्। द्विजैरिति बहुवचननिर्देशान्मातृतश्च दोषस्य ग्रहणादानुलोम्येष्वेतत्संभवति। प्रातिलोम्ये पितृतो ग्रहणेन, मातृतः पितुर्निकृष्टजातीयत्वात्। अत आनुलोम्यग्रहणं पूर्वश्लोके। यदुक्तमुत्तरार्थमिति तदिहानर्थकम्। अतः परेषु श्लोकेषूपदिश्यते। * मेधा.

(२) अव्यवहितवर्णजातीयासु भार्यासु द्विजातिभिर्ये उत्पादिताः पुत्राः, यथा ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायाम्, तन्मातुर्हीनजातीयत्वे(न) गर्हितानत एव पितृसदृशान् तान् मन्वादय आहुः, न तु पितृजातीय (? यान्)। नामानि चैषां मूर्धावसिक्तमाहिष्यकरणाख्यानि याज्ञवल्क्यादिभिरुक्तानि। वृत्तयश्चैषामथोशनसा निर्दिष्टाः – 'हस्त्यश्वरथशिक्षा अस्त्रधारणं च मूर्धावसिक्तानाम्, गीतनृत्यनक्षत्रैर्जीवनं सस्यरक्षा च माहिष्याणाम्, स्व(?-द्वि)जातिशुश्रूषा धान्याध्यक्षता राजसेवा दुर्गान्तःपुररक्षा च पारशवोग्रकरणानाम्' इति। $ गोरा.

(३) द्विजैरित्यनुवादः तेषामेवानन्तरजसंभवात्। पितृमातृसादृश्याभिधानं ब्रह्मक्षत्रियवैश्या(? श्य)जातानां श्रैष्ठ्यार्थम्। मातृदोषेण मातृभिन्नजातीयत्वेन विगर्हितान् वर्णमध्यबहिष्कृतान्। + मवि.

(४) मातुरसवर्णत्वदोषेण विगर्हितान् पितृवर्णाच्यूनीकृतान् तान्मातुः सदृशानेवाऽऽहुः, न तु मुख्यमातृजातीयानेव। सादृश्यं च तद्धर्मप्राप्त्यैव। एवकारश्च शङ्खादिवाक्यं धर्मप्रापकम्, न जातिप्रापकमिति व्यनक्ति। शूशि. ६

(५) एवकारो जात्यन्तरभ्रमनिवृत्त्यर्थः। भ्रमप्राप्तौ कारणत्वेनोक्तं मातृदोषविगर्हितानिति विशेषणम्, तथापि सदृशानित्यर्थः। ऊढासुतविषयमेतत्, मातृदोषमात्रस्यैवोपन्यासादनुद्वाहस्योभयदोषवत्त्वात्। + नन्द.

---

† शेषं मेधागतम्। भाच. ममुगतम्।
‡ शेषं ममुगतम्।

(१) **मस्मृ.** ९।१७८; **विश्व.** १।९० उत्त.; **दीक.** १।९१ उत्त.; **सस्मृ.** १९८ यं ब्रा (यः ब्रा) शवस्त (शवं त).

(२) **मस्मृ.** १०।६; **पमा.** १।५११; **शूशि.** ६; **बौवि.** १।१६।६; **मुक्ता.** ७० विगर्हि (विवर्जि); **वीमि.** १।९५ पृ. १७० दोषविगर्हि (दोषेण दूषि); **संग.** ६३७ तान्सुतान् (तास्तु ये); **बाल.** १।९१ पृ. २८०, २८१.

* पमा., मच., बाल. मेधागतम्।
$ ममु. गोरागतं मेधागतं च।
\+ शेषं मेधागतम्।

**[1]अनन्तरासु जातानां विधिरेष सनातनः।**
**द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम्॥**

(१) आद्येनार्धश्लोकेनोक्तमर्थमनुवदति, द्वितीयेन वक्ष्यमाणसंक्षेपः। द्व्येकान्तरा – द्व्यन्तरा ब्राह्मणस्य शूद्रा, एकान्तरा वैश्या। नातीव श्लोकः सप्रयोजनः।

मेधा.

(२) एष नित्यो विधिरनन्तरजातिभार्योत्पन्नानामुक्तः। एकेन द्वाभ्यां व्यवहितासूत्पन्नानाम्, यथा ब्राह्मणेन वैश्यायाम्, क्षत्रियेण शूद्रायाम्, ब्राह्मणेन च शूद्रायाम्, इमं वक्ष्यमाणं धर्मादनपेतं नाम विधानं जानीयात्।

§ गोरा.

(३) द्व्यन्तरासु स्वद्वितीयान्तरितासु स्वस्यानन्तरवर्णव्यतिरिक्तवर्णस्त्रीष्विति यावत्। ब्राह्मणस्य वैश्यायां शूद्रायां च क्षत्रस्य शूद्रायाम्। धर्म्यं धर्मादनपेतं विधिं प्रकारम्। यद्यप्यग्रे संज्ञामात्रमुक्तं तथापि तत्संज्ञानुवादेनान्यत्रोक्तान् धर्मानभिप्रेत्य धर्म(? र्म्य)मित्युक्तम्। मवि.

(४) अम्बष्ठादीनामुत्पत्तिमाह – द्वीति। द्विश्चैका चेति छेदः। ताभ्याम् (?) एतासु जातानां विधिम् उत्पत्तिम् इमं वक्ष्यमाणम्। तेनात्र विप्रस्यैकान्तरा क्षत्रिया, तामपेक्ष्य वैश्या द्व्यन्तरा, तां चापेक्ष्य शूद्रा त्र्यन्तरा इति तिस्रः। क्षत्रिया तु वैश्याद्व्यन्तरामपेक्ष्यैकान्तरा शूद्रा, एवं द्वे (?)। अत एव वक्ष्यति – 'विप्रस्य त्रिषु वर्णेषु' इत्यादि।

मच.

(५) एष विधिः पूर्वश्लोकाभ्यामुक्तो विधिः। द्व्यन्तरासु स्वानन्तरजातिभ्यां व्यवहितासु ब्राह्मणस्य वैश्यासु क्षत्रियस्य शूद्रास्वित्यर्थः। ब्राह्मणस्य त्र्यन्तरायाः शूद्राया अप्युपलक्षणमेतत्। इमं विधिं वक्ष्यमाणं वर्णान्तत्वं द्व्यन्तरत्र्यन्तरयोः। नन्द.

(६) द्व्यन्तरासु ब्राह्मणात् वैश्यायां शूद्रायां च। नृपकन्यायां वैश्ये उत्पन्ने शूद्र उत्पन्ने सति उभौ अम्बष्ठौ भवतः (?), 'आत्मा विज्ञायते पुत्रः' इति।

भाच.

---

§ ममु. गोरागतम्।

(१) **मस्मृ.** १०।७; **मवि.** द्व्येकान्तरासु (द्व्यन्तरासु च); **नन्द.** मविवत्; **भाच.** मविवत्; **बाल.** १।९१ पृ. २८०.

एकान्तरद्व्यन्तरस्त्रीषु जाता
वर्णसंकरजाः

**[1]ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते।**
**निषादः शूद्रकन्यायां यः पारशव उच्यते॥**

(१) एकान्तरा ब्राह्मणस्य वैश्या, तत्र जातोऽम्बष्ठः। स्मृत्यन्तरे 'भृज्यकण्ठः' (गौध. ४।२०) इत्युक्तः। द्व्यन्तरायां शूद्रकन्यायां निषादः पारशवश्च। निषादशब्दः प्रतिलोमजातीयेऽपि वर्तते। कन्याग्रहणं स्त्रीमात्रोपलक्षणार्थमिति व्याचक्षते। वैश्यस्त्रियामित्यर्थः। एवं सर्वत्र द्रष्टव्यम्।

मेधा.

(२) 'विन्नास्वेष विधिः स्मृतः' (यास्मृ. १।९२) इति याज्ञवल्क्यदर्शनात् ब्राह्मणाद्वैश्यकन्यायामूढायामम्बष्ठाख्यो जायते। शूद्रकन्यायामूढायां निषाद उत्पद्यते। यः पारशव इत्यनेन संज्ञान्तरेण शास्त्र उच्यते। संज्ञान्तरकथनं मत्स्यघातवृत्तिप्रतिलोमनिषादभ्रान्तिनिराकरणार्थम्। † गोरा.

(३) वैश्यशूद्रयोर्नास्त्येव द्व्यन्तरजातिरित्याह – ब्राह्मणादिति। य इति नवमाध्यायोक्तानुवादः (मस्मृ. ९।१७८)।

मच.

**[2]क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्।**
**क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते॥**

(१) आचारविहारौ कायचेष्टा वाग्व्यापारश्च। तावस्य क्रूरौ भवतः। स्वभावानुवादोऽयम्। वपुःशब्दः स्वभाववचन एव। उभयजातिसंभूतत्वादुभयधर्मा भवति। मेधा.

(२) क्षत्रियाच्छूद्रकन्यायामूढायां क्रूरचेष्टावान् पापस्वभावः क्षत्रियशूद्रोत्पन्नदेहः प्राणी उग्राख्यो नरो जायते। वृत्तिश्चास्य पूर्वश्लोके उशनसोक्ता दर्शिता। गोरा.

(३) क्रूरः हिंस्रः आचारः वृत्तम्, तेन विहारः क्रीडा यस्य। मवि.

(४) क्षत्रियाच्छूद्रकन्यायामूढायां क्रूरचेष्टः क्रूरकर्मरतिश्च क्षत्रशूद्रस्वभावः उग्राख्यः पुत्रो जायते। ममु.

---

† मवि., ममु., स्मृकौ., नन्द., भाच. गोरागतम्।

(१) **मस्मृ.** १०।८; **स्मृकौ.** ८ यः (स) उत्त.; **मुक्ता.** ७० उच्यते (एव वा); **बाल.** १।९१ पृ. २८०.

(२) **मस्मृ.** १०।९; **स्मृकौ.** ८; **मुक्ता.** ७०; **बाल.** १।९१ पृ. २८०.

(५) क्षत्रियात्तूग्रजातेरुत्पत्तिरित्याह – क्षत्रियादिति। (क्षत्र)शूद्रवपुः क्षत्रियः पिता शूद्रा माता ताभ्यां वपुर्यस्य सः। 'विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्। जातोऽम्बष्ठस्तु शूद्रायां निषादः पारशवोऽपि वा।। वैश्या-शूद्र्योस्तु राजन्यान्माहिष्योग्रौ स्मृतौ सुतौ। वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः।।' (यास्मृ. १।९१-९२) इति याज्ञवल्क्योक्तेः मूर्धावसिक्तमाहिष्यकरणानां क्षत्रविट्-शूद्रकन्यासु यथाक्रममन्तर्भावो ज्ञेयः। मच.

(६) क्षत्रियोत्पन्न(? त्ति)निमित्तैः क्रूराचारैः विहारः कालक्षेपः यस्यास्ति स क्रूराचारविहारवान्।

नन्द.

(७) जन्तुरित्यनेन निषादादप्यस्य नीचता सूचिता।

बाल. १।९१ पृ. २८०

अनुलोमवर्णसंकरजाः

षट् अपसदाः

**[1]विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः।**
**वैश्यस्य वर्णे चैकस्मिन्षडेतेऽपसदाः स्मृताः।।**

(१) अत्र त्रिपादी अनुवाद एव। चतुर्थस्तु पादोऽपसदा-भिधानार्थः। एते त्रैवर्णिकानामेकान्तरद्व्यन्तरस्त्रीजाताः अपसदा वेदितव्याः। अपसदाः पुत्रार्थफलादवसन्नाः समान-जातीयपुत्रापेक्षया निन्द्यन्ते। × मेधा.

(२) षडेते अनन्तरद्व्यन्तरजाः प्रागुक्ताः। अपसदाः, सदः सस्यं प्रजारूपम्, साऽपकृष्टाऽनेनेत्यपसद इति नाम कृतम्। मवि.

(३) मुख्यपितृजात्यभावात् अपशदाः।

पमा. १।५१२

(४) अपकृष्टाः सदस इत्यपसदाः मुख्यवर्णेभ्योऽपकृष्टा इत्यर्थः। शूशि. १०

(५) 'सदः सत्त्वं प्रजारूपम्। अपकृष्टाः प्रजाः अप-सदाः' इति नारायणः। अत्र षण्णामेकरूपेणाभिधानं शुद्ध-शूद्राद्यपेक्षयोत्कृष्टत्वमात्रं सामान्यमादाय। अवान्तरधर्म-विशेषस्त्वेषां दर्शित एवेति स्मर्तव्यम्।

वीमि. १।९५

(६) अथ तासु तेभ्यश्चौर्यतो जातानाह – विप्रस्य त्रिषु वर्णेष्विति। त्रिषु क्षत्रियादिषु। द्वयोः वैश्यशूद्रयोः। एकस्मिन् शूद्रे। वर्णशब्देन वर्णस्त्रियो विवक्षिताः। सदशब्देन फलमुच्यते। अपगतसदाः अपसदाः। सवर्णानन्तरा (? राः) पुत्रकार्यहीना इत्यर्थः। नन्द.

(७) विप्रस्य कन्यायां त्रिषु (क्षत्रिय)वैश्यशूद्रेषु जातेषु सत्सु। नृपतेः क्षत्रियस्य कन्यायां वर्णयोः वैश्यशूद्रयोः। नृपकन्यायां चैवं वैश्य उत्पन्ने शूद्रे उत्पन्ने सति उभौ अपसदौ, 'आत्मा विज्ञायते पुत्रः' इति। वैश्यस्य यो (? कन्यायां) वर्ण एकस्मिञ्छूद्रे उत्पन्ने सति। भाच.

(८) सद्भ्यः मुख्यवर्णेभ्यः अपकृष्टा इत्यर्थः।

§ बाल. १।९२ पृ. २८३

प्रतिलोमवर्णसंकरजाः

षट्

**[1]क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः।**
**वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ।।**

(१) आनुलोम्ये पूर्वो विधिः। प्रातिलोम्येन त्वयमुच्यते। कन्याग्रहणमुक्तार्थम्। वैश्यान्मागधवैदेहौ य(? या)था-संख्येन। राजस्त्रियां मागधः ब्राह्मण्यां वैदेहः। मेधा.

(२) एवमनुलोमानुक्त्वा प्रतिलोमानाह – क्षत्रियादिति। अस्मिन् श्लोके पूर्वार्धं सुगमम्। उत्तरार्धं व्याख्यात(व्य)म्। अत्र विवाहासंभवात्कन्याग्रहणं स्त्रीमात्रप्रदर्शनार्थम्। (वैश्यात्) क्षत्रियाब्राह्मण्योर्यथाक्रमं मागधवैदेहाख्यौ पुत्रौ भवतः। एषां वृत्तयोऽस्मिन्नेव शास्त्रे निर्दिष्टाः। अनिर्दिष्ट-वृत्तीनां पुनः शास्त्रान्तरोक्ता अस्माभिर्यथावसरं निर्दिश्यन्ते।

+ गोरा.

(३) प्रतिलोमजानाह – क्षत्रियादिति द्वाभ्याम्। कन्याग्रहणं योषिन्मात्रपरम्। 'ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा।

---

× गोरा., ममु. मेधागतम्।

(१) **मस्मृ.** १०।१०; **ममु.** १०।४६ चतुर्थचरणमात्रम्; **पमा.** १।५१२ वर्णे चै (वर्ण ए) पसदाः (पशदाः); **मच.** १०।७ प्रथमचरणमात्रम्; **शूशि.** १० वर्णे चै (वर्ण ए); **मुक्ता.** ७० शूशिवत्; **वीमि.** १।९५; **बाल.** १।९१ पृ. २८१ : १।९२ पृ. २८३ (=).

§ शेषं गोरागतम्।

+ मवि., ममु., नन्द. गोरागतम्।

(१) **मस्मृ.** १०।११; **पमा.** १।५१३; **मुक्ता.** ७१ उत्तरार्धं व्यवहितम्; **बाल.** १।९४ पृ. २८३.

शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः।। क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च। शूद्रादायोगवं वैश्या जनयामास वै सुतम्।।' (यास्मृ. १।९३-९४) इति याज्ञवल्क्यवचनमेवानयोर्व्याख्यानमिति विरम्यते। अङ्गेन स्वभोगाय नीयते इत्यङ्गना। मच.

(४) वैश्याद्राजकन्यायां मागधः वैतालिकः भवति। भाच.

**'शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्।**
**वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः।।**

(१) अत्रापि यथासंख्यमेव। वैश्यराजन्येति निर्देशे जातिपरेऽपि सामर्थ्यात्स्त्रीलिङ्गप्रतिपत्तिः 'मृगक्षीरम्, कुक्कुटाण्डः' इति यथा। वृत्तानुरोधात्स्त्रीप्रत्ययो न कृतः। § मेधा.

(२) शूद्रात् द्विजातिवर्णानां मैथुनाख्यसंकरे सति वैश्यायामायोगवः, क्षत्रियायां क्षत्ता, ब्राह्मण्यां चाण्डालो मनुष्याधमो जायते। ¶ गोरा.

(३) वैश्यराजन्यविप्रासु तज्जातीयस्त्रीषु क्रमादायोगवादयस्त्रयः। एषां च प्रतिलोमपरिणयनासंभवादपरिणीतास्वेव जन्म। मवि.

एकान्तराजाताः प्रतिलोमा
एकान्तराजातानुलोम-
सदृशाः

**'एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ।**
**क्षत्तृवैदेहकौ तद्वत्प्रातिलोम्येऽपि जन्मनि।।**

(१) एकान्तरे वर्णे ब्राह्मणात् वैश्यायामम्बष्ठः, क्षत्रियाच्छूद्रायामुग्रः एतावानुलोम्येन, एवमेकान्तरे प्रातिलोम्येन शूद्रात्क्षत्रियायां क्षत्ता, वैश्याद्ब्राह्मण्यां वैदेहः, तौ तुल्यौ भवना(? स्पर्शना)दिक्रियासु, न तु यजनादिषु। चण्डाल एकः प्रतिलोमोऽस्पृश्यः। य(? त)था च दिवाकीर्तिश्लोके तत्स्पर्शे एव स्नानम्, नान्येषु प्रतिलोमेषु। सूतमागधायोगवानामनन्तरजातानां चण्डाल(?)वद्दण्डापूपिकायां सिद्धः स्पर्शादिसंबन्धः। मेधा.

(२) एकव्यवहिते वर्णे वर्णानुक्रमेण ब्राह्मणाद्वैश्यायां क्षत्रियाच्छूद्रायामुत्पन्नावम्बष्ठोग्रौ यथा स्पर्शाद्यर्हौ तद्वत् प्रातिलोम्येन जननेऽपि क्षत्रियवैदेहकौ स्पर्शादियोग्यौ विज्ञेयौ। एकान्तरोत्पन्नयोश्च स्पर्शाद्यभ्यनुज्ञानादर्थादनन्तरोत्पन्नानामपि सूतमागधायोगवानां स्पर्शादियोग्यत्वं सिद्धं भवति। एवं चण्डाल एवैकोऽत्र पर्युदास्यते। ‡ गोरा.

(३) क्षत्तृवैदेहयोः स्पृश्यत्वं सदृष्टान्तमाह – एकान्तर इति। स्वस्वजातितो भिन्नैका जातिरन्तरा व्यवधानं यस्य जन्मनस्तस्मिन्नेकान्तरे जन्मनि यथाऽनुलोमजावम्बष्ठोग्रौ स्पृश्यावेवं शूद्रात्क्षत्रियाजः क्षत्ता वैश्याद्ब्राह्मणीजो वैदेहश्च तुल्यौ स्पृश्यत्वादिना स्मृतावित्यन्वयः। वर्णसंकराणां मातृजातीयसंस्कारं प्रापयितुं तेषामनुवादः। मच.

अनन्तरस्त्रीजानुलोमानां
मातृवर्णनाम्ना
व्यवहारः

**'पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्।**
**ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते।।**

(१) यथा ब्राह्मणात्क्षत्रियायां वैश्यायां च एवं क्षत्रियादुभयोस्ताननन्तरनाम्ना प्रचक्षते। अनन्तराऽनुलोमा जातिः समाना तेषाम्। मातृजातीया इत्यर्थः। अनन्तरग्रहणमविवक्षितम्। अत एवाऽऽह – मातृदोषादिति। पितृजात्युत्कर्षेण नो दुष्यन्ते। अतश्च सत्यपि वर्णसंकरत्वे वचनान्मातृजात्याः स्मृताः। संस्कारास्तेषु कर्तव्या इत्युक्तं भवति। न ह्येतद्वचनमन्तरेण क्षत्रियादिसंस्कारास्तेषु लभ्यन्ते, अश्वतरवज्जात्यन्तरत्वात्। वचनेन तु मातृजातावुक्तायामदोषः। † मेधा.

(२) ये द्विजातीनामनन्तरैकान्तरद्व्यन्तरजातिस्त्रीषूत्पन्नाः क्रमेणोक्ताः पुत्रास्तान् हीनमातृकत्वान्मातृजातिव्यपदेशा-

---

§ नन्द. मेधागतम्।

¶ ममु., मच., भाच. गोरागतम्।

(१) **मस्मृ.** १०।१२; **पमा.** १।५१३; **मुक्ता.** ७१ वः क्षत्ता (वक्षत्ता); **बाल.** १।९४ पृ. २८३.

(२) **मस्मृ.** १०।१३; **बाल.** १।९४ पृ. २८३.

‡ मवि., ममु., नन्द., भाच. गोरागतम्।

† वीमि., बाल. मेधागतम्।

(१) **मस्मृ.** १०।१४; **मेधा.** १०।२७, ४१ (ताननन्तरनाम्नः) एतावदेव; **ममु.** १०।४१ (तृतीयचरणमात्रम्); **शूशि.** ६; **वीमि.** १।९१ : १।९५ प्रथमचरणमात्रम्; **बाल.** १।९१ पृ. २८२.

नाचक्षते इतीदमेवं मातापितृव्यतिरिक्तजातित्वाद्धर्मास्ते(?) मातृजातिगतसंस्कारादिधर्मप्राप्त्यर्थं वचनम्। मातृदोषादिति हेतूपादानादनन्तरग्रहणमेकान्तर(द्व्यन्तर)प्रदर्शनार्थम्।
‡ गोरा.

(३) अनन्तरस्त्रीजाः विप्रस्य क्षत्रियायां क्षत्रस्य वैश्यायां वैश्यस्य शूद्रायाम्। अनन्तरनाम्नः क्षत्रियादिनाम्नः प्रचक्षते, मातृदोषात्। क्षत्रियादिमातृकत्वान्मातृजातिसाधारणो धर्मस्तेषामित्यर्थः। अनन्तरनाम्न इति नामग्रहणान्नाममात्रं न जातिरित्यर्थः। मवि.

(४) पुनः स्पृश्यत्वार्थमनुलोमजात्यन्तरत्रयमाह – पुत्रा इति। द्विजन्मनामनन्तरासु स्त्रीषु उग्राम्बष्ठायोगवजातीयासु विप्राद्यैः पुत्रा जायन्ते ते अनन्तरनाम्नः आवृतादिनामकजातियोगिनः। तत्संज्ञा मातृजातिसंस्कारार्थेति मेधातिथिः। मच.

आवृताभीरधिग्वणोत्पत्तिः

**[1]ब्राह्मणादुग्रकन्यायामावृतो नाम जायते।
आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वणः।।**

(१) क्षत्रियेण शूद्रायामुत्पन्ना उग्री, तस्यां ब्राह्मणादावृतो नाम्ना जायते। ब्राह्मणेन वैश्यायामुत्पन्नाऽम्बष्ठी, (तस्यां) ब्राह्मणादाभीराख्यो जायते। अनयोश्च 'हस्त्यादिस्वाधिका आवृतानां गोजाविरक्षा आभीराणाम्' इत्यर्थे औशनसे वृत्तिरुक्ता। शूद्रेण वैश्यायामुत्पन्नाऽऽयोगवी, तस्यां ब्राह्मणादाभीराख्यो (? धिग्वणाख्यो) जायते। गोरा.

(२) अनुलोमविलोमसंकरस्त्रीषूत्तमवर्णजनितमेतत्कुलम्। मवि.

(३) क्षत्रियेण शूद्रायामुत्पन्नोग्रा, उग्रा चासौ कन्या चेत्युग्रकन्या, तस्यां ब्राह्मणादावृतनामा जायते। ब्राह्मणेन वैश्यायामुत्पन्नाऽम्बष्ठा, तस्यां ब्राह्मणादाभीराख्यो जायते। शूद्रेण वैश्यायामुत्पन्ना आयोगवी, तस्यां ब्राह्मणाद्धिग्वणो जायते। + ममु.

(४) अथान्यान्संकरजातानाह – ब्राह्मणादुग्रकन्यायामिति। नन्द.

(५) आवृतः हस्तिपः। * भाच.

वर्णप्रतिलोमसंकरजाः षट्

अपसदाः

**[1]आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम्।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः।।**

(१) आयोगवः क्षत्ता चण्डालो मनुष्याधम इत्येते त्रयो व्युत्क्रमेण वैश्याक्षत्रियाब्राह्मणीषु शूद्रादपसदाः पुत्रकार्यादपगता जायन्ते। गोरा.

(२) आयोगव इति। प्रागुक्तमातृकर्मणाऽधमः सर्वसंकरजेभ्योऽप्यधमः। शूद्राज्जाता एत इत्यर्थः। (आयोगव्यां यो जातः कैवर्ताख्यः सोऽत्र निषादजत्वान्निषादः, एवं वैश्यादित्यत्रापि?)। मवि.

(३) पुत्रकार्याक्षमत्वप्रतिपादनार्थमुक्तानामप्येषां पुनर्वचनम्। एवमुत्तरश्लोके उक्तानामपि। $ ममु.

(४) पुत्रकार्यविच्छेदाय षण्णां प्राप्तमपसदत्वमनुवदति – आयोगवश्चेति द्वाभ्याम्। अपत्यकार्यात्सीदन्तीत्यपसदाः। मच.

**[2]वैश्यान्मागधवैदेहौ क्षत्रियात्सूत एव तु।
प्रतीपमेते जायन्तेऽपरेऽप्यपसदास्त्रयः।।**

(१) एतेऽप्यपरे त्रयोऽपसदाः अत्यन्तापकृष्टा इत्यर्थः। मवि.

(२) (वैश्यात्) क्षत्रियाब्राह्मण्योर्मागधवैदेहौ, क्षत्रियाद्ब्राह्मण्यां सूत इत्येवं प्रातिलोम्येनापरेऽपि त्रयः पुत्रकार्यादपसदा जायन्ते। # ममु.

(३) प्रतीपं प्रातिकूल्यम्। 'संकरो नरकायैव' इत्युक्तेः प्रातिलोम्यमेवात्र हेतुः। मच.

---

‡ ममु. गोरागतम्।
+ वीमि. ममुगतम्।
(१) **मस्मृ.** १०।१५; **स्मृकौ.** ९ पू., १०-११ उत्त.; **शूक.** २६२ पू., २७६ उत्त.; **वीमि.** १।९५ पृ. १६७; **बाल.** १।९५ पृ. २९४.

* शेषं ममुवत्।
$ शेषं गोरागतम्।
# भाच. ममुगतम्।
(१) **मस्मृ.** १०।१६; **पमा.** १।५१३ पसदा (पशदा); **मुक्ता.** ७१; **बाल.** १।९४ पृ. २८३.
(२) **मस्मृ.** १०।१७; **पमा.** १।५१३ तु (च) ऽपरे (परे) पसदा (पशदा); **मुक्ता.** ७१ मेते (मेव) ऽपरे (परे); **बाल.** १।९४ पृ. २८३ ऽपरे (परे).

पुल्कसकुक्कुटकश्वपाकवेण-
जात्युत्पत्तिः

**[1]जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः।**
**शूद्राज्जातो निषाद्यां तु स वै कुक्कुटकः स्मृतः।।**

(१) अयं निषादोऽस्मिञ्ल्लोके न शूद्रायां ब्राह्मणाज्जातो यः प्रागुक्तः। किं तर्हि? यः प्रतिलोमो वक्ष्यमाणः, प्रतिलोमाधिकारात्। प्रतिलोमा हि पुल्कसा जातिः प्रसिद्धा। एवं शूद्रान्निषाद्यां कुक्कुटकः। मेधा.

(२) पुरुष(? पुल्कस)जातेः प्रतिलोमत्वान्न निषादोऽत्र पारशवः, पितुः (? अपि तु) प्रतिलोमे हि यथा (? मः। तथा हि) व्यासः – 'उग्रामागधसंयोगाज्जातः कुन्तल-काभिधः। स नापित इति प्रोक्तः क्षुरकर्मविधानकृत्।। क्षत्रियाज्जायते (?) वैश्यान्मागधो वाक्यजीवनः। शूद्रा-न्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात्।।' इति। एवं चैतस्मान्निषादाच्छूद्रायां जातो जातितः पुल्कसः साक्षा-द्भवति। निषाद्यां पुनरेवंविधायामेव यः शूद्राज्जातः स कुक्कुटकनामा स्मृतः। तस्य च 'कुक्कुटकानां प्रहरणकरण-चक्रतोमरभिण्डिपालप्रासासिपरशुलगुडलोहजालिका-संधानानि कर्माणि' इति शङ्खेन वृत्तिरुक्ता।

+ गोरा.

(३) निषादात् ब्राह्मणशूद्रापुत्रात्। एवं निषाद्यामपि। मवि.

**[2]क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते।**
**वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते।।**

(१) अनुलोमाः स्त्रियः, प्रतिलोमाः पुमांसः, तयोः संभवे श्वपाकवेणौ प्रतिलोमजातीयौ। मेधा.

(२) क्षत्तुः शूद्राक्षत्रियजातायामुत्पन्नः श्वपाक इत्युच्यते। वैदेहकेन वैश्यतो ब्राह्मणीजातेनाम्बष्ठ्यां ब्राह्मणेन वैश्याजातायामुत्पन्नो वेन इति कथ्यते। * गोरा.

(३) क्षत्तृजात इति पितृदोषात्। मवि.

(४) वेणः बुरुडः। $ मच.

व्रात्यलक्षणम्, व्रात्यजनिता
जातयः

‡ **[1]द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान्।**
**तान्सावित्रीपरिभ्रष्टान्व्रात्यानिति विनिर्दिशेत्।।**
**[2]व्रात्यात्तु जायते विप्रात्पापात्मा भूर्जकण्टकः।**
**आवन्त्यवाटधानौ च पुष्पधः शैख एव च।।**

(१) सवर्णास्विति पूर्वश्लोकादनुवर्तते, इह स्त्रीजातेर-नुपादानादवश्यंभावाच्च तदपेक्षायाः। स्मृत्यन्तरे वैश्यायां ब्राह्मणाज्जातो भृज्जकण्टकः स्मर्यते। अतो विशिनष्टि - पापात्मेति। स ह्यनुलोमत्वान्न पापात्मा। अयं चासंस्कृतात्मनो व्रात्याज्जातोऽनधिकारित्वाद्युक्तं यन्निन्द्यते। न (? एते) च पर्यायशब्दा देशभेदेन प्रसिद्धप्रयोगभेदाः। पूर्वैस्तु व्याख्यातम् – तत्पुत्रपौत्राणामेता आख्याः। भृज्जकण्टको (? कात्) ब्राह्मण्यां जातः आवन्त्यः। आवन्त्याम् (? न्त्यात्) तस्यामेव वाटधानः। वाटधानात्पुष्पशेखरः। एव-मुत्तरेष्वपि। † मेधा.

(२) उक्तलक्षणाद्व्रात्यात्सवर्णास्वित्य(? ति) पुनरावृत्तेः ब्राह्मण्यां पापवतोत्पन्नत्वात् दुष्टशरीरः भृज्जकण्टकाख्यो जायते। तथा वाटधानपुष्पधशैखाख्या जायन्त इति एकस्यैव देशभेदप्रसिद्ध्यैतानि नामानि एवमुत्तरत्रापि। गौतमेन ब्राह्मणात् वैश्यायां जातो भृज्जकण्टक उक्तः। स

---

+ ममु., भाच. गोरागतम्।

(१) **मस्मृ.** १०।१८; **मवि.** १०।४८ प्रथमचरणमात्रम्; **ममु.** ४।७९ पू.; **स्मृकौ.** ११ पुल्क (पुष्क) कुक्कु (कुर्कु); **मुक्ता.** ७१ पू.; **शूक.** २६६; **वीमि.** १।९५ पृ. १६७ पुल्क (पुक्क); **बाल.** १।९५ पृ. ३०२ पुल्क (पुक्क) पू. (=) : १।९५ पृ. २९९ उत्त.

(२) **मस्मृ.** १०।१९; **गोरा.** वेण (वेन); **स्मृकौ.** ११ थोग्रायां (थोग्र्यां तु) कीर्त्यते (चोच्यते) वेण (वेन); **मुक्ता.** ७१ प्रथमचरणे (उग्रात्तु जातः क्षत्तायां) पू.; **शूक.** २६६ स्मृकौवत्; **वीमि.** १।९५ पृ. १६८; **बाल.** १।९५ पृ. २९७ पू. : १।९५ पृ. २९६ वेण (वेन) उत्त.

* ममु. गोरागतम्।

$ भाच. मचवत्।

‡ व्याख्यासंग्रहः संस्कारकाण्डे (पृ. ३०६३) द्रष्टव्यः।

† स्मृकौ., बाल. मेधागतम्।

(१) **मस्मृ.** १०।२०; **स्मृकौ.** १० निति वि (नित्यभि); **शूशि.** १७; **वीमि.** १।९५ पृ. १६८; **बाल.** १।९४ पृ. २९० अन्ये स्थलादिनिर्देशाः संस्कारकाण्डे (पृ. ३०६३) द्रष्टव्याः।

(२) **मस्मृ.** १०।२१; **मेधा.** भूर्ज (भृज्ज) पुष्पधः शैख (पुष्प-शेखरः); **स्मृकौ.** १२ मेधावत्; **शूक.** २७१ मेधावत्; **वीमि.** १।९५ पृ. १६८; **बाल.** १।९४ पृ. २९० मेधावत्.

चानुलोमत्वादपाप्मेति (? पापात्मेति) विशेषणम्। एषां च वृत्तयोऽथौशनस उक्ताः – 'अभिचारमूलकर्म, द्विषतां मन्त्रौषधी(भि)श्चाभिमुखीकरणं नाशनं वा, भृज्जकण्टकानामावन्त्यवाटधानैः स्वसैन्यानां विजित्वा चर्या व्रात्यजैरन्यैः परराष्ट्राणां कोशमन्त्रवृत्तज्ञानं मित्रामित्रता च ज्ञेया' इति। # गोरा.

(३) व्रात्याद्विप्रात् व्रात्यायामेव विप्रायाम्, सवर्णास्वित्यनुवृत्तेः तत्र भूर्जकण्टकः सवर्णयोरपत्यम्। भूर्जकण्टकस्त्रियां विप्राद्व्रात्यादावन्त्यः, आवन्त्यां वाटधान इत्यादि। पूर्ववज्जातिस्त्रीषु व्रात्येन विप्रेण जनिता विप्रजाः। ऋणा-(? करणा)दिष्वपि(?) व्रात्यक्षत्रियादिजनितेषु, सुधन्वाचार्यादिषु च व्रात्यवैश्यजनितेषूह्यम् – आद्यस्य तज्जातीयस्त्रियामुत्तरेषां तु पूर्वपूर्वजातिस्त्रियां जन्मेति। पापात्मेति विशेषणं निन्दार्थम्। मवि.

(४) अत्र मेधातिथेर्मतम् – सवर्णास्विति पूर्वश्लोकादनुवर्तते। कुतः? इह स्त्रीजातेरनुपादानादवश्यंभावाच्च तदपेक्षायाः। वैश्यायां ब्राह्मणाज्जातो यो भृज्जकण्टकसंज्ञकः स नेह विवक्षितः। अयं तु भृज्जकण्टको विप्रव्रात्याद्विप्रायामुत्पन्नः। एवमावन्त्यः वाटधानः पुष्पशेषर इत्येकस्यैव भृज्जकण्टकस्य नामान्तराणीति। देशभेदाच्चेमाः संज्ञा भवन्तीति च। एवमुत्तरत्रापि। अन्यैरेवं व्याख्यातम् – भृज्जकण्टकात् ब्राह्मण्यां जातः आवन्त्यः। आवन्त्याद्ब्राह्मण्यामेव वाटधानः। वाटधानाद्ब्राह्मण्यामेव पुष्पशेषर इति। एवमुत्तरत्रापि। † स्मृकौ. १२

(५) ते तु व्रात्यास्त्रयः, तज्जातानाह – व्रात्यात्त्विति त्रिभिः। तत्र तथाविधब्राह्मणजाः पञ्च भूर्जकण्टकादयः। झल्लादयः सप्त क्षत्रियजाः। पञ्च वैश्यजाः। पञ्चेति देशसंज्ञाभिरेते प्रसिद्धा इति मेधातिथिः। देशभेदेनै(कै ?)-कस्य नामानीति कुल्लूकः, अन्यथैकजात्या वर्णद्वयानुपपत्तेः। मच.

(६) विप्रादिति विशेषणं व्रात्यत्वेऽप्यस्य विप्रत्वमूलच्छेदो नास्तीति सूचयितुम्। असंस्कृतपितृजातः पापतर इत्यभिप्रायेणोक्तम् – पापात्मेति। पञ्चैते सजातिषूढासु स्त्रीषु जाता अपि संस्कारविप्रकर्षादुत्तरोत्तरमपकृष्टा वृत्तितो देशतो वा भिन्नसंज्ञा विज्ञेयाः। षष्ठादीनामवचनं तु जात्यन्तरत्वेनाप्रसिद्धेः। नन्द.

(७) ब्राह्मणक्षत्रियवैश्यजातीनां व्रात्यजातिर्भवति, उपनयनाभावात्। व्रात्याद्विप्राद्विप्रकन्यायां भूर्जकण्टको नाम जातिर्जायते। भूर्जकण्टकः स्मृतः कण्टको ज्ञेय आवन्त्यः (?)। भाच.

**[1]झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च।**
**नटश्च करणश्चैव खसो द्रविड एव च।।**

(१) एताभिः संज्ञाभिः प्रसिद्धा एवंजातीया वेदितव्याः। मेधा.

(२) क्षत्रियाद्व्रात्यायां सवर्णायां झल्लमल्लनिच्छिविनटकरणखसद्रविडाख्या जायन्ते। इत्येषां च वृत्तयोऽथौशनस उक्ताः – 'चारवृत्तित्वान्नटकरणानामुदकाहरणं प्रपावेश्मदानं च खसद्रविडानां शिष्टानां 'व्रात्यजैरन्यैः' इत्यादिपूर्वश्लोके दर्शितम्। गोरा.

(३) और्णादयः (?) सप्त राजन्याद्वैश्यात्। मवि.

(४) क्षत्रियाद्व्रात्यात्सवर्णायां झल्लमल्लनिच्छिविनटकरणखसद्रविडाख्या जायन्ते। एतान्यप्येकस्यैव नामानि। § ममु.

(५) असौ प्रतिलोमजोऽन्यः करणः, नानुलोमजः। स्मृकौ. १२

(६) 'नटः' इत्यत्र 'सत्यः' इति क्वचित्पाठः। वीमि. १।९५ पृ. १६८

**+ [2]वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च।**
**कारुषश्च विजन्मा च मैत्रः सात्वत एव च।।**

---

# ममु., वीमि. गोरागतम्।

† स्मृकौव्याख्यानं अशुद्धस्य मेधातिथेस्तात्पर्यबोधार्थं संगृहीतम्। शूक. स्मृकौगतम्।

§ भाच. ममुगतम्।

+ मेधातिथिव्याख्यानं पूर्वश्लोके द्रष्टव्यम्।

(१) **मस्मृ.** १०।२२; **स्मृकौ.** १२ न्निच्छि (ल्लिच्छि) द्रविड (द्रमिड); **शूक.** २७१ न्निच्छिवि (द्विच्छिबि) द्रविड (द्रमिड); **वीमि.** १।९५ पृ. १६८; **बाल.** १।९४ पृ. २९१ झल्लो (सल्लो) न्निच्छि (ल्लिच्छि) द्रविड (द्रुमिड) 'निच्छिविः' इत्यत्र 'लिविचिः' इति पाठान्तरं दर्शितम्.

(२) **मस्मृ.** १०।२३; **स्मृकौ.** १२; **शूक.** २७१ कारु (कारू); **वीमि.** १।९५ पृ. १६८ कारु (चारू); **बाल.** १।९४ पृ. २९१.

(१) वैश्यात्पुनर्व्रात्यात्सुधन्वाचार्यकारुषविजन्ममैत्र-सात्वताख्या जायन्ते। वृत्तयश्चैषामप्यौशनस उक्ताः – आचार्यसात्वतैः देवपूजनम्। शिष्टानां 'व्रात्यजैरन्यैः' इत्यादि दर्शनम् (? र्शितम्)। $ गोरा.

(२) एकस्य चैतान्यपि नामानि। † ममु.

(३) एते च पूर्वोक्ता भृज्जकण्टकादयो ब्राह्मणादि-वर्णव्यपदेशरहिता मूर्धावसिक्तादिजातिरहिताश्च। अत एव शुद्धजातिवर्णबहिर्भूतत्वेन बाह्यव्यपदेशभाजः। ते च बाह्याः परस्परसंकरेण स्वतोऽपि निकृष्टान् प्रसुवते।

स्मृकौ. १२-१३

वर्णसंकरनिमित्तानि

**'व्यभिचारेण वर्णानामवेद्यावेदनेन च।**
**स्वकर्मणां च त्यागेन जायन्ते वर्णसंकराः।।**

(१) व्यभिचारः परस्त्रीगमनम्। तत्समानजातीयासु परकीयास्वनुलोमप्रतिलोमासूढास्वनूढासु च (स्वयम्?)। अवेद्यावेदनम् अविवाह्याविवाहः। अविवाह्याः स्वसृनप्त्राद-यस्तदयोन्यः। स्वकर्मणां त्यागः उपनयनवेदग्रहणादीनाम्। क्षात्रवृत्त्यादयोऽपि पुत्रपौत्रान्वयिन एवमुक्ता इति केचित्। ¶ मेधा.

(२) ब्राह्मणादीनां वर्णानामितरेतरस्त्रीगमने (न) स्वगोत्रा-द्यविवाह्याविवाहेनोपनयनाख्यस्वकर्मत्यागेन वर्णसंकरो नाम इत्युत्पद्यते। अतो युक्तम् (इति ?) अस्मिन्प्रकरणे व्रात्य-जातानामभिधानम्। § गोरा.

(३) व्यभिचारेण सवर्णायामेव परभार्यायां व्यभिचारेण कुण्डगोलकपौनर्भवाः। असवर्णायां च यथा ब्राह्मण्यां क्षत्रियस्य व्यभिचारात्सूत इति। अवेद्यावेदनेनाविवाह्यानाम-सवर्णानां सवर्णानामपि सगोत्रादीनां विवाहे मूर्धावसिक्त-चाण्डालाद्याः। स्वकर्मणामुपनयनव्रतानां त्यागात् व्रात्यजाः। वर्णसंकराः चातुर्वर्ण्यबाह्याः। मवि.

(४) प्रकारान्तरेणापि वर्णसंकरो भवतीति संक्षिप्याऽऽह – व्यभिचारेणेति। 'विहाय विप्रा स्वपतिमाभिमुख्येन कामुकम्। चरतीति स्वतन्त्रा या सा स्मृता व्यभिचारिणी।।' इति व्यभिचारेण वर्णानामन्योन्यस्त्रीगमनेनेति दृष्टान्तार्थः। व्यतिषङ्गेणेति मेधातिथिः। नियुक्तातिरिक्तपरस्त्रीगमने-नेत्यर्थः। अवेद्याः सगोत्राः सवर्णा वा, तासां विवाहेन। स्वकर्मणां संध्यादीनां त्यागेन, स्वकालाप्राप्तोपनयनैर्व्रात्यानां संकरत्वस्योक्तत्वात्। मच.

(५) सङ्गः म्लेच्छादिनीचसंगतिः।

शूक. २७५

(६) वर्णानां व्यभिचारः असवर्णमैथुनम्। अवेद्या अवि-वाह्या सपिण्डादिः। स्वकर्मणाम् उपनयनादीनाम्। चकारेण शुद्धवर्णताविरोधिनिमित्तान्तरपरिग्रहः। तेन सवर्णयोरपि दाम्पत्यानापन्नयोर्मैथुनसंभवाः कुण्डगोलकानीनसहोढपौन-र्भवादयः संकीर्णेष्वेव प्रविशन्ति। वीमि. १।९०

(७) यदीदं (? दिदं) संस्काराभावे जात्यन्तरत्वमुक्तं तदनुपपन्नमित्याशङ्क्य दृष्टान्तेन स्थापयति – व्यभिचारेण वर्णानामिति। अवेद्याः अविवाह्याः पुनर्भ्वादयः, तासां वेदनेन विवाहेन संकरो मातापित्रोरविद्या(? द्यमान)जातिप्राप्तिः। 'व्यभिचारेण वर्णानाम्' इति प्रसिद्धव्यभिचारो दृष्टान्तार्थः। नन्द.

(८) व्यभिचारः अन्योन्यस्त्रीगमनम्। अविवाह्यस-गोत्रादिविवाहः अवेद्यावेदनम्। स्वकर्मणाम् उपनयनादीनां त्यागः। एवं च व्रात्योत्पन्नत्वमेव व्रात्योत्पन्नस्य संकरत्व-बीजम्, न व्यभिचार इति बोध्यमिति तद्व्याख्यातारः।

बाल. १।९४ पृ. २९०

वर्णप्रतिलोमेभ्यः सजातीयासु
वर्णस्त्रीषु च सजाती-
योत्पत्तिः

**'संकीर्णयोनयो ये तु प्रतिलोमानुलोमजाः।**
**अन्योन्यव्यतिषक्ताश्च तान्प्रवक्ष्याम्यशेषतः।।**

---

$ मवि., भाच. गोरागतम्।
† शेषं गोरावत्।
¶ स्मृकौ., बौवि. मेधागतम्।
§ ममु., भाच. गोरागतम्।

(१) **मस्मृ.** १०।२४; **मेधा.** १०।५ निर्देशमात्रम् : १०।४३ (च०) तृतीयचरणमात्रम्; **स्मृकौ.** १०; **शूशि.** २९ न्ते वर्णसंकराः (ते वर्णसंकरः); **बौवि.** १।१६।१४ शूशिवत्; **शूक.** २७५ उत्तरार्धे (सङ्गेन धर्मत्यागेन जायते वर्णसंकरः।।); **वीमि.** १।९० पृ. १६० शूशिवत्; **बाल.** १।९४ पृ. २९०, १।९५ पृ. ३०५ शूशिवत्.

(१) **मस्मृ.** १०।२५; **बाल.** १।९४ पृ. २८९ षक्ता (षिक्ता).

(१) व्यतिषङ्गः संबन्धः। इतरेतरमनुलोमानामनुलोमैः प्रतिलोमैश्चैवं प्रतिलोमानामन्यैः प्रतिलोमैरनुलोमैश्च। वक्ष्यमाणसंज्ञायै वचनम्। ◘ मेधा.

(२) ये मिश्रयोनयः प्रतिलोमाभ्यः स्त्रीभ्यः प्रतिलोमैरनुलोमैश्च जायन्ते अनुलोमाभ्यश्चानुलोमैः प्रतिलोमैश्च जायन्ते। एवं परस्परसंबद्धांस्तानशेषेण प्रवक्ष्यामि। ¶ गोरा.

(३) य उक्ताः प्रतिलोमानुलोमजास्तेऽपि यदा अन्योन्यं संकीर्णैरेव व्यवतिष्ठन्ते व्यभिचरन्ति। व्यतिषङ्गजत्वात् व्यतिषक्ताः व्रात्याः। तत्र ये जायन्ते तान्वक्ष्यामीत्यर्थः। मवि.

(४) पुनश्च सूतादीनां चण्डालातिरिक्तपञ्चानामनुलोमजत्वाद्यर्थमाह – संकीर्णेति त्रिभिः। अनुलोमजा इति दृष्टान्तार्थम्। अन्योन्यव्यतिषक्ताः अन्योऽन्यं परस्त्रीपुंभ्यः कामतो व्यतिषक्तेभ्यो जाताः। मच.

(५) एवं संकीर्णपितृमातृकाः प्रायशः प्रतिलोमानुलोमा उक्ताः। इदानीं संकीर्णपितृमातृकान् प्रतिलोमजानुलोमजान् वक्ष्यामीत्याह – संकीर्णयोनय इति। संकीर्णयोनयः संकीर्णेभ्यो जाताः। अन्योन्यव्यतिषक्ताः प्रतिलोमानुलोमजैः संबद्धाः। † नन्द.

**'सूतो वैदेहकश्चैव चण्डालश्च नराधमः।**
**मागधः क्षत्तृजातिश्च तथाऽऽयोगव एव च।।**

(१) उक्तलक्षणा एते प्रतिलोमा उत्तरार्थं पुनरुपन्यस्यन्ते। ‡ मेधा.

(२) प्रतिलोमजादपि नराधमः शूद्रस्य ब्राह्मणीगमने महापातकित्वात्तस्या अपि तथात्वात्। चण्डालग्रहणं 'निवीतं मनुष्याणाम्' इतिवद्व्यतिरेकमुखेन स्तुत्यर्थः(? र्थम्)। मच.

(३) तत्र प्रतिलोमजेभ्यः प्रसूतान्वक्तुं प्रतिलोमजानुक्तांस्तावदनुक्रामति – सूतो वैदेहकश्चैवेति। सूतः विप्रायां क्षत्रियाज्जातः। वैदेहकः तस्यामेव वैश्यात्। चण्डालः तस्यामेव शूद्रात्। मागधः क्षत्रियायां वैश्यात्। क्षत्ता जातिस्तस्यामेव शूद्रात्। आयोगवः वैश्यायां शूद्राज्जातः। इति पूर्वमुक्तं हीत्यर्थः। नन्द.

**'एते षट् सदृशान्वर्णाञ्जनयन्ति स्वयोनिषु।**
**मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु।।**

(१) एते सूतादयः प्रतिलोमाः स्वयोनिषु सदृशान् जनयन्ति, तज्जातीयानित्यर्थः। तद्यथा – सूतः सूतायां सूतमेव जनयति। एवं चण्डालः चण्डाल्याम्। ये च मातृजात्याः प्रसूयन्ते अनुलोमा मातृजातीया ये पूर्वमुक्ताः 'ताननन्तरनाम्नः' (१०।१४) इति, तेऽपि स्वयोनिषु सदृशानेव जनयन्ति। यथाऽम्बष्ठोऽम्बष्ठायाम्। तथा वैश्यायामात्मनो हीना वैश्याञ्जनयन्ति, मातृजातित्वस्योक्तत्वात्। अन्ये पुनः पठन्ति 'मातृजातौ प्रसूयन्ते' अर्थश्चायम् – स्वयोनिषु अम्बष्ठादौ मातृजातौ च वैश्यायां सदृशानेव जनयन्ति। यद्यपि शुद्धवैश्येभ्य उत्कृष्टा अम्बष्ठादयस्तथापि साम्यमुच्यते वैश्यधर्म उभयेषामधिकारात्।

अनुलोमग्रहणं मातृजातिपदसामर्थ्याल्लभ्यते सत्यपि प्रकृतिप्रतिलोमप्रत्यवमर्शकत्वे एत इति। प्रवरासु च योनिषु प्रतिलोमा गच्छन्तो जनयन्ति हीनतरमित्येवं ज्ञेयं वक्ष्यमाणपर्यालोचनया। न हि आयोगवादिभिः स्वजातीयासु जनिता आयोगवादिव्यपदेशं लभन्ते। सदृशग्रहणं तु प्रातिलोम्यसामान्येन हीनतरत्वं चावान्तरविशेषमनपेक्ष्य प्रयुक्तम्। तेनायमत्र वाक्यार्थः – प्रतिलोमेभ्यः समानजातीयासूत्कृष्टजातीयासु च प्रतिलोमा एव भवन्ति। मेधा.

(२) एते षट् सूतादयः प्रतिलोमाः सजातीयासु स्त्रीषु सूतान् (? सदृशान्) सूतायां सूतमेव जनयतीत्येवं समानजातीयान् वर्णप्रभवत्वाद्वर्णान् जनयन्ति। अनुलोमाः पुनर्मातृजातीयायां स्वजातीयायां च सदृशं जनयन्ति। तद्यथा – अम्बष्ठो वैश्यायामम्बष्ठ्यां वाऽम्बष्ठमेव जनयति। 'संकीर्णयोनयो ये तु प्रतिलोमानुलोमजाः' इत्यनुलोमानामपि प्रस्तुतत्वात्प्रतिलोमेभ्यश्च मातृजातीयायां सदृशजनना-

---

◘ बाल. मेधागतम्।
¶ ममु. गोरागतम्।
† भाच. नन्दगतम्।
‡ गोरा., मवि., ममु. मेधागतम्।
(१) **मस्मृ.** १०।२६; **बाल.** १।९४ पृ. २८९.

(१) **मस्मृ.** १०।२७; **मेधा.** जात्यां (जात्याः), 'जातौ' इत्यपि पाठः; **ममु.** १०।३१ निर्देशमात्रम्; **बाल.** १।९४ पृ. २८९ जात्यां (जात्या).

संभवात् द्वितीयार्धश्लोकोऽनुलोमविषयतया व्याख्यायते। गोरा.

(३) स्वयोनिषु सूतादिजातीयासु स्त्रीषु सदृशान् स्वसदृशधर्माणः(? र्मणः)। तथा मातृजात्यां सूतादिमातृसमानजातीयायां ब्राह्मण्यादिरूपायाम्। तथा मातृजातिषु प्रवरासु उत्तमासु, यथा क्षत्रियापुत्रो मागधो ब्राह्मण्यामिति। स्वजातीयस्वमातृजातितदुत्कृष्टजातियोगात् त्रिविधो व्यभिचारः। मवि.

(४) एते पूर्वोक्ताः षट् प्रतिलोमजाः स्वयोनिषु सुतोत्पत्तिं कुर्वन्ति। यथा शूद्रेण वैश्यायां जात आयोगवः आयोगव्यामेव। मातृजातौ वैश्यायाम्। प्रवरासु क्षत्रियाब्राह्मणीयोनिषु। चकारादपकृष्टायामपि शूद्रजातौ। सर्वत्र सदृशान्वर्णान् जनयन्ति। सदृशत्वं च न पित्रपेक्षया, किंतु मातृजात्यादिषु चातुर्वर्ण्यस्त्रीष्वेव पितृतोऽधिकगर्हितपुत्रोत्पत्तेर्वक्ष्यमाणत्वात्, तत्सदृशान्पितृतोऽधिकगर्हितान् स्वजातावपि जनयन्तीत्येतावदेवाप्राप्तत्वादनेन विधीयते। किंतु जघन्यवर्णेनोत्तमवर्णस्त्रीषु जनितत्वात् क्रियादुष्टा आयोगवाद्याः प्रतिलोमजाः क्रियादुष्टाभ्यां मातापितृभ्यां तुल्याभ्यामपि जनिते आयोगवादिपुत्रे ब्रह्महन्त्रनन्तरजनितो ब्रह्महन्तृमातापितृजनितवदधिक दुष्ट एव न्याय्यः। शुद्धब्राह्मणादिजातीयेन शुद्धब्राह्मण्यादिसजातीयायां जनितः पितृतुल्य एवोचितः, न तु क्रियादुष्टोभयजनितोऽपि। ममु.

(५) किंच, एते षट् सूतादयः स्वयोनिषु, ब्राह्मणीक्षत्रियावैश्यासु सदृशान् सजातीयान्। एतदेव निगमव्याजेन हेतूंप्रदर्शयन्नाह – मातृजात्यामिति। प्रवरासु स्वयोनिषु तत्तन्मातृजात्यवच्छिन्नासु प्रसूयन्ते यतः अत एव 'प्रतिलोमजास्तु धर्महीनाः' (गौध. ४।१७) इति गौतमवचनम्। अत एव 'मातृवद्वर्णसंकरः' इत्यपि संगच्छते। यथा शूद्रात् वैश्यायामायोगवः एवमायोगव्यामेव मातृजातौ वैश्यायां प्रवरायामायोगवः यं सुतं जनयेत्स सुतो वैश्यजात्युक्तसंस्कारार्हः। एवं शूद्रात्क्षत्रियाजः क्षत्ता, क्षत्रियायां क्षत्रजातौ यं जनयेत् स क्षत्रियसंस्कारार्हः। वैश्यात्क्षत्रियाजो मागधः, स च क्षत्रियायां यं जनयेत्सोऽपि क्षत्रियसंस्कारार्हः। एवं सूतवैदेहयोरपि। प्रवरास्विति विशेषणाच्चण्डालस्य न संस्कार इति मेधातिथिः। पितृतोऽधिकगर्हितान्स्वजातावपि जनयन्तीत्येतावन्मात्रं विवक्षितमिति कुल्लूकः। मच.

(६) ततः किमित्यपेक्षायामाह – एते षडिति। एते सूतादयः षट् सदृशान्सजातीयान् वर्णान् योनिषु सूतीवैदेहिकीचण्डालीप्रभृतिषु जनयन्ति। वर्णशब्दो मनुष्यावान्तरजातिमात्रवचनः। मातृजात्यां स्वमातृजातिसदृशानेव जनयन्ति। सूतवैदेहकचण्डालानां मातृजातिर्ब्राह्मणजातिः, मागधक्षत्रोर्मातृजातिः क्षत्रियजातिः, आयोगवस्य मातृजातिः वैश्यजातिः, तासु जातिषु सदृशानेव जनयन्तीत्यर्थः। किंचित्प्रवरासु च योनिष्वात्मनः प्रवरासु मातृजातिव्यतिरिक्तासु चातुर्वर्ण्यस्त्रीषु च सदृशानेव प्रसूयन्ते जनयन्ति। अनेन श्लोकेनैतदुक्तं भवति – सूतः सूत्यां सूतमेव जनयति नान्यम्, एवं मातृजात्यां च ब्राह्मण्यां सूतमेव, तदितरासु क्षत्रियवैश्यस्त्रीषु च सूतमेव, एवं वैदेहकादयोऽपीति। नन्द.

(७) तथा ये च मातुर्जात्या उपलक्षिताः स्वयोनिषु प्रसूयन्ते तेऽपि सदृशान्स्वसमानधर्माण(? र्मण) एव जनयन्ति। जातेः प्रसवं प्रति करणत्वादुपलक्षणे एव तृतीया। यथा मूर्धावसिक्तान्मूर्धावसिक्तायां विन्नायां जातः मूर्धावसिक्तधर्मा एव। एवं माहिष्यादिष्वपि। ये च प्रवरासु स्वस्मादुत्तमासु योनिषु प्रसूयन्ते तेऽपि स्वसदृशधर्माण एवेत्यर्थः। यदा तु मूर्धावसिक्तादप्यविन्नायां मूर्धावसिक्तायां व्यभिचारादुत्पद्यते तदाऽपध्वंसजत्वाच्छूद्रधर्मतैव। तथाऽन्येषामपि प्रतिलोमजानां द्रष्टव्यम्। बाल. १।९४ पृ. २८९

**'यथा त्रयाणां वर्णानां द्वयोरात्माऽस्य जायते।**
**आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमात्॥**

(१) अस्य ब्राह्मणस्य त्रयाणां वर्णानामात्मा जायते। द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्द्विजत्वं जायते, तथा स्वयोनौ। एवं त्रयाणां वर्णानां ब्राह्मणो द्विजान् जनयति। एवं बाह्येष्वपि प्रातिलोम्येन वैश्यक्षत्रियाभ्यां क्षत्रियब्राह्मणयोरात्मा द्विजत्वं भवति। सति च द्विजत्वे उपनयनं कर्तव्यम्। वक्ष्यति च 'एते षट् द्विजधर्माणः' इति। एतावांस्तु विशेषः। अनुलोमाज्जाता मातृजात्याः मातृजातीयाः। स्तुतिमात्रमिदं वक्ष्यामः। **मेधा.**

(१) **मस्मृ.** १०।२८.

(२) यथा त्रयाणां वर्णानां क्षत्रियवैश्यशूद्राणां मध्यात् द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्गमने ब्राह्मणस्याऽऽनुलोम्याद्द्विज उत्पद्यते, स्वजातीयायां च द्विजो जायते। एवं च बाह्येष्वपि वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योर्जाते व्युत्क्रमो भवतीति। शूद्रजातिप्रतिलोमापेक्षया द्विजात्युत्पन्नप्रतिलोमस्तुतिः। यत्तु द्विजत्वप्रतिपादकमेतदेषां वचनमुपनयनार्थमित्याहुस्तदसत्, 'प्रतिलोमास्तु धर्महीनाः' (गौध. ४।१७) इति गौतमीये प्रतिलोमानां संस्कारनिषेधात्। ¤ गोरा.

(३) आनन्तर्यादनन्तरवर्णे आत्मजातिसदृशजातिः मूर्धावसिक्तादिः। स्वयोन्यां स्ववर्णे चाऽऽत्मजातीय एव। तथा बाह्येष्वपि। तथाहि – मूर्धावसिक्तान्मूर्धावसिक्तायां तज्जातीय एव। तत एव त्वावन्त्यामात्मसदृश इत्यादिः। पारशव्यां तु ततोऽपि हीनजातिः। एवमनुलोमजानपेक्ष्य प्रतिलोमजानामतिहीनत्वात्तेषां प्रतिलोमजानां स्वजातीयायामनन्तरायां सदृशव्यवहितायां हीनतरमपत्यमिति। मवि.

(४) एतदुक्तं भवति – यथा वैदेहकः स्वस्यां ब्राह्मण्यां च वैदेहकम्, आयोगवः स्वस्यां क्षत्रियायां चाऽऽयोगवम्, क्षत्ता स्वस्यां चण्डाल्यां च क्षत्तारं जनयतीति अनेन सिद्धवदनूदितेन दृष्टान्तेन ज्ञाप्यते। § नन्द.

**[1]ते चापि बाह्यान्सुबहूंस्ततोऽप्यधिकदूषितान्।**
**परस्परस्य दारेषु जनयन्ति विगर्हितान्।।**

(१) ते चाप्यायोगवादयः षट् बाह्यान् सुबहून् परस्परदारेषु जनयन्ति। तद्यथा – आयोगवः क्षत्तृजायायां क्षत्ताऽऽयोगव्यां परस्परमात्मापेक्षया गर्हितान् जनयन्ति। तद्यथा – आयोगवः क्षत्तृजायायामात्मनो बाह्यतरं जनयति, ततोऽपि बाह्यतरं चण्डाल्याम्। एवं सर्वत्र। मेधा.

(२) तेऽप्यायोगवादयः षट् परस्परजातीयासु भार्यासु प्रतिलोमान् सुष्ठु बहूनात्मनोऽधिकदुष्टान्निन्दितान् जनयन्ति। तद्यथा – आयोगवः क्षत्र्याम् आत्मनो हीनतरं जनयति, क्षत्ताऽऽयोगव्यामात्मनो हीनतरमुत्पादयतीति। एवमन्येष्वपि प्रतिलोमेषु द्रष्टव्यम्। * गोरा.

(३) अनन्तरासु जातानां पितृवर्णत्वमपि पक्षान्तरमिति – ते चापि बाह्यानिति। ते सूतादिभ्यः प्रसूता अपि ततोऽभ्यधिकदूषितान् स्वेभ्यो हीनतमान् अत एव विगर्हितान् सुबहून् परस्परस्य दारेषु जनयन्ति, स्वयोनिषु स्वानेव जनयन्ति परस्परस्य दारेष्विव (?)। नन्द.

**[1]यथैव शूद्रो ब्राह्मण्यां बाह्यं जन्तुं प्रसूयते।**
**तथा बाह्यतरं बाह्यश्चातुर्वर्ण्ये प्रसूयते।।**

(१) एवं परस्परगमने स्त्रीप्रतिलोमानां पूर्वेण बाह्यतरोत्पत्तिर्वर्णिता। इदानीं चातुर्वर्ण्ये कथ्यते। सूयतिर्जनिनाऽत्यन्तसमानार्थोऽत्र प्रकरणे प्रयुक्तः। प्रसूयते जनयतीत्यर्थः। तदुत्तरश्लोकेन निर्दिश्यते। मेधा.

(२) यथा शूद्रो ब्राह्मण्यां निकृष्टं चण्डालाख्यं प्राणिनं जनयति, एवं बाह्याच्चण्डालादेर्ब्राह्मणादिषु चतुर्ष्वपि वर्णेषु चण्डालादिभ्यो निकृष्टतरं जायते (? जनयति)। × गोरा.

(३) तत्र दृष्टान्तमाह – यथेति। बाह्यं बहिरेव वर्तमानं जन्तुं जन्ममरणमात्रशालिनम्। बाह्यः चाण्डालादिः, धर्मादावनधिकारित्वात्, ततोऽपि भिन्नं संकरान्तरम्। चातुर्वर्ण्ये चातुर्वर्ण्यस्त्रीषु। मच.

(४) बाह्यः सूतादिः। * नन्द.

(५) बाह्यः आयोगवः। * भाच.

**[2]प्रतिकूलं वर्तमाना बाह्या बाह्यतरान्पुनः।**
**हीना हीनान्प्रसूयन्ते वर्णान्पञ्चदशैव तु।।**

(१) एकैकस्य तु वर्णस्य संकीर्णयोनयो भवन्ति। कस्यचिदनुलोमाः, कस्यचित्प्रतिलोमाः, कस्यचिदनुलोमप्रतिलोमाः। ब्राह्मणस्यानुलोमाः, शूद्रस्य प्रतिलोमा एव, क्षत्रियवैश्ययोरनुलोमाः प्रतिलोमाः। क्षत्रियस्य द्वावनुलोमौ,

---

¤ ममु., मच., भाच. गोरागतम्।

§ शेषं गोरागतम्।

* ममु., मच., भाच. गोरागतम्।

(१) **मस्मृ.** १०।२९; **मेधा.** १०।३१ प्रथमचरणमात्रम्.

× मवि., ममु. गोरागतम्।

* शेषं गोरागतम्।

(१) **मस्मृ.** १०।३०; **गोरा.** बाह्यश्चा (बाह्याच्चा); **मवि.** गोरावत्; **ममु.** १०।३१ उत्त.; **स्मृकौ.** १३ बाह्यतरं (बाह्यान्तरं); **मुक्ता:** ७१ बाह्यं जन्तुं (बाह्यजं तु) तृतीयचरणे (यथा बाह्यन्तरो बाह्यं); **शूक.** २७२ स्मृकौवत्.

(२) **मस्मृ.** १०।३१; **स्मृकौ.** १३ बाह्यत (बाह्यान्त); **शूक.** २७२ वर्णान् (वर्णाः) शेषं स्मृकौवत्.

एकः प्रतिलोमः। वैश्यस्यैकोऽनुलोमः, द्वौ प्रतिलोमौ। एवमेते द्वादशानुलोमप्रतिलोमाः। एतेषामेकैकस्य चतुर्षु गच्छतश्चत्वारो भेदा भवन्ति। ते च केचिद्धीनाः केचिदहीनाः। बाह्यतरास्तु सर्व एव। बाह्यतरत्वं मातापितृजातेर्विप्रकर्षः, कर्मभ्यो हीनत्वात्। तदेतदुदाहरणैः स्फुटीक्रियते। प्रतिलोमांस्तावद्गृहीत्वा वक्ष्यामः।

आयोगवो वैश्यायां शूद्राज्जातः शूद्रायां वैश्यायां क्षत्रियायां ब्राह्मण्यां चतुरो जनयति। सोऽयमात्मना सह पञ्चधाऽऽयोगवः। एवं क्षत्तृचण्डालावपि। एवं शूद्रास्त्रयः (? द्रात्रयः) पञ्चकाः पञ्चदशधा भवन्ति।

एवं वैश्यप्रभवौ द्वौ प्रतिलोमौ, क्षत्रियायां मागधो ब्राह्मण्यां वैदेहकः। शूद्रायामनुलोमः। तत्र यः शूद्रायां जातः स यदा चातुर्वर्ण्यं जनयति तदैष एव प्रकारः। स यदा शूद्रां गच्छति तदा हीनतरो वर्णो जायते तदपेक्षया। एवं वैश्यां गच्छन्हीनतरं जनयति। एवं क्षत्रियायां ब्राह्मण्यां च केवलशूद्राज्जाता उत्कृष्टाः। एवमित्यपेक्षावशाद्धीनांश्चाहीनांश्च। एवं क्षत्रिये ब्राह्मणे च द्रष्टव्यम्। ब्राह्मणस्य त्वयं विशेषः, अनुलोमा एव तस्य भवन्ति।

एवं चतुर्वर्णानां प्रत्येकं पञ्चदशधा भेदाः षष्टिः संपद्यन्ते, मुख्याश्चत्वारो वर्णाः सा चतुःषष्टिर्भवति। परस्परसंपर्कात्तेषामन्येऽनन्तभेदा भवन्ति। तदुक्तम् – 'ते चापि बाह्यान्सुबहून्' (१०।२९) इति। प्रतिकूलं शास्त्रव्यतिक्रमेण। वर्तमानाः मिथुनीभवन्तः। हीनाहीनानित्येकं पदम्। अथवा हीनाः सन्तोऽहीनान्(? न्तो हीनान्) प्रसूयन्ते जनयन्तीत्यर्थः। वर्णान् पञ्चदशैवेति 'नास्ति तु पञ्चमः' (मस्मृ. १०।४) इति पञ्चमस्य वर्णा(? र्णत्वा)भावात्पञ्चदशसु वर्णत्वमुपचाराद्द्रष्टव्यम्। × मेधा.

(२) एतदेव प्रपञ्चयति – प्रतिकूलमिति। चातुर्वर्ण्यबाह्याश्चण्डालक्षत्त्रायोगवाः शूद्रप्रभवास्त्रयश्चातुर्वर्ण्ये गच्छन्तः आत्मनो हीनतरान् परस्परापेक्षयोत्कृष्टा(? याऽपकृष्टोत्कृष्टा)नात्मना सह पञ्चदशवर्णप्रभवत्वाद्वर्णान्संपादयन्ति। तद्यथा – चण्डालः शूद्रायामात्मनो हीनतरं वैश्याक्षत्रियाब्राह्मणीजातेभ्य उत्कृष्टं जनयति। ततोऽप्यपसदं क्षत्रियायां ब्राह्मणीजातादुत्कृष्टं जनयति। ततोऽपि हीनं ब्राह्मण्यां जनयति। एवं क्षत्त्रायोगवावपि चातुर्वर्ण्ये च चतुरश्चतुरो जनयेते इत्येते शूद्रप्रसवेभ्यः चण्डालक्षत्त्रायोगवेभ्यः द्वादश प्रभेदा उत्पद्यन्ते। आत्मना च चाण्डालक्षत्त्रायोगवास्त्रय इत्येवं शूद्रप्रभवाः पञ्चदश। क्षत्रियब्राह्मणप्रभवाश्च पञ्चदश (पञ्चदश) भवन्ति। एवं षष्टिः चातुर्वर्ण्येन सह चतुःषष्टिः स्पष्टप्रभेदा भवन्ति। ते तु परस्परस्य गमनेनानन्तान् जनयन्ति। ‡ गोरा.

(३) एतदेव विस्तारयति – प्रतिकूलमिति। अत्र मेधातिथिगोविन्दराजयोर्व्याख्यानम् – चातुर्वर्ण्यबाह्याश्चण्डालक्षत्त्रायोगवाः शूद्रप्रभवास्त्रयश्चातुर्वर्ण्ये गच्छन्तः आत्मनो हीनतरान् परस्परापेक्षयाऽपकृष्टोत्कृष्टवर्णप्रभवत्वात्पञ्चदश वर्णान्संपादयन्ति। तद्यथा – चण्डालः शूद्रायामात्मनो हीनतरं वैश्याक्षत्रियाब्राह्मणीजातेभ्य उत्कृष्टं जनयति। एवं वैश्यायां ततोऽप्यपसदम्, क्षत्रियायां ब्राह्मणीजातादुत्कृष्टं (? क्षत्रियाब्राह्मणीजाताभ्यामुत्कृष्टं) जनयति। ततोऽपसदं क्षत्रियायां ब्राह्मणीजातादुत्कृष्टम्, ततोऽपि हीनं ब्राह्मण्यां जनयति। एवं क्षत्त्रायोगवावपि चातुर्वर्ण्ये चतुरश्चतुरो जनयतः। इत्येते शूद्रप्रभवचण्डालक्षत्त्रायोगवेभ्यश्चातुर्वर्ण्ये द्वादशप्रभेदा उत्पद्यन्ते, आत्मना च चण्डालक्षत्त्रायोगवास्त्रय इत्येवं शूद्रप्रभवाः पञ्चदश उत्पद्यन्ते। एवं वैश्यक्षत्रियब्राह्मणप्रभवाः प्रत्येकं पञ्चदश संभवन्ति। एवं षष्टिश्चातुर्वर्ण्येन सह चतुःषष्टिप्रभेदा भवन्ति। ते तु परस्परगमनेन नानावर्णाञ्जनयन्तीति। नैतन्मनोहरम्, पूर्वश्लोके षण्णां प्रतिलोमजानां प्रकृतत्वात्तद्विस्तारकथनत्वाच्चास्य। अत्रापि श्लोके 'प्रतिकूलं वर्तमानाः' इत्युपादानात्प्रतिलोमजमात्रविषयोऽयं श्लोकः, नानुलोमजविषयः। तथा च वैश्यक्षत्रियब्राह्मणप्रभवाश्च प्रत्येकं पञ्चदश संभवन्ति, एवं षष्टिरिति न संगच्छते। न च संभवमात्रेणैवेयं षष्टिरुक्ता, न दुष्टतया, शूद्रप्रभवायोगवक्षत्तृचण्डाला एव चातुर्वर्ण्यसंतानोपेताः पञ्चदश गर्हिता इति वाच्यम्, यतो वैश्यक्षत्रियाभ्यामपि प्रतिलोमत उत्पादितानां त्रयाणां हीनत्वात्तैरपि चातुर्वर्ण्ये जनितानां गर्हिततत्वस्य संभवात्, 'तथा बाह्यतरं

× मवि., स्मृकौ., शूक. मेधागतम्।

‡ मच., नन्द., भाच. गोरागतम्।

बाह्यश्चातुर्वर्ण्ये प्रसूयते' (मस्मृ. १०।३०)इति मनुनैवानन्तरं स्फुटमुक्तत्वात्, युवाभ्यामपि तथैव व्याख्याततत्वात्। चातुर्वर्ण्येन सह चतुःषष्टिरिति सर्वथैवाप्रकृतम्। न हि संकीर्णप्रकरणे शुद्धचातुर्वर्ण्यगणनोचिता। किंच, 'वर्णान्पञ्चदश प्रसूयन्ते' इति श्रूयमाण(त्वात्)द्वादशजनानु (? जननमु)क्त्वा ते चाऽऽत्मना चण्डालक्षत्त्रायोगवास्त्रय इत्येवं शूद्रप्रभवाः पञ्चदशेति न युक्तम्। अपि चाऽऽत्मना सह पञ्चदश संपादयन्तीति न संगच्छते, असंपाद्यत्वादात्मनः। पञ्चदश संपद्यन्त इति च व्याख्यानेऽध्याहार एव दोषः। तस्मादेवं व्याख्यायते – प्रतिकूलं वर्तमानाः प्रतिलोमजाः बाह्याः, द्विजप्रतिलोमजेभ्यो निकृष्टत्वात्, शूद्रप्रभवायोगवक्षत्तृचण्डालास्त्रयः पूर्वश्लोकादनुवर्तमाने चातुर्वर्ण्ये स्वजातौ (च) 'एते षट् सदृशान्' (१०।२७) इत्यत्र सजात्युत्पन्नस्य पितृतो गर्हिततत्वाभिधानादात्मापेक्षया बाह्यान्तरान्प्रत्येकं पञ्चदश पुत्राञ्जनयन्ति। तद्यथा – आयोगवश्चातुर्वर्ण्यस्त्रीषु चाऽऽयोगव्याम् (च) आत्मनो निकृष्टान् पञ्च पुत्राञ्जनयति। एवं क्षत्तृचाण्डालावपि प्रत्येकं पञ्च पुत्राञ्जनयतः। इत्थं बाह्यास्त्रयः पञ्चदश पुत्राञ्जनयन्ति। तथाऽनुलोमजेभ्यो हीना वैश्यक्षत्रियप्रभवा मागधवैदेहसूता आत्मापेक्षया हीनान्पूर्ववच्चातुर्वर्ण्यस्त्रीषु सजातौ (च) प्रत्येकं पञ्च पुत्राञ्जनयन्तो हीना अपि त्रयः पञ्चदशैव पुत्राञ्जनयन्ति। एवं त्रिंशदेते भवन्ति। अथवा बाह्यशब्दो हीनशब्दश्च षडेव प्रतिलोमजानाह। अत्र बाह्याश्चण्डालक्षत्त्रायोगववैदेहमागधसूताः षट् यथोत्तरमुत्कर्षात् प्रातिलोम्येन स्त्रीषु वर्तमाना बाह्येतरान्पञ्चदशैव पुत्राञ्जनयन्ति। तद्यथा – चण्डालाः(? लः) क्षत्रियादिषु पञ्चसु स्त्रीषु, क्षत्ता आयोगव्यादिषु चतसृषु, आयोगवो वैदेह्यादितिसृषु, वैदेहो मागधीसूत्योः, मागधः सूत्याम्, सूतस्तु(? तस्य तु) प्रतिलोमाभावात् प्रातिलोम्येन पञ्चदशैव पुत्राञ्जनयन्ति। पुनरिति निर्देशाद्धीनाः सूतादयश्चण्डालान्ताः षट् यथोत्तरमपकर्षादानुलोम्येनापि प्रतिलोमोक्तरीत्या स्वापेक्षया हीनान्पञ्चदशैव पुत्राञ्जनयन्ति। एवं त्रिंशदेते भवन्ति। ममु.

सैरन्ध्रमैत्रेयकमार्गवजातयः

तासां वृत्तयश्च

**'प्रसाधनोपचारज्ञमदासं दास्यजीवनम्।**
**सैरन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे।।**

(१) प्रसाधनं मण्डनम्। उपचारः अनुवृत्तिः। केशरचना, कुङ्कुमचन्दनादिनाऽनुलेपनविच्छित्तिः, पाणिपादविमर्दनम्, प्राप्तिलोभात्कर्मकारिक्षिप्रकारिकार्याणामवसरमि(? र इ)त्यादिविधिज्ञ एवमुच्यते। अदासं दास्यजीवनम्। वत्सरभृत्या षण्मासभृत्या च कंचन सेवते। अथवैतद्विधिज्ञतया सर्वोपस्थापको भवति जीवनाय। मता (?) वागुरावृत्तिम्। द्वितीयोऽयं वृत्त्युपायः। वागुरा अरण्यपशुहिंसनम्। तच्चाऽऽर्याणां दैवपित्र्य(? त्र्या)र्थं क्षुधार्थं च, न तु व्याधवत्पशून्हत्वा मांसविक्रयेण जीवनम्। राजनियोगा-द्बहुप्राणिवधो जीविकार्थः। सैरन्ध्रनामानं सूते उत्पादयति। दस्युर्नाम वक्ष्यमाणः। अयोगवे जातिविशेषे। सामर्थ्यात्स्त्रीत्वलाभः। × मेधा.

(२) केशरचनादिप्रसाधनाङ्गसंवाहनाद्युपचारज्ञम्, अदासम्, अशूद्रत्वात्, प्रसाधनादिदासकर्मजीवनं पाशबन्धनेन च मृगादिवधजीवनं सैरन्ध्राख्यं 'मुखबाहूरुपज्जानाम्' (मस्मृ. १०।४५) इति वक्ष्यमाणो दस्युरायोगव्यां शूद्रा(द्वैश्या)जातायां जनयति। एतस्य(? तच्च) मृगादिहिंसनमार्याणां देवपित्रौषधार्थमात्मपुत्रदारात्ययप्राप्तः स्यात्(?)। एवमन्येषामपि प्रायो वधजीविनां वेदितव्यम्। गोरा.

(३) अन्यानपि कांश्चिदुपलक्षणतया संकीर्णजान्वृत्त्या सह दर्शयति – प्रसाधनेति। प्रसाधनम् अलंकरणम्। उपचारः गात्रसंवाहनादिः। अदासं दास्यानर्हम्, शूद्रस्यैव तदर्हत्वात्। दास्यजीवनं दासयोग्येन कर्मणा जीवनम्। सैरन्ध्रनामानम्। वागुरावृत्तिं पाशबन्धनवृत्तिम्। दस्युः प्रागुक्तपञ्चदशविधसंकरजात्यन्तरः। अयोगवे अयोगवस्त्रियाम्। जातिवाचित्वात् (अ)स्त्रीलिङ्गनिर्देशः। मवि.

---

× ममु., स्मृकौ., मच., भाच. मेधागतम्।

(१) **मस्मृ.** १०।३२; **ममु.** सैरन्ध्रं (सैरिन्ध्रं); **स्मृकौ.** १५; **शूक.** २७५ दास्यजीव (दासजीवि) रयोगवे (मयोगवी); **वीमि.** १।९५ पृ. १६८, १६९ दास्य (दास) सैरन्ध्रं (सैरिन्ध्रं) श्लोकार्धौ भिन्नभिन्नस्थले व्यत्यासेन च पठितौ; **बाल.** १।९५ पृ. २९६.

(४) दस्युः प्रतिलोमः सूतादिः। अयोगवे आयोगवस्त्रियाम्। वृत्तभङ्गपरिहारार्थं ह्रस्वः। दस्यूनां बहुत्वात्सैरन्ध्राणामपि बहुत्वं वृत्तिभेदोपन्यासेन सूचितम्।

† नन्द.

**[1]मैत्रेयकं तु वैदेहो माधूकं संप्रसूयते।**
**नॄन्प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये।।**

(१) मैत्रेयकं नाम्ना वर्णमायोगव्यां संप्रसूयते जनयति वैदेहनामा ब्राह्मण्यां वैश्याज्जातो यः। पाठान्तरं मैरेयकमिति। माधूकम्। उपमापदमेतत् मधूककुसुमतुल्यम्, मधुरभाषित्वात्। अथवा मधुकायतीति 'अन्येष्वपि दृश्यते' (पासू. ३।२।१०१) इति डः। 'अन्येषामपि०'(पासू. ६।३।१३७) इति दीर्घः। स्वार्थिकेन चाऽऽदिवृद्धिः। तस्य वृत्तिः – नॄन् मनुष्यान् प्रशंसन्ति(? ति) अजस्रं सर्वदा, बन्दीति यः कथ्यते। अरुणोदये प्रबोधकाले घण्टां ताडयति आहन्ति राज्ञामीश्वराणां चान्येषां प्रबोधाय। आयोगव्यामेवानुजनयति, प्रकृतत्वात्। ‡ मेधा.

(२) वैदेहः वैश्याद्ब्राह्मणीजातः प्रकृतायामायोगव्यां मैत्रेयकाख्यं मधुरभाषिणं जनयति यः प्रातर्घण्टामाताड्य राजप्रभृतीननवरतवृद्ध्यर्थं स्तौति। गोरा.

(३) अयं प्रतिलोमः 'टोकणकार' इति महाराष्ट्रभाषया प्रसिद्धः। बाल. १।९५ पृ. २९७

**[2]निषादो मार्गवं सूते दासं नौकर्मजीविनम्।**
**कैवर्तमिति यं प्राहुरार्यावर्तनिवासिनः।।**

(१) प्रतिलोमप्रकरणात् न यः शूद्रायां ब्राह्मणाज्जातो निषादः पूर्वमुक्तः स इह गृह्यते, अपि तु दस्युवत् प्रतिलोम एव। मार्गवं नाम प्रतिलोमं सूते आयोगव्यामेव। यस्येमे अपरे नामनी दासः कैवर्त इति। आर्यावर्तः प्रसिद्धः। तस्य वृत्तिः – नौकर्मणा नौवाहनेन जीवति। * मेधा.

(२) प्रतिलोमाधिकारात् प्रतिलोमो निषादो व्यासोक्तो य उक्तः स प्रकृतायामायोगव्यां मागधं दासापरनामानं नौव्यापारजीविनं जनयति, यमार्यावर्तनिवासिनः कैवर्तशब्देन ब्रुवते। गोरा.

(३) मार्गवं मृगयुरिव हिंसाकर्मिणम्। नौकर्मजीविनं नावो यत्कर्म मत्स्यघातनोत्तारणादि तेन जीवितुं शीलम् (अस्य)। मच.

(४) मार्गवं मार्गवनामानं क्वचिद्दाशनामानम्।

नन्द.

**[1]मृतवस्त्रभृत्स्वनार्यासु गर्हितान्नाशनासु च।**
**भवन्त्यायोगवीष्वेते जातिहीनाः पृथक् त्रयः।।**

(१) येऽनन्तरम् उपदिष्टास्त्रयो मार्गवपर्यन्तास्तेषां मातृजातिर्नोक्ता, तत्प्रतिपादनार्थोऽयं श्लोकः। आयोगवीषु स्त्रीष्वेते जायन्ते। तासां च विशेषणम् – मृतवस्त्रभृत्सु शववासांसि परिदधतीष्वित्यर्थः। अनार्याः अस्पृश्याः। गर्हितम् उच्छिष्टं मांसादि चान्नमश्नन्ति। ¶ मेधा.

(२) एते सैरन्ध्रमैत्रेयकमागधहीनजातीयाः त्रयः शववस्त्रपरिधानासु क्रूरासूच्छिष्टादिभक्ष्यास्वायोगवीषु पितृभेदादृभिन्नजातयो भवन्ति। § गोरा.

(३) अनार्यासु केनचित्कर्मदोषेण निन्द्यासु। जातिहीना मातृकर्मदोषेण निकृष्टतमाः। एते उत्तरश्लोके वक्ष्यमाणाः।

नन्द.

(४) मृतवत्सा(? स्त्रा)सु, अनार्यासु अविवाहितासु, गर्हितमन्नमश्नन्त्योऽनार्याः तासु। योगी – † 'कदर्यवृद्ध(? बद्ध)चौराणां क्लीबरङ्गावतारिणाम्।' (यास्मृ. १।१६१)। एते गर्हिताः, एतासु आयोगवीषु एते जातिहीनाः पृथक् त्रयो भवन्ति। भाच.

---

† शेषं मेधागतम्।

‡ मवि., ममु., मच., स्मृकौ., नन्द., भाच. मेधागतम्।

(१) **मस्मृ.** १०।३३; **मेधा.** 'मैत्रेयकम्' इत्यत्र 'मैरेयकम्' इत्यपि पाठान्तरं निर्दिशति; **स्मृकौ.** १६; **शूक.** २७६ ताडो (वादो); **वीमि.** १।९५ पृ. १६८; **बाल.** १।९५ पृ. २९७.

(२) **मस्मृ.** १०।३४; **गोरा.** मार्गवं (मागधं); **स्मृकौ.** १७ मार्गवं (मार्ग्गरं); **शूक.** २७६ मार्गवं (मार्गरं) दासं (दाशं); **वीमि.** १।९५ पृ. १६८ विनम् (वनम्); **बाल.** १।९५ पृ. ३०१ दासं (दाशं).

* मवि., ममु., स्मृकौ., भाच. मेधागतम्।

¶ मवि. मेधागतम्।

§ ममु., स्मृकौ., मच. गोरागतम्।

† अस्य 'एषामन्नं न भोक्तव्यम्' (यास्मृ. १।१६५) इत्यत्रान्वयात्प्रकृतसंगतिः।

(१) **मस्मृ.** १०।३५; **स्मृकौ.** १६-१७ त्रयः (क्रियाः) उत्त.; **शूक.** २७६ तृतीयचरणमात्रम्; **वीमि.** १।९५ पृ. १६८ त्स्वनार्यासु (त्सु नारीषु) पू. : १।९५ पृ. १६९ उत्त.; **बाल.** १।९५ पृ. ३०१.

कारावरः, अन्ध्रः, मेदः, पाण्डुसोपाकः, आहिण्डिकः, सोपाकः, अन्त्यावसायी इत्येतासां जातीनामुत्पत्तयो वृत्तयश्च, सर्वासां संकरजातीनां कर्मतोऽभिज्ञानम्

[1]**कारावरो निषादात्तु चर्मकारः प्रसूयते।**
**वैदेहिकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ।।**

(१) उत्तरत्र 'वैदेह्यामेव जायन्ते (? ते)' (१०।३७) इत्येवकारकरणाल्लिङ्गादिहापि वैदेह्यां निषादात्कारावरो नाम जायत इति संबन्धप्रतीतिः। वैदेहिकाद्द्वावन्ध्रमेदौ। कस्यां स्त्रियाम्? कारावरीनिषाद्योः, तयोरत्र संनिधानात्। वैदेह्यां च वैदेहाद्भिन्नवर्णासंभवादेवं व्याख्यायते। स्त्रीभेदेन चैकस्माद्वर्णादेते द्वे जाती। बहिर्ग्रामं प्रतिश्रयः निवासः ययोः। # मेधा.

(२) निषादादायोगव्यां कारावरनामा चर्मकारः तद्वृत्तिः प्रसूयते प्रजायते। वैदेहकादायोगव्यामेव। तत्र अन्ध्रोऽनन्यपूर्वायाम्, अन्यपूर्वायां तु मेदः। मवि.

(३) वैदेह्यां कारावरादिषण्णामेव जन्मेति वक्तुं पितृभेदमाह – कारेति द्वाभ्याम्। निषादवैदेहकचण्डालनिषादाश्चत्वारः पितरः, कारावरान्ध्रमेदाद्याः षट् पुत्राः। वैदेह्यामिति जात्येकवचनं चेति पौल्कस्यां शूद्रानिषादजातायामत्र नवजातेरन्यद्विशेषणम्। सैरन्ध्रकः, मैत्रेयकः, मार्गवः, कारावरः, अन्ध्रमेदौ देशभेदेनैक एव, पाण्डुसोपाकः, आहितुण्डिकः, सोपाकः, अन्त्यावसायी चैते नव, सूतादयः षट् तेन पञ्चदश बाह्या बाह्यतरा इति व्याख्यायन्ते, पञ्चदशशब्दस्वरसात्। कुल्लूकस्तु सूतादयः षडेते सैरन्ध्रादयो नवेति पञ्चदश। तथा आयोगवक्षत्तृचण्डालाश्चातुर्वर्ण्यस्त्रीषु स्वयोन्यां च पञ्च पञ्च जनयन्तीति एवं (पञ्च)दश पूर्वोक्ताश्च पञ्चदशेति त्रिंशत्। मेधातिथिस्तु विप्रस्याऽऽनुलोम्येन त्रयः, प्रतिलोमाभावात्। क्षत्रियस्य ब्राह्मण्यामेकः प्रतिलोमः, अनुलोमद्वयं वैश्याशूद्रयोः। वैश्यस्य च विप्राक्षत्रिययोः प्रतिलोमद्वयमनुलोम एकः शूद्रायाम्। शूद्रस्य तु प्रतिलोमत्रयं विप्राक्षत्रियवैश्याङ्गनासु, अनुलोमाभावादिति द्वादश संकरास्तेषां मातृजातीयप्रतिलोमानुलोमासु पञ्चसु प्रत्येकं पञ्च पञ्चेति षष्टिरेवं संकरा इति। मच.

[1]**चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान्।**
**आहिण्डिको निषादेन वैदेह्यामेव जायते।।**

(१) चाण्डालात् वैदेह्यां पाण्डुसोपाको नाम वर्णो जायते। तस्य वृत्तिस्त्वक्सारव्यवहारवान्। त्वक्सारः वेणुः, तद्व्यवहारेण वंशक्रयविक्रयादिना कटादिकरणेन वा जीवति। निषादात्तस्यामेवाऽऽहिण्डिकस्तस्य वृत्तिरेषैव, अन्वेष्या वा। † मेधा.

(२) चाण्डालाद्वैदेह्यां पाण्डुसोपाकाख्यो वेणुव्यवहारजीवी जायते। न च (?) निषादेन वैदेह्यामेवाऽऽहिण्डिकाख्यो जायते। अस्य 'बन्धनस्थानेषु बाह्यसंरक्षणमाहिण्डिकानाम्' इत्यौशनसे वृत्तिरुक्ता। ‡ गोरा.

(३) चाण्डालादायोगव्यामेव पाण्डुसोपाकः पाण्डुसोपाकनामा। त्वक्सारव्यवहारः वेणुविदलैर्जीवनम्। अत्र चान्ध्रमेदयोर्मातापितृजात्यभेदादेकत्वं विवक्षता पूर्वं त्रय इत्युक्तम्। निषादेन विप्रशूद्राजेन। मवि.

(४) समानमातापितृकत्वेऽपि कारावराहिण्डिकयोर्वृत्तिभेदसंश्रवणाद्व्यपदेशभेदः। * ममु.

(५) आहिण्डकः। अयं वेणुजीवी श्वपाकः। शूक. २९१

(६) 'आहिण्डिको निषाद्यां तु वैदेहेनैव जायते' इति पाठः। त्वक्सारः वेणुवेत्रादिः, तस्य व्यवहारः विक्रयकर्म। नन्द.

---

# गोरा., ममु., नन्द., भाच. मेधागतम्। स्मृकौ. मेधातिथेरनुवादः।

(१) **मस्मृ.** १०।३६; **मवि.** हिका (हका); **स्मृकौ.** १७ कारः (कारं) हिका (हका); **शूक.** २६६ वरो (वरं) शेषं स्मृकौवत्; **वीमि.** १।९५ दात्तु (दाच्च) हिका (हका); **भाच.** हिका (हका); **बाल.** १।९५ पृ. ३०१ वरो (वारी) कारः (कारं).

† स्मृकौ. मेधागतम्।

‡ भाच. गोरागतम्।

* शेषं गोरागतम्।

(१) **मस्मृ.** १०।३७; **स्मृकौ.** १८ आहिण्डि (आहिण्ड); **शूक.** २९१ सोपाक (शोपाक) शेषं स्मृकौवत्; **वीमि.** १।९५ पृ. १६९; **बाल.** १।९५ पृ. ३०३ पूर्वोत्तरार्धे व्यत्यासपठिते व्यवहिते च.

**[1]चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान्।**
**पुल्कस्यां जायते पापः सदा सज्जनगर्हितः।।**

(१) व्यसनं दुःखम्, तस्य मूलं मारणम्, तद्वृत्तिः। वध्यमारणं राजादेशादनाथशववहनं तद्वस्त्रादिग्रहणं प्रेतपिण्ड-भोजनमित्येवमादिवृत्तिः पुल्कस्यां चाण्डालेन जायते। अथवा मूलादि वृक्षादीनाम्, तद्व्यसनं विभागकरणम्, सा वृत्तिः। व्यवच्छिन्नेषु वृक्षेषु यदनुवृत्तं मूलं तदुद्धृत्य विक्रयादिना जीवति। मेधा.

(२) चण्डालेन पुल्कस्यां जातो निषादाच्छूद्रायामित्युक्तायां सोपाकाख्यः पापात्मा सर्वदा साधुभिर्निन्दितो राजाज्ञया वध्यमारणवृत्तिर्जायते। * गोरा.

(३) चण्डालेन पुल्कस्यां मूलव्यसनवृत्तिमान् मूलखननं कृत्वा तद्विक्रयणजीवन इत्यर्थः। मवि.

(४) व्यसनं दुःखं मूलं प्रधानं मुख्यमिति यावत्। तच्च वध्यमारणं राजादेशात्। मूलं च तद्व्यसनं च मूलव्यसनम्, तत् वृत्तिः यस्य स तद्वान्। अथवा मूलं प्राणाः, तद्वियोजन-रूपं दुःखं मूलव्यसनम्। चण्डालः प्रसिद्धः। क्षत्रियायां शूद्रादुत्पन्नो निषादः। निषादात् शूद्रायामुत्पन्ना पुष्कसी। तस्यां चण्डालाज्जातः सोपाकः। स्मृकौ. १८-१९

(५) मूलव्यसनम् औषधखननम्। नन्द.

(६) चाण्डालेन सोपाकनामा तथा पुल्कस्यां जायते। कीदृशः? मूलव्यसनवृत्तिमान् मूलखननवृत्तिमा(?धा)रणोचितः। यद्वा मूलं वध्यम्, तस्य व्यसनं राजादेशेन मारणं वा। भाच.

**[2]निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम्।**
**श्मशानगोचरं सूते बाह्यानामपि गर्हितम्।।**

(१) अन्त्यावसायिनं चण्डालमेव वदन्ति। अथवा निषाद्यां चण्डालादुत्पन्नस्यान्त्यावसायीति नामधेयम्। श्मशानगोचरं शवदहनादिवृत्तिः (?त्तिम्)। अतश्चाण्डालादपि कुत्सिततरो विज्ञेयः। तदेतदान्त्यात् संकराणां प्रदर्शनमात्रं कृतम्। मेधा.

(२) प्रतिलोमनिषादस्त्री चण्डालादन्त्यावसाय्याख्यं पुत्रं चण्डालादिभ्यो दुष्टतमं श्मशानवासिनं तद्वृत्तिं च जनयति। $ गोरा.

(३) क्षत्रियायां शूद्रादुत्पन्ना निषादी। अन्त्यावसायीति संज्ञा। स्मशानगोचरः तद्वृत्तिस्तन्निवासश्च। बाह्यानामपि चण्डालानामपि।

स्मृकौ. १९

**[1]संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः।**
**प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः।।**

(१) यान्येतान्यनन्तरमुद्दिष्टानि त्वक्सारव्यवहारादीनि कर्माणि तैः अप्रसिद्धाः सोपाकादिनामतया तज्जातीया वेदितव्याः। पित्रा मात्रा च विभागेन दर्शिताः। प्रच्छन्ना वा प्रकाशा वा तज्जातीया वेदितव्याः। आयोगव्यां मात्रा विभागः, निषादाद्वैदेहिकादन्ध्रमेदाविति पित्रा दर्शितो विभागः। ¤ मेधा.

(२) वर्णसंकरविषये एता जातयः यस्येयं जनन्ययं जनकोऽयमेवंजातीय इत्येवं पितृमातृकथनपूर्वकं प्रदर्शिताः। एताश्च गूढाः प्रकटा वा तज्जातिचोदितकर्माचरणदर्शनेन बोद्धव्याः।

* गोरा.

(३) संकीर्णप्रकरणमुपसंहरति – संकर इति। पितृतो मातृतः कर्मभिर्वा विभाव्या इत्याह – प्रच्छन्ना वेति। मच.

(४) पितृमातृविगर्हिताः पितृमातृदोषविगर्हिताः। नन्द.

---

* ममु. गोरागतम्।

(१) **मस्मृ.** १०।३८; **ममु.** पुल्कस्यां (पुक्कस्यां); **स्मृकौ.** १८ पुल्कस्यां (पुष्कस्यां); **शूक.** २९१; **वीमि.** १।९५ पृ. १६९ ममुवत्; **बाल.** १।९५ पृ. ३०४ चण्डा (चाण्डा) पुल्कस्यां (पुष्कस्यां).

(२) **मस्मृ.** १०।३९; **मेधा.** ४।७९ (तु०) प्रतीकमात्रम्; **ममु.** ४।७९ चण्डा (चाण्डा) पू.; **स्मृकौ.** १९; **शूक.** २९२ श्मशा (स्मशा); **वीमि.** १।९५ पृ. १६९; **बाल.** १।९५ पृ. ३०४.

$ ममु., नन्द. गोरागतम्।

¤ स्मृकौ. मेधागतम्।

* मवि., ममु., भाच. गोरागतम्।

(१) **मस्मृ.** १०।४०; **स्मृकौ.** १९; **वीमि.** १।९५ पृ. १६९; **नन्द.** प्रदर्शिताः (विगर्हिताः); **बाल.** १।९५ पृ. ३०४.

सवर्णाजानामनन्तराजानां च द्विज-
धर्मित्वम्, प्रतिलोमानां
शूद्रधर्मित्वम्

[1]**सजातिजानन्तरजाः षट् सुता द्विजधर्मिणः।**
**शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।।**

(१) स्वजातीयाः त्रैवर्णिकेभ्यः समानजातीयासु जाताः। ते द्विजधर्माणः इत्येतत्सिद्धमेवानूद्यते। अनन्तरजानां तुल्यताभिधानं तद्धर्मप्राप्त्यर्थम्। अनन्तरजाः अनुलोमाः – ब्राह्मणात् क्षत्रियावैश्ययोः, क्षत्रियाद्वैश्यायां जाताः। तेऽपि द्विजधर्माणः उपनेया इत्यर्थः। उपनीताश्च द्विजातिधर्मैः सर्वैरधिक्रियन्ते। ननु च 'ताननन्तरनाम्नः' (१०।१४) इति मातृजातीयत्वमेषामुक्तमेव। ततश्च तज्जात्या समेषु धर्मेषु सिद्ध एवाधिकारः। सत्यम्। 'अनन्तरनाम्नः' इति नामग्रहणात् संज्ञैवैषाम्, न तु जात्यतिदेश इति कस्यचिदाशङ्का स्यात्, अतः स्पष्टार्थं 'षट् सुता द्विजधर्मिणः' इति वचनारम्भः। ये पुनः अपध्वंसजाः संकरजाः ते शूद्राणां सधर्माणः समानाचाराः, तद्धर्मैरधिक्रियन्त इत्यर्थः। प्रतिलोमानां तु विशेषो वक्ष्यते। अनन्तरग्रहणमनुलोमोपलक्षणार्थमेव। तेन व्यवहितोऽपि ब्राह्मणाद्वैश्यायां जातो गृह्यते। षट् संख्यातिरिक्तत्वान्न शूद्रायां पारशवः।

† मेधा.

(२) अत्रानुलोमेन शूद्रायामुत्पन्ना अपध्वंसजा गृह्यन्ते। सवर्णाविवाहो द्विजातीनां श्लाघ्यः। असवर्णाविवाहस्त्वपध्वंसः न्यायापेतः। स्मृकौ. ४०

(३) तत्र विप्रादिवत् करणान्तानां त्रयाणां द्विजवदाशौचोपनयनाद्यतिदिशन् आयोगवक्षत्तृचण्डालमागधवैदेहसुतानां षण्णां शूद्रवदाशौचादिप्राप्तिमाह – सजातिजानन्तरजा इति। अपध्वंसजा इति। पारिभाषिका आयोगवादयः। मच.

(४) स्वजातिजाः द्विजैः सवर्णायामुत्पादितास्त्रयः। अनन्तरजाः ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायामुत्पादितास्त्रयो मूर्धाभिषिक्तमाहिष्यकरणाख्याः संकीर्णाः। एते षट् द्विजधर्मिणः उपनयनमर्हन्तीत्यर्थः इति केचित्। तच्चिन्त्यम्। अन्ये तु स्वजातिजाः सवर्णायामुत्पन्नाः शुद्धवर्णाः, अनन्तरजाः अनुलोमजाः। तत्किं शूद्रजात्युत्पन्ना अपि? नेत्याह – षडिति। द्विजात्योरेवोत्पन्ना इत्यर्थः, इति व्याचक्षते। एतच्च 'पुत्रा येऽनन्तरस्त्रीजाः' (मस्मृ. १०।१४) इत्यादिवचनानुसारीति मन्तव्यम्। अपध्वंसजाः व्यभिचारजाः। उपलक्षणमेतत्। तेन द्विजधर्मा(न)धिकारितया शूद्रधर्माधिकारितया च शास्त्रे प्रतिपादिता इति पर्यवसितार्थः। सर्वपदोपादानप्रयोजनमपीदमेव। सधर्माणः समानधर्माः। वीमि. १।९५

(५) संकीर्णजातीनां परिज्ञानोपायं शूद्रधर्मिणश्चाऽऽह – स्वजातिजानन्तरजा इति। ब्राह्मणक्षत्रियवैश्यशूद्राः स्वजातिजाः, अनन्तरवर्णजाताः, अपध्वंसजाः प्रतिलोमजातयः। नन्द.

(६) तत्रानुलोमजानामुपनयनमाह मनुः – स्वजातिजेति। अस्यार्थः – 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये। सदृशानेव तानाहुर्मातृदोषविगर्हितान्।।' (मस्मृ. १०।६) इत्यनेनानुलोमजानां यत् द्विजसादृश्यमुक्तं तत्र निमित्ताभिधानायेदमारभ्यते – स्वजातिजेति। स्वजातिजाः सवर्णाः, ताभ्योऽनन्तराः पश्चादनुकल्पत्वेनाऽऽम्नाताः। ब्राह्मणस्य क्षत्रिया वैश्या शूद्रा, क्षत्रियस्य वैश्या शूद्रा, वैश्यस्य शूद्रा, तासु ये जाता मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणाः द्विजातीनां षट् सुताः, ते द्विजधर्मिणः द्विजात्युक्तोपनयनादिधर्मार्हाः इत्यर्थः। यत्तु कैश्चिन्निषादोग्रकरणपरिहारेण ब्राह्मणक्षत्रियवैश्यैः स्वजातिजैः सहानन्तरजातानां मूर्धावसिक्ताम्बष्ठमाहिष्याणां त्रयाणामेव षट्त्वमभिप्रेत्य द्विजधर्मत्वं व्याख्यातम्, तन्न सुन्दरम्, ब्राह्मणक्षत्रियविशां 'मातुरग्रे विजननम्' (मस्मृ. २।१६९) इत्याद्युपदेशत एव द्विजधर्मत्वसिद्धौ द्विजधर्मातिदेशानर्थक्यात्। न चानन्तरजानां

---

† गोरा., मवि., ममु., भाच. मेधागतम्।

(१) **मस्मृ.** १०।४१; **मेधा.** १०।५ उत्त.; **मिता.** १।९० उत्त., स्मरणम्; **गौमि.** ४।२१ सजाति (स्वजाति) नन्तरजाः (त्यन्तरज्ञाः); **स्मृकौ.** ४० उत्त.; **शूशि.** ५ उत्त. (=) : ६ उत्त. : १२ सजाति (स्वजाति) : १४ तृतीयचरणमात्रम्; **चमव्या.** ८३ उत्त. (=); **शूक.** २७२ उत्त.; **वीमि.** १।९० पृ. १६० उत्त. : १।९५ पृ. १७० सजाति (स्वजाति); **संग.** ६३७ सजाति (स्वजाति) पू.; **सस्मृ.** ११३-११४ उत्त. (=); **बाल.** १।९० पृ. २७८ 'शूद्राणां तु' इति निर्देशमात्रम् : १।९४ पृ. २८४ : १।१६६ पृ. ४३० उत्त. (=).

द्विजतुल्यत्वाभिधानेन द्विजधर्मप्राप्त्यर्थः सिद्धस्यैवानुवादोऽयमिति युक्तम्, तेनैवार्थसिद्धौ(? द्धेः।) 'षट् सुता द्विजधर्मिणः', 'सदृशानेव तानाहुः', 'आत्मा वै पुत्रनामाऽसि', 'आत्माऽतिजज्ञे', 'आत्मनः स एवायं विरूढः प्रत्यक्षेणोपलभ्यते', 'तत्राऽऽत्मा जायते स्वयम्', 'येषामुभयतो वा ब्राह्मण्यं पितृत इत्येके' इति। पुत्रजनने मातुः प्राधान्यं पितुरित्यन्ये। बीजप्राधान्यादयोनिजा अपि पुत्रा दृश्यन्ते द्रोणागस्त्यादयः, बीजप्राधान्यदर्शनात्। तस्मात्सिद्धं षण्णामप्यनुलोमजानां द्विजत्वमिति। अत एवैतरेयब्राह्मणे निषादस्योपनयनलिङ्गं सत्रानुष्ठानं दृश्यते। तद्यथा – सरस्वतीतीरे सत्रमासीनैर्ऋषिभिरिलूषपुत्रः कवषनामा ऋषिर्दासीपुत्रः 'कितवोऽब्राह्मणोऽस्माकं मध्ये कथं दीक्षिष्यति' इति मत्या मरुदेशे नीत्वा पातितः 'अत्रैनं पिपासा हन्तु, सरस्वस्त्युदकमप्ययं मा पात्' इति। तत्रायं पिपासाखिन्नोऽब्दैवतं 'प्र देवत्रा' इति पञ्चदशर्चं सूक्तं सस्मार। तत्प्रयोगप्रभावेण सरस्वत्येव स्वदेशमपहाय तं प्रत्यधावत्। ततस्ते तस्य देवतानुग्रहं वेदप्रभावं च ज्ञात्वा सत्रे तं समाहूय तत्सूक्तप्रयोगेण सरस्वतीमविन्दन्निति (ऐब्रा. ८।१)। 'विदुर्वा इमं देवाः' इत्यनेन उपनयनकालीनदेवतासंप्रदानकबटुपरिदानमुक्तं भवति। तेन हि ते तं जानते 'अयमस्मदीयः' इति। तस्मात्सिद्धं निषादस्योपनयनमिति। रामायणे शरहतस्य ऋषिपुत्रस्य दशरथं प्रति वाक्यमपि – 'न द्विजातिरहं शङ्कां ब्रह्मवध्याकृतां त्यज। ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने।।'(वारा.२।६९।४३-४४)। तत्पितुर्वाक्यमपि – 'कस्य चापररात्रेऽहं स्वाध्यायं कुर्वतो वने। श्रोष्यामि सुचिरं शब्दं पुण्यं शास्त्रमधीयते(? यतः)।।' (वारा. २।७०।३३) इति। महाभारतेऽपि दीर्घतमो(?-तमउ)पाख्याने – 'तस्यां काङ्क्षीवदासीत्स (? काक्षीवदादीन्स) शूद्रयोनावृषिस्तदा। जनयामास धर्मात्मा पुत्रानेकादशैव तु।। काङ्क्षीवदासी(? काक्षीवदादीन्) पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः। उवाच तमृषिं राजा ममेम इति भारत।।' (भामु. १।१०४।४७, ४८) इति। तत्रैव धृतराष्ट्रोत्पत्तावपि – 'धृतराष्ट्रश्च पण्डुश्च विदुरश्च महामतिः। जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः।। संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः। श्रमव्यायामकुशलाः समपद्यन्त यौवनम्।। धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि। तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः।। इतिहासपुराणेषु नानाशिक्षासु बोधिताः। वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः।।' (भामु. १।१०९।१७-२०) इति।

संग. ६३७-६३९

विशिष्टदम्पतिपरंपरया जातेरुत्कर्षोऽपकर्षश्च

**'तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे।**
**उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः।।**

(१) त एते अनन्तरजाः तपःसामर्थ्येन बीजसामर्थ्येन युगे युगे जन्मनि जन्मनि उत्कर्षमपकर्षं च गच्छन्ति। तद्वक्ष्यामः 'शूद्रायां ब्राह्मणाज्जातः' (मस्मृ. १०।६४) इत्यत्र यदुक्तम्। ‡ मेधा.

(२) ते स्वजातिजानन्तरजास्तपःप्रभावेण हेतुना जातितो गच्छन्ति। गोरा.

(३) तपोबीजप्रभावेण तपसा जात्युत्कर्षार्थं कृतेन बीजस्य च द्विजजातीयसंबन्धिनः प्रभावेण ते योग्यतया व्यवहिता अपि द्विजधर्माणः युगे युगे उत्तरोत्तरप्रसूतिषु क्रमान्मनुष्येषु जन्मतो जात्युत्कर्षं प्रथमप्रथमजातितः श्रेष्ठत्वम् असत्कर्मकरणाच्च अपकर्षं शूद्रतोऽप्यधमां जातिं यान्ति। युगपदं मातापितृयोगसाध्यतया तत्साध्यायां संततौ वर्तते। एतेन ब्राह्मणात्क्षत्रियायां जातो मूर्धावसिक्तो मूर्धावसिक्तां विवाह्य स्वाचारादप्युक्तायां जनयति स तत उत्कृष्टः। एवमुत्तरोत्तरं ज्ञेयम्। एवं क्रमेण पञ्चमी प्रसूतिर्ब्राह्मणजातिरेव भवति। एकान्तरवर्णजानां तु सप्तमी प्रसूतिः। एवं क्षत्रियाद्वैश्यायां जातेऽपि। एतदुक्तं याज्ञवल्क्येन – 'जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा।' (यास्मृ. १।९६)। एवमसत्कर्मणां सद्विधानवत्पूर्वजात्युत्कर्षोऽपि (? त्यपकर्षोऽपि) द्रष्टव्यः। मवि.

---

‡ भाच. मेधागतम्।

(१) **मस्मृ.** १०।४२; **गोरा.** प्रभावैस्तु (प्रभावेण); **नन्द.** **वैस्तु** (वैश्च).

(४) सजातिजानन्तरजाः तपःप्रभावेण विश्वामित्रवत्, बीजप्रभावेण ऋष्यशृङ्गादिवत्, कृतत्रेतादौ मनुष्यमध्ये जात्युत्कर्षं गच्छन्ति, अपकर्षं च वक्ष्यमाणहेतुना यान्ति।

† ममु.

(५) एवं तावद्बीजक्षेत्रवशाज्जातीनामुत्कर्षापकर्षौ उक्तौ, इदानीं हेत्वन्तरवशादप्याह – तपोबीजप्रभावैश्चेति। ते ब्राह्मणादयो द्विजधर्मिणश्च वर्णाः। तप एव बीजं तपोबीजम्। तपोबीजत्ववचनं जात्यन्तरोत्पादकत्वनिबन्धनम्। युगे युगे मिथुने मिथुने संताने संताने पुत्रपौत्रादिष्वपीत्यर्थः। युगशब्दस्य संतानवचनत्वमुत्तरत्र व्यक्तीभविष्यति। इह मनुष्येषु मध्ये जन्मत उत्कर्षमपकर्षं च गच्छन्ति। तस्मादुत्कर्षहेतुः सेव्योऽपकर्षहेतुस्त्याज्य इत्यभिप्रायः। नन्द.

क्रियालोपादिना वृषलत्वं गताः क्षत्रिया
एव पौण्ड्रकचौड्रादिजातिरूपतां
प्राप्ताः

**'शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः।**
**वृषलत्वं गता लोके ब्राह्मणादर्शनेन च।।**

(१) यदुक्तं 'स्वकर्मणां त्यागेन' (मस्मृ. १०।२४) इति तस्यैवायं प्रपञ्चः। क्रियालोपो यत्र संस्कार्यतया संबध्यते, यथोपनयनादिषु; यत्र वा कर्तृतया, यथा नित्याग्निहोत्रसंध्योपासनादिषु, तासां लोपः उभयासामप्यननुष्ठानम्। अतश्च न केवलमुपनयनसंस्काराभावेन जातिभ्रंशः, अपि तूपनीतानां विहितक्रियात्यागेनापि। तथा चाऽऽह – शनकैरिति। पुत्रपौत्रादिसंततेः प्रभृति शूद्रत्वम्, न तु (जा?)तस्यैव। उपनयनाभावे तु तस्यैव व्यपदेशान्तरं प्रवर्तते यद्यपि सा जातिर्न निवर्तते। तत्पुत्रपौत्राणां भृज्जकण्टकादिजात्यन्तरमेव व्यपदेशहेतुकमिति। ब्राह्मणातिक्रमेण ब्राह्मणविधिविहितातिक्रमेणेत्यर्थः। अथवा शास्त्रार्थसंशये प्रायश्चित्ते वा परिषद्गमनाभावः।

मेधा.

(२) इमाः वक्ष्यमाणाः क्षत्रियजातयः सत्य उपनयनादिक्रियालोपेन ब्राह्मणानां च याजनाध्यापनप्रायश्चित्ताद्यर्थं दर्शनाभावेन शनैः शनैः लोके शूद्रतां प्राप्ताः।

§ गोरा.

(३) तपोबीजप्रभाव उत्कर्षहेतुत्वेनोक्तः। कः पुनरपकर्षहेतुरत्रेत्यपेक्षायामाह – शनकैरिति। शनकैः संताने संताने ब्राह्मणानामदर्शनात् क्रियालोपाद्ब्राह्मणादर्शननिमित्तात्क्रियालोपात्। इमाः उत्तरश्लोके वक्ष्यमाणाः।

नन्द.

**'पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः।**
**पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः।।**

(१) पुण्ड्रकादयः शब्दाः परमार्थतो जनपदशब्दाः, इह तु 'क्षत्रियेषु मुख्यास्तत्संबन्धत्वाज्जनपदेषु वर्तन्ते' इत्येतद्दर्शनमाश्रितम्। यथा लुग्वि(? बृवि)धौ 'तस्य निवासः' (पासू. ४।२।६९) 'जनपदे लुप्' (पासू. ४।२।८१) इति, न तु यथा 'लुब्योगाप्रख्यानात्' (पासू. १।२।५४) इति। नैतेषु देशेषु बाहुल्येन चातुर्वर्ण्यमस्तीत्येतदालम्बनं वृषलत्ववचनम्। यदि वा पुण्ड्रादयः शब्दाः कथंचिद्देशसंबन्धेन विना दृश्यन्ते, तदैतज्जातीया वेदितव्याः। महाभारतादौ क्षत्रिया वर्ण्यन्ते तथाऽद्यत्वेऽप्येते क्षत्रिया एवेति कस्यचिद्भ्रान्तिः स्यादत एवमुक्तम् 'एते वृषलाः' इति। ये चैते दिगन्तवासिनः किरातवेनदरदादयस्तेषामप्राप्तरूपं वेदेनानूद्यते 'न जनमियान्नान्तमियात्' (बृउ. १।३।१०) इति।

मेधा.

(२) पौण्ड्रकादयः क्षत्रियाः सन्तः क्रियालोपादिना शूद्रत्वमापन्नाः। गोरा.

(३) पौण्ड्रादिदेशोद्भवाः सन्तः क्रियालोपादिना शूद्रत्वमापन्नाः। ममु.

(४) पौण्ड्रकादय एकादश पतितक्षत्रिया नरजातयः।

मच.

---

† मच. ममुगतम्।

(१) **मस्मृ.** १०।४३; **मेधा.** णादर्शनेन (णातिक्रमेण); **शूशि.** २९ मेधावत्; **शूक.** २७५ मेधावत्; **वीमि.** १।९५ पृ. १६९; **बाल.** १।९५ पृ. ३०४.

§ मवि., ममु., मच., भाच. गोरागतम्।

(१) **मस्मृ.** १०।४४; **मेधा.** पौण्ड्र (पुण्ड्र); **मवि.** मेधावत्; **स्मृकौ.** १५ काश्चौड्रद्रवि (काश्चौन्द्रद्रमि) पह्लवा (पाह्लवा) दाः खशाः (दास्तथा); **शूशि.** २९ श्चौड्र (श्चोड्र) काम्बो (कम्बो) पह्लवा (वाह्लिका) दरदाः खशाः (दारदास्तथा); **शूक.** २७६ श्चौड्रद्रवि (श्चोण्ड्रद्रमि) दाः खशाः (दास्तथा); **वीमि.** १।९५ पृ. १६९; **बाल.** १।९५ पृ. ३०४ यवनाः (द्रविडाः) खशाः (खसाः).

चातुर्वर्ण्यातिरिक्ता जातयो
दस्युपदबोध्याः

**¹मुखबाहूरुपज्जानां या लोके जातयो बहिः।
म्लेच्छवाचश्चाऽऽर्यवाचः सर्वे ते दस्यवः स्मृताः।।**

(१) असदविद्यमानार्थाऽसाधुशब्दान्वया वाक् म्लेच्छोच्यते। यथा शबराणां किरातानामन्येषां वाऽन्त्यानाम्। आर्यवाचः आर्यावर्तनिवासिनः। ते चातुर्वर्ण्यादन्यजातीयत्वेन प्रसिद्धास्तदा दस्यव उच्यन्ते। एतदुक्तं भवति – न देशनिवासेन म्लेच्छवाक् संकरत्वे कारणम्, अपि तु यथोक्तबर्बरादिशब्दप्रसिद्धिः। मुखादिजानां बहिष्क्रियते(? न्ते) ब्राह्मणादिशब्दैरप्रसिद्धैरि(? द्धा इ)त्यर्थः। ते सर्वे दस्यव उच्यन्ते। मेधा.

(२) ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रियालोपादिना या बाह्याः जातयो म्लेच्छभाषोपेता आर्यभाषायुक्ता वा बर्बरकालाद्यास्ते सर्वे दस्युशब्दवाच्याः स्मृताः।

‡ गोरा.

(३) उक्तमर्थं संक्षिप्याऽऽह – मुखेति। पञ्चम्यर्थे षष्ठी। चतुर्भ्यो वर्णेभ्यो येऽन्ये ते यदि म्लेच्छदेशस्थतया म्लेच्छवाचः स्युर्यदि वाऽऽर्यदेशवासादार्यवाचस्तथापि दस्यवः अपसदाः एव। मवि.

(४) बाह्यानुलोमप्रतिलोमजानां त्रिंशतां कर्माणि वक्ष्यंस्ताननुवदति – मुखेति द्वाभ्याम्। मुखबाहूरुपज्जानां ब्रह्मक्षत्रियविट्शूद्राणां तेभ्यश्चतुर्भ्यो बहिर्जातयस्ताः म्लेच्छवाचः म्लेच्छवत् भाषणानि येषां ते।

मच.

(५) अनुलोमजातीनां प्रतिलोमजानां च साधारणीं संज्ञामाह – मुखबाहूरुपज्जानामिति। आर्यवाचः संस्कृतवाचः। नन्द.

---

‡ ममु., भाच. गोरागतम्।

(१) **मस्मृ.** १०।४५; **स्मृकौ.** १५-१६ अशुद्धिबहुलो ग्रन्थः; **शूशि.** २९ ज्जानां या लोके (ज्जाता लोके या) चश्चाऽऽर्यवाचः (चोऽर्यवाचो वा); **शूक.** २७६ रुपज्जानां (रुजातानां) चश्चाऽऽर्यवाचः (चोऽर्यवाचो वा); **वीमि.** १।९५ पृ. १६९ द्वितीयचरणे (लोके वै जातयः पृथक्); **बाल.** १।९५ पृ. ३०४ या लोके (लोके या) चश्चाऽऽर्य (चोऽप्यार्य) : १।९५ पृ. ३०७ चश्चाऽऽर्य (चोऽप्यार्य).

सर्वैरनुलोमैः प्रतिलोमैश्च स्व-
स्वकर्मभिर्द्विजाः सेव्याः,
तेषां सेवासाधनानि
स्वस्वकर्माणि

**¹ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः।
ते निन्दितैर्वर्तयेयुर्द्विजानामेव कर्मभिः।।**

(१) अपसदाः अनुलोमाः प्रतिलोमाः। अपध्वंसजाः। गोबलीवर्दवद्भेदः। द्विजानामुपयोगिभिः प्रेष्यकर्मभिर्वर्तयेयुः आत्मानम्। निन्दितैः। प्रेष्यकार्यत्वान्निन्दितानि।

मेधा.

(२) ये द्विजानां प्रातिलोम्येनोत्पन्नाः, ये च द्विजातिभिरपि शूद्रायामानुलोम्येन जातास्ते द्विजात्युपकारकैरेवानिन्दितैः कर्मभिः जीवेयुः। गोरा.

(३) द्विजानामपसदाः द्विजसधर्माणः षट्, ये चापध्वंसजाः शूद्रसधर्माणः। निन्दितैर्द्विजानां कर्मभिः द्विजानां भृत्यतया तत्तदुशनःप्रभृतिस्मृत्युक्तकर्म कुर्वन्तः। मवि.

(४) ये द्विजानामानुलोम्येनोत्पन्नाः 'षडेतेऽपसदाः स्मृताः' (मस्मृ. १०।१०) इति, तेषामपि पितृतो जघन्यत्वेनापसदशब्देन प्रागभिधानादपध्वंसजास्ते द्विजात्युपकारकैरेव निन्दितैर्वक्ष्यमाणैः कर्मभिर्जीवेयुः। + ममु.

(५) अपसदाः मूर्धाभिषिक्तादयः षट्। अपध्वंसजाः सूतादयः। सैरन्ध्रादीनां विशेषणेनैव कर्मलाभः। प्रायेण निन्दितैः द्विजातिषु प्रतिषिद्धैः द्विजानां द्विजात्यपेक्षितैः कर्मभिः। मच.

(६) अथ दस्यूनां साधारणीं वृत्तिमाह – ये द्विजानामपसदा इति। अपसदाः चौर्यजाताः अनुलोमजाः अभिषिक्तादयः, अपध्वंसजाः प्रतिलोमजाः सूतादयः, अनुलोमजेष्वप्यनन्तराः पुत्रव्यतिरिक्ता अम्बष्ठादयश्च, सजातीयेष्वपि कुण्डगोलकादयश्च द्विजानामेव कर्मभिः द्विजार्थैरेव कर्मभिः चिकित्साश्वसारथ्यादिभिः वर्तयेयुः जीवेयुः। नन्द.

---

+ भाच. ममुगतम्।

(१) **मस्मृ.** १०।४६; **मेधा.** १०।६३ उत्त.; **गोरा.** ते नि (तेऽनि); **शूशि.** १३ चाप (वाऽप); **बाल.** १।९४ पृ. २८९.

**'सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सनम्।**
**वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः।।**

(१) तथा च वक्ष्यते - सूतानामित्यादि। स्त्रीकार्यम् अन्तःपुररक्षाकारित्वम्। वणिक्पथः स्थलपथवारिपथादिः प्रसिद्धः। मेधा.

(२) सूतानामश्वदमनयोजनादिकम्, अम्बष्ठानां कायशल्यादिचिकित्सा, वैदेहिकानामन्तःपुररक्षादि, मागधानां स्थलपथवारिपथवाणिज्या। अम्बष्ठश्चात्रावद्यायां शूद्रजातौ बौधायनदर्शनाद्विज्ञेयः, न तु ब्राह्मणेन वैश्याजातः, एतच्छास्त्रोक्ता ये द्विजानामपसदाः ये चापध्वंसजाः सुताः ते निन्दितैर्वर्तयेयुरिति प्रस्तुतत्वात्। * गोरा.

(३) तदेव कियदप्याह - सूतानामिति। स्त्रीकार्यम् अन्तःपुररक्षा। वणिक्पथः वाणिज्यम्। मवि.

(४) सूतादयः प्रागुक्तलक्षणाः। स्त्रीकार्यम् अन्तःपुररक्षा कञ्चुकित्वम्। वणिक्पथः स्थलपथो वारिपथश्च। एतयोर्मार्गयोः रक्षा कार्या राजादेशात्। स्मृकौ. १९-२०

(५) तानि कर्माण्याह - सूतानामिति दशभिः। चिकित्सितं भिषक्क्रिया। स्त्रीकार्यम् अन्तःपुरादिरक्षा। वणिक्पथः नौयायित्वम्। मच.

**'मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च।**
**मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम्।।**

(१) त्वष्टिः दारुतक्षणं तक्षकर्म। मेधा.

(२) आयोगवस्य तक्षणम्। मेदान्ध्रचूचुमद्गूनामारण्यपशुमारणम्। मागधक्षत्तारौ चूचुमद्गू। यथाऽऽह यमः- 'क्षत्रियायां तु वैश्येन चूचुको नाम जायते। शूद्रेण जायते मद्गुः क्षत्रिया यत्र मुह्यति।।'। संज्ञान्तरेणानयोर्निर्देशो देशभेदेन, एषां सर्वेषामनेकनामता च भवतीति ज्ञापनार्थम्। तथा च स्मृत्यन्तरे - 'तेषां नामान्तराण्यपि दृश्यन्ते'। गोरा.

(३) निषादानां निषादजानां कैवर्तानाम्, तेन कैवर्तोऽपि निषादपदेनोच्यत इति दर्शितम्। तथा च - 'जातो निषादाच्छूद्रायाम्' (मस्मृ. १०।१८) इत्यत्र निषादपदेन स एवोच्यत इति। त्वष्टिः तक्षणं काष्ठादेः। चूचुमद्गू झल्लमल्लपदाभ्यां प्रागुक्तौ। मवि.

(४) निषादानामुक्तानां मत्स्यवधः। आयोगवस्य काष्ठतक्षणम्। मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुमारणम्। चुञ्चुर्मद्गुश्च वैदेहकबन्दिस्त्रियोर्ब्राह्मणेन जातौ बौधायनेनोक्तौ बोद्धव्यौ। बन्दिस्त्री च क्षत्रियेण शूद्रायां जाता सोग्रैव ग्राह्या। $ ममु.

(५) तष्टिः वर्धकिकर्म, दारुकर्म दारुतक्षणम्। आयोगवस्यैव कर्मनामनी। तक्षा स्थपतिरिति। अयं विशेषः - स्थपतिः पाषाणतक्षकः, तक्षको दारुतक्षणनिरत इति। मेदान्ध्रौ उक्तलक्षणौ। मूचुः मुचुपनामा। तथा च यमः - - 'क्षत्रियायां तु वैश्येन मुचुपो नाम जायते। शूद्रेण जायते मद्गुः क्षत्रिया यत्र मुह्यति।।'। मुह्यति मिथुनीभवति शूद्रेण सहेत्यर्थः। अस्यैव मुचुपस्य बन्दिमागधाविति नामान्तरे। स्मृकौ. २०

(६) तष्टिः तस्तक्षणम्। चुञ्चुमद्गू जातिविशेषौ शास्त्रान्तरप्रसिद्धिमाश्रित्योक्तौ। अथवा तद्विषयश्लोको नूनं लेखकापराधाद्भ्रष्टः। # नन्द.

**'क्षत्तुग्रपुल्कसानां तु बिलौकोवधबन्धनम्।**
**धिग्वणानां चर्मकार्यं वेणानां भाण्डवादनम्।।**

---

* ममु., नन्द., भाच. गोरागतम्।

(१) **मस्मृ.** १०।४७; **अप.** १।९३-९४; **स्मृकौ.** १९ चिकित्सनम् (चिकित्सितम्); **दीक.** १।९५ स्मृकौवत्, पू.; **मच.** स्मृकौवत्; **शूक.** २६६ स्मृकौवत्; **वीमि.** १।९४ पृ. १६६; **बाल.** १।९४ पृ. २८९ स्मृकौवत्.

(२) **मस्मृ.** १०।४८; **मेधा.** १०।६३ प्रथमचरणमात्रम्; **अप.** १।९३-९४ नां त्वष्टिस्त्वायोगवस्य च (नामायोगव्यस्य लक्षणम्) पू.; **स्मृकौ.** २० त्वष्टि (तष्टि) चुञ्चु (मूचु); **शूक.** २६६ त्वष्टिस्त्वा (तष्टिरा) पू.; **वीमि.** १।९४ पृ. १६६ च (तु) पूर्वोत्तरार्धे व्यवधानेन पठिते; **नन्द.** त्वष्टि (तष्टि); **बाल.** १।९४ पृ. २८९ त्वष्टि (तष्टि) चुञ्चु (चूचु).

$ मच., भाच. ममुगतम्।

# भाच. नन्दगतम्।

(१) **मस्मृ.** १०।४९; **मेधा.** १०।६३ द्वितीयचरणमात्रम्; **स्मृकौ.** २० पुल्क (पुष्क) वेणा (वेना); **शूक.** २६६ बन्धनम् (बन्धने) वेणा (वेना); **वीमि.** १।९४ पृ. १६६-१६७ पुल्क (पुक्क) पूर्वोत्तरार्धे व्यवधानेन पठिते; **नन्द.** चर्मकार्यं (च कार्मार्यं); **भाच.** बन्धनम् (जीवनम्); **बाल.** १।९४ पृ. २८९ पुल्क (पुक्क) वेणा (वेना).

(१) बिलौकसः अहिनकुलगर्गरादयः। तेषां वधबन्धनं क्षत्त्रादीनां जीविका। चर्मकार्यं कवचादिसीवनमुपानद्ग्रथनमित्येवमादि। भाण्डवादनं मुरजार्धमुरजादीनाम्।
+ मेधा.

(२) क्षत्रादीनां श्वाविड्गोधादिवधबन्धनम्। उग्रश्चात्र निकृष्टकर्माभिधानादुग्रजातिः प्रतिलोमः कश्चिद्वेदितव्यः। नर्तकोऽनुलोमः, तस्य हि 'द्विजातिशुश्रूषा धनाध्यक्षता' इत्याद्यौशनसोक्ता वृत्तिर्दर्शिता। धिग्वणानां चर्मकरणतद्विक्रयौ, 'चर्मकरणं तद्विक्रयजीवनं धिग्वणानां च' इत्यौशनसदर्शनात्। अतः कारावरेभ्य एषां वृत्तिभेदः। वेणानां च वंशमुरजादिवाद्यभाण्डवादनम्। गोरा.

(३) क्षत्रादीनां बिलनिवासिगोधादिवधबन्धनम्। धिग्वणानां चर्मकरणं 'चर्मकार्यं तद्विक्रयश्च जीवनं धिग्वणानाम्' इत्यौशनसदर्शनात्। अत एव कारावरेभ्य एषां वृत्तिच्छेदः। वेणानां कांस्यमुरजादिवाद्यभाण्डवादनम्।
‡ ममु.

(४) कार्मार्यं कर्मकार( ? कर्मार) कृत्यं शस्त्रमार्जनम्।
† नन्द.

(५) क्षत्ता उग्रः पुल्कसः बिलौक(सां) सर्पादीनां वध( ? बन्ध)जीवनं सर्पान् बद्ध्वा जीवन्ति। भाच.

सूतादीनां स्थानविशेषेषु निवासो
जातिचिह्नधारणं
समाचाराश्च

**[१]चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च।**
**वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः॥**

(१) बहिर्ग्रामनिवासिनः पर्वतलक्षणप्रदेशे निवसेयुः। विज्ञाताः जातिचिह्नं विदुषाम्। यद्यस्य कर्म विहितं स तेनैव जीवेत्। उत्कृष्टं कर्म संकरं (च) कर्तुं न लभते।
मेधा.

(२) ग्रामादिसमीपे ख्यातवृक्षः चैत्यद्रुमः तन्मूले श्मशानपर्वतवनसमीपेष्वेते प्रकाशाः सन्तः स्वकर्मभिर्जीवन्तो वसेयुः। * गोरा.

(३) एते सूतादयः। विज्ञाताः चिह्निताः। मवि.

(४) चैत्यद्रुमः ग्रामाभ्याशे आलक्षितो द्रुमः। विज्ञाता वसेयुः। जातिचिह्नं विघुष्यन्निवसेदित्यर्थः।
स्मृकौ. २१

(५) एते पौण्ड्रकादयः। भाच.

**[१]चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः।**
**अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम्॥**

(१) प्रतिश्रयः निवासः तेषां ग्रामान्निष्क्रान्तः स्यात्। अपपात्राः चिरवसानीयाः (?), तैः येषु पात्रेषु भुक्तं तानि न संस्कार्याणि, त्यक्तव्यानि, सौवर्णराजताभ्यामन्यानि। तयोः शुद्धिविशेषा उक्ताः। अथवा अवपात्राः। तदीयेषु च सक्तेषु पात्रेषु सक्तुभक्तादि न दातव्यम्। भूमिष्ठे पात्रेऽन्यहस्तस्थे वा दत्त्वा तत्पात्रं भूमौ स्थितं ते गृह्णीयुः। भिन्नं वा पात्रमवपात्रम्। यथा वक्ष्यति – 'भिन्नभाण्डे च भोजनम्' (मस्मृ. १०।५२) इत्यादि। धनमेषां श्वगर्दभम्। गवाश्वादि सुवर्णरजतादि न धनत्वेन गृह्णीयुः। मेधा.

(२) चण्डालश्वपाकानां ग्रामाद्बहिर्निवासः स्यात्। पात्रबहिष्कृताश्च कर्तव्याः, यतः तदु( ? द्भु)क्तं लोहादिपात्रं संस्कारेणापि न शुध्यति। धनं चैषां श्वखरम्, नान्यत्।
# गोरा.

(३) चाण्डालश्वपचानां तु ग्राममलाद्याकर्षकर्तृ(क ?)त्वाद्ग्रामाद्बहिरेवावस्थानम्। अवपात्राः पात्राद्बहिर्भूताः, तैः स्पृष्टं पात्रादि न स्पृश्यमित्यर्थः। मवि.

(४) निर्ग्रामः ग्रामाद्बहिरित्यर्थः। § स्मृकौ. २१

+ मवि. मेधागतम्। स्मृकौ. मेधागतं गोरागतं च।
‡ मच. ममुगतम्।
† शेषं गोरागतम्।
(१) **मस्मृ.** १०।५०; **स्मृकौ.** २०-२१; **मुक्ता.** ७१ विज्ञाता वर्तयन्तः (अज्ञाता वार्तया च); **शूक.** २६६; **बाल.** १।९४ पृ. २९०.

* ममु., मच., नन्द. गोरागतम्।
# ममु., मच., भाच. गोरागतम्।
§ शेषं मेधागतम्।
(१) **मस्मृ.** १०।५१; **मेधा.** अपपात्रा (अवपात्रा) इत्यपि पाठः; **मवि.** अपपात्रा (अवपात्रा); **स्मृकौ.** २१ बहिर्ग्रामात्प्र (निर्ग्रामः स्यात्प्र) शेषं मविवत्; **मच.** मविवत्; **मुक्ता.** ७१ पू.; **शूक.** २६६ चण्डा (चाण्डा) शेषं स्मृकौवत्; **वीमि.** १।९४ पृ. १६६ पू.; **बाल.** १।९४ पृ. २९० 'अवपात्राः' इत्यपि पाठान्तरं निर्दिष्टम्; **इन्दु.** २४५ स्मृकौवत्, पू., कमलाकरे.

(५) अवपात्रं भिन्नपात्रम्। यद्वा पाकपात्रादिहीनाः। यद्वक्ष्यति – 'अन्नमेषां पराधीनम्' (मस्मृ. १०।५४) इति। + शूक. २६६

(६) अपपात्राः अपगतकांस्यादिपानभोजनपात्राः, मृण्मयपात्रा इत्यर्थः। नन्द.

**[1]वासांसि मृतचैलानि भिन्नभाण्डेषु भोजनम्।**
**कार्ष्णायसमलंकारः परिव्रज्या च नित्यशः।।**

(१) सर्वकालं परिव्रज्या, नैकत्रस्थाने वसेयुः। मेधा.

(२) वासांसि च शववस्त्राणि। खण्डशरावादिषु च भोजनम्। आयसं चालंकरणम्। सर्वदा नैकत्रावस्थानम्। $ गोरा.

(३) अत एवाऽऽह – भिन्नभाण्डेति। पृथक् पात्रे भोजनं देयम्। कार्ष्णायसमलंकारः कृष्णायः लोहम्, तद्विकारः। प्रव्रज्या भ्रमणम्, न तेषां स्थिरनिकेतनम्। नित्यपदेन संन्यासी व्यावर्तितः, 'दयार्थं सर्वभूतानां वर्षास्वेकत्र संवसेत्' इति संन्यासिनः स्थितिस्मरणात्। मच.

(४) सर्वकालं परितः सर्वतः व्रज्या गमनम्। बाल. १।९४ पृ. २९०

**[2]न तैः समयमन्विच्छेत्पुरुषो धर्ममाचरन्।**
**व्यवहारो मिथस्तेषां विवाहः सदृशैः सह।।**

(१) समयः, संकेतः, एककार्यता, संगतिरित्यनर्थान्तरम्। एकत्र स्थानासनविहारास्तैः सह न कर्तव्या इत्यर्थः। विवाहः दारग्रहणादिः, सोऽप्येवमेव। « मेधा.

(२) धार्मिकः पुरुषः चण्डालश्वपचैः सह लोकयात्रादिव्यवहारान्न कुर्यात्। तेषां च दानग्रहणादिव्यवहारो विवाहश्च समानजातीयैः सह परस्परं स्यात्। गोरा.

(३) समयं व्यवहारम्। व्यवहारः संभाषणभोजनादिः। मवि.

(४) धर्मानुष्ठानसमये चण्डालश्वपाकैः सह दर्शनादिव्यवहारं न कुर्यात्। तेषां च ऋणदानग्रहणादिव्यवहारो विवाहश्च समानजातीयैः सहान्योन्यं स्यात्। × ममु.

(५) समयं संगतम्। धर्ममाचरन् धार्मिकमिति यावत्। मिथः अन्योन्य(? न्यं) व्यवहारः क्रयविक्रयौ। नन्द.

**[1]अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने।**
**रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च।।**

(१) तत्साक्षादेषां न दातव्यम्। प्रेष्यैः कैश्चित्पूर्वोक्तेन प्रकारेण दापयितव्यः। रात्रौ स्पर्शाशङ्कयाऽन्तर्ग्रामनगरचर्याप्रतिषेधः। * मेधा.

(२) अन्नं चैषां परायत्तम्, न तु स्वतः साधितम्। तच्च भिन्नपात्रे एषां दातव्यम्। ते च रात्रौ ग्रामनगरयोर्न पर्यटेयुः। ¶ गोरा.

(३) भिन्नभाजने भग्नशरावादौ। § मवि.

(४) 'अन्नमेषां पराधीनम्' इत्येतत् 'अवपात्राश्च कर्तव्याः' इत्यत्रोक्तस्यैव विवरणम्। रात्रौ ग्रामादिषु चरणाभावः स्पर्शशङ्कायाम्। स्मृकौ. २२

(५) पराधीनं परंपरया देयं तत्रापि भिन्नभाजने भग्ने। रात्रौ न चरेयुः दस्युत्वात्तेषामिति भावः। मच.

(६) 'भिन्नभाण्डे' इत्येव सिद्धे 'भिन्नभाजने' इति पुनर्वचनमाद(? मनाद)रातिशयार्थम्। नन्द.

---

+ शेषं स्मृकौवत्।

$ मवि., ममु., नन्द., भाच. गोरागतम्।

« स्मृकौ., बाल. मेधागतम्।

(१) **मस्मृ.** १०।५२; **मेधा.** १०।५१ भाण्डेषु (भाण्डे च) द्वितीयचरणमात्रम्; **स्मृकौ.** २१ भाण्डेषु (भाण्डे च); **मुक्ता.** ७१-७२ चैला (चेला) भाण्डेषु (भाण्डे च) समलं(सस्त्वलं); **शूक.** २६६-२६७ भाण्डेषु (भाण्डे च) नित्यशः (नित्यदा); **वीमि.** १।९४ पृ. १६६ चैला (चेला) पू.; **नन्द.** भाण्डेषु (भाण्डे च) : १०।५४ (भिन्नभाण्डे) एतावन्मात्रम्; **बाल.** १।९४ पृ. २९० चैला (चेला); **इन्दु.** २४५ स्मृकौवत् पू., कमलाकरे.

(२) **मस्मृ.** १०।५३; **स्मृकौ.** २२; **मुक्ता.** ७२ पू.; **शूक.** २६७; **बाल.** १।९४ पृ. २९०.

× मच., भाच. ममुगतम्।

* भाच. मेधागतं मविगतं च।

¶ ममु. गोरागतम्।

§ शेषं गोरागतम्।

(१) **मस्मृ.** १०।५४; **स्मृकौ.** २२; **शूशि.** १६ युस्ते (युश्च) षु च (षु वा) उत्त.; **शूक.** २६६ प्रथमचरणमात्रम् : २६७; **बाल.** १।९४ पृ. २८८.

**¹दिवा चरेयुः कार्यार्थं चिह्निता राजशासनैः।**
**अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः।।**

(१) दिवा विचरन्ति कार्यार्थं क्रयविक्रयस्वकार्य-सिद्ध्यर्थम्। राजकार्याय वा चरेयुर्नगरोत्सवप्रेक्षादिनिमित्तम्। तत्रापि च चिह्निता राजशासनैः उपलक्षिता राजादिष्टैर्वज्रादिचिह्नैः, वध्यवधशासनैर्वा परशुकुठारादिभिः स्कन्धारोपितैः। $ मेधा.

(२) दिवा ग्रामादौ राजादिष्टक्षुरादिचिह्नाङ्किताः सन्तः सप्रयोजनं पर्यटेयुः। अनाथं शवं ग्रामान्निर्हरेयुरिति साधुमर्यादा। गोरा.

(३) राजशासनैः राज्ञा नियमितैश्चिह्नैः लोहाभरणवत्पिच्छादिभिः। निर्हरेयुः बहिर्नयेयुः। मवि.

(४) दिवसे चेच्चिह्निता ललाटादिष्वङ्किताः। निर्हरेयुर्ग्रामात्। मच.

**²वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया।**
**वध्यवासांसि गृह्णीयुः शय्याश्चाऽऽभरणानि च।।**

(१) राजाज्ञया च शास्त्रानतिक्रमेण शुद्धवधशूलारोपणादिना सर्वदा वधार्हान् हन्युः, तद्वस्त्रशय्यालंकरणानि च गृह्णीयुः। † गोरा.

(२) यथाशास्त्रं दण्डप्रकरणोक्तक्रमेण। मवि.

आर्यत्वानार्यत्वसंकरजत्वादीनां
गुणकर्मभिः परिज्ञानम्

**³वर्णापेतमविज्ञातं नरं कलुषयोनिजम्।**
**आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत्।।**

(१) वर्णादपेतं चातुर्वर्ण्याद्भ्रष्टम्, अविज्ञातं सत्यां शङ्कायाम्, जारजातं वक्ष्यमाणैः कर्मभिः स्वभावातिशयैश्च निश्चिनुयात्। हीनकर्मरतिः क्रूरकर्मा च सत्यां शङ्कायां कलुषयोनिजो जारजातो वेदितव्यः। मेधा.

(२) वर्णत्वाद्भ्रष्टं मनुष्यं संकरजातं लोकतस्तथाविधत्वेनाज्ञातमत एव चाऽऽर्यसदृशं वस्तुतः पुनरनार्यं कलुषयोनिजं अनुरूपाभिश्चेष्टाभिर्निश्चिनुयात्, अतश्च निश्चित्य परिहरेत्। ¤ गोरा.

(३) देशान्तरादौ प्रच्छन्नाः कथं ज्ञायेरन् तत्राऽऽह – वर्णेति षड्भिः। वर्णापेतं वर्णात् चातुर्वर्ण्यात् अपेतं संकरतां गतं विभावयेत् निश्चिनुयात्, कृष्णवर्णादियुतं वा। आर्यरूपं दैवात्सुवर्णशोभनं वस्त्रादिधारिणम्। कर्मभिः अपेयपानचौर्याद्यैः। मच.

**¹अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता।**
**पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम्।।**

(१) अनार्यः द्वेषमत्सरप्रधानः। निष्ठुरः स्वार्थपरः। क्रूरः लोभहिंसापरः। निष्क्रियात्मा विहितक्रियावर्जितः। एतैः स्वभावैः कलुषयोनिता व्यज्यते। † मेधा.

(२) नैर्घृण्यपरुषभाषित्वहिंस्रत्वविहित(?ताननुष्ठान)-प्रतिषिद्धानुष्ठानशीलत्वानि संकरजातं पुरुषमस्मिन् लोके प्रकटीकुर्वन्ति। ‡ गोरा.

(३) अनार्यता अनृजुता। निष्ठुरता अक्रियता। क्रूरता हिंस्रता। निष्क्रियात्मता धर्मक्रियावैमुख्यम्। कलुषयोनिजं वर्णापेतं च। मवि.

(४) निष्क्रियात्मता अशीतिन्यूनवत्त्वेऽपि क्रियारहितता। कलुषयोनिजं कलुषा जात्यन्तरबीजाक्रान्ता जात्यन्तराया(? न्तरीया) योनिः, ततो जातम्। # मच.

(५) कानि पुनस्तानि कर्माणीत्यपेक्षायामाह – अनार्यतेति। अनार्यता नास्तिकता। निष्ठुरता नृशंसता। क्रूरता स्वल्पापराधेऽपि प्रखरभावता। निषिद्धा(? निष्क्रिया)त्मता सकलकर्मवर्जनशीलता। व्यञ्जयन्ति अनुमापयन्ति। अनार्यतादीनि समस्तानि, न पुनर्व्यस्तानि। नन्द.

---

$ ममु. मेधागतं गोरागतं च। स्मृकौ. मेधागतम्।
† ममु., मच., नन्द. गोरागतम्।
(१) **मस्मृ.** १०।५५; **स्मृकौ.** २२; **शूशि.** १६ पू.; **शूक.** २६७ प्रथमचरणे (कार्यार्थं विचरेयुर्वा); **बाल.** १।९४ पृ. २८८; **इन्दु.** २४५ उत्त., कमलाकरे.
(२) **मस्मृ.** १०।५६; **स्मृकौ.** २२; **शूशि.** १६; **शूक.** २६७; **बाल.** १।९४ पृ. २८८; **इन्दु.** २४५ कमलाकरे.
(३) **मस्मृ.** १०।५७; **स्मृकौ.** ३७-३८; **मुक्ता.** ७२.

¤ मवि., ममु., स्मृकौ., नन्द., भाच. गोरागतम्।
† स्मृकौ., भाच. मेधागतम्।
‡ ममु. गोरागतम्।
# शेषं गोरागतम्।
(१) **मस्मृ.** १०।५८; **स्मृकौ.** ३८; **मुक्ता.** ७२.

**[१]पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा।**
**न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति।।**

(१) दुर्योनिः संकीर्णजन्मा। प्रकृतिं स्वाम् आत्मीयं कारणं न नियमेन निगृह्णाति। मेधा.

(२) तज्जनकयोर्दुष्टस्वभावत्वेनाकार्यकारित्वादसौ दुष्टयोनिः पितृसंबन्धि दुष्टभावत्वं सेवते, मातृसंबन्धि उभयगतं वा। अतो न कदाचिदसावात्मकारणं गोपायितुं शक्नोति। * गोरा.

**[२]कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसंकरः।**
**स श्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु।।**

(१) तस्य शीलं येन जातः, न तु यस्य क्षेत्रम्। सः लोके प्रसिद्धः। मेधा.

(२) महाकुलोत्पन्नस्यापि यस्य योनिसंकरः प्रच्छन्नो भवति स जनः स्वपितृगतं स्वभावमीषद्वा बाहुल्येन (वा) सेवत एव। ‡ गोरा.

(३) तदेव स्फुटयति – कुल इति। योनिसंकरः असदृश-योनिसांकर्यम्। तच्छीलं संकरशीलम्। मवि.

(४) तदेव स्पष्टयति – कुलेति। मुख्ये विप्रादिरूपे। योनिसंकरः स्वोत्पादकयोनौ विजातीयरेतःप्रवेशात्। तच्छीलं तयोः पितृमात्रोः स्वभावम्। मच.

(५) एतदेव स्थिरीकरोति – कुले मुख्येऽपीति। तच्छीलं पितृमातृशीलं संश्रयति, यथा परिज्ञातजन्मानो बाह्या व्यवहारादिबाह्याः एवमनुचितजन्मानोऽप्येतदि( ? नोऽपी)-त्यभिप्रायः। नन्द.

संकरनिन्दा, संकरजानां
जीवनसाफल्यहेतुः

**[३]यत्र त्वेते परिध्वंसा जायन्ते वर्णदूषकाः।**
**राष्ट्रियैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति।।**

(१) तस्माद्वर्णसंकरो राज्ञा परिवर्जनीयः। राष्ट्रियाः जानपदाः। राष्ट्रम् अमात्यादयः। मेधा.

(२) यस्मिन् राष्ट्रे एते वर्णानां दूषकाः संकरजा विनिपाता जायन्ते तद्राष्ट्रं राष्ट्रवर्तिजनैः सह शीघ्रमेव नाशमेति। तस्माद्राज्ञा वर्णसंकरोऽरक्षणीयः। § गोरा.

(३) राष्ट्रे स्वस्मिन् वर्णसंकरो राज्ञा परिहरणीय इत्यभि-प्रायेणाऽऽह – यत्र त्वेते परिध्वंसा इति। परिध्वंसाः संकरजन्मानः। गूढोत्पन्नत्वादपरिज्ञानाद्ये वर्णास्तैः सह संगच्छेरन् एतान्दूषयन्तीति वर्णदूषकाः। नन्द.

¶ **[१]ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः।**
**स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम्।।**

विशिष्टदम्पतिपरंपराजातेषु सप्तमादौ
जात्युत्कर्षापकर्षौ

¤ **[२]शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते।**
**अश्रेयान् श्रेयसीं जातिं गच्छत्याऽऽसप्तमाद्युगात्।।**
**शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।**
**क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च।।**

आर्यानार्यबीजक्षेत्रजनितयोर्बीजानुरोधिनी
श्रेयस्त्वाश्रेयस्त्वे

**[३]अनार्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया।**
**ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वं क्वेति चेद्भवेत्।।**

(१) किंशब्दः क्षेपे। यदि बीजप्राधान्याद्धीनजातीयासु जाताः मातृजातेरुत्कृष्टाः क्रमेण पितृजातितां प्राप्नुवन्ति, इदं तर्हि क्षेत्रप्राधान्येऽपि द्रष्टव्यम्, यथा क्षेत्रजः पुत्रः।

---

* ममु., मच., नन्द. गोरागतम्।

‡ ममु. गोरागतम्।

(१) **मस्मृ.** १०।५९; **मुक्ता.** ७२ पित्र्यं वा (पितुर्वा) नियच्छति (विमुञ्चति).

(२) **मस्मृ.** १०।६०; **स्मृकौ.** ३८ स श्रय (संश्रय); **नन्द.** स्मृकौवत्.

(३) **मस्मृ.** १०।६१; **इन्दु.** २४६ पूर्वार्धे (यत्राऽऽचार-परिभ्रंशाज्जायते वर्णसंकरः।) विनश्य (प्रणश्य).

§ मवि., ममु., मच., भाच. गोरागतम्।

¶ अस्य श्लोकस्य व्याख्यानानि 'वर्णसामान्यधर्माः' इत्यस्मिन् प्रकरणे द्रष्टव्यानि।

¤ अस्य श्लोकद्वयस्य व्याख्यानानि 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन् प्रकरणे द्रष्टव्यानि।

(१) **मस्मृ.** १०।६२ अन्ये स्थलादिनिर्देशाः 'वर्णसामान्यधर्माः' इत्यस्मिन् प्रकरणे द्रष्टव्याः।

(२) **मस्मृ.** १०।६४-६५ अन्ये स्थलादिनिर्देशाः 'वर्णाः तद्वृत्त-यश्च' इत्यस्मिन् प्रकरणे द्रष्टव्याः।

(३) **मस्मृ.** १०।६६; **मेधा.** १०।७३ प्रथमचरणमात्रम्; **शूशि.** ११; **नन्द.** क्वेति (केन); **भाच.** चतुर्थचरणे (श्रेयस्त्वे को न चेद्भवेत्) इति पाठः प्रतीयते; **बाल.** १।९४ पृ. २८४.

अतश्च यथाऽनार्यायां शूद्रायां ब्राह्मणाज्जात उत्कृष्टो भवति, यदृच्छया यथाकथंचिदनूढायामपि, एवं ब्राह्मण्याम् अनार्यात् शूद्रात् क्षेत्रप्राधान्येन श्रेयस्त्वम्। यथोक्तम् – 'क्वचिद्बीजं क्वचिद्योनिः' इति। मेधा.

(२) यः शूद्रायामनूढायां ब्राह्मणादुत्पन्नो यश्च ब्राह्मण्यामपि शूद्राज्जातस्तयोः कस्य प्रशस्ततरत्वमिति यदि भवतां संशयः स्यादिति भृगुर्बीजप्राधान्येनोत्कर्ष उपन्यस्ते सति क्षेत्रबीजकारणकत्वाज्जगतः क्षेत्रप्राधान्येनाप्युत्कर्षः किमिति न स्यादित्यृषीणां भ्रान्तिमाशङ्कमानस्तानाह। गोरा.

(३) प्रागेवोक्तं ब्राह्मणस्याब्राह्मण्यं यत्र तद्विचार्य निर्धारयति – अनार्यायामिति। सावित्रीपतितादिकन्यायां ब्राह्मणाच्छ्रेष्ठात् यदृच्छया अबुद्धिपूर्वमपि, बुद्धिपूर्वे तु किं वाच्यमित्याशयः। ब्राह्मण्यामुत्तमायामनार्यात्पतितसावित्रीकादेः। मवि.

(४) एकः शूद्रायां यदृच्छया अनूढायामपि ब्राह्मणादुत्पन्नः, अन्यश्च ब्राह्मण्यां शूद्राज्जातः, द्वयोर्मध्ये क्व चोत्पन्नस्य श्रेयस्त्वमिति चेत्संशयः स्यात्, संशयबीजं च – यथा बीजोत्कर्षात् ब्राह्मणाच्छूद्रायां जातः साधुः शूद्रः एवं क्षेत्रोत्कर्षाद्ब्राह्मण्यामपि शूद्रेण जातः किमिति साधुः शूद्रो न स्यात्? ममु.

(५) अनूढाविशेषेणानुलोमप्रतिलोमजौ श्रेष्ठत्वाश्रेष्ठत्वेन (? लोमजयोः श्रेष्ठत्वेऽश्रेष्ठत्वे च) संदिग्धेऽनार्यायामिति संशय्य जनकानुरूपेण निर्णयमाह – अनार्यायामिति त्रिभिः। अनार्यपदमत्र शूद्रपरम्, आर्यपदं तु ब्राह्मणपरमिति। यदृच्छया उद्वहनं विना। मच.

(६) अनार्यः अपकृष्टः। आर्यः उत्तमजातिः। यदृच्छया अबुद्धिपूर्वमिति तात्पर्यम्। शूशि. ११

(७) अनार्यायां शूद्रायाम्। ब्राह्मणब्राह्मणीशब्दौ द्विजात्युपलक्षणार्थौ। यदृच्छया कामचारेणोत्पन्नः, कश्चिदनार्यात् शूद्रात् ब्राह्मण्यामुत्पन्नः (कश्चित् ?) तयोः श्रेयस्त्वं बीजोत्कर्षेण क्षेत्रोत्कर्षेण वा केन भवेत्? अत्रेतिशब्दो द्रष्टव्यः। भवेच्चेदित्यन्वयः। चेदिति वा प्रश्नः। चेत्, शृणुतेत्यभिप्रायः। नन्द.

(८) अनार्यायां शूद्रायामनूढायां यदृच्छया ब्राह्मणः समुत्पन्नः, तु पुनः अनार्यात् शूद्रात् ब्राह्मण्याम्, श्रेयस्त्वे उत्कृष्टत्वे क इति चेत्, किंचन न भवेत्। भाच.

**[१]जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः।**
**जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः॥**

(१) नार्यां स्त्रियाम् अनार्यायां हीनजातीयायाम् आर्याज्जात उत्कृष्टजातीयाद्ब्राह्मणात् आर्य एव भवेत्। किं ब्राह्मणजातीयत्वम्? नेत्याह – गुणैः। गुणतः गौण्या वृत्त्या पाकयज्ञाद्यधिकारमात्रेण। वक्ष्यमाणानार्यापेक्षयाऽऽर्य इत्युच्यते। अनार्यात् शूद्रात् आर्यायां ब्राह्मण्यां जातः अनार्य एवैष निश्चयः। एतदुक्तं भवति – यावद्वचनमेव प्राधान्यमवतिष्ठते, नानुमानेन शक्यमन्यत्प्रसज्जयितुम्। अतः समानजातीयागमनमेव युक्तम्, क्षेत्रप्राधान्यं क्षेत्रजे एव, नान्यत्र। मेधा.

(२) अत्र निर्णयमाह – जात इति। शूद्रायां ब्राह्मणाज्जातः स्मृत्यभ्यनुज्ञानैः(? तैः) पाकयज्ञादिभिरनुष्ठीयमानैः प्रशस्यो भवति, शूद्रात्पुनर्ब्राह्मण्यामपि जातः प्रतिलोमत्वेन शूद्रधर्मेष्वप्यनधिकारात् न प्रशस्य इति निश्चयः, यतो यावद्वचनमत्र प्राधान्यमवतिष्ठते नानुमानतः। † गोरा.

(३) बीजमुत्कर्षहेतुः, न क्षेत्रमित्यस्यार्थः। नन्द.

आनुलोम्येन प्रातिलोम्येन च भर्त्रा
जारेण च जनिताः संकरजाः
तेषां वृत्तयश्च

**[२]अवरासूत्तमाज्जाताश्चानुलोमा इति स्मृताः॥**
**नृपायां विप्रतो जातः सवर्णो ब्राह्मणो भवेत्।**
**आयुर्वेदाथर्ववेदधनुर्वेदान्सदा पठेत्॥**
**गजाश्वारोहणं तस्य सवर्णस्य विधीयते।**
**अस्यामनेन चौर्येण जातो नक्षत्रजीविकः॥**
**[३]क्षत्रियाद्वैश्यकन्यायां माहिष्याम्बष्ठ इत्यसौ।**
**आयुर्वेदमथाष्टाङ्गं पठेदेष स्ववृत्तये॥**
**अस्यामनेन चौर्येण जातश्चाश्विक उच्यते।**
**अश्वानां विक्रयस्तेषां शुश्रूषा वृत्तिरस्य तु॥**

---

† मवि., ममु., मच., भाच. गोरागतम्।

(१) **मस्मृ.** १०।६७; **शूशि.** ११; **शूक.** २५४ र्यादार्यो (र्योदर्यो); **बाल.** १।९४ पृ. २८४.

(२) **मुक्ता.** ७०.

(३) **मुक्ता.** ७०-७१.

वैश्यतः शूद्रकन्यायामुग्रको नाम जायते।
मेषाविविक्रयश्चास्य वृत्तिः कम्बलविक्रयः।।
अन्तःपुराणि वा रक्षेन्नृपाणामाज्ञया सदा।
चौर्येण कटकारः स्यात्कटविक्रयकर्मवान्।।
ब्राह्मणाद्वैश्यकन्यायां निषादो नाम जायते।
मन्त्रौषधक्रियां कुर्यान्नित्यं शालिक्यकर्म च।।
चौर्येण कटकारः स्यादूर्ध्वं नापित एव सः।
नाभ्यूर्ध्ववपनं वृत्तिः कुम्भानां करणं मृदा।।
ब्राह्मणाच्छूद्रकन्यायां जातः पारशवस्तथा।
भद्रकाल्यर्चनं तस्य नृत्तं वाद्यं च वृत्तये।।
अस्यां वै चोरसंगत्या निषादो जायते सुतः।
जीवेद्दम्भेन गानेन मृगाणां हिंसयाऽपि वा।।
क्षत्रियाच्छूद्रकन्यायां जातो दौःषन्त उच्यते।
वनौकसां संग्रहणं मत्स्यानां ग्रहणं तथा।
खड्गादिशस्त्रकरणं दौःषन्तस्य तदुच्यते।।
अस्यामनेन चौर्येण शूलिको जायते नरः।
नित्यं शूलधरश्चैव राज्ञां दण्ड्यांस्तु दण्डयेत्।।
माहिष्यात्करणायां तु रथकारस्तु जायते।
अथ पर्यायनामानि तक्षशिल्पी च वर्धकी।।
लोहकारः कर्मकारो विद्यते यजनं तथा।
उपवीतं विधानेन कुर्यादाधानमप्यसौ।।
वास्तुशास्त्रमधीयानः प्रासादप्रतिमादिकम्।
यज्ञपात्रान् द्विजातीनां हैमान्याभरणानि च।।
कृष्युपस्करणं लेख्यं कर्माण्यस्योदितानि च।।
[1]ब्राह्मण्यां सधवायां तु जारजातः स कुण्डकः।
विधवायां गोलकः स्यादेतौ श्राद्धे बहिष्कृतौ।।
नृपायां क्षत्रियाज्जातश्चौर्याद्भोज इति स्मृतः।
नाभिषेकः पट्टधरो राजके रञ्जयेत्प्रजाः।
वैश्यायां वैश्यतश्चौर्यान्मणिकारश्च जायते।
मुक्तानां वेधनं शङ्खलवनं रत्नरञ्जनम्।।
अस्यैव मणिकारस्य त्रीणि कर्माणि वृत्तये।।
शूद्रायां शूद्रतश्चौर्याज्जातो माणवको भवेत्।
अश्वानां तृणदानेन वर्तयेदेष नित्यशः।।

(१) मुक्ता. ७१.

[1]विप्रायां जायते व्रात्यविप्रजो भृज्जकण्टकः।।
[2]क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः।
प्रतिलोमेषु च श्रेष्ठो विष्णोरभ्यर्चनं तथा।।
धर्मावबोधनं तस्य सारथ्यं कटविक्रयः।
नित्यं द्विजवदाधार इति सूतस्य वृत्तयः।।
नृपायां वैश्यतो जातः कथितो मागधश्च सः।
नृपप्रशंसनं कुर्यात्तन्त्रिवीणाश्च वादयेत्।।
अस्यामनेन चौर्येण पुलिन्दो नाम जन्मतः।
हिंसया दुष्टसत्त्वानामरण्ये वर्तयेदयम्।।
तैलपिण्याकलवणविक्रयेणैव वर्तयेत्।
अभोज्यान्नः स्वयं शूद्रैरस्पृश्योऽपि भवत्युत।।
ग्रामादिष्वपराह्णेषु प्रविशन् दण्डमर्हति।।
[3]शूद्रकन्यासमुत्पन्नो ब्राह्मणो न तु संस्कृतः।
अपरो नापितः प्रोक्तः शूद्रधर्माधिकोऽपि सः।।

स्वस्वजातिकर्मातिक्रमे जातिभ्रंशः

[4]स्वस्वजातेर्हि यत्कर्म कथितं तेन वर्तयेत्।
अन्यथा वर्तमाने हि सत्यं पतति जातितः।।

## याज्ञवल्क्यः

वर्णानुलोमसंकरजाः

[5]विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा।।
(१) एवं तावत्सवर्णाया अव्यभिचारे जातिनियम उक्तः।

(१) शूक. २७१.
(२) मुक्ता. ७१.
(३) शूशि. २२; शूक. २८५ णो न तु (णेन तु) वृद्धमनुः.
(४) मुक्ता. ७२.
(५) यास्मृ. १।९१; विश्व. १।९० (विप्रान्मूर्धावसिक्तं स्त्री राज्ञोऽम्बष्ठं विशोऽङ्गना। शूद्राङ्गना निषादाख्यं सूते पारशवं तथा।।); पमा. १।५११; मच. १०।९ उत्तरार्धे (जातोऽम्बष्ठस्तु शूद्रायां निषादः पारशवोऽपि वा।।); शूशि. ९ हि (यः); मुक्ता. ७० शवो (शरो); शूक. २६१-२६२ शवो (सवो); संम. ७६ निषादो जातः (जातो निषादः); वीमि. वसिक्तो (भिषिक्तो) उत्तरार्धे (जातोऽम्बष्ठस्तु शूद्रायां निषादः पारशवोऽपि वा।।); भाच. १०।१२ वसिक्तो (भिषिक्तो) अशुद्धिबहुलो ग्रन्थः; सस्मृ. ११५-११६, १९८-१९९ अशुद्धिबहुलो ग्रन्थः.

व्यभिचारेऽपि उत्कृष्टवर्णविषय एव श्रेयान्। यतः – विप्रादिति। विप्राच्छूद्रायामुत्पन्नस्यैकस्यैव संज्ञाद्वयं निषादः पारशव इति च द्रष्टव्यम्। किमर्थं तर्हि द्वितीया पारशवसंज्ञा? असवर्णाव्यभिचारनिन्दार्थम्। ब्राह्मणबीजोद्भवोऽपि तत्संस्कारहानात् पारयन्नेव जीवन्नेव शव इत्यर्थः। तथा चाऽऽह मनुः – 'स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः।' (मस्मृ. ९।१७८) इति। उत्कृष्टव्यभिचारस्तुत्यर्थं तु विप्रात् मूर्धावसिक्तम् अभिषेकयोग्यं राज्ञः क्षत्रियस्यापि स्त्री जनितवती। एवं सर्वत्र योज्यम्। विश्व.

(२) सवर्णानुक्त्वा इदानीमनुलोमानाह – विप्रादिति। ब्राह्मणात्क्षत्रियायां विन्नायामुत्पन्नो मूर्धावसिक्तो नाम पुत्रो भवति। वैश्यकन्यायां विन्नायामुत्पन्नोऽम्बष्ठो नाम भवति। शूद्रायां विन्नायां निषादो नाम पुत्रो भवति। निषादो नाम कश्चिन्मत्स्यघातजीवी प्रतिलोमजः, स मा भूदिति पारशवोऽयं निषाद इति संज्ञाविकल्पः। विप्रादिति सर्वत्रानुवर्तते। यत्तु 'ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति। क्षत्रियेण वैश्यायामुत्पादितो वैश्य एव भवति। वैश्येन शूद्रायामुत्पादितः शूद्र एव भवति।' इति शङ्खस्मरणं तत् क्षत्रियादिधर्मप्राप्त्यर्थम्, न पुनर्मूर्धावसिक्तादिजातिनिराकरणार्थं क्षत्रियादिजातिप्राप्त्यर्थं वा। अतश्च मूर्धावसिक्तादीनां क्षत्रियादेरुक्तैरेव दण्डाजिनोपवीतादिभिरुपनयनादिकं कार्यम्। प्रागुपनयनात्कामचारादि पूर्ववदेव वेदितव्यम्। * मिता.

(३) एवं च परशुरामस्य ब्राह्मणत्वात्( ? णात्) क्षत्रियायामुत्पन्नत्वान्मूर्धावसिक्तत्वेऽपि स्वतपोतिशयादीश्वरानुग्रहाद्वा विश्वामित्रादेरिव ब्राह्मणत्वं ब्राह्मणधर्ममात्रमेव, जातेरुत्पत्तिनिवृत्त्ययोगात्। एवं ब्राह्मणादेरवरासु तिसृषु क्रमेण जायन्ते। एषामेव देवलादिभिः सवर्णादिसंज्ञान्तराण्यपि स्मर्यन्ते। तत्र निषादपारशवादिवत् संज्ञाविकल्पो द्रष्टव्यः। $ शूशि. ९

(४) 'पारशवोऽपि (‡च) वा' इति नवाक्षरः पादः। वाशब्दश्चार्थे, अव्ययसमुदायोऽनतिरिक्तार्थः। केचित्तु पारशवः निषादः, अपिचकारादन्योऽपि निषाद इति व्याचक्षते। यत्तु 'ब्राह्मणेन क्षत्रियाया.... शूद्र एव' इति शङ्खवचनं तत् क्षत्रियादिधर्मप्राप्त्यर्थमौपचारिकम्, न पुनर्मूर्धाभिषिक्तादिजातिनिषेधार्थं क्षत्रियादिजातिप्राप्त्यर्थं वा, विरोधात्। अत एव मनुः – 'पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्। ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते।।' (मस्मृ. १०।१४)। अनन्तरस्त्रीजाः अनन्तरोक्तासु अनन्तरैकान्तरद्व्यन्तरस्त्रीषु जाताः। मातृदोषात् मातृजातिदोषात्। अनन्तरनाम्नः अनन्तरस्त्रीजातिनाम्नः। नामग्रहणात् मातापितृव्यतिरिक्तसंकीर्णजातित्वेन जनकजात्यभावेऽपि मातृजात्या व्यपदिश्यन्त इत्यर्थः। एतद्विषयमेव 'मातृतो जातिकल्पना'। अतश्च मूर्धाभिषिक्तादीनां क्षत्रियाद्युक्तैरेव दण्डाजिनोपवीतादिभिरुपनयनादि कार्यमिति निबन्धारः। अत एव मूर्धाभिषिक्तो हीति हिशब्देनोक्तार्थमेवावधारयति। + वीमि.

**[१]वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।**
**वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः।।**

(१) वैश्यायां माहिष्यः, शूद्रायामुग्रः क्षत्रियात्। ननु च शूद्रापरिणयनप्रतिषेधात् 'विन्नास्वेष विधिः स्मृतः' इति विरुद्धम्। अनभिज्ञः श्लोकार्थस्याऽऽयुष्मान्। विन्नासु हीनवर्णासु। विन्नास्वेष विधिः यदुत स्वजातिनाशः। तस्मान्न हीनवर्णामुद्वहेदित्यस्यार्थः। अत एव चाविन्नास्वपि संज्ञान्तरालाभः। इतरथा तत्र संज्ञान्तरक्रियाप्रसङ्गः। उत्कृष्टवेदने तद्व्यभिचारे वा वर्णोत्कर्ष इति स्तुतिपरतयैव विधिशब्दयोजना। विश्व.

(२) वैश्यायां शूद्रायां च विन्नायां राजन्यान्माहिष्योग्रौ

---

* अप., दीक. मितागतम्।

$ शेषं मितागतम्। बाल. शूशिगतम्।

‡ व्याख्यानादत्र चकारो व्याख्यातुरभिमत इति स्पष्टम्।

+ शेषं मितागतम्।

(१) **यास्मृ.** १।९२; **विश्व.** १।९१ (माहिष्योग्रौ प्रजायेते विट्छूद्राङ्गनयोर्नृपात्। शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः।।); **मेधा.** १०।५ चतुर्थचरणमात्रम्, स्मृत्यन्तरे; **मिता.** १।९० मेधावत्; **मवि.** १०।५ (विन्नास्वेष विधिः) एतावदेव; **ममु.** १०।५ मेधावत्; **पमा.** १।५११; **स्मृकौ.** ८ उत्त.; **मर.** ३३३ पू. (=); **मच.** १०।९ सुतौ स्मृतौ (स्मृतौ सुतौ); **शूशि.** ३, ४ मेधावत् : ९; **चमव्या.** ७३ मरवत्; **मुक्ता.** ७०; **शूक.** २६२; **संम.** ७६; **वीमि.** १।१९० पृ. १६१; **आप्र.** ४९७ पू.; **भाच.** १०।१२; **बाल.** १।९० मेधावत्; **सस्मृ.** ११६, १९९ अशुद्धो ग्रन्थः (=).

यथाक्रमं पुत्रौ भवतः। वैश्येन शूद्रायां विन्नायां करणो नाम पुत्रो भवति। एष सवर्णमूर्धावसिक्तादिसंज्ञाविधिः विन्नासु ऊढासु स्मृतः उक्तो वेदितव्यः। एते च मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणाः षडनुलोमजाः पुत्रा वेदितव्याः। # मिता.

(३) क्षत्रियाद्वैश्यायां जातो माहिष्यः, शूद्रायामुग्रः। वैश्याच्छूद्रायां करणः। 'सवर्णेभ्यः सवर्णासु' (यास्मृ. १।९०) इत्यादिना य उक्तो विधिः स विन्नासु परिणीतासु स्मृतो मुनिभिः। अविन्नास्वपि जातानां क्षेत्रजादिपुत्राणां वर्णत्वाभ्युपगमाद्विन्नास्विति शास्त्रविहितपुत्रोत्पत्तिप्रकारोपलक्षणार्थम्। यत एव तेषां ब्राह्मणत्वमस्ति अत एव 'ब्राह्मणा ऋत्विजः' इत्यभिधाय 'शाबलेयबाहलेयपुत्रिकापुत्रपरक्षेत्रसहोढकानीनानुजावरद्विप्रवरान्परिहाप्य' (बौश्रौ. २।३) इति बौधायनः परक्षेत्रोत्पन्नानां पर्युदासमाह। यत्तु देवलेनोक्तम् – 'द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अवरीट इति ख्यातः शूद्रधर्मा स जातितः।।', तथा – 'व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः।।' इति, तच्छास्त्रस्वीकृतक्षेत्रजकानीनसहोढगूढोत्पन्नपौनर्भवव्यतिरिक्तनियोगव्यभिचारोत्पन्नपुत्रविषयम्। एते च मूर्धावसिक्तादयो न क्षत्रियादिभ्यो भिन्नाः, किंतु तत्तद्ब्राह्मणादिजनितो( ? तत्वो)पाधिभेदान्मूर्धावसिक्तादिनामभेदभाजो भवन्ति। यदाह शङ्खः – 'ब्राह्मणेन क्षत्रियायामुत्पन्नः क्षत्रिय एव भवति। क्षत्रियेण वैश्यायां वैश्य एव। वैश्येन शूद्रायां शूद्र एव' इति। अप.

(४) ननु मूर्धावसिक्तत्वादीनि न जात्यन्तराणि, अनुलोमजानां मातृजातीयत्वात्। तदाह विष्णुः – 'समानवर्णासु पुत्राः समानवर्णा भवन्ति। अनुलोमजास्तु मातृसवर्णाः। प्रतिलोमजास्त्वार्यविगर्हिताः।' (विस्मृ. १६।१-३) इति। शङ्खोऽपि – 'क्षत्रियायां ..... शूद्र एव भवति' इति। नैष दोषः, अनयोर्वचनयोर्मातृजात्युदितधर्मप्राप्त्यर्थत्वात्, अन्यथा बीजोत्कर्षवैयर्थ्यापत्तेः। यथा क्षेत्रापकर्षः उत्कृष्टजातिनिवारकः एवं बीजोत्कर्षोऽपनिकृष्टजातिं कुतो न निवारयेत्? तस्मात् जात्यन्तराण्येव मूर्धावसिक्तत्वादीनि। पमा. १।५१२

(५) उभयत्र शूद्रीत्यत्राऽऽर्षत्वात् 'जातेः' इति (पासू. ४।१।६३) इति ङीष्। बाल. पृ. २८३

वर्णप्रतिलोमसंकरजाः

**[1]ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा।**
**शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः।।**
**[2]क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च।**
**शूद्रादायोगवं वैश्या जनयामास वै सुतम्।।**

(१) उत्कृष्टवर्णसंबन्धेन उत्कर्षदर्शनात्प्रातिलोम्येऽपि तथात्वाशङ्का मा भूदित्यत आह – ब्राह्मण्यामिति। भूतार्थप्रत्यययोगः प्रयोगानादित्वज्ञापनार्थः। अत एव स्मृत्यन्तरेष्वेकस्यैवार्थस्य अनेकसंज्ञादर्शनेऽपि देशभेदेन तथाविधप्रयोगसत्तानुमानम्, न पुनः पारिभाषिकत्वकल्पना, वेदेष्वप्यनेकविधसंज्ञोपलब्धेः। विश्व.

(२) प्रतिलोमजानाह – ब्राह्मण्यामिति। ब्राह्मण्यां क्षत्रियवैश्यशूद्रैरुत्पादिता यथाक्रमं सूतवैदेहकचण्डालाख्याः पुत्रा भवन्ति। तत्र चण्डालः सर्वधर्मबहिष्कृतः।

किंच – क्षत्रियेति। क्षत्रिया योषित् वैश्यान्मागधं नाम पुत्रं जनयति। सैव शूद्रात् क्षत्तारं पुत्रं जनयति। वैश्ययोषित् शूद्रादायोगवं पुत्रं जनयति। एते च सूतवैदेहकचण्डालमागधक्षत्त्रायोगवाः षट् प्रतिलोमजाः। एतेषां च वृत्तयः औशनसे मानवे च द्रष्टव्याः। मिता.

(३) सर्वधर्मबहिष्कृतः। सर्वेषां वर्णानां ये धर्मास्ते सर्वधर्माः, तेष्वनधिकारी, न पुनः सर्वेषु धर्मेष्वनधिकारीत्यर्थः। यत आह देवलः – 'स्वजातिशोधनं सर्वप्रणाम-

---

# शूशि., मुक्ता. मितागतम्। वीमि. मितागतम् अपगतं च।

(१) **यास्मृ.** १।९३; **विश्व.** १।९२ ज्जातस्तु (ज्जातश्च) बहिष्कृतः (विगर्हितः); **पमा.** १।५१३; **स्मृकौ.** १०; **मच.** १०।११ चण्डा (चाण्डा); **शूशि.** १० मचवत् : ४८ (ब्राह्मण्यां क्षत्रियात्सूतं) एतावदेव; **मुक्ता.** ७१; **शूक.** २६५ मचवत्; **संम.** ७६ मचवत्; **भाच.** १०।१२ कस्तथा (कः स्मृतः) चण्डा (चाण्डा) चतुर्थचरणो नास्ति; **बाल.** १।९४ पृ. २८३ कस्तथा (कः स्मृतः) चण्डा (चाण्डा) : १।९४ पृ. २८७ प्रथमचरणमात्रम् : ३।२०७-२०८ पृ. ११६; **सस्मृ.** ११६ कस्तथा (कः स्मृतः) (=) : १९९ धर्म (कर्म).

(२) **यास्मृ.** १।९४; **विश्व.** १।९३; **पमा.** १।५१३; **मच.** १०।११; **शूशि.** १०; **मुक्ता.** ७१; **शूक.** २६५; **संम.** ७६; **भाच.** १०।१२ द्वितीयचरणो नास्ति; **बाल.** १।९४ (=)अशुद्धिबहुलो ग्रन्थः; **सस्मृ.** ११६, १९९ अशुद्धिबहुलो ग्रन्थः.

स्तितिक्षा व्यवहारशुद्धिरपरावमानं स्वभृत्यपोषणं स्वकर्मानुष्ठानं प्रधानकर्मवर्जनमिति चण्डालधर्माः'। अप.

(४) सर्वधर्मोऽत्राहिंसादिसामान्यधर्मव्यतिरिक्तः। दीक.

(५) तथेति स्पृश्यत्वादिना सूतसदृश इत्यर्थः। जनयामासेति वृत्तकीर्तनेन पुराकल्परूपेण प्रकृतमर्थं द्रढयति। एवकारेण सर्वेषु प्रतिलोमजेषु व्यपदेशान्तरं व्यवच्छिनत्ति। तेनानुलोमजानामौपचारिकमातृजातिव्यपदेशवत्प्रतिलोमजानां स नास्तीति पर्यवसितार्थः। यद्वा, क्षत्रियैव शूद्रादेवेति भिन्नक्रमेणैवकारेण पुराणेषु क्षत्तृपदेनोच्यमानेऽपि विदुरे क्षत्तृत्वजात्यभावमभिप्रैति। अथवा क्षत्तारमेव, न तु प्रकृतपुराणविरोधेनाक्षत्तारम्, क्षत्तृपदस्य नामार्थत्वादित्याशयः। चैव( ? च वै)शब्दौ क्षत्रियावैश्यान्वितावन्यव्यवच्छेदार्थौ। वीमि.

माहिष्यकरणीजातो रथकारः,
अनुलोमप्रतिलोमौ क्रमेण
सन्तोऽसन्तश्च

**[१]माहिष्येण करण्यां तु रथकारः प्रजायते।**
**असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः।।**

(१) एवं तावत्प्रातिलोम्येनोत्कृष्टसंबन्धे सति चण्डालत्वादिप्राप्तिः। आनुलोम्ये पुनः माहिष्येणेति। क्षत्रियेण वैश्यायां जातो माहिष्यः, वैश्येन शूद्रायां करणी। तस्यां करण्यां माहिष्याद्रथकारो जायते। स चाऽऽधानाधिकृतो यस्मात् तस्मादानुलोम्येन युगान्तरेषूत्कर्षः, प्रदर्शनार्थत्वात्प्रातिलोम्येनापकर्ष इति द्रष्टव्यम्। तथा च स्पष्टीकरोति – असत्सन्तस्तु विज्ञेया इति। यथाक्रमेणासन्तः प्रतिलोमाः सन्तश्चानुलोमाः। तथा च गौतमः – 'प्रतिलोमात्तु धर्महीनः' (गौध. ४।२५) इति। विश्व.

(२) संकीर्णसंकरजात्यन्तरमाह – माहिष्येणेति। क्षत्रियेण वैश्यायामुत्पादितो माहिष्यः। वैश्येन शूद्रायामुत्पादिता करणी। तस्यां माहिष्येणोत्पादितो रथकारो नाम जात्या भवति। तस्य चोपनयनादि सर्वं कार्यं वचनात्। यथाऽऽह शङ्खः – 'क्षत्रियवैश्यानुलोमान्तरोत्पन्नो यो रथकारस्तस्येज्यादानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता च' इति। एवं ब्राह्मणक्षत्रियोत्पन्नमूर्धावसिक्तमाहिष्याद्यनुलोमसंकरे जात्यन्तरता उपनयनादिप्राप्तिश्च वेदितव्या, तयोर्द्विजातित्वात्। संज्ञास्तु स्मृत्यन्तरोक्ता द्रष्टव्याः। एतच्च प्रदर्शनमात्रमुक्तम्, संकीर्णसंकरजातीनामानन्त्याद्वक्तुमशक्यत्वात्। अत एतावदत्र विवक्षितम् – असन्तः प्रतिलोमजाः सन्तश्चानुलोमजा ज्ञातव्या इति। मिता.

(३) वैदिककर्माधिकारित्वादस्य संकीर्णयोनीनां मध्ये पृथगभिधानम्। हीनवर्णेनोत्कृष्टवर्णायां जनिताः प्रतिलोमजाः। उत्तमवर्णेन हीनवर्णायां परिणीतायामुत्पन्ना अनुलोमजाः। तत्र प्रतिलोमजा असन्तः असाधवः, वर्णबाह्या इत्यर्थः। अनुलोमजास्तु सन्तः साधवः, मातृसमानवर्णत्वात्क्षत्रियादिधर्माधिकारिणो भवन्ति। अप.

(४) तुशब्दो रथकार इत्यनन्तरं योज्यः। तेनान्येऽपि संकीर्णतमा लभ्यन्ते। आनन्त्यात्तु विशिष्य नोपदर्शिताः। रथकारस्तु प्रकर्षा( ? र्ष)विशेषाद्विशिष्योक्तः, तत्प्रदर्शनार्थमेव प्रजायत इति प्रशब्द उपात्तः।

एवं संकीर्णानुक्त्वा तद्धर्माननतिसंक्षेपेण विवक्षन्नाह – असत्सन्तस्त्विति। प्रतिलोमजाः सूतादयः अनुलोमजाः मूर्धाभिषिक्तादयः यथाक्रमम् असन्तः असाधवः अनुलोमजादपकृष्टाः, मातृवर्णधर्मानधिकारात्, सन्तः साधवः प्रतिलोमजादुत्कृष्टाः, मातृवर्णधर्माधिकारात्, विज्ञेयाः मन्वादिशास्त्रानुसारतो वैविध्येन ज्ञेयाः। अत्र प्रतिलोमानुलोमजा इति साक्षात्परंपरासाधारणं जन्यत्वमभिप्रेतम्। तेन मूर्धाभिषिक्तजातीयस्त्रीपुंसाद्योः सूतजातीयस्त्रीपुंसाद्योर्वा जातानामपि ग्रहणमित्युक्तप्रायम्। तुशब्देन चकारसमानार्थेन प्रतिलोमानुलोमजास्त्विति क्रमवता सपिण्डस्त्र्यादिवेदनमूलकान् 'असपिण्डां यवीयसीम्' इत्यादिना विवाहप्रकरणीयवचनेन कटाक्षितान्, 'सावित्रीपतिता व्रात्याः' इत्यनेनोपनयनप्रकरणे सूचितान् व्रात्यानन्यांश्चैवंविधान् गौणसंकीर्णान् समुच्चिनोति। तेऽपि स्वमध्येऽसत्सन्तो विज्ञेया इत्यर्थः। वीमि.

---

(१) **यास्मृ.** १०।९५; **विश्व.** १।९४ लोमजाः (लोमतः); **पमा.** १।५१४ उत्त. : १।५१६ पू. (=); **स्मृकौ.** ८ करण्यां (करिण्यां) पू.; **शूशि.** २२ उत्तरार्धं (वर्तयेच्छिल्पवृत्त्याऽत्र सर्वस्मिन् शिल्पशास्त्रवित्।।) : ३१ पू., द्विवारम् (=); **मुक्ता.** ७२ उत्त.; **शूक.** २६२ पू.; **संम.** ७६; **सस्मृ.** ११६, १९९ स्मृकौवत्.

विशिष्टदम्पतिपरंपराजनितेषु सप्तमादौ जात्युत्कर्षः,
अनापद्यापद्वृत्तिमत्परंपराजनितेषु सप्तमादौ
जात्यपकर्षः, संकीर्णसंकरजेष्वपि
आनुलोम्यप्रातिलोम्यप्रयुक्ते
सदसत्त्वे

§ [1]**जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्।।**

## नारदः

आनुलोम्यं वैधम्, प्रातिलोम्यं
निषिद्धम्

[2]**आनुलोम्येन वर्णानां यज्जन्म स विधिः स्मृतः।
प्रातिलोम्येन यज्जन्म स ज्ञेयो वर्णसंकरः।।**

आनुलोम्येन ब्राह्मणस्य चतसृषु यदपत्यजन्म, क्षत्रियस्य तिसृषु, वैश्यस्य द्वयोः, शूद्रस्यैकस्यां स विधिः विधीयते शास्त्रे धर्मः। प्रातिलोम्येन शूद्रस्य तिसृषु वैश्यादिस्त्रीषु, वैश्यस्य द्वयोः, क्षत्रियस्यैकस्याम्, एवं वर्णसंकरः प्रतिषिद्धः अधर्मः, राज्ञः प्रमादादित्यर्थः।

नाभा.

वर्णानुलोम्यप्रातिलोम्ययो-
स्त्रैविध्यम्

**अनन्तरः स्मृतः पुत्रः पुत्र एकान्तरस्तथा।
द्व्यन्तरश्चाऽऽनुलोम्येन तथैव प्रतिलोमतः।।**

आनुलोम्येन सवर्णानन्तरैकान्तरद्व्यन्तराश्चत्वारो ब्राह्मणस्य पुत्राः, एवं त्रयः क्षत्रियस्य सवर्णानन्तरैकान्तराः, तथा वैश्यस्य सवर्णानन्तरौ द्वौ, शूद्रस्य सवर्ण एव। प्रतिलोमतोऽपि शूद्रस्य त्रयो वैश्यादिपुत्राः, वैश्यस्य द्वौ क्षत्रिया-ब्राह्मणीपुत्रौ, क्षत्रियस्यैको ब्राह्मणीपुत्रः। नामत एषां विशेषं वक्ष्यति। रिक्थविभागविवक्षयोपन्यासः, स्त्रीपुंससंयोग-फलत्वात् तासां च विवाहस्योक्तत्वात्।

नाभा.

वर्णानुलोमप्रतिलोमजाः

**उग्रः पारशवश्चैव निषादश्चानुलोमतः।
उत्तमेभ्यस्त्रयस्त्रिभ्यः शूद्रापुत्राः प्रकीर्तिताः।।**

ब्राह्मणादिभ्यः क्रमेणोग्रपारशवनिषादास्त्रयस्त्रिभ्योऽनुलोमत इति केचित्। अन्ये – ना(न्य ?)त्र यथासंख्यमुक्तम्। 'उत्तमेभ्यस्त्रिभ्यस्त्रयः' इत्येतावदुक्तम्। अतो ब्राह्मणात् पारशवः, निषादः क्षत्रियात्, उग्रो वैश्यादिति।

नाभा.

**ब्राह्मण्यामपि चण्डालसूतवैदेहका अपि।
अपरेभ्यस्त्रयस्त्रिभ्यो विज्ञेयाः प्रतिलोमतः।।**

प्रतिलोमतोऽपि ब्राह्मण्यां शूद्राच्चण्डालः, क्षत्रियात् सूतः, वैदेहको वैश्यात्। अपरेभ्य एवैते त्रयस्त्रिभ्यः।

नाभा.

* **अम्बष्ठो मागधश्चैव क्षत्ता च क्षत्रियासुताः।
आनुलोम्येन तत्रैको द्वौ ज्ञेयौ प्रतिलोमतः।।**

अम्बष्ठ आनुलोम्येन क्षत्रियस्य वैश्यायां(?) जातः। मागधो वैश्यात् क्षत्रियायां जातः। क्षत्ता शूद्रात् क्षत्रियायां जातः। एते क्षत्रियासुताः। नाभा.

**वैश्यापुत्रास्तु दौष्यन्तयवनायोगवा अपि।
प्रातिलोम्येन तत्रैको द्वौ ज्ञेयावनुलोमजौ।।**

---

§ व्याख्यासंग्रहः 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(१) **यास्मृ.** १।९६ शेषः स्थलादिनिर्देशः 'वर्णाः तद्वृत्तयश्च' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(२) **नासं.** १३।१०५-११७.

* एतदादिः कियांश्चिन्मूलग्रन्थो व्याख्यानग्रन्थस्य विरोधाकुलः प्रतिभासते। तथाहि – पूर्वयोः श्लोकयोः शूद्रापुत्राणां ब्राह्मणीपुत्राणां चोक्तत्वात् उत्तरश्लोके वैश्यापुत्राणां वक्ष्यमाणत्वाच्च मध्यमेऽस्मिन् श्लोके क्षत्रियापुत्राणामेव वक्तव्यत्वात् श्लोकशब्दतस्तस्यैवार्थस्य स्पष्टं प्रतिपत्तेश्च 'ब्राह्मणात् क्षत्रियायां जातोऽम्बष्ठः' इत्यस्मिन्नर्थे मूलतात्पर्यं प्रतीयते। अतः अम्बष्ठविषये 'क्षत्रियस्य वैश्यायां जातः' इति व्याख्यानं मूलविरुद्धम्। किंच, उत्तरश्लोकव्याख्याने वैश्यापुत्रोक्तेरवशिष्टत्वं बोधयितुं 'शूद्राब्राह्मणीक्षत्रियापुत्रा उक्ताः' इति यदुक्तार्थकथनं तेन विरोधात् व्याख्यानस्य स्वविरोधश्च। तथा 'सवर्णो ब्राह्मणीपुत्रः' इत्युत्तरश्लोके अम्बष्ठस्य क्षत्रियानन्तरत्वोक्तिद्वारा क्षत्रियाद्वैश्यायां जातत्वस्य वक्ष्यमाणत्वात् मूलस्य स्वविरोधश्च। वक्ष्यमाणमूलार्थेन प्रकृतव्याख्यानस्य संवादात् नैकान्ततो व्याख्यानस्य प्रामादिकत्वमपि वक्तुं शक्यते इत्यपरं चित्तवैचित्र्यकारणम्। अपि च उपरिनिर्दिष्टवक्ष्यमाणश्लोकावलम्बिनीं टिप्पणीमनुरुध्य ब्राह्मणात्क्षत्रियायां जातस्य सवर्णसंज्ञकत्वे मूलस्यापरः स्वोक्तिविरोधः स्यात्। तदेतद्दुस्तरं बुद्धिकौण्ठ्यमापतितम्।

शूद्राब्राह्मणीक्षत्रियापुत्रा उक्ताः प्रतिलोमानुलोमतः। वैश्यापुत्रा अपि ब्राह्मणाद्दौष्यन्तः, क्षत्रियाद्यवनः अनुलोमौ। शूद्रात् प्रतिलोम आयोगव इति।

नाभा.

संकीर्णसंकरजाः

**सूताद्याः प्रतिलोमास्तु ज्ञेयावप्रतिलोमजौ।**
**ससंकराः श्वपाकाद्यास्तेषां त्रिःसप्तको गणः।।**

सूतवैदेहकचण्डालाः प्रतिलोमजा ज्ञेयाः। अप्रतिलोमजौ सूतात् वैदेहकायां वैदेहकाच्चण्डाल्याम्। एवं प्रतिलोमजेषु अप्रतिलोमजा द्रष्टव्याः। तेषां ससंकराः श्वपाकाद्याः त्रिःसप्त एकविंशतिर्गणो ज्ञेयः। चण्डालश्चण्डालीवैदेहकसूतब्राह्मणादिकन्यासु सप्त बाह्यान् जनयति। तथा वैदेहकस्तथा सूतः। अतः (स)संकराः श्वपाकाद्याः। 'उग्रात्तु जातः क्षत्तायां श्वपाक इति कीर्त्यते। वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेन उच्यते।।' इति भार्गव्यां संहितायां विस्तर उक्तस्तत एव द्रष्टव्यः। संज्ञास्तु तत्रान्यथैव। शूद्रप्रतिलोमस्य सप्त चतुर्षु चत्वारः। क्षत्रियावैश्याशूद्रापुत्रैः सप्त। एवं वैश्यक्षत्रियप्रतिलोमयोरपीति त्रिःसप्तको बाह्यो गणः। तद्भेदाः श्वपाकादयोऽनन्ताः।　　नाभा.

आनुलोम्येन वर्णानन्तरजाः
सवर्णाः

**+ सवर्णो ब्राह्मणीपुत्रः क्षत्रियायामनन्तरः।**
**अम्बष्ठोग्रौ तथा पुत्रावेवं क्षत्रियवैश्ययोः।।**

ब्राह्मणात् ब्राह्मण्यां सवर्णः। क्षत्रियायां ब्राह्मणादनन्तरो मूर्धाभिषिक्तः। क्षत्रियेण वैश्यायामनन्तरोऽम्बष्ठः। वैश्येन शूद्रायामनन्तर उग्रः।　　नाभा.

आनुलोम्येन वर्णैकान्तरद्व्यन्तरजाः

**एकान्तरस्तु दौष्यन्तो वैश्यायां ब्राह्मणात् सुतः।**
**शूद्रायां क्षत्रियात् तद्वन्निषादो नाम जायते।।**

अनन्तरानुक्त्वा पूर्वमविभागेनोक्तानेकान्तरान् प्रतिपादयति – एकान्तर इति। ब्राह्मणेन वैश्यायां दौष्यन्तः। क्षत्रियेण शूद्रायां निषादः। वैश्यस्यैकान्तरो नास्ति। एवमित्यनेन सवर्णासुतः सर्वेषां सवर्ण इत्येतत् प्रतिपाद्यते।

नाभा.

**शूद्रा पारशवं सूते ब्राह्मणाद्व्यन्तरं सुतम्।**
**आनुलोम्येन वर्णानां पुत्रा एते प्रकीर्तिताः।।**

द्व्यन्तरो ब्राह्मणस्यैव, नान्यस्य। शूद्रायां ब्राह्मणात् पारशवः। वर्णानामानुलोम्येन पुत्राः प्रकीर्तिताः।

नाभा.

प्रातिलोम्येन वर्णानन्तरैकान्तरद्व्यन्तरजाः

**सूतश्च मागधश्चोभौ पुत्रावायोगवस्तथा।**
**प्रातिलोम्येन वर्णानां तद्वदेतेऽप्यनन्तराः।।**

प्रतिलोमानन्तराः क्षत्रियात् ब्राह्मण्यां सूतः, मागधो वैश्यात् क्षत्रियायाम्, आयोगवः शूद्रात् वैश्यायाम्।

नाभा.

**ब्राह्मण्येकान्तरं वैश्यात्सूते वैदेहकं सुतम्।**
**क्षत्तारं क्षत्रिया शूद्रात्पुत्रमेकान्तरं तथा।।**

प्रतिलोमा एकान्तरा उच्यन्ते – ब्राह्मेति। ब्राह्मणी वैश्याद्वैदेहकं सूते। क्षत्रिया शूद्रात् क्षत्तारम्।

नाभा.

**द्व्यन्तरः प्रातिलोम्येन पापिष्ठः संकरे सति।**
**चण्डालो जायते शूद्राद्ब्राह्मणी यत्र मुह्यति।।**

द्व्यन्तरं शूद्रस्यैव, नान्यस्य। स उच्यते – द्व्यन्तर इति। प्रातिलोम्येन द्व्यन्तरः शूद्राद्ब्राह्मण्यां जातश्चण्डालः। ब्राह्मणी तत्राऽऽकुलीभवति।

नाभा.

---

+ श्लोकेऽस्मिन् 'ब्राह्मणीपुत्रः' इति पाठो विचार्यः। पाठेऽस्मिन् पञ्च दोषाः समापद्यन्ते। ते च यथा – (१) प्रथमद्वितीयचरणात्मकवाक्यभेदः, (२) उत्तरश्लोकयोरेकान्तरद्व्यन्तराणां वक्ष्यमाणत्वेन संकीर्णानां प्रकृतत्वेन च अत्रानन्तराणामेव वक्तव्यत्वेन व्याख्यानानुरोधेन ब्राह्मणाद्ब्राह्मण्यां जातस्याभिन्नवर्णार्थकसवर्णशब्दबोध्यस्य ब्राह्मणस्यानाकाङ्क्षितस्योक्तिः, (३) तत्रापि त्रीन् सवर्णानुपेक्ष्यैकस्यैवोक्तिः, (४) 'केन जनितः?' इति जनकविषये वाक्यस्य साकाङ्क्षत्वम्, (५) द्वितीयवाक्यमपि 'केन कः जनितः?' इति जन्यजनकोभयविषये साकाङ्क्षं चेति। 'ब्राह्मणात्पुत्रः' इति पाठश्चेत् न कोऽपि दोषः। मूर्धाभिषिक्तस्य सदृशवर्णार्थकसवर्णशब्देन व्यवहारस्य मनुगौतमादिस्मृतिसिद्धत्वेन सवर्णशब्देन जन्यविषयकाकाङ्क्षा शाम्यत्येव। तस्मात् 'ब्राह्मणात्पुत्रः' इति मुनिसंमतः पाठः संभाव्यते।

## व्यासः

द्विजद्विजजातीयाजातानुलोमानां
संस्कार्यता

[1]विप्रवद्विप्रविन्नासु क्षत्रविप्रासु विप्रतः।
जातकर्माणि कुर्वीत ततः शूद्रासु शूद्रवत्।
वैश्यासु विप्रक्षत्राभ्यां ततः शूद्रासु शूद्रवत्।।

प्रतिलोमाः शूद्रेभ्योऽप्यधमाः,
चण्डालोऽधमतरः,
चण्डालत्रैविध्यम्

अधमादुत्तमायां तु जातः शूद्राधमः स्मृतः।
ब्राह्मण्यां शूद्रजनितश्चण्डालो धर्मवर्जितः।।
कुमारीसंभवस्त्वेकः सगोत्रायां द्वितीयकः।
ब्राह्मण्यां शूद्रजनितश्चण्डालस्त्रिविधः स्मृतः।।

वर्धक्यादयः कर्मतः
शूद्राभिन्नाः

वर्धकी नापितो गोप आशापः कुम्भकारकः।
वणिक्किरातकायस्थमालाकारकुटुम्बिनः।
एते चान्ये च बहवः शूद्राभिन्नाः स्वकर्मभिः।।

चर्मकारादयोऽन्त्यजाः
अव्यवहार्याः

चर्मकारो भटो भिल्लो रजकः पुष्करो नटः।
वराटो मेदचाण्डालौ दासश्वपचकोलिकाः।।
एतेऽन्त्यजाः समाख्याता ये चान्ये च गवाशनाः।
एषां संभाषणात्स्नानं दर्शनादर्कवीक्षणम्।।

ब्राह्मण्यां ब्राह्मणाद्गूढजातो
विप्रो यागाध्ययन-
वर्जितः

[2]ब्राह्मण्यां ब्राह्मणस्यैव प्रमादाद्गूढजातकः।
सोऽपि विप्रस्तु विज्ञेयो योगा(? यागा)ध्ययन-
वर्जितः।।

(१) व्यास्मृ. १।७-१३.
(२) सस्मृ. ११५.

कुण्डगोलकयोरुत्पत्ति-
र्वृत्तिश्च

ब्राह्मण्यां सधवायां तु विप्राज्जातस्तु कुण्डकः।
विधवायां तु गोलः(? गोलकः) स्यात्तौ श्राद्ध-
विगर्हितौ।।
तौ च देवस्य पूजार्हावुपनेयौ(?) समन्त्रकम्।
आरामपोषणं कुण्डो हिङ्गुविक्रयं गोलकः।।

शुद्धसंकरयोर्विवेकः

[1]भार्याजाताः समानाः स्युः संकराः स्युरतोऽन्यथा।।

स्वजातीया एव
संस्कार्याः

[2]ये तु जाताः समानासु संस्कार्याः स्युरतोऽन्यथा।।

निषादस्योत्पत्ति-
र्वृत्तिश्च

[3]शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात्।।

क्षत्रियायां शूद्राद्व्यतिक्रमादुत्पन्नो निषादः प्रतिलोमजः। असावेव कर्मणा मत्स्यघ्न इति व्यपदेशभाक्।

स्मृकौ. ११

ब्राह्मणशूद्रासंकर-
निन्दा

[4]शूद्रायोनौ पतद्बीजं हाहाशब्दं द्विजन्मनः।
कृत्वा पुरीषगर्तेषु पतितोऽस्मीति दुःखितः।।
मामधः पातयेदेष पापात्मा काममोहितः।
अधोगतिं व्रजेत्क्षिप्रमिति शप्त्वा पतेत्तु तत्।।

## देवलः

चण्डालधर्माः

[5]स्वजातिशोधनं सर्वप्रणामस्तितिक्षा व्यवहारशुद्धिर-परावमानः स्वभृत्यपोषणं स्वकर्मानुष्ठानं प्रधानकर्म-वर्जनमिति चण्डालधर्माः।।

(१) मवि. १०।५; शूशि. ६; बाल. १।९० पृ. २७८.
(२) ममु. १०।५.
(३) स्मृकौ. ११; शूक. २६५; बाल. १।९१ पृ. २८१.
(४) मुक्ता. १३४.
(५) अप. १।९३-९४ मानः (मानं); वीमि. १।९३ सर्व + (जन) पोषणं (परिपोषणं) (स्वकर्मानुष्ठानं०) चण्डा (चाण्डा).

¤ ततश्च वर्णधर्मः प्रधानकर्म। स्वकर्म स्वकीयवृत्तिः।

अप. १।९३

सवर्णाम्बष्ठौ

[1]**ब्राह्मणात्क्षत्रियायां तु सवर्णो नाम जायते।**
**क्षत्रियाच्चैव वैश्यायां जातोऽम्बष्ठ इति स्मृतः।।**

वर्णप्रतिलोमजाः

[2]**शूद्रादायोगवः क्षत्ता चण्डालः प्रतिलोमजाः।**
**वैश्यायां क्षत्रियायां च ब्राह्मण्यां च यथाक्रमम्।।**
**तथैव मागधो वैश्याज्जातो वैदेहकस्तथा।**
**ब्राह्मण्यां क्षत्रियाज्जातः सूतो जात्या न कर्मणा।।**

सवर्णानुलोमप्रतिलोमेषु पूर्वपूर्वस्य श्रेष्ठत्वम्

[3]**तेषां सवर्णजाः श्रेष्ठास्तेभ्योऽन्वगनुलोमजाः।**
**अन्तराला बहिर्वर्णाः पतिताः प्रतिलोमजाः।।**

सर्वेभ्यस्तावत्सवर्णजाः श्रेष्ठाः। तेभ्योऽन्ये अन्तरालाः विजातीयमातापितृजन्याः असवर्णा इति यावत्। ते चानुलोमप्रतिलोमभेदाद्द्विविधाः। तत्राऽऽद्याः उत्तमादधमयोनिसंभूतत्वात् तेभ्यः जनकेभ्यः अन्वक् मातृसमानधर्मत्वात् किंचित् न्यूनाः। द्वितीयास्तु योन्युत्कर्षेऽपकृष्टबीजजत्वाद्वर्णबाह्याः पतिताः अधमा इत्यर्थः। पतितत्वाभिधानं संपूर्णसंस्कारपरिभ्रष्टत्वात्। * शूशि. ११

वैश्यशूद्राजातस्य शूद्रत्वम्

[4]**वैश्यात्तु शूद्रकन्यायां शूद्र एवाभिजायते।।**

माहिषिकशब्दव्युत्पत्तिः

[5]**महिषीत्युच्यते भार्या सा चैव व्यभिचारिणी।**
**तस्यां यो जायते गर्भः स वै माहिषकः स्मृतः।।**

अववाटस्योत्पत्तिर्धर्मश्च

[1]**द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते।**
**अववाट इति ख्यातः शूद्रधर्मा स जातितः।।**

जातिः जननम्। तस्मान्निन्दितजन्मना शूद्रधर्मा जा(य)त इत्यर्थः।

स्मृकौ. ९

व्रात्योत्पत्तिः

[2]**व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः।**
**उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः।।**

(१) सवर्णास्वपि सवर्णैर्विवाहमन्तरेण व्यभिचारादुत्पादिता इत्यर्थः। ते च सुताः व्रतहीनाः उपनयनव्रतरहिताः, अत एवासंस्कार्याः।

स्मृकौ. १०

(२) अपिशब्दादसवर्णानुलोमासु जातानां सुतरामसंस्कार्यत्वमुक्तं भवति।

संग. ६३९

## उशना

भर्तृजजारजरूपा वर्णसंकरजा वर्णसंकीर्णसंकरजाश्च, तेषां वृत्तयः समाचाराश्च

[3]**अतः परं प्रवक्ष्यामि जातिवृत्तिविधानकम्।**
**अनुलोमविधानं च प्रतिलोमविधिं तथा।**
**सान्तरालकसंयुक्तं सर्वं संक्षिप्य चोच्यते।।**

---

¤ यतो वर्णधर्मातिरिक्तो धर्मो विहितस्तस्मादित्यर्थः।

* बाल. शूशिगतम्।

(१) **पमा.** १।५१२.

(२) **पमा.** १।५१३.

(३) **पमा.** १।५१४; **शूशि.** १०-११; **मुक्ता.** ७०; **बाल.** १।९४ पृ. २८४.

(४) **स्मृकौ.** ८ : ९ वैश्यात्तु (वैश्याद्वै).

(५) **पमा.** १।६९४.

(१) **अप.** १।९२ पृ. ११८ अववाट (अवरीट); **मवि.** १०।५ धर्मा (जन्मा); **ममु.** १०।५; **स्मृकौ.** ९ उत्तरार्धे (अवर्ण्योढ इति ज्ञेयः शूद्रधर्मा च जातितः।।) : ४० उत्तरार्धे (अवर्णोढ इति ज्ञेयः शूद्रधर्मा च जातितः।।); **शूशि.** ५ यः पित्रा (पित्रा यः) अववाट इति (आरोट इति च); **शूक.** २५३-२५४ उत्तरार्धे (सवर्णोद इति ज्ञेयः शूद्रधर्मा च जातितः।।); **वीमि.** १।९० पृ. १६१ र्णायां (र्णासु) अववाट (आयवेट); **संग.** ६३९ अववाट (अवरोढ) ख्यातः (ज्ञेयः); **बाल.** १।९० पृ. २७८ अववाट (अवरोढ).

(२) **अप.** १।९२ पृ. ११८; **मवि.** १०।५ नास्त्वसं (ना असं); **ममु.** १०।५ नास्त्वसं (ना न सं) सवर्णा (स्वतन्त्रा) इति (इव); **स्मृकौ.** १०; **शूशि.** ५; **शूक.** २५४; **संग.** ६३९; **बाल.** १।९० पृ. २७८ ममुवत्.

(३) **औस्मृ.** १-२.

[1]नृपाद्ब्राह्मणकन्यायां विवाहेषु समन्वयात्।
जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः।
वेदानर्हस्तथा चैषां धर्माणामनुबोधकः।।
[2]सूताद्विप्रप्रसूतायां सुतो वेणुक उच्यते।
नृपायामेव तस्यैव जातो यश्चर्मकारकः।।
[3]ब्राह्मण्यां क्षत्रियाच्चौर्याद्रथकारः प्रकीर्तितः।
वृत्तं च शूद्रवत्तस्य द्विजत्वं प्रतिषिध्यते।।
यानानां ये च वोढारस्तेषां च परिचारकाः।
शूद्रवृत्त्या तु जीवन्ति न क्षात्रं धर्ममाचरेत्।।
ब्राह्मण्यां वैश्यसंसर्गाज्जातो मागध उच्यते।
बन्दित्वं ब्राह्मणानां च क्षत्रियाणां विशेषतः।।
प्रशंसावृत्तिको जीवेद्वैश्यप्रेषकरस्तथा।
ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डाल उच्यते।।
[4]सीसमाभरणं तेषां कार्ष्णायसमथापि वा।
वर्ध्री कण्ठे समाबध्य झल्लरीं कक्षतोऽपि वा।।
[5]मलापकर्षणं ग्रामे पूर्वार्धे परिशुद्धिकम्।
नापराह्णे प्रविष्टोऽपि बहिर्ग्रामाच्च नैर्ऋते।
पिण्डीभूता भवन्त्यत्र नोचेद्वध्या विशेषतः।।
[6]चाण्डालाद्वैश्यकन्यायां जातः श्वपच उच्यते।
श्वमांसभक्षणं तेषां श्वान एव तु तद्धनम्।।

(१) **औस्मृ.** २-३; **शूशि.** १५ वेदा (वेशा) विश्वंभरशास्त्रे; **शूक.** २६६ सूतोऽत्र (सूतस्तु) विश्वंभरशास्त्रे; **बाल.** १।९४ पृ. २८७ (=).

(२) **औस्मृ.** ४.

(३) **औस्मृ.** ५-८.

(४) **औस्मृ.** ९; **शूशि.** १६ कार्ष्णा (काला) झल्लरीं (झल्लटीं) विश्वंभरशास्त्रे; **शूक.** २६७ कार्ष्णा (काला); **बाल.** १।९४ पृ. २८८ कार्ष्णा (काला) कक्ष (कच्छ).

(५) **औस्मृ.** १०-११; **शूशि.** १६ पूर्वार्धे (पूर्वाह्णे) विश्वंभरशास्त्रे; **शूक.** २६७ ग्रामे पूर्वार्धे (कुर्युः पूर्वाह्णे) भवन्त्यत्र (वसेयुरेते) द्वितीयार्धं नास्ति, विश्वंभरशास्त्रे; **बाल.** १।९४ पृ. २८८ पूर्वार्धे प (कुर्याद्भूप) (=).

(६) **औस्मृ.** ११-१२.

[1]नृपायां वैश्यसंसर्गादायोगव इति स्मृतः।
तन्तुवाया भवन्त्येते वसुकांस्योपजीविनः।
शालिकाः केचिदत्रैव जीवनं वस्त्रनिर्मितम्।।
[2]आयोगवेन विप्रायां जातास्ताम्रोपजीविनः।
तस्यैव नृपकन्यायां जातः सूनिक उच्यते।।
सूनिकस्य नृपायां तु जाता उद्बन्धकाः स्मृताः।
निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्यतः।
नृपायां वैश्यतश्चौर्यात्पुलिन्दश्चेति कीर्तितः।
पशुवृत्तिर्भवेत्तस्य हन्याद्वा दुष्टसत्त्वकान्।।
नृपायां शूद्रसंसर्गाज्जातः पुल्कस उच्यते।
सुरावृत्तिं समारुह्य मधुविक्रयकर्मणा।
कृतकानां सुराणां च विक्रेता पाचको भवेत्।।
पुल्कसाद्वैश्यकन्यायां जातो रजक उच्यते।
नृपायां शूद्रतश्चौर्याज्जातो रञ्जक उच्यते।
वैश्यायां रञ्जकाज्जातो नर्तको गायको भवेत्।।
वैश्यायां शूद्रसंसर्गाज्जातो वैदेहकः स्मृतः।
अजानां पालनं कुर्यान्महिषीणां गवामपि।
दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत्।।
वैदेहकात्तु विप्रायां जाताश्चर्मोपजीविनः।
नृपायामेव तस्यैव सूचिकः पाचकः स्मृतः।।
वैश्यायां शूद्रतश्चौर्याज्जातश्चक्री च उच्यते।
तैलपिष्टकजीवी तु लवणं भावयन्पुनः।।
विधिना ब्राह्मणः प्राप्य नृपायां तु समन्त्रकम्।
जातः सुवर्ण इत्युक्तः सोऽनुलोमद्विजः स्मृतः।।
[3]आथर्वणक्रियां कुर्वन्नित्यनैमित्तिकीं क्रियाम्।।
[4]क्षत्रियाविप्रसंयोगाज्जातो मूर्धावसिक्तकः।
राजन्यः क्षत्रधर्मेभ्योऽभ्यधिकः संप्रकीर्तितः।।

(१) **औस्मृ.** १२-१३; **शूशि.** १७ तृतीयार्धमात्रम्; **शूक.** २६६ शालिकाः (शीलिकाः); **बाल.** १।९४ पृ. २८९ वसु (वस्त्र).

(२) **औस्मृ.** १४-२४.

(३) **औस्मृ.** २४ आथर्वण (अथ वर्ण); **शूशि.** १४; **शूक.** २६२; **बाल.** १।९४ पृ. २८५.

(४) **शूशि.** १४ भ्योऽभ्य (भ्योऽप्य) संप्रकी (स प्रकी); **शूक.** २६२; **बाल.** १।९४ पृ. २८५.

[1]अश्वं रथं हस्तिनं वा वाहयेद्वै नृपाज्ञया।
सैनापत्यं च भैषज्यं कुर्याज्जीवेत वृत्तिषु।।
[2]नृपायां विप्रतश्चौर्यात्संजातो यो भिषक्स्मृतः।
अभिषिक्तनृपस्याऽऽज्ञां प्रतिपाल्य तु वैद्यकम्।।
[3]आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्ममाचरेत्।
ज्यौतिषं गणितं वाऽपि कायिकीं वृत्तिमाचरेत्।।
[4]नृपायां विधिना विप्राज्जातो नृप इति स्मृतः।
नृपायां नृपसंसर्गात्प्रमादाद्गूढजातकः।।
[5]सोऽपि क्षत्रिय एव स्यादभिषेके तु वर्जितः।
अभिषेकं विना प्राप्य गोज इत्यभिधायकः।।
[6]सर्वं तु राजवत्तस्य शस्यते पट्टबन्धनम्।
पुनर्भूकरणे राज्ञां नृपकानीन एव च।।
[7]वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते।
कृष्याजीवो भवेत्तस्य तथैवाऽऽग्नेयवृत्तिकः।।
[8]नरवाजिगजादीनां चिकित्सा तस्य जीविका।।
[9]ध्वजिनीजीविका वाऽपि अम्बष्ठाः शस्त्रजीविनः।।

(१) **औस्मृ.** २५; **शूशि.** १४ वेत (वेच्च); **शूक.** २६२ सैना (सेना) शेषं शूशिवत्; **बाल.** १।९४ पृ. २८५ सैनापत्यं (जीवनार्थं) शेषं शूशिवत्.

(२) **औस्मृ.** २६ वैद्यकम् (वैद्यकः); **शूशि.** १४ प्रति (परि) वैद्यकम् (बन्दकः); **बाल.** १।९४ पृ. २८५ शूशिवत्.

(३) **औस्मृ.** २७; **शूशि.** १४ तन्त्रोक्तं (तत्रोक्तं); **शूक.** २६२ माचरेत् (तश्चरेत्) ज्यौति (ज्योति) शेषं शूशिवत्; **बाल.** १।९४ पृ. २८५ शूशिवत्.

(४) **औस्मृ.** २८; **शूशि.** १४ उत्त.; **बाल.** १।९४ पृ. २८५ उत्त.

(५) **औस्मृ.** २९; **शूशि.** १४ वर्जितः (गर्हितः) पू.; **बाल.** १।९४ पृ. २८५ शूशिवत्, पू.

(६) **औस्मृ.** ३०.

(७) **औस्मृ.** ३१; **शूशि.** १४ वैश्यायां (शूद्रायां) उत्तरार्धं (कृष्याजीवी भवेत्सोऽपि तथैवाऽऽग्रेयनर्तकः।।); **शूक.** २६२ वाऽऽग्नेयवृत्तिकः (वाग्रे प्रवर्तकः); **बाल.** १।९४ पृ. २८५ जीवो (जीवी) वाऽऽग्नेयवृत्तिकः (व च भिषग्वरः).

(८) **शूशि.** १४ जादीनां (जानां तु); **शूक.** २६२; **बाल.** १।९४ पृ. २८५.

(९) **औस्मृ.** ३२.

[1]वैश्यायां विप्रतश्चौर्यात्कुम्भकारः प्रजायते।
कुलालवृत्त्या जीवेत नापिता वा भवन्त्युत।
सूतके प्रेतके वाऽपि दीक्षाकालेऽथ वापनम्।।
[2]नाभेरूर्ध्वं तु वपनं तस्मान्नापित उच्यते।।
† [3]कायस्थ इति जीवेत्तु विचरेच्च इतस्ततः।
काकाल्लौल्यं यमात्क्रौर्यं स्थपतेरथ कृन्तनम्।
आद्याक्षराणि संगृह्य कायस्थ इति कीर्तितः।।
शूद्रायां विधिना विप्राज्जातः पारशवो मतः।
भद्रकालीं समाश्रित्य जीवेयुः पूजकाः स्मृताः।।
शिवाद्यागमविद्याद्यैस्तथा मर्दलवृत्तिभिः।
तस्यां वै चौरसद्वृत्तो( ? संवृत्त्या) निषादो जात उच्यते।
वने दुष्टमृगान्हत्वा जीवनं मांसविक्रयम्।।
नृपाज्जातोऽथ गूह्यायां वैश्यायां विधिना सुतः।
वैश्यवृत्त्या तु जीवेत न क्षात्रं धर्ममाचरेत्।
तस्यां तस्यैव चौर्येण मणिकारः प्रजायते।।
मणीनां राजतां कुर्यान्मुक्तानां वेधनक्रियाम्।
प्रवालानां च सूत्रित्वं शङ्खानां वलयक्रियाम्।।
शूद्रायां विप्र( ? नृप)संसर्गाज्जात उग्र इति स्मृतः।
नृपस्य दण्डधारः स्याद्दण्डं दण्ड्येषु संचरेत्।।
तस्यां वै चौरसंवृत्त्या जातः शूलिक उच्यते।
जातदुष्टान्समारोप्य शूलकर्मणि योजयेत्।।
शूद्रायां वैश्यसंसर्गाद्विधिना सूचकः स्मृतः।
सूचकाद्विप्रकन्यायां जातस्तक्षक उच्यते।।
शिल्पकर्माणि चान्यानि प्रासादलक्षणं तथा।
नृपायामेव तस्यैव जातो यो मत्स्यबन्धकः।।
शूद्रायां वैश्यतश्चौर्यात्कटकार इति स्मृतः।
वसिष्ठशापात्त्रेतायां केचित्पारशवास्तथा।।

† अतः पूर्वः श्लोकोऽर्धश्लोको वा उच्छिन्नः स्यादिति भाति।

(१) **औस्मृ.** ३२-३३; **शूशि.** ३२ तृतीयार्धमात्रम्; **बाल.** १।९४ पृ. २९२ तृतीयार्धमात्रम्.

(२) **औस्मृ.** ३४; **शूशि.** २२; **बाल.** १।९४ पृ. २९२ द्वितीयचरणे (ते नासौ नापितः स्मृतः).

(३) **औस्मृ.** ३४-५१.

**वैखानसेन केचित्तु केचिद्भागवतेन च।**
**वेदशास्त्रावलम्बास्ते भविष्यन्ति कलौ युगे।।**
**कटकारास्ततः पश्चान्नारायणगणाः स्मृताः।**
**शाखा वैखानसेनोक्ता तन्त्रमार्गविधिक्रियाः।।**
**निषेकाद्याः श्मशानान्ताः क्रियाः पूजाङ्गसूत्रधृक्।**
**पञ्चरात्रेण वा कश्चित्तन्त्रोक्तं धर्ममाचरेत्।।**
**शूद्रादेव तु शूद्रायां जातः शूद्र इति स्मृतः।**
**द्विजशुश्रूषणपरः पाकयज्ञपरान्वितः।।**
**सच्छूद्रं तं विजानीयादसच्छूद्रस्ततोऽन्यथा।**
**चौर्यात्काकवचो ज्ञेयश्चाश्वानां तृणवाहकः।।**
**एतत्संक्षेपतः प्रोक्तं जातिवृत्तिविभागशः।**
**जात्यन्तराणि दृश्यन्ते संकल्पादित एव तु।।**

[१]**हस्त्यश्वरथशिक्षाऽस्त्रधारणं च मूर्धावसिक्तानाम्, नृत्यगीतनक्षत्रजीवनं सस्यरक्षा च माहिष्याणाम्, द्विजातिशुश्रूषा धनधान्याध्यक्षता राजसेवा दुर्गान्तःपुररक्षा च पारशवोग्रकरणानाम्।।**

[२]**चर्मकार्यं तद्विक्रयश्च जीवनं धिग्वणानाम्।।**

## यमः

सप्तान्त्यजाः

[३]**रजकश्चर्मकारश्च नटो बुरुड एव च।**
**कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः।।**

कुण्डगोलकयोः सवर्णासवर्णाजातत्वेन द्वैविध्यं जातिहीनत्वं च

[४]**जारजातः सवर्णायां कुण्डो जीवति भर्तरि।**
**मृते गोलकनामा तु जातिहीनौ तथैव तौ।।**

[५]**असवर्णासु नारीषु द्विजैरुत्पादिताश्च ये।**
**परपत्नीषु सर्वासु कुण्डास्ते गोलकाः स्मृताः।।**

(१) **ममु.** १०।६.
(२) **ममु.** १०।४९.
(३) **यमस्मृ.** ३३; **बाल.** १।९५ पृ. ३०४ कारश्च (कश्चैव)(=).
(४) **शूशि.** ७; **शूक.** २५४ उत्तरार्धे (मृते तु गोलको नाम जातिहीनौ च तौ स्मृतौ।।); **बाल.** १।९० पृ. २७६, १।९१ पृ. २८२.
(५) **शूशि.** ७; **शूक.** २५४; **बाल.** १।९० पृ. २७६, १।९१ पृ. २८२.

[१]**मातृवर्णा न ते प्रोक्ताः पितृवर्णा न ते स्मृताः।**
**अविवाह्याः सुताश्चैषां बन्धुभिः पितृमातृतः।।**

मद्गुमुचुपोत्पत्तिः

[२]**क्षत्रियायां तु वैश्येन मुचुपो नाम जायते।**
**शूद्रेण जायते मद्गुः क्षत्रिया यत्र मुह्यति।।**

मुह्यति मिथुनीभवति शूद्रेण सहेत्यर्थः।

स्मृकौ. २०

त्रिविधाश्चण्डालाः

[३]**आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः।**
**सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः।।**

## दक्षः

प्रत्यवसितपरिव्राजकतापसयोरपत्यानां चाण्डालैः सह निवासः

[४]**चाण्डालप्रत्यवसितपरिव्राजकतापसाः।**
**तेषां जातान्यपत्यानि चाण्डालैः सह वासयेत्।।**

## लघुशातातपः

त्रिविधा अतिचाण्डालाः

[५]**आरूढपतितोत्पन्नो ब्राह्मणो( ? णी) वृषलेन च।**
**उभौ तावतिचाण्डालौ सगोत्रायां तु जायते।।**

परिव्राजकाद्यपत्यानां चाण्डालैः सह निवासः

**चाण्डाल्यां विशतो विप्राः परिव्राजकतापसाः।**
**तैर्जातानि अपत्यानि चाण्डालैर्नरकं वसेत्( ?)।।**

कुण्डगोलकोत्पत्तिः

**परदारेषु जायेते द्वौ पुत्रौ कुण्डगोलकौ।**
**पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः।।**

(१) **शूशि.** ७ मातृवर्णा न (मातृवर्णे च) न ते स्मृ (नव स्मृ) श्चैषां (स्तेषां) बन्धुभिः (बन्धुभ्यः); **शूक.** २५४ ते स्मृ (च स्मृ); **बाल.** १।९० पृ. २७६, १।९१ पृ. २८२ ते स्मृ (च स्मृ) बन्धुभिः (बन्धुभ्यः).
(२) **स्मृकौ.** २० मुचु (मूचु); **शूक.** २६५.
(३) **शूक.** २६६; **संदी.** २।१० यश्च (यस्तु).
(४) **दस्मृ.** ४।२०; **यसं.** १०९ लप्रत्य (लाः प्रत्य) तपरि (ताः परि) विष्णुः.
(५) **लशास्मृ.** ५९, ६१, १०५.

## पराशरः

षड्विधदासादिशूद्राणां भोज्यान्नत्वम्

**[1]दासनापितगोपालकुलमित्रार्धसीरिणः।**
**एते शूद्रेषु भोज्यान्ना यश्चाऽऽत्मानं निवेदयेत्।।**

(१) दासादय आत्मनिवेदकान्ताः षट् शूद्रा भोज्यान्नाः। पमा.

(२) दासादयः षट् वक्ष्यमाणलक्षणाः शूद्रेषु भोज्यान्नाः। विम.

दासादिशूद्रस्वरूपलक्षणानि

**[2]शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः।**
**संस्कारात्तु भवेद्दासो असंस्कारात्तु नापितः।।**

(१) दासादीनां लक्षणमाह – शूद्रेति। ब्राह्मणः शूद्रकन्यामूढ्वा तस्यां यं पुत्रमुत्पादयति स यद्यमन्त्रकैर्निषेकादिभिः संस्कारैः संस्कृतो भवति, तदा दास इत्युच्यते। संस्काराभावे तु नापित इत्यभिधीयते। पमा.

(२) तत्र दासनापितयोर्लक्षणमाह – शूद्रेति। यो ब्राह्मणेन शूद्रकन्यायां समुत्पन्नः स यदि यथोक्तजातकर्मादिभिः संस्कारैः संस्कृतस्तदा तस्मादेव संस्कारान्नापित इत्युच्यते, संस्काराभावे पुनर्दास इति। विम.

**[3]क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः।**
**स गोपाल इति ख्यातो भोज्यो विप्रैर्न संशयः।।**

(१) क्षत्रियः शूद्रकन्यामूढ्वा तस्यां यं पुत्रमुत्पादयति स नामतो गोपाल इत्यत्र विवक्षितो न त्वर्थतः, गोरक्षणरूपस्यार्थस्य कृष्यादिवद्वैश्यकर्मत्वात्।

यद्यपि क्रमप्राप्तस्य कुलमित्रस्यात्र लक्षणं नोक्तम्, तथापि शब्दसामर्थ्यात्प्रक्रमबलाद्वा तल्लक्षणमुन्नेयम्। शब्दसामर्थ्यतस्तावत् – कुलस्य मित्रं कुलमित्रमिति व्युत्पत्त्या पितृपितामहादिक्रमादायात आप्तः शूद्रः कुलमित्र( ? त्रम्) इत्यभिधीयते। प्रक्रमानुसारेण त्वेनमुपसंख्यातव्यम् – वैश्यः शूद्रकन्यामूढ्वा तस्यां यं पुत्रमुत्पादयति स कुलमित्र( ? त्रम्) इति। पमा.

(२) गोपाल इति लोके ख्यातः नाम्ना वृत्त्या च प्रसिद्ध एवेति न संशयः। § विम.

**[1]वैश्यकन्यासमुद्भूतो ब्राह्मणेन तु संस्कृतः।**
**स ह्यार्धिक इति ज्ञेयो भोज्यो विप्रैर्न संशयः।।**

(१) ब्राह्मणः वैश्यकन्यामूढ्वा तस्यां यं पुत्रमुत्पादयति, संस्कृतः स नाम्ना आर्धिक इति अर्धसीरीति वा अभिधीयते। यस्तु वाङ्मनःकायकर्मभिः 'तवाहम्' इत्यात्मानं निवेदयति स आत्मनिवेदकः। यद्वा आर्धिकसाहचर्यात् क्षत्रियायां ब्राह्मणेनोत्पादितः संस्कृत आत्मनिवेदकः। अस्मिन् पक्षे यद्यप्यशूद्रावार्धिकात्मनिवेदकौ, तथापि नीचजातित्वसामान्येनाभोज्यान्नत्वशङ्कायां तदपनोदनायेदमभिधीयते इत्यदोषः। पमा.

(२) न(नु) चैषां शूद्रत्वोक्तिर्न युक्ता, द्विजापत्यतया शूद्रादुत्कृष्टत्वात्। अस्तु वाऽत्र कथंचित्, वैश्यायां ब्राह्मणादुत्पन्नस्य आर्धिकस्य तु द्विजत्वादत्यन्तायुक्तैव तदुक्तिरिति चेत्, उच्यते – विजातीयकन्याविवाहस्य कलौ निषेधेन अत्रोढात्वादिविशेषानुपादानात् अनूढास्वेव तासु (व्यवहारो ?) व्यभिचारोत्पन्नतया तदुक्तिः, 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' (मस्मृ. १०।४१) इति स्मरणात्, कुण्डासुतासूत्पन्नानां योगिना निषादादिसंज्ञान्तराभिधानाच्च। न चैवं कुण्डगोलकयोरब्राह्मण्यापत्तिः, इष्टापत्तेः। तत्कन्यास्वप्यनूढासु द्विजात्युत्पन्नानामपि शूद्रधर्मत्वमेव। न च कलावसवर्णकन्यानामृतुव्यापनेऽपि गमननिषेधान्नापितायनुत्पत्तेरेव भोज्यान्नताविवेको न संभवतीति वाच्यम्, पूर्वपूर्वयुगोत्पन्नानामप्यत्रानुवृत्त्या अतिक्रान्तनिषेधेभ्योऽप्युत्पत्त्या वा विचारसंभवादिति। विम.

---

(१) **पस्मृ.** ११।२१; **पमा.** २।५३७ पू.; **मुक्ता.** ४४७ दासना (दासा ना)

(२) **पस्मृ.** ११।२२; **मपा.** ३४२ रात्तु (रे तु); **मुक्ता.** ४४७ सो असं (सो ह्यसं); **विम.** उत्तरार्धे (असंस्काराद्भवेद्दासः संस्कारादेव नापितः।।).

(३) **पस्मृ.** ११।२३; **मपा.** ३४२ द्वितीयतृतीयचरणयोः (सुतो जातस्तु नामतः। गोपालस्तु स विज्ञेयो); **मुक्ता.** ४४७ द्वितीयचरणे (सुतो जायेत नामतः) ख्यातो (ज्ञेयो).

§ शेषं पमावत्।

(१) **पस्मृ.** ११।२४; **मपा.** ३४२ मुद्भूतो (मुत्पन्नो) तृतीयचरणे (तदर्धिकस्तु विज्ञेयो); **मुक्ता.** ४४७ तृतीयचरणे (स ह्यर्धसारी विज्ञेयो); **विम.** स ह्यार्धिक (सोऽत्यर्धिक).

## बृहत्पराशरः

शबरपुलिन्दकैवर्तनटानां रजक-
तुल्यत्वमिति मतम्

**[1]शबराश्च पुलिन्दाश्च कैवर्ताश्च नटास्तथा।
एतान् रजकसंतुल्यान् केचिदाहुर्मनीषिणः।।**

शूद्राजाता अनुलोमाः शूद्राः,
शूद्रजाताः प्रतिलोमा
म्लेच्छाः

**ब्रह्मक्षत्रियविड्जाता शूद्रास्तेऽनुक्रमेण तु।
क्रमातिक्रमतश्चान्ये म्लेच्छान्त्यवर्णसंभवाः।।**

धर्मभ्रष्टपरिव्राजकतापसानां चण्डालत्वम्,
तदपत्यानां चण्डालैः सह
निवासः

**[2]लुप्तधर्मास्तु चण्डालाः परिव्राजकतापसाः।
तेभ्यो जातान्यपत्यानि चण्डालैः सह वासयेत्।।**

## अत्रिः

सप्तान्त्यजाः

**[3]रजकश्चर्मकारश्च नटो बुरुड एव च।
कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः।।**

## अङ्गिराः

चण्डालत्रैविध्यम्

**[4]यस्तु प्रव्रजिताज्जातो ब्राह्मण्यां यश्च शूद्रजः।
तावुभौ विद्धि चण्डालौ सगोत्राद्यश्च जायते।।**

सप्तान्त्यजाः

**[5]रजकश्चर्मकारश्च नटो बुरुड एव च।
कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः।।**

---

(१) **बृपसं.** ८।३१९, ३२१.

(२) **पमा.** २।३६८ वृद्धपराशरः.

(३) **अत्रिसं.** १९९; **पमा.** २।८६ सप्तैते (सप्त ते) स्मरणम्; **आपा.** ४७ कारश्च (कश्चैव) चान्त्य (ह्यन्त्य) माधवीये पाराशरे; **आर.** ५६ चान्त्य (त्वन्त्य) पराशरः; **भाच.** ४।७९ चान्त्य (अन्त्य) (=); **कृभ.** १८४१ ते चान्त्यजाः स्मृताः (तेऽन्त्यावसायिनः)(=).

(४) **स्मृकौ.** १० ताज्जातो (तापुत्रो) यश्च (चैव) चण्डा (चाण्डा) द्यश्च (द्यस्तु); **शूक.** २६६; **इन्दु.** २४५ चण्डा (चाण्डा).

(५) **अङ्गिस्मृ.** (मन्मथ०) ३.

## लघ्वाश्वलायनः

कुण्डगोलकप्रकाराः तेषां
निन्दा च

**[1]माहिषेयश्च वै कुण्डो वृष(? वार्ष)लेयश्च गोलकः।
निन्द्याश्च ते हि लोके स्युः कथं जातिरथोच्यते।।
महिषी सोच्यते भार्या भगेनार्जति या धनम्।
तस्यां यो जायते पुत्रो माहिषेयः सुतः स्मृतः।।
रजस्वला च या कन्या यदि स्यादविवाहिता।
वृषली वार्षलेयः स्याज्जातस्तस्यां स चैव हि।।
[2]अज्ञातश्च द्विजो यस्तु विधवामुद्वहेद्यदि।
पुत्रश्चेज्जायते तस्यामेको गोलक उच्यते।।
[3]विधवायाः सुतश्चैव गोलकः कुण्ड इत्यथ।
त्रयश्चैव हि निन्द्याः स्युः सर्वधर्मबहिष्कृताः।।
संस्कार्यौ विधिवच्चोक्तौ मुनिभिः कुण्डगोलकौ।
युगान्तरे स धर्मः स्यात्कलौ निन्द्य इति स्मृतः।।
परिवित्त्यां(? परपत्न्यां) सुतः कुण्डो व्यभिचार-
समुद्भवः।
गोलको विधवायां च निषिद्धः स्यात्कलौ स्मृतः।।
वार्षलेयश्च वै कुण्डो गोलकः शूद्रयोनिजः।
तज्जश्चापि हि निन्द्याः स्युर्माहिषेयश्च विप्रजः।।**

## छागलः

कायस्थस्य पञ्च
संस्काराः

**[4]जातकर्म तथा नाम वपनं कर्णवेधनम्।
उद्वाहश्चैव विज्ञेयः कायस्थे पञ्च संस्क्रियाः।।**

## चतुर्विंशतिमतम्

सप्तान्त्यजाः

**[5]रजकश्चर्मकारश्च व(? न)टो बुरुड एव च।
कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः।।**

---

(१) **लघ्वाश्वस्मृ.** २१।३-५.

(२) **लघ्वाश्वस्मृ.** २१।११,१२.

(३) **लघ्वाश्वस्मृ.** २१।१३-१६.

(४) **बाल.** १।९५ पृ. ३०७.

(५) **चम.** ११७-११८.

## वायुपुराणं ब्रह्माण्डपुराणं च

वैन्यपृथुयज्ञे हविषोः प्रातिलोम्येन संकराज्जातः
ततो वर्णसंकराज्जात इति द्विविधौ सूतौ
तयोर्धर्मश्च, हविःसंकरजः

प्रथमः संकरजः

**[1]स्वधर्म एष सूतस्य सद्भिर्दृष्टः पुरातनैः।**
**देवतानामृषीणां च राज्ञां चामिततेजसाम्।।**
**वंशानां धारणं कार्यं श्रुतानां च महात्मनाम्।**
**इतिहासपुराणेषु दिष्टा ये ब्रह्मवादिभिः।।**
**[2]न हि वेदेष्वधीकारः कश्चित्सूतस्य दृश्यते।**
**वैन्यस्य हि पृथोर्यज्ञे वर्तमाने महात्मनः।**
**सुत्यायामभवत्सूतः प्रथमं वर्णवैकृतम्।।**
**[3]ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः।**
**जुहावेन्द्राय देवाय ततः सूतो व्यजायत।**
**प्रमादात्तत्र संजज्ञे प्रायश्चित्तं च कर्मसु।।**
**[4]शिष्यहव्येन यत्पृक्तमभिभूतं गुरोर्हविः।**
**अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतम्।।**
**[5]यच्च क्षत्रात्समभवद्ब्राह्मणावरयोनितः।**
**ततः पूर्वेण साधर्म्यात्तुल्यधर्मा प्रकीर्तितः।।**
**[6]मध्यमो ह्येष सूतस्य धर्मः क्षत्रोपजीवनम्।**
**रथनागाश्वचरितं जघन्यं च चिकित्सितम्।।**

(१) **वायु.** १।१।२६-२७.

(२) **वायु.** १।१।२८ वैकृतम् (वैकृतः); **बाल.** १।९४ पृ. २८७ हि (तु) प्रथमार्धं नास्ति.

(३) **वायु.** १।१।२९ : २।१।१३६-१३७ तत्र (चापि) देवाय (देवेन) दात्तत्र (दस्तत्र); **ब्रह्माण्ड.** १।३६।१६१-१६२ तत्र (चापि) देवाय (दैवेन) दात्तत्र (दस्तत्र); **बाल.** १।९४ पृ. २८७ देवाय (दैवेन) तृतीयार्धं नास्ति.

(४) **वायु.** १।१।३० वैकृतम् (वैकृतः) : २।१।१३७; **ब्रह्माण्ड.** १।३६।१६२-१६३; **बाल.** १।९४ पृ. २८७ यत्पृक्त (संपृक्त) जज्ञे (यज्ञे).

(५) **वायु.** १।१।३१ : २।१।१३८ णावर (ण्यां हीन) ततः (सूतः) साधर्म्यात्तुल्यधर्मा (साधर्मतुल्यधर्मः); **ब्रह्माण्ड.** १।३६।-१६३-१६४ णावर (ण्यां हीन) ततः (सूतः) धर्मा (धर्मः).

(६) **वायु.** १।१।३२ : २।१।१३९ गाश्वच (गाश्च च); **ब्रह्माण्ड.** १।३६।१६४-१६५.

**[1]तत्स्वधर्ममहं पृष्टो भवद्भिर्ब्रह्मवादिभिः।**
**कस्मात्सम्यङ्न विब्रूयां पुराणमृषिपूजितम्।।**

## विष्णुधर्मोत्तरपुराणम्

वर्णानुलोमा मातृसमाः, चण्डालमागधा-
योगवानामुत्पत्तिः, प्रतिलोमानां
सजातीयाभिर्विवाहः

**पुष्कर उवाच –**

**[2]आनुलोम्येन वर्णानां जातिर्मातृसमा स्मृता।**
**चण्डालो ब्राह्मणीपुत्रः शूद्रात्स्यात्प्रतिलोमजः।।**
**मागधश्च तथा वैश्याच्छूद्रादायोगवो भवेत्।**
**वैश्यायाः प्रातिलोम्येन प्रतिलोमात्सहस्रशः।**
**विवाहः सदृशैस्तेषां नोत्तमैर्नाधमैस्तथा।।**

चण्डालवैदेहकसूतपुक्कसमागधायोगवानां
वृत्तयः, सूतानां संस्कार्यता
याज्यता च, चण्डाल-
समाचाराः

**चण्डालकर्म निर्दिष्टं वध्यानां घातनं तथा।**
**स्त्रीजीवनं च तद्रक्षा प्रोक्तं वैदेहकस्य च।।**
**सूतानामश्वसारथ्यं पुक्कसानां च व्याधता।**
**स्तुतिक्रिया मागधानां तथा चाऽऽयोगवस्य च।**
**रङ्गावतरणं प्रोक्तं तथा शिल्पैश्च जीवनम्।**
**सूतानामस्ति संस्कारस्तथा वै याजनक्रिया।।**
**बहिर्ग्रामनिवासश्च मृतचैलस्य धारणम्।**
**असंस्पर्शस्तथैवान्यैश्चण्डालस्य विधीयते।।**

प्रतिलोमानामुन्नतिकारणम्

**ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः।**
**स्त्रीबालाभ्युपपत्तौ च बाह्यानां शुद्धिकारणम्।।**

गुणकर्मभिर्जाति-
विज्ञानम्

**संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः।**
**प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः।।**

(१) **वायु.** १।१।३३.

(२) **विध.** २।८१।१-१४.

**अनार्यता निष्ठुरता पुरतो( ? क्रूरता) निष्क्रि-**
**यात्मता।**
**पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम्।।**
**पितुर्वा भजते शीलं मातुर्वोभयमेव वा।**
**न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति।।**
**कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसंकरः।**
**स श्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु।।**

प्रतिलोमसंकरनिन्दा

**यत्र त्वेते परिध्वंसा जायन्ते वर्णसंकराः।**
**राष्ट्रियैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति।।**

विशिष्टदंपतिपरंपराजनितसप्तमकुले जात्युत्कर्षः

**शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते।**
**अश्रेयाञ्श्रेयसीं जातिं गच्छत्या सप्तमाद्युगात्।।**

राष्ट्रघातकसंकरनिवारणं राजकर्तव्यम्

**राज्ञा स्वकालं परिरक्षणीयं**
**घोरं नृणां संकरमेतदेव।**
**आसाद्य घोराणि हि संकराणि**
**नश्यन्ति राष्ट्राणि सराजकानि।।**

वर्णानुलोमा जात्या मातृसमाः, वर्णप्रतिलोमास्तद्वृत्तयश्च, प्रतिलोमानां सजातीयाभिर्विवाहः, संकीर्णसंकरा असंख्येयाः

**[1]आनुलोम्येन वर्णानां जातिर्मातृसमा भवेत्।**
**प्रतिलोमोद्भवाः सर्वे भवन्त्यार्यविगर्हिताः।।**
**सूतो वैदेहकश्चैव चाण्डालश्च द्विजोत्तमाः।**
**विज्ञेया ब्राह्मणीपुत्राः क्षत्रविट्शूद्रयोनितः।।**
**मागधः पुक्कसश्चैव विट्शूद्रैः क्षत्रियासुतौ।**
**आयोगवश्च वैश्यायां शूद्रपुत्रः प्रकीर्तितः।।**
**अन्ये वक्तुं न शक्यन्ते संकरात्संकरोद्भवाः।**
**विवाहः सदृशैश्चैषां नोत्तमैर्नाधमैः सह।।**
**सूतानामश्वसारथ्यं मागधानां स्तुतिक्रिया।**
**वैदेहः स्यात्तन्त्रिजीवः पुक्कसानां च व्याधता।।**

(१) **विध.** ३।२२७।६-१२.

**आयोगवस्य शिल्पानि रङ्गावतरणं तथा।**
**चण्डालानामसंस्पर्शस्तथा वैधव्य( ? वै वध्य)-**
**गामिता।।**

प्रतिलोमानामुन्नतिकारणम्

**गोब्राह्मणार्थे समरे हतानां**
**स्त्रीबालहेतोर्यदि वाऽप्यशेषम्।**
**स्वाम्यर्थकार्यं यदि वा प्रकुर्वतां**
**सिद्धिः प्रदिष्टा न हि संशयोऽत्र।।**

## श्रीमद्भागवतपुराणम्

अन्त्यजादीनां कुलागता वृत्तिः चौर्यादि वर्जयित्वा

**[1]वृत्तिः संकरजातीनां तत्तत्कुलकृता भवेत्।**
**अचौराणामपापानामन्त्यजान्तेवसायिनाम्।।**

प्रतिलोमजानुलोमजानां वृत्तिमाह – वृत्तिरिति। तत्तत्कुलकृता कुलपरंपराप्राप्ता। परंपराप्राप्तमपि चौर्यं हिंसादिकं च प्रतिषेधति – अचौराणामपापानां चेति। तत्तत्प्रदर्शनार्थं कांश्चित्प्रतिलोमजविशेषानाह – अन्त्यजेति। 'रजकश्चर्मकारश्च नटो बुरुड एव च। कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः।।' अन्तेवसायिनस्तु चाण्डालपुल्कसमातङ्गादयः। तेषां परंपराप्राप्तैव वस्त्रनिर्णेजनादिवृत्तिरित्यर्थः।

श्रीटी.

जातितो भिन्नस्यापि वर्णस्य गुणतस्तद्वर्णव्यपदेशः

**[2]यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम्।**
**यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत्।।**

शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यः, न जातिमात्रादित्याह – यस्येति। यत् यदि अन्यत्र वर्णान्तरेऽपि दृश्येत तद्वर्णान्तरं तेनैव लक्षणनिमित्तेनैव वर्णेन विनिर्दिशेत्, न तज्जातिनिमित्तेनेत्यर्थः। श्रीटी.

(१) **भाग.** ७।११।३०.
(२) **भाग.** ७।११।३५.

अन्तेवासिनां स्वाभाविक-
दोषाः

[1]**अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः।**
**कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम्।।**

तद्बाह्यानां स्वभावानाह – अशौचमिति। शुष्कविग्रहः निर्मूलकलहः। तर्षः तृष्णा। श्रीटी.

## स्कन्दपुराणम्

रजकादिचण्डालान्ता अष्टौ शूद्रमानवास्तेषा-
मुत्पत्तिश्च, संकीर्णसंकरजा
अनन्ताः

[2]**रजकश्चर्मकारश्च नटो बुरुड एव च।**
**कैवर्तमेदभिल्लाश्च चण्डालाः शूद्रमानवाः।।**
**संभवन्ति युगे तस्मिन्योनिसंसर्गतो विभो।**
**तथाऽन्ये संख्यया हीना एतेभ्यो निन्दिता नराः।।**

**इन्द्र उवाच –**

**उत्पत्तिः कथमेतेषामन्त्यजानां द्विजोत्तम।**
**यथावद्वद कात्स्न्येन अत्र कौतु( ? तू)हलं महत्।।**

**बृहस्पतिरुवाच –**

**एतेषामष्टधा सृष्टिर्जायतेऽन्त्यजसंभवा।**
**योनिदोषात्सुरश्रेष्ठ जातेर्वक्ष्याम्यहं स्फुटम्।।**
**ब्राह्मण्यां क्षत्रियाज्जातः सूत इत्यभिधीयते।**
**सूतेन रजकश्चैव रजकेन च चर्मकृत्।।**
**चर्मकारेण संजज्ञे नटश्चान्त्यजसंज्ञकः।**
**चत्वारः क्षेत्रसंभूता एते क्षेत्रे द्विजन्मनाम्।।**
**तथा च मागधो जज्ञे वैश्येन द्विजसंभवे।**
**क्षेत्रे मागधवीर्येण बुरुडो मरुदुत्तम।।**
**बुरुडेन च कैवर्तः कैवर्तेन च मेदकः।**
**चत्वारो वैश्यसंभूता एते क्षेत्रे द्विजन्मनाम्।।**
**प्रजायन्ते सुरश्रेष्ठ सर्वकर्मसु गर्हिताः।**
**तथा शूद्रेण संजज्ञे ब्राह्मण्यां सुरसत्तम।।**
**भिल्लाख्यश्चापि भिल्लेन चण्डालश्च प्रजायते।**
**एतौ द्वावपि शूद्रेण भवतो द्विजसंभवे।**
**क्षेत्रे सर्वसुराधीश सत्यमेतन्मयोदितम्।।**

(१) **भाग.** ११।१७।२०.
(२) **स्कन्द.** ६।२७।४४-५३.

जारब्राह्मणब्राह्मणीजातो वारडः
अधमाधमः

[1]**अत्र यः संकरं कुर्याद्योनेस्तस्य फलं शृणु।**
**ब्राह्मण्यां ब्राह्मणात्पुत्रो ब्रह्मघ्नः संप्रजायते।।**
**सर्वाधमानामधमो यो वारड इति स्मृतः।।**

त्रयो वर्णप्रतिलोमजाः

**क्षत्रियाच्च तथा सूतो वैश्यान्मागध एव च।**
**शूद्रात्तथाऽन्त्यजः प्रोक्तस्तेनैते वर्जिताः सुताः।।**

जारजानां पञ्चानां क्षेत्रजादीनां
निन्दा

**क्षेत्रजश्च सहोढश्च कानीनः कुण्डगोलकौ।**
**पञ्चैते पातयन्ति स्म पितॄन्स्वर्गगतानपि।।**

उत्तमाधमादिभेदैः संकीर्ण-
संकीर्णानां गणनं तेषां
धर्मश्च

[2]**अनुलोमविलोमाभ्यां क्रमाच्च क्रमयोगतः।**
**शूद्रादधोऽधो जाताश्च सर्वे पादतलोद्भवाः।।**
**ताः सर्वास्तु प्रकृतयो मम देहांशसंभवाः।।**
[3]**शिल्पी च नर्तकश्चैव काष्ठकारः प्रजापतिः।**
**वर्धकिश्चित्रकश्चैव सूत्रको रजकस्तथा।**
**गच्छकस्तन्तुकारश्च चक्रिकश्चर्मकारकः।।**
**सूनिको ध्वनिकश्चैव कौल्हिको मत्स्यघातकः।**
**औनामिकस्तु चण्डालः प्रकृत्याऽष्टादशैव ते।।**
**शिल्पिकः स्वर्णकारश्च दारुकः कांस्यकारकः।**
**काडुकः कुम्भकारश्च प्रकृत्या उत्तमाश्च षट्।।**
**खरवाह्युष्ट्रवाही च हयवाही तथैव च।**
**गोपाल इष्टिकाकारो अधमाधमपञ्चकम्।।**
**रजकश्चर्मकारश्च नटो बुरुड एव च।**
**कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः।।**
**यो यस्य हीनो वर्णेन स चाष्टादशमो नरः।।**
**सर्वासां प्रकृतीनां च उत्तमा मध्यमाः समाः।**
**भेदास्त्रयः समाख्याता विज्ञेयाः स्मृतिनिर्णयात्।।**

(१) **स्कन्द.** ६।२२३।११-१३, १७.
(२) **स्कन्द.** ६।२४२।१७-१८.
(३) **स्कन्द.** ६।२४२।३२-४२.

**शिल्पिनः सप्त विज्ञेया उत्तमाः समुदाहृताः।**
**स्वर्णकृत्कम्बुकश्चैव तन्दुली पुष्पलावकः।**
**ताम्बूली नापितश्चैव मणिकारश्च सप्तधा।।**
**न स्नानं देवताहोमस्तपोनियम एव च।**
**न स्वाध्यायवषट्कारौ न च शुद्धिर्विवाहिता।**
**एतासां प्रकृतीनां च गुरुपूजा सदोदिता।।**

कायस्थस्योत्पत्तिर्वृत्तिर्धर्मश्च

[1]**माहिष्यवनिता सूनुं वैदेहाद्यं प्रसूयते।**
**स कायस्थ इति प्रोक्तस्तस्य कर्म विधीयते।।**

क्षत्रियाद्वैश्यायां माहिष्या। विप्रायां वैश्यजो वैदेहः।

शूक. २८८

**लिपीनां देशजातानां लेखनं स समाचरेत्।**
**गणकत्वं विचित्रं च बीजपाठी प्रभेदतः।।**
**अधमः शूद्रजातिभ्यः पञ्चसंस्कारवानसौ।**
**चातुर्वर्ण्यस्य सेवा हि लिपिलेखनसाधनम्।**
**व्यवसायः शिल्पकर्म तज्जीवनमुदाहृतम्।।**
**शिखां यज्ञोपवीतं च वस्त्रमारक्तमम्भसा।**
**स्पर्शनं देवतानां च कायस्थाद्यो विवर्जयेत्।।**

## सह्याद्रिखण्डः

वर्णानुलोमा वर्णप्रति-
लोमाश्च

**गणेश उवाच –**

[2]**महादेव विरूपाक्ष भक्तानुग्रहकारक।**
**संकरीणां च जातीनामुत्पत्तिं वद सांप्रतम्।।**
**कस्मिन्कुले समुत्पन्नाः किंशीलाः किमु लक्षणाः।।**
**एवं वदति गौरीजे व्याजहार वृषध्वजः।।**

**महादेव उवाच –**

[3]**शृणु तात महाप्राज्ञ लोकानुग्रहकारक।**
**संकरीणां च जातीनां वंशं निगदतः शृणु।।**
**विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्।**
**अम्बष्ठः शूद्रया जातो निषादः पार्शवोऽपि वा।।**

(१) **शूक.** २८८.
(२) **सखं.** १।२६।२७-२८.
(३) **सखं.** १।२६।२९-३५.

**वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।**
**शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः।**
**अनुलोमवर्णषट्कं कथितं तव नन्दन।।**
**ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा।**
**शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः।।**
**क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च।**
**शूद्रादायोगवं वैश्या जनयामास वै सुतम्।**
**प्रतिलोमं वर्णषट्कं कथितं तव नन्दन।।**

वर्णानुलोमप्रतिलोमसंकरजानां
वृत्तयो धर्माश्च

**एषां कर्माणि सर्वाणि कथयामि समासतः।**
**श्रोतव्यानि च तान्येव व्यवहारस्य सिद्धये।।**
[1]**क्षत्रियाविप्रसंयोगाज्जातो मूर्धावसिक्तकः।**
**राजन्यः क्षत्रधर्मेभ्योऽभ्यधिकः संप्रकीर्तितः।।**
**अथर्वणक्रियां कुर्वन्नित्यनैमित्तिकीं क्रियाम्।**
**अश्वं रथं हस्तिनं वा वाहयेद्वै नृपाज्ञया।।**
**सेनापत्यं च भैषज्यं कुर्याज्जीवेच्च वृत्तिषु।**
**आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्मतश्चरेत्।**
**ज्योतिषं गणितं वाऽपि कायिकीं वृत्तिमाचरेत्।।**
**वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते।**
**कृष्याजीवो भवेत्तस्य तथैवाग्रे प्रनर्तकः।**
**अन्येभ्यो वैश्यजातिभ्यः षट्कर्मादधिकं स्मृतम्( ?)।।**
[2]**षट्कर्म ह्यपि तस्यैव कर्मत्रितयमेव च।**
**नरवाजिगजादीनां चिकित्सा तस्य जीविका।।**
[3]**शूद्रां शयनमारोप्य ब्राह्मणश्चेत्कथंचन।**
**जनयेद्ग्राम्यधर्मेण तस्यां पारशवं सुतम्।।**

शयनारोपणं विवाहः। एतस्यैव संज्ञान्तरं निषादः। अस्य कर्मसु अग्निहोत्रादिषु अधिकारः, 'यज्ञियासः पञ्च जना मम(अग्नि ?)होत्रं जुषध्वम्' (ऋसं. १०।५३।४) इति

(१) **सखं.** १।२६।३६-४०.
(२) **सखं.** १।२६।४१; **शूक.** २६२ षट्कर्म ह्यपि (षट्कर्माण्यपि) उशना.
(३) **सखं.** १।२६।४२; **शूक.** २६२ शवं (सवं) जातिविवेके; **बाल.** १।९४ पृ. २८५ श्चेत्कथं (श्च कथं) विश्वंभरवास्तुशास्त्रे उशना.

मन्त्रलिङ्गात्, '‡अदितिर्द्यौः' (ऋसं. १।८९।१०) इति ऋग्व्याख्याने पञ्चजनपदस्य 'चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः' इति यास्केन (नि. ३।८) निषादस्य गणनात्। एवं पञ्चमस्य शूद्रस्येव व्रतद्रव्यनियमोऽपि संगच्छते।

बाल. १।९४ पृ. २८६

**[1]महाशूद्र इति ख्यातः शूद्रेभ्यः किंचिदुत्तमः।**
**स्वर्णकारस्य तस्येह स्नानं धौत्रं पवित्रकम्।।**
**[2]सर्वं शूद्रस्य धर्मेण वर्तनं तस्य जीविका।**
**वैश्यायां क्षत्रियाज्जातो माहिष्यस्त्वनुलोमजः।।**
**[3]अष्टाधिकारनिरतश्चतुःषष्ट्यङ्गकोविदः।**
**व्रतबन्धादिकास्तस्य क्रियाः स्युः सकला विशः।।**

अष्टाधिकाराः अष्टौ वृत्तयः। चतुःषष्ट्यङ्गानि चतुःषष्टिकलाः।

बाल. १।९४ पृ. २८६

**[4]ज्योतिषं शाकुनं शास्त्रं स्वरशास्त्रं च जीविका।**
**सुगन्धं वनिता वस्त्रं गीतं ताम्बूलभोजनम्।**
**शय्या विभूषा सुरतं भोगाष्टकमुदाहृतम्।।**
**[5]शूद्रायां क्षत्रियादुग्रः क्रूरकर्मा प्रजायते।**
**शस्त्रविद्यासु कुशलः संग्रामकुशलो भवेत्।।**

**[1]तया वृत्त्या स जीवेद्यः शूद्रधर्मा प्रजायते।**
**रजपूत इति ख्यातो युद्धकर्मविशारदः।।**
**[2]वैश्याद्धर्मेण शूद्रायां जातो वैतालिकाभिधः।**
**चारणोऽसावपि भवेन्न्यूनो वृषलधर्मतः।।**
**[3]राज्ञां च ब्राह्मणानां च गुणवर्णनतत्परः।**
**संगीतं कामशास्त्रं च जीविका तस्य वै स्मृता।।**
**[4]अनुलोमस्य षट्कं तु भाषितं तव पुत्रक।**
**प्रतिलोमस्य कर्माणि कथयामि समासतः।।**
**[5]ब्राह्मण्यां क्षत्रियात्सूतः प्रातिलोम्येन जायते।**
**क्षत्रियाणामसौ कर्म कर्तुमर्हत्यशेषतः।**
**किंचित्क्षत्रियजातिभ्यो न्यूनं तस्य विधीयते।।**

क्षत्रियाणां धर्मं युद्धप्रजापालनादिवृत्तिम्, न तु वेदाध्ययनादि, 'प्रतिलोमा धर्महीनाः' (गौध. ४।२५) इति स्मरणात्।

बाल. १।९४ पृ. २८६

**[6]गजबन्धनमश्वानां वाहनं कर्म सारथेः।**
**वैश्यधर्मेषु सूतस्य नाधिकारः क्वचिद्भवेत्।।**
**[7]ब्राह्मण्यां जायते वैश्याद्योऽसौ वैदेहिकाभिधः।**
**शुद्धान्तरक्षणं राज्ञां कुर्यादनुपमं हि सः।**
**सामान्यवनिताः पोष्यास्तासां मेधा च जीविका।।**

---

‡ रभसोक्तिरियम्। वक्ष्यमाणं यास्कवचनं नैतदृग्व्याख्यानगतम्, अपि तु 'यज्ञियासः पञ्च जनाः' इतिमन्त्रांशव्याख्यानमेव।

(१) **सखं.** १।२६।४३; **शूक.** २६२ शूद्र इति (शूद्रः स वि) जातिविवेके; **बाल.** १।९४ पृ. २८५ धौत्रं (धोत्रं) विश्वंभरवास्तुशास्त्रे उशना.

(२) **सखं.** १।२६।४४; **शूशि.** १५ उत्त. (=); **शूक.** २६२ जातिविवेके; **बाल.** १।९४ पृ. २८५ सर्वं (शौचं) जीविका (च स्मृतम्) पू. : २८६ लोमजः (लोमतः) उत्त. विश्वंभरवास्तुशास्त्रे उशना.

(३) **सखं.** १।२६।४५; **शूशि.** १५ ला विशः (लाश्च ताः) (=); **शूक.** २६२ जातिविवेके; **बाल.** १।९४ पृ. २८६ विश्वंभरवास्तुशास्त्रे उशना.

(४) **सखं.** १।२६।४६-४७; **शूशि.** १५ ज्योति (ज्यौति) प्रथमार्धमात्रम् (=); **शूक.** २६२ प्रथमार्धमात्रम्, जातिविवेके; **बाल.** १।९४ पृ. २८६ ज्योति (ज्यौति) विभूषा सुरतं (च कुसुमं चैव) विश्वंभरवास्तुशास्त्रे उशना.

(५) **सखं.** १।२६।४७-४८; **बाल.** १।९४ पृ. २८६ शस्त्रविद्यासु (शस्त्रास्त्राभ्यास) विश्वंभरवास्तुशास्त्रे उशना.

(१) **सखं.** १।२६।४८-४९; **बाल.** १।९४ पृ. २८६ जीवेद्यः (जीवेच्च) प्रजा (च जा) पू., विश्वंभरवास्तुशास्त्रे उशना.

(२) **सखं.** १।२६।४९-५० वैश्याद्ध (वैश्यध); **बाल.** १।९४ पृ. २८६ चारणो (करणो) विश्वंभरवास्तुशास्त्रे उशना.

(३) **सखं.** १।२६।५०-५१; **बाल.** १।९४ पृ. २८६ वै स्मृता (विश्रुता) विश्वंभरवास्तुशास्त्रे उशना.

(४) **सखं.** १।२६।५१-५२.

(५) **सखं.** १।२६।५२-५३ प्रातिलोम्येन (प्रतिलोमेन); **बाल.** १।९४ पृ. २८६ कर्म (धर्मं) तृतीयार्धे (किंचिच्च क्षत्रजातिभ्यो न्यूनता तस्य विद्यते।।) विश्वंभरवास्तुशास्त्रे उशना; **इन्दु.** २४७ कर्म (धर्मान्) तृतीयार्धे (किंचिच्च क्षत्रजातिभ्यो न्यूनता तस्य जायते।।) जातिविवेके.

(६) **सखं.** १।२६।५४ उत्तरार्धं न वर्तते; **बाल.** १।९४ पृ. २८६ विश्वंभरवास्तुशास्त्रे उशना; **इन्दु.** २४७ वाहनं (रोहणं) जातिविवेके.

(७) **सखं.** १।२६।५४-५५ द्योऽसौ (द्वैश्यो) नुपमं (नुयमं); **शूक.** २८३ सां मेधा (सामाद्या) जातिविवेके; **बाल.** १।९४ पृ. २८७ द्वितीयार्धे (शुद्धान्तरक्षणं कुर्याद्राज्ञामनुपसंहितः।) ताः पोष्यास्तासां मेधा (ता पोष्या तासां भाट्टी) विश्वंभरवास्तुशास्त्रे उशना.

[1]तस्योक्तशूद्रधर्माणां नाधिकारोऽस्ति कर्हिचित्।
पण्याङ्गनानां राज्ञां च कुर्यात्सङ्गं तदिच्छया।
रूपाजीवाः सुताश्चैव विशिष्यां संगतो विटः (?)।।
¤ [2]स एव तासां प्राणेशो नान्यः कान्तोऽपि तत्पतिः।
चतुःषष्टिकलाः कामशास्त्रं तदुपजीवनम्।।
[3]ब्राह्मण्यां शूद्रवीर्येण जातश्चाण्डालसंज्ञकः।
सर्वेषामेव तत्स्पर्शात्सचैलं स्नानमुच्यते।
स वसेन्नगराद्बाह्ये सर्वधर्मविवर्जितः।।
[4]एवं चाऽऽस्ते न बहुधा विविधैर्योऽसिताक्षितैः (?)।
तेषां वस्त्राद्यलंकारा जीविका तस्य वै स्मृता।।
[5]क्षत्रिया मागधं वैश्याज्जनयामास वै सुतम्।
स बन्दीजन इत्युक्तो व्रतबन्धविवर्जितः।।
शूद्रेभ्योऽप्यधिकः किंचित्तस्य जीवनमुच्यते।
कन्या(? था)लंकारगद्यादिषड्भाषासु कलाक्षमः।।
गद्यपद्यादिचित्राणि बिरुदानि महीभृताम्।
कालिकायाश्च भक्तश्च ह्यागमे च विचक्षणः।।

¤ यद्यपि श्लोकस्यास्य सह्याद्रिखण्डीयत्वं नोपलब्धम्, तथापि पूर्ववचनसंगतत्वात् कमलाकराद्यनुरोधेनात्र संगृहीतम्।

(१) **सखं.** १।२६।५६-५७ तस्योक्त (तस्योक्तः); **शूक.** २८३ प्रथमार्धं नास्ति, पञ्चमचरणे (रूपाजीवासु तास्वेव) ष्यां सङ्ग (ष्यासङ्ग) जातिविवेके; **बाल.** १।९४ पृ. २८७ तृतीयार्धे (रूपाजीवासु तास्त्वेषां निशि यः संगतो विटः।।) विश्वंभरवास्तुशास्त्रे उशना; **इन्दु.** २४७-२४८ तस्योक्तः (तस्योक्ता) प्रथमार्धमात्रम्, जातिविवेके.

(२) **शूक.** २८३ जातिविवेके; **बाल.** १।९५ पृ. २८८ विश्वंभरवास्तुशास्त्रे उशना; **इन्दु.** २४८ जातिविवेके.

(३) **सखं.** १।२६।५७-५८ वीर्येण (वर्णोक्तो) तत्स्पर्शात्स (स्पर्शैश्च स) मुच्यते (माचरेत्); **बाल.** १।९४ पृ. २८८ दूबाह्ये (दूबाह्यः) विवर्जितः (बहिष्कृतः) विश्वंभरवास्तुशास्त्रे उशना.

(४) **सखं.** १।२६।५९; **बाल.** १।९४ पृ. २८८ पूर्वार्धे (येऽवध्यास्ते न ते वध्या विविधैर्यातनाशतैः।) वै (च) विश्वंभरवास्तुशास्त्रे उशना.

(५) **सखं.** १।२६।६०-६१.

क्षत्रिया शूद्रसंयोगात्क्षत्तारं जनयेत्सुतम्।
निषाद इति विख्यातः सर्ववर्णबहिष्कृतः।।
शूद्राचारविहीनश्च पापधीनिरतः सदा।
वागुरापाशपाणिस्तु मृगबन्धनकोविदः।।
अरण्यपशुजातीनामन्तकश्च वनेचरः।
क्रोधान्वितो मांसवृत्त्या तथा जीवेत्सदैव हि।।
घण्टां च ताडनं कुर्याद्रात्रौ विस्मृतिकारणात् (?)।
द्विधा च मृगया प्रोक्ता व्योमभूचारिणामिह।
विक्रयं मधुनः कुर्याद्धर्म(? द्धन)मिच्छन्स- मृद्धये।।
वैश्यस्त्रीशूद्रसंयोगात्स्यादायोगवसंज्ञकः।
शूद्रादिजातिधर्मेण पाषाणादिष्टकर्मकृत्।।
स कुर्यात्कुट्टनं भूरि चूर्णेनास्येह जीविका।
भित्त्यादिकर्म कुर्वीत ऋजुवृत्त्या कथंचन।।
एवं ज्ञातीयधर्माश्च समासात्कथिता मया।।

वर्णानुलोमप्रतिलोमजाः

† [1]ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैवानुलोमजः।
प्रतिलोमाः षट्कषट्कं विस्तारं शृणु मे प्रिये।।
वैश्यायां ब्राह्मणाज्जातो ह्यम्बष्ठ इति नामतः।
क्षत्रियायां च वैश्यात्तु जातो मागध इत्यभूत्।।
अनुलोममिदं भूतं प्रतिलोममिदं शृणु।
ब्राह्मणात्क्षत्रियापुत्र(?) अगरो नाम उच्यते।।
रुद्रधर्मादिकं न्यूनं नटभाटादि केवलम्।
ब्राह्मण्यां वैश्यसंभूता जाता वैवर्तिका विदुः।।
व्याधधर्मा महानष्टा अन्तकायतयः स्मृताः।
ब्राह्मण्यां शूद्रसंभूतो जातश्चण्डाल एव हि।।
सर्वत्र नगराद्बाह्याः सर्वधर्मबहिष्कृताः।
तस्य स्पर्शनमात्रेण सचैलं स्नानमाचरेत्।।
न गृहीत्वा तस्य भिक्षां स्पर्शास्पर्शं न कारयेत्।।

† अशुद्धिबाहुल्याद्यथोपलब्धस्तथैव ग्रन्थः संगृहीतः।

(१) **सखं.** २।४।१२-३०.

गोलकानुगोलककुण्डगोलरण्डका-
नामुत्पत्तिर्निन्दा
च

पार्वत्युवाच –

**गोलकं कुण्डगोलं च द्विविधं परिकीर्तितम्।**
**तस्य सर्वस्य चोत्पत्तिं कथयस्व महेश्वर।।**

ईश्वर उवाच –

**ब्राह्मणी विधवा नारी व्यभिचारेण गुर्विणी।**
**गोलकं तस्य पुत्रो वै शूद्रवद्यदि केवलम्।।**
**ब्राह्मणस्य यदा पुत्री जाता द्वादशवार्षिकी।**
**अविवाहिता च तस्यां वै जातश्चैवानुगोलकः।।**
**ब्राह्मणी विधवा चैव पुनर्विवाहिता कृता।**
**तत्पुत्रः कुण्डगोलश्च सर्वधर्मबहिष्कृतः।।**
**स्वपतित्यागिनी नारी निदेशदुरतस्थयोः।**
**तस्यां पुत्रो यदा जातो रण्डको इति नामतः।।**
**अधमाः कुण्डगोलाद्याः सर्वे धर्मबहिष्कृताः।**
**रण्डकश्चैव नामाभूत् सर्वत्रैवाप्यपूजकः।।**

संकरनिन्दा

**यदा गुप्तपरीजातो व्यभिचारस्य संभवः।**
**वर्णसंकरनामा वै दशगोत्रविनाशकः।।**
**संकरो नरकायेति कुलघ्नश्चैव जायते।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः।।**
**तथापि चैव पाञ्चाला मायामनुजकाष्ठतट्।**
**शिल्पिकाः स्वर्णकाश्चैव पाञ्चालाश्चैव उच्यते।।**
**कुम्भकारी च पाञ्चाला यदा प्रतिग्रही द्विजः।**
**कुलानि दशकं तस्य पतन्ति नरकेषु वै।।**
**नटाश्च रजकाश्चैव बुरुडाश्चर्मकारकाः।**
**अतिशूद्राश्च चाण्डालाः स्पर्शनात्स्नानमाचरेत्।।**
**ब्राह्मणानां च षट्कर्म क्षत्रियाश्च त्रिकर्मजाः।**
**वैश्याः शूद्राश्च तान्त्रीकाः सर्वशास्त्रेषु निर्णयः।**
**तथा वाऽप्यन्त्यजानां तु नास्ति धर्मश्च कर्म च।।**

## सूतसंहिता

अनुलोमप्रतिलोमान्तरालिक-
व्रात्यकुण्डगोलकानां
लक्षणानि

**[१]स्वस्त्रीषु स्वस्य वैधेन मार्गेणोत्थः स्वयं भवेत्।**
**अवरासूत्तमाज्जातस्त्वनुलोमः प्रकीर्तितः।**
**उत्तमास्ववराज्जातः प्रतिलोम इति स्मृतः।।**

संकीर्णाननुलोमजानाह – अवरास्विति। क्षत्रियावैश्याशूद्रासु ब्राह्मणस्य, वैश्याशूद्रयोः क्षत्रियस्य, शूद्रायां वैश्यस्येत्यर्थः। उत्तमास्विति। ब्राह्मण्यां क्षत्रियादित्रयात्, क्षत्रियायां वैश्यशूद्राभ्याम्, वैश्यायां शूद्रादित्यर्थः। तादी.

**वर्णस्त्रीष्वनुलोमेन जातः स्यादान्तरालिकः।**
**वर्णासु प्रतिलोमेन जातो व्रात्य इति स्मृतः।।**

वर्णस्त्रीष्विति अनुलोमप्रतिलोमजाः स्त्रियो व्यवच्छिनत्ति, वर्णास्वित्यपि। तादी.

**ब्राह्मण्यां सधवायां यो ब्राह्मणेन द्विजोत्तमाः।**
**जातश्चौर्येण कुण्डोऽसौ विधवायां तु गोलकः।।**

कुण्डगोलकयोर्लक्षणमाह – ब्राह्मण्यां सधवायामिति। तादी.

भर्तृजजारजवर्णानुलोमप्रतिलोमाना-
मान्तरालिकादीनां
चोत्पत्तिः

**[२]नृपायां ब्राह्मणाज्जातः सवर्ण इति कीर्तितः।**
**चौर्यादस्यामनेनोत्थो नाम्ना नक्षत्रजीवनः।।**

(१) क्षत्रियायामनुलोमजो विधिना जातश्चेत्सवर्णः। चौर्येण चेन्नक्षत्रजीवीत्यर्थः। तादी.

(२) मूर्धावसिक्तस्यैव सवर्ण इति नामान्तरम्। बाल. १।९१ पृ. २८०

**[३]वैश्यायां ब्राह्मणाज्जातो निषादो वेदवित्तमाः।**
**अस्यामनेन चौर्येण कुम्भकारोऽभिजायते।**
**ऊर्ध्वनापित एवासौ नाम्ना वेदविदां वराः।।**

---

(१) **सूसं.** १।१२।१०-१२; **बाल.** १।९१ पृ. २८०.

(२) **सूसं.** १।१२।१३-१४; **बाल.** १।९१ पृ. २८० (=).

(३) **सूसं.** १।१२।१४-१५; **बाल.** १।९१ पृ. २८० वित्तमाः (वित्तमः).

कुम्भकारस्यैव नामान्तरमूर्ध्वनापित इति। तादी.

**[1]शूद्रायां ब्राह्मणेनोत्थो द्विजाः पारशवः स्मृतः।**
**चौर्येणास्यां निषादोऽभून्नाम्ना वेदार्थवित्तमाः।।**
**[2]दौष्यन्त्यां ब्राह्मणाज्जात आपीताख्यो भवेद्द्विजाः।**
**आयोगव्यां तु विप्रेण पिङ्गलो नाम जायते।।**

शूद्रायां क्षत्रियाज्जातो दौष्यन्त इति वक्ष्यति। तज्जातिः स्त्री दौष्यन्ती। आयोगव्यामिति। शूद्राद्वैश्यायां जात आयोगवः। तज्जाता स्त्री आयोगवी। एतावत्पर्यन्तं ब्राह्मणाद्ब्राह्मण्यादिषु चौर्यजा अचौर्यजाश्चोक्ताः। तादी.

**[3]विप्रायां क्षत्रियाज्जातः सूत इत्युच्यते बुधैः।**
**चौर्येणास्यामनेनोत्थो रथकार इति स्मृतः।।**

क्षत्रियेण ब्राह्मण्यादिषु पूर्ववद्द्विविधानाह – विप्रायां क्षत्रियादित्यादिना। तादी.

*** [4]क्षत्रियस्त्रीषु वैश्यात्तु भोजश्चौर्याद्विजायते।**
**वैश्यायां क्षत्रियाज्जातो माहिष्योऽम्बष्ठसंज्ञितः।**
**चौर्येणास्यामनेनोत्थो भवेदविरसंज्ञितः।।**

माहिष्य इत्यम्बष्ठ इति नामद्वयेनोक्त इत्यर्थः।

तादी.

**[1]शूद्रायां क्षत्रियाज्जातो दौ( ? दौः)षन्त्याख्यो भवेद्द्विजाः।**
**चौर्येणास्यामनेनोत्थः शूलिको भवति द्विजाः।।**
**[2]ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः।**
**अस्यामनेन चौर्येण म्लेच्छो विप्राः प्रजायते।।**

वैश्याद्ब्राह्मण्यादिषु पूर्ववद्द्विविधानाह – ब्राह्मण्यां वैश्यतो जात इत्यादिना। तादी.

**[3]जातो वैश्यान्नृपायां यः शालिको मागधश्च सः।**
**अस्यामनेन चौर्येण पुलिन्दो जायते बुधाः।।**

शालिकमागधशब्दौ पर्यायौ। तादी.

**[4]मणिकारस्तु वैश्यायां चौर्याद्वैश्येन जायते।**
**शूद्रायां वैश्यतो जात उग्र इत्युच्यते बुधैः।**
**अस्यामनेन चौर्येण कटकारः प्रकीर्तितः।।**
**[5]शूद्राद्विप्राङ्गनायां तु चण्डालो नाम जायते।**
**अस्यामनेन चौर्येण बाह्यदासस्तु जायते।।**

शूद्राद्ब्राह्मण्यादिषु पूर्ववद्द्विविधानाह – शूद्राद्विप्राङ्गनायामित्यादिना। तादी.

**[6]जातः शूद्रेण राजन्यां वैदेहाख्यश्च पुल्कसः।**
**अस्यामनेन चौर्येण वेलवाख्यो विजायते।।**

राजन्यां राजन्यायाम्। वैदेहपुल्कसशब्दौ पर्यायौ।

तादी.

**[7]जातः शूद्रेण वैश्यायां भवेत्पत्तनशालिकः।**
**अनेनास्यां भवेच्चक्री चौर्याद्ब्रह्मविदां वराः।।**
**चौर्याच्छूद्रेण शूद्रायां जातो माणविको भवेत्।।**

चक्री तैलिकः। बाल. १।९४ पृ. २८४

---

* अर्धश्लोकोऽयं प्रक्रमविरोधादिदोषसद्भवात् केनचिदत्र प्रक्षिप्तः स्यादिति संभाव्यते। तथाहि – पूर्वं क्षत्रियादिस्त्रीषु ब्राह्मणजनितान् सुतानभिधाय ब्राह्मण्यादिषु क्षत्रियजनितानां सुतानामभिधानं प्रक्रान्तम् अनवसितं च तत्। तथा प्रतिस्त्रि प्रकाशं चौर्येण चेत्येवं सर्वस्त्रीषु सुतद्वन्द्वजननं प्रक्रान्तम्। एवं स्थिते वैश्येन चौर्यमात्रेण च जनितस्य सुतस्यान्तरोक्तिरियमुक्तोभयप्रक्रमविरुद्धा। किंच, क्षत्रियायां वैश्येन चौर्यजनितस्य पुलिन्दस्य यथाक्रमं वक्ष्यमाणत्वेन पौनरुक्त्यापातात् भोजत्वेन पुलिन्दत्वेन विरोधाच्च नात्र भोजो वक्तव्यः। भोजपुलिन्दशब्दयोः पर्यायत्वे तु 'माहिष्योऽम्बष्ठसंज्ञितः' 'शालिको मागधश्च सः' इतिवत् पुलिन्दवाक्ये एव वा पर्यायत्वमात्रबोधके भिन्नवाक्ये वा तत्रैव भोजो वक्तव्यः, न जनकजनन्यंशस्य पुनर्वचनं युज्यते। बालंभट्ट्यामस्य संग्रहणं तु उक्तदोषानिरासात् व्युत्क्रमेण वचनसंग्रहाच्च प्रक्षिप्तत्वसंभवं निराकर्तुं नालम्।

(१) **सूसं.** १।१२।१६; **बाल.** १।९१ पृ. २८१ द्विजाः (द्विजः).

(२) **सूसं.** १।१२।१७; **बाल.** १।९५ पृ. २९४.

(३) **सूसं.** १।१२।१८; **बाल.** १।९४ पृ. २८३.

(४) **सूसं.** १।१२।१९-२०; **बाल.** १।९४ पृ. २८४ प्रथमार्धमात्रम्.

---

(१) **सूसं.** १।१२।२०-२१.

(२) **सूसं.** १।१२।२१-२२; **बाल.** १।९४ पृ. २८३.

(३) **सूसं.** १।१२।२२-२३; **बाल.** १।९४ पृ. २८४.

(४) **सूसं.** १।१२।२३-२४; **बाल.** १।९५ पृ. ३०६ प्रथमार्धमात्रम्.

(५) **सूसं.** १।१२।२५; **बाल.** १।९४ पृ. २८४ चण्डा (चाण्डा).

(६) **सूसं.** १।१२।२६; **बाल.** १।९४ पृ. २८४ पुल्कसः (पुक्कसः) वेलवा (बलवा).

(७) **सूसं.** १।१२।२७; **बाल.** १।९४ पृ. २८४ त्पत्तन (त्पतन) तृतीयार्धं नास्ति : १।९५ पृ. ३०६ माण (मान) तृतीयार्धमात्रम्.

[1]अम्बष्ठायां समुत्पन्नः सवर्णेन द्विजोत्तमाः।
आग्नेयनर्तकाख्यः स इति प्रोक्तो महात्मभिः।।

(१) अपरा अपि नानाविधाः संकरजातीराह – अम्बष्ठायामित्यादिना। अम्बष्ठायां क्षत्रियाद्वैश्यायां जातायाम्। सवर्णेन ब्राह्मणात्क्षत्रियायां जातेन। तादी.

(२) सवर्णेन मूर्धावसिक्तेन।

बाल. १।९५ पृ. ३०५

[2]करणायां तु विप्रेन्द्रा माहिष्याद्यो विजायते।
स तक्षा रथकारश्च प्रोक्तः शिल्पी च वर्धकी।
लोहकारश्च कर्मार इति वेदार्थवेदिभिः।।

(१) करणायामिति। शूद्रायां विश उत्पन्नायाम्। माहिष्यादिति। अम्बष्ठापरपर्यायादिति। तादी.

(२) एतैर्नामभिरुपलक्षिता एकैव जातिः।

बाल. १।९५ पृ. ३०५

[3]विप्रायामुग्रतो जातस्तक्षवृत्तिः प्रकीर्तितः।
वैश्यायां तेन निष्पन्नः समुद्रो नाम जायते।।
[4]ब्राह्मण्यां यो निषादेन जनितः स तु नापितः।
नृपायां यो निषादेन जातोऽधोनापितः स्मृतः।।
[5]विप्रायां नापिताज्जातो वेणुकः परिकीर्तितः।
राज्ञ्यां यो जनितस्तेन कर्मकारः स उच्यते।।
[6]द्विजोत्तमायां दौष्यन्तादृभागलब्धः प्रजायते।
वैश्यायां तु निषादेन सुनिषादोऽभिजायते।।
[7]ब्राह्मण्यां यो मुनिश्रेष्ठा वैदेहेन प्रजायते।
स नाम्ना रजको ज्ञेयः पण्डितैः पण्डितोत्तमाः।।

[1]द्विजोत्तमायां चण्डालाद्यः पुमाञ्जायते भुवि।
श्वपचः स तु विज्ञेयः सर्वशास्त्रविशारदैः।।
[2]श्वपचाद्विप्रकन्यायां गुहको जायते सुतः।
वैश्यायां यस्तु चण्डालाज्जातो दन्तकवेलकः।।
[3]जनितोऽनेन शूद्रायां विप्रा आश्रमकः स्मृतः।
प्रतिलोमनिषादाद्यः शूद्रायां स तु भैरवः।।
[4]शूद्रायां मागधाज्जातः कुकुन्दः प्रोच्यते बुधैः।
नृपायां मागधाज्जातः खनकः परिकीर्तितः।।
[5]खनकाद्राजकन्यायामुद्बन्धो नाम जायते।
आयोगवेन ब्राह्मण्यां चर्मकारः प्रजायते।।
[6]विप्रव्रात्यात्तु विप्रायां बन्दिको नाम जायते।
क्षत्रव्रात्यान्नृपायां तु खल्लो मत्तश्च मल्लकः।।

संज्ञात्रयमेकजातीयस्य।

बाल. १।९५ पृ. ३०६

[7]मल्लात्तु पिच्छलस्तेन नटाख्यो जायते भुवि।
नटात्करणसंज्ञस्तु करणात्कर्मसंज्ञितः।।
[8]तेन द्रमिल उत्पन्नो नृपायां वेदवित्तमाः।
वैश्यव्रात्यात्तु वैश्यायां सुधन्वा जायते द्विजाः।।
[9]अनेनाऽऽवार्यसंज्ञस्तु भारुषो भारुषादपि।
द्विजन्मा जायते तस्मान्मैत्रो मैत्रात्तु सात्वतः।।

आवार्याख्यो भवति (ततो ?) भारुषस्ततो द्विजन्मेत्याद्यर्थः। बाल. १।९५ पृ. ३०६

---

(१) **सूसं.** १।१२।२८-२९; **बाल.** १।९५ पृ. ३०५ उत्तरार्धे (आग्नेयनर्तकाख्योऽसौ जात्या भवति नामतः।।).

(२) **सूसं.** १।१२।२९-३०; **बाल.** १।९५ पृ. ३०५ णायां तु (ण्यां तु हि).

(३) **सूसं.** १।१२।३१; **बाल.** १।९५ पृ. ३०५.

(४) **सूसं.** १।१२।३२; **बाल.** १।९५ पृ. ३०५ यो (तु) पू. : पृ. ३०६ उत्त.

(५) **सूसं.** १।१२।३३; **बाल.** १।९५ पृ. ३०५ वेणुकः (वेषुकः) यो (तु).

(६) **सूसं.** १।१२।३४; **बाल.** १।९५ पृ. ३०५ दृभाग (दृभग) पू. : पृ. ३०६ उत्त.

(७) **सूसं.** १।१२।३५; **बाल.** १।९५ पृ. ३०५.

(१) **सूसं.** १।१२।३६; **बाल.** १।९५ पृ. ३०६.

(२) **सूसं.** १।१२।३७; **बाल.** १।९५ पृ. ३०६ वेलकः (वेणकः).

(३) **सूसं.** १।१२।३८; **बाल.** १।९५ पृ. ३०६ तोऽनेन (तस्तेन) श्रमकः (श्रमिकः).

(४) **सूसं.** १।१२।३९; **बाल.** १।९५ पृ. ३०६.

(५) **सूसं.** १।१२।४०; **बाल.** १।९५ पृ. ३०५ उत्त. : पृ. ३०६ पू.

(६) **सूसं.** १।१२।४१; **बाल.** १।९५ पृ. ३०५ बन्दिको (वन्दिको) पू. : पृ. ३०६ खल्लो (सल्लो) उत्त.

(७) **सूसं.** १।१२।४२; **बाल.** १।९५ पृ. ३०६ पिच्छ (पिच्छि).

(८) **सूसं.** १।१२।४३; **बाल.** १।९५ पृ. ३०६.

(९) **सूसं.** १।१२।४४; **बाल.** १।९५ पृ. ३०६.

§ [1]**मैत्राद्वैदेहको जातः स मातङ्गश्च कीर्तितः।**
**मातङ्गाज्जायते सूतः सूताद्दस्युः प्रजायते।।**
मातङ्गादिति। वैश्यायामित्यनुवर्तते। तादी.
[2]**दस्योर्जातो मुनिश्रेष्ठा मालाकारः समाख्यया।**
**प्रतिलोमनिषादेन कैवताख्यो विजायते।।**
[3]**तिलकारिस्त्रियां जात आयोगेन द्विजोत्तमाः।**
**नीलादिवर्णविक्रेता नाम्ना वेदार्थवित्तमाः।।**
[4]**कारुश्चाभूत्ततस्तस्यां जात्या ज्ञेयस्तथैव च।।**
[5]**कारौ चारुसमाख्यायां निषादेन मुनीश्वराः।**
**चर्मजीवी समुत्पन्नः सर्वविज्ञानसागराः।।**
कारौ कारुस्त्रियां चर्मजीवी जात्या भवति। एवं तावत्त-(? वद)त्रोक्ताः पूर्वतो भिन्ना एवेति बोध्यम्।
बाल. १।९५ पृ. ३०६
[6]**युष्माकं संग्रहेणैव मयोक्तो जातिनिर्णयः।**
**यथाऽगस्त्याच्छ्रुतः पूर्वं सद्गुरोरनुशासनात्।।**
ईदृशानामनुक्तानामनन्तानां भेदानां संभवादाह – संग्रहेणेति। तादी.

---

§ यत्र पूर्वपूर्वसंकीर्णादुत्तरोत्तरसंकीर्णोत्पत्तिरुच्यते, उत्पत्तिक्षेत्रं तु ब्राह्मण्यादिरूपं नोच्यते, तत्र पूर्वप्रकृतं क्षेत्रमनुवर्तनीयमिति रीतिरत्र दरीदृश्यते। अत एवैतच्छ्लोकोत्तरार्धप्रतीकमादाय 'वैश्यायामित्यनुवर्तते' इति माधवाचार्यो व्याचष्टे। तथा च पूर्वं मैत्राद्वैश्यायां सात्वतोत्पत्तेरुक्तत्वात् पुनस्तस्मात्तस्यामेव वैदेहकोत्पत्तिरुच्यमाना न संगच्छते। 'मैत्रात् जातः सः (सात्वतः) वैदेहको मातङ्गश्च कीर्तितः' इत्यन्वयोपगमेन सात्वतमातङ्गवैदेहकशब्दानां पर्यायत्वे ग्रन्थतात्पर्याभ्युपगमे तु नासंगतिः, अन्वयस्तु क्लिष्टः। बालंभट्टीपाठे यद्यपि नासंगतिः, तथापि तस्मिन् पाठे उक्तरीतिमनुसृत्य मैत्राया अनुवर्तनीयत्वात् माधवाचार्यमतेन वैश्याया अनुवृत्तेश्च महान् ग्रन्थतात्पर्यभेद आपद्यते। तस्मात् संदिग्धार्थोऽयं ग्रन्थः।

(१) **सूसं.** १।१२।४५; **बाल.** १।९५ पृ. ३०६ पूर्वार्धे (मैत्रायां वैदेहकात्तु जातो मातङ्गनामकः।).

(२) **सूसं.** १।१२।४६; **बाल.** १।९५ पृ. ३०६.

(३) **सूसं.** १।१२।४७; **बाल.** १।९५ पृ. ३०६ तिल (तैल) जात आयोगेन (जातोऽयोगवेन).

(४) **बाल.** १।९५ पृ. ३०६.

(५) **सूसं.** १।१२।४८; **बाल.** १।९५ पृ. ३०६ चारुसमाख्यायां (चाभूत्समाख्याय).

(६) **सूसं.** १।१२।४९, ५१.

जातिर्जन्मसिद्धैव

**सर्वेषां जन्मना जातिर्नान्यथा कर्मकोटिभिः।**
**पश्वादीनां यथा जातिर्जन्मनैव न चान्यथा।।**
जन्मनिबन्धना एता जातयः सन्तु, कर्मनिबन्धनास्तु कीदृश्यः? इत्याशङ्क्य ता न संभवन्त्येवेत्याह – सर्वेषामिति। तत्र दृष्टान्तमाह – पश्वादीनामिति। तादी.

## गरुडपुराणम्

वर्णानुलोमप्रतिलोमानां रथकारस्य चोत्पत्तिः, जात्युत्कर्षः पञ्चमे सप्तमे च कुले

**याज्ञवल्क्य उवाच –**
[1]**वक्ष्ये संकरजात्यादिगृहस्थादिविधिं परम्।**
**विप्रान्मूर्धावषिक्तो हि क्षत्रियायां विशः स्त्रियाम्।**
**जातोऽम्बष्ठस्तु शूद्रायां निषादः पर्वतोऽपि वा।।**
**माहिष्यः क्षत्रियाज्जातो वैश्यायां म्लेच्छसंज्ञितः।***
**शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः।।**
**ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा।**
**शूद्राज्जातस्तु चाण्डालः सर्ववर्णविगर्हितः।।**
**क्षत्रिया मागधं वैश्याच्छूद्रा(? द्रात्) क्षत्तारमेव च।**
**शूद्रादायोगवं वैश्या जनयामास वै सुतम्।**
**माहिष्येण करण्यां तु रथकारः प्रजायते।।**
**असत्सन्तस्तु वै ज्ञेयाः प्रतिलोमानुलोमजाः।**
**जात्युत्कर्षाद्द्विजो(? र्षो युगे) ज्ञेयः सप्तमे पञ्चमेऽपि वा।।**

सप्तान्त्यजाः

[2]**रजकश्चर्मकारश्च नटो बुरुड एव च।**
**कैवर्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः।।**

सहस्रशः संकीर्णजातयः

[3]**म्लेच्छतुम्बविभेदेन जातिभेदास्त्वनेकशः।**
**जन्तूनामेव सर्वेषां जातिभेदाः सहस्रशः।।**

---

* अतः परं क्षत्रियशूद्राजातोग्रविषयकं श्लोकस्यार्धं त्रुटितं स्यात्।

(१) **गरुड.** १।९६।१-६.

(२) **गरुड.** २।१२।६; **विपा.** ५।११४ बुरुड (वरुड) (=).

(३) **गरुड.** २।१२।७.

त्रिविधाश्चाण्डालाः

[1]ब्राह्मण्यां ब्राह्मणाज्जातश्चाण्डालादधमः स्मृतः।
[2]यस्तु प्रव्रजिताज्जातो ब्राह्मण्यां शूद्रतश्च यः।
द्वावेतौ विद्धि चाण्डालौ सगोत्राद्यस्तु जायते।।

## पद्मपुराणम्

एकादशविधं सांकर्यम्, संकीर्णसंसर्गे पापसंक्रमः

[3]एकशय्यासने पङ्क्तिर्भाण्डे पक्वान्नमिश्रणम्।
यजनाध्यापने योनिस्तथैव सहभोजनम्।।
सहाध्यायस्तु दशमः सहयाजनमेव च।
एकादश समुद्दिष्टा दोषाः सांकर्यसंज्ञिताः।।
समीपे वाऽप्यवस्थानात्पापं संक्रमते नृणाम्।
तस्मात्सर्वप्रयत्नेन सांकर्यं परिवर्जयेत्।।

वेनशरीरात् निषाददिम्लेच्छ-जातीनामुत्पत्तिः

[4]वेनस्य तस्य सव्योरुं ममन्थुर्जातमन्यवः।
कृष्णाञ्जनचयोपेतमतिह्रस्वं विलक्षणम्।।
दीर्घास्यं च विरूपाक्षं नीलकञ्चुकवर्चसम्।
लम्बोदरं व्यूढकर्णमतिबाहुं दुरोदरम्।।
ददृशुस्ते महात्मानो निषीदेत्यब्रुवंस्ततः।
तेषां तद्वचनं श्रुत्वा निषसाद भयातुरः।।
पर्वतेषु वनेष्वेव तस्य वंशः प्रतिष्ठितः।
निषादाश्च किराताश्च भिल्ला नाहलकास्तथा।।
भ्रमराश्च पुलिन्दाश्च ये चान्ये म्लेच्छजातयः।
पापाचाराश्च ते सर्वे तस्मादङ्गात्प्रजज्ञिरे।।
[5]सव्यं पाणिं ममन्थुस्ते भूपस्य जातमन्यवः।
तस्माज्जातो महाह्रस्वो नीलवर्णो भयंकरः।।
बर्बरो रक्तनेत्रस्तु बाणपाणिर्धनुर्धरः।
सर्वेषामेव पापानां निषादानां बभूव ह।
धाता पालयिता राजा म्लेच्छानां तु विशेषतः।।

(१) गरुड. २।२५।४१ इत्यस्यानन्तरं कंसे मुद्रितमिदमर्धम्.
(२) गरुड. २।२५।४२-४३.
(३) पद्म. १।५५।२५-२७.
(४) पद्म. २।२७।३९-४३.
(५) पद्म. २।३७।३४-३६.

हविषोर्वर्णयोश्च प्रतिलोमसंकरादुत्पन्नौ द्विविधौ सूतौ तयोर्धर्माश्च

[1]एष धर्मस्तु सूतस्य सद्भिर्दृष्टः सनातनः।
देवतानामृषीणां च राज्ञाममिततेजसाम्।।
तद्वंशकारणं कार्यं स्तुतीनां(?) च महात्मनाम्।
इतिहासपुराणेषु दृष्टा ये ब्रह्मवादिनः।।
न हि वेदेष्वधि(? धी)कारः कश्चित्सूतस्य दृश्यते।
वैन्यस्य हि पृथोर्यज्ञे वर्तमाने महात्मनः।।
मागधश्चैव सूतश्च स्तुवन्तौ तं नरेश्वरम्।
तुष्टेनाथ तयोर्दत्तो वरो राज्ञा महात्मना।।
सूताय सूतविषयं मगधं मागधाय च।
तत्र सूत्यां समुत्पन्नः सूतो नामेह जायते।।
ऐन्द्रे सत्रे प्रवृत्ते तु गृ(? ग्र)हयुक्तं बृहस्पतिम्।
तमिवेन्द्रं(?) बार्हस्पत्ये तत्र सूतो व्यजायत।।
शिष्यहस्तेन(? हव्येन) यत्पृक्तमभिभूतं गुरोर्हविः।
अधरोत्तरचारेण जज्ञे तद्वर्णसंकरम्।।
यत्र(? श्च) क्षे(? क्ष)त्रात्समभवद्ब्राह्मण्याः स च योनितः।
पूर्वेणैव तु साधर्म्याद्ये धर्मास्ते प्रकीर्तिताः।।
मध्यमो ह्येष सूतस्य धर्मः क्षे(? क्ष)त्रोपजीविनः।
पुराणेष्वधिकारो मे विहितो ब्राह्मणैरिह।।
द्रष्टुं धर्ममहं पृष्टो भवद्भिर्ब्रह्मवादिभिः।
य(? त)स्मात्सम्यग्भुवि ब्रूयां पुराणमृषिपूजितम्।।

वेनशरीरात् म्लेच्छानामुत्पत्तिः

[2]तत्कायान्मथ्यमानात्तु निपेतुर्म्लेच्छजातयः।।

गरुडेनोद्वान्तानां यवनादिम्लेच्छानां पूर्वादिदिक्षु स्थितिः समाचारा अस्पृश्यता च

[3]वनेषु पर्वतान्तेषु दिक्षु तान्पतगेश्वरः।
उद्ववाम ततः शीघ्रं दोषज्ञः पितुराज्ञया।।
ततः पूर्वेऽभवन्व्यक्ता अकेशाः श्मश्रुवर्जिताः।
यवना भोजनप्रीताः किंचिच्छ्मश्रुयुताश्च ये।।

(१) पद्म. ५।१।२७-३६
(२) पद्म. ५।८।७.
(३) पद्म. ५।४४।७१-७७.

**अग्नौ च नग्नकाः पापा दक्षिणस्यामवाचकाः।**
**घोराः प्राणिवधे प्रीता दुरात्मानो गवाशिनः।।**
**नैर्ऋते कुवदाः पापा गोब्राह्मणवधोद्यताः।**
**खर्पराः पश्चिमे पूर्वे निवसन्ति च दारुणाः।।**
**वायव्यां च तुरुष्काश्च श्मश्रुपूर्णा गवाशिनः।**
**अश्वपृष्ठसमारूढाः प्रयुद्धेष्वनिवर्तिनः।।**
**उत्तरस्यां च गिरयो म्लेच्छाः पर्वतवासिनः।**
**सर्वभक्षा दुराचारा वधबन्धरताः किल।।**
**ऐशान्यां निरयाः सन्ति कर्तॄणां वृक्षवासिनः।**
**एते म्लेच्छाः स्थिता दिक्षु घोरास्ते शस्त्रपाणयः।।**
**एषां च स्पर्शमात्रेण सचैलो जलमाविशेत्।।**

## ब्रह्मवैवर्तपुराणम्

गोपनापितादयः सच्छूद्राः,
करणाम्बष्ठयोरुत्पत्तिः

*** [१]तासां संकरजातेन बभूवुर्वर्णसंकराः।।**
**गोपनापितभिल्लाश्च तथा मोदककूबरौ।**
**ताम्बूलिस्वर्णकारौ च वणिग्जातय एव च।।**
**इत्येवमाद्या विप्रेन्द्र सच्छूद्राः परिकीर्तिताः।**
**शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः।।**

विश्वकर्मशूद्राजाता नव शिल्पिन-
स्तेषां ब्रह्मशापात्पातित्यं
च

**विश्वकर्मा च शूद्रायां वीर्याधानं चकार सः।**
**ततो बभूवुः पुत्राश्च ¶ नवैते शिल्पकारिणः।।**

**§ मालाकारः कर्मकारः शङ्खकारः कुविन्दकः।**
**कुम्भकारः कांस्यकारः षडेते शिल्पिनां वराः।।**
**सूत्रधारश्चित्रकारः स्वर्णकारस्तथैव च।**
**पतितास्ते ब्रह्मशापादयाज्या वर्णसंकराः।।**

घृताचीविश्वकर्मणोर्मालाकारादयोऽष्टौ
पुत्राः, तत्र केचिद्ब्रह्म-
शापात्पतिताः

**# सा सुषाव च तत्रैव पुत्रान्नव( ? नष्टौ) मनोहरान्।।**
**कृतशिक्षितशिल्पांश्च ज्ञानयुक्तांश्च शौनक।**
**पूर्वप्राक्तनतो योग्यान्बलयुक्तान्विचक्षणान्।।**
**मालाकारान्कर्मकाराञ्छङ्खकारान्कुविन्दकान्।**
**कुम्भकारान्सूत्रकारान्स्वर्णचित्रकरांस्तथा।।**
**स्वर्णकारः स्वर्णचौर्याद्ब्राह्मणानां द्विजोत्तम।**
**बभूव पतितः सद्यो ब्रह्मशापेन कर्मणा।।**
**सूत्रकारो द्विजानां तु शापेन पतितो भुवि।**
**शीघ्रं च यज्ञकाष्ठानि न ददौ तेन हेतुना।।**
**व्यतिक्रमेण चित्राणां सद्यश्चित्रकरस्तथा।**
**पतितो ब्रह्मशापेन ब्राह्मणानां च कोपतः।।**
**कश्चिद्वणिग्विशेषश्च संसर्गात्स्वर्णकारिणः।**
**स्वर्णचौर्यादिदोषेण पतितो ब्रह्मशापतः।।**

अट्टालिकाकारः कोटकः तैलकारः
तीवरः लेटः इत्येतेषा-
मुत्पत्तिः

**कुलटायां च शूद्रायां चित्रकारस्य वीर्यतः।**
**बभूवाट्टालिकाकारः पतितो जारदोषतः।।**
**अट्टालिकाकारबीजात्कुम्भकारस्य योषिति।**
**बभूव कोटकः सद्यः पतितो गृहकारकः।।**
**कुम्भकारस्य बीजेन सद्यः कोटकयोषिति।**
**बभूव तैलकारश्च कुटिलः पतितो भुवि।।**
**सद्यः क्षत्रियबीजेन राजपुत्रस्य योषिति।**
**बभूव तीवरश्चैव पतितो जारदोषतः।।**

---

* ब्राह्मणादिवर्णजातीनामित्यर्थः।

¶ शिल्पकारोत्पत्तिविषयकोऽत्रत्यो ग्रन्थो विश्वकर्मजनितशिल्पकाराणां संख्याविषये चित्तं व्याकुलयति। तथाहि – अत्र तेषां नवत्वमुक्तं नामनिर्देशैर्नवैव परिगणिताश्च। उत्तरत्र 'पुत्रान्नव' इति नवत्वं स्वशब्देनोक्तम्, नामनिर्देशैः परिगणनं तु अत्रोक्तेष्वष्टानामेव। तत्र कांस्यकारो नास्ति। तत्राऽऽदर्शपुस्तकपादटिप्पण्यां 'पुत्रान्नव' इत्यत्र 'पुत्रानष्टौ' इति पुस्तकान्तरीयः पाठभेदो दर्शितः। अत्रैतत्पुत्रोत्पत्तिविषयककथायां 'नव पुत्रान्' इति, 'पुत्रान्नव' इति च द्विवारं नवत्वनिर्देशोऽस्ति, तत्रापि च नवशब्दस्थाने 'अष्टौ' इति पाठभेद आदर्शपुस्तके निर्दिष्टः। अस्मदादर्शान्तरेऽप्येवमेव स्थितिः, उक्तपाठभेदास्तु न निर्दिष्टाः।

(१) **ब्रह्मवै.** १।१०।१६-२१, ८८-९०, ९२-१२४, १३४-१३७.

§ एकस्मात् पुरुषात् एकस्यां स्त्रियामेकजातीयासु वा स्त्रीषु नव जातयः कथमुत्पन्ना इति न स्पष्टीकृतम्। मालाकारादयश्च जातिशब्दाः प्रसिद्धाः। उत्तरत्राप्येतादृशस्थलेष्वेवमेव प्रतिपत्तव्यम्।

# सा घृताची। प्रकृतात् विश्वकर्मणः सकाशादिति शेषः।

**तीवरस्य तु बीजेन तैलकारस्य योषिति।**
**बभूव पतितो दस्युर्लेटश्च परिकीर्तितः।।**

लेटात् तीवर्यां माल्लमन्त्रमातर-
भण्डकोलकलंदराणा-
मुत्पत्तिः

**लेटस्तीवरकन्यायां जनयामास षट् सुतान्।**
**माल्लं मन्त्रं ‡मातरं च भण्डं कोलं कलंदरम्।।**

चाण्डालचर्मकारमांसच्छेद-
कोञ्चकर्ताराणा-
मुत्पत्तिः

**ब्राह्मण्यां शूद्रवीर्येण पतितो जारदोषतः।**
**सद्यो बभूव चाण्डालः सर्वस्मादधमोऽशुचिः।।**
**तीवरेण च चण्डाल्यां चर्मकारो बभूव ह।**
**चर्मकार्यां च चण्डालान्मांसच्छेदो बभूव ह।।**
**मांसच्छेद्यां तीवरेण कोञ्चश्च परिकीर्तितः।**
**कोञ्चस्त्रियां तु कैवर्तात्कर्तारः( ?) परिकीर्तितः।।**

लेटचाण्डालीभ्यां हड्डिडमश्च
संजातौ

**सद्यश्चाण्डालकन्यायां लेटवीर्येण शौनक।**
**बभूवतुस्तौ द्वौ पुत्रौ दुष्टौ हड्डिडमौ तथा।।**

हड्डिस्त्रियां चाण्डालात् पञ्च
पुत्राः संजाताः

**क्रमेण हड्डिकन्यायां सद्यश्चाण्डालवीर्यतः।**
**बभूवुः पञ्च पुत्राश्च दुष्टा वनचराश्च ते।।**

गङ्गापुत्रः युङ्गी शुण्डी पौण्ड्रकः राजपुत्रः आगरी
धीवरः रजकः कोयाली सर्वस्वी
व्याधः इत्येतेषामुत्पत्तिः

**लेटात्तीवरकन्यायां गङ्गातीरे च शौनक।**
**बभूव सद्यो यो बालो गङ्गापुत्रः प्रकीर्तितः।।**

‡ शब्दोऽयमग्रिमकर्तारशब्दवदव्युत्पन्नो मातर इत्यकारान्तो वा, अष्टाध्यायीसूत्रव्युत्पन्नः पुंल्लिङ्गो मातृशब्दस्तत्र चोपधादीर्घाभावो वा, उणादिसूत्रव्युत्पन्नो जननीवाचकः स्त्रीलिङ्गः संज्ञात्वात् सुतशब्दसामानाधिकरण्याच्च पुंल्लिङ्गीकृतो मातृशब्दो वेति संदेहः। कर्तारशब्दोऽप्यकारान्तोऽव्युत्पन्नो वा, लेखकेन प्रमादेन मूलपाठः परिवर्तितो वेत्यस्ति संदेहः।

**गङ्गापुत्रस्य कन्यायां वीर्याद्वै वेषधारिणः।**
**बभूव वेषधारी च पुत्रो युङ्गी प्रकीर्तितः।।**
**वैश्यात्तीवरकन्यायां सद्यः शुण्डी बभूव ह।**
**शुण्डियोषिति वैश्यात्तु पौण्ड्रकश्च बभूव ह।।**
**क्षत्रात्करणकन्यायां राजपुत्रो बभूव ह।**
**राजपुत्र्यां तु करणादागरीति प्रकीर्तितः।।**
**क्षत्रवीर्येण वैश्यायां कैवर्तः परिकीर्तितः।**
**कलौ तीवरसंसर्गाद्धीवरः पतितो भुवि।।**
**तीवर्यां धीवरात्पुत्रो बभूव रजकः स्मृतः।**
**रजक्यां तीवराच्चैव कोयालीति बभूव ह।।**
**नापिताद्गोपकन्यायां सर्वस्वी तस्य योषिति।**
**क्षत्राद्बभूव व्याधश्च बलवान्मृगहिंसकः।।**

दस्यूत्पत्तिः

**तीवराच्छुण्डिकन्यायां बभूवुः सप्त पुत्रकाः।**
**ते कलौ हड्डिसंसर्गाद्बभूवुर्दस्यवः सदा।।**

विप्रतुल्याशौचस्य
कूदरस्योत्पत्तिः

**ब्राह्मण्यामृषिवीर्येण ऋतोः प्रथमवासरे।**
**कुत्सितश्चोदरे जातः कूदरस्तेन कीर्तितः।।**
**तदशौचं विप्रतुल्यं पतितो ऋतुदोषतः।**
**सद्यः कोटकसंसर्गादधमो जगतीतले।।**

वागतीतस्योत्पत्तिः

**क्षत्रवीर्येण वैश्यायामृतोः प्रथमवासरे।**
**जातः पुत्रो महादस्युर्बलवांश्च धनुर्धरः।।**
**चकार वागतीतं च क्षत्रियेणापि वारितः।**
**तेन जात्या स पुत्रश्च वागतीतः प्रकीर्तितः।।**

म्लेच्छजात्युत्पत्तिः

**क्षत्रवीर्येण शूद्रायामृतुदोषेण पापतः।**
**बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः।।**
**अविद्धकर्णाः क्रूराश्च निर्भया रणदुर्जयाः।**
**शौचाचारविहीनाश्च दुर्धर्षा धर्मवर्जिताः।।**

जोलशराङ्कयोरुत्पत्तिः

**म्लेच्छात्कुविन्दकन्यायां जोला( ? ल)जातिर्बभूव(ह)।**
**जोलात्कुविन्दकन्यायां शराङ्कः परिकीर्तितः।।**

अप्रसिद्धाः संकीर्णजातयः

असंख्याः

**वर्णसंकरदोषेण बह्व्यश्चाश्रुतजातयः।**
**तासां नामानि संख्याश्च को वा वक्तुं क्षमो द्विज।।**

वैद्यस्योत्पत्तिः, वैद्यशूद्राजनितपुत्रैः

शूद्रायां जनिताः पुत्राः

**वैद्योऽश्विनीकुमारेण जातो विप्रस्य योषिति।**
**वैद्यवीर्येण शूद्रायां बभूवुर्बहवो जनाः।।**
**ते च ग्राम्यगुणज्ञाश्च मन्त्रौषधिपरायणाः।**
**तेभ्यश्च जाताः शूद्रायां ये व्यालग्राहिणो भुवि।।**

यज्ञे पुराणप्रवक्तृसूतोत्पत्तिः

**कश्चित्पुमान्ब्रह्मयज्ञे यज्ञकुण्डात्समुत्थितः।**
**स सूतो धर्मवक्ता च मत्पूर्वपुरुषः स्मृतः।।**
**पुराणं पाठयामास तं च ब्रह्मा कृपानिधिः।**
**पुराणवक्ता सूतश्च यज्ञकुण्डसमुद्भवः।।**

भट्टोत्पत्तिः

**वैश्यायां सूतवीर्येण पुमानेको बभूव ह।**
**स भट्टो वावदूकश्च सर्वेषां स्तुतिपाठकः।।**
**एवं ते कथितः किंचित्पृथिव्यां जातिनिर्णयः।**
**वर्णसंकरदोषेण बह्व्योऽन्याः सन्ति जातयः।।**

## वामनपुराणम्

वेनसव्यकरात् निषादोत्पत्तिः

**[1]ततस्ते ऋषयः सर्वे ममन्थुस्तस्य† वै करम्।**
**सव्यं तस्मात्समुत्तस्थौ पुरुषो ह्रस्वदर्शनः।।**
**तमूचुर्ऋषयः सर्वे निषीदतु भवानिति।**
**तस्मान्निषादा उत्पन्ना वेनकल्मषसंभवाः।।**

## कूर्मपुराणम्

एकादशविधं सांकर्यम्, संकीर्ण-
संसर्गात्पापसंक्रमः

**[2]एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम्।**
**या( ? य)जनाध्यापनं योनिस्तथैव सहभोजनम्।।**
**सहाध्यायस्तु दशमः सहयाजनमेव च।**
**एकादशैते निर्दिष्टा दोषाः सांकर्यसंज्ञिताः।।**
**समीपे वाऽप्यवस्थानात्पापं संक्रमते नृणाम्।**
**तस्मात्सर्वप्रयत्नेन संकरं वर्जयेद्बुधः।।**

## भविष्यपुराणम्

चाण्डालत्रैविध्यम्

**[1]आरूढपतितापत्यो( ? त्यं) ब्राह्मण्यां वृषलेन च।**
**द्वावेतौ विद्धि चाण्डालौ वेदित्राद्( ?)यश्च जायते।।**

ब्राह्मण्यां ब्राह्मणजारजो

महाचाण्डालः

**ब्राह्मणी कुलटा नित्यं स्वकं त्यक्त्वा पतिं खग।**
**अन्यस्य विशते गेहे ब्राह्मणस्य खगाधिप।।**
**उत्पद्यते तु यस्तस्यां ब्राह्मणेन महामते।**
**स चाण्डालो महान्प्रोक्तो महाचाण्डाल इत्युत।।**

## नारदपुराणम्

सप्तान्त्यजाः

**[2]रजकश्चर्मकारश्च नटो वरड एव च।**
**कैवर्तमेदिभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः।।**

## अग्निपुराणम्

अनुलोमानां मातृसमा जातिः

**[3]आनुलोम्येन वर्णानां जातिर्मातृसमा स्मृता।।**

वर्णप्रतिलोमजास्तेषां वृत्तयश्च

**चण्डालो ब्राह्मणीपुत्रः शूद्राच्च प्रतिलोमतः।**
**सूतस्तु क्षत्रियाज्जातो वैश्याद्वै देवलस्तथा।।**
**पुक्कसः क्षत्रियापुत्रः शूद्रात्स्यात्प्रतिलोमजः।**
**मागधः स्यात्तथा वैश्याच्छूद्रादायोगवो भवेत् ‡।।**
**वैश्यायां प्रतिलोमेभ्यः प्रतिलोमाः सहस्रशः।**
**विवाहः सदृशैस्तेषां नोत्तमैर्नाधमैस्तथा।।**
**चण्डालकर्म निर्दिष्टं वध्यानां घातनं तथा।**
**स्त्रीजीवनं तु तद्रक्षा प्रोक्तं वैदेहकस्य च।।**

---

† वेनस्येत्यर्थः।

(१) **वामन.** ४७।१८-२०.

(२) **कूर्म.** २।१६।२८-३०.

‡ अस्योत्तरत्र वैश्यायामित्यत्र संबन्धः।

(१) **भविष्य.** १।१८४।१४-१६.

(२) **नारद.** १।१४।३१-३२.

(३) **अग्नि.** १५१।१०-१८.

**सूतानामश्वसारथ्यं पुक्कसानां च व्याधता।**
**स्तुतिक्रिया मागधानां तथा चाऽऽयोगवस्य च।**
**रङ्गावतरणं प्रोक्तं तथा शिल्पैश्च जीवनम्।।**
**बहिर्ग्रामनिवासश्च मृतचेलस्य धारणम्।**
**न संस्पर्शस्तथैवान्यैश्चण्डालस्य विधीयते।।**

प्रतिलोमानां सिद्धिकारणं
कर्मभिर्जातिविज्ञानं च

**ब्राह्मणार्थे गवार्थे वा देहत्यागोऽत्र यः कृतः।।**
**स्त्रीबालाद्युपपत्तौ वा बाह्यानां सिद्धिकारणम्।**
**संकरे जातयो ज्ञेयाः पितुर्मातुश्च कर्मतः।।**

विदुरचण्डालाः

**'ये च प्रव्रजिताः पत्न्यां या चैषां बीजसंततिः।**
**विदुरा नाम चण्डाला जायन्ते नात्र संशयः।।**

## मुद्गलपुराणम्

वर्णसांकर्यात् नानाविधा
जातयः

**[2]व्यभिचारेण तेषां वै वर्णा जाता महामुने।**
**नानाविधा विशेषेण जानीह्यत्र न संशयः।।**

अधुना व्यभिचारोद्भववर्णानाह – व्यभिचारेणेति। तेषां चतुर्वर्णानां व्यभिचारेण नानावर्णा जाता इति। ते यथा– याज्ञवल्क्यः – 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः। अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः।।' (यास्मृ. १।९०) इति। शुद्धवर्णाः, समानमातृपितृसंभवत्वात्। ननूशनश्च्यवनजमदग्निविश्वामित्रादीनां ब्राह्मणत्वं नोपपद्यते, मानसिकत्वात्, मातृहीनत्वात्, क्षत्रियामातृकत्वाच्चेति चेदीश्वरांशत्वाद्युगान्तरमाहात्म्यादृचीककृतपिण्डब्राह्मणतेजोयुक्तत्वान्महातपोराशिसामर्थ्यान्न दोषः। एवं पाण्डवादिषु ब्राह्मणदत्तवरमन्त्रसामर्थ्यान्न दोषः। अत्र याज्ञवल्क्यः – 'विप्रान्मूर्धावसिक्तस्तु क्षत्रियायां विशः स्त्रियाम्। अम्बष्ठः शूद्र्यां निषादो जातः पारसवोऽपि वा।। वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ। शूद्रायां करणो वैश्याद्विन्न एष (? विन्नास्वेष) विधिः स्मृतः।।' (यास्मृ. १।९१, ९२) इत्यनुलोमषट्कम्। 'ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकः स्मृतः। शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः।। क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च। शूद्रादायोगवं वैश्या जनयामास वै सुतान्(? तम्)।।' (यास्मृ. १।९३, ९४) इति प्रतिलोमषट्कम्। जीवद्भर्तृकनारीणां व्यभिचारसंभवः पुत्रः कुण्डः, मृते भर्तरि गोलकश्चेत्यष्टादशवर्णाः। एतेषां व्यभिचारेण नानावर्णाः, तेषामुद्भवो न कथ्यते, अधुना कार्याभावात्। तत्र कायस्थाः त्रिविधाः – देव्युद्भवाः, चान्द्रसेनाः, संकराश्चेति। तत्र देव्युद्भवानां षोडश संस्कारा वेदोक्ता ब्राह्मणमुखात्। चान्द्रसेनानां द्वादश संस्कारा वेदोक्ताः, ब्रह्मचर्याश्रमहीनत्वात्, ब्राह्मणमुखाच्च। संकराणां पञ्च संस्काराः। तत्र पाद्मे – 'जातकर्म तथा नाम वपनं कर्णवेधनम्। उद्वाहश्चेति विज्ञेयाः कायस्थे पञ्च संस्क्रियाः।।' इति। पुराणोक्तं कर्मैतेषाम्, मौञ्ज्यादिहीनत्वाच्छूद्रादपि हीनत्वाच्चेति। मुभा.

(१) **अग्नि.** १६५।२४-२५.
(२) **मुद्गल.** ३।२०।२.

## आदित्यपुराणम्

भृज्जकण्टकश्रावन्त(आवन्त्य) पुष्प-
शेखरवाटधानानामुत्पत्तिः,
भृज्जकण्टकस्य
वृत्तिः

**[1]ब्राह्मण्यां ब्राह्मणाद्व्रात्याज्जायते भृज्जकण्टकः।**
**श्रावन्तपुष्पशेखरवाटधानाश्च जातयः।।**
**[2]आभिचारिककर्माणि भृज्जकण्टकिनोऽशनम्।**
**मन्त्रौषधी शात्रवाणां संमुखीकरणानृते।**
**कुर्वन्ति राज्ञां हि ततस्तेनैवाधिकृताः परम्।।**

(१) भृज्जकण्टकिनोऽशनमिति। अशनं वृत्तिः जीवनोपाय इति यावत्। संमुखीकरणं वशीकरणम्। तदर्थमेव अनृतवचनाभ्यनुज्ञानम्। श्रावन्तादीनामियमेव वृत्तिः। देशभेदात्संज्ञाविशेषाः। स्मृकौ. २२

(२) अविकृताः अदण्ड्याः। † शूक. २७२

† शेषं स्मृकौवत्।

(१) **स्मृकौ.** २२ आदित्यपुराणे ब्रह्मपुराणसंज्ञके, एवं सर्वत्र; **शूक.** २७१-२७२ उत्तरार्धे (आवन्त्यवाटधानौ च पुष्पशेखरजातयः।।).

(२) **स्मृकौ.** २२; **शूक.** २७२ कर्माणि (कर्मात्र) णानृते (णादृते) तृतीयार्धे (कुर्वन्ति राज्ञां हि ततस्तेनैवाविकृताः परैः।।).

झल्लमल्लनटलिच्छीवीककरण-
द्रमिडानामुत्पत्तिस्तेषां
वृत्तिश्च

**[1]राज्ञीनां क्षत्रियाद्व्रात्याज्झल्लमल्लनटा झषाः।**
**लिछीवीकाश्च करणा द्रमिडाः सन्ति भूरिशः।।**

देशभेदाज्झल्लादिर्नामभेदः। एवं सर्वत्र ज्ञेयम्। करणोऽत्र प्रतिलोमजः, नानुलोमजः। स्मृकौ. २२

**[2]विज्ञेयाः परराष्ट्राणां तैश्च राजाज्ञया सदा।**
**वेसो मल्लस्तथा वृत्तं मित्रामित्रत्वमेव च।।**

परराष्ट्राणां विज्ञेया इति परराष्ट्रसंबन्धिनः कार्यविशेषा ज्ञेया इत्यर्थः। एतेन वृत्तिर्दर्शिता। मित्रामित्रत्वमेव च वृत्तम्। मित्रत्वं मैत्रीकरणम्। अमित्रत्वं विरोधकरणम्। वृत्त्यन्तर-कथनमेतत्। स्मृकौ. २२

कारूषकसुधन्वाचार्यविजन्ममेव-
सात्वतानामुत्पत्ति-
र्वृत्तिश्च

**[3]वैश्यस्त्रीणां तथा व्रात्याद्वैश्यात्कारूषको भवेत्।**
**चतुष्पथे श्मशाने च स भवेन्मित्रमण्डलम्( ? लः)।।**

मित्रमण्डलमिति। चतुष्पथश्मशानयोर्मित्राणां मण्डलं समुदायो यस्य स तथोक्तः, चतुष्पथादिषु लोकवार्ता बह्व्यो भवन्तीति लोकवृत्तज्ञानार्थं राज्ञा नियुक्तः, सह तत्रत्यैर्मैत्रीं कुर्यादित्यर्थः। 'चतुष्पथे श्मशाने च स भवेन्मातृमण्डनः' इति पाठान्तरम्। मातृमण्डनः चतुष्पथे श्मशाने च या देवता मातरस्तासां मण्डनं पूजां कुर्यादित्यर्थः।

\# स्मृकौ. २३

**[4]सुधन्वाचार्यस्त्वपरो भवेद्रुद्रस्य पूजकः।**
**तृतीयश्च विजन्माख्यः सूतिकावेश्म नित्यशः।।**

**[1]भूतप्रेतपिशाचांश्च पूजयेद्राजशासनात्।**
**साध्यानां पूजको मेवश्चैत्यादीनां चतुर्थकः।।**
**[2]पञ्चमः सात्वतो नाम *विस्तारायतनान्यपि।**
**पूजयत्याज्ञया राज्ञां यदि स्यात्संयतेन्द्रियः।।**

कारूषादीनि सात्वतान्तानि नामानि वैश्यव्रात्याद्वैश्यायामुत्पन्नस्यैव नामानि। देशभेदादेष्वेव नामस्वन्यतमनाम अन्यतमा च वृत्तिर्भवतीति केचन व्याचक्षते। अपरे तु कारूषाद्वैश्यायां जातः सुधन्वाचार्यः, सुधन्वाचार्याद्वैश्यायां जातो विजन्माख्य इति, एवमुत्तरत्रापि द्रष्टव्यमिति। सूतिकावेश्म नित्यश इति। सूतिकाया वेश्म गृहं निवासस्थानं रक्षार्थमित्यर्थः। साध्याः देवताविशेषाः। मूच इति यस्य संज्ञान्तरं स एवमेव इति व्यपदिश्यते।

स्मृकौ. २३-२४

अवरोढकसंज्ञककुण्डगोलक-
योरुत्पत्तिर्धर्मो-
वृत्तिश्च

**[3]सवर्णासु सवर्णैस्तु ये जायन्ते परैरपि।**
**अवरोढकसंज्ञास्ते व्रतसंस्कारवर्जिताः।।**

परैरिति पत्युः सकाशादन्यैरित्यर्थः। अवरोढकस्यैवावर्णोढ इत्यपि संज्ञान्तरम्। एतच्च कुण्डगोलकयोः साधारणं नाम। व्रतसंस्कारवर्जिता इति ब्राह्मणाद्ब्राह्मण्यामुत्पन्ना येऽवरोढकास्तद्व्यतिरिक्ता अवरोढका उपनयनसंस्कारवर्जिता इत्यर्थः। स्मृकौ. २४

**[4]चतुर्णामपि वर्णानां जीवतामन्यसंभवः।**
**कुण्डस्तु संकरो ज्ञेयो मृतानामथ गोलकः।।**
**जातिहीनः स मातॄणां ग्राहयेत्कर्मनामनी।**
**योज्यो देवपुरे राज्ञा वर्णसंकरभीरुणा।।**

स मातॄणां ग्राहयेदिति। सः कुण्डो गोलकश्च स्वमातॄणां कर्मनामनी ग्राहयेत्। कर्मग्रहणे नामग्रहणे च प्रयोजको

---

\# शूक. स्मृकौगतम्।

(१) **स्मृकौ.** २२; **शूक.** २७२ राज्ञीनां (राज्ञीषु) लिछीवीकाश्च (आवित्थिबीकाः).

(२) **स्मृकौ.** २२; **शूक.** २७२ सदा (क्रियाः) वेसो (खसो).

(३) **स्मृकौ.** २३ न्मित्रमण्डलम् (न्मातृमण्डनः) इत्यपि पाठः; **शूक.** २७२ स्त्रीणां (स्त्रीषु) त्कारू (त्कारु) शेषं स्मृकौवत्.

(४) **स्मृकौ.** २३; **शूक.** २७२ नित्यशः (पूजकः).

* अस्य व्याख्यानं 'जातिहीनः' इत्यग्रिमश्लोके द्रष्टव्यम्।

(१) **स्मृकौ.** २३; **शूक.** २७२ मेव (मैत्र).

(२) **स्मृकौ.** २३; **शूक.** २७२ नान्यपि (नार्चकः) पू.

(३) **स्मृकौ.** २४; **शूक.** २५४ रोढक (रोटक); **संग.** ६३९ आदिपुराणे.

(४) **स्मृकौ.** २४; **शूक.** २५४.

भवतीत्यर्थः। एतदुक्तं भवति – कुण्डगोलकानां यत्कर्म या वृत्तिः सैव तन्मातॄणामपि वृत्तिः, कुण्डो गोल इति च यन्नाम तन्नाम्ना तन्मातरोऽपि यथायोगं व्यपदेश्या इति। '*विस्तारायतनान्यपि' इत्यपिशब्दाच्चैत्याद्यपि पूजयतीत्युक्तं भवति। देवपुरे देवद्वारे। स्मृकौ. २४-२५

[1]**कुण्डो वा गोलको विप्रः संध्योपासनमात्रवित्।**
**स्नानभोजनसंध्यासु देवेषु स पठेच्च तत्।**
**एकान्ते कुटपे भुक्त्वा सदृशैः सह संगतः।।**

(१) विप्राद्विप्रायामुत्पन्नयोः कुण्डगोलकयोः संध्यावन्दनमात्राधिकारः। अत एव यथार्हमुपनयनमपि विद्यते। तथा च 'कुण्डगोलकावपि यथार्हं संस्कार्यौ' इति स्मृत्यन्तरं मिताक्षरायामुदाहृतम्। स्नानभोजनसंध्यासु पठेत्। स्नानादीनां पठितुमशक्यत्वात्तदिति निर्देशः कृतः। तत्प्रतिपादकं वाक्यजातं लौकिकं पठेत् देवतायाः स्नानादिसमये बन्दिवत् इत्यर्थः। 'स्नानभोजनसंध्यासु पठेत्' इत्यपि पाठः। स्नानभोजनसंध्यासु तत्पठेदित्यन्वयः। संध्यास्विति विषयसप्तमी निमित्तसप्तमी वा। कुटपः कुटी। स्मृकौ. २५

(२) देवालये स्थित्वा देवस्नानाद्यवसरेषु बन्दिवद्वर्णकान् पठेत्। एकान्ते कुट्ये कुट्यां वसेदित्येतत्सांकर्यपरिहारार्थं नगरवासं निषेधति। शूशि. ८

ब्राह्मणजाता वर्णानुलोमाः

[2]**मूर्धावसिक्तो ब्राह्मणात्क्षत्रियायां प्रसूयते।**
**स करोति मनुष्याणां चिकित्सां रोगिणामपि।।**

प्रसङ्गादनुलोमानाह – मूर्धेति। रोगिणां मनुष्याणां चिकित्सामपि करोति। अपिशब्दात् क्षत्रजात्युचितमपि कर्म करोति। § स्मृकौ. २५

‡ [1]**ब्राह्मणाच्छूद्रकन्यायां भवेत्पारशवस्तु सः।**
**निषादो मत्स्यघातित्वं चक्रे राजाज्ञया सदा।।**

प्रतिलोमनिषादवदयं न स्वेच्छया मत्स्यघाती, अपि तु राजाज्ञया द्विजानां श्राद्धाद्यर्थमुदितान् मत्स्यान् हन्ति। स्मृकौ. २६

ब्राह्मणेन संकीर्णासु जनिता जातयः

[2]**ब्राह्मणेनोग्रकन्यायामम्बष्ठो नाम जायते।**
**स करोति मनुष्याणां चिकित्सां रोगिणामपि।।**

(१) उग्रा क्षत्रियाच्छूद्रायामुत्पन्ना। ब्राह्मणाद्वैश्यायामुत्पन्नोऽप्यम्बष्ठः। स्मृकौ. २६

(२) विप्राद्वैश्याजः क्षत्राच्छूद्रा( ? क्षत्रशूद्राजा)जश्चेति द्वावम्बष्ठौ। शूक. २७४

[3]**ब्राह्मणेन तथाऽम्बष्ठ्यामाभीरो जायते सुतः।**
**गोजाविरक्षां कुरुते स तु राजगृहेष्वपि।।**
[4]**आयोगव्यां ब्राह्मणात्तु जायते विगुणो नरः।**
**स चर्मकारो विज्ञेयो गर्हितश्चर्मजीवनः।।**

शूद्राद्वैश्यायामुत्पन्नाऽऽयोगवी। § स्मृकौ. २६

अवरोढकादीनां षण्णां मातृसधर्मत्वम्

[5]**एते मातृसधर्माणो न पितुः पुत्रकास्तु षट्।।**

(१) अवरोढकमूर्धावसिक्तपारशवाम्बष्ठाभीरचर्मकाराः षट्। स्मृकौ. २६

(२) मूर्धावसिक्तादीन् अनुलोमप्रतिलोमान् प्रक्रम्य ब्रह्मपुराणे उक्तम् – 'एते मातृसधर्माणः' इति। बाल. १।९४ पृ. २८५

---

* 'पञ्चमः सात्त्वतो नाम' इति व्यवहितप्राचीनश्लोकव्याख्यानमिदमत्र प्रमादात्पतितमिति भाति।

§ शूक. स्मृकौगतम्।

(१) **स्मृकौ.** २५ कान्ते कु (कान्तकु) "स्नानभोजनसंध्यासु पठेत' इत्यपि पाठः" इत्युक्तम्। तत्र अवशिष्टांशे पाठो न ज्ञायते।; **शूशि.** ८ च्च तत् (च्चरेत्) कुटपे (कुटये) स्मृतिः ; **आर.** ३८ प्रथमार्धमात्रम्, स्मृतिः ; **शूक.** २५४ तृतीयार्धं नास्ति; **संग.** ६३९ च्च तत् (च्चरेत्) आदिपुराणे.

(२) **स्मृकौ.** २५; **शूक.** २७४ ब्राह्मणात् (विप्राद्यः) आदिपुराणे.

‡ अतः पूर्वं ब्राह्मणवैश्याजातपरः श्लोक उच्छिन्नः स्यादिति भाति।

§ शूक. स्मृकौवत्।

(१) **स्मृकौ.** २५; **शूक.** २७४ शव (सव) आदिपुराणे.

(२) **स्मृकौ.** २६; **शूक.** २७४ आदिपुराणे.

(३) **स्मृकौ.** २६; **शूक.** २७४ स तु (स च) आदिपुराणे.

(४) **स्मृकौ.** २६; **शूक.** २७४ विगुणो (धिग्वणो) आदिपुराणे.

(५) **स्मृकौ.** २६; **शूक.** २७४ कास्तु (काश्च) आदिपुराणे; **बाल.** १।९४ पृ. २८५ प्रथमचरणमात्रम्, ब्रह्मपुराणे.

विप्रसहितो विप्रजन्यः षोडशको
दस्युगणः

**[1]मूर्धावसिक्तोऽम्बष्ठश्च निषादश्च तथा त्रयः।**
**विप्रक्षत्रियविट्शूद्रनारीणां गमनादिह।।**
**एकैकशस्तु चतुरो जनयन्ति सुतानपि।**
**एते द्वादश विद्यन्ते मूलप्रकृतिभिर्युताः।।**
**[2]भवन्ति पञ्चदशैव विप्रः षोडशको भवेत्।**
**दस्युसंज्ञा भवन्त्येते मातृवत्कर्मकारिणः।।**

(१) मूर्धावसिक्ताम्बष्ठनिषादा मूलप्रकृतयः। एता मूलप्रकृतयो विप्रक्षत्रिय(विट्)शूद्रनारीगमाद्यान्यपत्यान्युत्पादयन्ति तत्रापत्योत्पादको वा तैः सहैकशयनासनादिभिः सततं यो व्यवहरति स विप्रो(? प्रो वा)ऽत्र षोडशकः। एते सर्वे दस्युनामानो भवन्ति। मातृवत्कर्मकारिणः। निन्दितापत्यमातृवत्। एतेन निन्दितकर्मकरत्वं जीवनोपाय इत्युक्तं भवति।

स्मृकौ. २६-२७

(२) मूर्धावसिक्ताद्विप्रायां प्रतिलोमः, क्षत्रादिष्वनुलोमाः इति चत्वारः। एवमम्बष्ठान्निषादाच्चेति द्वादश। स्वयं चैते त्रय इति पञ्चदश। व्रात्यो विप्रः अवरोटो वा षोडशः।

शूक. २७४-२७५

क्षत्रसहितः क्षत्रजन्यः षोडशको
दस्युगणस्तस्य वृत्तयश्च

**[3]राज्ञो ब्राह्मणकन्यायां सूतो वर्णस्तु जायते।**
**स राज्ञामश्वसारथ्यं चक्रे दक्षश्च नित्यशः।।**
**[4]सूतः प्रजापतिस्त्वन्यो मायारूपी जनार्दनः।**
**वक्ता वेदादिशास्त्राणां पुण्यराशिरिति स्मृतः।।**

अन्य इति नाम्नैव सूतः, न तु जात्येत्यर्थः, उग्रादिसंज्ञावत्। सूतपुत्रः उग्रश्रवाः सौतिः पौराणिकोऽपि।

शूक. २७५

**[1]राज्ञा तु वैश्यकन्यायां माहिष्यो नाम जायते।**
**नक्षत्री गीतनृत्यज्ञो धनानां परिरक्षिता।।**

धनानां राजधनानां तदाज्ञया। स्मृकौ. २७

**[2]राज्ञा तु शूद्रकन्यायामुग्राख्यः कुरुते तु सः।**
**दुर्गान्तःपुरकोशानां रक्षां विप्रेषु चार्चनम्।।**
**[3]उग्रो दुष्टश्च दुष्टानां कश्चिदन्योऽपि विद्यते।**
**सूतमाहिष्यकोग्रास्तु त्रयो वर्णचतुष्टयात्।**
**[4]एकैकशस्तु चतुरो जनयन्ति सुतानपि।**
**आत्मना सह राज्ञा तु तत्र षोडश सन्ति ते।।**
**[5]देवब्राह्मणबालस्त्रीदीनान्धकृपणैस्तु यत्।**
**उपार्जितं धनं तस्य परित्यागात्तु दस्यवः।**
**कदर्यधनभोक्तारः सिध्यन्ति क्षत्रसंभवाः।।**

दस्यव इत्येतेषां संज्ञा सामान्यतः। आत्मना राज्ञा सह ये षोडश परिगणितास्ते दस्युशब्दवाच्या इत्यर्थः। तत्र राज्ञा सहेति क्षत्रियोपलक्षणम्। स च क्षत्रियः एतैर्निन्दितैः शयनासनादिभिरसकृद्व्यवहरन् तेष्वपत्योत्पादनं वा कुर्वन् दस्युशब्दनिर्देश्यो भवति। एते देवस्य धनं तथा ब्राह्मणाद्युपार्जितं धनं परित्यज्यैतद्व्यतिरिक्ता ये कदर्यास्तेषां धनं तत्संतत्यभावे राजाज्ञया भुञ्जत इति कदर्यधनभोक्तारः। अथवा देवब्राह्मणादिभ्योऽन्यत्र कदर्यं कुत्सितं धनमन्नं वा स्वकर्मकरणादिद्वारा याचित्वा भुञ्जत इति कदर्यधनभोक्तारः। स्मृकौ. २८

वैश्यसहितो वैश्यजन्यः षोडशको
दस्युगणस्तस्य
वृत्तयश्च

**[6]ब्राह्मण्यामथ वैश्येन वैदेहो नाम जायते।**
**रक्षिता राजदुर्गाणां तद्वृत्तिपरसंयुतः।।**

---

(१) **स्मृकौ.** २६; **शूक.** २७४ आदिपुराणे.

(२) **स्मृकौ.** २६; **शूक.** २७४ दशैव (दश वै) पू., २७५ उत्त., आदिपुराणे.

(३) **स्मृकौ.** २७; **शूक.** २७५ आदिपुराणे.

(४) **स्मृकौ.** २७; **शूक.** २७५ चतुर्थचरणे (पुराणानां च स स्मृतः) आदिपुराणे.

(१) **स्मृकौ.** २७; **शूक.** २७५ राज्ञा तु (क्षत्रियात्) नक्षत्री गीत (नक्षत्रगान) आदिपुराणे.

(२) **स्मृकौ.** २७; **शूक.** २७५ राज्ञा तु (राज्ञस्तु) ख्यः कुरुते तु सः (ख्यो नाम जायते) चार्चनम् (वाचनम्) आदिपुराणे.

(३) **स्मृकौ.** २७; **शूक.** २७५ दुष्टानां (दस्यूनां) आदिपुराणे.

(४) **स्मृकौ.** २७; **शूक.** २७५ आदिपुराणे.

(५) **स्मृकौ.** २७-२८; **शूक.** २७५ तृतीयार्धं नास्ति, देवलः.

(६) **स्मृकौ.** २८ संयुतः (संयतः); **शूक.** २७५.

**[१]अन्यो विगतदेहत्वाद्वैदेहो मैथिलो नृपः।**
**विद्यते मानुषे लोके राज्यस्थश्चापि मोक्षभाक्।।**
**[२]क्षत्रियायां तु वैश्येन चूचुको नामतो भवेत्।**
**स्थले जले च यो मार्गस्तत्र रक्षां करोति सः।**
**राजदूतो वाक्यजीवो भवेत्कीर्तिप्रकाशकः।।**

चूचुकश्चूचुपो मूचुपो मूचुर्बन्दी मागध इत्यनर्थान्तरम्।
स्मृकौ. २८

**[३]वैश्येन शूद्रयां करणो वर्णः स्यात्प्रकरोति सः।**
**दुष्टतत्पुरगञ्जानां रक्षां ब्राह्मणसंग्रहम्।।**

(१) 'दुष्टान्तःपुरगञ्जानाम्' इति पाठान्तरम्। अत्र रक्षाविधानात्पराशरवचनेन मद्यविक्रयनिषेधाच्च गञ्जा-रक्षणमेव, न विक्रयः। पराशरवचनं च तद्द्वितीये कलोल्लासे प्रदर्श्यते। दुष्टतत्पुरगञ्जानामिति। दुष्टाश्च तत्पुराणि च गञ्जा च तेषाम्। गञ्जा मदिरागृहम्। ब्राह्मण-संग्रहमिति। दुष्टस्थानेषु स्वाधिकृतेषु यदि ब्राह्मणं पश्यति तस्य संग्रहं कृत्वा तं गृहीत्वा राज्ञे निवेदयेदित्यर्थः। अथवा ब्राह्मणसंग्रहो नाम ब्राह्मणसेवा। यद्वा राजाज्ञया ब्राह्मणा-नाहूयैकत्र स्थापनं ब्राह्मणसंग्रहः। स्मृकौ. २९

(२) संग्रहः रक्षणम्।
शूक. २७५

**[४]वैदेहमागधावेतौ करणश्चाथ ते त्रयः।**
**वर्णेभ्यः पूर्ववत्पुत्राञ्जनयन्ति विमोहिताः।**
**ते च षोडश जायन्ते मूलप्रकृतिभिः सह।।**

मूलप्रकृतयः वैदेहमागधकरणाः। स्मृकौ. २९

**[५]दुष्टानि वैश्यकर्माणि तेऽपि कुर्वन्ति दस्यवः।।**

अत्रापि वैश्यकरणयोर्निन्दितापत्यजननात्तैः सहैकशयना-दिभिश्च दुष्टत्वात्तयोरपि दस्युशब्दवाच्यत्वम्।
स्मृकौ. २९

शूद्रसहितः शूद्रजन्यः षोडशको दस्युगणस्तस्य वृत्तयश्च

**[१]ब्राह्मण्यामथ शूद्रेण चण्डालः स्याज्जुगुप्सितः।**
**स चक्रे राजमार्गादिशोधनं च कुकर्म च।।**
**[२]राजस्त्रीणां च शूद्रेण क्षत्ता मेदश्च जायते।**
**श्वाविधामथ गोधानां स चक्रे वधबन्धने।।**
**[३]क्षपणो राजदोषाणां क्षत्ता चान्यो महामतिः।**
**सप्तप्रकृतिमुख्यश्च भवेदधिपतिप्रियः।।**

राजदोषाणां क्षपणः विनाशकः असावन्यो महामतिः क्षत्तेत्यन्वयः। सप्तप्रकृतयः सप्ताङ्गानि।
स्मृकौ. ३०

**[४]आयोगवस्तु शूद्रेण वैश्यस्त्रीणां भवेच्च सः।**
**तक्षा स्थपतिरित्युक्तो राज्ञां वेश्मकरः सदा।।**

तक्षा स्थपतिरित्येकस्यैव द्वे नामनी यद्यपि, तथापि पाषाणतक्षकः स्थपतिः, दारुतक्षकस्तक्षेति लोकतो भेदोऽ-वगन्तव्यः। एवमन्यत्रापि पर्यायनामसु लोकतोऽवगन्तव्यो भेदः। लोकाश्च देशभेदेन भिन्नाः। स्मृकौ. ३०

**[५]आयोगवस्तथा क्षत्ता चण्डालश्चाथ ते त्रयः।**
**चतुर्वर्णासु तनयाञ्जनयन्त्यथ पूर्ववत्।।**
**[६]शूद्रात्मसहितास्ते तु सन्ति षोडश संख्यया।**
**दुष्टानि यानि कर्माणि तेऽपि कुर्वन्ति दस्यवः।।**

शूद्रात्मसहिताः शूद्रसहिताः। अत्र शूद्रस्य दस्युशब्द-वाच्यत्वं निन्दितापत्यजननात्। स्मृकौ. ३०

चतुःषष्टेर्दस्युभ्यः सजातीय-विजातीयानामुत्पत्तिः

**[७]एते विप्रादयो ज्ञेयाश्चतुःषष्टिस्तु योनिषु।**
**उत्पादयन्ति सदृशान् संकीर्णानन्ययोनिषु।।**

---

(१) **स्मृकौ.** २८.
(२) **स्मृकौ.** २८; **शूक.** २७५ चूचुको (मुचु (को) पो) स्थले जले (जले स्थले) वाक्य (वाद्य).
(३) **स्मृकौ.** २९ 'दुष्टान्तःपुरगञ्जानाम्' इति पाठान्तरं निर्दिशति; **शूक.** २७५ दुष्टतत्पुर (दुर्गान्तःपुर).
(४) **स्मृकौ.** २९; **शूक.** २७५ श्चाथ (श्चेति).
(५) **स्मृकौ.** २९; **शूक.** २७५.

(१) **स्मृकौ.** २९; **शूक.** २७५
(२) **स्मृकौ.** ३०; **शूक.** २७५ स्त्रीणां (स्त्रियां) मेदश्च (मैन्दश्च) बन्धने (बन्धनम्).
(३) **स्मृकौ.** ३०.
(४) **स्मृकौ.** ३०; **शूक.** २७५ वैश्यस्त्रीणां (वैश्यायां तु).
(५) **स्मृकौ.** ३०; **शूक.** २७५ श्चाथ (श्चापि).
(६) **स्मृकौ.** ३०; **शूक.** २७५ शूद्रात्मस (शूद्रेण स).
(७) **स्मृकौ.** ३०; **शूक.** २७५ षष्टिस्तु (षष्टिषु).

अत्र स्वभिन्नासु त्रिषष्टिभिर्जनिताः तासु वा तैर्जनिताः एकैकस्य षड्विंशत्यधिकं शतं भेदाः। ते च चतुःषष्टिभिर्गुणिताः अष्ट सहस्राणि चतुःषष्टिश्च भवन्ति। तेषां वर्णसंकीर्णसंकरेणान्योन्यसंकराच्चाऽऽनन्त्यं भवति। विस्तरापत्तेर्नोच्यते। शूक. २७५

कुर्कुटादिजातीनामुत्पत्तिः
तासां वृत्तयश्च

**[१]निषाद्यामथ शूद्रेण कुर्कुटः स्यात्करोति सः।**
**चक्रतोमरशूलासिलगुडप्रासतोमरान्।।**
**[२]चर्माणि शस्त्रजालानि भिण्डिपालांश्च भूभुजाम्।**
**कुर्कुटानां प्रहर्ता च राज्ञा कुर्कुटखेलनः।।**
**[३]अम्बष्ठ्यां जायते वेनो वैदेहेन करोति सः।**
**पटहं वादयन् स्फीतं राजादेशं प्रजास्वपि।।**

वैदेहेनाम्बष्ठ्यां वेनो जायते। स प्रजास्वपि राजादेशं करोतीत्यन्वयः। स्मृकौ. ३१

**[४]वेनः प्रजापतिसुतो राजा कश्चिद्बभूव च।**
**पृथोः पिता दुराचारो विप्रशापक्षयं गतः।।**
**[५]पुष्कसः कुर्कुटो वेनस्त्रय आरण्यवासिनः।।**
**[६]आयोगव्यां दस्युना च सैरन्ध्रो नाम जायते।**
**मृगादिवधजीवी च पाशबन्धेन नित्यशः।।**
**[७]राजस्त्रीणां सूतिकानां द्वाररक्षां करोति सः।**
**काचिदन्या च सैरन्ध्री गन्धर्वमहिषी भवेत्।।**

दस्यवः पौण्ड्रकोड्रकाद्याः प्रागुक्ताः। स्मृकौ. ३१

**[८]आयोगव्यां तु मैत्रेयो वैदेहादपि जायते।**
**प्रभाते वादयेद्घण्टां यशो राज्ञो ब्रवीति सः।।**

(१) **स्मृकौ.** ३०-३१ प्रास (प्राश); **शूक.** २९२ कुर्कुटः (कुक्कुटः) लगुड (लकुट) आदिपुराणे.
(२) **स्मृकौ.** ३१; **शूक.** २९२ चर्माणि (चक्राणि) कुर्कुटानां (कुक्कुटानां) राज्ञा कुर्कुट (राजकुक्कुट) आदिपुराणे.
(३) **स्मृकौ.** ३१; **शूक.** २९२ आदिपुराणे.
(४) **स्मृकौ.** ३१.
(५) **स्मृकौ.** ३१; **शूक.** २९२ पुष्कसः कुर्कुटो (पुल्कसः कुक्कुटो) आदिपुराणे.
(६) **स्मृकौ.** ३१; **शूक.** २९२ आदिपुराणे.
(७) **स्मृकौ.** ३१; **शूक.** २९२ पू., आदिपुराणे.
(८) **स्मृकौ.** ३१.

**[१]आयोगव्यां निषादात्तु धीवरो नाम जायते।**
**नावो नदीनां कर्ता स तां तु संवाहयेत्सदा।।**

नावः कर्तेत्यन्वयः। स्मृकौ. ३१

**[२]निषादादथ वैदेह्यां कारावारः करोति सः।**
**चर्मणां छेदनं नित्यं सीवनं क्रयविक्रयम्।।**
**[३]नैषाद्यामथ वैदेहाज्जायते चान्द्रमेचकः।**
**आरण्यानां पशूनां स करोति च वधं सदा।।**
**[४]तस्य स्त्रीगमनात्क्षत्ता श्वपाकं जनयेत्सुतम्।**
**श्वमांसादमरण्यस्थं पापं शूर्पोपजीविनम्।।**
**[५]चाण्डालादपि वैदेह्यां पाण्डुसोपाकसंज्ञकः।**
**उपानच्चर्मवेणूनां विक्रयं हि करोति सः।**
**[६]आहिण्डिको निषाद्यां च वैदेहादपि जायते।**
**यो दस्यूनां तु वध्यानां परिरक्षां करोति च।।**
**[७]अन्त्यावसायी चण्डालान्निषाद्यां जायते नरः।**
**स्मशानवासी तद्वृत्तिश्चण्डालेष्वपि गर्हितः।।**

तद्वृत्तिः श्मशानोपजीवी। स्मृकौ. ३२

**[८]अनाथं नगराच्छावं दूरं ते च नयन्त्यपि।**
**शय्याभरणवस्त्राणि वध्यानां राजशासनात्।**
**निर्दिष्टं वधदण्डं तु कृत्वा गृह्णन्ति नित्यशः।।**

संकीर्णानां सजातीयै-
र्विवाहः संतरणो-
पायश्च

**[९]विवाहादि प्रकुर्वन्ति समाने वर्णसंकरे।**
**मृता गोब्राह्मणार्थं तु कदाचित्संतरन्ति ते।।**

(१) **स्मृकौ.** ३१; **शूक.** २९२ तां तु (तां च) आदिपुराणे.
(२) **स्मृकौ.** ३१; **शूक.** २९२ आदिपुराणे.
(३) **स्मृकौ.** ३२; **शूक.** २९२ नैषाद्या (निषाद्या) चान्द्र (चन्द्र) आदिपुराणे.
(४) **स्मृकौ.** ३२; **शूक.** २९२ चतुर्थचरणे (पापशूर्पोपजीवनम्) आदिपुराणे.
(५) **स्मृकौ.** ३२; **शूक.** २९२ चाण्डा (चण्डा) आदिपुराणे.
(६) **स्मृकौ.** ३२; **शूक.** २९२ ण्डिको (ण्डको) आदिपुराणे.
(७) **स्मृकौ.** ३२; **शूक.** २९२ चण्डा (चाण्डा) आदिपुराणे.
(८) **स्मृकौ.** ३२ वस्त्रा (शस्त्रा); **शूक.** २९२ आदिपुराणे.
(९) **स्मृकौ.** ३२; **शूक.** २९२ आदिपुराणे.

## स्मृत्यर्थसारः

कुण्डगोलकोत्पत्तिः

[1]अमृते च मृते पत्यौ जारजौ कुण्डगोलकौ।।

वर्णानुलोमजाः तेषां संस्काराहर्त्वं च

[2]विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा।।
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः।।
एतेऽनुलोमजाः पुत्राः संस्कार्याः स्युर्द्विजातिजाः।
तथा मूर्धावसिक्तादिजातिजाश्च द्विजातयः।।

वर्णप्रतिलोमजा द्विज-धर्मानधिकारिणः

ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः।।
क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च।
शूद्रादायोगवं वैश्या जनयामास वै सुतम्।।
माहिष्येण करण्यां तु रथकारः प्रजायते।
इत्याद्याः प्रतिलोमाः स्युर्द्विजधर्मबहिष्कृताः।।

## † अनिर्दिष्टकर्तृकवचनानि

वर्णानुलोमप्रतिलोम-संकरजाः

[3]विप्रान्मूर्धावसिक्तस्तु क्षत्रियायां विशः स्त्रियाम्।
जातोऽम्बष्ठश्च शूद्रायां निषादः पारशवोऽपि च।।
माहिष्योग्रौ प्रजायेते विट्च्छूद्राङ्गनयोर्नृपात्।
शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः।।

[1]ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकः स्मृतः।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः।।
क्षत्रिया मागधं वैश्याच्छूद्रा( ? द्रात्)क्षत्तारमेव च।
शूद्रादायोगवं वैश्या जनयामास वै सुतम्।।
[2]क्षत्रियायां वैश्यजातः क्षत्ता वेत्रधरो भवेत्।।
[3]शूद्रादायोगवो वैश्यायां जातस्तु सुतो भवेत्।।

आरूढपतितजारात् ब्राह्मण्यां जातो दोलः तद्वृत्तिश्च

[4]विप्रः स्वीकृत्य संन्यासमारूढपतितो भवेत्।
ब्राह्मणीं कारयेद्रण्डां यं तस्यां जनयेत्सुतम्।
स दोलः कर्मचाण्डालस्तत्स्पर्शात्पातकं महत्।।
वापीकूपतडागानां प्रवाहानां च सर्वशः।
खननं जीवितार्थाय तस्य प्रोक्तं विशेषतः।।
कोइरी इति भाषाप्रसिद्धः।

बाल. १।९४ पृ. २९२

क्षत्रियजारात् क्षत्रियायां जातो जलः तद्धर्मो वृत्तिश्च

शुद्धा या( ? यं) क्षत्रिया सूते व्रात्यक्षत्रियमैथुनात्।
पुत्रः स जल इत्युक्तः शूद्रधर्मविधायकः।।
स कुर्याद्राजपुत्रांश्च शस्त्रास्त्रकुशलान् धनम्।
तेभ्यो लब्ध्वा स्ववृत्त्यर्थं स्वधर्ममनुपालयेत्।।
स कुर्यात् येन राजगुरुरिति प्रसिद्धः।

बाल. १।९४ पृ. २९२

जलक्षत्रियाजातो मल्लः तद्धर्मो वृत्तिश्च

क्षत्रिणीजलसंयोगाज्जातो मल्लाभिधः परः।
लब्ध्वा योऽसौ बलं सम्यग्बलदर्पेण गर्वितः।।
राज्ञां कौतुकमुत्पाद्य नियुद्धेन धनार्जनम्।
कुर्यात्स्ववृत्तिनिपुणः शूद्रधर्मानशेषतः।।
'तस्मान्मल्लः सुतो जातः क्षत्रिण्यां व्यभिचारतः।' इत्यन्यत्र पाठः। बाल. १।९४ पृ. २९२

---

† शूशि., शूक., बाल. इत्येतेषु ग्रन्थेषु जातिविवेकविश्वंभरवास्तुशास्त्रस्थलकानि बहूनि वचनानि संगृहीतानि सन्ति। तत्र बहुषु वचनेषु जातिविवेकविश्वंभरवास्तुशास्त्रयोः स्थलत्वेन संबन्धः संदिग्धः। येषु तु स निर्णीतस्तानि वचनानि जातिविवेकस्थलकत्वेन विश्वंभरवास्तुशास्त्रस्थलकत्वेन च पृथगग्रे संग्रहीष्यन्ते।

(१) **स्मृसार.** ४; **संग.** ६४०.

(२) **स्मृसार.** १३.

(३) **बाल.** १।९२ पृ. २८३ याज्ञवल्कीयमपेक्ष्य 'अन्यत्र' इत्युक्तम्। एवमन्यत्रापि याज्ञवल्कीयसदृशश्लोकेषु द्रष्टव्यम्।

(१) **बाल.** १।९४ पृ. २८३.

(२) **शूक.** २६६ स्मृत्यन्तरे; **बाल.** १।९४ पृ. २८८.

(३) **बाल.** १।९४ पृ. २८९.

(४) **बाल.** १।९४ पृ. २९१-२९२.

सल्लशिलीन्ध्रनटकाहाटिक(बहुरूपि)-
नापितानामुत्पत्तिः तेषां
धर्मो वृत्तयश्च

**व्रात्यक्षत्रियतः शूद्रयां सल्लः शूद्रविधानकृत्।।**
**क्षत्रिणी मल्लसंयोगाच्छिलीन्ध्र इति जायते।**
**स हीनः शूद्रधर्मेभ्यो जीविकाऽस्याङ्गमर्दनम्।।**

नापितभेदो मर्दनीति भाषाप्रसिद्धः।

बाल. १।९४ पृ. २९२

**शिलीन्ध्रः क्षत्रिणीं गच्छन् जनयेन्नटसंज्ञकम्।**
**हीनोऽसौ शूद्रधर्मेभ्यो नाटकानि समभ्यसेत्।।**
**काहाटिकः स एवोक्तो बहुरूपीति विश्रुतः।।**

अत्रापि दुष्टक्षत्रियत्वमेव, न त्वनुलोमजत्वादि।

बाल. १।९४ पृ. २९२

**शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः।**
**अपरो नापितः प्रोक्तः शूद्रधर्माधिकोऽपि सः।।**

अत्रापि दुष्टशूद्रत्वमेव, न तु तत्। अत एवाधिक इत्युक्तम्। बाल. १।९४ पृ. २९२

रथकारस्य धर्मो वृत्तिश्च

**[1]नैवोपनयनं तस्य* शूद्रधर्माद्बहिः क्वचित्।**
**वर्तनं शिल्पवृत्त्याऽत्र लोके शिल्पस्य शास्त्रवित्।।**

आवृतकासारमौष्टिकानामुत्पत्तिर्धर्मो
वृत्तयश्च

**[2]शूद्राक्षत्रिययोर्जाता वनितोग्राभिधानिका।**
**ब्राह्मणाज्जनयेत्पुत्रमावृतं कुम्भकारकम्।**
**स शूद्राद्धीयते धर्मे घटयेन्मृन्मयान्घटान्।।**
**[3]वैश्यस्त्रीद्विजसंभूता कन्याऽम्बष्ठाभिधानिका।**
**सा त्वम्बष्ठा द्विजाश्लिष्टा जनयेत्तनयं रहः।।**
**स कासार इति ख्यातः सततं कालिकां यजेत्।**
**कांस्यपात्राणि चित्राणि रचयेज्जीवनाय च।।**
**शूद्रधर्मेण सर्वत्र स्थितिरस्य विधीयते।।**

द्विजपदं ब्राह्मणपरम्। कसेरा इति प्रसिद्ध इति।

बाल. १।९५ पृ. २९४

---

* तस्य रथकारस्य।

(१) **बाल.** १।९५ पृ. २९३.

(२) **बाल.** १।९५ पृ. २९४.

(३) **बाल.** १।९५ पृ. २९४.

**द्विजशूद्रासमायोगान्निषादा वनिता भवेत्।**
**निषादा द्विजतः सूते तनयान्मौष्टिकाभिधान्।।**
**ते दोलावाहका राज्ञां विशेषाद्भुतगामिनः।**
**छारालावाहकास्ते स्युः कावडीवाहका मताः।।**
**विक्रयश्चेन्धनानां च तेषां धर्मा न केचन।।**

छत्रपधिग्वणविघातकिन्नाटोलूक-
वत्सराणामुत्पत्तिर्धर्मो
वृत्तयश्च

**[1]ब्राह्मण्यां वैश्यजनिता वैदेहीति निगद्यते।**
**सा संगता ब्राह्मणेन छत्रपं जनयेत्सुतम्।।**
**स स्याच्छत्रधरो राज्ञां लोके वाहीति कथ्यते।**
**समस्तेषु च वर्णेषु कुर्यात्पानीयविक्रयम्।।**
**तस्यैवं जीविका प्रोक्ता शूद्रधर्मा न हि क्वचित्।।**

वैदेह्याः प्रतिलोमत्वादयं प्रतिलोम इति केचित्। तस्याः प्रतिलोमत्वेऽपि ब्राह्मणजन्यत्वादनुलोम इत्यपरे।

बाल. १।९५ पृ. २९५

**वैश्यस्त्रीशूद्रसंयोगाज्जाताऽऽयोगविकाभिधा।**
**आयोगवीब्राह्मणाभ्यां धिग्वणस्य समुद्भवः।।**
**स चर्मणाऽश्वपर्यायां(? र्याणं) यथाशोभं प्रकल्पयेत्।**
**अश्वानां पाखरं(?) सोऽपि कर्तुं चिन्तास्तथाऽर्हति।**
**तद्द्रव्यं जीविका तस्य विहिता लोकविश्रुता।।**

अयं मोचीति प्रसिद्ध इति।

बाल. १।९५ पृ. २९५

**शूद्राक्षत्रिययोः पारशवीसंज्ञा तु जायते।**
**सा सूते क्षत्रियात्पुत्रं विघातं ताम्रकुट्टकम्।।**
**संसर्गं सह कासारैः कुर्यात्स तु विशेषतः।**
**घटनं ताम्रपात्राणां तत्पर्यावर्तजीवनम्।।**
**क्षत्रात्पारशवीपुत्रः किन्नाटस्ताम्रकुट्टकः।।**

विप्राच्छूद्रायां पारशवीत्यन्यत्र। लम्बर इति ख्यातः।

बाल. १।९५ पृ. २९५

**यो मागधीक्षत्रिययोर्जातश्चोलूकसंज्ञकः।**
**स लोहकारो विख्यातो लौहं कर्मास्य विश्रुतम्।।**
**तेषां तु गुणसंयोगं सं(? रा)ज्ञां शस्त्रविधायकः।।**

अयमनुलोमः। बाल. १।९५ पृ. २९५

---

(१) **बाल.** १।९५ पृ. २९५.

**मागध्यां क्षत्रियाज्जात उलूको लोहकर्मकृत्।**
**स लोहकर्मणा जीवेदुत्तमश्चान्यजातितः।**
**ब्रह्मक्षत्रियविट्च्छूद्रवर्णेभ्यो हीन एव सः।।**
**वैश्यवीर्येण शूद्रायां जाता सा करणी स्मृता।**
**करणीवैश्यसंयोगाज्जातो वत्सरसंज्ञकः।**
**हीनः स शूद्रधर्मेभ्यः शाद्वलं गाश्च पालयेत्।।**
अयमप्यनुलोमः। बाल. १।९५ पृ. २९५

मालाकारवेनसैरन्ध्रजाङ्घिकक्षेमककुशील-
वभस्माङ्कुरमैत्रेयाणामुत्पत्तिर्धर्मो
वृत्तयश्च

**[1]वैश्याक्षत्रिययोर्जातो माहिष्य इति गीयते।**
**स माहिष्यो निषादस्त्रीसंगमाज्जनयेत्सुतम्।।**
**मालाकारमसौ लोके मालाकारः प्रकीर्तितः।**
**कुसुमानि सशाखानि बद्धयेद्धनलब्धये।**
**स हीनः शूद्रधर्मेभ्यः संस्कारे सप्तके प्रभुः।।**
अयमप्यनुलोमः। बाल. १।९५ पृ. २९६
**द्विजवैश्यासमायोगाज्जाताऽम्बष्ठा पुरन्ध्रिका।**
**ब्राह्मण्यां जायते वैश्याद्योऽसौ वैदेहिकाभिधः।।**
**साऽम्बष्ठा जनयेत्पुत्रं वैदेहाद्वेनसंज्ञितम्।**
**स शूद्रधर्मरहितोऽभ्यसन्नात्यं स ला( ? न्नाट्यं सला)-घवम्।**
**जीविका तस्य कथिता हरिमेखललेखनम्।।**
अयं प्रतिलोमः। बाल. १।९५ पृ. २९६
**शूद्रादायोगवी जाता वैश्यकन्यासमुद्भवा।**
**आयोगवी सा सैरन्ध्रं कायस्थाज्जनयेत्सुतम्।।**
**स हीनः शूद्रजातिभ्यः सेवां कुर्याद्द्विजातिषु।**
**पादयोः क्षालनं तेषां धम्मिलानां प्रसाधनम्।।**
**अभ्यङ्गमर्दनं चैवं चन्दनेनानुलेपनम्।**
**मृगनाभेश्च संयोगं शृङ्गाररचनं नवम्।।**
**आजीवस्तस्य संप्रोक्तः स्त्री च सैरन्ध्रिका स्मृता।**
**प्रसाधनोपचतुरा सैरन्ध्रीति प्रकीर्तिता।।**
अनुलोमजन्यत्वादयमनुलोमः।
बाल.१।९५ पृ.२९६

**विप्राच्छूद्र्यां समुत्पन्नो नरः पारशवाभिधः।**
**स एव स्यान्निषादोऽत्र लोके व्यापारविश्रुतः।।**
**उग्रा शूद्र्यां समुत्पन्ना क्षत्रियादेव केवलात्।**
**सोग्रा निषादसंयोगाज्जाधि( ? ज्जाङ्घि)कं जनयेत्सुतम्।।**
**स शूद्रधर्मरहितो द्विजानां लेखहारकः।**
**देशाद्देशान्तरं गच्छेच्छीघ्रं चरणवेगतः।।**
अयमनुलोमः 'मेवडा' इति मध्यदेशभाषया प्रसिद्धः।
बाल. १।९५ पृ. २९६
**क्षत्रिणी शूद्रसंयोगात्क्षत्तारं जनयेत्सुतम्।**
**उग्रा शूद्र्यां समुत्पन्ना क्षत्रियादेव केवलात्।।**
**क्षत्तुरुग्रा च जनयेत्क्षेमकं तनयं क्षितौ।**
**स हीनः शूद्रधर्मेभ्यो द्वाररक्षाऽस्य जीवनम्।।**
अयं प्रतिलोमः 'दरवाण' इति भाषाप्रसिद्धः।
बाल. १।९५ पृ. २९७
**ब्राह्मण्यां वैश्यजनिता जाता वैदेहिका मता।**
**विप्राद्वैश्याङ्गनाजातोऽम्बष्ठ इत्यभिधीयते।।**
**सा वैदेही च सोऽम्बष्ठस्तयोर्जातः कुशीलवः।**
**नृत्यकर्ता स गीतज्ञो देशाद्देशान्तरं व्रजेत्।**
**साऽस्य वार्ताऽत्र कथिता चारणस्य स्वयंभुवा।।**
अयमनुलोमः। बाल. १।९५ पृ. २९७
**[1]शैवाः पाशुपताश्चैव योगधर्मपरायणाः।**
**आरूढपतितास्ते स्युः शूद्राः पण्याङ्गनारताः।।**
**तेभ्यस्ताभ्यश्च संभूतो भस्माङ्कुर इतीरितः।**
**स जटाभस्मधारी च शिवलिङ्गं प्रपूजयेत्।।**
**शूद्रादायोगवी जाता वैश्यायामिति विश्रुता।**
**ब्राह्मण्यां वैश्यजनितः स च वैदेहकः स्मृतः।।**
**आयोगवी सा वैदेहान्मैत्रेयं जनयेत्सुतम्।**
**स्यादुषःसमये नित्यं घण्टावादनतत्परः।।**
**प्रबोधं नागराणां च कुर्यान्मङ्गलगायकः।**
**ललितां भैरवीं गायन् धनं सा तस्य जीविका।।**
अयं प्रतिलोमः 'टोकणकार' इति महाराष्ट्रभाषया प्रसिद्धः। बाल. १।९५ पृ. २९७

---

(१) **बाल.** १।९५ पृ. २९६-२९७.

(१) **बाल.** १।९५ पृ. २९७-२९८.

सूदभ्रुकुंससिकिलीगरमङ्गुशाल्मलान्धसिकछा-
गलिकशय्यापालकानामुत्पत्तिर्धर्मो
वृत्तयश्च

**ब्राह्मण्यां क्षत्रियात्सूतः संजात इति कीर्तितः।**
**ब्राह्मण्यामपि वैदेही वैश्याज्जातेति कीर्तिता।।**
**वैदेही सूतसंयोगात्सूदं सूते सुतं ततः।**
**लेह्यादीनां चतुर्णां च पाकं कुर्याद्यथाविधि।।**
**अन्नानमृतयोगेन मांसस्तावकभेदतः।**
**रसैः स्वाद्वम्ललवणतिक्तोषणकषायकैः।।**
**वातपित्तकफादीनां क्षयोपचयकारकैः।**
**शूद्रधर्मानधिकृतः सूपशास्त्रविशारदः।**
**पार्वतीनलभीमानां मतेषु परिनिष्ठितः।।**
**क्षत्रिणीवैश्यसंयोगाज्जाता मागधिका सुता।**
**वैश्यशूद्रा( ? वैश्याशूद्र)समायोगाद्भवेदायोग-वाभिधः।।**
**मागधायोगवाभ्यां च भ्रुकुंस इति जायते।**
**स वर्णबाह्यो धर्मेषु सम्यक् संगीतकोविदः।**
**कान्तानां नृत्यशालासु लास्यं गीतं च शिक्षयेत्।।**
अयम् अनुलोमः। बाल. १।९५ पृ. २९८
**कायस्थजातेर्वनितां मालाकारोऽभिकामयेत्।**
**तस्यां यो ग्राम्यधर्मेण जायते तनयः पुमान्।**
**शराणां कङ्कपत्रैश्च रचना तस्य जीविका।।**
अयं प्रतिलोमः। 'सिकिलीगर' इति मध्यदेशभाषया प्रसिद्धः। बाल. १।९५ पृ. २९८
**क्षत्रिणीतनया वैश्याज्जनयामास वन्दिनी(म्)।**
**सा वन्दिनी द्विजात्सूते तनयं मङ्गुसंज्ञकम्।।**
**स मङ्गुः कुम्भकारस्य महिषीं यदि कामयेत्।**
**तस्यां च जनयेत्पुत्रं स भवेच्छाल्मलाभिधः।।**
**स हीनः शूद्रवर्णेभ्यः पर्णवल्लीविधायकः।**
**ताम्बूलवल्लीसंभूतं द्रव्यं तस्येह जीवनम्।।**
अयमनुलोमः 'तांबोली' इति मध्यदेशभाषाप्रसिद्धः। बाल. १।९५ पृ. २९८
**ब्राह्मण्यां वैश्यजनितो जातो वैदेहिकाभिधः।**
**तस्य शूद्राङ्गनासूनुर्जातस्त्वान्धसिकाभिधः।।**
**कुर्यादन्नानि चत्वारि विक्रयार्थं स संततम्।**
**अन्नविक्रयतो लब्धं तद्धनं तस्य जीवनम्।।**
अयं प्रतिलोमः 'भटिहारा' इति भाषाप्रसिद्धः। बाल. १।९५ पृ. २९८
**कटधानः स मङ्गुं तां कामतो यदि गच्छति।**
**तयोर्यो जायते पुत्रः स छागलिकसंज्ञकः।।**
**[1]स हीनः शूद्रजातिभ्यश्छागलान्नचयेच्च सः।**
**छागलेभ्यो धनं जातं तस्य तज्जीवनं स्मृतम्।।**
अयं प्रतिलोमः 'गडरिया' इति मध्यदेशभाषया प्रसिद्धः। बाल. १।९५ पृ. २९९
**[2]मङ्गुसैरन्ध्रयोर्जातः शय्यापालकसंज्ञकः।**
**जातस्तं सततं राजा शय्याकर्मणि योजयेत्।।**
अयं प्रतिलोमः। बाल. १।९५ पृ. २९९

मण्डलकक्रोधिक(कुक्कुटक)मण्डूषमौष्कलिककुरु-
विन्दशाम्बरिकसौवीरनीलीकर्तृसांखिल्यबन्धुल-
पांशुलकानामुत्पत्तिर्धर्मो वृत्तयश्च

**कर्मचाण्डालवनिता पुष्पशेखरसंज्ञितात्।**
**जनयेद्यं सुतं सोऽपि ख्यातो मण्डलकाभिधः।।**
**[3]युगलं शुनकानां स धनुर्यो( ? धर्तुं यो)ज्यो महीभुजा।**
**आखेटकपणेभ्यश्च शुनां जीवनमुच्यते।।**
अयं प्रतिलोमः। बाल. १।९५ पृ. २९९
**[4]निषादकन्यका शूद्रसङ्गाद्यं जनयेत्सुतम्।**
**स क्रोधिकः कुक्कुटक इति प्रोक्तो द्विसंज्ञकः।।**
**टङ्कशालासु सर्वासु नाणकानां विधायकः।**
**जीवनायाष्टधातूनामन्त्यजैः समतां व्रजेत्।।**
अयं प्रतिलोमः। बाल. १।९५ पृ. २९९
**उग्रवैदेहिकायोगाज्जातो मण्डूषसंज्ञकः।**
**रजको वर्णतो हीनः प्रथमश्चान्त्यजेषु च।**
**वस्त्रनिर्णेजनं कुर्यादात्मवृत्त्यर्थमेव सः।।**
अयमनुलोमः। बाल. १।९५ पृ. २९९

---

(१) **शूशि.** २४ स हीनः (हीनः स) न्नचयेच्च (न्न वदेच्च) उत्तरार्धे (छागलाभ्यो धनं जातं तज्जीवनमिति स्मृतम्।।) जातिविवेके; **बाल.** १।९५ पृ. २९८.

(२) **बाल.** १।९५ पृ. २९८-२९९.

(३) **शूशि.** २४ धनुर्यो (धर्तुं यो) भुजा (भृता) पू. जातिविवेके; **बाल.** १।९५ पृ. २९९.

(४) **बाल.** १।९५ पृ. २९९.

**उग्रपारशवाभ्यां यो जातो मौष्कलिकाभिधः।**
**वहेदसौ तैलयन्त्रमुत्तमस्त्वन्य( ? न्त्य)जातितः।।**
**जीविकाऽस्य समुद्दिष्टा शुद्धतैलस्य विक्रयः।**
**तिलहिंसायन्त्ररवाकर्णनात्पापसंभवः।**
**अतो मौष्कलिको नित्यं निर्वास्यो नगराद्बहिः।।**
अयमनुलोमः। बाल. १।९५ पृ. ३००
[1]**तिलयन्त्रेक्षुयन्त्राणां यावच्छब्दः प्रवर्तते।**
**तावत्कर्म न कुर्वीत शूद्रान्त्यपतितस्य च।।**
[2]**कुक्कुटस्येह वनिता कुम्भकारेण संगता।**
**तस्याः सूनुः स विख्यातः कुरुविन्द इति स्फुटम्।।**
**कौशेयानि स वस्त्राणि रचयेदात्मवृत्तये।**
**तुल्योऽसावन्त्यजातीनां स्वधर्ममनुपालयन्।।**
अयं प्रतिलोमः 'जोलाहा' इति भाषाप्रसिद्धः।
बाल. १।९५ पृ. ३००
**संगता वेनवनिताऽऽवर्तकेन यदा रहः।**
**तस्यां शाम्बरिकाभिख्यः पुत्रोऽसौ लोकसंमतः।**
**स हीनस्त्वन्यजातिभ्यः शुचिवासोविधायकः।।**
वेनी नटस्त्रीत्यन्यत्र। अयं 'साळी' इति भाषाप्रसिद्धः।
बाल. १।९५ पृ. ३००
**आभीरकुक्कुटीभ्यां यो जातः सौवीरसंज्ञकः।**
**स कुर्यात्तसरीणां च वसनान्यात्मवृत्तये।**
**तद्वैपरीत्याद्यो जातो नीलीकर्ता स कथ्यते।।**
कोशटा इति बङ्गालभाषाप्रसिद्धः।
बाल. १।९५ पृ. ३००
**मार्गानापितयोर्जातो योऽसौ सांखिल्यसंज्ञकः।**
**हीनः स गुह्यकेशानां कुर्याद्वपनमञ्जसा।**
**जलूकास्तु च शृङ्गाणि रक्ताकृष्टौ प्रयोजयेत्।।**
मार्गा मार्दिलिका। 'तेरिव' इति भाषाप्रसिद्धः।
बाल. १।९५ पृ. ३००
**जातो मैत्रेयशुक्रेण जाधिकायां तु यः सुतः।**
**असौ बन्धुलसंज्ञोऽत्राधमः सर्वासु जातिषु।**
**सुवर्णकारविपणे धूल्यां हेम स पश्यति।।**

(१) **शूशि.** २५ स्मृतिः; **शूक.** २९० यन्त्रेक्षु (भ्रमण) चतुर्थचरणे (शूद्रान्त्यजसमीपतः); **बाल.** १।९५ पृ. ३०० तावत्कर्म (तत्र कर्म) स्मृतिः.

(२) **बाल.** १।९५ पृ. ३००-३०१.

मैत्रेयः नटः। जाधिका मेवडेति। अयं 'झारा' इति भाषाप्रसिद्धः। बाल. १।९५ पृ. ३०१
**निषादनारीसंयोगात्पौष्टिको जनयेत्सुतम्।**
**स पांशुलकसंज्ञो हि द्विपं तु जनयेत्सुतम्।।**

औरभ्रममहाङ्गुरोमिकमेदकैवर्तकपुक्कसकारी-
वरपौष्कलमङ्गुष्ठानामुत्पत्तिर्धर्मो
वृत्तयश्च

[1]**औरभ्रं छागली सूते भृजुकण्ठाद्धि यं तु सः।**
**कुर्यादूर्णपटांश्चित्रान्मेषाणां चैव पालनम्।।**
अयं 'धनगर' इति भाषाप्रसिद्धः।
बाल. १।९५ पृ. ३०१
**आवर्तवनिता सूते क्षेमकादत्र पुत्रकम्।**
**स महाङ्गुरी( ? रि)ति ख्यात उष्ट्रवाहनतत्परः।।**
क्षेमकः द्वारपालकः। बाल. १।९५ पृ. ३०१
**आवर्तवनिता सूते मल्लाद्रोमिकसंज्ञकम्।**
**स क्षारोदकमानीय बद्ध्वा केदारखण्डके।**
**तज्जातं लवणं तस्य जीवनं भुवि विश्रुतम्।।**
**कारावारी यदा नारी वैदेहाज्जनयेत्सुतम्।**
**स मेदसंज्ञस्तुल्योऽन्यैः( ?न्त्यैः)स्मृतः स फलजीवकः।**
**वात( ? ता)ण्डवेषः स वसेदरण्ये वृक्षपर्वते।।**
कारावारी कोलस्त्री। बाल. १।९५ पृ. ३०१
**आयोगव्यां पारशवाज्जातः कैवर्तकाभिधः।**
**स हीनस्तुल्यजातिभ्यो जालं स्वीकृत्य सर्वतः।।**
**मत्स्याञ्जलचरांश्चान्यान् घातयेदात्मवृत्तये।**
**नान्यं कर्म प्रवहणं नद्यां वर्षासु वाहयेत्।**
**नदीमुत्तारयेल्लोकांस्तेभ्यश्चेच्छेद्धनं ततः।।**
**जातो निषादवीर्येण शूद्र्यां पुक्कससंज्ञकः।**
**अन्त्यजानां च सदृशो धर्मेषु विविधेषु च।।**
**आरण्यपशुघोषेण वृत्तिरस्याऽऽत्मपोषणम्।**
**श्येनपापर्धिका तस्य कविता कविसंमता (?)।।**
'कोळी' इति भाषाप्रसिद्धः।
बाल. १।९५ पृ. ३०२
**निषादधिग्वणीजातः प्राणी कारीवराभिधः।**
**स हीनस्त्वन्त्यजातिभ्यो जीविका तस्य चोच्यते।।**

(१) **बाल.** १।९५ पृ. ३०१-३०२.

**उपानदङ्गत्राणानि कुर्यादश्वस्य पाखराः।**
**गोचर्मणा महिष्याश्च चर्मणा तस्य वर्तना।।**
धिग्वणी मोचीका। अयं 'चांभार' इति प्रसिद्धः।
बाल. १।९५ पृ. ३०२

**आभीरी वेनसंयोगात्पौष्कलं जनयेत्सुतम्।**
**असावधर्म इत्युक्तः सर्वधर्मबहिष्कृतः।**
**सुरास्तु कृत्वा विक्रीय कुर्यात्तद्धनवर्तनम्।।**
'कलवार' इति प्रसिद्धः। बाल. १।९५ पृ. ३०२

**कैवर्तजान्धिकाभ्यां तु जातो मङ्गुष्ठसंज्ञकः।**
**स स्फोटयेच्च कटकान् कृत्वा चूर्णं विशेषतः।।**
**तद्धनं जीवनायालं सोऽपि कुर्यान्निरन्तरम्।**
**न स्पर्शस्तस्य कर्तव्यः कदाचिदपि मानवैः।।**
(सः) चूर्णकारः। बाल. १।९५ पृ. ३०२

चित्रकारककिंशुकाहितुण्डिकयाधीकतुरुष्काणा-
मुत्पत्तिर्धर्मो वृत्तयश्च, ब्राह्मणादिचण्डालान्तैः
सांकर्येण जनिता अनन्ता
जातयः

**धिग्वणीकुम्भकाराभ्यां जातोऽसौ चित्रकारकः।**
**स चित्राणि विचित्राणि लेखयेदात्मवृत्तये।।**
चित्रकारः। बाल. १।९५ पृ. ३०३

[1]**कुरुविन्दाङ्गजा सूते धीवरात्किंशुकाभिधः(? धम्)।**
**असावन्त्यज इत्युक्तो वंशपात्रानुजीवकः।।**
'बुरुड' इति भाषाप्रसिद्धः।
बाल. १।९५ पृ. ३०३

**वैदेही तनयं सूते निषादादाहितुण्डिकम्।**
**महासर्पान्करण्डेषु क्षिप्त्वा विषपरान्बहून्।**
**तैः खेलनं जीविकाऽस्य सेवकस्येव भूभृताम्।।**
'गारुडी' इति भाषाप्रसिद्धः।
बाल. १।९५ पृ. ३०३

**व्याधाहितुण्डिकाभ्यां यो जातो याधीकसंज्ञकः।**
**स कुर्यान्मूषकादीनां हननं भूमिवासिनाम्।**
**जनेभ्यो याचयेद्वित्तं तेन तद्वर्तनं स्मृतम्।।**
**मेदस्य वंशजनिता तथा वेनेन संगता।**
**सा सूते यवनं पुत्रं तुरुष्कः संप्रकीर्तितः।**
**तस्माद्वरिष्ठश्चाण्डालो दयावान् सोऽतिनिष्ठुरः।।**
यवनः। बाल. १।९५ पृ. ३०३

**एवं चण्डालपर्यन्ता ब्राह्मणाद्याः प्रकीर्तिताः।**
**प्रातिलोम्यानुलोम्येन स्फुटाः संकरजातयः।।**
[1]**प्रातिलोम्यानुलोम्येन वर्णैस्तज्जैश्च वर्णतः।**
**षष्टिर्वाऽन्ये प्रजायन्ते तत्प्रसूतेस्त्वनन्तता।।**

सवर्णाम्बष्ठनिषादानामध्ययन-
विषयाः

[2]**सवर्णमुपनीय धनुर्वेदं शिक्षयेत्, अम्बष्ठमुपनीय वैद्यशास्त्रम्, निषादमुपनीय हस्तिशिक्षां शिक्षयेत्। अन्येषामुपनयनाभावः।।**

अनुलोमानामुपनयनमात्रम्,
न वेदाध्ययनादि

[3]**अनुलोमानामुपनयनमेव, न वेदाध्ययनं न पञ्चयज्ञं नौपासनं नाग्निहोत्रं न समित्कार्यं न संध्योपासनम्। उपनयनमपि तूष्णीमेव।।**

कुण्डगोलकयोः संस्कारार्हता

[4]**कुण्डगोलकावपि यथार्हं संस्कार्यौ।।**

राजगुरुमल्लवैतालिककिन्नाटवणिग्जनान्तःपुर-
पालकमालाकारसूपकारमैत्रेयकहरिमेखल-
सैरन्ध्रजाङ्घिकानामुत्पत्तिः
वृत्तयश्च

[5]**व्रात्यक्षत्रियतः शूद्रयां जातः शूद्रविधानकृत्।**
**स कुर्याद्राजपुत्रांश्च शस्त्रास्त्रकुशलान् धनम्।**
**तेभ्यो लब्ध्वाऽऽत्मवृत्त्यर्थं स्वधर्ममनुपालयेत्।।**
राजगुरुरिति प्रसिद्धः। शूशि. १९

---

(१) **बाल.** १।९५ पृ. ३०३-३०४.

(१) **विश्व.** १।९५ षष्टिर्वाऽन्ये (षष्ट्येवान्ये) स्मरणम्; **पमा.** १।५१६ स्मृत्यन्तरम्.

(२) **मभा.** ४।२६ स्मृत्यन्तरम्.

(३) **मभा.** ४।२५ स्मृत्यन्तरम्.

(४) **स्मृकौ.** २५ स्मृत्यन्तरम्; **शूशि.** ८ स्मृत्यन्तरम्.

(५) **शूशि.** १९; **शूक.** २८३; **बाल.** १।९४ पृ. २९२ जातः (सल्लः)ऽऽत्म (स्व) (=). एतत्प्रभृतीनि करिष्यमाणविश्वंभर-वास्तुशास्त्रनिर्देशात्प्राचीनानि वचनानि यद्ग्रन्थीयस्थलनिर्देशात्परमनिर्दिष्टकर्तृकत्वबोधकं चिह्नं न कृतं तस्मिन् ग्रन्थे 'जातिविवेके' इत्युक्त्वा संगृहीतानीति बोध्यम्। तमिमं विवेकं कर्तुमेव अनिर्दिष्टकर्तृकवचनप्रघट्टके तत्त्वबोधकचिह्नाकरणरूपमुत्सर्गं बाधित्वाऽत्र तच्चिह्नमुपयोजितम्।

**[१]तस्मान्मल्लः सुतो जातः क्षत्रिण्यां व्यभिचारतः।**
**राज्ञां कौतुकमुत्पाद्य नियुद्धेनार्जयेद्धनम्।।**
**[२]वैश्याच्छूद्र्यामन्यवध्वां जातो वैतालिकाभिधः।**
**जीवनं कामशास्त्रेण स्तुत्या वा भाट्टकर्मणा।।**
**[३]क्षत्रात्पारशवीपुत्रः किन्नाटस्ताम्रकुट्टकः।।**

(१) विप्राच्छूद्र्यां पारशवी। 'ताम्बेर' इति ख्यातः।
शूशि. २०

(२) 'लम्बर' इति ख्यातः।
बाल. १।९५ पृ. २९५

**[४]शूद्राद्वैश्यायां यो जातो वणिग्जन इति स्मृतः।।**
**[५]वणिग्जनात्तु विप्रायां जातोऽन्तःपुरपालकः।**
**अन्तःपुरस्य गोप्ता स राज्ञामुदरपुष्टये।।**

शूद्राद्वैश्यायां वणिग्जनः। शूशि. २०

**[६]सामान्यवनिताः पोष्यास्तासां भाट्टी च जीविका।**
**पण्याङ्गनानां राज्ञां च कुर्यात्सङ्गं तदिच्छया।।**
**[७]रूपाजीवासु तास्वेवं निशि यः संगतो विटः।**
**स एव तासां प्राणेशो नान्यः कान्तोऽपि तत्पतिः।**
**चतुःषष्टिकलाः कामशास्त्रं तदुपजीवनम्।।**
**[८]पारशव्यां च माहिष्यान्मालाकारः स उच्यते।**
**कुसुमानि सशाकानि वर्धयेद्धनवृद्धये।**
**स हीनः शूद्रधर्मेभ्यः संस्कारे सप्तके प्रभुः।।**

**[१]सूताज्जातस्तु वैदेह्यां सूपकारः स जायते।**
**ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेह उच्यते।।**
**[२]आयोगव्यां तु वैदेहाज्जातो मैत्रेयको भवेत्।**
**घण्टावादनकृत्प्रातस्तथा मङ्गलगानकृत्।।**

शूद्राद्वैश्यायामायोगवी। शूशि. २०

**[३]अम्बष्ठायां तु वैदेहाज्जातः स्याद्धरिमेखलः।।**
**[४]आयोगव्यां तु करणात्सैरन्ध्रो गन्धकर्मकृत्।**
**पुष्पचन्दनपण्यादिशृङ्गारैस्तस्य जीविका।।**

वैश्याच्छूद्रायां करणः। शूशि. २०

**[५]उग्रायां वै पारशवाज्जाङ्घिकः पादवेगवान्।।**

(१) धावनशीलो 'वारी' इति प्रसिद्धः। शूशि. २१

(२) धावनशीलः 'चारी' इति प्रसिद्ध इत्यन्यत्र। अयमनुलोमो 'मेवडा' इति मध्यदेशभाषया प्रसिद्धः।
बाल. १।९५ पृ. २९६

भस्माङ्कुरक्षेमककुशीलवनिर्मण्डलककुन्तल(नापित)-
कायस्थशालक्यशाल्मलशिलीन्ध्रकोल्हाट्या-
न्धसिकगोचारिछागलकशय्यापाला-
नामुत्पत्तिर्धर्मो वृत्तयश्च

**[६]शैवः पाशुपतः कश्चिदारूढः पतितो यदि।**
**तस्माज्जातः शूद्रपत्न्यां पुत्रो भस्माङ्कुरः स्मृतः।।**

'जङ्गम' इति प्रसिद्धः। शूक. २८४

**[७]शिवार्चनं तु तत्कार्यं शिवदायेन जीवनम्।**
**स जटाभस्मधारी च शिवलिङ्गं प्रपूजयेत्।।**

---

(१) **शूशि.** १९; **शूक.** २८३ मुत्पाद्य (मापाद्य); **बाल.** १।९४ पृ. २३९२ (=).

(२) **शूशि.** १९; **शूक.** २८३ मन्यवध्वां (मथाम्बष्ठ्यां) भाट्ट (बन्दि); **बाल.** १।९५ पृ. २९५ (=).

(३) **शूशि.** २० वीपुत्रः किला (वात्पुत्रः कीना); **शूक.** २८३ शवी (सवी); **बाल.** १।९५ पृ. २९५ (=).

(४) **शूक.** २८४.

(५) **शूशि.** २०; **शूक.** २८३ पू.; **बाल.** १।९४ पृ. २८८ (=).

(६) **शूशि.** २० भाट्टी च जीविका (भाव्याश्च जीविकाः); **बाल.** १।९४ पृ. २८८ (=).

(७) **शूशि.** २० तृतीयार्धं नास्ति; **बाल.** १।९४ पृ. २८७-२८८ तास्वेवं (तास्वेषां) (=).

(८) **शूशि.** २० शव्यां (शव्यायां) प्रथमार्धमात्रम्; **शूक.** २८४ शव्यां (सव्यां) संस्कारे सप्तके (समूहे पद्मके); **बाल.** १।९५ पृ. २९६ उच्यते (तूच्यते) द्वितीयार्धे (कुसुमानि सशाखानि बद्धयेद्धनलब्धये।) श्लोकक्रमो न आदर्शानुसारी (=).

(१) **शूशि.** २०; **शूक.** २८४ सूपकारः (सूतकारः) पू.; **बाल.** १।९५ पृ. २९८ पू. (=).

(२) **शूशि.** २० गव्यां (गवण्यां) मैत्रेयको (मैत्रेयुको); **शूक.** २८४; **बाल.** १।९५ पृ. २९७ (=).

(३) **शूशि.** २०; **बाल.** १।९५ पृ. २९६ (=).

(४) **शूशि.** २०; **शूक.** २८४ जीविका (जीवनम्); **बाल.** १।९५ पृ. २९६ उत्तरार्धं (पुष्पचन्दनपरागादिविक्रयस्तस्य जीवनी।।) (=).

(५) **शूशि.** २०; **बाल.** १।९५ पृ. २९६ ज्जाङ्घिकः (ज्जाधिकः) (=).

(६) **शूशि.** २१; **शूक.** २८४; **बाल.** १।९५ पृ. २९७ दारूढः (दासूतः) (=).

(७) **शूशि.** २१; जीवनम् (जीवितम्); **शूक.** २८४; **बाल.** १।९५ पृ. २९७ (=).

**[1]ताम्बूलमक्षता द्रव्यं गावः क्षेत्राणि शाकिनी।**
**शिवाय प्राणिभिर्दत्तमन्यत्किमपि भक्तितः।**
**चण्डीशं तदिति ख्यातं तेन तस्येह जीविका।।**

अयमनुलोमो 'गुरव' इति महाराष्ट्रभाषया प्रसिद्धः।

बाल. १।९५ पृ. २९७

**[2]उग्रायां क्षेमकः क्षत्तुः प्रतीहारः स उच्यते।।**

क्षत्राच्छूद्रायामुग्रा। शूशि. २१

**[3]कुशीलवः सुतोऽम्बष्ठाद्वैदेह्यां नर्तनादिकृत्।।**

विप्रायां वैश्याद्वैदेही। शूशि. २१

**[4]निर्मण्डलक आभीराज्जातोऽसौ बाणपिच्छकृत्।**
**शराणां करपत्रैश्च रचना तस्य जीविका।।**

अयं प्रतिलोमः 'सिकिलीगर' इति मध्यदेशभाषया प्रसिद्धः। बाल. १।९५ पृ. २९८

**[5]उग्रायां मागधाज्जातः कुन्तलः श्मश्रुकर्मकृत्।**
**स नापित इति प्रोक्तः क्षौरकर्मविधानकृत्।।**

क्षत्रियाच्छूद्रायामुग्रः। क्षत्रियायां वैश्यान्मागधः।

शूशि. २१

**[6]श्मश्रुकर्तनकृच्चैव नखकर्तनकोविदः।**
**वृत्त्याऽनया ग्राममध्ये तिष्ठन् वर्णेषु सेवकः।**
**नराणां नापितो धूर्तः शूद्रेभ्योऽभ्यधिकः स्मृतः।।**
**[7]माहिष्यवनिता सूनुं वैदेहाद्यं प्रसूयते।**
**स कायस्थ इति प्रोक्तस्तस्य कर्म विधीयते।।**

क्षत्रियाद्वैश्यायां माहिष्या। ब्राह्मण्यां वैश्याद्वैदेहकः।

शूशि. २२

**[1]लिपीनां देशजातानां लेखनं स समाचरेत्।**
**गणकत्वं विचित्रं च बीजपाटीप्रभेदतः।**
**अधमः शूद्रजातिभ्यः पञ्चसंस्कारवानसौ।।**

अयं प्रतिलोमः। पञ्च संस्कारास्तु – 'जातकर्म तथा नाम वपनं कर्णवेधनम्। उद्वाहश्चैव विज्ञेयः कायस्थे पञ्च संस्क्रियाः।।' इति छागलेनोक्ताः।

बाल. १।९५ पृ. ३०७

**[2]चातुर्वर्ण्यस्य सेवा हि लिपिलेखनसाधनम्।**
**व्यवसायः शिल्पकर्म तज्जीवनमुदाहृतम्।।**
**[3]शिखां यज्ञोपवीतं च वस्त्रमारक्तमम्भसा।**
**स्पर्शनं देवतानां च कायस्थाद्यो विवर्जयेत्।।**
**[4]मालाकाराच्च शालक्यः करण्यां मणिरन्ध्रकृत्।।**

(१) 'मणिहार' इति ख्यातः। तस्यैव स्मृत्यन्तरे मञ्जुरित्यपि संज्ञा। शूशि. २३

(२) 'मणियारा' इति ख्यातः।

* बाल. १।९५ पृ. २९६

**[5]कुलाल्यां शाल्मलो मञ्जोर्नागवल्यास्तु विक्रयी।**
**ताम्बूलक्रीतसंभूतं द्रव्यं तस्येह जीवनम्।।**

अयमनुलोमः 'ताम्बोली' इति मध्यदेशभाषाप्रसिद्धः।

बाल. १।९५ पृ. २९८

**[6]मालाकारात्क्षत्रियायां शिलीन्ध्रो मर्दनक्रियः।**
**हीनः स शूद्रधर्मेभ्यो जीविकाऽस्याङ्गमर्दनम्।।**
**[7]शिलीन्ध्रात्क्षत्रियायां च कोल्हाटी नाम जायते।।**

---

(१) **शूशि.** २१; **शूक.** २८४ शाकिनी (काकिणी) तदिति (यत्क्षितौ); **बाल.** १।९५ पृ. २९७ जीविका (जीवनम्) (=).

(२) **शूशि.** २१; **बाल.** १।९५ पृ. २९७ (=).

(३) **शूशि.** २१; **शूक.** २८४; **बाल.** १।९५ पृ. २९७ (=).

(४) **शूशि.** २१; **शूक.** २८४ कर (शर); **बाल.** १।९५ पृ. २९८ पिच्छ (कर्म) (=).

(५) **शूशि.** २१; **शूक.** २८४ लः श्मश्रु (लश्मश्रु); **बाल.** १।९५ पृ. ३०० (=).

(६) **शूशि.** २१; **शूक.** २८४-२८५ तिष्ठन् (तिष्ठेद्); **बाल.** १।९५ पृ. ३०० (=).

(७) **शूशि.** २२ सूनुं (सूतं); **शूक.** २८८ (=); **बाल.** १।९५ पृ. ३०७ (=).

* शेषं शूशिवत्।

(१) **शूशि.** २३; **शूक.** २८८ पाटीप्र (पाठी प्र) (=); **बाल.** १।९५ पृ. ३०७ प्रभे (विभे) (=).

(२) **शूशि.** २३; **शूक.** २८८ (=); **बाल.** १।९५ पृ. ३०७ शिल्प (शिल्पि) (=).

(३) **शूशि.** २३, ७७; **शूक.** २८८ (=).

(४) **शूशि.** २३ करण्यां (करिण्यां); **शूक.** २८९ शालक्यः (लावद्यः) (=); **बाल.** १।९५ पृ. २९६ शालक्यः (शालाकः) (=).

(५) **शूशि.** २३ पू.; **शूक.** २८९ कुलाल्यां (कुनाल्यां) (=); **बाल.** १।९५ पृ. २९८ मञ्जो (मङ्गो) पू. (=).

(६) **शूशि.** २३; **शूक.** २८९ (=); **बाल.** १।९५ पृ. २९८ मर्दनम् (मर्दनी) (=).

(७) **शूशि.** २३; **शूक.** २८९ (=); **बाल.** १।९५ पृ. २९८ कोल्हाटी (कौलाटी) (=).

'बहुरूपी' इति प्रसिद्धः। शूशि. २३

**[१]वैदेहात्सूपकार्यां च पुत्र आन्धसिको भवेत्।।**

(१) 'पाचक' इति प्रसिद्धः। शूशि. २३

(२) अयं प्रतिलोमो 'भटिहारा' इति भाषाप्रसिद्धः। बाल. १।९५ पृ. २९८

**[२]वैश्यात्करण्यां यो जातो गोचारी वत्सपालकः।।**

**[३]नाम छागलकं पुत्रं कटधानादजीजनत्।**

**मञ्जुभार्या स वै लोके अजापाल इति स्मृतः।।**

अयं प्रतिलोमो 'गडरिया' इति मध्यदेशभाषया प्रसिद्धः। बाल. १।९५ पृ. २९९

**[४]हीनः स शूद्रजातिभ्यश्छागलान् रचयेच्च सः।**

**छागलेभ्यो धनं जातं तस्य तज्जीवनं स्मृतम्।।**

**[५]सैरन्ध्रात्क्षेमका लेभे शय्यापालं तु सेवकम्।**

**राज्ञां शय्यासंविधाने कुशलस्तेन जीवति।।**

(१) क्षेमकः प्रतिहारी। शूशि. २४

(२) क्षेमका प्रतिहारी स्त्री। अयं प्रतिलोमः। बाल. १।९५ पृ. २९९

मण्डलकस्यन्दोलिक(सौचिक)कुक्कुटोल्मुकमाञ्जूष(रजक)-मौष्कलि(तैलिक)सूत्रधारकुरुविन्दसाम्बरसौवीर-(कोसट)नीलीकर्तृबर्बरबन्धुल(मालक)पांशुल-मेषपालक(औरभ्र)उष्ट्रपालकरौमिक-धिग्वणमेदानामुत्पत्तिर्धर्मो वृत्तयश्च

**[६]कर्मचाण्डालभार्यायां यो जातः पुष्पशेखरात्।**

**स वै मण्डलको नाम शुनां मण्डलपोषकः।।**

अयं प्रतिलोमः। बाल. १।९५ पृ. २९९

**[१]युगलं शुनकानां स धर्तुं योज्यो महीभृता।**

**आखेटकपणेभ्यश्च शुनां जीवनमुच्यते।।**

**[२]वन्दिनीशूद्रसंयोगाज्जातः स्यन्दोलिकाभिधः।**

**चतुर्वर्णविहीनोऽसौ मञ्जिष्ठारङ्गकारकः।**

**तेन रङ्गेण वासांसि चित्राणि रचयेत्सदा।।**

अयमनुलोमो 'रङ्गारी, छिपी' इति मध्यदेशभाषाप्रसिद्धः। बाल. १।९५ पृ. २९९

**[३]हस्तलेख्यं बिम्बितं च द्विधा तद्रङ्गसाधनम्।**

**स एव सौचिकः ख्यातः कर्तरीसूचिकार्जकः।।**

**[४]शूद्रो निषाद्यां संजज्ञे कुक्कुटं टङ्कशालकः।**

**रङ्ग(? टङ्क)शालासु सर्वासु नाणकानां विधायकः।।**

**जीवनाच्चाष्टधातूनामन्त्यजैः समतां व्रजेत्।।**

**[५]मागध्यां क्षत्रियाज्जात उल्मुको लोहकर्मकृत्।।**

**[६]स लोहकर्मणा जीवेदुत्तमश्चान्त्यजातितः।**

**ब्रह्मक्षत्रियविट्छूद्रवर्णेभ्यो हीन एव सः।।**

**§ [७]उग्राज्जातं तु वैदेह्यां मञ्जूषं रजकं विदुः।**

**रजको वर्णतो हीनः प्रथमश्चान्त्यजेषु च।**

**वस्त्रनिर्णेजनं कुर्यादात्मवृत्त्यर्थमेव च।।**

---

(१) **शूशि.** २३ त्सूपकार्यां च पुत्र आन्ध (द्रूपकार्यायाः पुत्रश्चाऽऽन्ध); **बाल.** १।९५ पृ. २९८ (=).

(२) **शूशि.** २३; **शूक.** २९०.

(३) **शूशि.** २३-२४; **शूक.** २९० नाम छाग (नाम्ना छग) कटधा (धटधा) स वै (सुतो) अजा (अज) (=); **बाल.** १।९५ पृ. २९८ स वै (सुतो) (=).

(४) **शूशि.** २४ लान् रचयेच्च (लान्न वदेच्च) उत्तरार्धं (छागलाभ्यो धनं जातं तज्जीवनमिति स्मृतम्।।); **बाल.** १।९५ पृ. २९८ हीनः स (स हीनः) (=).

(५) **शूशि.** २४ मका (मको); **बाल.** १।९५ पृ. २९९ तु सेव (कुसेव) राज्ञां (तज्जः) धाने कु (धानकु) (=).

(६) **शूशि.** २४; **शूक.** २९० चाण्डा (चण्डा) (=); **बाल.** १।९५ पृ. २९९ (=).

§ एतदादीनां षण्णामर्धानां क्रमः शूशिशूकग्रन्थयोर्विसंगतः। बालंभट्टीमनुसृत्यात्र गृहीतः।

(१) **शूशि.** २४ पू.; **शूक.** २९० युगलं (युगुलं) पू. (=); **बाल.** १।९५ पृ. २९९ धर्तुं यो (धनुर्यो) भृता (भुजा) (=).

(२) **शूशि.** २४; **शूक.** २९१ वन्दि (बन्दि) स्यन्दोलि (स्पन्दालि); **बाल.** १।९५ पृ. २९९ स्यन्दो (सन्दो) हीनोऽसौ (हीनश्च) (=).

(३) **शूशि.** २४ द्विधा (विद्या) कार्जकः (कर्तकः); **शूक.** २९१ बिम्बितं (विचित्रं) तद्रङ्ग (तच्चित्र) सौचिकः (शुचिकः); **बाल.** १।९५ पृ. २९९ बिम्बितं (विचिन्त्यं) सौचिकः (सूचकः) (=).

(४) **शूशि.** २४ शूद्रो निषाद्यां (शूद्र्यां निषादः) नाण (नाट) च्चाष्ट (द्वाऽष्ट); **बाल.** १।९५ पृ. २९९ शालकः (शालिका)(=).

(५) **शूशि.** २५; **शूक.** २९१; **बाल.** १।९५ पृ. २९५ उल्मुको (उलूको)(=).

(६) **शूशि.**२५ ग्रन्थान्तरे; **बाल.** १।९५ पृ.२९५ चान्त्य (श्वान्य) (=), नायं जातिविवेकस्थः श्लोकः। विषयसंगत्याऽत्र संगृहीतः.

(७) **शूशि.** २५; **शूक.** २९१ जेषु च (जेषु सः); **बाल.** १।९५ पृ. २९९ रजकं (रञ्जकं) मेव च (मेव सः) (=).

(१) क्षत्राच्छूद्रायामुग्रः। ब्राह्मण्यां वैश्याद्वैदेही।

शूशि. २५

(२) अयमनुलोमः। + बाल. १।९५ पृ. २९९

**[1]उग्रात्पारशवापुत्रो मौष्कलिस्तैलिको भुवि।**
**वहेदसौ तैलयन्त्रमुत्तमस्त्वन्त्यजातितः।**
**जीविकाऽस्य समुद्दिष्टा शुद्धतैलस्य विक्रयात्।।**
**[2]तिलहिंसायन्त्ररवाकर्णनात्पापसंभवः।**
**अतो मौष्कलिको नित्यं निर्वास्यो नगराद्बहिः।।**
**[3]रथकारस्य वनिता आयोगवसमागता।**
**सूते यं तनयं सोऽपि सूत्रधार इतीरितः।।**
**[4]जायाजीवश्च शैलूषो नाट्यशास्त्रविशारदः।**
**जलमण्डलिकादीनि सूत्राणि रचयेत्सदा।**
**लोकविस्मयकारीणि वसेत्स नगराद्बहिः।।**

'गारुडी' इति भाषाप्रसिद्धः।

बाल. १।९५ पृ. ३००

**[5]कुरुविन्दः कुक्कुटक्यां सूतात्पट्टांशुके रतः।**
**असावेवान्त्यजातीनां तं धर्मं तु समाचरेत्।।**

अयं प्रतिलोमः 'जोलाहा' इति भाषाप्रसिद्धः।

बाल. १।९५ पृ. ३००

**[6]वेन्यां त्वावर्तकाज्जातः साम्बरं(? रः) सूत्र-**
**वायकः।।**

+ शेषं शूशिवत्।

(१) **शूशि.** २५ पुत्रो (तपुत्रो) मौष्क (मौःक); **शूक.** २९१ शवा (सवी) मौष्कलि (मौकालि) स्त्वन्त्य (श्वान्त्य) तृतीयार्धं नास्ति; **बाल.** १।९५ पृ. २९९ स्त्वन्त्य (स्त्वन्य) क्रयात् (क्रयः) (=).

(२) **शूशि.** २५ मौष्क (मौःक); **शूक.** २९१ तिल (तैल) कर्णना (कर्षणा) मौष्क (मौक); **बाल.** १।९५ पृ. २९९ (=).

(३) **शूशि.** २५ आयो (साऽयो); **शूक.** २९१ वनिता आयो (दुहिता साऽऽयो); **बाल.** १।९५ पृ. ३०० (=).

(४) **शूशि.** २५-२६ मण्डलि (मण्डपि) लोकविस्मयकारीणि (वेषविस्मयनृत्यानि); **शूक.** २९१ प्रथमार्धमात्रम्; **बाल.** १।९५ पृ. ३०० (=).

(५) **शूशि.** २६ कुरुविन्दः कुक्कु (कुरविन्दः कुक्क) के रतः (कैरतः); **बाल.** १।९५ पृ. ३०० (=).

(६) **शूशि.** २६ वेन्यां त्वा (वेन्यामा) साम्बरं सू (सोऽम्बरसू); **शूक.** २९१ वेन्यां त्वा (वेन्यामा) साम्बरं (स चारः); **बाल.** १।९५ पृ. ३०० (=).

(१) वेन्या नटस्त्री। शूशि. २६

(२) वेनी नटस्त्री। अयं 'साली' इति भाषाप्रसिद्धः।

बाल. १।९५ पृ. ३००

**[1]आभीर्यां कुक्कुटात्पुत्रः सौवीरः कोसटस्तु सः।**
**स कुर्यात्सर्वजातीनां वासांसि त्वात्मवृत्तये।**
**तद्वैपरीत्याद्यो जातो नीलीकर्ता स कथ्यते।।**

'कोशटा' इति बङ्गालभाषाप्रसिद्धः।

बाल. १।९५ पृ. ३००।

**[2]कुन्तलान्मञ्जुभार्यायां संजातो बर्बरः स्मृतः।**
**पुत्रो मैत्राज्जाङ्घिकायां बन्धुलो मालको भुवि।।**

अयं 'झारा' इति भाषाप्रसिद्धः।

बाल. १।९५ पृ. ३०१

**[3]कैवर्ती पौष्टिकाल्लेभे पांशुलं शणवायकम्।**
**छागली भृज्जकण्टात्तु औरभ्रं मेषपालकम्।**
**कुर्यादूर्णापटांश्चित्रान्मेषाणां परिपालनम्।।**

अयं 'धनगर' इति भाषाप्रसिद्धः।

बाल. १।९५ पृ. ३०१

**[4]आवर्तकस्य भार्यायां क्षेमकादुष्ट्रपालकः।**
**रौमिकं देशिका मल्लाद्युक्तं लवणकर्मणि।।**
**[5]आयोगव्यां द्विजाज्जातो धिग्वणः कवचादिकृत्।**
**स चर्मणाऽश्वपल्याणं यथाशोभं प्रकल्पयेत्।।**

'मोची' इति प्रसिद्धः। § शूशि. २६

§ बाल. शूशिवत्।

(१) **शूशि.** २६ टात्पुत्रः (टापुत्रः) टस्तु सः (टः स्मृतः); **बाल.** १।९५ पृ. ३०० (=).

(२) **शूशि.** २६; **बाल.** १।९५ पृ. ३०० न्मञ्जु (न्मङ्गु) संजातो बर्बरः (स जातो व्यतरः) पू. : पृ. ३०१ उत्तरार्धे (पुत्रो मैत्राज्जाधिकायां बन्धुलः क्षारको भुवि।।) उत्त. (=).

(३) **शूशि.** २६ तृतीयचरणे (छागलीमृजुकण्ठाच्च) तृतीयार्धं नास्ति; **शूक.** २९१ प्रथमार्धं नास्ति; **बाल.** १।९५ पृ. ३०१ भृज्ज-कण्टात्तु (भृजुकण्ठाच्च) तृतीयार्धं नास्ति (=).

(४) **शूशि.** २६ आवर्तकस्य भा (आवर्तमिङ्गुभा) लकः (लकम्); **शूक.** २९१ लकः (लकम्); **बाल.** १।९५ पृ. ३०१ र्तकस्य (र्तस्य तु) (=).

(५) **शूशि.** २६; **शूक.** २९१; **बाल.** १।९५ पृ. २९५ णाऽश्वप (णां च प) (=).

**[१]जज्ञे कारापालिका तु वैदेहान्मेदसंज्ञकम्।**
**वित्तेच्छया च स वसेदरण्ये वृक्षपर्वते।।**

(१) 'गोहुं' इति प्रसिद्धः। शूशि. २६

(२) 'गाई' इति प्रसिद्धः।

बाल. १।९५ पृ. ३०१

कैवर्तकर्मचण्डालपुक्कसचर्मकारशौण्डिक-
मङ्गुष्ठचित्रकरकिंशुकपाण्डुसोपाका-
(बुरुडा)नामुत्पत्तिर्धर्मो
वृत्तयश्च

**[२]आयोगवी च कैवर्तं जज्ञे पारशवात्सुतम्।**
**स हीनः सर्वजातिभ्यो जालं स्वीकृत्य सर्वदा।**
**मत्स्याञ्जलचरानन्यान्घातयेदात्मवृत्तये।।**
**[३]नाव्यं कर्म प्रवहणं नद्यां वर्षासु वाहयेत्।**
**नदीमुत्तारयेल्लोकांस्तेभ्यश्चेच्छेद्धनं तथा।।**
**[४]विधवायां यतेर्जातः कर्मचण्डाल उच्यते।**
**वापीकूपादिमृत्कर्मकर्ता चास्पृश्य एव सः।।**
**[५]निषादाच्छूद्रपत्न्यां च जातः पुक्कससंज्ञकः।**
**अन्त्यजानां स सदृशो धर्मेषु विविधेषु च।।**
**[६]अरण्यजीवघातेन तद्वृत्तिर्देहपोषणे।**
**श्येनपापर्द्धिका तस्य कथिता सद्विदूषिता।।**
**[७]धिग्वण्यां तु निषादाद्यश्चर्मकारः स तु स्मृतः।**
**स हीनस्त्वन्त्यजातिभ्यो जीवनं तस्य चोच्यते।।**

**[१]उपानहौ शिरस्त्राणं कुर्यादश्वस्य पाखरान्।**
**गोचर्मणा महिष्याश्च चर्मणा तस्य जीवनम्।।**
**[२]आभीरस्त्री लभेद्वेनात्पुत्रं शौण्डिकसंज्ञकम्।**
**असावधम इत्युक्तः सर्वधर्मबहिष्कृतः।**
**सुरां स कृत्वा विक्रीयात्तेन कुर्याच्च वर्तनम्।।**

(१) तस्य 'शौष्कलः' इत्यपि संज्ञा स्मृत्यन्तरे। शूशि. २७

(२) 'कलवार' इति प्रसिद्धिः।

बाल. १।९५ पृ. ३०२

**[३]कैवर्ती जाङ्घिकाल्लेभे मङ्गुष्ठं रजकं विदुः।**
**स पाचयेद्वै खटकान् कृत्वा चूर्णं विशेषतः।।**
रजक इति संज्ञामात्रम्। धर्मास्त्वन्यत्रोक्ताः।

§ शूशि. २८

**[४]तद्धनं जीविकार्थाय सोऽपि कुर्यान्निरन्तरम्।**
**न स्पर्शस्तस्य कर्तव्यः कदाचिदपि मानवैः।।**
**[५]धिग्वणा कुम्भकारात्तु लेभे चित्रकरं भुवि।**
**वर्णबाह्यः स विविधचित्रलेखेन जीवति।।**
**[६]धीवरात्कुरुविन्दायां किंशुको लेपकर्मकृत्।**
**असावन्त्यज इत्युक्तो वंशपात्रोपजीविकः।।**
**[७]कर्मचण्डालकात्पुत्रं वैदेही पाण्डुसोपाकम्।**
**लेभे बुरुडजातिं तु सदा वंशविदारिणम्।।**

---

(१) **शूशि.** २६ कारापालिका (कारबोलिका); **बाल.** १।९५ पृ. ३०१ (=).

(२) **शूशि.** २७; **शूक.** २९१ पारश (परस); **बाल.** १।९५ पृ. ३०१ नः सर्व (नस्तुल्य) सर्वदा (सर्वतः) चरान (चरांश्वा)(=).

(३) **शूशि.** २७; **शूक.** २९१ प्रवहणं (प्रहरणं); **बाल.** १।९५ पृ. ३०१ तथा (ततः) (=).

(४) **शूशि.** २७ चास्पृश्य (वा स्पृश्य); **शूक.** २९० (=); **बाल.** १।९५ पृ. २९९ चण्डा (चाण्डा) (=).

(५) **शूशि.** २७; **बाल.** १।९५ पृ. ३०२ (=).

(६) **शूशि.** २७; **बाल.** १।९५ पृ. ३०२ अरण्य (आरण्य) का तस्य (कात्तस्य) (=).

(७) **शूशि.** २७; **शूक.** २९१ पू.; **बाल.** १।९५ पृ. ३०२ धिग्वण्यां (धिग्वणी) द्यश्च (द्यं च) जीवनं (जीविका) (=).

§ बाल. शूशिवत्।

(१) **शूशि.** २७; **शूक.** २९१ उत्त.; **बाल.** १।९५ पृ. ३०२ खरान् (खराः) (=).

(२) **शूशि.** २७; **शूक.** २९१ विक्रीयात्तेन कुर्याच्च (विक्रीय कुर्यात्तेन च) द्वितीयार्धं नास्ति; **बाल.** १।९५ पृ. ३०२ वधम(वधर्म) तृतीयार्धे (सुरां स कृत्वा विक्रीय कुर्यात्तेन च जीवनम्।।) (=).

(३) **शूशि.** २७-२८ मङ्गुष्ठं (मङ्गुष्टं); **बाल.** १।९५ पृ. ३०२ प्रथमचरणे (कैवर्ताज्जान्धिका लेभे) ष्ठं र (ष्ठर) खटकान् (श्वबकान्) (=).

(४) **शूशि.** २८; **बाल.** १।९५ पृ. ३०२ (=).

(५) **शूशि.** २८ कारात्तु (कारी तु); **बाल.** १।९५ पृ. ३०३ धिग्वणा (धिग्वणी) बाह्यः स (वासः सु) (=).

(६) **शूशि.** २८ धीवरा (वैशिका); **बाल.** १।९५ पृ. ३०३ लेप (लोप) जीविकः (जीवकः) (=).

(७) **शूशि.** २८ सोपाकम् (शोषकम्) रिणम् (रणम्); **शूक.** २९१ सोपाकम् (शोपकम्) जातिं तु (जातित्वं) रिणम् (रणम्); **बाल.** १।९५ पृ. ३०३ तु (तं) (=).

गारुडिदुर्लभसौनिककीनाशश्वपाकडोम्बानां
म्लेच्छजातीनां चोत्पत्तिर्धर्मो
वृत्तयश्च

**[1]जातो निषादाद्वैदेह्यां गारुडी डिण्डिमोत्तमः।**
**सप्तानामन्त्यजातीनां सुधर्मे( ? स धर्मे)सदृशः स्मृतः।।**
**[2]धिग्वण्यायोगवात्पुत्रं जज्ञे दुर्लभसंज्ञकम्।**
**स कुर्याच्छागलाः सम्यक् दृढाश्च करपत्रिकाः।।**
**[3]अन्यानि चर्मपात्राणि जीवनाय प्ररोहकान्।**
**अन्त्यजातिषु मुख्योऽसौ कीर्तितो जातिसंकरे।।**
**[4]कैवर्ती सौनिकं लेभे पुत्रं चण्डालसंगता।**
**स कुर्यादजमेषाणां हिंसां तन्मांसविक्रयम्।।**
'खाटीक' इति प्रसिद्धः।

* शूशि. २८

**[5]शौण्डिकी डिण्डिमाल्लेभे कीनाशं कीटहारकम्।**
**[6]ब्राह्मण्यां शूद्रतो जातश्चाण्डालः प्राङ्निरूपितः।।**
**चाण्डालात्पुल्कसी जज्ञे श्वपाकं रात्रिज्ञापकम्।**
**श्वमांसानि पचेन्नित्यं तन्मांसेनैव वर्तयेत्।।**
**[7]जातो निषाद्यां चाण्डालान्मृताश्वखरहारकः।**
**डोम्बसंज्ञः श्मशानेषु वसेत्प्रेतोपजीवनः।।**
**[8]मेदयोषित्सु शैल( ? ली)न्ध्रैरुत्पन्ना म्लेच्छजातयः।।**

* बाल. शूशिवत्।

(१) **शूशि.** २८ गारुडी (गारुडो) सप्ता (स सप्ता) सुधर्मे (सधर्मा); **शूक.** २९१ पू.; **बाल.** १।९५ पृ. ३०३ (=).

(२) **शूशि.** २८; **बाल.** १।९५ पृ. ३०४ दुर्लभ (दुर्भट) (=); **इन्दु.** २४८ पूर्वार्धे (धिग्वण्यायोगवाभ्यां यो जातो दुर्भरसंज्ञकः।) दृढाश्च (सुदृढाः).

(३) **शूशि.** २८ उत्त.; **इन्दु.** २४८ संकरे (संग्रहे).

(४) **शूशि.** २८ विक्रयम् (विक्रयी); **बाल.** १।९५ पृ. ३०३ सौनि (सैनि) चण्डा (चाण्डा) (=).

(५) **शूशि.** २८; **बाल.** १।९५ पृ. ३०४ (=).

(६) **शूशि.** २९ त्पुल्क (त्पुक्क) ज्ञापकम् (जापके); **बाल.** १।९५ पृ. ३०४ (=).

(७) **शूशि.** २९; **बाल.** १।९५ पृ. ३०४ (=).

(८) **शूशि.** २९; **बाल.** १।९५ पृ. ३०४ शैलन्ध्रै (शैलिन्ध्रे) (=).

स्तुतिपाठकानां सूतमागधबन्दिनां
स्तुतिविषयभेदाः

**[1]सूतास्ते ये पुराणस्थानुच्चरन्ति नृपान् सदा।**
**येऽल्पकालगताञ्छूरान् वर्णयन्ति च मागधाः।।**
**वर्तमानान्नृपान्सम्यक्कृतसंग्रामकर्मणः।**
**वर्णयन्ति प्रबन्धैर्ये बन्दिनस्ते प्रकीर्तिताः।।**

वर्णानुलोमजप्रतिलोमजादयो मूलसंकीर्ण-
जातयः षट्त्रिंशच्छतसंख्याकाः
तत्संकरजाश्चासंख्याताः

**[2]आनुलोम्येन वर्णानां षण्नराः संप्रकीर्तिताः।**
**प्रातिलोम्येन ते षट् स्युरिति द्वादश भेदतः।।**
**एते द्वादश मिश्रास्तु चतुर्वर्णैर्विमिश्रिताः।**
**अष्टौ च ये स्युर्भेदास्ते षष्टिर्द्वादशसंयुताः।।**
**हतास्ते षष्टिसंख्यातैः षट्त्रिंशच्छतसंख्यया।**
**भेदाः संकरजातीनां बहवः स्युस्ततः परे।।**
एते शूद्रसमाः, 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' (मस्मृ. १०।४१) इति मनूक्तेः।

शूक. २७२

मागधक्षत्तृ(निषाद)मार्दककुशीलवभ्रकुंसाना-
मुत्पत्तिर्धर्मो वृत्तयश्च

**[3]क्षत्रिया मागधं वैश्याज्जनयामास वै सुतम्।**
**स बन्दीजन इत्युक्तो व्रतबन्धविवर्जितः।।**
**[4]शूद्रेभ्योऽभ्यधिकः किंचित्तस्य जीवनमुच्यते।**
**काव्यालंकारगद्यादिषड्भाषासु कलाक्षमः।।**
**[5]गद्यपद्यानि चित्राणि बिरुदानि महीभुजाम्।।**
(१) भाट इति भाषाप्रसिद्धः।

बाल. १।९४ पृ. २८८

(१) **शूक.** २६६ लघुजातिविवेके.

(२) **शूक.** २७२.

(३) **शूक.** २६५ स्मृत्यन्तरे; **बाल.** १।९४ पृ. २८८ बन्धवि (बन्धादि); **इन्दु.** २४८ क्षत्रिया (क्षत्रिणी) वै (यं) बन्धवि (बन्धादि) (=).

(४) **शूक.** २६५ स्मृत्यन्तरे; **बाल.** १।९४ पृ. २८८ काव्या (कथा) कलाक्षमः (विशारदः) (=); **इन्दु.** २४८ काव्या (कथा) सु कलाक्षमः (कुशलः क्षमः).

(५) **शूक.** २६५ बिरुदानि (विरुद्धानि) स्मृत्यन्तरे; **बाल.** १।९४ पृ. २८८ नि चि (दिचि) बिरुदानि (विरूढानि) (=); **इन्दु.** २४८.

(२) अस्य जीविका राज्ञां बिरुदानि गद्यपद्यानि चरित्राणि अलंकारगद्यादिषड्भाषा ज्ञेयाः। शूद्रात्किंचिदाधिक्यमिति मागधो लोके बन्दीजनः। इन्दु. २४८

**[१]क्षत्रिया शूद्रसंयोगात्क्षत्तारं जनयेत्सुतम्।**
**निषाद इति विख्यातः सर्ववर्णबहिष्कृतः।।**
**[२]शूद्राचारविहीनश्च पापधीनिरतः सदा।**
**वागुरापाशपाणिस्तु मृगबन्धनकोविदः।।**
**[३]आरण्यपशुजातीनामन्तकश्च वनेचरः।**
**क्रोधान्वितो मांसवृत्त्या तया जीवेत्सदैव हि।।**
**[४]घण्टां पापर्द्धिकां कुर्याद्रात्रौ विस्मयकारिणीम्।**
**द्विधा च मृगया प्रोक्ता व्योमभूचारिणामिह।**
**विक्रयं मधुनः कुर्याद्धनमिच्छन्समृद्धये।।**
*** [५]वैश्याक्षत्रिसंयोगान्माहिष्या जायते सुता।**
**क्षत्रिणीवैश्यसंयोगाज्जातोऽसौ मागधाभिधः।।**
**[६]माहिष्या मागधाच्चैव शुद्धं मार्दकसंज्ञकम्।**
**जनयेत्तनयं सोऽपि शूद्रधर्मनिराकृतः।**
**गीतं चतुर्विधं वाद्यमभ्यसेज्जीवनाय च।।**
अयं प्रतिलोमः मृदङ्गवाद्यकारकः।
बाल. १।९५ पृ. २९६

**[१]अम्बष्ठाच्चैव वैदेह्यां जातः पुत्रः कुशीलवः।**
**संगीतज्ञो नृत्यकर्ता देशाद्देशान्तरं व्रजेत्।।**
**आयोगवान्मागधायां भ्रकुंस इति जायते।**
**स वर्णबाह्यो धर्मेषु सम्यक्संगीतकोविदः।।**
**कान्तानां नृत्यशालायां नृत्यं लास्यं च शिक्षयेत्।**
**रङ्गावतारः कर्तव्यो नाट्ये च नृपसंसदि।**
**चतुर्विधैरङ्गभावैर्देशभाषाङ्गसंभवैः।।**

शाकल्यान्धसिकवत्सकायोगवकक्रोधक-
(कुक्कुटक)लोहकाराणामुत्पत्ति-
धर्मो वृत्तयश्च

**कायस्थवनिता या तु मालाकारेण संगता।**
**तस्यां यस्तेन पुत्रः स्यात्स शाकल्य इति स्मृतः।।**
**कान्ताकरेषु रचयेद्गजदन्तकलापिकाः।**
**स दी( ? ही)नः शूद्रजातिभ्यो मणीन्विरचयेत्सदा।**
**स्फटिकान्बदरार्दीश्च कुर्यात्तद्द्रव्यजीविकाम्।।**
**वैदेहाच्छूद्रकन्यायां जातस्त्वान्धसिकाभिधः।**
**कुर्यादन्नानि भक्ष्याणि विक्रयार्थं ससंधितम्।**
**अतो विक्रयतो लब्धं तद्धनं तस्य जीवनम्।।**
'कान्दू' इति प्रसिद्धः। शूक. २९०
**करणीवैश्यसंयोगाज्जातो वत्सकसंज्ञकः।**
**स हीनः शूद्रधर्मेभ्यः शाड्वले गाश्च चारयेत्।।**
**[२]वैश्यस्त्रीशूद्रसंयोगादायोगवकसंज्ञकः।**
**स शूद्राद्धीयते धर्मैः पाषाणेष्टककर्मकृत्।**
**स कुर्यात्कुट्टिमां भूमिं चूर्णेनास्य च जीवनम्।।**
**[३]निषादकन्यका शूद्रसङ्गाद्यं जनयेत्सुतम्।**
**स क्रोधकः कुक्कुटक इति प्रोक्तो द्विसंज्ञकः।**
**टङ्कशालासु सर्वत्र नाणकानां विधायकः।।**
**यो मागधीक्षत्रियर्योर्जात उल्मुकसंज्ञकः।**
**स लोहकर्मणा जीवेदुत्तमश्चान्त्यजातितः।।**

---

* यद्यपि श्लोकस्यास्य जातिविवेकधृतत्वं नोपलब्धं तथापि उत्तरश्लोकसंबन्धादत्र संगृहीतः।

(१) **शूक.** २६५; **बाल.** १।९४ पृ. २८८ (=); **इन्दु.** २४७ क्षत्रिया (क्षत्रिणी) वर्ण (धर्म).

(२) **शूक.** २६५; **बाल.** १।९४ पृ. २८८ पापधी (पापर्द्धि) (=); **इन्दु.** २४७ हीनश्च (हीनस्तु) पापधी (पापर्धि) पाणिस्तु (पाणिश्च).

(३) **शूक.** २६५; **बाल.** १।९४ पृ. २८८ आरण्य (अरण्य) (=); **इन्दु.** २४७.

(४) **शूक.** २६५; **बाल.** १।९४ पृ. २८८ च मृगया प्रोक्ता (पापर्द्धिरस्योक्ता) तृतीयार्धे (विक्रयं मधुनः कृत्वा धनमिच्छेत्स्ववृत्तये।।) (=); **इन्दु.** २४७ ण्टां पापर्द्धि (ण्टापापर्धि) द्वितीयार्धे (त्रिधा पापर्धिरस्योक्ता व्योमभूजलचारिणाम्।) कुर्या .... मृद्धये (कृत्वा धनमिच्छेत्स वृत्तये).

(५) **बाल.** १।९५ पृ. २९६ (=).

(६) **शूक.** २८४ धाच्चैव (धा चैव) शुद्धं मार्द (शुद्धमार्ग) निरा (विना) च (सः); **बाल.** १।९५ पृ. २९६ (=).

(१) **शूक.** २९०.

(२) **शूक.** २९०; **बाल.** १।९४ पृ. २८९ धर्मैः (धर्मे) णेष्टक (णतक्ष) तृतीयार्धे (स कुर्यात्कुट्टिमं भूमिचूर्णेनास्येह जीवनम्।।) (=); **इन्दु.** २४८ धर्मैः (धर्मे) नास्य च जीवनम् (नास्येह जीविका).

(३) **शूक.** २९०.

**लोहकार इति ख्यातो लौहं कर्मास्य जीवनम्।**
**तेषां तु गुणसंयोगं ज्ञात्वा शस्त्रविधायकः।।**

कुरुविन्दशाबरिकसोखिरनीली-
कर्तृसाङ्खिल्यबन्धुलपांसुल-
वासिकतुरुष्काणामुत्पत्ति-
वृत्तयश्च

**[1]कुक्कुटस्येह भवति कुम्भकारेण संगता।**
**तस्याः सूनुस्तु विख्यातः कुरुविन्द इति स्फुटम्।।**
**कौशेयानि स वस्त्राणि रचयेदात्मवृत्तये।**
**तुल्योऽसावन्त्यजातीनां स्वधर्मं स तु पालयेत्।।**
'साली' इति प्रसिद्धः।

शूक. २९०

**संगता वेनवनिता कैवर्तेन यदा रहः।**
**तस्याः शाबरिकाभिख्यः पुत्रोऽसौ लोकसंमतः।**
**स हीनस्त्वन्त्यजातिभ्यः शुचिवासोविधायकः।।**
**आभीरीकुक्कुटाभ्यां यो जातः सोखिरसंज्ञकः।**
**स कुर्यात्तु सरीणां हि वासांसि स्वात्मवृत्तये।।**
**तद्वैपरीत्याज्जातो यो नीलीकर्ता स कथ्यते।।**
**मार्ग( ? र्गा)नापितयोर्जातो योऽसौ सा(ङ्) –**
**खिल्यसंज्ञकः।**
**हीनः स गुह्यकेशानां कुर्याद्वपनमञ्जसा।**
**जलूकातुम्बिशृङ्गाणि रक्तस्रावे प्रयोजयेत्।।**
**जातो मैत्रेयशुक्लेन जाङ्घिकायां स्वयं सुतः।**
**असौ बन्धुलसंज्ञोऽत्र अधमः सर्वजातिषु।**
**सुवर्णकारविपणेर्धूल्यां हेमादि पश्यति।।**
**निषादनारीसंयोगात्पौष्टिको जनयेत्सुतम्।**
**स च पांसुलसंज्ञो हि शणसूत्रविधायकः।**
**कर्ता च गोणीपट्टानां जीविका तस्य तद्धनम्।।**
**पुल्कसस्त्री पांसुलकात्सूते या वासिकाभिधम्।**
**कुर्यात्स तुरगादीनां शष्पेणैव च वर्तनम्।।**
**मेदस्य वनिता काया( ? मा)त्संगताऽऽन्ध्रेण चेद्रहः।**
**सा सूते यवनं पुत्रं तुरुष्कः स प्रकीर्तितः।**
**प्रसिद्धो म्लेच्छदेशे यो गोवधेनास्य वर्तनम्।।**

(१) **शूक.** २९०-२९१.

आभीरस्य वृत्तिः

*** [1]वर्तनं गोमहिष्यादि पोषयेत्तृणवारिभिः।**
**पयो दधि घृतं तक्रं विक्रेतव्यं धनार्थिभिः।।**

श्वपाकडोम्बप्लव(हाडी)श्वपच-
(माङ्ग)सौनिकाना-
मुत्पत्तिर्वृत्तयश्च

**[2]चण्डालः पुल्कसीसङ्गाच्छ्वपाकं जनयेत्सुतम्।**
**स्थानान्तरं स नगरात्कर्तुमर्हत्यशेषतः।।**
**[3]गोगर्दभशुनां कुर्याद्ग्रामान्निर्हरणं बहिः।**
**सा जीविकाऽस्य विहिता सर्वलोकेऽतिविश्रुता।।**

चण्डालोत्पन्ना जातिविवेके – चण्डाल इति। पुल्कसी कोळिणी। चाण्डालः प्रसिद्धः। तदुभयजः श्वपाकः। स च मृतानां गवादीनां बहिर्निर्हरणं कुर्यात्। सा जीविका। इति श्वपाकः। लोके 'माहार'। इन्दु. २४५

**[4]निषादवनिता सूते चाण्डालाड्डोम्बसंज्ञितम्।**
**असावन्त्यावसायीति श्मशाननिलये वसेत्।**
**तत्र रक्षां प्रकुर्वीत प्रेतानां वस्त्रजीवनः।।**
**[5]सतीनां सेवडं गृह्णन्काष्ठविक्रयकृच्च सः।**
**तस्येयं जीविका प्रोक्ता लोकेऽन्त्यावासिनः सदा।।**

अन्त्यावसायी लोके 'डोम्ब'। इन्दु. २४६

**[6]अन्ध्रस्य वनितासङ्गाच्चाण्डालो जनयेत्सुतम्।**
**प्लवसंज्ञं स हाडीति लोके सर्वत्र विश्रुतः।।**
**[7]अश्वोष्ट्रगर्दभानां च मृतानां कालयोगतः।**
**कुर्वन्निर्हरणं सोऽपि मांसभक्षणजीवनः।।**

* आभीरसंज्ञकस्यानुलोमस्यायं जीविकोपायः।

(१) **शूक.** २७६.

(२) **बाल.** १।९५ पृ. ३०३ चण्डा (चाण्डा) पु. (=); **इन्दु.** २४५.

(३) **बाल.** १।९५ पृ. ३०३ मान्निर्हरणं (मनिःसरणं) विहिता सर्वलोकेऽति (कथिता सर्वतो लोक) (=); **इन्दु.** २४५.

(४) **बाल.** १।९५पृ. ३०४ संज्ञितम् (संज्ञकम्)(=); **इन्दु.**२४६.

(५) **इन्दु.** २४६.

(६) **बाल.** १।९५ पृ. ३०४ चाण्डा (चण्डा) स हाडी (महाडी) (=); **इन्दु.** २४६ अन्ध्र (आन्ध्र).

(७) **बाल.** १।९५ पृ. ३०४ कुर्वन्निर्हर (कुर्यान्निर्वह) (=); **इन्दु.** २४६.

आन्ध्रस्य वनिता पार्पधिकस्त्री। चाण्डालः प्रसिद्धः। तदुभयजः प्लवः। लोके 'हाडी'। इन्दु. २४६

**[१]मेदजायुवतीसङ्गाच्चाण्डालो जनयेत्सुतम्।**
**स माङ्गः श्वपचो लोकेऽस्पृश्यः साहसकारकः।।**
**[२]यस्यान्नमेव तस्यैव श्वपचस्तेन चोच्यते।**
**जीविका तस्य निर्दिष्टा सार्द्रगोचर्मरज्जुभिः।।**

मेदयुवतिः 'कोळिणी'। चाण्डालः प्रसिद्धः। तदुभयजः श्वपचः। 'माङ्ग' इति। इन्दु. २४६

**[३]चाण्डालश्वपचस्त्रीणां काचलोहविभूषणम्।**
**नागवङ्गककांस्यानां दुर्लभस्यापि धातुनः।।**
**वसनं चोर्णपट्टानां तेषां रात्रौ प्रचारणम्।**
**माञ्जिष्ठवस्त्रं सूक्ष्मं च क्षौमं यत्साधुवस्त्रतः।।**
**[४]न तेषां वसनं योग्यं कम्बलस्यैव तद्भवेत्।**
**दिवा यदा ते गच्छन्ति नगरे कार्यगौरवात्।।**
**[५]शिवालेति तदोच्चार्य संकुचद्गात्रशङ्किताः।**
**कर्णे कपर्दिकां बद्ध्वाऽश्वगर्दभशवार्थिनः।।**
**[६]लोहदण्डं स्वहस्ते तु श्वपचाख्यातिहेतवे।**
**प्रेतोपकरणैस्तेषामाजीवः संप्रकीर्तितः।।**
**[७]सौनिकं कर्मचाण्डालात्सूते दाशवधूः सुतम्।**
**स कुर्यादजमेषाणां वधं तन्मांसविक्रयम्।**
**तद्धनं जीवनं तस्य स हीनस्त्वन्त्यजातितः।।**

दाशवधूः धीवरस्त्री। कर्मचाण्डालः 'वडार' इति। सौनिकः लोके 'खाटिक' (इति)। इन्दु. २४८

(१) **बाल.** १।९५ पृ. ३०४ च्चाण्डा (च्चण्डा)(=); **इन्दु.** २४६.

(२) **बाल.** १।९५ पृ. ३०४ निर्दिष्टा सार्द्र (कथिता आर्द्र) उत्त., (=); **इन्दु.** २४६.

(३) **इन्दु.** २४६.

(४) **शूशि.** १६ नगरे (नगरं) उत्त., स्मृत्यन्तरे; **बाल.** १।९४ पृ. २८८ सर्वं शूशिवत्; **इन्दु.** २४६.

(५) **शूशि.** १६ शिवालेति तदो (सिम्बोलेति समु) पू., स्मृत्यन्तरे; **बाल.** १।९४ पृ. २८८ शिवालेति तदो (सिञ्चोलेति समु) शङ्किताः (संचिताः) पू., स्मृत्यन्तरे; **इन्दु.** २४६.

(६) **इन्दु.** २४७.

(७) **बाल.** १।९५ पृ. ३०३ सौनिकं (शौनकं) वधं (हिंसां)(=); **इन्दु.** २४८.

मूर्धावसिक्तः उग्रः करणः सूतः
वैदेहकः इत्येतेषामुत्पत्ति-
वृत्तयश्च

**[१]विप्रान्मूर्धावसिक्तो यः क्षत्रिण्यां क्षत्रियैः समः।।**
**[२]शूद्रयां क्षत्रादुग्रजातिर्युद्धशस्त्रादिजीविकः।**
**शस्त्रास्त्राभ्यां च कुशलः संग्रामकुशलो भवेत्।**
**तया वृत्त्या च जीवन्स शूद्रधर्मांश्च पालयेत्।।**

अयमेवोग्रो लोके 'उग्रवर, रजपूत' इति व्यवह्रियते। शूशि. १५

**[३]शूद्रयां जातः सुतो वैश्यात्करणो लिपिलेखकृत्।।**

अयमेव करणः 'नटवा' इति भाषाप्रसिद्धः। बाल. १।९४ पृ. २८६

**[४]विप्रायां यः सुतः क्षत्रात्सूताख्यो गजबन्धकृत्।**
**दमनं तुरगाणां च कुर्यात्तज्जीवनं परम्।।**

लोमहर्षणोऽपि प्रतिलोमज एव। तथाहि – 'लोमानि हर्षयां चक्रे श्रोतॄणां यः स्वभाषितैः। कर्मणा प्रार्थित– ( ? प्रथित)स्तेन लोमहर्षणसंज्ञया।।' इति कौर्मे। 'वैन्यस्य तु पृथोर्यज्ञे वर्तमाने महात्मनः। सुत्यायामभवत्सूतः प्रथमं वर्णवैकृतम्।। ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः। जुहावेन्द्राय दैवेन ततः सूतो व्यजायत।। शिष्यहव्येन संपृक्तमभिभूतं गुरोर्हविः। अधरोत्तरचारेण यज्ञे तद्वर्ण-वैकृतम्।।' इति वायुपुराणे। वर्णवैकृतम् 'ब्राह्मण्यां क्षत्रियात्सूतः' (यास्मृ. १।९३) इति मूलकृदाद्युक्तं विलोमजत्वम्। अयं रोमहर्षण एव, 'अग्निकुण्डसमुद्भूत सूत निर्मल-मानस।' इति रोमहर्षणं प्रति शौनकवाक्यस्य पुराणान्तरे

(१) **शूशि.** ६-७ क्षत्रिण्यां(क्षत्रियायां); **बाल.** १।९१ पृ. २८२. एतदादीनि सर्वाणि वचनानि यद्ग्रन्थीयस्थलनिर्देशात्परमनिर्दिष्ट-कर्तृकत्वबोधकं चिह्नं नास्ति तस्मिन् ग्रन्थे 'विश्वंभरशास्त्रे' इति निर्दिश्य संगृहीतानीति बोध्यम्।

(२) **शूशि.** १५ शस्त्रा (शास्त्रा) तृतीयार्धं नास्ति; **शूक.** २६२ जीविकः (जीविका) स्त्राभ्यां च कु (स्त्रन्यासकु) च जीवन्स (ह्यजीवन्वै); **बाल.** १।९४ पृ. २८६ **शूद्रधर्मांश्च पालयेत्** (सङ्ग्रामकुशलादिमान्) (=).

(३) **शूशि.** १५; **शूक.** २६२ जातः सुतो वैश्यात् (जातस्तु वैश्याद्वै); **बाल.** १।९४ पृ. २८६ (=).

(४) **शूशि.** १५; **शूक.** २६६; **बाल.** १।९४ पृ. २८७ (=).

दर्शनात्। अस्य च तपोबलात् व्याससंकल्पात् पुराणाध्ययनेऽधिकारः। तत एव शौनकसंकल्पात् ब्रह्मासनार्हत्वम्, 'अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन।' (भाग. १०।७८।३०) इति बलभद्रं प्रति शौनकोक्तेः। 'रोमहर्षणमासीनम्' इत्युपक्रम्य 'कस्मादसाविमान् विप्रानध्यास्ते प्रतिलोमजः। धर्मपालांस्तथैवास्मान् वधमर्हति दुर्मतिः।।' (भाग. १०।७८।२४) इति तत्रैव बलभद्रोक्तेरयं न ब्राह्मणः। अत एव तद्वधस्य 'अजानतैवाऽऽचरितस्त्वया ब्रह्मवधो यथा।' (भाग. १०।७८।३१) इत्यनेन ब्रह्मवधसादृश्यमुक्त्वा 'ततश्च भारतं वर्षं परीत्य सुसमाहितः। चरित्वा द्वादशान्मासांस्तीर्थस्नायी विशुध्यसे।।' (भाग. १०।७८।४०) इत्यब्दमात्रं गुरुप्रायश्चित्तमुक्तम्। सूतानां मन्त्रित्वाश्वसारथ्यादाविव पुराणाध्ययनतच्छ्रावणयोरप्यधिकारः। परंत्वन्त्य( ? त्वन)योर्ब्राह्मणसंकल्पादेव। यथा व्याससंकल्पादध्ययनं शौनकसंकल्पाच्छ्रावणम्। तदीयातितपोवशाच्च तयोस्तथा संकल्पः। तेन 'न हीनतः परमभ्याददीत' इति निषेधस्य नात्रावकाशः, तेन सूतमात्रस्य नात्राधिकारः, मन्त्रित्वादि तु संजयादिरथादेः( ?) प्रसिद्धमेव। 'ब्रह्मासनं दत्तम्' इति ऋष्युक्त्या च ब्राह्मणानामेव श्रावणेऽधिकारः, नान्येषामिति सिद्धम्। अत एव जनमेजयस्य पुराणकथाश्रावयितृत्वं वैशम्पायनस्य स्मर्यते। तत्पुत्रस्योग्रश्रवसोऽपि तत्संकल्पादेव पुराणाध्ययनश्रावणादावधिकार इति सिद्धम्। एतेन 'लोमहर्षणो ब्राह्मण एव। सूतशब्दस्तु कथाप्रवक्तृत्वसामान्यात्, प्रोत्साहनाय प्राचीनराज्ञां शौर्यादिकथाकथनस्यापि तद्वृत्तित्वात्' इत्यपास्तम्।

बाल. १।९४ पृ. २८७

**[1]ब्राह्मण्यां तु सुतो जातो वैश्याद्वैदेहकः स्मृतः।**
**पाषाणकाष्ठयोः शिल्पं तस्य जीवनमुत्तमम्।।**

(१) सूत्रधार इति लोके।

शूशि. १५

(२) 'सुतार' इति लोके प्रसिद्धः।

बाल. १।९४ पृ. २८८

(१) **शूशि.** १५; **शूक.** २६६; **बाल.** १।९४ पृ. २८८ मुत्तमम् (मुच्यते) (=).

**[1]ये वर्णसंकराकीर्णास्ते संकीर्णा इति स्मृताः।**
**जीवनं जातिकर्मैव जातिमात्रोपजीवनम्।।**

भृज्जकण्टः आवर्तः कटधानः
पुष्पशेखरः इत्येतेषा-
मुत्पत्तिर्वृत्तयश्च

**[2]विप्रः संस्कारहीनश्च व्रात्यतामधिगच्छति।**
**ब्राह्मण्यां तस्य यः पुत्रो भृज्जकण्टः स हि स्मृतः।।**
**ब्राह्मण्यां भृज्जकण्टाच्च सुतस्त्वावर्तको भवेत्।**
**ब्राह्मण्यावर्तकाभ्यां यः पुत्रः स कटधानकः।।**
**ब्राह्मण्यां कटधानेन सुतोऽसौ पुष्पशेखरः।**
**भृज्जकण्टादयः प्रोक्ताश्चत्वारः पूर्वतः क्रमात्।।**
**[3]तेषां कर्माणि वक्ष्येऽहं जीवनाय विशेषतः।**
**वर्ण्यौ हरिहरौ तैश्च गीतगाथाप्रबन्धनैः।।**
**[4]चरितैर्देशभाषाभिर्गानं तज्जीविका स्मृता।**
**लोकाचाराः स्मृतास्तेषां शूद्रधर्मा न हि क्वचित्।।**
**[5]व्रात्याद्विप्राद्विप्रपत्न्यां भृज्जकण्टः सुतः स्मृतः।**
**ब्राह्मण्यां भृज्जकण्टाद्यो जात आवर्तकः सुतः।।**
**[6]आवर्तादृद्विजभार्यायां कटधानः सुतः स्मृतः।**
**ब्राह्मण्यां कटधानाद्यः पुत्रोऽसौ पुष्पशेखरः।।**
**[7]एतैस्तु जीवनार्थाय कार्यं विष्ण्वादिपूजनम्।**
**नृत्यगीतादिवादित्रशङ्खवीणादिवादनम्।।**

एतैः ऋजुकण्ठावर्तककटधानपुष्पशेखरैः।

† शूशि. १८

† बाल. शूशिवत्।

(१) **शूशि.** १७ इति स्मृताः (अवर्णकाः); **बाल.** १।९४ पृ. २९१ कर्मैव (धर्मैव).

(२) **बाल.** १।९४ पृ. २९१.

(३) **शूशि.** १८ बन्धनैः (बन्धकैः) उत्त. (=); **बाल.** १।९४ पृ. २९१.

(४) **शूशि.** १८ भिर्गानं (भिर्गेयं) का स्मृता (काः स्मृताः) (=); **बाल.** १।९४ पृ. २९१ चाराः स्मृ (चारात्स्मृ).

(५) **शूशि.** १७ त्न्यां भृज्जकण्टः(त्न्यामृजुकण्ठः)ण्यां भृज्जकण्टाद्यो (ण्यामृजुकण्ठात्तु) पूर्वोत्तरार्धे व्याख्यानव्यवहिते, उत्तरार्धं क्रमेण वैश्वंभरे; **बाल.** १।९४ पृ. २९१ (=).

(६) **शूशि.** १७ क्रमेण वैश्वंभरे; **बाल.** १।९४ पृ. २९१ (=).

(७) **शूशि.** १८ क्रमेण वैश्वंभरे; **बाल.** १।९४ पृ. २९१ (=).

भोजकः देवलकः आभीरः उदवाहः पौष्टिकः कारा-
गृहगोप्ता कांस्यकारः कुम्भकारः शस्त्र-
जीवी एतेषामुत्पत्तिर्धर्मो वृत्तयश्च

**[१]पुष्पशेखरसंज्ञायां जातो विप्रात्तु यः सुतः।**
**स जात्या भोजको नाम सूर्यपूजनजीविकः।।**

**[२]द्विजोढा भोजकसुता ताभ्यां देवलकः स्मृतः।**
**जात्यैकः शाश्वतो ज्ञेयो विष्णुपूजनजीविकः।।**

एते च नानुलोमजा न प्रतिलोमजाः, अपि तु ब्राह्मणा एव मद्यपपतितब्राह्मणादिवत्। दुर्ब्राह्मणा व्यभिचारजा इति संप्रदायः। बाल. १।९४ पृ. २९१

**[३]माहिष्यायां द्विजाज्जात आभीरः क्षीरविक्रयी।।**

(१) क्षत्राद्वैश्यायां माहिष्या। शूक. २८२

(२) अत्र माहिष्याया वैश्यस्त्रियां क्षत्रियतो जातात्वेनानुलोमत्वात्तस्यां ब्राह्मणादुत्पन्नत्वेनाऽऽभीरोऽप्यनुलोमः। बाल. १।९५ पृ. २९४

**[४]उदवाहः सुतो विप्राद्वैदेह्यां व्यभिचारतः।**
**स च्छत्रधारणं कुर्यान्नीरविक्रयणं तथा।।**

(१) ब्राह्मण्यां वैश्याद्वैदेही। शूशि. १८

(२) ब्राह्मण्यां वैश्याद्वैदेहीत्यन्यत्र। वैदेह्याः प्रतिलोमत्वादयं प्रतिलोम इति केचित्। तस्याः प्रतिलोमत्वेऽपि ब्राह्मणजन्यत्वादनुलोम इत्यपरे। बाल. १।९५ पृ. २९५

**[५]विप्रान्निषाद्यां यो जातः पौष्टिकः स्कन्धवाहकः।।**

विप्राच्छूद्र्यां निषादः। लोके 'कहांर' इति प्रसिद्धः। शूशि. १८

**[६]विप्राज्जातस्तु मागध्यां गोप्ता कारागृहस्य सः।।**

क्षत्रिण्यां वैश्यान्मागधी। लोके 'बन्दीवान' इत्युच्यते। शूशि. १८

---

(१) **शूशि.** १८; **बाल.** १।९४ पृ. २९१.

(२) **शूशि.** १८; **बाल.** १।९४ पृ. २९१.

(३) **शूशि.** १८; **शूक.** २८२; **बाल.** १।९५ पृ. २९४ (=).

(४) **शूशि.** १८; **शूक.** २८२ नीरविक्रयणं (नराणां विक्रयं); **बाल.** १।९५ पृ. २९५ (=).

(५) **शूशि.** १८ द्यां यो (दाद्यो) तः पौ (तो वै); **शूक.** २८२; **बाल.** १।९५ पृ. २९४ (=).

(६) **शूशि.** १८; **बाल.** १।९५ पृ. २९४ विप्रा (द्विजा) हस्य सः (हस्पृहः).

**[१]अम्बष्ठायां द्विजाज्जातः पुत्रः कांस्यस्य कर्मकृत्।**
**कांस्यपात्राणि चित्राणि रचयेज्जीवनाय सः।**
**शूद्रधर्मेण सर्वत्र स्थितिरस्य विधीयते।।**

(१) द्विजाद्वैश्यायामम्बष्ठः। 'कांसार' इति प्रसिद्धः। शूशि. १९

(२) अयं कासारोऽप्यनुलोमः। बाल. १।९५ पृ. २९४

**[२]उग्रायां यो द्विजाज्जातः कुम्भकारः स उच्यते।**
**स शूद्राद्धीयते धर्मे घटयेन्मृन्मयान् घटान्।।**

(१) क्षत्राच्छूद्रायामुग्रा। शूशि. १९

(२) अयमनुलोमः। बाल. १।९५ पृ. २९४

**[३]व्रात्यक्षत्रात्सुतो जातः क्षत्रिण्यां शस्त्रजीविकः।।**

**[४]माहिष्यस्त्री ब्राह्मणेन संगता जनयेत्सुतम्।**
**आभीरपत्न्यामाभीरमिति तं विधिरब्रवीत्।।**
**तेषां संघो वसेद्घोषे बहुशष्पजलाकुले।**
**अर्जितं गोमहिष्यादि पोषयेत्तृणवारिणा।।**
**दुग्धं दधि घृतं तक्रं विक्रीणीते धनाय च।**
**शूद्रेभ्यो न्यूनता धर्मे तस्य सर्वस्य विश्रुता।।**

सैरन्ध्रीकर्म

**[५]प्रसाधनोपचतुरा सैरन्ध्रीति प्रकीर्तिता।।**

वर्णसंकरो मातृतुल्यः, अन्त्यावसायि-
समाचारः

**[६]मातृवद्वर्णसंकरः।।**

**[७]ध्वजं च कुर्याच्चिह्नार्थं समया ग्रामं च संवसेत्।**
**न चैवान्तावसायिभ्यः सुरां दद्यादनापदि।।**

---

(१) **शूशि.** १९; **शूक.** २८२-२८३; **बाल.** १।९५ पृ. २९४ सः (च).

(२) **शूशि.** १९ चतुर्थचरणे (घटवन्मृन्मयाद्घटात्); **शूक.** २८३; **बाल.** १।९५ पृ. २९४ पू.

(३) **शूशि.** १९; **बाल.** १।९४ पृ. २९२ (=).

(४) **बाल.** १।९५ पृ. २९४.

(५) **शूक.** २८४.

(६) **मच.** १०।२७.

(७) **विश्व.** १।१४० स्मृत्यन्तरम्.

# जातीनां वर्णानुक्रमेणाऽऽलेखः

## जातीनाम् आलेखः

अस्मिन्नालेखे मूलवचनप्रमाणका व्याख्यानप्रमाणकाश्च जातयोऽनेकस्मृतिविप्रकीर्णधर्म – वृत्ति – विशेषान्तरसहिता यथाजिज्ञासं सुखावबोधार्थं वर्णानुक्रमेण संगृह्यन्ते।

तत्राऽऽदौ प्रमाणग्रन्थेषु तत्र तत्र विप्रकीर्णा जातिविषयकाः केचित् सामान्यशास्त्रार्थाः संगृह्यन्ते –

(१) ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वार एव वर्णा मूलभूतजातिविशेषाः। विधिवत्कृतविवाहाभ्यां सवर्णाभ्यां मातापितृभ्यां जनितान्यपत्यानि मातापितृसवर्णानि। तथा संकीर्णेष्वपि कृतविवाहाभ्यां समानजातीयाभ्यां मातापितृभ्यां जनितान्यपत्यानि मातापितृसजातीयानि।

(२) भिन्नजातीययोः स्त्रीपुंसयोर्मिथुनीभावः संकरः, तस्माज्जाताः संकरजाः। सवर्णयोरपि विधिवदकृतविवाहयोर्मिथुनीभावस्यापि संकरत्वात् तदपत्यानि कुण्डगोलकादीन्यपि संकरजेष्वेव गण्यन्ते। ते च संकरजास्त्रिविधाः – भिन्नवर्णयोर्विधिवदकृतविवाहसवर्णयोर्वा स्त्रीपुंसयोरपत्यानि वर्णसंकरजाः, वर्णसंकीर्णयोरपत्यानि वर्णसंकीर्णसंकरजाः, संकीर्णयोरपत्यानि संकीर्णसंकरजा इति। संकरजाः प्रकारान्तरेण पुनर्द्विविधाः – अनुलोमाः प्रतिलोमाश्चेति।

(३) उत्कृष्टजातिपुरुषान्निकृष्टजातिस्त्रियां जाता अनुलोमाः, निकृष्टजातिपुरुषादुत्कृष्टजातिस्त्रियां जाताः प्रतिलोमाः।

(४) अनुलोमप्रतिलोमशब्दौ प्रायः संकीर्णव्यक्तिविषयौ, क्वचित् मिथुनीभावरूपसंकरविषयौ व्यवह्रियेते। तदेतत्प्रत्येकं द्विविषयमानुलोम्यं प्रातिलोम्यं चाऽऽश्रित्य प्रवृत्तानि वर्णसंकीर्णसंकरजानां संकीर्णसंकरजानां चाऽऽनुलोम्ये प्रातिलोम्ये च निर्णयौपयिकानि कानिचिद्व्याख्यानानि समुद्ध्रियन्ते – 'प्रतिलोमा(द)नुलोमेन स्त्रियां जातोऽपि प्रतिलोम एव' (बौवि. १।१६।८-१२)। 'तत्राम्बष्ठोग्रसंयोगे भवत्यनुलोमः' (बौध. १।१७।९) इति विशेषविषयकस्य सूत्रस्य तात्पर्यम् 'उत्कृष्टबीजप्रभवायामनुलोमायां जाता अनुलोमा एव भवन्तीत्यभिप्रायः' (बौवि.) इति सामान्यविषयं व्याख्यातम्। 'शूद्रक्षत्रियापत्यभवात्प्रतिलोमाद्वैश्यब्राह्मणीप्रभवायां प्रतिलोमायामुत्पन्नोऽपि प्रतिलोमो भवतीत्यर्थः। एवमन्यत्रापि प्रयोजकानुसंधानेन वेदनीयम्' (बौवि. १।१७।१०)। ब्राह्मण्यां वैश्यजनिता वैदेही प्रतिलोमा। तस्यां ब्राह्मणेन छत्रपो जन्यते। ब्राह्मणवैदेह्योर्मिथुनीभाव आनुलोम्येन भवति। एवं स्थिते छत्रपविषये बालंभट्टीव्याख्यानम् – 'वैदेह्याः प्रतिलोमत्वादयं प्रतिलोम इति केचित्। तस्याः प्रतिलोमत्वेऽपि ब्राह्मणजन्यत्वादनुलोम इत्यपरे' (यास्मृ. १।९५ पृ. २९५) इति। आभीरविषये बालंभट्टी – 'अत्र माहिष्याया वैश्यस्त्रियां क्षत्रियतो जातात्वेनानुलोमत्वात्तस्यां ब्राह्मणादुत्पन्नत्वेनाऽऽभीरोऽप्यनुलोमः' (यास्मृ. १।९५ पृ. २९४) इति।

(५) सर्वे वर्णसंकरजा अनुलोमा मातृसधर्माणः। सर्वे वर्णसंकरजाः प्रतिलोमाः शूद्रसधर्माणः। तत्रापि क्षत्रियायां वैश्यायां च जाता वर्णसंकरजा अनुलोमा उपनयनमात्राधिकारिणः, न तन्मूलकवेदाध्ययनादौ। शूद्रायां जाता वर्णसंकरजा अनुलोमा नोपनयनाधिकारिणः। प्रतिलोमाः सर्वे उपनयनादिधर्महीनाः। तत्रापि शूद्रेण द्विजातिस्त्रीषु जनिताः प्रतिलोमाः पतितवृत्तयः।

(६) जातिनामभेदेऽपि येषां मातापितरौ जारत्वाद्युपाधयश्च सर्वे समानास्तेषु न जातिभेदः, अपि तु देशादिभेदेन संज्ञामात्रभेदः। तथा जातिनामैक्येऽपि मातापित्रादिभेदे जातिभेदः।

नियमयोरनयोर्न्यायानुगृहीतस्मृतिसिद्धत्वेन पुराणोक्तानां समानमातापितृकाणां पुत्राणां विभिन्नजातित्वे कारणं कृतधीभिर्विमृग्यम्। ब्रह्मवैवर्तपुराणे मालाकार-कर्मकार-शङ्खकार-कुविन्दक-कुम्भकार-कांस्यकार-सूत्रधार-चित्रकार-स्वर्णकारा नव पुत्रा विश्वकर्मणा

शूद्रायां जनिता इत्युक्तम्। तत्र मालाकारादिशब्दानां वृत्तिबोधकत्वेऽपि रूढ्या जातिशब्दत्वेन नव जातयः प्रतिपद्यन्ते। न च ते वृत्तिशब्दा एव, न जातिशब्दाः, तेन सर्वेषामेकजातित्वमेवेति प्रतिपत्तुं शक्यते, नवान्यतमचित्रकारकुम्भकारयोरेव क्रमेण अट्टालिका-कारतैलकारपितृत्वस्य तत्रैवोक्तत्वात्, एकजातित्वे मालाकारादीनां सर्वेषां तत्पितृत्वस्य संभवात्। न हि पितृवृत्तेः पुत्रजातिनियामकत्वमुपपद्यते, अपि तु पितृजातेरेव। एवं त्वत्र संभाव्यते – गोप्नापितभिल्ला-दीनां नवाधिकानां जातिभेदानां सच्छूद्रत्वमन्यत्रोक्तम्। तदनुरोधेनात्र शूद्राशब्देन नवावान्तरजातिभेदा विव-क्षिताः। तासु भिन्नावान्तरजातिषु शूद्रासु भिन्नजातयो मालाकारादयः पुत्रा विश्वकर्मणा जनिता इति। एवं लेटेन तीवरकन्यायां जनितासु मोल्ल-मन्त्र-भण्डादिषु षट्सु जातिष्वपि जातिभेदकारणं मृग्यम्। तथा लेटचाण्डालकन्याजनितयोर्हड्डिडमयोरपि।

(७) गूढोत्पन्नस्य जातिं स्वभावविशेषात् कर्मणा च जानीयात्।

(८) सर्वप्रतिलोमजभार्याणां भर्तृशुश्रूषा साधारणो धर्मः, स्वभर्तृव्यापार एव व्यापारश्च। चारणादिभार्याणां तु नृत्तगीतकामसूत्राध्ययनं विशेषतः कर्तव्यम्।

(९) गोब्राह्मणस्त्रीबालानामन्यतमस्यापि रक्षणार्थं दृष्ट-प्रयोजनानपेक्षो देहत्यागः प्रतिलोमानां स्वर्गापवर्गहेतुः।

(१०) धर्म-वृत्ति-विशेषान्तराणां यथोपलम्भमनेकेभ्यो ग्रन्थेभ्यः संगृहीतत्वात् तत्र क्वचिद्विरोधः प्रतिभासते।

| जातिः | पिता | माता | धर्मा वृत्तयश्च | विशेषान्तराणि |
|---|---|---|---|---|
| अगरः | ब्राह्मणः | क्षत्रिया | 'रुद्रधर्मादिकं न्यूनं नटभाटादि केवलम्'। | |
| अजपालः (छागलि – (ल)कः) | कटधानः | मङ्गुस्त्री (मञ्जुस्त्री) | अजपालकः | 'गडरिया' इति मध्यदेशे प्रसिद्धः। शूद्रजातिहीनः। |
| अट्टालिकाकारः | चित्रकारः जारः | कुलटा शूद्रा | | पतितः। |
| अधर्मः (पौष्कलः, शौण्डिकः, शौष्कलः) | वेनः | आभीरी | सर्वधर्मबहिष्कृतः। सुराया निर्माता विक्रेता च। | 'कलवार' इति प्रसिद्धः। |
| अधोनापितः | अम्बष्ठः | क्षत्रिया | नाभेरधो रोमवप्ता। | |
| अधोनापितः | निषादः | क्षत्रिया | नाभेरधो रोमवप्ता। | |
| अनुगोलकः | ? | ब्राह्मणी कन्या | | |
| अन्तःपुरपालकः | वणिग्जनः | ब्राह्मणी | राजान्तःपुरपालकः। वेश्यानां पोषणं | |

| जातिः | पिता | माता | धर्मा वृत्तयश्च | विशेषान्तराणि |
|---|---|---|---|---|
| | | | राजभिस्तासां संगमनं च कुर्यात्। | |
| अन्तरालः | अनुलोमः | अनुलोमी | | |
| अन्त्यजाः | | | | रजकः, चर्मकारः, नटः, बुरुडः (वरुडः), कैवर्तः, मेदः (मेदिः), भिल्लः इति सप्त। |
| अन्त्यावसायी | चण्डालः | निषादी | श्मशानवृत्तिः। अनाथ-शवनयनम्। राजाज्ञया वध्यानां वधस्तद्वस्त्रादि-ग्रहणं च। सजातौ विवाहादि। गोब्राह्मणार्थ-मरणेन संतरणम्। | चण्डालादिभ्योऽपि दुष्टः। श्मशाने वासः। |
| अन्त्यावसायी | शूद्रः | वैश्या | | |
| अन्ध्रः | वैदेहिकः | कारावरी | आरण्यपशुहिंसनम्। गृहद्वाराशुचिस्थान-स्यावस्करशोधनम्। चक्रवृत्तिता। | ग्रामबहिर्वासी। मतभेदो द्रष्टव्यः। शैलश्मशाना-दिषु निवासः। जाति-चिह्नधारणम्। |
| अन्ध्रः | वैदेहिकः | निषादी | | |
| अपरोढकः (अवरोढकः, अवर्णोढः, अववाटः) | चातुर्वर्ण्यान्यतमः | सवर्णा परपत्नी | ब्राह्मणाद्ब्राह्मण्यामुत्पन्न एवोपनयनादि – संस्काराधिकारी, तदतिरिक्तो नोपनयना-द्यधिकारी, किंतु शूद्रधर्मा। मातृस-धर्मेत्यन्यत्रोक्तम्। | कुण्डगोलकयोः साधारणं नाम। |
| अभिषिक्तः | ब्राह्मणः जारः | क्षत्रिया | राजा चेत् आयुर्वेदभूत-तन्त्रसंपठनम्, राजोक्ता-चरण-दया-सत्यवचनैः सर्वप्राणिहितकरणम्। | |

